# मीमांसादर्शनम्

## भाग ४



तारा प्रिंटिंग वर्क्स

*Prāchyabhārati Series—32*

# THE MĪMĀṂSĀ DARŚANA

OF

## MAHARṢI JAIMINI

With Śabarabhāṣya of Śabaramuni with the commentaries of Tantravārtika of Kumārila Bhaṭṭa and its commentary Nyāyasudhā of Someśvara Bhaṭṭa, Bhāṣyavivaraṇa of Govindāmṛtamuni and Bhāvaprakāśikā, the Hindi translation by Mahāprabhulāla Gosvāmī.

*Edited with an Introduction by*

Dr. MAHĀPRABHULĀLA GOSVĀMĪ

M. A., Ph. D., D. Litt Nyay-Vyakarana-Sahitya-Vedantacharya, Mimamsa Shastri (Gold Medalist)

**Volume IV**

TARA BOOK AGENCY

VARANASI

प्राच्यभारतीग्रन्थमाला—३२

टीकापञ्चकसनाथीकृतं महर्षिजैमिनिप्रणीतं

# मीमांसादर्शनम्

भट्टसोमेश्वरकृतया न्यायसुधाख्यटीकयोद्भासितया
श्रीकुमारिलभट्टनिर्मितया तन्त्रवार्तिकव्याख्ययालङ्कृतेन
श्रीगोविन्दामृतमुनिविरचित-भाष्यविवरणव्याख्यया भूषितेन
श्रीमहाप्रभुलालगोस्वामिकृतभाष्यभावप्रकाशिकाहिन्दीव्याख्यात्तेन
श्रीशबरमुनिविरचितभाष्येणानुगतम्

राष्ट्रपतिसम्मानितेन एम० ए०, पीएच० डी०, डी० लिट्० इत्युपाधिविभूषितेन
न्याय-व्याकरणसाहित्यवेदान्ताचार्यमीमांसाशास्त्रिणा विद्यावाचस्पतिना
श्रीमहाप्रभुलालगोस्वामिना विस्तृतभूमिकयालङ्कृत्य
सम्पादितम्

चतुर्थो भागः

तारा बुक एजेंसी
वाराणसी
२०४१ तमो विक्रमाब्दः

# प्रस्तावना

मीमांसादर्शनस्य चतुर्थो भाग इदानीं समुपस्थाप्यते मनीषिणां पुरत इति आमोदो ह्यनुभूयते। प्रकाशितेषु भागत्रयेषु विस्तृतालोचनालङ्कृतेषु सर्वमेव तन्त्रवार्तिकस्य तत्त्वमाविष्कृतम्।

तन्त्रवार्तिकस्य चतुर्थाध्यायस्थ पञ्चमपादे षष्ठपादे च न्यायसुधानोपलभ्यतेऽतः श्रीगङ्गाधरमिश्रकृतन्यायपरायणाख्यटीकायाः सन्निवेश अपेक्षित इति तदर्थं चेष्टा कृता टीका च समुपलब्धा परं स्वास्थ्यस्यासमीचीनत्वात् विद्वज्जनानां झटिति ग्रन्थोपलब्धये आग्रहविशेषाच्च इच्छतापि सा न सन्निवेशिता।

अस्मिन् खण्डे बहवस्तादृशाः विषयाः टीकाकृद्भिः प्रस्तुता ये किल शास्त्रपर्यालोचनायां नितान्तमावश्यकम्। कीदृशी प्रतिभा श्रीभट्टमहाशयस्य सा तु ग्रन्थाध्यायनेनैव निर्धारयितुं शक्यते।

## तृतीयाध्यायाद् द्वितीयपादादष्टमपादान्त

वस्तुतः एतस्य ग्रन्थस्य प्रकाशनं श्रीमतां ताराप्रिंटिङ्ग्यन्त्रालयाध्याक्षाणां श्रीरमाशङ्करपाण्ड्यामहाशयानां शुभोदयश्रीरविशङ्करपाण्ड्यामहाभागानां सततं संस्कृतग्रन्थोद्धारे सन्नद्धानामपूर्वोत्साहस्य प्रेरणाया एव फलमिति, अन्यथा मादृशानामाल्यस्यैकधनानामेतत्कार्यं मनसाऽप्यचिन्तनीयमेव, अतः इमौ सर्वथा प्रशंसार्हाविति।

अस्य ग्रन्थस्य अशुद्ध्यादिपरिमार्जने पं० श्रीकृपासिन्धुशर्मणा महत्साहाय्यमाचरितमिति ते धन्यवादार्हाः।

विदुषामाश्रवः
महाप्रभुलालगोस्वामी

# मीमांसादर्शनस्य विषयसूची

विषयाः पृष्ठम्

## तृतीयाध्याये तृतीयः पादः



## अथ तृतीयेऽध्याये चतुर्थः पादः

अथ तृतीयाध्याये पञ्चमः पादः



तृतीयेऽध्याये षष्ठः पादः

## तृतीयेऽध्यायेऽष्टमः पादः

# मीमांसादर्शनम्

## अथ तृतीयेऽध्याये द्वितीयः पादः ॥

### अथ प्रथमं मन्त्राणां मुख्य एवार्थे विनियोगाधिकरणम्

[१] अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥ सि०

शा० भा०—इह मन्त्रा उदाहरणं 'बर्हिर्देवसदनं दामि', इत्येवमादयः।[1]किं मुख्य एवाभिधेये मन्त्राणां विनियोगः, उत गौणेऽपीति। कः पुनर्मुख्यः ? को वा गौण ? इति। उच्यते। यः शब्दादेवावगम्यते, स प्रथमोऽर्थो मुख्यः। मुखमिव भवतीति मुख्य इत्युच्यते। यस्तु खलु प्रतीतादर्थात् केनचित्संबन्धेन गम्यते, स पश्चाद्भावाज्जघनमिव भवतीति जघन्यः। गुणसंबन्धाच्च गौण इति।

यद्येवं सर्व एव मुख्यः। सर्वो हि शब्दाद् गम्यते। यथैव ह्यग्निर्ज्वलतीत्युक्ते ज्वलनसंप्रत्ययः। एवमेवाग्निर्माणवक इति शब्द एवोच्चारिते माणवके संप्रत्ययः।

अथोच्येत यस्मिन्निरुपपदाच्छब्दात्संप्रत्ययः स मुख्यः, यस्मिन्सोपपदात्स गौण इति। नैतद्युक्तम्। यस्य हि शब्दस्य रूपं कस्यचिदर्थस्य निमित्तम्, सोपपदस्यापि तदेव रूपम्, निरुपपदस्यापि। न च शक्यं निमित्ते सति नैमित्तिकेन न भवितुम्। किमतो यद्येवम् ? इदं न शक्यते वदितुमुपपदादृते न सोऽर्थो भवति[2], उपपदे तु संजाते सोऽर्थः संजनिष्यत इति। न चासौ समुदायार्थः विज्ञातुम्। अन्वयव्यतिरेकाभ्यां हि विभागोऽवगम्यते।

अथ वाक्यार्थोऽयमित्युच्यते। नैवं शक्यम्। न ह्यनन्वितः पदार्थो भवति वाक्यार्थः। तदेवं दृश्यताम्। अग्निशब्द एवायं ज्वलनवचनः। अग्निशब्द एव माणवकस्याभिधातेति। तस्मान्न गौणो मुख्य इति कश्चिद्विशेषः।

अथोच्यते, यः सुष्ठु प्रसिद्धः स मुख्यः, यो मनागिव स गौण इति। इदमपि नोपपद्यते। प्रसिद्धिर्नाम प्रज्ञानम्। न च प्रज्ञाने कश्चिद्विशेषोऽस्ति।

अथोच्येत। यस्य बहुशः प्रयोगोऽस्ति,[3] स मुख्यः। अल्पशः प्रयुज्यमानो गौण इति। नैतदेवम्। अल्पशोऽपि प्रयुज्यमानो नासति सामर्थ्ये प्रत्याययेत्।

---

१. ब. इतःप्राक् 'तत्र संदेहः' इति। २. ब. भविष्यति। ३. ब. एतत्पदं नास्ति।

अतः सोऽपि शब्दात्प्रतीयत इति मुख्य एव। अत्रोच्यते। अस्त्यत्र विशेषः। माणवको नाग्निशब्दात्प्रतीयते। कथमवगम्यते? उक्तम् अन्यायश्चानेकार्थत्वमिति। कथं न विपर्ययः। उच्यते। अनादृत्यैव माणवकप्रत्ययं ज्वलनमग्निशब्दात्प्रतियन्तो दृश्यन्ते। न त्वनादृत्य ज्वलनप्रत्ययं माणवकमग्निशब्दात्प्रतियन्ति। कुत एतत्? यो योऽग्निसदृशो विवक्ष्यते, तत्र तत्राग्निशब्दो नियत इति। अत एव विगतसादृश्या दयं तु दृश्यते। अतोऽग्निसादृश्यमस्य प्रवृत्तौ निमित्तम्। न च ज्वलनेऽप्रतीते तत्सादृश्यं प्रतीयते। तस्माज्ज्वलनस्याग्निशब्दो निमित्तम्, न माणवकस्य। तस्माज्ज्वलने मुख्यः न माणवके। एवमेव तृणप्रत्ययस्य बर्हिःशब्दो निमित्तम्, न तृणसदृशप्रत्ययस्य।

तदेवं द्वैते सति मुख्यपरता शब्दस्य, उत गौणपरताऽपीति युक्तो विचारः। किं तावत्प्राप्तम्? मुख्ये, गौणे च विनियोगः। कुतः? उभयस्य शक्यत्वादुभयमपि बर्हिःशब्देन शक्यते प्रत्याययितुं तृणञ्च, तृणसदृशं च। तृणं साक्षात्; तृणसदृशं तृणप्रत्ययेन। यच्च नाम दर्शपूर्णमासयोः साधनभूतेन बर्हिःशब्देन शक्यते प्रत्याययितुम्, तत्सर्वं प्रत्याययितव्यम्, विनिगमनायां हेत्वभावात्[1]। अपि चैवमाश्रीयमाणे पूषाद्यनुमन्त्रणादीनि दर्शपूर्णमासाभ्यां नोत्कृष्यन्ते। तत्रैव गौणेनाभिधानेन प्रकृतां देवतामभिवदिष्यन्ति।

एवं प्राप्ते।

ब्रूमः—मुख्य एव विनियोक्तव्यो मन्त्रः; न गौण इति। कुतः? उभया[2]शक्यत्वात्। प्रकरणे हि समाम्नानात्प्रधानेनैकवाक्यतामुपैति। तत्रैतदापतति, यच्छक्नुयादनेन[3] मन्त्रेण साधयितुम्, तथा साधयेदिति। स चासावर्थाभिधानसंयोगाच्छक्नोत्युपकर्तुं, न गौणमर्थं शक्नोत्यभिधातुम्। तस्मान्न गौणे विनियोगः[4]।

ननु मुख्यप्रत्ययाच्छक्यते गौणः प्रत्याययितुम्। सत्यमेतत्। मुख्यप्रत्या[5]यनेनैवाऽस्य प्रयोजनवत्ता निर्वृत्तेति, न गौणं प्रति विनियोगे किंचित्प्रमाणमस्ति। मुख्ये विनियोगेन त्वानर्थक्यं परिह्रियते। परिहृत आनर्थक्ये, न गौणाभिधानमापतति। न ह्यनभिधाय मुख्यम्, गौणमभिवदति शब्दः। अतः प्रमाणाभावान्न गौणे विनियुज्येत।

अपि च। गौणस्य प्रत्यायने सामर्थ्याद्बहवोऽभ्युपायाः प्राप्नुवन्ति। सामर्थ्यं च शब्दैकदेश इत्युक्तम् 'अर्थाद्वा कल्पनैकदेशत्वादि'ति। तत्र मन्त्रे नियोगतो गौणं प्रति विनियुज्यमाने उपायान्तरम्, विना प्रमाणेन बाध्येत। मन्त्राम्नानं प्रमाणमिति चेत्? न। तस्योपायान्तरनिवृत्तौ सामर्थ्यमस्ति।

---

१. ब. हेतोरभावात्। २. ब. उभयस्याशक्यत्वात्। ३. ब. यथाशक्नुयात्।
४. ब. विनियुज्यते। ५. ब. मुख्यप्रत्ययेनैव।

**ननु मुख्येऽपि विनियुज्यमानस्यैष एव दोषः। नेत्युच्यते। यदि मुख्येऽपि न विनियुज्येत, नैव प्रधानस्योपकुर्यात्। तत्र चास्योत्पत्तिरनर्थिकैव स्यात्। तस्मादस्ति गौणे, मुख्ये च विशेषः। अपि च। यो गौणे मन्त्रं विनियुङ्क्ते, स वक्तव्यः—किमर्थं मुख्यं प्रत्याययसीति। स चेद् ब्रूयाद्, नान्यथा गौणप्रत्ययोऽस्तीति। प्रतिब्रूयादेनमन्येऽपि गौणप्रत्ययस्याभ्युपायाः सन्तीति। अथ स एवमभियुक्तः प्रतिब्रूयात्—मुख्यप्रत्ययोऽपि पाक्षिकोऽभ्युपाय इति। ब्रूयादेनं—न तर्हि नियोगतो गौणे विनियोजनीयः। यदा गौणप्रत्ययाय मुख्यमुपादत्ते, तदैतदापतितं भवति मुख्य एव विनियोग[1] इति। अर्थेन च प्रतीतेन प्रयोजनं, न प्रत्यायकेन मन्त्रेण। अतोऽन्येनाप्युपायेन गौणः प्रत्याययितव्यः। न स एव मन्त्र आदर्तव्यः। अथापि मन्त्रेण प्रत्यायकेन प्रयोजनं स्यात्, तथाऽपि मुख्यप्रत्ययनेनैव निर्वृत्तं प्रयोजनमिति, नतरां गौणे विनियुज्येत। तस्मान्मुख्यगौणयोर्मुख्ये कार्यसंप्रत्यय इति सिद्धम्॥ १॥**

त० वा०—इदानीं लिङ्गविनियोगः प्रस्तूयते। लिङ्गं नाम मन्त्राणामर्थप्रत्यायनसामर्थ्यम्। तच्च मुख्ये, गौणे च केनचित्प्रकारेण विद्यते। तत्र विनियोगः किं मुख्य एवार्थे भवति, उत गौणेऽपीति संदेहे, नैव गौणो नाम कश्चिदस्तीति मन्वान[2] आह—**कः पुनर्मुख्यः, को वा गौण इति।** तत्सिद्धिसूत्रे तु सिद्धे गौणे तन्निमित्तभेदः स्वार्थापरित्यागवृत्तित्वं च व्याख्यातमित्ययमर्थाद्विचारः पूर्वं प्रत्येतव्यः।

तत्र च—

शब्दार्थस्यैव मुख्यत्वं मुखवत्प्रथमोद्गतेः।  
अर्थगम्यस्य गौणत्वं गुणागमनहेतुकम्॥  
शाखादिभ्यो य इत्येवमिवार्थे मुख्य इत्ययम्।  
शब्दः शब्दाभिधेयत्वात्सर्वेष्वेव प्रसज्यते॥

परगुणानां परत्राभावादवश्यं[3] गुणेभ्यः आयात इत्येवंलक्षणं गौणत्वमित्यतः सर्व एव शब्द उच्चरितेऽभिधीयमानत्वादनन्यगतिः शब्दशक्तिकल्पनां कुर्वन्नर्थान्तरेणाव्यवहितत्वात्प्रथममेव मुखमिव भवतीति मुख्यः।

तत्र परपरिकल्पितानि तावद्गौणत्वकारणान्युपन्यस्यन्नाह—**अथोच्येत यस्मिन्निरूपपदादित्यादि।**

सर्वथा लक्षणं नाम यद् व्यवच्छेदकारणम्।  
पराधीनप्रवृत्तिश्च गौणो नित्यं[4] प्रतीयते॥

---

१. ब. विनियोजनीय इति।  
२. क० मन्यमानः।  
३. क० अशक्यं।  
४. क० नित्यं गौणं।

न हि यथा केवलादग्निशब्दाज्ज्वलनप्रत्ययो भवेति, एवं माणवकप्रत्ययः। पदान्तराधीनत्वात्। यत्रापि पदान्तरं न श्रूयते, तत्राप्यर्थप्रकरणादिलभ्यं तदेव व्याप्रियत इत्यव्यभिचारः। तदेव च सामान्यं नाम प्रवृत्तिहेतुर्गुण इति।

नैतदेवम्। कुतः ?

शब्दार्थस्यैव साहित्यादभिव्यक्तिरियं कृता।
अन्यस्य द्योतकत्वात्तु नापेतं मुख्यलक्षणम्॥

यथैव चक्षुषः प्रकाशानुग्रहापेक्षित्वेऽपि रूपमर्थः, यथा वा मुक्तसंशयस्य मुख्यस्य वर्णक्रममात्राग्रहणसंस्कारस्मृतिसंबन्धानुभवाद्यपेक्षित्वम्, तथाऽत्रोपपदमपि नैव विना सामर्थ्यं[1] नामापेक्षितुं शक्यते। अपेक्ष्यमाणमपि च द्योतकत्वेनेतिकर्तव्यतास्थानीयत्वान्न मुख्यतां विहन्ति। तेन विनाऽप्युपपदेन स तस्यार्थो भवत्येव। कथंचित्तु नाभिव्यज्यते। तद्यथा गवादिशब्दानां पृथिव्यादि।

अथोपपदस्य द्योतकत्वं परित्यज्य तुल्यकल्पतोच्यते। यस्मान्नित्यं माणवकाग्निशब्दसमुदायादस्यार्थस्य प्रतीतिः अतोऽश्वकर्णादिवत्समुदायवाच्यत्वे सत्यवयवस्य गौणत्वमिति। तदुच्यते।

**न चासौ समुदायार्थः** शक्यो वक्तुमिह त्वया।
अन्वयव्यतिरेकाभ्यामर्थभेदो हि दृश्यते॥

तत्र समुदायप्रसिद्धिर्भवति, यत्रावयवार्थौ तिरोधाय त्यक्तभेदः समुदाय एव प्रतीयते। गम्यते त्वत्राग्निशब्दस्य पैङ्गल्यं माणवकशब्दस्य च पिण्डस्वरूपं विविक्तं वाच्यम्। अत उभावपि प्रात्यात्मिकयोरपि वाचकत्वान्मुख्याविति। इदानीमवयवानुसारेणैव समुदायार्थत्वं समर्थयमान आह—अनुगतस्वार्थपदद्वयगम्यत्वान्नीलोत्पलवद्वाक्यार्थः[2]। अतश्च तस्य पदार्थप्रत्याय्यत्वाच्छब्दं प्रति पूर्ववदेव गौणत्वमिति। तन्निराकरोति।

अग्निमाणवकत्वाभ्यां यद्येकोऽर्थो विशेषितः।
नीलोत्पलवदिष्येत ततो वाक्यार्थता भवेत्॥

न त्वत्र तदीयो मुख्यार्थोऽग्नित्वमस्ति। न च भवतः पैङ्गल्यं वाच्यम्। अस्मत्पक्षाभेदप्रसङ्गात्। तस्मान्न वाक्यार्थः। तेन ज्वलने माणवकस्य च पैङ्गल्ये तुल्यवच्छब्दप्रवृत्तिरिति मुख्यत्वम्। **माणवकस्येति** भाष्ये पैङ्गल्यव्यतिरेकजनिता षष्ठी। नाभिधातृव्यतिरेकजनिता। न हि माणवकस्वरूपमग्निशब्दादगम्यते। न हि पर्यायत्वे माणवकशब्दः प्रयुज्यते।

**अथोच्येत यः सुष्ठु प्रसिद्ध इति** मुक्त्वोपपदव्यापारं यत्क्रम्, तस्याऽऽश्रयणमनाश्रयणं च ते एव मन्दसुष्ठुप्रसिद्धी गौणमुख्यविभागाय दर्शयति। तत्रोत्तरम्—

---

१. क० सामर्थ्येन। २. क० वाक्यार्थोऽयं।

प्रसिद्धिरिति विज्ञानं न चास्योनातिरिक्तते[1] ।
तस्मान्न तत्कृतः शक्यो विशेषो हि वक्तुमञ्जसा ॥

इदानीं श्रोतृगतप्रसिद्धिभेदमूलं वक्तृगतं बह्वल्पप्रयोगित्वं[2] विभागार्थं दर्शयति—**यस्य च बहुशः प्रयोग** इत्यादि । तन्निराक्रियते ।

अल्पशोऽपि प्रयुक्तस्य सकृच्छक्तिर्निरूपिता ।
न निवर्तत इत्येवमुभयोस्तुल्यता पुनः ॥

इहापि च गोशब्दस्य पृथिव्यादौ मन्दसुष्ठुप्रसिद्धिप्रयोगौ दर्शयितव्यौ । तथा चाऽऽहुः ।

'मण्डकैर्बहुशस्तृप्तिः कदाचित्खण्डमोदकैः ।
न चात्र मण्डका मुख्या गौणा वा खण्डमोदकाः ॥' इति ।

इदानीं विशेषं कथयति । सत्यपि तावन्माणवकसामानाधिकरण्येऽरुणाशब्दन्यायेन सति सादृश्येऽभिधानात्, सति चानभिधानादन्यत्रासादृश्यवति वृत्तिदर्शनात्, असति चादर्शनाद्विशेषणत्वादवश्यंभाविप्रथमप्रत्यायने सादृश्यमेव प्रथमं प्रत्याययितव्यम् । न चानवगतेऽतौ तत्प्रतीयत इति, प्रथमतरमग्नेरभिधानम् । ततश्च तत्संबन्धादेव शेषप्रतीतेर्व्यक्तिवदनभिधेयत्वम्[3] । सन्ति चैवमादिषु कानिचिद्रूपादिसामान्यानीत्युक्तम् । तस्मादस्ति गौणमुख्यविभाग इत्यारभ्यमधिकरणम् ।

**तत्सिद्धिसूत्रोक्तैः सह नवानां संग्रहः कर्तव्य इति निरूपणम्**

एते[4] च तत्सिद्धिसूत्रोक्तैः सह नव गौणपक्षा द्रष्टव्याः ।

जहत्स्वार्थाभिधायित्वं संघातपरिकल्पना ।
तथा सोपपदा वृत्तिः समुदायप्रसिद्धिता ॥
वाक्यार्थोऽल्पप्रसिद्धित्वमेवमल्पप्रयोगिता ।
अष्टावेतान्निराकृत्य साधिता गुणलक्षणा ॥
तत्र नित्यं परार्थत्वादुभयत्र प्रयोगिता ।
साक्षान्न ह्यभिधानस्य किंचिदभ्यधिकं फलम् ॥

एवं च सति गौण्या वृत्त्या पूषादिशब्दैरग्न्याद्यभिधानादनुत्कर्षो भविष्यति । अन्यथा यत्र पूषादयः, तत्र नीयेरन् । तथा अग्न्यादिशब्दैः सूर्याद्यभिधानादविकारे सत्यार्षचोदकोऽनुग्रहीष्यते । इत्येवं प्राप्ते ।

ब्रूमः—

अर्थाभिधानसंयोगान्मन्त्रणां क्रतुशेषता ।
मुख्येन च कृतार्थानां न गौणे श्रुतिकल्पना ॥

---

१. क० नचास्योनातिरिक्तता । २. क० प्रयोगं ।
३. क० अशेषप्रतीतेः । ४. क० एवं च ।

'अपि वा प्रयोगसामर्थ्यात्' इत्यनेन हि न्यायेनाभिधेये तावद्विनियोगाय मन्त्राः श्रुतिं परिकल्पयन्ति । तत्र यदि जहत्स्वार्था गौणी वृत्तिर्भवेत्, ततस्तुल्यवदुभयत्रापि श्रुतिः कल्प्येत । यदि तु गौणमपि वदता पूर्वतरं स्वार्थोऽभिधेयः, तदा तदतिक्रमकारणाभावात्तद्विनियोगश्रुतौ कल्पितायां निराकाङ्क्षेषु मन्त्रप्रकरणस्वाध्यायाध्ययनविधिषु[1] न पुनः श्रुतिकल्पनहेतुरस्तीति, न विनियोगः ।

किं च—

कृतार्थे मन्त्रपाठे च गौणानां स्मारकान्तरम् ।
अतिवारितसामर्थ्यप्राप्तं[2] किमिति बाध्यते[3] ॥

अपि च—

मुख्यः प्रत्याय्यते कस्माद्गौणेऽप्यर्थे विवक्षिते ।
अन्यथानुपपत्त्या चेन्न ध्यानाद्युपपत्तितः ॥
पाक्षिकत्वेऽप्यनित्यत्वात्पक्षेऽनर्थकता भवेत् ।
नित्यं मुख्यापरित्यागान्मत्पक्षश्चाऽऽश्रितो भवेत् ॥
न चार्थप्रत्यये सिद्धे मन्त्रः कार्योऽभिधायकः ।
मन्त्राम्नानार्थवत्त्वं च मुख्येनार्थेन सेत्स्यति ॥

## सूत्रार्थवर्णनम्

तेनैष सूत्रार्थः—यस्मादर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः तस्मादौत्पत्तिकेनैवार्थेनैषां संयोगः स्यात् । कुतः ? तेनैवाव्यभिचारितया नित्यसंयोगात् ॥ १ ॥

### अथ प्रथम लिङ्गाधिकरणम् ॥ १ ॥

न्या० सु०—लिङ्गहेतुकस्य विनियोगस्य श्रुतिसापेक्षत्वाच्छ्रौतविनियोगप्रकारचिन्तानन्तरं लैङ्गिकविनियोगप्रकारचिन्तायां सङ्गतिमाह—**इदानीमिति** । विशिष्टावृत्त्या विविधरूपविनियोगाभिधानाद्विनियोगप्रकारोक्तिः । सामर्थ्याख्यस्य लिङ्गस्य मन्त्रेष्विव द्रवावदानाद्यङ्गभूतेषु स्रुवादिष्वपि विनियोजकत्वसद्भावात्तेष्वलिङ्गहेतुकविनियोगप्रकारचिन्ता कस्मान्न कृतेत्याशङ्क्य, मुख्यएव विनियोगो गौणेऽपि चेत्येतत्प्रकारव्यतिरिक्तस्य लैङ्गिकविनियोगप्रकारस्याभावात्तस्य चार्थप्रत्यायनव्यतिरिक्तसामर्थ्यहेतुकत्वाभावान्मन्त्रव्यतिरिक्तस्य चार्थप्रत्यायनसामर्थ्याभावान्मन्त्राणामेव लैङ्गिकविनियोगप्रकारचिन्ताविषयत्वं भाष्यकृतोक्तमिति दर्शयितुमाह—**लिङ्गं नामेति** । गौणार्थप्रत्ययस्य तर्हि मुख्यार्थप्रत्ययजन्यत्वेन मन्त्रे मन्त्रजन्यत्वाभावान्मन्त्रसामर्थ्यानुपपत्तेर्बर्हिर्मन्त्रस्य मुख्येष्वेव कुशेषु विनियोगो गौणेष्वपि वा कुशसदृशेपूलपाख्येषु सुगन्धादिषु तृणान्तरेष्वितीयं चिन्ता न युज्येतेत्याशङ्क्या—**तच्चेति** । गौणस्यार्थस्याशाब्दत्वे शाब्दार्थान्तरानन्वयापत्तेर्गौणेऽप्यर्थे शब्दव्यापारोऽस्तीत्याशयः ।

---

१. क० प्रकरणिक । २. क० सामर्थ्यं । ३. क० वार्यते ।

कः पुनरिति भाष्यस्य गौणार्थाभावात्सन्देहायोगेनाधिकरणाक्षेपार्थत्वं सूचयितुमाह—**तत्रेति**। तत्सिद्धिसूत्रे गौणस्यार्थस्योक्तत्वान्नेह तदभावाशङ्का युक्तेत्याशङ्कयाह—**तत्सिद्धीति**। गौणत्वनिमित्तविशेषानवधारणे गुणस्वरूपसद्भावमात्रेण प्रकृतचिन्तासिद्धेरिह सामान्यतो गौणेऽर्थे सिद्धे जहत्स्वार्थाभिधायित्वादिनिमित्तत्रयस्य वेदेऽनुपपत्तेः, प्रस्तरादिशब्दानां यजमानादिषु गुणवृत्तिसिद्धौ लक्ष्यमाणगुणयोगवृत्तित्वरूपो गौणत्वनिमित्तविशेषस्तत्सिद्धिसूत्रे व्याख्यात इत्युक्ते, तथाप्यजहत्स्वार्थाः सर्वा वृत्तय इति तत्सिद्धिसूत्रेऽभिहितत्वादुपपदाधीनत्वादिषु चेहाशङ्क्यमानेषु पञ्चस्वपि गौणत्वनिमित्तेषु स्वार्थत्वान्नेहोपपदाधीनत्वादिति निमित्ताशङ्का युक्तेत्याशङ्क्य स्वार्थापरित्यागवृत्तित्वमप्यर्थेन नित्यसंयोगादित्यत्रैव सिद्धं तत्सिद्धिसूत्रे व्याख्यातमित्युक्तमतो नैव गुणो नाम कश्चिदस्तीत्याशङ्का युक्तेतीतिकरणार्थः। एवं सति तत्सिद्धिसूत्रं पश्चात्कार्यमित्याशङ्क्याह—**अयमर्थंत इति**। वक्ष्यमाणगौणत्वसिद्धवत्कारेणापि निमित्तविशेषोक्तिर्युक्तेत्याशयः।

उच्यतइति परिहारभाष्यं व्याचष्टे—**तत्र चेति**। शङ्किष्यमाणोपपदाधीनत्वादिनिमित्तान्तरनिरासं विना गुणयोगनिमित्तत्वात्सिद्धेरुपक्रममात्रत्वसूचनार्थम्—**तत्र चेत्युक्तम्**। उत्पत्त्युक्त्यावगतिरुक्ता। गुणादवगमनं गौणत्वे हेतुरित्यर्थः। शङ्काशयविवरणार्थं यच्चेवमिति भाष्यं व्याचष्टे—**शाखादिभ्य इति**। कथं सर्वेषां शब्दाभिधेयतेत्याशङ्कां निराकुर्वंश्लोकं व्याचष्टे—**परेति**। पैङ्गल्यादिसामान्यस्य गुणत्वाभावाद्विशेषस्य चाग्निगतस्यान्यत्राभावादग्निगुणयोगेन माणवकावगत्यनुपपत्तेरग्नित्वपैङ्गल्यतीव्रत्वादेरसर्वगतत्वादग्निशब्दात्प्रतीयमानोऽर्थोऽभिधीयमानत्वादन्येन प्रकारेणावगत्ययोगान्मुख्य इत्यर्थः। अन्यशब्दस्याभिधीयमानत्वापेक्षायामपि नित्यसापेक्षत्वाद् गतिशब्दसमासाविघातः। उपपदाधीनत्वादीनां निमित्तानां सिद्धान्तिनोऽनिष्टत्वादुपन्यासपूर्वको निरासोऽनर्थक इत्याशङ्क्य गौणत्वनिरासायैकदेशिकल्पितानि निमित्तान्याशङ्किता दूषयितुमुपन्यस्यतीत्याह—**तत्रेति**। गौणस्य मुख्याद्विवेकायेहोपपदाधीनप्रत्ययस्य लक्षणत्वेन शङ्कनीयत्वाद्व्यापिनश्च धर्मस्यान्यतो व्यावर्त्तकत्वेन लक्षणत्वादग्निरधीतइत्यादौ चोपपदाभावेऽपि गौणत्वप्रसिद्धेरुपपदाधीनप्रत्ययस्याव्यापित्वादर्थधर्मत्वाभावाच्च लक्षणत्वाऽनुपपत्तेरथेति भाष्यमयुक्तमाशङ्क्याह—**सर्वथेति**। धर्मत्वाभावेऽप्यन्यतो व्यावर्त्तकत्वाल्लक्षणत्वोपपत्तिः पूर्वार्द्धेनोक्ता। उत्तरार्द्धेन पराधीना शब्दप्रवृत्तिर्यस्मिन्नर्थे पराधीनप्रवृत्तिरित्यर्थधर्मस्य पराधीनप्रवृत्तित्वस्य लक्षणतोक्त अग्निरधीतइत्यादावपि माणवकाद्युपपदस्यार्थप्रकरणान्नित्यशब्देनाव्याप्तता परिहृता। नित्यशब्दार्थं व्याचष्टे—**न हीति**। माणवके पैङ्गल्ये प्रत्ययो माणवकप्रत्ययः। एवमपि कोऽत्र गुणो विवक्षितो यत्सम्बन्धाद् गौणत्वं स्यादित्याशङ्क्याह—**तदेव चेति**। अग्न्यादिनाम्नां पैङ्गल्यादिप्रवृत्तौ माणवकादिपदान्तरस्य हेतुत्वेनाऽग्राहकतयाऽज्ञातमके गुणत्वेऽभिहिते, कथं पदान्तरस्य पैङ्गल्यादावग्न्यादिनामप्रवृत्तिहेतुतत्याशङ्क्य, सामान्योक्त्या समानाधिकरणकृतोक्ताग्निशब्दस्य माणवकगतपैङ्गल्यादिवाचिताऽग्निशब्दस्या वसीयतइत्याशयः। पदान्तरेण पदान्तरस्य स्वाभाविकशक्तिनाशेन शक्त्यन्तरा-

नुत्पादकत्वादुपपदापेक्षित्वेऽपि मुख्यत्वानपायान्मुख्याद्विवेकानापादकत्वेनैतल्लक्षणार्थं नैतदित्यादिभाष्यं व्याचष्टे—**नैतदिति**। स्वभावादेव पैङ्गल्येऽस्याग्निशब्दं प्रति मुख्यत्वं लक्षणवाच्यत्वं नापेतमित्यर्थः। श्लोकं व्याचष्टे—**यथैवेति**। सम्बन्धानुभवजन्यसंस्कारसम्बन्धस्मृतिग्रहणायादिशब्दः। नचासाविति भाष्यं शब्दद्वयसमुदायावयवत्वाख्यं गुणशब्दात्प्रतीतेर्गौणतेत्येवं गौणत्वलक्षणदूषणार्थत्वेन व्याख्यातुं लक्षणान्तरमुदन्यस्यति—**अथेति**। माणवकाग्निशब्दसमुदायवाच्यस्य पैङ्गल्यस्याग्निशब्दात्मकमवयवं प्रति गौणतेत्यर्थः। एतल्लक्षणदूषणार्थत्वेन भाष्यं व्याचष्टे—**तदिति**। श्लोकं व्याचष्टे—**तत्रेति**। उभयोरपि पैङ्गल्यपिण्डस्वरूपयोर्वाच्यत्वादुभावप्यग्निमाणवकशब्दौ प्रात्यात्मिकयोरर्थयोर्मुख्यावित्युक्तेऽर्थे विषयगौणमुख्यविवेकप्रस्तावादर्थमुख्यत्वोक्तौ शब्दमुख्यत्वोक्तिरिति सूचनार्थेतिकरणः। वाक्यार्थस्यैकं पदं प्रति वाक्यावयवत्वात्मकगुणवशात्प्रतीतेर्गौणतेत्येवं लक्षणान्तरोपन्यासार्थमथेति भाष्यं व्याचष्टे—**इदानीमिति**। सर्ववाक्यार्थानां तर्हि शब्दं प्रति गौणत्वापत्तिरिति परिहारसूचनार्थम्—**पूर्ववदेवेत्युक्तम्**। एतल्लक्षणदूषणार्थं नैतदितिभाष्यं व्याचष्टे **तदिति**। अग्निमाणवकशब्दाभ्यामग्निमाणवकत्वयोरभिधानात्तद्विशिष्टैः कार्योक्तिः सम्भवतीति वाशङ्क्या—**नत्विति**। तच्छब्देनाग्निशब्दः परामृष्टः। पैङ्गल्यस्य तर्ह्यग्निशब्दवाच्यत्वात्पदार्थत्वोपपत्तेर्वाक्यार्थत्वसम्भवाद्युच्येत, ततो वाक्यार्थता भवेदित्यनेनऽवाच्यत्वात्पैङ्गल्यस्य वाक्यार्थत्वनिरासो न युक्त इत्याशङ्क्याह—**नचेति**। वाक्यार्थत्वनिरासमुपसंहरति—**तस्मादिति**। गौणमुख्यविभागादावसिद्ध्युपसंहरार्थन्तदेवमिति भाष्यं व्याचष्टे—**तेनेति**। पैङ्गल्यस्य शब्दावाच्यत्वोक्तेऽविरोधमाशङ्क्याह—**माणवकस्येति**। मन्दप्रसिद्धत्वात्मकं गौणलक्षणोपन्यासार्थं तथेति भाष्यं मन्दप्रसिद्धस्य गुणादवगतत्वाभावेन गौणशब्दवाच्यत्वायोगादयुक्तामाशङ्क्य, मन्दप्रसिद्धस्य मन्दप्रयोगविषयभूतस्य वाक्यार्थस्योपपादनं विना निश्चेतुमशक्यत्वादुपपदस्यैवात्रापि पक्षद्वयेऽनुग्राहकत्वेनाऽङ्गत्वाद् गुणता विवक्षितेति सूचयन् व्याचष्टे—**अथेति**। यथा मन्दप्रसिद्ध्या कृतमुपपदस्याश्रयणं च। यथा च सुष्ठु प्रसिद्ध्या कृतमनाश्रयणम्। तत एव दर्शयतीति मन्दप्रसिद्धत्वस्योपपदाश्रयणमिति, तत्वोक्त्या मन्दप्रसिद्ध्यर्थे प्रतीतावुपपदस्यानुग्राहकत्वाद् गुणत्वसूचिते कथं तर्ह्युपपदाधीनत्वपक्षात्पक्षान्तरतेत्याशङ्क्य मन्दप्रसिद्ध्यै सन्तमप्युपपदव्यापारं लक्षणत्वेन—**मुक्त्वेयुक्तम्**। एतल्लक्षणदूणार्थमिदमपीति भाष्यं व्याचष्टे—**तत्रेति**। ज्ञानस्य निरवयवत्वात्स्वतो न्यूनातिरिक्तत्वाभावेऽपि ज्ञात्रल्पबहुत्वाभ्यां न्यूनातिरिक्तत्वसम्भवमाशङ्क्य, ज्ञात्रल्पत्वात्संख्यातो ज्ञानाल्पत्वेऽपि मान्द्याप्रसिद्धेर्निरवयवत्वेन च स्वरूपपरिमाणाल्पत्वायोगान्निरवयवसामान्यमात्रविषयत्वेन च शब्दस्य ज्ञानस्य विषयाल्पपरिमाणतयाऽप्यल्पपरिमाणयोगान्मान्द्यायोगसूचनायाऽञ्जसा—**इत्युक्तम्**। अल्पप्रयोगित्वात्सकललक्षणोपन्यासार्थमथेति भाष्यमल्पप्रसिद्धत्वलक्षणाल्पप्रयोगित्वलक्षणस्य मूलभूतत्वेन विशेषं दर्शयन् व्याचष्टे—**इदानीमिति**। एतच्च लक्षणदूषणार्थेनैतादिति भाष्यं व्याचष्टे—**तदिति**। पुनःशब्देन सामर्थ्यनिमित्तप्रत्यायकत्वाच्छब्दस्य

मुख्यत्वेऽप्यर्थस्य गौणत्वनिरासः। प्रकृतं कथं सिद्ध्येदित्याशङ्क्य शब्दस्य मुख्यत्वेऽर्थस्यापि मुख्यतत्वापत्तिरिति परिहारार्थत्वेनातः सोऽपीति भाष्यव्याख्या सूचिता। यथा च तद्यथा गवादिशब्दानां पृथिव्यादिरित्यनेनोपपदधीनत्वस्येति व्याप्तिर्दर्शिता, तथास्य प्रसिद्धिप्रयोगयोरपि दर्शयितव्येत्याह—**इहापि सेति।**

अतिव्याप्तिमेव दर्शयितुं वृद्धश्लोकं पठति—**तथा चाहेति।** परकल्पितेषु गौणत्वलक्षणेषु मुख्याद्विवेकानापादकत्वेन दूषितेषु वाच्यगुणयोगेन प्रतीयमानत्वात्मकविवेकापादकलक्षणोक्त्यर्थमत्रेत्यादि भाष्यं तात्पर्यतो व्याचष्टे—**इदानीमिति।** अग्नेस्तावदभिधानमित्युत्क्रष्य तावच्छब्दो व्याख्येयः। अग्निवत्पैङ्गल्यस्य माणवके च पैङ्गल्यान्वयस्याप्यभिधानमस्त्वित्याशङ्क्याअग्निसम्बन्धादेव परिशिष्टस्यार्थस्य प्रतीतेरनभिधेयतामुक्तामाकृत्यधिकरणन्यायेन दृढयितुम्—**व्यक्तिवदित्युक्तम्।** परगुणानां परशक्यतां परगुणानां चेति वार्तिकोक्तां परिहर्तुमाह—**सन्ति चेति।** गुणव्यक्तीनां परत्राऽभावेऽपि सामान्यानि परत्र सतीत्युक्ते तत्सद्भावं द्रढयितुम्—

चित्रादौ यत्तु सादृश्यं सामान्यं तत्र किं भवेत्।
तत्रापि पृथिवीवर्णसंस्थानादिसमानतेति॥

प्रश्नोत्तररूपोपमानवार्तिकात्ततोक्ता। गुणयोगनिमित्तवृत्तित्वात्मकगौणत्वलक्षणव्युत्पादनस्य वेदे गौणत्वसिद्ध्यर्थमेवमिति भाष्यं दर्शपूर्णमासयोस्तृणसदृशाभावात् कुशविषयस्तृणशब्दो न कुशसदृशसुगन्ध्यादितृणान्तरोपगराजिस्तरणार्थविषयस्तृणसदृशशब्द इत्येवं स्पष्टत्वान्न व्याख्यातम्। गौणमुख्यविभागोक्तेरधिकरणारम्भसिद्ध्यर्थत्वोक्त्यर्थं तदेवमिति भाष्यं व्याचष्टे—**तस्मादिति।** सुखग्रहणार्थं गौणत्वलक्षणानि सङ्गृह्णाति **एते चेति।** स्वार्थं जहातीति जहत्स्वार्थोऽर्थान्तरभिधायी च। तस्या भावो जहत्स्वार्थाभिधायित्वम्। गुणिरूपाग्न्यादिस्वार्थत्यागेन गुणरूपे पैङ्गल्यादौ वृत्तिर्गौणत्वे कारणम्। अग्न्यादिजातिपैङ्गल्यादिगुणसङ्घातोऽग्न्यादिशब्दवाच्यः। सङ्घातिरहितगुणमात्रे शब्दप्रवृत्तिहेतुत्वाद् गौणत्वकारणम्। अग्न्यादिशब्दवाच्यस्याग्नित्वादेर्माणवकादावग्न्यादिगुणदर्शनेन कल्पनागौणत्वकारणमाणवकाद्युपपदसहायस्याग्न्यादिशब्दस्य पैङ्गल्यादौ वृत्तिरङ्गाख्यगुणभूतोपपदाधीनत्वाद् गौणत्वकारणमग्निर्माणवक इत्यादिशब्दस्यावयवार्थानपेक्षवर्णसमुदायरूपेण पैङ्गल्यादौ या प्रसिद्धिः तस्याभावं समुदायावयवभूतस्याग्न्यादिशब्दस्य पैङ्गल्यादौ समुदायावयवभूतत्वाख्यगुणवत् प्रवृत्तिहेतुत्वाद् गौणत्वकारणम्। पैङ्गल्यादेरग्निर्माणवक इत्यादिवाक्यार्थत्वमग्न्यादिशब्दस्य पैङ्गल्यादौ वाक्यवयवत्वाख्यगुणवत्त्वाद् गौणत्वकारणम् अग्न्यादिशब्दस्य पैङ्गल्यादावकल्पश्रोतृप्रसिद्धत्वमङ्गाख्यगुणभूतोपपदापेक्षत्वप्रतिनिमित्ताद्गौणत्वकारणम्। यस्मिन् पैङ्गल्यादावग्न्यादिशब्दस्याल्पैर्वक्तृभिः प्रयोगः, सोऽल्पप्रयोगी। तस्य भावोऽल्पप्रयोगिताऽल्पसिद्धत्ववद्गौणत्वकारणम्। एतान् गौणत्वकारणपक्षान्निरस्य, अग्न्यादिशब्दवाच्येनाग्नित्वादिनाग्न्यादिगुणस्य पैङ्गल्यादेर्लक्षणा माणवकादावग्न्यादि-

गुणवत्यग्निशब्दप्रवृत्तिहेतुत्वाद्गौणशब्दवाच्यरूपगौणत्वकारणत्वेन साधितेति। नवानां मध्ये युक्तायुक्तपक्षविवेकायोक्तं किं तावदिति पूर्वपक्षभाष्यं व्याचष्टे—**तत्रेति**। सकृदाम्नातस्य मन्त्रस्यावृत्त्यनापत्तिः साक्षान्मुख्ये विनियोगस्य मूलं भविष्यतीत्याशङ्क्य, प्रतिप्रधानमावृत्त्यविरोधोक्त्यर्थं परार्थत्वादित्युक्ते मुख्यविनियोगेन कृतार्थस्य गौणे विनियोजकश्रुत्यकल्पनादुभयाङ्गत्वायोगमाशङ्क्य, अनेन मन्त्रेण यदभिधातुं शक्नुयान् तदभिदध्यादिति गौणमुख्यसाधारणश्रुतिकल्पनेनोक्त्यर्थो नित्यशब्दः। अप्राकरणिकेऽपि तर्हि विनियोगापत्तिरित्याशङ्क्य, प्रकरणावगतसामान्यसम्बन्धसापेक्षत्वाल्लिङ्गस्याऽप्रकृते विनियोजकत्वायोगोक्त्यैव प्रकृते गौणे मुख्ये च—**प्रयोगितेत्युक्तम्**। संस्कारत्वादिति सूत्रस्य शङ्कोत्तरत्वेन व्याख्यार्थमपि चेति भाष्यं व्याचष्टे—**एवं चेति**। प्रकरणवच्चोदकोऽप्यनुग्रहीतव्य इत्याह—**तथेति**। ऋषिशब्देन दृश्यतेऽनेनेति व्युत्पत्त्या वेदाभिधानाद्वैदिकं मन्त्ररूपमार्षशब्देनोक्तम्। औत्पत्तिकेन प्रथमावगतेन मुख्येनैवार्थेन मन्त्राणां सम्बन्ध इत्येवं सिद्धान्तप्रतिज्ञार्थमध्यमसूत्रावयवव्याख्यार्थत्वेन स्पष्टत्वान्मुख्य एव चेति भाष्यमव्याख्याय, हेत्वर्थत्वेनाद्यावयवव्याख्यार्थं 'प्रकरणे हीत्यादिभाष्यं प्रधानैकवाक्यतां विनाप्यभिधेयार्थत्वोपपत्तेः प्रधानैकवाक्यतोक्त्यानर्थक्यादयुक्तमाशङ्क्य, क्रतुशेषत्वोक्त्यर्थत्वेनाऽर्थत्वं सूचयन्सूत्रावयवपाठपूर्वं व्याख्यातुमाह—**एवञ्चेति**।

मुख्यार्थप्रत्यायनद्वारा गौणेऽपि शक्त्युपपत्तेर्गौणमुख्यसाधारणैकविधिनियोजकश्रुतिकल्पनेनाविशेषादुभयत्र विनियोगं न त्विति भाष्येणाशङ्क्यऽनुष्ठेयत्वेनावगते पदार्थे स्मारकापेक्षिणि लिङ्गेन मन्त्रविनियोगादन्योन्यानपेक्षाणां च पदार्थानामनुष्ठेयत्वावगतेरन्योन्यानपेक्षाणामेव स्मारकापेक्षत्वात्प्रत्येकमेव पदार्थेषु मन्त्रविनियोजिकायां श्रुतौ कल्प्यायां मुख्यप्रत्यायनं विना गौणप्रत्यायनाशक्तेर्मुख्यप्रत्यायनशक्तेर्मुख्यविषयविनियोजकश्रुतिकल्पनां विना गौणविषयश्रुतिकल्पनायोगान्मुख्यविषयश्रुतिकल्पनायाः प्राथम्यावगतेर्मुख्यविनियोगेन मन्त्रस्य नैराकाङ्क्ष्यात्, गौणे मन्त्रविनियोजककल्पना न युक्तेत्येवं परिहारार्थतया मुख्येनार्थेन गौणार्थप्रत्यायनवेलायामपि मन्त्राणां प्रत्याय्यप्रत्यायनलक्षणासंयोगादित्येवमन्त्यावयवव्याख्यार्थं सत्यमित्यादिभाष्यं व्याचष्टे—**मुख्येन चेति**।

गौणेन कृतार्थत्वान्न मुख्ये श्रुतिकल्पनेत्येवं कस्मान्न भवतीत्याशङ्कां निरस्य श्लोकं व्याचष्टे—**अपि चेति**। 'अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यादिति द्वितीयमन्त्राधिकरणसूत्रन्यायेन सामर्थ्याधीनत्वाच्छ्रुतिकल्पनस्य' मुख्ये च निरपेक्षसामर्थ्यावगतेस्तत्रैव श्रुतेः प्राक्कल्पत्वाद्, गौणे तु सामर्थ्यस्य मुख्यसामर्थ्यपूर्वकत्वान्न वैपरीत्याशङ्का निरासाशयः। एतदुपपादनायैवार्थेन नित्यसंयोगादित्यनेनाजहत्स्वार्थवृत्ता गौणवृत्तेरुक्तेति सूचनार्थम्—**यदीत्युक्तम्**।

मुख्येनैवार्थेनोपायान्तरनिवृत्त्या मन्त्राणां स्मृत्युपायत्वेन नित्यसंयोगात्प्रकरणाम्नानार्थवत्त्वोपपत्तेर्गौणस्मृतावुपायान्तरनिवृत्त्यशक्तेः सामर्थ्यप्राप्तोपायान्तरनिवृत्त्यशक्तेः सामर्थ्यप्राप्तोपायान्तरबाधापादकगौणविनियोगायोगाक्त्यर्थतयाऽर्थेन नित्यसंयोगादित्य-

वयवस्यान्यथाव्याख्यार्थमपि च गौणस्येति भाष्यं व्याचष्टे—**किं चेति**। मुख्यविनियोगेन मन्त्रपाठस्य कृतार्थत्वेऽपि, मुख्यद्वारा गौणप्रत्यायनार्थं गौणोऽपि मन्त्रो विनियोज्य इत्याशङ्क्य, उपायान्तरेणापि गौणप्रत्यायनोपपत्तेर्मन्त्रनियमो न युक्त इत्येवं परिहारार्थत्वेन 'यदि गौणप्रत्यायनस्य नित्यं मुख्येनाऽर्थेनोपायोपेयत्वलक्षणः संयोगो भवेत्ततो मुख्यद्वारा मन्त्रस्य गौणेऽपि विनियोगः स्यात्, न त्वेतदस्तीति व्यवधारणकल्पनयाऽर्थेन 'नित्यसंयोगादित्यवयवस्यान्यथाव्याख्यार्थमपि च यो गौण इत्यादि मुख्य एव विनियोग' इत्यन्तं भाष्यमवयवशो व्याचिख्यासुः प्रत्याययतीत्यन्तं तावद्व्याचष्टे—**अपि चेति**। सचेदित्याशङ्काभाष्यं व्याचष्टे—**अन्यथेति**। यदित्युत्तरभाष्यं व्याचष्टे—**नेति**। अथेत्याद्याशङ्कोत्तरभाष्यं व्याचष्टे—**पाक्षिकत्वेऽपीति**। यदेति प्रकृतसिद्ध्युपसंहारभाष्यं व्याचष्टे—**नित्यमिति**। उपायान्तरेण गौणप्रतीतिसिद्धावपि, मन्त्रस्मारितस्याभ्युदयकारित्वाद् गौणेऽपि मन्त्रविनियोगो भविष्यतीत्याशङ्कानिरासार्थत्वेन साधनविशेषानपेक्षणार्थस्मृतिमात्रेण प्रयोजनभूतेनार्थानुष्ठातुः संयोगान्न मन्त्रस्मारितताऽऽदरणीयेत्याशङ्कानिरासार्थत्वेन मुख्येनार्थेन चेति भाष्यं व्याचष्टे—**न चेति**। मन्त्राम्नानानर्थक्यपरिहारार्थं मन्त्रस्मारितता[1]दरणीयेत्याशङ्कानिरार्थत्वेन मुख्येनार्थेन मन्त्रस्य स्मार्यस्मारकत्वसंयोगमात्रादाम्नानार्थवत्त्वोपपत्तेर्न्न गौणस्य मन्त्रस्मारिततादरणीयेत्येवमवधारणार्थनित्यशब्दाभ्युपगमेनैव पञ्चमव्याख्यार्थमथापीति भाष्यं व्याचष्टे—**मन्त्रेति**। पञ्चस्वपि व्याख्यासु सकृत्सूत्रं योजयति—**तेनेति**। नित्योपपादनायाव्यभिचारितोक्ता ॥१॥

भा० प्र०—पूर्वपाद में प्रधान रूप से श्रुति के विनियोग का विचार किया गया है। इस पाद में लिङ्ग के विनियोग का विचार किया जायेगा। लिङ्ग के अर्थ में मन्त्रों का अर्थ के बोध कराने का सामर्थ्य है। जैसे श्रुतियों में "बर्हिर्देवसदनं दामि" (मैं० सं० १।१।२) यज्ञीयपात्रों के आश्रय कुश को काटता हूँ। यह मन्त्र कहा गया है। यह छेदन के प्रकरण में प्रयोज्य है, कारण, यह लिङ्ग का = अर्थ के प्रकाशन के सामर्थ्य के द्वारा छेदन रूप अर्थ का प्रकाश करता है। इस मन्त्र का अर्थ यह होता है कि "देवों का सदन अर्थात् आसन जो वर्हिः उसका मैं छेदन करता हूँ", और छेदनयोग्य जो वर्हिः = कुश उसका मुख्य और गौण के भेद से दो प्रकार हैं। कुश, काश आदि मुख्य वर्हिः हैं और उसके समान उलप आदि तृण विशेष गौणवर्हिः है। "अग्निर्माणवकः" इस स्थल में जैसे गुणवृत्ति के अनुसार उलप आदि तृण विशेष में भी गुण के अनुसार वर्हि इस शब्द का प्रयोग होता है। अतः मुख्य अर्थ का गौण अर्थ भी जब शब्द से बोध्य होता है, तब "बर्हिर्देवसदनं दामि" यह मन्त्र लिङ्ग के अनुसार कुश का छेदन एवं उसके समान अन्य तृणों का भी छेदन रूप अर्थ प्रकाशित करता है,

---

१. अवश्यादरणीयेत्येवमवधारणार्थनित्यशब्दाभ्युपगमेनान्यथा व्याख्यार्थमर्थेन चेतिभाष्यं 'व्याचष्टे नचेति' इति २ पु० पा०।

अतः, अन्य तृण के छेदन में भी यह प्रयोज्य होगा—इस प्रकार के मत का पोषण कर सकते हैं।

इस प्रसङ्ग में सिद्धान्ती का कहना है कि—

"गौणे सदपि सामर्थ्यं न प्रमाणान्तराद् विना।
आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्॥"

शब्द से मुख्य अर्थ की प्रतीति शीघ्र ही होती है। कारण, वह बाध बुद्धि एवं गुणगत सादृश्य से समान अपेक्षा रखता है। इसलिए मुख्य अर्थ का प्रकाश कर मन्त्र लिङ्ग के द्वारा मन्त्र का लिङ्ग चरितार्थ हो जाने से वह अतिरिक्त विलम्ब से गौण प्रतीति की अपेक्षा नहीं करता है। इसलिए मुख्य कुश आदि का छेदन ही मन्त्र का विनियोज्य है, अन्य तृण रूप गौण बर्हिः के छेदन में विनियोज्य नहीं है।

"अर्थाभिधानसामर्थ्यात्" = अर्थ प्रत्यायन का अर्थात् अनुष्ठेय कर्म के अर्थ प्रकाश का सामर्थ्य अर्थात् शक्ति होने से "मन्त्रेषु शेषभावः स्यात्" मन्त्रों में भी शेषभाव होने से अर्थात् मन्त्र भी यज्ञ का अङ्ग है, "तस्मात्" = इसलिए, "उत्पत्तिसम्बन्धः" = उत्पत्ति अर्थात् औत्पत्तिक अर्थात् स्वाभाविक मुख्य अर्थ के साथ ही कर्मों का सम्बन्ध होगा, "नित्यसंयोगात्" = क्योंकि मन्त्र अनुष्ठेय कर्म के होने से मन्त्र का मुख्य अर्थ के साथ ही सम्बन्ध होगा, कारण, मुख्य अर्थ के साथ ही शब्द का स्वाभाविक सम्बन्ध रहता है॥ १॥

## संस्कारकत्वादचोदिते न स्यात्॥ २॥

**शा० भा०—अथ यदुक्तं—पूषाद्यनुमन्त्रणादीनामुत्कर्षो न भविष्यतीति। युक्तस्तेषामुत्कर्षः। संस्कारको हि मन्त्रः। सोऽसति संस्कार्येऽनर्थक इति यत्रार्थवांस्तत्र नाययिष्यते। न च कश्चिद्दोषो भविष्यति॥ २॥ आ० नि०॥ इति प्रथमं लवनप्रकाशकमन्त्राणां मुख्ये विनियोगाधिकरणम्॥ १॥**

त० वा०—अचोदिते—पूषादौ दर्शपूर्णमासयोर्यन्मन्त्रा न विनियुज्यन्ते, युक्तमेव तत्। संस्कारस्य संस्कार्यपरत्वाल्लिङ्गेन च प्रकरणबाधात्। कथं पुनरेषामुत्कृष्टानां वैदिकैः कर्मभिर्योगः। कथं वा क्रत्वङ्गसामान्यविनियोगमन्तरेण लिङ्गं देवतायामेव केवलायां विनियोजकमिति।

तदुच्यते—

यागानुमन्त्रणानीति समाख्या क्रतुयोजिनी।
तस्माच्छक्त्यनुरोधेन प्राप्तिस्तद्दैवते क्रतौ॥

यागानुमन्त्रणसमाख्या ह्येषां यागसम्बन्धादृतेऽनुपपद्यमाना यागसामान्याङ्गत्वं गमयति।

अतो विशेषचिन्तायामशक्येष्वनियोजनात् ।
शक्यार्थविनियोगाय[1] लिङ्गव्यापारसंभवः ॥ २ ॥
( इति मन्त्राणां मुख्यार्थविनियोगाधिकरणम् ॥ १ ॥ )

न्या० सु०—भाष्यव्याख्यार्थे सूत्रं योजयति—**अचोदित इति**। लिङ्गेन प्रकरणबाधस्यादोषत्वोक्त्यर्थंतया न च कश्चिदिति भाष्यावयवं व्याख्यातुं लिङ्गेन चेत्युक्तम्। कर्मान्तराङ्गत्वेऽपि तर्हि प्रमाणाभावादानर्थक्यं स्यादित्याशङ्कते—**कथं पुनरिति**। वैदिकत्वसामान्योपस्थापितवैदिककर्मान्तराङ्गत्वं सन्निधानाख्येन पञ्चमप्रमाणेनाशङ्क्य, आहवनीयादिवत्सामान्यत कर्माङ्गत्वानवगमात्सामान्यमात्रेणानाकाङ्क्षिता कर्मविशेषाङ्गता बोद्धुमशक्येति परिहारसूचनार्थं वैदिकोक्तिः। कर्मानङ्गत्वेऽपि लिङ्गाद्देवताङ्गत्वं भवतीत्याशङ्क्याह—**कथं चेति**। क्रत्वङ्गभूतेऽर्थे सामान्यतो मन्त्रविनियोगाभावे कर्मापूर्वसाधनत्वापेक्षायां विनियोगापत्तेर्नैष्फल्यप्रसङ्गान्न लिङ्गमात्रादङ्गत्वं सम्भवतीत्याशयः। परिहरति **तदिति**। पूर्वार्द्धं व्याचष्टे—**यागेति**। उत्तरार्द्धं व्याचष्टे—**तत इति**। चोदकानुग्रहशङ्कोत्तरत्वे तु विकृतावचोदितेऽग्न्यादावग्न्यादिशब्दो यत्र भवति, तत्तथा, युक्तमित्येवं सूत्रयोजना स्पष्टत्वान्न कृता ॥ २ ॥

**इति प्रथमं लिङ्गाधिकरणम् ॥**

भा० प्र०—प्रदर्शित सिद्धान्त के उत्तर में पूर्वपक्षी का कहना है कि गौण अर्थ के स्थल में भी मन्त्र को अङ्ग न मानने पर स्थल-स्थल में मन्त्र का उत्कर्ष करना होगा अर्थात् प्रकरण से जोड़कर अन्यत्र ले जाना होगा, क्योंकि, ऐसा न मानने पर मन्त्र असमवेतार्थ अर्थात् अनन्वित अर्थ का बोधक होगा। जैसे दर्शपूर्णमास में पूषा देवता नहीं किन्तु पूषानुमन्त्रण मन्त्र है। यदि गौण स्थल में प्रयोज्य नहीं होता है तो दर्शपूर्णमास में पूषा देवता न होने से जहाँ पूषा देवता है, वहाँ मन्त्र को छोड़कर चलना होगा। किन्तु गौण अर्थ के स्थल में भी यदि मन्त्र का पाठ हो तो पूषानुमन्त्रण मन्त्र का उत्कर्ष नहीं होगा, अपितु दर्शपूर्णमास में ही पाठ होगा, क्योंकि, वहाँ अग्निदेवता है और पूषा शब्द गौणवृत्ति के अनुसार अग्निरूप अर्थ का भी वाचक हो सकता है। इस प्रकार अग्नि आदि शब्द सूर्य आदि का भी वाचक हो सकता है।

इसके समाधान में सिद्धान्ती का कहना है कि पूर्वपक्षी जिस उत्कर्ष की चर्चा करते हैं वह हम लोगों को अभीष्ट है। मन्त्र अनुष्ठेय विषय का प्रकाश कर संस्कार का साधक होने से असमवेतार्थ अर्थात् अनन्वित अर्थ के स्थल में मन्त्र का उत्कर्ष करना होगा—जहाँ मन्त्र समवेत अर्थ अर्थात् अन्वर्थ होता है वहाँ उसको छोड़कर चलना होता है, क्योंकि, इसी से वह सार्थक होता है, वह निरर्थक हो जायगा। ऐसी स्थिति में जिस

---

१. क० शब्दार्थ।

मन्त्र का उत्कर्ष भी सम्भव नहीं है, उसमें अगत्या उसको जपमात्रोपयोगी मानना होगा अर्थात् उसका उच्चारण ही उस कर्म का अपूर्व जनक होकर साङ्गता का साधन करता है।

"संस्कारवत्त्वात्" = मन्त्र संस्करण का साधक होने से अर्थात् अर्थ के प्रकाश आदि के द्वारा अनुष्ठेय पदार्थ का संस्कार साधक होता है, इसलिए "अचोदिते" = जिस स्थल के मन्त्र के द्वारा प्रकाश्य देवता नहीं है, उस कर्म में अथवा कर्म में अविहित पृषा आदि देवता, "न स्यात्" = नहीं होगा अर्थात् अङ्ग नहीं होगा ॥ २ ॥

प्रथम मन्त्रों का मुख्यार्थ विनियोगाधिकरण।

## [२] वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥ सि०

शा० भा०—अग्नौ श्रूयते—'निवेशनः संगमनो वसूनामित्यैन्द्रचा गार्हपत्यमुपतिष्ठते' (मै० सं० ३.२.४) इति। तत्र संदेहः—किमिन्द्रिस्योपस्थानं कर्तव्यम्, उत गार्हपत्यस्येति। कुतः पुन'र्गार्हपत्यमुपतिष्ठते' इत्येवं विस्पष्टे वचने संशय इति। उच्यते। यदि वाक्येनोपस्थानं तत्स्तुतिवचनेन संस्करणम्, न समीपस्थानमात्रम्। न चेन्द्रेण मन्त्रेणाग्नेरभिधानं शक्यते कर्तुम्। अतो 'गार्हपत्यमुपतिष्ठते' इति न गार्हपत्यार्थमुपस्थानमेतदिति जायेत शङ्का। गार्हपत्य उपस्थानार्थो भवेदिति। तादृशश्च शब्दो नास्ति तृतीयान्तः, सप्तम्यन्तो वा। तस्माद्विचारः कथमुपपन्नं भवतीति[1]। किं तावत् प्राप्तम्? सामर्थ्यादिन्द्रोपस्थानम्। अशक्यत्वाच्च गार्हपत्योपस्थानस्य। कथं द्वितीयाविभक्तिरिति चेत्? अविवक्षिता, ईप्सितार्था वा सम्बन्धमात्रप्रधाना।

यद्वोपस्थानविशेषणं सम्बन्धाद्गार्हपत्यशब्दः। गार्हपत्यविशिष्टमुपस्थानमिन्द्रार्थं कर्तव्यमिति। गार्हपत्यश्च देशेन विशिष्यात्। स्यात् मुख्यमेव कार्यं मन्त्राणाम्। एवं प्राप्ते।

ब्रूमः। वचनात्त्वयथार्थमैन्द्री स्यात्। नैतदस्तीन्द्रार्थमुपस्थानमिति। अयथार्थमैन्द्री स्यात्। कुतः? वचनसामर्थ्यात्। वचनमिदं भवति, 'ऐन्द्रचा गार्हपत्यमुपतिष्ठते' इति। गार्हपत्ये द्वितीया विभक्तिः प्राधान्यमाह। किमिव वचनं न कुर्यात्।

नास्ति वचनस्यातिभारः। तस्माद्गार्हपत्यार्थमुपस्थानम् ॥ ३ ॥

त० वा०—अपवाद आरभ्यते। निवेशनः संगमनो वसूनामित्यैन्द्रचा गार्हपत्यमुपतिष्ठत इति। यद्यपि मन्त्रार्थोऽग्नावप्युपपद्यते, तथाऽपि तद्धितश्रुत्यैवे-

---

१. ब० भवेदिति।

न्द्राभिधानसामर्थ्यमत्र[1] मुख्यमिति विज्ञायते। केषांचित्तु 'कदाचन स्तरीरसि' इत्येषा ऋक् पठ्यते। तत्र पूर्ववदेव संदेहः, किं मुख्यत्वादिन्द्रोऽभिधातव्य, उत वचनसामर्थ्याद्गौणो गार्हपत्य इति। सत्यपि च संयुक्तश्रवणेऽरुणावदशक्तेः संदेहो योजनीयः। तत्र द्रव्यपरिच्छेदद्वाराऽपि क्रयसंबन्धो लब्धः। इह तु शब्दार्थसंबन्धस्यौत्पत्तिकत्वेनाशास्त्रहेतुत्वादत्यन्ताशक्तत्वम्। न हि कथंचिदिन्द्रशब्दो गार्हपत्यं ब्रवीति। अभिधानं चेदं चोदितम्, उपतिष्ठत इत्यात्मनेपदनिर्देशात्। मन्त्रकरणव्यापाराभिधाने[2] ह्येतत्। न चाभिधानं मुक्त्वाऽन्यत्र मन्त्रः करणं भवति। तेन 'इन्द्रयोपतिष्ठते' इत्येतावता तावदिन्द्रोपस्थानं विज्ञायते। गार्हपत्यमिति च द्वितीययाऽग्नेः प्रकाश्यत्वम्। तत्र किं समञ्जसं, किमसमञ्जसमिति जायते संशयः। न हीन्द्रोपस्थान एव साधनान्तरं गार्हपत्यो ज्ञायते। किं प्राप्तम्? पूर्वाधिकरणेनेन्द्रोपस्थानमिति। **कथं द्वितीयेति चेत्।** सक्तुवत्साधनान्तरमधिकरणापादानादि लक्षयिष्यति। शक्नोति विरोधादीप्सिततमत्वमविवक्ष्यमाणं कारकमात्रं लक्षयितुम्। तत्र च 'द्रव्याणां कर्मसंयोगे' इत्यनेन गार्हपत्यस्याङ्गत्वं भविष्यति।

**यद्वोपस्थानविशेषणं संबन्धाद्गार्हपत्यशब्द** इन्द्रलक्षणार्थ इति केचित्। एतदुक्तं भवति। विभक्तिर्वा लक्षणावृत्ता प्रातिपदिकं वा यज्ञसाधनसाधर्म्याल्लक्षणार्थम्, द्वितीया मुख्येति।

**अथवोपस्थानविशेषणमित्यत्र** धात्वर्थमात्रमुक्तम्। एककर्मविषयत्वं हि गार्हपत्यमन्त्रयोर्विप्रतिसिद्धम्। यस्य मन्त्रः करणम्, न तस्य गार्हपत्यः कर्म। यस्यासौ कर्म, न तस्य मन्त्रः करणम्। द्वौ चेह प्रकृतिप्रत्ययसमूहेन व्यापारावुपात्तौ। प्रकृत्या समीपस्थानम्, प्रत्ययेन प्रकाशनम्। तत्र प्रकाशने यादृशं गार्हपत्यस्य कारकत्वम्, तादृशं व्याख्यातम्। इदानीं मुख्यमेव कर्मत्वं प्रकृत्यर्थं प्रत्युच्यते। तेनैतदुक्तं भवति। गार्हपत्यं समासीदन्निन्द्रं प्रकाशयेदिति। यद्यपि च प्रत्ययार्थप्राधान्यात्तत्कर्मत्वं युक्तम्, तथाऽप्ययोग्यत्वात्ततो निवृत्तं **संबन्धात्प्रकृत्यर्थमुपसंक्रामति**। तस्मान्मुख्यमेव कार्यं मन्त्राणामित्येवं प्राप्ते।

ब्रूमः—वचनादयथार्थत्वं मन्त्राणामिति। कुतः?

गौणत्वं यत्र नाम स्यात् क्वचिद् ब्राह्मणमन्त्रयोः।
तत्रानुवादरूपत्वान्मन्त्राणां गौणतेष्यते॥

गार्हपत्यस्तावद् द्वितीयया प्रधानस्य प्रत्ययार्थस्य कर्मेति श्रुत्या गम्यते। तेनैन्द्र्या स प्रकाशयितव्यः। तत्र यद्ययथार्थत्वं[3] वचनानुरोधेन संजातम्, तथा नामेत्यध्यवसातव्यम्। अवश्यंभावि ह्यत्र ब्राह्मणस्य, मन्त्रस्य वा गौणत्वम्। तत्र ब्राह्मणस्यात्यन्ताप्राप्तविधित्वात् प्रथमप्रवृत्तेश्चानन्यप्रमाणकेऽर्थे गौणत्वमयुक्तम्।

१. क० अस्य। २. क० अभिधानं। ३. क० यद्यथार्थत्वं।

मन्त्रस्य तु ब्राह्मणचोदितार्थप्रकाशनात्तत्परतन्त्रवृत्तेः ।
विरोधिनं स्वार्थमतीत्य मुख्यं युक्तो हि गौणार्थनिमित्तभावः ॥
तेन कारकसामान्यं लक्ष्यते न द्वितीयया ।
येनात्र गार्हपत्योऽपि[1] संबन्धात्स्याद्विशेषणम् ॥
न चावयवसंबन्धादिन्द्रो गृहपतेर्यतः ।
तेनात्र गार्हपत्यः स्याद्रूढ्याऽग्निप्रत्ययाद् दृढात् ॥ ३ ॥

अथ द्वितीयमैन्द्र्यधिकरणम् ॥ २ ॥

न्या० सु०—गौणसामर्थ्यस्य विनियोजकत्वे निरस्ते विनियोजकश्रुतिसहायतापि गौणसामर्थ्यस्य न सम्भवतीति प्रसक्तस्यापवादायैतदधिकरणमित्यनन्तरसङ्गतिमाह—**अपवाद इति ।**

निवेशनः सङ्गमनो वसूनां विश्वारूपा अभिचष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे वसूनामित्युपमार्था ॥

येन कारणोपमानतयाऽस्मिन्मन्त्रे निर्देशादप्राधान्यात्

गतेर्धरो ध्रुवः तथा सोम आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिता ॥

इत्यनलशब्दवाच्यस्य वाग्नेर्वसुत्वस्मरणादुक्तानां मध्येऽग्निर्वा नाम वसुरिन्द्र इव संग्रामे स्थितवानित्यग्निस्तुतिप्रतीतेर्वसूनां पावकश्चास्मीति चाग्नेरेव वसुश्रेष्ठत्वस्मरणात्तत्समीपेऽन्येषां वसूनां गमनाद्वसुसङ्गमनोत्वेनाप्यग्नेरेव स्तुतिप्रतीतेर्नेयमृगैन्द्रीत्वेनोदाहार्येत्याशङ्क्याह—**निवेशन इति ।** बलाबलाधिकरणे श्रुत्या लिङ्गबाधस्य वक्ष्यमाणत्वान्मन्त्रस्य स्वरससामर्थ्यानालोचनेनैन्द्र्येति देवतातद्धितश्रुत्यैन्द्रप्राधान्यावगमाद्रामरावणयोरिवेतिवच्चानन्यचरितत्वेनेन्द्रस्यापीन्द्रोपमानरूपस्तुतिसम्भवादैन्द्रीत्वेनैषोदाहृतेत्याशयः विज्ञायतइति कृत्वैतदुदाहरणं युक्तमित्यध्याहारेण ग्रन्थो योज्यः । मन्त्रस्वरससामर्थ्यालोचनेन च पूर्वपक्षकरणे बलाबलाधिकरणवदिहापि 'कदा चनस्तरीरसीत्यृचः' शाखान्तरपठिताया उदाहार्यत्वापत्तेस्तद्धितश्रुत्यालोचनयैवेह पूर्वपक्ष इत्यपौनरुक्त्यसूचनायाह—**केचां चित्विति ।** असमर्थविनियोगाशक्तेः श्रुत्या सहायत्वेनापेक्षितं सामर्थ्यं किं मुख्यमेव सहायतामश्नुते, गौणमपि चेति सन्देहो भाष्योक्तसन्देहस्य हेतुरिति सूचयितुमाह—**तत्रेति ।** कुतः पुनरित्याद्याक्षेपपूर्वकसन्देहसमाधानार्थं भाष्यं शब्दवस्तुविसंवादात्संदेहो घटनीय इत्येवमर्थत्वेन तात्पर्यतस्तावद्व्याचष्टे—**सत्यपि चेति ।** नचारुणवन्मन्त्रस्य कथंचिदपि शक्तिर्वक्तुं शक्या, यतस्तन्निर्णयेनैव निर्णयः स्यादित्याह—**तत्रेति ।**

---

१. क० गार्हपत्योऽयं ।

प्रमाणान्तरेणेन्द्रशब्दस्य[1] गार्हपत्यपरताऽवगमिष्यत इत्याशङ्क्याह—**नहीति**। तात्पर्यंतो व्याख्यातं भाष्यमवयवशो व्याचिख्यासुर्यद्धीत्यवयवं तावद्व्याचष्टे—**अभिधानं चेति**। नोपस्थानमन्त्रचोदितम्, किं त्वभिधानमपीति चकारेण वदता वचनेनाभिधानेनोपस्थानमित्युक्ते विनाप्युपस्थानमभिधानसम्भवादभिधानपरतया नोपस्थानमाद्रियेतेत्याशङ्क्य, संस्क्रियते पूज्यतेऽनेनेति संस्कारशब्देनोपस्थानस्य सम्पूज्यार्थतायामुक्तायाम्, कथं तर्ह्यभिधानार्थतेत्याशङ्क्या, अभिधानस्य स्तुतिरूपपूजात्मकत्वेनैकपदैस्तुल्ययोगाद्वाक्योक्त्योपपादिते सम्बन्धभाष्यव्याख्या सूचिता।

कथमात्मनेपदादभिधानार्थताऽवसीयतइत्याशङ्क्यपान्मन्त्रकरण इत्युपपूर्वात्तिष्ठतेर्मन्त्रकरणकेऽर्थे वर्तमानादात्मनेपदस्मृतिमालोच्य तिष्ठतिनमन्त्रकरणस्य व्यापारस्याभिधाने ह्यात्मनेपद भवति। न चाभिधानत्वमनपेक्ष्य व्यापारान्तरे मन्त्रः करणमित्युक्तम्। नचेत्याद्याशङ्क्येत्यन्तं भाष्यावयवं व्याचष्टे—**नेति**। उपपूर्वस्यापि तिष्ठतेर्लोकेऽभिधानवाचित्वाप्रसिद्धेः फलभोक्तृत्वयोग्यताधानार्थानां यजमानसंस्काराणां यागकार्यभोक्तृत्वयोग्यतोत्पादनाद्यागाङ्गत्ववत्समीपस्थानस्याभिधानार्थत्वे सति समीपस्थानस्याभिधानार्थत्वकल्पनान्मन्त्रकरणकत्वोपपत्तौ प्रसिद्धसमीपस्थानवाचित्वत्यागायोगादभिधानार्थसमीपस्थानवाचित्वेनोपपूर्वस्यतिष्ठतेरात्मनेपदमवगम्यते। न तु समीपस्थानवाचित्वत्यागेन वाचितेति सूचनायोपस्थानोक्तिगार्हपत्यस्य समीपस्थाने कर्मत्वसम्भवेऽप्यभिधानकर्मत्वोक्त्यर्था प्रकाश्यत्वोक्तिः। एतदभिधानाप्रयोजनसमीपस्थानरूपमुपस्थानं गार्हपत्यसंयोगार्थमित्यनवगमेऽपि तद्धितद्वितीययोर्विप्रतिपत्तौ तद्धितः समंज्जसो, द्वितीया वेति सन्देहात्कैमर्थ्याशङ्का जायते। न तु गार्हपत्यार्थत्वं निश्चीयतइत्येवं व्याख्या तत्रेत्यनेन सूचिता।

अनीप्सितेऽपि द्वितीयास्मृतेर्गार्हपत्यस्याङ्गत्वेनान्वयसम्भवाद्विरोधपरिहारमाशङ्क्य, सक्त्वधिकरणेऽनीप्सितत्वस्य द्वितीयावाच्यत्वनिषेधाद्विरोधसमर्थनार्थं गार्हपत्य इति भाष्यं व्याचष्टे—**न हीति**। किं तावदिति पूर्वपक्षभाष्यं व्याचष्टे—**किमिति**। कथमित्याशङ्काभाष्यं व्यचष्टे—**कथमिति**। अविवक्षितेप्सितार्था वेति परिहारभाष्यमनीप्सितार्थं वेति परिहारभाष्यमनीप्सितार्थवाचित्वाभावेऽपि वाच्येनेप्सिततमत्वात् कर्माख्यकारकविशेषेण क्रियासम्बन्धात्मककारकसामान्यलक्षणाद्वाराधिकरणादिकारकविशेषान्तरलक्षणाशयत्वेन व्याचष्टे—**सक्तुवदिति**। गार्हपत्यदेशे स्थित्वा ततो निर्गत्येन्द्रमुपतिष्ठेतेति विध्यर्थसूचनायाधिकरणमपादानं वादीयते लक्ष्यतेऽनेनेति व्युत्पत्त्या कारकत्वं सामान्यस्यादिशब्देनोक्तत्वादधिकरणापादानदिलक्षणं कारकत्वसामान्यं द्वितीया लक्षयिष्यतीत्यर्थः। वक्ष्यमाणपक्षापेक्षया भाष्ये वाशब्दः। लिङ्गानुरोधेन श्रुतेर्लक्षणापादानादिलक्षणं कारकत्वं सामान्यं

1. गार्हपत्यवाचित्वानवगमेऽपि अनेनैव शास्त्रेण तद्वाचित्वावगमाच्छक्तिर्भविष्यतीत्याशङ्क्य संबन्धस्याशास्त्रहेतुकतोक्ता शास्त्राद्वाच्यवाचकलक्षणसंबन्धानवगमेऽपि गुणवृत्त्येन्द्रशब्दस्येत्यधि० २ पु० पा०।

द्वितीया लक्षयिष्यतीत्यर्थः। वक्ष्यमाणपक्षापेक्षया भाष्ये वाशब्दः। लिङ्गानुरोधेन श्रुतेर्लक्षणावृत्तिरयुक्तेत्याशङ्क्याह—**शक्नोति हीति**। तद्धितश्रुत्यैवेन्द्रप्राधान्यावगमे तस्याश्च मुख्यत्वेन लक्षणावृत्त्ययोगात्पश्चाच्छ्रुताया द्वितीयाया एवं तद्धितश्रुतिविरोधाल्लक्षणावृत्तिर्युक्तेत्याशयः। अधिकरणादिरूपकारकविशेषलक्षणा भाष्ये कस्मान् नोक्तेत्याशङ्क्य, न्यायलभ्यत्वादिति सूचयितुमाह—**तत्र चेति**।

यद्वेति भाष्यं गार्हपत्यशब्दो गार्हपत्यगुणयज्ञसाधनत्वसम्बन्धाद् गृहपतेर्यजमानस्य देवता भूता वेत्यवयवसम्बन्धाद्वेन्द्रलक्षणार्थः सन्निधानरूपमुपस्थानं प्रतिधान्येन विशेषणम्। तस्माद् गार्हपत्यशब्दविशिष्टमप्युपस्थानमिन्द्रार्थमेव। कार्यं चेन्द्राख्यस्य गार्हपत्यस्यासंनिधानात्समीपस्थानपूर्वकाभिधानकर्मत्वं न सम्भवतीति वाच्यम्। पुराणेतिहासेषु इन्द्रस्य प्राचीदिक्पालत्वस्मृतेः प्राच्यां च दिश्यैन्द्रीत्वव्यपदेशात्प्राग्देशाभिमुखस्थाने देशद्वारेन्द्रस्य सामीप्यविशेषणत्वोपपत्तेरित्येवं व्याचष्टे—**यद्वेति**। पूर्वभाष्ये द्वितीयायाः क्रियासम्बन्धाख्यकारकत्वसामान्यमात्रलक्षणार्थत्वेऽभिहिते, यद्वेति भाष्ये गार्हपत्यस्य द्वितीयोक्तकर्माख्यकारकविशेषलक्षककारकत्वसामान्यरूपेण क्रियासम्बन्धान्निर्विशेषसामान्यायोगेन कारकाविशेषापेक्षायां द्रव्यकर्मसंयोगन्यायेनाधिकरणतया, अपादनतया वाङ्गत्वेन विशेषणं गार्हपत्यः। तस्माद् गार्हपत्याङ्गकमुपस्थानमिन्द्रप्रधानकं कार्यम्। गार्हपत्यस्य च दाहकत्वात्स्वतोऽधिकरणापादानत्वायोगेऽपि समीपदेशद्वाराधिकरणत्वेन, अपादनत्वेन वा विशेषणत्वं भविष्यतीत्येवं व्याख्यान्तरसूचनार्थः केचिच्छब्दः। कारकान्तरलक्षणेन्द्रलक्षणार्थत्वपक्षयोर्विवेकमाह—**एतदिति**।

इन्द्रलक्षणार्थत्वे ग्रन्थाननुगुणत्वापत्तेरपरितोषात्स्वमतेन धातुस्वरसोक्तसमीपस्थानमात्ररूपमुपस्थानं प्रति प्राधान्येन गार्हपत्यशब्दो विशेषणम्। तस्माद् गार्हपत्यप्रधानकमुपस्थानमिन्द्रप्रधानार्थं कार्यम्। गार्हपत्यस्यैव च सन्निहितदेशत्वात्समीपस्थानं प्रति कर्मत्वेन विशेषणतोपपद्यते, नत्वसन्निहितस्येवं व्याख्यातुमारभते—**अथ वेति**। आत्मनेपदद्योतिताभिधार्थत्वे विशिष्टसमीपस्थानरूपधात्वर्थनिरासार्थेन मात्रशब्देन समीपस्थानमात्रमनेनोपस्थानशब्देनोक्तमित्युक्तम्। एवं च सत्यभिधाने मन्त्रस्य करणत्वात्समीपस्थाने च गार्हपत्यस्य कर्मत्वाद्भिन्नक्रियाविषयत्वेनेन्द्रगार्हपत्यशब्दयोरविरोधो भवतीत्याह—**एकेति**।

एकेन धातुनैकस्यैव व्यापारस्योक्तत्वान्न भिन्नव्यापारविषयत्वं सम्भवतीत्याशङ्क्याह—**द्वौ चेति**। शुद्धया प्रकृत्या समीपस्थानवद् गार्हपत्यस्य कर्मत्वाद्भिन्नक्रियाविषयत्वेनेन्द्रगार्हपत्यशब्दयोरविरोधो भवतीत्याह—**एकेति**। एकेन धातुनैकस्यैव व्यापारस्योक्तत्वान्न भिन्नव्यापारविषयत्वं सम्भवतीत्याशङ्क्याह—**द्वौ चेति**। शुद्धया प्रकृत्या समीपस्थानमात्मनेपदाख्यप्रत्ययानुगृहीतया प्रकृत्या प्रकाशनमित्येवं द्वौ व्यापारावुपात्तावित्यर्थः। अस्मिश्च व्याख्याने द्वितीयाप्रातिपदिकयोर्द्वयोरपि श्रुतिवृत्तत्वादयमेव परिहारोऽभिमतः।

न तु पूर्वः, द्वितीयाया लक्षणावृत्तित्वादित्याह—**तत्रेति**। व्याख्यानस्याधिकरणत्वस्यापादानत्वे वा समीपस्थानानपेक्षप्रकाशनं प्रत्ययोगात्समीपस्थानान्विते प्रकाशनइत्यर्थः। शुद्धधातुवाच्यत्वात्समीपस्थानमात्रं धात्वर्थो विवक्षितः। समीपस्थानपूर्वकप्रकाशनमात्मनेपदाख्यप्रत्ययानुगृहीतधातुवाच्यत्वात्प्रत्ययार्थो विवक्षितः। एवं चास्मिन्पक्षे विध्यर्थो भविष्यतीत्याशङ्क्याह—**एतदिति**।

प्रकाशनस्य प्रत्ययानुगृहीतधातुवाच्यत्वात्प्रत्ययार्थतया प्राधान्याद् गार्हपत्यस्यापि प्रकाशनमेव प्रति कर्मतेत्याशङ्क्य समीपस्थानस्य प्रकृत्यर्थस्य प्रत्ययार्थेन प्रकाशनेनाङ्गतया सम्बन्धादानर्थक्यतदङ्गन्यायेन प्रकाशनान्वयायोग्यं कर्म समीपस्थानेऽवतरतीत्येवं निरासार्थत्वेन सम्बन्धादिति भाष्यावयवं व्याचष्टे—**यद्यपि चेति**। मुख्यमेवेतिभाष्यं पूर्वपक्षोपसंहारार्थत्वेन व्याचष्टे—**तस्मादिति**।

सिद्धान्तमाह—**एवमिति**। वचनशतेनाप्यशक्यविनियोगायोगाद् गौणशक्त्याश्रयणे तु मुख्यैन्द्रीशब्दानुरोधेन गार्हपत्यशब्दस्य गुणवृत्त्येन्द्रपरत्वावगमान्नायथार्थं विनियोगः सम्भवतीत्याशयेन पृच्छति—**कुत इति**। निवेशनः सङ्गमनो वसूनामिति गार्हपत्यमुपतिष्ठत इति एतावतार्थविशेषविनियोगसिद्धेरैन्द्रीशब्दस्यानुवादत्वादिन्द्रशब्दवन्मन्त्रविषयत्वोपपत्तेर्विध्यर्थत्वेऽपि चेन्द्ररूपेण गार्हपत्यप्रकाशनविध्यर्थत्वादैन्द्रीशब्देनैव मन्त्रे गौणताश्रितेत्याशयेनोत्तरमाह—**गौणत्वमिति**। ऐन्द्रीशब्दस्यानुवादत्वेनेन्द्रप्राधान्यानभिधायित्वाद्विध्यर्थत्वेऽपि चेन्द्ररूपेण गार्हपत्यं प्रकाशयेदित्येवमर्थत्वेनैन्द्रीशब्देनैव मन्त्रे गौणताश्रयणाद्गार्हपत्यशब्दस्य तद्विरोधानुपपत्तेर्मन्त्रब्राह्मणयोरेवात्र विरोधो वाच्यः।

यत्र च मन्त्रब्राह्मणयोर्विरोधे, क्वचिदन्यतरत्र गौणताश्रयणीयाऽऽपद्यते, तत्र मन्त्राणां गौणता युक्तेति मन्त्रस्य लिङ्गरूपत्वाद् ब्राह्मणस्य च श्रुतिरूपत्वाद्वाक्यरूपस्यैव तु 'मैत्रावरुणः प्रेष्यति चानु'चाहेति, ब्राह्मणस्य प्रशास्तर्यजेति मन्त्रलिङ्गेन बाह्याभ्युपगमाच्छ्रुतिलिङ्गाधिकरणेनैव मन्त्रे ब्राह्मणविरोधे मन्त्रगौणत्वस्य सिद्धत्वाद् गार्हपत्यैन्द्रीश्रुत्योर्विरोधायोगेन मन्त्रब्राह्मणविरोधमापाद्य श्लोको व्याख्येयः। आपाद्योक्तिसूचितं गार्हपत्यैन्द्रीश्रुत्योरविरोधं तावद् द्योतयितुमाह—**गार्हपत्यस्तावदिति**।

मुख्यैन्द्रीश्रुतिविरोधे सत्युपसर्जनीभूते समीपस्थाने कर्मत्वस्यावतरणीयत्वात्प्रधानभूतप्रकाशनसम्बन्धाभिधानेनावतारणोक्त्यै गार्हपत्यः प्रकाशयिष्यत इति चेन्द्ररूपेण गार्हपत्यप्रकाशनीयत्वोक्त्यै विरोधाभावो द्योतितः। एवं चैन्द्रीश्रुत्यैव मन्त्रस्यामुख्येऽर्थे विनियोगादविरोधः सिद्धो भवतीत्याह—**तत्रेति**। इन्द्रप्रकाशने मन्त्रविनियोगार्थत्वेनैन्द्रीश्रुत्युपपत्तेर्नेन्द्ररूपेण गार्हपत्यप्रकाशनविध्यर्थता कल्पनीयेत्याशङ्कानिरासार्थत्वेन श्लोकं व्याचष्टे—**अवश्यं भावि हीति**। ब्राह्मणगौणत्वापत्तेर्नेन्द्रप्रकाशनविध्यर्थतैन्द्रीश्रुतेर्युक्तेत्याशङ्कानिराशयः।

पूर्वश्लोकोत्तरार्द्धं व्याख्यार्थो मन्त्रस्य त्विति श्लोकः। येन कारणेन गार्हपत्यश्रुतेर्नैन्द्रीश्रुत्या विरोधः। तेन कारणेन द्वितीयालक्षितकारकसामान्यसम्बन्धाद् गार्हपत्यस्याधिकरणत्वेन, अपादानत्वेन वा लक्षितेनाङ्गता या पूर्वपक्षिणोक्ता, साप्ययुक्तेत्याह—तेनेति। याप्यवयवसम्बन्धाद् गार्हपत्यशब्दस्यैन्द्रवाचितोक्ता, साप्यैन्द्रीश्रुत्यविरोधे समुदायप्रसिद्धिबोधायोगादयुक्तेत्याह—न चेति। यतः कारणाद् गृहपतेर्यजमानस्य देवतात्वेन सम्बन्धादिन्द्रः। तेन कारणेनात्र ब्राह्मणेऽवयवसम्बन्धाद् गार्हपत्यशब्दवाच्य इति यदुक्तम्, तदपि रूढ्या गार्हपत्यशब्देनाख्यप्रत्ययान्तस्य चैन्द्रीश्रुत्यविरोधेनाबाधिततया दृढत्वान्न स्यादित्यर्थः॥ ३॥

भा० प्रा०—पूर्व में कथित नियम के अपवाद अर्थात् व्यतिक्रम का प्रदर्शन किया जा रहा है। श्रुतियों में अग्नि चयन प्रकरण में "निवेशनः सङ्गमनो वसूनाम् इत्यैन्द्रया गार्हपत्यमुपतिष्ठते" (मै० सं० ३।२।४) अर्थात् "निवेशनः सङ्गमनो वसूनाम्" इस ऐन्द्री ऋचा के द्वारा गार्हपत्य अग्नि का उपस्थान = पूजा करें, इस प्रकार का उपदेश होता है। यह मन्त्र इन्द्र, उसका शेष है "इन्द्रो न तस्थौ" इस प्रकार इन्द्र का प्रकाशक लिङ्ग है। इस स्थल में यह संयम है कि इस मन्त्र में क्या इन्द्र का उपस्थान (पूजा) करना होगा अथवा इसके द्वारा गार्हपत्य का उपस्थान कर्तव्य है? इसके पूर्वपक्षी का कहना है कि अपूर्व अधिकरण में कथित नियम के अनुसार मुख्य अर्थ में ही जब मन्त्र में प्रयोज्य है तब क्यों नहीं मुख्य अर्थ शब्द से निरपेक्ष भाव में उत्पन्न होता है अतः शीघ्र भावी है, तब इसके द्वारा गार्हपत्य का उपस्थान नहीं हो सकता है, किन्तु, लिङ्ग (सामर्थ्य) के अनुसार इन्द्र का ही उपस्थान कर्तव्य है।

इसके उत्तर में सिद्धान्ती का कहना है कि "अयथार्थम् ऐन्द्री स्यात्" ऐन्द्री ऋक् अयथार्थ अर्थात् असमवेतार्थ होगा अर्थात् अन्वर्थ नहीं होगा। इसके द्वारा इन्द्र का उपस्थान कर्तव्य नहीं है, अपितु गार्हपत्य अग्नि का ही उपस्थान करना चाहिए, क्योंकि, "वचनात्" = विशेष वचन है। जो अर्थ वचन बोधित है, उसमें न्याय का अर्थात् युक्ति का अवसर नहीं है। इसलिए कहा गया है "वाचनिके अर्थे न्यायानवभारात्" = वचन से विहित विषय में न्याय का प्रसङ्ग नहीं हो सकता है। भगवान् भाष्यकार ने भी कहा है—"किमिव वचनं न कुर्यात् नास्ति वचनस्योभावः" यदि कहा जाय "निवेशनः सङ्गमनः" यह अंश मन्त्र है और "ऐन्द्रया गार्हपत्यमुपतिष्ठते" यह ब्राह्मण है। अतः इस स्थल में मन्त्र की गौणार्थकता स्वीकार न कर ब्राह्मण वाक्य को ही गौणार्थक क्यों नहीं कहा जाता है? ऐसा मानने पर कह सकते हैं कि ब्राह्मण वाक्य विधि स्वरूप है और विधि में लक्षणा नहीं हो सकती है। इसीलिए कहा गया है कि "न विधौ परः शब्दार्थः" अर्थात् "विधि वाक्य में शब्दार्थ गौण नहीं होगा।" अन्य पक्ष में मन्त्र अनुष्ठेय विषय का स्मारक होने से ब्राह्मण का ही अनुवादक है। अतः, मन्त्र की ही गौणार्थकता कहना उचित है। मन्त्र में ही लक्षणा कर इन्द्र शब्द का गार्हपत्य

रूप अर्थ करना होगा, किन्तु ब्राह्मण वाक्य में लक्षणा नहीं होगी, इसलिए, यहाँ तन्त्रवार्तिक में श्री कुमारिलभट्ट ने कहा है—

"गौणत्वं यत्र नामस्यात् क्वचिद् ब्राह्मणमन्त्रयोः ।
तत्रानुवादरूपत्वान्मन्त्राणां गौणतेष्यते ॥"

जहाँ ब्राह्मण एवं मन्त्र का परस्पर के लिए परस्पर गौणत्व प्रसङ्ग होता है। ऐसी स्थिति में सभी मन्त्रों की गौणार्थकता माननी पड़ेगी क्योंकि मन्त्र अनुवाद स्वरूप हैं—अर्थात् ब्राह्मणोक्त विषय का ही प्रकाशक होने से वह परतन्त्र होने से उसका विरोधी नहीं हो सकता है अतः अनुवादक होता है। इसलिए, ब्राह्मण वाक्य अत्यन्त अप्राप्त विषयक विधि होने से वह प्रथम प्राप्त होने से एवं तदुक्त विषय प्रामाण्य स्वरूप का अगम्य = अविषय होने से उसी की मुख्यार्थता एवं मन्त्र की गौणार्थता युक्ति सङ्गत है।

"वचनात्" = वचन के बल से, "तु" अनुवाद का सूचक है, "ऐन्द्री" = इन्द्र की प्रकाशक ऋचा, "'अयथार्थ" = असमवेतार्थ, 'स्यात्' = होगी। ऐन्द्री इन्द्र प्रकाशक ऋक् किन्तु अयथार्थ रूप में अर्थात् अनन्वितार्थ करके भी पाठ्य होगी, क्योंकि, उसका विशेष वचन है ॥ ३ ॥

## गुणाद्वाऽप्यभिधानं स्यात्संबन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥

**शा० भा०—अत्राऽऽह—नन्वेतदुक्तं—नैन्द्रेण मन्त्रेण गार्हपत्योपस्थानं भविष्य[1]तीति। उच्यते। वचनाद्भविष्यति। आह। न वचनशतेनापि शक्यमेतत्। इन्द्रशब्देनाग्निं प्रत्याययेदिति ब्रुवन्विहन्येत। यथाऽग्निना सिञ्चेदुदकेन दीपयेदिति। न हि शास्त्रहेतुकः शब्दार्थयोः सम्बन्धो भवति। नित्योऽसौ लोकतोऽवगम्यत इत्युक्तम्। औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति।**

**ननु शब्दलक्षणोऽपि भवति शब्दार्थयोः सम्बन्धः कृत्रिमः। यथा देवदत्तो यज्ञदत्त इति। भवति कश्चिद्यत्र सम्बन्धस्य विधायकं वाक्यं भवति, न त्वेतद्वाक्यं शब्दार्थयोः सम्बन्धस्य विधायकम्, गार्हपत्यस्येन्द्रशब्दो नामेति। कथं तर्हि? प्रसिद्धसम्बन्धेनेन्द्रशब्देन गार्हपत्यमुपतिष्ठत इति। न च शक्यते परशब्देन परो वदितुम्। किमत्र वचनं करिष्यति। अत्रोच्यते। गुणाद्वाऽप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वादिति। यद्यपि नेदं वाक्यं शब्दार्थसम्बन्धस्य विधाने हेतुभूतम्, तथाऽप्यनेनेन्द्रशब्देन शक्यं कर्तुं गार्हपत्याभिधानम्। कुतः। गुणसंयोगाद्गौणमिदमभिधानं भविष्यति। भवति हि गुणादप्यभिधानम्। यथा सिंहो देवदत्तः, अग्निर्माणवक इति। एवमिहाप्यनिन्द्रे**

१. ब. भवति।

गार्हपत्य इन्द्रशब्दो भविष्यति। अस्ति चास्येन्द्रसादृश्यम्। यथैवेन्द्रो यज्ञसाधनमेवं गार्हपत्योऽपीति। अथवा, इन्दतेरैश्वर्यकर्मण इन्द्रो भवति। भवति च गार्हपत्यस्यापि स्वस्मिन्कार्यं ईश्वरत्वम्। तस्मादिन्द्रशब्देन यः प्रत्याय्यतेऽर्थः, स प्रतीतः सादृश्याद्गार्हपत्यं प्रत्याययिष्यति। ऐश्वर्याद्वा प्रत्याययिष्यतीति न दोषः॥ ४॥ आ० नि०॥ इति द्वितीममैन्द्रयधिकरणम्॥ २॥

त० वा०—ननु च मन्त्रोऽप्यशक्य एव गार्हपत्ये विनियोक्तुम्। तथा हि—

शङ्का

गौणेऽपि तावदेतस्य वृत्तिः क्लेशेन जायते।
अत्यन्तासदृशत्वात्तु न गोणोऽप्यत्र दृश्यते॥

न हि वचनशतेनेन्द्रशब्दः[1] शक्यो गार्हपत्याभिधानसमर्थः कर्तुम्।

न वाऽदेङ्गुणवच्छास्त्राद् इन्द्रऽग्निः पारिभाषिकः।
न हि शब्दार्थसंबन्धः प्रसिद्धः शास्त्रहेतुकः॥

तन्निरासः

अत्रोच्यते—

स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसंबन्धकारितम्।
इन्दत्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वरः॥

तस्मादन्यथानुपपत्तेर्गौणमभिधानमिति सिद्धम्॥ ४॥

( इति द्वितीयमैन्द्रयधिकरणम्॥ २॥ )

न्या० सु०—शङ्कोत्तरत्वेन सूत्रावतारणार्थमत्राहेत्यादिकरिष्यन्तीत्येवं भाष्यमवयवशो व्याचिख्यासुर्भविष्यतीत्यन्तं तावद्भाष्यावयवं व्याचष्टे—ननु चेति। उच्यत इत्यनेन स्वतोऽशक्तेनाप्यैन्द्रमन्त्रेण वचनकल्पितया गुणवृत्त्या शक्तिसम्भवाद् गार्हपत्यप्रकाशनं भविष्यतीत्याशङ्कापरिहार्थमाहेत्यादिदीपयेत्यन्तं भाष्यावययं शङ्काशयनिराससमर्थत्वेन व्याचष्टे—तथा हीति। शब्दमात्रोपकारिण्या देवतयाऽर्थे रूपोपकारिणो गार्हपत्यस्य सादृश्यं न सम्भवतीत्याशयः। उक्तेऽर्थे भाष्यं योजयितुमाह—न हीति। सम्बन्धस्येति सूत्रावयवव्याख्यार्थं न हि शास्त्रहेतुक इत्यादिभाष्यावयवं व्याचष्टे—न चेति। अदेङाख्यं वर्णत्रयं पारिभागिको गुणो। नैवमग्निः परिभाषयेन्द्र इत्यर्थः। एतच्छङ्कोत्तरत्वेन सापवादस्याधिकरणद्वयेन स्थितत्वाद्वक्ष्यमाणाधिकरणचतुष्टयानर्थक्यमाशङ्क्याह—एवं तावदिति॥ ४॥

इति द्वितीयमैन्द्रयधिकरणम्॥

1. क० वचनेन।

भा॰ प्र॰—पूर्व में कहा गया है कि वचन के बल से ऐन्द्री ऋक् गार्हपत्य अग्नि के उपस्थान का अङ्ग होगी, अर्थात् गार्हपत्य अग्नि स्वरूप अर्थ का प्रकाश करेगी। इसमें यदि कोई यह आपत्ति करे कि शत सहस्र वचन में भी अशक्य अर्थ प्रकाशित नहीं हो सकता है। अग्नि देकर भींगाया जाता है—यह कहने पर सैकड़ों और हजारों वचन के होने पर भी कोई भी सङ्गत अर्थ का प्रकाश नहीं करेगा, अतः वचन के बल से किस प्रकार ऐन्द्री गार्हपत्यार्थ का प्रकाश करेगी। ऐसी स्थिति में इसके उत्तर में कहा जा सकता है कि "न गुणात् वा अपि अभिधानं स्यात् सम्बन्धस्य अशास्त्रहेतुत्वात्" यह सत्य है कि शब्द और अर्थ का जो शक्तिरूप सम्बन्ध है—वह शास्त्रजन्य महीं है, किन्तु गुणगत सादृश्य के अनुसार जैसे माणवक को अग्नि कहा जाता है, उसी प्रकार इस स्थल में भी गुणगत सादृश्य होने से गार्हपत्य अग्नि को भी इन्द्र कहा गया है। जैसे इन्द्र यज्ञ का साधन है, वैसे ही गार्हपत्य अग्नि भी यज्ञ-सम्पादक है, या जैसे इन्द्र ऐश्वर्य सम्पन्न है कि ऐश्वर्यार्थिक इदि (इन्द्) धातु से इन्द्र यह पद निष्पन्न होता है, गार्हपत्य अग्नि भी वैसे ही अपने का कार्य में ऐश्वर्य सम्पन्न होती है। इसलिए, उसका भी इन्द्र शब्द से ऐश्वर्य योग होने से गार्हपत्य अग्नि भी इन्द्र शब्द से प्रकाश्य होने से इन्द्र प्रकाशक मन्त्र के द्वारा उसका विधान अनुचित नहीं है।

"गुणात्" = गुण के अनुसार अर्थात् वाक्यार्थ सम्बद्ध रूप गौण वृत्ति के अनुसार, "अपि वा" = आशङ्का का निरासार्थक "अभिधानं स्यात्" = अभिधान अर्थात् अग्नि को इन्द्र के रूप में उल्लेख होने से "सम्बन्धस्य अशास्त्रत्वहेतुत्वात्" सम्बन्ध शास्त्र से जन्म नहीं होने से ॥ ४ ॥

### अथ तृतीयं हविष्कृन्मताविनियोगाधिकरणम

## [३] तथाऽऽह्वानमपीति चेत् ॥ ५ ॥ पू॰

शा॰ भा॰—स्तो दर्शपूर्णमासौ। तत्रेदं समाम्नायते। 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इति। तत्र संदेहः किमेष मन्त्रोऽवहन्ति प्रत्युपदिश्यते, उत हन्तिरस्य कालं लक्षयतीति। कथं हन्ति प्रत्युपदिश्यते? कथं वा कालं लक्षयेत्? यद्येवं सम्बन्धः क्रियेत—हविष्कृदेहीत्यवघ्नन्निति ततो हन्ति प्रत्युपदिश्यते। अथावघ्नन्नाह्वयतीति, ततोऽस्य कालं लक्षयतीति। किं तावत्प्राप्तम्? तथाऽऽह्वानमपि। यथैन्द्री गार्हपत्यं प्रत्युपदिश्यते, एवमेष मन्त्रो हन्ति प्रत्युपदिश्यते। एवं श्रुतिरनुगृहीता भवति। इतरथा लक्षणा स्यात्। हन्तिकालस्य मन्त्रस्य च संबन्धो भवेत्। न हन्तेर्मन्त्रस्य। एवं च सत्याह्वयतीयमनुवादः। आह्वानं करोति। यो हयेहीति ब्रूते, स आह्वयति। यत्र केनचिद् गुणेन मन्त्रो हन्ति प्रत्याययिष्यति। तस्मान्नाऽऽह्वाने विनियोक्तव्यः॥ ५ ॥ पूर्वपक्षः॥

## अथ तृतीयं ह्यविष्कृन्मन्त्रविनियोगाधिकरणम्

त० वा०—एवं तावन्मुख्यं कार्यं मन्त्राणामिति सापवादमवस्थितम्। अतः परमेतद्विचार्यते[1] क उत्सर्गस्य विषयः? कोऽपवादस्येति? तत्र 'हविष्कृदेहि' इति या हविः करोति यजमानस्य पत्नी, तदाह्वानप्रकाशनसमर्थो मन्त्रः, स किं तत्रैव विनियुज्येत, अवहन्तिसंयोगस्य कालार्थत्वेनाविरोधात्[2]।

अथवा वचनादयथार्थं पूर्वंतरप्रतीतावघाताङ्गमेवेति। यदि हविष्कृदेहीत्यनेनावघ्नन्नाह्वयतीति विधीयते, ततोऽवघाताङ्गत्वम्। अथावघ्नन्नेतेनाऽऽह्वयतीत्येवं संबन्ध्य रूपादेव प्राप्तमाह्वानकाले मन्त्रमनूद्य त्रिरिति विधीयते, ततोऽनघ्नन्नित्यस्य स्वकाललक्षणार्थत्वान्नायथार्थं वचनमिति, यथार्थ एव मन्त्रः। किं प्राप्तम्? अवहन्तिश्रुत्यनुग्रहादाह्वयतेश्च मन्त्ररूपादेव प्राप्तत्वादवहन्तैरेव हविष्करणे कर्तृत्वं कथंचिदस्तीत्ययथार्थत्वम् गुणयोगात्प्रत्यायनं च ॥ १ ॥

### अथ तृतीयं हविष्कृन्मन्त्रविनियोगाधिकरणम् ॥ ३ ॥

न्या० सु०—मुख्यप्रकाशनस्य मन्त्रकार्यत्वेन सापवादस्याधिकरणद्वयेन स्थितत्वाद्वक्ष्यमाणाधिकरणचतुष्टयानर्थक्यमाशङ्क्याह—**एवं तावदिति**। अपवादविषयत्वस्य गौणार्थविनियोगस्य क्वचिदनिरूपणात्को हविष्कृदादिमन्त्रो वचनविनियोज्यत्वात्प्रसक्तापवादविषयत्वे एव सन्मुख्यविनियोगरूपस्योत्सर्गस्य विषयः? को वा सूक्तवाकादिर्वचनाविनियोज्यत्वात्प्रसक्तापवादविषयत्वेऽप्युत्सर्गस्यैव विषय इत्येवं व्याख्येयम्।

यद्वोत्सर्गापवादोक्तिभ्यां लक्षणया तद्धेतूभूतलिङ्गवचनाभिधानात्को लिङ्गस्य विषयः? को वा वचनस्येत्यर्थः। तत्रेति सन्देहभाष्यमङ्गाङ्गिभावोपदेशार्थमेतद्वचनं काललक्षणार्थं वेति चिन्तायाः प्रकृतगौणमुख्यविचारासङ्गत्वादयुक्तमाशङ्क्य, वचनाद् गौणेऽवघाते मन्त्रविनियोगः मुख्ये वाऽऽह्वाने लिङ्गादित्येव'मर्थत्वेन व्याख्यातुमाह—**तत्रेति**।आह्वाने मन्त्रविनियोजकस्य लिङ्गस्य श्रुतिविरोधपरिहारार्थावहन्तिसंयोगस्य कालार्थत्वोक्तिः, वचनादवघाताङ्गत्वोक्तिश्चाप्यथामन्त्रार्थत्वेन मुख्यत्वायोगाद् गौणेऽवघाते विनियोक्त्यर्थेत्याशयः। शतृप्रत्ययेनावघातस्याऽऽह्वानाख्यक्रियान्तरलक्षणत्वेनोपादानादुपसर्जनभूतस्य मन्त्रान्वयानुपपत्तेपूर्वपक्षायोगमाशङ्क्याऽऽह्वानस्याऽविहितत्वेनानुष्ठेयत्वानवगतेः स्मारकमात्रानपेक्षत्वादपेक्षां च विना लिङ्गस्याह्वाने मन्त्रविनियोजकत्वाशक्तेः पत्नीकर्तृकावघातार्थाक्षेपादाह्वानस्यानुष्ठेयत्वावगमेऽप्याह्वानानुष्ठानात्पूर्वमेवानुष्ठेयत्वेनाऽवगतावघातस्य स्मारकापेक्षत्वात्, तदतिक्रमेण पश्चात्प्रतीताह्वाना(ङ्गत्वानुपपत्तेरुपसर्जनभूतमप्यवघातमेव प्रत्यङ्गता युक्तेति सुचनार्थं पूर्वप्रतीतोक्ता। अध्वर्युकर्तृकत्वेनाऽवघातस्य पत्न्याह्वाना[3])-नाक्षेपकत्वात्पत्न्येव हविष्कृदुपोत्तिष्ठति देवानृषीन्पितृत्साभिद्रुह्यावहन्वी'तिवाक्यात्पत्नी-

१. क० परमप्येतत्। २. काललक्षणार्थत्वेन। ३. अयं पा० २ पु० ना०।

कर्तृकत्वावगमोत्तरकालमवघातेन पत्न्याह्वानस्य चिरेणाक्षेपमभिप्रेत्य तरप्प्रयुक्तः । कथमिति भाष्येण सन्देहहेतुं पृष्ट्वा तत्प्रतिपादनार्थं 'यदीति पूर्वपक्षवचनव्यक्तिभाष्यमवघ्नन्निति अवहतिं प्रति मन्त्रोपदेशकविधायकाभावादाह्वयतिपरेण पञ्चमलकारेण मन्त्रोपदेशं दर्शयन् व्याचष्टे—**यदीति** ।

अथेति सिद्धान्तवचनव्यक्तिभाष्यमवघ्नन्ननाह्वयती(त्यन्वयेऽनुपात्तस्य मन्त्रस्य काल-लक्षणायोगादवघ्नन्ननेनाह्वयतीत्यप्यन्वये कालविध्यापत्तेस्त्रिरावृत्तिमात्रविधिसिद्धान्ता-सिद्धिप्रसङ्गादयुक्तमशङ्क्य यदवघ्नन्ननेनाह्वयती[1])ति सामर्थ्यप्राप्तमनूद्यते । त्रिरिति वचनव्यक्तिरिह विवक्षिता । अस्मिंस्तु पक्षे तेन त्रिराह्वयतीत्येतावता त्रिरभ्यासविधि सिद्धेः, अवघ्नन्नित्यस्यानर्थक्यमाशङ्क्य काललक्षणार्थत्वं वक्तुं क्रियान्तरलक्षणभूतकर्तृ-वाचिना शतृप्रत्ययेन क्रियान्तरस्यैव कालतो लक्षयितुं शक्यत्वात्तदन्वयित्वेनोक्तिः । गौणार्थमन्त्रविनियोगापादकमन्त्रावघातान्वयशङ्कानापत्त्यर्थं च मन्त्रानुपादनमिति सूचयन् व्याचष्टे—**अथेति** । ततोऽस्य मन्त्रस्य त्रिरावृत्तिविधौ हन्तिराह्वानस्य कालं लक्षयतीत्येवं भाष्यं योज्यम् । यथैन्द्री वचनादयथार्थे विनियुज्यते, तथाऽह्वयतेराह्वानमेहिशब्द-वत्त्वादाख्यायतेऽनेनेत्याख्यानार्थल्युडन्तकरणव्युत्पन्नाह्वानशब्दोक्तो हविष्कृन्मन्त्रोऽप्ययथार्थं विनियुज्यतइत्येवं पूर्वपक्षसूत्रव्याख्यार्थम्, किन्तावदिति भाष्यं सङ्क्षिप्य व्याचष्टे—**किमिति** । हन्तिं प्रति मन्त्रोपदेशे सति भुत्यर्थेऽवघाते । मन्त्ररूपं विहितं भवति । सिद्धान्ते तु शतृप्रत्ययेन क्रियान्तरलक्षणभूतकर्त्रभिधानेऽपि कालानभिधानाल्लक्षणा स्यादित्येवं तथा शब्दानुकृष्टस्य वचनादिति पूर्वाधिकरणसूत्रावयवस्य श्रुत्याशयत्वेन व्याख्यार्थमेवमिति भाष्यावयवं व्याख्यातुम्—**अवहन्तीत्युक्तम्** । वचनादित्येवैकवाक्यत्वादि-त्येवं व्याख्यातुं मन्त्रस्य च कालस्य च कालस्य चाह्वानसम्बन्धः (सिद्धान्ते विधेयो भवेदित्येवं वाक्यभेदोक्त्यर्थो मन्त्रस्य चेत्यवयवोऽवहननकालएवार्थेन हविष्कृदाह्वातव्येति सिद्धान्तभाष्ये[2])कालाह्वानसम्बन्धविधिनिरासात्पूर्वपक्षे तद्विद्धिप्रतीतेः केवलात्तु त्रिरावृत्ति-र्विधीयतइति च भाष्यादाह्वानावृत्तिसम्बन्धविधिप्रतीतेः स्पष्टत्वान्न व्याख्यातः । मन्त्रस्याह्वानानाङ्गत्वे सत्याह्वयत्यन्वयायोगमाशङ्क्याह्वानाभावोऽप्येहिशब्दोच्चारणा-'त्तत्करोतितदाचष्टे'इतिस्मृतेराह्वानमाचष्टइत्यस्मिन्नर्थे णिजन्ताह्वयतिप्रयोगोपपत्त्युक्त्यर्थं मेवं चेति भाष्यावयवं व्याख्यातुम्—**आह्वयतेश्चेत्युक्तम्** । असामर्थ्यादवघाताङ्गत्वा-योगमाशङ्क्यावघास्याचेतनत्वाद्वस्तुतः स्वातन्त्र्यलक्षणकर्तृत्वाभावेऽपि वैवक्षिकेन स्वात-न्त्र्येण कर्तृत्वसद्भावाद्धविष्कृत्त्वस्य सामर्थ्यमवहन्तेरेवेत्यनेन स्वमतेन गुणऽभावसूत्रा-वतारायोक्त्वा हविष्कृच्छब्दस्य मुख्यार्थत्वादयथार्थतामुपसंहृत्य हविष्कृत्पत्नीसम्बन्धे हविःसम्पत्तिहेतुलक्षणगुणयोगे वाऽवघातप्रत्यायकत्वं भाष्योक्तगुणेत्यनेन विवृतम् ॥ ५ ॥

---

१. अयं वा० २ पु० ना० । २. अयं पा० २ पु० ना० ।

भा० प्र०—श्रुति में कहा गया है दर्शपूर्णमास प्रकरण में "हरिष्कृदेहि इति त्रिरवघ्नन्नाह्वयति" अर्थात् "हविष्कृत आसून" यह कहकर तीन बार अवघान कहते हुए आह्वान करे—यह कहा गया है। इस स्थल में सन्देह हो गया है कि यह मन्त्र क्या गौणार्थक होकर अवघात का अङ्ग होगा या इस स्थल में अवघात ही लक्षणा के बल से काल का बोधक होगा। इसमें पूर्वपक्षी का कहना है कि ऐन्द्रीऋक् जैसे गौणार्थक होकर गार्हपत्य अग्नि का अङ्ग है, इस स्थल का यह आह्वान मन्त्र भी उसी प्रकार अवघात का अङ्ग होगा, क्योंकि, ऐसा होने पर "अवहन्ति" श्रुति का अनुसरण करना होगा और मन्त्र में 'एहि' पद रहने से मन्त्र के स्वरूप से ही आह्वान प्राप्त होने से आह्वान वाचक 'एहि' पद लक्षणा के बल पर अवघात की अवगति कराता है, और 'हविष्कृत्' यह पद भी लक्षणा के द्वारा अवघात को अवगत करायेगा। 'हविष्कृत्' यह पद भी लक्षणा के बल से अवघात को अवगत करायेगा अर्थात् अवघात ही मन्त्र से प्रकाश्य हविष्कृत् हविष्करण का कर्ता है। अतः इस मन्त्र का आह्वान में विनियोग नहीं होगा, अपितु अवघातों में ही विनियुक्त होगा अर्थात् यह आह्वान का अङ्ग नहीं है वरन् अवघात का ही अङ्ग है।

"आह्वानम् अपि" = आह्वान मन्त्र भी "तथा" = इसी प्रकार अर्थात् ऐन्द्री ऋक् के समान अयथार्थ (असमवेतार्थ) होगा, "इति चेत्" = इस प्रकार यदि कहा जाय। कोई पूर्वपक्ष करता है कि "हविष्कृदेहि" यह आह्वान मन्त्र भी इस प्रकार अयथार्थ होगा। पूर्वपक्ष ॥ ५ ॥

**न कालविधिश्चोदितत्वात् ॥ ६ ॥ सि०**

सा० भा०—नैतदस्ति हन्ति प्रत्युपदिश्यत इति। किं तर्हि ? काललक्षणा स्यात्। कुतः 'त्रिराह्वयती'ति त्रित्वमत्र विधीयते यद्यस्मिन्नेव वाक्ये मन्त्रो विधीयेत, अनेकगुणविधानाद्वाक्यं भिद्येत। तस्मान्नैवमभिसंबन्ध एवमवघ्नन्निति। कथं तर्हि ? अवघ्नन्नाह्वयतीति।

नन्वस्मिन्नपि पक्षे मन्त्रो विधीयते, कालश्च। यत्र स एव दोषो भवेत्। नेति ब्रूमः। अवहननकाल एवार्थेन हविष्कृदाह्वातव्या। तत्रायमेव संबन्धोऽनूद्यते। केवला तु त्रिरावृत्तिर्विधीयते।

यत्तु काललक्षणार्थः शब्द इति। नैष दोषः। लौकिकी हि लक्षणा। मन्त्रोऽपि च रूपादेवाऽऽह्वाने प्राप्तः। सोऽप्यनूद्यत एव। चोदितश्च वाक्यान्तरेणावघातः शक्नोति कालं लक्षयितुम्। तस्मादाह्वाने विनियोक्तव्य इति ॥ ६ ॥ सि० ॥

त० वा०—त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते ।
लक्षणे च शतुर्वृत्तिः प्राप्तं चान्यदनूद्यते ॥

अवघ्नन्नित्यत्र हि धात्वर्थोपसर्जनः कर्ता लक्षणार्थयुक्तः प्रतीयते । 'लक्षणहेत्वोः क्रियायाः' इति शतृप्रत्ययात् । तेन न क्वचिच्छ्रुतिपीडा । तस्मात्सर्वमेतदनूद्य त्रिरिति विधीयते, नान्यत् । वाक्यभेदप्रसङ्गात् ।

योग्यत्वेन च सिद्धत्वात्कालोऽपि न विधीयते ।
अभिधामात्रमेवास्य विधिरित्यभिधीयते ॥
सकृदुच्चारणाद्यो वा त्रिरभ्यासेन जायते ।
अभ्यासे विहितेऽर्थेन स कालोऽस्मिन्विधीयते ॥

तथा च 'यावज्जीविकोऽभ्यासः' इत्यत्र कलाभ्यासयोरन्योन्यविधिहेतुत्वं व्याख्यातम् ॥ ६ ॥

न्या० सू० — सौत्रनञर्थव्याख्यार्थं नैवदित्याद्येवमवहन्तीत्यन्तं भाष्यं कालविधिशब्दाव्याख्यार्थं कालेत्यवयवमपनीय व्याचष्टे—**त्रिरिति** । अनाहूताया एव पत्न्याः स्वयमगत्यावहन्तृत्वोपपत्तेर्नियोगतो प्राप्तत्वादप्राप्ते चाह्वाने लिङ्गेन मन्त्रस्य विनियोक्तुमशक्यत्वान्मन्त्रवर्णतः प्राप्त्यभ्युपगमेऽन्योन्याश्रयापत्तेराह्वानस्य नियमार्थे विधिसम्भवान्नियमेनापि च प्राप्तावध्वर्युकर्तृकत्वार्थं प्रथमोपधानादिवद्विध्युपपत्ते'र्वाचमेव तदाह्वयती'ति चाह्वानस्यैव स्तुत्यर्थत्वाद्विधेयत्वावगतेराह्वानाविधाने च त्रिरित्यर्थो विधीयतइत्येतावताभ्यासविध्युक्तिसिद्धिर्भाष्ये त्रिराह्वयतीत्याह्वयतीशब्दानर्थक्यप्रसङ्गाद् गौरवाशयेन वा भेदोक्त्युपपत्तेः केवलात्तु त्रिरावृत्तिरिति केवलशब्दस्य च गुणान्तरविधिनिरासार्थत्वेनोपपत्तेस्त्रिरभ्यासमात्रविशिष्टाह्वानपरत्वादित्येवं व्याख्येयम् । अवघातपरामर्शार्थोऽत्रशब्दः ।

कथं तर्हीति भाष्यं शतृप्रत्ययाक्षिप्तत्वेन काललक्षणाया लघीयस्त्वात् दोषत्वाभावसूचनार्थत्वेन व्याचष्टे—**लक्षणे चेति** । आह्वानकारी कीदृगध्वर्युरित्यपेक्षायां क्रियान्तरलक्षणभूतकर्तृवाचिना शतृप्रत्ययेनावघातकारित्वस्य लक्षणत्वाभिधानादवघातकारित्वावस्थस्याध्वर्योराह्वानकारित्वावगतेर्यदावघातः, तदाह्वानमिति कालतो लक्षणत्वावसायात्पत्नीकर्तृके चावघातेऽध्वर्योः कर्तृकत्वायोगा'दभिचरन्यजेते'त्यत्र यागस्याभिचारार्थतावच्छतृप्रत्ययादाह्वानस्यावघातार्थत्वप्रतीतेस्तादर्थ्यद्योतनार्थत्वेनाऽवघातकालत्वस्यैव विवक्षितत्वावसायाल्लघीयसी काललक्षणेत्याशयः । लघीयस्त्वेति श्रुतिवृत्तिभङ्गापत्तेर्दुष्टैव लक्षणेत्याशयेन 'यत्त्वित्यनुभाष्य श्रुत्यसम्भवलक्षणाऽथ दुष्टेति परिहारार्थं नैष इति भाष्यमसम्बद्धव्यवायोपपत्तेरपकृष्य शतृप्रत्ययान्तशब्दे काललक्षणेत्याशयः । लघीयस्त्वेऽपि श्रुतिस्मृतिभङ्गापत्तेर्दुष्टशतृप्रत्ययान्ते शब्दे काललक्षणाया लघीस्त्वोक्त्यर्थस्यावघ्नन्नाह्वयतीत्यस्यानन्तरं योज्यम् ।

नन्विति भाष्येणाऽवघाताङ्गत्वेन मन्त्रानुपदेशेऽप्याह्वानाङ्गत्वेन मन्त्रकालयोस्त्रिरावृत्तिवद्विधेयत्वाद्वाक्यभेदमाशङ्क्य, कालमन्त्रयोरनुवाद्यत्वाद्वाक्यभेदपरिहारार्थं 'नेतीति मन्त्रोऽपीति च भाष्यद्वयं व्याचष्टे—**प्राप्तं चेति**। श्लोकं व्याचक्षाणः—**कथं तर्हीति**। यत्तु लक्षणाशब्द इति च भाष्यद्वयस्य काललक्षणयादोषत्वपरिहारार्थत्वसूचनार्थम्। तृतीयं पदं तावद्व्याचष्टे—**अवघ्नन्निति**। हि यस्मात्कारणात्क्रियाया लक्षणे हेतौ च शतृप्रत्ययस्मृतेर्लक्षणत्वरूपेणार्थेन युक्तः कर्त्ता कृत्स्नं शतृप्रत्ययात्प्रतीयते। तेन हेतुना न क्व चिदवघ्नन्नित्यत्लोतिष्ठन्नित्यत्र काललक्षणायामपि श्रुतिपीडेत्युक्ते, तथापि श्रुत्यर्थस्यावघातस्य मन्त्रान्वयसम्भवे लक्षणा न युक्तेत्याशङ्क्य, धात्वर्थस्योपसर्ज्जनत्वान्मन्त्रान्वयानर्हतोक्ता। मन्त्रस्यावघातं प्रत्यनुपदेशेऽवघ्नन्नित्यस्यानर्थक्यनिरासार्था कालक्षणार्थतोक्तिरिति। तस्माच्छब्देन सूचयंश्लोकशेषं व्याचष्टे—**तस्मादिति**।

कालाह्वानसम्बन्धानुवादोक्त्यर्थस्यावहननेति भाष्यस्य सौत्रकालविध्युक्तिविरोधमाशङ्क्य भाष्यानुसारेणाभिधानपूर्वकविधानवाचिनो विधिरितिशब्दस्याभिधानलक्षणार्थतामङ्गीकृत्य परिहरति—**योग्यत्वेन चेति**। त्रिरभ्यासापादितकालविध्युक्त्वा वा त्रिरभ्यासविधिर्लक्ष्यत इति परिहारान्तरमाह—**सकृदिति**। अभ्यासे विहिते यः सकृदुच्चारणकालादधिकः कालः, त्रिरभ्यासेन जायते सोऽस्मिन्वाक्ये विधीयतइत्युक्तेऽर्थद्वयविधौ वाक्यभेदः स्यादित्याशङ्क्यार्थलभ्यत्वम्—**कालविधेरित्युक्तम्**। अर्थलभ्यतामेवोपपादयितुमाह—**तथा चेति**। चोदितत्वादिति सूत्रावयवव्याख्यार्थं चोदितश्चेति भाष्यं स्पष्टत्वान्न व्याख्यातम् ॥ ६ ॥

भा० प्र०—पूर्वपक्षी ने कहा है कि अवघात के उद्देश्य में मन्त्र विनियुक्त होगा—यह कहना ठीक नहीं है, किन्तु इस स्थल में "त्रिः आह्वयति" इस अंश में त्रित्व ही विहित होता है अर्थात् इसके द्वारा अर्थापत्ति के बल से काल विहित होता है, क्योंकि, त्रित्व नित्य प्राप्त नहीं है, कारण, किसी शाखा का एक बार, किसी शाखा का दो बार एवं किसी शाखा का तीन बार मन्त्रपाठ विहित होता है, इसलिए त्रित्व अनियत होने से उसी का विधान होता है। तीन बार आपत्ति का विधान रहने पर एक बार पाठ में जो समय जाता है, उतने समय से अधिक समय के बिना तीन बार पाठ उपपन्न नहीं होता है। अधिक समय रूप काल अर्थापत्ति के द्वारा विहित होता है। इस स्थल में आह्वान मन्त्र सामर्थ्यवश से अर्थात् मन्त्र की अर्थ प्रकाशता शक्ति के अनुसार प्राप्त होने से वह विधेय नहीं है, अपितु अनुवाद है। कारण, आह्वान 'एहि' इस मन्त्र के पाठ के विना सङ्गत नहीं होता है। अतः, काल एवं मन्त्र की विधि होने पर वाक्यभेद भी नहीं हो सकता है। इस स्थल में "त्रिरवघ्नन्नाह्वयति" इसका फलितार्थ इस प्रकार होता है कि—अवघातकालीन जो आह्वान, उसका तीन बार आवृत्ति या अभ्यास करना होगा। कारण, 'अवघ्नन्' इस पद में शतृप्रत्यय है एवं "लक्षणहेत्वोः क्रियायाः"

अर्थात् क्रिया के लक्षण = परिचय के अर्थ में एवं हेतु अर्थ में शतृ प्रत्यय होता है, इस पाणिनीय नियम के अनुसार इस स्थल में लक्षण अर्थ में शतृ प्रत्यय होने से अवघात आह्वान का लक्षण अर्थात् परिचायक होता है।

"न" = पूर्वपक्षी का कथन सङ्गत नहीं है, आह्वान अवघात का अङ्ग नहीं है, "कालविधि" = यह काल विधि अर्थात् काल का बोधक है, "चोदितत्वात्" = क्योंकि अवघात अन्य वाक्य से चोदित अर्थात् बोधित होता है। सिद्धान्त ॥ ६ ॥

## गुणाभावात् ॥ ७ ॥

**सा० भा०—इदं पदोत्तरं सूत्रम्। अथ कस्मान्न गुणादवहन्ति ब्रूते। हविष्करोति ह्यवहन्तिः। तस्माद्धविष्कृत्। किमेवं भविष्यति। रूपादेवावहन्तौ मन्त्रे प्राप्ते केवलं त्रिरावृत्तिमेव वक्ष्यति। न भविष्यति वाक्यभेद इति। अत्रोच्यते। गुणाभावाद्गौणमभिधानमवहन्तौ न संभवतीति न ह्यसावाहूतोऽस्मीत्यवगच्छति। तत्रादृष्टार्थमाह्वानं स्यात्। यजमानस्य पत्न्यां हविष्कृति दृष्टार्थमाह्वानम्। तस्यान्न हन्तिमन्त्र इति ॥ ७ ॥ आ० नि० ॥**

त० वा०—अथ यदुक्तं हन्तिरेव[1] हविष्कृद्भविष्यतीति। तत्रोच्यते।

गुणभावाद्धविष्कृत्त्वमन्त्राभावो यदोच्यते।
आमन्त्रणादिसामर्थ्यं लिङ्गमाश्रीयते तदा ॥

अथवा पदोत्तरमेतत्सूत्रम्।

त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते।
रूपादेवावघाताङ्गं भवत्विति तदुच्यते ॥
यद्यप्यस्य हविष्कृत्त्वं कथंचित्कल्प्यते त्वया।
तथाऽप्याह्वयतीत्येतद् व्यर्थं तस्मिन्न चेतने ॥
आमन्त्रणविभक्तिश्च प्रैषश्चैहीति मध्यमः।
व्यर्थं मन्त्रे[2] भवेत्सर्वमवघातपरे सति ॥

चेतनवत्यां[3] तु पत्न्यामर्थवत्। तस्मान्न रूपादेवावघाताङ्गत्वमिति ॥ ७ ॥

न्या० सु०—गुणाभावादिति सूत्रमवघाते हविष्कृत्पत्नीगतहविःसम्पत्तिहेतुत्वलक्षणगुणयोगसम्भवेऽपि आह्वानामन्त्रणविभक्तिप्रैषविषयत्वलक्षणाभावाद्धविष्कृत्प्रतिरदिकस्य गौणसामर्थ्यसम्भवेऽपि सम्बुद्धयाख्यातपदयोर्गौणस्यापि सामर्थ्यस्यासम्भवात्सकलमन्त्रविषयत्वाच्च वचनस्य सकलमन्त्रसामर्थ्यं विना विनियोजकत्वाशक्तेर्नावघाते मन्त्रविनियोगः

---

१. ब० अवहन्तिरेव। २. ब० मन्त्र। ३. ब० चेतनवत्वात्तु।

सम्भवतीत्येवमर्थत्वेन व्याख्यातुम्, केन चिद् गुणेन मन्त्रेऽवहन्ति प्रत्याययिष्यतीति पूर्वपक्षोक्तगौणसामर्थ्यनिरासार्थत्वेनावतारयति **अथेति**। हविष्कृत्पत्नीगुणयोगादवहन्तिरेव हविष्कृद्भविष्यतीत्यर्थः।

ननु हविष्कृत्पत्नीगुणयोगाद्धविष्कृत्प्रातिपदिकस्यावघाते शक्त्यभ्युपगमे 'देवदत्तः सरस्वती'तिवदंस्त्रियामप्यवघाते स्त्रीलिङ्गहविष्कृच्छब्दप्रवृत्त्यैकान्तिकत्वाद्वागित्यैकान्तिकत्वेन संस्तवोपपत्तेर्लिङ्गादिति सूत्रमयुक्तं स्यादिशङ्कयाह—**गुणेति**। हविष्कृत्ववाचिनो मन्त्रस्य हविष्कृत्पत्नीगुणहविःसम्पत्तिहेतुत्वयोगादवघातप्रत्यायनसामर्थ्ये सत्यप्याह्वानादिविषयत्वलक्षणगुणाभावादवघाते वाचनिकविनियोगाभावो यदोच्यते, तदा मन्त्रादियोग्यत्वरूपं पत्न्याः सामर्थ्यम्, मन्त्रस्य पत्न्याह्वानाङ्गत्वेनाश्रीयते, न तु स्त्रीलिङ्गत्वेन संस्तव इत्यर्थः। यदातदाशब्दाभ्यां पाक्षिकतास्य व्याख्यानस्योक्ता।

भाष्योक्तां व्याख्यामनुसन्धत्ते—**अथ वेति**। सत्यं न श्रुत्यात्रावघाते मन्त्रो विधीयते, किं त्ववघातस्यापि स्वातन्त्र्यविवक्षया हविष्कर्तृत्वसद्भावाल्लिङ्गस्य चैकदेशसामर्थ्ये विनियोजकत्वोपपत्तेः सामर्थ्यादेव मन्त्रोऽवघाताङ्गमित्याशङ्कार्थः। सरूपोक्त्या गुणशब्दस्य सामर्थ्यवाचित्वं सूचितम्।

हविष्कृत्प्रातिपदिकस्यावघातप्रकाशनसामर्थ्येऽप्येहीत्यस्य तदेकवाक्यत्वबाधापत्तेः पत्न्याह्वानाङ्गत्वपक्षे च लिङ्गवाच्ययोर्द्वयोरप्यनुग्रहसम्भवे वाक्यबाधापत्तेरेकस्य पक्षस्यानभ्युपगमनीयत्वाल्लिङ्गेनात्यवघाताङ्गता न युक्तेत्येवमुत्तरत्वेन सूत्रव्याख्यार्थं गौणमिति भाष्यं गुणशब्दस्यात्र सामर्थ्यवाचित्वात्सामर्थ्यलभ्यत्वं गौणशब्देनोक्तमाह्वानविषयत्वाभावोक्तिश्चामन्त्रणाप्रैषविषयत्वाभावयोरप्युपलक्षणार्थेत्येवं व्याख्यातुमाह—**तदिति**। यद्यपीत्यनेनावघातस्याचेतनत्वेन क्विपा तेन चास्वातन्त्र्यात्कर्तृता—**वास्तवी नास्तीत्युक्तम्**। व्यर्थोक्त्यार्थदर्शनाभावादेहीत्यस्यावघाते विनियोगाद्धविष्कृत्पदैकवाक्यत्वबाधापत्त्युक्त्यर्थत्वेन तत्रेति भाष्यावयवे व्याख्याते, हविष्कृत्पदमात्रस्य तर्ह्येहिपदैकवाक्यत्वबाधेन लिङ्गाद्विनीयोगोऽस्त्वित्याशङ्कय पत्न्याह्वानाङ्गत्वे लिङ्गवाक्ययोर्द्वयोरप्यबाधसम्भवाद् बाधपक्षो न युक्त इति परिहारसूचनार्थत्वेन यजमानस्येति भाष्यावयवं व्याख्यातुं चेतनावत्यां त्वित्युक्तम्। तस्मादिति सूत्रार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ॥ ७ ॥

भा० प्र०—पूर्वपक्षी अपने पक्ष के समर्थन में कहता है कि अवघात भी हविः का सम्पादन करता है, अतः, उसको गौणीवृत्ति के अनुसार हविष्कृत् क्यों नहीं कहा जा सकता है? इसके उत्तर में यह कहा जा सकता है कि इस स्थल में गुण नहीं होने से 'अवहन्ति' हविष्कृत् नहीं हो सकता है। कारण, 'अवहन्ति' क्रिया अचेतन होने से वह मन्त्रस्थ "एहि" इस पद का विषय नहीं है। ऐसी स्थिति में मन्त्र का 'एहि' पदगत आमन्त्रण विभक्ति, प्रैष एवं मध्यम पुरुष आदि सभी व्यर्थ हो जायेगा। इसलिए, मन्त्र अवघातपरक नहीं है अर्थात् अवघात का अङ्ग नहीं है अपितु यजमान की पत्नी ही हविष्कृत् है।

"गुणाभावात्" = गुण अर्थात् सादृश्य न होने से अवहस्ति पदवाच्य अवघात गौण वृत्ति के हविष्कृत् नहीं हो सकता है ॥ ७ ॥

**लिङ्गाच्च ॥ ८ ॥**

**सा० भा०—लिङ्गं च भवति । वाग्वै हविष्कृत्, वाचमेवैतदाह्वयति इति । न च वाचोऽवहन्तिना सादृश्यमस्ति । अस्ति तु यजमानस्य पत्न्या । सा हि स्त्री । वागिति च स्त्रीलिङ्गः शब्दः । अवहन्तिस्तु न स्त्री, न पुमान् न नपुंसकमिति ।**

**नन्ववहन्तेरपि स्त्रीलिङ्गः शब्दोऽस्ति क्रियेति । अत्र ब्रूमः न नियोगतोऽवहन्तेः स्त्रीलिङ्गः शब्दः । पुंलिङ्गोऽपि तस्यास्ति, अवघात इति । नपुंसकलिङ्गोऽपि कर्मेति । अपि च । पत्न्याः स्वरूपेण सादृश्यम्, अवहन्तेः पररूपेण शब्देन । तस्मात्पत्न्यां हविष्कृति लिङ्गमनुरूपतरं भवति ॥ ८ ॥**

त० वा—एवं च वागित्यर्थरूपेणैकान्तिकेनैव स्त्रीत्वेन संस्तवो भविष्यति । अन्यथाऽनुपात्तस्त्रीलिङ्गक्रियादिपदेनानेकान्ताव्यक्तिलिङ्गेन शब्दधर्मतया कथंचित्कल्प्यः स्यात् । तस्मादाहवनाङ्गत्वमिति ॥ ८ ॥

न्या० सु०—एतत्सूत्रव्याख्याभाष्यं सङ्क्षिप्य व्याख्यातम् । मन्त्रस्य पत्न्याह्वानाङ्गत्वे सत्यर्थरूपेणैकान्तिकेन स्त्रीत्वेन कृत्वा पत्न्या वाक्सादृश्यात्पत्न्याह्वानस्य समञ्जसः स्तवो भविष्यतीत्यर्थः ।

(अवघाताङ्गत्वे सत्यर्थरूपेणैकान्तिकेन स्त्रीत्वंन कृत्वा पत्नचा वाक्सादृश्यात्पत्न्याह्वानस्य समञ्जस्यः स्तवो भविष्यतीत्यर्थः[1] ॥)

अवघाताङ्गत्वे त्ववघातस्यैकान्तेन नियमेन व्यक्तस्य स्पष्टस्य प्रत्यक्षस्य वास्तवस्य कस्य चिल्लिङ्गस्याभावाच्छब्दधर्मतया शब्दानुकारमात्रेणावगतेन स्त्रीत्वेन योगाद्वाक्सदृशेनावघातेन द्वारभूतेन मन्त्रस्य स्तवः कल्प्यः स्यात् । स च क्लेशेनेति कथं चिच्छब्देनोक्ते क्लेशोपपादनायावघातवाचिनः स्त्रीलिङ्गस्य क्रियेत्यादिशब्दस्य धर्मतयाऽवघातस्त्रीत्वापादकस्यानुपादनतोक्ता । स्त्रीलिङ्गपदोपादानेऽवघातावहननादिपदवाच्यस्यापि सम्भवाच्छब्दधर्मतयापि नैकान्तिकः स्त्रीत्वं सिध्यतीति बहुव्रीह्याशयः । तस्मादिति सूत्रार्थोपसंहारभाष्यस्य तात्पर्यमाह—**तस्मादिति** ॥ ८ ॥

भा० प्र०—अवघात हविष्कृत् नहीं हो सकता है, किन्तु यजमान पत्नी ही हविष्कृत् है, इसका हेतु है 'लिङ्गात् च' श्रुति कहती है कि "वाग् वै हविष्कृद् वाचमेवैत-

---

१. अयं पा० २ पु० ना० ।

दाह्वयति'' अर्थात् वाक् ही हविष्कृत् है। वाक् की ही इस रूप में आह्वान कराया जाता है। इस स्थल में श्रुति में वाक् को हविष्कृत् कहा गया है, यजमान पत्नी के साथ वाक् का सादृश्य है, कारण, वाक् स्त्रीलिङ्ग है और यजमान पत्नी भी स्त्रीलिङ्ग है। किन्तु 'अवहन्ति' क्रियापद होने से पुंल्लिङ्ग भी नहीं है, स्त्रीलिङ्ग और नपुंसक लिङ्ग भी नहीं है। अतएव 'अवहन्ति' अवघात गौणवृत्ति के अनुसार 'हविष्कृत्' नहीं हो सकता है।

"लिङ्गात्" = लिङ्ग अर्थात् ज्ञापक हेतु होने से, 'च' = और लिङ्ग अर्थात् ज्ञापक हेतु है, अतः यजमान पत्नी ही हविष्कृत् है ॥ ८ ॥

## विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥

**सा० भा०—अवहन्तिमन्त्रे सत्यस्मिन्मन्त्रे विध्यन्तरकोपः स्यात्। 'अपहतं रक्ष इत्यवहन्ति, अपहता यातुधाना इत्यवहन्ति' इति। तत्र पक्षेऽभावान्नित्यवच्छ्रुतिरुपरुध्येत। तस्मादवघ्नन्निति काललक्षणार्थं[1] इति ॥ ९ ॥ युक्तिः ॥ आह्वानप्रकाशकमन्त्राणां आह्वाने विनियोगाधिकरणम् ॥ ३ ॥**

त० वा०—अवघातमन्त्रान्तरविरोधश्चान्याय्यः स्यात्। आह्वाने त्वयमेवेत्यविरोधः ॥ ९ ॥

( इति तृतीयं हविष्कृन्मन्त्रविनियोगाधिकरणम् ॥ ३ ॥ )

न्या० सु०—अवघाताङ्गत्वेन हविष्कृन्मन्त्रोपदेशे सति अवरक्षो दिवः सपनं वध्यासमित्यवहन्तीत्यादिभिर्मन्त्रविध्यन्तैरस्य विधेः पक्षे वा स्यादित्येवं सूत्रं व्याख्यार्थं भाष्यं व्याचष्टे—अवघातेति। अवघाताङ्गभूतैर्मन्त्राक्षरैः सहास्य विकल्पः स्यात् स चान्याय्य इत्यर्थः ॥ ९ ॥

**इति तृतीयं हविष्कृन्मन्त्राधिकरणम्**

भा० प्र०—मन्त्र अवघात का अंग नहीं हो सकता है। इसमें अन्य कारण भी है अभ्यन्तर में "अपहतं रक्ष इत्यवहन्ति एवं अपहता यातुधान्य इत्यवहन्ति" यह कहकर अवघात मन्त्र का विधान किया गया है और इस स्थल में भी अवघात में मन्त्र का विधान किया गया है, इस प्रकार कहने पर अन्य श्रुति से विहित मन्त्र विधि काव्याकोप अर्थात् बाध होगा, कारण, इस प्रकार मानने पर विकल्प के अनुसार दोनों की ही विधायकता स्वीकार करनी पड़ेगी और विकल्प मानने पर पक्ष में अप्राप्ति एवं बाध भी होगा। जब अन्य उपाय है तो विकल्प माना उचित नहीं है। क्योंकि, वह आठ दोषों से दुष्ट है, इसलिए यहाँ 'हविष्कृत्' मन्त्र को आह्वान का अङ्ग मानने पर जब किसी प्रकार का विरोध नहीं है तब इसको अङ्ग मानना उचित नहीं है।

१. ब. 'मंत्रोऽप्याह्वानार्थ इति' इत्यधिकम्।

"विधिकोपः च" = विधि का कोप अर्थात् निर्विषयता, "उपदेशे" = उपदेश होने पर अर्थात् उक्त मन्त्र अवघात के उद्देश्य में विहित होने पर "स्यात्" = होगा। यदि "हविष्कृदेहि" यह मन्त्र अवघात के उद्देश्य में विहित होने से अन्य विधि का बाध होगा। तृतीय हविष्कृत् मन्त्र का विनियोगाधिकरण ॥ ९ ॥

## अथ चतुर्थमग्निविहरणादिमन्त्रविनियोगाधिकरणम्

## [४] तथोत्थानविसर्जने ॥ १० ॥ सि०

**शा० भा०—ज्योतिष्टोमे श्रूयते[1]—'उत्तिष्ठन्नन्वाह[2] अग्नीदग्नीन्विहर' इति। तथा, 'व्रतं कृणुतेति[3] वाचं विसृजति' इति। तत्र संदेहः किमुत्थानं वाग्विसर्जनं च प्रति मन्त्रयोरुपदेशः, उत कालार्थः संयोग इति। अत्र पूर्वाधिकरणन्यायोऽतिदिश्यते। यस्तत्र पूर्वः पक्षः, स इह पूर्वः पक्षः। यस्तत्र सिद्धान्तः, स इह सिद्धान्तः। अग्नीदग्नीनित्येवमुत्तिष्ठन्नन्वाहेति,[4] व्रतं कृणुतेत्येवं[5] वाचं विसृजतीति पूर्वः पक्षः। लक्षणाभावादुत्तिष्ठन्नन्वाहेति सिद्धान्ते सम्बन्धः। व्रतं कृणुतेत्युच्यमाने वाचं सिसृजतीति वाक्येन पूर्वः पक्षः। लिङ्गेन सिद्धान्तः। यद्यपि च शक्यत उत्थानक्रियाऽग्नीदग्नीन्विहरेति[6] वक्तुम्, उत्थानेनाग्निरिध्यते, वह्निश्च विह्रियत इति, व्रतं कृणुतेति च वागभिधानम्, तथाऽप्यदृष्टार्थं वचनं भवतीति न मन्त्रयोरुत्थानविसर्जनार्थता कल्प्येत। कल्प्यमानायां च मन्त्रान्तरं विहितं बाध्येत। याः पशूनामृषभो वाच इति। अपि चोत्थानवाग्विसर्गौ प्रति मन्त्रौ विधीयमानावदृष्टार्थौ स्याताम्। प्रेषणे तु दृष्टार्थौ। तस्माल्लक्षणैवात्र न्याय्या ॥ १० ॥ इति चतुर्थमग्निविहरणादिप्रकाशकमन्त्राणां तत्रैव विनियोगाधिकरणम् ॥ ४ ॥**

त० वा०—अतिदेशसूत्रत्वात्सर्वे पूर्वसूत्रार्था योजयितव्याः। पूर्वत्रानुवादे कालार्थत्वमुक्तम्। इदानीं विधानार्थेऽपीति विशेषः। त्रिरभ्यासपरत्वाच्च तत्र मन्त्रोपदेशो न जातः न त्विह तथेति पूर्वपक्षे बीजम्। **'उत्थानेनाग्निरिध्यते' इति**—अनेनोत्थानं प्रकाश्यत इति प्रतिपाद्यते। यदाऽयमुत्थानाङ्गं भवति, तदा प्रैषाभावात्पराधिकारो नास्तीति प्राप्तकालतायां लोटं कल्पयित्वाऽध्वर्युकर्तृकाण्येनाग्निविरहणादीनि भवेयुः। अतश्च तदीयमुत्थानं तेषां कर्तृत्वेन विवक्ष्यमाणमग्नीदित्यादिभिः शक्यं प्रकाशयितुम्।

एवं 'व्रतं कृणुत' इति वागभिधानं वाक् तृप्यत्वितिवदास्याधारत्वाद्वाचो यदाऽऽस्यस्य व्रतकरणे कर्तृत्वम्, तच्छक्यं वाक्येवोपचरितुम्, तत्र व्रतं कर्तुं प्राप्तः

१. ब. समामनन्ति। २. ब. उत्तिष्ठन्नाह। ३. ब. चरेति।
४. ब. उत्तिष्ठन्नाहेति। ५. ब. चरतेत्येवं। ६. ब. क्रियया।

काल इति। ताल्वाद्यधिष्ठानभेदाच्च बहुवचनम्। गुणाभावात्—मन्त्रगुणाभावादित्येतदेवादृष्टार्थत्वप्रसन्नमुखेनोत्तरम्। न हि मध्यमपुरुषः परप्रेषणमन्तरेणोपपद्यत इति वक्ष्यामः। लिङ्गमपि किंचिदन्वेष्टव्यम्। विधिकोपश्च वाग्विसर्जने 'याः पशूनामृषभो वाच' इति मन्त्रान्तराम्नानात् ॥ १० ॥

( इति अग्निविरहणादिमन्त्रविनियोगाधिकरणम् ॥ ४ ॥

**अथ चतुर्थमग्निविहरणादिमन्त्रविनियोगाधिकरणम् ॥ ४ ॥**

न्या० सु०—अतिदेशोक्त्यैव पूर्वाधिकरणपूर्वपक्षसिद्धान्तावेवात्रापि इत्यवगतेर्यस्तत्रेति भाष्यमनर्थकमाशङ्क्यास्य सूत्रस्य यथावघातस्तथोत्थानविसर्ज्जने अपि पूर्वपक्षे मन्त्रप्रकाश्ये सिद्धान्ते त्वप्रकाश्ये इत्येवमतिदेशार्थत्वेन पञ्चानामपि पूर्वाधिकरणसूत्रार्थानां योजयितव्यत्वोक्त्यर्थत्वेन सूत्रस्य व्याख्यार्थत्वं भाष्यस्य सूचयितुमाह—इतीति। इतिकरणोऽस्येत्यर्थः यथैन्द्रीवचनादयथार्थं विनियुज्यते तथाह्वानमपीत्यपिशब्दोक्तावग्नीद्व्रतमवन्मन्त्रावपि इत्येवमाद्यसूत्रेऽग्नीति भाष्येण योजिते निरस्तत्वात्पूर्वपक्षायोगमाशङ्क्य, विधौ लक्षणायोगेनोत्थानव्रतमन्त्रसंयोगयोः काललक्षणार्थत्वेनावघातसंयोगवदानर्थक्यपरिहारायोगादंगाङ्गिभावार्थताऽवसीयतइत्याधिकाशङ्कोक्त्यर्थं लक्षणाभयादिति भाष्यं व्याचष्टे—पूर्वत्रेति। अवघ्नन्निति शब्देऽनुवादार्थे कालार्थतोक्ता। इह तु यदग्नीदग्नीन्विहर, बर्हिस्तृणोहि; पुरोडाशानलं कुरु, पशुनो देहीत्याह। तदुक्त्वा न कालइत्युत्तिष्ठन्निति शब्दे यद्वाचं विसृजति तद्व्रतं चरतेति मन्त्रकालइति च मन्त्रनिर्देशके शब्दे विधानार्थे सा चायुक्तेत्याशयः। भाष्योपलक्षितं मन्त्रोपदेशेऽपि वाक्यभेदानापत्तिरूपं विशेषान्तरमाह—त्रिरिति। नोत्थानविसर्जनाङ्गत्वेनाग्नीत्व्रतमन्त्रो विधीयते किं त्वाग्निविहरणे प्रेषणाङ्गत्वेन लिङ्गात्प्राप्तस्याग्नीन्मन्त्रस्योत्थानकालत्वं, वाग्यमनियमासमाप्त्यङ्गत्वेन च प्राप्तस्य वाग्विसर्गस्य व्रतभक्षणप्रेषणाङ्गभूतमन्त्रोच्चारणे कालत्वं विधीयते विधिमन्त्रपाठक्रमाभ्यां चोत्थानव्रतमन्त्रयोर्विशिष्टकालकत्वेनावगत्वरूपाच्चोदितत्वादग्निमन्त्रवाग्विसर्गलक्षकत्वशक्तिरस्तीत्येवं सिद्धान्तसूत्रयोजनार्थमुत्तिष्ठन्निति भाष्यमुत कालार्थः संयोग इति सन्देहभाष्यालोचनयैव ज्ञातार्थत्वान्न व्याख्यातम्।

कालविधौ सिद्धान्तावसाने पूर्वाधिकरणे कालानुवादाभ्युपगमात्तदतिदेशार्थताऽस्याधिकरणस्य न युज्येतेत्याशङ्क्य, पूर्वपक्षे श्रुत्या गौणे मन्त्रविनियोगः। सिद्धान्ते लिङ्गान्मुख्ये इत्येतावता साम्येनातिदेशतेति परिहारसूचनार्थं नेतिभाष्यं स्पष्टत्वान्न व्याख्यातम्। पदोत्तरत्वेन तृतीयं सूत्रं योजयितुमनुत्थितेनाग्नीन्नेधितुं विहर्तुं वाशक्यत्वादुत्थानस्यानीन्धनविहरणयोः कर्तृत्वं विवक्षित्वा मन्त्रप्रकाश्यत्वोपपत्तेः वागात्मिकायाश्च जिह्वाया व्रतशब्दवाच्ययष्टृत्यर्थंपयोयवाग्वादिभक्षणकर्तृत्वं विवक्षित्वा व्रतमन्त्रप्रकाश्यत्वोपपत्तेर्लिङ्गदग्नीद्व्रतमन्त्रयोरुत्थानवाग्विसर्गाङ्गत्वं भविष्यतीति शङ्कार्थं यद्यपिचेति भाष्यं कथं शक्यते इत्यपेक्षामुत्थानेनेत्यनेन शक्यतोपपादितेत्येवं व्याचष्टे—

**उत्थानेति**। अध्वर्युकर्तृकस्योत्थानस्याग्नीध्रकर्तृके विहरणे हेतुत्वायोगात्तन्निमित्तः कर्तृत्वोपचारो न युक्त इत्याशङ्क्याह—**यदेति**। समाख्याप्राप्ताध्वर्युकर्तृकता प्रैषत्वे सति प्रैषेषु च पराधिकारादि३-८-२२ति न्यायाद्बाध्येते, उत्थानाङ्गत्वे तु प्रैषत्वाभावान्न तद्बाधो युक्त इत्याशयः। बर्हिस्तरणादिग्रहणायादिशब्दः। व्रतमिति शङ्काभाष्यावयवं व्याचष्टे—एवमिति। वाचोऽस्वतन्त्रत्वेन कर्तृत्वायोगात्कथमनेन मन्त्रेण वागाभिधानमित्याशङ्क्याह—**वागिति**। यथा भक्षानुवाके 'वाग्जुषाणा सोमस्य तृप्यत्वि'ति भक्षयितृस्थं तृप्तिकर्तृत्वं वाच्युपरितम्, तथाऽस्य सम्बन्धितः पुरुषस्य यद्व्रतभक्षणे कर्तृत्वं तद्वाच्युपचारितुं शक्यमित्यर्थः। मुख्यस्यापि जिह्वावत्कर्तृत्वायोगात्सम्बन्धितातिरेकजनितऽस्येति षष्ठी व्याख्येया। चरतेर्भक्षणार्थत्वात् कृविहिंसायामिति कृणोतेर्हिंसार्थात् करणशब्दं व्युत्पाद्य भक्षणस्य नाशकत्वेन हिंसारूपत्वाद्भक्षणे कर्तृत्वं विवक्षितम्, एवमपि वाचोऽप्रैष्यत्वात्प्रैषार्था लोडयुक्तेत्याशङ्क्य प्राप्तं कालार्थत्वं लोटो दर्शयिम् **तवेत्युक्तम्**। वाचः शब्दात्मकत्वाच्छब्दस्य च ताल्वादिष्वष्टसु स्थानेष्वभिव्यक्तेर्बहुवचनाविष्ठानभेदोक्तिः। अस्याः शङ्काया गुणाभावादिति सूत्रं तथापीति भाष्येणाग्नीदित्यामन्त्रणविभक्तेर्विहरेत्यादेश्च प्रैषस्यार्थशून्यत्वाख्यव्यर्थत्वरूपादृष्टार्थत्वप्रसङ्गोक्तिद्वारोत्तरत्वेन योजितमित्याह—**गुणेति**। कथमर्थदर्शनाभावोक्तिद्वारैतत्सूत्रं योजितं भवतीत्याशङ्क्य गुणशब्दस्य सामर्थ्यवाचित्वादग्नीद्व्रतमन्त्रयोस्तूत्थानवाग्विसर्गप्रकाशनसामर्थ्याभावादित्येवं सूत्रव्याख्यासूचनार्थं—**मन्त्रेत्युक्तम्**। लोटः प्राप्तकालवाचित्वेन प्रैषार्थत्वाभावात्सामर्थ्यं भविष्यतीत्याशङ्क्याह—**न हीति**। नचेदं युगपद्विवक्षितुं शक्यते पदार्थस्य प्रातः कालस्तव वेति भिद्येत हि तथा वाक्यमिति प्रैषाधिकरणभाष्ये प्रैषं विना मध्यमपुरुषायोगस्य वक्ष्यमाणत्वान्न प्राप्तकालार्थता युक्तेत्याशयः।

लिङ्गसूत्रं कथं योज्यमित्याशङ्क्याह—**लिङ्गमपीति**। लिङ्गान्तराभावेऽपि गुणाभावसूत्रमग्नीद्व्रतमन्त्रयोर्मुख्यवृत्त्योत्थानवाग्विसर्गप्रकाशनासामर्थ्येऽपि गौणसामर्थ्यसद्भावाच्छ्रौतविनियोगोपपत्त्या शङ्कानिरासार्थत्वेन लोड्व्यतिरिक्तस्य मन्त्रभागस्य सामर्थ्यसम्भवेऽपि लोडुक्तस्य प्रैषविषयत्वलक्षणस्य गुणस्योत्थानवाग्विसर्गयोरभावादित्येवं व्याख्याय,

आमन्त्रणादिसामर्थ्यं लिङ्गमाश्रीयते तदा।

इत्यनेन न्यायेनाग्नीदित्यामन्त्रणसामर्थ्यं 'प्रैषसामर्थ्यं च लिङ्गसूत्रार्थत्वेन व्याख्येयमित्याशयः। अनेन चापिचेति भाष्यस्योत्थानवाग्विसर्गाङ्गत्वेऽर्थदर्शनाभावादसमर्थौ मन्त्रौ स्यातां प्रेषणे त्वर्थदर्शनात्समर्थावित्येवमर्थत्वेन लिङ्गसूत्रयोजनार्थत्वं सूचितं पञ्चमसूत्रयोजनार्थं कल्पनायां चेति भाष्यं व्याचष्टे—**विधीति** ॥ १० ॥

**इति चतुर्थमग्निविहरणादिमन्त्रविनियोगाधिकरणम् ॥ ५ ॥**

भा० प्र०—ज्योतिष्टोम प्रकरण में श्रुति में कहा गया है "उत्तिष्ठन्नन्वाह अग्नीदग्नीन् विहरेति" (तै० सं० ६।३।१) अर्थात् "अग्नीदग्नीन् विहर" इस मन्त्र को छोड़कर एवं

"व्रतं कृणुत" इस मन्त्र को कहकर वाक्य विसर्जन करे, इस स्थल में उत्थान एवं वाक्य-विसर्जन के उद्देश्य से ही ये दोनों मन्त्र विहित हैं, अथवा पूर्व अधिकरण के समान यहाँ भी उत्थान एवं विसर्जन दोनों शब्द दो काल का लक्षक है—इस प्रकार संशय होने पर पूर्वपक्षी का कहना है कि इस स्थल में काल विधेय एवं पूर्व अधिकरण का अवघात-काल जैसे अर्थतः प्राप्त है, वैसे ही इस स्थल में है अर्थात् प्राप्ति नहीं है। इसलिए यह मन्त्रविधि है, कारण, काल इस स्थल में यदि विधेय होगा तो विधि में लक्षणा नहीं हो सकती है, अतः उत्थान एवं विसर्जन काल का लक्षक होगा—यह कहना सङ्गत नहीं है। उक्त दोनों मन्त्रों के 'अग्नीत्' एवं 'व्रत' इन दो पदों का उत्थान एवं वाक्य-विसर्जन अर्थ में लक्षणा का उक्त दोनों कर्मों का दोनों विनियोग के रूप में स्वीकार करना उचित है। इस प्रकार के पूर्वपक्षी के उत्तर में सिद्धान्ती का कहना है कि "तथोत्थानविसर्जने", यह अतिदेश सूत्र है, इसलिए पूर्वाधिकरण की उक्तियाँ इस स्थल में भी अनुसरण के योग्य है। अग्निविहरणप्रैष एवं पयःपान व्रत सम्पादन प्रैष ही दोनों मन्त्रों का अर्थ है। किन्तु उत्थान एवं विसर्जन उसका अर्थ नहीं है। इसलिए उत्थान एवं विसर्जन रूप अर्थ का प्रकाश करने में दोनों मन्त्र असमर्थ हैं, अतः दोनों कर्मों में दोनों मन्त्रों का विनियोग नहीं हो सकता है, इसलिए, इस स्थल में लक्षणा कर काल ही विधान किया गया है—यह कहना पड़ेगा।

"तथा" = उस प्रकार अर्थात् पूर्व अधिकरण में कथित 'अवघ्नन्' पद जैसे काल लक्षक है, उसी प्रकार "उत्थानविसर्जने" = उत्थान एवं विसर्जन अर्थात् वाक्य त्याग भी काल लक्षक है। चतुर्थ अग्निविहरणादिमन्त्र विनियोगाधिकरण ॥ १० ॥

### अथ पञ्चमं सूक्तवाकाधिकरणम्

## [५] सूक्तवाके च कालविधिः परार्थत्वात् ॥ ११ ॥ पू०

**शा० भा०—दर्शपूर्णमासयोः श्रूयते—'सूक्तवाकेन प्रस्तरं प्रहरति' इति। तत्र संदेहः किं सूक्तवाकः प्रस्तरप्रहणं प्रत्युपदिश्यते, उतेयं काललक्षणेति। तदुच्यते—काललक्षणेति। कुतः ? सूक्तवाकस्य देवतासंकीर्तनार्थत्वात्। प्रस्तर-प्रहरणं च प्रत्यशक्तेः प्रस्तरस्य स्रुग्धारणार्थत्वात् ॥ ११ ॥ पूर्वपक्षः ॥**

त० वा०—देवताप्रकाशस्रुग्धारणाभ्यां कृतार्थत्वादङ्गाङ्गिभावापेक्षा नास्तीति कालार्थता। सर्वत्र च कृतार्थयोः संबन्धे कालार्थत्वं स्थास्यति तृतीयां चेत्थं-भूतलक्षणार्थां मन्यते। प्रस्तरकृतार्थत्वाभिधानं च प्रतिपाद्यमानप्रधानत्वादस्य सूक्तवाकाङ्गत्वं तद्वाच्यदेवताङ्गत्वं वा न घटत इत्यस्य प्रतिपादनार्थम्। तथा सदेवतस्य सूक्तवाकस्यापि तदङ्गत्वमिति ॥ ११ ॥

अथ पञ्चमं सूक्तवाकाधिकरणम् ॥ ५ ॥

न्या॰ सु॰—वचनविनियोज्यत्वाभावेनाप्रसक्तापवादविषयत्वानामेव हविष्कृदादि-मन्त्राणामुत्सर्गविषयत्वेऽधिकरणद्वयेनोक्ते, सूक्तवाकस्य वचनविनियोज्यत्वात्प्रसक्तापवाद-विषयत्वस्याप्युत्सर्गविषयतैवेत्यभिधानार्थत्वेनाऽस्याधिकरणस्य प्रकृतविषयविवेकसङ्गतिम् अपवादत्वेन चाऽनन्तरसङ्गतिं स्पष्टत्वादनुक्त्वा, सूक्तवाकप्रस्तरयोः पारार्थ्योक्तेः कालविधि-हेतुत्वमुपपादयति—**देवतेति**। अग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति, प्रहृत्य परिधीन् हारि-योजनं जुहोति। दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेत्यादौ च सर्वत्र कृतार्थसंयोगकालार्थत्वस्य च स्थाप्यमानत्वात् कृतार्थसंयोगस्य कालविधिहेतुत्वेन विप्रतिपत्तव्यमित्याह—**सर्वत्रेति**। तृतीयया याङ्गत्वावसायात्कालार्थता न युक्तेत्याशङ्क्याह—**तृतीयां चेति**। सूक्तवाकयुक्तं प्रस्तरं प्रहरतीत्युक्ते योग्यत्वात्कालद्वारैव सूक्तवाकयुक्तत्वावगता काललक्षणाऽवसीयते इत्याशयः। प्रस्तरस्याङ्गत्वेन सिद्धान्तिनोऽनिष्टत्वात्तन्निरासार्थं कृतार्थत्वोक्तिरनर्थि-केत्याशङ्क्याह—**प्रस्तरेति**। प्रस्तरस्याङ्गत्वेन सिद्धान्तिनोऽनिष्टत्वेऽपि यदि कश्चि-त्सूक्तवाकस्य कृतार्थत्वेनाऽङ्गत्वायोगोऽपि प्रस्तरप्रहरणस्याकृतार्थत्वात्सूक्तवाकेन प्रयोजने-नेत्यस्मिन्नर्थे तृतीयामङ्गीकृत्य सूक्तवाकं प्रति दृष्टार्थत्वेन वा सूक्तवाकस्यादृष्टार्थाङ्गान-पेक्षत्वेऽपि तत्कार्यदेवतासंस्कारोपयोगद्वारा सूक्तवाकवाच्या देवताः प्रत्यङ्गत्वात्कालार्थ-संयोगायोगं शङ्केत, तं प्रति कालार्थसंयोगोपपादनायाऽस्य प्रहरणस्य प्रतिपाद्यमानप्रस्तर-प्रधानत्वादन्याङ्गत्वं न घटतइत्यस्यार्थस्य प्रतिपादनीयत्वात् अकृतार्थस्य प्रतिपाद्यत्वयोगात्-प्रस्तरस्य चेति भाष्येण प्रस्तरस्य कृतार्थत्वाभिधातमित्यर्थः। प्रतिपत्तित्वेन वा प्रहरणस्य देवतया प्रयोजनाभावात्सूक्तवाकस्यापि सदेवतस्य प्रहरणाङ्गत्वं न घटतइत्यस्यार्थस्य प्रतिपादनार्थं प्रस्तरस्याकृतार्थत्वे प्रहरणस्य तत्प्रतिपत्तित्वासिद्धेः प्रहरणस्य प्रतिपत्तित्व-सिद्ध्यै प्रस्तरस्य कृतार्थत्वाभिधानमिति प्रयोजनान्तरमाह—**तथेति**। ग्रन्थोऽनुषङ्गेण पूरणीयः ॥ ११ ॥

भा॰ प्र॰—दर्शपूर्णमास प्रकरण में श्रुति में कहा गया है "सूक्तवाकेन प्रस्तरं प्रहरयति" सूक्तवाक अर्थात् सूक्तवाक नामक मन्त्र विशेष के द्वारा प्रस्तर प्रहार करे अर्थात् प्रस्तर नामक दर्भमुष्टि अग्नि में प्रहार = प्रक्षेप करे। इस स्थल में प्रस्तर प्रहार के उद्देश में ही क्या सूक्त वाक विहित होता है, अथवा काललक्षित होता है—यह संशय है। इसमें पूर्वपक्षी का कहना है "सूक्तवाके च कालविधिः" पूर्वोक्त दो अधिकरण के नियम के अनुसार सूक्तवाक वाक्य में "सूक्तवाकेन" इस पद में लक्षणा बल से काल का ही विधान किया गया है। जिस समय होता सूक्तवाक मन्त्र का पाठ करें उस समय अध्वर्यु अग्नि में प्रस्तर प्रहार करे अर्थात् कुशमुष्टि का निक्षेप करे—इस प्रकार लक्षणा के बल से काल का विधान है। काल विधि का कारण निर्देश करते हुए कहा है कि "परार्थत्वात्" क्योंकि सूक्तवाक प्रस्तर प्रहरण रूप कर्म के अर्थ का प्रकाश नहीं करता

है। कारण, सूक्तवाक मन्त्र में "अग्निरिदं हविरजुषत अधीवृधत महो ज्यायोऽकृत" ऐसा पाठ किया है, इसका फलितार्थ उस यजमान के मध्य में तेज का आधिक्य करता है। किन्तु प्रस्तर प्रहरण के साथ इस मन्त्र का किसी प्रकार का सम्बन्ध नहीं है, कारण, यह प्रस्तर प्रहार के किसी भी अर्थ का प्रकाश नहीं करता है और जो मन्त्र जिस कर्म के अर्थ का प्रकाश नहीं करता है सम्भव पक्ष में उसको उस कर्म का अङ्ग कहना उचित नहीं है, कारण, उसमें मन्त्र का अर्थ असमवेत अर्थात् अनन्वित होगा।

"सूक्तवाके" = सूक्तवाक शब्द युक्त विधि वाक्य में, 'च" = और "कालविधिः" = काल का विधान किया गया है, "परार्थत्वात्" = क्योंकि वह सूक्तवाक परार्थ अर्थात् अन्य अर्थ का प्रकाशक है। यह पूर्वपक्ष है ॥ ११ ॥

## उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥ सि०

**शा० भा०—उपदेशो वा प्रस्तरप्रहरणं प्रति मन्त्रस्य स्यात्। एवं श्रुतिविहितोऽर्थो भवति, सूक्तवाकेनेति करणविभक्तिसंयोगात्। इतरथा लक्षणा स्यात्। सूक्तवाकेन लक्षणेन प्रस्तरं प्रहरेदिति। एवं च कृत्वा याज्याशब्द उपपन्नो भवति। सूक्तवाक एव याज्या, प्रस्तर आहुतिः इति ॥ १२ ॥ क० सिद्धान्तः ॥**

त० वा०—'सूक्तवाकेन प्रस्तरं प्रहरति' इति प्रत्यक्षात्क्रियासंबन्धात्करणत्वं गम्यमानं न शक्यमुत्स्रष्टुम्, कारकविभक्तिबलीयस्त्वात्। एवं च श्रुतिवृत्तः सूक्तवाक एव कार्येण संभन्त्स्यते। अन्यथा तल्लक्षितः कालः संबध्येत। तथा चाङ्गत्वे सति साधर्म्याद्याज्याशब्द उपपत्स्यते 'सूक्तवाक एव याज्या' इति। किं पुनरस्य पारमार्थिकमेव याज्यात्वमुतोपचारमात्रम्। कश्चात्र विशेषः। सति याज्यात्वे तद्धर्मैर्भवितव्यम्। 'आसीनो यजति' 'अनवानं यजति' 'याज्याया अधि वषट् करोति' 'पुरोनुवाक्यां च प्रथमं प्रयुङ्क्ते' इत्यादिभिः। अथ स्तुतिमात्रं ततो नैषां कश्चिदादर्तव्य इति। किं प्राप्तम्। भवितव्यं धर्मैः। ययेज्यते सा याज्या। सूक्तवाकेन चेज्यते। तस्मादस्ति याज्यात्वम्। तत्रैतत्स्यात्। अस्त्रीलिङ्गत्वादननृचि स्त्रीप्रत्ययो न प्राप्नोति। नैव दोषः। समिदादियाज्यास्वनृक्ष्वपि याज्यात्वप्रसिद्धेः। अथोच्येत, आध्वर्यवेषु दर्विहोमसाधनेषु सत्यपि यागकरणत्वे याज्यात्वं न दृष्टमतो नैतदैकान्तिकं कारणमिति। यत्रैव याज्याशब्दः प्रयुक्तः सैव केवला याज्या। तेन तर्हि 'सूक्तवाक एव याज्या' इत्यत्रापि प्रयोगाद्भवितव्यं धर्मैः। न चास्यौपचारिकत्वम्। मुख्यकारणसंनिधेः प्रत्यक्षत्वात्। अपि च सामान्यशब्दोऽयं याज्येति। स न शक्यो लक्षणमन्तरेण प्रयोगतो विविक्तविषयोऽवधारयितुम्। तत्रैतल्लक्षणं स्यात्। हौत्रेण येनेज्यते

तद्वस्तु याज्येति। तथा सति सक्तत्राकेऽपि प्रसङ्गः। तस्मान्मुख्यमेवास्य याज्यात्वमित्येवं प्राप्ते ब्रूमः।

येन मन्त्रेण यायाङ्गं होता यजति देवताम्।
प्रसिद्धेस्तस्य याज्यात्वं सूक्तवाको हि[1] नेदृशः॥

प्रकृतौ हि सर्वमेव तादर्थ्योत्पत्त्या वस्तु निरूप्यते। याज्यात्वं च त्यज्यमानहविर्द्रव्यदेवतोद्देशार्थविहितमन्त्रत्वेनावधारितम्। न च सूक्तवाकस्त्यज्यमानप्रस्तरदेवतोद्देशार्थमुत्पन्नः। इष्टदेवताभिधानस्वरूपत्वात्। लिङ्गं श्रुत्या बाध्यत इति चेत्। न। श्रुतेर्लिङ्गविनियोगाभ्यनुज्ञामन्तरेणाग्निसेकादिवदसामर्थ्यात्। तथा चोत्तरसूत्रे वक्ष्यामः। तेन स्वतस्तावन्न याज्यात्वम्। न चान्या काचिदेवंविषया याज्याऽस्ति। यस्याः कार्ये वर्तमानो याज्याधर्माल्लँभेत। प्राक्च यस्य यागत्वमवधारितं तस्य साधनं पश्चाच्चोद्यमानं याज्येत्यवगम्यते। न त्वत्र प्राक्सूक्तवाकसंबन्धात्केनचिद्यागत्वमवधारितम्। तदितरेतराश्रयं प्राप्नोति। याज्यायोगाद्यागो यागसंबन्धाद्याज्येति। अथैवं परिह्रियेत। विनैव तावद्याज्याव्यपदेशेन सूक्तवाकमात्रतया गृह्यमाणो यागे विनियुज्येत ततो याज्यातस्तदभिधेयदेवतासंबन्धलभ्ययागत्वप्रधानप्रहरणसंबन्धाद्याज्यात्वं लभ्यत इति। तदुच्यते।

येनोत्पत्तौ न याज्यात्वं विनियोगे च लभ्यते।
तस्य पश्चात्कथं नाम तल्लाभोऽध्यवसीयते॥

यो हि यूपादिशब्दो न क्वचित्प्रसिद्धः स एवं प्रसिद्धिं लभते। अयं पुनर्याज्याशब्द उत्पत्तिवेलायामेव विनियोगवेलायां वार्थं लभमानो नोत्तरकालभावमपेक्षते। येऽपि च याज्याधर्मास्तेऽपि प्रथमसिद्धेषु यागेषु लब्धात्मानो नेदं क्लेशेन लभ्यमानं याज्यात्वं प्रतीक्षन्ते। यदि तु विकृतिर्भवेत्ततः परिधिखलेवाल्योरिव यूपत्वम्, कार्येण याज्यात्वमध्यवसीयेत। प्रकृतिस्त्वियं नात्र कार्यपूर्वकं धर्मनिरूपणमतोऽपि न याज्याधर्माः। तथा च 'सूक्तवाक एव याज्या' इत्येवकारं उपचारं द्योतयति। अयाज्यायां हि याज्योपचारे सत्येवमुपपद्यते न मुख्यः, एवं याज्यात्वे। मुख्यायां त्वहुतौ नैवकारः प्रयुक्तः। तदाहुतिः पारमार्थिकी।

न च प्रहरणं यागमात्ररूपेऽवतिष्ठते।
होम एव त्वयं स्पष्टः प्रक्षेपाधिक्यचोदनात्॥
आघारादि यथा द्रव्यक्षारणाद्धोमतां गतम्।
तथा प्रक्षेपरूपत्वाद्धरणस्यापि होमता॥

---

१. क० नचेदृशः।

होमाङ्गस्य च याज्यात्वं न कस्यचिदपीष्यते ।
निगदत्वाद्विशेषेण सूक्तवाके निषिध्यते ॥
नितरां गद्यमानत्वान्निगदो ह्येष गद्यते ।
निगदानां च याज्यात्वमाहत्य प्रतिषिध्यते ॥
आयाज्या एव निगदा ऋचैव जयतीति हि ।
निषिद्धमपि याज्यात्वं प्रशंसार्थमिहोदितम् ॥

तत्संबन्धात्तु सूक्तवाको याज्यात्वेन स्तूयते । न चोभयोः स्तुतिः । अत्यन्तं निरालम्बनत्वप्रसङ्गात् ॥ १२ ॥

न्या० सु०—सौत्रवाशब्दसूचितसिद्धान्तहेतुव्याख्यार्थम् । एवमिति भाष्यं पूर्वपक्षिणेत्थम्भूतलक्षणार्थतृतीयाभ्युपगमात् प्रकरणसंयोगासिद्धेरयुक्तमाशङ्क्य, करणविभक्तित्वोपपादनेनोपपादयति—**सूक्तेति** । क्रियाया भावनात्मिकाया वाक्यार्थत्वेन प्राधान्यात्सर्वपदार्थानां तयैवान्वयप्रतीतेः, करणत्वे च साक्षात्क्रियान्वयसम्भवेनोपपदार्थान्वयद्वारा क्रियान्वयापादकस्येत्थम्भूतलक्षणस्यानभ्युपगमनीयत्वात्कारकवाचित्वस्य च स्वाभाविकत्वेन पदान्तरान्वयानपेक्षतयोपपदान्वयापेक्षेत्थम्भूतलक्षणार्थत्वरूपादुपपदविभक्तित्वात्कारकार्थरूपस्य कारकविभक्तित्वस्य बलीयस्त्वावगतेः करणत्वं गम्यमानं नोत्स्रष्टुं शक्यमित्याशयः । प्रत्यक्षशब्दः साक्षात्त्ववाची । श्रुतिलक्षणाक्ती प्रातिपदिकविषयत्वेन व्याचष्टे—**एवं चेति** । सौत्रस्य हेतोरुपचयत्वव्याख्यार्थमेवं चेति भाष्यं व्याचष्टे—**तथा चेति** । अङ्गत्वे सत्युत्तरसूत्रन्यायेन प्रहरणस्य देवतान्वयाद्यागत्वसिद्धेर्यागाङ्गमन्त्रत्वलक्षणयाज्यागुणयोगाद्याज्याशब्दोपपत्तिरित्याशयः ।

प्रसङ्गाच्चिन्तान्तरं प्रस्तौति—**किं पुनरिति** । चिन्तान्तरस्य प्रश्नपूर्वं प्रयोजनमाह—**कश्चेति** । एषां धर्माणां मध्यइति निर्धारणे षष्ठी फलतः । पूर्वपक्षं प्रतिजानीते—**किमिति** । उपपादयति—**यथेति** । एकदेशिनः शङ्कामुपन्यासपूर्वं पूर्वपक्षी निरस्यति—**तत्रेति** । इज्यतेऽनेनेति व्युत्पत्त्या सूक्तवाकस्य याज्यात्वे होमेऽपि यागत्वानुवृत्तेर्होमसाधनानाममन्त्राणां याज्यात्वप्रसङ्गात्प्रयोगत एव याज्यानां व्यवस्थावगतेः सूक्तवाके चाभियुक्तैर्याज्याशब्दाप्रयोगान्न याज्यात्वमस्तीत्याशङ्कते—**अथेति** । प्रयोगतो व्यवस्थामभ्युपगम्य तावत्पूर्वपक्षी परिहरति—**तेनेति** । यदि प्रयोगतो व्यवस्थेष्यते, तर्हि वेदएव सूक्तवाके याज्याशब्दप्रयोगात्तेन याज्यात्वेन सिद्धेन हेतुना धर्मभाव्यमित्यर्थः वैदिकप्रयोगस्यौपचारिकत्वादव्यवस्थापकतामाशङ्क्याह—**न चेति** । याज्याशब्दप्रयोगस्य मुख्यत्वे यत्कारणं यागसाधनमन्त्रत्वम्, तत्सद्भावस्य प्रत्यक्षत्वादित्यर्थः ।

प्रकर्षसेचनकरणशक्ते तैलादावसत्यपि प्रोक्षणीशब्दप्रयोगे प्रकर्षसेचनकरणत्वस्य कारणत्वाविधातवद्धोममन्त्रेष्वसत्यपि याज्याशब्दप्रयोगे यागसाधनमन्त्रत्वस्य न कारणवत्त्वविघात इति प्रत्यक्षधर्माबाध्यत्वलक्षणार्थया: प्रत्यक्षोक्त्या सूचितम् । पङ्कजादिशब्दानां

च प्रयोगव्यवस्थापकपद्मत्वजात्याद्यत्रीनव्यवस्थितविषयत्वदर्शनाद्यौगिकानां शब्दानामवयवयोगवतीषु सर्वासु व्यक्तिषु साधारण्येन प्रवृत्तानां लक्षणभूतप्रयोगव्यवस्थापकधर्मानिपेक्षात्-प्रयोगमात्राद्यवस्थितविषयत्वावधारणाशक्तेर्हौत्रप्रवचनविहितकारिणायेन मन्त्रेणेज्यते, स मन्त्रो याज्येति लक्षणस्याभ्युपगमनीयत्वात्सूक्तवाकेऽपि तल्लक्षणत्वोपपत्तेर्याज्यात्वाविघात इत्याह—**अपि चेति**। यौगिकानां जातिवाचित्वाभावात्साधारण्यवाचिसामान्यशब्दः प्रशस्त्रादिप्रयोज्यानामपि मन्त्राणां याज्यात्वप्रसिद्धेर्हौत्रप्रवचनाख्यर्ग्वेदविहितकर्मकारिवाची होतृशब्दः। मन्त्रत्वादरेऽपि तद्विशेषत्वानादरसूचनार्थो वस्तुशब्दः। चिन्तान्तरपूर्वपक्षमुपसंहरति—**तस्मादिति**।

होतृप्रयोज्येऽपि दर्विहोममन्त्रे याज्यात्वाप्रसिद्धेर्येन मन्त्रेण होत्रेज्यते सा याज्येति लक्षणायोगाद्यागाङ्गदेवतोद्देशार्थविहितमन्त्रत्वस्यैव लक्षणत्वावगतेः सूक्तवाकस्य नैवं लक्षणत्वान्न याज्यात्वमिति सिद्धान्तमाह—**एवमिति**। यजेर्यजमानकर्तृकत्यागविशिष्टोद्देशवाचित्वशङ्कानिरासनोद्देशमात्रवाचित्वसूचनार्थो होतृशब्दः। उद्दिशतीत्युक्तं निवापादिकालीनोद्देशार्थत्वे याज्याशब्दस्यावयवार्थत्यागापत्तिमाशङ्क्य, यागाङ्गत्वेन देवतोद्देशाद्यागसाधनत्वरूपावयवार्थोपपत्तिसूचनार्थम्—**यागाङ्गमित्युक्तम्**। ये यजामहेनन्त्वरस्याग्निमित्यादेरप्यादेशाख्यस्य शब्दस्य यागकालीनदेवतोद्देशार्थत्वेन विधानाद्याज्यात्वापत्तिर्मन्त्रविशेषणेन निरस्ता। तृतीयया देवतोद्देशार्थत्वेन विधिः सूचितः।

देवतां यागकाले येन मन्त्रेणोद्दिशति, तस्य याज्यात्वमिति लक्षणस्योपांशुयाजादिषु याज्यान्वयात्प्रागनवगतदेवतेषु देवतोद्देशार्थत्वेन मन्त्रविध्ययोगादव्यापकत्वमाशङ्क्य देवताविशेषानवगमेऽपि यागत्वात्सामान्यतस्तत्रापि देवतान्वयावगतेर्देवतोद्देशार्थत्वेन विधिसम्भवाद्व्यापकत्वं प्रसिद्धयुक्त्या सूचितम्। सूक्तवाकस्य देवतोद्देशार्थत्वेनाविधानेऽप्यर्थाद्देशार्थत्वसम्पत्तेर्याज्यात्वापत्तिरित्याशंकां निरस्यन् श्लोकं व्याचष्टे—**प्रकृतौ हीति**। त्यज्यमानविशेषणेन यागकालीनतोक्ता। न केवलं सूक्तवाकस्य तादर्थ्येन विरूपोत्पत्तिर्नास्ति, किं त्वजुषतेत्याद्यतीतकालवाचिप्रत्ययोगित्वेनेष्टदेवताभिधानसामर्थ्यरूपलिङ्गविरोधात्त्यज्यमानप्रस्तरदेवतोद्देशार्थतापि नास्तीत्याह—**इष्टेति**। सूक्तवाकस्य प्रहरणाङ्गत्वावेदिकया तृतीयाश्रुत्या मान्त्रवर्णिकप्रहरणे देवतोद्देशार्थत्वावसायाल्लिङ्गावगतेष्टपुरोडाशादिदेवतार्थता बाध्यतइत्याशङ्कते—**लङ्गमिति**। अस्यामर्थविनियोगाशक्तेः श्रुत्या लिङ्गावगतेष्टदेवताभिधानार्थत्वाभ्यनुज्ञानादिष्टानां चाज्यभागाद्यनुयाजान्तयागदेवतनां स्वार्थत्वेनैव सूक्तवाकग्राहकत्वादन्यार्थतयाऽवधृतस्य सूक्तवाकस्य प्रहरणे विनियुक्तस्यापि तुषोपवापेन पुरोडाशकपालं तत्प्रहरणेनाप्रयोज्यत्वावगतेस्त्यज्यमानप्रस्तरदेवतोद्देशार्थत्वं श्रुतितोऽवसीयत इति परिहृति—**नेति**। श्रुत्या लैङ्गिकविनियोगानुज्ञां द्रढयितुमाह—**तथा चेति**। श्लोकार्थमुपसंहरति – **तेनेति**। भवितव्यं धर्मैरिति पूर्वपक्षोपक्रमात्, ततश्च न भवितव्यं धर्मैरिति शेषः। याज्यात्वाभावेऽपि यागरूपप्रहरणाख्याययाज्याकार्यकारित्वाद्याज्याधर्मा भविष्यन्तीत्याशङ्क्याह—**न चेति**। सूक्तवाकान्वयात्प्राक् प्रहरणस्य यागरूपत्वाभावेन

याज्याकार्यत्वाभावात्तत्सूक्तवाकस्य याज्याकार्यकारितास्तीति सूचयितुं प्रहरणविषयान्या याज्या नास्तीत्युक्तम्। (दर्विहोमानां जुहोतिचोदितत्वेन यागत्वाभावाद्ययेज्यते, सा याज्येत्यवयवात्प्रतीत्यभ्युपगमेऽपि) 'चतुर्होत्रा ग्रामकामं याजयेदि'ति यागसाधनत्वेन विहिते चतुर्होत्राख्ये मन्त्रे याज्यत्वाप्रसिद्धेर्वाक्यान्तरावगतयागत्वएव कर्मणि विनियुक्त-मात्रत्वस्य लक्षणत्वेनाभ्युपगमनीयत्वात्, सूक्तवाके च तदभावान्न याज्यात्वमस्तीत्याह— **प्राक्चेति**।

प्रहरणदेवतोद्देशार्थविहितमन्त्रत्वस्य लक्षणत्वेनाभ्युपगमनीयत्वात्, सूक्तवाके च तदभावान्न याज्यात्वमस्तीत्याह—**प्राक्चेति**। प्रहरणदेवतोद्देशार्थविहितमन्त्रत्वलक्षणकृत-सूक्तवाकनिवृत्तिस्तु योगमात्रसाधनार्थविहितमन्त्रत्वेऽपि लक्षणे सेत्स्यतीत्याह—**न त्वत्रेति**। प्रहरणस्य यागरूपत्वं विना सूक्तवाकस्य यागसाधनमन्त्रत्वनिमित्तयाज्यात्वासिद्धेर्याज्यारूप-सूक्तवाकान्वयात्प्रहरणस्य यागरूपप्रहरणान्वयाच्च सूक्तवाकस्य याज्यारूपतेत्यन्योन्या-श्रयापत्तिरित्याशयः। याज्यात्वानपेक्षसूक्तवाकमात्ररूपतया सूक्तवाकशब्दगृहीतस्य मन्त्रस्य यागत्वाभिमते प्रहरणे विनियोगोत्तरकालं सूक्तवाकाभिधेयाभिर्देवताभिर्मान्त्रवर्णिकेन सम्बन्धेन लभ्ययागत्वं यस्येति न याज्याकार्यत्वात्तां प्रति प्रधानभूतेन प्रहरणेन सम्बन्धा-त्सूक्तवाकस्य याज्यात्वसिद्धेरन्योन्याश्रयपरिहारं शङ्कते—**अथेति**।

अभियुक्तप्रसिद्धया यागकालीनदेवतोद्देशार्थतया विहितस्यावयवप्रसिद्धया च यागार्थतया विहितस्य मन्त्रस्य याज्यात्वावगतेः सूक्तवाकान्वयात्प्राक्प्रहरणस्य यागत्वासिद्धेः सूक्तवाकस्य यागार्थतया विध्ययोगादिष्टदेवतासमर्पकत्वात्मकलिङ्गविरोधेन चेज्यमानदेवतोद्देशार्थतया विध्ययोगात्सूक्तवाकान्वयात्पश्चात्प्रहरणस्य यागत्वे सत्यपि यागरूपार्थत्वेन सूक्तवाकस्य विध्यभावाद्याज्यात्वलाभसिद्धेर्नान्योन्याश्रयं परिहर्तुं शक्यमित्याह—**तदिति**। त्यज्यमाने हविर्देवतोद्देशार्थविहितमन्त्रतौत्पत्तिकशब्दसामर्थ्यगम्यत्वादुत्पत्तिशब्देन विवक्षिता। यागार्थ-विहितमन्त्रत्वं विनियोगाधीनत्वाद्विनियोगशब्देन विवक्षितम्। औत्पत्तिकशब्दसामर्थ्या-लोचनवेलायां त्यज्यमानहविर्देवतोद्देशार्थविहितमन्त्रत्वेन विनियोगवेलायां च यागार्थ-विहितमन्त्रत्वेन लक्षणेन येन सूक्तवाकेन याज्यात्वं न लभ्यते तस्य पश्चात्कथं याज्यात्वलाभ इत्यर्थः। यथा 'यूपं छिनत्ती'त्युत्पत्तिवेलायां 'खादिरे बध्नाती'त्यादिविनियोगवेलायां चानवागतमपि यूपत्वम्, यत्पशुबन्धार्थं खदिरादिछेदनादिसंस्कृतः, स यूप इति विपरीत-वचनव्यक्त्यालोचनया पश्चादवगम्यते तथा याज्यत्वमपि पश्चादवगमिष्यतइत्याशङ्क्याह— **यो होति**। 'समिधोऽग्नआज्यस्य व्यन्त्व'त्यादिष्वौत्पत्तिकमन्त्रसामर्थ्यालोचनवेलायां समिदादियागेषु विनियोगवेलायां च याज्याशब्दार्थलाभान्न यूपादितुल्यतेत्यर्थः। सूक्तवाकस्य मुख्ययाज्यात्वाभावेन च याज्याकार्यकारित्वेन पश्चाद्याज्यात्वाभ्युपगमेऽपि याज्याधर्मा न प्राप्नुवन्तीत्याह—**येऽपि चेति**। याज्याकार्यकारित्वाभ्युपगमे कार्यापत्त्या धर्मप्राप्तिरनिवार्येत्याशङ्क्याह—**यदि त्विति**। सूक्तवाकस्यार्थाद्याज्याकार्यकारित्वसम्पत्ता-वपि, शास्त्रेण याज्याकार्यकारितया विधिं विना धर्मप्राप्त्ययोगात्प्रकृतौ च कार्यस्या-

क्लृप्तत्वेन तत्कारितया विध्ययोगात्कार्यापत्त्यनुपपत्तेर्न धर्मप्राप्तिरित्युक्ते प्रकृतावपि फलचमसस्य[1] सोमकार्यापत्तिः कल्पिता। इह तु परिधौ पशुं नियुञ्जीती'ति यूपकार्ये पशुनियोजने श्रुत्योक्ते परिध्याख्याहवनीयपरिधानार्थकाष्ठविधिवत्सूक्तवाकेन यजेतेति काल्पनिकेन वाक्येन श्रुत्योक्ते याज्याकार्ये यागे 'खलेवाली यूप' इति यूपशब्दलक्षिते यूपकार्ये खलेवाल्याख्यधान्यखले कृतमेढीविधिवद्वा सूक्तवाकएव याज्येति याज्याशब्दलक्षिते याज्याकार्ये सूक्तवाकेविधानात्कार्यापत्तिर्वाच्या। प्रकृतौ च पदार्थविधिपूर्वकत्वात्कार्य-कल्पनस्य पदार्थविधानात्प्राक्कार्यानवगतेर्यागस्य याज्याकार्यत्वानवगमाच्छ्रुत्यालक्षणयाचोक्ते याज्याकालसूक्तवाकविधिर्न सम्भवतीति परिहारसूचनार्थम्—**परिधीत्युक्तम्**। अतो न सूक्तवाको याज्या नापि तस्य याज्यात्वं लिङ्गेन दृढयितुमाह—**तथा चेति**। कथमेव-कारस्योपचारद्योतकतेत्यपेक्षायामाह—**अयाज्यापरं हीति**। याज्यान्तरनिषेधायोगात्सूक्तवाक एव याज्यावत्प्रशस्त इत्येवकारात्सूक्तवाकस्यौपचारिकयाज्यात्वमवसीयतइत्याशयः। अत एवाहुतौ मुख्यत्वान्नैवकारः प्रयुज्यतइत्याह—**मुख्यत्वादिति**। कथमाहुतेर्मुख्यतेत्या-शङ्क्याह—**तदेति**। प्रहरणाङ्गत्वेन सूक्तवाकोपदेशस्य याज्याशब्दोपपत्तिहेतोस्तथा-चाङ्गत्वे सतीति वार्तिकनिर्दिष्टस्य प्रासङ्गिकचिन्तासमाप्त्या बुद्धिस्थीभूतस्य तच्छब्देन परामर्शात्तेन सूक्तवाकस्य प्रहरणाङ्गत्वोपदेशेनैव हेतुना पह्नियमाणस्य प्रस्तरस्य मान्त्रवर्णिकदेवतान्वयादाहुतित्वं पारमार्थिकमित्यर्थः। प्रहरणस्य सूक्तवाकप्रकाश्यदेवतात्व-यागाङ्गत्वे सत्यपि होमत्वाभावाद्धोमसाधनद्रव्यत्वनिमित्तं प्रस्तरस्याहुतित्वं नास्तीत्या-शङ्क्याह—**न चेति**। प्रक्षेपाधिक्यविधाने जुहोतिचोदनां विना कथं होमतेत्याशङ्क्याह—**आधारादिति**। जुहोतिचोदनाभावेऽपि प्रक्षेपाधिके यागेऽभियुक्तप्रसिद्धेर्होमतास्त्येवेत्याशयः। चतस्रः पूर्णाः प्रागुदीच्यौ निनयेदृतुभ्यः स्वाहा दिग्भ्यः स्वाहा सप्तऋषिभ्यः स्वाहेतरजनेभ्यः स्वाहेत्या'दिविहितस्योदकनिनयनादे'र्मान्त्रवर्णिकदेवतान्वयाद्यागस्य प्रहरणाधिक्याद्धोमतादि-शब्देनोक्ता। एवं च सत्ययागाङ्गत्वादपि सूक्तवाकस्य याज्यात्वं नास्तीत्याह—**होमेति**। सूक्तवाके तु विशेषतो याज्यात्वं नेष्यते निगदत्वेन याज्यात्वनिषेधादित्याह—**निगदत्वा-दिति**। निगदत्वैव तावत्कथं सूक्तवाकस्येत्याशङ्क्याह—**नितरामिति**। तथा याज्यात्व-निषेधः कथमित्याशङ्क्याह—**निगदानां चेति**। निषेधसरूपार्थवादोऽयं लिङ्गत्वेनोपन्यस्त इत्यृग्विध्येकवाक्यत्वोक्त्या सूचितम्। तस्माद्विशेषतः सूक्तवाकस्य याज्यात्वं नेष्यते इति हिशब्दान्वयः। निसिद्धं चेत्कथं तर्हि सूक्तवाकएव याज्येत्यत्रोक्तमित्याशङ्क्याह—**निसिद्धमपीति**। होमाङ्गत्वे सूक्तवाकस्य याज्यात्वप्रशंसानिरालम्बना स्यादित्याशङ्क्याह—**तत्सम्बन्धात्त्विति**। आहुतेःपारमार्थिकत्वोक्तिप्रसङ्गेनोक्तस्य होमाङ्गत्वानिषेधाद्याज्यात्वस्य

१. पूतीकानां च सामकार्थापत्तिर्दृष्टेत्याशङ्क्य तत्र तमस्मै भक्षं प्रकल्पयेन्न सोममिति फलचमसविधौ सोमनिषेधानुवादादिकवाक्यतान्यथानुपपत्त्या यागीयसोमसंस्काररूप-भक्षणविधिना च यदि सोमं न विन्देत पूताकानभिषुणुयादिति न पूतीकविधौ सोमाभावे विधानेन इत्य० २ पु०।

समाप्त्या बुद्धिस्थत्वेनाहुतेस्तच्छब्देन परामर्शाद्याज्यावत्सूक्तवाकस्यापि होमकालप्रयोज्यत्वेनाहुत्याख्यहूयमानावस्थद्रव्यसम्बन्धलक्षणयाज्यागुणयोगाद्याज्यात्वेन स्तुतिर्युक्तेत्यर्थः। पूर्वपक्षेऽपि तर्हि स्तुतित्वेन याज्यान्यपदेशोपपत्तेर्न सिद्धान्तलिङ्गतेत्याशङ्क्याह—न चेति। पूर्वपक्षेऽत्यन्तनिरालम्बनस्तुत्यापत्तेर्नोभयोः पक्षयोः स्तुतिर्युक्तेत्यर्थः ॥ १२ ॥

भा० प्र०—इस पूर्वपक्षी के समाधान में सिद्धान्ती का कहना है कि "उपदेशो वा" अर्थात् 'सूक्तवाकेन प्रस्तरं प्रहरेत्' यह कालविधि नहीं है, अपितु प्रस्तर प्रहरण के प्रति मन्त्र की अङ्गता विधि अर्थात् सूक्तवाक मन्त्र के अंश के रूप में पाठ्य है—यही विधान किया जाता है। क्योंकि, 'सूक्तवाकेन' इस स्थल में तृतीया विभक्ति है, और यह तृतीया श्रुति ही मन्त्र की अङ्गता का विज्ञापन करता है, अन्यथा अर्थवाद के मध्य में "सूक्तवाक एव याज्या प्रस्तरो हविः" अर्थात् 'सूक्तवाक ही याज्या एवं प्रस्तर ही = कुशमुष्टि ही हविः है, इस तरह सूक्तवाक को अकस्मात् याज्या कहकर उल्लेख करना सङ्गत नहीं होगा, कारण, जो होम का साधन है, जिस मन्त्र के द्वारा होता याज्ञ देवता की पूजा करता है, उसी का नाम याज्या है। इस स्थल में सूक्तवाक यदि प्रस्तर प्रहरण = कुशमुष्टि प्रक्षेप रूप होम का मन्त्र नहीं होगा तो अर्थवाद के मध्य में उसको जो याज्या कहा गया है—वह सङ्गत नहीं होगा। अतएव सूक्तवाक प्रस्तर प्रहरण का अङ्ग है, यदि यह कहा जाय मन्त्र और प्रहरण का अन्वय नहीं हो सकता है, कारण, उसमें मन्त्र का अर्थ असमवेत है। ऐसी स्थिति में यह कहा जा सकता है कि इस स्थल में देवता के द्वारा मन्त्र और प्रहरण का अन्वय हो सकता है।

"उपदेशः" = प्रस्तर प्रहरण की अङ्ग रूप में विधि, "वा" = पूर्वपक्ष के निरास के लिए है, "हि" = क्योंकि "याज्याशब्दः न अकस्मात्" अकस्मात् याज्य शब्द अर्थात् अर्थवाद के मध्य में सूक्तवाक में याज्या कहकर उल्लेख नहीं हो सकता है ॥ १२ ॥

## स देवतार्थस्तत्संयोगात् ॥ १३ ॥

शा० भा०—यदुक्तम्—देवतासंकीर्तने सूक्तवाकः समर्थो न प्रस्तरप्रहरण इति। उच्यते। स देवतावचनः प्रहरणेन संबध्यते। प्रहरणं हि यजिः। मान्त्रवर्णिको देवताविधिः। एवमभिसंबन्धः। अग्निरिदं हविरजुषतावीवृधत इत्येवं देवतामनुक्रम्य, आशास्तेऽयं यजमान इत्युक्त्वा, इदमिदमाशास्त इति च। यदनेन हविषाऽऽशास्ते, तदस्य स्यादिति प्रस्तरं हविर्निर्दिशति। अग्न्यादींश्च देवताविशेषान्। तेन प्रहरतिर्यजतिः। एवं सूक्तवाकेन प्रस्तरः प्रहर्तुं शक्यते यदि प्रहरतिर्यजति[1]रग्न्यादिदेवताकश्च। तस्मात्सूक्तवाकस्य हरतिसंयोगेऽपि देवतार्थता घटत एव। यदि, 'अग्निरिदं हविरजुषतावीवृधत

१. ब. हरतिर्यजतिः।

इत्येवमाद्येव श्रूयेत । न, आशास्तेऽयं यजमान इत्येवमादीन्यपराणि, ततोऽग्न्यादय एवेष्टा नान्तरिता इत्येव पर्यवसितं वाक्यं भवेत् । यतस्तु खल्वाशास्तेऽयं यजमान इत्येवमादीन्यपराणि श्रूयन्ते । तेनेह पर्यवसानम् । अग्न्यादयः पुरोडाशादिभिरिष्टाः । अपरं तु यजमान आशास्ते । तदनेन प्रस्तरेण प्राप्नुयादिति । ननु सत्स्वप्येतेषु देवतासंकीर्तन एव पर्यवस्येत्, पुरोडाशादिभिरिष्टा अग्न्यादयः । तत एव यजमान आयुरादीन्यप्याशासानः प्राप्नुयादिति । उच्यते । उभयथा संबन्धे सति प्रहरणे विनियोक्तव्यः । लिङ्गं च न बाधितम्, भविष्यति । वाक्यं चानुग्रहीष्यत इति ।

अथवा'ऽग्निरिदं हविरजुषते'ति प्रस्तर एव हविर्निर्दिश्यते' एवमिदमिति । संनिहितवचनमुपपन्नं भविष्यतीति ॥ १३ ॥ पूर्वपक्षनिरासः ॥

त० वा०—यत्त्विष्टदेवतासंकीर्तनेन सूक्तवाकस्य कृतार्थत्वान्न भूयो विनियोगः संभवतीति । तत्राभिधीयते—

भेदेन श्रुतिलिङ्गाभ्यां सूक्तवाकाङ्गता यदि ।
स्याद्विरोधस्ततः किं तु तुल्यार्थत्वेन नास्त्यसौ ॥

यत्त्वस्य स्वसामर्थ्येन देवताप्रकाशनसाधनत्वं, प्रस्तरप्रहरणेऽपि विनियुज्यमानस्य तन्नैवापगच्छति । तत्रापि प्रकारान्तरेणानुपयुज्यमानत्वात् इह हि यदिष्टदेवताभिधानसामर्थ्यं, तत्सूक्तवाकेनेत्यनया श्रुत्या सहाविरोधं प्रार्थयते । श्रुतिरपि च प्रस्तरप्रहरणानभिधायिनं सन्तमसति सामर्थ्ये विनियोक्तुमशक्नुवन्ती सामर्थ्यान्तरं चानुत्पादयन्ती यदयमभिधातुं समर्थः, कथं नाम तदेवाभिदधन्मदर्थं कुर्यादित्येवमपेक्षते ।

## मन्त्रस्य विनियोगप्रकारकथनम्

सर्वत्र क्रियां तत्साधनं वाऽभिदधन्मन्त्रोऽङ्गभावं गच्छति । तत्रापि प्रथमं तावदियं गतिः, यत्प्रसिद्धं शेषिणि रूपं, तन्मत्रेणाभिधातव्यमिति । यदा त्वसामर्थ्यात्तादर्थ्यं न प्रतिपद्यते, तदाऽर्थाद्विपर्ययो भवति । तदयमभिधत्ते तन्नूनमस्यां क्रियायामस्तीति । न ह्यन्यथा तस्य श्रुतमङ्गत्वमुपपद्यते । तस्मात्सूक्तवाकेनेत्यनया श्रुत्यैतत्प्रतिपाद्यते । यत्त्वमभिधत्से तदेवाभिदधानः प्रस्तरप्रहरणं साधयेति । मन्त्रोऽपि चेत्थमेव ब्रवीति । इष्टदेवताभिधानं कुर्वन्नहं यत्करोमि, तत्सर्वं करोमीति । तत्र यदीष्टा देवताः पूर्वयागसंबन्धिन्य एव केवला भवन्ति, ततो न किंचित्प्रहरणस्य कृतं स्यात् । अथ तु ता एवास्याप्यङ्गभूताः, ततस्तत्प्रकाशनद्वारेण सूक्तवाकेन प्रस्तरः प्रहृतो भवति न च तासां देवतात्वादन्येन प्रकारेणोपयोगो विज्ञायत इत्यत्रापि देवतात्वम् । अतश्च प्रस्तर-

द्रव्यस्य हविष्ट्वसंकीर्तनात्, अग्नादीनां च देवतात्वाद्यागोऽयं विज्ञायमानो 'हरणे तु जुहोति' इति प्रक्षेपाधिकत्वाद्धोम इत्यवधार्यते। तस्मादविरोधः श्रुतिलिङ्गयोः। एवं च सूत्रमिहापि स देवतार्थ एव। कुतः? ताभिरस्यापि हरतेः संयोगात्, कालार्थताऽपि च प्रसङ्गाद्भविष्यत्येव। मन्त्रपाठक्रमेण सूक्तवाकस्य ज्ञातकालत्वात्। **यद्यग्निरिदं हविरजुषतेत्येवमाद्येव श्रूयेतेति**। प्रागपि सूक्तवाकेनेति श्रुतेरस्त्येवैकदेशस्य प्रहरणं प्रति सामर्थ्यमिति दर्शयति। यद्यपि च साधारणं मन्त्रस्य सामर्थ्यं, तथापि श्रुत्यनुग्रहार्थं प्रस्तर एव 'यदनेन हविषा' इति निर्देष्टव्यः।

अथवाऽऽदित एवाऽऽरभ्येदंशब्देन प्रस्तरनिर्देशः, पुरोडाशादीनामप्रत्यक्षत्वात्। अजुषतेत्यनर्थकमिति चेत्? न। पूर्वसेवितप्रसिद्धिद्वारेण स्तुत्यर्थत्वात्। अत उपपन्नमङ्गत्वम्॥ १३॥

न्या० सु०—परार्थत्वादिति पूर्वपक्षसूत्रावयवस्य सूक्तवाकस्य देवतासङ्कीर्त्तनार्थत्वादिति भाष्येण कृतार्थत्वोक्त्यर्थतया प्रहरणं च प्रत्यशक्तेरित्यनेन चासामर्थ्योक्त्यर्थतया व्याख्यातत्वाच्छङ्काद्वयपरिहारार्थत्वेन द्रव्याख्यार्थं यदुक्तमित्यनुभासणभाष्यं देवतासङ्कीर्तनेन समाप्त्यर्थत्वान्न प्रहरणाङ्गं सूक्तवाको देवतासङ्कीर्त्तनएव च शब्दो, न प्रहरणइत्येवमुच्यते इति परिहारभाष्यं देवतावचनोऽपि सत्सूक्तवाकः प्रहरणस्यापि यागत्वेन देवतासङ्कीर्तनाकाङ्क्षत्वात्प्रहरणान्वयं विना कृतार्थत्वानुपपत्तेः प्रहरणेन न सम्बध्यते अपि तु सम्बध्यतएव देवतोक्तिशक्तोऽपि च प्रहरणेने न शक्तोऽपि तु शक्तएवत्येवं द्वेधा व्याख्यातं कृतार्थत्वं तावदनुभाषणपूर्वं परिहरति—**यत्त्विति**। भेदशब्देनान्योन्यानपेक्षत्वोक्तेर्लिङ्गावगतं देवताकीर्त्तनार्थत्वमनपेक्ष्य यदि श्रुत्या सूक्तवाकस्य प्रहरणाङ्गता, श्रुत्यवगतं च प्रहरणाङ्गत्वमनपेक्ष्य हीत्थं लिङ्गेन देवता बोध्येत ततः श्रुतिविरोधाभावाल्लिङ्गबाधापत्तेर्बाधिते च लिङ्गे सूक्तवाकस्याशक्तत्वेन श्रुत्या विनियोगायोगादुभयानुग्रहायेष्टदेवताकीर्त्तनमात्रेण कृतार्थत्वं सूक्तवाकस्याङ्गीकृत्य कालार्थः प्रहरणान्वयोऽभ्युपगम्येत। किं तु श्रुत्यनुग्रहार्थं लिङ्गेन प्रहरणाङ्गभूतदेवताकीर्त्तनद्वारा श्रुत्यवगतप्रहरणाङ्गत्वापेक्षणात्सूक्तवाकस्य च प्रहरणोक्तिसिद्धयै श्रुत्या लिङ्गावगतदेवताकीर्त्तनाङ्गत्वापेक्षणाच्छ्रुतिलिङ्गयोस्तुल्यार्थत्वेन विरोधो नास्तीति, न विरोधपरिहारायेष्टदेवतोक्तिमात्रेण कृतार्थतामङ्गीकृत्यान्यत्र विनियोगानर्हत्वात्कालार्थताऽभ्युपगन्तव्येत्यर्थः।

असामर्थ्यं परिहरति—**यत्त्वस्येति**। उभयपरिहारोपपादनार्थत्वेन प्रहरणं हीत्यादिभाष्यं व्याख्यातुमारभ्यते—**इह हीति**। देवतामभिदधत्सूक्तवाकः कथं श्रुत्यर्थं प्रहरणाभिधानं कुर्यादित्याह—**सर्वत्र चेति**। प्रहरणदेवताभिधानात्प्रहरणमभिहितं भवतीत्याशयः। शेषिभूताक्रियान्वयित्वेन प्रसिद्धस्य मन्त्रं प्रति प्रकाशनार्हतया शेषिरूपस्य मन्त्रेणाभिधेयत्वात्सूक्तवाकाभिधेयानां देवतानां प्रहरणान्वयाप्रसिद्धेर्न तदभिधानद्वारा प्रहरणाङ्गत्वं

सूक्तवाकस्य सेत्स्यतीत्याशङ्क्याह—**तत्रापीति**। यद्यपि प्रसिद्धक्रियान्वयस्य मन्त्राभिधेयत्वावगतिः प्रथमं भवति, तथापि प्रसिद्धक्रियान्वयाभिधानसामर्थ्याभावान्मन्त्रस्य प्रसिद्धक्रियान्वयपदार्थाभिधायित्वाप्रतिपत्तौ श्रुताङ्गत्वान्यथानुपपत्त्या मन्त्राभिधेयस्य क्रियान्वयकल्पनारूपो विपर्ययः पश्चाद्भवतीत्यर्थः।

सामान्यन्यायमुक्त्वा प्रकृतेरूपकद्वारा योजयति—**तस्मादिति**। सूक्तवाकप्रकाश्यानामग्न्यादीनां प्रहरणान्वयेऽपि तत्र देवतात्वानवधारणात्कथं प्रहरणस्य यागता भाष्यकृतोक्तेत्याशङ्क्याह—**नचेति**। 'एवमभिसम्बन्ध इत्याद्यग्न्यादिदेवताकश्चे'त्यन्तं भाष्यं सङ्क्षेपतो व्याचक्षाणो न च प्रहरणं यागमात्रं रूपेऽत्रतिष्ठत इति वार्तिकस्य भाष्यविरोधं परिहर्तुमाह **अतश्चेति**। पुरोडाशादेः परोक्षत्वादनेन हविषेत्यपरोक्षतया निर्देशानुपपत्तेः हविःशब्देन प्रस्तरस्य हविष्ट्वसङ्कीर्तनादित्युक्ते प्रस्तरस्य तृणत्वेनानदनीयत्वाद्धविष्ट्वायोग्यतामाशङ्क्यानदनीयत्वेऽपि कृष्णलादिवद्वचनाद्धविष्ट्वोपपत्तिसूचनार्थं द्रव्योक्तिः। मान्त्रवर्णिकद्रव्यदेवतान्वयाद्यागता भासमाना भाष्यकृतोक्ता। परमार्थतस्तु प्रक्षेपाधिक्याद्धोमत्वं वाऽवधार्यत इत्येतदेव सूत्रकृत्संमत्या द्रढयितुं हरणे तु जुहोतिर्यागसामान्यात् द्रव्याणां चार्थशेषत्वादि४–२–१०ति चतुर्थाधिकरणसूत्रैकदेशः शाखाप्रहरणार्थकर्मत्वसिद्धये होमत्वे पूर्वपक्ष्यमाणे 'सह शाखया प्रस्तरं प्रहरती'ति सहशब्दोक्तस्य प्रस्तरसहयोगस्य हेतुत्वाभिधानात्प्रस्तरप्रहरणस्य होमतोभयसिद्धाऽवसीयतइति मत्वा पठितः। तस्मादित्युपसंहारभाष्यमुपक्रमानुरोधाद्देवतार्थत्वेऽपि हरतिसंयोगो घटत एवेत्युपसंहार्ये विपरीताभिधानादयुक्तमाशङ्क्य विरोधेऽपि तावल्लैङ्गिकस्य देवतार्थत्वस्यैव बाधापत्तेस्तृतीयाश्रुतेः काललक्षणार्थत्वकल्पना न युक्ता। इह तु विरोधाभावान्न किंचिद् बाध्यमित्येवमर्थत्वसूचनार्थतामाह—**तस्मादिति**।

सूत्रं चानेन भाष्येण हरतिसंयोगेऽपि सूक्तवाको देवतार्थ एव हरतेरपि देवतासंयोगादित्येवं योजितं भवतीत्याह—**एवं चेति**। कालार्थतापि न्यायावगता न बाध्येत्याह—**कालार्थतापि चेति**। अनुयाजयागानन्तरं सूक्तवाकपाठत्सूक्तवाकेन प्रस्तरे कालः शक्यो लक्षयितुमित्याशयः। यदित्यादिभाष्यमाशास्तेऽयमित्याद्यश्रवणेऽपि श्रुत्यवगतप्रस्तरप्रहरणाङ्गत्वान्यायानुपपत्त्याऽग्न्यादीनां प्रहरणान्वयावगमादयुक्तमाशङ्क्य व्याचष्टे - **यदीति**। नन्विति भाष्येणाऽनेन हविषेत्यनेनापि प्रसिद्धहविष्कस्य पुरोडाश्यादेरेवापरोक्षत्वोपचारान्निर्देशोपपत्तेस्तद्बलेनाग्न्यादेः प्रहरणान्वयकल्पना न युक्तेत्याशङ्क्योभयविधलिङ्गसम्भवात्सन्देहे सति श्रुत्यालोचनया निर्णयो भविष्यतीति परिहारार्थमुभयथेति भाष्यं व्याचष्टे—**यद्यपि चेति**। आशास्तेऽयमित्याद्यश्रवणेऽपीदं हविरित्यपरोक्षनिर्देशाद्धविःशब्दस्य प्रस्तरविषयत्वावगतेरग्न्यादीनामन्तरितत्वोक्तिमात्रे पर्यवसानं न सम्भवतीत्यभिधानार्थमथ वेति भाष्यं व्याचष्टे—**अथ वेति**। आग्नेयपुरोडाशस्य चतुर्द्धाकरणवशाद्धविरन्तराणां च संयुवाककालभक्षार्थशेषसद्भावेऽपि सामस्त्यरूपतां शाब्दप्रत्यक्षतां प्रस्तरस्य जोष्यमाणत्वेनाजुषतेत्यतीते निर्देशानर्थक्यापत्तेः प्रस्तरनिर्देशो न युक्त इत्याशङ्कते—

अजुषतेति । स्तुत्यर्थत्वान्न भूतनिर्देशोऽनर्थक इति परिहरति—नेति । अतः प्रहरणाङ्गत्वेऽपि सूक्तवाकस्य देवतार्थत्वाविघातात्प्रहरणाङ्गतोपपन्नेति सूत्रतात्पर्यमाह—अत इति ॥ १३ ॥

भा० प्र०—पूर्वपक्षी यदि यह कहें कि प्रस्तर का प्रहरण याग नहीं है, क्योंकि, वह अग्नि में प्रक्षेप मात्र की अवगति कराता है, किन्तु देवता के उद्देश्य से प्रक्षेप की अवगति नहीं कराता है—ऐसी स्थिति में कहा जाता है—"स देवतार्थः" यह प्रस्तर प्रहरण देवता के उद्देश्य से ही किये जाने से, वह याग ही है। यदि कहा जाय कि इस स्थल में जब देवता ही श्रुत नहीं है तब किस प्रकार देवता के उद्देश्य से प्रक्षेप अर्थात् त्याग होगा ? इसके समाधान के लिए कहा गया है—"तत्संयोगात्" यहाँ देवता मान्त्रवर्णिकी है। "अग्निविदं हविरजुषत" इत्यादि मन्त्र वर्ण से ही देवता प्राप्त होने से मन्त्र सम्बन्ध लब्ध है। अतः 'सूक्तवाकेन' इस स्थल में तृतीया विभक्ति रहने से उक्त तृतीया श्रुति के द्वारा मन्त्र की प्रहरणाङ्गता सिद्ध होती है, और इस मन्त्र सम्बन्ध विशिष्ट प्रहरण याग ही होता है। इसलिए मन्त्र अग्नि आदि देवता का प्रकाशक होने से दृष्टार्थक है। इस देवता के द्वारा प्रहरण के साथ अन्वित हो सकता है।

"सः" = वह प्रस्तर प्रहार, "देवतार्थः" = देवता के उद्देश्य से विहित है, "तत्संयोगात्" = उसके साथ अर्थात् सूक्तवाक के साथ संयोग अर्थात् सम्बन्ध होने से ॥ १३ ॥

## प्रतिपत्तिरिति चेत् ॥ १४ ॥

**शा० भा०—अथ स्रुग्धारणे विनियुक्तस्य प्रस्तरस्य प्रहरणं प्रतिप्रत्तिरित्युच्यते ॥ १४ ॥**

**त० वा०—अनुभाषणम्, परिचोदना वा ॥ १४ ॥**

न्या० सु०—परार्थत्वादिति पूर्वपक्षहेतोः कृतार्थत्वोक्त्यर्थत्वे द्वयोः कृतार्थतां विनाङ्गाङ्गित्वनिरासायोगात्प्रस्तरस्यापि कृतार्थत्वोक्त्यवगतेः प्रहरणस्य प्रतिपत्तितायाः पूर्वोक्तत्वादनुभाषणसूत्रमेतदसामर्थ्योक्त्यर्थत्वे तु सूक्तवाकमात्रस्य पारार्थ्योक्तेः प्रहरणस्य प्रतिपत्तितायाः प्रागनुक्तत्वात्परिचोदनासूत्रमित्याह—अनुभाषणमिति । प्रतिपत्तित्योक्तेः सिद्धान्ताक्षेपोपयोगितामाह—कथमिति ॥ १४ ॥

भा० प्र०—प्रस्तर प्रहार को याग कहा गया है, इसमें पूर्वपक्षी का कहना है कि यह याग नहीं हो सकता है, कारण, यह प्रतिपत्ति कर्म है। प्रस्तर अर्थात् कुशमुष्टि स्रुक् के धारण में विनियुक्त होता है, क्योंकि, दर्भमुष्टि के ऊपर ही स्रुक् अर्थात् यज्ञपात्र विशेष के रखने का विधान है और अन्त में उसका अग्नि में प्रक्षेप वह प्रतिपत्ति कर्म को छोड़कर और कुछ नहीं है, कारण सभी द्रव्यादि के द्वारा प्रथम में यागाङ्ग क्रिया निर्वाहित होकर उनको लेकर जो उदीच्य कर्म किया जाता है अर्थात् अन्त समय

में जो क्रिया की जाती है—वही प्रतिपत्ति कर्म है और प्रतिपत्ति कर्म उन द्रव्यों का ही संस्कारक होकर यागीय अपूर्व का धारक होता है, उसके प्रभाव से यागीय अपूर्व स्थायी होता है, किन्तु, वह स्वतन्त्र अदृष्ट का जनक नहीं होता है, अतः, प्रस्तर प्रहार को याग मानने पर स्वतन्त्र अदृष्ट = अपूर्व की कल्पना करनी पड़ेगी, इसलिए वह याग नहीं है।

"प्रतिपत्तिः इति चेत्" = यदि कहा जाय कि यहाँ प्रस्तर का प्रहार प्रतिपत्ति कर्म है ? (आशङ्का) ॥ १४ ॥

**स्विष्टकृद्वदुभयसंस्कारः स्यात् ॥ १५ ॥**

**शा० भा०—तत्र प्रतिवचनं स्विष्टकृद्वदेतत्स्यादिति। यथेज्यार्थात्पुरोडाशाद्वचनप्रामाण्यात्स्विष्टकृदिज्यते, यागश्च[1] स भवति, प्रतिपाद्यते च पुरोडाशः, एवं प्रतिपाद्यतैव हि प्रस्तरो, यागश्च निर्वर्त्यत इति न दोषः। प्रतिपाद्यमानोऽपि हि त्यज्यते। प्रत्यक्षतः प्रतिपाद्यते। वचनादिज्यां साधयतीत्येवं गम्यते। तस्मात्सूक्तवाकः प्रहरतिमन्त्र इति ॥ १५ ॥ आशङ्कानिरासः ॥ सूक्तवाकस्याधिकरणम् ॥ ५ ॥**

त० वा०—कथमप्रधानकर्मणः सूक्तवाकोऽग्न्यादयो वाऽङ्गमित्यत उत्तरसूत्रं पठति—**स्विष्टकृद्वदुभयसंस्कारः स्यात्**। आचार्यशैल्या द्वे सूत्रे मन्यामहे। यथैव स्विष्टकृत्प्रतिपत्तिर्यागश्च यथाऽयमपि भविष्यति, तथा च तत्र मन्त्राणामङ्गत्वं तथेह। न हि प्रतिपत्तित्वेन यागत्वं विरुध्यते। द्रव्यदेवतासंबन्धेन हि यागो भवति। तस्य च स्वरूपावधारणोत्तरकालं प्रतिपत्त्यर्थकर्मत्वादिविचारे सति 'उत्पत्तौ येन संयुक्तम्' इत्यनेन लक्षणेन प्रतिपत्तित्वम्। न च तावता कश्चिद् दोषः। तेन यागप्रतिपत्त्यात्मकत्वमुभयसंस्कारशब्देनोच्यते। अथवा यथा स्विष्टकृद् द्रव्यसंस्कारार्थः, स्विष्टकृतोऽग्नेः कृतार्थत्वेन शेषत्वात्। अथ च यागत्वं न जहाति, एवमुभयोः कृतार्थयोः संस्कारः। परस्परनियमाच्चादृष्टं साधयन्यागो भविष्यति। अथवा स्विष्टकृत्यपि 'अयाग्निरग्नेः प्रिया धामानि' इत्येवमादिभिरिष्टदेवताप्रकाशनमस्तीत्युभयसंस्कारत्वेनैव दृष्टान्तः। न च प्रतिपत्तेर्मन्त्रोऽङ्गं न भवति। निष्प्रयोजनस्य त्वङ्गं नेष्यते। प्रतिपत्तिस्तु दृष्टार्थत्वेन सुतरां प्रयोजनवती। नियमादृष्टसिद्ध्यर्थं चापेक्षते वैदिकानि साधनानीत्यविरुद्धं सूक्तवाकग्रहणम् ॥ १५ ॥

( इति पञ्चमं सूक्तवाकाधिकरणम् ॥ ५ ॥ )

---

१. ब. यागश्चैव संभवति ?

न्या० सु०—सूत्रं परिहारार्थत्वेनावतारयति— अत इति। भाष्यकृतैकसूत्रतया व्याख्यातत्वात्सूत्रभेदेन व्याख्या न युक्तेत्याशङ्क्य, भाष्कृत्प्रक्रियया सूत्रद्वयमेवैतदित्याह—**आचार्येति**। यथास्विष्टकृद्यागः प्रतिपत्तिरूपः संस्कारोऽपि मन्त्रयागः प्रतिपत्तिश्चेत्युभयात्मक इत्याश्रयिष्वविशेषणभावोऽर्थः प्रतीयेते४.१.१८ति चतुर्थाधिकरणे वक्ष्यते, तथा प्रहरणमप्युभयात्मकमिति यथाभाष्यं तावत्सूत्रं व्याचष्टे—**यथैव चेति**। अयमपिहरतिरित्यर्थः। देवतानामङ्गत्वसिद्धौ यागस्य प्रतिपत्तित्वेऽप्यविरोधमुत्पत्तौ येन संयुक्तं तदर्थं तदि४.२.१९त्युक्त्यर्थता दृष्टान्तस्योक्त्या सूक्तवाकाङ्गत्वाविरोधोक्त्यर्थतामपि वक्तुम्—**यथा चेत्युक्तम्**। यागत्वाविरोधं तावदुपपादयति—**न हीति**। उत्पत्तौ येन संयुक्तं तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यादि४.२.१९ति चातुर्थसूत्रवक्ष्यमाणस्य लक्षणस्योत्पत्तौ स्रुगासादनसंयोगात्प्रस्तरस्य तादर्थ्यावगतेः प्रहरणाख्यार्थान्तरगमनाच्च प्रहरणे सद्भावेन प्रतिपत्तित्वं सम्भवतीत्युक्तम्—प्रतिपत्तेस्तर्हि दृष्टार्थत्वेन वैदिकाङ्गानपेक्षतया मन्त्रानन्वया तल्लभ्यद्रव्यदेवतानन्वययाद्यागत्वं विरुद्धयेतेत्याशङ्क्यानुष्ठेयत्वावगमोत्तरकालं भावनायाः कैमर्थ्याकाङ्क्षायां प्रति यदर्थकर्मत्वविचारात्सफलकारकवैशिष्ट्याच्च प्रागनुष्ठानानर्हत्वान्मन्त्रान्वयलभ्यद्रव्यदेवतान्वयेन हरतेर्यागत्वे सति प्रक्षेपाधिक्याद्धोमरूपतावधारणोत्तरकालामनुष्ठेयत्वावगमे सति कैमर्थ्याकाङ्क्षायां प्रतिपत्तित्वावधारणादविरोधोऽभिहितः। न च पश्चात्तनेन प्रतिपत्तित्वेन पूर्वाविगता होमरूपता बाध्यते विरोधाभावादित्याह—**न चेति**। उभयरूपश्चासौ संस्कारश्चेति कर्मधारयत्वेनोभयसंस्कारशब्दं व्याख्यातुमाह—**तेनेति**। यागमात्रेऽपि देवतान्वयोपपत्तेर्होमो यागत्वेनोक्तः। यथा स्विष्टकृद्द्रव्यसंस्कारोऽपि यागः तथा प्रहरणमप्युभयोर्द्रव्यदेवतयोः संस्कारोऽपि यागत्वं न विरुणद्धीति षष्ठीसमासत्वेन स्वयं व्याचष्टे—**अथ वेति**। यथा स्विष्टकृत् द्रव्यदेवतयोरुभयोः संस्कारः तथा प्रहरणमपीति सर्वथा साम्येनान्यथा व्याचष्टे—**अथा वा स्विष्टकृत्यपीति**। केवलप्रतिपत्तित्वाभ्युपगमेऽपि न मन्त्रस्याङ्गत्वे विरुध्यतइत्याह—**न चेति**। वैदिकयागस्य दृष्टमात्रे पर्यवसानाभावेनाऽदृष्टार्थत्वात् दृष्टार्थया प्रतिपत्त्यानाकाङ्क्षा सम्भवतीत्याशङ्क्य, प्रतिपत्तेरपि नियमादृष्टार्थत्वाददृष्टाङ्गाकाङ्क्षास्तीत्याह—**नियमेति**॥ १५॥

**इति पञ्चमं सूक्तवाकाधिकरणम्।**

भा० प्र—पूर्वपक्षी की इस आशङ्का के समाधान में कहा है कि "उभय संस्कारः स्यात्" प्रस्तर प्रहार प्रतिपत्ति कर्म होने पर याग निष्पन्न कर अदृष्ट को उत्पन्न करेगा। इसके उदाहरण में कहा है कि "स्विष्टकृद्वत्" स्विष्टकृत्होम जैसे होम सम्बन्धी आज्यादि द्रव्यों का संस्कार सम्पादन कर प्रतिपत्ति कर्म होता है वह याग भी होता है, क्योंकि उससे द्रव्य देवता सम्बन्ध रहता है, इस स्थल में भी वैसा ही होगा। प्रतिपत्ति कर्म होने पर याग नहीं हो सकता है—इस प्रकार जो कहा गया है, वह सङ्गत नहीं है,

कारण, द्रव्य देवता सम्बन्ध ही यागत्व का नियामक है। यह स्थिति जहाँ रहती है वह कर्म प्रतिपत्ति होने पर भी याग होगा और वैसी स्थिति जहाँ न रहेगी, वहाँ प्रतिपत्ति न रहने पर भी याग नहीं होगा। प्रतिपत्ति को याग मानने पर ही अदृष्ट कल्पना का प्रसङ्ग होता है—यह नहीं कहा जा सकता है, किन्तु, यह भी ठीक नहीं है, कारण, प्रतिपत्ति कर्म में नियमापूर्व स्वीकृत होने से वह भी अदृष्ट = अपूर्व का हेतु होता है। अत एव, प्रस्तर प्रहार प्रतिपत्ति कर्म होने पर भी वह याग है। सूक्तवाक उसी का अङ्गीभूत मन्त्र है।

"स्विष्टकृद्वत्" = स्विष्टकृत् होम के समान, "उभयसंस्कारः स्यात्" = प्रहरण उभय संस्कारक होगा अर्थात् प्रहरण प्रस्तर का भी संस्कार करेगा और याग होकर अदृष्ट को भी उत्पन्न करायेगा ॥ पञ्चम सूक्ताधिकरण।

(आचार्यों ने आशङ्का और उसके निराश को एक ही सूत्र में भी कहा है। आचार्य युधिष्ठिर मीमांसक ने एक ही सूत्र मानकर व्याख्या भी की है ॥ १५ ॥)

## [६] कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ १६ ॥ पू०

**शा० भा०—दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरति' इति श्रूयते। तत्र संदेहः—किं पौर्णमास्यां कृत्स्नः सूक्तवाकः प्रयोक्तव्यः, कृत्स्नोऽमावास्यायाम्, उत यथासामर्थ्यं निष्कृष्य यथायथं प्रयोग इति। तदुच्यते। उभयत्र सर्ववचनमिति। कुतः? कृत्स्नो हि मन्त्रः सूक्तवाक इत्युच्यते। स पदेनापि विना सूक्तवाको न स्यात्। तत्र सूक्तवाकेन न प्रहृतं भवेत्। तस्मादुभयत्र कृत्स्नः सूक्तवाको वदितव्यः ॥ १६ ॥ पूर्वपक्षः ॥**

त० वा०—अधिकारमुपजीवयन्विचारयति[1]। किमुभयोर्दर्शपूर्णमासयोः सकलः सूक्तवाकः प्रयोक्तव्यः, उतेष्टदेवतानुरोधेन निष्कर्ष इति। किं प्राप्तम्? एकैकत्र सकल इति। कुतः?

मन्त्रो यथा समाम्नातः सूक्तवाकोऽभिधीयते।
तस्य निष्कृष्यमाणस्य नैव स्यात्सूक्तवाकता ॥

ततश्चासूक्तवाकेनैव प्रहृतः स्यात् ॥ १६ ॥

**अथ षष्ठं सूक्तवाकाधिकरणम् ॥ ६ ॥**

न्या० सु०—प्रहरणाङ्गत्वेऽपि सूक्तवाकस्येष्टदेवताभिधानार्थत्वाविघाताच्छ्रुतिविनियोज्यस्यापि मुख्यएवार्थविनियोगात् वचनात्त्वयथार्थमित्यस्यापवादे पूर्वाधिकरणेन कृते, पौर्णमास्यमावास्यादेवतावाचिनामिन्द्रादिपदानाममावास्यायां च, पौणमासीदेवतावाचिनां

१. क० जीवन्विचारयति।

प्राजापत्यादिपदानामसम्भवेनायथार्थत्वान्मुख्येऽर्थे विनियोगो न सम्भवतीत्याक्षिप्य, असमवेतार्थानामप्रयोगादपवादसमर्थनायेदमधिकरणमित्यनन्तरसङ्गतिं च सूचयितुमाह—अधिकारमुपजीवयन्निति। तत्रेति सन्देहभाष्यं व्याचष्टे—किमिति। पूर्वपक्षसूत्रव्याख्यार्थं 'तदुच्यतइत्यादिभाष्यं व्याचष्टे—किमिति। इदं द्यावापृथिवीभद्रमभूदित्यादौ नमो देवेभ्य' इत्यन्ते पदसमूहे सूक्तवाकशब्दस्याध्येतृप्रसिद्धे निष्कर्षे सूक्तवाकश्रुतिर्बाध्येतेत्याशयः ॥ १६ ॥

भा० प्र०—श्रुतियों में दर्शपूर्णमास प्रकरण में इस प्रकार कहा गया है कि "सूक्त-वाकेन प्रस्तरं प्रहरति" इसमें संशय होता है कि पौर्णमासी याग में भी समग्र सूक्तवाक्य पढ़ना चाहिए एवं अमावस्या याग में भी समग्र सूक्तवाक पढ़ना चाहिए—क्या यही विधि का अर्थ है अथवा सूक्तवाक मन्त्र के सामर्थ्य के अनुसार अर्थात् अर्थ प्रकाशकता के अनुसार कुछ अंश पौर्णमास में पाठ्य हैं एवं कुछ अंश दर्श में पाठ्य हैं—यही इसका अर्थ है ?

इस प्रसङ्ग में पूर्वपक्षी का कहना है कि "उभयत्र सर्ववचनम्" दर्श एवं पूर्णमास इन दोनों स्थलों में समग्र सूक्तवाक पठनीय है, कारण, "कृत्स्नोपदेशात्" समग्र मन्त्र ही जब सूक्तवाक नाम से कहा जाता है और श्रुति भी जब "सूक्तवाकेन" इस प्रकार अविभक्त सूक्तवाक का ही उल्लेख करती है, तब दर्श में कुछ अंश एवं पूर्णमास में कुछ अंश के पाठ करने के पक्ष में कोई भी उक्ति नहीं हो सकती है, क्योंकि, समष्टि ही जब सूक्तवाक पद से वाच्य है, तब एक के कम होने पर जैसे बीस नहीं रहता है उसी प्रकार एक पद के भी कम होने पर वह सूक्तवाक नहीं रहेगा। अतएव दोनों स्थलों का समग्र सूक्तवाक ही पठनीय है।

"कृत्स्नोपदेशात्" = कृत्स्न अर्थात् समग्र सूक्तवाक का उपदेश अर्थात् पाठविहित होने से "उभयत्र" = दर्श और पूर्णमास इन दोनों स्थलों में ही "सर्ववचनम्" = समग्र सूक्तवाक पाठ्य है। दर्श एवं पूर्णमास दोनों स्थलों में ही समग्र सूक्तवाक पाठ्य है, क्योंकि, कृत्स्न सूक्तवाक ही पठितव्य होने का उपदेश = विधि है। पूर्वपक्ष ॥ १६ ॥

## यथार्थं वा शेषभूतसंस्कारात् ॥ १७ ॥ सि०

**शा० भा०—ये पौर्णमासीदेवतावाचिनः शब्दाः ते पौर्णमास्यां प्रयोक्तव्याः, नामावास्यायाम्। येऽमावास्यादेवतावाचिनः, तेऽमावास्यायाम्, न पौर्णमास्याम्। शेषभूतमर्थं संस्कुर्वन्तो मन्त्रा उपकुर्वन्ति, नान्यथेत्युक्तम्। तस्माद्ये यत्रोप-कुर्वन्ति, ते तत्र प्रयोक्तव्या इति, न कृत्स्नः पौर्णमास्यां, न कृत्स्नश्चामावा-स्यायामिति ॥ १७ ॥ सि० ॥**

त० वा०—एवमादीनामपकर्ष इत्युक्तं स्तुतशस्त्राधिकरणे पूषाद्यनुमन्त्रणेषु चोक्तम्। यद्येतानि केवलप्रहरणाङ्गभूतानि देवतान्तराणि भवेयुः, तत उभयत्र सकलः प्रयुज्येत। त एव त्विहाप्यग्न्यादयः प्रत्यभिज्ञायन्त इति न भेदहेतुरस्ति।

अतश्चेष्टदेवताप्रकाशनोपजीवित्वादप्रयोजकं प्रहरणं सूक्तवाकस्य प्रधानप्रयुक्तदेवताश्रयत्वात्तु तदधीनं विज्ञायते। तानि च प्रधानानि यथादेवतं प्रयुञ्जते, नाविशेषेण। तस्मादपकर्ष इति ॥ १७ ॥

न्या० सु०—यथार्थं वचनमिति पूर्वसूत्रस्थस्य वचनशब्दस्य प्रयोक्तव्यशब्देन समासान्निष्कृष्य, अनुषङ्गोक्त्या सिद्धान्तप्रतिज्ञार्थसूत्रावयवव्याख्यार्थं य इति भाष्यं स्पष्टत्वादव्याख्याय, हेत्वर्थं सूत्रावयवव्याख्यार्थशेषभूतमिति मन्त्राधिकरणभाष्योक्तकर्मसमवेतार्थप्रकाशकत्वाशयतया भासमानं कृत्स्नप्रयोगेऽपि गौण्यावृत्त्या समवेतार्थप्रकाशकत्वोपपत्तेरयुक्तमाशङ्क्य, यत्रेति चार्थवत्त्वात्स्यादिति स्तुतशस्त्राधिकरणसूत्रं संस्कारत्वादचोदिते न स्यादिति लिङ्गाधिकरणसूत्रे च मुख्यार्थविनियोगसम्भवे गौणेऽर्थे मन्त्रविनियोगस्यान्याय्यत्वादपकर्षोक्तिमभिप्रेत्य कर्मशेषभूतार्थसंस्कारकत्वसम्भवे कर्मोपकारित्वान्मन्त्राः प्रयोक्तव्या नान्यथेत्येवं व्याख्यातुमाह—**एवमादीनामिति**। प्रकारवाचिनादिशब्देन स्मृतिहेतुसंस्कारोद् बोधकत्वाख्या संस्कारकतोक्ता। लिङ्गादिविनियोज्यानामसमवेतार्थत्वादपकर्षेऽपि सूक्तवाकस्य श्रुतिनियोज्यत्वेन स्वार्थकर्मान्वयकल्पत्वात्सर्वासां देवतानामुभयत्र प्रहरणान्वयो भविष्यतीत्याशङ्क्याह—**यदीति**। आज्यभागादावविहितानामेव देवतानां प्रहरणाङ्गत्वे सर्वासामन्वयः कल्पेत आज्यभागादिदेवताप्रत्यभिज्ञानान्नापूर्वदेवताकल्पना युक्तेत्यर्थः प्रहरणस्यापूर्वदेवतानन्वयेऽपि प्रहरणेन कृत्स्नस्य सूक्तवाकस्याङ्गतया गृहीतत्वाच्च पदमात्रस्यापि त्यागो न युक्त इत्याशङ्क्याह—**अतश्चेति**। अतःपूर्वयागाङ्गदेवताप्रत्यभिज्ञानादेमकस्य सूक्तवाकशब्दस्य सुभाषितवचननिमित्तत्वात्प्रहरणस्यार्थाभिधानकर्मत्वेन सूक्तवाककृतपूर्वयागाङ्गभूतदेवताप्रकाशनोपजीवितया सूक्तवाकं प्रत्यप्रयोजकत्वावगतेः प्रधानप्रयुक्तदेवतापेक्षत्वेन प्रधानाधीनत्वात्प्रधानानां यथादेवतमेव सूक्तवाकप्रयोजकत्वान्न कृत्स्नसूक्तवाकग्रहणमित्याज्यभागादयोऽनूयाजान्ता यागाः सूक्तवाकप्रयोज्यत्वाद्यागाङ्गभूतप्रस्तरप्रतिपत्त्यर्थप्रहरणं प्रति प्राधान्ये सति प्रधानत्वेनोक्ताः। तस्मादिति सूत्रार्थोपसंहारभाष्यं सङ्क्षिप्य व्याचष्टे—**तस्मादिति** ॥ १७ ॥

भा० प्र०—पूर्वपक्षी का यह कथन कि समग्र सूक्तवाक पाठ्य है—यह ठीक नहीं है, किन्तु, "यथार्थं वा" = जो जो अंश कर्माङ्ग द्रव्य या देवता का प्रकाशक हैं वे ही अंश पठनीय हैं। कारण, "शेषभूतसंस्कारात्" = सभी मन्त्र अनुष्ठेय पदार्थ के दृष्ट उपकार का साधन हैं—यह पूर्व में कहा गया है। जिस अंश के द्वारा अनुष्ठेय पदार्थ या उसके अङ्गभूत द्रव्य और देवता आदि का संस्कार साधित नहीं होता है—वह यदि पढ़ा जाता है तो मन्त्र निरर्थ या अदृष्टार्थक होगा। किन्तु दृष्टफल सम्भव होने पर मन्त्र की अदृष्टार्थकता नहीं मानी जाती है।

"यथार्थं" = अर्थ के अनुसार या मन्त्र के सामर्थ्य के अनुसार आंशिक रूप से ही प्रयोग होगा, "वा" = पूर्वपक्ष के निरास के लिए है, "शेषभूत संस्कारात्" = क्योंकि मन्त्र के द्वारा शेषभूत संस्कार अर्थात् कर्म के अङ्ग का संस्कार होता है। सिद्धान्त ॥१७॥

**वचनादिति चेत् ॥ १८ ॥**

शा० भा०—अथ यदुक्तं वचनमिदं भविष्यति 'सूक्तवाकेन प्रहरति' इति। तत्र पदेनाप्यूनेन न सूक्तवाकेन प्रहृतं भवेत्। कृत्स्नस्य हि सूक्तवाकस्योपदेश इति ॥ १८ ॥ आशङ्का ॥

त० वा०—सूक्तवाकशब्दः कथमिति चेदत आह ॥ १८ ॥

न्या० सु०—कृत्स्नोपदेशादिति पूर्वपक्षे हेत्वनुभाषणार्थत्वेन सूत्रव्याख्यार्थमथेति भाष्यं सूक्तवाकशब्दावयवव्युत्पत्त्या सुभाषितवाचिपदसमूहमात्रवाचित्वादिष्टत्वादिष्टदेवताप्रकाशनार्थपदसमूहमात्रे सूक्तवाकस्य कृत्स्नत्वोपपत्तेरयुक्तमाशङ्क्येदं द्यावापृथिवी इत्यादौ-'देवेभ्य' इत्यन्ते पौर्णमास्या देवताप्रकाशनार्थे पदसमूहसूक्तवाकशब्दप्रसिद्धेः। पौर्णमास्यां चामावास्यादेवतानाम्, अमावास्यायां च पौर्णमासीदेवतानामाभाषितत्वेनावयवार्थाभावाद्रूढिताशयत्वेन व्याचष्टे—सूक्तेति ॥ १८ ॥

भा० प्र०—प्रदर्शित सिद्धान्त के ऊपर यह आशङ्का है कि "वचनादिति चेत्"। पूर्वपक्षी कह सकते हैं कि वाचनिक अर्थ में युक्ति का आश्रयण नहीं हो सकता है—यह सर्वसम्मत है। इस स्थल में समग्र सूक्तवाक ही पाठ्य हैं—इस विषय में "सूक्तवाकेन" इत्यादि श्रुतिवचन ही है। अतः मन्त्र की अदृष्टार्थकता के प्रसङ्ग का अपादान कर सिद्धान्ती ने जो कहा है, वह प्रकृत स्थल में प्रयोज्य नहीं है। अतएव उभयत्र समग्र सूक्तवाक ही पाठ्य हैं। "वचनात्" = वचन होने से, "इति चेत्" = यह यदि कहा जाय ॥ पूर्वपक्ष की आशङ्का ॥ १८ ॥

**तदुच्यते—**

**प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ॥ १९ ॥**

**शा० भा०—उभे पौर्णमास्यमावास्ये प्रति एष कृत्स्नशब्दः। उभयोः प्रकरणात्। उभयोरसौ कृत्स्न उच्यते, अवयवेऽवयव इति। नैतदेवम्। न हि सापेक्षाणामितिकर्तव्यतया सम्बन्धः। न हीतिकर्तव्यतैतद्विशिष्टा श्रूयते। इति कर्तव्यताविशिष्टास्त्वेते गम्यन्ते। कुतः? न हीतिकर्तव्यतां प्रति कर्माणि विधीयन्ते। फलं प्रति तेषां विधिः। इति कर्तव्यता तु कर्मणां विधीयते।**

**तत्र संनिधानाविशेषात्कस्य किं विधीयते कस्य नेति न गम्यते विशेषः। साधनत्वेन च सर्वेषां निर्देशादितिकर्तव्यतायाः संनिधाना[1]दवचनाच्च, अस्य प्रकरणलिङ्गस्याविशेषादेकैकस्य कृत्स्नं प्रकरणं निराकाङ्क्षस्य न सहायमपेक्षमाणस्य। तस्मादेकैकं प्रति कृत्स्नः सूक्तवाक उपदिश्यते। संविभागेऽपि प्रधानानां कृत्स्न एव प्रयोक्तव्य इति यानि यत्रानर्थकानि पदानि, तान्यपि**

१. ब. संविधानाच्च वचनाच्च।

तत्र प्रयोक्तव्यानि। अदृष्टाय भविष्यन्ति, 'सूक्तवाकेन प्रहरति' इति वचनात्। नास्ति वचनस्यातिभारः। गुणेन वा केनचिदभिधानं तासां देवतानां निर्वर्तयिष्यन्तीति। अत्रोच्यते। नैतदेवम्। उक्तं मुख्यमेव कार्यं मन्त्राणाम्, न गौणमिति। संस्कारार्थत्वादेवोत्कर्षो न्याय्यः। न गौणमभिधानमिति। कस्तर्हि कृत्स्नसंयोगस्य समाधिरुच्यत इति। एष समाधिः। न ह्येतदेकं वाक्यम्, यः कृत्स्नः सूक्तवाकः। बहून्येतानि वाक्यानि। येषां प्रधानदेवताभिधायीनि पदानि मध्ये, साधारणानि तन्त्रपदानि पुरस्तादुच्चार्यन्ते तथा परस्तात्। यथा, अग्निरिदं हविरजुषतावीवृधत महोज्यायोऽकृताग्नीषोमाविदं हविरजुषेतामवीवृधेतामित्येवमादीनि। तेषां पुरस्तात्तन्त्रम्। यथा, इदं द्यावापृथिवी इति। परस्तादपि, यथा अस्यामृधदिति। तान्येतानि सर्वाणि सूक्तवचनेन सूक्तवाकशब्दं लभन्ते। न च तेषां समुदायः कंचिदर्थं वदति। तस्मान्न समुदायः सूक्तवाकः न च साक्षात्साधनम्, सूक्तवाकसामान्यस्यैकत्वात्। सूक्तवाको वर्तत इत्येकवचनं भवति। 'सूक्तवाकेन प्रस्तरं प्रहरति' इति तु येन केनचित्सूक्तवाकेन प्रह्रियमाणे यथाश्रुतं कृतं भवति। तस्मान्न समुदायः सूक्तवाकः।

यस्त्वमावास्यादेवतावाचीनि पदानि न पौर्णमास्यां प्रयुज्यन्ते, न तत्र सूक्तवाकशब्दो बाध्यते। प्रकरणं तत्र लिङ्गेन बाधितम्[1]। तच्च न्याय्यमेव। तस्मात्पौर्णमास्याम्, अमावास्यायां च विभज्यसूक्तवाकः प्रयोक्तव्य इति ॥१९॥ आ० नि० ॥ सूक्तवाकानामर्थानुसारेण विनियोगाधिकरणम् ॥ ६ ॥

त० वा०—द्वौ हि प्रस्तरप्रहरणप्रयोगौ, भिन्नकालपौर्णमावस्यमावस्याधीनत्वात्। अतश्चोभे प्रति कृत्स्नः सूक्तवाकशब्दः—तयोरुभयोरपि सकलसूक्तवाकः साधनम्। प्रकरणस्याविभक्तत्वाद्विज्ञायते। यदा तु भेदेन प्रहरणमात्रमालोच्यते, प्रायणीयोदयनीयैकादशिनोवच्चातुर्विद्यधनवच्चावयवशः[2] संबन्धो भवति। तस्माच्छ्रुतिलिङ्गप्रकरणानामविरोध इति सूत्रम्। तदिदानीं भाष्यकारो दूषयति—**नैतदेवम्। न हि सापेक्षाणामितिकर्तव्यतया संबन्ध इति।** कुतः ?

विधिर्यदि प्रधानानामितिकर्तव्यतां प्रति।
उभे प्रति ततः कृत्स्नः सूक्तवाको भवेदयम् ॥

प्रधानानि हि फलं प्रति विधीयन्ते, नेतिकर्तव्यतायाम्। अतस्तेषां फले विवक्षितं साहित्यं, नेतिकर्तव्यतायाम्। इतिकर्तव्यतां हि प्रति ता उद्दिश्यमानानि भवन्ति। अविधीयमानायास्तस्या गुणत्वाभावप्रसङ्गात्। सा चेद्विधीयते द्वयोरन्योन्यं प्रति विधानासंभवादसंबन्धादवश्यं प्रधानोद्देशेन भवितव्यम्। ततश्चोद्दिश्यमानानां द्वन्द्वावगमितमितरेतरसाहित्यं न विवक्ष्यते। तेन प्रत्येकमिति-

१. ब. बाधितं भवति। २. क० चातुर्विद्यधनवच्च।

कर्तव्यतावाक्यसमाप्तेरेकैकं प्रधानं समस्तेतिकर्तव्यतायुक्तमवगतम्। तथैवानुष्ठानेऽपि प्राप्ते सकृत्कृतानामेवैककालवर्तिनां प्रत्येकं कार्त्स्न्यमस्तीति तन्त्रेणानुष्ठानं भविष्यति। तदिहापि प्रत्याग्नेयादि प्रधानम्, मा नाम सूक्तवाक आवर्तिष्ट। प्रयाजादिवत्तु पौर्णमास्याम्, अमावास्यायां[1] च सकलेन भवितव्यम्। इतरथा वा प्रयाजादयोऽपि विभज्यैव प्रयुज्येरन्। न चेदं प्रमाणवत्। अतः श्रुतिबलीयस्त्वालिङ्गं बाधित्वा गौणत्वमदृष्टार्थत्वं तद्विषयं वा प्रहरणस्य देवतान्तरमध्यवस्यामः।

कथं पुनः समुदाये फलसाधनत्वेन चोद्यमाने साधनत्वरहितानामवयवानामितिकर्तव्यतासंबन्ध इति। उच्यते।

याग‌स्य फलसंबन्धात्प्रत्येकसमवायिनः।
समुदायः फलार्थः स्यादिति केनावगम्यते।

यागत्वं हि प्रत्येकं समवेतम्। तद्वाचिना च धातुनैकैकस्येतरानपेक्षस्य साधनशक्तिरवधार्यते। ननु समुदायवाचिनामविशेषितत्वाद्धातुरपि समुदायलक्षणार्थ एव भवेत्। न। नाम्न एव च धात्वधीनत्वेन प्रत्येकवृत्तित्वात्। तदुक्तं पौर्णमास्यधिकरणे। तेन सहापि नाम्नेतरेतरयुक्तत्वमात्रमेव धर्मोऽभ्यधिकः न समुदायः फलवान्।

नन्वेवमपि यथैव साधनत्वमितरेतरयुक्तानाम्, एवं तदनुग्रहार्थत्वादितिकर्तव्यताऽपि तथैव स्यात्। न। तस्यैव साहित्यस्योद्दिश्यमानत्वेनेतिकर्तव्यतां प्रत्यविवक्षितत्वात्। एकमपि हि वस्तु लक्षणतः क्वचिदेव विवक्ष्यते, न सर्वत्र। कथमेकस्य युगपदुद्दिश्यमानोपादीयमानत्वमिति चेत्? अपेक्षाहेतुभेदादीदृशान्यपि भवन्तीत्युक्तम्।

ननु वैरूप्याद्वाक्यभेदः स्यात्। को वा प्रधानोद्देशेनेतिकर्तव्यतां विदधतः प्रकरणाम्नानानुमितस्य श्रुताद्वाक्यान्तरत्वं नेच्छति। ननु चायमितरेतरयोगः फलार्थमपि विवक्ष्यमाण इतिकर्तव्यतासंबन्धवेलायामपि[2] बलात्प्रसज्यमानो न शक्यते वारयितुम्। सत्यं प्रतीतितो न शक्यते। विधितस्तु शक्यते। कथम्? इह हि विशिष्टभावनाविध्युत्तरकालमवान्तरविधिषु कल्प्यमानेषु कर्मणः फलसाधनांशे पुरुषः प्रवर्त्यमानः कर्मसाहित्येऽपि पश्वेकत्ववत्प्रवर्तितः प्रधानेतिकर्तव्यतासंबन्धांशे प्रधानानि प्रत्यप्रवर्त्यमानत्वात्तदीयसाहित्येऽपि प्रवर्तितोऽङ्गानि तु सहितानि प्रति नियुक्तः। तस्यादितिकर्तव्यतां प्रति ग्रहैकत्ववत्प्रधानसाहित्यमविवक्षितम्। न ह्येकेनैव प्रधानशब्देन प्रधानान्यङ्गार्थमुद्दिशता तत्साहित्यमुपादातुं शक्यम्, वचनव्यक्तिभेदात्। तस्मात्प्रत्येकमितिकर्तव्यता।

---

१. ब. पौर्णमास्यमावास्ययोः। २. ब. अपि पदं नास्ति।

तद्दर्शयति—**संनिधानाविशेषात्। साधनत्वेन च सर्वेषां निर्देशादेकस्यापि** चेतिकर्तव्यतान्तरानुपदेशात्। अस्य च कथंभावरूपस्य प्रकरणसामर्थ्यस्याविशेषादेकैकस्य कृत्स्नमन्योन्यनिरपेक्षस्य प्रकरणमिति। ततश्च 'वचनादिति चेत्' इत्ययमेव पक्षोऽत्रशिष्यते। एवं च भङ्क्त्वा सूत्रमत्रोच्यते।

**नैतदेवमिति**—स्वयमुत्तरपक्षमभिधत्ते। न तावद्गौणत्वमदृष्टार्थत्वं देवतान्तरं वा युक्तम्। पुरस्तान्निराकरणात्। अतो यथार्थनिष्कर्षे सति सूक्तवाकशब्द उपपद्यते। सूक्तवाकबहुत्वात् न हि भिन्नकर्मगतभिन्नदेवताप्रकाशनसमर्थानामन्योन्यनिरपेक्षनानाप्रयोजनयुक्तनाम् 'अग्निरिदं हविरजुषत' इत्येवमादीनामेकवाक्यतालक्षणमस्ति। तस्मात्पुरस्तात्परस्ताच्चानुषङ्गयुक्ता बहवे एते सूक्तवाका ईदृशा द्रष्टव्याः। 'इदं द्यावापृथिवी' इत्त्यारभ्य 'अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽक्रत—अस्यामृधेद्धोत्रायां देवंगमायाम्' इति यावत्समाप्तिः। ततः पुनः 'इदं द्यावापृथिवी' इत्यारभ्य 'सोम इदम्' इत्युक्त्वा 'अस्यामृधेद्धोत्रायाम्' इति समाप्यते। तेन प्रतिदेवतं भिन्नानां सूक्तवाकानां समानप्रयोगभाजामाम्नानवत्तन्त्रेण कतिपयानां पाठः। येन केनचित्तु प्रहृते सूक्तवाकेन प्रहृतं भवति। जातिवत्प्रत्येकं सूक्तवाकत्वस्य सुभाषितयोगात्मकस्य समाप्तत्वात्। तत्रोपपन्ने। सूक्तवाकशब्दे यदन्य देवतावाचीन्यन्यत्र न प्रयुज्यन्ते, न तत्र श्रुतिः पीड्यते। किं तर्हि ? लिङ्गवाक्याभ्यां प्रकरणम्। तच्च न्याय्यमेवेति निष्कृष्य प्रयोगः।

इदमपि तु न युक्तमभिहितम्। तन्त्रपदैर्वैश्वानरवाक्यवदेकवाक्यतायाः प्रत्यक्षत्वात्। न हि प्रतिपदं परस्पराकाङ्क्षा, संबन्धो वा भवति। किं तर्हि ? केनचिदेकेन संबध्यमानानि सर्वाण्येकवाक्यतां गच्छन्ति। तद्यथा 'अरुणया पिङ्गाक्ष्यैकहायन्या' इति परस्परेणासंबद्धानामपि क्रीणातिनाऽभिसंबन्धादेकवाक्यत्वम्। एवमिहापि 'यदनेन हविषाऽऽशास्ते' इत्यादिभिः संबन्धादेकवाक्यत्वं[1] भविष्यति। अस्ति चेष्टदेवताप्रकाशनं नामैकं प्रयोजनम्। तन्त्रपदवशेन साकाङ्क्षावयवत्वम्। तस्माद्यद्यपि तावदर्थतः प्रत्येकं वाक्यपरिसमाप्तिः तथाऽपि शब्दतः सिद्धमेवैकवाक्यत्वम्। किमुत हर्ति प्रत्युपादीयमानत्वेन समुदाये वाक्यपरिसमाप्त्यङ्गीकरणात्। यदि च भिन्नानि वाक्यानि भवेयुः, तत उपसद्दक्षिणादिमन्त्रवत्प्रयोगकाले देवतापदप्राधान्याद्भेदेनैव प्रयोगः प्राप्नोति। प्रस्तरप्रहरणे च विवक्षितैकसंख्यत्वात्तावता कृतार्थत्वादेकदेवत्यस्यायं कस्यचित्प्रयोगः प्राप्नोति। तस्मात्समस्तमेकं वाक्यम्। अतश्च वक्तव्यः कृत्स्नवचनस्य परिहारः ?

स उच्यते— बिन्दौ च समुदाये च तोयशब्दो यथेष्यते।
संसर्गिद्रव्यरूपत्वात्सूक्तवाकपदं तथा ॥

---

१. क. सर्वेषामित्यधिकम्।

सूक्तवाको हि सामर्थ्यतः, प्रयोजनतश्चेदृगवधार्यते—प्रयोगमध्यवर्तिदेवतापदसहितमभितः श्रूयमाणतन्त्रपदोपेतमिष्टदेवताप्रकाशनं कुर्वद्वाक्यं सूक्तवाकः। ततश्चैकस्मिन्देवतापदे सति अनेकस्मिंश्च प्राकृते वैकृते च तन्त्रपदमध्यस्थे सकलः सूक्तवाकः। प्रयोगसंबद्धदेवतापदसाहित्ये तु दुरुक्तवाको भवति। तेन पौर्णमास्यमावास्ययोः स्वदेवतापदोपेतः सूक्तवाको युक्तिसहितेन पाठेनानुषङ्गादिपूरितमन्त्रवदवधारित इत्यसमवेतार्थपदप्रयोगेऽसत्यसूक्तवाकत्वात्सुतरां श्रुतिपीडा स्यात्। अतश्च हरतिरपि यथा विद्यमानसूक्तवाकसाध्यत्वात्कृत्स्नेनैव साधितो भवतीत्यदोषः।

तेन त्रिधैव मन्तव्यः सूक्तवाकः प्रतिष्ठितः।
स्वाध्याये कर्मकाले च प्रकृतौ विकृतावपि॥
सर्वप्राकृतदेवत्यः स्वाध्याये तावदिश्यते।
पठन्नन्यादृशं तत्र तं विनाशयति ध्रुवम्॥
निष्कृष्टदेवतामध्यः[1] प्रकृतौ समुदाययोः।
सूर्यादिपदमध्यश्च[2] विकृतावधार्यते॥
सूक्तवाकः स सत्रैव[3] यत्र यादृङ् निरूपितः।
जहाति सूक्तवाकत्वमसंगतनिरूपणात्[4]॥

भाष्येऽपि च यावद्दैवतं सूक्तवाकसंभवादेकस्यापि[5] बहुत्वमभिहितमिति द्रष्टव्यम्। तथा सूत्रमप्युभे प्रति स्वदेवतापदसाहित्यमात्रेण कृत्स्नसूक्तवाकशब्दः प्रकरणाविभागात्कल्पित इत्येवमेव गमयितव्यमिति सर्वेषामविरोधः॥ १९॥

( इति षष्ठं सूक्तवाकस्य विभज्य विनियोगाधिकरणम्॥ ६॥ )

न्या० सु०—रूढित्वानभ्युपगमेन कृत्स्नवचनपरिहारार्थतया सूत्रव्याख्यार्थमुभे इति भाष्यं व्याख्यातुमाह—द्वौ हीति। 'यथैकादशिनीन् प्रायणीयोदनीययोरालभेरन्नि'ति द्वादशाहे प्रायणीयोदयनीयाख्याद्योत्तमाहकालत्वेन श्रुतानामेकादशिनीनां पशूनां द्वंद्वश्रुत्यैतरेतरेतरयुक्तयोः प्रायणीयोदयनीययोः काललक्षकत्वात्रगमेनैकैकत्र समस्तालम्भायोगात्पञ्च प्रायणीये, पञ्चोदयनीये, अन्त्योऽभ्यासन्नत्वादुदयनीय एवेत्यवयवशः प्रायणीयोदयनीयान्वयो दशमे वक्ष्यते यथा च लोके चातुर्विद्येभ्यो धनं देयमिति चतुर्वेदविद्देयत्वेनोक्तस्य धनस्यैकवेदविदे चतुर्थश्चतुर्थो भाग इति अवयवशोऽन्वयः प्रसिद्धः तथा सूक्तवाकस्याप्यवयवशः पौर्णमास्यमावास्याकालेन प्रहरणप्रयोगान्वयो भविष्यतीत्यर्थः। भाष्यकृत्पक्षे प्रकरणाद्यथादेवतं चावयवशः प्रयोगात्सूक्तवाकश्रुतिदेवतालिंगदर्शनपूर्णमासप्रकरणानामविरोध इत्यर्थः। सूत्रदूषणार्थं नैतदिति भाष्यमवतारयति—तदिति। विशेष्य-

१. क. निष्कृष्टदेवतोमध्ये। २. क. मध्यस्थ। ३. क. तेनैव।
४. क. निरूपणे। ५. क. सूक्तवाकत्व।

स्यानेकाविशेषणवशीकारसामर्थ्यात्साधनानां विशेषणत्वे सति सापेक्षाणामितिकर्त्तव्यतान्वयः स्यान्न तु तेषामितिकर्त्तव्यतान्वये विशेषणताऽस्तीत्याशयः। प्रश्नपूर्वमतेदुपपादयितुं कुत इत्यादिभाष्यं तात्पर्यतो व्याचष्टे—**कुत इति**। साधनानां फलान्वयसिद्धयर्थत्वादितिकर्त्तव्यतान्वयस्य फलान्वये सापेक्षत्वादिति कर्त्तव्यतान्वये सापेक्षतैव युक्तेत्याशङ्क्य वैषम्योक्त्यर्थं फलं प्रतीति भाष्यावयवं व्याचष्टे—**प्रधानानि हीति**। नेतिकर्त्तव्यतां प्रतीत्यनुषङ्गः। इतिकर्त्तव्यताविधेयत्वोक्तेः साधनानामुद्देश्यत्वोक्तिप्रयोजनतामाह—**इतिकर्त्तव्यतां प्रतीति**। साधनेतिकर्त्तव्यतयोर्द्वयोरपि प्रात्यात्मिकोत्पत्तिविधितः स्वरूपेण प्राप्तत्वादेकान्वयित्वेनेतरस्मिन्विधेये साधनान्वयित्वेनेतिकर्त्तव्यतैव विधेया नेतिकर्त्तव्यतान्वयित्वेन न साधनमिति कथं निर्धारणेत्याशङ्क्याह—**अविधीयमानाया इति**। इतिकर्त्तव्यताविधानेऽपि कथं साधनानामुद्देश्यतेत्याशङ्क्याह—**सा चेदिति**। वाक्यभेदापत्तेर्द्वयोर्विधानायोगाद् द्वयोश्च विधेयत्वेसमत्वादन्योऽन्यासम्बन्धापत्तेः साधनामुद्देश्यतावसीयइत्यर्थः। अतो दर्शपूर्णमासाभ्यामिति द्वन्द्वात्रगतस्य साहित्यस्याविवक्षिततत्वाद्विद्युदादिब्राह्मणतर्पणान्तयेतिकर्त्तव्यतयाऽऽग्नेयमुपकुर्यादुपांशुयाजमुपकुर्यादित्येवमादिप्रत्येकमितिकर्त्तव्यतावाक्यसमाप्तेः प्रत्येकं समस्तेतिकर्त्तव्यतान्वयावगमान्नवयवशोऽन्वयो युक्त इत्याह—**ततश्चेति**। प्रत्येकमेव तर्ह्यनुष्ठानापत्तेः पौर्णमास्याममावास्यायां चैकादशे वक्ष्यमाणाङ्गानुष्ठानं विरुध्येतेत्याशङ्क्याह—**तथैव चेति**। सामान्यन्यायमुक्त्वा प्रकृते योजयति—**तदिति**। पञ्चम्यर्थे तदित्यव्ययम्। सौत्रपक्षेऽनिष्टापत्तिमाह—**इतरथा चेति**। प्रयाजादीनामपि विभागमङ्गीकुर्वाणमपर्यायप्रयोगवचनावगतसाहित्यविरोधेन निरस्यति—**न चेति**। न्यायतः प्रतिप्रहरणप्रयोगे सकलसूक्तवाकप्रयोगे प्राप्तेऽप्यसमवेतार्थवदभागस्यासामर्थ्या' दुत्कर्षो भविष्यतीत्याशङ्क्याह—**अत इति**। समुदायरूढिसूक्तवाकश्रुतिबलीयस्त्वाल्लिङ्गगम्यविभागं बाधित्वा, गुणेन चेदितिभाष्यनुसारादिन्द्रादिपदानां प्रजापत्यादौ, प्रजापत्यादिपदानां चेद्रादौ गौणता न दृष्टाय भविष्यतीति भाष्यानुसाराद्वा अदृष्टार्थमध्यवस्याम इत्युक्ते मन्त्राधिकरणविरोधाददृष्टार्थता न युक्तेत्याशङ्क्य, मन्त्रवर्णबलात्पौर्णमास्यामिन्द्रादेः अमावास्यायां च प्रजापत्यादेर्देवतात्वेन शास्त्राददृष्टत्वादनिष्टस्यापि प्रहरणे देवतात्वकल्पनमदृष्टार्थत्वोक्त्योक्तमिति सूचनायासमवेतार्थस्य पदस्य यानि यत्रानर्थकानीत्यदृष्टार्थत्वोक्तिर्व्याख्येयभाष्यनिर्दिष्टा। तच्छब्देन परामृष्टस्य विषयभूतदेवतान्तरमपूर्वं प्रहरणे अध्यवस्याम इत्युक्तम्। दर्शपूर्णमासनाम्नः समुदायवाचित्वनिरासस्य सामानाधिकरण्येन यागनामत्वनिश्चय इति पौर्णमास्यधिकरणवार्त्तिके कृतस्य प्रत्येकमितिकर्तव्यतान्वयप्रतिपादकप्रकृतभाष्यसम्मतत्वसूचनार्थं समुदायस्य फलसाधनत्वं निरसितुं शङ्कते—**कथं पुनरिति**। निरस्यति—**अत्रोच्यत इति**। श्लोकं व्याचष्टे—**यागत्वं हीति**।

धातोः प्रत्येकसमवेतयागत्ववाचित्वेऽपि नामानुरोधात्समुदायलक्षणार्थत्वं भवतीत्याशङ्कते—**नन्विति**। धातुसामानाधिकरण्याधीनत्वान्नामत्वनिश्चयस्य नाम्नोऽपि प्रत्येकवृत्तितावसीयत इति परिहरति—**नेति**। पौर्णमास्यधिकरणे चैतद्विस्तरेणोक्तमित्याह—**तदिति**।

अतः सत्यपि नाम्नि न समुदायः फलवानित्युपसंहरति—**तेनेति**। द्वन्द्वात्समुदायीकृतयोस्त्रिकयोरितरेतरयोगाख्यसमुदायविशिष्टयोः फलवत्त्वावगतेः समुदायस्य फलवत्त्वमाशङ्क्येतरेतरन्यायेन — **करणतेत्युक्तम्**।

एवमपि साहित्यविशिष्टानामितिकर्तव्यतान्वयः स्यादित्याशङ्कते—**नन्विति**। परिहरति—**नेति**। इतिकर्तव्यतान्वये प्रधानसाहित्यस्यैव क्वचिद्विवक्षा, क्वचिद्वाऽविवक्षा न युक्तेत्याशङ्कयोद्देश्योपादेयगतत्वरूपलक्षणभेदाद्विवक्षाविवक्षयोर्व्यवस्था युक्तेत्याह—**एकमपि हीति**। साङ्गाभ्यां दर्शपूर्णमासाभ्यां स्वर्गं कुर्यादिति युगपत्साध्यसाधनेतिकर्त्तव्यताविशिष्टभावनाविधावेकस्याग्नेयादेर्युगपत्फलेतिकर्त्तव्यतान्वये युगपदुद्देश्यत्वोपादेयत्वविरोधं शङ्कते—**कथमिति**।

आचार्यो मातुलश्चेति द्रव्यैकत्वेऽपि दृश्यते।
अपेक्षाहेतुभेदेन व्यवहारः पृथक्त्वयेति॥

स्तुतशस्त्राधिकरणोदाहृतवृद्धश्लोके विरुद्धानामप्यपेक्षणीयभेदेनैकत्र युगपत्सम्भवस्योक्तत्वाद्वस्तुविरोधस्तावन्नास्तीति परिहरति—**अपेक्षेति**। हेतूक्त्यालम्बनवाचिन्याऽपेक्षणीयमुक्तम्।

वस्तुविरोधाभावेऽपि, वैरूप्यमिति वाक्यभेदापत्तेरेकेन शब्देन युगपद्रूपद्वयोक्तिर्विरुद्धेत्याशङ्कते—**नन्विति**। प्रयाजादिभिर्दर्शपूर्णमासावुपकुर्यादिति प्रधानोद्देशेनेतिकर्त्तव्यतां विदधतोऽनुमितस्य वाक्यस्य 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति श्रुताद्वाक्यात्फलोद्देशेन प्रधानं विदधतो भेदसद्भावान्नानिष्टापत्तिरिति परिहरति—**को वेति**। स्वरूपे नैष्फल्यापत्तेः फलसाधनीभूतप्रधानोद्देशेनेतिकर्तव्यतान्वयेऽपि यथासिद्धानामेव प्रधानानामनुवाद्यत्वादविवक्ष्यमाणमप्यापद्येतैवेत्याशङ्कते—**ननु चेति**। विध्यपरिगृहीतत्वात्प्रतीतमप्यनादृत्यमिति परिहरति—**सत्यमिति**। प्रधानोद्देशेनेतिकर्तव्यताख्यविशेषणविधायिनि प्रकरणाम्नानानुमिते वाक्ये प्रधानसाहित्याविवक्षयामप्यङ्गप्रधानावाक्यसमूहात्मके महावाक्ये साधनेतिकर्तव्यताविशिष्टभावनाविधायिनि फलं प्रति प्रधानसाहित्यस्य विवक्षितत्वादवैरूप्यादितिकर्तव्यतान्वयेऽपि विवक्षा भविष्यतीत्याशयेन कथमितरेतरयोगो विधितः शक्यो वारयितुमिति पृच्छति—**कथमिति**। विशेषणविध्युत्पाद्यत्वेन विशिष्टविध्यर्थस्य विशेषणाविधिसम्भवानुरूपस्याभ्युपगमनीयत्वाद्विशेषणविधौ च प्रधानसाहित्यस्याशक्यविवक्षत्वा (त्प्रत्येकमितिकर्तव्यान्वितैः प्रधानैः संहत्य फलं कुर्यादिति विशिष्टविध्यर्थावगते)[1] विशिष्टविधावपीतिकर्तव्यतान्वये प्रधानसाहित्यस्याशक्याविवक्षेत्याशयेनोत्तर—**इह हीति**। ग्रहपदे च प्रातिपदिकांशेन ग्रहोद्देशाद्विभक्त्यंशेन चैकत्वोपादानाद्वैरूप्यपरिहारः शक्येनापि-धातुरूपेण तु शब्दप्रधानवाचिन्यंशभेदाभावाद्दर्शपूर्णमासपदेऽपि समस्यमानपदद्वयातिरिक्तसमाख्यशब्दरूपाभावादेकेनैव प्रधानवाचिना शब्देन स्वरूपेण प्रधानोद्देशे समासरूप्येण साहित्योपादानाद्वैरूप्यपरिहारः शङ्कामपि नाधिरोहतीत्याह—**न हीति**। इतिकर्तव्यतान्वये साहित्याविवक्षामुपसंहरति—**तस्मादिति**। साहित्याविवक्षायामेकस्यैव प्रधानस्येतिकर्तव्य-

१. अयं पा० २ पु० ना०।

तान्वयापत्तेरानन्तर्यविशेषावस्थासिद्धेः सर्वेषामितिकर्तव्यतान्वयो न स्यादित्याशङ्कानिरासार्थं तत्रेतिभाष्यमवतारणपूर्वं व्याचष्टे—**तदिति**। प्रतिशब्देन सर्वेषामितिकर्तव्यतान्वयित्वं यत्सूचितम्। तद्दर्शयतीत्यर्थः। 'आनन्तर्यमचोदने ३.१.२४त्यनेन न्यायेनानन्तर्यस्याकारणतयाबुद्धिनिवृत्तेः सन्निधित्वेनानुषङ्गाधिकरणेऽभिहितत्वादविशेषोक्तिः। यदि कस्य चित्प्रधानस्येतिकर्तव्यतान्तरं निराकाङ्क्षीकरणसमर्थं साक्षात्कृत्योपदिष्टं स्यात् ततस्तद्व्यतिरिक्तानां प्रधानानामितिकर्तव्यतात्मकं प्रकरणं स्यात्, न त्वेतदस्तीत्यभिधानार्थमितिकर्तव्यताया इति भाष्यावयवान्यूनत्वादध्याहारेण व्याख्यातुम्—**एकस्यापि वेत्युक्तम्**। अस्येति भाष्यावयवव्याख्यानायाऽस्य च भाष्यकथम्भावरूपस्य प्रकरणाख्यप्रकरणिनो ग्रहणसामर्थ्यस्य—**विशेषादित्युक्तम्**।

सामान्यन्यायमुक्त्वा, प्रकृते योजनार्थं तस्मादिति भाष्यं व्याचष्टे—**ततश्चेति**। सूत्रदूषणभाष्यशेषस्य 'तदिहापीष्यते' इत्यादिवार्त्तिकेन प्रागेव व्याख्यातत्वात्स्वमतेन वचनादिति चेदिति सूत्रानुभाषितपूर्वपक्षनिरासार्थमत्रेति भाष्यमवतारणपूर्वं व्याचष्टे—**एवं चेति**। अदृष्टाय भविष्यन्तीति भाष्येण पूर्वदेवताकल्पकत्वस्यापि शङ्कितत्वाद् गौणत्वनिरासस्योपलक्षणार्थत्वसूचनायाऽदृष्टार्थत्वं चेत्युक्त्वा देवतान्तरोक्त्या व्याख्यातम्। मुख्यतत्वसम्भवे गौणत्वस्य पुरस्ताल्लिङ्गाधिकरणे प्रसिद्धकर्माङ्गभूतदेवताप्रकाशनसम्भवे च देवतान्तरकल्पकत्वस्य' ततश्चावचनं तेषामितरार्थं प्रयुज्यते इति नवमाधिकरणसूत्रे निरासादित्यर्थः। पुरस्ताच्छब्दो भाष्यस्थोक्तशब्दव्याख्यार्थत्वाद् गौणत्वनिरासमात्रविषयः। प्रश्नपूर्ववचनसूत्रानुभाषितकृत्स्नोपदेशसमाध्यर्थं कस्तर्हीत्यादिवाक्यानीत्यन्तं भाष्यं व्याचष्टे—**अत इति**। वाक्यबहुत्वोपपादनार्थं येषामित्यादि वदतीत्यन्तं भाष्यं व्याचष्टे—**न हीति**। न चेति भाष्यावयवव्याख्यार्थोऽन्योन्यानपेक्षनानाप्रयोजनयुक्तत्वोक्तीर्भिन्नेत्यनेनोपपादिता। तस्मादित्यादिना पुरस्तादित्यादिना पुरस्तात्पदानामनुषङ्गोक्त्याऽऽवृत्त्या प्रयोगभेदेऽभिहिते कथन्तर्हि साधारणानीत्यादिभाष्येण पुरस्तात्पदानां तन्त्रतोक्तेत्याशङ्क्य सर्वेषां सूक्तवाकानां मध्ये ये पौर्णमासीदेवताप्रकाशकत्वात्पौर्णमास्यङ्गप्रहरणप्रयोगभाजो, ये चामावास्यादेवताप्रकाशकत्वादामावास्याङ्गप्रहरणप्रयोगभाजः सूक्तवाकास्तदवयवभूतानां कतिपयानां पदानां कर्मकाले तन्त्रेण पठनीयतावन्नानाकालीनसर्वसाधारणतन्त्रपाठबलेन सूचयितुं तन्त्रतोक्तिरिति तेनेत्यनेनोक्तम्। अतः समुदायस्यार्थाप्रतिपादकत्वात्प्रातिपदिकोक्तं सूक्तवाकत्वं, विभक्त्युक्तं च साक्षात्साधनत्वाख्यकरणत्वं नास्तीत्युपसंहारार्थं तस्मादिति भाष्यम्। बहुषु सूक्तवाकेष्वेकवचनायोगशङ्कानिरासार्थं च सूक्तवाकेतिभाष्यं स्पष्टत्वादव्याख्याय, पदेनाप्यपगतेनेत्यनुभाषणसूत्रस्थभाष्योक्तशङ्कानिरासार्थं सूक्तवाकेनेति भाष्यं व्याचष्टे **येन केन चित्त्विति**। कृत्स्नस्य हीति भाष्योक्तशङ्कोपपत्तिनिरासार्थं सूक्तवाकेनेति भाष्यं व्याचष्टे **यत्त्विति**। भाष्यं लिङ्गाद्देवतापदोत्कर्षवद्वाक्यात्समभिव्याहृतानामपि पदानामुत्कर्षाल्लिङ्गोक्तिरुपलक्षणार्थेत्येवं व्याचष्टे—**तत्रेति**। तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे—**इतीति**।

भाष्योक्तमपि कृत्स्नोपदेशपरिहारं दूषयितुमारभते—**इदमपीति**। यथा वैश्वानरं द्वादशकपालं निर्वपत्पुत्रे जातइति जातेष्ट्युपक्रमाद्यस्मिञ्जातएतामिष्टिनिर्वपतीति च जातेष्ट्यैवोपसंहारादेकवाक्यत्वस्य वैश्वानरवाक्ये प्रत्यक्षत्वेन 'यदष्टाकपालो भवतीत्यादि-वाक्यबहुत्वं न युक्तम्' तथेहाप्युपक्रमोपसंहारस्य तन्त्रपदयोगेनैकवाक्यत्वस्य प्रत्यक्षत्वा-द्वाक्यबहुत्वानुपपत्तेर्भाष्योक्तमपि समाधानं न युक्तमित्यर्थः। भिन्नकर्मस्थभिन्नदेवताप्रका-शनसामर्थ्येनाऽन्योऽन्यानपेक्षत्वाद्वाक्यबहुत्वानुपपत्तेर्भाष्योक्तमपि समाधानं न युक्तमित्यर्थः। भिन्नकर्मस्थभिन्नदेवताप्रकाशनसामर्थ्येनान्योऽन्यानपेक्षत्वाद्भिन्नप्रयोजनत्वाच्चैकवाक्यता न युक्तेत्याशङ्क्याह—**न हीति**। 'यदनेन हविषे'ति प्रस्तरप्रकाशनस्य प्राधान्याभ्युपगमात्प्रस्त-रान्वयित्वेनेष्टदेवताप्रकाशनस्यैकप्रयोजनत्वं 'यदनेन हविषे'ति च प्रधानभूतानां तन्त्रपदानां तन्त्रपदैर्विना साकाङ्क्षतेत्यर्थः।

सुभाषितोक्तिनिमित्तत्वात्सूक्तवाकशब्दस्येष्टानां च देवतानामाज्यादिहविष्कृदिष्टत्वेन सुष्ठूक्तत्वादिष्टदेवताप्रकाशनस्यैव प्राधान्यावगतेः प्रत्येकवाक्यपरिसमाप्तिनिमित्तो वाक्य-भेदः स्यादित्याशङ्क्याह—**तस्मादिति**। 'यस्य पिता पितामहः सोमं न पिबेदित्यादि-वदर्थतो वाक्यभेदेऽपि तत्र पदात्मकशब्दान्वयादेकवाक्यत्वसिद्धिः। परमार्थतस्तु प्रह-रणाङ्गत्वोपदेशात्प्रह्लियमाणप्रस्तरप्रकाशनप्राधान्यापत्तेः 'या ते अग्नेऽयाशया या ते अग्ने रजाशया या ते अग्ने हराशयेत्युपसन्मन्त्रशेषः तनूर्व'र्षिष्ठेत्यादिरग्नयेत्वामह्यं ददातु बृहस्पतये त्वा मह्यं, वरुणो ददात्वित्येवमादि दक्षिणामन्त्रशेषः सोऽमृतत्वमशीयेत्यादिरादि-शब्दोक्तश्चेष एकपद्यूर्ज्जे द्विपदीत्यादिसप्तपदीक्रमणमन्त्रशेषो भवेत्यादिर्जुहूरस्युपभृदसि ध्रुवासीत्याज्यासाधनमन्त्रशेषश्च घृताचीत्यादिर्यथाऽऽवृत्त्या प्रयुज्यते, तथात्रापि पुरस्तात्प-दानामावृत्त्या प्रयोगापत्तेर्याज्ञिकानां तत्र प्रयोगो विरुध्यतेत्याह—**यदि चेति**। एकवचना-लोचनया चैकस्यैव सूक्तवाकस्य प्रयोगापत्तेः पौणमासीदेवतावाचिनः शब्दास्ते पौर्ण-मास्यां प्रयोक्तव्याइति भाष्ये बहुवचनं विरुध्येतेत्याह—**प्रस्तरेति**। वाक्यबहुत्वनि-रासमुपसंहरति—**तस्मादिति**।

अतोऽन्यः परिहारो वाच्य इत्याह—**अतश्चेति**। तस्मादाह—**स उच्यत इति**। यथैकस्मिन् विद्यावनेकबिन्दुसमुदाये च संसर्गिद्रव्यरूपत्वेनाऽनेकेषामपि किं बिन्दूनां संयोगे सत्येकीभावादेकवचनान्त एव तोयशब्दः प्रयुज्यते, न घटवद्द्विबहुवचनान्तः विभागे च सति पृथग्भावान्नानापत्तेर्द्विबहुवचनान्तस्तथैकस्मिन् देवतापदेऽभितस्तन्त्रपदोपेते तत्समुदाये चेष्टदेवताप्रकाशननिमित्तत्वात् सूक्तवाकस्येष्टदेवताप्रकाशनानामनेकेषा अथैकप्रयोगवर्त्तित्वरूपे संयोगे सत्येकीभावादेकवचनान्त एव प्रयुज्यते। भिन्नप्रयोगवर्त्तित्वरूपे च विभागे सति पृथग्भावमात्रापत्तेः सूक्तवाकशब्दएव प्रयुज्यते न सूक्तवाकार्धशब्दः। ततश्च विभागेऽपि सूक्तवाकार्धशब्दः। ततश्च विभागेऽपि सूक्तवाकत्वं नापैतीत्याशयः।

तथात्वमुपपादयति—**सूक्तवाको हीति**। अग्निरिदं हविरजुषतेत्यादीष्टदेवताप्रकाशन-सामर्थ्यालोचनया प्रयोगवर्त्तिदेवतापदसहितस्याभितस्तन्त्रपदोपेतस्येष्टदेवताप्रकाशक-

पदसमूहस्य सूक्तवाकत्वावधारणाद्यत्र यावत्यो देवता इष्टा सूक्ते तावद्देवतापदसमूहस्तस्य कृत्स्नसूक्तवाकत्वोपपत्तेरित्युक्तेऽभिन्नकर्मसङ्गतिभिन्नदेवताप्रकाशनानां भेदात्कथं तत्कारिणां पदसमूहानामेकशक्यतेत्याशङ्क्य देवताप्रकाशनस्येष्टत्वप्रयुक्तत्वादिष्टत्वरूपप्रकाश्यैकत्वेन प्रकाशनैकत्वसूचनार्थं—**प्रयोजनतश्चेत्युक्तम्**। प्रत्युत देवतान्तरपदसाहित्ये देवतान्तराणामनुद्दिष्टत्वेनानुक्तत्वादजुषतेत्युद्दिष्टत्वरूपोक्तवचनस्यानृततया दुष्टत्वापत्तेर्दुरुक्तवाकः स्यादित्याह—**प्रयोगेति**।

सामान्यतः समवेतार्थपदप्रयोगमात्रेण सूक्तवाकसाकल्यसिद्धेर्देवतान्तरपदसाहित्ये त्वसूक्तवाकत्वापत्तिरित्युक्त्वा, पौर्णमास्यमावास्ययोर्विभज्य प्रयोगे योजयति—**तेनेति**। निष्कर्षसिद्ध्यै युक्त्यपेक्षापाठेनाभितः पदानां कर्मकालेऽपि तन्त्रप्रयोज्यत्वावगतिस्तनूर्वर्षिष्ठेत्याद्यनुषङ्गपूरितस्य 'यात अग्ने' इत्यादेर्मन्त्रस्यादिशब्दोक्तस्य चाशास्तेऽयं यजमानोऽसावसावित्यादेः सर्वनामनिर्देशद्वाराम्नातदेवदत्तादिनामपूरितत्वात्तस्य मन्त्रस्य यथायुक्तिसहितेन पाठेन कार्त्स्न्यावधारणेति दृष्टान्तार्थः। समवेतार्थपदप्रयोगमात्रेणेष्टदेवताप्रकाशनादनन्तरितत्वोक्तिसिद्धावपि प्रहरणे यथाम्नातसूक्तवाकोपदेशाद्विभज्य प्रयोगेन कृत्स्नेन सूक्तवाकेन प्रहरणं कृतं स्यादित्याशङ्क्याह—**अतश्चेति**। सूक्तवाकशब्दस्य रूढित्वे सत्येकदेशप्रयोगे कार्त्स्न्यं बाध्येत, यौगिकत्वसमवेतार्थपदसमूहमात्रेऽवयवार्थोपपत्तेः। कार्त्स्न्याबाधाद्विद्यमानाः प्रयोगसमवेता देवता अनतिक्रम्य यावत्सूक्तवाकस्तावत्साध्यत्वात् प्रहरणस्य कृत्स्नेन साधितत्वोपपत्तिरित्यर्थः।

कृत्स्ने तर्ह्यध्येतॄणां सूक्तवाकप्रसिद्धिर्न युज्येतेत्याशङ्क्याह—**तेनेति**। (स्वाध्यायकाले प्रयोगभेदानालोचनाद्दर्शपूर्णमाससमवेतदेवताप्रकाशननिमित्तं सर्वप्राकृतदेवत्यस्य पदसमूहस्य सूक्तवाकत्वम्। कर्मकाले च प्रकृतिविकृतिभेदाद्वैविध्यमित्येवं त्रेधावस्थितः सूक्तवाको ज्ञातव्य इत्यर्थः। त्रिविध्ये सत्यपि कथं व्यवस्थेत्याशङ्क्याह—**सूक्तवाक इति**। यत्र स्वाध्यायकाले, प्रकृतौ, विकृतौ वा यादृशसूक्तवाकोऽस्माभिर्निरूपितः तत्रैव स सूक्तवाकः अन्यत्र त्वसमवेतार्थनिरूपणात्सूक्तवाकत्वं जहातीत्यर्थः। बहुत्वमपि सूक्तवाकस्य सम्भवति, किमुत द्वित्वमित्येवम् भाष्यङ्गमयितव्यमित्याह—**भाष्येऽपि चेति**। उभे पौर्णमास्यमावास्ये प्रति स्वाध्यायकाले प्रकरणाविभागमालोच्य यः कृत्स्नसूक्तवाकशब्दोऽध्येतृप्रसिद्धः। सायथार्थं निष्कृष्य प्रयोगेऽपि स्वदेवतापदसाहित्यमात्रे एव। कृत्स्नसूक्तवाकशब्दो युक्तिसहितेन पाठेन कल्पित इत्येवं सूत्रङ्गमयितव्यमित्याह—**तथेति**। भाष्योक्तसूत्रव्याख्यानिरासायैवकारः। सम्भवनामात्राशयत्वेन बहुत्वोक्तिव्याख्यानेऽपि न च तेषामित्यादिभाष्यविरोधः। प्रयोगवर्त्तिदेवतावाचिपदसमूहस्याभितस्तन्त्रपदोपेतस्यैकसूक्तवाकत्वाभ्युपगमे दुःपरिहर इत्याशङ्क्य, तेषामभितस्तन्त्रपदोपेतानां भिन्नप्रयोगवर्त्तिदेवतावाचिनां पदानापदानामन्योन्यसमूहः कश्चिदेकप्रयोगसमवेतमर्थं न वदति। तस्मान्न भिन्नप्रयोगवर्त्तिदेवतापदसमूहः कर्मकाले सूक्तवाकः। प्रयोगसमवेतार्थाऽप्रकाशत्वादेव च न करणमिति भिन्नप्रयोगस्थदेवतापदसमूहस्य कर्मकाले सूक्तवाकत्वनिरासार्थं भाष्यं न त्वेकप्रयोगस्थदेवतापद-

समूहस्य सूक्तवाकत्वनिरासार्थं सूक्तवाकेति भाष्यं च[1]) स्वाध्यायकाले सर्वप्राकृतदेवत्ये पदसमूहे, प्रकृतौ च पौर्णमास्याख्ये अमावास्याख्ये च यागत्रयसमुदाये निष्कृष्टप्रयोगस्थ-देवतामध्ये पदसमूहे विकृतौ। सूक्तवाकस्येष्टदेवताप्रकाशकत्वसमानरूपस्य संसर्गिद्रव्य-वत्संसृष्टपाठे सत्येकत्वादेकवचनोपपादनार्थमित्येवं विरोधपरिहारसूचनायोक्तेन गमनिका-प्रकारेण सर्वेषां भाष्याणामविरोध इत्याह—**इतीति**। सूत्रभाष्यवार्त्तिकयोर्वा सर्व-शब्दः ॥ १९ ॥

इति षष्ठं सूक्तवाकस्य विभज्यविनियोगाधिकरणम् ॥

भा० प्र०—पूर्वपक्ष की प्रदर्शित आशङ्का का निरास करते हुए कहा है कि दर्श और पूर्णमास दोनों मिलकर एक कर्म है। प्रस्तर प्रहार दर्श और पूर्णमास दोनों में कर्तव्य होने से उसका दो बार प्रयोग होगा। दोनों बार सूक्तवाक का ही पाठ करना होगा, अतः, दर्श का एवं पूर्णमास का प्रस्तर प्रहार दो होने पर भी समष्टि को लेकर जैसे उसको एक मानकर निर्देश किया गया है, वैसे ही सूक्तवाक का भी कुछ अंश दर्श में एवं कुछ अंश पूर्णमास में पढ़ने पर साकल्य में समग्र सूक्तवाक ही पठित होता है। इसी अर्थ में यहाँ कृत्स्न शब्द का प्रयोग किया गया हैं। वस्तुतः, समग्र अंश ही सूक्त-वाक पद का वाच्य है, कम अधिक होने पर सूक्तवाक नहीं होगा—यह बात नहीं है। किन्तु एक-एक मन्त्र ही सूक्तवाक के नाम से अभिहित होता हैं। सभी के मध्य में सूक्त-वाकत्व सामान्य रूप से रहता है, अतः, "सूक्तवाकेन प्रस्तरं प्रहरति" इस स्थल में जाति के अभिप्राय से एक वचन का प्रयोग है। इसीलिए जिस कर्म में जो सूक्तवाक मन्त्र समवेतार्थक होता है, उसमें वही पठनीय होने से पौर्णमासी एवं अमावस्या में विभक्त करके ही सूक्तवाक का पाठ उचित है।

इस प्रसङ्ग में वार्तिककार का कहना है कि सूक्तवाक शब्द समुदायवाची होने पर भी कर्म में जो अंश अन्वितार्थक नहीं होता है, उसमें उसका पाठ करने पर वह सूक्तवाक नहीं रहेगा, किन्तु वह दुरुक्तवाक होगा, क्योंकि, सूक्तं वक्त अर्थात् जो सूक्त शोभन उक्त अर्थात् याग के समय सम्यक् उक्त उन देवताओं के विषय में कहता है अर्थात् प्रकाश करता है, इस प्रकार की व्युत्पत्ति के अनुसार सूक्तवाक शब्द इष्ट = पूज्यमान देवता का प्रकाशक इसलिए, यह समुदाय में रूढ़ अर्थात् प्रसिद्ध होने पर भी यौगिक अर्थ के अनु-सार यहाँ विभक्त रूप में ही पठित होगा। "प्रकरणाविभागात्" = प्रकरण का विभाग न होने से अर्थात् दर्श एवं पूर्णमास के मध्य में प्रकरणगत विभाग न होने से। "उभे प्रति" = दर्श एवं पूर्णमास इन दोनों के अर्थात् समष्टि के प्रति, "कृत्स्नशब्दः" = कृत्स्न अर्थात् समग्र अर्थात् एक सूक्तवाक उपदिष्ट हुआ है। छठवाँ सूक्तवाकाधिकरण ॥१९॥

---

१. अयं पा० २ पु० ना०।

अथ सप्तमं लिङ्गक्रमसमाख्याधिकरणम्

## [७] लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥२०॥ सि०

शा० भा०—इह काम्ययाज्यानुवाक्याकाण्डमुदाहरणम्—'इन्द्राग्नी रोचना दिवः(ऋ० सं० ३।१२।९), प्रवर्षणिभ्यः (मै० सं० २।१।१) इन्द्राग्नी नवतिं पुरः(ऋ० सं० ३।१२।६), श्लथद्वृत्रमित्येवमाद्या ऋचः। अपरा अपि काम्या इष्टयः 'ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वीयुः'[1], ऐन्द्राग्नमेकादशकपालं निर्वपेद् भ्रातृव्यवान्। अग्नये वैश्वानराय द्वादशकपालं निर्वपेद्रुक्कामः। अग्नये वैश्वानराय द्वादशकपालं निर्वपेत्सपत्नमभिद्रोष्यन्नित्येवमाद्याः। तदेता याज्यानुवाक्याः प्रति संदेहः—किं यावत्किंचिदैन्द्राग्नं कर्म तत्र सर्वत्रानेनैन्द्राग्नेन याज्यानुवाक्यायुगलेन[2] भवितव्यम्, उतैतस्यामेवैन्द्राग्न्यामिष्टौ काम्यायामिति। एवं वैश्वानरीययोर्याज्यानुवाक्ययोः। एवं सर्वत्र। किं तावत्प्राप्तम्? यावत्किंचिदैन्द्राग्नम्, वैश्वानरीयम्, अग्नीषोमीयम्, जातवेदसं च, सर्वत्रैता याज्यानुवाक्या भवेयुः। कुतः? लिङ्गात्।

ननु क्रमसमाख्याने विशेषके भविष्यतः। सत्यम्। तथाऽपि क्रमम्, समाख्यां च शक्नोति लिङ्गं बाधितुमिति। एवं प्राप्ते—

ब्रूमः—लिङ्गक्रमसमाख्यानात्तास्वेव काम्यास्वेता याज्यानुवाक्या इति गम्यते। य एव हि लिङ्गक्रम एषां कर्मणाम्, स एवाऽऽसां याज्यानुवाक्यानाम्। तेन तासामेव ताः शेषभूता इति।

ननु लिङ्गं बलवत्तरमित्युक्तम्? सत्यमेतत्। इह तु समाख्या बलीयसी। न ह्येताः समाख्यानादृत एषां काम्यानां कर्मणां प्राप्नुवन्ति। न[3] वा भिन्नदेशानां कर्मणाम्। कुतः? समाख्यामन्तरेणाऽऽसामृचां याज्यानुवाक्यात्वमेव न विज्ञायते, कुतो भिन्नदेशानां कर्मणां याज्यानुवाक्या भविष्यन्तीति। या चैषां समाख्या सा काम्यानामेव याज्यानुवाक्यात्वमाचष्टे, न सर्वेषाम्। यदि समाख्या नाऽऽद्रियते, याज्यानुवाक्या[4]त्वमेवैषां न भवति। यद्याद्रियते तदा, काम्यानामेव। एवं हि तत्समाख्यायते काम्ययाज्यानुवाक्याकाण्डमिति॥

अथ किमर्थमुभयमुपदिश्यते—लिङ्गक्रमादिति, समाख्यानादिति च। अस्ति तत्र पाथिकृतीयम्, व्रातपतीयं च कर्म, सामिधेनीकार्यमप्यस्ति, याज्यानुवाक्याकार्यमपि। यदि लिङ्गक्रमादित्येतावदेवोच्येत, सामिधेनीकार्येऽपि लिङ्गेन तासां विनियोगः स्यात्। अथ किमर्थं लिङ्गक्रमो व्यपदिश्येते। सर्वा याज्यानुवाक्याकार्य एव विनियुज्येरन्। सामिधेनीषु विनियोगो न स्यात्। अथ पुनः समा-

१. ब. विपायुः। २. ब. द्वयेन। ३. ब. न। ४. ब. याज्यानुवाक्याभाव एवैषां।

ख्यानाल्लिङ्गक्रमाच्च निर्वृत्ते याज्यानुवाक्याकार्ये, सामिधेनीषु विनियोगः सिद्धो भवति ।

यथा आग्निवारुण्या इष्टेः क्रमेऽतीते सौमारौद्रीणामनागते मनोऋंचस्ताः सामिधेनीषु धाय्या इत्युच्यन्ते। तथा 'पृथुपाजास्तं सम्बाधे' इति द्वे धाय्ये कल्प्येते । तस्मादुभयं व्यपदेष्टव्यमिति ॥ २० ॥

इति सप्तमं लिङ्गक्रमसमाख्याधिकरणम्

## अथ सप्तमं लिङ्ग-क्रम-समाख्याधिकरणम्

त० वा०—येन क्रमेणैन्द्राग्नादीनि काम्यानि कर्माण्याम्नातानि तेनैव क्रमेण[1] तद्देवत्यानि काम्यसमाख्यायुक्तानि याज्यापुरोनुवाक्यायुगलानि। तानि किं क्रममुल्लङ्घ्य तद्देवत्यकर्ममात्रार्थानि लिङ्गाद्भवन्ति, उत केनचित्प्रकारेण तास्वेव काम्यास्विष्टिषु यथाक्रमं विनियुज्यन्त इति। उदाहरणबहुत्वं हि सूत्रोपात्त-विशेषणविषयप्रकल्पनार्थम् । तत्र लिङ्गात्सर्वार्थत्वे प्राप्ते ।

अभिधीयते—नासति क्रतुसंबन्धे सामर्थ्यं विनियोजकम् ।
येन च क्रतुसंबन्धस्तेन काम्यार्थता स्फुटा ॥

लिङ्गं हि देवतासंबन्धं कुर्यात्। न च तत्स्वरूपप्रयुक्तत्वे फलमस्ति। यज्ञसंबन्धिता तदनुरक्तदेवतासंबन्धिता वा नैतावता वाक्यप्रकरणादिरहितेन शक्योपादातुम्। न च ज्ञायते कांशे विनियोग इति। तेनावश्यं समाख्या तावदाश्रयणीया। तया हि यज्ञसंबन्धः कार्यविशेषश्च सिध्यति। इज्यतेऽनयेति यागसंबन्धः, तस्याश्च हविप्रदानार्थत्वात्कार्यविशेषोऽप्यवधृतः। ततश्च केन यज्ञेन संबन्ध इति ? लिङ्गात्तद्देवत्येनेति विज्ञायते। नन्वेवमपीष्टं न सिध्यत्येव। कथं न सिध्यति ? यदा काम्यं याज्याकाण्डमित्येतावत्या समाख्यया काम्येष्टि-विषयत्वं नियतम्। अपि च। यद्यपि समाख्या यज्ञमात्रसंबन्धं कुर्यात्, तथाऽपि बलीयसा क्रमेण बाध्येतैव। तस्मात्काम्येष्टिप्रयुक्तमेवैतत्साम्नानमिति[2]।

**किमर्थमुभयं** सूत्रितमिति। क्रमानुगृहीतेन लिङ्गेनैव काम्येष्टिविषयत्वसिद्धेः अथवा काम्यं याज्याकाण्डमित्येतावतैव सर्वं सिद्धमिति मन्यते। तत्राभिधीयते। सत्यम्। इन्द्राग्नादिषु लिङ्गक्रममात्रेणापि सिद्धेदृचां याज्यानुवाक्यात्वादन्यत्रा विनियोगात्। यानि त्वाग्नेयादीनि कर्माणि 'अग्नये व्रतपतये०' इत्येवमादि-चोदितानि। तत्र स्थानद्वयमृचामग्निप्रकाशने सामिधेनीत्वं, याज्यानुवाक्यात्वं च। साप्तदश्याम्नानाच्चास्ति सामिधेनीनां द्वे ऋचौ प्रत्यपेक्षा। तत्र यदि याज्या-

१. क. प्रकारेण । २. क. युक्त ।

समाख्या विनियोजिका नाऽऽश्रीयेत, ततः साभिधेनीष्वपि लिङ्गक्रमावुपपद्येते इति प्रथमातिक्रमे कारणाभावात्तत्रैव विनियोगः प्राप्नोति। समाख्यया तु तन्निवर्तितं भवति। तेन तर्हि तन्मात्रमेवास्तु, नार्थो लिङ्गक्रमाभ्यामिति। तदुच्यते। यद्यत्रेष्टिपरिमिता एवात्यन्तं तद्देवत्याश्चाम्नायेरन् तत एतदेवं स्यात्। इह त्वन्यदेवत्यस्य स्वानुरूपयाज्यानुवाक्यापूरितस्य कर्मणः क्रमे या आग्नेय्य ऋचः पठ्यन्ते, ताः समाख्यया केवलया विनियुज्यमाना याज्यात्कार्ये विनियुज्येरन्। न चास्ति संभवः। विलिङ्गत्वादन्याभ्यां, तल्लिङ्गाभ्यां बाधितत्वात्। तेनाविनियोग एव स्यात्। लिङ्गक्रमाश्रयणे पुनः समाख्यायां निवृत्तव्यापारायां तभ्यां विनियोगे सति सामिधेनीषु प्रयोगः सिद्धो भवति।

तं विषयं दर्शयति—**अग्निवारुण्या इष्टेर्या**ज्यापुरोनुवाक्ये पठित्वा सौमारौद्रीणामिष्टीनां याज्यापुरोनुवाक्यास्वनागतासु मनोऋचः पठ्यन्ते। ताः सामिधेनीषु धाय्या भवन्तीति। तथा पृथुपाजवत्यावपि द्रष्टव्ये। तत्रापि पूर्वस्याः सामिधेनीक्रममतिक्रम्य, याज्यापुरोनुवाक्योत्तरकालपाठादुत्तरेष्टिविषयत्वं विज्ञायते। यदि च क्रमो नाऽऽश्रीयेत, ततो लिङ्गसमाख्यामात्रेण प्रथममैन्द्राग्नयुगलं द्वितीयस्यामैन्द्राग्न्यां विनियुज्येत, द्वितीयं च प्रथमायाम्। क्रमे तु सति समाख्यातः पूर्वतरं तेन क्रतुसंबन्धकरणात् तत्संनिरुद्धमेव लिङ्गं श्रुतिं कल्पयतीत्यक्रमविनियोगः परिहृतो भवति। तस्मात्सम्यक् सूत्रितमिति ॥ २० ॥

( इति सप्तमं लिङ्गक्रमसमाख्याधिकरणम् ॥ ७ ॥)

### अथ सप्तमं लिङ्गक्रमसमाख्याधिकरणम्

न्या० सु०—इहेत्याद्युदाहरणभाष्यं तात्पर्यतो व्याचष्टे—**येनेति**। तदेता इति सन्देहभाष्यं विचारस्यानन्तरसङ्गतिं, पादसङ्गतिं च सूचयन् व्याचष्टे—**तानीति**। प्रमाणान्तरगम्यक्रतुविशेषान्वयविशेषापेक्षं लिङ्गं विनियोजकम्, निरपेक्षं वेति विचारात्पादसङ्गतिः। पूर्वपक्षवचनव्यक्तौ क्रत्वन्वयबोधकक्रमोल्लङ्घनोक्त्या, सिद्धान्तवचनव्यक्तौ क्रमानुसारोक्त्या सूचिता। श्रुतेर्लिङ्गापेक्षत्वे पूर्वाधिकरणेऽतेनोक्ते प्रसङ्गाल्लिङ्गस्यापि जघन्यप्रमाणापेक्षत्वाभिधानादनन्तरसङ्गतिः। क्रमोक्त्या समाख्याप्युपलक्षिता। प्रकारोक्त्या लिङ्गस्यान्यसम्बन्धापेक्षोक्ता। याज्याकाण्डमित्युपक्रमादेव सर्वत्रेत्युपसंहाराच्चोदाहरणबहुत्वाद् प्रतीयमानस्य प्रयोजनमाह – **उदाहरणेति**।

समाख्यानविशेषणस्य सामिधेनीसामदश्यवत्केवलाग्निदेवत्यपाथिकृतीयादिष्टिविषयत्वाल्लिङ्गविशेषणस्य विलिङ्गसौमारौद्रेष्टिविषयत्वात्क्रमविशेषणस्य समानलिङ्गानेकेष्टिविषयत्वादुदाहरणबहुतेत्यर्थः। यावत्किञ्चित्प्रकरणानाम्नातयाज्यानुवाक्याकं काम्यं चैन्द्राग्न्यादिकर्म्मं। तत्र याज्यानुवाक्या यथालिङ्गं भवेयुरिति पूर्वपक्षोक्त्यार्थं किं तावदिति भाष्यं व्याचष्टे—**तत्रेति**। मन्त्रादीनां देवतादि स्वरूपान्वये नैष्फल्यापत्तेः,

क्रत्वपूर्वसाधनांशान्वये नवमे वक्ष्यमाणेऽप्यध्ययनविधिनैव दृष्टार्थत्वापपरित्यागेन पुरुषार्थानुबन्धित्वाय वगमेऽपि, मन्त्रप्रकाश्यदेवतादेः क्रतुमात्राणामङ्गत्वाक्रत्वन्वयसिद्धेर्लिङ्गस्य प्रकरणादिगम्यक्रतुविशिषान्वयानपेक्षत्वसूचनार्थं 'क्रममिति भाष्यावयवं व्याख्यातुं लिङ्गादित्युक्तम्। अध्ययनविधिना सामान्यतः क्रत्वन्वयाविशेषाङ्गभूते देवतादौ मन्त्राणां लिङ्गविनियोज्यत्वावगतेर्लिङ्गस्य च सामर्थ्यात्मकत्वात्सामर्थ्यस्य' चार्थाद्वा कल्पनैकदेशत्वादि१.४त्यत्र सन्दिग्धार्थानिर्णयमात्रे व्यापाराभिधानात्, अवगतक्रतुविशेषान्वयानां च मन्त्राणां कया द्वारेषां क्रतुविशेषोपकारितेति, द्वारविशेषे सन्देहानुदयात् लिङ्गेनाविनियोगापत्तेः प्रकरणादिगम्यक्रतुविशेषान्वयसापेक्षस्यैव लिङ्गस्य विनियोजकत्वावसायादासां याज्यानुवाक्यानामिष्टिविधायिब्राह्मणप्रकरणेऽनाम्नानात्प्रकरणेन क्रतुविशेषान्वयानवगमेऽपि क्रमसमाख्याभ्यां क्रतुविशेषान्वयेऽवगते, द्वारविशेषं प्रति सन्देहोत्पत्तौ लिङ्गेन तदङ्गभूतदेवताप्रकाशनद्वारत्वनिर्णयादेतद्याज्यानुवाक्यासमाम्नानं काम्येष्टियुक्तमित्येवं सूत्रव्याख्यार्थं लिङ्गेत्यादिभाष्यसूचितामुपपत्तिमाह—**नासतीति**। लिङ्गक्रम इति भाष्ये क्रमोक्त्या समाख्याप्युपलक्षिता। नन्वितिभाष्येण वक्ष्यमाणलिङ्गबलीयस्त्वविरोधापत्तेः क्रमाद्यपेक्षा न युक्तेत्याशङ्क्य, लिङ्गानपेक्षितस्य क्रमादेर्लिङ्गाद्दौर्बल्येऽपि, लिङ्गापेक्षितस्य क्रमादेर्बलीयस्त्वाविरोध इत्येवं परिहारार्थं 'सत्यमिति भाष्यं व्याचक्षाणः। पूर्वार्धमुपपादयति—**लिङ्गं हीति**। देवतात्वाधिष्ठानानि आदिरूपवाची देवताशब्दः। सामान्यतोऽग्न्याद्यन्वयेऽनवगते तद्विशेषसन्देहाभावेनाऽग्न्यादिस्वरूपेऽपि लिङ्गेनाविनियोगात्सम्भावनामात्रं लिङ्गोक्तम्। उत्तरार्द्धमुपपादयितुमारभते—**यज्ञेति**। 'आश्रावयेत्यादीनामेष वै सप्तदशःप्रजापतिर्यज्ञे मन्त्रायत्तः' इत्यादिवाक्याल्लवनादिमन्त्राणां च प्रकरणोक्तक्रतुविशेषान्वयेऽवगते लिङ्गस्य विनियोजकत्वदर्शनाद्वाक्यप्रकरणोक्तिभिन्नदेशानामिति ततः श्रावयतीत्यादीनां क्रमानवगतक्रतुविशेषान्वयानां समाख्यापेक्षोक्त्या क्रमापेक्षा सूचिता।

प्रश्नपूर्वं क्रमसमाख्यापेक्षोपपादनार्थं कुत इत्यादि भाष्यं व्याचष्टे—**न चेति**। याज्यानुवाक्यासमाख्यां विनाऽऽग्नेयानामृचां याज्यानुवाक्याकार्यांशे सामिधेनीकार्यांशे च विनियोग इत्यज्ञानात्समाख्याऽपेक्षणीया। तावच्छब्दाच्च क्रमं विना कस्यैन्द्राग्नयाज्यानुवाक्याद्वयस्य कस्मामैन्द्राग्न्यामिष्टौ विनियोगइत्यज्ञानात् क्रमोऽप्यपेक्षणीय इत्यर्थः। किमर्थमाश्रयणीयेत्यपेक्षायामाह—**तया हीति**। द्वयमप्युपपादयति—**इज्यत इति**। एवं च सति यज्ञविशेषं प्रति सन्देहात्तन्निर्णयो भविष्यतीत्याह—**ततश्चेति**।

याज्यासमाख्याया यागगतकार्यविशेषान्वयावगमेऽपि काम्येष्टिविषयत्वं सूत्रोक्तं न सिध्यतीत्याशङ्कानिरासार्थत्वेन याचेत्यादिभाष्यं व्याख्यातुं शङ्कते —**नन्विति**। व्याचष्टे—**कथमिति**। याज्याकाण्डमित्येतावन्मात्रसमाख्यानभ्युपगमेऽपि क्रमात्काम्येष्टिविषयत्वं सेत्स्यतीति स्वयमन्यथा परिहरति—**अपि चेति**। विशिष्टक्रमकेष्टिविशेषांशे क्रमेण समाख्याबाधेऽपि कार्यविशेषांशेऽपेक्षणाद्द्याज्यात्वविरोधः।

सिद्धान्तमुपसंहरति—**तस्मादिति**। क्रममात्रात् समाख्याऽद्वा क्रत्वन्वयसिद्धेर्विशेषणद्वयानर्थक्यशङ्कार्थमथेति भाष्यं व्याचष्टे—**किमर्थमिति**। पाथिकृतीयादिषु केवलाग्निदेवत्येष्टौ सामिदश्याम्नानेन सामिधेनीकार्यस्याऽप्याग्नेयद्वयाकाङ्क्षस्य सद्भावात्सामिधेनीकार्येऽपि लिङ्गक्रमोपपत्तेः समाख्यानपेक्षणे प्रथमातिक्रमे कारणाभावात्सामिधेनीकार्यएव विनियोगापत्तेः समाख्याविशेषणार्थत्वोक्त्यर्थमस्तीति भाष्यं व्याचष्टे—**तत्रेति**। व्रातपात्यादिविशेषणसूचनायाग्नेयादीनीत्यादिशब्दः तत्रैवेत्येवकारेण सामिधेनीकार्येऽपीति भाष्यस्थोऽपिशब्दो मृदुक्त्यर्थत्वं नैवकारार्थे। व्याख्या। तत्समाख्यामात्रात्तर्हि पृथिकृतीयादिषु याज्याकार्ये विनियोगसिद्धेर्लिङ्गक्रमविशेषणानर्थक्यमित्याशङ्कार्थमथेति भाष्यं व्याचष्टे—**तेन तर्हीति**। येन कारणेन समाख्यानादरेऽनिष्टापत्तिः तेन कारणेन समाख्यानादित्येतावन्मात्रमस्त्वित्यर्थः।

समाख्यानादित्येतावत्युक्ते याज्यानुवाक्याकार्यातिरिक्तानां विलिङ्गानामपि चर्चां याज्यानुवाक्याकार्यएव विनियोगापत्तेस्तासां चानाकाङ्क्षितत्वादशक्तत्वाच्च याज्यानुवाक्याकार्ये विनियोगायोगाल्लिङ्गक्रमानादरात्, तत्सामिधेनीकार्येऽपि विनियोगादानर्थक्यापत्तेर्लिङ्गक्रमात्समाख्यानाच्चेत्युक्ते तु पूर्वस्या इष्टेः स्वानुरूपयाज्यानुवाक्याम्नानान्निष्पत्तेर्याज्यानुवाक्याकार्ये पाठेनाऽतीते, क्रमत्वादिलिङ्गत्वापूर्वोष्टयाज्यानुवाक्यानुवाक्याकार्ये विनियोगायोगादुत्तरेष्टिसामिधेनीकार्ये समाख्यानावस्थितलिङ्गक्रमाभ्यां विनियोगः सेत्स्यतीति लिङ्गक्रमविशेषणार्थवत्त्वोक्त्यर्थम्। सर्वा इति भाष्यं व्याचष्टे—**तदिति**। आग्निवारुणस्य सोमारोद्रस्य वा कर्मणः स्वानुरूपयाज्यानुवाक्यापूरितत्वाद्याज्यानुवाक्यानाकाङ्क्षत्वेऽभिहिते लिङ्गविनियोज्यस्वानुरूपयाज्यानुवाक्याबाधेनैन्द्रीवदृगन्तरविनियोगशङ्कानुदयार्थं क्रमातिरिक्तबलवत्प्रमाणबाधः क्रमोक्त्या सूचितः। तल्लिङ्गमाग्नेयीत्वेनोक्ताविरोधविषये वा समाख्याया निवृत्तव्यापारतोक्ता।

विषयप्रदर्शनार्थं यथेतिभाष्यं व्याचष्टे—**तमिति**। मनोत्र्ऋचामग्निरुक्थेपुरोहित इत्याद्यानां 'पृथुपाजा' इतिद्वयोश्च धाय्यासमाख्यातु आज्यसान्नाय्यनिकाय्यधाय्यामानहविर्न्निवासासामिधेनीष्विति च सामिधेनीषु प्रक्षेप्यानां धाय्यात्वस्मृतेः समाख्ययानुगृहीता भवतीत्युक्त्यर्थत्वेन ता इति भाष्यव्याख्यार्थम्—**ता इत्युक्तम्**। सोमारौद्रीष्टिसामिधेनीक्रमोक्त्यर्थत्वेत्यतीतानागतोक्ती व्याख्यातुम्—**तत्रापीतित्युक्तम्**। लिङ्गसमाख्यानादित्येतावन्मात्रे तर्ह्याग्नियीनामृचां व्रातपतीयादियाज्यानुवाक्याकार्ये मनोत्र्ऋचां पृथुपाजवत्योश्च सौमारौद्रीष्टिसामिधेनीकार्ये विनियोगसिद्धेः क्रमविशेषणमनर्थकमित्याशङ्क्याह—**यदिचेति**। क्रमेण तर्हि समाख्याबाधाद् व्रातपतीयादौ सामिधेनीकार्ये विनियोगः स्यादित्याशङ्क्य, क्रमविनियोगविषये समाख्याबाधोऽपि याज्याकार्यविषये विरोधाभावादबाध इत्येव परिहारसूचयना—**येतीत्युक्तम्**। विशेषणद्वयार्थवत्वोपसंहारार्थं तस्मादिति भाष्यं व्याचष्टे—**तस्मादिति** ॥ २० ॥

**इति सप्तमं लिङ्गक्रमसमाख्याधिकरणम्**

भा० प्र०—श्रुति में काम्यइष्टि=याग के काण्ड में "ऐन्द्राग्न्यामेकादशकपालं निर्वपेत्" इत्यादि वाक्य में इन्द्र, अग्नि आदि देवतायुक्त कर्म कहा गया है। पुनः मन्त्र-काण्ड में ठीक इसी क्रम में अर्थात् जिस क्रम में इन्द्र, अग्नि आदि देवताओं से युक्त याग कर्म उपदिष्ट हुआ है, उसी क्रम में लिङ्गयुक्त उस कर्मों का उसी देवता का प्रकाशक "इन्द्राग्नी रोचना दिवः" इत्यादि मन्त्र भी काम्य याज्यानुवाक्याकाण्ड नाम से कहा गया है। इन्द्र एवं अग्नि देवता का प्रकाशक जो याज्या एवं पुरोऽनुवाक्या वह क्या लिङ्ग अर्थात् अर्थ प्रकाशन सामर्थ्य के अनुसार इन्द्र एवं अग्नि देवतायुक्त जिस किसी कर्म का अङ्ग होगा, अथवा क्रम एवं समाख्या के अनुसार वह इस इन्द्र अग्निदेवतायुक्त याग का ही अङ्ग होगा—यह संशय है।

इस पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि "काम्ययुक्तं समाम्नातम्" उस-उस यज्ञ के लिङ्ग के अनुसार क्रम एवं समाख्या के अनुसार इन्द्र, अग्नि, आदि देवता का प्रकाशक यह याज्या एवं पुरोऽनुवाक्या उस काम्य दृष्टि में ही विनियुक्त होगी अर्थात् उसी का अङ्ग होगी, कारण, "लिङ्गक्रमसमाख्यानात्" इन सभी कर्मों का जो लिङ्ग क्रम है मन्त्र का भी वही लिङ्गक्रम होता है। इस स्थल में लिङ्गक्रम एवं समाख्या की बाधा नहीं हो सकती है, क्योंकि, क्रम एवं समाख्या यहाँ लिङ्ग का उपजीव्य होता है। कारण, लिङ्ग केवल इन्द्र, अग्नि आदि देवता के स्वरूपमात्र का प्रकाशन करता है, किन्तु, केवल देवता के स्वरूप के प्रकाशन से मन्त्र और कर्म का अङ्गाङ्गिभाव सिद्ध नहीं होता है, किसी काण्ड का कोई मन्त्र किसी कर्म में किस क्रम में विनियुक्त होगा यह लिङ्ग के द्वारा प्रकाशित हुए विना सम्भव नहीं है। ऐसा न होने पर केवल देवता के प्रकाश से मन्त्र का प्रयोग नहीं हो सकता है। इसलिए समाख्या एवं क्रम के अनुसार मन्त्र का विनियोग होता है। ऐसी स्थिति में इन्द्रादि प्रकाशक याज्या एवं पुरोऽनुवाक्या काम्येष्टि काण्ड में ही याग का क्रम के अनुसार इन्द्रादि देवता युक्त कर्म में विनियुक्त होगा, अन्यत्र नहीं होगा।

"लिङ्गक्रमसमाख्यानात्" = लिङ्गयुक्त क्रम एवं लिङ्गयुक्त समाख्या के अनुसार से, "काम्ययुक्तं" = काम्ययुक्त अर्थात् काम्य याग के अङ्ग के सम्पादन के लिए, "समाम्नातम्" = इन्द्राग्न्यादि काण्ड कहा गया है। सप्तम लिङ्ग का दुर्बल प्रामाण्य उपजीविता अधिकरण ॥ २० ॥

## अथाऽष्टममाग्नेय्यधिकरणम्

## [८] अधिकारे च मन्त्रविधिरतदाख्येषु विशिष्टत्वात् ॥ २१ ॥ पू०

शा० भा०—ज्योतिष्टोमे श्रूयते। आग्नेय्या आग्नीध्रमुपतिष्ठते, ऐन्द्रया सदः वैष्णव्या हविर्धानम्, इति। तत्र संदेहः। किं प्रकृताभिरेव लिङ्गवतीभि-

रुपस्थातव्यमुत दाशतयीभ्य एवंलिङ्गा आगमयितव्या इति। किं तावत्प्राप्तम्। प्रकरणे च मन्त्रो लिङ्गेन विधीयमानो दाशतयीभ्य [1]एवाऽऽगमयितव्यः। आग्नेयीत्येवमादिभिर्हि शक्या दाशतय्योऽभिवदितुम्। यश्चायं प्रकृतः, स कार्यान्तरे विनियुक्तो नेहाप्युपदेशमर्हति। उपदिष्टोपदेशो हि न न्याय्य एवंजातीयकस्य। कथंजातीयकस्य। यः कस्मिं[2]श्चिद्विशेषेणोपदिष्टः, नासौ सामान्येन लिङ्गेनान्यत्रोपदेशमर्हति। कथम्? यदि तल्लिङ्गं तस्य लक्षणत्वेन, ततः स विशिष्टो लक्ष्येत येनानेनैवंलिङ्गेनैतत्करोतीति ततो नोपदिष्टो भवति। अथोपदिश्यते, एवंलिङ्गेन करोतीति। ततो न लक्ष्यते। तेनोपदिष्टस्यैवंजातीयकस्यैवंजातीयकः पुनरुपदेशो न न्याय्यः। तस्माद्दाशतया लिङ्गवन्तो मन्त्रा ग्रहीतव्याः।

ननु प्रकरणसामर्थ्यतः प्रकृता ग्रहीतुं न्याय्याः। नेत्युच्यते। लिङ्गं हि प्रकरणाद्बलीयः। आह। विरोधे सति लिङ्गेन प्रकरणं बाध्येत। न चैतयोर्विरोधः। न वयं प्रकरणमनुजिघृक्षन्तः प्रकृतं लिङ्गवन्तमुपाददाना लिङ्गमपबाधेमहि। यदि तु प्रकृतं विलिङ्गमुपा[3]ददीमहि, ततो बाधेमहि लिङ्गम्। उभयं संपादयिष्यामः प्रकरणं, लिङ्गं च। नैतदेवम्। लिङ्गेन प्रत्ययो[4] भवति दाशतयेनापि कर्तव्यमिति। दाशतय्योऽपि ह्याग्नेयीशब्देन शक्यन्ते वदितुम्। स प्रत्ययो लिङ्गजनितो यन्मिथ्येति कल्प्यते[5] तत्प्रकरणानुरोधात्। स चेत्प्रकरणमनुरुध्यते, मिथ्येति। कल्प्यते। अथ नानुरुध्यते, सम्यगिति। तस्माद्विरोधः। विरोधे च प्रकरणदौर्बल्यम्।

उच्यते। तल्लिङ्गवत्ताऽनेनोपस्थानेनानुग्रहीतव्या न दाशतयीमन्त्रव्यक्तिः। सा च प्रकृते मन्त्र उपादीयमाने निरवशेषा उपात्ता भवति। दाशतय्यां पुनर्मन्त्रव्यक्तावुपादीयमानायां प्रकरणाद्या मन्त्रव्यक्तिः प्राप्नोति, सा बाधिता भवत्यसति विरोधे। न चेह लिङ्गप्रकरणयोर्विरोधः। प्रकरणाद्व्यक्तिः प्रतीयते लिङ्गात्सामान्यम्। अन्या च व्यक्तिः। अन्यत्सामान्यम्। तस्मात्प्रकृतो लिङ्गवानुपादेय इति। उच्यते। सत्यमेवमेतत्[6]। प्रकृत उपादीयमाने प्रकरणं न बाधितं भवति, लिङ्गमप्यनुगृहीतम्। लिङ्गजनितस्तु प्रत्ययः कश्चिन्मिथ्येति कल्पितो भवति।

ननु व्यक्तिरपदार्थः। व्यक्तावनुपादीयमानायां प्रत्ययो बाध्येत। उच्यते। एतदेव न विजानीमो, लिङ्वत्ताऽत्राङ्गं न वेति। किंतु तद्धितनिर्देशोऽयम्। तत्र देवतया मन्त्रो लक्ष्यते। मन्त्रव्यक्तिर्हि साधनं, न सामान्यं नाम किंचिदपरम्। देवतैवात्र सामान्यम्। यथा साधनं लक्षयितव्यम्। न[7] च गम्यते विशेषः—अयमसौ मन्त्रः नायमसाविति। अनवगम्यमाने विशेषे सर्वे तल्लिङ्गा

१. ब. 'एव' पदंनास्ति। २. ब. कस्मिंश्चिच्छेषेण। ३. क. उपाददेमहि। ४. ब. प्रयोगो। ५. ब. कल्पयति। ६. ब. तत्। ७. ब. नन्ववगम्यते।

ग्रहीतव्या इति। दाशतय्यामपि मन्त्रव्यक्तौ भवति प्रत्ययः। स प्रकरणानुरोधेन बाध्येतेत्यन्याय्यम्। एवं सति न दाशतय्य एवोपादातव्या भवन्ति। प्रकृतमप्युपाददीरन्।

नन्वेतदुक्तम्—कार्यान्तरे प्रकृतस्योपदेशो नासावर्थान्तर उपदेक्ष्यत इति। उच्यते। न नियोगतः स एवार्थान्तरे वर्तते। स च, अन्यश्च सामान्येन लिङ्गेन। नैवं सति किंचिद् दुष्यति। नन्वेतद् दुष्यति। नोभयमनुगृहीतं भवति लिङ्गं प्रकरणं च। सत्यम्। नानुगृहीतं भवति। किन्त्वननुग्राह्यमेव प्रकरणम्, लिङ्गप्रत्ययविरुद्धत्वात्।

अपि च। न लिङ्गं प्रकरणं चाऽनुग्रहीतव्यमिति तत्परिच्छिन्ने प्रवृत्तिर्भवति। यदवगम्यते, एतत्फलवदिति। तत्र प्रवर्तते। किमतो यद्येवम्? एतदतो भवति। न लिङ्गमनुगृहीतं क्वचिदित्यपरस्मिस्तत्परिच्छिन्ने न प्रवृत्तिर्भवितुमर्हति। तस्माद्दाशतय्यो ग्रहीतव्या इति गम्यते॥ २१॥ पूर्व०॥

## अथाष्टममाग्नेयाधिकरणम्

त० वा०—ज्योतिष्टोमे प्रथमाग्नेय्यैन्द्र्यादयः स्तोत्र-शस्त्रादिसाधनत्वेन 'अग्न आयाहि वीतये' इत्येवमादयो विशेषरूपेणाऽऽम्नातः विहिताश्च, पुनश्च सामान्येन 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते' इत्यादिषूपदिश्यन्ते। तत्र संदेहः—किं तद्व्यतिरिक्ता ग्रहीतव्या, उत ता वा, अन्या वा अथवा ता एवेति।

ग्रन्थात् त्रयः पक्षाः प्रतिभान्ति न त्विहाप्रकृता एवेत्यस्य पक्षस्य प्रमाणमस्ति। महता हि प्रबन्धेनाविशेषग्रहणं प्रतिपाद्यते, न केवलाप्रकृतनिश्चयः। येन हि प्रमाणेनाऽऽग्नेयीशब्दाविशेषेणाऽप्रकृता गृह्येरन्, तेनैव प्रकृता अपि। न च किंचित्कारणमस्ति येन प्रकृताः परित्यज्येरन्। न च भाष्यकारेण त्रयः पक्षाः प्रदर्शिताः। किं तर्हि अविशेषपक्ष एवाऽऽदावपिशब्दरहितेनाप्रकृतशब्देन परिगृहीतः। येनाप्रकृता एवेति भ्रान्तिर्भवति। यत्तु तत्र प्रमाणं, तदविशेषपक्षमेव साधयति। तथा च परस्ताद्विवृतमप्रकृतेऽपि प्रत्ययो भवति, प्रकृतमप्युपाददीरन्निति च यदि त्ववश्यं तृतीयोऽपि पक्षः समर्थनीयः तत एतावती श्रोत्रियोपपत्तिः। प्रकृतस्य कार्यान्तरोपयोगेन यातयामत्वादग्रहणम्।

अथवा सामान्यविधानमिदम्। तानि त्वाग्नेयीविशेषविधानानि परिहृत्य च विशेषविधिविषयं सामान्यशास्त्राणि प्रवर्तन्ते। यदि तु तत्रापि विशेषग्रहणं न तुल्यमित्युदाहरणत्वेन गृह्येत्। तस्मादप्रकृता एव ग्रहीतव्याः।

अथवाऽऽग्नेयादिशब्दैरविशेषप्रत्ययो जातः। न चान्यत्प्रकृतग्रहणक्षमं विशेषणं पश्यामः। प्रकरणस्य ग्राहकत्वेन अविशेषकत्वात्। संनिधिलक्षणलौकिकप्रकरणस्य च यौगिकश्रुतिजनिताविशेष प्रत्ययेन बाध्यमानत्वात्।

तस्मात्सर्वप्रत्ययः। **उपदिष्टोपदेशो हि न न्याय्य** इति। इह उपदिष्टस्यैवेत्यर्थः। **एवंजातीयकस्येति**—विशेषणरहितस्येत्यर्थः। **कथंजातीयकस्येति** अस्ति विनाऽपि विशेषणेन विशेषणग्रहणप्रमाणं प्रकरणमिति सिद्धान्तवादी मन्यते। परः पुनः स्वाभिप्रायेणैव सिद्धान्तवाद्यभिमतां विशेषग्रहणोपपत्तिमनभिमतामेव परिकल्प्य **कथम् यदि तल्लिङ्गं तस्योपलक्षणत्वेनेत्याह**। न चात्रापरि वक्ष्यमाणदेवता-लिङ्गाभिप्रायेण लिङ्गपदं युक्तम्। किं तर्हि? आख्यातप्रत्ययसामर्थ्यं तद्विहि-तत्वं वा। तदुपक्षीणशक्तो तस्मिन्विध्यभावप्रसङ्गोपन्यासात्। **नासौ सामान्येन लिङ्गेनेति**[1]—अग्निना चिह्नेन, सर्वासु प्रतीयमानासु स्फुटेन विशेषणेन विना न शक्यो मन्त्रविशेषः प्रतिपत्तुमित्यभिप्रायः। तदिह यदि विशेषणमिष्यते, ततो दार्शपौर्णमासिकनिर्वापालम्भन्यायेन कर्तव्यतावचनेन लिङ्गेन विशेष्टव्यम्। तद्धयकर्माङ्गभूतेभ्यो दाशतयीभ्यो[2] निवृत्तमत एव विशेषणम्। तथा च दर्शयति—**येनानेनैवं लिङ्गेनैतत्करोतीति** (कर्तव्यम्) येनानेवैवंलिङ्गेन—अग्नि-लिङ्गेनेन्द्रलिङ्गेन वा, किंचित्करोतीति—आख्यातप्रत्ययविहितत्वेनोपलक्षिते-नाऽऽग्नीध्रोपस्थानमिति, ततो विधायकस्योपलक्षणत्वेनोपक्षीणत्वान्नोपदिष्टो भवति। **अथोपदिश्येताऽऽग्नेय्यादिना करोतीति**, ततो न विशेषितो भवति। ततश्चाविशेषिताग्नेयीमात्रग्रहणप्रसङ्गः। तेनोपदिष्टस्यैव तदुपलक्षितस्य पुनरुपदेश इत्यप्रमाणकम्। तस्मात्कर्तव्यतावचनवर्जितकेवलाग्न्यादिदेवतोपलक्षणसामर्थ्या-त्पुनर्दाशतया[3] अपि ग्रहीतव्या इति।

**ननु प्रकरणसामर्थ्यादिति**—सिद्धान्ताभिप्रायेणोक्तम्। **लिङ्गं प्रकरणाद्बलीय इति**—**लिङ्गशब्देनात्र देवतासंबन्धायौगिकी श्रुतिरभिधीयते, न सामर्थ्यमात्रम्। उपरिष्टाद्बहुप्रयोगगतोऽपि लिङ्गशब्द एवमेव यौगिकश्रुतिवचनो व्याख्येयः। आह। विरोधे सतीति**—यदि प्रकृममनाग्नेयं गृह्णीमस्ततो विरोधो भवेत्। प्रकृताग्नेयग्रहणे तु द्वयमप्यनुगृह्यते। तथा तद्भूताधिकरणे श्रुतिवाक्योरविरुद्ध-त्वमुक्तम्। नैतदेवमिति। दाशतयानामपि विकल्पेन प्राप्तानां न युक्तः प्रकरणानु-रोधेन बाधः। तस्मान्नोभयमनुग्रहीतव्यमिति।

सामान्यस्य प्रतिव्यक्ति समाप्तेः प्रकृतायामपि व्यक्तौ समस्तपदार्थसंभवान्न कश्चिद्विरोध इति मत्वाऽऽह—**तल्लिङ्गवत्ताऽनेनानुग्रहीतव्येति**। तस्माल्लिङ्ग-युक्तस्य वाक्यस्य सामान्यविषयत्वात्प्रकरणेन तदाकाङ्क्षितविशेषसमर्पणादसति समवायविरोधे न युक्तो बाधः। इतरस्तु व्यक्त्यभिधानाभिप्रायेण दाशतयप्राप्ति-निवर्तनाद्विराधं समर्थयते।

---

१. क. तल्लिङ्गेन। २. क. दशतयीभ्यो। ३. क. सामान्यात्।

**ननु व्यक्तिरपदार्थ** इत्यभिप्रायप्रत्यादेशः। परस्त्वाह। **एतदेव न विजानीमस्तल्लिङ्गवत्ता सामान्यभूताऽवाङ्गं, नवेति**। यदि हि गवादिशब्दवद्द्रव्यवत्यभिधानासंभवः ततः सामान्यचोदनायां सत्यामश्रुतव्यक्तिर्ग्रहणानुषङ्गिणी प्रकृतव्यक्तिग्रहणेऽप्यदोषः, अथ तु देवतोपलक्षिता व्यक्तिरेव शब्दार्थः ततः प्रकृतग्रहणे सति श्रुतिजनितप्रत्ययैकदेशबाधः स्यात्। सा चेह **व्यक्तिरेव साधनं, न सामान्यं नाम किंचित्**।

किं पुनरिदानीमाकृत्यधिकरणोक्तसामान्यपह्नवं भाष्यकारः करोति। नेति ब्रूमः। तस्याङ्गत्वासंभवमात्रमाहेति केचित्। तदयुक्तम्। तथा सति व्यक्तीनामश्रुतत्वादपरिग्रहेऽपि दोषाभावात्। अतः प्रकृतापेक्षया सामान्यमपह्नूयते इति वक्तव्यम्। व्यक्तिशब्दो ह्ययं यौगिकत्वान्न जातिशब्दत्वं प्रतिपद्यते। न चात्र जातिः। काचित्प्रतीयते। नानारूपासु नानाच्छन्दस्कास्वपि च देवतैकत्वमात्रेणाऽऽग्नेय्यादिशब्दप्रयोगात्। न हि 'अग्न आ याहि वीतये' 'अग्नि होतारं मन्ये दास्वन्तम' इत्येतयोर्देवताव्यतिरिक्तं किंचित्सामान्यं दृश्यते। देवतासंबन्धमेवैष न व्यभिचरति। व्यभिचरति तु ऋग्जातिं, द्रव्यकर्मादिष्वपि प्रयोगात्। अतो देवतैवात्र समानेत्याह। संबन्धस्तु समानः सन्नपि नाभिधेयत्वेनार्थसिद्धत्वाद्भाष्यकारेणोपन्यस्तः। तस्या एव च देवतायाः समानत्वाद् व्यक्त्यानन्त्यादिदोषनिवृत्तिः। पूर्वाभिहितेऽपि च विशेषणे प्रकृतिप्रत्यययोः शक्तिभेदात्प्रत्ययेन विशेष्याभिधानमविरुद्धम्। यत्र तु तावानेव शब्द उभयत्र व्यापारयितव्यः तत्र विशेष्यानभिधानं, यथा गवादौ। न चात्र विशेषणाभिधानमात्रस्याग्निशब्दस्य कदाचिदपि विशेष्येषु प्रयोगो नाप्याग्नेयीशब्दस्याग्नौ यतो विशेष्यं यावन्नीयेत। यदि चेह विशेषणमात्रमभिधीयेत, ततस्तस्यैव कार्यक्षमत्वान्नैव विशेष्यं परिगृह्येत। तस्माद् व्यक्तय एवात्राभिधेयाः। तदुक्तं पिङ्गाक्ष्यैकहायनीशब्दयोः। ततश्च पक्षे प्रकृतमप्युपादीरन्।

**नन्वेतदुक्तमिति**—आद्यपक्षाभिप्रायेण। ननु त्वयैव यातयामत्वादिदोषात्तस्यानुपादानमुक्तम्। परस्तु मध्यमपक्षं परिगृह्याऽऽह। केवलप्रकृतग्रहणे हि प्रत्ययस्य युगपद्विधिलक्षणव्यापाराद्विरोधोऽभिहितः। मत्पक्षे तु न नियोगतः स एवात्राऽऽग्नीध्राद्युपस्थाने। किं तर्हि। अविशेषवचनेन न च, अन्यश्चेत्यविरोधः। **नन्वेतद् दुष्यतीति**—विना कारणेन प्रकरणपीडामसहमानो वदति। परस्तु देवतालिङ्गयुक्तश्रुतिबलीयस्त्वमेवोत्तरं ददाति। **अपि च। न लिङ्गं**—यौगिकश्रुत्यात्मकं, **प्रकरणं चानुग्रहीतव्यमिति**—लोकस्यातिसंमुग्धां वाचोयुक्तिं निराकर्तुमुपन्यस्यति। सर्वप्रमाणव्यवहारेष्वेव न प्रमाणमनुग्रहीतुं पुरुषाः प्रमेयेषु प्रवर्तन्ते। किं तर्हि। आत्मानम्। ततः किमिति चेदत आह—**एतदतो भवति**। बहुष्वप्येकरूपं प्रमाणं क्वचिदनुगृहीतमिति कृतार्थत्वान्न पुरुषार्थौपयिकान्यपि

सन्त्यर्थान्तराणि न गृह्यन्ते। सकृत्प्रयुक्ते वा काम्ये फलभूमार्थिनामपि न भूयः प्रयोगो भवेत्। तस्मात्प्रमाणानुग्रहमनादृत्याऽऽत्मानुग्रहार्थं तत्र तत्र प्रवर्तितव्यमित्यविशेषग्रहणसामर्थ्यम्। लिङ्गप्रत्ययविरुद्धत्वादित्यत्रापि लिङ्गशब्दस्तस्मिन्नेव प्रयुक्त इति द्रष्टव्यम्। सूत्रमप्यतदाख्यप्रापणं करोतीति नातदाख्यमात्रनियमार्थमिति व्याख्येयम्। तदाख्येषु त्वसंवाद एवेति न परामृश्यन्ते ॥ २१ ॥

अथाऽष्टममाग्नेय्यधिकरणम् ॥ ८ ॥

न्या॰ सु॰—लिङ्गस्य सामान्यसम्बन्धसापेक्षस्य विनियोजकत्वेऽभिहिते, प्रसङ्गाल्लिङ्गवत्याः श्रुतेरपि सामान्यसम्बन्धापेक्षया विनियोजकत्वाभिधानादनन्तरसङ्गतिं, पादसङ्गतिं च स्पष्टत्वादनुक्त्वा प्राकृतानां विशेषरूपेणाम्नातानामपि, विशेषरूपेण विध्यभावे विनियोगाकाङ्क्षत्वात्, तासामेवाग्नेय्यादिशब्देन ग्रहणापत्तेः, अग्निर्देवताऽस्या इति असन्निहितवाचिसर्वनामार्थवृत्तिनाऽऽग्नेयीशब्देन प्रकृतानामेव ग्रहणावगतेः पूर्वपक्षायोगासन्देहायोगमाशङ्क्य, विशेषरूपाम्ननाद्विशेषरूपेण विहितानामेव प्रकृतोक्त्या विवक्षितत्वादग्निदेवतात्वोपलक्षितस्य वा अन्यत्र पदार्थस्यात्रोपस्थानाङ्गत्वे विधेरुपलक्षणान्तरानपेक्ष्यत्वेन सन्निहितत्वस्योपलक्षणत्वेनानन्वयादविवक्षितत्वावगतेराग्नेयीमात्रग्रहणावगमात्पूर्वपक्षसम्भवेन सन्देहोपपत्तिसूचनार्थं विषयं शोधयति—**ज्योतिष्टोम इति**। सन्निहितत्वाविवक्षा सामान्योक्त्या सूचिता। परमतेन दाशतयीभ्य एव, दाशतयीभ्योऽपीति वाऽध्याहृतशब्दद्वयपूर्वं पूर्वपक्षवचनव्यक्तिः भाष्यावृत्त्या त्रिविधसन्देहोक्त्यर्थत्वेन तत्रेतिसन्देहभाष्यं व्याचष्टे—**तत्रेति**। सन्देहभाष्यात्पक्षद्वयप्रतीतेस्त्रैविध्योक्तिरयुक्तेत्याशङ्क्य, तस्माद्वा दशतयालिङ्गवन्तो मन्त्रा ग्रहीतव्या इत्यनेन भाष्येणाप्रकृतमात्रपक्षमुक्त्वा नन्वित्यनेन सिद्धान्ते शङ्किते नेत्युच्यतइत्यनेनाविशेषपक्षोपक्रमाल्लिङ्गेन प्रत्ययो भवति दाशतयेनापि कर्त्तव्यमित्यादिना विशेषपक्षस्यैव स्पष्टीकरणात्पक्षत्रयप्रतिभानमाह—**ग्रन्थादिति**।

अप्रकृतमात्रपक्षं दूषयितुमुपक्रमते—**न त्विति**। प्रमाणाभावमेवोपपादयितुं क्लृप्तसामान्यसम्बन्धात्प्रकृतग्रहणसम्भवे कल्पनागौरवापादककल्प्यसम्बन्धादप्रकृतग्रहणायोगादविशेषपक्षोऽपि तावदतिक्लेशसाध्यः, प्रकृतमात्रनिर्धारणं तु न कथं चित्सम्भवतीत्याह—**महता हीति**। निर्धारणाख्यनिश्चयायोगमुपपादयितुमाह—**येन हीति**। आग्नेयीत्येवमादिभिर्हीति भाष्योक्तस्याग्नेयीशब्दाविशेषात्मकस्य प्रमाणस्य प्रकृतासाधारण्येऽप्यन्यत्र विनियुक्तत्वात्प्रकृतानामग्रहणमित्याशङ्क्याह—**न चेति**। पुरोडाशश्रपणे विनियुक्तस्य कपालस्य तुषोपवापे विनियोगवद्विनियुक्तविनियोगोऽप्यविरुद्ध इत्याशयः। कथं तर्हि भाष्ये पक्षत्रयोक्तिरित्याशङ्क्याह—**न चेति**। आदौ सन्देहकाले दाशतयीभ्य इत्यनेनाऽप्रकृतवाचिना शब्देनाऽपिशब्दरहितेनाविशेषपक्षपरिग्रहादप्रकृतमात्रभ्रान्तिरिति वदताऽपिशब्द एवाध्याहार्यो, नैवशब्द इति सूचितं सन्देहभाष्यादप्रकृतमात्रपक्षाप्रकाशनेऽपि शिष्टत्वादिति हेत्वर्थसूत्रावयवव्याख्यार्थं यच्चायमित्यादिभाष्यात्तत्प्रकाशनं भविष्यतीत्याशङ्क्याह—**यत्त्विति**।

सौत्रप्रतिज्ञासूचितस्याग्नेयीशब्दविशेषस्य हेतोराग्नेयीत्येमादिर्भिहीतिभाष्योक्तस्याविशेषपक्षसाधनत्वादधिकारे प्रकरणे यो लिङ्गमालोच्य मन्त्रविधिः, सो तदाख्येषु प्रकृतेषु मन्त्रेषु चेति लिङ्गक्रमसमाख्यानादिति पञ्चमी लिङ्गशब्दमात्रात्परा ल्यब्लोपे कल्पयित्वा प्रतिज्ञानार्थावगतेः सिद्धान्तनिरासार्थत्वेन सौत्रहेतूपपत्तेस्तद्व्याख्यार्थेनापि भाष्येण नाप्रकृतमात्रपक्षः प्रकाशयतइत्याशयः ।

कथमाग्नेयीत्येवमादिभिर्हीतिभाष्योक्तस्य प्रामाण्यस्याविशेषपक्षसाधकतावसीयतइत्यनेनोक्तं प्रौढिप्रदर्शनायाप्रकृतमात्रपक्षमपि समर्थयितुमारभते—**यदि त्विति** । न्यायाकौशलसूचनायोपहासार्थं—**श्रोत्रियस्योपपत्तिरित्युक्तम्** । कीदृशीत्यपेक्षायामाह —**प्रकृतस्येति** । यस्यौदनादेः पक्वस्य यामः प्रहरो यातो गतः, तस्य गतरसत्वात्, तत्सामान्येनाऽन्यदपि गतवीर्यं यातयाममुच्यते ।

'कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः ।
न ते निर्माल्यतां यान्ति विनियोज्या पुनः पुनः ॥' इति स्मृतेः ।

यावयामत्वस्यानाशङ्क्यत्वादपरितोषेणोपपत्त्यन्तरमाह - **अथेति** । आग्नेयीषु सामगाः स्तुवतइत्यादौ स्तोत्रादिसाधनत्वेनाग्य्याग्नेय्यादिशब्दमात्रेण विधानात् तुल्यतामाशङ्क्याह—**यदि त्विति** । विध्यन्तरैर्विशेषविधानात्सामान्यसाधनत्वेनाप्याग्नेय्यादि शब्दमात्रेण विधानात् तुल्यतामाशङ्क्याह—**यदि त्विति** । विध्यन्तर्विशेषस्तु बाधः सेत्स्यतीत्याशयः । इममेव पक्षमुपसंहरति—**तस्मादिति** । तृतीयपक्षसमर्थनेन तस्माद्दाशतयीलिङ्गवंतो मन्त्रा ग्रहीतव्य इत्यन्तं भाष्यमप्रकृतमात्रपक्षविषयत्वेन व्याख्याय, स्वमतेनादित आरभ्याविशेषपक्षविषयत्वेन व्याख्यातुं सौत्राविशेषग्रहणप्रतिज्ञासूचितहेतूक्त्यर्थमाग्नेयीत्येवमादिभिर्हीति भाष्यं व्याचष्टे—**अथ वेति** । विशेषोक्त्या दाशतय्योऽपीत्यपिशब्दध्याहारः सूचितः । प्रकृतानामपि दशतयाख्यदशमण्डलसंज्ञकावयवषट्क च मन्त्रसंहितामन्तुत्वरूपेण ग्रहणं वक्तुं दाशतयीशब्देनैवाविशेषोक्तिः । कल्पनालाघवात्प्रकृतानामेवर्चां ग्राह्यतेति सिद्धान्तमाशङ्क्य, प्रकृतानां स्तोत्रादिद्वारविशेषान्वयलक्षणसामान्यसम्बन्धानवगमात्सिद्धान्तेऽपि सामान्यसम्बन्धस्य कल्प्यत्वेन कल्पनालाघवायोगाद्यथाग्नेय्यास्तोत्रादि करोतीत्याख्यातप्रत्ययविहितत्वरूपस्य शिष्टत्वस्योपलक्षणत्वे सति प्रकृतनियमः स्यान्नान्यथाशिष्टत्वस्योपलक्षणत्वाभ्युपगमे विधिप्रत्ययस्योपलक्षणमात्रे क्षीणशक्तित्वेन विध्यभावान्न काचित् ग्राह्येत्यादिमाद्यनिरासार्थतया शिष्टत्वादितिसूत्रावयवव्याख्यानायापाद्योक्त्या पातनिकार्थं यश्चेति भाष्यं तात्पर्यतो व्याचष्टे—**न चेति** । कथम्भावात्मकप्रकरणस्य विनियोजकत्वाख्येन ग्राहकत्वेन प्रकरणाङ्गबोधमात्रेऽव्यापारान्नान्यव्यावर्त्तकत्वाख्यं विशेषकत्वं भवतीत्याशयः । कथम्भावलक्षणस्य प्रकरणस्य व्यावर्त्तकत्वायोगेऽपि यौगिकशब्दानां स्वावयवार्थान्वयार्हवस्तुवाचित्वात्संहितावलम्बित्वाय सन्निहितार्थविषयत्वावगतेर्विशेषतोऽग्निर्देवताऽस्या इति सन्निहितवाचिसर्वनामार्थवृत्तित्वादाग्नेयीशब्दस्य सन्निहितार्थविषयत्वावगतेरग्निदेवत्यप्व-

**वदुक्तवच्च** सन्निहितत्वस्याप्यन्यपदार्थेऽपि लक्षणत्वावगमाच्छ्रुत्यनुगृहीतसन्निधिलक्षणप्रकरणस्य व्यावर्त्तकत्वं भविष्यतीत्याशङ्क्याह—**सन्निधीति**। उपलक्षणत्रयप्रतीतावप्यविशिष्टं हि लक्षणमित्यनेन न्यायेनोपलक्षणानां विशेषणविशेष्यत्वायोगादेकेन चोपलक्षितप्रत्ययोक्तस्त्रीत्वान्यथानुपपत्त्या गम्यस्य वा शुद्धस्य श्रुतशब्दगम्यत्वेनागृह्यमाणे गृह्यमाणविशेषत्वावगत्या समुच्चयेऽपि संनिहितत्वस्य श्रुत्यनुग्रहाभावो लौकिकोक्त्या सूचितः। प्रकृतत्वाग्नेयीत्वसद्भावात् श्रुत्यविरोधमाशङ्क्य, यौगिकशब्दानां व्यक्तिवाचित्वात् प्रकृतव्यक्तिमात्रग्रहणे श्रुतिसङ्कोचापत्तिर्यौगिकोक्त्या सूचिता। भाष्यस्याप्रकृतमात्रपक्षोपपादनार्थत्वशङ्कानिरासायाऽविशेषपक्षोपपादनफलसिद्धान्तनिरासार्थतां सूचयितुमाह—**तस्मादिति**। उपदिष्टेतिभाष्यमविशेषपक्षेऽनुपपन्नमाशङ्क्य सावधारणत्वेन व्याचष्टे—**उपदिष्टेति**। एवंजातीयकस्येति भाष्यावयवं व्याचष्टे—**एवमिति**। कथंजातीयकस्येति प्रश्नभाष्याशयमाह—**कथमिति**। विशेषणरहितस्यापि 'यथाग्नेय्या स्तोत्रादि करोती'त्याख्यातप्रत्ययविहितरूपेणोपदिष्टत्वेनोपलक्षणात् प्रकृतग्रहणं भविष्यतीत्येत्रमाशयत्वं कथञ्जातीयकस्येति सिद्धान्तिप्रश्नस्य मत्वा तन्निरासार्थं 'यः कस्मिंश्चिदित्यादिग्रहीतव्य' इत्यन्तं भाष्यं उपदिष्टत्वोपलक्षणरूपायाः प्रकृतग्रहणोपपत्तेः सिद्धान्तिनोऽनिष्टत्वादयुक्तमाशङ्क्य परमार्थसिद्धान्त्यनभिमतामेवोपदिष्टत्वोपलक्षणरूपां प्रकृतग्रहणोपपत्तिं स्वोत्प्रेक्षामात्रेण सिद्धान्त्यभिप्रेतां परिकल्प्य पूर्वपक्षी यः कस्मिंश्चिदित्यादिग्रहीतव्या इत्यन्तमाहेत्येवं तात्पर्यतस्तावद्व्याचष्टे—**परः पुनरिति**। लिङ्गशब्दव्याख्यायास्तल्लिङ्गमित्येतद्विषयत्वं यः कस्मिंश्चिदित्यवयवस्य चोपदिष्टत्वरूपोपलक्षणनिरासावतारमात्रार्थत्वं सूचयितुं भाष्यप्रतीकेनावतारितम्।

अत्र भाष्ये 'यदीति भाष्यावयवगतेन याग्नेयाख्यातप्रत्ययसामर्थ्यस्य विषयभूताख्यातप्रत्ययविहिता वेत्येवमाख्यातप्रत्ययसामर्थ्यम्, तस्योपदेशकस्याख्यातस्य मन्त्रविषयं लिङ्गमिति षष्ठीसमासाश्रयणेन तदुपदिष्टत्वं लिङ्गमित्यसमासाश्रयणेन वा तत्तस्य विधीयमानस्य मन्त्रस्योपलक्षणे विवक्षितमित्युक्ते 'कथमेतद् गम्यत' इत्यपेक्षायामुपलक्षणोपक्षीणशक्तौ लिङ्गेनोपदिष्टो भवतीति विध्यभावोपन्यासाद्दैवतालिङ्गस्य चोपलक्षणत्वे—**तदयोगादित्युक्तम्**। एतदेव भाष्यमवयवशो व्याचिख्यासुर्यः कस्मिंश्चिदिति भाष्यावयवं तावदध्याहारेण व्याचष्टे—**नासाविति**। उपदिष्टत्वस्यैव स्फुटस्य विशेषणस्य सम्भवात् कथं नान्यत्रोपदेशमर्हतीत्याशयेन कथमिति पृष्ट्वोपदिष्टत्वस्योपलक्षणत्वरूपविशेषणत्वरूपविशेषणत्वनिरासार्थं यदीति भाष्यमापाद्योक्त्यर्थत्वेन व्याचष्टे **तदिहेति**।

यथालम्भनिर्वापौ विधीयेते, न प्राकृतौ तौ हि विहितौ यदि न विधीयेते ततः प्रकृतौ लक्ष्येते, यावालम्भनिर्वापौ कर्त्तव्यावित्यालम्भनिर्वापाधिकरणभाष्योक्तेन न्यायेन कर्त्तव्यतावाचिना प्रत्ययेनोपलक्षणीभूत्वा व्यावृत्त्याख्याविशेषणं कर्तव्यमित्युक्ते तस्य विशेषणत्वोपपादनार्थम्—**तद्धीत्युक्तम्**। येनेति भाष्यावयवादयमेव लिङ्गशब्दार्थोऽवसीयत इत्याह—**तथा चेति**। तत इति भाष्यावयवं व्याचष्टे—**तत इति**।

अथेति भाष्यावयवं व्याचष्टे—**अथेति**। तेनेति भाष्यावयवं व्याचष्टे—**तेनेति**। तस्मादित्युपसंहारभाष्यं व्याचष्टे—**तस्मादिति**।

सिद्धान्त्यभिमतप्रकृतग्रहणोपरत्युक्त्यर्थं न त्विति भाष्यं प्रकरणस्याविशेषकत्वादयुक्तमाशङ्क्य साक्षात्प्रकरणस्याव्यावर्त्तकत्वेऽपि विधेर्लाघवादेकत्वेन गौरवापादकप्रकृतग्रहणव्यावर्तकत्वाशयतया व्याचष्टे—**न त्विति**। प्रकृतानामपि सद्वारस्यैव क्रत्वन्वयस्यावगतेर्द्वारान्तरान्वयार्हंनिर्द्वारक्रत्वन्वयरूपसामान्यसम्बन्धानवगमात्प्रकरणस्य विधिलाघवापादकत्वानुपपत्तेर्विनियोजकत्ववाच्यमित्यापाद्य बलवद्विरोधेन नियामकत्वनिरासार्थं नेतीति भाष्यं श्रुतिनियोज्ये मन्त्रे लिङ्गविरोधोपन्यासादयुक्तमाशङ्क्य, देवताख्यचिह्नरूपलिङ्गयुक्तश्रुतिलक्षणार्थत्वेन लिङ्गशब्दं व्याचष्टे—**लिङ्गं हीति**। प्रसङ्गात्सर्वेऽप्युपरितनाः शुद्धा लिङ्गशब्दाः श्रुतिलक्षणार्था इत्याह—**उपरिष्टादिति**। अविरोधशङ्कार्थमाहेत्यादिभाष्यं व्याचष्टे—**आहेति**। गौरश्व इति वा श्रुत्या यद्गोत्वाद्यवधारितं "विशेषे यदि तन्न स्यात्ततः स्याच्छ्रुतिबाधनमि'ति तद्भूताधिकरणवार्तिकोक्तन्यायेनाविरोध इत्यर्थः। व्यक्तिवाचिनाग्नेय्यादिशब्दानां जातिवाचिगवादिशब्दवैषम्याद्विविरोधसमर्थनार्थं नैतदित्यादिभाष्यं व्याचष्टे—**नैतदिति**। जातिवाचित्वाभावेऽपि वैयाकरणगतेन सम्बन्धवाचित्वं मत्वा व्यक्तीनामवाच्यत्वादप्रकृतमन्त्रव्यक्त्यग्रहणेऽपि श्रुतिविरोधो नास्तीति शङ्काशयविवरणार्थमुच्यत इत्यादिभाष्यं व्याचष्टे—**सामान्यस्येति**। आग्नेयोत्वादिजात्यभावान्मन्त्रदेवतासम्बन्धमेवानेकमन्त्रव्यक्तिसमानत्वात्सामान्योक्त्याऽभिप्रेत्य तस्यैव प्रतिमन्त्रव्यक्तिसमासिरुक्ता। तस्मादित्यनेन नचेहेति भाष्यशेषो व्याख्यातः।

प्रकृतायामपि व्यक्तौ समस्तशब्दार्थसम्भवान्नित्यश्रुत्यबाधेऽपि विकल्पेनाप्रकृतानां बाधात्पक्षे श्रुतिविरोधोऽपरिहार्य इति विरोधसमर्थनाशयविवरणार्थमुच्यते—**सत्यमिति**। भाष्यं लिङ्गात्सामान्यमित्यनेन व्यक्तेरश्रौतत्वात्कस्याश्चित्यागेऽपि अविरोधस्योक्तत्वादयुक्तमाशङ्क्य व्यक्तिवाचित्वाशयत्वेन व्याचष्टे—**इतरस्त्विति**। नत्वितिशङ्काभाष्यं व्यक्तिवाचित्वाशयनिरासार्थत्वेन व्याचष्टे—**न त्विति**।

जिज्ञासापूर्वं व्यक्तिवाचित्वाशयसमर्थनवचः पूर्वं पक्षसमर्थनार्थम् उच्यत इत्याद्यपरमित्यन्तं भाष्यं व्याचिख्यासुर्जिज्ञासाभाष्यं तावदवतारणपूर्वं व्याचष्टे—**परस्त्विति**। किं त्विति निर्णयभाष्यं स्वरूपतस्तावद्व्याचष्टे—**सा चेति**।

तात्पर्यतो व्याख्यातुमाकृत्यधिकरणोक्तजातिवाचित्वविरोधं शङ्कते—**किं पुनरिति**।

विरोधपरिहारार्थं परेषां व्याख्यां दूषयितुमुपन्यस्यति—**नेतीति**। जातिवाचित्वानपन्हवे व्यक्तीनामतत्वा[1]च्छ्रुतिविरोधद्वारपूर्वपक्षासिद्ध्यापत्त्या दूषयति—**तत्त्विति**। स्वमतेन व्याचष्टे—**अत इति**। न केवलं जातेर्वाच्यताऽपन्हूयते किं तु सद्भावोऽपीत्याह—**न चेति**। जात्यन्तराभावेऽप्यूग्जातिरेवात्र जाताख्या[2], देवतान्विता पङ्कजशब्दस्येव

---

१. अश्रौतत्वादिति २ पु० पा०। २. अन्याख्यदेवतेति २ पु० पा०।

पङ्कजननान्विता पद्मत्वजातिर्वाच्या भविष्यतीत्याशङ्कानिरासार्थत्वे देवतैवेति भाष्यं व्याचष्टे—**देवतासम्बन्धमेवेति**। 'आग्नेयोऽष्टाकपालः शिरो वा एतद्यज्ञस्य यदाग्नेयः, आग्नेयो वै ब्राह्मण' इत्यादौ द्रव्यादिष्वपि प्रयोगादिदमभिप्रेत्येत्यतः शब्दार्थः। सम्बन्धाव्यभिचारित्वे तस्यैव वाच्यता कस्मान्नेष्टेत्याशङ्क्याह—**सम्बन्धस्त्विति**। शङ्कित्रा लिङ्गात्सामान्यमिति सामान्योक्त्या सम्बन्धस्य वाच्यत्वेनोपन्यस्तस्यानभिमतत्वसूचनार्थम्—**भाष्यकारेणेत्युक्तम्**। आनन्त्यव्यभिचाराख्यदोषापत्तेर्व्यक्तिवाचित्वं न सम्भवतीत्याशङ्क्याह—**तस्या एव चेति**। अनेन चोपस्थानसाधनमृग्व्यक्तिर्देवतयोपलक्षयितव्येत्येवमानन्त्यव्यभिचारपरिहारार्थत्वेन यथेति भाष्यावयवो व्याख्यातः।

देवताया ऋग्व्यक्त्युपलक्षणत्वाभ्युपगमे प्राग्व्याच्यत्वापत्तेर्देवतात्वस्य च सम्बन्धिरूपत्वात्प्रतिसम्बन्धिनं विनाऽनुपपत्त्या प्रति सम्बन्धिन्या ऋग्व्यक्तेः प्रतीतिसम्भवादवाच्यत्वापत्तिरित्याशङ्क्याह—**पूर्वेति**। देवताविशेष्याया ऋग्व्यक्तेः प्रत्ययवाच्यत्वानभ्युपगमेऽधिष्ठानभूतं प्रकृत्यर्थमग्निं प्रति प्रत्ययार्थस्य देवतात्वस्य विशेषणत्वापत्तेः प्रकृतिप्रत्यययोर्विशेषणविशेष्याभिधानशक्तिभेदविरोधापत्तेः प्रत्ययेन विशेष्याभिधानमेवात्रिरुद्धम्, न तु विशेषणाभिधानमिति साधारणोक्त्या सूचितं गवादिशब्दाल्लक्षणाया अपि व्यक्तिविशेषान्वयसम्भवाद्विशेष्यत्वसिद्धेऽपि न वाच्यत्वकल्पना युक्तेत्याशङ्क्याह—**यत्र त्विति**।

गवादिशब्दस्य जातौ, व्यक्तौ चोभयत्र वाचकत्वस्यास्मृतेः शब्दभेदाभावाच्च तन्निमित्तशक्तिभेदानवगतेरुभयत्र प्रयोगान्यथानुपपत्तिमात्रेण शक्तिद्वयकल्पनापत्तावेकप्रतीत्याविनाभावेनेतरप्रतीतिसिद्धचान्यथानुपपत्तिपरिहाराद्विशेष्यानभिधानं युक्तम्। तद्धितस्य तु "सास्य देवते"ति स्मृत्यैवास्यशब्दनिर्दिष्टे विशेष्ये, देवतात्वे च विशेषणे वाचकत्वानवगमाच्छक्तिद्वयानभ्युपगमेऽपि कल्पनागौरवानापत्तेरुभयाभिधानं युक्तमिति व्यापारयितव्यत्वोक्त्याऽऽभिधानाख्यस्य व्यापारस्यान्यथानुपपत्त्या कल्पयितव्यत्वाभिधानात्सूचितम्। सास्य देवतेति स्मृत्याऽस्यशब्दनिर्दिष्टस्य विशेष्यस्य प्रति सम्बन्धित्वमात्रमवगम्यते। न वाच्यतेत्याशङ्क्य, स्मृत्या प्रतिसम्बन्धिनो वाच्यत्वाऽनुक्तौ लक्षणयाऽवगतिसम्भवेऽप्याग्नेयीशब्दस्य 'तात्पर्याभावापत्तेरग्निशब्दवदाग्नेयीप्रथमोपसदि'त्यादौ विशेष्यसमानाधिकरणः प्रयोगो न स्याद्देवताशब्दवदग्निसमानाधिकरणः प्रयोगः स्यान्न चैत्यद्वयमप्यग्नि। यतो देवताख्यविशेषणमात्रवाची सन्नाग्नेयीशब्दो लक्षणया विशेष्यपर्यन्तं नीयेतेत्याह—**न चेति**।

देवताख्यस्य च विशेषणमात्रस्य तद्धितवाच्यत्वाभ्युपगमे मन्त्रकरणके व्यापारे देवतायाः करणकार्याक्षमत्वेऽपि तद्धितान्तप्रातिपदिकश्रुतिबलस्यात्कारकविभक्तित्वबाधेन सहार्थे तृतीयामभ्युपगम्याग्नीध्रादिवदुपस्थानकर्मत्वे क्षमत्वसम्भवान्न लाक्षणिकं विशेषमाद्रियेतेत्याह—**यदि चेति**। अनेन चानेकव्यक्तिसाधारणे सामान्यरूपस्य देवताख्यस्य विशेषणमात्रस्य तद्धितवाच्यत्वाभ्युपगमे यया देवतयर्ग्व्यक्त्याख्यसाधनं लक्षयितव्यम्, सैवात्रोपस्थाने करणत्वायोगेऽपि करणत्वेनाग्नीध्रादिना समाना सति साधनं भविष्यति किमृग्व्यक्तिलक्षणयेत्येवं व्याख्यान्तरं देवतैवेति भाष्यावयवस्य सूचितम्।

व्यक्तिवाचित्वोपपादनार्थतामस्य सूचयितुमाह—**तस्मादिति**। विस्तराच्च सम्बन्धटीकायां पिङ्गाक्ष्येकहायनीशब्दयोर्द्रव्यवाचित्वोपपादनार्थं सर्वयौगिकानां व्यक्तिवाचितोपपादितेत्याह—**तदिति**। व्यक्तिवाचित्वोपपादनस्याविशेषपक्षसिद्धयर्थत्वोक्त्यार्थं न चेत्याद्युपाददीरन्नित्यन्तं भाष्यं सङ्क्षेपतो व्याचष्टे—**ततश्चेति**। अप्रकृतमपीत्यविशेषोक्तेर्यश्चायमिति भाष्योक्तप्रकृतोपदेशायोगविरोधाशङ्कार्थम्। न त्विति भाष्यं यश्चायमित्येनेनापि प्रकृतमात्रोपदेशायोगोक्तिद्वारेणाविशेषोपदेशस्यैवोक्तत्वेनाविरोधादयुक्तमाशङ्कया, अप्रकृतमात्रोपदेशो यश्चायमिति भाष्येणोक्त इति भ्रान्तस्येयं शङ्केत्येवमुपपादयितुमाह—**न त्विति**। भाष्येऽनुक्तस्याप्यप्रकृतमात्रपक्षस्य परमतेन किं तद्वयतिरिक्ता इति सन्देहवार्त्तिके प्रकृतस्य कार्यान्तरोपयोगेनेत्याद्युपपत्ति[1]र्वार्त्तिके वाद्यनुक्तत्वादाद्यत्वं सामान्यशास्त्रस्य विशेषशास्त्रेण बाध आदिशब्देनोक्तः। 'उच्यतइति परिहारभाष्यं' यश्चायमिति भाष्यार्थविवरणार्थतया व्याचष्टे—**परस्त्विति**। मध्यमताप्याद्यत्ववत्तद्वार्त्तिकोक्तक्रमायैवेत्यनेनाविशेषोक्तेर्यश्चायमिति भाष्यविरोधाख्यदोषाभात्रोक्त्यर्थत्वेन नैवं सतीति भाष्यावयवो व्याख्यातः। अविशेषोक्तेर्भाष्यविरोधाख्यदोषाभावेऽपि करणबाधाख्यो दोषोऽस्त्येवेत्या, शङ्कार्थं नन्विति भाष्यं श्रुत्या प्रकरणबाधस्य युक्तत्वादयुक्तमाशङ्क्याविरोधार्थं श्रुतेः सामान्यवाचिताऽङ्गीकार्येत्येवमाशयत्वेन व्याख्यातुमाह—**न त्विति**। सत्यमिति परिहारभाष्यं श्रुतेः प्रसिद्धार्थत्यागेन युक्त इत्येवमाशयत्वेन व्याख्यातुमाह—**परस्त्विति**।

वैकल्पिकपदार्थमध्ये नित्यमथैकप्रयोगे विरोधाभावान्नित्यं प्रकृतमात्रग्रहणेऽपि श्रुत्यनुग्रहोपपत्तेर्न प्रकरणं बाधनीयमित्याङ्कानिरासार्थम् 'अपि चेत्यादिभाष्यं स्वोपस्कारमनपेक्ष्य प्रमाणोपकारार्थं बुद्धिपूर्वकारिणः प्रकृतायोगात्प्रमाणानुग्रहार्थत्वशङ्कानुपपत्तेरयुक्तमाशङ्क्य लौकिकादिभ्रान्तप्रवादनिरासार्थत्वेन व्याचष्टे—**अपि चेति**। किं तर्हीत्यनेन यदिति भाष्यावयवो व्याख्यातः। प्रवृत्तेरात्मानुग्रहार्थत्वेऽपि प्रकृतमात्रेणापि क्रतूपकाराख्येन फलेन फलवताऽऽत्मानुग्रहसिद्धेन प्रकरणं बाधनीयमित्येवमाशयत्वेन किमितिप्रश्नभाष्यावयवं व्याचष्टे—**तत इति**। उभयथाप्यात्मानुग्रहसिद्धौ दुर्बलप्रमाणानुरोधेन बलवत्प्रमाणफलभूतायाः प्रवृत्तेः सङ्कोचो न युक्त इत्याशयेनोत्तरार्द्धमेतदिति भाष्यावयवमवतारणपूर्वं व्याचष्टे—**अत इति**।

यद्याग्नेयेत्येकरूपैव श्रुतिर्बहुषुप्रकृतेष्वप्रकृतेषु च मन्त्रेषु प्रमाणम्, तथापि क्वचित्प्रकृतमन्त्ररूपेऽर्थे प्रमाणमनुगृहीतमिति प्रमाणानुग्रहणेन पुरुषस्य कृतार्थत्वं प्रकृतमन्त्ररूपाण्यर्थान्तराणि पुरुषार्थौपयिकान्यपि सन्ति न गृह्यन्ते इति, यच्छक्यते, तन्नेत्येतदतः प्रवृत्तेः प्रमाणानुग्रहार्थत्वाभावाद्भवतीत्येवं योज्यम्। प्रवृत्ते प्रमाणानुग्रहार्थत्वाभ्युपगमेऽनिष्टापत्तिमाह—**सकृदिति**। तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। तस्माच्छब्देन किं परामृष्टमित्यपेक्षायामविशेषेत्युक्ते प्राक्तस्यानिर्दिष्टत्वात्सर्वनाम्ना परामर्शयोग-

---

१. चादावुक्त्वादिति २ पु० पा०।

माशङ्क्य लिङ्गप्रत्ययविरुद्धत्वादित्यत्र श्रुतेरविशेषेण सर्वमन्त्रग्रहणसामर्थ्यं विना विरोधायोगाल्लिङ्गयुक्तायां श्रुताविवात्रिशेषग्रहणसामर्थ्योऽपि प्रयुक्त एवेत्येवशब्दोत्कर्षयुक्तेन लिङ्गेनेत्यनेनोक्तम् ।

दाशतय्यामपीत्याद्यपिशब्दालोचनादुपदिष्टेऽपि देशो हीत्यादिभाष्यस्य सावधारणत्वप्रतीतेरविशेषपक्षोक्त्यर्थत्वसम्भवेऽपि सूत्रेऽपि शब्दाभावात्कथमविशेषपक्षप्रतीतिरित्याशङ्क्याह—**सूत्रमपीति** । प्राक्तदाख्यानामतदाख्यानां चानुक्तत्वासूत्रस्याप्राप्तातदाख्यमन्त्रप्रापणार्थत्वावगतेन विधारणार्थता युक्तेत्याशयः । तदाख्या अपि तर्हि कस्मात्स्वशब्देन नोक्ता इत्याशङ्क्याह—**तदाख्येषु त्विति** ॥ २१ ॥

भा० प्र०—श्रुति में ज्योतिष्टोम प्रकरण में कहा गया है कि "आग्नेय्या आग्नीध्रमुपतिष्ठते ऐन्द्रया सदः वैष्णव्या हविर्धानम्", "आग्नेयी अर्थात्, अग्नि देवता-प्रकाशक ऋचा के द्वारा अग्नीध्रनामक मण्डप का उपस्थान अर्थात् पूजा करें, ऐन्द्री = इन्द्र देवता प्रकाशक ऋचा के द्वारा सदः नामक मण्डप का एवं वैष्णवी = विष्णु देवता प्रतिपादक ऋचा के द्वारा हविर्धान नामक मण्डप का उपस्थान करें" । इस स्थल में आग्नेयी आदि ऋचा के द्वारा कर्तव्य है या दाशतयी पठित (ऋग्वेद में उक्त) किसी आग्नेयी आदि ऋचा के द्वारा अनुष्ठेय है—यह संशय है ।

इसमें पूर्वपक्षी का कहना है—दाशतयी पठित आग्नि देवता सम्बन्धिनी किसी ऋचा के द्वारा ही मण्डप का उपस्थान कर्तव्य है कारण, लिङ्ग के अनुसार यही प्राप्त होता है । श्रुति कहती है "आग्नेय्या आग्नीध्रमित्यादि" और अग्नि जिसके देवता हैं—वही आग्नेयी ऋक् इस प्रकार की व्युत्पत्ति के अनुसार "आग्नेयी" कहने पर अग्नि देवता प्रतिपादक कोई भी ऋक् अभिहित होती है, इसलिए "आग्नेय्या" इस पद के लिङ्ग अर्थात् अर्थ प्रकाशन सामर्थ्य के अनुसार अग्नि देवता प्रकाशक किसी भी ऋक् के द्वारा उपस्थान कर्तव्य होने से प्रकरण के अनुसार जिस प्रकरण में यह विधि उक्त है, उस ज्योतिष्टोम यज्ञ प्रकरण के आग्नेयी ऋक् के द्वारा ही आग्नीध्र का उपस्थान कर्तव्य होगा—यह बात नहीं है, क्योंकि, लिङ्ग के द्वारा उपस्थान ही नहीं हो सकता, कारण, जो अन्य कार्य में विनियुक्त होता है, उसका पुनः विनियोग नहीं हो सकता है । क्योंकि, सामन्यतया क्रतुप्रकरणोक्त आग्नेयी ऋक् उपस्थान में विनियुक्त होने से पूर्व ही विशेष वचन के द्वारा वह अन्य कर्म में विनियुक्त होती है, इसलिए, वह अब यहाँ विनियोज्य नहीं है, इसलिए दाशतयी से अन्य मन्त्र का आविर्भाव कराकर उपस्थान कर्तव्य है ।

"अधिकारे" = प्रकरण में, "मन्त्रविधिः" = मन्त्रविधि अर्थात् जो मन्त्र विहित है "अतदाख्येषु च" = अतदाख्य तत्र अर्थात् प्रकरण में आख्या अर्थात् उल्लेख जिसका है वह तदाख्य है अर्थात् जो प्रकरण में उल्लिखित नहीं है, वैसे मन्त्र भी अर्थात् प्रकरण में उल्लिखित एवं प्रकरण में अनुल्लिखित मन्त्र में "शिष्टत्वात्" = शिष्ट अर्थात् "आग्नेयी" आदि शब्द के द्वारा साधारण भाव में उपदिष्ट होती है । यह पूर्वपक्ष है ॥ २१ ॥

## तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ २२ ॥

**शा० भा०—तदाख्यो ज्योतिष्टोमसमाख्यात एव ग्रहीतव्यः। कुतः? प्रकरणोपपत्तिभ्याम्। प्रकृतो ह्यसौ। प्रकृतप्रत्ययश्च न्याय्यः। कथम्? न ज्योतिष्टोमं प्रति मन्त्रस्य व्यापारविधानमुपपद्यते, प्राप्तत्वादेव। व्यापारविशेषविधानं तूपपद्यते। अप्राप्तत्वाद् व्यापारविशेषस्य। अनपेक्ष्य च प्रकरणं दाशतये विधीयमाने वाक्यं भिद्येत। उपस्थानं च कुर्यात्। तच्चैवं लिङ्गेनेति ॥ २२ ॥ सि० ॥**

त० वा०—अधिकाराख्योऽधिकृतसंज्ञक इति। अथवा तत्राऽऽख्यायत इत्येवं तदाख्यः। तदीयत्वेन वा य आख्यातः, स ग्रहीतव्यः इति। कुतः?

क्रतुकार्यविशेषोऽयं मन्त्रस्यास्योपदिश्यते।
सामान्यप्राप्त्यपेक्षश्च विशेषो नित्यमिष्यते॥

'आग्नेय्याऽऽग्नीध्रम्' इति हि नाऽऽग्नीध्रस्वरूपप्रयुक्तमुपस्थानम्। नापि स्वतन्त्रं पुरुषार्थम्, फलाश्रवणात्। अतोऽवश्यमेवमाश्रयितव्यं ज्योतिष्टोमापूर्वसिद्ध्यर्थमाग्नीध्रोपस्थानं करोतीति। ततश्च ज्योतिष्टोमकार्यविशेषविधानमेतदिति निश्चीयते। स च विशेषः[1] सामान्यप्राप्तौ सत्यां शक्यो विधातुम्, नान्यथा। तत्र यदि द्वावपि सामान्यविशेषसंबन्धाविदमेव वाक्यं कुर्यां ततो वाक्यं विद्येत।

ननु चानेन विशेषमात्रमग्नीध्रसंबन्धः क्रियते[2]। प्रकरणात्सामान्यसंबन्धः सेत्स्यतीति। सत्यं प्रकरणात्सिध्यति, न तु श्रुतिमकल्पयित्वा। सा च श्रुतिः क्लृप्तायां सत्यां, कल्पयितुं न शक्यते। ननु विशेषे विधीयमानेऽर्थादेव सामान्यमन्तर्भविष्यति। न। अर्थस्यापि[3] प्रकरणतुल्यत्वात्। यदि त्वाग्नीध्रसंबन्धे कृते भोजनादिवत्तृप्तिर्ज्योतिष्टोमसंबन्धोनान्तरीयकत्वेनानुनिष्पादी स्यात्, ततः शास्त्रं नाऽऽयस्येत्। अयं तु द्रव्यत्वरूपेण संबन्धस्य निष्फलत्वात्प्रथमतरमाश्रीयते। न च शास्त्रादृते तदुपपद्यत इत्यस्त्येवाश्रुतकल्पनाक्लेशः।

किं च—

लौकिकेऽत्युपपन्नत्वात्संबन्धोऽयं यथाश्रुतः।
नैकान्तात्कर्मसंबन्धमुपपादयितुं क्षमः॥

तेनावश्यं प्रकरणानुमितैव श्रुतिः कल्पयितव्या। सर्वत्र चैवमादावर्थापत्तेः प्रामाण्यम्। सा चान्यथानुपपत्त्या भवति। तद्यदीदं विशेषसंबन्धवाक्यं सामान्यसंबन्धश्रुतिमकल्पयन्नोपपद्येत ततः कल्पयेत्। उपपद्यते त्वस्य क्लृप्तसामान्य-

---

१. क. कार्यविशेषः। २. क. क्रियताम्। ३. क. अस्यापि।

संबन्धास्वृक्षु स्वार्थमात्रविधानम् । तावता च सिद्धार्थत्वान्न गुर्वीं कल्पनामवलम्बते ।

तद्दर्शयति—**न ज्योतिष्टोमं प्रति मन्त्रस्य व्यापारविधानमुपपद्यते**। अन्यत **एव प्राप्तत्वात्**। यथा वसन्तादिश्रुतिभिः प्राप्तेर्न कामश्रुतय आधानाक्षेपसमर्था इत्याहिताग्नीनेवाधिकुर्वन्ति । तथैताः प्राप्तज्योतिष्टोमसंबन्धाधिकारिण्य इत्यभिप्रायः। इतरथा यदि तावदप्रकृता एव गृह्यन्ते, ततो गत्यन्तरसंभवे सति वेदेनानभ्युपगतः सन्नतिभारो निष्प्रमाणक आपद्येत ।

अथाविशेषग्रहणं, तथाऽप्येकत्र प्राप्तसामान्यसंबन्धानुवादेन[1] विशेषमात्रकरणात्, अपरत्र च सामान्यविशेषप्रापणाद्वैरूप्यनिमित्तोऽपि वाक्यभेदः स्यात् । प्रकृतग्रहणे न कश्चिद्दोषः । एवं च प्रत्यासत्तेः प्रत्ययविप्रकर्षो न भविष्यति ।

ननु च प्रकरणेऽपि यथाभिलषितः सामान्यसंबन्धो नैव कस्यचिदस्ति। यद्यपि स्यात्, तथाऽपि कार्यान्तरे विनियुक्त इत्यादि विरुध्येत । उच्यते । नैष दोषः । कार्यान्तरविनियुक्तानामेव ग्रहणात् । नन्वेवं सति सामान्यसंबन्धप्राप्तिवाचोयुक्तिर्न घटते । कथं न घटते, यदा सर्वविशेषेषु सामान्यमन्तर्गतम् । तेन यत्तत्र विशेषरूपं तद्विशेषान्तरेऽनुपयुज्यमानत्वादविवक्षितं कृत्वा तद्द्वारसिद्धसामान्याश्रयणमाणविरुद्धम् ।

यस्तु भाष्यकारेण वाक्यभेदो दर्शितः । स सर्वविशिष्टविधानेषु तुल्यः । यागं कुर्यात् तं च सोमेनेत्यपि शक्यं दर्शयितुम् । अपूर्वकर्मविधानाच्च नायमन्येभ्यो विशिष्टविधानेभ्यो न्यूनतरो विज्ञायते । सिद्धान्तेऽपि वान्यलिङ्गानाश्रयणात्, **तच्चैवं लिङ्गेने**त्येतदस्त्येव । न ह्यविधीयमानः प्रकृतोऽप्येवलिङ्गनुपस्थानाङ्गम् । तस्माद्यथाकथंचित्पूर्वोक्त एवात्र वाक्यभेदो योजयितव्यः । तत्र, **उपस्थानं च कुर्यादिति**। एतज्ज्योतिष्टोमकार्यविशेषप्रदर्शनं, **तच्चैवंलिङ्गेनेति**—प्रकरणानिरपेक्षाप्राप्तज्योतिष्टोमसंबन्धदेवतालिङ्गोपलक्षितमन्त्रमात्रप्रदर्शनार्थम् ॥ २२ ॥

न्या० सु० पूर्वपक्षसूत्रस्थेनातदाख्यशब्देनाऽप्रकृतानां चशब्देन च प्रकृतानां विधेरुक्तत्वासिद्धान्तसूत्रे तदाख्यपुनर्वचनस्यान्यपरिसंख्यार्थत्वेन तदाख्य एव मन्त्रो विधीयत इत्येवं कर्मव्युत्पन्नविधिशब्दानुषङ्गेण व्याख्यार्थं तदाख्य इति भाष्यं तच्छब्देनानिर्दिष्टज्योतिष्टोमपरामर्शायोगादयुक्तमाशङ्क्याधिकारविषयत्वाद् बुद्धिस्थस्य ज्योतिष्टोमस्य परामर्शसम्भवं सूचयंस्त्रेधा व्याचष्टे—**अधिकाराख्य इति**। ज्योतिष्टोमाङ्गे ज्योतिष्टोमसंज्ञकत्वस्यौपचारिकत्वेनापरितोषाद्व्याख्यान्तरद्वयम् । कुत इति प्रश्नोत्तरत्वेन सौत्रप्रकरणशब्दव्याख्यार्थं प्रकृतौ हीति भाष्यं तात्पर्यतो व्याचष्टे—**कुत इति**। अयमाग्नीध्रोपस्थानाख्यः

१. क. सामान्यानुवादेन । सामान्यसंबन्धेन ।

पदार्थः क्रतुसम्बन्ध्यनुष्ठेयविशेषः सन्मन्त्रकार्यत्वेनोपदिश्यते। न चानेन मन्त्रेण क्रतुसम्बन्धिकिञ्चित्कार्यमिति सामान्यतः क्रतुसम्बन्ध्यनुष्ठेयान्वयप्राप्तिं विना तद्विशेषान्वयानाकाङ्क्षणाच्छक्यो विधातुं स्वरसतः पदार्थस्वरूपमात्रान्वयप्रतीतेः क्रत्वन्वयाधीनत्वाच्च सामान्यतः क्रत्वङ्गान्वयस्याप्रकृतानां क्रत्वन्वयाभावान्न सामान्यतः क्रत्वङ्गान्वयप्राप्तिरस्तीत्याशयः।

पूर्वार्द्धमुपपादयितुमाह—**आग्नेयेति**। आधानवत्संस्कारकर्मत्वेऽप्युपस्थानस्याग्नीध्रादिमनुष्यस्वरूपप्रयुक्तत्वक्रतुकार्यविशेषत्वं न स्याद्धिरण्यधारणवत्स्वतन्त्रपुरुषार्थत्वं वा। न च क्रत्वैकान्तिकस्याप्याग्नीध्रादेर्जुह्वादिवल्लौकिकत्वात्स्वरूपेण प्रयोजकत्वं सम्भवति फलाश्रवणाच्च न स्वतन्त्रपुरुषार्थत्वम्। अतो बलादुपस्थानस्य क्रतुकार्यविशेषत्वावगतेर्ज्योतिष्टोमापूर्वसिद्धयर्थम् उपस्थानमाग्नेय्या करोतीति शास्त्रार्थस्याश्रयितव्यत्वात् ज्योतिष्टोमस्थस्य कार्यविशेषस्य मन्त्रकार्यत्वेन विधिर्निश्चीयत इत्यर्थः।

उत्तरार्द्धमुपपादयितुमाह—**सचेति**। स्वरसतः पदार्थस्वरूपान्वयप्रतीतेराकाङ्क्षां च विना क्रत्वन्वितरूपलक्षणायोगादित्याशयः। सामान्यान्वयापेक्षत्वेऽपि विशेषान्वयस्य कथमप्रकृतमन्त्रनिवृत्तिरित्यपेक्षायामप्रकृतविधौ वाक्यभेदापत्तिमाह—**तत्रेति**। प्रकरणादेव सामान्यान्वयसिद्धेर्वाक्यभेदपरिहारं शङ्कते—**ननु चेति**। अनेन च न्याय्यतोक्तिसूचितवाक्यभेदपरिहारशङ्कार्थत्वेन कथमिति प्रश्नभाष्यं व्याख्यातम्। श्रुतिकल्पना विना प्रकरणस्याविनियोजकत्वात्प्रकृतेषु च प्रकरणाम्नानात्सामान्यान्वयाविषयायां श्रुतौ क्लृप्तायां सत्यामाग्नेयादिवाक्यकृतविशेषान्वयसिद्धेरप्रकृतेषु सामान्यान्वयविषयश्रुतिकल्पनस्याशक्यत्वात्प्रकरणेन सामान्यान्वयासिद्धेरपरिहार्यो वाक्यभेद इति, तज्ज्योतिष्टोमं प्रतीत्युत्तरभाष्यसूचितमर्थमाह—**सत्यमिति**। प्रकरणात्सामान्यान्वयो सिध्यन्नपि विशेषान्वयविध्यन्यथानुपपत्तिलक्षणयाऽर्थापत्त्या सेत्स्यतीत्याशङ्कते—**न त्विति**।

श्रुतार्थापत्तेः शब्दकल्पत्वेनार्थापत्त्याख्यस्यार्थस्यापि श्रुतिकल्पनापेक्षया प्रकरणातुल्यत्वान्न श्रुतिमकल्पयित्वार्थात्सान्यावगतिः सेत्स्यतीति परिहरति—**नेति**। सामान्यतः क्रत्वङ्गान्वयापादकत्वेनात्र क्रत्वङ्गस्य सामान्यान्वयोक्त्याऽविवक्षितत्वात्तस्य यागान्वयद्वारत्वेनानुनिष्पादितयाऽशास्त्रविषयत्वान्न विधायके श्रुतिकल्पनापेक्षेत्याशङ्क्याह—**यदि हीति**। प्रयोगकालेऽनुनिष्पादित्वेऽपि शास्त्रार्थवधारणकालेऽनेन मन्त्रेण क्रतोरुपकर्तव्यमिति सामान्यान्वयानवगमे स्वरसतोऽवगतस्याग्नीध्रस्वरूपान्वयस्य त्यागायोगात् क्रत्वन्वयस्याग्नीध्रान्वयानुनिष्पादित्वानुपपत्तेः शास्त्रविषयताऽस्त्येवेत्याशयः।

क्रत्वव्यभिचारित्वेनाग्नीध्रस्य तदन्वयानुनिष्पादित्वं क्रत्वन्वयस्य प्रयोगकालेऽप्यस्त्येवेत्याशङ्क्याऽग्नीध्रस्य जुह्वादिवत् क्रत्वव्यभिचारित्वे मन्त्रस्य क्रत्वन्वयात्प्रागाग्नीध्रस्वरूपान्वयोपपत्तेः क्रत्वव्यभिचरिताहवनीयादिस्वरूपान्वितस्याधानस्यैव न क्रत्वन्वयोऽनुनिष्पादीत्येवं परिहारसूचनार्थं न केवलं शास्त्रार्थावधारणकालेऽनुनिष्पादित्वं नास्ति,

किन्तु प्रयोगकालेऽपीत्याह—**किं चेति**। क्रत्वङ्गत्वानपेक्षप्रत्यक्षगम्यमण्डपरूपाशया लौकिकोक्तिः। क्रत्वङ्गत्वानपेक्षगम्यमनुष्यरूपाशयालौकिकोक्तिः। ततश्च क्लेशेनाप्यर्थाच्छ्रुतिकल्पनाशक्तेर्यद्यवश्यं श्रुतिः कल्पयितव्या, ततः प्रकरणान्न तत्क्लृप्तायां सत्यां कल्पयितुं शक्येत्याशयेनोपसंहरति—**तेनेति**। इदं क्लृप्तायाः श्रुतेः प्रकृतमन्त्रमात्रविषयत्वात्। अप्रकृतेषु सामान्यान्वयश्रुतिकल्पनाग्नेयीवाक्यस्य प्रकरणम्नानान्न विरुद्धेत्याशङ्क्याह—**सर्वत्र चेति**। क्लृप्तसामान्यान्वयप्रकृतमात्रविषयत्वेनाग्नेयीवाक्योपपत्तेः सामान्यान्वयकल्पनापादकसर्वाग्नेयीविषयत्वाभ्युपगमो न युक्त इत्याशयः।

उक्तेऽर्थे भाष्यं योजयति—**तदिति**। अप्रकृतानां ज्योतिष्टोमं प्रत्यनेन मन्त्रेण व्याप्रियेतेत्वं रूपसामान्यान्वयाप्राप्तेरव्यापकत्वं हेतोराशङ्क्य, प्रकृतविषयत्वेनापि वाक्यौपपत्तौ कल्पनागौरवापादकसर्वविषयत्वाभ्युपगमायोगाद्धेतोरर्थानुष्ठापकत्वं यथेत्यनेनोपपादितम्। अनेन च भाष्येण द्विविधोऽपि पूर्वपक्षो निरस्तो भवतीति सूचयितुमाह—**इतरथेति**। सिद्धान्तेऽपि प्रकरणानुरोधाच्छ्रुतिसङ्कोचापत्तिलक्षणो दोषोऽस्तीत्याशङ्क्याह—**प्रकृतेति**। विधिश्रुत्या च स्वव्यापारलाघवायाग्नेयीश्रुतिसङ्कोचस्यापेक्षितत्वात्तस्याश्च पुरुषप्रवृत्तिहेतुत्वेन श्रुत्यन्तरेभ्यो बलीयस्त्वान्न सङ्कोचो दोष इत्याशयः। वरं प्रकृतानां प्रत्यासन्नत्वाच्छीघ्रं बुद्धेर्बुद्धिविलंबानापत्तिलक्षणो गुणः प्रकृतग्रहणे भविष्यतीत्याह—**एवं चेति**।

प्रकृतेष्वपि द्वारान्तरात्मकविशेषान्वयार्हनिर्द्वारक्रत्वन्वयलक्षणसामान्यान्वयस्य क्लृप्तत्वाद्विशेषान्वयविध्ययोगाशङ्कानिरासार्थत्वेन सौत्रोपपत्तिशब्दव्याख्यार्थव्यापाराविशेषेति भाष्यं व्याख्यातुं शङ्कां तावदाह—**ननु चेति**। वेदशाखानन्त्याद्योग्यानुपलब्धभावेनाभावनिश्चयायोगमाशङ्क्य, यश्चायं प्रकृतः, स कार्यान्तरे विनियुक्तो यः कस्मिंश्चिद्विशेषेणोपदिष्ट इति च भाष्यद्वयसंवादेनाऽभावनिश्चयो यद्यपीत्यत्यनेनोक्तः। सद्भावाभ्युपगमेऽपि भाष्यविरोधाख्यो दोषोऽस्तीत्यपिशब्दार्थः। कार्यान्तरे विनियुक्तस्यापि मन्त्रस्योपस्योपस्थानाख्यव्यापारविशेषविधानमुपपाद्यतइत्येवं भाष्याव्याख्यां सूचयन्परिहारमाह—**उच्यत इति**। कार्यान्तरविनियुक्तानामप्युपस्थानाख्यव्यापारविशेषान्वयित्वेन पुरोडाशकपालस्येव तुषोपवापान्वयित्वेन ग्रहणसम्भवान्निर्द्वारक्रत्वन्वयलक्षणसामान्यान्वयाभावो दोषः। नापि भाष्यविरोध इत्यर्थः।

कार्यान्तरविनियुक्तानां तर्हि विशेषान्वयस्यैव प्राप्तत्वात्सामान्यान्वयेनाभिप्रेतस्य ज्योतिष्टोमं प्रति व्यापारस्य प्राप्तत्वादेवेति भाष्यावयवेन प्राप्त्युक्तिर्विरुध्येतेत्याशङ्कते—**नन्विति**। विशेषान्तगर्तत्वेन प्राप्तिरभिप्रेता न स्वातन्त्र्येणेति परिहरति—**कथमिति**। विशेषान्तर्गतस्य सामान्यस्य नैराकाङ्क्ष्येण विशेषान्तरान्वयानर्हत्वात् प्राप्त्युक्तिरनर्थिकेत्याह—**तेनेति**। प्रकृत्यर्थत्वेन निराकाङ्क्षस्यापि प्रयाजादेर्विकृत्याकाङ्क्षयाऽऽकाङ्क्षामुत्पाद्य विकृत्यर्थत्ववत्स्तोत्रादिद्वारविशेषान्वयेन निराकाङ्क्षस्यापि क्रत्वन्वयलक्षणस्य सामान्यान्वयस्योपस्थानाख्यद्वारान्तराकाङ्क्षामुत्पाद्य द्वारान्वयेऽस्ति योग्यतेत्याशयः। विशेषरूपाविवक्षोक्त्याकाङ्क्षोत्थापनं सूचितम्। अनेन चोपस्थानाख्यव्यापारविशेषविधान-

वेलायामविवक्षितत्वात् स्तोत्रादिव्यापारविशेषस्येत्येवं सामान्यान्वये प्रासुक्त्यानर्थक्यशङ्का-निरासार्थत्वेनाप्राप्तत्वादिति भाष्यावयवो व्याख्यातः। श्रुतेर्दुर्बलप्रकरणगम्यसामान्या-न्वयापेक्षा न युक्तेत्याशङ्क्य वाक्यभेदपरिहारार्थं दुर्बलापेक्षाप्युपपन्नेत्येवं निरासार्थत्वेना-प्युपपत्तिशब्दव्याख्यार्थयनपेक्ष्य चेति भाष्यमुपस्थानमन्त्रलक्षणानेकार्थविधिनिमित्तवाक्य-भेदोक्त्यर्थत्वेनाभासमानमाक्षिपति **यस्त्विति**। विशिष्टविधिसम्भवेऽपि विशेषणविशेष्य-रूपानेकार्थविधानाद्वाक्यभेदोऽभ्युपगम्यमानः सिद्धान्तेऽप्यपरिहार्य्यं स्यादित्याह—**सिद्धान्तेऽपि चेति**। तत्रेतिवार्त्तिकोक्तसामान्यविशेषान्वयलक्षणानेकार्थविधावपि विशेषान्वयविध्यन्यथा-नुपपत्तिप्रसूतेन विध्यन्तरेण सामान्यान्वयविधानाद्विशिष्टविधावपि प्रत्ययावृत्त्यभावेऽपि श्रुतार्थविधिमात्रेण कृतार्थस्य प्रत्ययस्याश्रुतार्थविध्याक्षेपाशक्तेः श्रुतस्य प्रत्ययस्यावृत्ति-मापाद्य विधिगौरवमेव वाक्यभेदत्वेनोपचरितमित्येवं भाष्यं समाधातुम्—**तस्मादिति**। कथं पूर्वोक्तो वाक्यभेदोऽत्र भाष्ये योज्यतइत्यापेक्षायामुपस्थानस्याग्नीध्रस्वरूपान्वये नैष्फल्यापत्तेर्ज्योतिष्टोमाङ्गभूताग्नीध्रान्वयावगमेन ज्योतिष्टोमापूर्वसिद्धयर्थत्वावसायाज्ज्योति-ष्टोमापूर्वसिद्धयर्थमुपस्थानमेवंलिङ्गेन मन्त्रेण कुर्यादित्येवं मन्त्रस्य ज्योतिष्टोमाय कार्य-विशेषान्वयोक्त्यर्थत्वेनोपस्थानं चेतिभाष्यावयवम्, मन्त्रस्य चोपस्थानस्वरूपार्थत्वे नैष्फल्या-पत्तिस्तच्चेतिभाष्यस्थस्य तच्छब्दस्य ज्योतिष्टोमकार्यविशेषभूतोपस्थानपरामर्शत्वावगमात्तत्र च विशेष्यान्वयस्योपस्थानं चेति भाष्योक्तत्वात्पौनरुक्त्यापत्तेर्विशेषाक्षिप्तकार्यसामान्य-परामर्शे तात्पर्यावसायात्तच्चेति भाष्यावयवसामान्योक्त्यर्थत्वेन व्याचष्टे—**तत्रेति**।

प्रदर्शनशब्दस्य करणव्युत्पन्नत्वात्तत्र भाष्यमध्ये उपस्थानं चेत्येतद्भाष्यं विशेषप्रदर्शनम्। तच्च प्रकरणनिरपेक्षस्याप्राप्तज्योतिष्टोमान्वयस्य देवतारूपेण चिह्नेनोपलक्षितस्य मन्त्र-मात्रस्य ज्योतिष्टोमान्वयप्रदर्शनार्थमित्यर्थः। ज्योतिष्टोमान्वयस्य प्रदर्शनीयत्वसूचनाया-प्राप्ततामुक्तामुपपादयितुं प्रकरणनैरपेक्ष्योक्तिः। आग्नीध्रसदोहविर्द्धानानां क्रत्वैकान्तिकत्वात्, तत्स्वरूपान्वयमात्रविधानेऽप्यनुनिष्पादितत्वेन क्रत्वन्वयसिद्धेर्वाक्यभेदपरिहारशङ्कानिरासार्थ-त्वेनानर्थकश्चोपदेशः स्यादसम्बन्धात्, फलवता ॥ २२ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि "तदा-ख्या वा"—ज्योतिष्टोम प्रकरण में उल्लिखित आग्नेयी आदि ऋक् ही उपस्थान कर्म में प्रयोज्य है, इसका कारण प्रदर्शन करते हुए कहते हैं "प्रकरणोपपत्तिभ्याम्", क्योंकि इसमें प्रकरण का अनुग्रह एवं इस पक्ष में उपपत्ति अर्थात् युक्ति भी है। आग्नेयमन्त्र ज्योतिष्टोम प्रकरण में पठित है, ज्योतिष्टोम प्रकरण के जिस कर्म में आग्नेय मन्त्र की आवश्यकता है उसका सामान्यतः उल्लेख रहता है, किन्तु, कोई आग्नेय मन्त्र, जिसका निर्देश नहीं है, उस स्थल में ज्योतिष्टोम प्रकरण का वह आग्नेय मन्त्र ही प्रथम ग्राह्य होता है, क्योंकि वही सन्निहित है, किन्तु अन्य मन्त्र दूर में स्थित होने से विप्रकृष्ट है। "सन्निहिते बुद्धिरन्तरङ्गा" इस नियम के अनुसार बाधा न रहने पर सन्निहित का ही प्रथमतः ग्रहण होता है आग्नेयी ऋक् आदि ज्योतिष्टोम क्रतु के प्रकरण में पठित होने से

उसका जो क्रतु प्रयुक्त व्यापार = कर्म का साधन है, वह भी प्रकरण के बल से प्राप्त होने से उसका पुनः विधान करना सङ्गत नहीं है, किन्तु ये किसी व्यापार के साधन हैं— इस प्रकार जिज्ञासा का निराकरण होने से उस व्यापार का वैशिष्ट्य विधान करना ही समीचीन है, कारण, इसमें केवल विशेष का विधान होने पर लाघव होता है। पक्षान्तर में अप्राकरणिक अन्य मन्त्र का आविर्भाव करने पर उसका उस प्रकरण के क्रतु के व्यापार की साधनता का विधान एवं उसके विशेष व्यापार के साधनता का विधान इस प्रकार सामान्य-विशिष्ट विशेष विधान करने पर विधि गौरव होता है। इसी का भाष्यकार ने वाक्य भेद के रूप में उल्लेख किया है।

"तदाख्यः" = तदाख्य उस प्रकरण में उल्लिखित मन्त्र ग्रहणीय, "वा" = पूर्वपक्ष के निरास के लिए है, "प्रकरणोपपत्तिभ्याम्" = क्योंकि इसमें प्रकरण अर्थात् सन्निधिपाठ एवं उपपत्ति = युक्ति है। सिद्धान्त ॥ २२ ॥

## अनर्थकश्चोपदेशः स्यादसंबन्धात्फलवता न ह्युपस्थानं फलवत् ॥ २३ ॥

**शा० भा०—ननु च प्रकरणाज्ज्योतिष्टोमस्योपकारकं स्यात्। यद्युपस्थान-ज्योतिष्टोमसंबन्धो विवक्ष्येत, तदोपस्थानं ज्योतिष्टोमे उपदिश्येत। प्रकरणा-त्तेनैकवाक्यतामियात्। यदा तु खलूपस्थानस्य मन्त्रसंबन्धो विवक्ष्यते, सर्वोप-स्थानेषु तदा मन्त्रः प्राप्नोति प्रकरणं बाधित्वा। न प्रकरणं विशेषकं भवितु-मर्हति। उभयसंबन्धे वाक्यभेदः। अस्मत्पक्षे न पुनरयं दोषः। येनाऽऽग्ने-येनैन्द्रेण वा ज्योतिष्टोमे व्यापारः क्रियते, तेनोपस्थानव्यापारविशेषः। तदा ज्यौतिष्टोमिको विधीयते। अन्यत्सर्वमनूद्यत इति, न दोषो भवति।**

**अथवा, आग्नीध्रहविर्धानसदःसंबन्धमात्रं विधीयते। उपतिष्ठत इत्ययमनु-वादः। अनेन मन्त्रेणाऽऽग्नीध्रमुपतिष्ठत इति—समासीदति, इत्यर्थः। तस्मा-त्प्रकृता मन्त्रा एवंजातीयका उपादातव्या इति ॥ २३ ॥**

त० वा०—अथ वाक्यभेदं परिहर्तुं यथाश्रुताग्नीध्राद्युपस्थानसंबन्धमात्र-मित्युच्यते। तत्राऽऽह—**अनर्थकश्चोपदेशः स्यादसंबन्धात्फलवतेति।**

**ननु प्रकरणाज्ज्योतिष्टोमस्योपकारकं स्यादिति**—अन्यतः सामान्यसंबन्ध-सिद्धिं मन्यते। न त्वसावप्यविधीयमानः संभवतीति दर्शयति—**यद्युपस्थान-ज्योतिष्टोमसंबन्धो विवक्ष्येत। ततस्तेनैकवाक्यतामियात्। यदा तु खलु** तमविधायोपस्थानमनूद्य विशिष्टविधानेन वा मन्त्रसंबन्धो विधीयेत, तदा लौकिके निष्फले शुद्ध एवोपस्थाने मन्त्रः प्राप्नोति, अनतुमितश्रुतिप्रकरणं बाधित्वा।

न हि तदा प्रकरणाद्विशेषप्रत्ययः। अस्मत्पक्षे तु प्रथममेव ज्योतिष्टोमेन स्वीकृतत्वान्नान्यत्र प्राप्तिरित्यर्थवत्ता, लाघवं च।

अथवाऽऽग्नीध्रादीनां कर्माङ्गभूतानां मन्त्राणां च करणानां संबन्धे विधीयमान उपस्थानमप्यनूद्यत इति लघुतरम् ॥ २३ ॥

न्या० सु०—न ह्युपस्थानं फलवदिति सूत्रमवतारयति—**अथेति**। क्रत्वैकान्तिकत्वेऽप्याग्नीध्रादीनामुपस्थानमस्य तत्स्वरूपान्वयिधर्मत्वेन तद्द्वारक्रत्वन्वयायोगादाग्नीध्रादिशब्दानां च संस्कारनिमित्तत्वाभावेनाहवनीयादिवत् स्वरूपनिष्पत्त्यैवैसंस्कारानपेक्षणान्नैष्फल्यापत्तेरुपस्थानस्वरूपमन्त्रोपदेशः सन्मात्रस्य फलवदसम्बन्धापत्तेरनर्थकः स्यादित्येवमर्थत्वेन स्पष्टत्वात्फलवतेत्यन्तं सूत्रावयवमव्याख्याय, न हीति सूत्रावयवस्याग्नीध्रादिद्वारोपस्थानस्य क्रत्वन्वयायोगेऽपि प्रकरणात्क्रत्वन्वयोपपत्तेः फलवत्त्वं भवीष्यतीत्याशङ्कानिरासार्थत्वेनावतारणार्थं नन्विति भाष्यं, गौरवलक्षणवाक्यभेदपरिहारोपयोगपर्यन्तत्वेन व्याचष्टे—**नन्विति**। प्रकरणात्क्रत्वन्वयः प्रतीयमानोऽप्यविधीयमानोऽननुष्ठानान्न निष्पद्यतइति सामान्यान्वयस्यापि विधेयत्वाद्गौरवे सत्यपरिहार्यत्वापत्तेः क्रत्वन्वयशून्यमुपस्थानं न फलवदित्येवं शङ्कानिरासार्थत्वेन 'न हीति सूत्रावयवव्याख्यार्थं यदीत्याद्यर्हतीत्यन्तं भाष्यं तात्पर्यतस्तावद्व्याचष्टे—**न त्विति**। सामान्यान्वयोऽप्यविधीयमानो न निष्पाद्यत इत्यर्थः। एतदेव भाष्यं स्वरूपतो व्याचष्टे—**यदीति**। मन्त्रविशिष्टस्याग्नीध्राद्युपस्थानस्य प्रकरणगम्यो ज्योतिष्टोमान्वयो यद्यनुष्ठातुमिष्येत, तदा विधिं विनाऽनुष्ठानायोगात् ज्योतिष्टोमान्वयित्वेनोपस्थानमुपदिश्येतेति स्पष्टिकरणायोपदेशोक्त्या भाष्ये क्रत्वन्वयविध्यापत्त्युक्तावपि विवक्षोक्तोर्विधिसार्थत्वाभ्युपगमे तथैव क्रत्वन्वयविध्यापत्त्युक्तिः सेत्स्यतीति मत्वा, तदेति भाष्यावयवमुपेक्ष्य भाष्यं योजितम्। स्वरूपमात्रेणोपस्थानस्य मन्त्रान्वयविधावुपस्थानमात्रे मन्त्रप्राप्तिरुक्तेति व्याख्यातुम्—**क्रत्वन्वयमविधायेत्युक्तम्**। यथा कथं चित् प्राप्तोपस्थानानुवादेन मन्त्रविधौ अनुवाद्यस्योपस्थानस्याग्नीध्रादिना विशेष्टुमशक्यत्वादाग्नीध्राद्यनुवादेन मन्त्रविशिष्टोपस्थानविधावपि प्रायश्चित्तार्थावभृथस्नानवत्क्रत्वन्वयानभ्युपगमे स्वतन्त्रप्रधानकर्मत्वापत्तेः सर्वोपस्थानेषु मन्त्रप्राप्त्युपपादनायानूद्य विधिर्विशिष्टरूपेण—**वेत्युक्तम्**। क्रत्वन्वयानपेक्षत्वोक्त्यर्थत्वेन सर्वशब्दव्याख्यार्थं लौकिकोक्तिः। क्रतूपकारफलाभावेऽपि पुरुषार्थरूपेण फलेन फलवत्तामाशङ्क्य फलाश्रुतिः शुद्धोवस्योक्ता। अनुवाद्यस्याऽप्युपस्थानस्य 'द्विहंविषोऽवद्यतीतिवद्विधेयस्यापि वा दशापवित्रेण ग्रहं सम्मार्ष्टीतिवत्प्रकरणादिशेषलाभमाशङ्क्य प्रकरणबाधं भाष्योक्तं सम्मार्गविदानवैषम्येणोपपादयितुमननुमितश्रुतितोक्ता। फलवत्त्वोयोपतिष्ठेतेति श्रुत्या प्रकृतापूर्वसाधनांशलक्षणार्थं प्रकरणापेक्षणादबाधितेन प्रकरणेन श्रुतिमनुमायोपस्थानं विशेष्यतइत्याशङ्कानिरासार्थं न प्रकरणभाष्यावयवं प्रकरणस्यान्यनिवृत्तौ व्यापाराभावेऽप्यपूर्वसाधनांशलक्षणाद्वारार्थाद्विशेषकत्वोपपत्तेरयुक्तमाशङ्क्य क्रत्वन्वयाविधानेऽपूर्वलक्षणाभावेन। विशेषकत्वोपपादनार्थम्—**नहीत्युक्तम्**।

प्रकृतस्यापि तर्हि मन्त्रस्योपस्थानमात्रान्वयादानर्थक्यं क्रत्वन्वितस्याचोपस्थानस्य मन्त्रान्वयार्थं क्रत्वन्वयविधौ गौरवं स्यादित्याशङ्क्य, प्रकृतस्य क्लृप्तक्रत्वन्वयत्वात्क्रत्वङ्गो-पस्थानविषयत्वावगतेर्वैषम्योक्त्यर्थमस्मत्पक्षे पुनरित्यादिभाष्यं व्याचष्टे—अस्मत्पक्षेत्विति। लाघवं चेत्यनेनान्यदिति भाष्यावयवो व्याख्यातः। अतिलाघवोक्त्यर्थमथ वेति भाष्यं व्याचष्टे—अथ वेति। आग्नीध्रादीनां मन्त्राणां च प्राप्तत्वादुभयप्राप्तौ सम्बन्धविधानस्य 'यत्रोभौलक्षणत्वेन' तत्र स्वशब्देन सम्बन्धो विधीयतेशा० भा० पृ० ८६९इति जाघन्य-धिकरणभष्ये वक्ष्यमाणत्वाद्धात्वर्थाविधानेऽपि च प्रत्ययार्थभूताया भावनाया विशेषणपरेऽपि विधौ विध्यभ्युपगमात्तदन्वयद्वाराऽवगतस्य कारकयोः परस्परान्वयस्य विधेर्भावनायाश्चा-वच्छेदकधात्वर्थपेक्षायामात्मनेपदालोचनयाभिधाख्यधात्वर्थावच्छिन्नत्वावगमादाग्नेय्याग्नीध्र-मभिदध्यादिति वाक्यार्थप्रतीते'रग्नआयाही'त्यादिभिश्च सन्निहितविषयामन्त्रणविभक्त्यादि-युक्तं समीपस्थानं विनाऽऽविधानशक्तेः प्राप्तस्य समीपस्थानस्यानुवादोपपत्तेस्तस्यापि सामान्यान्वयदविधानादतिलाघवमित्याशयः। उपतिष्ठतइत्यात्मनेपदालोचनया समासीद-तीत्यर्थः प्रतीयत इति वदता भाष्यकृताऽभिधानान्यथानुपपत्त्योपस्थानप्राप्तिरुक्ता ॥ २३ ॥

भा० प्र०—पूर्व में प्रदर्शित त्रिविगौरव रूप वाक्य भेद दोष के परिहार के लिए यदि पूर्वपक्षी यह कहें कि लिङ्ग के अनुसार किसी भी आग्नेयी ऋक् के द्वारा आग्नीध्र का उपस्थान ही विहित होगा—यह सङ्गत नहीं है, कारण, यह आग्नीध्राप-स्थान रूप व्यापार = कर्म—यह स्वरूपतः फल नहीं है—इसका अपना कोई स्वतन्त्र फल नहीं है। किन्तु यह ज्योतिष्टोम यज्ञ को अपूर्व के द्वारा प्रयुक्त होने से अर्थात् ज्योतिष्टोमयज्ञ के अपूर्व को सम्पन्न करने के लिए अनुष्ठित होने से उसको पूर्ण कर ज्योति-ष्टोम को ही सफल करता है; क्योंकि यदि आग्नीध्रोपस्थान रूप अङ्ग को छोड़ दिया जाय तो ज्योतिष्टोम के अङ्ग की हानि होगी और उसका अपूर्व पूर्ण न होने से ज्योति-ष्टोम सफल नहीं होगा। इस प्रकार प्रकरण सम्बन्ध बोधित न होने पर इस विधि के द्वारा अप्राकरणिक आग्नीध्रोपस्थान विहित नहीं होगा। अतः इसके अनुसार जहाँ कहीं भी आग्नीध्रोप स्थापन का प्रसङ्ग होगा और वह सर्वथा निष्फल है। इसलिए जिस किसी आग्नीध्र मन्त्र की विधि मानने पर प्रकरण सम्बन्ध बोधपूर्वक सामान्य विशिष्ट विशेष व्यापार की ही अङ्गता का विधान करना पड़ेगा। ऐसी स्थिति में पूर्वोक्त दोष होगा। अन्य पक्ष में सिद्धान्त पक्ष में यह दोष नहीं होता है, क्योंकि, इस स्थल में केवल आग्नीध्र के साथ सम्बन्ध ही विहित होता है।

"च" = क्योंकि "उपदेशः अनर्थकः स्यात्" = उपदेश अर्थात् मन्त्र की उपस्थान साधनता विधि अनर्थक होगी, "फलवता असम्बन्धात्" = क्योंकि फलवान् कर्म के साथ इस मन्त्र का सम्बन्ध नहीं है, "हि" = क्योंकि, उपस्थानं न फलवत्" = उपस्थान स्वयं फलवान् नहीं है ॥ २३ ॥

**सर्वेषां चोपदिष्टत्वात् ॥ २४ ॥**

शा० भा०—यदप्युक्तमुपदिष्टा हि ते प्रकृताः कार्यन्तर इति। तदुच्यते। उक्तोत्तरमेतत्। अपि च न केवलमेत एवोपदिष्टाः। सर्वे वाचस्तोम आश्विने शस्यमाने सूर्येऽनुद्यति। तेन न प्रकृते कश्चिद्विशेषः। तस्मात्प्रकृतस्यैव ग्रहणम् ॥ २४ ॥

इत्यष्टममाग्नेय्यधिकरणम्

त० वा०—यत्तु यातयामत्वात् सामान्यविशेषबाधाद्वा न प्रकृतग्रहणमिति। तन्न। वचनाद्यातयामविधानाद् गुणभूतमन्त्रावृत्त्या च समुच्चये सति विरोधाभावादुभयमप्यदोषम्। तथा[1], येनैव लिङ्गेनैवं कुर्यादित्येषाऽपि वचनव्यक्तिर्नाऽऽश्रीयते। सर्वेषां क्वचिदुपदिष्टत्वेनाविशेषणत्वात्। यत्तु प्रत्ययेन विशेष्टव्यमिति। तदन्यथैव विशेषसिद्धेरसंबद्धाध्यारोपणमात्रमेव शोभते। तथा हि।

यद्यप्यहमृचां कुर्यां प्रत्ययेन विशेषणम्।
तथाऽपि नैव मुच्येयं सर्वासां ग्रहणादिह ॥
सर्वा ह्यध्ययनस्थेन ब्रह्मयज्ञाश्रितेन च।
वाचस्तोमाश्विनावस्थागतेन विहिता हि ताः ॥
अतो नैवेदमाशङ्क्यमाख्यातेन[2] विशेषणम्।
सर्वप्रत्यय एव स्यात्कृतेऽपि हि विशेषणे ॥

तस्मादर्थापत्तिप्रतिबन्धमात्रेणैव प्रकृतप्रत्ययसिद्धिः ॥ २४ ॥

(इत्यष्टममाग्नेय्यधिकरणम् ॥ ८ ॥)

न्या० सु०—केवलाप्रकृतपक्षसमर्थयितृमतेन तावच्छिष्टत्वादित्याद्यपूर्वपक्षहेतुदूषणार्थंत्वेनानुभाषणपूर्वं सूत्रं व्याचष्टे—**यत्त्विति**। न ते 'निर्माल्यतां यान्ती'तिस्मृत्या यातयामत्वनिषेधादभ्युपेत्यवादमात्रेण विधिलाघवलक्षणन्यायावगतप्रकृतमात्रविषयत्वादाग्नेय्येतिवचनाद्यातयामस्यापि विध्युपपत्तिरुक्ता। पदे जुहोतीति च विशेषशास्त्रेणाहवनीये जुह्वतीति सामान्यशास्त्रस्य विकल्पायोगात्समुच्चये चाश्रुतप्रधानवृत्त्यापत्तेर्बाधो वक्ष्यते। गुणावृत्तिस्तु प्रधानानुरोधेनोचितैवेत्याशयः।

स्वमतेन शिष्टत्वादिति पूर्वपक्षसूत्रावयवोक्तापाद्य सिद्धान्तहेतुदूषणनिरासार्थत्वेन सूत्रं व्याचष्टे—**तथेति**। यदपीत्यनुभाषणभाष्यमुपतिष्ठत इति विधिप्रत्ययोक्तेन कार्यान्तरोपदिष्टत्वेन विशेषणाऽप्रकृतमात्रग्रहणं वाच्यम्। न च तत्सम्भवति, प्रत्ययस्योपलक्षणत्वाभ्युपगमे विधायकत्वायोगापत्तेरित्येवं प्रत्ययेन विशेषणस्य सिद्धान्तहेतुत्वमापाद्य, शिष्टत्वादित्यवयवोक्तं दूषणोनुभाषणार्थत्वेन व्याख्यातुमाह—**यदि त्विति**। क्लृप्ते सामान्यान्वयप्रकृतमन्त्रविध्यै

---

१. क. तस्मात्।　　२. क. नैवेदमाशक्य।

विशेषान्वयविधिमात्रेणाग्नेयीवद्धचर्थवत्त्वोपपत्तेः सामान्यविशेषान्वयकल्पनापादकमाग्नेयी-मात्रग्रहणं न युक्तमित्यनेनैव न्यायेन प्रकृतमात्रग्रहणरूपविशेषसिद्धेर्न प्रत्ययेन विशेषणं सिद्धान्ते हेतुत्वेनाभिप्रेतमित्येवं परिहारार्थत्वेन सौत्रचशब्दव्याख्यानार्थं तदितिभाष्यं न ज्योतिष्टोमं प्रति मन्त्रस्य व्यापारविधानमुपपद्यत इति भाष्येण सिद्धान्तहेत्वन्तरं वदतोप-दिष्टत्वेन विशेषणं सिद्धान्ते हेतुर्नाभिप्रेत इति उत्तरमर्थादुक्तमित्येवं व्याख्यातुमाह—**तदिति**। प्रतिभासनविवक्षयोपहासार्थं शोभतिः प्रयुक्तः। न केवलमन्यथैव सिद्धेः प्रत्ययेन विशेषणमनभिमतं, किं त्वसम्भवादपीत्येव सूत्रव्याख्यार्थमपि चेति भाष्यं व्याख्यातुम्—**तथा हीति**। चशब्दार्थे हिशब्दः। तदुदाहरणार्थं सर्व इति भाष्यं व्याचष्टे—**सर्वा हीति**। स्वाध्यायोऽध्येतव्य इत्यध्ययनविषयेणाहरहः स्वाध्यायमधीयीतेति च ब्रह्मयज्ञविषयेण, वाचस्तोमे च 'सर्वाणि यजूंषि' सर्वाणि सामानि, पारिप्लवं शंसतीति वाचः स्तोम-विषयेण, अश्विने, शस्यमाने यदि सूर्यो नाभ्युदियादपि सर्वा दाशतीरनुब्रूयादिति चाश्वि-नानुद्यत्सूर्योस्थाविषयेण प्रत्ययेन ताः सर्वा विहिता इत्यर्थः।

तेनेति सूत्रार्थोपसंहारभाष्यं व्याचष्टे—**अत इति**। तस्मादित्यधिकरणार्थोपसंहार-भाष्यं व्याचष्टे—**तस्मादिति**। प्रकृतमात्रग्रहणेन सामान्वयकल्पकार्थापत्तिप्रतिबन्धमात्रं विधिलाघवापादकत्वात्सिद्धान्तहेतुः प्रत्ययेन विशेषणमिति न तस्माच्छब्दव्याख्य-योक्तम् ॥ २४ ॥

**इत्यष्टममाग्नेय्यधिकरणम् ॥ ९ ॥**

भा० प्र०—पूर्वपक्षी का कहना है कि क्रतु प्रकरण के आग्नेयी आदि ऋक् कार्या-न्तर में उपदिष्ट अर्थात् विनियुक्त होने से वे मन्त्र पुनः आग्नीध्र के उपस्थान के कार्य में विनियुक्त नहीं हो सकते हैं—यह भी सङ्गत नहीं है, कारण, ऐसा मानने पर कोई भी मन्त्र सभी कार्यों का अङ्ग नहीं हो सकता है। कारण, "सर्वेषां च उपदिष्टत्वात्" = सभी मन्त्र "वाचः स्तोम" में पढ़ने योग्य होने से श्रुति में कहे गये हैं। इसलिए प्रकरण-पठित आग्नेयी ऋक् के द्वारा ही आग्नीध्र का उपस्थान करना चाहिए "ऐन्द्रचा सदो वैष्णव्या हविर्धानम्" इसको दोनों स्थलों में इसी प्रकार समझना चाहिए।

"सर्वेषां च" = सभी मन्त्र, उपदिष्टत्वात्" = उपदिष्ट होने में। **अष्टम आग्नेयी अधिकरण ॥ २४ ॥**

## अथ नवमं भक्षानुवाकस्य लिंगानुसारेण विनियोगाधिकरणम्
## (भक्षपेटिका)

## [९] लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य ॥२५॥ पू०

शा० भा०—[1]भक्षमन्त्रः श्रूयते—'भक्षे हि मा विश दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय। एहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सध्यासम्। नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्। हिन्व मे गात्रा हरिवो गणान्मे मा वितीतृषः शिवो। मे सप्तर्षीनुपतिष्ठस्व मा मेऽवाङ्नाभिमतिगाः। मन्द्राभिभूतिः केतुर्यज्ञानां वाग् जुषाणा सोमस्य तृप्यतु। वसुमद्गणस्य रुद्रवद्गणस्य आदित्यवद्गणस्य सोमदेव ते मतिविदः प्रातःसवनस्य माध्यंदिनस्य सवनस्य तृतीयसवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगच्छन्दसोऽग्निष्टुत इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' ऐत्येवमादिः। मै० सं०

तत्र संदेहः—किं कृत्स्न एषोऽनुवाको भक्षणे विनियोजनीयः, उत कश्चिदस्यावयवोऽन्यत्रापीति। किं प्राप्तम्? लिङ्ग-समाख्यानाभ्यां भक्षार्थताऽनुवाकस्य। सर्वोऽनुवाको भक्षणे विनियोजनीयः। कुत? भक्षयामीत्येष शब्दो व्यक्तं भक्षणे विनियोजनीयः[2]। भक्षणमेष शक्नोति वदितुम्, नान्यत्किंचित्। अन्यानि चास्य पदानि भक्षणविशेषणवचनान्येव, यत्र यत्र भक्षयामीति तत्र तत्र प्रयुज्यन्ते।

ननु, 'एहि वसो' इत्येवमादि सध्यासमित्येवमन्तं ग्रहणार्थम्, स्वेन पदसमूहेन परस्पराकाङ्क्षिणैकार्थं विभिन्नं भक्षणवाक्यात्। 'नृचक्षसमित्येवमादि अवख्येषमि'त्येवमन्तमवेक्षणवचनम्। 'हिन्व मे गात्रा हरिव' इत्येवमादि च 'मा मे वाङ्नाभिमतिगा' इत्येवमन्तं सम्यग्जरणार्थम्[3]। तद् बहुत्वादर्थानां बह्नि वाक्यानि। कथमेतच्छक्यं वदितुं सर्वमिदमेकं वाक्यं भक्षणे विनियुज्यत इति।

उच्यते। सर्वाण्येतानि भक्षणविशेषणानीत्युक्तम्। आह। एवमपि भिद्येत वाक्यम्। विशेषणविशेष्याणां युगपद्वचनासंभवात्। उच्यते। न विशेषणानि विवक्षिष्यामः[4]। विशेषणैर्ग्रहणावेक्षणादिभिर्विशिष्ट एकोऽर्थो विवक्ष्यते। नैवं सम्यग् भवति। विशेषणवचनानामविवक्षितस्वार्थवचनता[5], भक्षणविशेषपरता चेति। लक्षणया तु गम्यते। श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या, न लक्षणा। तस्मान्नैकं वाक्यमिति। [6]अत्रोच्यते। यद्यप्यमी ग्रहणादयो बहवोऽर्था गम्यते, न तु सर्वे ईप्सिता इति। भक्षणमेवैकं प्रत्याययितव्यम्। तद्धि श्रुतम्। विशेषणान्यश्रुतानि। न तैः प्रतीतैः प्रयोजनम्। प्रयोजनं च यावतः पदसमूहस्यैकम्,

---

१. अयञ्चानुवाको मैत्रायणीसंहितास्थोऽत्र ग्राह्यः। न तु तैत्तिरीयसंहितास्थः। तस्य यन्म आत्मनोभिन्दाऽभूदित्यादि मन्त्रैर्व्यवधानात्, ऊहितपाठाच्चेति द्रष्टव्यम्। अत्र कौतुहलन्तु प्रतिज्ञां सन्यस्यतीत्यपि। २. ब. विनियोक्तव्यः। ३. ब. सम्यग्भरणार्थम्। ४. ब. विवक्ष्यामः। ५. ब. स्वार्थता। ६. ब. तत्रोच्यते।

**तावदेकं वाक्यम्। तस्माद्विशिष्टभक्षणार्थमेतदेकं वाक्यमिति भक्षणे विनियोक्तव्यम्। समाख्यानं च भवति भक्षानुवाक इति। कृत्स्नश्चानुवाकः नावयवः। ननु च समाख्या लौकिकः शब्दः कथं वैदिकमङ्गं निर्यस्यतीति? यद्यपि लौकिकः, तथाऽप्यनादिस्तस्यानुवाकेन संबन्धः। किमतो यद्येवम्? एतदतो भवति। भक्षणसमभिव्याहृतमनुवाकं ब्रूते। समभिव्याहारश्च सति संबन्धे भवति। यथा पाचको लावक इति। समभिव्याहारात्संबन्धमनुमास्यामहे। आह। नानुमानगम्य एवंजातीयकेष्वङ्गभावः, विधानादेवावगम्यते, नान्यथा। न च समाख्या विधात्री।**

**अत्रोच्यते—समाख्या संबन्धितौ बुद्धौ संनिधिमुपनेष्यति, प्रयोगवचनो विधास्यतीति। तस्मात्कृत्स्नोऽनुवाको भक्षणे विनियोक्तव्य इति ॥२५॥ पूर्व० ॥**

त० वा०— समस्तानुवाकोदाहरणं कानि पदादि क समर्थानीति वक्ष्यमाणविषयविवेकार्थम्। अत्र सूत्रवाकवदेव प्रातःसवनादिशब्दास्तत्सामानाधिकरण्यसंस्तुताश्च वसुमद्गणादयो गायत्रच्छन्दःप्रभृतय इन्द्रपीतादयश्च क्रमेण यथासवनं निष्कृष्य प्रयोक्तव्या। इदं तु विचार्यते किं समस्तोऽनुवाको भक्षण एव विनियोक्तव्यः, उत ग्रहणावेक्षणसम्यग्जरणेष्वपि यथालिङ्गमिति। तत्र भक्षस्य चोदितत्वात् भक्षयामिपदस्य च तत्प्रकाशनसामर्थ्यात्, आद्यन्तपदसंदंशगृहीतेतरपदानामनन्यगामित्वात् 'ततश्चावचनं तेषामितरार्थं प्रयुज्यते' इतिवद् ग्रहणादीनामपि चोदितभक्षविशेषणत्वेनैकप्रधानार्थानामेकवाक्यत्वात्तत्रैव विनियोग इत्युक्ते, परिचोदना। 'भक्षे हि मा विश' इत्यस्य भक्षणेऽप्युपपत्तिः। 'एहि वसो' इत्यादेस्तु सध्यासमित्येवमन्तस्य ग्रहणार्थत्वम्। यद्यपि 'सधि हिंसायाम्' इति पठात्सध्रासमित्यस्य ग्रहणार्थता न विस्पष्टा, तथाऽपि बहुकरणत्वान्निर्वपतिवद् ग्रहणप्रतीतिः। अस्ति चानेकार्थत्वं धातूनाम्। ग्रहणकृतैव वा हिंसा विवक्ष्येतेत्यदोषः।

तथा 'नृचक्षसम्' इत्यादेरवेक्षणार्थत्वं यद्यपि 'चक्षिङ् व्यक्तायां वाचि' इति स्मर्यते, तथाऽपि प्रयोगेषु प्रकाशनमात्रार्थता गम्यते। तेन नृषु यः ख्यातः, स नृचक्षास्तमवख्येषमिति 'चक्षिङः ख्यात्र्' इत्यत्र ख्येञ् इत्युपसंख्यायते। तेनावेक्षणार्थत्वम्। 'हिन्व मे गात्राणि' इति सम्यक्परिणतः शक्नोति गात्राणि प्रीणयितुम्, नाभेश्चाधस्तादगन्तुमिति सम्यग्जरणार्थता। तस्माल्लिङ्गविरोधादयुक्तमेकवाक्यत्वमिति।

तदुच्यते सर्वाण्येतानि भक्षणस्य प्रागूर्ध्वं च वर्तमानानि विशेषणं भवन्ति। तेन विशिष्टभक्षप्रकाशनेऽर्थाद्विशेषणाक्षेपादेकार्थत्वाविरोधः। यद्यपि च ग्रहणादीनां स्वप्राधान्यापरित्यागाच्छ्रौतत्वाच्च भेदेन प्रकाशनं युक्तं, तथाऽप्यचोदितप्रकाशने न किंचित्फलमस्तीति, चोदितशेषत्वमेव युक्ततरम्। तदुक्तं निर्वापमन्त्रे। तस्माल्लिङ्गमविरुद्धम्।

तथा च समाख्याऽनुग्रहीष्यते ।

तत्र चोदयन्ति । सा नाम समाख्या विनियोक्त्री युक्ता, या वेद एव पठ्यते । भक्षानुवाकसमाख्या त्वसमाम्नानात्कथं विनियोक्ष्यत इति ?

तदुच्यते—

लौकिकं वैदिकं वाऽपि प्रमाणं दोषवर्जितम् ।
सर्वमाश्रीयते स्वार्थे न चास्मिन्दोषसंभवः ॥

यथैव वेदस्य वक्तृदोषरहितत्वात्प्रामाण्यम्, एवं लौकिकस्यापि पदस्यानादित्वाविशेषात् । न चात्रान्धपरम्परान्यायः । अभिधानाभिधेययोः सर्वप्रत्यक्षत्वात् । न ह्यग्निहोत्रस्वर्गादिसाध्यसाधनभाववदनुवाकस्याप्रत्यक्षत्वम् । अतो भक्षानुवाकशब्दवाच्योऽयमित्येतत्तावत्प्रमाणम् । अतश्च प्रकरणे पठ्यमानमनुवाकमालोच्य समाख्या हृदयमागच्छति । सा च भक्षस्यानुवाक इत्येवं विगृह्यमाणा भक्षसंबन्ध इत्येवं मनसि निधापयति । ततश्चोभयोर्बुद्धावुपप्लवमानयोरपेक्षावशेन तदेव संबन्धसामान्यं विशेषसंबन्धो भवति । भक्षोऽपि हि स्मारकमपेक्षते, अनुवाकोऽपि प्रकाश्यम् । अस्ति चोभयोरपि योग्यत्वमिति । तथावस्थितयोः प्रकाश्यप्रकाशकयोः प्रयोगवचनेन विधानम् । तेनापि भक्षार्थत्वमिति ॥ २५ ॥

### अथ नवमं यक्षानुवाकस्य लिङ्गानुसारेण विधियोगाधिकरणम्
### [ भक्षपेटिका ]

न्या० सु०—मुख्यसामर्थ्यात्मकमेव लिङ्गं विनियोजकम्, गौणसामर्थ्यात्मकमपि वेत्येवं सामान्यान्वयापेक्षं लिङ्गविनियोजकम्, निरपेक्षं वेत्येवं लैङ्गिकविनियोगप्रकारे लिङ्गस्वरूपगते सापवादप्रसङ्गे चिन्तिते, साक्षादचोदितेषु सामर्थ्याक्षिप्तेष्वनुष्ठेयेषु लिङ्गविनियोजकम्, न वेत्येवं विषयगतलैङ्गिकप्रकारचिन्तार्थत्वेन पादसङ्गतिलिङ्गश्रुत्योश्च सामान्यान्वयसिद्ध्यर्थापेक्षत्वात् दुर्बलक्रमप्रकरणाद्यनुरोधात्सङ्कोचलक्षणे बाधेऽनन्तराधिकरणद्वयेनोक्ते, अऽत्रापि सामान्यान्वयसिद्ध्यै भक्षानुवाकसमाख्यापेक्षणलिङ्गबाधस्य प्रशक्तस्यापवादानन्तरसङ्गतिं स्पष्टत्वादनुक्त्वा, कृत्स्नानुवाकोदाहरणप्रयोजनमाह—**समस्तेति** । भाष्ये त्वादिशब्दस्तुल्यन्यायोदाहरणान्तरग्रहणार्थः । चिन्ताविषयं विविञ्चन् सन्देहभाष्यं व्याचष्टे—**अत्रेति** । वसुमद्गणादिशब्दानां प्रातःसवनादिशब्दसामानाधिकरण्यस्या नैन्द्राधिकरणे व्युत्पादयिष्यमाणत्वस्य सवनस्तुत्यर्थत्वसूचनार्था संस्तुतोक्तिः । सौत्रलिङ्गशब्दव्याख्यार्थं किं प्राप्तमित्यादिप्रयुज्यन्त इत्यन्तं पूर्वपक्षभाष्यं । सध्यासमित्यादिनामाख्यातानां, तथा तु विशेषणीभूतस्वार्थवाचित्वहेतूनुक्तेरयुक्तमाशङ्क्य, तद्धितश्रुतमित्यादिभाष्यवक्ष्यमाणचोदितप्रकाशनार्थत्वायोगलक्षणहेतूपजीवनेनोपपादयति—**तत्रेति** । **तद्धीति** । भाष्यं वक्ष्यमाणोपजीवनार्थम्—**भक्षस्येत्युक्तम्** । प्रयोजनं चेति वक्ष्माणहेतूपजीवतात्पाद्यन्ते- इत्युक्तम् । प्रकृतापूर्वसाधनत्वेनावगतानामेव मन्त्राणां लिङ्गविनियोगस्य सामान्यान्वय-

सापेक्षत्वव्युत्पादनेन स्थितत्वात् ग्रहणादौ वा चोदितत्वादर्थाक्षेपस्य च लौकिकसाधनत्वमात्रेणोपपत्तेरपूर्वसाधनत्वरहिते द्वारे विनियुज्यमानानामपूर्वसाधनत्वव्याघातापत्ते'स्तत्राचोदितमप्राप्तं चोदिताभिधानादि'त्यनेन न्यायेन 'सध्यासमि'त्यादीनामपि चोदितभक्षविशेषणीभूतग्रहणाद्यभिधानद्वारा भक्षाभिधानार्थत्वावगमाद्भक्षेहीत्यादौ भक्षयामीत्यन्ते भक्षसङ्कीर्त्तनात्तत्सन्दंशगृहीतत्वमितरेषामपि पदानाभक्षव्यतिरिक्तार्थपरत्वायोगाद्यथा देवस्य त्वेति मन्त्रस्य चोदितनिर्वापाभिधानार्थत्त्वात्सवित्रादिपदस्याचोदितत्वेनोहाप्राप्तावुक्तायां कथं तर्हि चोदितार्थानां सवित्रादिपदानां प्रयोग इत्याशङ्क्य, ततस्तेन सवित्रादयः प्राधान्येन वक्तव्या इत्यनेन कारणेन सवित्रादीनामवचनमिति नास्ति। किं तु निर्वापस्तुत्यर्थं सवित्रादिपदं प्रयुज्यतेति नवमे वक्ष्यते। आतिथ्याग्रहणादीनां भक्षविशेषणत्वेनाभिधानात्सध्यासमित्यादीनामेकभक्षाख्यप्रधानभूतार्थानां भक्षयामिपदैकवाक्यत्वाद्भक्ष एव विनियोग इत्याशयः। लिङ्गेन वाक्यबाधादेकवाक्यत्वायोगशङ्कार्थं न त्वित्यादिभाष्यमेकोपक्रमोपसंहारत्वेनैकवाक्यत्वोपगमनसामर्थ्यरूपालिङ्गादेकवाक्यत्वावगतेः भक्षेहीत्यस्याप्येहिशब्दयोगादेहिवसःवित्येकवाक्यत्वेन ग्रहणार्थत्वाभ्युपगमे वा भाष्ये तत्परित्यागायोगादयुक्तमाशङ्क्योपपादयितुमाह **इत्युक्त इति**। भक्षणेऽपिशब्दाद्ग्रहणेऽप्युपपत्तेरेकोपक्रमोपसंहारत्वानिश्चयाच्छङ्का युक्ता।

वस्तुतस्तु प्रधानभूतभक्षार्थत्वसम्भवो गुणभूतग्रहणार्थत्वायोगादेहिवसवित्यादेर्ग्रहणार्थत्वं भाष्यकृतोक्तमित्यर्थः। संघेर्हिंसार्थत्वस्मरणाद्ग्रहणार्थता न युक्तेत्याशङ्क्याह—**यद्यपीति**। यत्र क्वापि विनियुज्यमानस्य बाहोः सामर्थ्याद्ग्रहणस्यावान्तरव्यापारत्वावगतेः पाणेरेव ग्रहणवृत्तावसाधारण्येऽपि पाणिपर्यन्ते बाहुव्यादेशात् बाहोरसाधारणत्वोपपत्तेर्बीजतन्तुसन्ताने स्मृतान्निर्वपतिरिव बाहुकरणकत्वाभावाविनाभावान्निमित्तकया लक्षणयास्माद्धातोर्ग्रहणप्रतीतिरित्याशयः॥

'क्रियावाचित्वमाख्यातुमेकैकोऽर्थो निदर्शितः।
प्रयोगतोऽनुमन्तव्या अनेकार्था हि धातवः॥

इति स्मृतेर्वा वृद्धप्रयोगाच्छ्रुत्येव ग्रहणार्थताऽवसीयत इत्याह—**अस्ति चेति**। ग्रहणे वृद्धप्रयोगाद्धिंसायां च स्मृतेरुभयानुग्रहार्थं ग्रहणं कृतम्। हिंसावाचित्वावगतेः सत्ये लक्षणया ग्रहणार्थतेत्यन्यथा समाधत्ते—**ग्रहणमिति**। न च क्लृप्तमिति भाष्यावयवं व्याचष्टे—**तथेति**। चक्षिङः स्त्राभाषार्थत्वस्मरणादेव भक्षणार्थता न युक्तेत्याशङ्क्याह—**यद्यपीति**। अत्राप्युभयानुग्राहार्थं भाषणकृतप्रकाशनवाचित्वावगतेलक्षणया प्रकाशनार्थतेत्याशयः। प्रयोगप्रदर्शनार्थं नृचक्षःशब्दव्याचक्षाणो मन्त्रावयवं योजयति—**तेनेति**। चक्षिङः ख्याञादेशस्मरणात्तस्य चानिट्त्वात् ख्येषमिति रूपासिद्धिमाशङ्क्याह—**अवख्येषमिति**। छन्दसि दृष्टानुविधित्वेनेह ख्याञित्युपसंख्यानकरणात्सिब्बहुलं लेटीति सिब्विकरणाश्रयणाच्च रूपसिद्धिरित्याशयः।

हिनोतेर्गतौ स्मरणादुपसंहारे च नाभेरधस्ताद्गतिनिषेधादुपक्रमोपसंहारपर्यालोचनेन्द्रियगणवितृषीकरणनिषेधाच्चक्षुर्नासाश्रोत्राख्यद्वन्द्वत्रयास्यसप्तमशीर्षण्यस्थेन्द्रसञ्ज्ञारिसप्तप्रमाणाख्यसप्तर्ष्युपस्थापनोक्त्योरपि नाभ्यूर्ध्वगात्रगतिमात्रार्थत्वप्रतीतेः सम्यग्जरणार्थता न युक्तेत्याशङ्क्य, हिनोतेः प्रीणने प्रयोगाहुतिवच्च वृद्धावपि स्मृतेर्बननरूपप्रीणनार्थत्वाविरोधाविरोधात्प्रीणनाधस्तादगत्योश्च सम्यग्जरणार्थतामुपपादयितुमाह- **हित्वेति** । शङ्कोपसंहारार्थं तदितिभाष्यं व्याचष्टे—**तस्मादिति** । अन्यानि वास्येति भाष्यावयवेन भक्षानुवाकावयवभूतानामेहीत्यादिपदानां लक्षणविशेषणीभूतस्वार्थवाचित्वोक्त्या त्रिलिङ्गविरोधाभावस्याज्ञानाच्छङ्काकृतेति मत्वा तत् स्मारणंन परिहारार्थं उच्यते इतिभाष्यं व्याचष्टे—**तदिति** । ग्रहणावेक्षणयोः प्राग्वर्त्तमानत्वेन सम्यग्जरणस्य चोर्ध्वं वर्तमानत्वेन विशेषणतेत्यर्थः । विशषणविशेष्यभावेऽपीडोपह्वानेडाभक्षणवत्पृथक्प्रकाशनोपपत्तेर्भिन्नार्थत्वाविरोधमाहेतिभाष्येणाशङ्क्य उपह्वानवद्ग्रहणादीनां पृथग्विध्यभावात्पृथक्प्रकाश्यत्वं नास्तीति परिहारार्थमुच्यतइति भाष्यं व्याचष्टे—**तेनेति** । वर्त्तमानत्वोक्तिसूचितस्य विध्यभावस्य तच्छब्देन परामर्शाद्ग्रहणादीनां विध्यभावेन कारणेन विशिष्टलक्षणे प्रकाशनेऽर्थाद्विशेषणभूतस्य ग्रहणादेराक्षेप्यत्वात्प्रकाशयत्वात्पृथक्प्रकाश्यत्वात्पृथक्प्रकाश्यत्वाभावेनैकार्थ्योपपत्तेर्लिङ्गविरोधाभाव इत्यर्थः । पृथग्विध्यभावेऽपिपृथक्प्रयत्नत्वोपाद्यत्वात्पृथक्प्रकाश्यत्वाभावेनैकार्थ्योपपत्तेर्लिङ्गविरोधाभाव इत्यर्थः । पृथग्विध्यभावेऽपि पृथक्प्रयत्नोपाद्यत्वापृथक्प्रकाशत्वलक्षणस्वप्राधान्योपपत्तेर्लक्षणया विशेषणत्वेन ग्रहणादिप्रकाशनं न युक्तमित्याशङ्काशयविवरणार्थं नैवमिति भाष्यं व्याचष्टे—**यद्यपि चेति** । पृथक्प्रयत्नापाद्यत्वेऽप्यविहितत्वेन विध्येकसमधिगम्यापूर्वसाधारणत्वायोगादपूर्वसाधनीभूतमन्त्रादिरूपवैदिकोपायद्वारत्वायोगाद् - ग्रहणादेः स्वातन्त्र्येण प्रकाशनं नेत्युक्तमिति परिहाराशयविवरणार्थत्वेन भक्षणस्यैव समुच्चरितेन शब्देन द्विरैन्द्रवायवस्य भक्षयतीत्यादिना विधेयत्वान्मन्त्रप्रकाश्यत्वं नाविहितस्य ग्रहणादेरित्येवं सौत्रसमाख्यानशब्दव्याख्यानार्थं अत्रेत्यादि न च तैः प्रयोजनमित्यन्तं भाष्यं व्याचष्टे—**तथापीति** । लिङ्गाद्भिन्नार्थत्वावगतेरेकवाक्यत्वायोगशङ्कापरिहाराशयविवरणार्थत्वेनाप्यस्यैव सूत्रावयवस्य समीहितत्वरूपेण प्रयोजनत्वेन लक्षणरूपस्यैवार्थस्याख्यानान्न लिङ्गविरोध इत्येवं व्याख्यार्थं प्रयोजनं चेति भाष्यमर्थैकत्वादेकं वाक्यमित्यर्थः । शब्दस्य प्रयोजनवाचित्वाशयमिति सूचयितुमाह—**तदिति** । न किञ्चिदित्यनेन च तैरिति भाष्यावयवं व्याख्याय बुद्धिस्थोकृतस्य प्रयोजनं चेत्यनन्तरभाष्यस्य तच्छब्देन परामर्शादनेन भाष्येण यदुक्तं तन्निवपि विस्तरेणोपपादितमित्यर्थः । तस्मादिति भाष्यं लिङ्गविरोधाशङ्कापरिहारोपसंहारार्थत्वेन व्याख्यातुमाह—**तस्मादिति** । सामान्यान्वयार्थमपेक्षितया समाख्यया कृत्स्नस्यानुवाकस्य भक्षणार्थत्वावगमाल्लैङ्गिकविभज्य विनियोगोक्त्यार्थत्वेनान्यथाऽस्यैवाऽवयवस्य व्याख्यार्थं 'समाख्यानं चे'ति भाष्यं व्याचष्टे—**तथा चेति** । अध्वर्य्वादिसमाख्यावद्भक्षानुवाकसमाख्याया वैदिकत्वाभावेन विनियोजकत्वायोगात्, लिङ्गस्य च तदपेक्षा लिङ्गस्य च तदपेक्षानास्तीत्याशङ्कार्थं नन्वितिभाष्यमवतारणपूर्वं व्याचष्टे—**तत्रेति** ।

मिथ्यात्वाशयेयं शङ्का समाख्याया, विनियोजकत्वायोगाशया वेति विकल्प्य, अवैदिकत्वेऽप्यनादित्वेन पुरुषनिबन्धनदोषाभावान्मिथ्यात्वं तावन्नास्तीति परिहार्थं यद्यपीति भाष्यं व्याचष्टे—**तदिति**। श्लोकं व्याचष्टे—**यथैवेति**। अन्धपरम्परादोषापत्तिशङ्कानिरासाय साक्षाद्विनियोगविषयप्रामाण्यनिरासेन वाच्यवाचकत्वविषयप्रामाण्यसूचनार्थंत्वेन स्वार्थोक्ति व्याख्यातुम्—**न चेत्युक्तम्**। अतीन्द्रियेऽर्थेन्धपरम्परा स्यात् न च वाच्यवाचकभावोऽतीन्द्रिय इत्याशयः। भक्षानुवाकसमाख्यानस्यैतदनुवाकवाचित्वावसायेऽप्यतीन्द्रियविनियोगे प्रामाण्यं न सम्भवतीति द्वितीयकल्पं 'किमि'ति भाष्येणाशङ्क्य, साक्षाद्विनियोगप्रामाण्यायोगेऽपि क्रमादिपरम्पराद्वारविनियोजकश्रुतिकल्पनाद्वारा वैदिकसमाख्यावद्विनियोगप्रामाण्योपपत्त्युक्त्यर्थमेतादित्याद्यनुमास्यामह इत्यन्तं भाष्यमवैदिक्याः समाख्यायाः वेदार्थावधारणवेलायामबुद्धिस्थत्वाद्विनियोजकत्वायोगशङ्कानिरासपूर्वं व्याचष्टे—**अतश्चेति**।

सन्निध्युच्चारणवाचिना समभिव्याहारशब्देनोच्चारणार्हशब्दसन्निध्यभिधानाद्वेदाविधानत्वाच्च सन्निधेरवयवव्युत्पन्नत्वसूचनार्थम्—**विगृह्यमाणेत्युक्तम्** **तेनेति**। षष्ठीसमासात् सम्बन्धमात्रदगमेऽप्यङ्गाङ्गिरूपसम्बन्धावगतिः कथमित्याशङ्क्य, सम्बन्धसामान्यसन्निधिलक्षणात्, क्रमादुभयापेक्षालक्षणप्रकरणकल्पनद्वाराङ्गाङ्गित्वविशेषरूपसम्बन्धापादकवाक्यकल्पने ततश्चेत्यनेन सूचिते। तदुपपादनार्थं भक्षस्याङ्गविषयानुवाकस्य चाङ्गिविषयापेक्षा भक्षोऽपि हीत्यनेनोक्ता। अग्निः सिञ्चतीत्यन्वयविशेषावगमेऽपि सामर्थ्यं विना निर्वाहायोगात्तत्कल्पनास्ति चेत्यनेनोक्ता। सत्यपि सामर्थ्येऽङ्गाङ्गित्ववाचिश्रुत्यभावेऽङ्गाङ्गित्वायोगो च शब्देन श्रुतिः सूचिता। विनियोजकश्रुत्यनुमानेऽपि विध्येकगम्येऽर्थे विधिश्रुतिं विनाङ्गत्वायोगमाहेति भाष्येणाशङ्क्य समाख्यावगताङ्गस्यानुवाकस्य प्रयोगवाक्याद्विध्युक्त्यर्थमत्रेति भाष्यं व्याचष्टे—**तेनेति** ॥ २५ ॥

**भा० प्र०**—ज्योतिष्टोम प्रकरण में हवन किये गये सोम के बचे हुए अंश का भक्षण विहित है, उस सोम भक्षण में ग्रहण, अवेक्षण, निगमन = गले में नीचे उतारना भलीभाँति जरण अर्थात् जीर्ण करना—ये चार व्यापार हैं। उस सोम के भक्षण के समय में जो मन्त्र का पाठ किया जाता है वह "भक्षे हि मा दिश दीर्घायुत्वाय" इत्यादि अनुवाक में पठित है। इस मन्त्र के पाठ के सम्बन्ध में यह संशय होता है कि—इस समग्र अनुवाक का भक्षण के समय में विनियोग होगा। अर्थात् भक्षण के समय में पढ़ा जाना चाहिए अथवा उसके किसी अंश विशेष को ही भक्षण कार्य में विनियुक्त करना चाहिए ? इस प्रसङ्ग में पूर्वपक्षी का कहना है कि 'भक्षार्थता अनुवाकस्य" समग्र अनुवाक का ही भक्षण के लिए अर्थात् भक्षण के समय समग्र अनुवाक का ही पाठ करना चाहिए। इसका कारण यह है कि—"लिङ्गसमाख्यानाभ्याम्" क्योंकि, लिङ्ग एवं समाख्या के अनुसार समग्र यह अर्थ ही प्राप्त होता है। इसमें लिङ्ग के अनुसार यह

देखा जाता है कि इस अनुवाक का 'भक्षयामि' यह अंश स्पष्ट ही भक्षण का प्रकाश करता है। यदि कहा जाय कि ग्रहण, अवेक्षण आदि अर्थ भी तो मन्त्र से ही प्राप्त होता है ? ऐसी स्थिति में यह कहा जा सकता है ग्रहणावेक्षणादि सभी भक्षण के सम्पादन के लिए होने से यहाँ भक्षण ही प्रधान है और ग्रहण, प्रोक्षण आदि विशेषण या अप्रधान हैं। जो विशेषण होता है उसका स्वतन्त्र कोई प्रयोजन नहीं होने से वे भक्षण के ही प्रकाशक हैं, अतः, लिङ्ग के अनुसार यह भक्षणार्थ है। इस समग्र अनुवाक को ही भक्षणानुवाक कहा जाता है। अतः भक्षणानुवाक इस समाख्या से यह निश्चय होता है कि समग्र अनुवाक भक्षण में पढ़ने योग्य है। "अभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि सोमं भक्षयन्ति" इस वचन के द्वारा सोम भक्षण जैसे साक्षात् श्रुति से विहित होता है वैसे ही ग्रहण, अवेक्षण आदि भी साक्षात् वचन से ही विहित हो जाता है और जो विहित नहीं होता है, उसमें मन्त्र का भी विनियोग नहीं हो सकता है, इसलिए भक्षण ही विहित होने से उसी में समग्र अनुवाक पठनीय है।

"लिङ्गसमाख्यानाभ्याम्" = लिङ्ग अर्थात् विशिष्ट भक्षण सामर्थ्य एवं समाख्या के अनुसार, "अनुवाकस्य भक्षार्थता" = अनुवाक की भक्षणार्थता अर्थात् समग्र अनुवाक भक्षण के लिए अर्थात् सोम भक्षण काल में ही पठितव्य है ॥ २५ ॥

**तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् ॥२६॥ सि०**

**शा० भा०—नैतदेवं—कृत्स्नोऽनुवाको भक्षणे विनियुज्यत इति। रूपाद् ग्रहणवाक्यं ग्रहणे विनियुज्येत 'एहीत्येवमादि सध्यासमि'त्येवमन्तम्। नृचक्षस-मित्येवमादि च 'अवख्येषमि'त्येवमन्तं दर्शने। कुतः ? मुख्यार्थमेवं तद्वाक्यं भवति। इतरथा लक्षणार्थता स्यात्। मुख्यार्थता च न्याय्या, न लक्ष्यार्थता। उच्यते। विशेषणानामभिधाने न किंचिदस्ति प्रयोजनमित्युक्तम्। अत्रोच्यते। नैवैतानि विशेषणानि। पृथगेवैतानि ग्रहणादीनि स्वैः स्वैर्वाक्यैरुच्यन्त इति। कुतः ? अस्ति हि तैः प्रयोजनम्। चोदितानि हि तानि। कानिचित्तु पृथग्वाक्यैः, कानिचिदर्थप्राप्तानि। तान्यवश्यं प्रकाशयितव्यानि। तानि प्रकाशयिष्यन्त्येतानि वाक्यानि। रूपं चैषां तत्प्रकाशनसामर्थ्यम्। अतो नानार्थत्वान्नैकं वाक्यमुच्यते।**

**ननु भक्षणवाक्यशेषीभवितुमप्येषां रूपमिति। उच्यते। बाढमस्ति रूपम्। न तु तद्विशेषणान्येतानि कल्प्यन्ते। कस्य हेतोः ? अदृष्टार्थानि तथा भवन्ति। उक्तैरनुक्तैर्वा विशेषणैस्तावानेव सोऽर्थः। इतरथा ग्रहणादीनि प्रकाशयिष्यन्ति। तथा दृष्टार्थानि भविष्यन्ति। तस्माद्रूपोपदेशाभ्यामपकर्षो भवेत्केषांचि-दत्रेति ॥ २६ ॥ सिद्धान्तः ॥ भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधि-करणम् ॥ ९ ॥**

त० वा०—परिचोदनोक्तेनैव मार्गेणापकर्षः कर्तव्यः। श्रुतिप्राधान्यानुग्रहात्। ग्रहणादिवच्च रूपेण सामर्थ्यात्प्रकरणात्मकेन लिङ्गेन वाक्यस्य बाधितत्वात्। ननु भक्षणैकवाक्यत्वमपि लिङ्गकृतमेव। सत्यम्। तथाऽपि श्रुतिविप्रकर्षाद्दौर्बल्यम्। ग्रहणाद्यभिधानसामर्थ्येन हि श्रुतिमनुमाय शीघ्रं विनियोगः क्रियते। इतरेण पुनरेकवाक्यता। ततो लक्षणाद्वारेण भवं प्रति सामर्थ्यम्, ततः श्रुत्यनुमानमिति विप्रकर्षः। तेन भक्षस्य प्रत्यासन्नतरेण मन्त्रादिनाऽवरुद्धत्वादेतेषामपि च स्वयमन्यत्राप्रवृत्तेरपकर्षः।

नन्वर्थप्राप्तानां प्रकाशनं निष्प्रयोजनम्। कथं निष्प्रयोजनम्? यदा तान्यप्यप्रकाशितानि नैव शक्यन्तेऽनुष्ठातुम्। तन्नामार्थप्राप्तं न प्रकाश्यते, यदेवमेव विना प्रयत्नेन निष्पद्यते। ग्रहणादीनि तु सर्वाणि पृथक्प्रयत्नसाध्यानि। तान्यस्मृतानि न शक्यन्ते कर्तुमित्यवश्यं स्मर्तव्यानि। भक्षविधिरपि तान्यचोदयित्वा न शक्नोति स्वार्थमनुष्ठापयितुमिति तान्यपि चोदयति। अतो मन्त्रस्वरूपात्तेषां चोपदेशात्सम्यग्जरणतन्मन्त्रयोश्चोपदेशादेवापकर्षः, अर्थस्यैव चोदितत्वात्। तेन यद्यप्यनुदाहृतत्वात्प्रत्यक्षोपदेशोऽत्र न शक्यो वक्तुं तथाऽप्यदोषः। सम्यग्जरणं तु वमनविरेचनयोः प्रायश्चित्ताम्नानात्प्रत्यक्षोपदिष्टमेव[1] द्रष्टव्यम् ॥ २६ ॥

( इति नवमं भक्षानुवाकस्य यथालिङ्गं विनियोगाधिकरणम् ॥ ९ ॥ )

न्या० सु०—लिङ्गविनियोगाधिकारात्, उपदेशस्य च सम्यग्जरणेऽपि क्लेशोपपाद्यत्वादुपदेशग्रहणस्याभ्युच्चयमात्रार्थत्वप्रतीतेर्भक्षानुवाकस्य। अवयवानां केषांचिल्लिङ्गेन भक्षादपकर्ष इत्येवं तस्य रूपादपकर्ष इत्येवं तस्य रूपादपकर्ष इत्येतावत्सूत्रावयवव्याख्यानार्थं रूपादित्यादि न लक्षणेत्यन्तं भाष्यं व्याख्यातुमाह—**परिचोदनेति**।

कीदृक् परिचोदनोक्तो मार्ग इत्यपेक्षायां, मन्त्रस्य श्रौतार्थत्यागात्तत श्रुतिवृत्तेरनुग्राह्यत्वाद्ग्रहणाशक्तेः स्वाभिधानमवान्तरव्यापारीकृत्य लक्षणार्थं त्यागात्कर्तृकत्वानुपपत्तेः स्वप्राधान्यस्यानुग्राह्यत्वादित्युक्तम्। अनेन च भाष्यस्थमुख्यशब्दः श्रुतिप्राधान्यरूपार्थद्वयाशयतया, वाक्यान्यविशेषणात्वरूपार्थद्वयाशयतया च लक्षणाशब्दो व्याख्यातो भवति। कृत्स्नस्यैकवाक्यत्वाद्भक्षणे विनियोगस्य पूर्वपक्षितस्य निरासार्थं मुख्यार्थभावेतिभाष्यावयवं व्याख्यातुं ग्रहणादिप्रकाशार्हेण रूपशब्दोक्तेन सामर्थ्यात्मकेन लिङ्गेन वाक्यबाधोक्त्यर्थोर्थिंवाच्यव्ययलुप्तृतीयाकवति प्रत्ययान्तग्रहणादिच्छब्दयुक्तो ग्रन्थः सर्वाण्येतानि लक्षणविशेषणानीति भाष्योक्तं लिङ्गाविरोधं दूषयितुमनुभाषते—**न त्विति**।

एवमपि विपरिचोदनाभाष्योक्तं दूषणमाह—**सत्यमिति**। ग्रहणाद्यभिधानसामर्थ्यरूपप्रत्यक्षलिङ्गापेक्षयैकवाक्यताकल्प्यलक्षणाद्वारभक्षपदैकवाक्यतोपगमनसामर्थ्यं रूपस्य

1. क. प्रत्यक्षमेव।

लिङ्गस्य पूर्वपक्षोक्तस्य श्रुतिकल्पने विप्रकर्षाद्दौर्बल्यमित्यर्थः। एवं च प्रत्यक्षलिङ्गं विनियोज्येन मन्त्रादिना भक्षस्य वा रुद्धत्वादेहि व सावित्यादीनां च प्रत्यक्षालिङ्गाद् ग्रहणादिषु प्रवृत्तेर्लक्षणादपकर्ष इत्याह—**तेनेति**। यद्यपि ग्रहणादय इति सौत्रसमाख्यानोक्तिप्रथमे व्याख्यार्थभाष्योक्तार्थानुभाषणार्थमुच्यत इति भाष्यं व्याचष्टे—**नन्विति**।

तत्परिहारार्थत्वेनाथंस्य चोदितत्वादिति सूत्रावयवस्य भक्षविध्यन्यथानुपपत्तिकल्पितविधिना एहिवसावित्यादिवाक्यार्थस्य ग्रहणादेश्चोदितत्वादपूर्वसाधनत्वेनापूर्वसाधनीभूतं मन्त्रं प्रति द्वारत्वोपपत्तेर्मन्त्रप्रकाश्यता युक्तेत्येवं व्याख्यार्थं, मन्त्रेत्यादिभाष्यमर्थप्राप्तानाम्, अस्मृतानामपि वा क्लृप्तिवत्सिद्धेः स्मारकापेक्षयाऽपूर्वसाधनत्वाभावेनापूर्वसाधनीभूतमन्त्रं प्रतिद्वारत्वायोगादिति विकल्पनिरासार्थोऽस्तीति भाष्यावयवः सम्यग्जरणस्यानुनिष्पादित्वमाशङ्क्य, विनाहि गतिप्रतिबन्धफलार्जनवस्थानमतः प्रणिधानादिप्रयत्नापाद्यत्वोवत्यर्थश्चोदितानीत्यादिद्वितीयकल्पनिरासार्थत्वेन सूत्रावयवव्याख्यार्थ इत्येवं व्याख्यातुमाह—**कथमिति**। गात्रप्रीणनेन्द्रियगणवितृपीकरणप्राणाख्यसमर्ष्युपस्थाननाभ्यधस्तादगमनरूपानेकार्थहेतुत्वात्सम्यग्जरणस्य बहुत्वमुपचर्य वमनविरेकनिमित्तप्रायश्चित्ताम्नानरूपपृथग्वाक्यचोदितत्वोक्तिः। प्रायश्चित्तविधेर्लिङ्गमात्रत्वादयुक्तेति मत्वा लक्षणस्योदरस्थापनरूपप्रतिपत्तित्वात्सम्यग्जरणं विनोदरे स्थित्ययोगाद्भक्षविधेः सम्यग्जरणपर्यन्तत्वाशयं पुरस्तात्प्रत्यञ्चमैन्द्रवायवं भक्षयति, पुरस्तात्प्रत्यञ्चं मैत्रावरुणं भक्षयति, सर्वतः परिहारमाश्विनं भक्षयतीत्यादिभक्षविधिपर्यवसानात्सामान्यशास्त्रैर्व्यक्तीनामिव सम्यग्जरणस्य चोदितत्वाभिधानमर्थप्राप्तानीत्येतच्च विहितभक्षान्यथानुपपत्तिकल्प्यविध्यन्तरचोदितत्वाशयमित्येवं व्याख्यातुम्—**भक्षेत्युक्तम्**। प्रयोजनं चेति सौत्रसमाख्यानोक्तिद्वितीयव्याख्यार्थभाष्योक्तार्थनिरासार्थत्वेनावृत्त्या रूपोक्तिव्याख्यार्थं रूपश्चैषामिति भाष्यमेहीत्यादिवाक्यानां भक्षयामिपदैकवाक्यतानपेक्षरूपं ग्रहणादिप्रकाशनएव समर्थमित्येवमेकवाक्यतापगमनसामर्थ्यात्मकलिङ्गस्याभिधानसामर्थ्यात्मकलिङ्गापेक्षया श्रुतिविप्रकर्षेऽपि सामान्यान्वयापेक्षितसमाख्यानुसारित्वाच्छ्रुतिकल्पकत्वं युक्तम्। सामान्यान्वयरहितत्वात्त्वितरस्य न युक्तमिति, नन्विति भाष्येणाशङ्क्य, भक्षणस्य स्तुत्यर्थग्रहणादिवैशिष्ट्याप्रकाशने श्रुतेरचोदितत्वेनादृष्टार्थत्वापत्तेः दृष्टसम्भवे चादृष्टार्थत्वायोगादेकवाक्यतोपगमनसामर्थस्य श्रुतिकल्पकत्वानुपपत्तेःक्वचिन्न्यायेन च कृत्स्नस्य भक्षार्थत्वाभावेऽपि भक्षानुवाकसमाख्योपपत्तेः ग्रहणाद्यभिधानसामर्थ्यस्यापि समाख्याविरोधाभावाच्छ्रुतिकल्पकता युक्तेत्येवं निरासार्थत्वेन ग्रहणार्थस्यैवानुष्ठेयत्वेन प्रकाश्यतया पेक्षितत्वात्तद्दृष्टार्थत्वोपपत्तेरनपेक्षितभक्षस्तुत्यर्थत्वे सत्यदृष्टार्थत्वापत्तेरित्येव'मर्थस्य चोदितत्वादि'ति सूत्रावयवस्यावृत्त्याव्याख्यान्तरार्थं बाढमित्यादिभाष्यं स्पष्टत्वान्न व्याख्यातम्।

अत्र भक्षानुवाके केषां चिदवयवानां लक्षणे विप्रकर्ष इत्येवमधिकरणार्थोपसंहारार्थं तस्मादिति भाष्यं व्याचष्टे—**अत इति**। मन्त्रविधायिवाक्याभावाद्ग्रहणादिविषयत्वेनोपदेशोक्तिव्याख्याता। 'हिन्वेति' मन्त्रस्य सम्यग्जरणप्रकाशनशक्तेरतिस्पष्टत्वमात्रालम्बना

प्रौढ्योपदेशोक्तिरर्थस्यैवेत्येवकारेण भक्षस्तुतेश्चोदितशब्दोक्ता भक्षार्थता व्यावर्त्तिता । येन कारणेन ग्रहणाद्यर्थस्य पृथक्प्रयत्नापाद्यत्वेनानुष्ठेयत्वात्प्रकाशनापेक्षितार्थस्य चोदितत्वादिति सूत्रावयवेनोक्ता तेन कारणेन ग्रहणादेः प्रत्यक्षोपदेशानानुदाहरणेऽपि भक्षविध्यन्यथानुपपत्तिकल्प्यविधिभिश्च ग्रहणाद्युपदेशसम्भवान्नादोष इत्याह—**तेनेति** । सम्यग्जरणस्य च सोमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिन तै० सं० इति वमने प्रायश्चित्ताम्नानाद्विरेकेऽपि क्वचित्प्रायश्चित्ताम्नानात्तदन्यथानुपपत्त्यापि विधिकल्पनसम्भवात्स्पष्ट एवोपदेश इत्याह—**सम्यग्जरणं त्विति** । दार्ढ्याशया प्रत्यक्षोक्तिः ॥ २६ ॥

**इति नवमं भक्षानुवाकस्य लिंगानुसारेण विनियोगाधिकरणम् ॥**

**भा० प्र०**—प्रदर्शित पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि "तस्य रूपोपदेशाभ्याम् अपकर्षः" रूप अर्थात् लिङ्ग एवं विधि के अनुसार मन्त्र का अपकर्ष अर्थात् विच्छेद होता है। अतः, समग्र अनुवाक का भक्षण में विनियोग होगा—यह कहना सङ्गत नहीं है, क्योंकि, "अर्थस्य चोदितत्वात्" ग्रहण आदि भी मन्त्र के लिङ्ग एवं वह अन्य विधि के द्वारा विहित भी है। ग्रहण, अवेक्षण एवं निगरण अर्थतः प्राप्त है, कारण, ग्रहणादि के बिना भक्षण उत्पन्न नहीं होता है। इसलिए इस अनुवाक का अंश विशेष का अर्थ प्रकाशन के सामर्थ्य के अनुसार ग्रहणादि में भी विनियोग होगा अर्थात् इस अनुवाक का ग्रहण के प्रकाशक अंश का पाठ कर ग्रहण, अवेक्षण के प्रकाशक अंश का पाठ कर अवेक्षण एवं निगरण = गले से नीचे करना के प्रकाशक अंश का पाठ कर निगरण करना होगा।

यदि कहा जाय ग्रहण आदि अर्थतः प्राप्त होने से मन्त्र के द्वारा उसका प्रकाश करना निष्प्रयोजन है, ऐसा कहने या यह कहा जा सकता है कि अर्थतः प्राप्त वे कर्म ही मन्त्र के द्वारा प्रकाश्य नहीं होते हैं जो अनुनिष्पादी अर्थात् अविनाभावी होते हैं—जिसके लिए स्वतन्त्र व्यापार आवश्यक नहीं होता है, ग्रहण, अवेक्षण एवं निगरण अनुनिष्पादी नहीं हैं, क्योंकि, उनके लिए हस्तप्रसारण आदि स्वतन्त्र-स्वतन्त्र व्यापार आवश्यक होता है। इसलिए ये भी मन्त्र के द्वारा प्रकाश्य होंगे। उनके करने पर अनुवाक का ग्रहण आदि के प्रकाशक अंशों को विच्छिन्न करके ही पाठ करना उचित है। सम्यक् जरण विधि से बोधित होने से अर्थात् जरण न होने पर पीत सोमवमन या विरेचन होने पर श्रुति में प्रायश्चित कहा गया है। अनुवाक के उस प्रकाशक अंश को विच्छिन्न करना होगा। उसमें कोई आपत्ति नहीं है और लिङ्ग समाख्या की अपेक्षा प्रबल होने से उसको छोड़कर स्वार्थ का साधन किया जाता है। अतएव समाख्या के अनुसार भी समग्र अनुवाक का भक्षणार्थ पाठ्य होना उचित नहीं है।

"तस्य" = उसका अर्थात् मन्त्र का "अपकर्ष" = अपकर्ष अर्थात् विच्छेद कर्तव्य है, "रूपोपदेशाभ्याम्" = रूप अर्थात् लिङ्ग एवं उपदेश अर्थात् विधि के द्वारा, "अर्थस्य चोदितत्वात्" = क्यों कि ग्रहण आदि रूप अर्थ चोदित अर्थात् उपदिष्ट = विहित होता है।

**यह नवम लिङ्गानुसारभक्षानुवाक का विनियोगाधिकरण सिद्धान्त ॥ २६ ॥**

अथ मन्द्राभिभूतिरित्यादेर्भक्षयामीत्यन्तस्यैकमन्त्रत्वाधिकरणम् ।

**[१०] गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥ २७ ॥ सि०**

शा० भा०—भक्षानुवाके श्रूयते 'मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु, वसुमद्गणस्य सोमदेव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसोऽग्निष्टत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामी'ति । तत्र संदेहः—किं मन्द्रादिः, तृप्यत्वित्येवमन्त एको मन्त्रः । वसुमद्गणादिरपरः, उत मन्द्रादिर्भक्षयाम्यन्त एक एव मन्त्र इति । किं तावत्प्राप्तम् ? द्वौ मन्त्रौ । द्वौ ह्येतावर्थौ । अन्या तृप्तिः । अन्यद्भक्षणम् । ततोऽर्थभेदाद्वाक्यभेदः । तदुक्तम् । 'तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदित्वादि'ति—एवं प्राप्ते ।

ब्रूमः—गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यादिति । तृप्तिर्भक्षणविशेषणत्वेनाभिधीयते । भक्षयामि वाक्तप्स्यतीति । ननु तृप्यत्वित्येषोऽन्यः शब्दः । अन्यश्च तप्स्यतीति । एषा भविष्यन्तीक्रियायामुपपदभूतायां भवतीति । तत्र द्वयोः क्रिययोरस्ति संबन्धो भक्षयामि वाक् तप्स्यतीति । इह पुनर्भक्षयामि तृप्यत्विति नास्ति कश्चित्संबन्धः । उच्यते । न ह्ययं विधौ तृप्यत्विति विज्ञायते । क्व तर्हि ? प्रार्थनायां वा, प्राप्तकाले वा । यदि भक्षयामि वाक्तप्स्यतीत्येवमभिसंबन्धः क्रियते । यदि वा भक्षयामि वाचस्तप्तुं प्राप्तः काल इति । तेन विशेषणविशेष्यभावादेकार्थतायामेकवाक्यत्वे मन्त्रैक्यमुपपद्यते । ननु निराकाङ्क्षे एते वाक्ये ? भङ्क्त्वा रूपं साकाङ्क्षे क्रियेते । अत्रोच्यते । यद्यप्येते वाक्ये भिन्नार्थे निराकाङ्क्षे द्वावर्थावभिवदेयातां, तथाऽपि भक्षणस्य प्रकाशनं दृष्टं प्रयोजनम् । न तर्पणस्येति कृत्वैकार्थ्यमेव भवेत् । किमङ्ग पुनर्गुणभावे गम्यमान एवात्र । तस्माद् गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यादिति ॥ २७ ॥ इति दशमं मन्द्राभिभूतिरित्यादेर्भक्षयामीत्यन्तस्यैकमन्त्रताधिकरणम् ॥ १० ॥

त० वा०—ग्रहणादिवदेकार्थाक्षिप्ततृप्तिप्रकाशनात् ।
तृप्यत्वन्तःपृथङ्मन्त्र इति प्राप्तेऽभिधीयते ॥
येषां पृथगनुष्ठानमर्थाक्षिप्तं प्रतीयते ।
तेषां मन्त्रप्रकाश्यत्वं नानुनिष्पादिनां भवेत् ॥

ग्रहणादीन्यकृत्वा भक्षानुष्ठानाशक्तेस्तेषु पृथक्पुरुषस्य, शास्त्रस्य च व्यापारो युज्यते । न त्वेवं[1] भक्षणादन्यस्तृप्तौ व्यापार इति, नार्थस्तत्प्रकाशनेन । तस्मा-

१. न ह्येवं ।

त्प्रार्थनायां, प्राप्तकालतायां वा लोटमन्वाख्यायैकवाक्यतामापाद्य तृप्तिविशिष्ट-भक्षप्रकाशनार्थः सकल इत्यभ्युपगम्यते ॥ २७ ॥

( इति मन्द्राभिभूतिरित्यादेर्भक्षयामीत्यन्तस्यैकमन्त्रताधिकरणम् ॥ १० ॥ )

**अथ मन्द्राभिभूतिरित्यादेः भक्षयामीत्यन्तस्य एकमन्त्रताधिकरणम् ॥ १० ॥**

न्या० सु०—यथार्थनिष्कृष्टमन्त्रोदाहरणभाष्यं सूक्तवाकवदेवेति पूर्वाधिकरणवार्तिके-नैवार्थाद्व्याख्यातत्वात्, सन्देहभाष्यं च स्पष्टत्वादव्याख्याय, किं तावदिति पूर्वपक्षभाष्यं पुरोडाशादिभक्षणवत्सोमभक्षणस्यापि द्रव्यप्रतिपत्त्यर्थत्वं वक्तुम्, अनुष्ठानसामर्थ्याधानरूप-भक्षयितृसंस्कारार्थत्वस्यापि सम्भवात्, तर्पयतिना अनुष्ठानसामर्थ्यस्य लक्षणया प्रोत्साहना-याऽननुष्ठेयस्यापि स्वर्गादिवत्प्रकाश्यत्वोपपत्तावभिधानसामर्थ्यात्मकेन लिङ्गेन मन्द्रादेर्भक्षणे विनियोगायोगात्, पृथङ्मन्त्रतेत्येवमाशयत्वेन व्याख्यातुमाह—**ग्रहणादिवदेवेति** । अपवाद-त्वेनाऽनन्तरसङ्गतिसूचनार्था दृष्टान्तोक्तिः ।

सोमभक्षणस्यानुषङ्गिकभक्षयितृसंस्कारार्थत्वकल्पनेऽपि भक्षयितृसंस्कारस्य स्वर्ग-वत्फलत्वाभावेनोत्साहनार्थं प्रकाशनानर्हत्वात्, तर्पयतेश्च तल्लक्षणार्थत्वहेत्वभावात्, तृप्ते-श्चा'ल्पं भक्षयती'ति यावत्तृप्तिनिषेध्येनाऽऽनाशङ्कनीयापादनतयाननुष्ठेयत्वात्प्रकाशनार्ह-त्वानुपपत्तेरभिधानसामर्थ्यात्मकस्य लिङ्गस्यानर्थक्यापत्त्या विनियोजकत्वात्, तदविरोधि-नैकवाक्यतोपगमनसामर्थ्यात्मकेन लिङ्गेन मन्द्रादेर्भक्षणे विनियोगात्, तृप्त्यन्तवसु-मद्गणाद्योर्मन्त्रभागयोरेकतृप्तिफलकभक्षणरूपार्थसंयोगात्, तर्पयतेर्भक्षणगुणत्वेन तृप्त्यत्य-भिधानावगमान्मन्द्रादिरेक एव मन्त्र इत्येवं सूत्रव्याख्यार्थमेवमित्यादिभाष्यं तात्पर्यतो व्याचष्टे—**इतीति** । श्लोकं व्याचष्टे—**ग्रहणादीनीति** ।

तयोरेकार्थसंयोगादिति सूत्रावयवव्याख्यार्थं भक्षयामि वाक् तर्प्स्यतीत्यादिभाष्यशेषं सङ्क्षेपतो व्याचष्टे—**तस्मादिति** । लोटः प्राप्तकालार्थत्वे, प्रार्थनार्थत्वे वा तर्प्स्यतीत्येतदर्थं भक्षयामीत्येवमेकवाक्यतोपपादनार्थं तर्पणक्रियार्थया भक्षणक्रियायामुपपदभूतायां स्मृता तर्प्स्यन्तीतिभविष्यन्त्याख्यातलृट्विभक्तिर्भाष्ये प्रयुक्ता ॥ २७ ॥

**इति दशमं मन्द्राभिभूतिरित्यादेर्भक्षयामीत्यन्तस्यैकमन्त्रताधिकरणम् ॥**

भा० प्र०—पूर्वकथित अनुवाक में ही "मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु वसुमद्गुणस्य सोमदेवते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसोऽग्निष्टुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि" (तै० सं० ३।२।५) इसमें "मन्द्राभि···· तृप्यतु" यह अंश तृप्ति अर्थ का प्रकाशन करता है और शेष अंश भक्षण रूप अर्थ का प्रकाशन करता है। इसमें संशय होता है कि मन्द्र इत्यादि से तृप्यतु यहाँ तक का अंश क्या एक मन्त्र है एवं वसुमद्गणस्य—भक्षयामि यहाँ तक दूसरा मन्त्र है, या मन्द्र से भक्षयामि तक एक ही मन्त्र है ? इसमें पूर्वपक्षी का कहना है कि पूर्व अधिकरण में "तस्य रूपोपदेशाभ्यामपकर्षः" इत्यादि सिद्धान्त—सूत्र के अनुसार इस स्थल में मन्द्र

इत्यादि तृप्यतु पर्यन्त एक मन्त्र है एवं वसुमद्गणस्य से भक्षयामि पर्यन्त दूसरा मन्त्र है। क्योंकि, ये दो अंश तृप्ति और भक्षण इन दो विभिन्न अर्थों का प्रकाशन करते हैं।

इसके उत्तर में सिद्धान्ती का कहना है कि मन्द्र से भक्षयामि तक एक ही मन्त्र है। क्योंकि "गुणाभिधानात्" पूर्व अंश तृप्ति का प्रकाशन करता है वह भक्षण का ही गुण है। ग्रहण आदि के लिए जैसे हाथ का पसरना आदि आवश्यक है, तृप्ति के लिए भी वैसे ही पृथक् प्रयत्न की आवश्यकता नहीं होती है। कारण, तृप्ति भक्षण की ही अनुनिष्पादिनी है और जो अनुनिष्पादिनी अर्थात् जिसके निष्पादन के लिए स्वतन्त्र व्यापार की आवश्यकता नहीं होती है, उनकी मन्त्र प्रकाश्यता मानना निष्प्रयोजन है। क्योंकि, अनुष्ठान की सुविधा के लिए मन्त्र का अनुष्ठेय पदार्थ की स्मारकता स्वीकार की जाती है। किन्तु तृप्ति अनुष्ठेय नहीं हो सकती है, कारण, वह पुरुष-व्यापार सापेक्ष नहीं है। इसलिए तृप्ति में विधि भी नहीं हो सकती है और उसमें मन्त्र का प्रयोग भी नहीं हो सकता है। यदि यह कहा जाय कि 'तृप्यतु' पर्यन्त अंश अन्य अर्थ का प्रकाशन करता है, इस स्थल में लोट् लकार होने से विधि की अवगति होती है और अवशिष्ट 'भक्षयामि' यह अंश अर्थ का प्रकाशन करता है, इस प्रकार यह विभिन्न अर्थ का प्रकाशक है एव विभक्त करने पर साकाङ्क्ष न होने से इनमें एकार्थता न होने से एकवाक्यता नहीं है। एकवाक्यता न होने पर समुदाय एक मन्त्र भी नहीं हो सकता है। ऐसी स्थिति में यह कहा जा सकता है कि 'तृप्यतु' इस स्थल में जो लोट् लकार है वह विध्यर्थक नहीं है, कारण, तृप्ति में विधि नहीं हो सकती है। अपितु इस स्थल में 'प्रार्थना' अर्थ में अथवा प्राप्त काल अर्थ में लोट् लकार का प्रयोग होता है, तृप्ति भक्षण का ही विशेषण होने से यह भक्षण सापेक्ष नहीं है—यह नहीं कहा जा सकता है। अतः, इस स्थल में एकवाक्यता होने में कोई बाधा नहीं है। इसलिए, 'मन्द्र' इत्यादि 'भक्षयामि' इतना अंश एक समुदाय मन्त्र है एवं समुदाय मन्त्र भक्षण में विनियुक्त होता है। इस अधिकरण का यह प्रयोजन हैं कि पूर्वपक्षी के मत के अनुसार भक्षण के बाद 'तृप्यतु' अंश प्रयोज्य है, कारण, तृप्ति भक्षण का परभावी और सिद्धान्त मत में वह भक्षण के पूर्व में ही प्रयोज्य है।

"मन्द्रादिः एकमन्त्रः" = मन्द्र इस शब्द से आरम्भ करके ही अवशिष्ट 'भक्षयामि' पर्यन्त अंश एक मन्त्र है, "गुणाभिधाभात्" क्योंकि मन्द्र इत्यादि अंश भक्षण का ही गुण जो तृप्ति वह प्रकाश करता है, "तयोः" इन दो वाक्यों का "एकार्थसंयोगात्" = एक अर्थ के साथ संयोग अर्थात् सम्बन्ध रहने से।

**दशम मन्द्राभिभूतिः इत्यादि का एक मन्त्र अधिकरण है ॥ २७ ॥**

## [११] लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ॥ २८ ॥ पू०

**शा० भा०—एष एव मन्त्र उदाहरणम्। इह च प्रदानान्यैन्द्राणि, अनैन्द्राणि च विद्यन्ते। तेषां भक्षणान्यपि सन्ति। तत्र संदेहः—किमैन्द्रेष्वनैन्द्रेषु च मन्त्र, उतैन्द्रेष्वेव मन्त्रः। अनैन्द्राणाममन्त्रकं भक्षणमिति। किं तावत्प्राप्तम्? अनैन्द्राणाममन्त्रकं भक्षणमिति। कुतः? समानविधानान्येतानि प्रदानानि। तेष्विन्द्रपीतस्येति मन्त्रोऽनिन्द्रपीतं न शक्नोति वदितुम्। न च समानप्रकरण ऊहः संभवति। असति वचनेऽन्यार्थानभिधानात्। तस्मादमन्त्रकं भक्षणमेवंजातीयकेष्विति ॥ २८ ॥ पूर्वपक्षः ॥**

त० वा०—इन्द्रपीतस्येति सोमसामानाधिकरण्यादनैन्द्राणां विलिङ्गत्वात्प्रकृतौ चोहाभावादमन्त्रकं भक्षणमिति ॥ २८ ॥

**इन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेषु ऊहेन विनियोगाधिकरणम् ॥ ११ ॥**

न्या० सु०—मन्द्रादिर्मन्त्रो लिङ्गेन भक्षणे विनियुज्यते इत्युक्ते प्रसङ्गात्किमैन्द्रसोमभक्षणेष्वेव विनियुज्यते, सर्वेषु वा सोमभक्षणेष्विति चिन्तार्थमापादसमासेरेकमधिकरणम्। सन्देहहेतुश्चेन्द्रपीतशब्दः किमिन्द्रेण पीत इति तृतीयासमासत्वात्सोमवाची, किं वा इन्द्रेण पीतमस्मिन्निति बहुव्रीहित्वात्सवनवाचीति सन्देहः। तल्लिङ्गविशेषनिर्देशादनैन्द्राणाममन्त्रत्वमित्येतावत्सूत्रमन्यपदार्थप्रधानबहुव्रीह्यपेक्षया स्वपदार्थे प्राधान्यात्तत्पुरुषस्य बलीयस्त्वप्रतीतेर्विशेषतश्चास्य व्यधिकरणत्वेन बहुव्रीहित्वायोगादिन्द्रपीतस्येत्येन्द्रलिङ्गनिर्देशादनैन्द्रसोमभक्षणानां लिङ्गविनियोज्यमन्त्राविषयता इत्येवं, पूर्वपक्षार्थं समानविधानेष्वनैन्द्राणाममन्त्रत्वमित्येतावत्त्वावृत्तैकदेशमैन्द्राणां च प्रदानानां धर्मग्राह्यैकज्योतिष्टोमावयवत्वेन समानविधाने प्रकृतिविकारभावाभावेनोहायोगात्, अनैन्द्रसोमभक्षणानां शून्यतेत्येवं पूर्वपक्षप्रयोजनोक्त्यर्थमिति सर्वं सूचयितुमाह—**इन्द्रपीतस्येति** ॥ २८ ॥

भा० प्र०—"मन्द्राभिभूतिः" इत्यादि "भक्षयामि" पर्यन्त मन्त्र का सोमभक्षण में विनियोग होता है, इसमें पुनः यह शङ्का होती है कि यह मन्त्र ऐन्द्र ग्रह के भक्षण में एवं अनैन्द्रग्रह के अर्थात् इन्द्रग्रहातिरिक्त मैत्रावरुणादि ग्रह के भक्षण में सामान्यरूप में विनियुक्त होगा, अथवा यह केवल ऐन्द्र ग्रह के भक्षण में ही विनियुक्त होगा, और अनैन्द्र ग्रह का भक्षण विना मन्त्र के ही सम्पादित होगा? पूर्वपक्षी का कहना है कि "समान विधानेषु अनैन्द्राणाम् अमन्त्रत्वम्" = अनैन्द्रग्रह में उक्त मन्त्र का प्रयोग नहीं होगा। कारण, "लिङ्गविशेषनिर्देशात्" = उक्त मन्त्र में विशेष लिङ्ग 'इन्द्रपीत' इस शब्द का प्रयोग है, इसका अर्थ यह है कि इन्द्र के द्वारा पीत सोम का ही भक्षण अवगत करता है, अतः अनिन्द्रपीत अर्थात् इन्द्र के द्वारा पीत नहीं है अन्य देवता कर्तृक पीत है, उस सोम के भक्षण में यह प्रयुक्त नहीं हो सकता है, क्योंकि, ऐसा मानने पर मन्त्र अनन्वितार्थक होगा। यदि ऐन्द्र ग्रह भक्षण एवं अनैन्द्र ग्रह भक्षण में प्रकृति विकृतिभाव माना जाय तो अर्थात् ऐन्द्रग्रहभक्षण प्रकृति एवं अनैन्द्रग्रहभक्षण विकृत होता, तब ऊह आदि के द्वारा

इस मन्त्र का विनियोग किया जा सकता था, किन्तु इस स्थल में इनमे प्रकृतिविकृतिभाव नहीं है, कारण, अनैन्द्रग्रह सभी ऐन्द्रग्रह के समान समानविधि अर्थात् ये सभी एक ही प्रकार से उपदेश विधि के विषय हैं, किन्तु वे किसी अतिदेश विधि के द्वारा विहित नहीं है। इसलिए सूत्र में कहा गया है "समानविधानेषु" अथवा सम्पूर्ण भक्षण मिल कर एक वर्ग सम्पादित होने से इस स्थल में कर्मैक्य रहने से ऊह नहीं हो सकता है, क्योंकि, कर्म का भेद रहने पर ही ऊह होता है। अतएव मैत्रावरुणादि अनैन्द्र ग्रह का भक्षण के बिना मन्त्र में ही कर्तव्य होने से अनैन्द्र भक्षण आमन्त्रक है।

"समानविधानेषु"—समान विधान में अर्थात् प्रकृति विकृति भावशून्य स्थल में, "अनैन्द्राणाम्" = अनैन्द्र अर्थात् इन्द्रग्रहातिरिक्त मैत्रावरुणादि ग्रहों के भक्षण में, "आमन्त्रत्वम्" = उक्त मन्त्र का प्रयोग नहीं होगा, "लिङ्गविशेषनिर्देशात्"- क्योंकि, विशेष लिङ्ग का निर्देश है, अर्थात् "इन्द्रपीतस्य" इस स्थल में इन्द्र प्रकाशकतारूप विशेष लिङ्ग सामर्थ्य है ॥ २८ ॥

यह प्रथम पूर्व पक्ष है।

**अथैकादशमिन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेषूहेन विनियोगाधिकरणम्।**

## यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ॥ २९ ॥ द्वि० पू०

शा० भा०—अथवा यथादेवतमूहेन लक्षयितव्यम्[1]। कस्मात्? ध्रुवचमसा हि प्रकृतिभूताः। के पुनर्ध्रुवचमसाः? ये शुक्रामन्थिप्रचारे सवनमुखीयाः। ऐन्द्रास्ते भवन्ति। तेषां प्रकृतिभूतं प्रदानं, विकृतिभूतान्यन्यानि। कथमवगम्यते? तत्प्रकृतित्वं हि दर्शयति। कथम्? अनुष्टुप्छन्दस इति षोडशिन्यतिरात्रे भक्षमन्त्रं नमति, इति। किमत्र[2] दर्शनम्? नमतीति विपरिणामं दर्शयति।

ननु वचनमेतत्स्यात्। नेत्युच्यते। नैतन्नमतीति श्रूयते। कथं तर्हि? एवं नमतीति, अनुष्टुप्छन्दस इति भक्षमन्त्रं नमतीति। स एष ऊहो विकारेषूपपद्यते तस्मादेते विकाराः। अतोऽनैन्द्रेष्वपि चोदकप्राप्तो मन्त्र ऊहितव्यो भवति। उच्यते। विकारा एत इति लिङ्गमपदिष्टम्। न्यायोऽभिधीयतामिति? उच्यते। ऐन्द्रः सोमो गृह्यते, मीयते च। तेनैन्द्रेषु सोमः। अनैन्द्रेषु सोम एव नास्तीति सर्वे सोमधर्मा ऐन्द्रेष्वेव। अधर्मका इतरे साकाङ्क्षाः। कथं पुनर्ज्ञायते? ऐन्द्रः सोमो गृह्यते मीयते चेति। मन्त्रवर्णात्। इन्द्राय त्वा वसुमत इत्येवमादिर्मन्त्र ऐन्द्रं सोमं वदितुं शक्नोति, नान्यम्। तस्मादैन्द्रः सोमः।

---

१. ब. भक्षयितव्यय। २. ब. किं तत्र।

**तेनैन्द्रेषु सोमधर्माः । अन्यानि तु प्रदानानि साकाङ्क्षाणि । अतो धर्मान्ग्रहीष्यन्तीति न्यायः । तस्माद्यथादेवतमूहितव्यो मन्त्र इति ॥ २९ ॥**

**एवं स्थितं तावदपर्यवसितम् । तत एवं सति चिन्तान्तरं वर्तिष्यते । सिद्धान्तः ॥ इन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेषूहेन विनियोगाधिकरणम् ॥ ११ ॥**

त० वा०—अनैन्द्रेष्वप्यूहेन प्रयोगः, विकृतित्वात् । समानेऽपि कर्माणि प्रदानभेदात्प्रकृतिविकारभावो भविष्यति । ध्रुवचमसा[1]श्चैन्द्राः प्रकृतिभूताः । कथमवगम्यते ? ग्रहणमन्त्रेण सोमस्येन्द्रप्रदानविषयत्वात् । भवति हि साधनवशेन साध्यस्य नियमः । तद्यथाऽऽहवनीयादिवशेनाग्निहोत्रादेः । यत्र च सोमः तत्र सर्वे तद्धर्माः । तेनैन्द्राणि प्रदानानि धर्मवन्ति । इतराणि त्वधर्मकत्वादतिदेशेन ग्रहीष्यन्ति । ततश्च सिद्ध ऊहः ।

तथा च सिद्धवत् 'नमति' इत्यनूद्य , अनुष्टुप्छन्दसः' इति विशेषविधानमुपपत्स्यते । संस्थानां च विकारत्वमद्याप्यसिद्धमिति दर्शनं मन्यते । विकारत्वे त्वन्यथाऽस्त्येवोह इत्यदर्शनमेव स्यात् । ननु संस्था विकारभूतैवेत्यलिङ्गं विपरिणामदर्शनम्[2] नेति ब्रूमः । अग्निष्टोमान्तानां हि प्रदानानां समानविधानत्वे, संस्थानां विकारत्वेऽपि प्रकृतिवद्विकृतावप्यविकृतस्यैवोपकारकत्वसंभवात्कुतो विपरिणामदर्शनम् । ऐन्द्राणां तु प्रकृतित्वे तार्तीयसवनिकेष्वत्र्यप्यग्निष्टोमादिषु विपरिणत एवेत्युपपन्नं विपरिणामदर्शनम् । (विशिष्टपदाक्षेपश्चैष = विपरिणामव्यपदेशः । न विधिनाऽनुष्टुप्छन्दः शब्दाक्षेप इति ।) तस्माद्यथादेवतमूह इति ॥ २९ ॥

( इत्येकादशमि इन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेवूहेन विनियोगाधिकरणम् ) ॥ ११ ॥

न्या० सु०—लिङ्गेन मन्त्रस्यानैन्द्रसोमभक्षणे विनियोगाभावेऽपि 'इन्द्राय त्वा वसुमते गृह्णामी'तीन्द्रलिङ्गेन मन्त्रेण सोमग्रहणात्, इन्द्रलिङ्गेनैव च सोममानात्, विद्याग्नीनां त्रैवर्णिकविषयत्वनियमात् तत्साध्यानां क्रतूनां त्रैवर्णिकविषयत्वनियमवन्मन्त्रलिङ्गादग्नीषोमीयस्य चाङ्गत्वनियमवत्सोमस्य मानग्रहणयोरिन्द्रलिङ्गमन्त्रनिर्देशादैन्द्राणामेव प्रदानानामौपदेशिकधर्मत्त्वावगतेः 'सोमेन यजेते'त्य'स्यापि मन्त्रालोचनयैन्द्रेण सोमेन यजेतेत्येवमर्थत्वावगतेः, कर्मैक्येऽपि चाभ्यासानां भेदः, संस्थावत्प्रकृतिविकारभावोपपत्तेः, सर्वेषां प्रदानानां समानविधानत्वाभावादनैन्द्रसोमभक्षणानां यथादेवतं मन्त्रवत्तेत्येवं पूर्वपक्षप्रयोजनाक्षेपार्थत्वेनैतत्सूत्रं व्याख्यातुमाह—**अनैन्द्रेष्वपीति** । प्रयोगोक्त्या पूर्वपक्षे प्रयोजनोक्त्यर्थं-

---

१. क.० ध्रुवसोमचमसा । २. क. दर्शनात् ।

पूर्वसूत्रावयवोक्तामन्त्रकत्वनिरासार्थत्वेन वा शब्दो व्याख्यातः । विकृतित्वादित्यनेनाऽनैन्द्राणां प्रतियोगित्वेनोपस्थापितेन्द्रप्रकृतित्वं हीतिसूत्रावयवो व्याख्यातः । कर्मैक्यात्प्रकृतित्वायोगमाशङ्क्याह—**समाने हीति** । अनैन्द्राणां विकृतित्वात् प्रकृतिः केत्यपेक्षायामाह—**ध्रुवेति** ।

लिङ्गविशेषनिर्देशादिति पूर्वसूत्रावयवमनुपज्यैन्द्राणां प्रकृतित्वोपपादनत्वेन हेतुप्रश्नपूर्वं व्याख्यातुमाह—**कथमिति** । कथं गुणभूतमन्त्रानुरोधात्कथमप्रधानभूतप्रदानव्यवस्थेत्याशङ्क्याह—**भवति हीति** । प्रकृतिविकारभावमुपसंहरति—**तेनेति** । प्रकृतिविकृतित्वोपपादनस्योहोपयोगमुपसंहरति—**ततश्चेति** । प्रकृतिविकारभावलिङ्गत्वायोगात्तत्प्रकृतित्वं हि दर्शयतीत्यावृत्त्या एकदेशसूत्रावयवोक्तं लिङ्गदर्शनं व्याचष्टे—**तथा चेति** । अग्निष्टोमान्तानां प्रदानानां समानविधानत्वेऽपि संस्थानां परमतेन तावत्परिहरति—**संस्थानां चेति** ।

स्वमतेन विकारत्वेऽप्यूहानुवादस्य लिङ्गत्वोपपत्ति शङ्कापूर्वमाह—**नन्विति** । अग्निष्टोमप्रदानसामानविध्ये सति संस्थानाधिकारान्वयियथाप्रकृतावग्निष्टोमप्रदानसामानविध्येसति संस्थानाधिकारान्वयि 'यथा प्रकृतावग्निष्टोमसंस्थायां सर्वेषां त्वैकमन्त्र्यं स्यादि'ति सिद्धान्तन्यायेनानूहितप्रयोगः, तथा विकृतावपि षोडशिन्यतिरात्रे चादित्यवत् गणस्य तृतीयसवनेऽस्य जगतीच्छतः स पितृपीतस्येत्यनूहितप्रयोगसम्भवान्नोहानुवादो युज्यते । ऐन्द्रप्रदानानां तु प्रकृतित्वे यथा प्रातःसवनीयेष्वनैन्द्रेषु प्रदानेपूहितः, तथा तार्तीयसवनीयकेष्वग्निष्टोमादिष्वपितृदेवत्येषु प्रदानपूहितत्वाषोडश्यतिरात्रयोस्तृतीयसवनीययोरपि पितृदेवत्ययोः प्रदानयोरूहदर्शनं युक्तमित्यर्थः ।

पूर्वपक्षेऽन्यदेवत्यमोक्षणानाममन्त्रकत्वेऽपि समानविधानत्वस्य पूर्वसिद्धान्तपक्षयोस्तुल्यत्वम् । इन्द्रलिङ्गानां रसीभूतसोमग्रहणायादिष्वप्रयोगमुभयाभिमतमाक्षेप्तुमसमानाविधित्वेनाक्षिप्तोहशङ्कार्थं सङ्गतिलाभायेन्द्रपीतशब्दस्य सोमविषयत्वाभ्युपगमेनाऽनैन्द्रेषु भक्षणमन्त्रोहस्य शङ्कितत्वाल्लिङ्गदर्शनोपपत्तिः । समानविधानत्वेऽ'प्यनुष्टुप्छब्दशब्दयुक्तं भक्षमन्त्रं करोती'ति भक्षमन्त्रेऽनुष्टुप्छन्दःशब्दविधानपूर्वपक्षन्यायेन वा षोडशिनि पितृदेवत्येव पितृपीतशब्दयुक्ततार्तीयसावनिकभक्षमन्त्रप्राप्तेरनुष्टुप्छन्दःशब्दयुक्तभक्षमन्त्रविधानादर्थप्राप्तस्योहस्य धातुनाऽनुवादो भविष्यतीत्याशङ्क्याह—**विशिष्टेति** ।

जगतीकार्ये षोडशिन्यनुष्टुब्विधौ सत्यनुष्टुप्छन्दःशब्दस्योहितस्य मन्त्रसिध्यर्थो विधिरूहाननुवादेऽप्यवसीयते । तदभावानुसारेण सति तदनुष्टुप्छन्दःस इत्येवमूहविशेषरूपेण विशिष्टमनुष्टुप्छन्दः परमपेक्ष्याप्यविपरिणामव्यपदेशो युज्येत । ननु स्वरूपेण विधित्सितमनुष्टुप्छन्दःशब्दमपेक्ष्य ततश्चानुष्टुप्छन्दःशब्दस्योहत्वे प्रमाणाभावात्तद्विधावप्यूहस्याप्राप्तत्वान्नानुवादोपपत्तिरित्याशयः । इष्टपदेतिपाठे त्वनुष्टुप्छन्दःशब्दस्योहानुवादार्थं नमतीति पदमपेक्ष्य पश्चाद्विधौ सति विपरिणामव्यपदेशो युज्येत । ननु विधित्सितमनुष्टुप्छन्दःशब्दमपेक्ष्य पश्चाद्विपरिणामव्यपदेश इत्यर्थः । पूर्वपक्षप्रयोजनाक्षेपमुपसंहरति—**तस्मादिति** ॥ २९ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष का खण्डन करते हुए अन्य पूर्वपक्षो का कहना है कि "यथादेवतं वा" मन्त्र का यथादेवत करके पाठ करना चाहिए—जिस ग्रह का जो देवता है, उसके शेष भक्षण के समय मन्त्र में देवता का ऊह=उल्लेख कर पाठ करना होगा, अतः 'इन्द्रपीतस्य' इस प्रकार लिङ्ग रहने पर मैत्रावरुणादि ग्रह के भक्षण में मन्त्र असमर्थ अर्थात् असमवेतार्थ होगा, ऐसी बात नहीं है। यदि कहा जाय कि प्रकृति-विकृति स्थल में ही ऊह होता है; जैसे सौर्ययाग आग्नेययाग की प्रकृति होने से आग्नेययाग में "अग्नयेजुष्टं" इस प्रकार पाठ रहने पर ही उसके विकृतिभूत सौर्ययाग में "सूर्याय जुष्टं" इस प्रकार ऊह किया जा सकता है, किन्तु इस स्थल में ऐन्द्र एवं अनैन्द्र ग्रह निष्पाद्य कर्म एक ही है, अतः, ऊह किस प्रकार हो सकता है इसके समाधन में कहा जा सकता है कि इस स्थल में कर्म की एकता अर्थात् अभिन्नता रहने पर भी सोमभक्षण का भेद रहने से इस स्थल में भी ऊह हो सकता है और यह जो कहा गया है कि इस स्थल में प्रकृति-विकृतिभाव नहीं है—यह भी ठीक नहीं है। कारण, "तत्प्रकृतित्वं हि दर्शयति", इस स्थल में भी लिङ्ग के द्वारा प्रकृति-विकृति भाव सिद्ध होता है। क्योंकि, "इन्द्राय त्वा वसुमते जुष्टं गृह्णामि" इस मन्त्र में इन्द्र के उद्देश्य से सोमग्रहण कथित होने पर सोम का सभी धर्म इन्द्रयाग में विहित होता है। ऐसी स्थिति में इन्द्रयाग प्राकृति है और अनैन्द्रयाग विकृति ही होता है, क्योंकि अनैन्द्रयाग में इन्द्रयाग के सभी धर्मों की आकांक्षा के अनुसार प्रकृतिभूत ऐन्द्रयाग से प्राप्त होता है, अतएव अनैन्द्रग्रहों के शेष भक्षण में ऊह की सहायता से मन्त्र का प्रयोग करना होगा।

"यथादेवतं"=मन्त्र को यथादेवत कर पाठ अर्थात् जिस ग्रह का जो देवता है उसका शेष भक्षण के समय में मन्त्र में उस देवता के नाम का ऊह करके प्रयोग करना होगा। "वा" = पूर्वपक्ष के निरास के लिए है, "हि" = क्योंकि, "तत्प्रकृतित्वं दर्शयति" (श्रुति) तत्प्रकृतित्व अर्थात् ऐन्द्रयाग प्रकृतित्व प्रदर्शित करते हैं ॥ २९ ॥

**यह द्वितीय पूर्वपक्ष है।**

## अथ द्वादशं पुनरभ्युन्नीत सोमभक्षणे इन्द्रस्याप्युपलक्षणाधिकरणम्।

## [१२] पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥३०॥ सि० ।

**शा० भा०—सन्ति पुनरभ्युन्नीताः सोमाः शुक्रामन्थिप्रचार एव सवनमुखीयाः। तेषां होतुर्वषट्कारे, अनुवषट्कारे च चतुर्भिर्मध्यतःकारिणां चमसैर्हुत्वा, होत्रकाणां चमसैः सकृत्यकृद्वषट्कार एव हुत्वा पुनः सशेषेष्वेव पात्रेषु सोमोऽभ्युन्नीतः। एवं हि तत्राध्वर्युः संप्रेष्यति, मध्यतः—कारिणां चमसाध्वर्यवो वषटकृतेऽनुवषट्कृते जुहुत।' होत्रकाणां चमसाध्वर्यवः सकृद्धुत्वाशुक्रस्याभ्युन्नीयोपावध्वर्तमिति। तत्र होत्रका नानादेवता यजन्ति। मैत्रावरुणो मित्रा-**

**वरुणौ, 'मित्रं वयं हवामहे' इति, ब्रह्मणाच्छंसी इन्द्रम्, 'इन्द्रं त्वा वृषभं वयमि'ति। पोता मरुतः 'मरुतो यस्य हि क्षये' इति। नेष्टा त्वष्टारं पत्नीश्च, 'अग्ने पत्नीरिहाऽऽवह' इति। अग्निध्रोऽग्निम्, 'उक्षां नाय वशां नाय' इति। तत्र तैश्चमसैः पूर्वस्मिन्वषट्कार इन्द्र इष्टः। पुनरभ्युन्नीय मित्रावरुणाद्या देवता इष्टाः। शेषास्तत्रेन्द्रस्य मित्रावरुणादीनां च तत्र संदेहः—किं प्रस्थित-देवतायाश्चेन्द्रस्य मित्रावरुणादीनां चोपलक्षणम्, उतेन्द्रो नोपलक्षयितव्य इति। किं तावत्प्राप्तम्? पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणम्। कस्मात्? द्विशेषत्वात्। चमसे चमसे तत्र द्वयोः शेषः। प्रकृतौ यस्यै हुतं, तच्छेषस्तत्पीत इत्युक्तम्। इहापि तद्वदेव वदितव्यम्। तस्माच्चमसे चमसे द्वयोरुपलक्षणम्॥३०॥**

त० वा०—एवं पूर्वपक्षस्य एवाधिकरणे कृत्वाचिन्तयोहविषयत्वं चिन्तयति। हुतेषु चमसेषु सशेषेष्वेवाभ्युन्नीताः **सोमाः पुनरभ्युन्नीता** इत्युच्यन्ते। तेषां तु यथा पुनरभ्युन्नतित्वं, यथा चोहचिन्ताविषयता। तथा विभज्य दर्शयति सन्ति दश चमसाः तेषां ये मध्यतःकारिणां ब्रह्मादीनां चत्वारस्तैर्होतुर्वषट्-कारानुवषट्कारयोर्द्विर्द्विर्हुतं होत्रकचमसैस्तु सकृद्वषट्कार एव हुतं सर्वेषु चेन्द्रो देवता। ततश्चमसेषु सशेषेष्वेव सोमोऽभ्युन्नीय हूयते। कथमगम्यते? तत्सर्वं प्रैषेण दर्शयति। तत्र द्वितीये होमे **होत्रका नानादेवता यजन्ति। मैत्रावरुणो-मित्रावरुणौ 'मित्रं वयं हवामहै'** इत्यादियाज्याभिरेव दर्शयति। तत्र यदैते चमसा हुत्वा भक्षणार्थमानीयन्ते, तदा द्वौ द्वौ शेषौ दृश्यैते। पूर्वहोमशेषश्चैन्द्रः, उत्तरश्च मित्रावरुणादिदेवत्यः। तस्योपलक्षणे क्रियमाणे संदेहः—किं प्रस्थित-देवता—अतिक्रान्तोऽपीन्द्र उपलक्षयितव्यः, उत्तराश्च मित्रावरुणाद्या इन्द्रमित्रा-वरुणपीतस्येत्येवम्, उतेन्द्रमित्रावरुणादय एव केवला इति। कुतः संशयः? किं देवतान्तरसंचारेण पूर्वदेवतासंबन्धोऽपनीतः, उत नेति। यद्यपनतिः ततः केवलमित्रावरुणाद्युपलक्षणम्। अथानपनीतः तत् इन्द्रोऽप्युपलक्षणीय इति। किं प्राप्तम्। सिद्धान्तेनैव तावदुपक्रमः 'सर्वेषामुपलक्षणम् द्विशेषत्वात्' इति॥ ३०॥

**अथ द्वादशं पुनरभ्युन्नीतभक्षणे इन्द्रस्याप्युलक्षणाधिकरणम्।**

न्या० सु०—ऊहोक्तेः पूर्वपक्षप्रयोजनमात्रार्थत्वेनाऽस्थायित्वादूहविशेषचिन्ता न युक्ते-त्याशङ्क्य, ऊहव्याजेन पुनरभ्युन्नीतयागे पूर्वशेषस्य हि तस्य पुनरभ्युन्नीतस्य सोमस्य विनियोगः अभ्युन्नीतमात्रस्य वेति चिन्तार्थं कृत्वाचिन्तयोहविशेषचिन्तोपपत्तिसूचनार्थमेव-मिति भाष्यं व्याचष्टे—**एवमिति**। पूर्वपक्षप्रयोजनाक्षेपः पूर्वपक्षोक्त्या विवक्षितः। ऊह-निरस्ते तद्विशेषचिन्तानवसरापत्तेर्मध्ये चिन्तान्तरोपपत्तिसूचनायैवकारः। कृत्वाचिन्त्यो-क्त्योहस्थायित्वेऽपि मन्मिषेण संसर्गिद्रव्यस्य निष्कर्ष्टुमसामर्थ्यं कृत्स्नस्य पात्रस्य पुनरभ्यु-न्नीतयागाङ्गत्वे बुद्ध्या वा निष्कर्षशक्तेः पुनरभ्युन्नीतमात्रस्येति निष्कर्षसामर्थ्यात्मकलिङ्ग-हेतुकशेषचिन्तात्मकत्वात्पादलक्षणसङ्गतचिन्तोपपत्तिः सूचिता।

पुनरभ्युन्नीतोक्तिं व्याचष्टे—**हुतेष्विति**। पुनरभ्युन्नीतत्वोक्त्युपपादनार्थं तेषामित्यादि। तत्रेत्यादिचोहचिन्ताविषयत्वोपपादनार्थं भाष्यमवतारणपूर्वं व्याचष्टे—**तेषामिति**। ब्रह्मयजमानहोत्रुद्गातारो मध्यतः कारिणः। मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्ट्राग्नीध्राच्छावाकानां षण्णां मध्येऽच्छावाकयाज्या दर्शिता। ब्राह्मणाच्छंसियाज्यायाश्चैन्द्रत्वेऽपि कियतः सोमस्य विनियोग इति चिन्तोपयोगित्वात्प्रदर्शनं संसर्गिद्रव्यत्वेन शेषभेदानवगमाच्छेषस्तत्रेति भाष्यावयवमयुक्तमाशङ्क्य बुद्ध्या निष्कर्षसम्भवसूचनार्थम्—**दृश्यते इत्युक्तम्**। तत्रेति सन्देहभाष्यं व्याचष्टे—**तत्रेति**।

शेषस्य देवतयोपलक्षणे क्रियमाणे तदुपलक्षणार्थत्वेन प्रस्थितापीन्द्राख्या देवता कीर्त्तयितव्या न वेति कीर्त्तनाख्यप्रकथनवाचिकरोत्यर्थे तव्यप्रयोगाच्छेषोपलक्षणायेन्द्रः कीर्त्तयितव्य इत्येवं उपलक्षणत्वोक्तेर्व्याख्यातत्वान्नेन्द्रपदोहो अनेनोक्तः। येनेन्द्रपदस्य प्राकृतत्वादिन्द्रमित्रावरुणसमुदायस्य च देवतात्वाभावेनेन्द्रमित्रावरुणपदस्येन्द्रमित्रावरुणपदस्येन्द्रपदस्थाने प्रयोगायोगात्सिद्धान्तवचनव्यक्त्ययोगः शक्येत। द्वयोस्तु प्रदानयोः प्रत्येकं भक्षमन्त्रप्राप्ताविन्द्रप्रदानप्रकृतित्वादविकृते मित्रावरुणपीतस्येत्येवमित्युक्तम्। अतिक्रान्तयागान्वयाच्चेन्द्रस्यातिक्रान्तता प्रस्थितोक्तिव्याख्यानायोक्ता। शेषद्वयसद्भावे पूर्वपक्षायोगात् सन्देहायोगं शङ्कते—**कुत इति**। पूर्वदेवतान्वयापनयानपनयनसन्देहात्सन्देहमुपपादयितुमाह—**किमिति**। भक्षमाणस्य सोमस्य द्वयोर्देवतयोः शेषत्वादिन्द्रस्य मित्रावरुणादीनां शेषोपलक्षणार्थं कीर्त्तनाख्यं प्रकथनमित्येवं प्रकथनवाचिनः करोतेदर्थे ल्युट्प्रयोगात्स्पष्टार्थं सूत्रमसिद्धान्तार्थत्वमात्रेण व्याचष्टे—**किमिति**॥ ३०॥

भा० प्र०—पूर्व अधिकरण की समाप्ति के बिना ही तक्षभेद मन्त्र में देवता का ऊह करना होगा—द्वितीय पूर्वपक्षी का यह मत सिद्धान्त न होने पर भी—इस मत को आपाततः स्वीकार कर 'क्त्वा-चिन्ता' रूप में पाँच अधिकरणों में इस ऊह विषय का ही विचार किया गया है। सेवन में जो समस्त चमस अर्थात् पात्र विशेष में स्थित सोमरस रहता है, उनमें सवनमुखी नौ ग्रह देकर प्रथम में होम करना पड़ता है, इस स्थल में नौ बार इन्द्र ही देवता हैं, उनमें पुनः मैत्रावरुण, ब्राह्मणाच्छंसी नैष्टापोता एवं अग्नीध्र ये पाँच होता जिस चमस में होम करते हैं। वह एक बार होम करके उसमें कुछ अवशिष्ट सोम रख कर उस अवशेष का भक्षण न कर पुनः द्रोण कलस से सोम का ग्रहण करना पड़ता है। इस सोम का नाम पुनरभ्युन्नीत है। यह मित्रावरुण देवता के उद्देश्य से होम करना पड़ता है, उस होम के सोम का कुछ शेष अंश रख कर अवशिष्ट सोम का भक्षण करना पड़ता है, यह जो शेष भक्षण है—इसको मन्त्रपाठपूर्वक ही करना पड़ता है, पूर्व अधिकरण का ऊह पक्ष के अनुसार तक्षभेद में भक्षणमन्त्र में जिस-जिस देवता का हवनावशिष्ट है, उस उस देवता का ऊह करना पड़ता है, अतः उसी प्रकार यहाँ भी ऊह होगा। इसमें यह संशय होता है कि पुनरभ्युन्नीत भक्षण में इन्द्र एवं मित्रावरुण दोनों का ही उल्लेख करना होगा, अथवा केवल मित्रावरुण देवता

का ही प्रयोग करना होगा।' इस प्रकार सन्देह होने पर सिद्धान्त उल्लेखपूर्वक अधिकरण का आरम्भ कर कहा है—"पुनरभ्युन्नीतेषु सर्वेषाम् उपलक्षणम्"—पुनरभ्युन्नीत सोम के भक्षण के समय सभी देवताओं का प्रयोग करना होगा; कारण, "द्विशेषत्वात्"—इस स्थल में जो शेष भक्षण किया है—वह द्विशेष—इन्द्र एवं मित्रावरुण दोनों का ही भक्षणावशिष्ट हैं।

"पुनरभ्युन्नीतेषु" = पुनरभ्युन्नीत नामक सोम के भक्षण काल में, "सर्वेषाम् उपलक्षणम्" सभी का ही अर्थात् इन्द्र के साथ मित्रावरुण आदि देवता का भी उपलक्षण अर्थात् भक्षण मन्त्र में प्रयोग होगा, 'द्विशेषत्वात्' = क्योंकि वह सोम द्विशेष अर्थात् इन्द्र एवं मित्रावरुण दोनों का ही पीतावशिष्ट होता है॥ ३०॥

## अपनयाद्वा पूर्वस्यानुपलक्षणम् ॥ ३१ ॥ पू० ।

**शा० भा०—अपनीतं प्रस्थितदेवतायाः शेषं मन्यामहे। कुतः ? मित्रावरुणादिभ्यस्तत्पात्रस्थमभ्याश्राव्यते। कथमेतत् ? उच्यते। मित्रावरुणादयो हीज्यन्ते। तद्यथा, आचार्यशेषं देवदत्तो भुञ्जानो यदि शेषं पूर्णकाय प्रयच्छति। पूर्णको देवदत्तमुपलक्षयति देवदत्तशेषं भुञ्ज[1] इति, नाऽऽचार्यशेषम्। तस्मान्न प्रस्थितदेवता इन्द्र उपलक्षयितव्य इति॥ ३१॥ पूर्वपक्षः॥**

त० वा०—आश्रावण-प्रत्याश्रावणादिभिः प्रदानकाले देवतान्तरसंवादात् अस्य द्रव्यस्यापनीता पूर्वदेवता। न च प्रकृतावपनीतदेवतासंबन्धोपलणं कृतम्। तस्मादिहापि न कर्तव्यमिति॥ ३१॥

न्या० सु०—पूर्वपक्षहेतुपूर्वदेवतापनयसिद्धयै पात्रस्थस्य कृत्स्नस्य सोमस्येन्द्रं हविरग्निमुख्येन देवतायै श्रावितायै 'श्रावये' ति मन्त्रेणाश्रावणप्रेषणादेस्तु श्रौषडित्यनेन देवतां प्रत्याश्रावणे कृत्स्नस्य देवतान्तरसञ्चारे मित्रावरुणादिभाग इति भाष्येणोक्ते देवतान्तरोद्देशेन गृहीतमात्रस्याप्याश्रावणादिसम्भवात्कथं कृत्स्नस्याश्रवणं गम्यतइति पृष्टे प्रदानकालीनत्वादाश्रवणादीनां च संसर्गिद्रव्यत्वेन विवेकाप्रतीतेरित्येवमुपपत्तिसूचनार्थं मित्रावरुणादयस्तदैव होज्यन्ते इत्यध्याहारसहितेनोक्तमित्येवं भाष्यं व्याख्यातुमाह—**आश्रावणेति**। होता यक्षन्मित्रावरुणेत्यादिप्रैषान्तानुवचनग्रहणायादिशब्दः। प्रदानकालीनैराश्रवणादिभिरिति हेतुगर्भितं विशेषणम्। अपनीतपूर्वदेवतान्वयस्यापि शेषस्य भूतपूर्वगत्योपलक्षणं भविष्यतीत्याशङ्कानिराससूचनार्थत्वेन दृष्टान्तभाष्यं व्याख्यातुमाह—**न चेत**। पूर्वस्येन्द्रस्य विशेषोपलक्षणार्थत्वेन कीर्तितमित्येव पूर्वपक्षप्रतिज्ञार्थसूत्रावयवव्याख्यार्थं तस्मादिति भाष्यं व्याचष्टे—**तस्मादीति**॥ ३१॥

भा० प्र०—पूर्वपक्षी ने कहा है कि "पूर्वस्य अनुपलक्षणम्" उक्त पुनरभ्युन्नीत भक्षण में प्रथम देवता का उल्लेख नहीं करना होगा, कारण "अपनयात्" = उसके

---

१. ब० भुञ्जत।

उद्देश्य से प्रथम में सोम का हवन करना कहकर प्रथम देवता के सम्बन्ध का अपनय अर्थात् विच्छेद या निवृत्ति होती है, जैसे देवदत्त आचार्य का भुक्तावशिष्ट भोजन करता है, पुनः देवदत्त का भुक्तावशिष्ट वसुगुप्त भक्षण करता है, इस स्थल में वसुगुप्त के भक्षण में जैसे आचार्य का भुक्तावशिष्ट भोजन नहीं है, उसी प्रकार इन्द्र के उद्देश्य से भक्षितावशिष्ट सोम में अन्य सोम मिश्रित कर मित्रावरुण के उद्देश्य होम करने पर जो अवशिष्ट अंश रहता है, वह इन्द्र के द्वारा पीये गये का शेष नहीं है, किन्तु मित्रावरुण का पीये गये का अवशिष्ट है, इसलिए इस स्थल में इन्द्र का सम्बन्ध न रहने पर भक्षण मन्त्र में इन्द्र का प्रयोग नहीं करना चाहिए, किन्तु मित्रावरुण का ही ऊह करना चाहिए।

"अपनयात्" = अपनय अर्थात् विच्छेद हो गया है, "वा" = पूर्वमत के निरसन के लिए, "अनुपलक्षणम्" = प्रथम जिसके उद्देश्य से होम किया गया है, उस देवता का अनुपलक्षण = उपलक्षण अर्थात् उल्लेख या प्रयोग नहीं करना चाहिए ॥ ३१ ॥

## अग्रहणाद्वाऽनपायः स्यात् ॥ ३२ ॥ सि०

शा० भा०—न चैतदस्ति इन्द्रो नोपलक्षणीय इति। तस्यापि ह्यसौ शेषः प्रत्यक्षमवगम्यते। [1]नन्वपनीत इति उच्यते। नासावपनीयते। सकृद्धुतांश्च-मसानभिद्रोणकलशाद् गृह्णाति। सशेषश्चमसो लक्षणमन्यस्योन्नीयमानस्य। न च चमसस्थो होतुमुन्नेतव्यः, प्रेषितो वा।

यत्तु यक्ष्यमाणा देवताः प्रति आश्रावित इति। उच्यते। आश्राव्यते तत्र देवताभ्यो न त्विदं वा, तद्वेति। तत यद्धोतुं गृहीतम्, तदाश्रावितमिति गम्यते। न चाऽऽश्रावणवेलायां देवताभिसम्बन्धः। यद्यद्देवताभिसम्बद्धम्, तदाश्राव्यते। तस्मादस्तीन्द्रशेषः भक्ष्यते[2] च। अतः सर्वेषामुपलक्षणमिति। कृत्वाचिन्तैषा। नात्र प्रयोजनं वक्तव्यम्। पूर्वाधिकरणस्यैवैतत्प्रयोजनमवधार्यते ॥ ३२ ॥ सिद्धान्तः ॥

### अभ्युन्नीतसोमभक्षणे इन्द्रस्याप्युपलक्षणाधिकरणम् ॥ १२ ॥

त० वा०—अथवा नापनीतमिन्द्रस्य देवतात्वम्। कुतः ?

देवतां यां यदुद्दिश्य द्रव्यं स्वत्वेन गृह्यते।
तस्यास्तदेव संबन्धि नान्यत्तन्मध्यपात्यपि ॥

शास्त्रलक्षणो हि देवतासंबन्धः, शास्त्रेणैव ग्रहणवेलायां देवतार्थत्वं प्रक्रम्यते। यच्च प्रक्रम्यते, तदेव समाप्यते, नान्यत्। इह च वचनात्सशेषेषु चमसेष्वन्यदुत्तर-देवतार्थं द्रव्यं ग्रहीतव्यमिति गम्यते। तत्र चमसोपलक्षणत्वेनोपपन्नः शेषः।

---

१. ब० यत्वपनीत। २. ब० लक्ष्यते।

यदा च ग्रहणवेलायामस्य देवतार्थत्वं नावधृतं, तदा प्रदानवेलायां यथागृहीतहोमात्संनिहितोऽप्यसावसंकल्पितत्वान्न देवतार्थो भवति। न वाऽस्य तदानीं संकल्पान्तरमस्ति वचनाभावात्। न चेतरसंकल्पेन प्रसाङ्गात् संस्पृश्यते। विभक्तवेलायां संकल्पतत्वात्। न च प्रदानकाले पुनः संकल्पान्तरमस्ति। सकृत्संकल्पितस्य पुनः संकल्पयितुमशक्यत्वात्। न ह्येकमेव द्रव्यमसकृत्त्यज्यते। तस्मान्न प्रदानकाले संकल्पोऽस्तीति।

यद्यपि तावद्देवता प्रत्यक्षं भुञ्जीत, तथाऽपि हंस इवोदकात्क्षीरं पश्चात्तनमेव सा सोमं विविच्य भुञ्जीत, किमुत[1] यदोद्देशमात्रोपकारिणी देवता पुनरभ्युन्नीतस्यैवोद्दिश्यते, न पूर्वशेषस्य। तेन पुनरभ्युन्नीते दीयमाने पूर्वशेषः केवलमुत्सृज्यते, न तु दीयते। यस्तु भक्षणवेलायां तदेकदेशः कश्चित् सोऽनपनीतेन्द्रसंबन्धित्वात्तथैवोपलक्षयितव्य इति ॥ ३२ ॥

( इति द्वादशं पुनरभ्युन्नीतभक्षणे इन्द्रस्याप्युपलक्षणाधिकरणम् ॥१२॥ )

न्या० सु०—पूर्वपक्षहेतुनिरासप्रतिज्ञार्थसूत्रावयवव्याख्यार्थं नचेत्यादि नासावपनीयते इत्यन्तं भाष्यं व्याचष्टे—**अथ वेति**। देवतान्तरोद्देशेन पूर्वस्य सकृद्धुतस्य शेषस्याग्रहणादिति एवमपनयनिरासोपपादनार्थत्वेनाग्रहणादिति सूत्रावयवं पूर्वसूत्रस्थं पूर्वशब्दशेषरूपार्थान्तरपरामर्शार्थत्वेनानुषज्य व्याख्यार्थं सकृदित्यादिभाष्यं प्रश्नपूर्वं तात्पर्यतो व्याचष्टे—**कुत इति**। यां देवतामुद्दिश्य यत् द्रव्यं गृह्यते, तस्या देवतायास्तदेव द्रव्यं सम्बन्धीत्युक्ते अग्न्याद्युद्देशेनापि निरुप्तानां सवनीयहविषा 'मथैतेषां हविषामिन्द्रमेव यजती'ति देवतान्तरान्वयश्रवणाद्यामुद्दिश्य यद्गृह्यते तत्सम्बन्धीति नियमायोगमाशङ्क्य अग्न्यादीन् प्रति स्वत्वापादकस्याग्न्याद्युद्देशेन त्यागः स्यात्सवनीयहविषामभावेनाग्न्यादीन्प्रति स्वत्वाभावात्स्वस्वामिभावलक्षणाग्न्यादिसम्बन्धाभावो युक्त इति वैषम्यासूचनार्थं यां प्रति स्वत्वेन **प्रयोजनेन न गृह्यत इत्युक्तम्**। श्लोकं व्याचष्टे— **शास्त्रेति**। एवमपि पुनरभ्युन्नीतमात्रं देवतान्तरोद्दशार्थत्वेन गृह्यते। ननु पूर्वशेष इति कथमत्रसीयते इत्याशङ्क्य, सकृद्धुतचमसाभिमुख्येन पुनरभ्युन्नीतसोमग्रहविधानात्सकृदहुतसोमशेषस्य ग्राह्यद्रव्याधारभूतपात्रोपलक्षणमात्रताऽवसीयते, ननु ग्राह्यतेत्येवं परिहारार्थत्वेन तदेव भाष्यं व्याचष्टे—**इह चेति**।

यत्त्विति भाष्येणापनयोपपादनशङ्कामनुभाष्यग्रहणकालावगतभेदानुसन्धानेन प्रदानकाले संसृष्टस्यापि बुद्धया निष्क्रष्टुं शक्यत्वात्पुनरभ्युन्नतिमात्रस्याश्रवणादिविषयतावसीयते ननु कृत्स्नस्य पात्रस्थस्येत्येवं परिहारार्थमुच्यतइत्यादिगम्यतइत्यन्तं भाष्यं व्याचष्टे—**यथा चेति**। यथा गृहीतोक्त्या संसृष्टस्यापि ग्रहणकालीनविवेकावगतानुसारादेकपात्रगृहीतवायव्यैन्द्रवायवसोमवद् बुद्धया निष्कर्षः सूचितः। देवतोद्देशपूर्वकद्रव्य-

---

1. क० किमुतोद्देशमात्रो।

त्यागाख्यसङ्कल्पापाद्यत्वात् द्रव्यदेवतन्वयस्य तस्य च होमाख्यप्रदानकालीनत्वात्तदा च संसृष्टत्वात् कृत्स्नस्यैव देवतान्तरान्वयो गम्यतइत्याशङ्कानिरासार्थं नाश्रावणेति भाष्यं देवतान्वयस्य प्रदानकालीनताया निराकर्त्तुमशक्यत्वादयुक्तमाशङ्क्य यद्देवतोद्देशेन यत् द्रव्यं त्याज्यत्वेन गृहीतं, तस्यैव प्रदानकाले तद्देवतान्वयम्प्रत्येवमर्थत्वेन व्याख्यातुमाह—**न चेति**।

प्रदानकाले कृत्स्नविषयरूपसङ्कल्पान्तराभावेऽपि पुनरभ्युन्नीतसोमसङ्कल्पेनैव संसृष्टस्य विवेकग्रहणाशक्तेः प्रसङ्गात् कृत्स्नः सोमो विषयीकरिष्यत इत्याशङ्क्य यद्देवतासम्बन्धत्वेन ग्रहणकाले सङ्कलितं, तदेवं प्रदानकाले बुध्या निष्कृष्टा श्राव्यतइत्येवं परिहारार्थं यदिति भाष्यं व्याख्यातुमाह—**न चेतरेति**। यथागृहीतोक्तिसूचितो निष्कर्षसम्भवो विभक्तोक्त्या प्रकटितः। उपाकरणकाले कृत्स्नस्य पशोर्देवतायै सङ्कल्पवद्ग्रहणकाले पूर्वशेषस्याऽगृह्यमाणत्वेन ग्रहणकालीनसङ्कल्पानर्हत्वात्पुनरभ्युन्नीतमात्रसङ्कल्पेऽपि प्रदानकाले कृत्स्नसङ्कल्पाविरोधाक्लेशेन निष्कृष्य पुनरभ्युन्नीतमात्रत्यागरूपः सङ्कल्पो न युक्त इत्याशङ्क्याह—**न च प्रदानेति**। ग्रहणकालदेवतोद्देशेनेदं त्यक्ष्यामीति सङ्कल्पितस्यैव प्रदानकालदेवतान्वयापादनायेदं न ममेति त्यागरूपः सङ्कल्पः, न कृत्स्नविषयः सङ्कल्पोऽस्ति पूर्वशेषस्य कस्याश्चिद्देवतायै सङ्कल्पितस्य त्यक्तत्यागायोगेन च विना पूर्वंवदेवतातोपहृत्यान्यस्य सङ्कल्पयितुमशक्यत्वात् कृत्स्नसङ्कल्पानुपपत्तिरित्यर्थः। एतदेवोपसंहरति—**तस्मादिति**। त्यागरूपस्य मानसस्य सङ्कल्पस्य यजिवाच्यतया भावार्थाधिकरणोक्तस्य प्रदानकालीनयोः प्रसिद्धत्वात्कृत्स्नसङ्कल्पनिरासपरत्वेन व्याख्येयम्। देवताया भोक्तृत्वप्रतिगृहीतृत्वाभावेऽपि 'सोमाय यजते' इत्यादिषु सम्प्रदानव्यवहारसिद्ध्यर्थमनिराकरणारव्यानुमनव्यापाराभ्युपगमात् संसृष्टे च विविच्यानुमननाशक्तेपूर्वशेषस्य देवतान्तरोद्देशेनात्यागेऽपि देवतान्तरैरेकपात्रस्थकृत्स्नसोमानुमननावगमात्पूर्वदेवतावषट्कृतस्य देवतान्तरैरात्मीयत्वेनानुमन्तुमशक्यत्वात्पूर्वदेवतातोऽपनयो भविष्यतीत्याशङ्क्याह—**यद्यपि तावदिति**। मुख्यभोक्तृस्य नवमे निषेत्स्यमानत्वेनऽनाशङ्कनीयत्वादनिराकरणे चाव्यापारात्मकत्वादननुष्ठेये भुञ्जीतेति कर्तृत्वव्यपदेशायोगापत्तेरुपांशुयाजाधिकरणवार्त्तिकोक्ता निराकरणापादितः स्वीयत्वानुमननव्यापारो भुजिना लक्षितः[1]।

अपनयनोपसंहारार्थ तस्मादिति भाष्यं पूर्वशेषस्य देवतान्तरान्वयित्वेनाऽसङ्कल्पेऽप्यग्नौ किंचित्प्रक्षेप्स्यस्यावर्जनीयतया निराकर्तुमशक्यत्वात् 'अग्निमुखा वै देवा' इत्याद्यर्थवादालोचनया चाग्नौ प्रक्षेपस्य देवतान्तरान्वयापादकत्वप्रतीतेर्देवतान्तरान्वयेन पूर्वदेवतातोऽपनयावश्यम्भावादयुक्तमाशङ्क्योपपादयितुमाह—**तेनेति**। देवतोद्देशेन त्यागं विना नाग्नौ प्रक्षेपमात्राद्देवतान्वयोपपत्तिरित्याशयः।

---

१. देवताया भोक्तृत्वादिवदनुमन्तृत्वेऽपि प्रमाणाभावाद्यद्यपिशब्दोक्ताभ्युपेत्यवादत्वोपपत्तिः अयं पा० २ पु० अ०।

नान्तरीयकतया भक्षमाणस्यापि पूर्वशेषस्य भ्रष्टावसरेण भक्षणेन प्रतिपाद्यत्वायोगात्प्रतिपत्त्यर्थं एव भक्षणे मन्त्रापेक्षणान्न पूर्वदेवतोपलक्षणं युक्तमित्याशङ्क्य, पुनरभ्युन्नेष्यमाणे सोमसंस्कारार्थं होमानन्तरं ध्रियमाणस्य पूर्वशेषेण पुनरभ्युन्नीतभक्षकालएव भक्षणावसरात्प्रतिपत्त्यर्थत्वाविरोधसूचनार्थं 'भक्ष्यते चेति भाष्यं व्याचक्षाणोऽत' इति भाष्यं व्याचष्टे—**यस्त्विति**। कृत्वेतिभाष्यमूहकृत्वाचिन्ताया भक्षणासङ्गतेर्भक्षणसङ्गतस्य प्रयोजनस्याऽवश्यवक्तव्यत्वादयुक्तमाशङ्क्य, पूर्वपक्षे कृत्स्नस्य मित्रावरुणाद्युद्देशेन त्यागः सिद्धान्तो पुनरभ्युन्नीतमात्रस्येति लक्षणसङ्गतं प्रयोजनं पूर्वशेषापनयविचारात्प्रसिद्धमित्येवं परिहारं सूचयितुमाह—**इतीति**। अधिकरणसमाप्त्या वक्तव्यतयोपस्थापितस्य प्रयोजनस्येतिकरणेन परामर्शः ॥ ३२ ॥

इति द्वादशं पुनरभ्युन्नीतभक्षणे इन्द्रस्याप्युपलक्षणाधिकरणम् ।

भा० प्र०—कथित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "अनपायः स्यात्" = जिस देवता के उद्देश्य से होम किया जाता है, उसके सम्बन्ध की निवृत्ति नहीं होगी। क्योंकि "अग्रहणात्" प्रकृत में पूर्वशेष का ग्रहण नहीं है, जिस देवता का अर्थात् मित्रावरुण के उद्देश्य से होना किया जाता है, उसके लिए स्वतन्त्र भाव से सोम का संस्कारमात्र होता है, किन्तु पूर्वशेष के साथ मिश्रित कर होम करने पर भी पूर्वशेष मित्रावरुण की हविः नहीं है यह वचन के प्रामाण्य बल से स्वीकार करना पड़ता हैं। पूर्वशेष अव्यवहृत रह जाता है, अतः, पूर्व देवता के सम्बन्ध का भी विच्छेद नहीं होता है और पूर्व देवता के सम्बन्ध का विच्छेदक होने से भक्षण मन्त्र में पूर्व देवता का भी उल्लेख करना होगा, इसीलिए पुनरभ्युन्नीत भक्षण में सभी देवताओं का उल्लेख करना चाहिए।

"अग्रहणात्" = ग्रहण भिन्न होने से अर्थात् द्रोण कलस से मित्रावरुण के उद्देश्य से जो ग्रहण किया जाता है, उस इन्द्र के द्वारा भक्षण से अवशिष्ट सोम ग्रहण से भिन्न होने से, "अनपायः स्यात्" = पूर्व देवता से सम्बन्ध का उपाय अर्थात् विच्छेद नहीं होता है।

यह बारहवाँ पुनरभ्युन्नीत भक्षणाधिकरण ॥ ३२ ॥

## अथ त्रयोदशं पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणाधिकरणम् ।

## [१३] पात्नीवते तु पूर्ववत् ॥ ३३ ॥ पू० ।

**शा० भा०—अस्ति पात्नीवतो ग्रहः—यत् 'उपांशुपात्रेणाऽऽग्रयणात्पात्नीवतं गृह्णाति' इति द्विदेवत्यानां शेषा आग्रयणस्थाल्यामुपनीताः। ततः पात्नीवतो गृह्यते। अथ हुते पात्नीवते, तच्छेषे भक्ष्यमाणे भवति संदेहः—किमिन्द्रवाय्वादय उपलक्षयितव्या, न वेति। किं तावत्प्राप्तम्? उपलक्षयितव्याः। तेषामपि ह्यसो शेषो, यथा प्रस्थितदेवताया इति ॥ ३३ ॥**

त० वा०—पूर्वापवादार्थमारम्भः । द्विदेवत्यानामैन्द्रवायवादीनां शेषा आदित्यस्थाल्यां निक्षिप्यन्ते । ततोऽपि पुनराग्रयणस्थाल्यामागच्छन्ति । ततश्च पात्नीवतग्रहणं श्रूयते 'उपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति' इति । तस्य हुतशेषे भक्ष्यमाणे पूर्ववदेवेन्द्रवायुपत्नीवत्पीतस्यैवमाद्युपलक्षणं कर्तव्यमिति पूर्वपक्षः ॥३३॥

**अथ त्रयोदशं पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणाधिकरणम् ॥ १३ ॥**

न्या० सु०—आग्रयणाख्यसोमपात्रस्थस्योपांश्वाख्यस्य पात्रे गृहीतस्य पात्नीवतयागाङ्गत्वं किं वाऽग्रयणाद् गृहीतस्य सोमस्य पात्नीवदन्वयेऽनाग्रणयस्याप्याग्रयणसंसृष्टत्वसामर्थ्याद् ग्रहणापत्त्या पत्नीवदन्वयापत्तेः कृत्स्नस्याग्रहणात्, उपांशुपात्रे गृहीतस्य पत्नीवत्त्वेन यागाङ्गतेत्यूहं कृत्वा चिन्तामिषेणाभिप्रेतायाश्चिन्तायाः पादलक्षणंसङ्गतिं स्पष्टत्वादनुक्त्वा अनन्तरसङ्गतिमाह—**पूर्वेति** । ऊहचिन्ताविषयत्वोक्त्यर्थे द्विदेवत्यानां हीतिभाष्यमादित्यदेवतान्यस्य सोमस्य स्थाल्यां द्विदेवत्यशेषनिक्षेपादयुक्तमाशङ्क्योपपादयितुमाह—**द्विदेवत्यानामिति** । आग्रयणदेवताभूतानां विश्वेषां देवानामुपलक्षणं कस्मान्न चिन्त्यत इत्याशङ्क्य, तदपनयस्य निःसन्दिग्धत्वादित्येवं परिहारसूचनार्थं, तत इति भाष्यं व्याचष्टे—**ततश्चेति** । अथेति सन्देहभाष्यमवयवव्याख्यापूर्वं पात्नीवते सोमः पुनरभ्युन्नीतवत्सर्वेषामुपलक्षणमित्येवं पूर्वपक्षसूत्रं व्याचष्टे—**तस्येति** । वाय्विन्द्रवायु मित्रो वरुणोश्विपत्नीवत्पीतस्यैत्येवमूहप्रदर्शनायादिशब्दः इन्द्रवायुग्रहणं तूपलक्षणार्थम् ॥ ३३ ॥

भा० प्र०—प्रातःसवन में ऐन्द्रवायव, मैत्रावरुण एवम् आश्विन नामक ग्रह द्विदेवत्य हैं, इस ग्रहक अर्थात् पात्रविशेष स्थित सोम का भक्षणावशिष्ट आदित्य देवता की स्थाली में = पत्र में रख कर बाद में तृतीय सवन काल के समय में उसको आग्रयण नामक ग्रह ने पात्नीवत सोम ग्रहण कर पत्नीवत नामक देवता के उद्देश्य से होम कर भक्षण से अवशिष्ट का भक्षण करना चाहिए। इस स्थल में भक्षण मन्त्र में प्रथम होम का उद्देश्यीभूत इन्द्र, वायु आदि देवता का भी उल्लेख होगा या नहीं—यही संशय है, इसमें पूर्वपक्षी का कहना है कि "पात्नीवते तु पूर्ववत्" पूर्व अधिकरण का नियमानुसार पात्नीवत सोमभक्षण में इन्द्र, वायु आदि पूर्व देवताओं का भी उल्लेख करना चाहिए, कारण, पात्नीवत ग्रह में इन्द्र, वायु आदि पूर्व देवताओं के उद्देश्य से जो होम किया जाता है, उसका शेष रहता है।

"पात्नीवते" = पात्नीवत ग्रह के शेष भक्षण मन्त्र में, "तु" = प्रत्यवस्थान में, "पूर्ववत्" = पूर्व के समान अर्थात् पूर्व देवता का भी उल्लेख होगा। यह पूर्व पक्ष है ॥ ३३ ॥

## ग्रहणाद्वाऽपनीतं स्यात् ॥ ३४ ॥ सि० ।

**शा० भा०—अपनीयते हि स शेष इह, न यथापूर्ववत्। तत्र हि पात्रलक्षणत्वेन संकीर्त्यंते, न सोमो ग्राह्यत्वेन । इह तु 'आग्रयणाद् गृह्णाति' इति**

स्थालीस्थः सोमो निर्देश्यते होतुं यक्ष्यमाणदेवतां प्रति ।

ननु स्थाल्यामाग्रयणोऽनाग्रयणश्च । तत्र यस्तस्मादाग्रयणाद् गृह्यते, स पात्नीवतः । यस्तु संपातान्नासौ पात्नीवत इति । उच्यते । आग्रयणोऽपादानम् । तस्माद्योऽपैति, आग्रयणोऽनाग्रयणो वा स सर्वः पात्नीवतः । आग्रयणाच्चैष सर्वोऽपेतः ।

नन्वनाग्रयणादप्यपेतः । नैष दोषः । आग्रयणात्तावदपेतः । तेनाऽसौ पूर्वदेवताभिः पीत इति न शक्यते वक्तुम् । यो हीन्द्रार्थस्य सोमस्यावयवः शेषः, स इन्द्रपीत इति प्रकृतावुच्यते । इहापि तद्वदेव पूर्वदेवतार्थस्यावयवो वदितव्यः[1] ।

ननु योऽसौ पूर्वदेवतार्थः तस्यैवायमवयवः । नेति ब्रूमः । न हि हुतस्यावयवो दृश्यते । ननु प्रकृतावपि हुतस्यावयवो न दृश्यते । उच्यते । हुताहुतस्य समुदायस्य तत्रावयव उपलक्ष्यते तद्दैवतस्य । नन्विहापि समुदाय एवाऽऽसीत्तद्दैवत्यः । तस्यैवायमवयवः । नेत्युच्यते । आसीदयं समुदायस्तद्दैवत्यः । इदानीं तस्यावयवोऽन्यदेवत्यो जातः । तेन समुदायस्तद्दैवत्यत्वादपेतः ।

आह—पूर्वदेवतापीतस्यासाववयव आसीत् । तेन भूतपूर्वगत्या भविष्यति । उच्यते । प्रकृतौ न भूतपूर्वगत्याऽभिधानं कृतम् । इहापि तद्वदेव न कर्तव्यमिति । अपि चेन्द्रदेवत्यस्तत्रेन्द्रपीत इत्युक्तम् । अनपनीता च तस्येन्द्रदेवत्यता । अस्य पुनः पूर्वदेवतासम्बन्धोऽपगतः तस्मान्नात्र पूर्वदेवतोपलक्षणीयेति ॥ ३४ ॥ सिद्धान्तः ॥

इति त्रयोदशं पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणाधिकरणम् ॥ १३ ॥

त० वा०—नैतत्पूर्वेण सदृशम् । कुतः ?

यस्य ग्रहणवेलायां संनिधिः सोऽपनीयते ।
संहतेन हि संकल्पः कर्तव्यस्तत्र चोद्यते ॥

आग्रयणप्राप्तेषु हि द्विदेवत्येषु पात्नीवतसंकल्पश्चोद्यते । तत्र यद्यपि तावत्परकीय एव संकल्पः तथाऽपि प्रसङ्गसिद्धिरनिवार्या, किमुत यदा सोऽपि संकल्पनीयः श्रुत एव ।

तथा हि—

योऽपैत्याग्रयणात्सोमः स पात्नीवत इष्यते ।
शेषश्चैव ततोऽपैति तेन संकल्प्यते तदा ॥

यदि ह्याग्रयणं[2] पात्नीवतं करोतीति श्रूयेत, ततः संनिहितोऽप्यनाग्रयणत्वाच्छास्त्रबलेन शेषः कथंचित्संकल्पादपनीयेत । अत पुनः 'आग्रयणाद् गृह्णाति' इति

१. वंदितव्यः । २. क० स्वाग्रयणं । यदा ह्याग्रयण ।

श्रूयते । नाऽऽग्रयणस्याऽऽग्रयणमिति वा । तद्यथा वृक्षात्पर्णं पततीत्युक्ते कङ्क-कुररादिपत्रमपि प्रतीयते । वृक्षस्यापादानमात्रोपक्षीणत्वात् । एवमिहाप्याग्रयणादपेतत्वं पत्नीवत्संबन्धकारणं, नाऽऽग्रयणत्वम् । समानदेशयोश्च संपाताग्रयणयोर्यं एवापैति, स एवाऽऽग्रयणादपेत इति शक्यते वक्तुम् । तावच्चेह निमित्तम् ।

यत्तु तन्मिश्रादनाग्रयणादप्यपैति, न तत्प्रतिषेधे, विधौ वोपयुज्यते । न ह्यनाग्रयणादपेतो न पात्नीवत इति वचनमस्ति । यदि वाऽयमर्थः स्यात्, ततो योऽप्याग्रयणः ततोऽपैति, सोऽप्याग्रयणानाग्रयणापेतत्वादपात्नीवतः प्राप्नोति । तस्मादाग्रयणादेवेत्यस्याशक्यत्वादप्रमाणकत्वाच्चावश्यमेवमाश्रयितव्यम् । आग्रयणात्तावदपेत इति । तच्च संपातस्याप्यविशिष्टमित्युपपन्नं देवतासंबन्धित्वम् । न च पूर्वदेवतार्थत्वमनपनीयोत्तरसंबन्धोऽवकल्पत इत्युपपन्नं पूर्णकभोजनवदनुपलक्षणम् ।

**ननु योऽसौ पूर्वदेवतार्थः तस्यैवायमवयव** इति—भूतपूर्वगत्यभिप्रायम् । आचार्यस्तु स्वयमेवैनमभ्युपगमयामीति मन्वानः परिहसति तावत् **'न हि हुतस्यावयवो दृश्यते'** इति । न हि हुतादन्यत्तस्या देवताया विद्यते, तस्यापनीतत्वादित्यभिप्रायः ।

परस्त्वव्युत्पन्नाभिप्राय आह—**ननु प्रकृतावपीति** । संकल्पवेलायां तत्र देवताव्यपदेश इत्युत्तरम् । इतर आह—अत्राप्येवमेवाऽऽसीदिति । सिद्धान्तवादी वदति एतदेव प्रकृतिविलक्षणमिति । न चापनीतस्य तत्रोपलक्षणं कृतम् । इह तु स्फुटमपनीतत्वमुक्तम् । तस्मात्पत्नीवानेवो पलक्षणीय इति सिद्धम् ॥ ३४ ॥

( इति त्रयोदशं पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणाधिकरणम् ) ॥ १३ ॥

न्या० सु०—वाशब्दप्रतिज्ञातपूर्वदेवतानुपलक्षणहेतुत्वेनापनीतोक्तिव्याख्यार्थमपनीयते हीति भाष्यं व्याचष्टे—**नैतदिति** । द्विदेवत्यशेषस्य पूर्वदेवतातोऽनयोपपादनार्थत्वेन तस्यापि पात्नीवतग्रहणकाले एव द्विदेवत्यशेषस्याग्रयणसंसृष्टत्वात्, साऽपि पूर्वदेवतातोऽपनीयतइति, ग्रहणोत्तरकालसंसृष्टादिन्द्रशेषाद्वैलक्षण्ये पूर्वार्द्धेनोक्तग्रहणकाले संसृष्टत्वेऽपि द्विदेवत्यशेषस्याग्रयणस्थाल्यां निक्षेपकाले विवेकावगमात्तदनुसन्धानेन बुद्धया निष्कर्षोपपत्तेराग्रयणस्यैव देवतान्तरोद्देशेन सङ्कल्पात् तद्द्विदेवत्यशेषस्य पूर्वदेवतानयनस्य इत्याशङ्क्याग्रयणापेतस्य देवतान्तरोद्देशेन सङ्कल्पनीयत्वादनाग्रयणीयस्यापि वाग्रयणसंसृष्टत्वेनाग्रयणावयवस्य बुद्धया निष्कर्षसम्भवेऽपि वारयितुमशक्यत्वादनाग्रयणस्येवाग्रयणस्य देवतान्तरोद्देशेन सङ्कल्पविध्युक्त्या वक्ष्यमाणग्रहणभाष्योपपादयिष्यमाणयाऽपनयः समर्थितः ।

श्लोकं व्याचष्टे—**आग्रयणेति** । स्थालीनिक्षेपकालीनस्य विवेकस्य सङ्कल्पेऽनपेक्षणाविषयस्य सङ्कल्पस्य प्रसङ्गादनाग्रयणविषयत्वसिद्धिः पुनरभ्युक्षीतवन्नेह निवार्येति पूर्वार्द्धव्याख्यानायोक्ते, किमुतेत्यनेनोत्तरार्द्धं व्याख्यातम् । ग्रहणकालेऽपि संसृष्टस्य बुद्धया निष्कृष्याऽऽग्रयणमात्रसङ्कल्पसम्भवं नन्वितिभाष्येणाशङ्क्य, बुध्या निष्कृष्याग्रयणमात्र-

सङ्कल्पसम्भवेऽप्याग्रयणापेतस्य सङ्कल्पविधानादाग्रयणायोश्चाऽऽग्रयणापेतत्वाविशेषात्कृत्स्न-सङ्कल्पोपादनार्थमुच्यतइति भाष्यं व्याचष्टे—**तथा हीति**। एष आग्रयणो द्विदेवत्यशेषश्चा-ग्रयणादपैति तेन शेषश्चैषश्चैष च ग्रहणकाले सङ्कल्पतइत्यर्थः।

व्यतिरेकतोऽन्वयतश्च श्लोकं व्याचष्टे—**यदि हीति**। आश्रयणस्य पात्नीवतत्वविधौ संसृष्टोऽपि द्विदेवत्यशेषोऽनाग्रयणत्वात् बुद्धया निष्कृष्य सङ्कल्पविषयत्वाद्व्यावर्त्येतेति व्यतिरेकतो व्याख्या। आग्रयणापेतस्य तु पात्नीवतत्वविधानादपादानस्य च वृक्षवत्स्वा-वयवत्वविशेषानपेक्षत्वात्संसृष्टयोः संशब्दवाच्यैकीभावपूर्वाग्रयणस्थालीपातनिमित्तसम्पात-शब्दवाच्यद्विदेवत्यशेषाग्रयणयोर्मध्ये य एवाग्रयणो वापैति तस्य सर्वस्याग्रयणादपेतत्व-मात्रस्य सङ्कल्पनिमित्तत्वात्सर्वः सङ्कल्प इत्यपनीयते इत्यन्वयतो व्याख्या।

आग्रयणविशेषणविशेषणबलादाग्रयणादेवेत्यवधारणप्रतीतेरनाग्रयणस्य चाग्रयण-मिश्रादनाग्रयणादप्यपेतत्वेनाग्रयणादेवेत्यवधारणविषयत्वायोगादपात्नीवतत्वं न त्विति भाष्येणाशङ्कयाग्रयणस्याप्याग्रयणमात्रादपायाशक्तोराश्रयणादेवेत्यवधारणायोगाद्वाश्रयणा--भावदपेत इत्येतावन्मात्रेण विशेषणत्वप्रतीतेर्द्विदेवत्यशेषेऽस्यापि ताद्रूप्यविशेषात्पात्नीव-तत्वोपपादनार्थं नैष इति भाष्यं व्याख्यातुमाह - **यत्त्विति**। अनाग्रयणादपेतो न पात्नीवत इति निषेधवचनाभावान्निषेधार्थवचनकल्पने वाग्रयणान्वयापेतत्वेन पात्नीवतत्वापत्तेरनाग्रय-णापेतस्य पत्नीवतत्वापत्तेरनाग्रयणापेतस्य पात्नीवतत्वनिषेधाभावेन विधाविव निषेधेऽपि विषयत्वलक्षणोपयोगाभावादुभयोरपि पात्नीवतत्वविधौ विरोधाभावादाग्रयणमात्राच्चो-पायायोगेनाग्रयणादेवेत्यवधारणस्याशक्यत्वादयोगव्यावृत्त्यापि च विशेषणत्वसम्भवेनावधा-रणस्याप्रमाणकत्वाद्वाग्रयणाभावदपेत इत्येवं विशेषणत्वप्रतीतेर्द्वयोरपि देवतान्तरान्वय इत्यर्थः।

देवतान्तरोद्देशेन ग्रहणेन पूर्वदेवतातोऽपनयःकथमवसीयतइत्याशङ्कयाह—**न चेति**। अस्वस्य दातुमशक्यत्वात्पूर्वस्यैव देवतायै दत्तस्य तत आच्छिद्य स्वीकारं विना स्वत्वाना-पत्तेर्देवतोद्देशेन च त्यागाच्च देवताव्यतिरिक्तस्य यथेष्टदेवतानर्हत्वरूपस्वदेवतास्वत्वा-पादानेऽपि देवतायाः प्रतिग्रहीतृत्वाभावेन यथेष्टविनियोक्तृत्वलक्षणस्वाम्यानापादनकृताप-हरणोऽपि परस्तापहरणनिमित्तदोषाप्रसक्तेः पुनर्दानशास्त्रान्यथानुपपत्त्या पूर्वदेवतातोऽपहृत्य स्वीकारविधिः कल्पयितव्य इत्याशयः।

पूर्वदेवतातोऽपनयेऽपि पूर्वदेवतोद्देशेन त्यक्तत्वस्य तत्पीतोक्तिलक्षणस्यानपायादनपनी-तापि देवतोपलक्षणीयेत्येवं शब्दप्रतिज्ञातपूर्वदेवतानुपलक्षणायोगमाशङ्कय, चतुर्थ्या देवतामुद्दिश्य द्रव्यत्यागात्पिबतेस्त्यागभक्षणार्थतायामिन्द्रपीतशब्देन लक्षणाननुगतचतुर्थी समानापत्तेरिन्द्रेण स्वीकृतमन्यस्य यथेष्टविनियोगानर्हीकृतमित्यनिराकरणनिमित्तान्यस्य यथेष्टविनियोगानर्हीकरणपरपरस्वीकारलक्षणार्थत्वावगतेरपनये चान्वयनाशान्नापनीता देवतोपलक्षणीयेत्येवं वाशब्दोपपादनार्थं तन्नेत्यादिभाष्यं तात्पर्यतो व्याचष्टे—**इतीति**।

पूर्ववर्णकेनाचार्यशेषभुग्देवदत्तशेषे भुज्यमाने यथाऽऽचार्यशेषोपनीतान्वयत्वानोपलक्षणं, तथा पूर्वदेवतापीत्यर्थः।

नत्वित्याशङ्काभाष्यमपनयेन पूर्वदेवतार्थत्वनाशादयुक्तमाशङ्क्य व्याचष्टे—**नन्विति।** नेतीति परिहारभाष्यमिन्द्रवाय्वाद्युद्देशेन गृहीतस्य कृत्स्नस्य पात्रस्थस्य पूर्वदेवतार्थस्यावयवदर्शनाद्धुतमात्रस्य देवतार्थत्वेनानाशङ्कितस्यावयवादर्शनेऽप्यशङ्काशयानिरासादयुक्तमाशङ्क्योपहासार्थत्वेन व्याचष्टे—**आचार्यस्त्विति।** अनिरस्ताशयस्योपहासानर्हतामाशङ्क्यानपनीतपूर्वदेवतान्वयात्पूर्वदेवतापीतत्वेनोपलक्षणार्हस्य हुतावयवस्यादर्शनमितरस्यानीतत्वेनानुपलक्षणीयत्वसिद्ध्यर्थं मयोच्यमानमभ्युपपादनक्लेशमनापाद्यापशङ्कितास्वयमेव यथाभ्युपगच्छति तथा करोमि ततश्चोदितानुवादित्वादुपहासार्हो भविष्यतीत्येतत्स्वयमाशङ्कितारभ्युपगमयामीत्यनेनोक्तम्। कस्तर्हि परिहाराशय इत्याशङ्क्याह—**न हि हुतादिति।** इन्द्रवाय्वाद्युद्देशेन हुतादन्यदुपांशुपात्रगृहीतमिन्द्रवाय्वादिसम्बन्धि न विद्यते अपनीतत्वादित्यर्थं हुतावयवादर्शनस्यानुपलक्षणहेतुत्वाभावाशङ्कार्थं नन्विति भाष्यम् अपनयस्यानुपलक्षणहेतुत्वेनाभिप्रेतत्वादयुक्तमाशङ्क्याज्ञानाशयोक्तित्वेन व्याचष्टे—**परस्त्विति।** प्रकृतौ हुतावयवादर्शनेऽपि हुतसम्बन्धिशेषहुतसोमसमुदायस्यानपनीतेन्द्रादैवत्यस्यावयवः प्रकृताविन्द्रशब्दः सतूपलक्ष्यत इति वैषम्योक्त्यर्थमुच्यतइति भाष्यमेकदेशहोमेन समुदाये नष्टे देवतान्वयनाशादयुक्तमाशङ्क्य देवतोद्देश्यपूर्वद्रव्यत्यागरूपसङ्कल्पकाले विद्यमानस्य समुदायस्य देवतान्वयानौपचारिकस्तदवयवे देवताव्यपदेशः प्रकृतावित्येवमर्थत्वेन व्याचष्टे—**सङ्कल्पेनेति।** देवतान्वयिनि समुदाये नष्टेऽप्यवयवस्यौपचारिकदेवताव्यपदेशाभ्युपगमे द्विदेवत्यसमुदायनाशेऽप्युपचारादवयवे देवताव्यपदेशाविरोध इति साम्यशङ्कार्थं नन्वितिभाष्यं व्याचष्टे—**इतर इति।** द्विदेवत्यसमुदायावयवस्याग्रयणसमुदायावयवसहितस्यान्यदेवत्यत्वेनाग्रयणावयवसमुदायस्य पूर्वदेवतोपेतत्वात्पूर्वदेवतानुपलक्षणमित्येवं साम्यनिरासार्थं नेतीति भाष्यं प्राकृतादेवतापनयोऽत्र त्वपनय इत्येवं वैलक्षण्योक्त्यर्थत्वेन व्याचष्टे—**सिद्धान्तेति।** पीत इति भूतनिष्ठया नष्टस्यापि समुदायस्य देवतान्वयेन मुख्यवृत्त्यभिधानसम्भवेनौपचारिकावयवाभिधानयोगात्प्रकृतावपि भूतपूर्वगत्याभिधानावगतेरिह च पूर्वेन्द्रवाय्वादिदेवतापीतस्य समुदायस्यावयवेनान्यदेवत्यसमुदायारम्भेऽपि भूतपूर्वगत्या पूर्वसमुदायावयवत्वव्यपदेशोपपत्तेर्भूतपूर्वगत्या पूर्वदेवतोपलक्षणं भविष्यती'त्याहेति भाष्येणाशङ्क्य प्रतिपाद्यस्य साद्गुण्याय देवतयोपलक्षणीयत्वादेव यवप्रतिपाद्यत्वेन दृष्टार्थत्वायोगाद्देवताव्यपदेशार्हत्वावगतः प्रकृतौ भूतपूर्वगत्यापेतदेवतान्वयस्यानुपलक्षणान्नेह भूतपूर्वगत्योपलक्षणं युक्तमिति परिहारार्थमुच्यतइति भाष्यं व्याचष्टे—**न चेति।** एकदेशावस्थितानां चावयवानामेव समुदायव्यपदेशनोदनात्प्रत्येकमपि मुख्यवृत्त्यैव देवतान्वयव्यपदेशोपपत्तेः प्रकृतौ समुदायनाशेऽपि विद्यमानस्यावयवस्यापि साक्षाद्देवतान्वयसमुद्भावेनापेतदेवतात्वस्य भूतपूर्वगत्योपलक्षणशङ्कायोगादिह च विद्यमानस्यावयवस्य देवतान्तरान्वयेन पूर्वदेवतापनयस्य सिद्धान्तसूत्रेणैव स्फुटमुक्तत्वात्पूर्वदेवतोपलक्षणं नाशङ्कनीयमित्यतिशयोक्त्यर्थमपि

चेति भाष्यं व्याचष्टे—**इह त्विति**। तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ॥ ३४ ॥

इति त्रयोदशं भक्षणेऽनुवषट्कारदेवताया अनुपलक्षणाधिकरणम् ।

भा० प्र०—सिद्धान्ती का कहना "अपनीतं स्यात्' पात्नीवत भक्षण में पूर्वदेवता का उल्लेख नहीं हो सकता है, पूर्व देवता का सम्बन्ध विच्छिन्न हो गया हैं, कारण, "पात्नीवतम् आग्रयणाद् गृह्णाति' अर्थात् आग्रयण नामक ग्रह से पात्नीवत ग्रहण करे, इस प्रकार आग्रयण शब्द में अपादान होने से आग्रयण ग्रह से जो सोम पात्नीवत में ग्रहण किया जाता है, उसका पूर्व सम्बन्ध प्रथम में विच्छिन्न होने के बाद ही पात्नीवत देवता के उद्देश्य से ग्रहण सम्भव हैं, पक्षान्तर में पुनरभ्युन्नीत सोम के स्थल में इन्द्र देवता के उद्देश्य से हवन क्रिया। सोम के अवशिष्ट अंश के साथ द्रोणकलस से निःसारित सोम का संश्लेषमात्र ही विवक्षित होने से पूर्व देवता के सम्बन्ध का विच्छेद नहीं होता है, इसलिए उसमें पूर्व देवता का उल्लेख कर्तव्य है, किन्तु, इस स्थल में पूर्वाधिकरण के पूर्वपक्ष में उदाहृत मुक्तावशिष्ट द्रव्य से समान आग्रयण पात्रस्थ सोम का पूर्व देवता सम्बन्ध निवृत्त हो गया है, अतः, भक्षणमन्त्र में पूर्व देवता का उल्लेख नहीं होगा।

"ग्रहणात्" = ग्रहण करने से, "वा" = पूर्वपक्ष के निरास के लिए है, "अपनीतं-स्यात्" = अपनीत अर्थात् पूर्वसम्बन्ध विच्छिन्न होगा। १३ वाँ पात्नीवत भक्षण में पूर्व देवता का अनुपलक्षण अधिकरण ॥ ३४ ॥

**अथ चतुर्दशं पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणाधिकरणम् ॥**

## [१४] त्वष्टारं तूपलक्षणयेत्पानात् ॥ ३५ ॥ पू० ।

**शा० भा०—अस्ति पात्नीवतः सोमः। तत्र मन्त्रः, 'अग्ना इ पत्नीवन्स-जूर्देवेन त्वष्ट्रा सोमं पिब', इति। तत्र सन्देहः—किं त्वष्टोपलक्षयितव्यः, न वेति। किं प्राप्तम् ? उपलक्षयितव्यः। कुतः ? पानात्। पानं श्रूयते। 'सजूर्देवेन त्वष्ट्रा सोमं पिब', इति। तेनायमग्नये पत्नीवते सह त्वष्ट्रा दीयत इति गम्यते। यस्मै च येन सह दीयते, उभाभ्यां तद्दीयते। एवं तत्सहदानं भवति। यथा देवदत्ताय यज्ञदत्तेन सह शतं दीयतामित्युक्ते तत्रोभाभ्यामपि दीयते। तस्मा-त्त्वष्ट्रोऽप्यसौ सोम इति त्वष्टोपलक्षयितव्यः। असावपीन्द्र एव पिबतीति ॥ ३५ ॥ पूर्व० ।**

त० वा०—तस्मिन्नेव पात्नीवते पत्नीवता सह पातृत्वनिर्देशान्मान्त्रवर्णिकं त्वष्टुर्देवतात्वमिति पूर्वपक्षः ॥ ३५ ॥

**अथ चतुर्दशं पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणीयताधिकरणम् ॥ १४ ॥**

न्या० सु०—मन्त्रस्थसाहित्यवाचिचक्षुःश्रुतिसामर्थ्यरूपाल्लिङ्गात्त्वष्टुरपि देवतात्वेन पात्नीवतयागाङ्गत्वमाशङ्क्य निरासात्पादलक्षणं सङ्गतिसन्देहं च स्पष्टत्वादनुक्त्वाऽनन्तर-

चिन्तितपात्नीवतविषयत्वेनानन्तरसङ्गतिं सूचयत्पत्नीवत्ताया विशेष्यं विनाऽपर्यवसानान्मन्त्रवर्णावगतविशेष्यत्वस्याग्नेस्तद्धितोक्तदेवताविशेष्यत्वाद्देवतात्वेन पात्नीवतचोदनागृहीतस्य देवतात्वस्मारणार्थे पातृत्वनिर्द्देशे त्वष्टृसाहित्यनिर्द्देशात्त्वष्टृसहितस्याग्नेर्देवतात्वमिति पूर्वपक्षतात्पर्यमाह—**तस्मिन्नेवेति** ।। ३५ ।।

भा० प्र०—पूर्वोक्त पात्नीवत भक्षण मन्त्र में त्वष्टा का उल्लेख होगा कि नहीं—यह संशय है, इसमें पूर्वपक्षी का कहना है कि "त्वष्टारम् उपलक्षयेत्" = उक्त स्थल में होम के मन्त्र में त्वष्टा का ऊह होगा, क्योंकि, "पानात्" मन्त्र में त्वष्टा के साथ पत्नीवत देवता का सोमपान वर्णित है, यह मन्त्र है, 'अग्ना पत्नीवः सजूर्देवेन त्वष्ट्रा देवेन स्वाहा", हे पत्नीवन् अग्ने ! तुम देवता त्वष्टा के साथ सोम का पान करो, और जो तुम्हारे साथ पान करेगा, उसका पान सहपान के बिना सम्भव नहीं है, अतएव इस स्थल में त्वष्टा का देवतात्व मान्त्रवर्णिक = मन्त्रवर्णलब्ध होने से शेष भक्षण मन्त्र में उसका भी उल्लेख होगा ।

"त्वष्टारं" = त्वष्टृनामक देवता का, "तु" = प्रत्यवस्थान में, "उपलक्षयेत्" = उपलक्षित करें, 'पानात्" = क्योंकि मन्त्र में त्वष्टा के साथ पान करने का वर्णन है ।

यह पूर्वपक्ष है ।। ३५ ।।

## अतुल्यत्वात्तु नैवं स्यात् ।। ३६ ।। सि० ।

**शा० भा०—नैतदेवम् । शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम् । शब्दश्चाग्नेः पत्नीवतः पानमाह, त्वष्टुः सहभावमात्रम् । न ह्यननुष्ठीयमाने सहभावः सिध्यतीति, त्वष्टरि पानमनुमीयते ।**

**ननु त्वष्ट्रे दानं[1] चोदितम् ? सत्यं चोदितं मन्त्रवर्णेन, न चोदनया । चोदना हि 'पात्नीवतं गृह्णाती'ति । लोके तु कार्यं दृष्ट्वा चोदितमचोदित[2]मप्यनुष्ठीयत एव । लोकतश्चैतत्परिच्छिन्नं, नैवजातीयकेन वाक्येन त्वष्टुः सोमः कृतो भवतीति ।। ३६ ।। सिद्धान्तः ।।**

**इति पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणीयताधिकरणम् ।। १४ ।।**

त० वा०—नैवोपलक्षयितव्यस्त्वष्टा । कुतः ?

मन्त्रचोदकयोस्तावदतुल्यत्वं बलाबले ।
पातृत्वेनाप्यतुल्यत्वं सह मात्राऽभिधानतः ।।

विधौ हि केवलः पत्नीवान्देवता, नान्यसहितः । तद्धितेनासौ चोद्यते । न च तद्धिताऽन्यसापेक्षादुत्पद्यते । तेनापि मान्त्रवर्णिकी दुर्बला । न च मन्त्र-

१. पानं । २. क० एतत्पदंनास्ति ।

वर्णस्य तद्देवतात्वकल्पनया विना कर्मानङ्गत्वम्, पत्नीवदभिधानेन तत्सिद्धेः। न च त्वष्टुरभिधानमन्यथा नोपपद्यते। स्तुत्यर्थमात्रत्वेनोपपद्यमानत्वात्। अत एव च मन्त्रार्थो भवति यस्त्वं त्वष्ट्रा सहितः स सोमं पिबेति। इतरथा पातृत्वेनैव तावत्कीदृशं देवताभिधानं, देवताया उद्देशमात्रोपकारित्वात्। किं पुनर्यदा तत्रापि साहित्यमात्रश्रवणात्केवलमुत्प्रेक्षा, न चासावैकान्तिकी। विनाऽपि कार्ययोगित्वेन सहशब्दप्रयोगात्।

तद्यथा—

सहैव दशभिः पुत्रैर्भारं वहति गर्दभी।

तत्र ह्येतावानेवार्थो विज्ञायते सत्स्वपि दशसु पुत्रेषु सैव वहतीति तस्मान्न त्वष्टुर्देवतात्वमवगम्यते। अतो नोपलक्षयितव्यः॥ ३६॥

( इति चतुर्दशं पात्नीवतभक्षणे त्वष्टुरनुपलक्षणाधिकरणम् )॥ १४॥

न्या० सु०—नैवमिति सिद्धान्तसूत्रावयवं व्याचष्टे—**नैवमिति**। हेतुप्रश्नपूर्वमतुल्यत्वं व्याचष्टे—**विधौ हीति**। मन्त्रलभ्याग्निनिरपेक्षपत्नीवत्त्वापर्यवसानात्केवलोक्त्या त्वष्टृमात्रनिरासः, पत्नीवत्त्वेनैकस्य विशेष्यस्य नित्यसपेक्षणान्नित्यसापेक्षत्वे च समासवत्तद्धितस्याप्यविघातान्मन्त्रगतसमानाधिकरण्यनिर्देशात् शीघ्रावगतविशेष्यत्वाग्निसापेक्षत्वाविरोधेऽपि तन्मात्रेणापर्यवसानाद्वैयधिकरण्ये निर्दिष्टत्वसासापेक्षत्वे तद्धितानुत्पत्तिरुक्ता। यद्यपि मन्त्रवर्णात्त्वष्टा देवतात्वेन न प्रतीयते, तथापि तद्धितेन बाध्यत इति मान्त्रवर्णिकस्यपीत्यपिशब्दो योज्यः। उत्तरार्द्धं व्याख्यातुमाह—**न चेति**। सिद्धान्तमुपसंहरति—**तस्मादिति**॥ ३६॥

इति चतुर्दशं पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणीयत्वाधिकरणम्॥

भा० प्र०—पूर्वपक्षी के उत्तर में सिद्धान्ती का कहना है कि ''नैवं स्यात्'' ऐसा नहीं हो सकता है अर्थात् त्वष्टा का ऊह नहीं होगा, क्योंकि, ''अतुल्यत्वात्'' कारण, पत्नीवत का देवतात्व एवं त्वष्टा का देवतात्व समान नहीं है, क्योंकि, पत्नीवत का देवतात्व तद्धित लभ्य है और त्वष्टा का देवतात्व मन्त्रवर्ण-सिद्ध है और मन्त्रवर्ण बोधित देवता की अपेक्षा तद्धितबोधित देवता अभ्यर्हित होने से तद्धितबोधित देवता ही देवता के रूप में ग्रहण के योग्य है, इसलिए कुमारिल भट्ट पाद ने कहा है—

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलं तु परं परम्॥

तद्धितप्रत्यय और चतुर्थी विभक्ति एवं मन्त्र की वर्णना से देवता की विधि होती है, किन्तु, इनमें पर पूर्व की अपेक्षा दुर्बल होता है। पत्नीवत देवता का सोमपान प्रत्यक्षश्रुति बोधित है, किन्तु त्वष्टा का पान अनुमेय है और जो तत्त्वशब्दैक प्रमाणक =

जो एकमात्र शब्द ही जिस विषय में प्रमाण है, उस विषय का यथाशब्द निर्णय होना ही उचित है, शब्द से जो प्राप्त होता है, उसी अर्थ का ग्रहण करना उचित है। और युक्ति-युक्त हो, शब्द से पत्नीवत देवता का ही पान लब्ध होने से भक्षमन्त्र में उसी का उल्लेख करना उचित है, और सहशब्द रहने पर हो जो तत्क्रियाकारिता रहती है—वह नहीं है, क्योंकि, "सदैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यादि स्थल में यद्यपि गर्दभी अकेले ही भार का वहन करती है पुत्रगण वहन नहीं करता है तथापि पुत्रादि के साथ शब्द के द्वारा उल्लेख किया गया है, इसलिए त्वष्टा का साहित्य-मात्र विवक्षित होने से त्वष्टा सोमपान कर्ता भी नहीं है, अतः, मन्त्र में त्वष्टा का उल्लेख नहीं होगा।

"अतुल्यत्वात्" = तुल्य नहीं होने से, "तु" = पूर्वपक्ष का निरास करने के लिए, "एवं न स्यात्" = इस प्रकार नहीं होगा, अर्थात् भक्षणमन्त्र में त्वष्टा का ऊह नहीं होगा, यह चौदहवाँ पात्नीवत भक्षण में त्वष्टा का अनुपलक्षणीयता अधिकरण है ॥३६॥

### अथ पञ्चदशं पात्नीवतशेषभक्षणे त्रिंशतोऽनुपलक्षणाधिकरणम्

## [१५] त्रिंशच्च परार्थत्वात् ॥ ३७ ॥ सि० ।

**शा० भा०—तस्मिन्नेव पात्नीवते मन्त्रः 'ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व', इति। तत्र संदेहः—किं त्रयस्त्रिंशतो देवानामुपलक्षणं कर्तव्यम्, उत नेति। किं प्राप्तम्? त्रयस्त्रिंशतं देवानुपलक्षयेत्। कथम्? दीयते हि सोमस्त्रयस्त्रिंशते देवेभ्यः। एवं ह्यग्निमग्नीदधीच्छति, आयाहि अग्नेऽर्वाचीनं त्रयस्त्रिंशता देवैः सह समानं रथमधिष्ठाय, नानारथैर्वा, विभवन्ति हि तेऽश्वाः। तदिदमनुष्वधमावह त्रयस्त्रिंशतं पत्नीवतो देवानागमय तर्पय चेति। अत्र हि, अग्निमग्नीदधिच्छति त्रयस्त्रिंशतो देवानां तृप्तय इति गम्यते। यत्प्रधानश्चात्र मन्त्रः तत्परः सोमः। तस्मादुच्यते त्रयस्त्रिंशद्देवा उपलक्षयितव्या इति।**

**ननु चोदनायां पत्नीवान्केवलोऽग्निर्देवतात्वेन श्रूयते। सत्यम्। चोदनायां पत्नीवान्देवतात्वेन श्रूयते, न तु देवतानन्तरं निषिध्यते। किमतो यद्येवम्? एतदतो भवति। मान्त्रवर्णिकास्त्रयस्त्रिंशद्देवा अविरुद्धाश्चोदनायां प्रतीयन्त इति। एवं प्राप्ते।**

**ब्रूमः—न त्रयस्त्रिंशद्देवा उपलक्षयितव्या इति। नात्र मन्त्रेऽग्निराह्वाता, परिवेष्टा वा, तर्पयिता वाऽध्येष्यते। नात्र त्रयस्त्रिंशद्देवेष्विष्टेषु प्रयोजनं निवर्त्यते। कस्तर्हि यष्टव्यः? पत्नीवान्। कुत एतत्? स हि चोद्यते, 'पात्नीवतं गृह्णाति', इति। ननु मान्त्रवर्णिकानां त्रयस्त्रिंशतो देवानामत्र[1] संकीर्तनम्।**

१. ब० देवतानां।

उच्यते। परार्थत्वेन ताः संकीर्त्यन्ते। कथम्? न ह्यप्रत्तमग्नेस्तद्भवति। न च परकीयस्य दानमवकल्पते। तस्मात् त्वममूभ्यस्त्रयस्त्रिंशद्देवताभ्यो देहीत्यसमञ्जसं वचनम्। अग्नये त्वनेन दानमुक्तं भवति। कथम्? ईशानो हि विलम्भयति द्रव्यम्। तदिह विलम्भनं संकीर्तयन् त्वमस्य ईशान इति प्रत्याययति।

ननु मादयस्वेत्युच्यते, न विलम्भयेति। उच्यते। न हि माद्यन्ति देवताः। तस्मान्मदकरणसंकीर्तनमदृष्टाय स्यात्। दृष्टाय तु त्यागसंकीर्तनं लक्षणया। लक्षणा ह्यदृष्टकल्पनाया ज्यायसी। प्रमाणाद्धि सा भवति। ननु त्यागेऽपि लक्ष्यमाणेऽग्निः कर्ताऽधीष्यते। तदुच्यते। अग्नेरप्यध्येषणाऽदृष्टायैव। तस्मादग्नेरैश्वर्यकरणमेतद्वाक्यं लक्षयतीति न्याय्यम्। अपि च पत्नीवते सोमश्चोद्यते, "पात्नीवतं गृह्णाति", इति।

ननूक्तं मान्त्रवर्णिकं न प्रतिषेधति चोदनेति। उच्यते। तदपि मन्त्रवर्णिकं नास्तीत्युक्तम्। अपि च, सामर्थ्यात्प्रतिषेधतीति गम्यते। न हि सापेक्षः पत्नीवच्छब्दस्तद्धितार्थेन समयते[2]। तस्मात्केवलः पत्नीवान्देवतेति। एतच्चोदनावशेन मन्त्रो वर्णनीयः। तस्माद्यथैवास्माभिर्वर्णितो मन्त्रः तथैव भवितुमर्हतीति। पत्नीवांश्चाग्निः। अग्ने पत्नीवन्निति सामानाधिकरण्येन निर्दिश्यते। तस्मादग्निरुपलक्षयितव्यो, न त्रयस्त्रिंशद्देवता इति ॥ ३७ ॥ पात्नीवतशेषभक्षे त्रिंशतोऽनुपलक्षणाधिकरणम् ॥ १५ ॥

त० वा०—अधिकरणातिदेशोऽयम्। एतावता तु विशेषेणातुल्यत्वाशङ्का। येन य एवासावग्निर्देवताभूतः, स एवात्र त्रयस्त्रिंशद्देवेषु भोक्तृषु परिवेष्टृत्वेन विनियुज्यते। तेन मन्त्रवर्णात्तेषामेव प्रधान्येन देवतात्वं विज्ञायते। गुणभूतोऽग्निः। पूर्वत्र च सहत्वमात्राभिधानादतुल्यत्वेन त्वष्टा निराकृतः। तदिह विपरीतमतुल्यत्वम्। पत्नीवत्त्वगुणमात्रदेवतात्वप्रतिपादनमात्रार्था च तद्धितचोदना। सा यथा अग्नाँ[3] इ पत्नीवाँः' इति मन्त्रवर्णात्प्राप्नुवताऽग्निना गुणिना न विरुध्यते एवं त्रयस्त्रिंशताऽपि देवैः। अविशिष्टो हि तेषामपि मन्त्रवर्णः 'पत्नीवतास्त्रिंशतं त्रींश्च देवान्' इति। न च चोदनया देवतान्तरं प्रतिषिद्धम्। येन मन्त्रवर्णगम्यं नेष्यते। न च मान्त्रवर्णिक्यां चोदितापरित्यागेन गृह्यमाणायां कश्चिद्विरोधः। न च प्रमाणान्तरगम्यायां तद्धितस्य सापेक्षत्वम्। यदि स एव त्रिंशदपेक्षं पत्नीवन्तं विदध्यात्, ततः सापेक्षदोषं प्रतिपद्येत। मन्त्रस्य तु सापेक्षमपि वदतो नैव कश्चिद्विरोधः। समुच्चयाश्रयणाच्चाविरोधित्वम्।

---

१. ब० पत्नीवतं। २. ब० समस्यते। ३. क० अग्नायी पत्नीवन्निति।

कथं तुल्यार्थयोः[1] समुच्चय इति चेत् ? न स्यात्समुच्चयः यदि मन्त्रेणोभयपरामर्शो न क्रियते। स तु चोदनावगतमग्निमपरित्यजन्नेव परिवेष्टृत्वेन च सिद्धं देवतात्वमभिदधत्त्रयस्त्रिंशतो देवतात्वमाह। तस्मात्समुच्चये सति सर्वेषामुपलक्षणम्। तन्मन्त्रव्याख्यानेन दर्शयति—याज्यामभिदधदेवं ह्यग्नेरग्नीदध्येषणं करोति। **सन्मानपूर्वको नियोगोऽध्येषणम्**। तदेवं क्रियते **आयाहीति**। छन्दसि 'व्यवहिताश्च' इति व्यवहितस्याऽऽङः प्रयोग ऐमिरिति। उपरि वक्ष्यमाण[2]-त्रयस्त्रिंशता देवैः सहैकरथारूढोः, अश्वविभवाद्वा[3] नानारथारूढः। ततश्चार्वागागत्य तांश्च पत्नीवतस्त्रिंशतं देवान्, अनुष्वधं-स्वधां-अन्नं सोमाख्यमनु आवह ततश्च मादय—संतर्पयेत्यर्थः। तेन स्फुटमेषां भोक्तृत्वमित्येवं प्राप्ते।

ब्रूमः त्रयस्त्रिंशतो नोपलक्षणीया इति। कुतः ?

चोदितार्थानुरोधेन मन्त्रः सर्वः प्रवर्तते।
तेन त्वष्टृवदेवात्र त्रिंशताऽग्नेरभिष्टुतिः॥

पात्नीवतचोदनार्थस्मरणहेतुना मन्त्रेण न शक्यमचोदितमग्नेः परिवेष्टृत्वम्, इतरेषां च भोक्तृत्वं प्रकाशयितुम्। अतो मन्त्रस्य परार्थत्वान्न चोदनामतिक्रम्य स्वातन्त्र्येण त्रय[4]स्त्रिंशत्प्रकाशनसामर्थ्यमवकल्पते। विधानसामर्थ्यं तु दूरभ्रष्टमेव।

न च त्रिंशतो देवतात्वमेव स्मारयति। चोदिताग्न्यैश्वर्यप्रकाशनपरत्वेन त्रयस्त्रिंशत्प्रकीर्तनात्। कथम् ?

अप्रसिद्धेश्वरत्वस्य दातृत्वं यस्य कीर्त्यते।
तदसंभाव्य मख्यार्थं ऐश्वर्यार्थं प्रतीयते॥

यदि ह्यप्रत्तावस्थमेव द्रव्यं त्वं देहीति मुख्यमेवोच्यते, ततः प्रतारणमेव स्यात्। अथ तु त्वमेवात्र दाता स्वामी, न वयं स्वामिन इत्येतत्परं भवति। यथा लोके कश्चिदुच्यते किं त्वयि भवति निमन्त्रिते त्वयैवाऽन्ये निमन्त्रणीया इति। ततो वाक्यं संबद्धं भवति। चोदितकरणाच्च दृष्टार्थं भवति। मादयस्वेत्यपि मुख्यस्य मदस्या[5]संभवादेतेभ्य इत्येतल्लक्षयति। दातृत्वमप्यग्नेर्दृष्टार्थमेवेति संप्रदानलक्षणार्थं विज्ञायते। विस्पष्टं च तद्धितेन यदन्यनिरपेक्षमवगतं, तन्मन्त्रानुरोधेन बाधितं न स्यात्।

कथं पुनः पात्नीवतमिति चोदितेऽग्निर्देवताऽवगम्यते, न पुनस्त्रय[6]स्त्रिंशद्देवता स्यात्। अत आह **पत्नीवांश्चाग्निरिह** गृह्यते, न त्रयस्त्रिंशत्, [7]**अग्ने पत्नीवन्निति** सामानाधिकरण्यदर्शनात्।

१. क० तुल्यार्थानां। २. क० वक्ष्यमाणत्वात्। ३. क० विभावाद्वा नानारथारूढाः।
४. क० त्रिशत्प्रकाशन। ५. क० मन्त्रार्थस्या।
६. क० पुनत्रिशत्। ७. क० अग्नआइ।

ननु त्रिंशताऽपि सह सामानाधिकरण्यमस्ति 'पत्नीवतस्त्रिशतम्' इति। सत्यमस्ति। तथाऽप्यत्राग्निः पत्नीवान् गृह्यते। तद्धितनिर्देशेन हि प्रातिपादिकार्थस्य संख्याविशेषाभिव्यक्तिर्भवति। तत्र प्रातिपदिकार्थानन्यथासंभवादेकवचनान्तेन विग्रहो भवति। पत्नीवान्देवताऽस्येति। त्रिंशच्च नित्यं बहुवचनान्तः। तस्मान्न तेभ्यस्तद्धित इति देवतात्त्वाभाव इति॥ ३७॥

(इति पञ्चदशं पात्नीवतभक्षणे त्रयस्त्रिंशतोऽनुपलक्षणाधिकरणम्॥ १५॥)

**अथ पञ्चदशं पात्नीवतशेषभक्षे त्रिंशतामनुपलक्षणाधिकरणम्॥ १५॥**

न्या० सु०—विशेष्यापेक्षसामर्थ्यरूपाल्लिङ्गादग्निवत्त्रयस्त्रिंशतो अपि देवतानां समानाधिकरण्यनिर्देशाविशेषाद्देवतात्वेन सङ्गतित्रयमाह—**अधिकरणेति**। अधिकाशङ्कोक्त्या पौनरुक्त्यं परिहरन्पूर्वपक्षमाह—**एतावता त्विति**। त्रयस्त्रिंशताग्नेश्च समुच्चयेन पत्नीवद्विशेष्यतया देवतात्वस्य वक्ष्यमाणत्वादतिशयार्थात्तत्पर्यस्वमादयस्वेत्युक्तेन परिवेष्टृत्वेनाग्नेर्गुणभूतत्वोक्तिः। या चातुल्यता त्वष्टुर्निरासहेतुत्वेनोक्ता। साप्यत्राग्नेर्गुणत्वावगमात्त्रयस्त्रिंशतः प्राधान्यावगमाद्विपरीतेत्याह—**पूर्वत्रेति**। तद्धितविरोधमाशङ्क्य पत्नीवत्त्वस्य देवतागुणमात्रतया तद्धितेन देवत्तात्वोक्तेर्गुण्यपेक्षत्वादग्निवत्त्रयस्त्रिंशतोऽप्यनपेक्षाशङ्क्य सामानाधिकरण्यनिर्देशाविशेषादगृह्यमाणविशेषतयाग्निमात्रेणाऽपर्यवसानमाह—**अविशिष्टो हीति**। अगृह्यमाणविशेषत्वेऽप्येकेन गुणेनाकाङ्क्षानिवृत्तेर्गुणिद्वयान्वयो न युक्त इत्याशङ्क्याह—**न चेति**। गुणिद्वयान्वयेऽपि चोदनोक्तस्य पत्नीवत्त्वस्य गुणत्वाविरोधेन चोदितया गुणिद्वयामानिषेधान्मन्त्रगम्यानेकापि गुणिभूता देवता युक्तेत्याशयः। अग्न्यन्वये पत्नीवान् देवतात्येकवचनान्तेन त्रयस्त्रिंशदन्वये पत्नीवतोऽस्य देवता इति बहुवचनान्तेन विग्रहापत्तेः सकृच्छ्रुते च शब्दे विग्रहद्वयविरोधाद् गुणिद्वयान्वयश्चोदनया निषेत्स्यत इत्याशङ्क्याह—**न च मान्त्रवर्णिकस्यामिति**। बहुवचनान्तेन विग्रहमात्रेण गुणिद्वयान्वयोपपत्तेर्विग्रहद्वयविरोधोऽपि नास्तीत्याशयः।

एवमप्येकगुणान्वयेन निवृत्तापेक्षस्य नित्यसापेक्षत्वाभावात् त्वष्ट्रपेक्षायामिव गुण्यन्तरापेक्षायामपि सापेक्षत्वात्तद्धितो नोत्पद्येतेत्याशङ्क्याह **न च प्रमाणान्तरेण**। त्वष्टुर्मन्त्रवर्णाख्येन प्रमाणान्तरेण देवतात्वानवगमात् तद्धितेनैव त्वष्टृसापेक्षस्य पत्नीवतो देवतात्वस्यावगम्यमानत्वात्तद्धितप्रकृतिसापेक्षत्वं तद्धितस्यानुत्पत्त्यापादकं दूषणमुक्तम्। इह तु देवतान्तरानपेक्षस्यैव पत्नीवतो देवतात्वे तद्धितेनोक्ते पत्नीवत्त्वस्य गुणरूपत्वेन गुण्यपेक्षत्वात्तद्धिताविरोधिना मन्त्रवर्णाख्येन प्रमाणान्तरेणागृह्यमाणविशेषतयैकेन गुणिनाकाङ्क्षानिवृत्त्ययोगाद् गुणिरूपायां देवतायां तद्धितप्रकृतित्वानपेक्षपत्नीवच्छब्दस्य गुणोक्तिप्रयुक्तगुणसापेक्षत्वं तद्धितस्य दूषणं न भवति। यदि हि तद्धितोऽन्यसापेक्षपत्नीवन्तं देवतात्वेन विदध्यात् ततः प्रकृतिसापेक्षत्वनिमित्तमनुत्पत्त्यापादकदोषं तद्धितः प्रतिपद्येतेत्यर्थः।

अग्नेस्त्रयस्त्रिंशतश्च देवानां गुणित्वाभ्युपगमे पत्न्यः सन्त्येषां त्रयस्त्रिंशतो देवानामग्निसहितानामित्यस्मिन्नर्थे मन्त्रगतपत्नीवच्छब्दमनुब्रूयात्तद्धितोत्पत्तेरभ्युपगमनीयत्वात्तत्रापि सापेक्षत्वदोषः स्यादित्याशङ्क्याह—**मन्त्रस्य त्विति**। मन्त्रस्याग्निसापेक्षमपि त्रयस्त्रिंशद्देवरूपगुणित्वं न वदतामनुप्रकृतौ पत्नीशब्दस्य सापेक्षत्वाभावान्न विरोध इत्यर्थः। गुणस्यैकेनैव गुणिना नैराकाङ्क्ष्यात् गुणिद्वयस्यान्योन्यसापेक्षत्वं विरुद्धचेतेत्याशङ्क्याह—**समुच्चयेति**।

अग्निमन्त्रेण त्रयस्त्रिंशद्देशानपेक्षस्याग्नेः त्रयस्त्रिंशद्देवमन्त्रेणाग्नेरप्यभिधानात्समुच्चयावगतिरित्याशङ्क्याह—**स त्विति**। अग्ने पत्नीवत् सोमं पिबेति पानचोदनया त्रिंशन्मन्त्रस्थया चाग्नआयाहीत्यागमनचोदनया दैवतारूपतया सिद्धमग्निमभिदधत्त्रयस्त्रिंशतो देवानां देवतात्वमाहेत्यर्थः। तेनाग्निस्त्रयस्त्रिंशद्देवपत्नीवत्पीतस्यैत्येवमूहः कार्य इति पूर्वपक्षमुपसंहरति—**तस्मादिति**। कथं परिवेष्टृत्वेन देवतात्वसिद्धिरित्याशङ्क्याग्नीत्कर्तृकाध्येषणोक्त्याग्नीधस्वाम्यात्तदनुष्ठानेऽपि स्वाम्याभावे परिवेष्टृत्वायोगसूचनादध्येष्यत्वेन च प्रेषणानर्हतया गुणभूतत्वायोगसूचनादग्नेश्च देवतात्वातिरिक्तस्वाम्ययोगाद्देवतात्वसिद्धिरिति परिहारसूचनार्थं तत्परिवेष्टृत्वेन देवतात्वं मन्त्रव्याख्यया दर्शयतीत्याह—**तदिति**।

मन्त्रव्याख्यार्थमिमं हीति भाष्यं व्याचष्टे—**याज्यामिति**। मन्त्रस्य विश्वामित्रार्थत्वादग्नीध्रोध्येष्टृत्वायोगमाशङ्क्य याज्योच्चारयितृत्वेनाध्येष्टृतोपपादिता। छन्दसीत्यनुवर्त्तमाने व्यवहिताश्चेति सूत्राद्व्यवहितान्वयोपपत्तिः छन्दसीत्यनेनोक्ता। आयाहीत्याख्यातान्वयागत्येध्याहारस्ततश्चेत्येनेनोक्तः। इदमिति भाष्यावयवस्यानुष्वधपदव्याख्यार्थत्वोक्त्यै पदपाठवत्पूर्वस्वधाशब्दाव्याख्यार्थोऽन्नशब्दः सोमयागविनियोगानुसारात्सोमविषयत्वेन व्याख्यातः। आवहेत्याख्यातस्योत्तराख्यातान्वयायाहूयेति पदस्य भाष्ये व्याहृतस्य ततोऽनन्तरमित्यर्थः। प्रतीत्यावगतिस्ततश्चेत्यनेनोक्ता। तर्पयेत्यस्य मादयत्यर्थव्याख्यार्थत्वोक्त्यै—**मादयेत्युक्तम्**। ऋषिप्रत्ययेनार्थतथात्वनिश्चयः। अत्र हीति भाष्यं व्याख्यातुमाह—**तेनेति**। नन्वित्याशङ्कानिरासार्थं 'सत्यमिति' न च चोदनयेति वार्तिकेन किमत इत्याशङ्कानिरासार्थं न च मान्त्रवर्णिका इति भाष्यं, न च मान्त्रवर्णिक्यामित्यनेनागतावेक्षणेन व्याख्यातत्वादव्याख्याय त्रिंशश्चैवं स्याद्विधानाग्निस्तुत्यर्थ सङ्कीर्त्यमानत्वादेवमुपलक्षणनिरासार्थं नैवमिति पूर्वसूत्रावयवानुषङ्गेण सूत्रव्याख्यार्थमेवं प्राप्तइत्यादिसङ्कीर्त्यंते।

भाष्यमाक्षिप्यव्याचष्टे—**एवमिति**। कुत इति हेतुप्रश्नभाष्यव्याख्यार्थं कुत इत्युक्ता। सहीत्युत्तरभाष्यं पूर्वार्द्धेन व्याख्यायोत्तरार्द्धेऽनेन वेत्याशङ्कानिरासार्थमुच्यतइति भाष्यं व्याख्यातम्। पूर्वार्द्धं व्याचष्टे—**पावत्नीतेति**। उत्तरार्द्धं व्याचष्टे—**न चेति**। देवतात्वेन चोदितस्याग्नेर्दातृलक्षितैश्वर्यप्रकाशनरूपस्तुत्यर्थः।

कथमिति प्रश्नभाष्यं व्याचष्टे—**कथमिति**। न हीत्यादिप्रत्याययतीत्यन्तं भाष्यं व्याचष्टे—**अप्रसिद्धेति**। यस्यान्यतोप्रसिद्धेश्वरत्वस्याग्नेर्दातृत्वं कीर्त्यंते, तस्यैश्वर्यार्थं

तद्दातृत्वकीर्तितं प्रतीयते न हि तस्य दातृत्वकीर्त्तनस्य मुख्यो दातृत्वरूपोऽर्थः सम्भवनार्हं इति न शब्दाध्याहारेण योज्यम् ।

श्लोकार्थमुपपादयति—**यदि ह्यांति** । देवतात्वेन ऱ्चोदितस्याग्नेरकरणात्प्रकथनात्कीर्त्त-नाख्यः प्रकथनार्थं करोतिः । मादयतेस्तर्पणमात्रवाचित्वाद्दातृत्वाख्यविलम्भयितृत्वं च कीर्त्यंतइति न त्वितिभाष्येणाशङ्क्य लक्षणया विलम्भनकीर्त्तनोक्त्यर्थं उच्यत इत्यादिभाष्यं व्याचष्टे—**मादयस्वेत्यपि चेति** । यथेष्टविनियोज्यत्वरूपपरस्वत्वापादनाभावेन दानस्यापि मुख्यस्याभावाद्देवतोद्देशेन द्रव्यत्यागमात्रं दानत्वेन विवक्षितमिति भाष्ये त्यागोक्त्या सूचितम् । त्यक्तत्वकीर्तनेऽप्यैश्वर्यकीर्त्तनार्थत्वं कथमिति न त्विति भाष्येणाशङ्क्य, लक्षण-यैश्वर्यकीर्त्तनोक्त्यर्थं तदुच्यत इत्यादिभाष्यं व्याचष्टे—**दातृत्वमपीति** ।

केवलस्य च पत्नीवतो देवतात्वनोदनान्न त्रयस्त्रिंशतो देवतात्वमित्यपि चेति भाष्येणोक्ते सत्यं चोदनयेति भाष्योक्तदेवतान्तरानिषेधनं त्वितिभाष्येणानुष्वधानिषेधेऽपि मान्त्रवर्णिक-देवतान्तराभावस्य परार्थेनेत्यादिभाष्येणोक्तत्वाद्देवतान्तराभाष्योक्त्यर्थमुच्यतइति भाष्यं स्पष्टत्वादव्याख्याय, तद्धितसामर्थ्यदेवतान्तरोक्त्यर्थमपि चेत्यादिभाष्यं पत्नीवत्त्वस्य गुणस्य गुण्यपेक्षायां मन्त्रवर्णादग्नेस्त्रयस्त्रिंशतो देवानां च समुच्चयेन गुणित्वावगतेः पत्नी-वदग्नित्रयस्त्रिंशद्देवरूपस्य प्रकृत्यर्थस्यानपेक्षस्यैव तद्धितेन देवतात्वाभिधानमभिप्रेत्य, न च प्रमाणान्तरगम्यायामिति वार्त्तिकेन सापेक्षत्वाद्दोषस्य परिहृतत्वादयुक्तमाशङ्क्य पत्नी-वान्देवताऽस्यैत्येकवचनान्तविग्रहे त्रयस्त्रिंशद्देवानामग्रहणात्पत्नीवन्तोऽस्य देव इति बहु-वचनान्तविग्रहेऽप्येभिरग्ने इति मन्त्रनिर्दिष्टस्याग्नेः पात्नीवच्छब्दसामानाधिकरण्याभावेन गुणित्वायोगान्मन्त्रद्वयनिर्दिष्टयोश्च गुणिनोरन्योरन्योन्यानपेक्षसिद्धयोर्गुणावयवप्रतीतेरन्यो-न्यसापेक्षत्वनिमित्तबहुवचनान्तविग्रहे अग्नेः पत्नीवन्नित्येकवचनान्तनिर्दिष्टस्याग्नेः परामर्शा-योगाद् गुणसमुच्चयायोगेनैकेन गुणिना नैराकाङ्क्षचावगतेरितरस्य गुणित्वान्वयायोगाद्दे-वतात्वेनान्वयमापाद्य सापेक्षतोक्तेति सूचनार्थं व्याचष्टे—**विस्पष्टं चेति** ।

एतच्चोदनावशेनेति भाष्यं पूर्वपक्ष्युक्तमन्त्रार्थनिरासार्थत्वेन स्पष्टत्वादव्याख्याय, पत्नीवांश्चेत्यादिभाष्यं शङ्कोत्तरत्वेनावतारणपूर्वं व्याचष्टे—**कथं पुनरिति** । सामाना-धिकरण्यस्यानिश्चायकत्वं शङ्कते—**नन्विति** । तद्धितस्य निःसंख्यदेशने विगृह्योच्चारणे निःसंख्यप्रातिपदिकार्थायोगात्संख्यायां कल्प्यमानायां नियतक्रमत्वात्संख्यानामेकादिक्रमेण कल्प्यत्वादेकत्वकल्पनेनानुपपत्तौ परिहृतायां द्वित्वबहुत्वकल्पने प्रमाणाभावादेकत्वाख्या-विशेषाभिव्यक्तेरेकवचनान्तनिर्दिष्टत्वादग्निरेव पत्नीवांस्तद्धितेन गृह्यतइत्येवं सामाना-धिकरण्यस्य निश्चायकत्वं समाधत्ते—**सत्यमिति** । एतदेव विवृणोति—**तत्रेति** । तस्मा-दित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** । त्रयस्त्रिंशतो देवानां पात्नीवते देवतात्वाभावोक्त्योहव्याजेन देवतात्वविचारे तात्पर्यं सूचितम् ॥ ३७ ॥

**इति पञ्चदशं पात्नीवतशेषभक्षणे त्रिंशतामनुपलक्षणाधिकरणम् ।**

भा० प्र०—उक्त पात्नीवत ग्रह के लिए जो याज्या = पाठ्य ऋक्मन्त्र विशेष है "पत्नीवतस्त्रिशतं त्रींश्च देवानमुष्वधं मादयस्त्र" इस मन्त्र के भाग में कहा गया है—हे अग्नि, तुम पत्नीवत नामधारी तैंतीस देवताओं को आनन्दित करो, इस प्रकार के मन्त्रवर्ण से अवगत होता है कि इस स्थल में सोमरस की आहुति देने पर तैंतीस देवता के ही समर्पित होना वर्णित है। तक्षमन्त्र में इन तैंतीस देवताओं का ही उल्लेख करना होगा या नहीं ? इस प्रकार के सन्देह में पूर्वपक्षी यदि यह कहे कि तैंतीस देवताओं का ही ऊह कर्तव्य है, क्योंकि, तैंतीस व्यक्ति ही जब हूयमान सोमरस से तर्पित होते हैं, तब इस स्थल में तैंतीस ही देवता हैं, ऐसी स्थिति में सिद्धान्ती के मतानुसार इस स्थल में केवल अग्नि का उद्देश्य ही सोम आहुत होने से यजमान से अग्नि की ही तृप्ति साधित होती है। तैंतीस देवता अग्नि से ही तृप्त होते हैं, इसलिए वे यहाँ पर देवता नहीं हैं, क्योंकि यजमान जिसके उद्देश्य से हविः प्रदान करते हैं उन्हीं को देवता कहा जाता है। वस्तुतः यहाँ अग्नि तैंतीस देवताओं को तृप्त करते हैं—यह कथन अग्नि की प्रशंसामात्र है, अतएव तैंतीस देवताओं का ऊह कर्तव्य नहीं है।

"त्रिशत् च" = त्वष्टा के समान तैंतीस देवता भी भक्षण मन्त्र में उल्लेख योग्य नहीं है, "परार्थत्वात्" = क्योंकि होम मन्त्र में उनका जो उल्लेख है वह परार्थ अर्थात् अर्थवाद होता है। सिद्धान्त पक्ष ॥ ३७ ॥

### अथ षोडशं भक्षणेऽनुवषट्कारदेवताया अनुपलक्षणाधिकरणम्।

## [१६] वषट्कारश्च कर्तृवत् ॥ ३८ ॥ सि०

शा० भा०—अस्त्यनुवषट्कारदेवता 'सोमस्याग्ने वीहीत्यनुवषट् करोति' इति। तत्र संदेहः—किमनुवषट्कारदेवतोपलक्षयितव्या, न वेति। किं प्राप्तम्। उपलक्षयितव्येति। न तत्र परार्थं किंचित्पूर्ववदुपलक्ष्यते। तस्मादुपलक्षयितव्येति। एवं प्राप्ते।

ब्रूमः। अनुवषट्कारदेवता नोपलक्षयितव्या। कर्तृवत्। यथा कर्ता नोपलक्ष्यते, होतृपीतस्याध्वर्युपीतस्येति, एवमेवानुवषट्कारदेवताऽपि। न हि सा प्रकृतावुपलक्षिता। यच्च नाम प्रकृतौ कृतं, तदिह करणीयम्। तस्मान्नोपलक्षयितव्येति ॥ ३८ ॥ भक्षणेऽनुवषट्कारदेवताया अनुपलक्षणाधिकरणम् ॥१६॥

त० वा०—अनुवषट्कारदेवतायाश्चोदनया, मन्त्रवर्णेन च देवतात्वमैकान्तिकम्। तस्मादुपलक्षणीया इति। एवं प्राप्ते—

अभिधीयते।

यथा पश्चात्तनः पाता पूर्वपात्रुपलक्षणम्।
अप्राकृतं न कुर्वीत तथैनामपि देवताम् ॥

न ह्येषा प्रकृतावुपलक्षिता । न चेह प्राकृतकार्यापन्ना । तस्मान्नोपलक्षयितव्येति ॥ ३८ ॥

(इति षोडशम् अनुवषट्कारदेवताया अनुपलक्षणाधिकरणम् ॥ १६ ॥)

**अथ षोडशभक्षणेऽनुवषट्कारदेवताया अनुपलक्षणाधिकरणम् ॥ १६ ॥**

न्या० सु०—अनुवषट्कारे यागे भूतभव्यसमुच्चारणन्यायाद्वस्तूसामर्थ्यात्सोमोऽङ्गम् । अनुशब्दसामर्थ्याद्वा प्रतिपत्तिकर्मत्वावगतेरनुवषट्कारयाग एवाङ्गमिति इत्यनुवषट्कारदेवतार्थं पृथक्सोमग्रहणविध्यभावाद्धहति—तेन शेषेण संयोजयति देवतामिति वषट्कारदेवतायै यद्धविर्वहति, तच्छेषेणानुवषट्कारदेवतासंयोजनार्थवायव्यादिशेषेणानुवषट्कारयाज्यायाः सङ्कर्षे वक्ष्यमाणत्वात्सोमग्रहणकालेऽनुवषट्कारे वेति प्रयोजनार्थं वषट्कारयागानन्तरं नष्टे सोमेऽर्थकर्मत्वात्सोमान्तरं गृहीत्वानुषट्कारे याज्याकार्यात् प्रतिकर्मत्वाद्वा लुप्यतइति प्रयोजनार्थं वा लैङ्गिकविनियोगविचारे तात्पर्यात्पादलक्षणसङ्गती स्पष्टत्वादनुवषट्कारदेवतात्वेनाभिप्रेतस्याग्ने वीहीति मन्त्रवर्णेन देवतात्वावगमान्मन्त्रविशिष्टानुवषट्कारयागचोदनया च देवतापेक्षितया मान्त्रवर्णिकदेवताग्रहणेनाग्नेर्देवतान्वयस्यैकान्तिकत्वात् पूर्वाधिकरणव्युत्पादितदेवतात्वरूपलक्षणन्यायप्रत्युदाहरणरूपेणात्र पूर्वपक्षोत्थानानन्तरसङ्गतिं सूचयन्पूर्वपक्षमाह—**अनुवषट्कारेति** । वायव्यैन्द्रवायववदेकपात्रस्थस्यापि सोमस्यानेकयागाङ्गत्वाविरोधान्मन्त्रवर्णाच्च सोमद्रव्यकत्वावगमेऽपि प्रतिपत्तित्वावेदकान्यदीयसोमद्रव्यकत्वानवगमादनुवषट्कारयागस्यार्थकर्मत्वावगतेरर्थकर्मभूतसोमयागाङ्गत्वरूपाप्राकृतकार्यापन्नत्वादनुवषट्कारदेवतोपलक्षणीयेत्यर्थः ।

वषट्कारश्च नैवं स्यात्पानकर्तृंवद्धषट्कारशब्देनानुवषट्कारदेवताया लक्षितलक्षणयोक्तायाः प्रतिपत्तिकर्माङ्गत्वेन प्राकृतकार्यापत्त्यभावात्प्रकृतदेवतासंस्कारभूतस्योपलक्षणस्यासिदेशतो प्राप्तेरित्येवमुपलक्षणनिरासार्थं नैवमिति पूर्वसूत्रानुषक्तं तत्पूर्वसूत्रावयवानुषङ्गेण सूत्रव्याख्यार्थमेवमित्यादिभाष्यं व्याचष्टे—**एवमिति** । पश्चात्तनाध्वर्य्वादिः पाता, पूर्वस्य होत्रादेः पातु प्रतिपत्तिकर्मपानाङ्गत्वेन प्राकृतदेवताकार्यानापन्नस्योपलक्षणं प्रकृतितो अत्रातिदेशेनाप्राप्तत्वाद्यथा अनुकुर्वीत तथैतामपि अनुवषट्कारदेवतां प्रतिपत्तिकर्मानुवषट्कारयागत्वेन वा कृतार्थकर्मदेवताकार्यानापन्नत्वान्नोपलक्षयेदित्यध्याहारेण योज्यम् । पूर्वतरसूत्रस्थैन्नैवंशब्देन 'त्वाष्टारं तूपलक्षयेदित्येतत्सूत्रोक्तयोपलक्षणीयत्वपरामर्शात्प्रमाणवानध्याहारः प्रतिपत्तिकर्माङ्गभूतस्यापि स्विष्टकृतः सूक्तवाके अग्निर्होत्रेणेदं हविरजुषतेतेत्युपलक्षणवदुपलक्षणाविरोधाद्धोत्रादेश्चादेवतात्वेनानुपलक्षणोपपत्तेरनुवषट्कारदेवतायाः प्रतिपत्तिकर्माङ्गत्वेऽप्युपलक्षणीयत्वशङ्कानिरासार्थंत्वेन न होति भाष्यव्याख्यार्थमप्राकृतपदमिन्द्रप्रदानाख्यप्रकृतस्थेषु भक्षेष्वनुवषट्कारदेवतोपलक्षणावादित्येवं व्यचष्टे—**न होति** । मन्त्रे तु वषट्कारदेवतावाच्यग्निपदानात्मनः प्रकृतौ वोहाभावादनुपलक्षणेऽपि विकृतावूहस्यावश्यकत्वादुपलक्षणं भविष्यतीत्याशङ्क्योपलक्षणाभ्युपगमे यदर्थकर्म ज्योतिष्टोमाभ्या-

सात्मकं प्रकृताविन्द्राख्यया देवतया कृतं, तद्विकृतावग्न्याख्ययाऽनुवषट्कारदेवतयापि कार्यं नच तत्क्रियते सङ्कर्षाद्ये सोमस्याग्ने विहित्यनुयजतीत्यनेनैन्द्रवायवादियागे मन्त्राख्यगुणविधि पूर्वपक्षयित्वा, मन्त्रविशिष्टकर्मान्तरविधेर्वक्ष्यमाणत्वे तु न वषट्कारयागस्येन्द्रप्रदानवत् ज्योतिष्टोमावयवभूताभ्यासत्वनिरासन्तादर्थ्येन च पृथक् सोमग्रहणादैन्द्रवायवादियागार्थत्वेन च गृहीतस्य कर्मान्तरार्थत्वावगमात्, यद्वा यत्सोमस्याग्नेविहीत्यनुवषट् करोति, तेनैव संस्थितात्सोमाद्भक्षयन्ति, स एव सोमस्य स्विष्टकृद्भाग इति च द्रव्यप्रतिपत्त्यर्थस्विष्टकृद्यागरूपत्वसंस्तवादपि प्रतिपत्तिकर्मत्वावगमादर्थकर्मत्वेन सकृदनुष्ठानापत्तेर्द्विदेवतादिष्वनुवषट्कारनिषेधरूपाल्लिङ्गावगतप्रत्यभ्यासावृत्तिविरोधात्सङ्कर्षे च स्विष्टकृत्तन्त्रानुष्ठानं पूर्वपक्षयित्वा पृथक्त्वेनावृत्तेर्वक्ष्यमाणत्वादित्येवं परिहारार्थत्वेन यत्र नामेति भाष्यव्याख्यार्थतयाप्यप्राकृतपदमेवावृत्त्यावषट्कारदेवतायाः प्राकृतदेवताकार्यानापन्नत्वेनापलक्षणस्य प्रकृतितोऽतिदेशेनाप्राप्तेरित्येवं व्याचष्टे—न चेति। तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे—तस्मादिति ॥ ३८ ॥

अनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ॥ १७ ॥

भा० प्र०—सोमयागों में अनुवषट्कृत नाम का एक याग है उसमें "सोमस्याग्ने वीहि" इस मन्त्र से होम किया जाता है। इस स्थल में स्पष्टरूप से अग्नि का देवतान्वबोधित होने से, इसके शेष में भक्षण के समय मन्त्र में इस याग का देवता जो अग्नि उसका उल्लेख कर्तव्य है—यही पूर्वपक्षी का मत है। इसमें सिद्धान्ती का कहना है कि अनुवषट्कार स्थल में अग्नि का उल्लेख नहीं होगा। कारण, यह ऐन्द्रचमस की विकृति है और इसकी प्रकृति ऐन्द्रचमस में इसके देवता अग्नि का उद्देश्य नहीं है। किन्तु इन्द्र ही उद्देश्य है, जो उद्देश्य नहीं होता है उसका उल्लेख नहीं हो सकता है, इसलिए अग्नि का उल्लेख नहीं हो सकता है, इसलिए अग्नि का उल्लेख नहीं होगा, इसका दृष्टान्त कर्तृवत् है, जैसे प्रकृतिभूत इन्द्रयाग में होता के द्वारा प्रथम मन्त्रपाठपूर्वक पान करने पर अध्वर्यु मन्त्रपाठपूर्वक पान करता है, तब होतृपीताय इस रूप में उसका उल्लेख नहीं होता है, इस स्थल में भी वैसे ही अग्नि का उल्लेख नहीं करना होगा।

"वषट्कारः च" = वषट्कार भी अर्थात् अनुवषट्कार नामक याग का देवता भी उपलक्षित नहीं होगा, "कर्तृवत्" = कर्ता के समान अर्थात् होता, अध्वर्यु आदि यागकर्ता के समान। यह १६ वाँ अनुवषट्कार देवता का अनुपलक्षण अधिकरण है ॥३८॥

## छन्दःप्रतिषेधस्तु सर्वगामित्वात् ॥ ३९ ॥

**शा० भा०—स्थितादुत्तरमुच्यते। नैतदस्ति। यदुक्तमूहेन मन्त्रवद्भक्षणं कर्तव्यमिति। अमन्त्रकं भक्षणं कर्तव्यम्। कस्मात्? उच्यते। समानविधानत्वात्। नास्त्यत्र प्रकृतिविकृतिभावः[1]। कथम्? प्रकरणस्य तुल्यत्वात्।**

---

१. ब० प्रकृतिविकारभावः।

यल्लिङ्गमुक्तं, छन्दःप्रतिषेधः, स इत्युच्यते। तृतीयसवनत्वाज्जगतीछन्दस इति प्राप्ते, 'अनुष्टुप्छन्दस इति षोडशिनि भक्षमन्त्रं नमतीति'[1] समानविधानेऽप्यवकल्पते।

यत्तूक्तम्—ऐन्द्रः सोमो गृह्यते, मीयते चेति। नैत ऐन्द्रा, अनैन्द्राश्च भिन्ना यागाः। एकस्यैवैतेऽभ्यासविशेषाः। न चाभ्यासविशेषाणां धर्माः, गुणत्वात्। सर्व एते यागधर्माः। तेन कृत्स्ना यागस्य चोद्यन्ते सोमधर्माः। सोमश्चेति। यच्चैन्द्रो गृह्यते, मीयते चेति[2]। इन्द्रस्य मन्त्राम्नानान्मन्त्रेण ग्रहणं प्रकाशयितव्यम्। इतरासां देवतानां ध्यानादिनेति। तस्मादनैन्द्राणाममन्त्रकं भक्षणमिति ॥ ३९ ॥ इति सप्तदशमनैन्द्राणाममन्त्रकभक्षणाधिकरणम्। कृत्वाचिन्तारूपम् ॥ १७ ॥

त० वा०—स्थितादुत्तरम्। न यथादेवतमूहः। किं तर्हि? अनैन्द्राणाममन्त्रकमेवेति। कुतः?

तुल्याप्रकरणा ह्येषा ज्योतिष्टोमक्रियेष्यते।
प्रकृतिर्विकृतिश्चेष्टा न चाऽऽत्मैवाऽऽत्मनः क्वचित् ॥

यदि ह्यभ्यासाः[3] पृथक्कर्माणि भवेयुः ततः प्रकृतिविकारभावः स्यात्। न त्वेवमस्ति। न चैषां सोमः, धर्मा वा केनचिद्विहिताः येन तु प्रकारेणैको गृह्णाति, तेन सर्वे। यथा वक्ष्यति 'तद्वत्सवनान्तरे ग्रहाम्नानम्' इति। न च मन्त्रवशेनैन्द्रविषयता सोमस्य, प्रत्यक्षया श्रुत्या सर्वविषयत्वबोधात्। न च यथाऽनारभ्यवादेनाऽऽहवनीयः सर्वहोमार्थं इति, तद्रहितकर्मान्तराभावादाहिताग्नेरधिकारः, एवमिह मन्त्रः सर्वसोमार्थः[4]। प्रकरणपठितः सामर्थ्यादिन्द्रार्थं प्रकाशयिष्यति। अन्यस्तु तेनाप्रकाशित एव ग्रहीष्यते, मास्यते वा।

अथवा विवेकाभावात्सर्वस्मिन्नेव गृह्यमाणे संकल्पमात्रेण व्यवस्थास्यते।

अथवा सुब्रह्मण्यान्मुख्यतयेन्द्रप्रकाशनार्थो भवति। तत्प्रभृतये देवतासमुदायायेत्यर्थः।

अथवा विधिशब्दे वसुमत्त्वस्याभावात्तद्गुणप्रकाशनं व्यर्थमिति वसुमत्त्वेनेतरदेवतासहितायेत्येतदभिधीयते। तस्मात्सर्वत्र समानविधानः सोमः। ततश्च विकारत्वाभावः। यत्त्वनुष्टुप्छन्दसो विनामविधानाद्विकृतित्वमिति, तत्समानविधानत्वेऽपि तृतीयसवनत्वाज्जगच्छन्दस्त्वे प्राप्ते विशिष्टविधानत्वेनोपपत्स्यते।

---

१. ब० न भवतीति। २. ब० वेति।
३. क० अभ्यासादेतानि। ४. क० सर्वहोमार्थः।

अथवा संस्थानां विकारत्वादुपपन्न एवात्रोह इत्यदर्शनमेव[1]। तस्मादैन्द्रेष्वेव भक्षणमन्त्रो मानग्रहणवच्च न तद्दर्शनेन भक्षनियम इत्यन्येषाममन्त्रकं भक्षणम् ॥३९॥

( इति इन्द्रपीताधिकरणोक्तद्वितीयोहपूर्वपक्षनिराकरणम् ॥ )

**कृत्वाचिन्तारूपम् ।**

न्या० सु०—इन्द्रपीताधिकरणपूर्वपक्षप्रयोजनस्यानैन्द्रसोमभक्षणानाममन्त्रकत्वस्य यथादेवतं चेति सूत्रेणाक्षिप्तस्य समाधानार्थत्वेनैव सूत्रव्याख्यार्थं स्थितादिति भाष्यं व्याचष्टे—**स्थितादिति** । इन्द्रपीताधिकरणपूर्वपक्षप्रयोजनाक्षेपात् **स्थितादित्यर्थः** । तुहितमन्त्रप्रयोगनिरासेनामन्त्रके पूर्वपक्षप्रयोजनसमाधानार्थतया तु शब्दव्याख्यार्थं नैतदितिभाष्यं व्याचष्टे—**नेति** । समाधानहेतुत्वेन समानविधानेष्वनैन्द्राणाममन्त्रत्वइत्येतत्सूत्रस्थसमानविधानशब्दोक्तप्रकृतिविकारभावाभावस्मरणार्थं कस्मादित्यादिभाष्यं व्याचष्टे—**कुत इति** । ज्योतिष्टोमक्रियायाः एकत्वेन कथम्भावात्मकप्रकरणभेदाभावादेकस्य कथम्भावस्योपदेशपूरितत्वे निराकाङ्क्षणेनातिदेशिकधर्मग्राहित्वरूपविकृतित्वायोगादपूरितत्वे वान्यस्यैव धर्माभिधानाशक्तेर्धर्मधातृत्वरूपप्रकृतित्वायोगादात्मानमेव प्रति प्रकृतिविकृतिता न युक्तेत्यर्थः । छन्दःप्रतिषेधोक्तिव्याख्यार्थं यल्लिङ्गमित्यादिभाष्यमसम्बन्धव्यवायापत्तेरुत्कृष्य व्याख्येयत्वादुपेक्ष्य तावज्ज्योतिष्टोमस्याभेदाद् प्रकृतिभावकृतित्वायोगेऽपि प्रकृतानां प्रकृतित्वं भविष्यतीत्याशङ्कानिरासार्थमुच्यतऐन्द्रसोम इत्यादिपूर्वपक्षप्रयोजनाक्षेपसूत्रस्थभाष्योक्तप्रकृतानां प्रकृतिविकृतिभावादुक्तमिति भाष्येण स्वर्गकामा यजेतेति यागस्यैव फलान्वयश्रुतेः धर्मत्वरूपेण अभ्यासानां निष्फलत्वादशक्तचवगतभेदस्याभ्यासानां धर्मकत्वाभावात्प्रकृतिभावायोगोक्त्यर्थं नैतइति भाष्यम् । य एतेभ्यासविशेषां ऐन्द्रा अनैन्द्राश्च भिन्ना नैते यागा, येन फलवत्तया धर्मग्राहित्वात्प्रकृतित्वार्हाः स्युः । यदि चाधर्मका अपि भिन्नयागान्वयिनः स्युः, ततः प्रकृतिविकृतिगतयागद्वाराप्यभ्यासानां प्रकृतिभावः शक्यते । न त्वेदप्यस्त्येकयागत्वादित्येवं व्याख्यातुमाह—**यदि हीति** ।

न चेति भाष्यं गुणानां परार्थत्वादसम्बन्धः समत्वास्यादित्यनेनापि ३.१.२२ न्यायेनाभ्यासानां यागगुणत्वाद् गुणरूपधर्मान्वयानर्हत्वोक्त्यर्थतया भासमानगुणानामपि प्रयाजादीनां गुणान्वयाभ्युपगमेऽपि साक्षात्फलवत्त्वाभावेऽपि चाभ्यासतां फलवद्यागोपकारित्वेन परम्परया फलवत्त्वान्मैत्रावरुणाद्यभ्यासानां श्रयणादिधर्मग्राहित्ववत्सर्वोपदेशिकातिदेशिकधर्मग्राहित्वोपपत्ते प्रकृतिविकृतित्वसम्भवादयुक्तमाशङ्क्याभ्यासार्थधर्मविध्यभावाशयत्वेन व्याचष्टे—**न चेति** । यागधर्मत्वायाऽभ्यासद्वारा योगोपकारित्व।दैन्द्रप्रदानमात्रद्वारापि च यागोपकारित्वापपत्तेः, प्रदानानां भेदात्सोमफलचमसयोरिव कर्मैक्येऽपि प्रकृतिविकृतित्वोपपत्तिशङ्कानिरासार्थत्वेन सर्वगामित्वादिति सूत्रावयवस्य सर्वाभ्यासगामित्वात्सोमस्य तद्धर्माणां चेत्येवं व्याख्यार्थं तेनेति भाष्यं व्याचष्टे—**येन त्विति** । भाष्योक्तार्थोपपाद-

---

१. क० स्यात् इत्यधिकम् ।

नायाऽभ्यासानां धर्मग्रहणस्य यागीयत्वसर्वाभ्यासगामित्वादिति व्याख्यान्तरमप्यनेन सूचितम्। यथा च सवनान्तर्वर्तिनां ग्रहाणां प्रातःसावनिकैः सह सामानविध्यं सप्तमपादाधिकरणे वक्ष्यते तथानैन्द्राणामैन्द्रैः सहेति दार्ढ्यार्थं दृष्टान्तमाह—**यथेति**। कथम्पुनर्ज्ञायत इत्यादिपूर्वपक्षप्रयोजनाक्षेपभाष्योक्तं मन्त्रवर्णात्सोमस्य धर्माणां चेन्द्रप्रदानविषयत्वं यत्त्विति भाष्येणानुभाष्यं परिहारार्थमिन्द्रस्येत्यादिभाष्यं तात्पर्यतस्तावद्व्याचष्टे—**न चेति**। सोमेन यजेतेति प्रत्यक्षश्रुत्या सर्वप्रदानविषयत्वबोधानुद्गुणरोधेन सङ्कोचो न युक्त इत्यर्थः। भवत्विह साधनवशेन साध्यस्य नियम इत्यादिपूर्वपक्षप्रयोजनाक्षेपवार्त्तिकमाह वनायादिवशेनाग्निहोत्रादेस्त्रैवर्णिकविषयतया सङ्कोचवन्मन्त्रवशेनासोमस्येन्द्रप्रदानविषयतया सङ्कोचसम्भवं वैषम्योक्त्या परिहरति—**न च यथेति**। आहवनीयस्यानारभ्यवादेन सर्वहोमार्थत्वात्सङ्कोचयवत्वं युक्तं मन्त्रस्य तु सर्वस्तोमार्थत्वानवगमान्न सङ्कोचकता युक्तेत्यर्थः। मन्त्रस्य वाक्यात्सर्वार्थत्वानवगमेऽपि प्रकरणार्थसर्वार्थत्वं भविष्यतीत्याशङ्कां निरस्यन्नैतदेवमितिभाष्यं स्वरूपतो व्याचष्टे—**प्रकरण इति**। सामर्थ्यावगतेन्द्रार्थसोमप्रकाशकत्वामात्रेणापि प्रकरणपाठोपपत्तेर्न सर्वसोमार्थत्वे प्रमाणमस्तीत्याशयः।

अभिषेवकालीनसोमग्रहणविषयत्वान्मन्त्रस्य तदा च विवेकाभावेनेन्द्रसोममात्रविषयत्वायोगादिन्द्रसम्बन्धिनः सोमस्य ग्रहणं मन्त्रेण स्मार्यते, देवतान्तरसम्बन्धिनोध्यानादिनेत्येतद्व्याख्यापरितोषेणैतदेवमिति भाष्यं कर्मव्युत्पत्त्या ग्रहणशब्दोक्तो ग्राह्यः। सर्वः सोमो मन्त्रेणेन्द्रसम्बन्धितया सङ्कल्पनीया देवतान्तरसम्बन्धितया ध्यानादिनेत्येवं व्याख्यातुमाह—**अथ वेति**।

यथेन्द्रागच्छेति सुब्रह्मण्याख्ये मन्त्रे प्रकृतदेवतामात्रोपलक्षणार्थे मुख्यतयेन्द्रः प्रकाश्यत इत्येकादशे सुब्रह्मण्याधिकरणे वक्ष्यते तथेहापि भविष्यतीति स्वयं परिहारान्तरमाह—**अथ वा सुब्रह्मण्यावदिति**। देवताशब्दपर्यायेण च शब्देन देवतान्तरप्रकाशनसम्भवप्रदर्शनार्थत्वकल्पनायोगादेतत्परिहारापरितोषेणान्यथा परिहरति—**अथ वा विधिशब्दे**। तुशब्दोक्तोहितमन्त्रप्रयोगनिरासे हेतुसर्वगामित्वादिति सूत्रावयवौक्तमुक्तमुपसंहरति—**तस्मादिति**।

उपेक्षितं छन्दःप्रतिषेधशब्दव्याख्यार्थं यल्लिङ्गमित्यादिभाष्यं व्याचष्टे—**यत्त्विति**। समानविधानत्वे सिद्धान्तन्यायेनानूहितमन्त्रप्रयोगाज्जगच्छन्दः शब्दप्रयोगे प्राप्तोऽनुष्टुप्छन्दः शब्दविशिष्टोहविधानत्वेनाष्टुप्छन्दोविधानाभिधानमुपपत्स्यतइत्यर्थः। संस्थासामानविध्याशयेऽनुलिङ्गोक्तिः संस्थाधिकरणवक्ष्यमाणेन संस्थानां विकारत्वेन निराकार्येत्याह—**अथ वेति**। पूर्वपक्षप्रयोजनसमाधानोपसंहारार्थं तस्मादिति भाष्यं सोमस्य प्रत्यक्षश्रुत्या सर्वाभ्यासविषयत्ववद्भक्षणस्य सर्वसोमविषयत्वानवबोधान्मन्त्रवशेनैन्द्रसोमविषयतया भक्षसङ्कोचापत्तेर्मन्त्राभावे भक्षणाभावादयुक्तमित्याशङ्कां निरस्यन्व्याचष्टे—**तस्मादिति**। सामर्थ्यावगतेन्द्रसोमविषयतया भक्षसङ्कोचापत्तेर्मन्त्राभावे भक्षणाभावादयुक्तमित्याशङ्कां निरस्यन्

व्याचष्टे—**तस्मादिति** । सामर्थ्यावगतेन्द्रसोमभक्षार्थत्वमात्रेण प्रकरणपाठोपपत्तेः सर्वसोमभक्षार्थत्वप्रमाणाभावान्मन्त्रवशेन मानग्रहणयोरिव भक्षस्यापि सङ्कोचो न युक्त इत्याशयः ॥ ३९ ॥

**इति सप्तदशमनैन्द्राणाममन्त्रभक्षणाधिकरणम् ।**

भा० प्र०—२८ और २९ सूत्रों में केवल पूर्वपक्षी के मत का प्रदर्शन हुआ है, उसमें प्रथम पूर्वपक्षी ने कहा है कि इन्द्र और अनैन्द्रयाग के मध्य में प्रकृति-विकृति भावन होने से इन्द्रयाग में ही "इन्द्रपीतस्य" यह प्रयोग कर मन्त्रपाठपूर्वक आहुत सोम का शेष भक्षण करना पड़ता है, इसमें पूर्वपक्षी का कहना है कि उक्त स्थल में प्रकृति-विकृति भाव होने से उद्देश्यीभूत उन देवताओं का ऊह कर मन्त्रपाठपूर्वक ही सभी शेष सोम का भक्षण कर्तव्य है और इस ऊह पक्ष का अवलम्बन कर मन्त्रपाठपूर्वक ही सभी शेष सोम का भक्षण कर्तव्य है । इस ऊह पक्ष का अवलम्बन करके कृत्त्वाचिन्तारूप में पांच अधिकरणों में ऊह सम्बन्धी पांच प्रकार का विचार किया गया है, इन प्रकारों में द्वितीय पूर्वपक्षी का मत समाप्त होने पर प्रथम पूर्वपक्षी इसका खण्डन कर अपने मत का स्थापन करने के लिए जो कहा है उसी का प्रदर्शन इस सूत्र में किया गया है ।

द्वितीय पूर्वपक्षी ने कहा था कि ऊह करके मन्त्रपाठपूर्वक ही भक्षण करना होगा—यह सङ्गत नहीं है । इसमें कारण है कि "सर्वगामित्वात्" क्योंकि इन्द्र और अनैन्द्र-सकल समान विधान वाले हैं—एक ही उपदेश विधि का विषय होने से एक ही प्रकार में सोम के साथ सम्बद्ध रहता है । "सोमेन यजेत" इस विधिवाक्य में जो सोम का विधान है, वह ऐन्द्र एवं अनैन्द्र सभी यागों का प्रकरण बल से तुल्य भाव से ही ग्रहण किया जाता है, अतः सोम अविशेष रूप में सर्वगामी ही होता है । इसलिए ऐन्द्रयाग एवं अनैन्द्रयागों में एक दूसरे के धर्म का ग्रहण नहीं करता है, अतः प्रकृति-विकृति भाव नहीं है एवं ऐसी कोई अतिदेशविधि भी नहीं है जिसके द्वारा प्रकृति-विकृति भाव अवधारित हो, "ऐन्द्रः सोमो गृह्यते नीयते च" ऐन्द्र सोम का ग्रहण किया जाता है और परिमाण किया जाता है—इस वचन से भी प्रकृति-विकृति भाव निरूपित नहीं होता है, कारण, ऐन्द्रयाग और अनैन्द्रयाग यदि स्वतन्त्र स्वप्रधान भिन्न-भिन्न याग होता तो वैसा हो सकता था, किन्तु ये सभी एक याग का ही अनुष्ठान विशेष हैं—सभी एक याग के ही अङ्ग हैं । अतः ये सभी दूसरे एक याग के गुण होने से इनके एक का धर्म दूसरे में नहीं जायेगा, क्योंकि जो गुण वह स्वयं अप्रधान होने से उसका धर्म दूसरे गुण में नहीं जा सकता हैं—इसका विचार "गुणानां च परार्थत्वादसम्बन्धः समत्वात्" (३।१।२२) में किया गया है । इसलिए इनमें प्रकृति-विकृतिभाव न होने से ऊह कर मन्त्रपाठपूर्वक सोम भक्षण नहीं करना होगा, अपितु विना मन्त्र से ही भक्षण करना होगा ।

द्वितीय पूर्वपक्षी का पुनः कथन है कि तृतीय सवन में षोडशिग्रह की वेला में "तृतीयस्य सवनस्य जगतीच्छन्दसः" इस अंश के स्थल में "अनुष्टुप् छन्दसः" इस प्रकार ऊह करने की विधि है, अतः सभी जगह ऊह कर्तव्य है, वह उक्त लिङ्ग अर्थात् ज्ञापक से जाना जाता है। सर्वत्र ऊह कर्तव्य है यह मन्त्र अर्थात् विधि ही ज्ञापक है, ऐसी स्थिति में कहा जा सकता है कि "छन्दः प्रतिषेधस्तु" तृतीय सवनत्वहेतु उक्त ऊह स्थल में जो जगती छन्द की प्राप्ति होती है, उसका प्रतिषेध मात्र किया गया है, वह ऊह का लिङ्ग नहीं है, वह वचनसिद्ध होने से उससे अन्य स्थल में भी विना वचन के ऊह करना होगा—यह नहीं कहा जा सकता है, क्योंकि शब्दैक समधिगम्य विषय में वचन के सामर्थ्य से जो प्राप्त होता है उतना ही अर्थ करके तदनुसार अनुष्ठान करना ही आस्तिकों का कर्तव्य है, इसीलिए अनैन्द्रस्थल में भक्षण अमन्त्रक ही कर्तव्य है।

"तु" = पूर्वप्रदर्शित पक्ष के निरसन के लिए, "सर्वगामित्वात्" = ऐन्द्रयाग एवं अनैन्द्रयाग का प्रकृति-विकृति भाव नहीं है, क्योंकि, विधिबोधित सोम सर्वगामी अर्थात् एक ही रूप में सबका विषय "छन्दः प्रतिषेधः" अनुष्टुप् छन्दसः इत्यादि वाक्य भी ऊह का लिङ्ग नहीं है, क्योंकि वह निषेध अर्थात् जगती छन्द का निषेधमात्र है। १७ वां इन्द्रपीताधिकरणोक्त द्वितीय ऊह पूर्वपक्ष निरासाधिकरण ॥ ३९ ॥

## [ १७ ] ऐद्राग्ने तु लिङ्गभावात्स्यात् ॥ ४० ॥ पू० ।

**शा० भा०—एवं स्थिते चिन्त्यते। अस्ति तत्रैन्द्राग्नः सोमः 'ऐन्द्राग्नं गृह्णाति' इति। तत्र संदेहः—किं मन्त्रवद्भक्षणम्, मन्त्रकं वेति। किं प्राप्तम्? ऐन्द्राग्ने तु मन्त्रः स्यात्। यस्य हीन्द्राग्नी देवता, तस्य नेन्द्रः[1]। शक्यते हि स इन्द्रपीत इति व्यपदेष्टुम्। यस्य ह्यवयवान्तरमिन्द्रेण पीतं, स इन्द्रपीतः। तस्येन्द्राग्निभ्यां पिबद्भ्यां पीतमवयवान्तरमिन्द्रेण। तस्मान्मन्त्रवद्भक्षणमिति ॥ ४० ॥ पू० ॥**

त० वा०—अथ यत्रान्यसहित इन्द्रो देवता, तत्र किमिन्द्रपीतव्यपदेशोऽस्ति, नेति सन्देहे, अस्तीति ब्रूमः। कुतः—

न देवतात्वमिन्द्रस्य तत्पीतत्वेन कथ्यते[2]।
तेन नाऽऽग्नेयतुल्यत्वमसामर्थ्यादिहेष्यते ॥

आग्नेये हि यजमानसंकल्पो विशेषणत्वेन संकीर्त्यते। स च तद्धितेनान्यनिरपेक्षाग्निविषय उपात्त इति, सापेक्षं न प्रतिपादयति। अत्र पुनरिन्द्रपीत इति संप्रदानव्यापारो विशेषणम्। स चोभयोरपि संकल्प्यमानयोः प्रत्येकं केनचिदंशेन विद्यते। यस्य च यावान्व्यापारः, स तेन पातेत्युपलक्ष्यते। तेनैन्द्राग्नस्येन्द्रा-

---

१. ब० क० तस्येन्द्रः शक्यते। २. क० कोर्त्यते।

ग्निभ्यां पिबद्भ्यामर्धमिन्द्रपीतम्, अर्द्धमग्निपीतमिति शक्यं वदितुम्। न च वर्तमानस्य साक्षादिन्द्रपीतत्वमिति हुतावयवद्वारेण व्यपदेशः। न च तस्येयत्तानियमोस्ति, एतावता पीतेन व्यपदेष्टव्य इति। तस्माद्विशेषणोपपत्तेर्मन्त्रवद्भक्षणमिति ॥ ४० ॥

अथाष्टदशमैन्द्राग्नभक्षस्यामन्त्रकताधिकरणम् ॥ १८ ॥

न्या० सु०—समानविधानत्वोपपादनेनोहितमन्त्रप्रयोगात्पूर्वपक्षप्रयोजनाक्षेपपरिहृते, अन्यसहितेन्द्रदेवत्यसोमभक्षणे तूहितमन्त्रप्रयोगोपपत्तेरमन्त्रकत्वं पूर्वपक्षप्रयोजनम्। सर्वानैन्द्राव्यापकत्वेनाक्षिप्य व्यापकत्वोक्त्यर्थमेतदधिकरणमिति सूचनायैव पूर्वपक्षप्रयोजनसाधनस्थितेऽन्यथाक्षिप्य समाधातुं चिन्त्यत इति। अभिधानार्थस्यैवमिति भाष्यस्याथशब्देन व्याख्यां सूचयन् सन्देहभाष्यं पूर्वपक्षप्रतिज्ञाभाष्यं च सङ्क्षिप्य व्याचष्टे—**अथेति**। सहितशब्दोऽनैन्द्रान्तराणामन्त्रकत्वेऽप्यैन्द्राग्नेऽनैन्द्रेऽपि मन्त्रसद्भावात्प्रयोजनस्याव्यापकत्वेनाऽन्यथाक्षेपसूचनार्थः। इन्द्रपीतशब्दस्येन्द्रावत्योक्त्यर्थत्वादैन्द्रदेवत्यतायाश्चतुर्थाधिकरणे निरस्तत्वात् कुतोऽन्यसहितेन्द्रदेवत्ये सोमव्यपदेश इति प्रश्नोत्तरत्वेन लिङ्गाभावादिति सूत्रावयवव्याख्यार्थं यस्य हीत्यादिपीतमवयवान्तरमिन्द्रेणेत्यन्तं भाष्यं व्याचक्षाणो यस्येन्द्राग्नी देवता तस्येन्द्रो न देवतेति कृत्वेन्द्रपीतोक्त्या देवतात्वानुक्तेराग्नेयतुल्यतेत्येवमाद्यं तावद्भाष्यावयवं व्याचष्टे—**कुत इति**। इहेन्द्रपीतशब्दे सापेक्षत्वे सत्यसामर्थ्याद्यदाग्नेयसाम्यं प्रतीयते, तदिन्द्रस्य देवतात्वाकीर्त्तनान्नेष्यत इत्यर्थः।

वैषम्यं विवृण्वन् छक्ष्यत इति भाष्यावयवं व्याचष्टे—**आग्नेयो हीति**। केवलेन्द्रदेवत्येऽपि हुतशेषस्य मुख्येन्द्रदेवत्यत्वाभावे चौपचारिकस्य कीर्त्यत्वापत्तेः श्रौतस्यैवेन्द्रपीतत्वस्य मन्त्रार्थवादावगतस्योपचारात् कीर्त्तनसम्भवे लाक्षणिकदेवतात्वकीर्त्तनायोगात्पानाख्यो व्यापारो विशेषणम्। तस्येचेन्द्राग्निदेवत्ये प्रत्येकं सङ्कल्प्यमानत्वलक्षणदेवतात्वाभावेऽपि केनचिद्धुतशिष्टरूपेण शेषविषयभूतेन मन्त्रार्थवादावगतस्यौपचारिकस्य विद्यमानत्वान्न सापेक्षत्वापत्तिरित्याशयः। सौत्रलिङ्गोक्तिव्याख्यार्था विशेषणोक्तिः। हुतविपयत्वात्पीतव्यपदेशस्य केवलेन्द्रदेवत्येऽपि हुतशेषस्येन्द्रपीतत्वं नास्तीत्याशङ्कानिरासार्थं यस्य हीत्यवयवान्तरमसम्बद्धव्यवायापत्तेरनुकृष्य व्याख्येयत्वादुपेक्ष्य तावदुभाभ्यां पेये कथमेकस्य पातृतेत्यादिशङ्कानिरासार्थं तस्येति भाष्यावयवं व्याचष्टे—**यस्य चेति**। अनेकपेये प्रत्येकपेयोऽल्पत्वनिमित्तेन पातृव्यापारालपत्वेन पातृत्वव्यपदेशव्याप्यतादर्शनादिन्द्राग्निपीतेऽप्यर्धमंस्येन्द्रपीतत्वं वक्तुं वाक्यमित्यर्थः। यस्य हीत्युपेक्षितं भाष्यं व्याचष्टे—**न चेति**। भक्षणकाले वर्त्तमानस्य हुतशेषस्य देवतोद्देशेनाहुतत्वात्साक्षादिन्द्रपीतत्वाभावेऽपि हुतवयवगतमिन्द्रपीतत्वमहुतेऽप्युपचर्येन्द्रपीतव्यपदेशो युक्त इत्यर्थः। केवलेन्द्रदेवत्ये हुतशेषस्येन्द्रेणापीतत्वात्तद्गतेन्द्रपीतत्वोपचाराद्धुतादिविशिष्टे तत्पीतत्वात्तद्गतेन्द्रपीतत्वोपचाराद्धुतादिविशिष्टे तत्पीतव्यपदेशोपपत्तावपि इन्द्राग्निदेवत्ये हुतस्यापि कृत्स्नस्येन्द्रेणापानात्।

हुतशेषे किङ्गतेन्द्रपीततोपचार्येतेत्याशङ्क्याह—न च तत्रेति। हुतार्धगतमिन्द्रपीतत्वमुपचरिष्यते इत्याशयः। तस्मादित्यव्यापकत्वोपसंहारभाष्यं व्याचष्टे— तस्मादिति ॥ ४० ॥

भा० प्र०—इस सूत्र में प्रथम पूर्वपक्षी के मध्यस्थ होकर "कृत्वाचिन्ता" के रूप में पुनः दो अधिकरणों में विचार किया जा रहा है। अनैन्द्रस्थल में शेष भक्षण में ऊह नहीं हो सकता है, अतः, आमन्त्रक ही भक्षण करना होगा, यदि यही माना जाय तो "ऐन्द्राग्नं गृह्णाति" इन्द्राग्नि देवता के उद्देश में सोम ग्रहण करें, इस वचन में जो सोमग्रहण विहित होता है उसके हुतशेष के भक्षण में मन्त्र का पाठ करना चाहिए या नहीं—यह सन्देह है। इसमें पूर्वपक्षी का कहना है कि "ऐन्द्राग्ने तु स्यात्" ऐन्द्राग्न शेष भक्षण स्थल में समन्त्रक ही भक्षण होगा, क्योंकि "लिङ्गभात्रात्" क्योंकि लिङ्ग है अर्थात् वैसे अर्थ का प्रकाश करने में मन्त्र का सामर्थ्य है, कारण, जैसे जो लिङ्ग डित्थ और डवित्थ की माता है उसको डित्थ की माता भी कहा जा सकता है, इसी प्रकार इन्द्राग्नि जिसका देवता है इन्द्र भी उसका देवता है, क्योंकि, इन्द्र इन्द्राग्नि का अवयव या अंश होने से इन्द्राग्नि जिसका पान करता है, इन्द्र भी उसका पान करता है, अतः मन्त्र में जो "इन्द्रपीतस्य" यह अंश है, वह असमवेतार्थ नहीं है, अतएव इस स्थल में मन्त्रपाठपूर्वक ही भक्षण होगा।

"ऐन्द्राग्ने" = ऐन्द्राग्न शेष भक्षण स्थल में, "तु" = प्रत्यवस्थानसूचक है, "स्यात्" = होगा, अर्थात् मन्त्रपाठपूर्वक भक्षण होगा, "लिङ्गभावात्" = क्योंकि लिङ्ग अर्थात् मन्त्र की तत्प्रकाशकता सामर्थ्य है। यहाँ पूर्वपक्ष है ॥ ४० ॥

## एकस्मिन्वा देवतान्तराद्विभागवत् ॥ ४१ ॥ सि० ।

शा० भा०—नास्यावयवान्तरमिन्द्रेण पीयते। न चावयवान्तरेणेन्द्रपीतेन तत्पीतं भवति। तेन पीत इति लक्षणाशब्दोऽयम्। इन्द्रमुद्दिश्य यः संकल्पितः, इन्द्रो अस्य देवतेति। यथैव च साकाङ्क्षस्य तद्धितार्थेनासम्बन्ध, एवं समासोऽपीन्द्रपीतस्येति साकाङ्क्षस्य नावकल्पते। तदुक्तम्, 'व्यवस्था वार्थसंयोगादि'ति।

आह। ननु तेनैवाधिकरणेनैतद्गतं किमर्थं पुनश्चिन्त्यत इति? उच्यते। यत्तत्र विचारितं सिद्धमेव तत्, कथं पुनर्विचार्यते। नैव साकाङ्क्षस्य देवतासम्बन्ध इति। नैवेह देवतासंबन्ध इति पूर्वपक्षः। पानमात्रसम्बन्धोऽत्रेति। पानमात्रसम्बन्धेन यत्र द्वाभ्यां पीयते, तत्रैकेन देवतासम्बन्ध इत्युत्तरः पक्षः। तस्मान्न पुनरुक्तमिति ॥ ४१ ॥ सिद्धान्तः ऐन्द्राग्नभक्षस्यामन्त्रकताधिकरणम् ॥ १८ ॥

त० वा०—सत्यं यदि देवताव्यापारः पातृत्वमिह विशेषणं स्यात्, तत ऐन्द्राग्नोऽपि गृह्येत। न त्वस्माकं देवता पिबति। किं तर्हि? संकल्पविषय-

त्वेनैवोपयुज्यते। न च मिश्रसंकल्पेऽन्यतरव्यपदेशः सम्भवति। तद्धितवत्समासस्य सापेक्षेष्वप्रवृत्तेः। तस्मादाग्नेयचतुर्धाकरणवदेव केवलेन्द्रदैवत्यविषयत्वान्नैव व्यपदेश उभयदेवत्य सम्भवतीति मन्त्रनिवृत्तिः। अनेनैव च विशेषेणास्यापुनरुक्तत्वम्।

यत्पूर्वपक्षवादी न देवतात्वमिह विशेषणं, किं तर्हि, संप्रदानगतं पातृत्वं, तच्च प्रत्येकमप्यस्तीति मन्यते। सिद्धान्तवादी तु मुख्यपातृत्वासम्भवाद्देवतात्वमेवानेन लक्ष्यत इत्यापादयति यद्यपि च मुख्यं पातृत्वं देवतायां भवेत् तथाऽपि द्रव्यस्य तत्पीतत्वमशक्यं वक्तुम्। कथम्?

यो हि तावद्धुतः सोमः स नैवमभिधीयते।
न च तस्येन्द्रपीतत्वादहुतस्येन्द्रपीतता॥

चमसस्थो हीन्द्रपीतत्वेन व्यपदिश्यते। न चासाविन्द्रपीतः, हुतविषयत्वादिन्द्रपीतव्यपदेशस्य। तस्मादवश्यविद्यमानधर्माभिधानादिन्द्राय संकल्पित इन्द्रपीतः प्रत्येतव्यः। ततश्चाऽऽपन्नं देवतात्वमेवोपलक्षणमिति। न च हुतसोमगतं पीतत्वं तत्रोपचरितुं शक्यम्। आत्मधर्मेणैव संकल्पेनाभिधानोपपत्तेः। एकदेशेऽपि हि हूयमाने सर्वमिदं द्रव्यं देवतोद्देशेन त्यज्यमानं यागं साधयति। अतोऽसौ निर्वपतेरिव यजिरेवात्र पिबतेरर्थः। तेनैन्द्रयागसाधनादिन्द्रपीतप्रत्ययसामर्थ्यान्न मन्त्रनिवृत्तिः॥ ४१॥

(इति ऐन्द्राग्नभक्षस्यामन्त्रकत्वाधिकरणम्॥ १८॥)

न्या० सु०—लिङ्गाभावाशब्दोक्तस्य पातृताविशेषणत्वस्य निरासार्था देवतोक्तिरिति सूचयन् देवतान्तरोक्तिं व्याचष्टे—**सत्यमिति**। उभयपीतस्याप्यर्द्धेऽन्यतरपीतव्यपदेशवदुभाभ्यां सङ्कल्पितस्यार्द्धेऽन्यतरसङ्कल्पाव्यपदेशोपपत्तेरैन्द्राग्नेऽपीन्द्रस्य देवतात्वसद्भावाद्देवतान्तरोपयोगमाशङ्क्य—**न चेत्युक्तम्**। देवतात्वस्येह पातृत्वेन भक्षणीयत्वादैन्द्राग्ने चाग्निसहितस्येन्द्रस्य पातृत्वादग्निसहितस्यैव देवतात्वं भक्षणाय व्यपदेक्ष्यत इत्याशङ्क्य—समासात्केवलस्येन्द्रस्य पातृत्वप्रतीतेः तस्य चार्द्धविषयत्वतया देवत्वस्याप्यधर्म्मविषयतयैव भक्षणीयत्वापत्तेरुद्देशापाद्यस्य च देवतात्वस्याधर्मविषयोद्देशभावेनार्द्धविषयत्वायोगादिन्द्रस्यैन्द्राग्नेर्देवतात्वायोगसूचनार्थं—**तद्धितेत्युक्तम्**।

अनेन च नावकल्पतइत्यन्तं भाष्यं देवतान्तरोक्तिव्याख्यार्थमित्यपि सूचितम्। तदुक्तमिति भाष्येणैकस्मिन्निति पूर्वपक्षप्रयोजनाव्यापकत्वशङ्कापरिहारार्थस्य सूत्रावयवस्य केवलएवेन्द्रदेवताया मन्त्रः स्यात्, नान्यसंहित इन्द्र इत्येवं व्याख्या व्यवस्था शब्दवत्सूत्रोदाहरणाद्विभागरूपचतुर्द्धाधिकरणविषयसिद्धान्तसूत्रोदाहरणाच्च विभागो। यथैकस्मिन्नेवाग्नौ देवतायां, नान्यसहित इत्येवं विभागवदिति सूत्रावयवव्याख्या सूचितेति सूचयन् सूत्रावयवद्वयं व्याचष्टे—**तस्मादिति**। आहेतिभाष्येण चतुर्द्धाकरणाधिकरणेन पौनरुक्त्य-

माशङ्क्य परिहारार्थमुच्यत इतिभाष्यं व्याचष्टे—**अनेनैव चेति**। सूत्रव्याख्यया तात्पर्यतः कृत्स्नं व्याख्याय नास्य सोमस्याहुतमवयवान्तरं पीयते। न च हुतेनावयवान्तरेण देवतया पीतेनाहुतमवयवान्तरं देवतापीतं भवतीत्येवमर्थान्तरस्येत्याद्यभाष्यं हुतेऽप्यवयवे देवतायाः पातृत्वाभावादयुक्तमाशङ्क्याभ्युपेत्यवादमात्रत्वेन व्याचष्टे—**यद्यपि चेति**। अशक्यत्वं प्रश्नपूर्वमुपपादयति—**कथमिति**। श्लोकं व्याचष्टे—**चमसस्थो हीति**। देवतायाः पातृत्वस्य नवमे निराकरिष्यमाणत्वादग्निमुखा वै देवा इत्याद्यर्थवादालोचनयाऽग्नौ मुखेति क्षेपस्य पेयत्वावगमान्मुखनिक्षिप्ते पेये मुखितः पातृत्वप्रसिद्धेःपीतव्यपदेशस्य हुतविषयताऽवसीयतइत्याशयः।

उक्तेन प्रकारेण केवलेन्द्रदेवत्यहुतशेषस्यापीन्द्रपीतत्वायोगादिन्द्रपीतोक्तिरिन्द्रदेवतत्वलक्षणार्थेत्यभिधानार्थम्। तेनेति भाष्यमिन्द्रदेवत्यत्वस्यापि मुख्यस्य हुतशेषेऽनुपपत्तेरिन्द्रदेवस्य च समुदायस्यैकदेशहोमेन नष्टत्वादभक्ष्या प्रकाश्यत्वायोगादुपचाराद्धुतशेषस्येन्द्रदेवत्यत्वव्यपदेशाभ्युपगमेत्विन्द्रपीतत्वस्याप्युपचारो व्यपदेशोपपत्तेः श्रौतार्थवत्यर्थत्यागायोगादयुक्तमाशङ्क्योपपादयन् व्याचष्टे—**तस्मादिति**। हुतेऽपि पीतव्यपदेशस्यौपचारिकत्वेनाहुतेत्यन्ताविद्यमानेऽपीतव्यपदेशस्यादृष्टार्थत्वापत्तेः, इन्द्रदेवत्यस्य तु समुदायस्य मुख्यस्यैव विद्यमानस्याहुतेस्तुत्यर्थत्वोपपत्तेरदृष्टकल्पनातश्च लक्षणाया ज्यायसीत्वाद्देवतात्वमेव भक्ष्यमाणस्य शेषस्योपलक्षणं न पीततेत्याशयः।

यद्यपि च हुते सोमावयवे परमार्थतः पीतत्वं स्यात्, तथापि समुदायसमुदायिनोरभेदात्समुदायधर्मस्येन्द्राय सङ्कल्पितत्वस्य समुदायिभूतभक्ष्यमाणशेषधर्मताया मुख्यत्वसम्भवात् पीतेन चापीतलक्षणायामिन्द्रशब्दस्योप१दस्य पिबतेर्धातोर्निष्ठाप्रत्ययस्य चानभिधेय वृत्त्यापत्तेः सङ्कल्पलक्षणायां तु धातुमात्रस्य भक्षणावृत्त्यापत्तेर्नाहुते पीततोपचरितुं शक्येत्याह—**न चेति**। सङ्कल्पस्य यजमानधर्मत्वात्सङ्कल्पितत्वभक्षणार्था सङ्कल्पोक्तिः। सङ्कल्पितत्वस्य भक्षमाणशेषधर्मतामुपपादयितुमाह—**एकदेशेऽपि हीति**। पिबतेः सङ्कल्पभक्षणार्थतामुपसंहरति—**अत इति**। निर्वपतेर्याग लक्षणार्थत्वाभावे यागप्रतीतिप्रयोजनत्वमात्रेण दृष्टान्तत्वम्। पूर्वपक्षप्रयोजनाव्यापकत्वशङ्कापरिहारमुपसंहरति—**तेनेति**।

चिन्तायाः प्रयोजनं मन्त्रार्थेऽनुसन्धेये पूर्वपक्षे देवतोद्देशेन हुतत्वमनुसन्धेयं, सिद्धान्ते देवताद्देशेन त्यक्तत्वमिति ॥ ४१ ॥

भा० प्र०—सिद्धान्ती का कथन है कि "एकस्मिन् वा" एक देवता से युक्त स्थल में भी समन्त्रक भक्षण ही कर्तव्य है किन्तु इस स्थल में समन्त्रक भक्षण नहीं हो सकता है, कारण "देवतान्तरात्" इन्द्राग्नि दो स्वतन्त्र देवता नहीं हैं, वरन् वे मिलित रूप में एक ही स्वतन्त्र देवता है। इसलिए इन्द्रपीत और इन्द्राग्निपीत समान होने से इन्द्रपीत अर्थ में जो अवगत होता है, वह इन्द्राग्नि इन्द्रकर्तृकपीत इस प्रकार अर्थ अवगत नहीं करा सकता है, अतः डित्थमाता का दृष्टान्त भी सङ्गत नहीं है। इसका उदाहरण "विभागवत्" होता है। तृतीय अध्याय के प्रथम पाद के अन्तिम अधिकरण में "आग्नेयं चतुर्धा

करोति'' इस वाक्य का 'आग्नेय' यह पद जैसे शुद्ध अग्नि देवता के ही सम्बन्ध का बोधक होने से उसके द्वारा जैसे ऐन्द्राग्न एवं अग्नीषोमीय पुरोडाश का चतुर्धाकरण प्राप्त नहीं होता है, किन्तु शुद्ध अग्निदेवता के पुरोडाश का ही चतुर्धाकरण कर्तव्य रूप में बोधित होता है इस स्थल में भी उसी प्रकार ऐन्द्राग्नादि भक्षण स्थल में इन्द्रपीत शब्द घटित मन्त्र प्रयोज्य नहीं हो सकता है। इस स्थल में पीत शब्द से लक्षणा बल से दान ही भावगत होता है। कारण, नवम अध्याय में वक्ष्यमाण नियम के अनुसार विग्रहादि-विहीन देवता का पान सम्भव न होने से इन्द्रपीत अर्थ इन्द्र को प्रदत्त सोम हैं, इस स्थल में यजमान इन्द्र के उद्देश्य से सोम नहीं होता हैं, वरन् इन्द्राग्नि को उद्देश कर ही दिया जाता हैं, इसलिए दान मिश्रविषयक इन्द्राग्नि विषयक है किन्तु मन्त्र मिश्रविषयक नहीं होता है, अतः, मन्त्र का प्रयोग नहीं हो सकता हैं, अतएव आमन्त्रक ही भक्षण कर्तव्य है।

"एकस्मिन्" = एकदेवप्रयुक्त स्थल में अर्थात् समन्त्रक भक्षण कर्तव्य है, "वा" = पूर्वपक्ष के निरास के लिए है, "देवतान्तरात्" = क्योंकि इस स्थल में इन्द्राग्निदेवतान्तर ही होते हैं, "विभागवत्" = विभाग के समान अर्थात् "आग्नेयं चतुर्धा करोति" इस स्थल के आग्नेय के चतुर्धाकरण रूप विभाग के समान। यह १८वाँ ऐन्द्राग्न भक्षण का आमन्त्रकताधिकरण ॥ ४१ ॥

## [ १८ ] छन्दश्च देवतावत् ॥ ४२ ॥ पू० ।

**शा० भा०—अस्मिन्मन्त्रे 'यागत्रच्छन्दस' इत्युच्यते। तत्र संदेहः—किमेकच्छन्दसि सोमो मन्त्रः, उत नानाच्छन्दस्यपीति। उच्यते। छन्दश्च देवतावत्। यथाऽन्यसहितेन्द्रे न मन्त्र एवमनेकच्छन्दस्के सोमे न स्यान्मन्त्र इति। अत्रापि हि गायत्रच्छन्दस इति सविशेषणस्य समासो नावकल्पते ॥ ४२ ॥ पूर्वपक्षः ॥**

त० वा०—**इदमपवादाधिकरणम्।** तत्र पूर्वदेव तावत्सापेक्षगायत्रच्छन्दः-साधनके समासाभावाद्गायत्रछन्दस्त्वानुपपत्तेर्यत्र केवला गायत्र्युपयुक्ता, स एव मन्त्रेणाभिधातव्यो, नान्य इति प्राप्ते—
अभिधीयते ॥ ४२ ॥

**गायत्रच्छन्दः इत्यादिमन्त्राणामनेकच्छन्दस्के विनियोगाधिकरणम् ॥ १९ ॥**

न्या० सु०—पूर्वाधिकरणोक्तसापेक्षसमासायोगापवादार्थत्वेनाधिकरणस्यानन्तरसङ्गति-माह—**इदमिति।**

ऐन्द्रेष्वेव ज्योतिष्टौमिकसोमभक्षणेषु मन्द्रादिमन्त्रः प्रयोक्तव्य इन्द्रपीताधिकरणपूर्व-पक्षप्रयोजनं पूर्वोक्तम्। सर्वेषु ज्योतिष्टोमिकसोमभक्षणेष्विति सिद्धान्तप्रयोजनं च सिद्धान्त-सूत्रे वक्ष्यमाणं गायत्रछन्दस्त्वसामर्थ्यरूपेण लिङ्गेन नैकछन्दस्के ज्योतिष्टोमादुत्कर्षशङ्काया-

क्षिप्यानुत्कर्षसिद्धान्तेन समाधानात् पादलक्षणङ्गतिसूचनायामपिशब्दः । यथान्यसहितेन्द्रदेवत्यकर्मणि भक्षमन्त्रो न लिङ्गेन विनियुज्यते, तथान्यसहितया गायत्रच्छन्दस्कयापीत्येवं प्रयोजनाक्षेपसूत्रं व्याचष्टे—तत्रेति । केवलं गायत्रच्छन्दस्कः सोमयागो नाम्नातोऽपि, मन्त्रगतगायत्रछन्दस्त्वविशेषणसामर्थ्यं कल्पयिष्यते । बृहस्पतिसवे वा गायत्रमेतदहर्भवतीतिश्रुतेः केवलगायत्र्युपयुक्तेत्याशयः । सर्वेषु वा भावादेकच्छन्दस इति सूत्रमाक्षिप्तप्रयोजनसमाधानार्थत्वेनावतारयति—इतीति । मन्त्रास्याविधायकत्वेनापूर्वयागकल्पकत्वायोगाद्, बृहस्पतिसवेऽपि गायत्रत्वश्रुतेरविहितच्छन्दोविशेषाज्यादिविषयत्वेनापि सम्भवे प्रातरनुवाकादावनिर्देशप्राप्तसप्तच्छन्दस्कसोमयागाभावात्सर्वेषु सोमयागेषु मन्द्रादिमन्त्रस्यादित्ये च एन्द्राग्ने लिङ्गाभावात्स्यादित्येतत्सूत्रस्थस्य स्याच्छब्दस्यैकस्मिन्वा स्यादित्येवं तदनन्तरसूत्रेऽनुषक्तस्य छन्दश्चाक्षेपसूत्रेऽस्य बुद्धिस्वीकृतस्यानुषङ्गेण जोज्यम् ।

इन्द्रपीतसमासवद्गायत्रच्छन्दसमासेऽपि सम्बन्धिशब्दत्वनिमित्तनित्यसापेक्षत्वाभावात्कथमनेकच्छन्दसो गायत्रच्छन्दस्त्वविशेषणमित्याशङ्क्याह—यत्र नामेति । सम्बन्धिशब्दस्यापि गुर्वादेर्नित्यसापेक्षस्य शिष्यादिनिरपेक्षगुर्वाद्यभावहेतुकत्वात्सम्बन्धिशब्दत्वाभावेऽपि गायत्रच्छन्दस्त्वविशेषणस्य छन्दोन्तरनिरपेक्षस्याभावान्नित्यसापेक्षता नास्तीत्याशयः । यदि तु तत्र केवलाग्निदेवत्योऽभ्यासवत्सर्वव्यापारपरिहाराय द्विदेवत्योऽप्यग्रहीष्यतइति भाष्यस्यार्थः । पाठनोपपादनपूर्वं श्लोकं व्याचष्टे—उक्तं हीति । वेदोक्तेर्वेदविहितकर्मलक्षणार्थत्वाद्वेदत्रयविहितानामपि सोमयागानां मध्ये कस्य चित्केवलगायत्रछन्दस्कत्वं नास्तीत्युक्ते बृहस्पतिसवे गायत्रमेतदहर्भवतीतिश्रुतेः केवलगायत्रछन्दस्कत्वं भविष्यतीत्याशङ्कते—अत्रापि । क्व चित्प्रातरनुवाकादावङ्गाख्यसाधनांशच्छन्दोन्तराणामवश्यं भावित्वादित्युक्तम् । छन्दोन्तरव्यावृत्तौ गायत्रस्य विशेषणत्वायोगेन सामर्थ्याभावात्समासो न स्यादित्याशङ्क्य गायत्रच्छन्दः ॥ ४२ ॥

भा० प्र०—उक्त लक्षण मन्त्र में ही "गायत्रच्छन्दस इन्द्रपीतस्य" यह अंश है, इसमें यह संशय है कि एकमात्र छन्द से युक्त अर्थात् केवल मात्रा गायत्र छन्द से युक्त जो सोम है उसीके भक्षण में ही यह प्रयोज्य है अथवा अनेक छन्दोयुक्त सोम में भी इसका प्रयोग कर्तव्य है ? इसमें पूर्वपक्षी का कहना है कि "छन्दश्च देवतावत्" देवता के समान छन्द भी अन्यत्र पाठ्य नहीं है, "इन्द्रपीतस्य" पद का प्रयोग होने से इन्द्राग्नि आदि अन्य देवता के स्थल में जैसे इस शब्द से घटित मन्त्र का प्रयोग नहीं होता है उसी प्रकार इस स्थल में "गायत्रच्छन्दसः" यह अंश होने से अन्य छन्द से युक्त सोम में इन्द्र देवता के रहने पर भी मन्त्र प्रयोज्य नहीं होता है, क्योंकि दोनों स्थलों में युक्ति समान है ।

"छन्दः च" = छन्द भी मिश्रित स्थल में पाठ्य नहीं होगा, "देवतावत्" = देवता के समान यह पूर्वपक्ष है ॥ ४२ ॥

## सर्वेषु वाऽभावादेकच्छन्दसः ॥ ४३ ॥ सि० ।

शा० भा०—सर्वेषु वा मन्त्रः स्यात्। कुतः? अभावादेकच्छन्दसः। नैव कश्चिदेकच्छन्दाः सोमोऽस्ति। तेन यथाभूतोऽयं यथाभूतस्य[1] च्छन्दोविशेषणम्। तस्मादनेकच्छन्दस्के सोमे मन्त्रः स्यादिति ॥ ४३ ॥ सिद्धान्तः ॥ गायत्रच्छन्दस-इत्यादिमन्त्राणामनेकच्छन्दस्के विनियोगाधिकरणम् ॥ १९ ॥

त० वा— यत्र नामोपपद्येत निरपेक्षं विशेषणम्।
सापेक्षस्याग्रहस्तत्र न तु यत्रापि नास्ति तत् ॥

उक्तं ह्येतच्चतुर्थाकरणेऽपि। यदि केवलाग्निदेवत्यः प्रकरणे न स्यात्, ततः सापेक्षदेवत्योऽपि गृह्येतेति। तदिह केवलेन्द्रदेवत्यसद्भावादिन्द्रपीतत्वं सापेक्षेन्द्र-देवत्यान्निवृत्तम्, न तु केवलगायत्रच्छन्दस्त्वं कस्यचिदस्ति। त्रयाणामपि वेदानां क्वचित्साधनांशे छन्दोन्तराणामवश्यंभावित्वात्। अतो रथंतरसामत्वमिव नानाछन्दस्कास्वेव गायत्रच्छन्दस्त्वम्। अत एव नित्यसापेक्षेषु नैतद्भविष्यति सापेक्षमसमर्थमिति। तस्मान्नानाछन्दस्केऽपि मन्त्र इति सिद्धम् ॥ ४३ ॥

(इति गायत्रच्छन्दस इत्यादेर्नानाछन्दस्के विविनियोगाधिकरणम् ॥ १८ ॥

न्या० सु०—एवास्येति छन्दःशब्दलक्षितः छन्दः कार्यसत्त्वव्यावृत्त्या विशेषणत्वोप-पत्तिसूचनार्थं तेनेति भाष्यं व्याचष्टे—**अत इति**।

रथन्तरं सामैवास्येत्येवं विशेषणत्वविवक्षया दृष्टान्तः। रथन्तरस्य वैकल्पिकत्वाद् बृहत्पक्षे सामकार्यस्तोत्रसाधनत्वाभावापत्तेस्तद्व्यावृत्त्यै विशेषणार्थत्वाद्गायत्रस्य तु वैकल्पि-कत्वेन नित्यं छन्दःकार्यस्तोत्रशस्त्रादिसाधनत्वात्पक्षेऽप्यभावानापत्तेर्न विशेषणानर्थक्याद्वैषम्य-माशङ्क्य, सम्बन्धिशब्दत्वाभावेऽपि विशेषणत्वायोगमात्रनिमित्तान्नित्यसापेक्षत्वात्सामर्थ्या-विघातसूचनार्थं दृष्टान्तत्वोक्तिर्न सत्त्वासाम्येन व्यावृत्त्यर्थत्वाभावे अपिचास्त्यर्थत्वेन विशेषणार्थत्त्वेति सूचयितुमाह—**अत एव चेति**। छन्दोन्तराणामवश्यम्भावित्वात्केवलगा-यत्रच्छन्दस्त्वाभावेनोक्तस्य निरपेक्षविशेषणत्वायोगेऽस्यातो रथन्तरसामत्वमिवेत्यतः परा-मृष्टस्यानेन येन शब्देन परामर्शः। तस्मादिति पक्षद्वयप्रयोजनसमाधानार्थं भाष्यं व्याचष्टे—**तस्मादिति**। पक्षोक्तप्रयोजनसम्भवे यस्याश्चिन्तायाः प्रकृतेन्द्रपीताधिकरणशेषत्वसिद्ध्यै तत्प्रयोजनसमाधानप्रयोजनताऽस्माभिरुक्ता ॥ ४३ ॥

इत्यष्टादशं गायत्रच्छन्दसइतिनानाच्छन्दस्कविनियोगाधिकरणम् ॥

भा० प्र०—सिद्धान्ती का कहना है कि मन्त्र में "गायत्रच्छन्दसः" इस प्रकार उल्लेख रहने पर भी अन्य छन्दोयुक्त स्थल में भी वह पाठ्य है, कारण, ऐसा न होने पर मन्त्र निर्विषय होगा, क्योंकि, एक छन्दोविशिष्ट सोम नहीं है, किन्तु सभी सोम ही अनेक छन्दों से युक्त है।

---

१. ब० तथाभूतस्य।

"सर्वेषु" = सभी स्थलों में अनेक छन्दोयुक्त सोम में भी मन्त्र पठनीय है, "वा" = पूर्वपक्ष निरासार्थक है, "एकच्छन्दसः अभावात् = क्योंकि एक छन्द से युक्त सोम नहीं है। १९वां गायत्रच्छन्दसः इत्यादि मन्त्र का नानाच्छन्दोयुक्त सोम में विनियोग अधिकरण ॥ ४३ ॥

**सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि ॥ ४४ ॥ अ० ॥ ११ ॥ सि० ।**

**शा० भा०**—यदुक्तमनैन्द्राणाममन्त्रकं भक्षणमिति । तन्न । सर्वेषां समन्त्रकं भक्षणमिति । यथासमाम्नातश्च मन्त्रः स्यात् । न इन्द्रपीत इति सोम उच्यते । किं तर्हि ? सवनम्, प्रातःसवनशब्देन सामानाधिकरण्यात् । ननु सोमेऽपि षष्ठी ? सत्यमस्ति षष्ठी, न तु तेन सामानाधिकरण्यम् । नासाविन्द्रेण सोमः पीतः, नापीन्द्राय दत्तः । अन्य एव पीतो, दत्तो वा, स गत एव । न चातीतः समुदायो व्यपदिश्यते । प्रत्यक्षवचनो ह्ययं शब्दः । सवने तु न दोषः । इन्द्रपीत भवति सवनम्, यत्रेन्द्रेण पीतम् । तस्मादनैन्द्रोऽपीतसवनेऽन्तर्भवतीति शक्यते मन्त्रेण वदितुम् । शक्यते चेत्समानविधाने कथमिव मन्त्रो न भविष्यति । भक्त्या ह्यपीतः पीत इत्युच्यते । एवमेव ऐतिशायन आचार्यो मन्यते स्म । अस्माकमप्येतदेव मतम् । आचार्यग्रहणं तस्मादागतमिति तस्य संकोर्त्यर्थम् ॥ ४० ॥ एकादशाधिकरणोक्तस्योपसंहारः ॥

इति श्रीशबरस्वामिकृते धर्ममीमांसाभाष्ये तृतीयाध्यायस्य द्वितीयः पादः ॥

---

**त० वा**—स्थितादुत्तरम् । अनिन्द्रपीतेष्वप्यविकृत एव मन्त्रः प्रयोक्तव्यः, नामन्त्रकं भक्षणम् । कुतः ?

इन्द्रेण यस्मिन्सवने पीतः सोमो निरूप्यते ।
तस्य योऽन्योऽपि संबन्धी स एवं व्यपदिश्यते ॥

नैवमभिसंबन्धः इन्द्रपीतस्य सोमस्येति । किं तर्हि ? इन्द्रपीतस्य प्रातःसवनस्य यः संबन्धीति । न च प्रातःसवनशब्दः सोमसमानाधिकरणः, क्रतुभागवचनत्वात् । तद्गतसोमवाचित्वे च प्रातःसवनीयस्येति प्रसङ्गात् । अतः सवनस्येन्द्रपीतस्येति च समानाधिकरणे सोमसंबन्धव्यतिरेकजनिते षष्ठ्यौ । सोमस्येति तु व्यधिकरणा सोमविषयाऽवयवव्यतिरेकनिमित्ता षष्ठी । तेन पदान्तरसामर्थ्यात्-संयोगप्रकरणाविशेषाच्च प्रयोक्तव्य एव एष मन्त्रः ।

कस्मादेवं गृह्यत इति चेत् । सोमे भाक्तत्वप्रसङ्गात् । पूर्वसंकलिपतो हि समुदाय इन्द्रपीतो मुख्यः तस्य चायमवयव उपचारादेवमभिधीयते । न चैत-

युक्तम्। तस्मात्सर्वसोमानामिन्द्रपीतसवनसंबधित्वान्मन्त्रवद्भक्षणमिति सिद्धम् इति ॥ ४४ ॥

( इति इन्द्रपीताधिकरणम् ॥ ११ ॥ )

इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके तृतीयाध्यायस्य द्वितीयः पादः।

———

न्या० सु०—मन्द्रादिमन्त्रो लिङ्गेनानैन्द्रसोमभक्षणेषु न विनियुज्यतइति प्रकृताधिकरणपूर्वपक्षनिरासेन सिद्धान्तोक्त्यर्थमेतत्सूत्रमिति सूचनार्थं यदुक्तमित्यनुभाष्यं व्याख्यातुमाह—स्थितादिति। छन्दःप्रतिषेधसूत्रेणैवोहनिरासात्सर्वेषां मन्त्रवत्तेत्येवमुक्ते सिद्धान्तसिद्धावप्यनूहितस्यानैन्द्रेष्वसामर्थ्याल्लिङ्गेन विनियोगानुपपत्तेरूहेनानैन्द्राणां मन्त्रवत्तेत्येकदेशिनः पुनः प्रत्यवस्थानशङ्कानुत्थानायैकशब्देनैकरूपत्वावाचिनोहो निरस्त इत्येवमैकमन्त्र्यंशब्दव्याख्यार्थं सर्वेषामित्यादिभाष्यं व्याचष्टे - अनिन्द्रेति। लिङ्गेनानैन्द्रेष्वपि मन्त्रो विनियुज्यते ततश्च तेष्वपि मन्त्राः प्रयोक्तव्या इति सिद्धान्तः तत्प्रयोजनं च तत्रोक्तम्। तत्पुरुषबलीयस्त्वेनेन्द्रपीतशब्दस्यैन्द्रसोमवाचितया अनैन्द्रेष्वशक्तेः कुतो लिङ्गेन विनियोग इत्याशङ्कानिरासार्थत्वेन 'सवनाधिकारो ही'ति सूत्रावयवस्येन्द्रपीतत्वोक्तेर्बहुव्रीहित्वेनैन्द्रपीतसवनवाचित्वादनैन्द्रस्यापि च सोमस्येन्द्रपीतसम्बन्धितया प्रकाशयितुं शक्यत्वात् तत्रापि विनियोगोपपत्तिरित्येवं व्याख्यार्थं नैन्द्रपीत इत्यादिसामानाधिकरण्यादित्यस्तम्भाष्यं व्याचष्टे—कुत इति। श्लोकं व्याचष्टे—नैवमिति। अनेन चाधिकारोक्तेर्विषयवाचित्वादिन्द्रपीतशब्दः सवनविषयो हीत्येवं सूत्रावयवो व्याख्यतः। प्रातर्यस्य सोमस्य सवनमभिषव इति प्रातःसवनशब्दस्यापि बहुव्रीहित्वेन सोमसामानाधिकरण्योपपत्तेः प्रातसवनशब्दस्यावयवव्युत्पत्त्या सोमवाचित्वकल्पना न युक्तेत्याशयः। यद्यपि च 'वाग्जुषाणा सोमस्य तृप्यत्विति षष्ठ्यन्तसोमशब्दसामानाधिकरण्यसिद्धौ प्रातःसवनशब्दस्यावयवव्युत्पत्त्या सोमवाचित्वम्, तथाप्याद्यक्रतुभागगतस्य कृत्स्नस्य सोमस्य प्रातरभिषवात्प्रातःसवनशब्दस्य च सवनसम्बन्धिवाचित्वात्प्रातःसवनसम्बन्धित्ववाचिनं शब्दं विना सामानाधिकरण्यानुपपत्तेः प्रातःसवनशब्दःछप्रत्ययान्तः प्रसज्येतेत्याह—कुत इति। अतो देवसोमयस्त्वमिन्द्रपीतस्य प्रातःसवनस्य सम्बन्धी तस्य ते अवयवं भक्षयामीत्येवं षष्ठी योज्या। न तु यस्य प्रातःसवनस्य सम्बन्धीन्द्रपीतः तस्येत्युपसंहरति—अत इति। षष्ठ्यन्तस्य सोमशब्दस्याख्यातान्वयायोगादल्पभक्षणोपदेशात्स्वावयवसम्बन्धाधिक्यप्रतीत्या सोमस्येति षष्ठ्युक्ते कथमश्रुतावयवान्वयप्रतीतिरित्याशङ्क्य, प्रतीतिसिद्ध्यै सोमाश्रयतावयवोक्ता।

किं चापूर्वसंयोगाविशेषात्प्रकरणाविशेषाच्च सर्वत्र प्रधानपूर्वभूतभक्षयामिदसामर्थ्यात्प्राप्तस्य गुणभूतेन्द्रपीतपदाशक्त्या सङ्कोचोऽङ्गीकार्यः। तस्यापि तु सवनविषयत्वेन शक्त्युपपादनान्न सङ्कोचकता युक्तेत्याह—तेनेति। अनीन्द्रपीतेष्वपीति शेषः। अन्यपदार्थ-

त्वेन बहुव्रीह्यपेक्षया तत्पुरुषस्य स्वपदार्थप्रधानत्वेन व्यधिकरणबहुव्रीह्ययोगाच्च सोमविषयतैवेन्द्रपीतोक्तेत्याशङ्कानिरासार्थत्वेन 'भक्तिपानत्वादि'ति सूत्रावयववतारणोनुक्तिमाशङ्क्य व्याचष्टे—**कस्मादीति**। समुदायस्येन्द्रदेवत्यस्येन्द्रपीतोक्त्या विवक्षितस्यावयवहोमेन नष्टस्य सोमेतिसम्बन्धार्थत्वात्प्रत्यक्षवचनेन शब्देन व्यपदेष्टुमशक्यत्वाद्धुतशेषे च भक्त्या पानोक्त्यापत्तेः तत्पुरुषायोगे च बहुव्रीहेरप्यकार्यत्वात्कण्ठेकालादिवत् व्यधिकरणबहुव्रीहेरपि सम्भवात्पूर्वपक्षवदप्रकृतिस्वरत्वाच्च बहुव्रीहित्वावगतेर्नेन्द्रपीतशब्दस्य सोमविषयता युक्तत्येवं भक्तिपानत्वादित्यवयवव्याख्यार्थं सत्यमित्यादिशब्द इत्यन्तं भाष्यं व्याचष्टे—सोमविषयत्वेनाभक्तपानप्रसङ्गादिन्द्रपीतोक्तेः सवनविषयत्वं गृह्यते इत्येवं सूत्रावयवे योजयित्वाऽन्वय एवंति भाष्येऽन्यशब्दस्य समुदायत्वाचित्वसूचनपूर्वं पानोक्तेर्भक्तत्वोपपादनार्थम् **पूर्वेत्युक्तम्**। पिबतिना सङ्कल्पस्य विवक्षितत्वान्मुख्यत्वाविरोधः सङ्कल्पोक्त्या सूचितः। अवयवसम्बन्धशङ्कानिरासायैवकारः। देवतायाः पातृत्वाभावात् सवनविशेषत्वेऽपि भक्तिता तुल्येत्याशङ्क्योपपदधातुप्रत्ययानां त्रयाणामपि विशिष्टार्थोक्तिद्वाराऽनभिधेयवृत्यापादकसोमविषयत्वापेक्षया धातुमात्रस्य नामधेयार्थवृत्त्युपपादिकायाः सवनविषयताया निर्दोषोक्त्यर्थं समानवर्तिक त्वित्यादिभाष्यस्य सोमपातृत्वनिरासार्थं भक्तिपानत्वसूत्रावयवशेषत्वसिद्धौ सोमविषयत्वनिरासतात्पर्यं सूचयितुमाह—**न चेति**। अधिकरणार्थमुपसंहरति—**तस्मादिति** इत्येकादशमिन्द्रपीताधिकरणम् ॥ ४४ ॥

**इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वरकृतौ तन्त्रवार्तिकटीकायां सर्वानवद्यकरण्यां न्यायसुधाख्यायां तृतीयस्याध्यायस्य द्वितीयः पादः समाप्तः ॥**

———

भा० प्र०—अट्ठाइसवें सूत्र में पूर्वपक्ष का उत्थापन कर जिस अधिकरण का आरम्भ किया गया है, अभी तक उसका उत्तरपक्षीय सिद्धान्त नहीं कहा गया है। २९वें सूत्र में द्वितीय पूर्वपक्षी प्रथम पूर्वपक्षवादी के मत में दोषारोपण कर अपने मत का स्थापन किया है, तीस से ३८ सूत्रों तक द्वितीय पूर्वपक्षी का मत का ग्रहण कर 'कृत्वाचिन्ता' के रूप में पांच अधिकरण में ऊह पक्ष का विचार किया गया है। ३९ से ४३ सूत्र तक प्रथम पूर्वपक्षी के द्वारा द्वितीय पूर्वपक्षी के मत का खण्डन करा कर एवं उसके मत को स्वीकार पुनः "कृत्वाचिन्ता" के रूप में तीन अधिकरण में अनूह पक्ष का तीन प्रकार से विचार किया है। इस सूत्र में सिद्धान्ती ने प्रथम पूर्वपक्षी का खण्डन कर अपने मत का प्रदर्शन किया है। यह मत २८ सूत्र से आरब्ध अधिकरण का सिद्धान्त है। अतः, इस सूत्र में स्वतन्त्र अधिकरण वर्णित नहीं है, वरन् २८ सूत्र का स्वतन्त्र असमाप्त ग्यारहवाँ (११) अधिकरण का ही सूत्र में उपसंहार किया गया है।

पूर्वपक्षी ने जो कहा है अनैन्द्र सोम का हुतशेष के भक्षण में ऊह नहीं किया जा सकता है, यह भक्षण अमन्त्रक ही कर्तव्य है—यह सङ्गत नहीं है। कारण, अनैन्द्र

सोम के हवन के शेष के भक्षण में मन्त्र के पाठ्य न होने का यह कारण है कि वह समवेतार्थक नहीं है। क्योंकि, 'इन्द्रपीतस्य' यह शब्द इन्दकर्तृक पीत अर्थात् जो पान किया जाता है, इस प्रकार की वृत्ति के अनुसार सोम का ही वाचक है और अनैन्द्र स्थल में जो सोम निवेदित होता है, वह इन्द्रकर्तृपीत न होने से उसमें विना ऊह के मन्त्र का प्रयोग नहीं किया जाता है, और भी इस स्थल में ऊह भी नहीं हो सकता है—यही पूर्वपक्षी ने कहा है, वस्तुतः 'इन्द्रपीत' इस शब्द में भी यदि तृतीया तत्पुरुष समास होता तब यह करना ही सङ्गत होता, किन्तु यहाँ बहुव्रीहि समास है, अतः, उसका अर्थ इन्द्रकर्तृपीत—यह होता है। 'जिस सवन में सोम' इस प्रकार कहने से इन्द्रपीत शब्द सोम का वाचक नहीं है अपितु सवन का ही बोधक है, इसलिए सूत्र में कहा गया 'सवनाधिकारो हि' और 'पान' शब्द इस स्थल में मुख्यार्थक न होने से शक्ति योग से अर्थात् अभिधा शक्ति से आगत अर्थ ग्राह्य नहीं है, अपितु लक्षणा के द्वारा भाक्त = लाक्षणिक अर्थ ग्राह्य होने से इस प्रकार विग्रहपूर्वक बहुव्रीहि समास स्वीकार किया जाता है। पान शब्द शक्यार्थ न लेकर लक्ष्यार्थ ग्रहण करने के लिए मीमांसक मत में विग्रहादिपञ्चकविहीन देवता मनुष्य के समान पान नहीं कर सकता है। इसका विस्तृत प्रतिपादन नवम अध्याय के प्रथम पाद में देवता अधिकरण किया जायेगा। किन्तु देवता के उद्देश्यीभूत होने से अर्थात् याग में यजमान के सङ्कल्प के त्याग के पात होने से याग की साङ्गतासिद्धि करता है, इसलिए, तत्पुरुष समास स्वीकार करने पर भी इन्द्र एवं पीत इन दोनों पदों में ही लक्षण मान कर इन्द्र पद का अर्थ इन्द्रोद्देश्यक = इन्द्र जिसका उद्देश्य है एवं पीत पद का प्रकृतिभूत पा धातु का अर्थ त्याग इस प्रकार अर्थ करना होगा। तत्पुरुष समास में एक पद में लक्षणा है, किन्तु बहुव्रीहि में उभय पद में लक्षणा करने से जिस समास में उभय पद में लक्षणा करनी पड़े उसकी अपेक्षा जिस समास में एक पद में लक्षणा करनी पड़े वह प्रशस्त है। इसलिए बहुव्रीहि एवं तत्पुरुष के सन्देह में तत्पुरुष ही ग्राह्य है, क्योंकि, बहुव्रीहि में उभय पद में लक्षणा होना तत्पुरुष की अपेक्षा जघन्य है। इस प्रकार की आपत्ति भी सङ्गत नहीं है, कारण, इस स्थल में तत्पुरुष समास मानने पर भी इन्द्रपीत शब्द में जब दोनों पदों में लक्षणा करनी पड़ती है तब बहुव्रीहि स्वीकार करने में किसी प्रकार की आपत्ति नहीं है।

यदि यह कहा जाय कि तत्पुरुष समास मानने में क्या आपत्ति है? ऐसी स्थिति में यह कहा जा सकता है कि बहुव्रीहि समास मानने में यह कारण है कि 'इन्द्रपीतस्य' यह सोम का विशेषण नहीं है, किन्तु सवन का ही विशेषण है। मन्त्र "गायत्रच्छन्दस इन्द्रपीतस्य" इस अंश में जो "गायत्रच्छन्दसः" यह शब्द है, वही इस स्थल में बहुव्रीहि समास का निश्चायक है, कारण, "गायत्रच्छन्दसः" यह सोम का विशेषण नहीं हो सकता है, अपितु सवन का ही विशेषण है, क्योंकि, मन्त्र के मध्य में "प्रातःसवनस्य

गायत्रच्छन्दसोऽग्निष्टुत इन्द्रपीतस्य ' यही पाठ है। और भी 'इन्दपीतस्य' यह पद आदि उदात्त पढ़ा जाता है, बहुव्रीहि समास मानने पर पाणिनि के नियमानुसार "बहुव्रीहो प्रकृत्या पूर्वपदम् (६।२।१) के अनुसार आदि उदातत्त्व रहता है। किन्तु उक्त स्थल में आदि तत्पुरुष समास माना जाय तो आदि उदात्त नहीं रहेगा वरन् अन्तोदात्त रहेगा। इसको अन्तोदात्त मानने पर अध्ययनगृहीत स्वर का बाध होगा। इसलिए, इस स्थल में बहुव्रीहि समास मानने पर 'इन्द्रर्तृक पीत' हुआ है सोम जिस सवन में वह 'इन्द्र-पीत है, इस प्रकार अर्थ होने से वह केवल इन्द्रकर्तृकपीत सोम का ही वाचक न होकर इन्द्र एवं अनैन्द्र सभी प्रकार के सोम का ही शेष भक्षण में मन्त्र मध्य में विना ऊह में प्रयोग करने पर किसी प्रकार की असङ्गति नहीं रहती है, इसलिए ऊह न करके यह मन्त्र ऐन्द्र एवं अनैन्द्र सभी प्रकार के सोम के ही भक्षण काल में पाठ करना होगा—यह ऐतिशाय नामक आचार्य का मत है, एवं जैमिनि आदि आचार्यों का भी यही मत है। विषय की दृढता के लिए इस स्थल में पूर्वाचार्य के मत का उल्लेख है।

"सर्वेषां"=सभी का अर्थात् ऐन्द्र और अनैन्द्र सभी हुतावशेष भक्षण में ही, 'वा'=पूर्वपक्ष के निरसन के लिए, "ऐकमन्त्र्यम्"=एक ही मन्त्र अविकृत रूप में प्रयुक्त होगा। "हि"=क्योंकि "भक्तिपानत्वात्"=पान शब्द भक्तियोग से अर्थात् लक्षणा की सहायता है अन्यार्थक होने से इन्द्रपीतस्य यह शब्द सोम का विशेषण नहीं हो सकता है, "सवनाधिकारः"=इन्द्रपीत यह शब्द सवनाधिकार अर्थात् सवन का विशेषण है, "ऐतिशायनस्य"=ऐतिशायन नामक आचार्य का भी मत है। यह एकादश (११) शीतपीताधिकरण है '। ४४ ॥

मीमांसादर्शन के तृतीय अध्याय का द्वितीय पाद।

---

## अथ तृतीयाध्याये तृतीयः पादः ॥

### [ १ ] श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥ पू० ।

शा० भा०—ज्योतिष्टोमे श्रूयते—'उच्चैर्ऋचा[1] क्रियते, उच्चैः साम्ना, उपांशु यजुषा' इति। तत्र संदेहः—किमृगानिजातिमधिकृत्यैते शब्दाः प्रवृत्ताः, उत वेदमधिकृत्येति। किं तावत्प्राप्तम्? जाताधिकारः स्यात्। कुतः? श्रुतेः। एषां शब्दानां श्रवणादेव जातिं प्रतिपद्यामहे। तेनोपांशुत्वं जात्याऽधिकृतया सम्बध्यते। वेदानामधिकारकः शब्दो नास्तीति।

अपि च, ऋग्वेदव्यतिक्रान्तानामृचां यजुर्वेद उच्चैः प्रयोगो भविष्यति[2]। इतरथा तस्या एव ऋच उभौ धर्मौ वैकल्पिकौ स्याताम्। तत्र पक्षे बाधः स्यात्। प्रकरणं चैवमनुगृहीतं भवति। इतरथा वेदसंयोगे सर्वस्मिन्नपि क्रतावुपांशुत्वं स्यात्। तस्माजाताधिकारा एते शब्दा इति ॥ १ ॥ पूर्वपक्षः ॥

त० वा०—एवं लिङ्गविनियोगमुपवर्ण्य, संप्रति वाक्यविनियोगः प्रस्तूयते। तत्रोदाहरणम्—'उच्चैर्ऋचा क्रियते' इत्यादि वाक्यम्। 'तद्यदि ऋक्त उल्बलं क्रियते, गार्हपत्यं परेत्य भूः स्वाहेति जुहुयात्' 'यदि यजुष्टो, यदि सामतः', इत्यादि च। तत्र किमृग्यजुःसामशब्दैरुच्चैस्त्वोपांशुत्वधर्मविधौ महाव्याहृत्यग्नित्रयसंबद्धहोमविधौ च पूर्वोत्तरपदसंबन्धनिरपेक्षाभिधानश्रुतिवशेन 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' इत्येवंलक्षणानामृगादिजातानां ग्रहणम्, उत समस्तमन्त्रब्राह्मणात्मकानां वेदानामिति। कुतः संशयः? एकवाक्योपक्रमोपसंहारश्रुत्योर्विप्रतिपत्तेः। उपक्रमे हि वेदाः श्रूयन्ते। उपसंहारे तु ऋगादिजातानि। तत्र यदि वोपक्रमस्थवेदपदमवयवभूतजातलक्षणार्थम्। अथवोपसंहारस्थमृगादिजातं सब्राह्मणकसमुदायलक्षार्थमिति समञ्जसासमञ्जसयोः संदेहः।

स च 'अक्ताः शर्कराः' इतिवदाक्षेपपरिहाराभ्यां समर्थनीयः। एवं तर्हि तेनैव गतत्वान्नैतदारब्धव्यम्। नायमुपालम्भः। संदिग्धेषु हि वाक्यशेषस्य तत्रप्रामाण्यमुक्तम्। इह पुनर्विध्युद्देशवर्तिनामृधादिशब्दानां निःसंदिग्धमन्त्रभेदजातवचनत्वादसंदिग्ध एव विध्युद्देशः। तेन व्यवधारणकल्पनयाऽन्यतरपक्षावधारणं कार्यमित्यारभ्यते। किं प्राप्तम्? तदीयपूर्वपक्षन्यायेनैव विध्युद्देशश्रुतिबलीयस्त्वाज्जाताधिकार इति।

---

१. ऐ० ब्रा० ५.५-६, मैं० सं० ३६५। २. ब. भविष्यति।

किं च—

यथा च द्रव्यसामान्यं क्रिया वा न विरुध्यते ।
विशेषैर्वाक्यशेषस्थैर्नैवं वेदैर्ऋगादयः ॥

न कथंचिदृगादिशब्देन ब्राह्मणं वक्तुं शक्यम् । शक्नोति तु वेदशब्द एकदेशेऽपि वर्तितुम्, समुदायशब्दानामेकदेशेष्वप्युपलब्धेः, यथा ग्राम आयात इति । तथा चाध्येतानस्तत्रैव सुतरां प्रयुञ्जते वेदमधीमहे, वेदो वर्तत इति । न च ब्राह्मणमधीयानास्तथा वदन्ति ।

किं च—

जातस्य हि व्यवस्थानाच्छक्यं धर्मावधारणम् ।
संकीर्णत्वात्तु वेदानां भवेत्तद्धर्मसंकरः ॥

ऋचो हि ता एव काश्चित्त्रिष्वपि वेदेषु पठ्यन्ते । तथा यजूंषि । तत्र यदि वेदत्वं धर्मसंबन्धहेतुतस्तादृशेषु न ज्ञायते को धर्मः क्रियतामित्यन्याय्यो वा विकल्प आश्रीयते । वेदान्तरव्यपदेशस्य तुल्यबलत्वात् । जातिपक्षे तु नैष दोषः न ह्येकस्मिन्वर्णसमूहे जातिद्वयं समवेतम् । ज्योतिष्टोमप्रकरणं चैवमनुग्रहीष्यते । अन्यथा वेदस्य समस्तेष्टिपश्वेकाहाहीनसत्रविषयत्वाद्यावद्वेदानुसारी धर्मः प्रकरणमुल्लङ्घ्य सार्वत्रिकः स्यात् ।

ननु जाताधिकारेऽपि वेदवज्जातस्य प्रकरणान्तरेष्वपि भावात्तुल्यमेतत् । अथ प्रकृतजातातिक्रमकारणाभावादिह व्यवस्था, सा वेदपक्षेऽप्यविशिष्टा । यावान्प्रकरणे वेद इत्यवधारणात् । नैतत्तुल्यम् । कुतः ।

प्रतिसंघातवर्तित्वाज्जातं प्रकरणेऽस्ति नः ।
वेदो महासमूहत्वात्प्रकृतौ न समाप्यते ॥
सर्वर्गादिसमूहेषु जातं व्यासङ्गि चेद्भवेत् ।
प्रकृतौ न समाप्येत ततस्तदपि वेदवत् ॥
मन्त्रब्राह्मणतर्काणां समूहे काठकादिके ।
वेदत्वं वर्तते नित्यमनेकक्रतुगामिनि ॥
समूहास्त्वेकवाक्यानां ये पादपदपर्वणाम् ।
ऋग्यजुःसामजातानि प्रत्येकं तेषु सन्ति नः ।
यथा वनादिसंघाताः प्राक्सामान्यसमन्विताः ।
तथर्गादिसमूहानां सामान्यं जातमुच्यते ॥
जातिरेव तु यज्जातं भाष्यकारेण वर्णितम् ।
व्याख्यातृभिश्च तन्नैवमृगादौ जात्यसंभवात् ॥
द्विवर्णे च पदे जातिर्गोशब्दत्वं न कल्पितम् ।
वाक्यत्ववत्कथं नु स्युर्ऋग्यजुःसामजातयः ॥

यथैव हि वाक्यत्वं नाम जातिर्भिन्नस्थानकरणप्रपन्नाभिव्यङ्ग्यक्रमवद्वर्णात्मकपदसमूहेऽन्त्यवर्णे वा विलक्षणावयवपदार्थसंबन्धप्रत्ययाकाङ्क्षाव्यवधानाद् भ्रमणत्वादिन्यायेन कल्पयितुं तद्भूताधिकरणेनाध्यवसितम्। तथैव ऋग्त्वयजुष्ट्वसामत्वानि क्रमवद्वर्णस्वराश्रयाणि न शक्यानि कल्पयितुम्।

किं त्वेकार्थसमूहस्थमृग्यजुःसामसंज्ञितम्।
जातं समूहसामान्यं न जातिर्नाम काचन॥
यौगिकानां यथा जातेरन्यत्सामान्यमिष्यते।
तथा समूहसामान्यं जातं जातिविलक्षणम्॥

लोकेऽपि चैषैव जातिजातशब्दार्थप्रसिद्धिरित्येवमेत्र व्याख्येयम्॥ १॥

**अथ प्रथमं वेदोपक्रमाधिकरणम्॥ १॥**

न्या० सु०—वाक्यस्य लिङ्गद्वारा श्रुतिकल्पनेन विनियोगहेतुत्वात् लैङ्गिकविनियोगप्रकारचिंतानन्तरं वाक्यीयविनियोगप्रकारचिन्तायाः सङ्गतिमाह—**एवमिति**। लिङ्गाधिकरणोपक्रमवदिहापि विशिष्टावृत्त्याविशिष्टरूपविनियोगोक्तेर्विनियोगप्रकारोक्तिः 'वाक्यमरुणया क्रीणातीति प्रकरणाधिकरणभाष्यात् अरुणाधिकरणे वाक्यीयविनियोगप्रकारचिन्तां निराकर्तुम्, उच्चैरित्येव वाक्यमुदाहरणमित्याह—**तत्रेति**। वेदोपक्रमपृगाद्युपसंहारं चान्यदपि वाक्यमत्रोदहरणमित्याह—**तद्यदीति**।

तत्रेति यदि वा सन्देहभाष्यं व्याचष्टे—**तत्रेति**। ऋगादिशब्दवाच्यानां पादादिसमूहसामान्यरूपाणां जातानां ऋगादिशब्दैर्ग्रहणं, वेदानां वेत्येवं भाष्ये व्याख्याते शब्दार्थचिन्ताया लक्षणासङ्गतिमाशङ्क्यर्गादिमन्त्रप्रकाश्ये कर्मणि उच्चैस्त्वादिकर्मभ्रंषे च प्रायश्चित्तमित्येवं विनियोगचिन्ताफलत्वात् लक्षणसङ्गतिसूचनायोच्चैस्त्वेत्याद्युक्तम्। वाक्यव्यापारालोचनेऽपि पूर्वपक्षोद्भवसूचनायोपक्रमोपसंहारस्थपदान्वयानपेक्षश्रुतिवशत्वे जातग्रहणस्योक्ते श्रुतिविरोधात् सिद्धान्तयोगमाशङ्क्य विनियोगश्रुत्यव्यापारात् अविरोधोऽभिधानोक्त्या च सूचितः। श्रुतिवशाद्वेदग्रहणाप्रतीतेः सन्देहायोगं शङ्कते—**कुत इति**। श्रुतिवशात्पूर्वपक्षसम्भवानातिशयायोक्ता वस्तुतस्तु अत्र पूर्वपक्षस्यापि वाक्येनैव करणात्पदानां वान्योन्यविरोधे सति एकवाक्यत्वायोगादेकानुरोधेनेतरस्य व्याख्येयत्वावगतेरुपक्रमोपसंहारस्थयोः श्रुत्योर्विरोधे बलाबलविशेषोऽस्ति न वेति सन्देहाद्विशेषाभावे विध्युद्देशार्थवादविरोधे, 'अङ्गगुणविरोधे च तादर्थ्यादि' १२-२-२७त्यनेन न्यायेन विध्युद्देशस्यार्थवादं प्रति प्राधान्यात् बलीयस्त्वावगतेर्विध्युद्देशरूपोपसंहारस्थवर्गादिश्रुतिबलीयस्त्वात् तदनुशेषेनार्थवादरूपोपक्रमस्था वेदश्रुतिर्व्याख्येया। उपक्रमबलीयस्त्वे तु उपक्रमस्थवेदश्रुत्यविरोधेनर्गादिश्रुतिर्व्याख्येयेति पक्षद्वयप्रतिभानात्सन्देहमुपपादयति—**एकेति**। एतदेवोपपादयति—**उपक्रमेहीति**। 'यो होता सोऽध्वर्युरित्यादावुपक्रमोपसंहारयोर्द्वयोरपि विध्युद्देशस्थत्वे सति उपक्रमबलीयस्त्वेऽपि अत्रार्थवादरूपस्योपक्रमस्य विध्युद्देशेन बाधनिश्चयात्सन्देहायोग-

माशङ्क्याह—स चेति। विध्युद्देशस्यार्थवादकृतप्ररोचनां विना पर्यवसानासम्भवेसम्भवाऽपि अर्थवादानर्थक्यपरिहारार्थवादैकवाक्यत्वाभ्युपगमेऽपि विध्युद्देशबलीयस्त्वेन स्नेहमात्रस्याञ्जन-साधनत्वनिश्चयावगतेः प्ररोचनं विना पुंसः प्रवर्त्तयितुमशक्यत्वात्, अर्थवादसन्निधौ चार्थवादानपेक्षस्य विध्युद्देशस्य प्रवर्त्तकत्वायोगेनाऽर्थवादात् घृताख्यविशेषग्रहणात्पर्यव-सानाभ्युपगमे तु घृतस्यैव साधनत्वनिश्चयात्प्ररोचनां विना पर्यवसानसम्भवासम्भवसन्देहा-त्स्नेहमात्रेणोक्तव्याः शर्कराः, घृतेनैव वेति सन्देहः सम्भवतीति परिहारेण, यथासन्देहः समर्थितः, तथेहापि समर्थयन्ती इत्यर्थः।

पौनरुक्त्यं तर्हीत्याशङ्कते—एवं तर्हीति। विध्युद्देशेऽञ्जनसाधनद्रव्यानुपादानात्स-न्दिग्धार्थस्य दौर्बल्यं वक्तुं युक्तम्, न तु निश्चितार्थेत्याशङ्काधिक्यादारभ्यतइत्याशयेन परिहरति—नायमिति। विध्युद्देशस्य बलीयस्त्वादुच्चैस्त्वादिविधौ जातस्य विधेयोच्चै-स्त्वादिविषयतेत्येवं पूर्वपक्षसूत्रव्याख्यार्थं किं तावदित्यादिभाष्यं व्याचष्टे—किमिति।

अक्ताधिकरणपूर्वपक्षे विध्युद्देशस्योपक्रमस्थत्वात् बलीयस्त्वोपपत्तेः न तन्न्यायेनास्योप-संहारस्थस्य बलयस्ततायुक्तेत्याशङ्कानिरासार्थत्वेनोपक्रमस्थाया वेदश्रुतेर्लक्षणया जात-विषयता युक्ता, न तु ऋगादिशब्देन वेदानां लक्षणयाऽप्यधिकारो विषयीकारः सम्भव-तीत्येवमावृत्त्या सूत्रव्याख्यार्थं 'वेदानामि'ति भाष्यं व्याख्यातुं लक्षणासम्भावनयाऽन्योन्यान्वयं तावदाह—किं चेति। सूत्रावृत्तिसूचनार्था किञ्चोक्तिः। यथा'ग्नीषोमीयपशुमालभेते'ति विध्युद्देशस्थपश्वाख्यद्रव्यं सामान्यरूपत्वाद्वाक्यशेषभूतमन्त्रस्थेन छागाख्येन विशेषेण भावनावदानेकधात्वर्थानुरञ्जनसहत्वेन सामान्यरूपत्वात् द्रव्यदेवतान्वयानुमितिवाक्यशेषस्थेन यागाख्येन धात्वर्थविशेषेण न विरुध्येत तथर्गादयोऽवान्तरसमूहरूपत्वाद्विशेषस्थानीया महासमूहत्वात्सामान्यस्थानीयैर्वाक्यशेषस्थैर्वेदैर्न विरुध्यते, किं त्वन्वीयन्ते। ततश्च सम्भवति तावल्लक्षणेत्याशयः।

लक्षणासम्भवेऽपि वेदोक्त्यैवर्गादयो लक्ष्यन्ते, न त्वर्गाद्युक्ता वेद इति कुतोऽवधारणे-त्याशङ्कां निरस्यत् भाष्यव्याख्यां सूचयति—न कथं चिदिति। ब्राह्मणेऽपि वेदप्रसिद्धेः सुतरां न वदन्तीत्युक्तम्। पक्षद्वयेऽपि सामर्थ्येनोच्चैस्त्वादीनामृगादिमन्त्ररूपशब्दाख्यजाति-धर्मत्वाद्वेदविषयत्वपक्षेऽनेकवेदविहितानामृगादीनामुच्चैस्त्वोपांशुत्वरूपविरुद्धधर्मद्वयप्राप्तावष्ट-दोषविकल्पापत्तेर्जातिविषयतैव युक्तेत्येवमावृत्त्याऽन्यथासूत्रव्याख्यार्थमपि चेति भाष्यं व्याचष्टे—किं चेति। जातस्य तावदनेकवेदविहितत्वेऽप्येकर्गादिरूपव्यवस्थानादेकोच्चैस्त्वा-दिधर्मावधारणादिशक्यं वेदानां त्वनेकजातसङ्कीर्णत्वाद्वेदविषयत्वपक्षे सामर्थ्यप्राप्तजातधर्मो-च्चैस्त्वादिसङ्करः स्यादित्यर्थः।

श्लोकं व्याचष्टे—ऋचो हीति। वेदविहितत्वस्य धर्मान्वयहेतुतयोत्तराधिकरणे वक्ष्यमाणत्वात् पठतिर्विधिलक्षणार्थः। भास्यस्थस्य ऋग्ग्रहणस्योपलक्षणार्थत्वं। तथेत्यनेनो-क्तम्। उच्चैस्त्वादिविधानस्य ज्योतिष्टोमप्रकरणे श्रुतेर्वेदविषयत्वे च प्रकरणेन वशीकारा-

योगात् प्रकरणाबाधापत्तेर्जातविषयतैव युक्तत्येवमन्यथा सूत्रव्याख्यार्थं प्रकरणं चेति भाष्यं व्याचष्टे—**ज्योतिष्टोमेति**। प्रकृतज्योतिष्टोमत्यागेऽपि प्रकरणस्यानादरादुल्लङ्घनम्।

ऋग्वेदादिविहितस्य ऋगादिप्रकाशत्वस्यापि सर्वक्रतुसाधारण्यात्तद्धर्मत्वपक्षेऽपि प्रकरणबाधाख्यदोषसाम्यापत्तेरनुवाक्याद्यर्थत्वेन प्रकरणापेक्षत्वात् प्राकरणिक्यर्चा यत् प्रकाश्यते, तदुच्चैरुच्चारिततया प्रकाशनीयमिति वाक्यार्थप्रतीतेर्ज्योतिष्टोमिकजातविषयत्वेन व्यवस्थाभ्युपगमाद्दोषपरिहारे तु वेदविहितधर्मत्वपक्षेऽपि प्राकरणीकेन ऋग्वेदेन यत् विधीयते, तदुच्चैरुच्चरितेन शब्देन प्रकाशनीयमिति वाक्यार्थोपपत्तेर्ज्योतिष्टोमिकर्ग्वेद-विषयत्वेन व्यवस्थया परिहारस्यापि साम्यापत्तेर्नैकः पर्यनुयोक्तव्य इत्याशङ्कते—**नन्विति**। ज्योतिष्टोमप्रकरणे यो वेदः, तेन यद्विधीयत इति वाच्ये कृत्स्नवेदस्य ज्योतिष्टोमप्रकरणेना-व्याप्तेः यावानित्युक्तम्। जातस्यर्गादिशब्दवाच्यवर्णसङ्घाते प्रत्येकं प्रवृत्तेः प्रकरणस्थर्गादेः समाप्तत्वाद्व्यवथोपपत्तेर्वेदत्वस्य तु प्रकरणस्थे वेदभागे समाप्त्यभावात् व्यवस्थानुपपत्तेर्न परिहारतुल्यतेत्याह—**नैतदिति**। व्यतिरेकमुखेनातुल्यत्वमुपपादयति—**सर्वेति**। श्लोक-द्वयेनान्वयमुखेन विवृणोति—**मन्त्रेति**। विधिर्विधेयं तर्कश्च वेदः इति, विधिशब्दोक्तस्य विधायकब्राह्मणभागस्य विधेयशब्दोक्तानां च मन्त्राणां, मननविध्यपेक्षितात्मतत्वतर्कणार्थ-जगज्जननात्मककार्याभिधायिनो 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्म' तै० उ० गृ० २ त्याद्युपनिषद्भागस्य च वेदत्वस्मृतेः तत्सामूहे, काठकाद्याख्ये क्रतुविषये वेदत्वम्, पादसमूहत्वेकवाक्यभूतं जातं पदसमूहे यजुर्जातम्, अवच्छेदरूपभवत्यवयवात्मकेष्टस्थपर्वसमूहे सामजातं वर्ततइत्यर्थः।

जातशब्दार्थसमूहसामान्यवाचितां वनादिशब्ददृष्टान्तेनोपपादयितुमाह—**यथेति**। सङ्घातसामान्यान्विता वृक्षादिसङ्घाता यथा वनादिशब्दवाच्याः, तथा ऋगादिशब्दवाच्यानां पादादिसमूहानां सामान्यानि जातशब्देनोच्यन्तइत्यर्थः। जात्यधिकार इति भाष्येण भर्तृ-मित्रादिभिश्च जातशब्दस्य जातिवाचितया व्याख्यानात्समूहवाचितया युक्तेत्याशङ्क्याह—**जतिरेव त्विति**।

ऋगादिजात्ययोगम्—

'विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैरपि।
व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते॥'
अनारब्धे च गोशब्दे गोशब्दत्वं कथं भवेत्।'

इति वार्त्तिकोक्तगोशब्दत्वायोगान्यायेन तद्भूताधिकरणोक्तवाक्यत्वायोगवदुपपादयि-तुमाह—**द्विवर्णेऽपीति**। प्रातिपदिकाशयो द्विशब्दः। श्लोकं व्याचष्टे—**तथैव हीति**। भिन्नैः कर्णादिभिः स्थानैः, उच्चारणप्रकाराख्यैश्च करणैः तद्धेतुभूतैश्च प्रयत्नैर्व्यङ्ग्यत्वेन क्रमवत्त्वादयुगपद्भाविनां वर्णानां, वर्णसमुदायात्मकानां वाऽक्षराणाम्, अक्षरसमुदाया-त्मकानां वा पदानां समूहे, वाक्यान्त्ये वा वर्णे, जातिरूपं वाक्यत्वं भ्रमणत्वादिवत्

कल्पयितुमारभ्यमाणं नवान्त्यवर्णवेलायां तेष्वालोचनसम्भवः। पदतद्वाक्यसम्बन्धबुद्धिव्यवधित्राघनादिति तद्भूताधिकरणोक्तात्तद्विलक्षणानां पदरूपाणां वाक्यावयवानां ग्रहणरूपैः पदार्थानां, पदपदार्थसम्वन्धानां त्र स्मरणानुरूपैः प्रत्ययैः पदार्थानां चान्योन्याकाङ्क्षाभिर्व्यवधानाज्जात्याश्रया।

ननु सन्धानेन जातिग्रहणायोगात् यथा नाध्यवसितं, तथर्गादीनि जातिरूपाणि कल्पयितुं न शक्यानीत्यर्थः।

अयुगपद्भावित्वेन तर्हि समूहस्याप्ययोगात्तत्सामान्यरूपं जातमपि न स्यादित्याशङ्क्याह—**किं त्विति**। अयौगपद्येऽर्थे एकार्थप्रतिपादकत्वलक्षणैकधर्मयोगात्समूहोपपत्तिरित्याशयः। सामान्योक्तेर्जातिवाचित्वात्सामान्यभ्युपगमे जात्यपह्नवो न युक्त इत्याशङ्क्याह—**यौगिकाः मिति**। साधारणवाच्ययं सामान्यशब्दो न जातिवाचीत्याशयः। जातोक्तेश्च समूहवाचितया लोकप्रसिद्धत्वात् न जातिवाचित्वव्याख्या युक्तेत्याह—**लोकेऽपि चेति** ॥ १ ॥

भा० प्र०—पूर्वपाद में लिङ्ग के विनियोग का विचार किया गया है। इस पाद में वाक्य आदि के विनियोग का विचार किया जायेगा। श्रुतियों में ज्योतिष्टोम प्रकरण में कहा गया है कि "उच्चैरृचा क्रियते। उच्चैः सामना उपांशु यजुषा" (तै० संहिता १।८।१) अर्थात् ऋक् के द्वारा उच्च स्वर से उच्चारण कर कार्य करें, साम के द्वारा उच्च स्वर में उच्चारण कर कर्म करें, एवं यजुः के द्वारा उपांशु अनुच्च स्वर से उच्चारण कर क्रिया करें।" इस स्थल में यह सन्देह है कि यहाँ पर ऋक्, साम और यजुः ये तीन शब्द ऋक्त्व, सामत्व आदि जाति का वाचक है या ऋग्वेदादि वेद का अभिधायक है? इस प्रसङ्ग में पूर्वपक्षी का कहना है कि "जाताधिकारः स्यात्" ऋक् आदि शब्द जाति का ही वाचक है। क्योंकि कहा गया है, "श्रुतेः", क्योंकि, ऋक् आदि के श्रवण मात्र से ही जाति की ही प्रवृत्ति होती है, जाति ही शब्द का वाच्य है—यह प्रथम अध्याय के तृतीय पाद के अन्तिम अधिकरण में प्रतिपादित होता है, इसीलिए, उच्चैस्त्व एवं उपांशुत्व ऋक्त्वादि जाति का ही अधिकार में होता है, अर्थात् ऋक्त्व जाति से अवच्छिन्न ऋक् मात्र ही उच्च स्वर में पाठ्य है एवं यजुष्ट्व जाति से अवच्छिन्न यजुः मात्र ही उपांशु = अस्फुट स्वर में पढ़ने योग्य है। पक्षान्तर में इस स्थल में वेद का अधिकार बोधक कोई भी प्रमाण नहीं है, और भी इस स्थल में यदि जात्यवच्छिन्न रूप में उच्चैस्त्व आदि धर्म का प्रयोग नहीं माना जाता है, ऐसी स्थिति में वैकल्पिक बाध का प्रसङ्ग भी होता है, कारण, वेदावच्छिन्न रूप में उच्चैस्त्वादि धर्म के कर्तव्य होने पर ऋग्वेद पठित ऋक् उच्च स्वर में पाठ्य होने पर भी यजुर्वेद पठित ऋक् उपांशु रूप में पठनीय है, ऐसी स्थिति में एक ही ऋक् उच्च स्वर में एवं अस्फुट स्वर में पाठ्य होने पर उच्चैस्त्व आदि धर्मों का विकल्प हो जायेगा। विकल्प होने पर बाध होगा, किन्तु जातिपक्ष मानने पर इस दोष की सम्भावना नहीं है, क्योंकि एक ही

वर्ण समूह में एक से अधिक जातियों का समवाय नहीं हो सकता है, दूसरी बात यह है कि यह मानने पर प्रकरण की मर्यादा रक्षित होती है, कारण, "उच्चैर्ऋचा क्रियते" इत्यादि वाक्य ज्योतिष्टोम प्रकरण में पठित होने से उसको ज्योतिष्टोम विषयक ऋक् का ही धर्म कहना उचित है, किन्तु ऋक् आदि शब्दों को वेद वाचक मानने पर वाक्य-विनियोग के अनुसार ही इष्टि, पशु एवं सोम सभी कर्मों में ऋगादि के उच्चैस्त्व आदि धर्मों का प्रसङ्ग होता है। ऐसी स्थिति में ज्योतिष्टोम प्रकरण में उनका पाठ निरर्थक हो जायेगा, इसीलिए उच्चैस्त्व आदि धर्म वेदावच्छिन्न नहीं हैं, अपितु ऋगादि जात्यवच्छिन्न है।

"जाताधिकारः स्यात्" = जाते अर्थात् उच्चैस्त्व आदि धर्म ऋक्त्व आदि जाति का ही अधिकार अर्थात् विषय होता है, "श्रुतेः", क्योंकि, ऋक् आदि शब्द श्रुत = पठित हैं, अतः वह जातिवाचक ही होगा। पूर्वपक्ष। इस सूत्र में 'जात' शब्द में भाव अर्थ में क्त प्रत्यय होता है इसलिए यह जाति का अपर पर्याय है। ऋक् लक्षण से लक्षित मन्त्र ऋग्वेद से अतिरिक्त यजुर्वेद में भी श्रुत हैं, अतः विकल्प मानना पड़ेगा ॥१॥

## वेदो वा प्रायदर्शनात् ॥ २ ॥ सि०

**शा० भा०—वेदं वाऽधिकृत्येदमुच्यते। कुतः? प्रायदर्शनात्। किमिदं प्रायदर्शनादिति? वेदप्राये वाक्ये वेदोपक्रमे निगम्यमाना इमे शब्दाः श्रूयन्ते। 'प्रजापतिर्वा इदमेक आसीत्, स तपोऽतप्यत, तस्मात्तपस्तेपानात्त्रयो देवा असृज्यन्त, अग्निर्वायुरादित्यः, ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त, अग्नेर्ऋग्वेदो, वायोर्यजुर्वेदः, आदित्यात्सामवेद इत्येवमुपक्रम्य, निगमन इदं श्रूयते—उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा, इति। एतस्मात्कारणादेभिः प्रकृतैरुपांश्वादि कर्तव्यम्, न जात्या ऋगादिभिरित्युच्यते। कुत एतदवगम्यते? वाक्योपसंहारे श्रुतत्वात्। यस्मादित एते वेदा जाताः, तस्मादेतैरुपांश्वादि कर्तव्यमिति। ऋगादिभिरपि वेदवचनैरेवोपसंहारेण भवितव्यम्। इतरथा वाक्यमेव नावकल्पेत। तत्रानर्थका एव भवेयुः। तस्माद्वेदाधिकारा इति ॥ २ ॥ सिद्धान्तः ॥**

त० वा०—**किमिदं प्रायदर्शनादिति**—नेदमन्यैः प्रायदर्शनैस्तुल्यमिति पश्यन्पृच्छति। 'प्रायवचनाच्च' इत्यत्र हि प्रधानप्राये यत्रान्यानि प्रधानानि, तत्र वचनादित्युक्तम्। तथा 'विशये[1] प्रायदर्शनात्' इति संस्कारप्राये यत्रान्ये संस्कारा गोदोहनादयः तत्रास्य दर्शनमिति। न त्विह यत्रान्ये वेदास्तत्रैषामृगादीनां दर्शनमित्यपि शक्यं वक्तुम्। न ह्येतद्व्यतिरिक्ता वेदाः सन्ति, येषां मध्यपाते

---

१. क० विषये।

संकीर्त्येरन् । अतो नेह प्रायदर्शनमस्तीति । तत्रोत्तरमाह—**वेदप्राये वेदोपक्रमे** वेदबुद्धिजनितसंस्कारव्याप्ते मनसि **इमे शब्दाः श्रूयन्ते ।** तद्दर्शयति—**प्रजापतिर्वा इदमेक आसीत् ।**

यत्तु विध्युद्देशबलीयस्त्वादर्थवादपदस्थो वेदशब्दोऽवयवविषयो भविष्यतीति । तत्र ब्रूमः ।

विध्यर्थवादसंबद्धमन्यदेव बलाबलम् ।
मुख्यपश्चात्तनत्वेन ज्ञानानामन्यदेव तत् ॥

ये हि विध्युद्देशात्परस्तादर्थवादाः श्रूयन्ते, तेषामस्ति दौर्बल्यम् । ये पुरस्ताच्छ्रूयन्ते ते मुख्यत्वाद्बलीयांसो भवन्ति । सर्वस्यैव हि शब्दस्य स्वार्थातिलङ्घने विरोधः कारणम् । स च प्रतियोगिनि[1] दृष्टे विरोधो विज्ञायते । तदिह यदा 'त्रयो वेदा असृज्यन्त, अग्नेर्ऋग्वेदः' इत्यादि श्रूयते । न तदा जातवचनानामृगादीनामुच्चारणमस्ति । यद्दर्शनेन वेदशब्दोऽवयवलक्षणार्थो भवेत् । अतस्तेन तावच्छ्रुतिवृत्तेनैव व्याप्ता बुद्धिः । अथेदानीमृगादिशब्दाः स्वार्थपराः सन्तो न संबध्यन्त इति बलाल्लक्षणां प्रतिपद्यन्त इति । तेन सत्यपि विध्युद्देशगतत्वे दौर्बल्यं 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इत्येवमितरबलीयस्त्वात् ।

ननु 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यनेनोत्पन्नमप्यर्थवादान्मुख्यवेदज्ञानं बाधित्वा विध्युद्देशज्ञानमेव गृह्येत । नैतदेवम् ।

पौर्वापर्यबलीयस्त्वं तत्र नाम प्रतीयते ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥

ये हि भिन्नवाक्यगताः परस्परनिरपेक्षा विरोधिनोऽर्थाः श्रूयन्ते, तेषां पूर्वस्योत्तरानुपमर्देनैव लब्धात्मकत्वादुत्तरस्य पूर्वोपमर्देन विनाऽऽत्मलाभानुपपत्तेः पौर्वापर्यबलीयस्त्वन्यायो भवति ।

यत्र त्वेकवाक्यतया परस्परापेक्षाणां श्रवणम्, न तत्रैतद्भवति । तत्र ह्याकाङ्क्षावशेनैकवाक्यता भवति । पूर्वप्रतीते चोत्तरमात्मानुगुणमधिकं वाऽकाङ्क्षति । अतश्च यदनधिकमननुगुणं वा तदनपेक्षितत्वान्नैव तस्मिन्वाक्येऽस्ति । न चाविद्यमानेन पूर्वबाधः शक्यत इति पूर्वबलीयस्त्वं भवति । तदिह विध्यर्थवादयोः समानविषयत्वाद्यावदेवार्थवादे वेदाः संकीर्तिताः, तावदेव किमप्येषां विधास्यत इत्येतदवधृतम् । ततश्च किमेषां विधेयमित्येतावन्मात्रपेक्षते । न तु कस्य किं विधास्यत इति । तेनोत्तरस्मादवयवादपेक्षितमात्रं गृह्यते । विधेयं चापेक्षितं, न विधिविषय इत्युच्चैस्त्वादिमात्रं संबध्यते, न त्वृगादयः । ततश्चा-

---

१. क० प्रयोगिदृष्टे ।

विवक्षितत्वान्नैवैषां विध्युद्देशोऽस्तित्वमिति, नार्थवादं बाधन्ते। अर्थवादस्थ एव तु विध्युद्देशविषयत्वेनापि वेदोऽवध्रार्यते। तस्माद्वेदलक्षणार्थत्वमृगादीनाम्। वेदश्च व्यापकत्वादहेतुलक्षणयुक्तः सन्न शक्नोत्येवावयवं लक्षयितुम्। ऋगादयस्तु नियम्यत्वात्समुदायं लक्षयन्ति। यथा चान्यत्रार्थवादानामनुवादकत्वाल्लक्षणावृत्तिरदोषः तथाऽत्रार्थवादावगतविषये विधावृगादिशब्दानामनुवादकत्वाल्लक्षणायामप्यदोषः। तेनैषा वचनव्यक्तिः, यस्मादेवमेते वेदा जाताः तस्मादेषामुच्चैस्त्वादि कर्तव्यमिति वक्तव्ये, तमेवार्थसिद्धमङ्गीकृत्य ऋगादयं उच्चार्यन्ते। अन्यथा ह्यसंबद्धमेव स्यात्। विध्यर्थवादयोर्नानाविषयत्वात्। तस्माद्वेदाधिकार इति॥ २॥

न्या० सु०—किमिदमिति प्रश्नभाष्यावयवं व्याचष्टे—**किमिति**। गत्यर्थक्रमिसमानार्थत्वेनेणः प्रक्रमाख्योपक्रमवाची प्रायशब्द। इत्युत्तरार्थं वेदेति भाष्यं व्याचष्टे—**तत्रेति**। एतद्भाष्यविवरणार्थं प्रजापतिर्वा इति भाष्यं व्याचष्टे—**तदिति**। कुत इति प्रश्नभाष्यं पूर्वपक्षसूत्रस्थश्रुतिशब्दोक्तहेत्वनुसन्धानार्थत्वेन व्याख्यातुमाह—**यत्त्विति**।

वाक्येत्युत्तरभाष्याशयं व्याचष्टे—**तत्रेति**। विध्येकवाक्यत्वं विनाऽर्थवादत्वानवसायात् विधिविरोधानवभासेऽपि स्तुतिनिन्दाज्ञानानुत्पत्तेर्न विधिजन्येन ज्ञानेनार्थवादजन्यस्य ज्ञानस्य बाध्यत्वलक्षणं विध्यवादयोर्बलाबलं, किं तु विधायकरूपविध्येकवाक्यत्वात् स्तुत्यर्थवादो, निषेधरूपविध्येकवाक्यत्वात् निन्दार्थवाद इति, विध्येकवाक्यत्वानुसारेणार्थवादस्वरूपावधारणलक्षणम्। तच्च विरोधकारणकत्वाभावात् न मुख्यपश्चाद्भावापेक्षम्। अतो 'जर्त्तिलयवाग्वा मा जुहुयादित्यादेर्मुख्यस्याप्यर्थवादस्य' 'पयसाऽग्निहोत्रं जुहोती'त्याद्युपसंहारस्थविध्यनुरोधात् पयोहोमस्तुत्यर्थवादत्वाद्यवधारणं युक्तम्। इह तु श्रौतार्थज्ञानाद् बाध्यबाधकत्वलक्षणं बलाबलमालोच्यते। तच्च विरोधहेतुकत्वात् मुख्यपश्चाद्भावापेक्षम्, न विध्यर्थवादपदस्थत्वालोचनाद्विपरीतं भवतीत्याशयः। यदि तु विध्यर्थवादत्वनिबन्धनमेव बलाबलं वाच्यमित्याग्रहः ततः पश्चात्तनेष्वर्थवादेषु तदस्त्वित्यतिशयार्थमाह—**य इति**। मुख्यत्ववद्विध्युद्देशत्वस्याप्यङ्गगुणविरोधन्यायाद् बलीयस्त्वहेतुता न विरुद्धेत्याशयः।

पौरस्त्येष्वर्थवादेषु अङ्गत्वाद्दौर्बल्यं कस्मान्न भवतीत्याशङ्क्याह—**ये त्विति**। विरोधावस्थायां श्रुतस्य विध्युद्देशस्य स्वार्थपरत्वेऽर्थवादान्वयापत्तेः सार्थवादस्य स्वयमप्ररोचकत्वेन केवलस्यापर्यवसानादलब्धात्मकस्य बाधकत्वानुपपत्तेर्मुख्यत्वेनार्थवादस्यैव बलीयस्त्वाद्विध्युद्देशगतत्वेऽप्यृगादिशब्दानां दौर्बल्यमित्याशयः। 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वतीमाज्येन यजेतेतिश्रुतेरमुख्यस्याग्नावैष्णवस्य विकल्पेनाग्नीषोमीयैन्द्राग्नविकारत्वात्पौर्णमास्यमावास्यातन्त्रप्रासेनैव नैराकाङ्क्षयात्पाश्चात्यस्य सारस्वतस्योपांशुयाजविकारत्वहेतुकपौर्णमासतन्त्रनियमाप्रवृत्तिर्द्वादशाधिकरणे वक्ष्यते। इह त्वेकवाक्यत्वप्रतीतेरुपक्रममात्रेण नैराकाङ्क्षयाभावात् न तेन पौनरुक्त्यं शङ्कनीयम्। यद्युद्-

गतापच्छिद्यादक्षिणेन यजेत, यदि प्रतिहर्त्ता सर्वस्वदक्षिणेनेतिश्रुतेः द्वयोः क्रमेणावच्छेदे पूर्वनिमित्तकः प्रयोगः कार्यः, परनिमित्तको वेति सन्दिह्य, पूर्वनिमित्तस्य मुख्यत्वाद् बाधकत्वं पूर्वपक्षयित्वा पूर्वबाधं विनोत्तरात्मलाभानुपपत्तेः वैकृतेभ्यः पदार्थेभ्यः प्राक् प्राप्तप्राकृतपदार्थवत् पूर्वदौर्बल्यस्य षष्ठे वक्ष्यमाणत्वात् मुख्यस्यार्थवादजन्यस्य वेदज्ञानस्य पाश्चात्यविध्युद्देशजन्येन जातज्ञानेन बाध्यता युक्तेत्याशङ्कते—**ननु चेति**। उत्पन्नस्योत्तरज्ञानस्य विरोधिपूर्वज्ञानबाधं विनोत्पत्त्ययोगेन बाधकत्वादेकवाक्यस्थानां च पदानामन्योन्यज्ञानानपेक्षज्ञानोत्पादकतायामेकवाक्यत्वभङ्गापत्तेः, अन्योन्यसापेक्षज्ञानोत्पादकतायामेकवाक्यत्वभङ्गापत्तेरन्योन्यसापेक्षज्ञानोत्पादकत्वावसायात् पूर्वपदजन्यज्ञानविरोधिनो ज्ञानस्योत्तरेण पदेनानुत्पादितस्य बाधकत्वानुत्पत्तेर्नात्र पूर्वदौर्बल्यन्यायः सम्भवतीत्याशयेन परिहरति—**नैतदिति**। श्लोकं व्याचष्टे—**ये हीति**। पूर्वपदस्योत्तरपदाननुरोधवृत्तित्वेऽप्येकवाक्यत्वविघातात् एकवाक्यस्थेष्वपि पूर्वदौर्बल्यं कस्मान्न भवतीत्याशङ्क्याह—**पूर्वप्रतीतं चेति**। जातस्योच्चैस्त्वादिवद्विधेयत्वाभावेन पूर्वप्रतीताद्विधेयविषयात् अनधिकत्वात् पूर्वप्रतीतवेदरूपविधेयविषयत्वाभावेन च पूर्वप्रतीताननुगुणत्वादनपेक्षितत्वेनाप्रतिपाद्यतया बलीयस्ता नाशङ्कितुमपि शक्येत्याशयः।

सामान्यन्यायमुक्त्वा प्रकृते योजयति—**तदिहेति**। वेदानां विधेयविषयत्वस्य पूर्वं प्रतीतेर्विधेयमात्रापेक्षणात् जातस्यान्वयायोगेनाप्रतिपाद्यत्वान्न बाधकतेत्यर्थः। वेदानामर्थवादाद्विधेयविषयत्वप्रतीतौ विध्युद्देशकीर्त्तनमनर्थकं स्यादित्याशङ्क्य, आहार्थवादस्य एव त्विति वेदानां विधेयत्वं विधेयतैव वेत्यर्थवादात्सन्देहे विषयत्वनिर्णयस्य विध्युद्देशकीर्त्तनाधीनत्वात्, यद्यपि वेदोऽर्थवादाद्विकेयविषयतया भाति तथापि निर्णयार्थं विध्युद्देशे कीर्त्तनीय इत्याशयः। भाष्यव्याख्यार्थं सूत्रार्थमुपसंहरति—**तस्मादिति**।

प्रायदर्शनोक्तेर्भूयोदर्शनवाचित्वेन प्राप्त्युक्त्यर्थत्वमङ्गीकृत्य वेदो व्यापकत्वेन हेतुलक्षणव्याप्यत्वशून्यत्वात् न ऋगादीन् लक्षयितुं शक्तः। स एव ऋगादिभिर्व्याप्यत्वेन हेतुलक्षणयुक्तैः शक्यो लक्षयितुमित्यन्वयात्स्वयं सूत्रव्याख्यां सूचयितुमाह—**वेदश्चेति**।

वेदाव्यभिचारात् ऋगादीनामृगाद्युक्तिमात्रेणर्गादिरूपवेदावयवप्रतीतिसिद्धेः तल्लक्षणार्थत्वे वेदोक्तिरनार्थिका। तस्मादृग्बहुलो वेद इत्येवमादिमध्यमपदलोपिसमासत्वेनैवर्ग्वेदाद्युक्तिर्व्याख्येयेत्यप्यनेन ग्रन्थेन सूचितम्। अर्थवादादेव च वेदानां विधेयोच्चैस्त्वादिविषयत्वप्रतीतिसिद्धेर्व्यवस्थामात्रार्थत्वेनर्ग्वेदाद्युक्तीनामनुवादप्रायत्वादनुवादानां च लक्षणवृत्तिदर्शनाद्विध्युद्देशस्थानामपि ऋगाद्युक्तीनां लक्षणयावृत्तिविरुद्धेति व्याख्यान्तरं सूचयितुमाह—**यथा चेति**। यस्मादिति भाष्यं सकलवाक्यवचनव्यक्त्युक्त्यर्थत्वेन व्याचष्टे—**तेनेति**। तस्मादिति सूत्रार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ॥ २ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि "वेदो वा", "उच्चैर्ऋचा क्रियते" इत्यादि विधि वाक्य में ऋक् आदि पद में वेद ही बाधित होता है। क्योंकि, "प्रायदर्शनात्" प्राये अर्थात् वाक्य के उपक्रम में = प्रारम्भ में वेद शब्द

का ही उल्लेख दृष्ट होता है। "उच्चैर्ऋचा क्रियते" "उच्चैः साम्ना", "उपांशु यजुषा" ये तीन उपसंहार वाक्य हैं और "प्रजापतिर्वा इदमेक आसीत्"। स तपोऽतप्यत। तस्मात् तपस्तेपनात् त्रयो देवा असृज्यन्त। अग्निर्वायुरादित्यः। ते तपोऽतप्यन्त। तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त। अग्नेर्ऋग्वेदो वायोर्यजुर्वेदः आदित्यात् सामवेदः। अर्थात् यह जगत् एकमात्र प्रजापति के रूप में ही था, उस प्रजापति ने तपस्या की, उनके तपस्या के द्वारा उनसे अग्नि, वायु एवं आदित्य ये देवगण सृष्ट हुए, वे तीनों तपस्या करने लगे, उनसे तीन वेद सृष्ट हुए, अग्नि से ऋग्वेद, वायु से यजुर्वेद एवं आदित्य से सामवेद—यह उपक्रम वाक्य है, इस प्रकार उपक्रम अर्थात् आरम्भ में वेद शब्द का प्रयोग रहने से उपसंहार वाक्य में जो ऋक् आदि शब्द हैं, वे भी वेद के ही बोधक होंगे। इसीलिए विधि वाक्य में श्रूयमाण उच्चैस्त्व आदि धर्म ऋक्त्वादि जात्यवच्छिन्न धर्म नहीं है, अपितु ऋग्वेदादि अवच्छिन्न का धर्म है।

इस प्रसङ्ग में पूर्वपक्षी कह सकते हैं कि अर्थवाद की अपेक्षा विधिवाक्य ही बलवत्तर होने से उपक्रम स्थित अर्थवाद के अनुरोध से उपसंहार में स्थित विधिवाक्य को अन्यथा करके अर्थात् ऋक् आदि पदों में लक्षणा करके अर्थ करना उचित न होने से उपसंहारस्थ विधिवाक्यगत ऋक् आदि पदों के अनुरोध से उपक्रमस्थ अर्थवाद वेद पद का ही अन्यथा करना अर्थात् लक्षणा करना उचित है। उपक्रम और उपसंहार में विरोध होने पर उपसंहार से उपक्रम का ही बाध होना उचित है। क्योंकि, पूर्ववाक्यजन्यज्ञान एवं परवाक्यजन्यज्ञान दोनों वाक्य परस्पर विरुद्ध होते हैं। पूर्ववर्ती वाक्यजन्यज्ञान जब उत्पन्न होता है तब परवर्ती वाक्यजन्यज्ञान उत्पन्न नहीं होता है, अतः पूर्ववर्तिवाक्यजन्यज्ञान का विरोधी ज्ञान उत्पन्न न होने से वह निर्विघ्न स्वरूप लाभ करता है। किन्तु परवर्तिवाक्यजन्यज्ञान असञ्जातविरोधी ज्ञान नहीं है, क्योंकि, उसका विरोधी पूर्ववर्तिवाक्यजन्यज्ञान पूर्व से ही प्रतिष्ठित हो चुका है। इसलिए, इसका बाध न किये बिना अर्थात् स्थान से च्युत किये बिना परवर्तिवाक्यजन्य ज्ञान की उत्पत्ति ही नहीं हो सकती है, इसलिए विरोधस्थल में परवर्ती उपसंहारवाक्यजन्यज्ञान पूर्ववर्ती उपसंहारवाक्यजन्यज्ञान का विरोधी होकर ही आविर्भूत होने से उससे उपक्रम वाक्यजन्यज्ञान का ही बाध होना उचित है। इसीलिए बलाबलाधिकारवार्तिक में भट्टपाद ने कहा है—

पूर्वं परमजातत्वादबाधित्वैव जायते।
परस्यानन्यथोत्पादान्न त्वबाधेन सम्भवः॥

अर्थात् पूर्ववर्तीज्ञान की उत्पत्ति के समय परवर्तीज्ञान उत्पन्न नहीं है, अतः पूर्ववर्तीज्ञान का बाध किये बिना परवर्ती ज्ञान की उत्पत्ति अन्य प्रकार से उपपन्न नहीं हो सकती है, इसीलिए पूर्ववर्ती ज्ञान का बाध करके ही परवर्ती ज्ञान उत्पन्न होता है। सूत्रकार ने

षष्ठ अध्याय में यही कहा है—"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" (मी० द० ६।५।५४) पौर्वापर्यस्थल में पूर्व ही दुर्बल होता है, जैसे प्रकृतिभूत कर्म का क्लृप्त उपकार कुशविषयक शास्त्र विकृतिभूत कर्म कल्प्योपकार शरविषयक शास्त्र के द्वारा बाधित होता है। अतः उपक्रम वाक्य की अपेक्षा उपसंहार वाक्य ही बलवत्तर है।

इस आपत्ति के समाधान में कहा जा सकता है कि पौर्वापर्य रहने पर ही पूर्व दुर्बल होता यह बात नहीं है, कारण, ऐसा मानने पर "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यम्" (मीमांसादर्शन ३।०।१४) अर्थात् पौर्वापर्यस्थल में श्रुति, लिङ्ग, वाक्य, प्रकरण, स्थान एवं समाख्या इनमें परपूर्व से दुर्बल होता है—यह सूत्र असङ्गत नहीं होगा, ये दोनों सूत्र परस्पर विरुद्ध होने पर दोनों ही अप्रामाणिक हो जायेंगे, किन्तु जहाँ परवर्ती विज्ञान पूर्ववर्तिज्ञान से सापेक्ष नहीं रहता है, वहाँ पूर्ववर्ती ज्ञान परवर्ती ज्ञान से बाधित होता है—इसीलिए वार्तिककार ने कहा है—

"पौर्वापर्यबलीयस्त्वं तत्र नाम प्रतीयते।
अन्योऽन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥

भामती के अनुसार पाठ—

"पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम्॥"

जहाँ दो ज्ञान परस्पर निरपेक्षभाव से उत्पन्न होते हैं, वहाँ पूर्व की अपेक्षा परवर्ती ज्ञान बलवत्तर होता है। यही "पौर्वापर्ये पूर्वदौर्बल्यम्" इस सूत्र का तात्पर्य है। किन्तु जहाँ परवर्ती ज्ञान पूर्ववर्ती ज्ञानसापेक्ष है—पूर्व के ऊपर ही उसकी उत्पत्ति या प्रामाण्य निर्भर करता है, वहाँ पर परवर्ती पूर्ववर्ती का बाध नहीं कर सकता है, परवर्ती पूर्ववर्ती को अपने आनुगुण करके ही स्वरूपलाभ करता है, यदि ऐसा नहीं होता है तो उसका बाध ही होता है यही 'श्रुतिलिङ्ग' इत्यादि सूत्र का आशय है। इसलिये उपक्रम और उपसंहार के विरोध स्थल में उपसंहार ही प्रबल होता है—यह कहना सङ्गत नहीं है। कारण, उपक्रम एवं उपसंहार की एकवाक्यता ही सर्वत्र अभिप्रेत है। क्योंकि, ऐसा न मानने पर एक विषय का उपक्रम या आरम्भ कर अन्य विषय का उपसंहार करने पर असम्बद्धप्रलापित्व होगा। उपक्रम एवं उपसंहार की एकवाक्यता की रक्षा के लिये उपसंहार से उपक्रम का बाध या अन्यथाभाव नहीं हो सकता है, क्योंकि उपक्रमवाक्यजन्यज्ञान पूर्वभावी होने से असञ्जातविरोधी होने से निर्बाध उत्पत्ति होती है। उपसंहारजन्य ज्ञान परभावी होने से सञ्जात विरोधी और उपक्रमापेक्ष होने से वह उपक्रम का का ही अनुगुण्य कर उसके अविरोध में उत्पन्न होगा, अन्यथा उसकी उत्पत्ति ही नहीं हो सकती है। इसलिये "अग्नेर्ऋग्वेदः" इत्यादि उपक्रमवाक्यस्थ वेद शब्द का अन्यथा नहीं हो सकता है, अपितु उपसंहार वाक्यस्थ ऋक् आदि पद में ही लक्षणा करके 'वेद' यह अर्थ करना होगा।

उपक्रमवाक्य अर्थवाद एवं उपसंहारवाक्य विधि होने से परवर्ती का ही प्राबल्य होगा—यह आशङ्का भी ठीक नहीं है, कारण जहाँ अर्थवाद विधि के उद्देश के बाद श्रुत होता है, उसी स्थल में विधिजन्यज्ञान प्रबल एवं अर्थवादजन्यज्ञान दुर्बल होता है। किन्तु, यहाँ अर्थवाद विध्युद्देश के पूर्व में ही श्रुत होने से विधि की अपेक्षा दुर्बल नहीं है। अर्थवाद की अपेक्षा विधि बलवान् है इसका यह अर्थ है कि जो अंश विधि या विधेय होता है वही प्रबल होता है। किन्तु विधिवाक्य सम्पूर्ण अंश सर्वत्र अर्थवाद की अपेक्षा बलवान् ही होता है—यह बात नहीं है, क्योंकि, अर्थज्ञान के विषय में अर्थवाद एवं विधि दोनों ही शक्ति तुल्यरूप है, प्रभेद यह है कि अर्थवाद की विधिशक्ति अर्थात् विधायकता नहीं है, किन्तु विधिवाक्य की विधायकता है, इसलिए अर्थवाद विधेय अंश का ही सापेक्ष होने से उसी की अपेक्षा दुर्बल है। "उच्चैर्ऋचा क्रियते" इत्यादि विधिवाक्य में उच्चैस्त्वं आदि ही विधेय है, ऋक्त्व आदि विधेय नहीं है—वह अनुवाद-मात्र है। अनुवाद अनुवादी अर्थात् सापेक्ष होने से बलवान् नहीं होता है अर्थात् सापेक्ष होने से प्रमाण नहीं है। इसलिये, इस स्थल में ऋक्त्व आदि प्रमाण नहीं है, क्योंकि, यह उद्देश्य होने से अनुवादी है, किन्तु उच्चैस्त्व आदि प्रबल है, कारण, वह विधेय होने से अन्य वचनों से निरपेक्ष है। अतः उच्चैस्त्व आदि के साथ उपक्रमवाक्यस्थ वेद शब्द का कोई भी विरोध नहीं है। इसलिए उपक्रमवाक्य अर्थवाद होने पर भी दुर्बल—भी नहीं कह सकते है, इसीलिए "उच्चैर्ऋचा क्रियते" इत्यादि वाक्य का ऋक् आदि शब्द उपक्रमवाक्य के अनुरोध में वेद अर्थ का ही बोधक है। इस विषय का विस्तृत विवेचन अप्पयदीक्षितप्रणीत "उपक्रम" नाम के ग्रन्थ में किया गया है।

"वेदः" = वेद अर्थात् उक्त ऋक् आदि पद में वेद ही बोधित होता है, "वा" = पूर्वपक्ष के खण्डन के लिए है, "प्रायदर्शनात्" = क्योंकि प्राये अर्थात् वाक्य के उपक्रम में वेद शब्द दृष्ट होता है।

वेद के प्रादुर्भाव के प्रसङ्ग में अग्नि, वायु और आदित्य का ही निर्देश मिलता है, इन्हीं तीनों ऋक्, यजुः, साम की उत्पत्ति कही गई है। ये तीनों वेद भौतिक हैं या प्राणधारी—इसमें मतभेद है, एक मत के अनुसार ये यथादृष्ट भौतिक देव हैं, इनसे आज भी वैदिक ध्वनियाँ तरङ्गें निकलती हैं, ऋषियों ने योगज-सामर्थ्य से इन्हें उपलब्ध किया है। इसी कारण वेद का श्रुति नाम है। पुराणों से इस मत का समर्थन होता है—"आकाशसम्भवोवेदः" (पुराणगतवेदविषय सामग्री का समीक्षात्मक अध्ययन पृ० ३८१) ईसाई और मुसलमान भी अपने मतों के ग्रन्थों को आकाशीय पुस्तक मानते है।

आचार्य सायण इन्हें जीवधारी मानव मानते हैं, "जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात्" (ऋग्वेदभाष्यभूमिका) ॥ २ ॥

## लिङ्गाच्च ॥ ३ ॥

शा० भा०—लिङ्गमप्यस्मिन्नर्थे भवति । यथा ऋगादयः शब्दाः शक्नुवन्ति वेदमभिवदितुमिति ।

ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अह्नः,
सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्य इति ।

द्वौ वेदौ संकीर्त्य ऋक्शब्दं च, त्रिषु पादेषु, चतुर्थे पाद उपसंहरति बहुवचनेन, वेदैरशून्यस्त्रिभिरेति सूर्य इति, ऋक्शब्दं वेदवचनं दर्शयति । तस्मादपि पश्यामो वेदाधिकारा एते शब्दा इति ॥ ३ ॥

त० वा०—लक्षणाऽपि च या दृष्टपूर्वा तस्यामेव शीघ्रतरबुद्धिर्भवति । ऋगादयश्च वेदे दृष्टपूर्वाः । तद्दर्शयति—**ऋग्भिः प्रातरिति**। त्रिष्वेव तावत्पादेषु वेदशब्दसाहचर्यादृक्शब्दस्य वेदविषयत्वं ज्ञातम्[1] । चतुर्थे तु वेदैरशून्य इत्यवश्यमृक्शब्दः सब्राह्मणके वेदे प्रयुक्त इति गृह्यते ।

यस्त्वध्येतॄणां वेदशब्दप्रयोगो मन्त्रेषु दृष्ट इति । सत्यमस्ति । अत्रापि लक्षणा । तथाऽपि तु 'शास्त्रस्था वा तन्निमित्तत्वात्' इतीतरैव ज्यायसी ॥ ३ ॥ (चतुर्थसूत्रमग्रे व्याख्यातम्) ।

न्या० सु०—ऋग्भिः प्रातारित्याद्यृक्छब्दस्य लक्षणयैव वेदे प्रयोगादलिङ्गत्वमाशङ्क्याह—**लक्षणापि चेति** । त्रिषु पादेषु द्वौ वेदौ ऋक्शब्दं च सङ्कीर्त्य वेदैरिति चतुर्थे पादे बहुवचनेनोपसंहरतीति कृत्वा वेदवचनमृक्शब्दं दर्शयतीत्येवं लिङ्गत्वोपपादनार्थं द्वावित्यादिभाष्यममुख्यपादद्वयस्थवेदसङ्कीर्त्तनस्यादावुपन्यासेन मुख्यं वा पूर्वचोदना लोकवदि१२-२-२५त्यस्य विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्सधर्मत्वमि-१२-२-२४ त्यस्माद्भिन्नाधिकरणतया समसंख्यविरोधविषयत्वमङ्गीकृत्याल्पस्य मुख्यत्वेऽपि भूयोनुसारित्वसूचनात् चतुर्थपादानालोचनेऽपि ऋक्शब्दस्य यजुर्वेदसामवेदशब्दसाहचर्यात् वेदविषयत्वज्ञानं भवति बहुवचनान्यथानुपपत्त्या तु तदेव दृढीक्रियतइत्येव व्याचष्टे—**त्रिष्वेव तावदिति** । तथा चाध्येतारस्तत्रैव सुतरां प्रयुञ्जत इति पूर्वपक्षवार्त्तिकोक्तं ऋगादौ वेदप्रयोगमनुभाषणपूर्वं परिहरति—**यस्त्विति** । धर्मोपदेशसूत्रमसम्बद्धपदव्यत्रायापत्तेः स्वस्थानादुत्कृष्य ॥ ३ ॥

भा० प्र०—ऋक् आदि वेद का ही बोधक है, इसमें अन्य कारण भी है—"लिङ्गात् च" । ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यैस्त्रिभिरेति सूर्यः" अर्थात् प्रातःकाल में सूर्यदेव ऋक् से

---

1. क० जातम् ।

संयुक्त होकर द्युलोक में भ्रमण करते हैं, मध्याह्न में यजुर्वेद से संयुक्त होकर अवस्थित रहते हैं एवं अस्त के समय सामवेद से संयुक्त होकर पूजित होते हैं, इस प्रकार सूर्यदेव तीन वेद से अशून्य होकर अर्थात् वेदत्रय युक्त होकर भ्रमण करते हैं। इस स्थल में जिस प्रकार प्रथम पाद में ऋक् शब्द का प्रयोग होता है एवं बाद के दो चरणों में वेद शब्द का उल्लेख किया गया है और चतुर्थ पाद में बहुवचनान्त वेद शब्द का प्रयोग कर उपसंहार किया गया है, अतः प्रथम चरण का ऋक् शब्द वेद का बोधक है, इसी प्रकार "उच्चैर्ऋचा क्रियते" इत्यादि वचनों के ऋक् आदि शब्द भी वेद के बोधक हैं। "ऋग्भिः प्रातर्देव ईयते" इत्यादि मन्त्र उसका लिङ्ग अर्थात् ज्ञापक है।

"लिङ्गात् च" = लिङ्ग अर्थात् ज्ञापक वेदवचन हैं, इसलिए भी ऋक् आदि शब्द भी वेद का ही बोधक है ॥ ३ ॥

## धर्मोपदेशाच्च न हि द्रव्येण संबन्धः ॥ ४ ॥

**शा० भा०—धर्मोपदेशश्च भवति साम्नः, 'उच्चैः साम्ना', इति। स वेदाधिकारपक्षे युज्यते। जाताधिकारे तु ऋच उच्चैस्त्वेन साम्न उच्चैस्त्वं सिद्धम्। नास्य सामद्रव्येण सह सम्बन्धो वेदितव्यः। तस्मादपि वेदाधिकारा इति ॥ ४ ॥ युक्तिः ॥**

त० वा०—जातधर्मपक्षे 'ऋच्यध्यूढं साम गायति' इत्यृक्सामयोरवियोगादृग्धर्मेणैव सामधर्मसिद्धेर्वृथा पुनरुपदेशः। न हि कश्चत्सामाधारभूतामृचमुच्चैरुच्चारयन्सामान्यन्यथोच्चारयितुं समर्थः। वेदाधिकारे त्वन्यदृग्वेदेन विधीयते। अन्यच्च सामवेदेनेत्यर्थवदुपदेशद्वयम्।

अनृक्प्रजापतिहृदयाद्यर्थमितरत्रापि भविष्यतीति चेत्? न। तस्य ज्योतिष्टोमानङ्गत्वात्। प्रकरणे ह्ययं स्तोत्रसाम्नामुपदेशः। न च तेषामनृक्काणां प्रयोगः। अल्पविषयत्वाच्च मन्दपरिहृतमेवाऽऽनर्थक्यम्। तस्मादपि वेदाधिकार इति सिद्धम् ॥ ४ ॥

इति प्रथमं वेदोपक्रमाधिकरणम् ॥ १ ॥

न्या० सु०—ऋग्धर्मत्वेनोपदिष्टस्योच्चैस्त्वस्य पुनःसामधर्मत्वेनोपदेशाच्च ऋगादिशब्दैर्वेदोऽधिक्रियतइत्येवं सिद्धान्तसूत्रोक्तप्रतिज्ञानुषङ्गेण सूत्रपूरणसूचनार्थं लिङ्गाच्चेति सूत्रानन्तरमेतत्सूत्रकृतमपि पूर्वपक्षनिरासार्थत्वेन स्वस्थानादुत्कृष्येदानीं व्याख्येयमिति सूचयितुं जाताधिकारपक्षं ऋग्धर्मत्वोपदेशेनैवोच्चैस्त्वस्य सामधर्मत्वसिद्धेः सामान्वयो न वक्तव्य इत्येवं पूर्वपक्षनिरासार्थमेव सूत्रशेषं व्याचष्टे—जातेति।

प्रजापतिहृदयादिसंज्ञानां साम्नामृगग्रहीतत्वात् तदर्थंसाम्नामुच्चैस्त्वोपदेशो भविष्यतीत्याशङ्कते—अनृक्केति। जातधर्मपक्षे प्रकरणानुग्रहसम्भवेनाऽप्राकरणिकेषु प्रजापति-

हृदयादिषु उच्चैस्त्वविध्ययोगात्तादर्थ्यं न सम्भवतीति परिहरति—**नेति**। तादर्थ्याभ्युपगमेऽप्यल्पविषयत्वान्मन्दप्रयोजनत्वापत्तिरित्याह—**अल्पेति**। वेदोऽधिक्रियत इत्यनुषङ्गेण सूत्रपूरणं सूचयन्नधिकरणार्थमुपसंहरति—**तस्मादपीति** ॥ ४ ॥

इति प्रथमं वेदोपक्रमाधिकरणम् ।

भा० प्र०—इस स्थल में ऋक् आदि शब्द वेद का ही बोधक है—इसमें अन्य कारण भी हैं—"धर्मोपदेशात् च" श्रुति के इस वाक्य के मध्य में ही "उच्चैः साम्ना" यह कहा गया है यदि ऋक् पद का अर्थ ऋक्त्वजाति माना जाय तो उच्चैः साम्ना यह कहने की आवश्यकता ही नहीं होगी, क्योंकि साम ऋक् से अतिरिक्त नहीं है, ऋक् ही गेय होने पर साम कही जाती है, इसीलिए कहा गया है "न हि द्रव्येण सम्बन्धः" यदि ऋक् कहने से ऋग्वेद समझा जाय तो सामवेदीय क्या धर्म है इसको समझाने के लिए "उच्चैः साम्ना" यह कहना आवश्यक है। कुतूहल वृत्ति के अनुसार सामवेदी ऋचाओं में द्रव्य शब्द का प्रयोग करते हैं, यहाँ ऋचाएँ जिसका आधार है वह साम द्रव्य से लक्षित होता है (द्रव्यशब्दमृक्षु प्रयुञ्जते छन्दोगाः। इह तदाधारकं साम लक्ष्यते)।

"धर्मोपदेशात्" = धर्म का अर्थात् साम का उच्चैस्त्व धर्म का उपदेश होने से, "च" = और, "द्रव्येण सम्बन्धः" = द्रव्य के साथ अर्थात् साम के साथ सम्बन्ध, "नहीं" = वक्तव्य नहीं है, क्योंकि साम ऋक् से अतिरिक्त नहीं है ॥ ४ ॥

## त्रयीविद्याख्या च तद्विदि ॥ ५ ॥

**शा० भा०—त्रयी यस्य विद्या स त्रयीविद्यः। यस्त्रीन् वेदानधीते स एवं प्रख्यायते[1]। त्रयीति चैष शब्द ऋक्सामयजुःषु प्रसिद्धः। यदि ऋक्सामयजुंषीति त्रयो वेदा उच्यन्ते, एवं तद्विदि त्रयीविद्याख्या युज्यते, भवति च। तस्माद्वेदाधिकारा एते ॥ ५ ॥**

त० वा—यदि च लौकिकेनापि प्रयोगेण कार्यं, सोऽप्यस्ति वेद ऋगादीनाम्। कथम्? ऋग्यजुःसामानि तावत्त्रयीत्येव प्रसिद्धानि। ततश्च त्रयी विद्याऽस्येत्येवं त्रयीविद्यशब्दव्युत्पत्तिः। स च वेदत्रयाध्यायिनि प्रयुज्यते, न जातत्रयविदि। छन्दोगेषु जातत्रयज्ञेष्वप्यप्रयोगात्। अतस्त्रयीविद्यशब्दे त्रयीशब्दो वेदेषु प्रयुक्त इति, तत्समानाधिकरणानामृगादिशब्दानामपि तद्विषयत्वं विज्ञायते। तस्मादपि वेदेषु ऋगादिप्रसिद्धिः ॥ ५ ॥

---

१. ब. आख्यायते।

न्या० सु०—इति सूत्रं तावत् बलीयसा शास्त्रस्थेन प्रयोगोपन्यासानर्थक्यादयुक्तमाशङ्क्योपपादमितुमाह—यदि चेति। प्रश्नपूर्वं प्रयोगमुपपादयति—कथमिति। पञ्चविंशब्राह्मणप्रथमपाठकमहन्मे वोच इत्यादि यजुः पाठात् छन्दोगानां जातत्रयत्वं त्रयीविद्यशब्दस्य वेदविषयत्वेऽपि ऋगादिशब्दानां किमायातमित्याशङ्क्याह—अत इति। सूत्रार्थमुपसंहरति—तस्मादिति ॥ ५ ॥

भा० प्र०—त्रयीविद्य कहने से तीन वेदों के वेत्ता व्यक्ति की अवगति होती है, किन्तु ऋक् आदि का अर्थ वेद न मानने पर तीन विद्या जिसकी है, इस प्रकार की व्युत्पत्ति के अनुसार त्रयीविद्य कहने पर तीन वेदों के वेत्ता का बोध नहीं करा सकता है, क्योंकि त्रयी का अर्थ ऋक्, यजुः और साम होता है, इसीलिए ऋक् आदि का अर्थ ऋग्वेद, यजुर्वेद और सामवेद होता है। त्रयी यस्य विद्या, त्रि शब्द से त्रयः अवयवाः यस्मिन् = तीन अवयव हैं जिसमें इस अर्थ में "द्वित्रिभ्यां तमस्यायज्वा (अ० ५।२।४३) इस सूत्र से तयप् के स्थान में अयच् आदेश होता है = त्रय, अयच् को स्थानिवद्भावसे तयप् मानकर टिड्ढाणञ् (अ० ४।१।१५) आदि सूत्र से स्त्रीलिङ्ग में ङीप् प्रत्यय होता है। त्रयी यस्य विद्या स त्रयीविद्यः होता है। त्रयी को पुंवद्भाव प्राप्त होता है, किन्तु संज्ञापूरण्योश्च से निषेध हो जाता है।

"त्रयीविद्याख्या" = त्रयीविद्य इस प्रकार की आख्या अर्थात् संज्ञा, "च" = इसलिए, "तद्विदि" = तद्वित् अर्थात् ऋक्, साम एवं यजुर्वित् व्यक्ति के लिए प्रसिद्ध है ॥ ५ ॥

## व्यतिक्रमे यथाश्रुतीति चेत् ॥ ६ ॥

**शा० भा०—अथ यदुक्तम्, ऋग्वेदमतिक्रान्तानामृचां[1] यजुर्वेदेऽप्युच्चैस्त्वं भविष्यतीति। तत्र मत्पक्षे यथाश्रुतः प्रयोगो भविष्यतीति यदुक्तं, तत्परिहर्तव्यमिति। आभाषान्तं सूत्रम् ॥ ६ ॥ आ० ॥**

त० वा०—अनुभाषणमेतत् ॥ ६ ॥

न्या० सु०—पक्षद्वयेऽपि लिङ्गनोच्चैस्त्वोपांशुत्वयो ऋगादिशब्दरूपश्रुतिसम्बन्धितयैव प्रयोज्यत्वाद्वेदविहितपदार्थधर्मत्वपक्षे यजुर्वेदविहितत्वेन ऋचामृग्वेदाव्यतिक्रमे यजुर्वेदविहितत्वेनोपांशुत्वप्राप्तावपि ऋग्वेदविहितत्वेनोच्चैस्त्वस्याप्यपरिहार्यत्वात् वेदाख्यश्रुतिविहितत्वनिमित्तस्योपांशु उच्चैर्वा प्रयोगस्य पाक्षिकान्यथात्वापत्तेः जातधर्मत्वैवोचितेत्यपि चेति भाष्यव्याख्यातपूर्वपक्षसूत्रार्थानुभाषणार्थत्वेनैतत्सूत्रव्याख्यार्थमयेति भाष्यं व्याचष्टे—अनुभाषणेति ॥ ६ ॥

भा० प्र०—त्रयीवित् कहने से वेदत्रयवित् का बोध होता किन्तु ऋक् आदि अर्थ से वेद नहीं कहा जाय तो जिसकी त्रयी विद्या है—इस प्रकार की व्युत्पत्ति के अनुसार

---

१. ब. व्यतिक्रान्तानां।

त्रयीविद्य कहने से वेदत्रयवित् की अवगति नहीं करा सकता है, क्योंकि, त्रयी अर्थ ऋक्, यजुः और साम होता है, इसीलिए ऋक् आदि का अर्थ ऋग्वेद, यजुर्वेद और सामवेद होता है। अर्थात् मन्त्र जाति विशेष अर्थ में ऋक् शब्द का प्रयोग मानने पर यजुर्वेद में पठित मन्त्र का भी उच्चैस्त्व धर्म होगा।

"व्यतिक्रमे" = व्यतिक्रम होने पर अर्थात् ऋग्वेद में यजुः रहने पर एवं यजुर्वेद में ऋक् रहने पर "यथाश्रुति" = जैसे श्रुति में वैसे हो ऋक् उच्चैः स्वर में इत्यादि प्रकार में पाठ्य "इति चेत्" = यदि इस प्रकार की आशङ्का हो ॥ ६ ॥

## न सर्वस्मिन्निवेशात् ॥ ७ ॥

**शा० भा०—नैष दोषः। सर्वस्मिन्नृग्वेद उच्चैस्त्वं, सर्वस्मिंश्च यजुर्वेद उपांशुत्वम्। तत्र यदि ऋग्वेदव्यतिक्रान्ताया ऋचो यजुर्वेद उपांशुत्वं भवतीति। नैतद्दूष्यति। वेदधर्मः स, न ऋग्धर्म इति। वेदस्य च न धर्मद्वयेन संबन्ध ॥ ७ ॥**

त० वा०—न पाठमात्रेण वेदान्तरव्यपदेशो भवति। यद्येन[1] वेदेन विधीयते, तत्तेनैव प्रमाणेन क्रियत इत्युच्यते। ततश्च यस्यैव मन्त्रस्य यत्र विधानम्, स एव तेन व्यपदेक्ष्यते। यदि तूभयत्र विधास्यते, तत्रोभयत्र 'भूयस्त्वेनोभयश्रुति' इत्यादि नास्ति तत्रागत्या विकल्पो ग्रहीष्यते ॥ ७ ॥

न्या० सु०—ऋग्वेदविहितानां यजुषां यजुर्वेदपाठमात्रेणोपांशुत्वे यजुर्वेदविहितानां चर्चां ऋग्वेदपाठमात्रेणोच्चैस्त्वे सति विधिविरोधाद्दोषः स्यात्। सर्वस्मिंस्त्वृग्जाते, यजुर्जाते च ऋग्वेदविहिते उच्चैस्त्वनिवेशान् यजुर्वेदविहिते चोपांशुत्वनिवेशादेकवेदविहितस्य धर्मद्वयसम्बन्धाप्राप्तेर्न दोष इत्येवं सूत्रव्याख्यार्थं नैषदोष इत्यादिभाष्यं व्याचष्टे—**न पाठमात्रेणेति।** करोतेर्विध्यनभिधायित्वात्कथं वेदविधेयतोक्तिरित्याशङ्क्य, वेदस्य कर्त्तव्यत्वज्ञापनरूपकरणत्वावाचिन्या तृतीयया विधायकत्वाभिधानात्करोतेर्विध्यभिधायकत्वोपपादनार्थं प्रमाणेनेत्युक्तम्। एवमपि वेदद्वयविहितेऽग्निहोत्रादौ विकल्पोऽपरिहार्य इत्याशङ्क्याह—**यदि त्विति।** भूयस्त्वेनोभयश्रुतीत्यनेन न्यायेनाग्निहोत्रस्य याजुर्वेदिकत्वावगतेः सर्वे चास्य बर्हिष्यं सर्वैः परिगृहीतं, य एवं विद्वानग्निहोत्रं जुहातीत्यार्ग्वेदिकस्य विधेरुदयकालत्वलक्षणगुणविध्यर्थं प्रकरणोज्जीवनार्थत्वावसायान्नोच्चैस्त्वोपांशुत्वयोर्विकल्पापत्तिः। विशेषानवधारणे तु विकल्पोऽप्यदोष इत्याशयः ॥ ७ ॥

भा० प्र०—प्रदर्शित आशङ्का के परिहार के लिए कहा गया है कि "न सर्वस्मिन् निवेशात्" = उच्चैस्त्व आदि ऋक्त्वादि जात्यवच्छिन्न का आश्रित धर्म नहीं है, अपि तु वेदाश्रित धर्म है। अतः यजुर्वेदत्वावच्छिन्न सभी मन्त्र उपांशु पठनीय होने से वहाँ ऋक्

1. क० यत्र येन।

मन्त्र भी उपांशु पाठ्य है, अतएव उपांशुत्व एव उच्चैस्त्व ऋक्त्वादिजात्यवच्छिन्न ऋक् आदि मन्त्र का धर्म नहीं है, इसलिए विकल्प की आशङ्का नहीं है।

"न" = नहीं, ऐसा नहीं हो सकता है, "सर्वस्मिन् निवेशात्" = क्योंकि सर्वत्र यगुर्वेदत्वावच्छिन्न मन्त्र में उपाशुत्व आदि धर्म निर्विष्ट होगा अर्थात् रहेगा। (आशङ्का परिहार) ॥ ७ ॥

## वेदसंयोगान्न प्रकरणेन बाध्येत ॥ ८ ॥

**शा० भा०—यदुक्तं प्रकरणमेवमनुगृहीतं भवतीति[1]। वेदसंयोगाद्वाक्येन प्रकरणे बाध्यमाने न दोषो भविष्यति ॥ ८ ॥ आ० नि ॥**

**इति प्रथमं वेदोपक्रमाधिकरणम्।**

त० वा०—बाधेतेति वा पाठः ॥ ८ ॥

न्या० सु०—उच्चैस्त्वादिविधानस्य जोतिष्टोमप्रकरणे श्रुतेर्वेदाधिकारत्वे प्रकरणबाधापत्तेः जाताधिकारः स्यादित्येवं प्रकरणं चेति भाष्यं व्याख्यातं सूत्रार्थं यदुक्तमिति भाष्येणानुभाष्यं तत्परीहारार्थत्वेन वेदसंयोगात् ऋग्वेदादिविहितत्वलक्षणात्सर्वस्मिञ्ज्योतिष्टोमाद्यतिरिक्तेऽपि क्रतावुच्चैस्त्वादिनिवेशः प्राप्तो न प्रकरणेन बाधितुं शक्य इति कृत्वा यत्प्रकरणं बाध्यते, स न दोषः। वाक्येन प्रकरणबाधस्य युक्तत्वादित्येवं सूत्रव्याख्यार्थं वेदेति भाष्यं स्पष्टत्वादव्याख्याय, वेदसंयोगात्सर्वस्मिन्निवेशं प्राप्तं न प्रकरणानुरोधेनोच्चैस्त्वादिधर्मो बाधेतेति द्वितीयान्तविपरिणतनिवेशोक्त्यङ्गीकारेण धर्म इत्यध्याहाराधिक्येन च सूत्रव्याख्यामभिप्रेत्य पाठान्तरमुदाहरति—**बाधतेति वेति।** पूर्वपाठे प्रथमान्ततया निवेशशब्दविपरिणामः ॥ ८ ॥

भा० प्र०—यदि ऋक् आदि पद से वेद की अवगति मानने पर जो ऋक् मन्त्र तीनों वेदों में पठित है, अथवा जो यजुः तीनों वेदों में श्रुत है, उन पर किस स्वर का प्रयोग होगा—यह संशय होता है, ऐसी स्थिति में एक ही मन्त्र ऋग्वेद के अनुसार उच्च स्वर में एवं यजुर्वेद के अनुसार अस्फुट स्वर में पढना होगा, अतः विरोध प्राप्त होता है। इस प्रकार के विरोध स्थल में विकल्प के द्वारा समाधान किया जाता है, क्योंकि, इन स्थलों में दोनों ही तुल्यबल हैं, ऐसी स्थिति में "उच्चैः ऋचा क्रियते" इत्यादि विधि जो ज्योष्टोमप्रकरण में पठित है, उस प्रकरण का बाध होगा, कारण, इष्टि, पशु, साम सभी गेद के विषय होने से मन्त्र पाठ में उच्चैस्त्व या उपांशुत्व केवल ज्योतिष्टोम से निबद्ध नहीं रह सकते हैं, किन्तु उपांशुत्व आदि को ऋक्त्वादि जात्यवच्छिन्न मानने पर सर्वत्र इष्टि, पशु और साम में सर्वत्र उच्चैस्त्व आदि का प्रसङ्ग नहीं है, किन्तु ज्योतिष्टोम प्रकरण में जो ऋक् पाठ्य है उच्चैस्त्व आदि उसी का

१. ब. भविष्यतीति।

धर्म होगा। इस प्रकार कहने पर प्रकरण की मर्यादा रक्षित होती है, इस पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "न प्रकरणेन बाध्यते" प्रकरण के अनुसार जो उच्चैस्त्व आदि धर्मों का सर्वक्रतुगामित्व बाधित होगा—यह बात नहीं है। वरन् प्रकरण को बाधितकर वे सर्वक्रतुगामी होंगे। कारण "वेदसंयोगात्" कारण, उपक्रम में वेदपद के साथ सम्बन्ध रहता है। आशय यह है कि—उच्चैस्त्व आदि को सर्वगामित्व उपक्रमस्थ वेदसम्बन्ध के अनुसार वाक्य विनियोग और उनका ज्योतिष्टोममात्रगामित्व प्रकरण विनियोग है। वाक्य एवं प्रकरण के मध्य में वाक्य ही बलवान् होता है वाक्य के द्वारा प्रकरण बाधित होता है, वाक्य की बाध उत्पन्न कराकर प्रकरण के प्रति अनुग्रह करना न्याय्य नहीं है, एक ही मन्त्र वेदभेद से विभिन्न स्वर में पाठ्य होने से जो विकल्प का प्रसङ्ग होता है—उसका परिहार पूर्व में हो गया है, उस वेदावच्छिन्न-रूप में स्वर का प्रयोग कर्तव्य होने से इस स्थल में कोई भी स्वातन्त्र्य नहीं है, इसलिए विकल्प भी नहीं हो सकता है।

"वेदसंयोगात्" = उपक्रम में अर्थात् आरम्भ में वेद के साथ सम्बन्ध होने से "प्रकरणेन न बाध्यते" = प्रकरण के द्वारा बाधित नहीं होगा अर्थात् प्रकरण के अनुसार ऋक्त्वादि जात्यवच्छिन्न नहीं होता ॥ ८ ॥

इति प्रथम वेदोपक्रमाधिकरण

## अथ द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम्

## [२] गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥९॥ सि० ।

**शा० भा०**—अस्त्याधानं, 'य एवं विद्वानग्निमाधत्ते' इति। तद्याजुर्वैदिकम्। तत्र सामगानमामनन्ति। 'य एवं विद्वान्वारवन्तीयं गायति, य एवं विद्वान्यज्ञायज्ञीयं गायति, य एवं विद्वान्वामदेव्यं गायति', इति। तत्र संदेहः—किमाधाने सामगानमुच्चैः, उतोपांशु, इति। उच्चैरिति प्राप्तम्। कुतः? सामवेदेनैतत्क्रियते यद्वारवन्तीयादिभिः। तस्मादुच्चैरेतानि सामानि गेयानीति। एवं प्राप्ते।

ब्रूमः गुणानुरोधेन वा मुख्यं व्यतिक्रमेन्मुख्यानुरोधेन वा गुणमिति। गुणो व्यतिक्रमितव्यो न्याय्यः, मुख्यश्चानुग्रहीतव्य इति। कुतः? मुख्यार्थत्वाद् गुणस्य। गुणस्यानुष्ठानेन मुख्यः सगुणः कथं स्यादिति गुणे प्रवर्तते। गुणप्रवृत्त्या चेन्मुख्यस्य गुणहानिर्भवति, गुणप्रवृत्तौ फलमेव नावाप्तं भवति। अथ प्रधानं सगुणं करिष्यामीति गुणे प्रवर्तमानो गुणस्य गुणं विनिपातयति, नास्य स्वार्थो हीयते। नासौ गुणं सगुणं कर्तुं प्रवर्तते। गुणश्च सामगानं,

**प्रधानमाधानम् । आधानस्य याजुर्वेदिकत्वादुपांशुता गुणः । स गुणधर्ममुच्चैस्त्वं सामवेदिकं[1] बाधते । तस्मादुपांशु सामानि गेयानीति ॥ ९ ॥**

**इति द्वितीयगुणमुख्यव्यतिक्रमाधिकरणम् ॥ २ ॥**

त० वा०—इदानीं यत्र वेदान्तरीयस्य प्रधानस्य वेदान्तरीयमङ्गं भवति, तत्राङ्गस्य वेदधर्मः कतमः कर्तव्य इति संदेहे प्राप्त्यात्मकत्वाद् व्यपदेशधर्माणां यस्य यत्र समाम्नानं, तदीयो धर्मः स्यादिति प्राप्ते ।

अभिधीयते ।

गुणे स्वरूपतो धर्मः प्रधानद्वारतोऽपरः ।
यत्र स्यात्तत्र विज्ञेयं गुणधर्मस्य बाधनम् ॥

अवश्यं कर्तव्येऽन्यतरधर्मातिक्रमे गुणधर्मोऽतिक्रमितव्यः । तथा सति प्रधानमविगुणं कृतं भवति । तच्च गुणस्यापि कार्यम् । सोऽपि हि तदर्थमेव प्रवर्तते । यदि त्वात्मीयधर्मानुरोधेन प्रधानं विगुणं कुर्यात् ततोऽस्य यदर्थैव प्रवृत्तिः तदेव हीयेत । तत्स्वरूपे सगुणं जाते यद्यप्यङ्गं विगुणमेव, तथाऽपि तत्र गुणत्वस्याचिकीर्षितत्वान्न कश्चिद्विरोधः । तस्मादाधानस्य याजुर्वेदिकत्वात्तदङ्गभूतानां साम्नामुपांशुत्वं कर्तव्यमिति । (भाष्यमताक्षेपः)

ननु यावन्मात्रमाधानस्य यजुर्वेदविहितं तन्मात्रस्यैवोपांशुत्वमित्यवगमान्नैव सामगानस्य प्राप्नोति । प्रधानमात्रं च, अङ्गान्तराणि च याजुर्वेदिकानि । तेन तेषां केवलमुपांशुत्वमीति । नैतदेवम् । वक्ष्यति हि—'अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन्, इति । तथा 'विधेस्त्वेकश्रुतित्वादपर्यायविधानात्, इति च । तस्मात्प्रधानप्रयोगवचनपरिगृहीतत्वादन्यत्राप्युत्पन्ना[2]नामङ्गानां यत्रैव प्रधानं, तत्रैव विधिः । अतश्च साङ्गस्ययैव प्रधानस्य याजुर्वेदिकत्वादुपांशुत्वेनैव भवितव्यमिति । एवं तर्हि स्वयमेवाङ्गानां याजुर्वेदिकत्वादुपांशुत्वं न गुणप्रधानधर्मविरोधद्वारम् । यच्च सामगतमुपांशुत्वं, तदङ्गवर्तित्वादुच्चैस्त्वेन तुल्यम् । नैतत्तत्र वर्तमानं प्रधानस्येति शक्यं वदितुम् । नापि तद्गते बाधिते प्रधानधर्मबाधः । न हि तदा प्रधानमुपांशु न कृतं स्यात् । अथ केनचित्प्रकारेणाङ्गधर्मोऽपि प्रधानस्याभिधीयते, तत उच्चैस्त्वमपि प्रधानधर्म एव स्यादिति पुनस्तुल्यबलत्वम् ।

उच्यते—

उत्पत्तिविधिमालोच्य साम्नां वेदान्तरीयता ।
साङ्गप्रधानसम्बन्धादुपांशुत्वं तु गम्यते ॥

---

१. ब० क० सामवैदिकं ।  २. क० शूत्पन्नानां ।

यदि हि यजुर्वेद एवैषामुत्पत्तिः स्यात्, तत्स्वरूपनिमित्तमेवोपांशुत्वं स्यात्। एतेषां तु सामवेदोत्पन्नानां स्वरूपत उच्चैस्त्वप्रसङ्गे प्रधानसंस्पर्शनिमित्तमुपांशुत्वमिति प्रधानधर्मता।

ननु यजुर्वेदेन साङ्गं कुर्यादित्युपबन्धात्साङ्गस्यैवोपांशुत्वमित्यवधारणादस्त्येवाङ्गस्वरूपसंस्पर्श इति। न। साङ्गकथनेनैवाप्राधान्यनिर्देशात्। उपसर्जनभूताङ्गं हि प्रधानमेवं निर्दिश्यते तेन प्रधानमेव याजुर्वेदिकम्, उपांशुत्वं तु तद्धर्म एव सन्नङ्गान्युपसर्पन्नेवं कथ्यते। न त्वेवमेव चोदनाऽप्यस्ति ततः प्रधानधर्मोऽयमङ्गं प्राप्तोऽतिक्रम्येत। प्रधानेन हि स्वधर्मोऽङ्गेषु विक्षिप्तः। स यत्रैव बाधितः तत्रैव प्रधानं विगुणं, न त्वेवमुच्चैस्त्वं प्रधानधर्म इत्यवधार्यते। न सङ्गधर्माः प्रधानानि संक्रामन्ति।

नन्वेवमप्यङ्गधर्मः साक्षात्प्राप्नोति प्रधानधर्मः पुनः परद्वारेण परोक्ष इति विपरीतं बलाबलं प्राप्नोति। सत्यं, साक्षात्प्राप्ताङ्गधर्मः शीघ्रतरमवगम्यते। प्रयोगवचनग्रहणोत्तरकालं तु पश्चात्तन एव प्रधानधर्मः 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्, इत्येवं बाधते।

ननु याजुर्वेदिकज्योतिष्टोमाद्यङ्गानां स्तोत्रशस्त्रादीनामप्यनेनैव न्यायेनोपांशुत्वं प्राप्नोति। सत्यं प्राप्नोति। वचनात्तु सर्वत्र स्वरान्तरलाभः। कथम् ? दर्शपूर्णमासयोस्तावद्वेदद्वयविहितेष्वङ्गेषु नानावेदस्वरे प्राप्ते गुणमुख्यव्यतिक्रमन्यायेन याजुर्वैदिकप्रधानधर्म उपांशुत्वं प्राप्नोति। ततो वाचनिकः स्वरो भवति 'मन्द्रयाऽऽज्यभागान्तं' 'परं मध्यमया' 'उत्तमयाऽनुयाजादि' इति।

तथा विकृतीनामिष्टिपशुबन्धादीनामेतस्मिन्नेव प्राकृते स्वरत्रये प्राप्नुवति प्रत्यक्षोपदेशवशेन प्रधानवेदस्वरप्रसक्तौ 'तद्ग्रह्णाद्वा स्वधर्मः स्यात्' इत्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षित्वेन दुर्बलत्वाच्चोदकप्रापितस्वरग्रहणमेवेष्टम्।

एवं ज्योतिष्टोमाङ्गानामपि दीक्षणीयादीनां प्राकृते स्वरे प्राप्ते प्रत्यक्षोपदेशवशेन बाध्यमाने चोदकबलीयस्त्वेन पुनरुपस्थिते ज्योतिष्टोमस्य याजुर्वेदिकत्वात्क्लृप्तोपकारप्राकृतधर्मग्रहणाच्च गुणमुख्यव्यतिक्रमन्यायेनैव तद्गतोपांशुत्वधर्मप्रसङ्गे सति 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्' इत्येते स्वरा गुणमुख्यव्यतिक्रमन्यायबाधेनैव साङ्गानां प्राप्ताः।

तथा ज्योतिष्टोमस्य वाचनिकसवनविभागविहितमन्द्रमध्यमोत्तमोच्चारणावधारणात्तदङ्गानामपि सर्वेषां प्राकृततुल्यमन्द्रमध्यमोत्तमोच्चारणान्येव प्रधानद्वारेण प्राप्तानि। ततो 'यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति' इत्युपांशुत्वे साङ्गानां दीक्षणीयादीनां प्राप्ते, प्रधानमात्रवाचिदीक्षणीयादिशब्दोद्देशेन विहिताः प्रधानमात्रेष्वेते स्वरविशेषा भवन्ति 'यावत्या वाचा कामयेत तावत्या

वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायाम्, 'मन्द्रतरमातिथ्यायाम्, 'उपांशूपसत्सु' इति। तत्रोपांशुत्वस्य पूर्वेणैव सर्वव्यापिनोपांशुत्वविधिना प्राप्तत्वाद्दीक्षणीयादिस्वरप्रशंसार्थो नित्यानुवाद एव। अग्निषोमीये तु सवनविभागस्वरेणैव 'मन्द्रयाऽऽज्यभागान्तम्' इत्यादिप्राकृतस्वरप्रतिप्रसवः। सवनविभागतुल्यं वा साङ्गं प्रयोगं त्रेधा विभज्य, मन्द्रमध्योत्तमोच्चारणसम्पादनं कार्यम्। एतेनानूबन्ध्यावभृथोदयनीयोदवसानीयास्वप्युच्चारणविशेषा व्याख्याताः। सुत्याकालसवनीयादीनामप्येवं स्वरे प्राप्ते प्रातःसवनाद्यन्तर्गतत्वाद्यथासवनमेव स्वरा भवन्ति।

ननु सवनशब्दानां सोमयागावयववचनत्वाद्दीक्षणीयाद्यङ्गवत्तदीयस्वराभावप्रसङ्ग इति चेत्? न। सप्तमीनिर्देशेन तत्कालप्रयुज्यमानत्वमात्राश्रयणात्।

यदि षष्ठी भवेदत्र सवनेभ्यः परा ततः।
तदङ्गमन्त्रमात्रेषु मन्द्रत्वादिविधिर्भवेत्॥
सप्तम्यां तु तदाधारो यावान्मन्त्रः प्रयुज्यते।
तस्य सर्वस्य मन्द्रादिस्वरयोगोऽङ्गमाश्रितः॥
केचिदाहुर्यदाऽऽधारमात्रत्वं सवनेष्विह।
तदा तेषां न मन्द्रादिः स्यादनाधेयताश्रुतेः॥
आधारे सवने भिन्नं यदाधेयतया श्रुतम्।
सवनीयादि तस्यैव मन्द्राद्युच्चारणं भवेत्॥
स्तोत्रशस्त्रानुवाक्यादिशेषस्तु सवनस्य यः।
षष्ठ्यभावान्न तस्यैते युक्ता मन्द्रादयः स्वराः॥
इत्युक्ते नैष दोषोऽस्ति यतः षष्ठ्या विनाऽप्ययम्।
षष्ठ्यर्थः संभवत्येव तदाधारत्वकल्पितः॥
यथा हि शकुनिर्वृक्षे पुष्पाद्यपि तथेष्यते।
ततश्चाऽऽधेयधर्मोऽर्थः स द्वयेऽपि विधीयते॥
यदि वा स्तोत्रशस्त्रादि कृत्स्नं सुत्याङ्गमेव नः।
आधार एव तस्यापि सवनानीतराङ्गवत्॥
नानावेदस्वरस्तस्मात्स्तोत्रादेः प्राप्त आदितः।
प्रधानाङ्गतया पश्चादुपांशुत्वेन बाधितः॥
ततो वाचनिकेनैव यथासवनभाविना।
मन्द्रादिना समस्तानि सुत्याङ्गानि प्रयुञ्ज्महे॥

विशेषाक्षेपः

एतेन सर्वे ज्योतिष्टोमविकारा व्याख्याताः।

क्व पुनरिदानीं नानावेदस्वरस्यावकाशो भविष्यति ? उच्यते । 'तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यादव्यक्तः शेषे' इतिवत्कल्पनीयः । यत्प्राकृतस्वराङ्ग-युक्तायां विकृतौ वेदान्तरीयमपूर्वमङ्गं चोद्यत इति । ननु तत्रापि गुणमुख्यव्यति-क्रमन्यायेन प्रधानधर्मभाव एव । एवं तर्हि या विकृतिर्यस्मिन्वेदे भवति, तस्याः शेषेष्वङ्गेषु यथाप्रकृतिप्राप्तेषु यत्तस्मिन्नेव वेदेऽङ्गान्तरमपूर्वं चोद्यते, स विषय इति । सोऽपि प्रधानद्वारेणैव लब्धत्वात् । तदेव तर्हि प्रधानं विषय इति । न । तस्यापि प्राकृतावरुद्धत्वात् । न, तर्हि प्रधानद्वारेणापूर्वस्याङ्गस्य प्राप्तिरिति, तदेव विषय इति ।

नैवमपि यः प्रधानस्य धर्मः तस्यैव तत्रापि भावात् । अपि च त्रेधा विभक्तेषु यज्ञभागधर्मे च स्वरे स्थिते यदपूर्वमपि तद्भागपाति भवति । तस्य न यूपावट-स्तरणबर्हिस्तुल्यत्वमिति भवितव्यमेव प्राकृतेन धर्मेण । तस्मादिति नास्ति विषयः । प्रकरणाम्नानं चात्यन्तमेवानर्थकं स्यात् ।

वार्तिकमतेन समाधानम्

अत्र समाधिः । 'उपांशु यजुषा' इति तावत्सर्वदर्विहोमेष्वर्थवत् । ऋक्साम-वेदयोरपि काम्यनैमित्तिकेष्वङ्गेष्वर्थवत्ता । 'मन्द्रं प्रातःसवने' इत्यादि हि नित्य-त्वादनित्यैः काम्यनैमित्तिकैरसंबध्यमानं नित्याङ्गविषयमेव भवति । तेन यदृग्वेदसामवेदाभ्यां किंचित्काम्यं, नैमित्तिकं वा चोद्यते, तत्सर्वमुच्चैः कर्तव्यम् । तथा 'तं भिन्नमभिमृशेद्यदृते चिदभिश्रिष' इत्यादि । एवं याजुर्वेदिकमप्युपांशुत्व-मुदाहर्तव्यम् ।

तथा यानि सुत्योत्तरकालान्यङ्गानि. तेषु सवनग्रहणाभावाद्यथावेदमेव स्वर इत्यवभृथसामादीनामप्युच्चैस्त्वसिद्धिः । अन्यथा हि यथेष्टं प्रयोगः स्यात् । दीक्षणीयादिपरिसामसु तु 'प्राचीनमग्नीषोमीयात्' इत्यनेनोपांशुत्वम् । प्रवर्ग्य-साम्नां पुनः 'उच्चैः प्रवर्ग्येण' इत्येवमुच्चैस्त्वम् । आधानसाम्नां तु याजुर्वेदिक-प्रधानविधिविहितत्वादेवोपांशुत्वम् । 'य एवं विद्वान्वामदेव्यं गायति' इत्यादीनि यजुर्वेदवाक्यान्येव । तस्मादिहानुदाहरणम् ।

तत्र केचिदाहुः—स्वरूपोत्पत्तिमात्रापेक्षया तेन क्रियत इति न कारकहेत्वभि-प्रायेणोपन्यास इति । तत्तु न युक्तम् । एवं सति ह्युत्पत्तिविनियोगबलाबल-चिन्तैव क्रियते न गुणमुख्यविरोधचिन्ता । तत्र च विनियोगाधीनत्वादनुष्ठानस्य, तद्बलीयस्त्वमित्येष निर्णयः स्यात् ।

तत्रापरेषां समाधानम्

तस्मात्सामवेदशाखायामपि कस्यांचिदस्त्येषां विधिरत उदाहरणमित्यपरे । तदा तु यजुर्वेदपुनःश्रुतेर्मन्दं फलं स्यात् । अथापि शाखान्तरविधिवदाश्रीयेत, स्वरविकल्पश्च पूर्वपक्षे क्रियेत, यद्युदाह्रियेत । अनुदाहरणात्तु नैतदुपपद्यते ।

### वार्तिकमतेनाधिकरणरचनावर्णनम्

### केषाञ्चिन्मतेन समाधानम्

तस्मादुत्पत्तिविनियोगयोरेव गुणमुख्यत्वमित्येवमधिकरणमारभ्यते । यत्र वेदान्तरोत्पन्नं वस्तुवेदान्तरेण विनियुज्यते। तत्र किमुत्पत्तिवेदधर्मः कर्तव्यः, उत विनियोगवेदधर्म इति । उत्पत्तिपूर्वकत्वाद्विनियोगस्योत्पत्तिवेदधर्मं इति प्राप्ते ।

### सिद्धान्तवर्णनम्

विनियोगवेदधर्म इति गृह्यते । कुतः ? उत्पत्तेस्तदर्थत्वाद्विनियुज्यमानस्य च स्वरापेक्षित्वात्तदानीमेव यः स्वरोऽवगम्यते, स एव चोदितो, नोत्पत्तिस्थः । तत्काले विधानाभावात् ।

अथवा नैवात्र व्यतिक्रमशब्देन बाधो, विरोधो वाऽभिधीयते। किं तर्हि । व्यभिचारः—अन्यत्रान्यत्र च वृत्तिः । तेनैवं चिन्त्यते । यत्रोत्पत्तिवियोगौ व्यतिक्रान्तौ, अन्यत्रोत्पत्तिः अन्यत्र विनियोगः तत्र कतरवेद[1]संयोगो भवत्विति । तथैवोत्पत्तिसंयोगे विकल्पे वा प्राप्ते ।

विनियोगवेदसंयोगः प्राधान्यादित्युत्तरम् ।

अथवैवं चिन्ता यत्रान्यत्र च प्रधानम्, अन्यत्र चाङ्गं तत्राङ्गस्य केन वेदेन व्यपदेशोऽस्त्वति । ततश्च तथैव प्रधानवेदेन व्यपदेश इति निर्णयः । अस्मिंस्तु पक्षे 'तद्ग्रहणाद्वा स्वधर्मा स्यात्' इत्येतद् बाधित्वा प्रधानसमाख्यात एक एव प्रकृतौ, विकृतौ च कर्ता प्राप्नोति । अथ तु चोदकबलीयस्त्वादङ्गवेदसमाख्यात-कर्तृग्रहणं, ततः स्वरोऽपि तथैवेत्ययुक्तं प्रधानस्वरग्रहणम्। अत उत्पत्तिविनि-योगापेक्षयैवैष विचार इत्येषैव व्याख्या शोभना । तदैवाऽऽधानोदाहरणं समर्थितं भवति । यदि तु गुणमुख्यव्यतिक्रमोऽङ्गप्रधानधर्मविरोधो व्याख्यायते, ततः 'अङ्गगुणविरोधे च तादर्थ्यात्' इत्यनेन सहाऽपौनरुक्त्यं संप्रधारणीयम् ॥ ९॥

(इति द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम् ॥ २ ॥

**द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम् ।**

न्या० सु०—उच्चैस्त्वादेर्वेदधर्मत्वे स्थिते, प्रसङ्गादुत्पत्तिवेदधर्मत्वं वेति, अत्र चिन्तेति परमतेन तावदधिकरणं वर्णयन् आधानसाम्नां विधानस्य वेदान्तरीयत्वाभावादनुदाहरणत्वमा-शङ्क्य कृत्वाचिन्तात्वसूचनपूर्वं सन्देहं, पूर्वपक्षं चाह—**इदानीमिति** । उत्पत्तिवेदधर्म कर्त्तव्यः, प्रयोगवेदधर्मो वेति सन्देहार्थः । वेदव्यपदेशनिबन्धनत्वादुच्चैस्त्वादिधर्माणां प्रत्यात्मव्यव-स्थितोत्पत्तिविधिविषयस्य च साक्षाद्वेदव्यपदेशोपपत्तेः प्रयोगविधिविषयत्वस्य त्वङ्गेषु

१. क० वेदधर्मसंयोगः ।

प्रधानद्वारत्वेन साक्षाद्वेदव्यपदेशहेतुत्वायोगात् यस्याङ्गस्य यत्र वेदे विधानं, तस्य तद्वेदधर्मः स्यादिति वदता यत्सामवेदिकैर्वारवन्तीयादिवाक्यैर्विधीयते सामवेदेनैतत्साक्षात्क्रियते। यजुर्वेदेन तु प्रधानद्वारेत्येवं पूर्वपक्षभाष्यव्याख्या सूचिता। अङ्गप्रधानयोर्भिन्नवेदविहितत्वरूपे व्यतिक्रमे, अङ्गे स्वरूपनिबन्धनधर्मानुरोधेन प्रधानद्वारप्राप्तस्य धर्मस्य बाधलक्षणोऽतिक्रमः कार्यः। प्रधानद्वारधर्मानुरोधेन वा स्वरूपनिबन्धनस्येति सन्देहे प्रधानसाद्गुण्यार्थत्वादङ्गधर्मानुष्ठानस्य प्रधानद्वारधर्मानुरोधेन स्वरूपनिबन्धनधर्मव्यतिक्रमस्य न्याय्यत्वात्प्रधानद्वारकः प्रयोगवेदसंयोगः क्रियतइत्यनेन विवक्षित इत्येवं सूत्रव्याख्यां सूचयन् सिद्धान्तमाह – **इतीति**। गुणे स्वरूपतः प्राप्तस्य धर्मस्य बाधनमित्यर्थः। भाष्येऽपि स्वरूपनिबन्धनो धर्मो गुणोक्त्योक्तः। प्रधानद्वारको मुख्योक्त्या।

अपरोक्तेर्विरोधिधर्मान्तरार्थतामवश्यकर्त्तव्यतोक्त्या सूचयन् श्लोकं व्याचष्टे—**अवश्येति**। तदर्थत्वादिति हेतुव्याख्यार्थं कुत इत्यादि भाष्यं व्याचष्टे—**तथा हीति**। प्रधानद्वारप्राप्तेनैव धर्मेणाऽङ्गस्यापि साद्गुण्यसिद्धेरभ्युपेत्यवादमात्रेण—**यद्यपीत्युक्तम्**। आधानस्येत्यादिभाष्यं सिद्धान्तोपसंहारार्थत्वेन व्याचष्टे—**तस्मादिति**।

## पूर्वपक्षस्य दूषणम्

प्रयोगविधेरङ्गप्रधानवाक्यैकवाक्यत्वलभ्याङ्गप्रधानविशिष्टभावनाविषयत्वेन कल्प्यत्वादनाम्नातत्वेन वेदत्वानुपपत्तेर्यजुर्वेदेन यत्प्रयुज्यते, तदुपांश्विति शास्त्रार्थायोगात् यजुर्वेदेन यद्विनियुज्यते, तदुपांश्विति शास्त्रार्थविगतेः सामवैदिकोत्पत्तिविधिविहितेष्वाधानसामसु उपांशुत्वाप्राप्तेर्नोच्चैस्त्वबाधकता युक्तेति पूर्वपक्षाशयं दूषयितुमुपन्यस्यति—**नन्विति**। प्रधानेन सहाङ्गानामेकदेशकालकर्तृत्वसिद्धयेऽङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन् तस्मात्स्यादेकदेशत्वमि११-२-७त्येकादशाधिकरणसिद्धान्तसूत्रे प्रकाराख्यविधानरूपेति कर्तव्यताकाङ्क्षाकरणाख्यप्रधानविषयेन 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादिप्रयोगविधिनोपदेशस्य वक्ष्यमाणत्वात्प्रयोगविधेरपि वैदिकत्वोपपत्तेः करोतेश्चानुष्ठानात्मकप्रयोगवाचित्वात्. यजुर्वेदेन यत्प्रयुज्यते, तदुपांश्विति शास्त्रार्थोपपत्तिरित्याशयेन परिहरति—**नैतदिति**।

प्रधानेन सहैकवेदविहितानामङ्गानां वाक्यैकवाक्यत्वापन्नवाक्यसमूहात्मकमहावाक्यार्थभूतानामङ्गप्रधानविशिष्टभावनाविषयवैदिकप्रयोगविधिप्रयोज्यत्वसम्भवेऽपि वेदान्तरविहितानामेकवाक्यत्वायोगात् न तत्प्रयोज्यत्वोपपत्तिरित्याशङ्कानिरासार्थं विधेस्त्वेकश्रुतित्वात् अपर्यायविधानात् नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं शब्दार्थौ नीतवत् स्यात् सर्वप्रयोगे प्रवृत्तिः स्यादि११-१-१६त्येकादशाधिकरणान्तरसिद्धान्तसूत्रं पठति—**तथेति**। साङ्गप्रधानप्रयोगविधेरेकप्रधानप्रयोगविधिश्रुतिनिबन्धनत्वेनापर्यायेणाकादाचित्कत्वेन सर्वाङ्गानां विधानावगतेर्नित्यवच्छ्रुतानां च यथाभूतानां श्रुत्यादिप्रमाणोपनयलक्षणसन्निधानाविशेषात्सन्निकर्षविप्रकर्षानादरेण प्रधानान्यथावगतेरनिर्ज्ञातोपायपरिमाणत्वेन च

प्रधानोपकाररूपेणार्थेन सर्वेषामपेक्षितत्वात् युगपत्प्राप्तेर्यथाप्राप्ते च स्वशब्दार्थे विकल्पायोगात् 'निवीता ऋत्विजः प्रचरन्तीति' सर्वर्त्विजां निवीतवद्यथाप्राप्तस्याङ्गसमूहस्य सर्वस्य स्वप्रधानप्रयोगविधायिशब्दविषयत्वावगतेः सर्वाङ्गप्रयोगे फलसिद्धिः स्यादिति, समस्ताङ्गप्रयोगोपपादनायैककाण्डाम्नाननिमित्तैकवाक्यत्वाभावेऽपि अङ्गप्रधानानामन्योन्यापेक्षावशात्सर्वाङ्गानुगृहीतेन प्रधानेन फलं भावयेदित्येवं वाक्यैकवाक्यत्वकल्पनया सन्निकृष्टविप्रकृष्टानां सर्वेषामङ्गानां प्रधानप्रयोगविधिप्रयोज्यत्वस्य वक्ष्यमाणत्वात् वेदान्तरीयाणामप्यङ्गानां प्रधानप्रयोगविधिप्रयोज्यत्वोपपत्तिरित्याशयः। अतः प्रधानप्रयोगविधिप्रयोज्यत्वेनाङ्गानां वेदान्तरोत्पन्नानामपि प्रधानप्रयोगवेदप्रयोज्यत्वात्साङ्गस्याधानस्य याजुर्वेदिकत्वेनासाम्नामुपांशुत्वोपपत्तिरित्युपसंहरति—**तस्मादिति**।

स्वयमेव तर्ह्याधानवत्साम्नामपि यजुर्वेदप्रयोज्यत्वादुपांशुत्वाप्राप्तेः प्रधानद्वारत्वायोगाद्बलीयस्ता न युक्तेत्याशङ्कते—**एवं तर्हीति**। प्रधानोपकारित्वेनाङ्गधर्मस्याप्युपांशुत्वस्य प्रधानधर्मत्वाभ्युपगमेतूच्चैस्त्वस्यापि प्रधानधर्मत्वापत्तेरपरिहार्या तुल्यबलतेत्याह—**अथेति**। साक्षादङ्गविधावप्युत्पत्तिविध्यालोचने साम्नां याजुर्वेदिकत्वाभावादुपांशुत्वाप्राप्तेः प्रधानस्यैव तु साङ्गस्य यजुर्वेदसम्बन्धात्साम्नामुपांशुत्वप्राप्तेः दुर्निराकरा प्रधानद्वारतेति परिहरति—**उच्यतइति**। श्लोकं व्याचष्टे—**यदि हीति**। आधानसामोत्पत्तेर्वस्तुतो याजुर्वेदिकत्वेऽपि, सामवैदिकत्वं कृत्वाचिन्तारम्भादित्याशयः।

साङ्गं कुर्यादित्युपवन्धस्य याजुर्वेदिकत्वेन साङ्गस्योपांशुत्वावधारणात्स्वरूपेण चाङ्गस्योपांशुत्वसंस्पर्शाभावे साङ्गस्योपांशुत्वायोगात्स्वरूपेण संस्पर्शापत्तिरित्याशङ्कते—**नन्विति**। साङ्गविधौ विशेषणत्वेनाङ्गविधानाद्विशेषणविधेश्च विशिष्टविधिकल्प्यत्वेनाऽऽम्नानाद्वैदिकत्वानुपपत्तेराधानसाम्नां याजुर्वैदिकत्वाभावेनोपांशुत्वाप्राप्तेरुपांशुत्वरूपो धर्मः प्रधानद्वारैवाङ्गानि प्राप्नुवन्नङ्गधर्म इत्येव कथ्यते, न त्वङ्गस्य स्वरूपेणोपांशुत्वापादिका यजुर्वेदे साक्षाच्चोदनास्तीति परिहरति—**नेति**। अतो नोपांशुत्वोच्चैस्त्वयोस्तुल्यबलतेत्याह—**ततश्चेति**। बलीयस्त्वे अप्युपांशुत्वस्य विरोधाभावे बाधकत्वायोगाद्विरोधो अतिक्रमोक्त्योक्तः। प्रधानद्वाराप्यङ्गं प्राप्तस्य धर्मस्य बाधे साक्षात्प्रधानवैगुण्यानापत्तेरङ्गवैगुण्यद्वारस्य तु प्रधानवैगुण्यस्योच्चैस्त्वबाधेऽपि तुल्यत्वेन नोपांशुत्वस्य बाधकत्वं सम्भवतीत्याशङ्क्य प्रधानेन—**न हीत्युक्तम्**। उपांशुत्वस्य साङ्गप्रधानधर्मत्वादङ्गेऽप्युपांशुत्वबाधे साक्षात्साङ्गप्रधानवैगुण्यापत्तेरुच्चैस्त्वस्य त्वङ्गधर्मत्वात्तद्बाधेन साक्षात्प्रधानवैगुण्यानापत्तेर्वैषम्यमित्याशयः। उच्चैस्त्वोपांशुत्वयोर्वेदविशेषविधेयत्वोपलक्षितकर्माङ्गत्वेन विधानादुत्पत्तिवेदविधेयत्वस्य चाङ्गेष्वनन्यद्वारत्वात्साक्षात्प्राप्तेः प्रयोगवेदविधेयत्वस्य तु प्रधानद्वारत्वाद्विपरीतं बलाबलमितिप्रात्यात्मिकत्वाद्व्यपदेशधर्माणामिति वार्त्तिकोक्तं पूर्वपक्षाशयं दूषणायानुसन्धत्ते—**नन्विति**। वैषम्येऽपि नोच्चैस्त्वस्य बाध्यतेत्यपि शब्दार्थः। प्रधानवैगुण्यापादकत्वेन साक्षात्प्राप्तेर्बलीयस्त्वहेतुत्वाभावात् शीघ्रावगतिहेतुत्वमात्रं वाच्यम्। तच्च षष्ठाधिकरणन्यायाद्दौर्बल्यमेवापादयतीत्याशयेन दूषयति—**सत्यमिति**।

प्रधानवेदस्वरबलीयस्त्वाभ्युपगमेऽनिष्टापत्तिं शङ्कते—**ननु चेति**। वचनेन न्यायादनिष्टापत्तिं परिहरति—**सत्यमिति**। सामिधेन्यनुवचनादीनां ऋग्वेदेऽन्वाधानमन्त्रादीनां च यजुर्वेदे विधानात् पूर्वपक्षन्यायेन नानावेदस्वरप्राप्तौ सिद्धान्तन्यायेन बाधितायां विशेषविषयेण मन्द्रादिवचनेन प्रधानेषु सामान्यवचनप्राप्तोपांशुत्वबाधपूर्वमङ्गेषु तद्बाध इत्यर्थः।

स्वप्रधानानामिष्ट्याख्यानां, पशुबन्धाख्यानां च दर्शपूर्णमासविकृतीनां दार्शपौर्णमासिकं मन्द्रादिस्वरत्रयं चोदकात्प्राप्तं बाधित्वा, प्रत्यक्षयाजुर्वेदिकप्रधानप्रयोगवचनलक्षणोपदेशवशेनप्रधानविधायियजुर्वेदनिमित्तोपांशुत्वस्वरप्रसक्तौ सामवेदविहिते श्येनेऽङ्गान्युद्गातृभिः कार्याणीति वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युरि३-७-५०ति सप्तमपादान्त्याधिकरणसूत्रेण पूर्वपक्षयित्वा तद्ग्रहाद्वा स्वधर्मः स्यादधिकारसामर्थ्यादव्यक्तः शेषे ३-७-५१ इत्यनेन पूर्वसूत्रस्थपूर्ववच्छब्दनिर्दिष्टप्रत्युपस्थापितप्राकृतधर्मपरामर्शिने तच्छब्दं चोदकप्राप्तान्यङ्गान्यधिकृत्य गैकृतप्रयोगवचनप्रवृत्तेश्चाधिकारशब्दश्चोदकवाचिनमभिप्रेत्य प्रयोगवचनेन प्राकृतधर्मग्रहणात्प्राकृतानाञ्च धर्माणाञ्चोदकसामर्थ्येनार्त्विवक्कर्तृकाणामेव प्राप्तेः स्वकीयचोदकप्राप्तनार्त्विवक्कर्तृकधर्मयुक्तः श्येनादिः स्यात्। यस्तूद्गात्रादिः सामान्यसमाख्यानिमित्तत्वात् अव्यक्तः कर्त्ता, स शेषे प्राकृतधर्मव्यतिरिक्ते कण्टकवितोदनावपूर्वे श्येनाङ्गे भविष्यतीति सिद्धान्तयिष्यतीति सिद्धान्तयिष्यमाणत्वात् तेनैव न्यायेनात्रापि चोदकबलीयस्त्वात् काम्येष्टिव्यतिरिक्तानां दर्शपूर्णमासविकृतीनां साङ्गानां चोदकप्राप्तमन्द्रादिस्वरत्रयं काम्येष्टीनां तु 'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्त्तव्या' इति काम्यशब्दवाच्ये प्रधाने विशेषवचनेनोपांशुत्वविधानदङ्गमात्रे स्वरत्रयं युक्तमित्याह—**तथेति**। ज्योतिष्टोमाङ्गभूतानां तु दर्शपूर्णमासविकृतीनां दार्शपौर्णमासिके मन्द्रादिस्वरत्रयं चोदकात् प्राप्तप्रयोगवचनेन बाध्यमाने तद्ग्रहणाद्वेति वक्ष्यमाणेन चोदकबलीयस्त्वेनोज्जीविते ज्योतिष्टोमस्य याजुर्वेदिकत्वेनोपांशुधर्मकत्वात् 'प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यादि८-१-३त्यष्टमाधिकरणपूर्वपक्षवेक्ष्यमाणस्य क्लृप्तोपकारत्वाद्दार्शपौर्णमासिकानां धर्माणां ग्रहणस्य कृत्स्नविधानाद्वाऽपूर्वत्वमि८-१-५ति सिद्धान्ते निराकरिष्यमाणत्वेनाऽभावाद्दार्शपौर्णमासिकमन्द्रादिस्वरत्रयाशङ्कानुपपत्तेः, तदङ्गभूतानां दर्शपूर्णमासविकृतीनामपि प्रस्तुतसिद्धान्तन्यायेन ज्योतिष्टोमगतोपांशुत्वप्राप्तिं बाधित्वा दीक्षणीयाद्युद्देशेन विशेषवचनविहितेषु स्वरेषु तेनैव न्यायेन साङ्गानां प्राप्तेषु 'मन्द्रं प्रातःसवने चरन्तीत्या'दिविशेषवचनैः सवनविभागे विहितानां मन्द्रादि (स्वरत्रयाशङ्कानुपपत्तेः तदङ्गभूतानां दर्शपूर्णमासविकृतीनामपि प्रस्तुतसिद्धान्तन्यायेन ज्योतिष्टोमगतोपांशुत्वप्राप्तिं बाधित्वा दीक्षणीयोद्देशेन विशेषवचनविहितेषु स्वरेषु तेनैव न्यायेन साङ्गानां प्राप्तेषु 'मन्द्रं प्रातःसवने चरन्तीत्यादिविशेषवचनैः सवनविभागे विहितानां मन्द्रादि') स्वरकाणामुच्चारणानां सर्वेषां ज्योतिष्टोमाङ्गानामपि गुणमुख्यव्यतिक्रमन्यायेन प्रतिस्वं साङ्गं प्रयोगं प्रयोगं त्रेधा विभज्य प्राकृतमन्द्रादिभिराज्यभागान्तत्वाद्यनादरात्सर्वथा साम्याभावेऽपि त्रेधा विभक्तयज्ञभागधर्म-

१. अयं पा० २ पु० ना०।

त्वेन तुल्यानां मन्द्राद्युच्चारणानां प्राप्तौ 'यत्किंचिदि'ति वाक्याच्च सर्वेषां दैक्षात्प्राचामुपांशुत्वप्राप्तौ प्रधानमात्रवाचिना शब्देनोद्दिश्य 'यावत्या वाचा कामयीत' तावत्याऽनुब्रूयादित्या'दिस्वरविशेषविधानात्प्रधानमात्रे स्वरविशेषात्तदङ्गेपूपांशुतेति व्यवस्था ।

दैक्षे तु मन्द्रयाज्यभागान्तमित्यादिविभागेन प्राप्तस्य प्राकृतस्य स्वरस्य गुणमुख्यव्यतिक्रमन्यायेन ज्योतिष्टोमगतोपांशुत्वप्रसङ्गाद्वारितस्य सवनविभागविहितेन मन्द्रादिस्वरेण गुणमुख्यव्यतिक्रमन्यायादेव दैक्षप्राप्तेनोभयानुग्रहायाज्यभागान्तादिविभागेन साङ्गंदैक्षप्रयोगं त्रेधा विभज्य प्रयोज्यतयाऽवगतेन प्रतिप्रसवः । प्राकृतस्य वा स्वरस्याङ्गभूते दैक्षे स्वरूपतः प्राप्तस्य प्रधानतः प्राप्तेन सवनविभागस्वरेण बाधात्सवनविभागतुल्यदैक्षविभागाश्रयणान्मन्द्रादिस्वरकस्योच्चारणस्य सम्पादनं कार्यम्, अनुबन्ध्यादिष्वपि सवनविभागस्वरद्वारप्राप्ता मन्द्राद्युच्चारणविशेषाद्दैक्षेण व्याख्याता इत्याह—**एवमिति** । तथा ज्योतिष्टोमस्येति तु पाठे तथा प्राप्ते सतीत्यध्याहार्यम् । ततो ज्योतिष्टोमस्येति पाठस्तु सुगमः । यत्किञ्चिदित्यनेनैवोपसत्स्वप्युपांशुता न युक्तेत्याशङ्क्योपसंहारे 'यत्किंचिदिति वीप्सार्थप्रतीतिविरोधापत्तेर्दक्षिणीयास्वरप्रशंसार्थत्वेन चार्थवत्त्वोपपत्तेर्नोपसंहारार्थत्वं सम्भवतीति सूचनायोपांशुपसत्स्वित्युक्तं विप्सार्थयत्किञ्चिच्छब्देन सर्वव्यापित्वोक्त्योपसंहारानर्हत्वं सूचितम् । सवनीयादिष्वपि साङ्गं प्रयोगं त्रेधा विभज्य मन्द्राद्युच्चारणानां दैक्षन्यायेनोचितत्वात्तदतिक्रमेणाऽनूबन्ध्यादिषु दैक्षन्यायातिदेशो न युक्त इत्याशङ्क्याह—**सुत्याकालेति** ।

मन्द्रं प्रातःसवने चरन्तीत्यादिवाक्यस्थानां सवनोक्तीनां सोमयागावयववाचित्वेन सवनीयादिवाचित्वाभावाद्यथा दीक्षणीयाद्युद्देशेन विहिताः स्वरास्तदङ्गेषु न भवति, यथा वा दीक्षणीयादिषु सुत्याकालबहिर्भूतेषु ज्योतिष्टोमाङ्गेषु सवनसम्बन्धेन विहिताः स्वरा न भवन्तीत्याशङ्कते—**ननु सवनशब्दानामिति** । सप्तम्या सवनानामाधारत्वप्रतीतेः कर्ममध्येऽनुष्ठानादेव च कर्मणामाधारत्वप्रसिद्धेः कर्मकाले चानुष्ठानं विनानुष्ठानस्य कर्ममध्यत्वासिद्धेः सवनकाले तत्प्रयुज्यते । तत्र सर्वत्र मन्द्रादित्रित्वावगमात् सवनीयादिष्वपि यथासवनमेव स्वरा भवन्तीति परिहरति—**नेति** ।

एतदेव व्यतिरेकतोऽन्वयतश्च यथाक्रमं श्लोकद्वयेन विवृणोति—**यदिति** । यत्प्रातःसवनस्याङ्ग चरन्ति, तन्मन्द्रमित्यङ्गव्यतिरेकजनितषष्ठ्याश्रयणात्सवनाङ्गमन्त्रप्रतीतिरभिमता । सवनानामाधारत्वमात्रविवक्षायां स्तोत्रशस्त्रयाज्यानुवाक्यादिरूपाणां सवनाङ्गमन्त्राणां सवनाख्यसोमयागावयवभूतावान्तरसमुदायावयवत्वेन सवनेभ्योऽत्यन्तभेदाभावादाधेयत्वानुपपत्तेर्वपया प्रातःसवने चरन्तीत्यादिवच्च सवन प्रत्याधेयत्वेनाश्रुतत्वान्न यथा सवनं मन्द्रादिस्वरः स्यामित्याशङ्कते—**केचिदिति** । व्यतिरेकतोऽन्वयतश्च यथाक्रमं श्लोकं व्याचष्टे—**आधार इति** । पष्ठीप्रयोजनस्य मन्द्रादिस्वरलाभस्य षष्ठ्यभावेऽपि सवनाधारत्वाविशेषेण स्तोत्रादिष्वप्यवगतत्वेन सम्भवात् स्तोत्रादौ मन्द्रादिस्वराभावापत्तिरूपो दोषो नास्तीति परिहरति—**इतीति** । अङ्गानङ्गविषया इत्युक्ते परिहारो-

ऽभिधीयतइत्याध्याहारेण योज्यम्। अत्यन्तभेदाभावेऽपि आधेयत्वं दृष्टान्तेनोपपादयन् श्लोकं व्याचष्टे—**यथा हीति**। अङ्गानङ्गविषया द्वयोक्तिः। त्याज्यानुवाक्यादिसन्निपत्योपकारिमन्त्रव्यतिरिक्तस्य स्वारादुपकारिणः स्तोत्रादेः कृत्स्नस्य मन्त्रजातस्य निःफलसवनाङ्गत्वायोगेन ज्योतिष्टोमाङ्गत्वावसायात्सवनीयाद्यङ्गान्तरवस्तोत्राद्यपि प्रत्याधारत्वमात्रम्। सवनानां, न तु प्रधानतेति सवनीयादितुल्यता वक्तुं शक्येत्याह—**यदि वेति**। सुत्योक्त्यात्र ज्योतिष्टोमो विवक्षितः। सवनान्तरगते सवनीयादौ स्तोत्रादौ च यथासवनस्वरमुपपादितमपूर्वे स्तोत्रादौ स्वरान्तरप्राप्तिक्रमोक्तिपूर्वमुपसंहरति—**नानेति**। सवनीयादिव्यावृत्तिशङ्कानिरासाय समस्तोक्तिः सुत्यकालीनान्यङ्गानीति मध्यमपदलोपीसमासः। सर्वेष्वेकाहाहीनसूत्रेषु ज्यौतिष्टोमिकस्वरन्यायमितिदिशति—**एतेनेति**।

सर्वत्र वाचनिकस्वरलाभव्युत्पादनेनानिष्टापत्तौ परिहृतायामुच्चैर्भवेत्यादिविहितस्य नानावेदस्वरस्य निर्विषयत्वं शङ्कते—**क पुनरिति**। को विषय इत्यर्थः। श्येनादावौद्गात्रादिसमाख्याप्राप्तस्य कर्त्तुः प्राकृताङ्गव्यतिरिक्तापूर्वाङ्गविषयत्ववत् नानावेदस्वरस्यापूर्वमङ्गविषयो भविष्यतीति परिहरति—**उच्यतइति**। एतदेव विवृणोति—**यदिति**।

येषां प्राकृतानामङ्गानां प्राकृतस्वरः तद्वत्यांविकृतौ चोदकेन प्रयोगवचनबाधात् प्रयोगवचनं च विनाङ्गप्रधानधर्माप्राप्तेरपूर्वेऽङ्गस्ववेदस्वरोपपत्तिसूचनार्थं प्राकृततेत्युक्तम्। प्रयोगवचनस्याबाधाभ्युपगमेऽपि वेदान्तरीयतोक्ता। सविषयइति पूरणीयम्। प्राकृतेष्वङ्गेषु चोदकप्राप्तेन स्वरेण प्रयोगवचनप्राप्तस्वरबाधऽप्यपूर्वेऽङ्गे चोदकाप्रवृत्तेः प्रयोगवचनप्राप्तस्वरबाधायोगात् वेदान्तरीयैश्चाङ्गवाक्यैः प्रत्यक्षैकवाक्यत्वाभावेऽप्यङ्गाङ्गिनामन्योन्यापेक्षाकल्पितैकवाक्यत्वशब्दाद्वेदान्तरीयेऽप्यङ्गे वेदान्तरीयप्रधानप्रधानप्रयोगविधिप्रवृत्त्युपपत्तेः गुणमुख्यव्यतिक्रमन्यायेन वेदान्तरीयेऽप्यप्रधानप्रयोगविधेर्वेदान्तरीयाङ्गैकवाक्यत्वायोगात् वेदान्तरीये अङ्गे प्रवृत्त्यनुपपत्तेः वेदान्तरीयेऽङ्गं प्रधानवेदस्वराप्राप्तिसूचनार्थं वेदान्तरीयेऽपूर्वेऽङ्गे प्रधानद्वारस्य स्वराख्यस्य धर्मस्य भावान्न सविषय इत्येवमपि पक्षे दूषयति—**नन्विति**।

समानवेदस्थं तर्ह्यङ्गप्रधानस्वराविरोधिस्वरत्वेनाबाध्यस्वकीयस्वरत्वान्नानास्वरविधिविषयोऽस्त्विति पक्षान्तरं शङ्कते—**एवं तर्हीति**। कण्टकवितोदनादेः प्रधानवेदविहितस्याव्यक्तः शेष इत्यनेन विषयत्वकल्पनादत्रापि समानवेदविहितस्यैव विषयतायुक्तेति सूचनार्थम्—**शेषेष्वित्युक्तम्**। अङ्गे नानावेदस्वरस्य प्रधानस्वराविरोधित्वं वदता प्रधानेऽवम्यं नानावेदस्वरविधिरभ्युपगन्तव्य इत्यापाद्य गुणमुख्यव्यतिक्रमन्यायात्प्रधानद्वारैवापूर्वेऽङ्गे तद्वेदस्वरलाभोपपत्तेरङ्गविषयस्वरविधेर्नैष्फल्यप्रसङ्गात् सोऽपि विषयो न भवतीत्येवमेनमपि पक्षं दूषयति—**सोऽपीति**।

प्रधानमेव तर्हि यथाप्रकृताप्राप्तशेषाङ्गकं स्वसमानवेदस्यापूर्वाङ्गान्तरकं विषयोऽस्त्विति पक्षान्तरं शङ्कते—**तदेव तर्हीति**। दार्शपौर्णमासिकेन मन्द्रयाज्यानागान्त-

मित्यादिना ज्योतिष्टोमिकेन वा मन्द्रं प्रातःसवनइत्यादिना स्वरेण तस्य प्रधानस्यावरुद्धत्वात्सोऽपि विषयो न भवतीत्येवमेतमपि पक्षं दूषयति—**नेति**।

प्रधानस्यात्मीयवेदस्वराभावे प्राकृतस्य स्वरस्य प्राकृताङ्गमात्रान्वयित्वेनापूर्वाङ्गान्वयानुपपत्तेः प्रधानद्वाराङ्गे स्वरलाभायोगात् अङ्गमेव तर्हि विषयो भविष्यतीत्यपूर्वाङ्गविषयवाद्येव पुनः प्रत्यवतिष्ठते—**न तर्हीति**। प्रधानद्वारापूर्वाङ्गस्य नानावेदस्वरप्राप्त्यभावेऽपि यः प्रधानस्य प्राकृतस्वराख्यो धर्मः, तस्यैव देशादिवत्प्रयोगाङ्गत्वेन प्रकृतिवद्धिकृतावपि प्रयोगवचनाश्रयत्वावगतेरपूर्वेऽप्यङ्गेऽभावान्नाङ्गं नानावेदस्वरविधिविषय इत्येवं परिहरति—**नैवमपीति**। (९-१-२०)

प्रकृतस्य स्वरस्य च यज्ञभागधर्मतयाऽदेशबद्धमुपांशुत्वमिति नवमाधिकरणन्यायेन स्थितत्वाद्यज्ञभागपतितस्यापूर्वस्याप्यङ्गस्य प्राकृतस्वराख्यधर्मलाभोपपत्तेर्नापूर्वमङ्गं नानावेदस्वरविधिविषय इत्याह—**अपि वेति**। ननुत्सरा वा एष यज्ञस्य तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीत्युदाहृत्य उपांशुताग्नीषोमीयप्राग्भाविपदार्थधर्मो, यज्ञभागधर्मो वेति सन्दिग्धे यज्ञशब्दस्य प्रयोजनवत्तरत्वादर्थवादस्थत्सराशब्दत्यागेन विध्युद्देशस्थप्राचीनशब्दान्वयप्रतीतेर्यज्ञभागधर्मत्वं पूर्वपक्षयित्वा, तस्मादित्यादिपदव्यवधानेन यज्ञस्य प्राचीनमित्यन्वयायोगात् प्राचीनस्य चोद्देश्यत्वेन विशेषणानपेक्षत्वाद्यज्ञभागस्य चैकत्वात् यत्किञ्चिदिति बहुविषयविप्सार्थप्रतीत्ययोगापत्तेर्यज्ञस्य त्सरेत्यन्वयेऽपि स्तुत्यर्थत्वेनार्थवत्त्वोपपत्तेः पदार्थधर्मत्वस्य तस्मिन्नधिकरणे सिद्धान्तयिष्यमाणत्वात् कथं तेन न्यायेन मन्द्रादिस्वरस्य यज्ञभागधर्मतास्थितेत्याशङ्कानिरासार्थम्—**त्रेधेत्युक्तम्**।

यत्किञ्चित्प्राचीनमित्यत्र यज्ञशब्दान्वयाद्यज्ञभागधर्मत्वे निराकरिष्यमाणेऽपि प्रातःसवनादिशब्दानां यज्ञभागवाचित्वादाज्यभागान्तादिशब्दानामप्येकवचनान्तत्वेनाञ्जसा यज्ञभागवाचित्वावगतेः नवमाधिकरणपूर्वपक्षन्यायेन मन्द्रादेर्यज्ञभागधर्मताऽत्रसीयत इत्याशयः। यूपावटस्तरणबर्हिषः प्राकृतलवनादिधर्मानन्वयवत् अपूर्वस्याङ्गस्य प्राकृतस्वरानन्वयशङ्कानिरासायऽपूर्वस्याप्यङ्गस्य प्राकृतयज्ञभागाख्यकार्यारम्भकत्वेनाप्राकृतकार्यबर्हिषस्तुल्यत्वे निरस्तम्। नानावेदस्वरस्य निर्विषयत्वशङ्कामुपसंहरति—**तस्मादपीति**। ज्योतिष्टोमे च नानावेदस्वरनिवेशे सति वाक्यबलीयस्त्वाद्धन्यत्र निवेशोऽपित्यान्तनं ज्योतिष्टोमप्रकरणाम्नानार्थक्यापत्तिर्ज्योतिष्टोमनिवेशाभावत्वेऽत्यन्तानर्थक्यं स्यादित्याह—**प्रकरणेति**।

शङ्काद्वयस्यापि परिहारं प्रतिजानीते—**अत्रेति**। सर्वेषां दर्विहोमानामपूर्वत्वेन प्राकृतधर्माग्राहित्वात्प्रायशब्दश्च याजुर्वेदिकत्वादङ्गभूतेषु प्रधानद्वारस्वरप्राप्तावपि स्वतन्त्रेषु दर्विहोमेषु उपांशु यजुषेति विधानमर्थवदित्याह—**उपांश्विति**। एवं निर्विषयत्वशङ्कापरिहारेऽपि ज्योतिष्टोमे निवेशाभावात् प्रकरणाम्नानानर्थक्यशङ्काऽपरिहृता स्यादित्याशङ्क्य ऋक्सामवेदस्वरविधानयोर्नैमित्तिकं ज्योतिष्टोमाङ्गे, काम्ये चानङ्गेऽपि ज्योतिष्टोमाङ्गाश्रितत्वादन्तः क्रतुप्रयोज्ये सार्थकत्वात् ज्योतिष्टोमप्रकरणाम्नानार्थवत्त्वोपपत्तेस्तत्साह-

चर्यादस्यापि प्रकरणाम्नानमर्थवद्भविष्यतीति सूचनार्थस्तावच्छब्दः । इतरयोरपि स्वरयोः काम्यनैमित्तिकेषु ज्योतिष्टोमाङ्गेषु निवेशेन सविषयता अन्तर्ज्योतिष्टोमप्रयोगाच्च प्रकरणाम्नानार्थवत्तेत्याह—**ऋक्सामेति** । वेदनिमित्तस्वरलक्षणार्था वेदोक्तिः कस्याश्रितत्वलक्षणाङ्गोक्तिः । तत्र विशेषविहितमन्द्रादिस्वरसद्भावात् नार्थवत्तेत्याशङ्कानिरासपूर्वमेतदेव विवृणोति—**मन्द्रमिति** ।

सामवेदविहितं प्रवर्ग्याङ्गमहावीरभेदनिमित्तकमङ्गमुदाहरति— **तथेति** । एकपदार्थत्मकत्वेनाभिमर्शनस्याग्नीषोमीयवत्त्रेधा विभागायोगात्सुत्याकालत्वाभावेन च सवनीयादिवद्यथासवनमेकस्वरत्वायोगात्प्रधानद्वारस्वराप्राप्तेरात्मीयवेदस्वराबाधादुदाहरणत्वाविरोधेऽयमन्त्रकत्वे स्वरविषयत्वायोगापत्तेर्मन्त्रप्रतीकग्रहणनैमित्तिकवर्णवर्गेदिकस्य, काम्यस्य चोभयविधस्योदाहरणस्य सूचनाय आदिशब्दः । यजुर्वेदविहितत्वनिमित्तमुपांशुत्वमप्येवंविधयजुर्वेदविहितैकपदार्थात्मककाम्यनैमित्तिकाङ्गविषयमुदाहार्यमित्याह—**एवमिति** ।

सुत्योत्तरकालेषु वानुबन्ध्यादिषु ज्योतिष्टोमाङ्गेषु मध्येऽवभृथाङ्गभूतानां साम्नामादिशब्दोक्तानां चानुबन्ध्यादिसाम्नां, परिसामाख्यानां परितःसामानातिव्युत्पत्त्याऽवभृथादिप्रयोगाद् बाह्यत्वावगतेरवभृयादिप्रयोगविधिविधेयत्वाभावेनावभृथादिद्वारस्वरप्राप्त्यभावात्साक्षाज्ज्योतिष्टोमाङ्गत्वाभावेन चाग्नीषोमीयादिवत्सवनविभागस्वरेण विषयतया ग्रहणाभावाद् बाधकाभावेन स्वरूपतः प्राप्तो यथावेदमेव स्वरो युक्त इति कृत्वा नानावेदस्वरोपदेशादुच्चैस्त्वसिद्धेः नानावेदस्वरोपदेशस्य निर्विषयत्वं प्रकरणाम्नानर्थक्यं वा नास्तीत्याशयेनोदाहरणान्तरमाह—**तथेति** । सवनविभागविहितमन्द्रादिस्वरलक्षणार्था सवनोक्तिः । सुत्योत्तरकालत्वात्प्राचीनभागविहितोपांशुत्वप्राप्त्यभावे सवनविहितेन च स्वरेण विषयतया ग्रहणाभावान्मन्द्रादिस्वराभावे पारिशेष्यादुच्चैस्त्वसिद्धेः वेदस्वरविध्यानर्थक्यमाशङ्क्याह—**अन्यथा हीति** । परिसामसु प्रयोगसमवायिस्वराभावे दीक्षणीयाद्यङ्गप्रयोगसमवाय्युपांशुत्वं न स्यादित्याशङ्क्याह—**दीक्षणीयादीति** । दीक्षणीयादिपरिसाम्नां दीक्षणीयादिप्रयोगानन्तर्गतत्वेऽप्यग्नीषोमीयप्राचीनत्वाविशेषादुपांशुतेत्याशयः ।

प्रवर्ग्यसाम्नामपि तद्ध्यग्नीषोमीयप्राचीनत्वात्प्रवर्ग्यप्रयोगबहिर्भावाच्च प्रवर्ग्यस्वरोच्चैस्त्वाप्राप्तेः उपांशुत्वं स्यादित्याशङ्क्याह—**प्रवर्ग्येति** । करणविभक्त्या साङ्गस्योच्चैस्त्वविधानात् प्रवर्ग्यप्रयोगबहिर्भावेऽपि च पशुप्रयोगबहिर्भूतस्य दीक्षाकालिकस्य यूपच्छेदनस्य पश्वङ्गत्वाविरोधवत् प्रवर्ग्यसाम्नां प्रवर्ग्याङ्गत्वाविरोधादुच्चैस्त्वमित्याशयः ।

प्रासङ्गिकं परिसमाप्य, साङ्गप्रधानसंयोगादुपांशुत्वं तु गम्यतइत्येतेन प्रकृतमेवं तर्हि स्वयमेवाङ्गानां याजुर्वेदिकत्वादुपांशुत्वं, न गुणप्रधानधर्मविरोधद्वारमिति शङ्कानिरासमुपसंहरति—**प्रधानेति** । शङ्कानिरासोपसंहारवत्सूचनार्थस्तुशब्दः ।

परमतेन वर्णितमधिकरणं आधानसाम्नां यजुर्वेदविहितत्वेन वेदान्तरीयत्वाभावादुदाहरणत्वायोगेन तावद् दूषयति **य इति** । सामवेदेनैवदुक्रियते यद्वारवंतीयादीभिरिति

भाष्ये वारवन्तीयादिसामरूपं यद्गानं पठ्यते, तत्सामवेद इति करोतेः पाठार्थत्वाद्वारवन्तीयादिभिरिति तृतीयायाश्चेत्थम्भूतलक्षणार्थत्वात्स्वरूपपाठमात्रं सामवैदिकमपेक्ष्योपचारात्सामवेदेन क्रियतइत्युपन्यासो न तु लिङ्गादिव्यापारात्मिकायां विधानक्रियायां, कारकहेतुं सामवेदमभिप्रेत्येति स्वमतेनोदाहरणं समर्थयितुमाह—तत्रेति। पाठस्य शब्दाभिव्यञ्जकत्वेनोत्पादकत्वोपचारोपपत्तेरुत्पादनवाचिकरोत्यर्थत्वसम्भवसूचनायोत्पत्त्युक्त्याऽस्मिन् व्याख्याने पाठो विवक्षितः। एवं पूर्वपक्षभाष्यव्याख्ययोदाहरणसमर्थने सति पाठवेदधर्मो बलीयान्, विधिवेदधर्मो वेति चिन्तापत्तेः गुणे स्वरूपतः प्राप्तमुख्यद्वारप्राप्तयोर्विरोधे चिन्ताभावात्सौत्रौ गुणमुख्यशब्दौ नोपपद्येयातामिति कृत्वा कस्यां चित्सामवेदे शाखायामप्याधानसाम्नां विधिकल्पनेनोदाहरणं समर्थनीयमिति परमतेनाह—तत्त्विति। उपपत्त्युक्त्यात्र शब्दाभिव्यञ्जकत्वेन पाठस्योत्पादकत्वोपचारात् पाठो विवक्षितः। विनियोगोक्त्या च विशिष्टोऽसाधारणो नियोग इतिव्युत्पत्त्या सर्वाङ्गप्रधानसाधारणप्रयोगविधिव्यावृत्त्यर्थमुपत्तिविधिप्राप्तात्मिकानेकपदार्थविषयत्वेनासाधारणत्वाद्विवक्षितः। सामवेदशाखायामाधानविधौ सत्यध्येतृभेदाभावाद्यजुर्वेदे पुनः श्रुत्यानर्थक्यापत्तेः शाखान्तरीयविधिवद्वेदान्तरीयाणामप्येकार्थानां विधीनां विकल्पेन विधायकत्वाभ्युपगमे विकल्पेन पूर्वपक्षकरणापत्तेरनुदाहृतसामवैदिकविधिकल्पनायोगाच्चैतत्समर्थनानुपपत्तेरुत्पत्तिविनियोगबलाबलस्यैव चिन्तनीयत्वादपठितानां मन्त्राणामज्ञातस्वरूपत्वाद्विनियोगाशक्तेः पाठस्य विनियोगं प्रत्युपकारित्वात् पाठाख्यामुत्पत्तिं गुणशब्देन, मुख्यशब्देन च पाठं प्रत्युपकार्यत्वलक्षणात्प्राधान्यात्प्राथम्याद्वोत्पत्तिविधिं विवक्षित्वाधिकरणं वक्ष्यमाणप्रकारेणारम्भणीयमिति परमतनिरासपूर्वं स्वमतेनाधिकरणवर्णनं प्रतिजानीते—तदा त्विति।

कीदृगारभ्यतइत्यपेक्षायां विषयसन्देहपूर्वपक्षसिद्धान्तान् सहेतुकान्सङ्क्षेपेणाह—यत्त्विति। भाष्यमपि पाठवेदस्वरानुरोधेन, वेदस्वरानुरोधेन वा पाठवेदस्वरमिति जिज्ञासायां पाठवेदस्वरो बाधयितुं युक्तो विधिवेदस्वरश्चानुग्रहीतुं युक्त इत्येतावद् गुणोक्त्या पाठवेदस्वरो, मुख्योक्त्या च विधिवेदस्वरो विवक्षित इत्येवं व्याख्याय, शेषं विधानार्थत्वात्पाठस्य विधीयमानस्यैव च मन्त्रस्य स्वरापेक्षत्वाद्विधानकालावगतस्यैव स्वरस्य यादृक्सामवेदाभ्यां विधीयते, तदुच्चैः प्रयोज्यं, यजुर्वेदेन यद्विधीयते, तदुपांश्वित्येवं चोदनार्थत्वावगतेः यदृक्सामवेदयोः पठ्यते तदुच्चैः यजुर्वेदे पठ्यते तदुपांश्वित्येवं विधानाभावात् पाठकरणेन विधिविषयाख्यगुणयुक्तः सम्पद्यतामित्येतदर्थमध्येता पाठे प्रवर्त्तते। तत्र चेत्स्वरचोदनार्थाज्ञानात्पाठवेदस्वरप्रवृत्त्या विधि वेदस्वरहानिर्भवति ततश्चोदिताकरणात्फलमेव नावाप्तं भवति। विधिवेदस्वरानुष्ठानात्तु पाठवेदस्वरहानौ तस्याचोदितत्वान्न स्वार्थहानिः। गुणश्च सामगानं पाठात्मकं, प्रधानमाधानम्। आधानाङ्गत्वेन विधीयमानं तस्य च याजुर्वेदिकत्वादुपांशुता गुणः स सामवेदाख्यपाठवेदधर्ममुच्चैस्त्वं बाधेतेत्येवं व्याख्येयम्। भाष्यानुसाराद्व्यतिक्रमशब्दं बाधवाचिनं सन्देहोक्त्यर्थत्वाद्वा विरोधवाचिनमभिप्रेत्य नियममात्रेण च पूर्वपक्षं कृत्वा, स्वयं व्यभिचारवाचो व्यति-

क्रमशब्दो नियमविकल्पाभ्यां च पूर्वपक्ष इत्येतावताऽन्यर्थाधिकरणं वर्णयति—अथ वेति।

सामान्यतो वेदान्तरीयाङ्गमात्रविषयत्वादस्याधिकरणस्य कृत्वा चिन्तयाऽधानसामोदाहरणमित्याशयेनोक्तमेव परमतेनाधिकरणार्थं स्वरूपतो दूषयितुं स्मारयति—अथ वैवमिति। स्वरूपताङ्गविधायिना वेदेनाङ्गस्य स्वरविधावुपलक्षणं बलवत्प्रधानद्वाराङ्गविधायिना वेति चिन्तायां गुणे स्वरूपतो धर्म इत्यनेनैव न्यायेन प्रधानद्वाराङ्गविधायिनेति निर्णयात्प्रात्यात्मिकवेदधर्मबाधेन प्रधानवेदधर्मः कार्य इत्यधिकरणार्थो व्यपदेशद्वारोक्तः। प्रधानद्वाराऽङ्गे प्राप्तेन धर्मेण स्वरूपतः प्राप्तस्य धर्मस्य बाधपक्षे प्रकृतौ ज्योतिष्टोमे वेदान्तरीयेषु स्तोत्रशस्त्रादिष्वङ्गेषु तद्ग्रहणाद्वेति तच्छब्दपरामृष्टप्रात्यात्मिकवेदसमाख्याप्राप्तकर्त्तारं विकृतौ तत्सूत्रव्युत्पादितबलीयस्त्वप्रात्यात्मिकचोदकप्राप्तकर्त्तारं बाधित्वा प्रधानवेदसमाख्यानकर्तृप्राप्तेः स्थितसिद्धान्तबाधप्रसङ्गात् नैवं चिन्ता युक्तेत्याह—**एतस्मिंस्त्विति**। यथाचोदकप्रापिताङ्गग्राहित्वात्प्रयोगवचनश्चोदकात् दुर्बलः, तथा प्रात्यात्मिकोपदेशरूपविधिप्रापिताङ्गग्राहित्वात्ततोऽपि दुर्बल इति सूचनार्थं चोदकबलीयस्त्वव्युत्पादनार्थः सूत्रोपन्यासः। प्रात्यात्मिकाङ्गविधेरतिदेशस्य च प्रापकत्वेन बलीयस्त्वात्प्रकृतौ विकृतौ चाङ्गवेदसमाख्यातकर्तृग्रहणेऽनुस्वरस्याप्यङ्गवेदसमाख्यातस्यैव ग्राह्यत्वापत्तेः प्रधानस्वरग्रहणं न युक्तमित्याह—**अथेति**। करोतेः प्रयोगवाचित्वाद्यजुर्वेदेन यत्प्रयुज्यते, तदुपांश्विति प्रयोगविधिविहितस्थापांशुधर्मकत्वप्रतीतेर्याषु वैदिकप्रयोगविधिविहितत्वेनोपांशुतैवाधानसाम्नां युक्तेति यत्प्रयोगवचनपरिगृहीतत्वादन्यत्राप्युत्पन्नानामङ्गानां यत्रैव प्रधानं, तत्रैव विधिरिति वार्तिकेनोक्तम्। तन्निराससूचनायैवकारः। प्रधानप्रयोगविधिविधेयत्वेऽङ्गानामेकादशे वक्ष्यमाणोऽपि दर्शपूर्णमासाभ्यां स्वर्गकामोयजेतेत्यादेः केवलस्याङ्गवाचिशब्दरहितत्वेन साङ्गप्रधानप्रयोगविधानाशक्तेः करणविभक्तिनिर्देशात्साङ्गत्वावगमेऽप्यङ्गविशेषानवगतेः, साङ्गत्वस्य वैकाङ्गसाहित्यमात्रेणाप्युपपत्तेः, सर्वाङ्गोपसंहारानादरप्रसङ्गात् श्रुत्यादिस्मृत्याचारपर्यन्ताङ्गप्रापकसर्वप्रमाणसहितस्यैव दर्शपूर्णमासादिवाक्यस्य साङ्गप्रधानप्रयोगविधायित्वाद्घोषस्य च पदान्तरस्य पारार्थ्यादाख्यातं योऽपि मन्यते।

'वाक्यं प्राधान्ययोगेन वाक्यार्थं चापि भावनाम्'

इत्याख्यातस्य वाक्यतोद्घोषवत् प्राधान्यमात्रेणोपपत्तेस्तादृशस्य चानाम्नातत्वेनोहादेर्मन्त्रत्ववद्वेदत्वाभावाद्यजुर्वेदेन यत्प्रयुज्यते, तदुपांश्विति वाक्यार्थानुपपत्तेर्यजुर्वेदेन यद्विधीयते, तदुपांश्वित्येष एव वाक्यार्थो युक्त इत्याशयः करोतेश्च विधिवाचिनस्तद्विशेषप्रयोगविधिपरत्वे सत्युत्पत्तिविधिपरत्वायोगेनाङ्गे स्वरूपतो धर्मप्राप्तेस्त्वस्य प्रधानद्वारप्राप्तेन धर्मेण सह बलाबलचिन्ता न युज्येत।

उत्पत्तिविधिवाची करोतिः, प्रयोगविधिवाची वेति चिन्तायां तु गुणे स्वरूपतो धर्म इत्यादिग्रन्थानुपपत्तिः तस्मात्पाठार्थः करोतिर्विधानार्थो वेति सन्दिह्यात्पादनार्थत्वात्करोतेः

पाठस्य च शब्दाभिव्यञ्जकत्वेनोत्पादनत्वोपचारोपपत्तेर्विधानेऽत्यन्ताप्रसिद्धवाचकशक्ति-कल्पनायोगात्पाठार्थः करोतिरिति पूर्वपक्षयित्वा पाठे वेदस्य करणत्वायोगादृचेत्यादि-तृतीयाभङ्गापत्तेः, करोतेस्तु लक्षणया क्रियाप्रवृत्तिहेतुभूतविशेषापेक्षायां प्रयोगविधेः कल्प्यत्वेनैवदविशेषव्यपदेशायोगस्योपपादितत्वात्—

कार्ये ज्ञातेऽधिकारः स्यादिति

चाधिकारज्ञानस्य प्रयोगविध्यधीनकार्यज्ञानपूर्वकत्वाभिधानेनाधिकारविधेः प्रयोगविधि-पूर्वकत्वावसायात्सुतरां वेदविशेषव्यपदेशायोगावगतेरुत्पत्ति विनियोगविध्योरन्यतरो विधि-विशेषो विवक्षित इति भगवतः उत्पत्तिविधौ करोतिसामञ्जस्यात्, तस्यैव च प्राथम्या-दुत्पत्तिविधानार्थः करोतिरिति सिद्धान्तयितव्यमिति सूचयन् किं करोतिः पाठार्थत्वात्पाठ-वेदधर्मकार्यो, विधानार्थत्वाद्वा विधिवेदधर्म इत्येषैव व्याख्या शोभनेत्याह—**अत इति।** पाठाख्यामुत्पत्तिं करोतिवाच्यां पूर्वपक्षे अभिप्रेत्य, सिद्धान्ते विधानं करोतिवाच्यमभिप्रेत्य किमुत्पत्तिवेदधर्मः कार्यो, विधिवेदधर्मो वेत्येष विचार इत्यर्थः। वाच्यलिङ्गानपेक्षता-ऽऽद्येनैवकारेण व्यावर्त्तिता। एवं च सामवेदपठितत्वादाधानसाम्नां युक्तोदाहरणतेत्याह—**तथा चेति।** गुणानुष्ठानेन मुख्यः सगुणः कथं स्यादित्यादिभाष्यानुसारादङ्गप्रधानधर्म-विरोधार्थतया गुणमुख्यव्यतिक्रमशब्दः कस्मान्न व्याख्यात इत्याशङ्क्याह—**यदि त्विति।** अपौनरुक्त्यसम्भवः सम्प्रधारणीय इति मृदुतयोक्तः ॥ ९ ॥

इति द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम् ।

भा० प्र०—वेद के अनुसार स्वर की व्यवस्था कही गई है। अब यह विचारणीय है कि मुख्य कर्म किसी वेद का है और उसका अङ्ग अन्यवेदीय है, ऐसी स्थिति में उस अङ्ग के मन्त्र में किस वेद का स्वर प्रयोज्य होगा यही विचारणीय है, कारण, उन स्थलों में गुण और प्रधान के मध्य में विरोध प्राप्त है, जैसे आधान = अग्न्याधान यजुर्वेद में कहा गया है, उसमें वामदेव्य आदि साम उसके अङ्ग के रूप में गेय विहित है, यहाँ पर प्रधान कर्म आधान यजुर्वेदीय है एवं अङ्गकर्म वामदेव्यादि गान सामवेदीय होने से प्रधान कर्म के विधायक यजुर्वेद के अनुसार उपांशु = अबुध स्वर में वामदेव्यादि का गान कर्तव्य है या अङ्ग के आकार सामवेद के अनुसार उच्च स्वर में गान कर्तव्य है—यह संशय है। इस प्रसङ्ग में पूर्वपक्षी का कहना है कि इन स्थलों में गान का अपने वेद के अनुसार उच्च स्वर में ही गान कर्तव्य है, कारण, सामवेद के द्वारा उच्चैस्त्व धर्म साक्षात् विहित होता है, अतः उसकी शीघ्र प्राप्ति है, यजुर्वेदीय उपांशु स्वर प्रधान कर्म का आश्रयण कर उसके द्वारा ही विधान करता है, अतः विलम्ब से प्राप्त है, इसलिए मुख्य = प्रधान कर्म यजुर्वेदीय होने पर भी शीघ्र प्राप्त सामवेदीय स्वर में ही अर्थात् उच्च स्वर में ही वामदेव्यादि गान सम्पादन योग्य है।

इसके उत्तर में सिद्धान्ती का कहना है कि "गुणमुख्यव्यतिक्रमे मुख्येन वेदसंयोगः", इस स्थल में गुण एवं प्रधान के मध्य में अर्थात् अङ्ग एवं अङ्गीय के मध्य में विरोध

होने से मुख्य अर्थात् अङ्गी प्रधान कर्म है, उसी के अनुसार उसके अपने वेद के स्वर का प्रयोग होगा, क्योंकि, "तदर्थत्वात्" कारण, गुण प्रधान के प्रयोजन का निर्वाह करके ही सफल होता है, क्योंकि, उसका कोई स्वतन्त्र प्रयोजन नहीं रहता है, अतः इस स्थल में उच्चैस्त्व प्रधान का अङ्ग जो वामदेव्यगान उसका अङ्ग होने पर भी फलतः वह प्रधान का ही प्रयोजन निर्वाह करता है, इसलिए प्रधान का ही अङ्ग होता है, विधि के यह साङ्ग कर्म ही विहित होने से अङ्ग का वैगुण्य प्रधान का ही वैगुण्य होने से बिलम्ब से प्राप्त होने पर भी इस स्थल में यजुर्वेदीय स्वर में अर्थात् उपांशु = अनुच्च स्वर में वामदेव्यादि गान कर्तव्य है।

वार्तिककार ने इस स्थल में अन्य रूप में अधिकरण का वर्णन किया है। उनका कहना है कि भाष्यकार के मत के अनुसार अधिकरण का ग्रहण करने पर "अङ्गगुण-विरोधे च तादर्थ्यात्" इस सूत्र के द्वारा सूचित अधिकरण के साथ पुनरुक्ति होने से इस स्थल में उनके अनुसार उत्पत्ति और प्रयोग विधि के मध्य में विरोध होने पर क्या व्यवस्था होगी—यही इस सूत्र द्वारा सूचित है। यजुर्वेद और सामवेद के मध्य में यदि एक वेद में कर्म की उत्पत्ति विधि रहती है और अन्य वेद में विनियोग विधि पठित रहती है तो उस कर्म का मन्त्र क्या यजुर्वेद के अनुसार उपांशु पाठ्य होगा या सामवेद के अनुसार उच्च स्वर में पठनीय है। इस संशय में यदि पूर्वपक्षी यह कहता है कि उत्पत्तिविधि पूर्वभावी है अतः उसके अनुसार उत्पत्तिविधि के वेद के अनुसार ही स्वर होगा, ऐसी स्थिति में सिद्धान्ती का कहना है कि "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः" इस स्थल में गुण शब्द का अर्थ उत्पत्तिविधि और मुख्य शब्द का अर्थ विनियोग विधि है, विनियोग के लिए ही कर्म की उत्पत्ति श्रुत होने से विनियोग ही मुख्य है एवं उत्पत्ति गुण या गौण है। विनियोग के द्वारा ही कर्म की उत्पत्ति सफल होने से, केवल कर्म की उत्पत्ति में कोई प्रयोजन नहीं है, विनियोग परवर्तिकाल का होने पर भी प्रबल होने से उस वेद के स्वर के अनुसार ही मन्त्र पठनीय है।

"गुणमुख्यव्यतिक्रमे" गुण का एवं मुख्य का अर्थात् गुण के एवं प्रधान के मध्य में व्यतिक्रम अर्थात् विरोध होने पर "मुख्येन वेदसंयोगः" = मुख्य अर्थात् प्रधान रूप निमित्त अनुसार ही वेद का संयोग अर्थात् वेद संयुक्त स्वर होगा, "तदर्थत्वात्" = क्योंकि गुण तदर्थ अर्थात् प्रधान का ही प्रयोजन साधन है ॥ ९ ॥

### अथ तृतीयं वेदभेदेन श्रूयमाणेषु कर्मोत्पत्तिनिर्णयाधिकरणम्

## [३] भूयस्त्वेनोभयश्रुति ॥ १० ॥ सि०

**शा० भा०—यजुर्वेदे ज्योतिष्टोमं समामनन्ति, ज्योतिष्टोमेन स्वर्गकामो यजेत इति। तथा सामवेदेऽप्यस्यैवमेव समाम्नानम्। सकृच्च कृतायां बुद्धौ द्वितीयं**

गुणार्थं श्रवणं भवति । तत्र संदेहः ? किं यजुर्वेदिकमाम्नानं क्रियार्थं, सामवेदिकं गुणार्थम्, उत विपरीतमिति । [1]यतरच्चाऽऽम्नानं क्रियार्थं, तद्धर्मा भविष्यन्ति । किं तावत्प्राप्तम् ? सामवेदिकं क्रियार्थं, याजुर्वेदिकं वेत्यनिश्चयः, विशेषानवगमादिति । एवं प्राप्ते ।

ब्रूमः । भूयस्त्वेन गुणानां परिच्छिद्येत । यत्र भूयांसो गुणाः समाम्नाताः तत्र क्रियार्था चोदनेते गम्यते । यत्र हि कर्तव्यतया चोदना, तत्रेतिकर्तव्यताऽऽकाङ्क्ष्यते । यत्राऽऽकाङ्क्षितेतिकर्तव्यता तत्रेतिकर्तव्यतावचनं न्याय्यम् । ये च भूयांसो गुणाः, सेतिकर्तव्यता । तदितिकर्तव्यतालिङ्गेन कर्तव्यताचोदनामनुमिमीमहे । यथा बहुषु राजप्रतिमेषूपविष्टेषु यस्य श्वेतं छत्रं, बालव्यजनं च, स [2]राजेत्यवगम्यतेऽनाख्यातोऽपि राजलिङ्गेन । एवं कर्तव्यतालिङ्गेन गुणानां भूयस्त्वेन ज्योतिष्टोमस्य याजुर्वेदिकस्य चोदनाऽनुमीयते । तस्माज्ज्योतिष्टोमस्योपांशु प्रयोगः । यजुर्वेदेन हि ज्योतिष्टोमः क्रियते । यत्तेन चोद्यते । अचोदितं न शक्यते कर्तुमिति ॥ १० ॥ ज्योतिष्टोमस्य याजुर्वैदिकताधिकरणम् ॥ ३ ॥

इति तृतीयं ज्योतिष्टोमस्य याजुर्वैदिकताधिकरणम्

त० वा०—इदानीं यानि वेदान्तरेषु श्रूयन्ते प्रधानानि, तानि केन व्यपदेष्टव्यानीति विचार्यते । तत्रैष निर्णयो । यत्रोत्पद्यन्ते, न यत्र गुणार्थं श्रूयन्ते । किं प्राप्तम् ? शाखान्तरवत्सर्वत्रोत्पद्यन्ते । ततश्च धर्मविकल्पः ।

अथवोभयत्र स्वरूपस्य गुणानां च श्रवणात्कदाचित्किंचिदुत्पत्त्यर्थम् । एवं विकल्पप्राप्ती ।

उच्यते—

न शाखान्तरवद्युक्तो विकल्पो वेदगोचरः ।
तस्मादेको गुणार्थोऽत्र कश्चिदेको विधायकः ॥

स तु ज्योतिष्टोमादेः कतम इति ?

गुणानां यत्र भूयस्त्वमितिकर्तव्यतात्मकम् ।
तत्र तेनैव लिङ्गेन तस्य कर्तव्यतेष्यते ॥

यजुर्वेदे ज्योतिष्टोमस्य दीक्षणीयादिकेतिकर्तव्यता बह्वी । तस्मात्तत्रैवास्योत्पत्तिः । अतश्चासौ यजुर्वेदेन कियत इत्युच्यते । तेन प्रमीयमाणत्वात् तेन प्रमाणेन क्रियत इत्यर्थः ।

भूयस्त्वव्याख्यानस्य दूषणम्

---

१ ब. यत्राम्नानं ।  २ ब. राजेत्यनाख्यातोऽप्यनुमीयते ।

अथवा तेनैव व्यापारेणानुष्ठानमपि तेनैव क्रियत इति व्यपदिश्यते। न त्वेतद् भूयस्त्वव्याख्यानं युक्तम्। कुतः ?

यद्यस्य गमकत्वेन स्वशक्तेरवधारितम्।
तदल्पं बहु वा तस्य प्रतीतौ न विशिष्यते॥
यादृशस्य हि धूमस्य गमकत्वावधारणा।
स तादृग् बहुरल्पो वा वह्निं गमयति ध्रुवम्॥

तथेहेतिकर्तव्यता लिङ्गत्वेनोपन्यस्ता। सा यत्राप्यल्पा, तत्रापि कर्तव्यतया विनाऽनुपपद्यमाना शक्नोत्येव गमयितुम्।

नैव हीहाङ्गभूयस्त्वमितिकर्तव्यता मता।
किं तर्ह्यङ्गं यदेवाऽऽहुरितिकर्तव्यताऽपि सा॥

तत्र यदि वेदान्तरस्थप्रधानानुवादेनाऽल्पा विधीयत इति। उच्यते। शक्यं वक्तुं बह्व्यपि तथैव विधास्यत इति। तत्रैतत्स्यात्। अल्पा सुखं वेदान्तरस्थस्य विधीयते। बह्वी तु दुःखमिति। नैतदेवम्। बह्वृचामपि वाक्यबहुत्वस्य क्षमत्वात्। तस्मादकारणमित्येवं वर्णनीयम्।

### वार्तिकमतेन भूयस्त्वव्याख्यानम्

इह द्रव्यदेवताक्रियं कर्मस्वरूपत्वेनावधार्यं तच्च यजुर्वेदे सकलमाम्नायते। वेदान्तरे तु क्रियामात्रं संकीर्त्य स्तोत्रशास्त्रादीनि पठ्यन्ते। ततश्च द्रव्यदेवता-काङ्क्षित्वमपनीतमित्यशक्यं स्वतन्त्रक्रियाविधानम्। तथा च शाखान्तराधि-करणे व्याख्यातम्। यजुर्वेदे तु समस्तस्वरूपाम्नानाद्विनाऽपि स्तोत्रादिभिः शक्यते यागो निर्वर्तयितुम्। वचनसामर्थ्याददृष्टार्थानां स्तोत्रादीनां ग्रहणम्।

### वार्तिकमतेन सूत्रार्थवर्णनम्

अतोऽयं सूत्रार्थो यदुभयवेदश्रुति कर्म, तद्रूपभूयस्त्वेन सामस्त्येन निरा-काङ्क्षीकरणसमर्थेन निर्णतव्यमिति। ऋक्सामवेदयोश्च तुल्यधर्मत्वात्तद्गत-भेदोपादानं निष्फलमिति मत्वोभयश्रुतीत्युक्तम्॥ १०॥

इति वेदभेदेन श्रूयमाणेषु कर्मोत्पत्तिनिर्णयाधिकरणम्॥ २॥

### ॥ ज्योतिष्टोमस्य याजुर्वेदिकताधिकरणम्॥ ३॥

न्या० सु०—ज्योतिष्टोमस्यानेकवेदविहितत्वात् स्वरविकल्पः यजुर्वेदमात्रविहितत्वा-द्वोपांशुत्वैवेति भाष्योक्ता चिन्ता वाचनिकस्वरान्तरावरुद्धत्वेन ज्योतिष्टोमे नानावेदस्थस्वर-स्यानवकाशादयुक्तेत्याशङ्क्य, आग्निहोत्रं जुहोतीति यजुर्वेदे, 'सर्वं वा अस्य बर्हिष्यं सर्वं वा अस्य बर्हिष्यं 'सर्वं वा अस्य बर्हिष्यं सर्वं परिगृहीतं य एवं विद्वानग्निहोत्रं जुहोती'-

त्यृग्वेदे च श्रुतस्याग्निहोत्रस्य भाष्योक्तोदाहरणानादरेणोदाहरणतामनन्तराधिकरणसिद्धान्तोपजीवनेन च सिद्धान्तकरणादनन्तरसङ्गतिं सूचयितुमाह—**इदानीमिति**। यानि नानावेदेषु श्रूयन्ते, तानि केन वेदेन व्यपदेष्टव्यानीत्युदाहरणानादरः सूचितः। उच्चैस्त्वोपांशुत्वयोः पाठवेदधर्मत्वेऽनेकवेदपठितस्यैकस्य मन्त्रस्यानेकव्यपदेशनिराकरणाशक्तेः सिद्धान्तायोगप्रसङ्गात् विधिवेदधर्मत्वेऽनन्तराधिकरणेनोक्तेऽनेकवेदश्रुते केन वेदेन विहितमिति व्यपदेष्टव्यमिति चिन्ता सिद्धान्तसम्भवाद्युक्तेत्यनन्तरसङ्गतिसूचनायेदानीमित्युक्तम्। वाक्यीयविनियोगप्रकारचिन्ताशेषत्वात्तु लक्षणप्रकरणसङ्गती पूर्वाधिकरणवदस्यापि स्पष्टे। निर्गुणपुनःश्रवणस्यैकशाखास्थस्येव वेदान्तरस्थस्याप्यध्येतृभेदाभावेन भेदकत्वात्सन्देहायोगमाशङ्क्य, सन्देहोपपादनार्थं द्वितीयश्रवणस्य गुणार्थतां भाष्योक्तां स्ववाक्ये गुणानुपादानात् वाक्यान्तरस्थस्य च गुणस्य वाक्यान्तरेण विध्ययोगादयुक्तमाशङ्क्य, असरूपत्वेनोत्पादकत्वायोगाद्भेदकत्वानुपपत्तेरनुवादकत्वाभ्युपगमे चानर्थक्यापत्तेः प्रकरेण स्तोत्रशास्त्राद्यङ्गान्वयार्थो वेदान्तरीयस्थो विधिरिति सूचनायाविच्छिन्ने कथम्भावे यत्प्रधानस्य पठ्यते अनिर्ज्ञातफलं कर्म, तस्य प्रकरणाङ्गतेति प्रकरणस्य [1]कथसम्भावात्मकत्वाभ्युपगमात् प्रधानानीत्युक्तम्। व्यपदेशोक्त्या सामवेदविहितत्वधर्मः कार्य इति फलतश्चितोक्ता।

भाष्ये चैकावधारणाभावरूपानिश्चयोक्त्या विकल्पेन पूर्वपक्षकरणात्, उत कदाचिद्विपरीतमिति कदाचित्पदाध्याहारेण पूर्वपक्षवचनव्यक्तिर्व्याख्येया। इतरत्रेति भाष्यं चिन्ताप्रयोजनोक्त्यर्थत्वेन व्याचष्टे—**तत्रेति**। यस्मिन्वेदे स्वरूपेण विधीयन्ते, तेन व्यपदेष्टव्यत्वात् तद्वेदधर्मो भविष्यतीत्यर्थः। शाखान्तरवन्नित्यं सर्वेषु वेदेषूत्पत्तिप्रतीतेर्द्धर्मविकल्पाशयत्वेन तावत्पूर्वपक्षभाष्यं परमते व्याचष्टे—**किमिति**। शाखान्तरवदध्येतृभेदाभावात् नित्यं सर्वेषु वेदेषु उत्पत्त्यानर्थक्यापत्तेर्विशेषाभावे चान्यतरत्रोत्पत्त्यनिर्णयात् स्वमतेनोत्पत्तिविकल्पार्थत्वेन व्याचष्टे—**अथवेति**। पूर्वपक्षनिरासार्थत्वेनैवं प्राप्त इति भाष्यं व्याचष्टे—**एवमिति**। यथा शास्त्रान्तरे सर्वत्र नित्यकर्मोत्पत्तेर्विरुद्धैकादशद्वादशकपालत्वादिधर्मविकल्पः तथा वेदान्तरेऽध्येतृभेदाभावो सर्वत्र नित्यकर्मोत्पत्त्ययोगात् स्वराख्यधर्मविकल्पो न युक्त इत्याद्यपूर्वपक्षनिरासे वैधर्म्म्यदृष्टान्तः। नित्यवदाम्नानाच्छाखान्तरवत् वेदान्तरेऽप्युत्पत्तिविधिविकल्पेन युक्त इति द्वितीयपूर्वपक्षनिरासे वैधर्म्यदृष्टान्तः। अतोऽनेकवेदस्थविधायकमध्ये नित्यमेवैकः कश्चित् कर्मणा विधायकः, अन्यस्तु प्रकरेण गुणान्वयसिद्ध्यर्थमित्युत्तरार्द्धार्थः।

सूत्रव्याख्यार्थं भूयस्त्वनेत्यादिभाष्यं विशेषनिर्द्धारणहेतूक्त्यर्थत्वेनावधारणपूर्वं परमतेन तावद्व्याचष्टे—**सत्विति**। एकैकस्याङ्गस्य करणनिराकाङ्क्षीकारणाशक्तेरङ्गभूयस्त्वेनेतिकर्त्तव्यतेत्याशः। एकैकस्याङ्गस्येतिकर्त्तव्यतात्वाभ्युपगमे ये च भूयांसो गुणाः सा बह्वीतिकर्त्तव्यता। तस्माद् बह्वीति कर्त्तव्यतासान्निध्याख्यकर्मानुग्रहार्थं कर्त्तव्यता चोदनालिङ्गावगतेर्बह्वयेति कर्त्तव्यतया लिङ्गभूतया कर्त्तव्यताचोदनानुमानं युक्तमित्येवं परमतेनैवान्यथा

---

१. प्रधानेत्वधिकं २ पु०।

व्याचष्टे—**यजुर्वेद इति**। यजुर्वेदे ज्योतिष्टोमोत्पत्तावपि करोतिवाच्यस्यानुष्ठानस्य वेदत्रयाधीनत्वादेकवेदकार्यत्वव्यपदेशानुपपत्तेरेकवेदाधीनानुष्ठानस्यैव दर्विहोमादेर्नानावेदस्वरविषयत्वान्नागमात् ज्योतिष्टोमादौ स्वरचिन्ता न युक्तेत्याशङ्क्य विहितानुष्ठानाशक्तेर्यजुर्वेदेन यस्मात् ज्योतिष्टोमो विधीयत्तेन क्रियतइत्युच्यतइति करोतेरनुष्ठानहेतुविलक्षणार्थत्वात् ज्योतिष्टोमादेरेकवेदकार्यत्वव्यपदेशोपपत्त्युक्त्यर्थं यजुर्वेदेन हीति भाष्यमनुष्ठेयत्वप्रमापकत्वाद्विधेरनुष्ठानहेतुहेतुत्वमुपपादयन् व्याचष्टे—**अतश्चेति**।

यजुर्वेदेन ज्योतिष्टोमस्य कर्त्तव्यत्वप्रमा क्रियत इति कृत्वा यजुर्वेदेन विधीयमानो ज्योतिष्टोमस्तेन क्रियतइति करोत्यर्थो भवतीत्यन्वयः। यस्माद्यजुर्वेदेन विधीयते अविहितानुष्ठानाशक्तेश्चानुष्ठेयताज्ञापनरूपस्य विधानाख्यस्य लिङ्गादिव्यापारस्य वेदेन पुंसि प्रवर्तमाने द्वारतावसीयते। तस्मात्तेन क्रियतइत्युच्यतइति मुख्यार्थतयैव करोतिव्याख्यार्थमेतद्भाष्यमित्येवमन्यथा व्याचष्टे—**अथ वेति**। कर्त्तव्यत्वकरणाख्येनैव व्यापारेणानुष्ठानमपि यद्वेदाद्भवति, तद्वेदेन क्रियत इत्येवं व्यपदिश्यत इत्यर्थः। परमतेन भूयस्त्वव्याख्यां दूषयितुमुपशङ्कते—**नन्विति**। एकैकस्याङ्गस्येतिकर्त्तव्यताभूयस्त्वं लिङ्गमित्येतावद्व्याख्यां प्रश्नपूर्वं दूषयति—**कुत इति**। दृष्टान्तेनैतदेवोपपादयति—**यादृशस्य हीति**। दार्ष्टान्तिकं योजयति—**तथेति**। व्याप्तिमात्रापेक्षत्वेन भूयस्त्वानपेक्षत्वान्नायं भूयसी स्यात्स्वधर्मंमित्यस्य विषय इत्याशयः।

गुणभूयस्त्वैवेतिकर्त्तव्यतेत्याद्यां व्याख्यां दूषयति—**नैव हीति**। प्रत्येकं करणोपकारिणामेवाङ्गानामुपादेयत्वात् संहतानां प्रयोगो न तु संहतानामुपकारितेत्याशयः। एककैकस्याङ्गस्येतिकर्त्तव्यतात्वेऽपि वेदांन्तरस्थप्रधानानुवादस्यानुसन्धानक्लेशापादकत्वात् बह्वङ्गविधौ च क्लेशबहुत्वापत्तेर्वेदान्तरस्थप्रधानानुवादे वाऽल्पाया एव विधेयत्वस्योचितत्वात् भूयस्त्वायाः प्रधानविधिलिङ्गतेत्याशङ्कते—**तत्रेति**। एकाङ्गविधेये गुणार्थेन प्रधानविधिना अनुसन्धीयमानस्य बुद्धिविच्छेदकाभावेनाङ्गान्तरविधेये पुनरनुसन्धानानपेक्षत्वात् बह्वङ्गविधानेऽपि क्लेशाधिक्यं नास्तीत्याशयेन परिहरति—**उच्यतइति**। वेदान्तरस्थस्य वेदान्तरीयाङ्गापेक्षायां वेदान्तरीयाङ्गान्वयसिद्ध्यर्थं वेदान्तरीयप्रधानविध्यधीनत्वाभ्युपगमात् स्वतो वेदान्तरीयाङ्गानपेक्षत्वावगतेरनपेक्षितार्थविधेश्च क्लेशबहुत्वापत्तेर्भूयस्त्वस्य प्रधानविधिलिङ्गत्वं सङ्कते—**तत्रेति**। प्रधानस्य प्रत्येकमङ्गापेक्षायामङ्गाधिक्ये क्लेशाधिक्यापत्तिस्तस्य तु युगपत्सर्वाङ्गापेक्षाभ्युपगमाद्यावदङ्गवाक्यं सकृदपेक्षोत्पत्तेरङ्गवाक्यबहुत्वादेवाक्लेशेन बहुविधिः सेत्स्यतीत्याशयेन परिहरति—**नैतदिति**।

परव्याख्यादूषणोपसंहारपूर्वं स्वमतेन कर्मनिष्पत्त्युपयोगिद्रव्यदेवतारूपाङ्गसाकल्यार्थतया भूयस्त्वं व्याख्यातुं प्रतिजानाति—**तस्मादिति**। व्याचष्टे—**इहेति**। एतदेव तत्र हि द्रव्यदेवतारहिते कर्ममात्रं प्रस्तुतस्तोत्रशस्त्रयाज्यानुवाक्यादिमात्रं विधीयतइति शास्त्रान्तराधिकरणवार्त्तिकेन द्रढयति—**तथा चेति**। **यजुर्वेदे त्विति**। स्तोत्राद्यङ्गग्रहणं तद्धर्नर्थकं

स्यात् इत्याशङ्क्याह—**वचनेति** । व्याख्यातेऽर्थे सूत्रं योजयति—**अत इति** । त्रिष्वपि वेदेषु ज्योतिष्टोमाम्नानादुभयोक्तिरनुक्तेत्याशङ्क्याह—**ऋक्सामेति** ॥ १० ॥

इति तृतीयं ज्योतिष्टोमस्य याजुर्वैदिकताधिकरणम्

भा० प्र०—आशय यह है कि "स्वर्गकामो ज्योतिष्टोमेन यजेत" ( आप० श्रौ० १०।२।१ ) स्वर्ग की कामनावाला ज्योतिष्टोम याग करे इसका यजुर्वेद में एवं सामवेद में भी पाठ है। एक बार बुद्धि में उपस्थित हो जाने पर दूसरी बार का श्रवण गुण के विधान के लिए होता है। इसमें सन्देह है निर्दिष्ट पाठ क्रियार्थक है और सामवेद सम्बन्धी गुण के लिए हैं अथवा इससे विपरीत अर्थात् सामवैदिक क्रियार्थ और याजुर्वेदिक गुणार्थ है ? कौन सा पाठ क्रिया के लिए होगा ? कर्म में उसके धर्म होंगे। क्या प्राप्त है ? सामवैदिक क्रियार्थ है याजुर्वेदिक इसमें विशेष हेतु की प्रतीति होने से निश्चय नहीं है।

जिस वेद में कर्म की विधि = विनियोग है, उसी के अनुसार उस कर्म का स्वर आदि गृहीत होगा, इसका विचार होने के बाद प्रसङ्ग के अनुसार यह भी जिज्ञास्य है कि ज्योतिष्टोम में किस वेद का धर्म = स्वरादि अनुसृत होगा, कारण, ज्योतिष्टोम यजुर्वेद एवं सामवेद में भी उपदिष्ट है अर्थात् विहित है। पूर्वपक्षी का कहना है कि इसके धर्म के निरूपण करने के लिए किसी हेतु के न होने से यह अनिर्णीत ही रहेगा—इसके लिए स्वर का कोई भी नियम नहीं होगा।

इसके समाधान में सिद्धान्ती का कहना है कि "भूयस्त्वेन उभयश्रुति" उभयत्र ऋग्वेद सामवेद या यजुर्वेद में जो श्रुति अर्थात् श्रवण, उपदेश या विधि है, उन कर्मों का भूयस्त्व के अनुसार ही धर्म का निर्णय होगा। जिस वेद में देवता का उल्लेख एवं द्रव्य के बाहुल्य का निर्देश है उसके अनुसार ही इसके मन्त्र का धर्म निर्णीत होगा। सामद्रव्य एवं इन्द्र वायु आदि देवता यजुर्वेद में ही उपदिष्ट होने से यजुर्वेद का धर्म जो उपांशुत्व वही ज्योतिष्टोम में अनुसरणीय होगा, किन्तु सामवेद के अनुसार उच्चैस्त्व आदि अनुसरणीय नहीं होगा।

"उभयश्रुति" = उभयश्रुति अर्थात् उभयवेद में श्रुत उपदिष्ट कर्म, "भूयस्त्वेन" = भूयस्त्व अर्थात् देवता एवं द्रव्य के बाहुल्य के अनुसार उस वेद में विहित होने से समझना चाहिए। ( सिद्धान्त ) ॥ १० ॥

इति तृतीय ज्योतिष्टोम में याजुर्वेदिकता अधिकरण।

## अथ चतुर्थं प्रकरणाधिकरणम्

## [४] असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् ॥ ११ ॥ सि०

**शा० भा०—उक्तानि विनियोगकारणानि श्रुतिर्लिङ्गं वाक्यमिति। श्रुतिः, ऐन्द्र्या गार्हपत्यम्, इति द्वितीया विभक्तिः। लिङ्गं मन्त्रेषु वचनसामर्थ्यं 'बर्हि-**

देवसदनं दामि' इति। वाक्यम्, अरुणया क्रीणाति इति। अथ किमेतावन्त्येव विनियोगकारणानि ? नेत्युच्यते। किमपरं कारणमिति प्रश्नैवोपक्रमः। भवति च प्रश्नेनैवोपक्रमः। यथा का नामेयं नदी ? को नामायं पर्वतः ? किमिदं फलमिति ? तदुच्यते। असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्। यदसंयुक्तं श्रुत्या, लिङ्गेन, वाक्येन वा, तत्-प्रकरणात्, इतिकर्तव्यतार्थित्वात्। यदितिकर्तव्यताकाङ्क्षिणः संनिधौ पूरणसमर्थमुपनिपतति यद्वचनं, तत् [1]यत्तेन प्रकृतेन सहैकवाक्यतां याति। तस्मात्प्रकृते विनियुज्यते।

किमिहोदाहरणम् ? किंच प्रयोजनमिति। दर्शपूर्णमासौ प्रकृत्य श्रूयते। 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति'। तानि तत्रैव प्रकरणसामर्थ्याद्विनियुज्यन्ते, नाग्निहोत्रे, ज्योतिष्टोमे वा॥ ११॥

इति चतुर्थं प्रकरणाधिकरणम्॥ ४॥

त० वा०—एवं तावच्छ्रुति-लिङ्ग-वाक्यानि प्रधानज्ञेयसंकीर्णविविक्तविषयाणि प्रत्युदाहरणं व्याख्यातानि। तत्र विधिविनियोगाभिधानात्मिकायाः श्रुतेः, विनियोगसामर्थ्यात्मकस्य च लिङ्गस्य, केवलपदप्रयोगाभावात्पदान्तरसंनिधेरवश्यंभावित्वा द्वाक्यमन्तर्गतप्रायमेवेति न साक्षाद्ग्रहणेन सूचितम्।

अथवा 'वेदो वा प्रायदर्शनात्' इत्युपक्रमोपसंहारवशेनैव वेदधर्मत्वावधारणादिदमेव वाक्यविनियोगसूत्रमिति, न पूर्वान्तर्गतिमात्रेण वाक्यस्य विनियोगकत्वं व्याख्येयम्। यत्तु भाष्यकारेण 'अरुणया' इत्युदाहृतं, शक्यं तत्राप्यैन्द्रीवत्तृतीयाश्रुतिरेव विनियोजिकेति वक्तुम्। अथ क्रियामात्रसम्बन्धे श्रुत्या कृते विशेषसम्बन्धो वाक्येनेत्यभिप्रायः। स ऐद्रयामपि तुल्यः। तत्रापि ह्यैन्द्रयैत्युपस्थातव्यमात्रापेक्षणाद्गार्हपत्यमिति च साधनमात्रापेक्षित्वाद्विशेषसम्बन्धो वाक्येनैव। तस्मादुभयत्रापि तदन्तर्गतिः शक्या दर्शयितुमित्युभयोः श्रुतिवाक्ययोरुभयमुदाहरणम्। इदानीं बलाबलचिन्ता प्रत्यासन्नेत्युतराण्यपि त्रीणि प्रमाणानि स्वरूपेण विनियोगसामर्थ्येन च दर्शयति। तत्र प्रकरणं विनियोगाज्ञानसंशयविपर्ययाणामन्यतमेनोपन्यस्यति स्म। यावच्चान्यन्न कथ्यते तावदज्ञानं भवति। अथवा तदपि प्रसङ्गाभावान्नाऽऽख्यातं स्यादिति सन्देहः, अथवा नैवाक्षरश्रवण-तत्सामर्थ्यानुसरण-काङ्क्षितयोग्यार्थपदान्तरसंनिधानेभ्योऽन्यः शब्दप्रकारोऽस्ति। तस्मान्न प्रकरणादीनि प्रमाणान्तराणीति प्राप्ते—

---

१. क. तत्तेन।

अभिधीयते—

अविच्छिन्ने कथंभावे यत्प्रधानस्य पठ्यते।
अनिर्ज्ञातफलं कर्म तस्य प्रकरणाङ्गता॥

दर्शपूर्णमासाभ्यां स्वर्गं साधयेत्कथमित्येतस्यामाकाङ्क्षायामविच्छिन्नायामश्रुतप्रयोजनानि कर्माणि पठ्यन्ते 'समिधो यजति' 'तनूनपातं यजति' इत्येवमादीनि। ततश्च दर्शपूर्णमासयोः कुतश्चिदनुग्रहसिद्ध्या भवितव्यम्। प्रयाजादीनां च केनचित्साध्येन। न च दर्शपूर्णमासयोः सिद्धमुपकारं स्वपदस्ववाक्यस्वप्रकरणान्तरेषु प्रत्यक्षादिपञ्चकेन प्रत्यक्षादिपञ्चकावगतेन वा शब्देनोपलभामहे। तथा प्रयाजादीनामवश्यं चोभयेनापि कुतश्चिद्भवितव्यम्। यदि तु केनचित्प्रकारेण नावगमिष्यामः ततो नास्तीत्यवगमिष्यामः। अस्ति च प्रमाणं प्रकरणम्। न ह्यत्यन्तसंनिकर्ष एवैकं सम्बन्धकारणम्। यथा यथा हि संनिकृष्टं न लभ्यते, तथा तथा विप्रकृष्टे वेदशक्तिः संचरति। तदिहोपकारककल्पनाप्रमाणं संनिकृष्टमलब्ध्वा विप्रकृष्टमप्यनुज्ञातमित्युभयाकाङ्क्षावशेनैव विज्ञायते, यं दर्शपूर्णमासावुपकारमाकाङ्क्षतः। स नूनमेभिः प्रयाजादिभिः क्रियते। यच्च प्रयाजादयः प्रयोजनमपेक्षन्ते, तद्दर्शपूर्णमासोपकार इति। न ह्युभयोरप्यन्यत्संनिकृष्टतरमस्ति। यच्चान्यत्कल्प्यते। तस्यान्येन सह सम्बध्य निराकाङ्क्षीभूतस्य नेह सम्बन्धकाङ्क्षा विद्यते। तेन न प्रयाजादीनां विश्वजिदादिवत्फलकल्पनम्। नापि दर्शपूर्णमासफलानुषङ्गः। उभयाकाङ्क्षालक्षणसम्बन्धभावे ह्यन्यतराकाङ्क्षालक्षणः सम्बन्धो गृह्यते, न सम्भवे। तस्मान्नष्टाश्वदग्धरथवदेव परस्परनियमः सिद्धः।

असंयुक्तग्रहणं किमर्थम्? श्रुतिलिङ्गवाक्यैः संयुक्तानां द्वित्वबहुत्वयुक्तप्रतिपद्विधान—पूषादिशब्द—तच्छेषाणां प्रकरणविनियोगनिवृत्त्यर्थम्। प्रकरणविरोधिना वाऽसंयुक्तमिति द्रष्टव्यम्। अविरोधिसंयुक्तानां 'व्रीहीन्प्रोक्षति' 'बर्हिर्देवसदनं दामि' 'अरुणया क्रीणाति' इत्येवमादीनां प्रकरणस्थव्रीहिबर्हिःक्रयैः संबध्यमानानां प्रकरणसमावेशोपपत्तेः। तत्तु सामर्थ्यसिद्धत्वात्सूत्रकारेण नोक्तम्॥ ११॥

( इति चतुर्थं प्रकरणाधिकरणम्॥ ४॥ )

**प्रकरणस्य विनियोजकताधिकरणम्॥ ४॥**

न्या० सु०—'श्रुत्यादीनि च विनियोगे कारणानीति वक्ष्यन्ते' इति प्रतिज्ञातत्वात्। श्रुत्यादित्रयस्य विनियोगकारणत्वमनुक्त्वा प्रकरणादेर्विनियोगकारणत्वोक्तिरयुक्तेत्याशङ्कानिरासार्थमुक्तानीति वृत्तसङ्कीर्तनभाष्यं 'तेषामर्थेन सम्बन्ध' इत्यादिना कथं च विनियुज्यतइति प्रतिज्ञाचिन्तनेन श्रुत्यादीनां विनियोगकारणत्वस्यानुक्तत्वादयुक्तमाशङ्क्य वृत्त-

विनियोगप्रकारचिन्तानुकीर्त्तनार्थत्वेन व्याख्यातुमाह—एवं तावदिति। तद्भूतानां क्रियार्थेन समाम्नाय' इत्यत्र यैरर्थैर्येषाशब्दानामौत्पत्तिकः सम्बन्धः। तेष्वर्थेषु वर्त्तमानानां शब्दानां सर्वकारकान्वितक्रियारूपवाक्यार्थप्रमाणत्वोक्त्या प्रत्येकश्रुतिरूपाणां पदकारकविभक्त्याख्यानां शब्दानां प्रकृतिप्रत्ययार्थान्वयरूपे क्रियान्वितकारकरूपे चार्थे व्यापाराभिधानात् लिङ्गस्य विनियोगकारणत्वे सिद्धेऽपि कश्चिच्छब्दस्य तात्पर्यानवधारणात् विज्ञानानुत्पादकत्वे प्रामाण्यायोगाद्वेदस्य च प्रमाणान्तरागोचरार्थत्वेन प्रमाणान्तरतोऽर्थतात्पर्यावधारणायोगाद्वेदान्तर्गतस्य श्रुत्यादेर्विनियोगकारणत्वायोगं शङ्केत। तद्भ्रमापनुत्तयेऽध्ययनविधानार्थे विनियोगात्तात्पर्यावधारणे विनियुक्तशब्देनोक्ते, पुरुषार्थानुबन्धित्वे प्रधानोक्त्योक्ते, श्रुत्याद्यनपेक्षस्य विधेः समीहितविशेषे विनियोजकत्वायोगात् श्रुत्यादेर्ज्ञापकत्वेन ज्ञेये लिङ्गाद्विनियोगोपपत्तिसूचनार्था ज्ञेयोक्तिः। पुरुषार्थानुबन्धिन्यङ्गान्वयरूपे ज्ञेयेऽध्ययनविधिना श्रुत्यादीनां विनियोगात्तात्पर्यावधारणे यस्य श्रुत्यादेर्यस्मिन्नर्थे विशेषतात्पर्यं, तस्मिन्नेव तस्य विनियोजकत्वसिद्धेस्तेषामर्थाधिकरणादिभिः विनियोगविशेषचिन्तानर्थक्यामाशङ्क्य, श्रुत्यादिभिर्यस्य यदङ्गत्वं ज्ञापयितुं शक्यते, तस्य तदङ्गत्वं ज्ञापयेदिति सङ्कीर्णतात्पर्यावधारणात् सङ्कीर्णविनियोजकत्वसिद्धावपि, विनियोगविशेषचिन्तार्थवत्त्वसूचनार्थं सङ्कीर्णरूपेण विनियुक्तानि सन्ति विशेषरूपेणाख्यातानीत्युक्तम्। विनियुक्तानीति पाठे तु प्राधान्येनैतदध्यायज्ञेयेऽङ्गत्वरूपेऽर्थे तद्भूताधिकरणप्रथमान्त्यन्यायाभ्यां सङ्कीर्णानि सन्ति। तेषामर्थाधिकरणादिभिर्विविक्तानि कृत्वा वर्णितानीत्यर्थः। अनेन चैतद्भाष्यस्था विनियोगोक्तित्रिशब्दावृत्तिर्विनियोगविशेषार्थत्वेन व्याख्याता।

'एकत्वयुक्तमेकस्य श्रुतिसंयोगादि'ति ग्रहाधिकरणपूर्वपक्षसूत्रेऽवघातादीनां श्रुतिसंयोगाद्व्यवस्थाभ्युपगमे सम्मार्गाद्यपि एकवचनश्रुतिसंयोगादेकस्मिन्नेव ग्रहादौ व्यवतिष्ठेतेत्यभिधानादवघातादिविनियोगविशेषकारणत्वेन श्रुतेः अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यादि३-२-१त्यत्र सामर्थ्यशब्दान्मन्त्रविनियोगविशेषकारणत्वेन लिङ्गस्य सूत्रितत्वेऽपि, वाक्यस्य क्वचिद्विशेषकारणत्वेनासूत्रितत्वाद्विनियोगकारणानीति बहुवचनायोगमाशङ्क्य, परमतेन साक्षाद्वाक्यस्य विनियोगविशेषकारणत्वे केनचित्सूत्रेणानुक्तेऽपि, श्रुत्यन्तर्गतत्वात् लिङ्गान्तर्गत्या च वाक्यस्य विनियोगविशेषकारणत्वसिद्धेर्बहुवचनमुपपादयितुमाह—तत्रेति।

विनियुज्यते अनयेति विनियोगशब्दस्य विनियोजकवाचित्वाद्विनियोजिकात्मिकायाः श्रुतेः, सामर्थ्यात्मकस्य च लिङ्गस्यान्तर्गन्तंवाक्यमिति कृत्वा वाक्यशब्दाख्येन ग्रहणेन साक्षान्न सूत्रितमित्युक्तेऽन्तर्गत्युपपादनार्थं यथाशुद्धावघातादिविध्ययोगेन केवलपदप्रयोगाच्च व्रीह्यादिश्रवणे सत्यश्रुतावहेतुत्वादिकल्पनानुपपत्तेरवहन्त्यादिसमर्पकव्रीह्यादिपदान्तरसन्निध्यपेक्षत्वात् विध्यात्मिकायाः श्रुतेर्वाक्यान्तर्गततया विनियोगस्यापि प्रतियोग्यनपेक्षस्यायोगात् केवलपदप्रयोगाभावाच्च श्रुते च प्रतियोगिनि सत्यश्रुतप्रतियोगिकल्पनानुपपत्तेः प्रतियोगिनि समर्पकपदान्तरसंन्निध्यपेक्षत्वात् विनियोजकात्मिकाया अपि श्रुतेर्वाक्यमन्तर्गतम्। लिङ्गविनियोज्यस्य कर्मसमवेतार्थस्य निर्वपामीत्यादिपदस्य केवलस्य प्रयोगाभावेनासम-

वेतार्थसवित्रादिपदान्तरसन्निध्यपेक्षत्वात् वाक्यस्यैव लिङ्गं विनियोज्यत्वावगतेर्विनियोगविषयत्वस्यैव च सामर्थ्यस्य लिङ्गत्वात् लिङ्गस्यापि अन्तर्गतं वाक्यमित्युक्तम्।

अन्यत्रान्तर्गतत्वे बहुवचनायोगोपपत्तेः श्रौतसामान्यविशेषविनियोगापेक्षितविशेषविनियोगहेतुत्वमात्रेण वाक्यस्य श्रुत्यन्तर्गतिः सामान्यविशेषरूपविषयभेदात्तु श्रुतिवाक्ययोर्भेदो अस्त्येव। लैङ्गिकपदविनियोगापेक्षितवाक्यविनियोगहेतुत्वमात्रेण च लिङ्गान्तर्गतिः पदवाक्यरूपविषयभेदात्तु लिङ्गवाक्ययोर्विषयभेदोऽस्त्येवेति प्रायशब्देनोक्तम्। श्रुतेः सामान्यमात्रे पर्यवसानायोगात् वाक्यविनियोगपर्यन्तत्वावगतेर्लिङ्गस्य च पदमात्रे पर्यवसानायोगात् वाक्यविनियोगपर्यन्तत्वावगतवाक्यस्य विशेषणविशेष्यभावमात्रे व्यापाराच्छ्रुतिलिङ्गाभ्यां विनियोगे वाक्यस्य विनियोगकारणत्वाभावेनैव बहुवचनसमर्थनानुपपत्तेरपरितोषात्स्वमतेन वाक्यविनियोगपर्यन्तत्वावगते[1]ग्रंहणाभावेऽपि प्रायशब्देनोपक्रमोपसंहारैकवाक्यत्वस्य विनियोगकारणत्वाभिधानात् वाक्यमपि साक्षाद्विनियोगविशेषकारणत्वेन सूचितमित्येवं बहुवचनं समर्थयितुमाह—**अथ वेति**। विशेषविहितस्यापि अरुणयेति वाक्योदाहरणं न युज्येतेत्याह—**अथ त्विति**। सामान्यमात्रविनियोगे श्रुतिपर्यवसानाभ्युपगमे त्वैन्द्रयुदाहरणे श्रुतिलिङ्गविनिरोधो बलाबलाधिकरणवक्ष्यमाणो न युज्येतेत्याह—**अथेति**। कथं तर्ह्यरुणयेत्यस्य वाक्योदाहरणतेत्याशङ्क्याह—**तस्मादिति**।

उदाहरणद्वयेऽपि विशेषविनियोगव्यापृतश्रुत्यपेक्षितविशेषणविशेष्यभावसमर्पणेन वाक्यस्य श्रुत्यन्तर्गतेर्दर्शयितुं शक्यत्वात् विनियोजकत्वस्य तूभयत्रापि अभावात् उभयस्य साक्षाद्विनियोगविवक्षया श्रुत्युदाहरणत्वे विनियोगौपयिकविशेषणविशेष्यभावविवक्षया च वाक्योदाहरणत्वे सम्भवत्यपि गुणस्य क्रियासाधनद्रव्यान्वयं विना श्रुत्यवगतक्रियाङ्गत्वानिर्वाहात् श्रुतेश्च द्रव्यान्वये व्यापाराभावात् वाक्यगम्यस्यारुण्यस्यैकहायनीद्वारतार्थकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादिति ३-१-१२ अत्रोक्तेति सूचनायारुणयेत्यस्य वाक्योदाहरणतेत्याशयः। श्रुत्यादित्रयवत् प्रकरणादित्रयेऽपि कथं च विनियुज्यत इत्यंशः कस्मान्न चिन्त्यतइत्याशङ्क्याह — **इदानीमिति**।

व्रीहीनित्यादिपरमापूर्वसाधनेऽवघातादिविनियुक्तेऽवान्तरापूर्वसाधने वेत्यादिश्रौतविनियोगविशेषचिन्तायां गौणे मुख्ये च लिङ्गं मन्त्रं विनियुक्ते मुख्य एवेति। लैङ्गिकविनियोगविशेषचिन्तायां वाक्यमुपक्रमानपेक्षमुच्चैस्त्वादीनि विनियुङ्क्ते तदपेक्षं चेति, वाक्यीयविनियोगविशेषचिन्तायाः श्रुत्यादिबलाबलचिन्तानपेक्षत्वात् पृथक्करणं युक्तं पूर्वप्रमाणविनियुक्ताङ्गव्यतिरिक्तानां प्रकरणादिविनियोजकं सर्वेषामेव वेत्येवं प्रकाराया विनियोगविशेषचिन्तायास्तु श्रुत्यादिबलाबलचिन्तान्तर्गतत्वाद्तादृश्याश्च विनियोगविशेषचिन्तायाः प्रकरणादिष्वयोगान्न तेषु विनियोगविशेषचिन्ता कार्येत्याशयः। अधिकारलक्षणस्य प्रकरणस्यानन्तर्यलक्षणस्य, क्रमस्य, रूढिशब्दलक्षणायाश्च समाख्यायाः सिद्धान्तेऽपि विनियोजक-

---

१. स्वमतेन वाक्येति ९ पु० च०।

त्वानभ्युपगमादिति कर्त्तव्यताकाङ्क्षालक्षणस्य प्रकरणस्य, सादेश्यलक्षणस्य क्रमस्य, यौगिकशब्दलक्षणायां समाख्यायाश्च पूर्वपक्षे सद्भावस्याप्यनभ्युपगमाद्विनियोगकारणत्वचिन्ता न युक्तेत्याशङ्क्य, इतिकर्तव्यतार्थित्वाद्देशसामान्यात्तदर्थत्वादिति सूत्रावयवैः स्वरूपेणासंयुक्तं प्रकरणाच्छेष इति प्रधानभूताध्यायार्थवाचितया सर्वत्रानुवर्त्तमानशेषशब्दानुषङ्गात् पञ्चम्या च ज्ञापकहेतुत्वोक्तेः, क्रमश्चेति चकारेण पञ्चम्यर्थानुकर्षणात् आख्या चैवमित्येवंशब्देन च तदतिदेशाद्विनियोगसामर्थ्येन दर्शयतीत्युक्तम् ।

सद्भावेनेतिवाच्ये यत्किञ्चिद्रूपप्रकरणादिसद्भावस्योभयसिद्धत्वात् स्वाभिमतरूपप्रकरणादिसद्भावस्य साध्यत्वसूचनार्था स्वरूपोक्तिः। वैदिके चार्थे शब्दातिरिक्तप्रमाणाभावात्। शब्दस्य च साक्षरश्रवणाक्षरसामर्थ्याकाङ्क्षितयोग्यार्थपदसन्निध्यतिरिक्तविनियोगकारणभूतप्रकाराभावात्। श्रुत्यादीनि त्रीण्येव तादर्थ्यबोधाख्ये विनियोगे कारणानीत्याशये, किमेतावन्त्येवेति पृष्टमोदनं पचेत्युक्त्वा तण्डुलानानय, काष्ठान्याहरोदकं स्थाल्यादि चोपनयेत्युक्ते लोके तण्डुलोपनयनादीनां पाकाङ्गत्वप्रतीतेः पदसन्निधिवद्वाक्यसन्निधावपीतिकर्त्तव्यताकाङ्क्षायां विनियोगहेतुत्वावसायाद्देवदत्तयज्ञदत्तविष्णुमित्रेभ्यः शुक्लनीलपीतवस्त्राणि देयानीत्युक्ते च शुक्लवस्त्रादीनां यथाक्रमं देवदत्ताद्यङ्गत्वप्रतीतेः सादेश्यनिमित्तस्य सन्निधेर्विनियोगहेतुत्वावसायाद्देवदत्तीयः पाक इत्युक्ते देवदत्तस्य पाकाङ्गत्वप्रतीतेर्यौगिकशब्दस्य विनियोगहेतुत्वावसायाच्छाब्दे व्यवहारे वा शाब्दस्यार्थस्यान्वयायोगादितिकर्त्तव्यताकाङ्क्षासादेश्ययौगिकत्वानामपि विनियोगकारणभूतशब्दप्रकारवाचित्वावगतेस्तान्यपि विनियोगकारणानीत्याशयेन नेतिभाष्येण निरस्य, भावनायाः सन्निपत्योपकारीतिकर्त्तव्यतान्वयमात्रेणेतिकर्त्तव्यताकाङ्क्षानिवृत्तेरारादुपकारीतिकर्त्तव्यताकाङ्क्षत्वात् सन्निपत्योपकारिण्याश्चेतिकर्त्तव्यतायाः श्रुत्यादिगम्यत्वेन प्रकरणगम्यत्वाभावात् नेतिकर्त्तव्यताकाङ्क्षालक्षणं प्रकरणमस्तीत्याशयेन प्रकरणमात्रविषयं प्रश्नान्तरं किमपरमिति भाष्येण कृत्वाऽधिकरणरक्षणार्थं पूर्वपक्षे कार्ये प्रश्नो न युक्त इत्याशङ्क्य विपर्ययवत् सन्देहाज्ञानयोरपि सिद्धान्तप्रतिकूलत्वात्पूर्वपक्षत्वसम्भवसूचनार्थं त्रैविध्यप्रसिद्धेन प्रश्नेन पूर्वः पक्षः कृत इति प्रश्नेनैवेति भाष्येणोक्तं तत्सर्वं व्याचष्टे—**तत्रेति** । त्रयमपि क्रमेणोपपादयति—**यावद्धीति** । सूत्राधीनज्ञानस्य पुंसः कथनात् प्राक् सन्देहाज्ञाने सम्भवत इत्याशयः। नदीत्वपर्वतत्वफलत्वरूपेणानिश्चितेषु प्रश्नस्य लोके त्रैविध्यप्रसिद्धिदर्शनार्थं भवति चेति भाष्यं स्पष्टत्वान्न व्याख्यातम् । पूर्वपक्षमुपसंहरति—**तस्मादिति** । अस्य पूर्वपक्षस्याधिकरणत्रयसाधारण्यसूचनादियादिशब्दः ।

तदित्यादिसिद्धान्तभाष्यं तात्पर्यतो व्याचष्टे—**इतीति** । करणत्वस्यातिशयितसाधकत्वरूपसाधकतमत्वलक्षणत्वादतिशयस्य चापेक्षितत्वादपकृष्टसाधकत्वरूपामितिकर्त्तव्यतां विना करणत्वानुपपत्तेः सन्निपत्योपकारिणश्च प्रोक्षणमन्त्रादेर्यागानिष्पादकभावनाकरणीभूतद्रव्यदेवतादीनि कर्त्तव्यतात्वेन फलभावनाकरणीभूतयागादीतिकर्त्तव्यतात्वाभावावश्यम्भाविन्या-

रादुपकारीतिकर्त्तव्यताजाङ्क्षेति सूचनार्थः करणवाची प्रधानशब्दः। सन्निपत्योपकारीतिकर्त्तव्यतान्वयमात्रेणाकाङ्क्षानिवृत्त्यभावः कथम्भावाविच्छेदोक्त्योक्तः । असंयुक्तोक्तिव्याख्यानायाऽनिर्ज्ञातेत्युक्तम्—**प्रकरणेनाज्ञ्तेति वदता**। शेषः परार्थत्वादिति सूत्रस्यशेषशब्दानुषङ्गः सूचितः । सिद्धान्तोपपादनार्थं यदीतिकर्त्तव्यताकाङ्क्षिण इत्यादिभाष्यं व्याचष्टे—**दर्शेति**। दर्शपूर्णमासयोरुपकाराख्यानुग्रहापेक्षायां प्रयाजादीनां च साध्याक्षायां सत्यामपि, यथाधिकृतेरुपकाराकाङ्क्षायां विकृतौ चातिदिष्टानां प्रयाजादीनां साध्याकाङ्क्षायाः प्राकृतप्रमाणसिद्धेनोपकारेण निर्वृत्तेनं विकृतौ प्रकरणं प्रवर्त्तते। तया यदि दर्शपूर्णमासयोः सहायभूतप्रयाजादीनां साध्य उपकारोऽन्यतः सिद्धः केन चित्प्रमाणेनोपलभ्येत। ततो दर्शपूर्णमासयोरपि न प्रकरणं प्रवर्त्तेत । न त्वेतदस्तीतिसूचनार्थं—**तथेत्युक्तम्**।

वायव्यं श्वेतमालभेतेत्यस्य च प्रकृतिलिङ्गभूतेनालभतिना दैक्षोपकारस्य स्वपदे। मासमग्निहोत्रं जुह्वोतीत्यत्र अग्निहोत्रोक्त्यानारभ्याग्निहोत्रधर्मातिदेशात्तद्गतस्योपकारस्य स्ववाक्ये दैक्षप्रकरणे च दर्शपूर्णमासिकप्रयाजादिदर्शनादैक्षे पौर्णमासधर्मातिदेशावगतेः स्वतोपकारस्य स्वप्रकरणे प्राकृतप्रमाणसिद्धस्योपलम्भात्तद्वैषम्यसूचनार्थं—**स्वेत्युक्तम्**। एवं सत्यपि यदि प्रकरणालोचनाद्दर्शपूर्णमासयोः का चित्प्रवृत्तिरवगम्येत, ततस्तद्गतप्रमाणसिद्धेनोपकारेण नैराङ्क्षाक्ष्यं स्यान्न त्वेतदस्तीति सूचनार्था प्रकरणान्तरोक्तिः। शब्दस्यापि प्रत्यक्षादिपञ्चकान्तर्गतत्वात्तन्निरासेनैव निरासेऽपि लौकिकवैदिकशब्दभेदविवक्षया भेदेनोक्तिः। दर्शपूर्णमासयोः सहायभूतप्रयाजादीनां च साध्यभूत उपकारोऽन्यतः सिद्धो न केन चिल्लौकिकेन, वैदिकेन वा प्रमाणेनोपलभ्यतइत्युक्ते, अर्थात् प्रोक्षणावघातादिजन्येन सांनिपातिकेनैवोपकारेणोपकाराकाङ्क्षानिवृत्तेर्दर्शपूर्णमासयोर्नारादुपकाराकाङ्क्षेत्याशङ्क्य —**अवश्यञ्चेत्युक्तम्**। यदि त्वित्यनेनाभावशङ्कायां प्रकरणाख्यारादुपकारप्रमाणसद्भावान्निरस्तायां प्रकरणाख्यारादुपकारप्रमाणसद्भावान्निरस्तायां सन्निधिमात्रादन्वयानुपपत्तेः प्रकरणे पदसन्निध्यभावाद्वाक्यसन्निधेश्च विप्रकृष्टत्वेनान्वयहेतुत्वायोगान्न प्रकरणं प्रमाणमित्याशङ्क्य—**न हीत्युक्तम्**। विश्वजिद्वत्फलाध्याहारेण दर्शपूर्णमासफलानुषङ्गेण वा साक्षात्पुरुषार्थभूतं स्वर्गाद्येव प्रयाजादीनां स्वाध्यत्वेन कस्मान्न कल्प्यतइत्याशङ्क्य, यच्चान्यत्स्वर्गादिसाध्यं कल्प्येत, तस्येज्याधिकरणन्यायाद्दर्शपूर्णमासनामविशेषितयज्युक्तेनाग्नेयादिषट्केण सह सम्बन्ध्यनिराकाङ्क्षीभूतस्य न प्रजाजादौ सम्बन्धाकाङ्क्षास्तीत्युक्त्वा दर्शपूर्णमासयोः प्रयाजादीनां च परस्परमुपकार्योपकारित्वनियमसिद्धिरन्योन्याकाङ्क्षाधीनाङ्गाङ्गिसिद्ध्यर्थमुपसंहृता।

प्रयाजादेश्च स्वर्गार्थत्वशङ्कानिरासेन तानि तत्रैषेत्यादिप्रयोजनभाष्यस्य प्रयाजादीनि दर्शपूर्णमासयोरेव विनियुज्यन्ते, न स्वर्गे। तथाग्निहोत्रे ज्योतिष्टोमे वा यदेवंविधं पदार्थजातम्, तदप्यग्निहोत्रएव, ज्योतिष्टोमएव विनयुज्यते न स्वर्गइति व्याख्या सूचिता।

फलकल्पनानुषङ्गाभ्यां चेह पूर्वपक्षश्चतुर्थोपान्त्ये फलवाक्यस्थेन यजिना प्रयाजादीनामपि ग्रहणादित्यपौनरुक्त्यं स्पष्टम् । इतिकर्त्तव्यताकाङ्क्षिप्रधानसन्निधौ पठितानां प्रोक्षणप्रयाजादीनां बहूनामुदाहरणानां स्पष्टत्वात् प्रकृते विनियुज्यतइति प्रयोजनस्योक्तत्वात् प्रयोजनोदाहरणप्रश्नावनर्थकावाशङ्क्य, सन्निपत्त्योपकारिणां प्रोक्षणादीनां क्रियाङ्गभूतद्रव्याद्यन्वयेन नैराकाङ्क्ष्याद्उभयाकाङ्क्षालक्षणेन प्रकरणेन क्रियायां विनियोगानुपपत्तेरुदाहरणत्वायोगात्क्रियाङ्गभूतद्रव्याद्यङ्गत्वद्वारा तु तेषां क्रियाङ्गत्वाभ्युपगमेऽधिकारलक्षणप्रकरणानुगृहीतेन श्रुत्यादिनैव तत्सिद्धेः कथम्भावलक्षणेन प्रकरणेन विनियोगायोगात्तैरेव च क्रियाया इतिकर्त्तव्यताकाङ्क्षानिवृत्तिसिद्धेरारादुपकारिणां प्रयाजादीनां विनियोगायोगात्प्रयोजनानुपपत्तेः प्रयोजनोदाहरणे पृष्ट्वा सन्निपत्त्योपकारिणामुदाहरणत्वायोगेऽपि, आरादुपकारिणामुदाहरणत्वम्, तद्विनियोजनं च प्रयोजनमिति भाष्यव्याख्यासूचनायासंयुक्तोक्तेः सन्निपत्त्योपकारिणां प्रकरणविनियोगनिवृत्त्यर्थत्वसूचनार्थं परमतेन तावत्सन्निपत्त्योपकारिणामारादुपकारिणां च प्रकरणविनियोज्यतामभिप्रेत्यासंयुक्तोक्तेः ।

प्रश्नपूर्वं प्रयोजनमाह—असंयुक्तेति । द्वित्वबहुत्वयुक्तस्य प्रतिपद्विधानस्य श्रुत्या द्विबहुयजमानक्रत्वन्तरसंयुक्तस्य । पूष्णोऽहं देवयज्यया पशुभिर्जनीषीये'त्याद्यनुमन्त्रणेषु च पूषादिशब्दानां लिङ्गात्, तच्छेषाणां चाहमित्यादीनां वाक्येन, पूषादिदेवत्येष्टिपशुसंयुक्तानां, ज्योतिष्टोमदर्शपूर्णमासप्रकरणाभ्यां विनियोगनिवृत्त्यर्थमित्युत्तरार्थः । प्रोक्षणादीनां श्रुत्यादिभिर्व्रीह्यादिसंयुक्तानां दर्शपूर्णमासज्योतिष्टोमप्रकरणाभ्यामविनियोगापत्तेर्विशेषणमध्याहरति—प्रकरणेति ।

पदार्थान्वयरूपवाक्यार्थप्रतिपादनमात्रे वाक्यव्यपारस्य, स्योनं त सदनमित्यादेः सुमनस्यमान इत्यन्तस्य वाक्यविनियोगोक्तेरेकवाक्यत्वोपगमने सामर्थ्यनिमित्तविनियोगाङ्गत्वस्य 'स्योनं त' इत्यस्य पूर्वेण सहैकवाक्यतामभ्युपेत्योपस्तरणे समर्थेनेत्यादिभाष्यालोचनया प्रतीतेः प्रतिनियतावेतौ श्रुतिवाक्यसम्बन्धावेकः शेषशेषिरूपेभ्यो विशेषणविशेष्यात्मकत्यादिवार्त्तिके वाक्यस्य विनियोजकताया निषेत्स्यमानत्वात्तत्सामान्येनारुणावाक्येऽपि वाक्यस्याविनियोजकत्वावगतेरारुण्यस्य वाक्येन क्रयसम्बन्धायुक्तत्वादेतत्प्रयोजनानुपपत्तेः, स्वमतेनासंयुक्तस्य ग्रहणस्य सन्निपत्त्वोकारिणां प्रकरणविनियोनिवृत्तिप्रयोजनत्वं सूचयितुमाह—तत्त्विति । श्रुत्यादीनां सर्वेषामेव परदौर्बल्यात् पूर्वसंयुक्तएवार्थे परस्याविनियोगसामर्थ्यात्सामर्थ्यालोचनयैव श्रुत्यादिसंयुक्तानां प्रकरणविनियोगनिवृत्तेः सिद्धत्वादसंयुक्तमिति यत्सूत्रं तच्छ्रुत्यादिसंयुक्तानां प्रकरणविनियोगनिवृत्त्यर्थं न भवति । किं तु संयुक्तशब्देन सन्निपत्त्योपकारित्वाभिधानात् । सन्निपत्त्योपकारिणां प्रकरणविनियोनियोगनिवृत्त्यर्थमित्याशः ॥ ११ ॥

इति चतुर्थं प्रकरणाधिकरणम्

भा० प्र०—श्रुति, लिङ्ग एवं वाक्य का विनियोजकत्व कहा गया हैं। प्रकरण स्थान-क्रम एवं समाख्या की भी विनियोजकता है या नहीं, इस समय उसी तीन अधिकरणों का विचार होगा। श्रुति, लिङ्ग एवं वाक्य तीन क्या विनियोजक है या इनकी अपेक्षा अन्य भी विनियोजक है—इस प्रकार के सन्देह में पूर्वपक्षी का कहना है कि प्रकरणादि से अन्य किसी की भी विनियोजकता नहीं है, कारण, "यजेत" कहने पर "याग करें" याग करना चाहिए इस प्रकार अर्थ होता है, याग लौकिक क्रिया स्वरूप होने से उसका प्रकार अवगत ही है। अतः उसका और प्रकार जिज्ञास्य न होने पर इतिकर्तव्यताकांक्षा न होने से प्रकरण विनियोजक नहीं हैं कारण, इति कर्तव्यता की आकांक्षा होने से ही वाक्यादि से प्रकरण विनियोजक होता है, एक वाक्यतापन्न वाक्य समूह को प्रकरण कहा जाता है, किन्तु परस्पर निरपेक्ष एक से अधिक वाक्यों में एक वाक्यता नहीं हो सकती, दर्शपूर्णमास वाक्य एवं समिध् आदि वाक्य परस्पर निरपेक्ष ही रहता है।

इसके समाधान में सिद्धान्ती का कहना है कि "असंयुक्तं प्रकरणात्" जो श्रुति, लिङ्ग एवं वाक्य संयुक्त नहीं है उसमें "प्रकरणात्" प्रकरण का आश्रयण कर विनियोग होगा अर्थात् प्रकरण ही उसका विनियोजक होगा। एक से अधिक वाक्य की जो परस्पर आकांक्षा है उसी का नाम प्रकरण है। जैसे "दर्शपूर्णाभ्यां यजेत" दर्शपूर्णमास से याग करे यह एक वाक्य है एवं "समिधो यजति" तनूनपातं यजति अर्थात् समिध याग करे, तनूनपात् याग जरें ये भी वाक्य हैं। दर्शपूर्णयास याग करे, इसका अर्थ करे यह नहीं होता है, अपितु याग के द्वारा स्वर्गरूपफल भावित = उत्पादित करें—यही अर्थ होता है और यह स्वर्गरूप फल एवं इस फल के साथ याग क्रिया का सम्बन्ध दोनों ही अलौकिक होने से किस प्रकार स्वर्गरूप फल उत्पादन करना होगा—यह आकांक्षा होती है। इस प्रकार जो कर्तव्यता के प्रकार की आकांक्षा है इसी को "इति कर्तव्यताकांक्षा" कहते हैं, क्योंकि कर्तव्यता का प्रकार ही इतिकर्तव्यता है। दर्शपूर्णमास वाक्य के समीप में "समिधो जयति तनूनपातं यजति इडो यजति, बर्हिर्यजति, स्वाहाजारं यजति" इत्यादि वाक्य भी पठति हैं, किन्तु इसका कोई फल नहीं लिखा गया है, अतः वह फलाकांक्षायुक्त होने से आकांक्षाविहीन होकर वाक्यान्तरनिरपेक्ष नहीं है, इसलिए आश्रुतफल-कल्पना की अपेक्षा समिध् याग आदि को दर्शपूर्णमास के अङ्ग की कल्पना कर दर्शपूर्णमास के फल द्वारा ही इसको भी सफल किया जाना युक्तियुक्त है, अतः दर्शपूर्णमास इतिकर्तव्यता साकांक्ष और निष्फल समिधयागादि फल को स्वकांक्ष कहकर "नष्टाश्वदग्धरथन्याय" की सहायता से परस्पर अन्वित होकर चरितार्थ होता है, एक से अधिक वाक्य का जो परस्पर अन्वय नहीं होता है—वह नहीं है। कारण, एक अर्थ का बोध कराना ही वाक्य का कार्य है। जब तक कोई वाक्य किसी प्रयोजन का बोध न करा सकता है तब

तक वह सफल नहीं होता है, अतः अन्य के अङ्ग रूप में अन्वित होकर भी प्रयोजन का निर्देश करता है इसीलिए अन्य स्थल में वार्तिककार ने कहा है—

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥

वाक्य स्वार्थबोध को उत्पन्न कर निवृत्त होने पर भी प्रयोजन निर्देश करने के लिए अङ्गाङ्गिता सापेक्ष होने के लिए पुनः उनका परस्पर संहत = मिलित होकर एकवाक्यता का साधन होता है। अतः दर्शपूर्णमास वाक्य एवं समिध् आदि वाक्य परस्पर सापेक्ष होने से परस्पराकाङ्क्षारूप प्रकरण के अनुसार परस्पर अन्वित होकर एक प्रयोजन का बोध कराता है, इसीलिए श्रुति, लिङ्ग एवं वाक्य के समान प्रकरण भी विनियोजक होता है।

"असंयुक्तं"—जो असंयुक्त अर्थात् श्रुति, लिङ्ग एवं वाक्यसंयुक्त नहीं है, वह "प्रकरणात्" = प्रकरण के अनुसार विनियुक्त होगा, "इतिकर्तव्यतार्थित्वात्" = क्योंकि प्रधान कर्म इतिकर्तव्यता की आकांक्षा रहता है ॥ ११ ॥

इति चतुर्थ प्रकरणविनियोगाधिकरण ।

**अथ पञ्चमं क्रमाधिकरणम् ।**

## [५] क्रमश्च देशसामान्यात् ॥ १२ ॥ सि०

**शा० भा०—अथ किमेतावन्त्येव विनियोगकारणानि ? नेत्युच्यते। किंच क्रमश्च देशसामान्यात्। क्रमवतामानुपूर्व्येणोपदिश्यमानानां यस्य पर्याये यं धर्ममामनन्ति, तस्य तं प्रत्याकाङ्क्षाऽनुमीयते। सत्यामाकाङ्क्षायामेकवाक्यभावः। तस्मात्ततो विनियोग इति।**

**किमिहोदाहरणम् ? किं च प्रयोजनम् ? आनुपूर्व्यवतां यागानामनुमन्त्रणेष्वाम्नातेषूपांशुयाजस्य क्रमे 'दब्धिर्नामासि' इति समाम्नातः। तस्याऽऽकाङ्क्षामुत्पाद्य तेनैकवाक्यतां यात्वा, तत्रैव विनियोगमर्हतीति। तथा चैन्द्राग्नं कर्म वियातसजातस्यास्ति भ्रातृव्यवतः। तस्य याज्यानुवाक्यायुगलमप्याम्नायते ऐन्द्राग्नम्, 'इन्द्राग्नी रोचनादिवः, प्रर्षणिभ्य इत्येकम्। अपरम्, इन्द्राग्नी नवतिं पुरः, श्नथद्वृत्रम् इति।**

**तत्र लिङ्गाद्विनियोगे सिद्धे विशेषविनियोगो भवति। पूर्वं युगलं पूर्वस्यैन्द्राग्नस्य, उत्तरमुत्तरस्येति। एतदुदाहरणं प्रयोजनं चेति ॥ १२ ॥**

**इति क्रमाधिकरणम् ॥ ५ ॥**

त० वा०—पूर्ववदेव क्रमसमाख्ययोरप्यज्ञानादिभिरुपन्यासः कर्तव्यः।

तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः।
पाठानुष्ठानसादेश्याद्विनियोगस्य कारणम्॥

विनाऽप्यनुष्ठानदेशसाम्येन यावति प्रदेशे ब्राह्मणे प्रधानं पठ्यते, तावत्येव मन्त्रेषु मन्त्रः। तयोश्चाङ्गाङ्ग्यपेक्षावेलायां यथासंख्यन्यायेन समानदेशत्वाद् बुद्धौ संनिधानं भवति। प्रथमस्य हि प्रधानस्य मन्त्रमन्विच्छन्नवश्यं मन्त्रसमाम्नायमादित आरभ्याऽऽलोचयति। ततश्च प्रथम एव मन्त्रः प्रथमं हृदयमागच्छति। न चास्यातिक्रमे हेतुरस्तीति, स एव गृह्यते। तथा मन्त्रस्य शेषिणमपेक्षमाणस्यानयैव प्रक्रिययाऽऽद्येन शेषिणा सह संबन्धो भवति। ततश्च तन्निराकाङ्क्षतया द्वितीयादीनामप्येवमेव द्वितीयादिभिरेव योगेन भवितव्यम्। तत्राऽऽग्नेयाद्यनुमन्त्रणानामाग्नेयादिलिङ्गत्वात्, तेनापि व्यवस्था सिध्यतीत्यव्यक्तलिङ्गमुपांशुयाजक्रमाधीतं 'दब्धिर्नामासि' इत्युदाहरति।

ननु चास्य प्रकरणात्सर्वार्थत्वं विज्ञायते। तच्च बलीय इत्यन्यत्रापि विनियोगः प्राप्नोति। अत्र केचिदाहुः। उपांशुयाजग्रहणाद् द्वयमप्यनुगृह्यते। तस्मात्तद्ग्रहणमिति। शक्यं तु वक्तुमननुग्राह्य एव क्रमः प्रकरणप्रत्ययविरुद्धत्वादिति। शेषस्य हि सर्वार्थत्वं प्रतिप्रधानानावृत्तेः प्रकरणावगतं न शक्यं बाधितुम्। तत्रैतावदुत्तरं भवति। येऽन्ये शेषिण आग्नेयादयस्ते विस्पष्टलिङ्गैः क्रमप्रकरणवद्भिर्मन्त्रान्तरैरवरुद्धत्वान्नैनमपेक्षन्ते। न च विकल्पः अस्पष्टलिङ्गत्वेन वैषम्यात्। अदृष्टार्थानां समुच्चय इति चेत्। प्रकृतयागप्रत्यवेक्षणेन दृष्टार्थत्वात्। सत्यपि चादृष्टार्थत्वे निरपेक्षाणां गत्यन्तरे सति समुच्चयानाश्रयणात्। आग्नेयादिभिः कृतार्थैरुपेक्षितः सन्नगत्या पुनस्तेष्वेव भवेत्। अस्ति चास्य गतिरुपांशुयाज इति।

किं च—

न वा विज्ञातलिङ्गानां प्रक्रिया विनियोजिका।
असीत्यस्य च सामर्थ्यं संनिधावुपसंहृतम्॥

'दब्धिर्नामासि' इत्यस्पष्टलिङ्गोऽयम्। न चेदृशं सन्तं प्रकरणं विनियोक्तुं क्षमम्। अयं[1] त्वसिशब्दो युष्मदर्थविषयत्वात्संनिहितमभिमुखम् चाऽभिधत्ते, नान्यम्। उपांशुयाजश्च संनिहितोऽभिमुखश्चेत्यभिधानसामर्थ्यं क्रमादुपांशुयाजविषयं विज्ञायते। ततश्च लिङ्गेन प्रकरणं बाध्यत एवेत्यदोषः। काम्ययाज्याकाण्डक्रमस्तु व्याख्यात एव। अनुष्ठानदेशक्रमोऽपि पशुधर्माणामग्नीषोमीयार्थत्वेन भविष्यति॥ १२॥

( इति क्रमाधिकरणम्॥ ५॥ )

---

१. ब वर्त्तेन।

अथ पंचमं क्रमत्वाधिकरणम् ॥ ५ ॥

न्या० सु०—वैदिकेऽर्थे शब्दातिरिक्तप्रमाणाभावात्सादेश्ययोगिकत्वयोश्च विनियोगहेतुभूतशब्दप्रकारत्वाभावात् । न क्रमसमाख्यं विनियोगकारणे इत्याशयेनाथेत्याद्येऽधिकरणद्वयस्थे विकृतीनां प्राक्प्राकृताङ्गान्वयेऽप्यज्ञातोपायपरिमाणत्वाद्श्रुतफलत्वेनाङ्गत्वयोग्येषु कर्मसु सन्निहितेषु सत्सङ्गाकाङ्क्षानिवृत्त्यसिद्धेर्वैकृतकर्मसन्निधानस्य प्रकरणत्वादुपांशुयाजस्य विप्रतिपन्नजातिशत्रुमत्कर्तृकैन्द्राग्नकर्मद्वयस्य वा ब्राह्मणपाठात् अनुमन्त्रणमन्त्रस्य याज्यानुवाक्यायुगलद्वयस्य वा मन्त्रसंहितायां पाठादेकप्रदेशवाक्यपाठसादेश्याभावेन तद्धेतुकबुद्धिविपरिवृत्त्याख्यसन्निध्ययोगाद्दैक्षस्य च 'स एष औपवसथ्येऽह्नि द्विदेवत्यः पशुरालभ्यते'इतिश्रुत्यौपवसथ्याख्ये ज्योतिष्टोमप्रदेशेऽनुष्ठानोक्तावप्युपाकरणादीनां दैक्षाङ्गत्वावगमात्प्रागौपवसथ्येऽनुष्ठानावगतेरेकप्रदशानुष्ठानाख्यानुष्ठानसादेश्याभावेन तद्धेतुकस्यापि सन्निधेरयोगान्न फलवत्सन्निधिलक्षणः क्रमोऽस्ति । निर्वापादीनां च समाख्यां विनाध्वर्य्वादिसम्बन्धानवगतेरार्यवादिसमाख्या यौगिकशब्दलक्षणा नास्तीत्याशयेन—किं चेति ।

द्वितीयं च प्रश्नभाष्यं एकहेलया व्याचष्टे—पूर्ववदेवेति । किमुक्तेभ्योऽन्यदपिप्रमाणमस्तीति किञ्चेति भाष्यार्थः । क्लृप्तोपकारत्वेन प्राकृतानामङ्गानां निराकाङ्क्षीकरणसामर्थ्यस्य दशमे गृहमेधीयाधिकरणे व वक्ष्यमाणत्वान्निवृत्ताकाङ्क्षायाः सांग्रहण्यादिकाया विकृतेः सन्निध्याम्नातानामश्रुतफलानामामनहोमादिकर्मणां सन्निहितफलवत् कर्मोपकाराख्यसाध्यसम्भवे कल्पनागौरवापादकस्वर्गफलत्वकल्पनायोगात् विकृतिफलानुषङ्गस्य फलसम्बन्धोक्तहेतुत्वादितरस्य प्रधानं स्यादिति चतुर्थाधिकरणे परिधिमन्त्राद्यसम्बद्धपदव्यवायेन निराकरिष्यमाणत्वात् सन्निहितविकृत्यङ्गतां विनानर्थक्यापत्तेर्निराकाङ्क्षस्योपाध्यायस्य शिष्याकाङ्क्षयाकाङ्क्षोत्थापनवत्सन्निध्याम्नातधर्माकाङ्क्षयाकाङ्क्षोत्थापनेऽपि स्वतो नैराकाङ्क्षचादुभयाकाङ्क्षालक्षणप्रकरणत्वानुपपत्तेर्वैकृतधर्मसन्निधि क्रम एव ।

भिन्नग्रन्थाम्नातानामपि च कर्ममन्त्राणामुपकारकोपकार्याकाङ्क्षायां ब्राह्मणाधीतैः कर्मभिर्मन्त्रसंहिताधीतेषु मन्त्रेषु उपकारत्वेन मन्त्रैश्च कर्मसूपकार्यत्वेनालोक्यमानेष्वादित आराभ्यालोचनादाद्यग्रन्थप्रदेशाधीतयोः कर्ममन्त्रयोरन्योन्यं द्वितीयप्रदेशाधीतयोश्चान्योन्यमित्येवं क्रमेण बुद्धौ विपरिवृत्तेः सर्वस्वसंवेद्यत्वेनापह्नवायोगात् पाठसादेश्यहेतुको दैक्षप्रदेशेऽनुष्ठानावगमात् अनुष्ठानसादेश्यहेतुकोऽपि फलवत्सन्निध्याख्यः क्रमोऽस्तीति 'क्रमश्च' देशसामान्यादित्येतावतोक्त्वा चकारेण पूर्वसूत्रस्थप्रकरणादिति पञ्चम्युक्तशेषहेतुत्वानुकर्षणात्सोऽपि शेषहेतुरिति । एवं सूत्रव्याख्यां सूचयन् सिद्धान्तमाह—तत्रेति ।

क्रमोऽपि विनियोगकारणमित्येतावताऽद्ये प्रश्नं निरस्ते द्वितीयप्रश्ननिरासार्थं वैकृतकर्मसन्निधिरपि क्रमएवेत्यवकारेण सूचितम् । दधिमन्त्रैन्द्राग्नयाज्यानुवाक्यायुगलोपाकरणादीनां शेषित्वाभिमतकर्मविशेषसंन्निधिपाठाभावेऽप्येकदेशत्वाख्येन देशसामान्येन बुद्धिपरिवृत्त्याख्यसन्निधिरूपः क्रमः प्रतीयतइत्युक्ते देशसामान्यव्याख्यार्थं द्वैविध्योक्तिः देश-

सामान्यहेतुकक्रमद्वैविध्ये सति कस्मात्पाठसादेश्यमात्रं भाष्यकृतोक्तमित्याशङ्क्य, दैक्षस्य श्रुत्योपकरणादीनां चौपसथ्याहानुष्ठेयाग्नीषोमीयप्रणयनोत्तरकालपाठेन पाठक्रमादौपवसथ्येऽहन्यनुष्ठेयत्वावगतेरेकप्रदेशानुष्ठानाख्यस्यानुष्ठानसादेश्यस्य स्पष्टत्वात् सुप्रतिपादं सन्निधिहेतुत्वं मत्वा, पाठसादेश्यस्यास्पष्टत्वेन सन्निधिहेतुत्वस्य दुःप्रतिपादस्य प्रतिपादनायेति परिहारं सूचयन्पाठसादेश्योपपादनपूर्वं सन्निधिहेतुत्वमेव तावदुपपादयेति—**विनापीति**। अपिशब्दः प्रकारान्तरवाची। पाठसादेश्यहेतुकस्य क्रमस्य विनियोगहेतुतामुपपादयति—**आद्येनेति**।

ऐन्द्राग्नयोर्याज्यानुवाक्यायुगलैरैन्द्राग्नाभ्यां प्रधानाभ्याम् देवताप्रकाशकत्वाल्लिङ्गस्य च सामान्यस्य सम्बन्धिनं विना विनियोजकत्वायोगात् काम्ययाज्याकाण्डसमाख्यया च कर्मविशेषान्वयाख्यसामान्यसम्बन्धानवगतेः क्रमेण विनियोगेऽप्यनुमन्त्रणस्य प्रधानेनाऽनाकाङ्क्षितत्वात्क्रमेण विनियोग न युक्त इत्याशङ्क्य, प्रधानस्यानुमन्त्रणाकाङ्क्षत्वेऽप्यनुमन्त्रणाकाङ्क्षयाऽऽकाङ्क्षामुत्पाद्य विनियोगो भविष्यतीति परिहारं सूचयन्ननुमन्त्रणविनियोगे क्रमस्य हेतुतामुपपादयति—**तथेति**। आद्यानुमन्त्रणस्याद्यशेष्यन्वयान्निराकाङ्क्षतया, द्वितीयादीनां अनुमन्त्रणादीनां द्वितीयादिभिः शेषिभिः सम्बन्धेन भाव्यमित्यर्थः। एवं तर्हि ग्नेरहं देवयज्ययेत्याद्यनुमन्त्रणानि क्रमविनियोज्यत्वेन कस्मान्नोदाहृतानीत्याशङ्क्य, अधिकारलक्षणप्रकरणेन दर्शपूर्णमासान्वयाख्ये सामान्यसम्बन्धे सर्वेषामनुमन्त्रणानामनवगतेर्द्वारविशेषान्वयाय व्यवस्थापेक्षायामाग्नेयादियागाङ्गत्वेनानुमन्त्रणानामाग्नेययागादिप्रकाशनसामर्थ्याल्लिङ्गेन व्यवस्थासिद्धेः, क्रमानपेक्षत्वाद् अस्पष्टलिङ्गेन व्यवस्थापयितुमशक्यमनुमन्त्रणमुदाहरति—**तत्रेति**। लिङ्गेनाऽव्यक्तलिङ्गमन्त्रव्यवस्थानभ्युपगमे प्रकरणात्सर्वार्थत्वापत्तेः क्रमेण विनियोगो न सिद्धयेदित्याशङ्कते—**ननु चेति**। अबाधसम्भवे बाधपक्षस्याऽनाश्रयणीत्वात् उपांशुयाजस्य विशेषितया ग्रहणे द्वयानुग्रहसम्भवात्।

न क्रमो बाधनीय इति परमतेन दूषयितुमुपन्यस्यति—**तत्रेति**। उपांशुयाजमात्रार्थत्वे प्रकरणावगतसर्वार्थत्वबाधापत्तेर्न द्वयानुग्रहः सम्भवतीत्याशयेन दूषयति—**शक्यन्त्विति**। अनुमन्त्रणस्याश्रुतावृत्तिदोषापत्तेः। सर्वार्थता युक्तेत्याशङ्क्य प्रतिप्रधानमङ्गावृत्तिर्न्याय्यैवेति सूचनार्थं प्रति—**प्रधानेत्युक्तम्**। आग्नेयादीनां लिङ्गावगतैरनुमन्त्रणान्तरैर्नैराकाङ्क्षचादुभयाकाङ्क्षालक्षणेन प्रकरणेनास्यानुमन्त्रणस्याग्रहणं न सम्भवतीति स्वमतेन परिहारमाह—**तत्रेति**। स्पष्टलिङ्गानां लिङ्गेना अस्पष्टलिङ्गस्य च प्रकरणेन विनियोगाद्विषमशिष्टविकल्पापत्तेरपि नास्य प्रकरणेन ग्रहणमित्याह—**न चेति**। अदृष्टार्थत्वेनैकार्थ्यानवगमात्। विकल्पानापत्तिं शङ्कते—**अदृष्टार्थानामिति**।

मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरन्।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणमित्येवम्॥ इति—

लक्षणेनैषां यागानुमन्त्रणाख्यया यागस्मृत्यर्थत्वावगतेः। कृतस्यापि च यागस्याकृतत्वशङ्कायामश्रद्धानिमित्तवैगुण्यापत्तेः, शङ्कानिवृत्तौ कृतस्य यागस्य प्रत्येकस्मृत्याख्यप्रत्यवेक्षा-

पेक्षत्वात् दृष्टार्थत्वावगतेरेकैकेन च मन्त्रेण तत्सिद्धेर्दुर्वारा विकल्पापत्तिरिति परिहरति—**नेति**। कृतयागस्मरणस्यानुष्ठानानौपयिकत्वात् कालविप्रकृष्टाभावेन चाकृतत्वशङ्कानुपपत्तेस्तन्निवृत्त्यर्थत्वायोगात् पदार्थमध्ये क्षुतादिनिमित्तविष्णुस्मरणवददृष्टार्थत्वेऽपि भिन्नानां मन्त्राणामवल्रुप्तमन्त्रवदेकप्रयोजनत्वकल्पनानुपपत्तेरैन्द्रवायवादिग्रहणवञ्च समुच्चयमन्तरेणगत्यभावात्समुच्चयानाश्रयणीयत्वावगतेर्न समुच्चय युक्त इत्याह—**सत्यपि चेति**।

गत्यन्तरे सतीत्येतद्विवृणोति—**आग्नेयादिभिरिति**। मन्त्राणां चाक्रियात्वेनानितिकर्त्तव्यत्वारूपत्वात् स्वमत प्रकरणविनियोज्यत्वानुपपत्तेरभिधानक्रियाद्वारा विनियोज्यत्वावगमेऽपि अस्पष्टलिङ्गाभिधायकतायोगान्नास्य प्रकरणविनियोगः सम्भवतीत्याह—**किं चेति**। उपांशुयाजेऽपि तर्ह्यभिधानाशक्तेर्नाविनियोगः स्यादित्याशङ्क्य, क्रमादुपांशुयाजाङ्गत्वावगतेः सन्निहिताभिमुखवाचिमध्यमपुरुषयोगात् प्रकरणसन्निहितानेकयागत्यागेन क्रमसन्निहितैकोपांशुयाजाभिधानसामर्थ्यावगतेरुपांशुयाजे विनियोगोपपत्तिसूचना—**यासीत्युक्तम्**। श्लोकं व्याचष्टे—**दब्धिनर्मेति**। युष्मदर्थविषयमध्यमपुरुषान्तरत्वेनासिशब्दस्य सन्निहितवाचित्वेऽपि सर्वेषां प्रकृतत्वेन सन्निधानात् अभिधानापत्तिमाशङ्क्य, सन्निहितवाच्यभिमुख्यस्य युष्मदर्थत्वादुपांशुयाजस्यैव च मन्त्राकाङ्क्षयोत्पादिताकाङ्क्षत्वेनासिमुखत्वात् मन्त्रत्वेनावान्तरनिराकाङ्क्षीकृतत्वेनानभिमुखत्वात् मन्त्रित्वेनावान्तरनिराभिमुखत्वात् मन्त्रित्वेनावान्तरनिराकाङ्क्षीकृतत्वेनानभिमुखानानाग्नेयादीनां सन्निधानेऽप्यनभिधानसूचनायाऽभिमुखोक्तिः। सादेश्येनीपांशुयाजस्यात्यन्तसान्निध्यात्तस्यैवाभिधेयता युक्तेति परिहारसम्भवेऽपि अतिशयार्थाभिमुखोक्तिः।

स्वमतेनोक्तपरिहारमुपसंहरति—**ततश्चेति**। तथेन्द्राग्नं कर्मेत्यादिभाष्येणोदाहृतो याज्याकाण्डक्रमस्तयोश्चाङ्गाङ्ग्यपेक्षवेलावामित्यादिवार्त्तिकनोभयाकाङ्क्षाया क्रमस्य विनियोगहेतुत्वाभिधानाद्व्याख्यात इत्याह—**याज्येति**। अनुष्ठानदेशः क्रमः कस्मान्नोदाहृत इत्याशङ्क्य, पशुधर्माधिकरणे क्रमस्य प्रकरणविरोधपरिहारेण पशुधर्माणां दैक्षार्थत्वे वक्ष्यमाणो अनुष्ठानदेशलक्षणोऽपि क्रमो विनियोगहेतुत्वेन सुज्ञानो भविष्यतीति मत्वेत्याह—**अनुष्ठानेति**। वैकृतधर्मकर्मसन्निधेस्तु प्रकरणत्वशङ्कायाश्चतुर्थे [मध्यस्थं यस्य तन्मध्य] इत्यस्मिन्नधिकरणे स्वातन्त्र्यशङ्कायाश्च फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यादित्यस्मिन्निराकरिष्यमाणत्वेन क्रमस्य निःसन्दिग्धत्वात् निराकाङ्क्षोपांशुयाजसन्निधेश्च विनियोजकत्वस्योक्तत्वात् पृथगमुदाहरणम्। लिङ्गक्रमसमाख्यानादित्यत्र लिङ्गस्य क्रमसमाख्यासापेक्षत्वमात्रोक्तेः क्लृप्तस्य विनियोजकत्वाभिधानादिहोदाहरणम् ॥ १२ ॥

इति पञ्चमं क्रमाधिकरणम्।

भा० प्र०—विनियोग में क्रम प्रमाण है या नहीं अर्थात् क्रम की विनियोजकता है या नहीं—इसका विचार हो गया है। दर्शपूर्णमास प्रकरण के आध्वर्यव काण्ड में 'आग्नेय', 'उपांशुयाज', एवं 'अग्निषोमीय' ये प्रधान कर्मों में आगे-आगे की प्रधानता

कही गई है, प्रकृत स्थल के याजमान काण्ड में यजमान के कर्तव्य कर्मकलाप वेद का जो अंश उपदिष्ट है, वेद के उस अंश को याज्ञिकों ने यजमानकाण्ड कहकर निर्देश किया है। होता और अध्वर्यु के कर्मकलाप के सम्बन्ध में भी इसी प्रकार समझना चाहिए अर्थात् तदनुसार अध्वर्यवकाण्ड, होत्रकाण्ड, उद्गोत्रकाण्ड आदि का उल्लेख किया गया है। 'अग्नेरहं देवयज्ययान्नाद्ये भूयासम्' 'दब्धिरस्यदब्धो भूयासम् अमुं दमेयम्' एवम् 'अग्नीषोमयोरहं देवयज्यया' वृत्रहा भूयासम् ये छ मन्त्र भी आगे-आगे ( पर-पर ) क्रम में पढ़े गये हैं। इस स्थल में याजमानकाण्ड के द्वितीय पठित 'दब्धिरस्य दब्धो भूयासम्' यह मन्त्र आध्वर्यव काण्ड के द्वितीय स्थान में उपदिष्ट जो 'उपांशुयाज' उसका अङ्ग है कि नहीं—यहीं संशय है। इसमें पूर्वपक्षी का कहना है कि स्थल में विनियोजक कोई भी श्रुति अथवा वाक्य नहीं हैं और लिङ्ग एवं प्रकरण को विनियोजक मानने पर उसके अनुसार उक्त मन्त्र 'आग्नेय' आदि यागों का भी अङ्ग हो सकता है, अतः वह 'उपांशुयाग' का भी अङ्ग होगा—यह कहना सङ्गत नहीं है। यदि यह कहा जाय कि क्रम के अनुसार वह उपांशुयाग का अङ्ग होगा, ऐसी स्थिति में यह कहा जा सकता है कि क्रम विनियोजक न हो से उसके विनियोग में प्रमाण नहीं है।

इसके समाधान में सिद्धान्ती का कहना है कि 'क्रमश्च' क्रम भी विनियोग में प्रमाण है, क्योंकि, ''देशसामान्यात्'' यतः कर्म एवं मन्त्र दोनों ही की देशगत अर्थात् स्थानगतसमानता है, कर्मकाण्ड में जिस स्थान में यह कर्म पठित है उस कर्म को मन्त्रकाण्ड में उक्त मन्त्र भी ठीक उसी स्थान में ही पठित है, इसलिए दोनों का स्थानगत ऐक्य होने से क्रम भी अङ्ग का विनियोजक होगा। यद्यपि साक्षात् रूप में क्रम की विनियोजकता नही है तथापि मन्त्रकाण्ड में मन्त्र द्वितीय स्थान में पठित होने स्थान की समानता के अनुसार वह कर्मकाण्ड के द्वितीय स्थान में पठित कर्म का 'उपांशुयाज' नामक कर्म का उपस्थापक है, और कर्मकाण्ड के द्वितीय स्थान में पठित 'दब्धिरसि' इत्यादि मन्त्र का उपस्थापक है। इस प्रकार स्थान की समानता के कारण उपस्थिस्ति 'उपांशुयाज' नामक कर्म एवं 'दब्धिरसि' इत्यादि मन्त्र की परस्पर आकाङ्क्षा योग्यता आदि रहने से अङ्गाङ्गिभाव सम्भव होता है। उनमें उनमें परस्पर ( आकाङ्क्षा रूप प्रकरण, प्रकार द्वारा वाक्य, वाक्य के द्वारा लिङ्ग एवं लिङ्ग के द्वारा श्रुति की कल्पना कर अङ्गाङ्गिभाव का विनियोग होता है। इस प्रकार प्रकरण आदि के द्वारा क्रम भी विनियोजक होने से क्रम भी विनियोग में प्रमाण है, इसलिए 'दब्धिरसि' इत्यादि मन्त्र उपांशुयाज का अङ्ग है।

क्रम से समानदेशता की अवगति होती है, यह 'पाठकृत' और स्थान अर्थकृत के भेद दो प्रकार का है। पाठकृत समानदेशता भी यथासंख्यपाठ और सन्निधि पाठ के भेद से दो प्रकार का है, उनमें उक्त 'दब्धिरसि' इत्यादि मन्त्र यथासंख्य पाठ का उदारहण है, 'शुद्धधवं दैव्याय कर्मणे' यह मन्त्र सन्निधि पाठ का उदाहरण है। अनुष्ठान की

समानदेशता होने से पशु के प्रति प्रयोज्य धर्म अर्थात् नियोजन, पर्यग्निकरण आदि अग्नीषोमीय का अङ्ग होता है—यह अर्थ सादेश्य रूप क्रम का उदाहरण है।

"क्रमः च" = क्रम भी विनियोग में प्रमाण है, 'देश सामान्यात्' = क्योंकि देश का अर्थात् स्थान का सामान्य अर्थात् समानता या ऐक्य है ॥ १२ ॥

इति पञ्चम क्रमविनियोगाधिकरण।

अथ समाख्याधिकरणम्।

## [६] आख्या चैवं तदर्थत्वात् ॥ १३ ॥ सि०

**शा० भा०—अथ किमेतावन्त्येव विनियोगकारणानीति? नेत्युच्यते। किंच, समाख्या चैवं स्यात्। कथं विनियोगकारणमिति? समाख्या सति-सम्बन्धे भवति। यथा पाचको लावक इति। तत्र पाचकशब्दमुपलभ्य पचति-नाऽस्य सम्बन्ध इति गम्यते। एवं वेदेऽपीति। अकृतकार्यसम्बन्धं समाचक्षाणं शब्दमुपलभ्य भवति सम्बन्धे तस्मिन्संप्रत्ययः। किमिहोदाहरणम्? प्रयोजनं च? आध्वर्यवमिति समाख्यातानि कर्माण्यध्वर्युणा कर्तव्यानि। हौत्रमिति च होत्रा। एतदुदाहरणम्, प्रयोजनं चेति ॥ १३ ॥**

समाख्याधिकरणम् ॥ ६ ॥

अथ षष्ठं समाख्याधिकरणम्

त० वा०—यौगिकी या समाख्या सा सम्बन्धप्रतिपादिनी।
सोऽपि बुद्धावुपस्थाप्य शेषसम्बन्धबोधकः ॥

आध्वर्यवादिसमाख्यानां वेद एव प्रयोग इति, न लौकिकत्वचोद्यं क्रियते। तत्राध्वर्युर्वृत्तमात्रमेवापेक्षते—किं मया कर्तव्यमिति। तदपेक्षमाणस्य च यदि न कुतश्चिद्विशेषोऽवगम्यते, ततो यत्किञ्चिदिति भविष्यति। तथाऽऽध्वर्यवसंज्ञितं कर्म, को मे कर्ता भविष्यतीत्येवमेव शेषमपेक्षते। तत्र शब्दज्ञस्याऽऽदित एवैषोत्प्रेक्षा प्रत्येकं भवति यदस्याध्वर्योः कर्म, तदाध्वर्यवशब्दवाच्यं भविष्यति। तथाऽप्यस्याऽऽध्वर्यवस्य यः कर्ता, तस्याध्वर्युर्नामेति। प्रकृतेर्वा विकारस्तदनुरूपोऽनुमीयते विकाराद्वा प्रकृतिः। यद्यपि शब्दान्तरं विकार इत्युभावप्येतौ परस्परनिरपेक्षौ नित्यसम्बन्धौ च। तथाऽपि नित्याया एव शब्दप्रवृत्तेर्नित्यः सम्बन्धो निमित्तमिति सर्वयौगिकानामेवमन्वाख्यानम्। न हि राज्यशब्दस्याप्यादिमती प्रवृत्तिरित्युक्तम्। निमित्तनैमित्तिकभावस्त्वनादित्वेऽपि शब्दार्थयोरिवेहाविरुद्धः।

### समाख्या विषये केषाञ्चिन्मतम् तद्दूषणञ्च

तत्र केचिद्वदन्ति । प्रागेतस्मात्समाख्याविनियोगादध्वर्य्वर्याध्वर्यवयोरसम्बन्धादशक्यं यौगिकत्वं समाख्यया विज्ञातुम् । अथ तु प्रथमं सिद्धे सम्बन्धे पश्चात्समाख्यायाः प्रवृत्तिः । ततो न समाख्या विनियोजिका स्यात् । अतः परस्परनिरपेक्षयोरेव रूढयोः सारूप्यादुपतिष्ठमानयोरेष विनियोग इति । न त्वेतद्युक्तम् । न हि रूढानां सारूप्यादुपस्थापनसामर्थ्यं धर्मसम्बन्धेऽप्यस्ति । यथा कण्वरथंतरे रथंतरधर्मान्निराकरिष्यति, किमुत्राव क्रियाकर्तृसम्बन्धे । पाचकाद्युदाहरणं वा युक्तं स्यात् ।

### वार्तिकमतम्

तस्माद्यौगिकत्वमेवाभ्युपगन्तव्यम् । यत्तु प्राक्प्रयोगात्प्रमाणं नास्तीति । सत्यं प्रत्यक्षं नास्तीति । समाख्याययैवानुमीयमानं भविष्यति । वेदे हि प्रथममेव क्रियाकर्तृसम्बन्धो निष्पन्नः । तस्मिन्सति समाख्या प्रवृत्ता । वयं तु तं सम्बन्धं प्रमाणान्तरेणाऽप्रतिपद्यमानाः समाख्यादर्शनेन प्रतिपद्यामहे । तेन ज्ञायते पूर्वं समाख्या, पश्चात्सम्बन्ध इति । वस्तुतस्तु प्रथमेव सम्बन्धः । स चाप्रतीतोऽपि सत्तामात्रेणैव समाख्यां प्रवर्तितवान् । यदि ह्येषाऽऽदिमती स्यात्, तः प्रयोक्तुः प्रथमं सम्बन्धावगत्या भवितव्यम् । न च सा तथा भवतीति, न पर्यनुयुज्येमहि । नित्यसम्बन्धाश्रयणे तत्र नित्यप्रयुक्तया समाख्यया नूनं कश्चिदस्ति सम्बन्ध इति प्रतिपादिते अन्यथानुपपत्त्या शेषशेषिभावः पश्चाद्विज्ञायते । तस्माद्यौगिक्यैव समाख्यया विनियोग इति सिद्धम् ॥ १३ ॥

( इति षष्ठं समाख्याधिकरणम् ॥ ६ ॥

**अथ षष्ठं समाख्याधिकरणम् ॥ ६ ॥**

न्या० सु०—आख्याया विनियोगहेतुत्वाभावाशयस्याथेति प्रश्नभाष्यस्य यौगिकत्वलक्षणसमाख्यात्वाभावाशयस्य च किञ्चेत्यस्य प्रयोगे च व्याख्यातत्वात् समाख्यापि क्रमविशेषत्वहेतुः वल्साावयवार्थप्रत्यभिज्ञानेन चाध्वर्यवादियौगिकत्वात्समाख्या चैवमित्यंवं सूत्रव्याख्यार्थे समाख्या चेति भाष्यं तात्पर्यतो व्याचष्टे—यौगिकीति । वल्साववयार्थप्रत्यभिज्ञाने समुदायशक्तिकल्पनायोगात्सम्बन्धनिमित्तैवेधाख्यैत्येतावता यौगिकत्वाख्ये समाख्यात्वे व्युत्पादिते, तस्या विनियोगहेतुत्वोक्त्यर्थमध्वर्य्वादिना प्रकृत्यर्थत्वेन सहान्वाधानादेः प्रत्ययार्थस्य कश्चित्सम्बन्धोऽस्तीत्येवं सामान्याकारेण स्ववाच्यविशिष्टार्थान्यथानुपपत्त्या प्रतीते सम्बन्धेऽपि निःशेषसामान्यायोगात् विशेषापेक्षायां शेषशेषिलक्षणसम्बन्धविशेषं बोधयतीत्युक्ते विशेषबोधोपपादनार्थमृत्विजां कर्माणि प्रति कर्तृतया शेषत्वेन वरणभरणाभ्यां परिक्रीतत्वादनुष्ठेयत्वेन शेषिभूतकर्मापेक्षायामनुष्ठातृत्वेन च शेषिभूतानां कर्मणां कर्तृशेषभूतापेक्षायां प्रत्ययार्थस्यान्वाधानादेः प्रकृत्यर्थस्य चाध्वर्योरन्योन्यसामीप्येन

बुद्धौ स्थापनादित्युक्तं समाख्याया निर्दोषत्वायाऽनादिप्रसिद्धता यच्छब्देनोक्तेति सूचनार्थम्। पौरुषेय्यामपि तावद्दीक्षानुवाकादिसमाख्यायामनादित्वान्न दोषोऽस्ति आध्वर्यवादिसमाख्यायां तु दोषशङ्कापि नास्तीत्युक्तिपूर्वमुत्तरार्द्धं व्याचष्टे—**आध्वर्यवादीति।**

आध्वर्यवशब्दवाच्यत्वेनान्वाधानादेः अध्वर्युशब्दवाच्यत्वेन चर्त्विजोऽन्वाधानादिकर्तृकत्वकल्पना भवतीत्युक्ते, कस्मात्तर्ह्यध्वर्युसमाख्या भाष्ये नोदाहृतेत्याशङ्क्यैकयापि समाख्यया द्वयोरपि कर्तृकर्मणोः श्रुत्यर्थाभ्यां नियमसिद्धेरिति सूचनार्थं प्रत्येकोक्तिः। प्रत्ययलोपस्य प्रातिपदिकप्रत्यापत्तेर्वा स्मृत्यभावात् कथामाध्वर्यवकर्त्रेध्वर्युता व्युत्पत्तिरित्याशङ्क्य, प्रकृतेऽध्वर्युप्रातिपदिकादृत्विग्विशेषवाचितया प्रसिद्धादाध्वर्यवशब्दास्तद्विकारत्वेन व्याकरणालोचनयाऽवगताध्वर्यवकर्मवाचित्वात्मकेन प्रकृत्यानुरूपेण विकाराद्वाऽध्वर्यवशब्दार्थान्वयस्य निमित्तत्वायोगेनौपचारिकादन्वाधानादिवाचितयावगतादौदमेवित्वत् प्रसिद्धाध्वर्यवशब्दादर्थेनाध्वर्युशब्दस्तत्र प्रकृतित्वेनावगतोऽन्वाधानाद्याध्वर्यवकर्तृवाचित्वात्मकेन विकारानुरूपेणानुमीयतइत्युक्तम्।

शब्दाधिकरणेप्रकृतिविकृत्योश्चेति पूर्वपक्षसूत्रोक्तंप्रकृतिविकारइति सूत्रे विकारोक्त्यानुभाष्यशब्दान्तरोक्त्या निरस्तत्वात् प्रकृतिविकारोक्ती न युक्ते। शब्दार्थसम्बन्धनित्यत्वोक्तंश्चाध्वर्यवशब्दप्रवृत्तावप्यध्वर्युशब्दार्थान्वयस्य निमित्तत्वायोगान्नोपचारतोऽपि प्रकृतिविकारता युक्तेत्याशङ्क्य, व्याकरणप्रत्ययौपचारिकी प्रकृतिविकारतोक्ता। वस्तुतस्तु यद्यप्यध्वर्य्वाध्वर्यवशब्दौ प्रकृतिविकारत्वाभावादन्योन्यानपेक्षौ नित्यं चार्थान्वितौ। तथापि शब्दस्यार्थे प्रयोगाख्यायाः प्रकृतेः कूटस्थनित्यत्वाभावात्, नित्यस्य च नैमित्तिकत्वेऽपि अविरोधादाध्वर्यवशब्दप्रवृत्तौ वाचत्वेनाध्वर्युशब्दार्थान्वयस्य निमित्तत्वादध्वर्युशब्दस्याध्वर्यवशब्दं प्रति निमित्तामुपचर्य प्रकृतिविकारत्वान्वाख्यानमित्याह—**यद्यपि चेति।**

प्रवाहनित्यत्वस्य नैमित्तिकत्वाविरोधसूचनार्थं सर्वयौगिकानामिति यदुक्तं तदुपपादयितुमाह—**न हीति।** एवमपि शब्दानां कूटस्थनित्यत्वेऽपि सम्बन्धज्ञानापेक्षस्य शब्दप्रवृत्तौ नितित्तत्वात्सम्बन्धज्ञानस्य च कादाचित्कत्वान्निमित्तत्वान्निमित्तत्वाविरोधवद्राजादिशब्दस्यापि राज्यादिशब्दप्रवृत्तिनिमित्तभूतराज्याद्यन्वयापेक्षितराज्याद्यर्थोक्तिद्वारा राज्यादिशब्दं प्रति निमित्तत्वात् सम्बन्धज्ञानापेक्षत्वेन चार्थोक्ते कादाचित्कत्वनिमित्तता न विरुद्धेत्याह—**निमित्तेति।**

समाख्याहेतुकाद्विनियोगात्प्रागाध्वर्यवाख्यस्यान्वाधानादेरध्वर्युसम्बन्धाप्रतीतौ शब्दे यौगिकत्वज्ञानाशक्तेः, प्रतीतौ वा समाख्याया विनियोगहेतुत्वायोगापत्तेर्यौगिकत्वायोगात् रूढित्वेनान्योन्यानपेक्षत्वेऽप्यध्वर्य्वाध्वर्यवसमाख्ययोरध्वर्योः कर्त्तव्यापेक्षायामध्वर्युसमाख्यासादृश्यादाध्वर्यवसमाख्यायामुपनिबध्यमानायामन्वाधानादेः कर्त्तव्यत्वावगमात्। अन्वाधानादेश्च कर्त्रपेक्षायामध्वर्युसमाख्यायामुपतिष्ठमानायामध्वर्योः कर्तृत्वावगमात् एष समाख्याहेतुको विनियोगः सेत्स्यतीति भर्तृमित्रादिमतं दूषयितुमुपन्यस्यति—**तत्रेति।** यत्रादिदेशो धर्मसम्बन्धेसारूप्यादुपस्थापनस्य सामर्थं प्रसिद्धं, तत्रापि तावद्रूढिः सारूप्यहेतुकस्योपस्था-

पनस्य नास्ति अत्र त्वौपदेशिके क्रियाकर्तृसम्बन्धेन सारूप्यहेतुकस्योपस्थापनसामर्थ्यं दूरात्सारितमित्येवं दूषयति—**न त्विति।**

उपस्थापनस्य नित्यमुपस्थापकापेक्षत्वादुपस्थापकसारूप्यसापेक्षत्वेऽपि सामर्थ्यंशब्देन सह समासाविघातः। कण्वरथन्तरशब्दस्य यौगिकत्वे सत्यरथन्तरे रथन्तरे रथन्तरशब्दस्य वत्यर्थकल्पनया शब्दोक्तान्सादृश्यात्प्रवृत्तेः सादृश्यस्य च धर्मसामान्यलक्षणत्वात् रथन्तरधर्मातिदेशकत्वे स्यात्। रूढित्वात्तु शब्दसादृश्येन रथन्तरशब्दोपस्थापनद्वारा रथन्तरोपस्थापनेऽपि शब्दसादृश्यस्य प्रत्यक्षगम्यत्वेन शाब्दत्वात्तद्वारेण रथन्तरोपस्थापने शब्दस्याव्यापारान्नातिदेशता युक्तेति दाशमिकदृष्टान्तेन रूढिसादृश्यहेतुकस्योपस्थापनस्यातिदेशिकधर्मान्वयासमर्थतोपपादिता।

उपदेशे तु वत्यर्थानपेक्षणेन शब्दोक्तस्यापि सारूप्यस्य हेतुत्वाभावात् सादेश्यवच्च सारूप्याभावात्सादेश्यवच्च सारूप्यसम्बन्धं विनाऽनर्थक्याभावेन सम्बन्धाभिमुख्यरूपेणाऽनुपस्थापकत्वात् स्वरूपमात्रेण चोपस्थापनेऽपि गोगवयवत्सम्बन्धाप्रतीतेरशाब्देन सारूप्येणोपस्थाने शाब्दस्याव्यवहारात् वैदिके च शब्दव्यतिरिक्तप्रमाणाभावात् रूढिसारूप्यस्य क्रियाकर्तृसम्बन्धस्य शक्तेर्दूरोत्सारितता, किमुतेत्यनोक्तार्थाद्वासम्बन्धमात्रेऽपि सारूप्यहेतुकत्वोक्तस्योपस्थापनस्य शक्तिर्नास्ति, तद्विशेषे तु क्रियाकर्तृसम्बन्धे दूरोत्सारितेत्यर्थः।

भाष्यकृतोऽपि रूढिताऽनभिमतेति सूचयितुमाह—**याचकादीति।** परपक्षे दोषमुक्त्वा, स्वपक्षे दोषं परिहर्तुं निर्दोषत्वं प्रतिजानीते—**तस्मादिति।** अनुभाषणपूर्वं परिहरति—**यत्त्विति।** सत्यं समाख्याहेतुकात् विनियोगात्प्रागध्वर्युणोध्वर्यवानुष्ठानादध्वर्य्वाध्वर्यवयोः सम्बन्धे प्रत्यक्षप्रमाणं नास्ति तथाप्यध्वर्युणाध्वर्यवं कार्यमित्येवंरूपं श्रुत्याख्यं प्रमाणं भविष्यतीत्यर्थः। सम्बन्धात्प्राग्यौगिक्याः समाख्यायाः प्रवृत्तिरयुक्तेति यदुक्तम्, तत्परिहर्तुमाह—**वेदे हीति।** अनादित्वोपलक्षणार्था वेदोक्तिः अनादिसमाख्याप्रमाणकस्य सम्बन्धस्यानादित्वादिदानीं ततः समाख्यातृप्रयोगात् प्रागेव पूर्वेष्वनुष्ठातृषु निष्पत्तेः तस्मिन् प्रतीते सतीदानीन्तनेषु प्रयोक्तृषु समाख्या प्रवृत्तेत्यर्थः समाख्यातः प्रागङ्गाङ्गिसम्बन्धप्रतीतौ समाख्याप्रमाणं न स्यादित्याशङ्क्यानुष्ठातृषु निष्पन्नस्यापि सम्बन्धस्यामीभिर्मीमांसकमूलप्रमाणं विना याज्ञिकानुष्ठानमात्रादविश्वसद्भिः प्रतिपत्तेः समाख्याख्यमूलप्रमाणदर्शनेनैव वयं मीमांसकाः सम्बन्धं प्रतीपद्यामहइत्याह—**वयं त्विति।** सम्बन्धप्रतिपत्ति विना सम्बन्धिनिमित्तायाः समाख्याया दर्शनायागात्समाख्यादर्शनेन सम्बन्धप्रतिपत्तौ अन्योन्याश्रयत्वं स्यादित्याशङ्क्य क्लृप्तावयवार्थप्रत्यभिज्ञानेनावयवार्थभावविनिश्चयं च विना समुदायकल्पनायोगात्सम्बन्धज्ञानपूर्वं प्रयोक्तृस्था समाख्या ज्ञायते। पश्चात्सम्बन्धो ज्ञायतइत्याह **तेनेति।**

कथं तर्हि सम्बन्धस्य प्रथमतोक्तेत्याशङ्क्य—**वस्तुतस्त्विति।** सम्बन्धेऽपि[1] सम्बन्धस्याज्ञानं तत्प्रतिपादिकायाः समाख्यायाः प्रवृत्तिरयुक्तेत्याशङ्क्य, सम्बन्धस्याप्रतीतावप्य-

---

१. सद्भावेऽपीति २ पुमा०।

सत्त्वनिश्चयाभावमात्रेण क्लृप्तावयवार्थप्रत्यभिज्ञानं समुदायशक्तिकल्पनायोगात् । प्रयोक्तृस्थायाः समाख्यायाः श्रोतारं प्रति ज्ञेयत्वेन प्रवृत्तिरयुक्तेत्याह—**स चेति** । अन्यप्रयुक्तसमाख्यादर्शच्छ्रोतुः सम्बन्धप्रतिपत्तिसम्भवेऽपि अनवगते सम्बन्धे तत्प्रतिपादिकयाः समाख्याया वक्तुरप्रयोगादप्रयुक्तायाश्च श्रोतुर्दर्शनायोत् न सम्बन्धिप्रतिपत्तिरित्याशङ्कानिरासपूर्वं यौगिक्याः समाख्यया: सम्बन्धमात्रावगमेऽपि तद्विशेषाङ्गाङ्गिसम्बन्धावगतिः कथमित्याशङ्कां निरस्यति—**यदि हीति** ।

प्राक्सम्बन्धावगमेऽपि नित्यत्वात्समाख्यायाः पूर्वं वृद्धप्रयोगदर्शनात्सर्वेषां नित्यं प्रयोगोपपत्तावुक्तायां सम्बन्धनिमित्तायाः समाख्यायास्तं विना कथं नित्यं प्रयोगोपपत्तावुक्तायां सम्बन्धनिमित्तायाः समाख्यायास्तं विना कथं नित्यं प्रवृत्तिरित्यशङ्क्य, सम्बन्धस्य प्रवाहनित्यतोक्ता । ससमाख्यावगतस्य सम्बन्धसामान्यस्य विशेषं विनानुपपत्तेर्विशेषान्तरानुक्तेश्चाध्वर्योश्चाध्वर्युं वृणीतेति विधिना वरणेनाध्वर्युमुपाददीतेत्येवंविधानात्समान्यतोऽङ्गत्वादन्वाधानादेश्च क्रतूपकारित्वेन समूहितत्वात्सामान्यतोऽङ्गत्वेऽवगतेर्विध्यप्रगृहीतया समाख्ययाङ्गाङ्गित्वलक्षणः सम्बन्धविशेषो ज्ञायतइति द्वितीयाशङ्कानिरासाशयः ।

अनेन चैवं वेदेऽपीति भाष्यस्याकृतकर्मध्वर्युत्वाद्याधानाद्याख्ययोः प्रकृतिप्रत्ययार्थयोः सामान्यतः सम्बन्धप्रतिपादकमाध्वर्यवशब्दमुपलभ्य निर्विशेषसामान्यायोगात् तस्मिन्नङ्गाङ्गिसम्बन्धबोधस्य विनियोगविषयभूतेऽङ्गाङ्गित्वलक्षणे सम्बन्धविशेषे प्रत्ययो भवतीति शङ्काद्वयनिरासार्थत्वेन व्याख्या सूचिता । वैदिकस्य क्रियाकर्त्रादिसम्बन्धस्य प्रमाणान्तरादनवगतेः सम्बन्धनिमित्तसमाख्योदाहरणायोगः प्रमाणान्तरात्सम्बन्धावगतौ वा सामाख्यानिकविनियोगोक्तिर्निष्प्रयोजनेत्याशक्यत्वेन किमहेति प्रश्नभाष्यव्याख्या यौगिकत्वायोगशङ्कावार्त्तिकेन सूचिताऽधिकरणार्थमुपसंहरति—**तस्मादिति** । रूढित्वनिरासोपसंहारायैवकारः ॥ १३ ॥

इति षष्ठं समाख्याधिकरणम् ॥

भा० प्र०—समाख्या विनियोग में प्रमाण है या नहीं—इसका विचार किया गया है । सामाख्या यौगिक शब्द है, जैसे 'होत्र', 'अध्वर्यव', उद्गात्र इत्यादि । याज्या पुरोऽनुवाक्य पाठ आदि धर्म ऋग्वेद में कहा गया है । दोहन निर्वाप आदि धर्म यजुर्वेद में विहित है एवम् आज्य स्तोत्र आदि पृष्ठ स्तोत्र आदि धर्म सामवेद में उपदिष्ट है, यज्ञ के मध्य में अनेक ऋत्वक् रहते हैं । उक्त धर्मों में कौन क्या करेगा इसका नियम नहीं रहने से जो कोई जिस किसी अनुष्ठान को कर सकता है । इस प्रकार पूर्वपक्ष होने पर सिद्धान्ती ने कहना कि "आख्या चैवम्" प्रकरण आदि के समान इस स्थल में व्याख्या ही उसका नियम है, समाख्या के अनुसार ऋत्विजों में क्रिया व्यवस्थित होती है । कारण, "तदर्थत्वात्" समाख्या तदर्थ अर्थात् ऋग्वेदीय कर्म होत्र होने से वह अध्वर्यु के अनुष्ठेय एवं सामवेदीय क्रिया उद्गात्र होने से वह उद्गाता से निष्पाद्य है । होत्र,

अध्वर्भव उद्गात्र इस सभी स्थलों में समाख्या के प्रामाण्य का बाधक न होने से श्रुति, लिङ्ग आदि पाँचों के समान समाख्या भी विनियोग में प्रमाण होगी। "आख्या च" = आख्या अर्थात् समाख्या भी "एवं" = इस प्रकार अर्थात् क्रम के समान विनियोग में प्रमाण है "तदर्थत्वात्" = क्योंकि, उसकी तदर्थता है अर्थात् वहाँ समाख्या सम्बन्धार्थक होने से विनियोजक = अङ्ग आदि का प्रयोजक हो सकती है॥ १३॥

इति षष्ठ समाख्याविनियोगाधिकरण।

अथ सप्तमं श्रुतिलिङ्गा(बलाबला)धिकरणम्

## [७] श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्॥ १४॥ सि०

शा० भा०—उक्तानि विनियोगकारणानि-श्रुतिः, लिङ्गं, वाक्यं, प्रकरणं, स्थानं, समाख्यानमिति। तेषां समवाये किं बलीय इति चिन्त्यते। एकार्थवृत्तित्वाद्वाचो युगपदसंबन्धाद्द्वयोर्द्वयोः संप्रधारणा। तत्र श्रुतिलिङ्गयोः किं श्रुतिर्बलीयसी, आहोस्विल्लिङ्गमिति। किं पुनरत्रोदाहरणम्। 'ऐन्द्रचा गार्हपत्यमुपतिष्ठते', इति। अत्र चिन्त्यते—किमिन्द्रस्य गार्हपत्यस्य वोपस्थानं कर्तव्यमित्यनियमः, उत गार्हपत्यस्यैवेति। यदि तुल्यबले एते कारणे, ततो विकल्पः। अथ श्रुतिर्बलीयसी, गार्हपत्य एवोपस्थेयः।

का पुनरत्र श्रुतिः ? किं लिङ्गम् ? श्रुतिर्गार्हपत्यशब्दश्रवणम्। लिङ्गं पुनः, 'कदाचन स्तरीरसि नेन्द्रसश्चसि दाशुषे, इतीन्द्रशब्दस्य विशिष्टदेवताभिधानसामर्थ्यम्। अथ किं वाक्यं नाम। संहत्य अर्थमभिदधति पदानि वाक्यम्। यद्येवमिदमपि वाक्यम्—ऐन्द्रचा गार्हपत्यमुपतिष्ठत इति। इदमपि 'कदाचन स्तरीरसि', इति। उभयत्रापि संहत्य अर्थमभिदधति पदानि। तेन वाक्यस्य चैषा संप्रधारणा, न श्रुतिलिङ्गयोः। यदि वा, श्रुतिलिङ्गवाक्यानि विवेक्तव्यानि, इदं श्रुतिवाक्ययोरन्तम् इदं लिङ्गवाक्ययोरिति। तदभिधीयते। यत्तावच्छब्दस्यार्थमभिधातुं सामर्थ्यं, तल्लिङ्गम्। यदर्थस्याभिधानं शब्दस्य श्रवणमात्रादेवावगम्यते, स श्रुत्याऽवगम्यते। श्रवणं श्रुतिः। एकार्थमनेकं पदं वाक्यमित्युक्तमेव। तदेतत्सर्वेष्वेव, वाक्येषु समवेतं विविक्तं च दृश्यते। इह तावत् 'कदाचन स्तरीरसि इत्यनेन मन्त्रेण इन्द्र उपस्थातव्य इति नैतत्कस्यचिच्छब्दस्य श्रवणादेवावगम्यते। नापि शब्दान्तरस्य समीप उच्चारितस्य सामर्थ्यमस्ति, येनैतदवगम्येत। एतस्यां खलु ऋचि इन्द्रशब्दो विद्यते, यो विशिष्टां देवतामवगमयितुं शक्नोति। तया चावगमितया प्रयोजनमस्तीति, तेनेन्द्रोपस्थान इन्द्रशब्द प्रयुज्यते। तदेकवाक्यत्वाच्चावशिष्टानि पदानि। न

त्वेवमस्यामृचि कस्यचिच्छब्दस्य सामर्थ्याद्गार्हपत्यस्योपस्थानं भवति । श्रवणादेव तु गार्हपत्यशब्दस्य वयमग्निं प्रतीमो, न लिङ्गात् । यदि तु लिङ्गं बलीयः, इन्द्र उपस्थातव्यः । यदि गार्हपत्यश्रवणं, ततो गार्हपत्यः । एवं तर्हि लिङ्गवाक्ये विरुध्यमान इह संप्रधार्ये, न श्रुतिलिङ्गे । इन्द्रशब्दस्य विशिष्टदेवताभिधानसामर्थ्यादिन्द्रोपस्थानं यदि लिङ्गं बलीयः । अथ नु वाक्यं, गार्हपत्य उपस्थेयः । वाक्यं ह्येतत्, ऐन्द्रचा गार्हपत्यमुपतिष्ठत इति ।

नैतदेवम् । यद्यप्येतद्वाक्यम् । श्रुतिरप्यत्रास्ति, या त्वत्र श्रुतिः सा लिङ्गेन विरुध्यते, न यद्वाक्यम् । कथम् । बलीयस्यपि हि लिङ्गे, ऐन्द्रचोपतिष्ठत इत्येतद्गार्हपत्यशब्देन सहैकवाक्यतामुपैत्येव । यदि हि नोपेयात्ततो लिङ्गे बलीयसि परित्यक्तो भवति । नासावुपस्थानेन संबध्यते । तदा हीन्द्रं गार्हपत्यशब्दोऽभिवदेदग्निसमीपं वा । अथ नु श्रुतिः प्रमाणं भवति, ततो लिङ्गेनावगतमिन्द्रोपस्थानं बाध्येत । तस्माच्छ्रुतिलिङ्गयोरेवैष विरोधो, न लिङ्गवाक्ययोरिति ।

अथवा नात्रैकवाक्यत्वादिन्द्रप्राधान्यं गार्हपत्यप्राधान्यं वोपस्थानस्य । कुतस्तर्हीन्द्रशब्दवत्त्वान्मन्त्रस्येन्द्रप्राधान्यं, द्वितीयाविभक्तिश्रवणाद्गार्हपत्यप्राधान्यम् । तस्माच्छ्रुतिलिङ्गयोर्विरोधः । किं तावत्प्राप्तम् । तुल्यबले एते कारणे इति । कथम् । इदमपि, कारणमिदमपि, श्रुतिरपि लिङ्गमपि । नहि विज्ञानस्य विज्ञानस्य च कश्चिद्विशेष उपलभ्यते रूपं प्रति, अस्य भङ्गुरस्येव रूपम्, अस्य दृढस्येवेति । ननु लिङ्गस्य भङ्गुरस्येव रूपम् । सविचिकित्सो हि भवति लिङ्गात्प्रत्ययः । निर्विचिकित्सः श्रुतेः ।

नैतद्युक्तम् । यतो लिङ्गात्सविचिकित्सः प्रत्ययः । तस्य च श्रुतेश्च नैव संप्रधारणाऽस्ति । यतस्तु खलु लिङ्गान्निर्विचिकित्सः प्रत्ययः स श्रुत्या विकल्पितुमर्हति । ननु नैव कदाचिल्लिङ्गान्निर्विचिकित्सः प्रत्ययोऽस्ति । नैतदेवम् । एवं हि सति नैव लिङ्गं नाम किंचित्प्रमाणमभविष्यत् । कामं मा भूत्प्रमाणम् । भवति तु संशयो लिङ्गपरिज्ञातेष्वर्थेषु । यदि वा विस्पष्टमेवाप्रामाण्यं, न संशयः । कथम् । समर्थमेतदिममर्थमभिनिर्वर्तयितुमिति लिङ्गादेतावदवगम्यते । न च यद्यस्य निर्वर्तनायालं, तदसत्येव वचने तन्निर्वर्तयितुमर्हति । तस्मान्न लिङ्गं विनियोजकमिति ।

अत्राभिधीयते । प्रकरणवतोऽर्थस्य संनिधाने यमर्थमामनन्ति, स तस्य साधनभूत इत्येव' गम्यते । कथं खलूपकरिष्यतीति संदिह्यमाने भवति सामर्थ्यात्परिनिश्चयः । यत्रायं समर्थस्तत्र शक्योविनियोक्तुमिति । तस्माद्भवति लिङ्गं प्रमाणमिति । न च लिङ्गप्रामाण्ये विनिगमनायां हेतुरस्ति । तस्मात्तुल्यबले एते कारणे । 'कदाचन स्तरीरसि' इति लिङ्गादिन्द्र उपस्थातव्यः, श्रुतेर्गार्हपत्य

इति । अविरोधात्खल्वपीममेवार्थं प्रतिपद्यामहे । बलीयानपि हेतुर्विरुध्यमानमबलीयांसं बाधितुमर्हति, नाविरुद्धम् । न च कश्चन विरोधोमदिन्द्रमुपतिष्ठेतानेन मन्त्रेण, गार्हपत्यमपि । नन्वयमेव विरोधः सकृदुपस्थानं चोदितमसकृदभिनिर्वर्त्यत इति । उपस्थेयभेदात्प्रतिप्रधानमावर्तन्ते गुणा इति न्याय एवैष, न विरोधः । अयं तर्हि विरोधः । गार्हपत्य उपस्थीयमानेऽग्निवचन इन्द्रशब्दो गुणं क्रियायोगं वाऽपेक्षमाणो भवितुमर्हति । इन्द्रे तूपस्थातव्ये निरपेक्ष इन्द्रवचन एव । गौणमुख्ययोश्च मुख्ये संप्रत्यय इति । नेति ब्रूमः । विरोधे मुख्येन गौणबाध्येत । न च कश्चिद्विरोधः । युगपदभिधाने हि विरुध्येयाताम् । इह चान्यस्मिन्प्रयोगेऽग्निवचनः, अन्यस्मिन्निन्द्रवचनः । अतस्तुल्यबले एते कारणे इति । एवं प्राप्ते—

ब्रूमः । श्रुतिलिङ्गयोः श्रुतिर्बलीयसी । कुतः ? अर्थविप्रकर्षात् । किमिदमर्थविप्रकर्षादिति ? अर्थस्य विप्रकर्षोऽर्थविप्रकर्षः । कः पुनरर्थः ? श्रुत्यर्थः । गार्हपत्यमुपतिष्ठत इति संनिकृष्टः श्रुत्यर्थः । इन्द्र उपस्थेय इति विप्रकृष्टः । कथम् ? 'कदाचन स्तरीरसि' इत्यनेन मन्त्रेणेन्द्र उपस्थातव्य इति न श्रूयते । सत्यपीन्द्राभिधानसामर्थ्ये वचनाभावादनुपस्थानीय इन्द्र इत्येव[1] गम्यते । नन्विदमुक्तं प्रकरणाम्नानादङ्गमित्यवगम्यते । सामर्थ्याद्विनियोग इति । नैतदस्ति । उक्तमेवैतद् 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादि१-३-१ति । यदेतत्प्रकरणं लिङ्गं चोभयमप्येतदशब्दम् । न चातिक्रान्तप्रत्यक्षविषय एवंलक्षणकेऽर्थे शब्दमन्तरेण परिच्छेदोऽवकल्पते । अतो मन्यामहे विप्रकृष्टं श्रुत्यर्थाल्लिङ्गमिति । यद्येवम्, श्रुतिर्यत्र विरोधिनी न विद्यते, तत्रापि न लिङ्गादर्थपरिच्छेदः । तत्रैतदेव नास्ति लिङ्गं प्रमाणमिति । कुत एवैतेन श्रुतिर्विरोत्स्यत इति । तत्र श्रुतिलिङ्गयोर्बलीयस्त्वं प्रति संप्रधारणैव नोपपद्यत इति ब्रूमः । अत्रोच्यते । इतिकर्तव्यतार्थिनः प्रकरणवतोऽर्थस्य संनिधावुपनिपतितो मन्त्र आम्नानसामर्थ्यादितिकर्तव्यताकाङ्क्षस्य वाक्यशेषतामभ्युपेत्यैतेन मन्त्रेण यजेतेति । किमुक्तं भवति ? यागेनाभीप्सिते साध्यमानेऽनेन मन्त्रेणोपकुर्यादिति । न चान्तरेणेन्द्राभिधानमयं मन्त्र उपकर्तुं शक्नोति । तेनैतदुक्तं भवति । अनेनेन्द्रोऽभिधातव्य इति । अतः श्रुतिमूल एवायमर्थः । यदि श्रुतिमूलो न श्रुत्यन्तरेण बाधितुं शक्यः । तदेतल्लिङ्गं यदि वा नैव प्रमाणम् । यदि वा श्रुत्या विकल्पितुमर्हतीति । नाप्यप्रमाणं भविष्यति, नापि विकल्पिष्यत इति ब्रूमः । कथम् ? श्रुतिलक्षणोऽयमर्थ इत्युपपादितम् । तस्मान्नाप्रमाणम् । यतस्तु खल्वानुमानिकीमेकवाक्यतां लिङ्गसामर्थ्यं चापेक्ष्य श्रौतोऽयमर्थो यदिन्द्रस्योपस्थानमनेन मन्त्रेणेत्यवगम्यते । प्रत्यक्षा तु श्रुतिर्गार्हपत्यमुपतिष्ठत इति । स

1. ब० इत्यवगम्यते ।

एषोऽर्थविप्रकर्षः प्रथमं तावल्लिङ्गज्ञानम्। ततः सामर्थ्याच्छब्देनायमर्थोऽभिहितो भवति तदेतच्छ्रुतिविरोधे नावकल्पते। विस्पष्टं ह्यवगतमेतदनेन मन्त्रेण गार्हपत्य उपस्थेय इति। तत्र विज्ञातमेतदेवमयमुपकरोति मन्त्र इति एतस्मिंश्च निर्ज्ञाते कृतसामर्थ्ययोर्वाक्यप्रकरणयोर्नैतदेवं कल्पयितुं शक्यमिन्द्रोपस्थानं शब्देनाभिहितमिति। तस्मादर्थविप्रकर्षाच्छ्रुत्या लिङ्गं बाध्यत इति। विकल्पस्य चान्याय्यत्वात्। अन्याय्यश्च विकल्पः। तत्र ह्यभावः पक्षे। नित्यवच्च ऐन्द्र्या गार्हपत्यमुपतिष्ठते, इति श्रूयमाणे यदभावः पक्षे परिकल्प्यते, तदश्रुतं भवति। श्रुतं च हीयते। यावांश्च श्रुतस्यार्थस्योत्सर्गे दोषस्तावानश्रुतपरिकल्पनायाम्। उभयत्र हि प्रसिद्धिर्बाध्यते। तस्मादन्याय्यत्वाद्विकल्पस्य श्रुतिलिङ्गयोः श्रुतिर्बलीयसीत्यवगच्छामः।

अथ यदुक्तं सति विरोधे न्याय्यो बाधः। न चात्रास्ति विरोध इति। अयमस्ति विरोधः! यदकृतसामर्थ्ययोर्वाक्यप्रकरणयोरिन्द्रोपस्थानवाचिनी श्रुतिर्भवति। कृतसामर्थ्ययोस्तु नावकल्पते। न च वाक्यप्रकरणाभ्यां युगपत्कृतसामर्थ्याभ्यामकृतसामर्थ्याभ्यां च शक्यं भवितुम्। तस्माद्विरोधः। विरोधे च श्रुतिर्लिङ्गाद्बलीयसीति।

### लिङ्ग-वाक्ययोर्बलाबलविचारः

लिङ्गवाक्ययोर्विरोधे किमुदाहरणम्—

'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि।
तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः'॥
—तै० ब्रा० ३ सू० ५ इति।

अत्र सन्देहः[1]। किं कृत्स्नो मन्त्र उपस्तरणे, पुरोडाशसादने च प्रयोक्तव्यः, उत कल्पयाम्यन्त उपस्तरणे, तस्मिन् सीदेत्येवमादिः पुरोडाशसादन इति। यदि वाक्यं बलीयः, ततः कृत्स्न उभयत्र। कथम्? सुशेवं कल्पयामीत्येतदपेक्ष्य तस्मिन् सीद इत्येवमादिः पूर्वेणैकवाक्यतामुपैति यत्कल्पयामि, तस्मिन् सीदेति। अथ लिङ्गं बलीयः; ततः कल्पयाम्यन्तः सदनकरणे। कथम्? 'स्योनं ते सदनं कृणोमि इति सदनकरणमभिवदितुमयमलमिति। 'तस्मिन् सीद इत्ययमपिः पुरोडाशं सादयितुमिति सादने विनियुज्यते। किं तावत्प्राप्तम्? तुल्यबले एते कारणे इति। यथा लिङ्गं प्रति श्रुतेर्बलीयस्त्वमुक्तं, न तथा वाक्यं प्रति लिङ्गस्योच्यते। अथवा वाक्यमेव लिङ्गाद्बलीयः। कुतः? तद्धि श्रुत्याऽपि बाध्यते। न च बलीयः कारणं शक्यते बाधितुम्। तेनाभ्य भङ्गुरतामध्यवस्यामः। यस्त्वेकेन बाध्यते, शक्योऽसावन्येनापि बाधितुमिति। एवं प्राप्ते।

१. ब० सन्देह्यते :

ब्रूमः लिङ्गवाक्ययोर्लिङ्गं बलीय इति। कुतः? अर्थविपकर्षात्। कोऽत्रार्थविप्रकर्षः? प्रकरणवतः संनिधावाम्नानाद्दर्शपूर्णमासाङ्गमयं मन्त्र इत्यवगम्यते। 'तस्मिन् सीद' इति पुरोडाशासादनाभिधानसामर्थ्यात्सादने विनियुज्यमाने कृतसामर्थ्यं मन्त्राम्नानमिति, नास्ति प्रमाणं येनोपस्तरणेऽपि विनियुज्येत। तथा, 'स्योनं ते सदनं कृणोमि' इत्येषोऽपि प्रकरणाम्नानसामर्थ्यादिव दर्शपूर्णमासाङ्गतामापन्नः सामर्थ्यादेवोपस्तरणे विनियोगात्कृतप्रयोजनो न पुरोडाशासादने विनियोगमर्हति। न ह्यस्मिन्विनियुज्यमानस्य किञ्चिदपि प्रयोजनमस्ति। एवमुपस्तरणे 'तस्मिन् सीद' इत्यस्य नास्ति सामर्थ्यम्। पुरोडाशासादनेऽपि, स्योनं ते इत्यस्य। पूर्वेणैकवाक्यतामुपेत्योपस्तरणे सामर्थ्यम्। पूर्वस्य परेणैकवाक्यत्वात्सादने, न तु स्वरूपेणोभयोः तदेषोऽर्थ विप्रकर्षः। यत्स्योनं त इत्यस्य प्रत्यक्षं सदनकर्मणोऽभिधानसामर्थ्यं, तन्मुख्यम्। 'तस्मिन् सीद' इत्यस्य पुनः पूर्वेण सहैकवाक्यतामुपगतस्य भवति जघन्यम्। तदत्र पूर्वस्य मन्त्रस्याभिधानसामर्थ्यादुपस्तरणे विनियोग उक्तो भवतीति संनिकृष्टो लिङ्गस्य श्रुत्यर्थः। उत्तरस्य तूपजनितेऽभिधानसामर्थ्ये ततः श्रुत्यर्थ इति लिङ्गान्तरितो विप्रकृष्टो भवति। एवमुत्तरस्य सादने संनिकृष्टः पूर्वस्य च लिङ्गान्तरितः। तस्मादर्थविप्रकर्षाल्लिङ्गवाक्ययोर्लिङ्गं बलवत्तरम्। ततः स्योनमित्येष शब्दो यद्यप्युत्तरेणाऽऽकाङ्क्षित इति, सादनेऽपि प्रयोगमर्हति, तथाऽपि भित्त्वा वाक्यमुपस्तरण एव विनियोक्तव्यः। तस्मिन् सीद इत्येष च सादने। ननु स्योनं ते इत्यस्य शब्दस्य यथैवोपस्तरणाभिधानसामर्थ्यमेवमुत्तरेणैकवाक्यतामुपगन्तुं सामर्थ्यम्। सामर्थ्यं च लिङ्गमित्युच्यते। तस्माद्भिद्यमाने वाक्ये लिङ्गमेव बाधितं भवतीति। सत्यमेवम्। एतदपि लिङ्गम्। लिङ्गमपि खल्वेतदेवंलक्षणकं विप्रकृष्टार्थमेव भवति। लिङ्गादेकवाक्यता। तस्मादभिधानसामर्थ्यम्। ततः श्रुत्यर्थ इति विप्रकृष्टार्थता। विप्रकृष्टार्थता च बाधने हेतुभूता। तस्मान्नोत्तरेणैकवाक्यतां यास्यतीति। एवं तस्मिन् सीद इत्युत्तरं न पूर्वेणापि। अपि चोत्तरेणैकवाक्यतामुपगतस्य[1] न किञ्चिदपि दृष्टमस्ति कार्यम्। उपस्तरणप्रत्यायनं तु दृष्टम्। कुतः? श्रुतत्वादुपस्तरणस्य सादनस्य च एवमुत्तरस्य सादनप्रत्यायनम्,[2] न तु पूर्वेणैकवाक्यतायाम्। न चैतौ पूर्वोत्तराभ्यामेकवाक्यतामन्तरेण पृथग् यथायथं कार्ये न कुरुतः। तस्मात्पूर्वः पूर्वत्र विनियोजनीय, उत्तर उत्तरत्रेति।

अथ यदुक्तं श्रुत्याऽपि तद्बाधितमिति वाक्येनापि तद्बाधितव्यमिति। नैतदेवम्[3]। न हि बाधितस्यान्येनापि बाधनमेव न्याय्यम्। बाधितं ह्यनुग्रही-

---

१. ब. मुपयातस्य। २. ब. दृष्टमित्यधिकम्। ३. ब. नैवं।

तव्यमर्थवत्त्वाय। श्रुतिं प्रति विप्रकृष्टार्थम्, वाक्यं प्रति संनिकृष्टार्थम्। तस्माल्लिङ्गं[1] बलीय इति।

### वाक्यप्रकरणयोर्बलाबलविचारः

अथ वाक्यप्रकरणयोर्विरोधे कथमिति। किं पुनः प्रकरणं नाम? कर्तव्यस्येति कर्तव्यताकाङ्क्षस्य वचनं प्रकरणम्। प्रारम्भो हि स तस्या वचनक्रियायाः। स एष विध्यादिर्विध्यन्तापेक्षः। वाक्यं तूक्तमेव। तयोर्विरोधे किमुदाहरणम्? सूक्तवाकनिगदः। तत्र हि पौर्णमासीदेवतां, अमावास्यादेवताश्चाऽऽम्नाताः ताः परस्परेणैकवाक्यतां नाभ्युपयन्ति। तत्र लिङ्गसामर्थ्यात्पौर्णमासीप्रयोगादिन्द्राग्निशब्द उत्कृष्टव्योऽमावास्यायां प्रयोक्तव्यः। अथेदानीं संदिह्यते योऽस्य शेषः, अवीवृधेतां महो ज्यायोऽक्राताम् इति, स किं यावत्कृत्वः सूक्तवाके समाम्नातः तावत्कृत्व उभयोः पौर्णमास्यमावास्ययोः प्रयोक्तव्यः, प्रकरणं बलवत्तरमिति, उत यत्रेन्द्राग्निशब्द उत्कृष्य नीतस्तत्रैव प्रयोक्तव्यो वाक्यं बलवत्तरमिति। एवं सर्वेषु संशयः। किं तावत्प्राप्तम्? तुल्यबले एते कारणे इति। कुतः? इतरत्राप्याकाङ्क्षेतरत्रापि। तुल्यायामाकाङ्क्षायां नास्ति विनिगमनायां हेतुः। तस्मात्तुल्यबले इति। अथवा वाक्यं दुर्बलम्। बाधितं हि तल्लिङ्गेनेत्येवं प्राप्ते।

ब्रूमः प्रकरणाद्वाक्यं बलीयः। कथम्। अर्थविप्रकर्षात्। कोऽत्रार्थविप्रकर्षः। वाक्य एकैकं पदं विभज्यमानं साकाङ्क्षं भवति, कृत्स्नं परिपूर्णं भवति। तत्र प्रत्यक्ष एकवाक्यभावः प्रकरणे त्वप्रत्यक्षः। कथम्? इतिकर्तव्यताकाङ्क्षस्य समीप उपनिपतितं पूर्णमिति तस्य प्रकृतस्य साकाङ्क्षत्वमवगम्यते। नैकवाक्यभूतामित्यनुमीयते। एकवाक्यतया चाभिधानसामर्थ्यमवकल्प्याभिहितोऽयमेवं भवतीति परिकल्पना। एषोऽत्रार्थविप्रकर्षो यद्वाक्यस्य समासन्ना श्रुतिः। प्रकरणस्य विप्रकृष्टा। तस्मात्सूक्तवाकेन[2] प्रहरति इति पौर्णमासीदेवतावाचिनाममावास्यादेवतावाचिनां च निष्कृष्य प्रयोगे तच्छेषाणामपि निष्कृष्य प्रयोगः तेन यद्यपि प्रकरणसामर्थ्यात्पौर्णमासीदेवतापदशेषाणाममावास्यादेवतावाचिभिः सहैकवाक्यताऽनुमीयते, प्रत्यक्षा त्वमावास्यादेवतापदैः सह। न च प्रत्यक्षविरोधेऽनुमानं सम्भवति। अर्थवति च प्रकरणे सञ्जाते, न निराकाङ्क्षाणांमाकाङ्क्षा शक्योपपादयितुम्।

अथ यदुक्तं, लिङ्गेनापि हि तद्बाध्यते, अतः प्रकरणेनापि बाधितव्यमिति। न। यदन्येनापि बाध्यते, तद् भङ्गुरमन्यत्रापीत्यवमन्तव्यम्। अथ भङ्गुरं

---

१. ब. तस्माल्लिङ्गवाक्योलिङ्ग। २. ब० प्रस्तरमित्यधिकम्।

प्रमाणमेव नाभविष्यत्। किंचित्तु प्रति कस्यचित्प्रभावः। वाक्यस्य प्रकरणं प्रति बाधकशक्तिः न तु लिङ्गं प्रति संनिकृष्टार्थम्। तेन वाक्येन प्रकरणं बाध्यत इति।

### प्रकरणक्रमयोर्बलाबलविचारः

अथ प्रकरणस्य क्रमस्य च विरोधे किमुदाहरणम्। राजसूयप्रकरणेऽभिषेचनीयक्रमे शौनःशेषाख्यानाद्याम्नातम्। यदि प्रकरणं बलवत्, सर्वेषां तदङ्गम्। यदि क्रमः, अभिषेचनीयस्यैव। किं तावत्प्राप्तम्। तुल्यबले एते कारणे इति। कुतः। न तावद्विशेषमुपलभामहे, येनावगच्छाम इदं बलीय इति। तस्मात्तुल्यबलं एते कारणे इति। अपि च प्रकरणं वाक्येन बाधितम्। तस्माद् बाध्येत क्रमेणापीति। एवं प्राप्ते ब्रूमः। प्रकरणं क्रमाद् बलीयः। कुतः। अर्थविप्रकर्षात्। केऽत्रार्थविप्रकर्षः। प्रकरणवतः साकाङ्क्षत्वात्। तत्संनिधावाम्नातेन परिपूर्णेनाप्यवकल्पेतैकवाक्यत्वम्, न तु क्रमवतः क्रम आम्नातेन। अनेकस्याऽऽम्नायमानस्य संनिधिविशेषाम्नानमात्रं हि क्रमः। तत्र संनिधिविशेषाम्नानसामर्थ्यात्क्रमगतः संनिधावाम्नातस्यानुपलभ्यमानमेवाऽऽकाङ्क्षावत्त्वमस्तीत्यवगन्तव्यम्। प्रकरणे तु प्रकरणवतः प्रत्यक्षम्। न च प्रकरणवता क्रमवता च यौगपद्येनैकवाक्यता सम्भवत्याम्नातस्येति विरोधः। तत्र प्रकरणे प्रत्यक्षं साकाङ्क्षत्वं क्रम आनुमानिकं बाधितुमर्हति। साकाङ्क्षत्वादेकवाक्यत्वम्। एकवाक्यत्वादभिधानसामर्थ्यम्। सामर्थ्याच्छ्रुत्यर्थं इति संनिकृष्टः प्रकरणस्य श्रुत्यर्थो, विप्रकृष्टः क्रमस्य। तस्मात्क्रमप्रकरणयोः प्रकरणं बलवत्तरमिति। अथ यदुक्तं वाक्येनापि हि तद् बाधितमतोऽन्येनापि तद् बाधितव्यमिति। नैतत्। बाधितस्यानुग्रहो न्याय्यो, न बाधितव्यमिति।

### अथ क्रमसमाख्ययोर्बलाबलपरीक्षा

अथ क्रमसमाख्ययोर्विरोधे किमुदाहरणम्? किं बलवत्तरमिति? पौरोडाशिकमितिसमाख्याते काण्डे सांनाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मणे' इति शुन्धनार्थो मन्त्रः समाम्नातः। तत्र संदिह्यते—किं समाख्यानस्य बलीयस्त्वात् पुरोडाशपात्राणां शुन्धने विनियोक्तव्यः, उत क्रमस्य बलीयस्त्वात्सानाय्यपात्राणामिति। किं तावत् प्राप्तम्। तुल्यबले एते कारणे स्याताम्। कुतः? अविशेषात्। यदि वा समाख्यैव बलीयसी। बाधितो हिः क्रमः प्रकरणेनापीति। एवं प्राप्ते—ब्रूमः—क्रमो बलीयान्। कुतः? अर्थविप्रकर्षात्? कः पुनरत्रार्थविप्रकर्षः? निर्ज्ञाते प्रकरणेन केनापि सहैकवाक्यत्वे यत्संनिधावाम्नायते, तत्राऽऽकाङ्क्षां परिकल्प्य तेनैकवाक्यतेत्यवगम्यते। लौकिकश्च शब्दः समाख्या। न च लोक एवंविधेष्वर्थेषु प्रमाणम्। तस्मात्क्रमो बलीयानिति। यद्येवं भवत-

येवंलक्षणकेषु क्रमेण विनियोगो, न त्वर्थविप्रकर्षात्क्रमो बलीयान्। कथम्। द्वयोर्हि प्रमाणयोर्बलीयस्त्वं प्रति संप्रधारणम्।

न चैवं सति समाख्या प्रमाणम्। लौकिकत्वाच्छब्दस्य पुरुषस्य प्रमाणता भवतीति। नैष दोषः। नात्राङ्गभावः पुरुषप्रामाण्याद्गम्यते। पौरोडाशिकशब्द एतस्य काण्डस्येत्येतदत्र पुरुषप्रमाणकम्। भवति चास्मिन्नर्थे पुरुषः प्रमाणम्। यथा सांनाय्यक्रम आम्नानं पुरुषप्रमाणकम्। यथा प्रकरणमेकवाक्यत्वं वेदशब्दश्चायमिति। न ह्येतेऽनिन्द्रियविषया अर्थाः। उपपद्यत एष्वभियुक्तानां प्रामाण्यम्। ये त्वनिन्द्रियविषयास्तेष्वभियुक्ता न प्रमाणम्। तस्मात्समाख्या कारणम्। कारणत्वे च सति बलीयस्त्वं परीक्ष्यमिति।

उच्यते। अर्थविप्रकर्षस्तर्हि वक्तव्यः समाख्यायाः अयमर्थविप्रकर्षः। उपदिश्यते हि क्रमे समाम्नानात्सांनाय्यसंबन्धो, नोपदिश्यते समाख्यायाम्। शब्दमुच्चा[1]र्यमाणमुपलभ्यार्थापत्त्या नूनमस्तीति कल्प्यते। तस्मात्पूर्ववदेवार्थविप्रकर्षात्क्रमेण समाख्या बाध्यत इति।

अथ यत्तत्र तत्रोच्यते। इदमनेन बाध्यते, इदमनेनेति। तत्र यद्बाध्यते, तत्किं बाधकविषयं प्राप्तम्, उताप्राप्तमिति। किं चातः? यद्यप्राप्तम्। किं बाध्यते? अथ प्राप्तम्। कथं शक्येतबाधितुम् प्राप्तम्। बाधकविषयं पूर्वविज्ञानमिति ब्रूमः। कथम्? सामान्यस्य कारणस्य विद्यमानत्वात्।

अथ कथं निवर्तते? नैव हि तन्निवर्तते। कथं तर्हि? मिथ्याज्ञानमिति प्रत्ययान्तरं भवति।

किं नु खल्वमिथ्याज्ञानस्य स्वरूपम्। यस्य बाधकः प्रत्ययो विमृष्यमाणस्यापि नोपपद्यते, न तन्मिथ्या। तदेतेषां श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वं पूर्वं यत्कारणं, तत्परं परं प्रति बलीयो भवति। नैतस्योत्पन्नस्य विमृष्यमाणस्य बाधकं विज्ञानान्तरमस्ति। तस्मात्तेषां समवाये विरोधे परदौर्बल्यमर्थविप्रकर्षादिति ॥ १४ ॥

श्रुतिलिङ्गाधिकरणम् ॥ ७ ॥

अथ सप्तमं बलाबलाधिकरणम्

त० वा०—इदानीं षण्णामपि श्रुत्यादीनां बलाबलं विचार्यते। तच्च भिन्नविषयाणां न सम्भवतीति, समवाय एकार्थोपनिपातो विषयत्वेनोदाहृतः।

अत्र केषाञ्चिन्मतेन शङ्का-तन्निराशश्च

तत्र केचिदाहुर्विरोधग्रहणं कर्तव्यमिति। कुतः?

---

१. उपर्यमाणं।

क्रीणात्यरुणयेत्यत्र समवाये हि सत्यपि ।
विरोधाभावतो नैव चिन्तयति बलाबलम् ॥

एक एव ह्यरुणादिः शेषः श्रुत्या सामान्यक्रियासम्बन्धी, वाक्येन तद्विशेषस्य क्रयस्य, प्रकरणेन ज्योतिष्टोमिकस्य सत्यपि वाचनिकप्रकरणसमवाये परस्परानुग्रहनिमित्तत्वादविरोध इति बलाबलविचारो न भवति । निर्विशेषसामान्यानुपपत्तेः । क्रयस्वरूपमात्रप्रयुक्तत्वे चानर्थकत्वादपेक्षिते हि श्रुतिवाक्याभ्यां वाक्यप्रकरणे । तस्मात्कर्तव्यं विरोधग्रहणमिति ।

न वा कर्तव्यम् । कुतः ?

समानविषयत्वं हि समवायोऽभिधीयते ।
न चैकार्थ्ये प्रमाणानां शेषाणामवगम्यते ॥

अरुणादौ तावन्नैव प्रमाणसमवायोऽस्ति । न ह्येकत्र सम्भवमात्रं समवायः । किं तर्हि विषयैकत्वम् । इह चारुणस्य क्रियासम्बन्धः श्रुत्या । तस्य तु श्रुतिकल्पितक्रियाकारकसम्बन्धस्य भूयोऽप्यपेक्षावशेन क्रयविषयत्वम् । तावता च प्रयोजनानवाप्तेरपेक्षान्तरे सत्यपूर्वसम्बन्धवतः क्रयस्य ज्योतिष्टोमार्थत्वमिति विषयनानात्वम् । अतश्च सर्वेषां विनियोजकत्वमविरुद्धम् । न चात्र विप्रकृष्टग्रहणे संनिकृष्टस्य बाधो दृश्यते । न हि क्रयं गृह्णन्नरुणायाः क्रियासम्बन्धं बाधते । नापि ज्योतिष्टोमे कुर्वन् क्रयसम्बन्धम् ।

यत्र त्वेकः शेषस्तावानेव च सम्बन्धान्तरविरोधिनैकेन प्रमाणेनान्यशेष्यर्थो विज्ञायते । परेण तदबाधानुपपत्तिना शेष्यन्तरार्थः । एकसम्बन्धे च कृतार्थस्याऽऽकाङ्क्षाभावात्पुनर्विनियोगान्तरानुपपत्तिः । तत्र प्रमाणयोः परस्परापहार्यसमानविषयत्वलक्षणः समवायः । तथा—

यत्र शेषभेदेऽप्येकस्मिन्नेव शेषिणि तुल्योपकारनिबन्धन एकेन प्रमाणेनान्यः शेषः साधनत्वेन प्रतीयते ? अन्येनापरः । न चैकसाधितोपकारः शेषो शेषान्तरमपेक्षते । तत्राप्येकविषयापहारित्वात्समवायः स च विरोध एव सति भवतीति समवायग्रहणेनैव सिद्धो विरोधः ।

यत्र पुनः स्पष्ट एव शेषभेदो । यथा 'समिधो यजति' इत्यादिषु । यत्र वा तस्यैव किञ्चिदाधिक्यं भवति यथाऽरुणायां व्याख्यातम् । तथा यत्र शेषिभेदो यथाऽऽग्नेयादिष्वष्टाकपालादीनाम् । यत्र वा तद्गतमाधिक्यं यथा दर्शपूर्णमासाङ्गानामेवोपकारभेदः तत्रापि विषयान्यत्वादसमवाय इति । यच्च श्रुत्या विनियुज्यते, यच्च समाख्यया, तत्सर्वं तुल्यम् । यस्तु सर्वाङ्गजन्य एकः प्रधानोपकारः, तत्रैषामपर्यायविधानादेकमेव प्रमाणं शेषत्वं चेति व्यापारभेदादसमवायः ।

तथा यत्र स एव शेषस्तस्मिन्नेव शेषिणि संनिकृष्टेन, विप्रकृष्टेन च प्रमाणे न विनियुज्यते। तत्राप्येकस्यैव प्रमाणत्वेनेतरस्य प्रयोजनान्तरार्थत्वादसमवाय इति। तस्माद्विरोधविषयमेव समवायग्रहणम्।

तत्र षण्णामप्येकत्रैव बलाबले कथयितव्ये क्रमवर्तित्वाद्वाचो युगपदशक्तेरेकैकस्य सम्प्रधारणा। यत्त द्वितीयोपादानं तत्प्रतियोगिना विना बलाबलकथनाशक्तेस्तेनोच्यते—**द्वयोर्द्वयोरिति**।

**एकार्थवर्तित्वाद्वाच** इत्यस्यापरा व्याख्या येयं बलाबलवागेषा प्रत्येकं श्रुत्यादिषु समवैति न समुदाये। तानि= हि शेषविनियोगेनार्थवन्ति, न बलाबलम्। अतस्तस्याः प्रतिप्रधानवृत्तित्वादयोगपद्येनेकैकस्य सम्प्रधारणायां कर्तव्यायां द्वितीयोपादानं विरोधबलाबलवाधानां प्रतियोगिन्यनुपपत्तिं दर्शयितुमसम्भवात्—**द्वयोर्द्वयोः संप्रधारणेत्युक्तम्**। तत्रैकैकस्य पञ्चभि सह विचारे कर्तव्ये यदेकैकेन सह क्रियते, तद्बाधितबाध्यस्य बाधकबाधकेन बाधस्य सुज्ञानत्वात्। यानि हि श्रुतिबाध्यैर्लिङ्गादिभिर्बाध्यन्ते। तानि श्रुत्या बाध्यन्तेतरामिति, न तया सह सम्प्रधारयिष्यन्ते।

तत्र प्रथमं तावत्क्रमप्राप्तं श्रुतिलिङ्गयोः सम्प्रधारणमिति। **किमिहोदाहरणमिति**—केवलपदप्रयोगाभावात्सर्वत्र वाक्यत्वे सति न श्रुतिलिङ्गयोः स्वसामर्थ्यातिरेको लक्ष्यत इति मन्यमानस्य प्रश्नः। वक्ष्यमाणविवेकाभिप्रायेणाऽऽह—**ऐन्द्रचा गार्हपत्यमुपतिष्ठत** इति। किमिन्द्रस्यैवोपस्थानं कर्तव्यमुतेन्द्रस्य, गार्हपत्यस्य वाऽऽथवा समुच्चितयोः, अथवा गार्हपत्यस्यैवेति। यदि लिङ्गं बलीयः तत् इन्द्रोपस्थानम्। अथ तुल्यबलत्वं, विरोधश्च ततो विकल्पः, अथ तुल्यबलत्वेऽप्यविरोधः, ततः समुच्चयः। अथ विरोधः श्रुतिबलीयस्त्वं च, ततो गार्हपत्यस्यैवोपस्थानमिति।

यत्तु सिद्धवद्गार्हपत्यार्थत्वाङ्गीकरणेन 'वचनात्त्वयथार्थमैन्द्री स्यात्' इत्युक्तं तदिह स्थापयिष्यमाणश्रुतिबलीयस्त्वाभिप्रायेण। तेनैव सर्ववाक्यत्वाभिप्रायेण श्रुतिलिङ्गेऽर्थे वाक्यत्वभ्रान्त्या पुनः पृच्छति—**का पुनरत्र श्रुतिः? किं लिङ्गमिति?** तत्रोत्तरं **गार्हपत्यशब्दश्रवणम्**, मन्त्रसामर्थ्यं चेति। परः पुनराह—यद्येवंविधपदसमूहात्मके श्रुतिलिङ्गे, हन्त तर्हि वाक्यं नाम न किञ्चिदप्यस्ति। तदुच्यताम्, **अथ वाक्यं नाम किमिति?** सिद्धान्तवादी तु तथैव शक्यविवेकज्ञानत्वं मन्यमान आह—**संहत्यार्थमभिदधति पदानि-वाक्यमिति**। यद्यपि च न संहातानां कश्चिदेकोऽभिधेयः तथाऽपि गम्यमानाभिप्रायेणोक्तम्।

अथवैकलक्ष्यमाणार्थप्रयुक्ततया संघातत्वमापादितानि यदा स्वार्थमभिदधति, तदा तद्भूतान्येव सन्ति वाक्यत्वं प्रतिपद्यन्त इति। यद्येवं तत उभयोरप्युदा-

हृतयोर्मन्त्रब्राह्मणयोर्वाक्यलक्षणयोगाद्वाक्ययोरियं सम्प्रधारणा न **श्रुतिलिङ्ग-योरिति। यदि वाऽवश्यं** श्रुतिलिङ्गयोर्विरोधः समर्थनीयस्ततः श्रुतिलिङ्ग-वाक्यानि लक्षणतो विवेक्तव्यानीदं नाम तेषां परस्परमन्तरमिति।

**तदभिधीयते—**

यच्छब्दस्योक्तिसामर्थ्यं तल्लिङ्गं त्रिविधा श्रुतिः।
विध्युक्तिविनियोगाख्या वाक्यं तु प्राङ्निर्दर्शितम्॥

ननु सामर्थ्यपूर्वकत्वादुक्तिविधिविनियोगानाम्। 'ऐन्द्रया गार्हपत्यम्' इत्यत्रापि शब्दसामर्थ्यमस्ति। 'कदाचन स्तरीरसि' इत्यत्रापि चेन्द्राभिधान-मित्यविशेष एव श्रुतिलिङ्गयोः प्राप्नोति। तथा हि—

विध्युक्तिविनियोगा हि न विना शब्दशक्तिभिः।
न चेन्द्रशब्दसामर्थ्यमभिधाश्रुतिवर्जितम्॥

सत्यमुभयत्रोभयमप्यस्ति।

किं त्वैन्द्रयां गार्हपत्यस्य नोक्तिः शक्त्याऽवगम्यते।
इन्द्राङ्गत्वमतिश्चास्या नाक्षरश्रुतिकारिता।

या हि 'ऐन्द्रयां गार्हपत्यम्' इत्येषा शक्तिः, तयैतान्येव पदानि प्रत्यर्थं लोके विनियुक्तानि। न मन्त्र ऐन्द्रो गार्हपत्याङ्गम्। अन्यत्र गतया शक्त्याऽन्य-स्याविनियोगात्। स्वसामर्थ्यप्रवृत्तैस्तु ब्राह्मणपदैः शक्त्या शक्त्यनपेक्षमङ्गत्वम-भिधीयते। न चात्र सामर्थ्यं प्रथमं गृह्यते? निवृत्ताभिधानान्यथानुपपत्त्यैव तस्य गम्यमानत्वात्। तेन ज्ञाते विनियोगे शक्तिः कल्प्यत इति, नासौ विनियोग-कारणम्। यद्यपि वस्तुतः प्रथमं विद्यते, तथाऽपि प्रमाणतः पश्चाद् गृह्यत इति कारकहेतुत्वे सत्यपि ज्ञापकत्वेनाकारणमित्युच्यते। यदि तु पौरुषेयमिदं भवेत्तथा सति वक्तुरभिधानशक्तिज्ञानं[1] विनियोगाभिधानात्प्रथमतरं भवेत्। न त्वेवमस्ति। वेदस्यापौरुषेयत्वात्। तस्मात्सर्वपुरुषाणां प्रतिपत्तृत्वात्पश्चात्तनं शक्तिज्ञान-मित्यक्षरश्रवणकृत एवायं गार्हपत्याङ्गत्वप्रत्ययः। 'कदाचन स्तरीरसि' इत्यत्र पुनर्यद्यपीन्द्रशब्देनेन्द्रोऽभिधीयते, तथाऽपि विनियोगो नाभिधीयत इति श्रुतेर-व्यापारः। न ह्यत्र कस्यचिच्छब्दस्य श्रवणादिन्द्रस्य शेषित्वं, मन्त्रस्य शेषत्वं प्रतीयते। यथेतरत्र द्वितीयाश्रवणाद्गार्हपत्यस्येप्सिततमत्वमैन्द्रयाश्च तृतीया-श्रुत्या करणत्वम्। केवलं तु मन्त्रस्याभिधानसामर्थ्याद्विनियोगयोग्यता दृश्यते। न च तावता विनियोगोऽभिहितो भवति। न च विहितः। मन्त्रस्याविधाय-कत्वात्। ब्राह्मणवाक्ये त्वभिधानं विधानं चोभयमपि निष्पन्नम्।

---

१. क० शक्तिजातं।

ननु मन्त्रस्याप्यभिधानपूर्वकमेव सामर्थ्यकल्पनम्। सत्यमेवम्। न तु तद्विनियोगस्याभिधानम्। किं तर्हि? अर्थस्वरूपमात्रस्य। अन्यैव च तेन प्रथमं तदभिधानशक्तिः कल्प्यते। अन्या च तद्बलेन विनियोगशक्तिः। कथम्?

यो हि यस्याभिधानाय शक्त इत्यवगम्यते।
विनियोगेऽप्यसौ शक्तो न ह्यशक्तो नियुज्यते॥

ततश्च द्वितीयसामर्थ्याद्विनियोगः कल्पयिष्यते। न प्रथमात्। प्रथमेन हि विनियोगनिरपेक्षमिन्द्राभिधानमात्रं कृतम्। अत इहेदृशो विवेकः प्रतिपत्तव्यः।

एकत्रासति सामर्थ्ये मन्त्रः शेषोऽभिधीयते।
अन्यत्रानुक्तशेषत्वं सामर्थ्यं सम्प्रतीयते॥

अविद्यमानमेवैन्द्र्या गार्हपत्याभिधानसामर्थ्यमभिहितविनियोगविधानात्कल्पनीयम्। विनियोगस्तु प्रथममेव क्लृप्तः। इन्द्रं प्रति तु सामर्थ्यं क्लृप्तमालोच्य, विनियोगोऽभिहितो विहितो वेत्येतत्कल्पनीयम्।

वाक्ये पुनः—

अर्थं प्रति न सामर्थ्यं न च शेषत्वमुच्यते।
केवलः पदसंघातः प्रत्यक्षमुपलभ्यते॥

कथंभाव-देशसामान्य-यौगिकरूपाणां तु प्रकरणक्रमसमाख्यानविवेकः सुज्ञान एवेति न पृष्टो न निरूपितः। **तदेतत्सर्वेष्वेव वाक्येषु समवेतं विविक्तं च दृश्यत इति**। न हि किंचिदपि वाक्यं शब्दसामर्थ्येनार्थाभिधानेन पदान्तरसंनिधानेन वा विना विद्यते। विवेकश्च पुरोदितः। कचित्कस्यचित्पूर्वतरप्रतीतेः। तद्दर्शयति—**इह तावत्कदाचन स्तरीरसीति**। न विनियोगोऽभिधीयते, न पदान्तरसंनिधेर्वा गम्यते। किं तर्हि? एतस्यामृचीन्द्रशब्द इन्द्राभिधानसमर्थो विद्यते, शेषाणि च पदानि तेनैकवाक्यतां गतानीति समस्तो मन्त्र इन्द्राभिधानसमर्थो गम्यते। सोऽपि चेन्द्रः कर्माङ्गत्वादभिधानार्ह इत्यसत्यपि वचने भजत्यभिधेयतामित्युत्प्रेक्षा। गार्हपत्ये पुनर्विनैव मन्त्रसामर्थ्येन विनियोगं ब्राह्मणमभिधत्ते इति, बलाबलं चिन्तयितव्यम्।

अत्र केचिदाहुः। **एवं तर्हि लिङ्वाक्ये** इत्येतस्मात्प्रागयं ग्रन्थो योजयितव्यः। 'अथवा नात्रैकवाक्यत्वादिन्द्रप्राधान्यम्' इत्यादिः। कुतः।

लिङ्गत्वमभ्युपेतं चेदिन्द्रोपस्थानकल्पने।
उभयत्रापि वाक्यत्वं कथं भूयोऽवकल्पते॥

अत्र वाक्यद्वयमेतदित्युपन्यस्तं तत्रैवैतद्युज्यते वक्तुम्।

अथवा नात्रैकवाक्यत्वादिन्द्रप्राधान्यं वोपस्थानस्य, इति तथा ह्युभयत्राप्येकवाक्यत्वव्यापारनिराकरणमवकल्पते। अन्यथा तु मन्त्रस्य लिङ्गविनियो-

ज्यत्वे पूर्वपक्षवादिनैवाभ्युपगते पुनस्तदनपेक्षमिन्द्रोपस्थानमप्येकवाक्यत्वकृतमेवेत्याशङ्क्य निराकरणमसंबद्धमेव स्यात्। तस्मात्प्रमादादुत्कृष्टस्य ग्रन्थस्यापकृष्य व्याख्यानं कर्तव्यम्।

केषाञ्चिन्मनस्य निरासः न त्ववश्यमेतदादर्तव्यम्। भवत्येव हि बह्वीनां परिचोदनानां मध्ये परिचोदनापरिहारकालेऽपि पूर्वपरिचोदनापरिहारः। अपि च। यदा 'अथवा नात्रैकवाक्यत्वात्' इत्येतत्प्रथममुक्तं तदाऽपि पुनः। 'एवं तर्हि लिङ्गवाक्ये' इत्यत्र वाक्यग्रहणमसंबद्धमेव स्यात्। ततो यथान्यासमवस्थितेऽभ्युपेत्यवादमात्रेण पूर्वपक्षवादिनैकत्र लिङ्गत्वमुक्तमतोऽस्य वाक्यत्वानुशयशेषमपनयामीत्येवमाह—'अथ वा नात्रैकवाक्यत्वात्' इति। यद्वा ब्राह्मणगतमेवैकवाक्यत्वमकारणं विवक्षन्प्रसङ्गान्मन्त्रेऽप्युक्तवानिति व्याख्येयम्।

तत्र **वाक्यं हृचेतदैन्द्रचा गार्हपत्यमुपतिष्ठते**। इत्यस्याभिप्रायः—यदैन्द्रयास्तृतीयाश्रुत्या शेषत्वमात्रमनवगतशेषिविशेषं प्रतीयते। यत्तु गार्हपत्यमिति द्वितीयया किमपि प्रति शेषित्वमात्रं, न तस्य लिङ्गेन सह कश्चिद्विरोधः। पदान्तरसम्बन्धे ह्यसति यथार्थमेवैन्द्रयाः करणत्वं स्यात्। गार्हपत्यस्य वा यां काचिदाग्नेयीं प्रति शेषित्वं भवेत्। परस्परसंनिधानं तूभयोरिन्द्रोपस्थानं बाधते। तच्च वाक्यमिति। **नैतदेवमिति**—गार्हपत्याभिधानश्रुतिं तावदुपन्यस्यति। परस्परसंनिधानमपि हि श्रुतिं पीडयित्वा शक्यमविरोधेन नेतुम्। यदि तु गार्हपत्यशब्दो गृहपतेरयमित्येवमिन्द्रमभिवदेत्, यज्ञसाधनत्वेन वा लक्षयेदग्निसमीपं वा, ततो लिङ्गाविरोधेनैव तत्संनिधिरुपपद्यते। यतस्त्वयं समुदायप्रसिद्धयभिधेयापरित्यागेन वर्तते, ततो विरुध्यत इति श्रुतिविरोधः।

**अथवा नात्रैकवाक्यत्वादिति**—विभक्तिश्रुतिविरोधोपन्यासः। यदि हि सप्तम्यर्थं वा, तृतीयार्थं वा द्वितीया वदेत् ततोऽपि नैव विरोधः स्यात्। यतस्त्वीप्सिततमत्वमाह तेन विरुध्यते। लिङ्गविरोधस्तु प्रागुक्त एवैकवाक्यत्वव्याहारनिराकरणमात्रार्थमुपन्यस्यते। कथं पुनर्यथोक्तेन[1] न्यायेनोभयथा विरोधसंभवे, श्रुतिलिङ्गविरोध एव परिगृह्यते, न वाक्यविरोधः।

उच्यते—

यथा शीघ्रप्रवृत्तित्वाल्लिङ्गादेर्बाधिका श्रुतिः।
तथैव विनियोगेऽपि सैव पूर्वं प्रवर्तते॥

यच्च शीघ्रतरं विनियुङ्क्ते, तस्यैव प्रतियोगिना सह विरोधो लक्ष्यते। ननु च श्रुतिमात्रं न विरुध्यत इत्युक्तम्। कथं न विरुध्यते, यदा प्रतिनियतावेतौ श्रुतिवाक्यसम्बन्धावेकः शेषशेषिरूपः, अन्यो विशेषणविशेष्यात्मकः। तत्र च

१. क०पुनरयं।

श्रुतिरेवं वदति वाक्यलभ्यस्य विशेषस्यैवंविधं शेषशेषित्वमिति । लिङ्गं तु शेषशेषिसम्बन्धेनैव सह विरुध्यते, न वाक्यगम्येन विशेषणविशेष्यभावेन। अतश्च निष्प्रतिद्वन्द्विना वाक्येन यदा विशेषणविशेष्यभावः कृतः, तदा श्रुत्या सह लिङ्गविरोध उपलभ्यमानो विचारयितव्यः । अथवा यदैवैन्द्रयेत्युक्तम्, तदैव तदर्थं-शास्त्रन्यायेनेन्द्रव्यतिरिक्तः कोऽप्युपस्थातव्यः । स च लिङ्गगम्येन्द्रविरोधीत्ये-तत्प्रतीयते । **तस्माच्छ्रुतिलिङ्गयोरेवैष विरोध** इत्युपपन्नो विचारः ।

किं तावत्प्राप्तम् । सर्वप्रमाणानि तुल्यबलानीत्यवगन्तव्यम् । कुतः ?

क्वचिद्यस्य प्रमाणत्वं स्वशक्तेरवधारितम् ।
न ह्यन्यापेक्षया तस्य सा शक्तिरपगच्छति ॥

सर्वत्र प्रत्यक्षादावपि द्वय्येव गतिः—प्रमाणस्वरूपं, प्रमाणाभासं च । न तत्र यत्प्रमाणं, तत्कदाचिदपि प्रमाणाभासो भवति । योऽपि तदाभासः, सोऽपि नैव प्रमाणं भवति । नित्यं च प्रमाणाभासबाधः न प्रमाणस्यैव । न च तत्र बाध्यस्य प्रामाण्यमभ्युपगतम् । बाधनाक्षमत्वात्प्रमाणस्य । श्रुत्यादिषट्कस्य च समस्तस्य स्वविषये प्रामाण्यं स्थापितम् । न चैषां विषयान्तरसंचारोऽस्ति । तत्र दौर्बल्य-माशङ्क्यते, न चैतदुपस्थापितं ज्ञानमनुत्पन्नं शक्यं च वेदितुम् । न चोत्पन्नस्य स्वरसभङ्गुरत्वादुत्तरेण विनाशः । न च संस्कारापनयनम्, स्मृतिहेतोः संस्कारस्य सर्वत्रानुच्छेदात् । नाप्यनुष्ठानाख्यात्फलाद्विनियोगः शक्यते कर्तुम् । अनुष्ठान-प्रत्ययस्य दृढत्वात् । तस्मात्सर्वत्र तुल्यबलत्वाद्विकल्पः ।

बाधस्तु यदि कल्प्येत विपरीतः प्रसज्यते ।
न हि पूर्वमबाधित्वा परेषां जन्म लभ्यते ॥

श्रुत्यादीनां हि पूर्वं पूर्वं शीघ्रतरं प्रवर्तते । तेत पश्चात्तनस्य तदुपमर्देनैवाऽऽ-त्मलाभेन भवितव्यम् । अतश्च विपरीतबाधप्रसङ्गः ।

किं च—

श्रुत्यादिना समर्थस्य विनियोगोऽवकल्पते ।
न सामर्थ्यादिरूपं स्यादेकवाक्यादिभिर्विना ॥

उत्पत्तिकाले यस्यान्यविषयसामर्थ्यमवधृतं, न तस्य तद्विनियोगकाले परा-वर्तयितुं शक्यते । विनियोगस्तु सामर्थ्यानुसारीति युक्तमध्यवसातुम् । एवं यस्य येन सह सम्बन्ध एकवाक्यतया न विद्यते, न तस्य तद्विषया शक्तिः कल्प्यते । सम्बन्धे सति तदन्यथानुपपत्त्यैव शक्तिसिद्धिरिति वाक्यस्य बलीयस्त्वम् ।

तथा सर्वत्रैकवाक्यत्वमाकाङ्क्षामूलम् । अतस्तस्यामुपलभ्यमानायां तदेका-न्तेन प्रतीयते । तदभावे तु नैतदस्तीति पूर्वतरभावित्वादाकाङ्क्षात्मकं प्रकरण-

मेव ज्यायः। तद्विरोधिनी तु याऽन्येन सहैकवाक्यतावगतिः, सा भ्रान्तिः। तथा सर्वाकाङ्क्षाः संनिहितावलम्बिन्यो भवन्ति। न ह्यसंनिहितमपेक्षितुं संबन्धुं वा शक्यम्, अतो यत्र संनिधिस्तत्र सर्वमिति बलीयस्त्वम्। समाख्या पुनः प्रत्यक्षमेव संबन्धं वदति। तस्माद्विपरीतं बलाबलम्।

अथवा विरोधे सत्येतच्चिन्त्यते। न चेह विरोधः। उभयत्रापि विनियोगोपपत्तेः। अतः समवायेऽपि सर्वेषां प्रामाण्यमिति प्राप्ते।

अभिधीयते। श्रुत्यर्थविप्रकर्षात्परं परमेषां बाध्यत इति। कुतः।

विनियोक्त्री श्रुतिस्तावत्सर्वेष्वेतेषु संमता।
धीस्तस्याः संनिकर्षेण विप्रकर्षेण च स्थिता॥

यदि श्रुतिवल्लिङ्गादीनामपि स्वतन्त्राणां प्रामाण्यमभविष्यत्तत एतदुपापत्स्यत। तेषां तु स्मृतिवच्छ्रुत्यनुमानद्वारं प्रामाण्यम्। श्रुतिरेव ह्यत्रैकं प्रमाणम्। सा तु ग्रहणोपायषट्कानुरोधेन षोढाऽवतिष्ठते।

लिङ्गादीनां विनियोगे स्वातन्त्र्येण प्रामाण्यामिति शंका कथं पुनरेषां स्वातन्त्र्येण प्रामाण्यं न भवति। उच्यते। 'चोदनालक्षणोऽर्थो धर्म' इति स्थापितम्। तथा चोक्तम् 'अशब्दमनपेक्षं स्यात्' इति। तत्र प्रत्यक्षगृहीतानि यान्यक्षराणि विनियुञ्जते, सा श्रोतवृत्तित्वात् श्रुतिरित्युच्यते। यत्र त्वविनियोजकान्यक्षराणि प्रत्यक्षेण गृहीत्वा विनियोजकान्यर्थापत्त्या कल्प्यन्ते। तत्र लिङ्गादीनि भवन्ति। ततश्चैवमर्थविप्रकर्षो भवति। ऐन्द्रीविनियोगं हि प्रति श्रुतिलिङ्गयोः सह प्रस्थितयोर्यदा श्रुतेर्विनियोजकान्यक्षराणि दृश्यन्ते, तदा लिङ्गे स्मरणसमर्थानि ततो, यावत्तेषां प्रकरणाम्नानान्यथानुपपत्त्या विनियोजकानि कल्पयितुमारभ्यन्ते, तावदितरैः प्रत्यक्षैर्विनियोगः प्रत्यायितः। तस्मिंश्च प्रतीते मन्त्रोऽपि प्रकरणिनं प्रति निराकाङ्क्षीभूतः। प्रकरण्यपि मन्त्रं प्रति। तथा सति प्रकरणाम्नानस्यान्यथाऽप्युपपद्यमानत्वान्नेन्द्राभिधानश्रुतिकल्पनायामर्थापत्तिः। प्रभवति। न च श्रुतिमन्तरेण विनियोगः सिध्यति। बहुधा वर्णितं चैतत्पुरस्तात्, यथा साकाङ्क्षे वेदार्थे यत्कल्प्यन्ते, तद्वैदिकं नेतरदिति। तस्माच्छ्रुतिर्बलीयसी। न हि तस्याः किंचिदन्यदपेक्षणीयमस्ति। यथा लिङ्गस्य श्रुतिरेवम्। आह च—

नापेक्षा यस्य यत्रास्ति स तस्माद्बलवान्भवेत्।
यः पराधीनवृत्तिः स तद्बाधं कथमाचरेत्॥ १॥

श्रुत्यादीनां हि पूर्वं पूर्वमुत्तरोत्तरनिरपेक्षं प्रवर्तमानं बलवद्भवति। परं परं तु पूर्वाधीनप्रामाण्यं न शक्नोति तस्यैव बाधं कर्तुम्। न हि श्रुतिमन-

नुमाय लिङ्ग्पादेः प्रामाण्यमध्यवसीयत इत्युक्तम् । नन्वेतदप्युक्तं नासमर्थं विनियुज्यत इति । सत्यमुक्तम् । अयुक्तं तूक्तम् । कुतः ।

न श्रुतेर्विनियोक्तृत्वं लिङ्गाधीनं प्रतीयते ।
विज्ञाते विनियोगे तु तद्वशाच्छक्तिनिर्णयः ॥

विनियोगोत्तरकालं हि कथमेतत्साधयिष्यतीत्यपेक्षिते यथा शक्नोतीत्यवधारणा भवति । तत्र यद्यपि स्वरूपेण तद्विषया शक्तिर्न दृश्यते, तथाऽपि विनियोगदर्शनादेवानुमीयते । तदुक्तम् 'वचनात्त्वयथार्थमैन्द्री स्यात्' इत्यत्र । ननु च प्रागविद्यमानसामर्थ्यस्य विनियोगो न संभवतीति पूर्वतरं सामर्थ्यमनुमातव्यम् । ततश्च प्रत्यक्षाल्लिङ्गाद् दुर्बलत्वापत्तिः । सत्यम् । पूर्वभावित्वेन तत्कल्प्यते, न तु पूर्वमेव गम्यते । न ह्यविनियुक्ताया ऐन्द्रया गार्हपत्याभिधानसामर्थ्यप्रतिपत्तिकारणमस्ति । निर्वृत्तविनियोगान्यथानुपपत्त्या पूर्वमपि विद्यमानं पश्चादेवानुमीयते ।

नन्वेवमपि तुल्योऽर्थविप्रकर्षः । तथा हि ।

विक्षेपो यावता लिङ्गे स्याच्छ्रुतेरनुमापके ।
लिङ्गानुमानभूतायां तावतैव श्रुतावपि ॥

सर्वथा ह्यदृश्यमानानुमानेन प्रत्ययविप्रकर्षो भवति । तच्चोभयत्रापि समानम् । सत्यमेतावत्समानम् । न तु तद्बलाबलं प्रत्युपयुज्यते । कुतः ?

विनियोगाभिधानस्य दूरत्वाद् दुर्बलत्वधीः ।
तच्च पूर्वानुमायां स्यान्नोत्तरत्र कथंचन ॥

लिङ्गे हि प्रागभाविना श्रुत्यनुमानेन विना विनियोगाभिधानाभावाद् दूरत्वं भवति । श्रुतौ पुनरवगते विनियोगाभिधाने यस्मादेतदेवं तस्मान्नूनं किमपि सामर्थ्यमस्तीति । पश्चात्प्रवर्तमानमनुमानं न विनियोगप्रत्ययविक्षेपं करोति । सहप्रस्थितयोर्हि प्रमाणयोर्येन विनियोगदेशं चिरेण प्राप्तिर्भवति, स विक्षेपो दौर्बल्यकरो भवति । अवधारिते तु विनियोगे यद्यपि पश्चादनुमानसहस्रं भवति, न तथाऽपि कश्चिद्विप्रकर्षः । एतेन लिङ्गवाक्यादियुगलानि व्याख्येयानि । सर्वत्र हि परस्य पूर्वमननुमाय विनियोगानुपपत्तिः । पूर्वेण तु कृते विनियोगे परस्य नान्तरीयकं सद्भावमात्रकल्पनमिति प्रतिपत्तिः । आह । श्रुतेस्तावत्प्रत्यक्षत्वेन लिङ्गाद्बलीयस्त्वं युक्तम् । अथ लिङ्गवाक्यादीनामनुमीयमानश्रुतित्वादविशेषे सति किंकृतं बलाबलमिति । तदुच्यते ।

एकद्वित्रिचतुःपञ्चवस्त्वन्तरणकारितम् ।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनामपीष्यते ॥

श्रुतिमात्रानुमानान्तरितो हि लिङ्गस्य श्रुत्यर्थः। वाक्यस्य पुनर्लिङ्गश्रुत्यनुमानव्यवहितः। कथम् ?

वाचकेनैकवाक्यत्वादिहातद्वाचिनां सताम्।
कल्पयित्वाऽभिधाशक्तिं श्रुतिः पश्चात्प्रकल्प्यते ॥

सर्वत्र हि मन्त्रे किञ्चिदेव पदं कर्मसमवेतमर्थं वदति। यथा 'अग्नये जुष्टं निर्वपामि' इत्यग्निनिर्वपामिपदे। शिष्टानि त्वसमवेतार्थाभिधायित्वादप्रयोगार्हाणि सन्ति दृश्यमानैकवाक्यतान्यथानुपपत्त्याऽनुमितसामर्थ्याभिधानानि सन्ति स्वार्थमुपसर्जनीकृत्य तद्विशिष्टसमवेतार्थप्रकाशनेन प्रयोगार्थत्वं प्रतिपद्यन्ते। ततश्च श्रुतिमनुमाय विनियुज्यन्ते। तच्चाविरोधे सति सर्वमभ्यनुज्ञायते। यदा दृश्यमानैकवाक्यत्वयोर्मन्त्रयोः पृथक् पृथक् प्रकाशयितव्यावर्थौ कर्मसमवेतौ दृश्येते तदोभयोरपि भेदेन प्रकाशकापेक्षणात्प्रकाशकयोश्च प्रकाश्यापेक्षणाद्विनियोगाय प्रस्थिते सति यस्य यत्र क्लृप्तं सामर्थ्यं, स तत्र शीघ्रतरं प्राप्नुवन्नान्यत्रैकवाक्यतया नेतुं शक्यते। नाप्यन्येभ्यस्तत्राऽऽगच्छद्भ्यः सोऽवकाशं ददाति। कथम् ?

एकवाक्यतया यावत्सामर्थ्यमनुमीयते।
सामर्थ्येन श्रुतिस्तावत्कल्प्यते विनियोजिका ॥

समुदायो हि विनियुज्यमानो नावयवानविनियुज्य विनियोक्तुं शक्यते। तत्र पूर्वोत्तरयोर्भागयोरेकवाक्यत्वं प्रत्यक्षम्। नैकार्थाभिधानसामर्थ्यम्। भिन्नार्थाभिधानसामर्थ्यं त्वार्थं प्रत्ययदर्शनात्सिद्धम्। तत्र समुदायावयवविनियोगाय वाक्यसामर्थ्ययोः सहप्रस्थितयोरसमर्थविनियोगासंभवाद्यावद्वाक्येन पूर्वो भाग उत्तरार्थाभिधानसमर्थ उत्तरो वा पूर्वसमर्थ इत्यनुमीयते तावत्प्रत्येकभागवर्तिना सामर्थ्येन पूर्वस्यापि स्वार्थे परस्यापि स्वार्थे श्रुतिरनुमिता। ततश्च यावदितरत्र विनियोजकश्रुत्यनुमानाय प्रयत्यते, तावदिह विनियोगे सिद्धे निराकाङ्क्षत्वात्प्रकरणाम्नानस्य न कश्चिदपि हेतुः श्रुत्यनुमान इत्यनुपजातमूलो विनियोगो बाध्यते। मन्त्रस्यापि हि पूर्वस्य पूर्वत्रार्थे शीघ्रं विनियोग, उत्तरस्य चिरेण। तथोत्तरोत्तरस्य शीघ्रं, पूर्वस्य तत्र चिरेण। शीघ्रविनियुक्तश्च मन्त्रश्चिरविनियोगं नाऽऽद्रियते। तथाऽर्थोऽपि प्रथमावगतमन्त्रावरुद्धो नेतरं गृह्णाति। स्वप्राधान्ये च संभवति न परोपसर्जनत्वं प्रतिपद्यते। तस्माल्लिङ्गं बलीय इति भित्त्वा वाक्यं विनियोग इति।

## दृष्टान्ते शङ्का परिहारौ

नन्वेवं सति 'निर्वपामि' इत्यादिना क्लृप्तसामर्थ्येन शीघ्रतरप्राप्तेनावरुद्धेऽर्थे विप्रकृष्टप्राप्तानां 'देवस्य त्वा' इत्यादीनां बाधादविनियोगः प्राप्नोति। न चैषां भिन्नप्रयोजनत्वात्समुच्चयः। तथा सत्येकवाक्यत्वाभावात्। अवश्यं चैतैर्यथा कथं-

चिन्निर्वाप एव प्रकाशयितव्यो, नान्यप्रकाशनं, कर्मानङ्गत्वप्रसङ्गात्। अतः समानविषयत्वात्समवाये सति वाक्यप्राप्यपदान्तरबाधेन भवितव्यमिति।

अत्रोच्यते—

पदान्तराणि यत्रार्थं वदेयुः कर्मवर्तिनम्।
तत्रैवमितरेषां तु वाक्यमप्यगतेर्वरम्॥

यानि ह्यसमवेतार्थवचनानि, तानि यदि स्वतन्त्रीक्रियन्ते ततोऽनर्थकानि भवन्ति। तेन क्लृप्तसम्बन्धैर्निराकाङ्क्षीकृतोऽप्यर्थ इतरेषां साकाङ्क्षत्वात्पुनस्तत्प्रकाश्यत्वं प्रतिपद्यते। यथा प्रकरणपूरितानामपि क्रमेण पुनस्तद्धर्मप्राप्तिर्भवति। यथा प्रकृतौ निराकाङ्क्षीभूता धर्मा विकृतीर्गमिष्यन्ति। तथा च क्लृप्तौ व्याख्यातम्। तस्मादेवमादीन्यपि संबध्यन्ते। येषां तु प्रकाश्योऽर्थः समवेतो दृश्यते, तेषामनभिधेयेनासंबध्यमानानामप्यर्थवत्ताऽस्तीति नाऽऽनर्थक्यनिमित्तमवकाशं लभन्ते। सर्वेषामेव च श्रुत्यादीनामानर्थक्यप्रतिहतानां दुर्बलैरपि बाध्यत्वमिष्यते। तद्यथा व्रीह्यादीनां प्रोक्षणादीन्प्रति श्रुत्या शेषित्वं प्राप्नुवदप्यतिलङ्घ्य प्रकरणलभ्यापूर्वसाधनत्वकृतः संबन्धो भविष्यति। तेनावस्थितं वाक्याल्लिङ्गस्य बलीयस्त्वम्। तथा च भक्षानुवाके दर्शितम्।

### वाक्यप्रकरणयोर्बलाबलविचारः

वाक्यप्रकरणयोः प्रकरणमर्थविप्रकर्षाद् दुर्बलम् तथा हि—

प्रत्यक्षा संगतिर्वाक्ये न च प्रकरणेऽस्यसौ।
आकाङ्क्षातोऽनुमातव्या तावता विप्रकृष्टता॥

प्रकरणे हि स्वार्थपरिपूर्णानामङ्गाङ्गिवाक्यानामुपकार्योपकारकत्वाकाङ्क्षामात्रं दृश्यते। वाक्ये तु प्रत्यक्षः संबन्धः। ततश्च सहप्रस्थितयोर्यावत्प्रकरणैकवाक्यता कल्प्यते, तावद्वाक्येनाभिधानसामर्थ्यं, यावदितरत्र वाक्येन सामर्थ्यं तावदिह सामर्थ्येन श्रुतिस्तावदितरत्र श्रुत्या विनियोगोऽभिहित इति, विच्छिन्नायामाकाङ्क्षायां श्रुत्यनुमाने मूलाभावाद्विहते कल्पितमपि शेषत्वनिष्पत्तिमगत्वाऽन्तरैव विलीयते। तस्माद्वाक्यं बलीयः।

### क्रमप्रकरणयोर्बलाबलपरीक्षा

तथा क्रमप्रकरणयोः क्रमस्यार्थविप्रकर्षः कथम्?

आकाङ्क्षातः प्रभृत्येकं श्रुत्यर्थं प्रति गच्छति।
तामपि त्वन्यतो लब्ध्वा श्रुतिरेकस्य कल्प्यते॥

क्रमो नाम निरपेक्षाणां सतां पाठानुष्ठानदेशसाम्यमात्रम्। यदि त्वाकाङ्क्षावतः संनिधावाम्नायेत, ततः प्रकरणमेव स्यात्। अत्र च प्रायेण महाप्रकर-

णोपनिपातिन्यो विकृतय उदाहरणम्। तासु हि यत्प्राकृताङ्गमध्यपातित्वेन नोत्पन्नं, तत्पुरस्तात्परस्ताद्वाऽवस्थितक्रमभाग्भवति। प्रकरणस्य क्लृप्तोपकारैः प्राकृतैर्व्यावर्तितत्वात्। तत्र यन्निवृत्ताकाङ्क्षस्य कस्यचित्समीपे पठ्यतेऽन्यस्य चाऽऽकाङ्क्षा, ततस्तदुभाभ्यां गृह्यमाणं यावत्क्रमवतो निवृत्तमसतीमाकाङ्क्षामुपजनयति, तावत्प्रकरणवता सहैकवाक्यतां गच्छति, यावच्चेतरत्रैकवाक्यता भवति तावत्प्रकरणिनं प्रत्युपकारसामर्थ्यकल्पना। यावदितरत्रासौ तावदिह श्रुत्यनुमानं, यावदितरत्र श्रुतिरनुमास्यते तावदिह सिद्धे विनियोगेऽनुमानबीजहीनेनाक्लृप्तश्रुति सर्वमप्रमाणीभवति।

### क्रमसमाख्ययोः बलाबलविचारः

तथा क्रमसमाख्ययोः क्रमे वेदकल्पितमेवाङ्गाङ्गिनोर्देशसामान्यनिमित्तं परस्परपर्युपस्थापनम्। सर्वत्र हि केनचिदभिन्नदेशेन संबन्धोऽवकल्पते। न च समाख्यानवतः किंचिद्देशसामान्यं वेदक्लृप्तमुपलभामहे। येन संबन्धाभिमुख्यसंभवः।

### समाख्यायास्संबन्धवाचकत्वेन श्रुतिसाम्यशङ्का, तन्निरासौ

ननु च समाख्या संबन्धमेवाभिदधाना प्रवर्तत इति श्रुतितुल्या प्राप्नोति नैतदेवम्।

अन्य एव हि संबन्धः कल्प्यते यः समाख्यया।
अन्यच्च शेषशेषित्वं यच्छ्रुत्या प्रतिपाद्यते॥

अर्थानां प्रथमं केनचित्प्रकारेणानवगतसंबन्धानां समाख्या प्रवर्तते। सा च शेषशेषित्वं तावन्नैव प्रतिपादयति। केनचित्संबन्धेनोपपद्यमानत्वात्संबन्धमात्रमपि नैवाभिधत्ते। न हि यौगिकैः संबन्धोऽभिधीयत इत्युक्तम्। समाख्यान्यथानुपपत्त्याऽनुमीयते। संबन्धमात्रस्य चैतद्रूपं किंचिदभिन्नमेषामस्तीत्यवगमः। ततश्चाऽऽपन्नं क्रमाज्जन्यत्वम्। न हि किंचित्तत्र सामान्यमनुमातव्यं, देशसामान्यस्य प्रत्यक्षत्वात्। इह तु तत्पदस्याप्रत्यक्षत्वादानुमानिकत्वमिति विप्रकर्षः। समाख्या हि यावत्किंचित्सामान्यमस्तीति कल्पयति, तावत्क्रमेण नूनमनयोः काचिदपेक्षाऽस्ति येनेत्थं समानदेशौ पठिताविति, प्रकरणं कल्प्यते। यावच्च किंचित्सामान्यमपेक्षां कल्पयति, तावदितरत्रैकवाक्यता क्लृप्ता। तथा यावदिहैकवाक्यता भवति, तावदितरत्रोपकारसामर्थ्यसिद्धिः। यावच्चेहोपकारसामर्थ्यकल्पना तावदितरेण श्रुतिरुत्पोदिता[1]। ततश्च यावदिह श्रुतिमनुमातुमुपक्रमते, तावदितरत्र विनियोगे सिद्धे निराकाङ्क्षीभूते प्रकरणपाठे सर्वमेतत्प्रचितमप्यपरिपक्वविच्छेदादामसस्यमिव लूनं निर्बीजं भवति। तस्मादर्थविप्रकर्षात्तु परं परं बाध्यत इति सिद्धम्।

---

१. क० आसादिता।

आह च—

निःश्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च ।
एकमेव फलं प्राप्तुमुभावारोहतो यदा ॥
एकसोपानवर्त्येको भूमिष्ठश्चापरस्तयोः ।
उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा ॥
विरोधिनोस्तदेको हि तत्फलं प्राप्नुयात्तयोः ।
प्रथमेन गृहीतेऽस्मिन्पश्चिमोऽवतरेन्भुधा ॥
तेन यद्यपि सामर्थ्यं प्रत्येकं सिद्धमन्यदा ।
तथाऽपि युगपद्भावे जघन्यस्य निराक्रिया ॥
अन्यथैव हि शून्येषु दुर्बलैरपि चर्यते ।
अन्या बलवद्ग्रस्तैः सर्वशक्तिक्षये सति ॥

तस्मान्नैतदालम्बनं युक्तम्, यत् क्वचिदुत्तरेषां प्रामाण्यामिष्टम् । तस्माद्बलवद्विरोधेऽपि तेन भवितव्यमिति ।

यत्तु प्रामाणाभासो बाध्यते न प्रामाणामिति । तत्र ब्रूमोऽयमपि प्रमाणाभास एव । कथम् ?

नैवैतेषां प्रमाणत्वमासीदत्र कदाचन ।
अन्यत्र दृष्टमेतत्तु समारोपेण कल्पितम् ॥

नहि यत्र विषये बाधः, तत्रैषां प्रमाणत्वम् । किं तर्हि ? प्रदेशान्तरे केवलानामुपलक्षितं सामान्यतोदृष्टरूपेणात्रापि प्रतिभाति । तत्तु बलीयसाऽपहृतविषयत्वात्सीदतीति पश्चात्, भ्रान्तित्वेनाध्यवसीयते ।

अथवा यस्तत्रास्य व्यापार आसीत्, तमिहापि प्रक्रमत एव । स तु जववताऽन्येन विषयेऽपहृते मूलच्छेदाद्यदा तं न गच्छति, तत्कि क्रियताम् । तेन मृगतृष्णादिवदेवाप्राप्य प्रमाणमेव बाध्यते । अनुत्पन्नमेव चेह श्रुत्यभावाच्छेषज्ञानं बाध्यते । आन्तरालिकज्ञानमिथ्यात्वकल्पनयेति नोत्पात्तिसामान्येन तुल्यबलत्वम् । अतश्च ज्ञानसंकरोच्छेदनादिरूपो बाधो नैवाऽऽशङ्कितव्यः । योऽपि चोत्पन्नबाधस्तमपि फलवियोगात्मनोपपादयिष्यामः ।

**भाष्ये द्वयोर्द्वयोर्विरोधः वर्णितः । इतरेषामर्थसिद्धत्वं विस्तरेण वार्तिके वर्णनम्**

एवं तावद् द्वयोर्द्वयोर्विरोधे वर्णितम् । अर्थसिद्धत्वात्तु भाष्यकारेणेतरैः, सह न प्रदर्शितं, व्याख्यातृभिस्त्वेवं प्रपञ्चयितव्यम् । यथा **श्रुतिवाक्ययोर्विरोधे,** अरुणादि वाक्यसामर्थ्यादानन्तर्यसामानाधिकरण्याभ्यामेकहान्यादिशेषत्वं

प्राप्नुवत्तृतीयाश्रुत्या क्रयसंबन्धित्वेन विज्ञायते । द्वितीयसोपानभूगतारोहकयोरिव ह्यत्र यावद्वाक्यं सामर्थ्यं कल्पयति तावच्छ्रुत्या विनियोगः कल्पित इति महदन्तरम् ।

**श्रुतिप्रकरणयोर्विरोधे** प्रकरणादेकविंशत्याद्यनुवचनानां दर्शपूर्णमासाङ्गत्वे प्राप्ते, श्रुत्यैव प्रतिष्ठाकामादिषु पुरुषार्थावधारणात्प्रकरणबाधः । अनुवचनानां च क्रियात्मकत्वादितिकर्तव्यतारूपत्वात्प्रकरणग्राह्यत्वेन तद्विरोधोदाहरणत्वम् ।

**अत्र केषाञ्चिन्मतेनोदाहरणत्वं तन्निरासश्च**

तिस्र एव साह्नस्योपसदो, द्वादशाऽहीनस्य' इति तु द्वादशत्वस्याक्रियात्वादनितिकर्तव्यतात्मकत्वे सति कथंभावरूपप्रकरणग्राह्यत्वानुपपत्तेः संनिधिमात्रेण प्रकरणकल्पनापूर्वकसंबन्धाध्यवसानाच्छ्रुतिस्थानविरोधोदाहरणत्वं युक्तमित्येके ।

तत्तु नैवमाश्रितम् । कुतः ?

यदि द्रव्यगता संख्या स्वतन्त्रा वा भवेदियम् ।
नेत्थंभावेन गृह्येत क्रियारूपेण वर्जनात् ॥
इतिकर्तव्यतांशस्थां येनोद्दिश्योपसत्क्रियाम् ।
द्वादशत्वविधिस्तेन कथंभावेन गृह्यते ॥
इहापि च कथं कथंभावविनियुक्तोपसद्गता ।
यावत्संख्यैकवाक्यत्वसामर्थ्ये कल्पयिष्यति ॥
तावत्प्रत्यक्षया श्रुत्या षष्ठ्याऽहीनाङ्गतां गता ।
नैव ह्यहर्गणादन्यदहान्याहीनमुच्यते ॥

**श्रुतिक्रमयोर्बलाबलचिन्ता**

**श्रुतिक्रमविरोधे** किमुदाहरणमिति ?

उच्यते रशनाधर्मा दर्भमय्यादयः क्रमात् ।
अग्नीषोमीयशेषाः स्युः श्रुत्या यूपाङ्गतां गताः ॥
एतद्यूपपरिव्याणशेषो हि रशना श्रुता ।
सह धर्मैर्न सा याति क्रमेण पशुशेषताम् ॥
यावत्प्रकरणादीनि तस्याः कल्पयति क्रमः ।
चतुर्भिस्तैर्व्यपेतत्वाच्छ्रुत्या तावत्स जीयते ॥
आकाङ्क्षामात्रमेवैकं यावत्कल्पयति क्रमः ।
दूरेण तावदप्राप्तां रशनां हरति श्रुतिः ॥

## श्रुतिसमाख्ययोर्बलाबलविचारः

**श्रुतिसमाख्ययोर्विरोधे** किमुदाहरणम् ? पौरोडाशिकमिति समाख्याते दर्शपूर्णमासकाण्डे पठितो मन्त्रः साधारणे प्रकरणे वर्तमानः क्रमेण चानुन्मीलितलिङ्गेनाविनियुज्यमानः पुरोडाशस्यैव वा प्राथम्यात्प्राप्नुवन्, श्रुत्या सांनाय्यार्थशाखाङ्गत्वेन विधीयते 'इषे त्वेति शाखां छिनत्ति' इति। तत्रापि यावत्समाख्यया किंचित्सामान्यं कल्प्यते, तावच्छ्रुत्या विनियुक्तत्वात्प्रकरणवाक्यसामर्थ्यश्रुतिष्वकल्पितास्वेव बाधः।

## लिङ्गस्य प्रकरादिनाविरोधे बलाबलविचारः

एवं लिङ्गस्य प्रकरणादिविरोध उदाहर्तव्यः। **तत्र प्रकरणविरोधे** तावत्पूषानुमन्त्रणान्युदाहर्तव्यानि। यावच्च प्रकरणेनैकवाक्यत्वं कल्प्यते, तावल्लिङ्गेन श्रुतिः। तथा यावदित्तरत्र प्रकृताग्न्यादिप्रकाशनसामर्थ्यं, तावदिह विनियोग इति बाधः।

**लिङ्गक्रमयोर्विरोधः** स्तुतशस्त्राधिकरणे दर्शितः 'अर्थेन त्वपकृष्येत' इति। स्थितोदाहरणमपि यथाऽभ्यनुज्ञापनाभ्यनुज्ञयोः प्रज्ञातक्रमयोः 'उपहूत उपह्वस्व' इत्येवं मन्त्रावाम्नातौ। तौ देशसामान्यात्तथैवाङ्गतया प्राप्नुतः 'उपहूत' इत्यनुज्ञापने[1] 'उपह्वयस्व' इत्यनुज्ञायाम्। न तु तथा सामर्थ्यमस्तीति, विपरीतं शेषत्वम्। यावद्धि स्थानेन प्रकरणमुत्पाद्यैकवाक्यत्वं कल्प्यते, तावल्लिङ्गेन श्रुतिं कल्पयित्वा साधितो विनियोग इत्यकल्पितलिङ्गश्रुतिपदस्यैव क्रमस्य बाधः।

तथा परिव्याणकरण-क्रियमाणानुवादिनोः 'परिवीरसि' 'युवा सुवासाः' इति वाऽग्नीषोमीयपरिव्याणाङ्गत्वे प्राप्ते, लिङ्गात्सवनीयार्थद्वितीयपरिव्याणाङ्गत्वमपि। कथं न मनोताग्नीषोमीयक्रमबाधनसमर्थेन[2] लिङ्गेनाऽऽग्नेयसवनीयपशुयागाङ्गमिति चेत् न ? 'वचनात्त्वयथार्थमैन्द्री स्यात्' इतिवद् बलवत्तरश्रुतिकृतविनियोगकल्पितलक्षणाद्वारेणाऽग्नीषोमीयाङ्गित्वात्। एवं ह्याह 'यद्यप्यन्यदेवत्यः पशुः, आग्नेय्येव मनोता कार्या इति। अनया हि श्रुत्या लिङ्गेनोत्कृष्यमाणा मनोता वारिता। द्विदेवत्येऽप्येकदेवत्यैव न केवलाग्निदेवत्यत्वेनाग्नीषोमीयादुत्तारणीयेत्यर्थः।

यद्वैवकारं स्वस्थानादपनीय यथाक्रमं कार्यैवेत्यत्र संयोजना कार्येत्यवधार्यते।

**लिङ्गसमाख्याविरोधे** तु भक्षानुवाके ग्रहणादिवाक्यानि समाख्यानाद्भक्षाङ्गत्वेन संबन्धसामान्यादिकल्पनया भक्षाङ्गत्वविनियोगाय प्रस्थितानि लिङ्गेन ग्रहणावेक्षणसयजरणेषु विनियुज्यन्त इति स्थितम्। याज्यासमाख्याबाधेन च मनोर्ऋचां पृथुपाजवत्योश्च लिङ्गेन सामिधेनीत्वेन विनियोग इत्युक्तम्।

---

१. क० अनुज्ञायते। २. क० सामर्थ्येन।

**वाक्यक्रमयोर्विरोधे** परिव्याणकरणक्रियमाणानुवादिपरिवीरसिपरिवेतिपद-व्यतिरिक्तपदानां 'युवा सुवासा आगात्, स उ श्रेयान्' इत्येवमादीनां लिङ्ग-विनियुक्तपरिवीतपदैकवाक्यत्वात्सवनीयपरिव्याणे विनियोगः।

**वाक्यसमाख्ययोर्विरोधे** भक्षानुवाक एव 'सध्यासमित्येवमादिषु ग्रहणादौ विनियुज्यमानेषु तदेकवाक्यगतशेषपदावृत्तिरुदाहर्तव्या। तथाऽऽध्वर्यवादिसमाख्या-नाज्ज्योतिष्टोमादिप्रधानेषु तदर्थेष्वेव प्राप्नुवत्सु स्वर्गकामाद्येकवाक्यत्वादर्थि-मात्रविषयत्वं विज्ञायते। ननु च श्रुतिरेवैषा भवेत्। नात्र कस्यचिच्छब्दस्य श्रवणादेतद्विज्ञायते। लिङ्गाकर्तुरनभिधानात्। किं तर्हि। पदद्वयसंनिकर्षादे-वैतल्लक्षणया सामानाधिकरण्यावदगम्यते। तस्माद्वाक्येनैव समाख्या बाध्यत इति।

**प्रकरणसमाख्ययोर्विरोधे** पौरोडाशिकसमाख्यातब्राह्मणाम्नातानां प्रयाजा-दीनां प्रकरणात्सांनाय्योपांशुयाजार्थत्वमित्युदाहरणम्। एवं तावदेकस्यशेषस्या-नेकं शेषिणं प्रति नियमानस्य विरोध उदाहृतः।

एकस्यशेषस्यानेकशेषिणं प्रविरोधमुपवर्ण्यम् अनेकस्य शेषस्य एकं शेषिणं

**प्रति नीयमानस्य विरोधे उदाहरणम्**

एतयैव तु दिशाऽनेकस्य शेषस्यैकं शेषिणं प्रति नीयमानस्य विरोध इदानी-मुदाहर्तव्यः। तद्यथा **श्रुतिलिङ्गयोर्विरोधे** 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इति मन्त्रकरणकव्यापारविधाने कृते, लिङ्गात्कस्मिंश्चदाग्नेये मन्त्रे शेषत्वेन प्राप्नुवति श्रुत्यैन्द्री विनियुज्यते। तदवरुद्धे चोपस्थाने नेतरस्यावकाशो विद्यते।

**श्रुतिवाक्ययोर्विरोधे** यज्ञायज्ञीयप्रगाथैकवाक्यभूतगिरापदप्राप्ताविरापद-विधानमुदाहरणम्। तथा विश्वेषां देवानाम्।

श्रुत्याऽऽमिक्षैव शेषो हि तेषां वाक्येन वाजिनं।
तद् दुर्बलप्रमाणत्वात्तया श्रुत्या निराकृतम्॥

**श्रुतिप्रकरणयोर्विरोधे** प्रतिष्ठाकामदर्शपूर्णमासप्रयोगे प्रकरणात्पञ्चदशसंख्य-सामिधेन्यनुवचनेऽङ्गत्वेन प्राप्ते, श्रुत्यैकविंशतिसंख्यानुवचनान्तराङ्गत्वावग-मात्प्राकरणिकेनित्यानुवचनबाधः।

**श्रुतिक्रमविरोधे—**

पशुकामप्रयोगे च क्रमेण चमसाङ्गता।
श्रौतादगोदोहनात्तत्र चमसस्य निराक्रिया॥

**श्रुतिसमाख्याविरोधे—**

वाजपेयः समाख्यानात्प्राप्नोत्यध्वर्युकर्तृकः।
श्रुत्या स्वराज्यकामस्य तथाऽध्वर्योर्निराक्रिया॥

तथा 'यजमानस्य याज्या' इत्युदाहरणम्। ऋतुयाजेषु हि हौत्रसमाख्यया होतुः प्राप्ता याज्या यजमानकर्तृकत्वेन कर्तृसंबन्धवाचिन्या षष्ठीश्रुत्या प्रतिपाद्यते।

**लिङ्गवाक्यविरोधे—**

स्योनादेरपि शेषत्वं वाक्येन सदनं प्रति।
सीदेत्यस्यैव लिङ्गेन तेनायं पूर्वबाधनः॥
तथाऽभिधारणे तस्मिन्सीदेत्यस्यापि शेषता।
स्योनादेरेव लिङ्गेन तस्मात्स परबाधनः॥
अनेकशेषिशेषत्वात्पूर्वमेतावुदाहृतौ।
अनेकशेषसम्बन्धात्संप्रत्येकस्य शेषिणः॥
पूर्वं स्योनं न इत्यादि सदने साभिधारणे।
वाक्येनाङ्गतया प्राप्तं लिङ्गाच्छुद्धेऽभिधारणे॥
तस्मिन्सीदेत्ययं वाक्यात्प्राप्तः शेषोऽभिधारणे।
लिङ्गात्तु सदनस्यैव तत्रैवातः प्रयुज्यते॥
एकैकस्मिंस्तु शेषत्वं वाक्यात्प्राप्तं द्वयोर्द्वयोः।
एकैकस्य तु लिङ्गेन तच्च संप्रति गृह्यते॥

**प्रमाणसांकर्यवर्णनम्**

एकस्मिन्नेव मार्गे तु यत्संकीर्णचतुष्टयम्।
अभाणि भाष्यकारेण विवेक्तव्यं तदात्मना॥

**लिङ्गस्य प्रकरणक्रमसमाख्याविरोधे** निर्वापादिषु लिङ्गेन देवस्य त्वेत्यादिना प्रकरणप्राप्तमन्त्रान्तरबाधः। प्रथमस्य काम्यसैन्द्राग्नस्य क्रमात्सामिधेनीकार्यप्राप्तस्य याज्यानुवाक्यायुगलस्य लिङ्गेन बाधः। समाख्यया मनोर्ऋचां सोमारौद्रियेषु याज्यानुवाक्यात्वेन प्राप्तानां सोमरुद्रलिङ्गाभिर्याज्यानुवाक्याभिर्बाध इत्युदाहरणानि।

**वाक्यप्रकरणयोर्विरोधे** 'पूर्वेद्युरमावास्यायां वेदिं करोति' इत्युदाहरणम्। प्रकणेन हि हविरधिवासनोत्तरकालं यद्विधानं, तस्य ग्रहणं प्राप्नोति। अमावास्यासमभिव्याहारेण तु पूर्वेद्युः। न चात्र श्रुतित्वम्, न हि सप्तमी शेषशेषिसम्बन्धं वदति। यत्त्वधिकरणत्वमभिधत्ते, तत्तत्कर्मणोऽनुपपन्नमेव। तस्मात्पदसंनिधानेनैष सम्बन्धः। स च शीघ्रतरं भवतीत्युक्तम्।

**वाक्यक्रमयोर्विरोधे** किमुदाहरणम्। ज्योतिष्टोमे काम्यनैमित्तिकेषु प्रतिपत्कल्पेषु प्रतीकग्रहणात्पादमात्रं श्रुत्या विनियुज्यते। तत्र द्वितीयपादात्प्रभृति

यथासंख्यक्रमेण नित्यानामेवर्चां प्रसङ्गः । तद्यथा 'वृषा पवस्व धारय' इति राजन्याय प्रतिपदं कुर्यादित्यत्र 'पवमानायेन्दवे । अभि देवां इयक्षते' इत्येतावेव द्वितीयतृतीयपादो प्राप्नुतः । वाक्याच्च 'मरुत्वते च मत्सरः । विश्वा दधान ओजसा' इति । ननु विभक्तिभेदादत्र लिङ्गविरोधः स्यात् ! नैष दोषः । सर्वेषां सोमलिङ्गत्वाद्विभक्तिभेदेन त्वेकवाक्यत्वमेव नोपपद्यते । तद्यावदाकाङ्क्षापूर्वकमेकवाक्यत्वादि कल्प्यते, तावदितरेणाऽऽनन्तर्यात्समानविषयत्वाच्च सामर्थ्यादि कल्पयित्वा विनियोगः कृत इति बलीयस्त्वम् ।

**वाक्यसमाख्ययोर्विरोधे** 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह' इति हौत्रसमाख्याते प्रवचने प्रैषानुवचनमाम्नातम् । तस्य कर्तृविशेषाकाङ्क्षिणः समाख्यया होता प्राप्नोति । वाक्येन मैत्रावरुणः एकेन च कृतार्थस्य न कर्त्रन्तरापेक्षा भवति । तत्र शीघ्रतरप्राप्ते मैत्रावरुणे प्रकरणकल्पनां यावत्प्राप्ता समाख्या बाध्यते न चायं श्रुतिविरोधः आख्यातपदेन कर्तुरनभिधानान्मैत्रावरुणपदे च कारकविभक्तिप्रयोगाभावात् ।

**प्रकरणक्रमयोर्विरोधे**[1] गिरापदेरापदे एव स्तोत्रापेक्षयोदाहरणम् । अग्निष्टोमसाम्नः क्रमेण गिरापदं प्राप्नोति, प्रकरणादिरापदम् । तच्च बलीयः । पूर्वं तु सामापेक्षयोदाहृतमासीदित्यसंकीर्णविषयत्वम् ।

**प्रक्रियासमाख्ययोर्विरोधे** 'तस्यान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह' इत्येतदेव ज्योतिष्टोमं प्रत्युदाहरणम् । तस्य हि समाख्यया होतृकर्तृकं प्रैषानुवचनं प्राप्नोति । प्रकरणात्तु मैत्रावरुणकर्तृकं निर्णीयते । प्रैषानुवचनस्वरूपापेक्षं च पूर्वत्रोदाहरणमिति भेदः ।

**क्रमसमाख्ययोर्विरोधे** किमुदाहरणम् । काम्ययाज्याकाण्डाधीतयोरैन्द्राग्नयुगलयोरुभयोरपि विकल्पेन कर्मद्वयेऽपि प्रयोगः समाख्यानुरोधेन प्राप्नोति । क्रमबलीयस्त्वात्तु प्रथमस्य प्रथमं, द्वितीयस्य द्वितीयमेवेति व्यवस्था । लिङ्गं तु पक्षद्वयेऽपि तुल्यार्थमिति क्रमसमाख्ययोरेव विरोधः ।

एवं शेषैकत्वे शेष्येकत्वे च श्रुत्यादिसमयश्चिन्तितः । यथा चैषामर्थविप्रकर्षाद्विजातीयः सह बलाबलम् एवं सजातीयैरपि यत्र हेतुसामान्यं, तत्र दर्शयितव्यम् । तद्यथा श्रुतेरेव तावत्सामान्यविशेषादिभावेन शेषविषयः समवायः । 'पुरोडाशं चतुर्धा करोति' इत्यविशेषश्रवणादग्नीषोमीयादावपि प्राप्नुवत् 'आग्नेयं चतुर्धा' इति तु विशेषश्रवणेन विशेषे चतुर्धाकरणमुपसंह्रियते । तथा शेषिसमवाये 'यदाहवनीये जुहोति' इति सप्तमीश्रुत्या जुहोतिसामानाधिकरण्येनाभृथेऽप्या-

१. क० क्रमप्रकरणयोर्विरोधे ।

हवनीयः प्राप्यमाणो विशेषसंयुक्तया 'अप्स्ववभृथेन' इत्यनया बाध्यते । संदिग्धासंदिग्धत्वेन च बलाबलविशेषो भविष्यति ।

एवं पौर्वापर्याविरोधाङ्गगुणविरोधादिष्वपि श्रुतिद्वयमुदाहर्तव्यम् ।

तथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते ।
समायप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता ॥
तथा धात्वर्थकर्मत्वे पदश्रुत्योपपादिते ।
भावनाया विधिश्रुत्या पुरुषार्थस्य साध्यता ॥

तथा **लिङ्गद्वयविरोधे** 'स्योनं ते सदनं कृणोमि' इत्येवोदाहरणम् । द्वे हि तत्र लिङ्गे । परस्परैकवाक्यतागमनसामर्थ्यात्मकमेकम्, अर्थाभिधानशक्तिरूपमपरम् । एतच्च श्रुत्यनुमानस्य प्रत्यासन्नम् । विप्रकृष्टमितरद्वाक्यादपि जघन्यत्वादित्युक्तं भाष्ये ।

**वाक्ययोर्विरोधे** 'पञ्चदश सामिधेनीरनुब्रूयात्' 'सप्तदश वैश्यस्य' इत्येतदुदाहरणम् । उभयत्रापि हि समानाधिकरण्यादेकवाक्यत्वे कृते विनियोगे सति निमित्तविशेषसंयोगात्साप्तदश्यं बलीयो भवति ।

**प्रकरणयोर्विरोधे** 'अभिकामं जुहोति' इत्युदाहरणम् । महाप्रकरेण ह्यस्य दर्शपूर्णमासार्थता । अवान्तरप्रकणेन तु प्रयाजार्थता । तच्च बलीयः तत्र हि प्रत्यासत्तेरननुभूते महाप्रकरणसंस्पर्शे पूर्वतरं वाक्यस्थानीयः सम्बन्धोऽवकल्पते ।

**क्रमयोर्विरोधे** काम्य एव याज्याकाण्डे पौर्वापर्यप्रत्यासत्तिक्रमेण तयोरैन्द्राग्नीययोर्युगलयोरानियमेनेष्टिद्वयेऽप्यनियमेन प्राप्नुवतोर्यथासंख्यक्रमेणात्यन्तदेशसाम्येन प्रत्यासन्नत्वाद्विनियोगो भवति ।

**समाख्ययोस्तु विरोधे** सामान्यविशेषसमाख्ययोः सूत्रबद्ध एव बाधो भविष्यति 'तस्योपदेशसमाख्यानेन निर्देशः इति ।

शेषशेषिसमवायश्च प्रत्येकं विविच्योदाहर्तव्यः । एवं तावत्प्रत्यक्षेषु श्रुत्यादिषु विचारितम् एतयैव दिशाऽनुमानादिगम्येष्वपि सजातीयविजातीयसमवाये विचारयितव्यम्[1] तत्र च प्रत्यक्षगम्यानामानुमानिकैः, आनुमानिकैरानुयानिकानां च, अनुमानिकैः सह पूर्वोक्तेनैव मार्गेण सजातीयविजातीयबलाबलं व्याख्येयम् । तद्यथाऽतिदेशप्राप्ताः श्रुत्यादयः प्रत्यक्षैर्विकृतिषु बाधिष्यन्ते । विपरीतोऽपि चेह बाधो भवति पूर्वं पूर्वमपि ह्यानुमानिकं परेणापि प्रत्यक्षेण बाध्यते । यथा कृष्णलेषु सामर्थ्येनावघातः सर्ववस्तुविषयं च सामर्थ्यं लिङ्गं[2] केवलं मन्त्रगतमेवावगन्तव्यम् । तथा च यान्यप्यन्यार्थदर्शनान्यनन्यगतीनि, तेषामपि लिङ्गत्वम-

---

१. क० विजातीयसमवायोविचारयितव्यः। २. क० लिङ्गेन ।

भिधास्यते । का पुनरस्य लिङ्गस्य प्राप्तिः, अनन्यथासंभव इत्यादि । यत्र पुनः श्रुतिरानुमानिकी, लिङ्गं च प्रत्यक्षं, तत्र कथम् यथा स्मृतिवैदिकलिङ्गविरोधे । तत्र स्मृतेर्मूलान्तरमपि संभाव्यते, न तु लिङ्गस्येति, तदेव बलवदित्यनुसर्तव्यम् ।

सर्वत्र दुर्बलस्यापि प्रमाणस्य बाधे यदि किंचिदनर्थकीभवति ततो विपरीतो बाधो योजयितव्यः । तदुक्तं 'व्रीहीन्प्रोक्षति' इत्यत्र श्रुतिमुत्सृज्यापूर्वसाधनत्वग्रहणमिति । तथा—

दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा ।
तदाऽपि विपरीतत्वं शिष्टाकोपे यथोदितम् ॥

सर्वप्रमाणानामेवार्थद्वारः परस्परविरोधः न स्वरूपनिमित्तः । तत्र यदा पदार्थतद्धर्मविषये प्रमाणे विरुध्येते, तत्र यद्यपि प्रमाणतोऽन्यादृशं बलाबलं तथाऽपि प्रमेयानुरोधेन तदाश्रयणात्स्वरूपदुर्बलेनापि बलवद्बाध्यमान तदानुगुण्यं प्रतिपद्यते । तदुक्तमाचमनादयः पदार्थास्तेषां क्रम इति । तथा च लोके—

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥

एवं सूत्रं श्रुतिलिङ्गविरोधोपपादनान्तं च भाष्यं व्याख्यातम् । इदानीं साध्यशेषमनुक्रमिष्यामः ।

तत्र तुल्यबलत्वोक्तिः स्वतः प्रामाण्यविभ्रमात् ।
प्रदेशान्तरदृष्टं च रूपं तुल्यं द्वयोरपि ॥

स्वत एव मन्त्ररूपं दृष्ट्वा श्रुत्यनुमानमन्तरेणैव विनियोगबुद्धिर्भवतीति श्रुतितुल्यत्वम् । **नहि विज्ञानस्य विज्ञानस्य च विशेष उपलभ्यत इति**—मन्त्राम्नानवेलायामिन्द्रार्थत्वं ज्ञातं, श्रुत्युच्चारणकालेऽपि गार्हपत्यार्थत्वमित्युभयोर्लब्धात्मनोरविशिष्टत्वम् । न ह्यविज्ञातरूपो मन्त्रः श्रुत्या शक्यो विनियोक्तुमिति, श्रुत्या प्रथमं रूपनिरूपणं कर्तव्यम् । अतश्च तदवधारणवेलायामिन्द्रोपस्थानप्रत्ययो जातो न शक्यो निवर्तयितुमिति मन्यते । **ननु लिङ्गस्य भङ्गुरस्येव रूपं सविचिकित्सो हीति**—श्रुतौ दृश्यमानायामनुमानासंभवाद्भङ्गुरत्वम् । सविचिकित्सो हि त्वयं विक्षेपजन्मत्वात् । न ह्यस्य स्वतः प्रामाण्यमित्यभिप्रायः ।

परः पुनः प्रत्ययोत्पादनमैकान्तिकं गृहीत्वा सविचिकित्सत्वं संदेहविपर्ययानध्यवसायानामन्यतमं मन्वमान आह—**नैतद्युक्तं यतो लिङ्गात्सविचिकित्सः प्रत्ययः । तस्य श्रुतेश्च नैव संप्रधारणाऽस्तीति** । किमियमैन्द्री भवति न भवतीत्यनिश्चितः । तस्य श्रुत्यविरोधेऽप्रमाणत्वान्नैव तया सह बलाबलचिन्ता । यतस्तु निर्विचिकित्स एकान्तेनैतद्देवत्योऽयं मन्त्र इति प्रत्ययः, स श्रुत्या सह

तुल्यबलत्वाद्विकल्पितुमर्हति । **ननु नैव कदाचिदिति**—पूर्ववदेव कदाचिन्निर्विक्षेप इति मन्यते । इतरस्तु स्वाभिप्रेतमेव सविचिकित्सत्वं गृहीत्वाऽऽह—**एवं हि सति नैव लिङ्गं नाम किंचित्प्रामाणमभविष्यदिति ।**

सिद्धान्तवादी तु वदति—यदि सविक्षेपप्रत्ययोत्पादनमात्रेण कुपितं लिङ्गं प्रामाण्यमेव मुञ्चति, **कामं मा भूत्प्रमाणं, भवति तु संशयो लिङ्गपरिज्ञातेष्वर्थेष्विति** । कथं पुनः सविक्षेपत्वं परित्यज्य, संशय एव सविचिकित्सत्वमुदाह्रियते। कथं वा लिङ्गपरिज्ञातत्वं सिद्धवदभिधीयते । नैष दोषः । लिङ्गपरिज्ञातत्व तावदविरोधवेलाभिप्रायम् । संदिग्धत्वं विरोधवेलायाम् । एतदुक्तं भवति । यदविरोधकाले लिङ्गस्यावगतं विनियोजकत्वं, तन्न तथैव सर्वत्रैवावतिष्ठते । किं तर्हि । संदिह्यते । अन्यत्राविरोधाद्विनियोगोऽङ्गीकृतः, स इह किं तथैव भवत्यथ केनचिद्व्यावर्तिष्यत इति । **यदि वा विस्पष्टमेवाप्रामाण्यमिति**—तावदेव संदेहो भवति, यावत्प्रत्यक्षा श्रुतिर्नोपलभ्यते । तस्यां तु सत्यामितरकल्पनानुपपत्तेरप्रामाण्यम् । लिङ्गे हि सामर्थ्यमात्रं प्रत्यक्षम् । न च तावता विनियोग उक्तो भवति । न चानुक्तस्य क्रियायां प्रामाण्यमस्ति । यथा—सत्यपि सामर्थ्ये विप्रराजन्यौ न वैश्यस्तोमं कुरुतः । तस्मान्न लिङ्गं विनियोजकमिति ।

परस्तु विरोधविषयमप्रामाण्याभिधानमज्ञात्वा सार्वत्रिकमेवेदमुक्तमिति भीतः प्रामाण्यमार्गं दर्शयति—**प्रकरणवतोऽर्थस्य संनिधाने यमर्थमामनन्तीति** । तदेतत् 'अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात्' इत्यत्र अविशिष्टस्तु वाक्यार्थः' इत्यत्र च वर्णितम् ।

अथवा सिद्धान्तवादिनाऽपि विरोधे सुखतरमप्रमाणत्वं वक्ष्यामीति मन्यमानेन प्रथमं स्वतन्त्रमेवैतस्य श्रुत्यनुमानद्वारप्रामाण्यकल्पनमापत्स्यते । ततश्च मम सुजयो भविष्यति । तत्रेतरेण विरोधविषयमनादृत्य प्रामाण्यं तावदस्तीति निरूप्य, तुल्यबलत्वमभिहितम् ।

अभ्युपगम्यापि बलाबलमविरोधादबाधः । तद्यथोपदेशातिदेशाभ्यां प्रयाजाद्युपकारस्य प्रकृतिविकृत्यर्थत्वादविरोधः सकृच्चोदितस्यासकृत्करणेऽपि प्रधानानुरोधेन गुणानुवृत्तेः सर्वत्रेष्टत्वात् । इन्द्रशब्दस्य गार्हपत्ये गौणत्वादवयवप्रसिद्धेर्वेन्द्रे मुख्यत्वात्समुदायप्रसिद्धेर्विरोध इति चेत् ? न । प्रयोगभेदेन परिहारात् । युगपदुपदिश्यमानं ह्येतत्संभवाश्रयणाद्विरुध्यते । प्रयोगभेदे तु सति गार्हपत्याभिधानवेलायां यज्ञसाधनत्वं वा गुणमभिवदति, क्रियाख्यैश्वर्ययोगं वाऽङ्गीकृत्य प्रवर्त्स्यति । इन्द्राभिधानकाले तु मुख्य इत्यविरोधः । तस्मान्नास्ति बाध इत्येवं प्राप्ते ।

ब्रूमः । श्रुतिर्लिङ्गाद्बलीयसी । कुतः ?

मन्त्रोऽयं गार्हपत्याङ्गं शब्देनैवाभिधीयते ।
इन्द्राङ्गत्वं तु सामर्थ्यादशब्दमनुमीयते ॥

यत्तु प्रकरणात्सामर्थ्याच्चाङ्गत्वानुमानमुक्तम्, तच्छब्देनासंस्पृष्टमीदृशेष्वर्थेष्वप्रमाणमित्युक्तम् । परस्तु सार्वत्रिकमेव लिङ्गस्याशाब्दत्वमुक्तमिति मन्यमानो न तर्हि विरोधाद्बाधः । किं तर्हि ? अप्रमाणत्वादेवेति विवक्षन्यद्येवमित्याह । सिद्धान्तवादी तु यथा प्रथमं पूर्वपक्षवादिना लिङ्गस्य प्रामाण्यमुक्तमासीत् तत्तथेदानीं स्वयं प्रतिपादयति । भवति हि प्रकरणादेषोऽर्थो—यथा शक्नुयात्, तत्तथा यागस्यानेनोपकुर्यादिति । न च स्वार्था[1]भिधानादन्यथा शक्नोत्यसावुपकर्तुमिति तत्र विनियोगश्चोदितो भवति ।

परस्तु मदीयमेवायं पूर्वोक्तं मार्गमायातः क्वेदानीं गमिष्यतीत्युत्साहेनाऽऽह—**'यदि श्रुतिमूलो न श्रुतिमूलो न श्रुत्यन्तरेण बाधितुं शक्यः'** । तेन यदि तावदशाब्दोऽयमर्थः ततो नैव प्रमाणम् । अथ शाब्दः ततस्तुल्यबल इति । सिद्धान्तवादी तु द्वयमपि परिहरति—**नापीति** । आनुमानिक्याः श्रुतेरविरोधे सत्यात्मलाभः विरोधे चानुत्पादात् । यत्र हि प्रत्यक्षया श्रुत्या मन्त्रो न विनियोगं प्रति निराकाङ्क्षीकृतः तत्रास्य विवियोगसिद्ध्यर्थं यावत्कल्प्यते तत्सर्वमाम्नानान्यथानुपपत्तिमुद्रामुद्रितत्वाद्वैदिकं भवति । यत्र विस्पष्टमेवावगतमनेन गार्हपत्य उपस्थेय इति, तत्राऽऽम्नानप्रयोजनेन साध्ये प्रयोगोपकारे विज्ञाते नैतावत्कल्प्यमानं वेदः सहतेऽनेनेन्द्रोपस्थानं कर्तव्यमिति । तस्माद् दुर्बलं लिङ्गम् ।
किंच—

सर्वत्रैव विकल्पानामन्याय्यत्वमवस्थितम् ।
पक्षे हि सदसद्भावावेकत्रार्थे दुराश्रयौ ॥

स्वतन्त्रया श्रुत्या नित्यमेव गार्हपत्योपस्थानं चोदितं, लिङ्गेन स्वतन्त्रेणेन्द्रोपस्थानम् । तत्रान्यतराश्रयणे सतीतरच्चोदितं सन्न क्रियते । तदपेक्षया चेतरदचोदितं सत्कृतम् । तदकरणमप्यचोदितम् । श्रुतहान्यश्रुतकल्पनयोश्च तुल्यो दोषः । प्रसिद्धिबाधात् । चोदितस्य कर्तव्यताप्रसिद्धिरितरस्याकर्तव्यत्वं तदुभयमतिक्रम्येत । तस्मात्तावन्न विकल्पः । यस्तु विरोधपरिहारार्थं समुच्चयोऽभिहितः तत्र ब्रूमोऽस्त्येव विरोधः कथम् ?

श्रुत्या ह्यत्र निराकाङ्क्षे मन्त्रप्रकरणे कृते ।
लिङ्गं साकाङ्क्षसाध्यार्थं तयैकान्ताद्विरुध्यते ॥

---

१. क० स्वार्थमभिदधानात् ।

एकोऽयं मन्त्रः एकं च प्रकरणम्। सकृच्चाऽऽम्नातस्यैकरूप्येण भवितव्यम्। तत्र श्रुतिविनियोगवेलायां मन्त्रप्रकरणिनोर्निराकाङ्क्षत्वं भवेद्वा, न वा। यद्यदि तावन्नास्ति, ततो विनियोग एवासिद्धः। न हि विनियुक्तस्याऽऽकाङ्क्षा युज्यते। अथ त्वस्ति ततश्चाऽऽकाङ्क्षाधीनसिद्धित्वाल्लैङ्गिकविनियोगानुपपत्तिः। युगपद्भावाश्रयणे ह्यस्त्याकाङ्क्षा, नास्ति वेति विप्रतिषिद्धं स्यात्। एवं सत्यपि तु यदि प्रमाणयोस्तुल्यप्रवृत्तित्वं भवेत् ततो विशेषाग्रहणान्न ज्ञायेत केन प्रथमतरं निराकाङ्क्ष इति। युगपदेवोभाभ्यामनिराकाङ्क्षीक्रियमाण उभयार्थो भवेत्। अस्ति तु प्रमाणयोर्विशेषः, श्रुतेः शीघ्रतरप्रवृत्तितत्वात्। अतस्तया विनियुक्ते [1]मन्त्रे न लिङ्गस्यावकाशोऽस्तीति, श्रुतिबलीयस्त्वसिद्धिः।

**सूत्रेण पारदौर्बल्येऽभिहिते भाष्यमतेन पूर्वप्राबल्यवर्णनम्**

सूत्रेण परदौर्बल्ये सूत्रिते सति भाष्यकृत्।
आर्थं पूर्वबलीयस्त्वं व्याचष्टे तदनादरात्॥

**लिङ्गवाक्ययोर्विरोधे** एकं तावदिदमुदाहरणम्। ज्योतिष्टोमे हौत्रप्रवचनाधीताः प्रैषा वाक्येन मैत्रावरुणस्य विधीयन्ते 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह' इति। तेषां मध्ये कश्चित्प्रैष एवं पठ्यते 'प्रशास्तर्यज' इति। सोऽयं स्वसामर्थ्येन मैत्रावरुणं नियुङ्क्ते। तत्र यदि वाक्यं बलीयस्ततो मैत्रावरुणः प्रेष्यो। आत्मनि च प्रैषासंभवाद्धोता यजेत् न अथ तु लिङ्गं बलीयः, ततो मन्त्रेण मैत्रावरुणो नियोक्तव्यः। स च 'तेषां यतो विशेषः स्यात्' इत्येवं विज्ञायते। सामान्यसमाख्यया पूर्वंभयं होतुरेव प्रापितः सन्वाक्येन बाधित आसीत्। तद्यदा वाक्यं लिङ्गेन बाध्यते, तदा समाख्ययैव प्रतिप्रसूतया होतृकर्तृकत्वं विज्ञायते। प्रैषार्थकारी तु मैत्रावरुणो विज्ञायत एव। यद्यपि 'तस्मान्मैत्रावरुणः' इत्येतद् ब्राह्मणं, तथाऽपि पदसंनिधिमात्रात्मकत्वेनाश्रुतित्वात्प्रत्यासन्नतरश्रुतिकल्पनेन लिङ्गेन बाध्यते। यदि हि मैत्रावरुणः प्रेष्येत् ततः प्रशास्तृशब्दो होतर्यनर्थकः स्यात्।

**शङ्का**

ननु च मैत्रावरुणोऽपि प्रेष्यमाणो 'होता यक्षत्' इत्यादिरेवार्थशून्यः स्यात्। गौण इति चेत्? प्रशास्तृशब्देऽप्येवं प्रसङ्गात्। अपि च पश्चात्तनत्वादुपजातविरोधः प्रशास्तृशब्द एव वरं गौणो, न प्रथमोच्चारितो विनैव विरोधेन होतृशब्दः। तस्माल्लिङ्गयोरेवैष विरोधो न लिङ्गवाक्ययोरिति।

**तन्निरासः**

अत्र ब्रूमः। सर्वथा तावदनयोरन्यतरस्य विरोधे गौणत्वं कल्पनीयम्। तत्र प्रशास्तृशब्दस्य होतर्यत्यन्तमनिमित्तः प्रयोगः। होतृशब्दस्य तु होतृ-

१. क० मन्त्रेण।

कार्यापन्नमैत्रावरुणेऽस्ति निमित्तम्। सर्व एव प्रधानर्त्विग्वचनास्तत्पुरुषेषु प्रयुज्यमाना दृष्टा, न तु विपर्ययः। तस्मात्प्रशास्तृलिङ्गत्वान्मन्त्रस्तमेव विनियुञ्जीत। न चैतद्वाक्यमत्यन्तमनर्थकमेव भवति। प्रैषान्तरेषु चरितार्थत्वात्। अतोऽस्मिन्विषये बाध्येतेति।

### स्योनन्ते इत्युदाहरणे शङ्का-परिहारौ

'स्योनं ते सदनं कृणोमि' इत्यत्रोदाहरणे चोद्यते।

भिन्ने एते यतो वाक्ये पुरस्तात्प्रतिपादिते।
तस्मान्न समुदायोऽयं वाक्येन विनियुज्यते॥

सत्यपि विभज्यमानसाकाङ्क्षत्वेऽर्थभेदाद्भिन्नवाक्यत्वेनैते पुरस्तात्प्रतिपादिते। तस्मान्न समुदायस्यैव सदनाभिधारणे, पुरोडाशप्रतिष्ठापनेषु च समुच्चयेन, विकल्पेन वा विनियोग आशङ्कितव्यः।

तत्र केचिदाहुः। नैवात्र सकलेन वाक्येन सह विचारः, किं तर्हि? अंशेनैव सह।

अथवा।

साकाङ्क्षावयवत्वेन प्रायेणेष्टैकवाक्यता।
सिद्धा लिङ्गबलीयस्त्वात्प्रत्युक्ता भिन्नवाक्यता॥

'तस्मिन्सीद' इत्येतत्कृतं साकाङ्क्षत्वमाश्रित्यैकवाक्यत्वेनोदाहृतमिदमेव प्रधानकारणम्। शक्यते हि तद्वशेन यथेष्टं विशेषणविशेष्यभावं कल्पयित्वैकार्थत्वेनैकवाक्यत्वम्। यद्यथा—पूर्वस्य तावदुत्तरेण सह यदहं घृतस्य धारया सुमुखं तव सदनं कल्पयामि तस्मिन्नेवमिति कर्तव्यताके प्रतितिष्ठत्वमितीतिकर्तव्यताविशिष्टपुरोडाशप्रतिष्ठापनमेकं प्रयोजनम्।

अथवा पुरोडाशप्रतिष्ठापनफलं सदनाभिधारणं करोमीत्येवं विशिष्टफलसदनकरणं प्रकाशनं प्रयोजनमिति शक्यमेकवाक्यत्वम्। यत्तु पुरस्तादर्थनानात्वान्नानावाक्यत्वमुक्तं तदिह स्थितं लिङ्गबलीयस्त्वेन। यदि हि लिङ्गं बलीयः, ततः सम्भवदन्यतरविशेषणत्वेनैकवाक्यत्वं परित्यज्योभयोः प्रत्येकं स्वप्राधान्यं लिङ्गावगतमाश्रित्य विशेषणबुद्धितिरस्कारेण प्रयोजनभेदाद्वाक्यभेदो भवति। तेनायं विनियोगद्वारेण वाक्यात्मलाभस्य लिङ्ग[1]प्राधान्यस्यात्र बलाबलविचारः। तत्रापि [2]प्रतीतेर्लब्धात्मके वाक्ये सति बाधकप्रत्ययसदसद्भावविचार इति

---

१. क० लिङ्गस्य। २. क० प्रतीतः।

द्रष्टव्यम् । किं प्राप्तम् । तुल्यबले इति । तदा चेदृशं कर्म, कदाचिद्विभज्य मन्त्रौ प्रयोक्तव्यौ, कदाचित्समुदायोऽन्यत्र, कदाचित्स एषोभयत्रेति । कथं पुनरयमित्थमनवस्थितः शास्त्रार्थो भवति । सर्वथा यदि प्रमाणत एवमवगम्यते, किं नो बाध्यते । लिङ्गवाक्यतुल्यबलत्वालोचने सर्वमेतत्प्रतिभाति । यदा तु श्रुतिवल्लिङ्गात्प्रमाणान्तरत्वाद्वाक्यमेव बाधकमित्यवधार्यते । तदा नियत एव समुदायप्रयोग इत्येवं प्राप्ते ।

ब्रूमः ।

स्योनादिः कल्पयाम्यन्तः स्वसामर्थ्येन शक्यते ।
निराकाङ्क्षः स्वकार्याय साकाङ्क्षत्वं पराश्रयम् ॥

सर्वस्तावदादित आरभ्य विनियोगं निरीक्षते । तदिह कल्पयाम्यन्तोऽस्य न कदाचित्परत्रापेक्षा दृश्यत इति तावति पर्यवसानं निश्चित्य प्रयोजनाकाङ्क्षा निवृत्तेरभिधाराङ्गत्वेनाऽऽश्रीयते । तेनैव तावत्प्रतिसाधनं यावन्न कदाचिन्नीयते । न च परस्यैतेन विनाऽनर्थकत्वापत्तिः । यतस्तः येन नीयते । सोऽपि हि प्रतिष्ठापनाङ्गत्वेनार्थवान् भविष्यति । यद्यपि च तच्छन्दः पूर्वापेक्षस्तथाऽपि प्रकाशितं निवृत्तं च पूर्ववाक्यार्थमालोच्य, भिन्नस्यापि प्रवर्तमानस्य न कश्चिद्विरोधः । तद्यथा 'तप्ते पयसि दध्यानयति' इति संस्कारविधाने पर्यवसिते 'सा वैश्वदेव्यामिक्षा' इति वाक्यांतरेणैव द्रव्यदेवतासम्बन्धः क्रियते । तस्माद्भेदेन विनियोगस्य प्रत्यासन्नतरश्रुतित्वान्नेतरेतरविषयसक्रान्तिर्विद्यते । एवमुपस्तरणे 'तस्मिन्सीद' इत्यस्य नास्ति सामर्थ्यमिति पूर्वेणैव गतार्थप्रायं सन्निरूपणदार्ढ्यार्थं पुनः परामृश्यते । यच्चैकत्रोक्तं तस्येतरत्राभावं दर्शयित्वा पुनरात्मधर्ममुपनीयेतरधर्मनिराकरणमिति ग्रन्थो निराकुलीकर्तव्यः । पूर्वः प्रस्तावः प्रमाणसदसद्भावाभ्यां, मध्यमः शक्त्यशक्तिभ्यामन्त्यश्च दृष्टार्थत्वादृष्टार्थत्वाभ्यामिति विवेकः । तस्माद्वाक्याल्लिङ्गं बलीय इति सिद्धम् ।

किं पुनः प्रकरणं नामेति । सर्वत्र सिद्धवत्प्रकरणेन व्यवहारो न चैतत्कचिन्निरूपितपूर्वम् । तदिहापि तावदस्य स्वरूपं निरूप्यताम् । निर्ज्ञातस्वरूपस्य हि बलाबलं सुज्ञायत इति ।

अथवा नैवास्य वाक्यक्रमाभ्यां भेदः । साकाङ्क्षादसंनिधिमात्रं हि वाक्यमित्युच्यते । तच्च प्रकरणेऽप्यविशिष्टम् । न च वाक्यस्य पदेयत्ताय प्रमाणमस्ति । विभज्यमानसाकाङ्क्षसंहन्यमानैकप्रयोजनमात्रोपलक्षणत्वात् । तेन वाक्यमेवैकमल्पपदमपरं बहुपदम् । अवान्तरार्थवशीकृतानां महाप्रयोजनवशेन महासंघातापत्तेः । वक्ष्यति हि 'वाक्यं ह्येकं दर्शपूर्णमासाभ्यां सहधर्माणामिति ।

अथवा संनिध्यात्मकः क्रम इत्युच्यते । स च प्रकरणेऽप्यवश्यंभावी संनिधिः। अतः क्रमादप्यभिन्नं प्रकरणमिति मन्यते । तदिदानीं तत्त्वभेदपर्यायैर्निरूपयति । तत्र तत्त्वं तावदुच्यते—**कर्तव्यस्येतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणमिति**। कर्तव्यमिति साध्यभूतमपूर्वमथवा विधेयत्वानुष्ठेयत्वाभ्यां भाव एव प्रत्ययवाच्योऽभिधीयते । साध्यांशोपनिपातात्स्वर्गादिफलं कर्तव्यमिति चेन्न । तस्य कालान्तरभावित्वेन प्रयोगासमवायित्वे सति तत्सिद्ध्यर्थापूर्वस्यैवं कर्तव्यत्वावधारणात् । 'तेनापूर्वं कृत्वा नान्यथेति' । तथा 'यज्ञकर्म प्रधानं तद्धि चोदनाभूतम्' इति तस्यैव प्रयोजकत्वं वक्ष्यते । 'फलदेवतयोश्च' इत्युपन्यस्य निराकरिष्यते । तत्र कथमित्यनुग्रहोपायाकाङ्क्षणमाकाङ्क्षेति घञन्तं व्याख्यायते ।

यद्वेतिकर्तव्यतामाकाङ्क्षतीतिकर्तव्यताकाङ्क्षं भावापूर्वयोरेवैकं, तस्य यद्वचनमिति समानाधिकरणे षष्ठ्यन्ते । **वचनमिति**—शब्देन प्रत्यायनम् ।

एतदुक्तं भवति वस्तुरूपेण विद्यमानाऽप्याकाङ्क्षा न प्रकरणमित्यभिधीयते । किं तर्हि । प्रतीयमाना । साऽपि च कर्तव्यतार्थोपसर्जनत्वेन गृह्यमाणा, न स्वातन्त्र्येण । तेनाऽऽकाङ्क्षाऽभिधीयमाना प्रकरणमाकाङ्क्षावती वा भावनेति द्रष्टव्यम् । इदानीमवयवव्युत्पत्त्यात्मकेन भेदेन कथयति । तत्र प्रशब्दस्तावत्प्रारम्भमाह । करणशब्दः क्रियां प्रकरणं प्रक्रियेत्यर्थः । का पुनरिह क्रिया गृह्यते तामाह—**वचनक्रियाया** अर्थाभिधानक्रियायां इति यावत् । भावनाभिधानक्रियाया हि प्रयोगवाक्यप्रवृत्तिरारम्भः । फलकरणांशपूरणं पदद्वयमात्रसाध्यमितिकर्तव्यतालाभस्त्वनेकवाक्यान्तरायत्तसिद्धिः । अतस्तत्समस्तालोचनापेक्षया कथंभावः प्रकरणमभिधानविधानक्रिययोरारम्भ इत्युच्यते । करणशब्दश्च क्रियामात्रवाच्यपि सन्नागमविषयः प्रयुज्यमानोऽभिधानक्रियायां वर्तते । **स एष विध्यादिरिति** पर्यायकथनम् । आद्यन्तयोः संबन्धिशब्दत्वात्किमपेक्ष्याऽऽदित्वमित्यत आह—**विध्यन्तापेक्ष** इति । विध्यन्तो नामेत्थंभावरूपमितिकर्तव्यतावधारणम् । तस्य चानेकाङ्गवाक्यतदर्थतत्प्रयोजनालोचनमध्यस्य कथंभाव आदिरित्याचार्याणां विध्यादित्वेन प्रसिद्धिः । तत्र च स्वपदगणेन कियत्यपि प्रयोजनेऽवसितानामेव वाक्यानां पुनः कार्यान्तरापेक्षावशेन संबन्ध इति वाक्याद्विशेषः । तत्राऽऽदितः क्वचिदपि प्रयोजनलेशे विभज्यमानानां वृत्तिर्नास्ति संबन्धेनैवार्थलाभः । क्रमेण तु सह वैलक्षण्यमनन्तरमेव वक्ष्यामः । तस्मात्प्रमाणान्तरं प्रकरणम् । **किमिहोदाहरणमिति** । तेनैकवाक्यतानयनाभिप्रायेण पृच्छति । सिद्धान्तवादी तु विधायकस्मारकत्वेन भिन्नवृत्तित्वान्मन्त्रब्राह्मणयोर्न कथंचिदेकवाक्यता घटत इति सूक्तवाकमुदाहरति । लिङ्गाद्देवतापदेषु निष्कृष्टेषु तच्छेषाः किमुत्कृष्यन्ताम्, अथ तद्रहिता अपि प्रयुज्यन्तामिति । प्रकरणेन तावत्सर्वशेषा उभयत्र प्राप्नुवन्ति । लिङ्गमपि साधारणम् । द्विवचनैकवचनयोरुभयत्र विद्य-

मानार्थत्वात् । ननु चाऽऽत्मीयेनैव शेषेणावरुद्धेषु देवतापदेषु शेषान्तरमनवकाशमेव स्यात् । सत्यम् । एवमपि तु वाक्यप्रकरणयोर्विरोधो नैवापैति । प्रकरणेन ह्युपनीतदेवताकोऽपि शेषः प्रयोज्यः प्राप्नोति । वाक्येनेतर इति । वाक्यबलीयस्त्वादेव तदाश्रयणम् । असकृद्वा प्रकरणेन तावत्प्रयोगः प्राप्नोति । वाक्येन तु यथादेवतापदानुसारात्सकृदिति विरोधः । क्लृप्तसंबन्धत्वाच्च वाक्यं बलीयः । कथंभावेन हि इत्थं यजेतेति प्रकरणिना सह संबन्धमनुमाय यावदाम्नानं शेषप्रयोगः । तथा क्लृप्तप्रयोगशेषैरात्मीयैर्देवतापदैः सह पुनः संबन्धकल्पनमिति विप्रकर्षः । ततश्च देवताशेषाणां नित्यमेवापकर्षो । न पाक्षिकः न सर्वदा वा विनियोग इति सिद्धम् ।

**अथ क्रमप्रकरणयोर्विरोधे किमुदाहरणमिति ।** यथासंख्यलक्षणक्रमविरोधोदाहरणासंभवात् पुरस्तात्परस्ताद्वाऽऽम्नातस्य संनिधिलक्षणेनावान्तरप्रकरणेन प्राप्तेर्नैव किंचिदुदाहरणमिति विपर्ययदृढत्वेनाज्ञानसंशयावतिक्रम्यापि प्रश्नः ।

शक्यं त्विहावान्तरप्रकरणत्वप्रसङ्गनिराकरणमित्यभिप्रेत्योदाहरणोपन्यासः । राजसूयप्रकरणेऽभिषेचनीयस्योपरि 'शौनःशेषमाख्यापयति, राजन्यं जिनाति' 'षष्ठौहीं दीव्यति', 'अभिषिच्यत' इत्येवमादीन्याम्नायन्ते । तेषां चाङ्गत्वे नैव कस्यचित्संदेहो विप्रतिपत्तिर्वेति, शेषिशेषसंबन्धनिश्चयार्थमिदं विचार्यते, किं समस्तराजसूयस्यैतान्यङ्गानि, उताभिषेचनीयस्यैव, अथ विकल्पः, समुच्चयपक्षासंभवादिति । प्रकरणस्य क्रमस्य च बलाबलादेतद्विज्ञातव्यम् ।

ननु चाभिषेचनीयस्यावान्तरप्रकरणात्प्राप्तिरिति महाप्रकरणं बाध्येत । नैष दोषः । यद्यनिराकाङ्क्षीकृतेऽभिषेचनीये तेषां पाठः स्यात् ततोऽवान्तरप्रकरणमवगम्येत । स तु प्रागेव देवविनादिभ्यः प्राकृतैर्धर्मैर्निराकाङ्क्षीकृतः । सत्यामपि प्रत्यासत्तावक्लृप्तोपकारानेतानुपकारापेक्षः क्रतुरुल्लङ्घ्य प्रकृतिमपेक्षते । तथा च योग्योपकारप्रदानेन पूरिते कथंभावे निवृत्तं प्रकरणम् । समीपाम्नातधर्मानर्थक्यापेत्तिभयादेव पुनरुत्पाद्येत, ततश्च क्रमत्वं भवति । निराकाङ्क्षस्य हि सत आकाङ्क्षा यावदभिषेचनीयस्योत्पाद्यते, तावद्राजसूयकथंभावेन प्रत्यक्षेण सिद्धो विनियोगः । तदीयो हि कथंभावः पवित्रादारभ्य क्षत्त्रस्य धृतिं यावदनुसृतः शक्नोति विदेवनादीनि संस्प्रष्टुम् । अतो नास्त्यत्रावान्तरप्रकरणमभिषेचनीयस्य । यस्यां तु विकृतौ प्राकृतं किंचिदङ्गं संकीर्त्य, तस्य पुरस्तात्परस्ताद्वा वैकृतमङ्गमाम्नायते । तत्र कथं भावगृहीताङ्गमध्यवर्तित्वात्प्रकरणपाठो विज्ञायते । न चेह तदस्तीति क्रमस्यैव व्यापारः । **संनिधावाम्नातेन परिपूर्णेनापोति—** वाक्यार्थपूर्णत्वाभिप्रायम् । **अनेकस्याऽऽम्नायमानस्य संनिधिविशेषाम्नानमात्रं हि क्रम इति—**केनचित्संनिधानस्य नान्तरीयकत्वं दर्शयति । यो हि बहूनामर्थेनाऽऽम्नायते, तस्य सर्वप्रधानप्रत्यासन्नप्रदेशासंभवादवश्यंभाविनी केनचित्सह

प्रत्यासत्तिः। न तु प्रकरणपाठस्येवं नान्तरीयकत्वम्। अतः सह प्रवृत्तयोः क्रमप्रकरणयोः प्रकरणस्य शीघ्रतरं श्रुत्यर्थप्राप्तिरिति बलीयस्त्वम्।

**क्रमसमाख्ययोर्विरोधे किमुदाहरणमिति**। अत्राप्यज्ञानसंशयकृतप्रश्नानन्तरं यौगिकत्वात्समाख्यायाः श्रुतिवच्छाब्दं संबन्धहेतुत्वमिति बलीयस्त्वं मन्यमानस्य विपर्यस्तमतेः प्रश्नः। पौरोडाशिकमिति समस्तमेव दर्शपूर्णमासकाण्डमभिधीयते। तत्र सांनाय्यपात्रशुन्धनक्रमे 'शुन्धध्वमिति' मन्त्रः पठितः। स च प्रकरणाल्लिङ्गाच्च दार्शपौर्णमासिकपात्रशुन्धनार्थ इति सामान्येनावधारिते, तद्विशेषे जिज्ञासायां किं संदिह्यते। समाख्यया पुरोडाशपात्रार्थो भवति, अथ क्रमेण सांनाय्यपात्रार्थ इति। यतरद् बलीयः तेन विनियोक्ष्यते तुल्यबलत्वाद्विकल्पो, विरोधाभावाद्वा समुच्चयः। क्रमस्य च दृष्टबाधस्य संबन्धानभिधायिनश्चादृष्टबाधया संबन्धाभिधायिन्या च समाख्यया बाध इति प्राप्ते।

अर्थविप्रकर्षात्समाख्या बाध्यत इति ब्रूमः। तथा हि—

वैदिकं देशसामान्यं प्रत्यक्षं दृश्यते क्रमे।
समाख्यायां तु सामान्ये कल्प्यत्वाद्विप्रकृष्यते॥

**कः पुनरत्रार्थविप्रकर्ष** इति—समाख्यायामन्तर्णीतसंबन्धसंबन्ध्यभिधायित्वान्न संभवतीति मन्यते। **निर्ज्ञाते प्रकरणेन केनापि सहैकवाक्यत्वे** इति—प्रकरणाविरोधिनं क्रमविनियोगं केवलसमाख्याप्रतियोगित्वेन च दर्शयति। कथं पुनः प्रकरणं न विरुध्यते। यदा तेन सर्वार्थत्वं ज्ञायमानमुत्सृज्य क्रमवशेन केवलसांनाय्यार्थत्वं विज्ञायते। नैष दोषः। यदि ह्यप्रकृते वयं क्रमविनियोगमभ्युमगच्छेम, तत एवं स्यात्। इह तु प्रकरणेन दर्शपूर्णमासान्यतरार्थत्वेऽवधारिते तद्विशेषाकाङ्क्षायां केवल एव क्रमो व्याप्रियत इत्यविरोधः।

ननु सर्वार्थत्वे नावधारणाद्यतः कुतश्चिदपि निवृत्तौ प्रकरणं बाध्यते। न चावश्यं सर्वार्थत्वं प्रकरणेनावधार्यते। मन्त्रस्यैकेनापि संबध्य कृतार्थत्वात्। प्रकरणिनां च मन्त्रान्तरैरप्यर्थसिद्धेः। सामान्यविनियोगश्रुतिमात्रमेव चेह क्रमात्पूर्वतरं निष्पद्यते। तत्र यावद्विशेषश्रुतिमेकैकं प्रति कल्पयति तावत्क्रमेणापि कल्पितैवेति प्राकरणिकी विशेष[1]श्रुतिरुपसंह्रियते। समाख्या पुनः क्रमविपरीतार्थत्वाद्विरुध्यते। विप्रकर्षाच्च दुर्बला। सर्वो हि संबन्धः केनचिदवान्तरसामान्येन भवति। न च मन्त्रपुरोडाशयोस्तद्वदक्लृप्तं किंचिदस्ति। यथा सांनाय्येन सह देशसामान्यम्। **लौकिकस्तु शब्दः समाख्येति** भक्षानुवाके परिहृतमपि सद्वैदिकसंबन्धविप्रकर्षार्थमुपन्यस्यते। परस्तु लिङ्गानिराकरणोक्तेनैव मार्गेण मूलोत्कर्त-

---

१. क० श्रुतिबुद्धिः।

नेनैव समाख्यां निराकृतां मन्यमान आह **यद्येवमित्यादि**। सिद्धान्तवादी तु भक्षानुवाकोक्तमेवोत्तरं दर्शयति।

यदि ह्यङ्गाङ्गिभावोऽत्र पुरुषप्रत्ययाद्भवेत्।
ततः स्यादप्रमाणत्वं स तु वैदिक एव नः॥

पौरोडाशिकशब्दो मन्त्रब्राह्मणयोरपठितत्वादवैदिकः नाङ्गाङ्गिभावः। स च शब्दस्यावैदिकत्वेऽप्यनादिसंबन्धात्वाद्विद्यमानस्मृतिमूलत्वाच्च प्रमाणम्। पौरोडाशिकशब्दोऽस्य वाचक इति, नैतदतीन्द्रियम्। शब्दार्थव्यवहारिणां वृक्षादिष्विव प्रत्यक्षत्वात्। संभवति हि सर्वेषामन्यत उपलभ्य प्रयोगः। तद्दर्शयति—**भवति चास्मिन्नर्थे पुरुषः प्रमाणम्। यथा सांनाय्यक्रम आम्नातं प्रकरणम्, एकवाक्यत्वं वेदशब्दश्चायमिति**। सर्वत्र हि पुरुषान्तरस्थदर्शनपूर्विका पुरुषान्तराणां प्रवृत्तिः। समानदेशाम्नानं प्रकरणपाठं पदानां परस्परसंनिधिं संबन्धं वा न वेदो वदति। किं तर्हि ? पुरुषेष्वामनत्सु तथा दृश्यते। तैरप्येवमन्येभ्यो दृष्टमित्यनादित्वेऽपि सर्वेषां दर्शनसंभवात्। अन्धपरम्परान्याये निवृत्ते भवति प्रामाण्यम्। अन्यथा हि वेदावेदप्रकरणाप्रकरणादीन्यप्रमाणकान्येव भवेयुः। अनेकपुरुषस्थत्वाच्च नात्र कस्यचित्स्वातन्त्र्यं यद्दोषेण दोषाशङ्का स्यात्। तस्माद्भवत्येवान्यत्र प्रामाण्येऽर्थविप्रकर्षादत्र बाधः। स चोक्तः सूत्रव्याख्यायाम्। एवमेतेषां यथाभाष्यमवस्थितानां श्रुत्यादीनाम्।

बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।
मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया॥

## परेषां व्याख्यानस्योपन्यासनिरासौ

इदानीं बाधस्य स्वरूपमाक्षेपद्वारेण कथयपि—**अथ यत्तत्र तत्रोच्यते द्वयोर्द्वयोर्विरोध इदमनेन बाध्यते, इदमनेनेति**। श्रुत्या लिङ्गं, लिङ्गेन वाक्यमित्यादि। तद्बाधकविषयं प्राप्तं बाध्येत, अप्राप्तं वा। तद्यदि तावदप्राप्तं, ततः समवाय एव नास्तीति किं बाध्येत, समवायसिद्ध्यर्थं त्वथ प्राप्तं बाध्यते, तत उभयोरपि प्राप्तप्रमेयत्वात्तुल्यबलत्वमिति, न [1]बाधस्य प्रामाण्यम्।

तत्रोत्तरम्।

सामान्यकारणात्प्राप्तं पूर्वं बाधकगोचरम्।
बाधकेन बलीयस्त्वान्मृषैतदिति कल्प्यते॥

यथैव मृगतृष्णादिज्ञानान्युत्पन्नानि मिथ्यात्वकल्पना बाध्यन्ते, हानोपादानादिफलवियोगाच्च बाध्यव्यपदेशं लभन्ते, तथा लिङ्गादिना ज्ञानमप्युत्पन्नं सच्छ्रुत्यादिज्ञानेनानुष्ठानरूपात्फलाद्वियुज्यमानं बाधिष्यते।

---

१. क० न बाध्यं प्रमाणम्।

न त्वेतदप्युपपद्यते । कुतः—

बाधस्योक्तप्रकारत्वात्प्रश्नास्तावन्न युज्यते ।
बाधकेन बलीयस्त्वान्मृषैतदिति नोत्तरम् ॥

तत्र नाम प्रश्नो भवति, यत्प्रथमं नोक्तम् । एतानि तु लिङ्गादीन्यर्थविप्रकर्षादननुमितश्रुतीनि बाध्यन्त इति ज्ञातत्वान्नैव प्रश्नमर्हन्ति । यद्यपि च पृच्छ्यते, तथाऽप्यवसिद्धान्तेनोत्तरं न दातव्यम् । अननुमितश्रुतिबाधेन ह्यप्राप्तबाधः स्थितः । स इदानीं प्राप्तबाधोपवर्णनेन प्रत्युद्ध्रियेत विनोपपत्त्या यदुच्यते **सामान्यस्य कारणस्य विद्यमानत्वादिति** । तल्लिङ्गादीनां साक्षादप्रमाणत्वात् प्रमाणभूतायाश्च श्रुतेरविद्यमानत्वादनुपपन्नम्[1] । अथ तु तामनुमाय प्राप्तिरिष्यते, ततो लब्धात्मकत्वादानुमानिक्याः श्रुतेः प्रत्यक्षायाश्च न कश्चिद्विशेष इति, तुल्यबलत्वमेव प्राप्नोति । यदि वा मिथ्यात्वकल्पनरूपबाधाभ्युपगमाद्विरोधे सति तत्कल्पनाद्विपरीतबाधप्रसङ्गः । कथम्—

**तत्र तत्रेत्यादिग्रन्थस्य असङ्गतिमाशंक्य सङ्गतिवर्णनम्**

पूर्वं परमजातत्वादबाधित्वैव जायते ।
परस्यानन्यथोत्पादान्न त्वबाधेन संभवः ॥

श्रुत्यादौ शीघ्रतरत्वात्प्रथमं प्रवृत्ते लिङ्गादीनि प्रवर्तन्ते । तत्र यदि प्राप्तबाधसिद्ध्यर्थं पश्चात्प्रवर्तमानमपि लिङ्गं श्रुतिमनुमापयति, ततः सा तुल्यविषयसंनिविष्टां पूर्वामबाधित्वा नाऽऽत्मानं लभत इति, मृगतृष्णादिष्विव मिथ्यात्वं कल्पयन्त्येव जायमाना बाधिका स्यात् । तस्मान्नैष श्रुत्यादिषु ग्रन्थो घटत इति । यद्यप्यधिकरणान्तोपसंहारात्तद्विषयः प्रतिभाति तथाऽपि सामर्थ्यात्पूषाद्यनुमन्त्रणवदुत्कृष्यते ।

**सर्वत्वबाधवर्णनम्**

विज्ञातप्रकारत्वान्नैवायमथ यत्तत्र तत्रेति श्रुत्यादिषु बाधः संबध्यते । किं तर्हि ? बाधाधिकारादिहाऽऽचार्यस्य यावन्तः शास्त्रोपनिबद्धा बाधभेदाः ते सर्वे हृदयमनुप्राप्ताः । तेषां च न श्रुत्यादिसदृशो बाध उपपद्यते । सर्वत्र चैकरूपेण बाधमार्गेण भवितव्यम् । अतो यदि वा वदीयः प्रकारः श्रुत्यादिष्वस्तु, श्रुत्यादिप्रकारो वा तेषु । तत्र श्रुत्यादिगतस्तावत्संप्रत्येव कथित इति, किं तेन पृष्टेन ? ये त्वेतद्व्यतिरिक्ताः तेषु कथमिति मन्यमानो वदति । **'अथ यत्रद तत्रोच्यत इदमनेन बाध्यते'**—प्रत्यक्षेणानुमानं मृगतृष्णादि प्रत्ययाश्च यथास्वं षड्भिरपि प्रमाणैः प्रमाणाभासः, श्रुत्या स्मृतिः, आप्ताविगीतस्मृत्याऽनाप्तविगीतस्मृतिः,

१. क० अनुपपद्यमानत्वात् ।

अदृष्टार्थया दृष्टार्था, श्रुतिप्रभवया लिङ्गादिप्रभवाऽर्थवादप्रभावा च। स्मृत्याऽप्याचारः, सोऽप्यभियुक्ततराचारेण, संदिग्धमसंदिग्धेन, दुर्बलाश्रयं बलवदाश्रयेण, उपसंहारस्थमुपक्रमस्थेन, अत्यन्तादृष्टार्थं नियमादृष्टार्थेन, आरादुपकारकत्वं आरादुपकारकत्वं सामवायिकत्वेन, अनेकार्थविधानमेकार्थविधानेन, अनेकशब्दार्थत्वमेकशब्दार्थत्वेन, बहुबाधोऽल्पबाधेन, वेदान्तरोत्पन्नं वेदान्तरविहितत्वेन। परशाखाविहितं स्वशाखाविहितेन, नित्यं नैमित्तिकेन ।

द्विःप्रकारमप्येतत्क्रत्वर्थं पुरुषार्थे अनारभ्याधीतं प्रकरणाधीतेन, पौर्वापर्येण विरोधे पूर्वं परेण, प्राकृतं वैकृते नप्रयोगवचनाश्रितं चोदकाश्रयेण, निष्प्रयोजनं सप्रयोजनेन, ब्राह्मणक्रमो मन्त्रक्रमेणदेवताश्रायं द्रव्याश्रयेण. पश्चादाम्नातं पूर्वाम्नातेन, अल्पं भूयसा, गौणं मुख्येन, सामान्यविहितं विशेषविहितेन, सावकाशं निरवकाशेन, अङ्गं प्रधानेन, अङ्गधर्मः प्रधानधर्मेण, तत्सर्वमेव किं प्राप्तं बाध्यते, अथ श्रुत्यादिवदेवाप्राप्तमिति ।

## सर्वत्र विचारप्रकारप्रदर्शनम्

तद्यपि तावच्छ्रुत्यादिवत्सामान्यविशेषादिदेशौपदेशिकादिष्वप्यप्राप्तबाधस्ततोऽवश्यं लिङ्गादाविव श्रुतेर्विनियोजकस्य शास्त्रस्याभावोऽभ्युपपान्तव्यः। तथा सति तस्यैकत्वाद्विरोधविषयवदितरत्राप्यभाव इति सार्वधिकबाधप्रसङ्गः। अथाविरोधापेक्षया सद्भावोऽभ्युपगम्येत, तत इतरत्रादि सद्भाव एवेति तुल्यबलत्वापत्तिः। विशेषशास्त्रद्यनुपमर्देन चाऽऽत्मलाभाभावात्तदभ्युपगमे विपरीतबाधप्रसङ्गः। न ह्येकस्यैव शास्त्रस्य किंचित्प्रति सद्भावः, किंचित्प्रत्यसत्त्वमिति युज्यते। तेन दधि ब्राह्मणेभ्यो दीयतां, तक्रं कौण्डिन्याय, प्रकृतिवत् कुर्याच्छरमयं बर्हिरित्यादौ प्रतिब्राह्मणं प्रत्यङ्गं च शास्त्राभावादेकं शास्त्रम्। तद्यदि शरत्तक्रालोचनेन कुशकौण्डिन्ययोर्नास्तीत्यवधार्यते, ततः प्रयाजादिमाठरादिष्वप्यप्रवृत्तिः।

अथ तेष्वस्ति, ततः कुशकौण्डिन्ययोरपि भवितव्यम्। अथ तौ प्रति नास्तीतरान्प्रत्ययस्तीत्येतदप्येकवस्तुनि विप्रतिषेधान्निष्प्रमाणकम्। न चात्र प्रतिपत्तृभेदो विद्यते। येन संबन्धग्रहणाग्रहणवदविरोधः स्यात्। नं च सकृद् गृह्यमाणत्वाच्छास्त्रभेदोऽगम्यते। येनान्यस्यैव सत्त्वम्, अयस्य चासत्त्वमित्यभिधीयेत। व्यक्तिपक्षे च कदाचिदेतद्भवेत्। आकृतिपक्षे तु यागगतव्यापारातिदेशपक्षे च विषयैकत्वाद्युगपदेकमेव शास्त्रं प्रवर्तते। एतेनैवोत्कालनबाधनं प्रत्युक्तम्। ब्राह्मणप्रकृतिवच्छब्दयोस्तुल्यहेतुत्वेन किंचिद्वर्जनासंभवात्। तथा च 'तद्वर्जं तु वचनप्राप्तेः' इत्युक्त्वा 'न चोदनार्थकात्स्न्यात्'। इत्युत्तरं दास्यति। पौरुषेयेऽपि तावद्वाक्य हृदयार्थतया, विना शब्दव्यापारेणैव तद्वर्जं मया प्रयुक्तमित्येवमीश्वराज्ञानुरूपेण भवेत् त्वेतद्वेदेऽवकल्पते। न चेह सामान्यशास्त्रात्परतो विशेषशास्त्राणि

कल्प्यन्ते। येन सामान्यशास्त्रस्य तत्प्रकृतित्वमात्रमाश्रित्य विशेषशास्त्रापेक्षया सदसद्भावविरोधः परिह्रियेत्। तस्मादवश्यंभाविन्यैकरूप्ये नाभिप्रेतबाधोऽकल्पते। अथ कथंचित्प्राप्तबाधमेव मिथ्यात्वकल्पनयाऽऽश्रित्यैवमादिष्वविरोध इत्युच्यते, तत एवं श्रुत्यादीनामपि प्राप्तबाधोऽङ्गीकर्तव्यः। तत्र चोक्तम्। अतो न बाधमार्गे कैरूप्यं घटत इति।

### बाधानां वैविध्यनिरूपणम्

तदुच्यते—

न बाधस्यैकरूपत्वमेषितव्यं नियोगतः।
न किंचिद्विरुणद्धीह नानारूप्यं प्रमाणवत्॥

यथैवैते पुरस्ताद्बाधगोचरा भेदा वर्णिता। नैतेष्वैकरूप्यमङ्गीकृतं, तथाऽत्र न बाधप्रकारनानात्वेऽपि गम्यमाने कश्चिद्विरोधः। तत्र श्रुत्यादिषु तद्विद्यथोक्त एवोऽप्राप्तबाधः। न च तत्र किंचिद्विरुध्यते। तद्विषयप्राप्त्यन्तरानभ्युपगमात्। येऽप्येतच्छायानुपातिनोऽर्थविप्रकर्षादेव स्मृत्यादिबाधा भवन्ति, तेऽपि हेतुसामर्थ्य-कथनाच्छ्रुत्यादिबाधेनैव व्याख्याताः। ये तु प्रामाणतदाभासनित्यनैमित्तिक-क्रत्वर्थपुरुषार्थ -पौर्वापर्य-प्राकृतवैकृत-सामान्यविशेष-निष्प्रयोजनसप्रयोजनाल्पभूय-स्त्वसावकाशानवकाशाङ्गप्रधान-तद्धर्मबाधाः तेष्विदमुक्तं प्राप्तं बाध्यत इति।

**कथमिति**। श्रुत्यादिवैलक्षण्यविस्मितस्य प्रश्नः। उत्तरमाह—**सामान्यस्य कारणस्य विद्यमानत्वादिति**। दर्शितमेतद्ब्राह्मणप्रकृतिवच्छब्दयोः।

यत्तु प्राप्तस्य ज्ञानस्यानुत्पादोच्छेदसंस्कारविच्छेदानामशक्यत्वान्नास्ति बाधनमिति। तत्राऽऽह—**नैव निवर्तते। किं तर्हि। मिथ्याज्ञानमेतदिति प्रत्ययान्तरं भवतीति**। शास्त्रान्तरं ह्यनन्यगति दृष्ट्वा मृगतृष्णादिवदेव सामान्यापहृत-बुद्धेर्ममेयं भ्रान्तिः पूर्वमेतद्विषयपरिकल्पनया जातेत्यध्यवस्यति। तस्मात्प्रयाजा-दिमाठरादिप्राप्तिवेलायामुपजाताऽपि कुशकौण्डिन्यबुद्धिर्भ्रान्तिरिति निश्चित्य फलविमुक्तत्वानुबद्धमर्थं शास्त्रं वा बाधितं मन्यते।

**किं नु खल्वमिथ्याज्ञानस्य रूपमिति**—यद्युत्पन्ना अपि प्रत्ययाः प्रत्ययान्त-रैरित्थं निराक्रियन्ते, ततोऽन्यत्रापि क आश्वास इति मन्यते। तत्कथयति—यस्यान्वेषणेऽपि कृते बाधकप्रत्ययान्तरं नोत्पद्यत इति।

यत्तु कारणदोषज्ञानं द्वितीयमुपलक्षणं तल्लोकविषयत्वान्न वेदे संभवतीति नोपन्यस्तम्। प्रासङ्गिकमुक्त्वेदानीमधिकरणमुपसंहृत्याधिकरणान्तरमार-भ्यते॥ १४॥

इति सप्तमं श्रुतिलिङ्गा बलाबलाधिकरणम्॥ ७॥

**अथ सप्तमं श्रुतिलिङ्गा (बलाबला)धिकरणम्**

न्या० सु०—श्रुत्यादीनि विनियोगे करणानीति अंशे चिन्तिते, तेषां प्रबलदुर्बलतेत्यं-शचिन्तायाः सङ्गत्युक्त्यर्थानीति भाष्यं व्याचष्टे—**इदानीमिति**। समवायोक्तेर्व्याख्या-पूर्वं प्रयोजनमाह—**तच्चेति**। विरोधानपेक्षस्यासमवायस्य चिन्ताऽविषयत्वान्न्यूनतां शङ्कते—**तत्रेति**। एतदेव प्रश्नपूर्वकमुपपादयति—**कुत इति**। श्लोकं व्याचष्टे—**एक एव हीति**। प्रमाणानां परस्परानुग्रहे समवायस्य निमित्तत्वोपपादनार्थं निर्विशेषसामान्यायोगात् श्रुत्या वाक्यं स्वरूपप्रयुक्तं त्वेधानर्थक्याद्वाक्येन प्रकरणमपेक्षितमित्युक्तम्। समवायोक्त्यैव विरोधसिद्धेर्न विरोधग्रहणं कार्यमिति परिहरति—**नेति**। एतदेव प्रश्नपूर्वमुपपादयति—**कुत इति**। तुल्यबलत्वाचिन्या समानोक्त्या संशब्दस्यान्यूनानधिकैकार्थत्वव्याख्यानात्। विषयोक्त्या चापहाराख्यविच्छेदार्थत्रिशब्दपूर्वात् बन्धनार्थात्सिनोतेर्धातोरच्प्रत्ययान्ता-दुत्पन्नतया विनाशब्दस्यापदरणनिमित्ताधः करणार्थत्वादेकस्मिन्नन्यूनाधिकेऽर्थेऽपहरणेनान्य-दधःकृत्यायागमनं समवायशब्दार्थत्वेनोक्तम्। यत्र त्वेकः शेष स्तावानेव चेत्यादिविवरण-वार्त्तिकालोचनया चैकशब्दस्यान्यूनानधिकैकत्वाविषयार्थत्वावसायादपहार्ये च प्रार्थनाति-शयादर्शनेनार्थशब्दस्य प्रार्थनावाचितया पदार्थलक्षणार्थत्वावसायात्समानविषयत्वरूपः सम-वायः श्रुत्यादीनां प्रमाणानामन्यूनानधिकैकशेषापहारित्वे शेषाणां चान्यूनानधिकैकशेष्य-परिहारित्वे सत्यवगम्यतइति उत्तरार्द्धार्थः। श्लोकं व्याचक्षाणौ विषयोक्त्यापहारान-पेक्षबोध्यवदरुणावाक्ये प्रमाणानां समवायो नास्तीत्याह— **अरुणादौ तावदिति**। श्रुत्या-दीनामेकत्रारुणादौ शेषे मिश्रणात्कथं न समवाय इत्याशङ्कानिरासार्थत्वेन पूर्वार्द्धं व्याचष्टे—**न हीति**। प्रमाणस्य प्रमेयविशेषविषयत्वात् शुद्धस्यैवारुण्यस्य क्रियामात्रान्वयित्वेन श्रुति-प्रमितक्रियान्वयस्य चारुण्यस्य श्रुत्युक्तकारकापेक्षितक्रियासामान्यान्वयमात्रेणापर्यवसानात् भूयः क्रियाविशेषेऽपेक्षाविशेषेण क्रयान्वयितया वाक्येन क्रयान्वयपर्यन्तत्वेऽपि सत्यारुण्येन समीहितप्रयोजनानवाप्तेः प्रयोजनविषयेऽपेक्षान्तरे सति ज्योतिष्टोमापूर्वसम्बन्धवतः क्रयस्य सम्बन्धिनः सतोऽरुणैकगुणस्य ज्योतिष्टोमान्वयितया प्रकरणेन प्रमेयत्वात् विषयनानात्वेना-विरुद्धा सर्वेषां विनियोजकतेत्यर्थः।

कथं कारकश्रुत्यारुण्यस्य क्रियान्वयप्रमितिरित्याशङ्क्य पदश्रुत्युक्तकारकान्वयद्वारा क्रियान्वयोपपत्तिसूचनार्था कारकोक्तिः। श्रुत्यादिकल्पित प्रमति क्रियायाः सह कारकद्वारा सम्बन्धो यस्यारुण्यस्येति विग्रहो। विशेषस्य सामान्यं प्रत्याश्रयत्वेन विषयत्वाद्विशेषण-विशेष्यान्वयमात्रे वाक्यस्यावस्तुतो व्यापारो, नाङ्गाङ्गयान्वयाख्ये विनियोगे प्रौढ्याभ्यु-पेत्य। तत्र विनियोगे वाक्यव्यपारे विषयतोक्तेति सूचनार्था विषयतोक्तिः। क्रयस्येत्या-रुण्यव्यतिरेकजनिना षष्ठी। प्रकरणसमर्थितज्योतिष्टामापूर्वसाधनार्थत्वेन श्रुतिव्यापारपर्य-वसानाच्छ्रुत्यपेक्षितशेषिस्वरूपसमर्पणमात्रे प्रकरणव्यापारसूचनार्थं ज्योतिष्टोमविशिष्टस्य क्रयस्य शेषित्वाद्विशेषणीभूतस्य ज्योतिष्टोमस्यापि शेषितामभिप्रेत्य ज्योतिष्टोमार्थत्वोक्ति-रिति प्रकरणेन ज्योतिष्टोमिकस्य क्रयस्य शेष इति पूर्वोक्तेनाविरोधः।

'अर्थापत्त्या व बुध्यन्ते सम्बन्धन्त्रिप्रमाणकम् ।'

इतिवद्विनियोगे व्याप्रीयमाणया श्रुत्याऽपेक्षितस्य शेषित्वस्य वाक्येन, अपूर्वसाधनांशस्य च प्रकरणेन समर्पनाद्वाक्यप्रकरणयोर्विनियोजकश्रुतिसहायत्वं विवक्षित्वा, सर्वेषां विनियोजकत्वोक्तिः । प्रकरणेनापूर्वसाधनांशसमर्पणात्प्राक्श्रुतिर्व्यापारापर्यवसानायैवारुण्यस्य क्रियार्थत्वं श्रुत्येत्यनेनोक्तम् । एकविषयापहारलक्षणस्तु समवायोऽरुणादावनाशङ्क्य एवेति दर्शयितुमाह—**न चेति** । वाक्यादिप्रमाणकविशेष्यान्वयग्रहणात् । श्रुत्यादिप्रमाणकशेष्यन्वयबाधकप्रसक्तौ सत्यां श्रुत्यादिना स्वप्रमेयशेष्यन्वयाबाधार्थम् एष वाक्यादिप्रमेयाच्छेषिणः शेषोऽपह्रियेत तद्बाधप्रसक्तादर्शनेन त्वपहारान्प्राचीनैकविषयापहारित्वलक्षणः समवायः सम्भवतीत्याशयः । जातस्य बाधस्यानिवार्यत्वात् प्रसक्तो दर्श्यतइत्यध्याहार्थम् । एतदेव विवृणोति—**न हीति** । क्व तर्हि प्रमाणसमवायः सम्भवतीत्यपेक्षायां स चैकार्थ्ये प्रमाणानामित्येतद्व्याख्याय, उत्तरमाह—**यत्र त्विति** । एकस्या एवास्या एवान्यूनाधिकाया ऐन्द्रया लिङ्गेन गार्हपत्यार्थत्वज्ञानात् श्रुतिविषयो लिङ्गं सः परस्परेणापहार्यः समानं विषयो ययोस्ते तथोक्ते तयोर्भावस्तत्वं तल्लक्षणमस्येति विग्रहः ।

विशेषाणां चावगम्यतइत्येतद्व्याचष्टे—**तथेति** । एकस्मिन्नेव गार्हपत्ये शेषिणि तुल्योपस्थानजन्योपकारनिबन्धनत्वाच्चान्यूनानधिकेन लिङ्गेनैन्द्रीतो गार्हपत्यमपहृत्याग्नेय्यास्तदुपकारसाधनत्वेन शेषत्वप्रतीतेः श्रुत्या चाग्नेयीतोऽपहृत्यैन्द्रयाः शेषत्वप्रतीते एकशेषिविषयापहारित्वाच्छेषयोः समवाय इत्याशयः । तुल्य उपकारः शेषान्वये निबन्धनमस्येत्याद्यं शेषविशेषणे द्वितीयेत्येकेन शेषेणोपकारः साधितोऽस्येति विग्रहः । श्लोकार्थस्य विरोधग्रहणाकार्यत्वे हेतुतामुपपादयितुमाह—**स चेति** । विरोधं विना नापहारः सम्भवतीत्याशयः ।

प्रमाणविषये शेषे शेषविषये च शेषिण्येकत्वविशेषणस्यान्यूनातिरिक्तत्वविशेषस्य च यथाक्रमं फलानि दर्शयितुमाह—**यत्र पुनरिति** । शेषैकत्वविशेषण समिद्यागादिषु शेषभेदे प्रमाणासमवाये निवृत्तफलत्वेऽभिहिते कथं तर्ह्याग्नेयादिशेषिभेदे तद्यथा श्रुतिलिङ्गविरोधवार्त्तिके विरोधोक्त्या प्रमाणसमवायो वक्ष्यतइत्याशङ्क्य भिन्नोपकारसाधनशेषभेदोऽत्र विवक्षित इति सूचनार्था स्पष्टोक्तिः तावन्मात्रत्वविशेषणफलं यत्र वा तस्येत्यनेनोक्तं शेष्येकत्वविशेषस्याग्नेयादिशेषिभेदे समवायनिवृत्तिफलत्वं तथेत्यनेनोक्तम् । तुल्योपकारित्वनिबन्धनविशेषणफलोक्त्यर्थं तत्र शेष्यैक्येऽपि शेषिगतमाधिक्यम् । यथा दर्शपूर्णमासयागाङ्गानामेकैकस्मिन्नाग्नेयादौ शेषिण्युपकार्यस्थेन शेषित्वात्प्रत्यङ्गं चोपकारभेदात्सामिद्यागजन्यावान्तरोपकारोपकार्यत्वेनाग्नेयस्य समिद्यागशेषत्वात्तनूनपाद्यागजन्यावान्तरोपकारोपकार्यत्वेन तनूनपाद्यागशेषतेत्येवमवान्तरोपकारनिबन्धनमाधिक्यं तच्छेषाणां शेष्याख्यविषयान्यत्वादसमवाय इत्युक्तम् ।

यत्र शेषभेदो, यत्र वा तस्यैव शेषस्य किञ्चिदाधिक्यं, तत्र प्रमाणानां शेषाख्यविषयस्वादन्यसमवायः तथा यत्र रोषाणां शेष्याख्यविषयान्वयादसमवाय इति प्रत्येकं तत्रेत्य-

स्यान्वयसूचनार्थोऽपि शब्दः। एवं सत्यपि विरोधविषयत्वाद् बलाबलचिन्तायाः साक्षाद्विरोधग्रहणमेव कस्मान्न कृतमित्याशङ्क्य, विरोधे सत्यपि समवायाभावे प्रत्यक्षेण श्रुत्यादिना विनियोगे कृतेऽपि श्रुत्यनुमानमूलभूतानामाकाङ्क्षानिवृत्त्यभावेन श्रुत्यनुमानद्वारा लिङ्गादिजन्यविनियोगप्रतिबन्धायोगात् सर्वेषां तुल्यत्वापत्तेर्विरोधं विना बाध्यबाधकत्वायोगात् विरोधापादनद्वारा समवायस्यैव बाधहेतुत्वेऽपि समवायस्यैव बलाबलचिन्ताविषयत्वात्समवायग्रहणमेव कार्यमिति परिहारं सूचयितुमाह—**इतीति**। समवाये सतीतिकरणार्थंसमवायाभावश्च महिषवद्विरोधसम्भवेऽप्येकेन इतरप्रतिबन्धायोगात् सर्वेषां तुल्यत्वापत्तेर्बलवदबलत्वायोगादित्याशयः समिद्यागादीनामङ्गानामवान्तरोपकारभेदेऽपि परमोपकाराभेदेन भिन्नोपकारसाधनशेषभेदाभावात् प्रमाणसमवाय्येकपरमोपकार्यत्वेन चैकस्यशेषिणोऽभिन्नापकारोपकार्यत्वनिबन्धनाधिक्याभावाच्छेषसमवाये सत्यपि विरोधाभावात्। समवायस्य विरोधव्यभिचारावगते कथं समवायग्रहणाद्विरोधशक्तिसिद्धिरित्याशङ्क्याह—**यस्त्विति**।

फलं भावयेद्यागेनेत्थमित्यपर्यायेण यौगपद्येनाङ्गानां परमोपकारे विधानात् श्रुत्यादीनां च प्रत्येकविनियोजकतया यौगपद्येनानेकाङ्गविनियोजकत्वायोगात् प्रयोगवाक्यस्यैव विनियोजकत्वावगतेस्तस्य च एकत्वेन शेषप्रमाणानां भेदाभावात् समवायस्य च भेदाधिष्ठानत्वात् असमवायः। भेषाभेदस्य च भिन्नोपकारसाधनत्वेनेह विवक्षितत्वात् परमोपकारापेक्षया च शेषाणां भिन्नोपकारसाधनत्वाभावात् असमवाय इत्युक्तम्। प्रत्यात्मिकविध्यालोचनयाङ्गानां प्रत्येकमुपकारसाधनत्वावगमात्संहत्यैकोपकारसाधनत्वायोगमाशङ्क्य समिद्यागेन भावयेत् तनूनपाद्यागेन भावयेदिति प्रात्यात्मिकैर्विधिभिर्व्यापारभेदावगतेः प्रत्येकं बुद्धया व्याप्रियमाणानां भृत्यादीनाम् एकस्मिन् छत्रुजयाख्ये स्वाम्युपातानेकव्यापारसाध्ये संहत्य साधनत्ववदङ्गानां प्रात्यात्मिकभिन्नव्यापारधारा संहत्यैकोपकारस्य साधनत्वोपपत्तेः शेषत्वस्यैव उपपत्तिसूचनार्था व्यापारभेदोक्तिः।

एवमप्येकस्यैव प्रधानस्य हविर्मन्त्रादेः शेषस्यैकस्मिन्नेव पुरोडाशप्रथनादौ शेषिणि श्रुत्या, लिङ्गेन च विनियोगात् प्रमाणसमवायस्य विरोधव्यभिचारावगतेः समवायग्रहणादिरोधासिद्धिरित्याशङ्क्य लिङ्गस्यैव तत्र प्रमाणश्रुतेरर्थवादत्रिरध्यासादिप्रयोजनान्तरार्थत्वात् तन्न प्रमाणसमवाय इत्याह—**तथेति**। न्यूनत्वशङ्कापरिहारम् उपसंहरति—**तस्मादिति**।

स्तोकशो बलाबलसम्प्रधारणस्य चिकीर्षितस्यौचित्योक्त्यर्थमनेकार्थेति भाष्यमनेकेषु अर्थेषु वाच्यवृत्तिदर्शनादेकार्थवृत्तित्वे च द्वयोर्द्वयोः सम्प्रधारणायोगात् अयुक्तमाशङ्क्यैकार्थवर्त्तित्वोक्तिः। एककालविषया सम्प्रधारणा चकैकस्याभिप्रेतेत्येवं परिहर्तुमाह—**तत्रेति**। सूत्रे कृत्स्नशो बलाबलोक्तेर्भाष्ये स्तोकशः सम्प्रधारणस्थानौचित्यशङ्कानिरासार्थत्वं षण्णामप्येकस्मिन्नेव काले बलाबलकथनीयत्वोक्त्या सूचितम्। एकैकसम्प्रधारणस्याभिप्रेतत्वे द्वयोक्तिरयुक्तेति आशङ्क्यैकैकस्य द्वितीयेन सहेत्येवमर्थत्वेन द्वयोक्ति व्याख्या-

तुमाह—**यत्त्विति**। एकैकस्मिन् श्रुत्यादिरूपेऽर्थे बलाबलवाग्वर्त्तते इत्येधमेकार्थवर्त्तित्वाद्वाच इत्येतावदन्यथा व्याचष्टे—**एकार्थेति**। एतदेवोपपादयति—**तानि हीति**। बलाबलं प्रति श्रुत्यादीनां प्राधान्यात् प्रतिप्रधाने बलाबलोक्तिरावर्त्तनीयेत्याशयः। एवमप्येकैकस्य पञ्चभिः सह सम्प्रधारणीयत्वात् द्वयोक्तिरयुक्तेत्याशङ्क्याह—**तत्रेति**। श्रुत्यादिबाधितेन लिङ्गा-दिना बाध्यस्य वाक्यादेः वाक्यादिबाधकस्य लिङ्गादेर्बाधकेन श्रुत्यादिनेत्यर्थः। एतदेव विवृणोति—**याति हीति**। तत्रेतिभाष्यं श्रुतिलिङ्गबलाबलसम्प्रधारणस्य प्राधान्योक्त्यर्थ-त्वेन व्याचष्टे—**तत्रेति**। किंपुनरित्युदाहरणप्रश्नभाष्यम्, अनेकोदाहरणप्रश्नभाष्यम् अनेकोदाहरणसद्भावात् अयुक्तमाशङ्क्य, न किञ्चिदुदाहरणं सम्भवतीत्येवमाशयत्वेन व्याचष्टे—**किमिति**। केवलस्यपदस्य श्रवणसामर्थ्याभ्यां विनियोगादर्शनाच्छ्रुतिलिङ्गयोः स्वकीयस्य विनियोगसामर्थ्यस्य वाक्यीयविनियोगसामर्थ्याद्विवेको न लक्ष्यतइत्यर्थः।

ऐन्द्रयेत्युत्तरभाष्यं त्रिवेकहेत्वनभिधानादयुक्तमाशङ्क्याह—**वक्ष्यमाणेति**। अत्रेति सन्देहभाष्यमाहोस्विल्लिङ्गमिति भाष्ये लिङ्गबलीयस्त्वोक्त्यैन्द्रस्यैवेत्यपि नियमस्य उक्त-त्वाद्यदि तु लिङ्गं बलीय इत्यस्मिन्नुज्जीविष्यमाणत्वादयं तर्हि विरोध इति भाष्ये चोप-पादयिष्यमाणत्वादविरोधात् कः खल्वपीतिभाष्येण समुच्चयस्यापि वक्ष्यमाणत्वात्। चतुर्थ-सन्देहप्रतीतेर्न्यूनमाशङ्क्योपलक्षणार्थत्वेन व्याख्यातुमाह—**किमिति**। यदीति सन्देहहेतु-भाष्यमप्युपलक्षणार्थत्वेन व्याख्यातुमाह **यदीति**।

ऐन्द्र्यधिकरणे श्रुतिबलेन मन्त्रस्यायथार्थत्वाभिधानात् पौनरुक्त्यमाशङ्क्याह—**यत्त्विति**। का पुनरिति प्रश्नभाष्यं श्रुतिः ऐन्द्रया गार्हपत्यमितिद्वितीयाविभक्तिः, लिङ्गं मन्त्रेषु वचनासामर्थ्यमिति प्रकरणाधिकरणोपक्रमभाष्ये स्वरूपस्यक्तत्वात् अयुक्तमाशङ्क्या श्रुतिलिङ्गयोर्वाक्याद्विवेकाभावश्रयत्वेन व्याचष्टे—**चेनैवेति**। केवलपदप्रयोगाभावादिति वार्त्तिकोक्तेन सर्वेषु वाक्यत्वाशयेन श्रुतिलिङ्गरूपेऽर्थे वाक्यत्वभ्रान्त्या पूर्वोक्तमपि स्वरूपं पृच्छतीत्यर्थः। श्रुतिरित्युत्तरभाष्यं भ्रान्तिनिरासकविवेकानभिधानादयुक्तमाशङ्क्य, येन यत्तावच्छन्दस्येत्यादिभाष्ये वक्ष्यमाणविवेकाभिप्रायेणोदाहरणाभावाशयस्य प्रश्नस्येन्द्र्येति-भाष्येणोत्तरमुक्तं तेनैवाभिप्रायेणेदमप्युत्तरमित्याह—**तत्रेति**। प्रश्नशेषनिरासं विनोत्तर-त्वायोगात्। उत्तरोक्त्या तेनैवाभिप्रायेणेतिपदद्वयानुषङ्गस्तेनैवेत्यस्य च वक्ष्यमाणविवेक-विषयत्वपरामर्शित्वं सूचितम्। अथेति प्रश्नभाष्यं वाक्यस्य श्रुतिलिङ्गाभ्यां विवेकाभावा-शयत्वे व्याचष्टे—**परः पुनरिति**। संहत्येत्युत्तरभाष्याशयमाह—**सिद्धान्तेति**। पदसमूह-स्यैकवाच्याभावादयुक्तमाशङ्क्य द्वेधा व्याचष्टे—**यद्यपि चेति**। वाक्यार्थङ्गमयन्ती सतीत्या-द्यव्याख्यानेन गमनमात्रलक्षणार्थोऽभिदधाति। द्वितीये त्वेकेन पदाभिहितैकगम्यमावेन वाक्यार्थेन पदसङ्घातस्य प्रयुक्तत्वात् सङ्घातं पदार्थं स्वस्वपदार्थमभिदधति पदानि वाक्य-मित्यर्थः। पदार्थाभिधानानपेक्षस्य पदसङ्घातस्य वाक्यार्थवाचिताया, उपसंहारस्य उप-क्रमानुरोधवृत्तित्वेन वाक्यार्थव्याख्यासिद्धान्तभङ्गापत्तेः पदार्थाभिधानद्वारतोक्ता। प्रश्ना-शयविवरणार्थं यदित्यादिभाष्यं व्याचष्टे—**तदिति**। वेदे मन्त्रव्यतिरिक्तस्य शब्दस्य लिङ्ग-

विनियोज्यत्वाभावात् प्रकरणाधिकरणोपक्रमे मन्त्रविनियोगहेतुलिङ्गस्वरूपप्रदर्शनार्थं मन्त्रेषु वचनसामर्थ्यमित्युक्तम् । कारकविभक्तिश्रुतेरेव च विनियोगाहेतुत्वात्कारकविभक्त्युपलक्षणार्थद्वितीयाविभक्तेः श्रुतित्वोक्ता । पुनरत्र श्रुतिः । किं लिङ्गमित्यनेन त्वैन्द्र्युदाहरणे, अत्र शब्देन श्रुतिलिङ्गयोः स्पृष्टयोरिन्द्रशब्दस्य देवताभिधानसामर्थ्यं लिङ्गमित्युक्तम् । गार्हपत्यं प्रातिपदिकान्वयं च विना विभक्तिमात्रात् गार्हपत्यप्राधान्याप्रतीतेः लिङ्गविरोधाभावेन बलाबलं विनोदाहरणत्वाप्रसङ्गात् गार्हपत्यश्रवणश्रुतितोक्ता । इह पुनः श्रुतिलिङ्गवाक्यानाम् लक्षणतो विवेकार्थं सामर्थ्यमात्रस्य लिङ्गलक्षणत्वेऽप्यर्थान्तरविषयत्वे लिङ्गस्य श्रुतिवाक्याभ्यां विवेकस्पष्टविषयत्वाच्छब्दविषयलिङ्गस्य श्रुतिवाक्याभ्यां विवेकार्थाभिधानसामर्थ्यलक्षणं यदर्थमभिधातुं सामर्थ्यं तच्छब्दस्य लिङ्गमिति वदतोक्तम् । विध्यभिधानश्रुत्या लिङ्गवाक्याभ्याम् अविवेकशङ्कायां तद्वदेव विनियोगश्रुतिरपि अविवेकापन्नपदार्थस्य स्वरूपेणान्वितत्वेनैकार्थत्वाभिधानेन तच्छ्रवणमितिकृत्वा श्रुतिरितितच्छब्दाध्याहारेण श्रुतिमात्रलक्षणमुक्त्वा श्रोतृजन्यस्य श्रवणशब्दवाच्यत्वाप्रसिद्धेः शब्दजन्यार्थज्ञानाख्यस्याभिधानस्य श्रवणशब्दवाच्यत्वायोगात् पर्यायश्रुतिवाच्यता न युक्तेत्याशङ्क्य, 'सोऽर्थः श्रुत्यावगम्यतइति कृत्वा श्रुतिजन्यार्थावगमाख्यमभिधानं लक्षणया श्रुतित्वेन व्यपदिश्यतइत्युक्तम् । व्यावायार्थज्ञानस्यापि तर्हि शब्दश्रवणाख्यश्रुतिजन्यत्वाच्छ्रुतित्वापत्तिरित्याशङ्क्य, आपदार्थाभिधानानपेक्षाच्छब्दश्रवणाद्योऽर्थो गम्यते, स स एवानया श्रुत्या गम्यतइतिव्यपदिश्यते, न तु पदार्थाभिधानद्वारा गम्यमानो वाक्यार्थं इत्युक्ते संहत्यार्थमित्यनेन तु वाक्यमात्रलक्षणस्यैवोक्तत्वान्नेहान्यलक्षणं वाक्यं इत्येकार्थमित्यनेनोक्तमित्येवं भाष्यं व्याख्येयम् । तदेतदित्यादिना लिङ्गादित्यन्तं भाष्यं श्रुत्यादित्रयशङ्करनिरासार्थत्वेन व्याख्यातुं शङ्कां तावदाह—**सामर्थ्येति** । एतदेव विवृणोति—**तथा हीति** । एतच्छङ्कानिरासार्थत्वेनार्थतो भाष्यं व्याचष्टे—**सत्यमिति** । यद्यपि ब्राह्मणे, मन्त्रे च शक्तिः, अभिधानाख्या श्रुतिश्चास्ति, तथाप्यैद्र्या गार्हपत्यस्य प्रकाशनोक्तिः कार्येति शक्त्या नावगम्यते, इन्द्राङ्गत्वमतिश्चैन्द्र्या न श्रवणेनाभिधानद्वारा कृतेति श्रुतिलिङ्गयोः परस्परं विवेकः शक्यो वक्तुमित्याशयः । अभिधानद्वारत्वसूचदार्थम्—**कारितेत्युक्तम्** । पूर्वार्द्धं व्याचष्टे—**या हीति** । ब्राह्मणपदस्थशक्त्यैन्द्र्यां गार्हपत्याङ्गतावगम्यते, मन्त्रपदस्थया वेति विकल्प्या, आद्यपक्षे अन्यस्थया शक्त्यान्यविनियोगाद् ब्राह्मणपदस्थया शक्त्या नैन्द्रो मन्त्रो गार्हपत्याङ्गमवगम्यतइत्युक्ते, ब्राह्मणपदानामेव तर्हि स्वया शक्त्या स्वेषु स्वेषु ऐन्द्रीत्यादिविनियोगसम्भवात् श्रुतित्वादभिमतेषु ब्राह्मणादिपदेष्वपि विनियोगहेतुशक्त्याख्यलिङ्गोपपत्तेर्न श्रुतेर्लिङ्गाद्विवेकोऽवगम्यतइत्याशङ्क्य लौकिकार्थविनियोगहेतुत्वेऽपि तस्य लिङ्गस्य वैदिकविनियोगहेतुत्वभावात् विवेकासिद्धिरिति परिहारसूचना—**यैतान्येवेत्युक्तम्** । प्रतिपदं शक्तिभेदेऽपि सामान्याशयेनैकवचनम् । गार्हपत्योक्तावशक्तस्यैन्द्रस्य मन्त्रस्य गार्हपत्येऽपि विनियोगान्मन्त्रपदस्थया शक्त्या मन्त्रपदस्थङ्गार्हपत्याङ्गत्वं भविष्यतीति द्वितीयपक्षनिरासार्थं ब्राह्मणस्थैः पदैः मन्त्रपदस्थामशक्ति-

मिव शक्तिमप्यनपेक्ष्य स्वकीयेप्सिततमत्वाद्युक्तिसामर्थ्यवशात् ईप्सिततमत्वादिषु प्रवृत्तेरैन्द्रस्य मन्त्रस्य गार्हपत्याङ्गमन्त्रत्वमभिधीयतइत्युक्तं, कथमशाब्दस्य अङ्गत्वोपपत्तिरित्याशङ्क्य, मन्त्रशक्तिग्रहणात्प्राक् स्वसामर्थ्यवशेनाङ्गत्वाभिधाने निष्पन्ने, तदन्यथानुपपत्तिगम्यत्वेनाङ्गत्वाभिधानात्प्राक् शक्त्यग्रहणात् गृह्यमाणस्वरूपेण शक्त्यनपेक्षोक्तानां स्वरूपेणेति न चेत्यनेनोक्तेऽनवगतापि विनियोगहेतुर्भविष्यतीत्याशङ्क्य, ज्ञातस्यैव भावस्यैव परोक्षार्थंज्ञापकत्वनियमान्न ज्ञातायाः शक्तेरङ्गत्वाख्ये विनियोगे हेतुत्वोपपत्तिरित्याशयेन तेनेत्यनेन परिहृते, विनियोगहेतुत्वाभावे कल्प्यमानानर्थक्यमाशङ्क्य कारकहेतुत्वात्कल्पनार्थवत्त्वे यद्यपीत्यादिना उक्ते, शेषिज्ञापनेनैव मन्त्रस्याङ्गत्वादज्ञातशक्तिकस्य च ज्ञापकत्वायोगात् अङ्गिज्ञापकरूपेऽङ्गत्वे कारकताप्युक्तेत्याशङ्क्य, विनियोगवाक्यस्य पौरुषेयत्वे सति प्रमाणान्तराग्राह्यस्यार्थस्य स्वयमाक्षेपाशक्तेरङ्गत्वाभिधानात्। प्राक् विनियोज्यमन्त्रप्रयोक्तुः शेष्यभिधानशक्तिज्ञापनमपेक्ष्यं स्यात्, वेदत्वेन त्वस्यापौरुषेयत्वात् स्वयं प्रमाणान्तरावगतगौणशक्त्याक्षेपत्वोपपत्तेः मन्त्रप्रयोगकाले शक्तिज्ञानापेक्षायामपि, विनियोगकालेऽनपेक्षणात् युक्ता सद्भावमात्रेण शक्तेः कारकतेति, यदि त्वित्यनेन सूचयित्वा पूर्वार्द्धोक्तश्रुतेर्लिङ्गादिविवेकस्तस्मादित्यनेनोपसंहृतः। अङ्गत्वज्ञापनाख्यविनियोगविषयत्वेनाङ्गत्वं लक्षणया विनियोगत्वेनाभिप्रेत्य विनियोगस्याभिधेयत्वोक्तिलिङ्गस्य श्रुतितो विवेकार्थम् उत्तरार्द्धं व्याचष्टे—**कदेति**।

इन्द्राभिधानशक्त्यालोचनात् मन्त्रस्येन्द्राङ्गत्वशक्तिज्ञाने सत्यङ्गत्वं कस्मान्नाभिधीयतइत्याशङ्क्य, मन्त्राङ्गत्वस्य सिद्धचर्थाऽसौ शक्तिर्नाङ्गित्वाभिधानसिद्धचर्थेति कृत्वाभिधानतया मन्त्रस्याङ्गत्वाभिधायिता युक्तेति परिहारसूचनार्थं न चेत्युक्त्वा, अभ्युपगम्याऽङ्गत्वाभिधानं विधिं विना विहितस्यापि अङ्गस्य सत्त्वादिवदनादरणीयत्वात् मन्त्रस्य चाभिधायकत्वेनाभिधानश्रुत्येन्द्रमन्त्रस्येन्द्राङ्गत्वसिद्धिरिति, न विहिता इत्यनेनोक्ते ब्राह्मणेऽप्यङ्गत्वविधानस्य प्रागनुक्तत्वात् कस्य चिदभावस्य शङ्कां निराकर्त्तुम्—**ब्राह्मणे त्वित्युक्तम्**।

यथा ब्राह्मणेऽभिधानान्यथानुपपत्तिगम्यत्वेनाभिधानात् पश्चाच्छक्तेर्ज्ञानाद्विनियोगहेतुत्वायोगेनाभिधानस्यैव प्राथम्याद्विनियोगहेतुत्वं, तथाऽप्यभिधानस्यैव प्राथम्याद्विनियोगहेतुत्वापत्तेर्न लिङ्गस्य श्रुतितो विवेकः शक्योऽवगतुमित्याशङ्कते—**ननु चेति**। इन्द्रस्वरूपमात्रस्याभिधानमिति विवेकहेतुमाह—**सत्यमिति**। विनियोगानविधाने विनियोगशक्तेः कल्पकाभावेनसिद्धेः। स्वरूपाभिधानशक्तेश्चाभिधानमात्रहेतुत्वेन विनियोगहेतुत्वाभावात् न शक्त्येन्द्राङ्गत्वसिद्धिरित्याशङ्क्याह—**अन्नैव चेति**।

स्वरूपाभिधानान्यथानुपपत्त्या तच्छक्तौ कल्पितायां स्वरूपाभिधानशक्तिबलेन विनियोगयोग्यत्वाख्या शक्तिःकल्प्यते, ततश्च विनियोक्तुं शक्यत्वात्, श्रुत्या विनियुज्यतइत्याशयः। पाकादौ शक्तस्यापि देवदत्तादेर्विनियोक्तारमननुविदधानस्य विनियोक्तुमशक्यत्वदर्शनाद्यो यत्कर्तुं शक्तस्य तत्र विनियोक्तुं शक्य इति नियमानुपपत्तेः, कथमभिधान-

शक्त्या विनियोक्तुं शक्यत्वं कल्प्यतइत्याशङ्क्यां प्रश्नपूर्वं निरस्यति—**कथमिति**। असौ शक्तो, न ह्यशक्त इति कर्मोत्पन्ननिष्ठान्ताभ्यां शक्यत्वाशक्यत्वोक्तेः प्रकरणाम्नातस्य मन्त्रस्य प्रकरण्यङ्गत्वेऽवगते, कथं तस्योपकरिष्यतीत्यपेक्षायां शक्त्यालोचनया अनेन मन्त्रेणेद्रमभिदध्यादिति विनियोजकश्रुतिकल्पनादवश्यविनियोज्यत्वावगतेः विनियोक्तुमशक्याभिधानशक्तिकल्पितयापि श्रुत्युक्तिविनयोज्यत्वायोगात् अभिधानशक्त्या विनियोज्यत्वे शक्य इत्यर्थः।

श्लोकव्याख्यानाय शक्तश्चेन्न विनियुज्यते मा विनियोजि न ह्यवश्यविनियोज्यता केन चिदवगतेत्याशङ्क्याभिधानशक्त्यैव श्रुतिकल्पनाद्वाराऽवश्यविनियोज्यऽवगतेतिसूचयितुमाह—**ततश्चेति**। हेतौ च शब्दः। ततोऽभिधानत्वाच्छ्रुतिकल्पनाद्वारा यो विनियोगोऽभिमतः, सद्वितीयाद्विनियोक्तुं शक्यत्वरूपात्, सामर्थ्यात्कल्पयिष्यते उपपादयिष्यत इत्येतदर्थमभिधानशक्तिबलेनाऽत्रिनियोक्तुं शक्यत्वं कल्प्यतइति क्रियार्थायां क्रियायाम् उपपदस्मृतेन लृट्प्रत्ययेन विनियोगशक्तिः कल्प्यतइत्युपपदार्थीकृतविनियोक्तुं शक्यत्वकल्पनक्रियया कल्पयिष्यत इति, क्लृप्तसामर्थ्यवाचककल्पयत्युक्तोपपादनक्रियार्थत्वाभिधानार्थः। अभिधानशक्तिमात्रात् विनियोगोपपत्तेर्विनियोक्तुमशक्यत्वकल्पना न कथितेत्याशङ्क्य, न प्रथमसामर्थ्यमात्रात् विनियोगोपपत्तिरित्याह—**नेति**। एतदेवोपपादयति—**प्रथमेन हीति**। पूर्वेणावगतोऽपि विनियोगो द्वितीयं विना न निर्वहतीत्याशयः।

श्रुतिलिङ्गयोर्विवेकमुक्तं स्पष्टयति—**अत इहेति**। श्रुतौ जातत्वरूपेणाऽसत्येव सामर्थ्ये मन्त्रस्याङ्गतोच्यते, लिङ्गे त्वनुक्ताङ्गत्वसामर्थ्यमात्रं प्रतीयते इत्यर्थः। श्लोकं व्याचष्टे—**अविद्यमानमेवेति**। ज्ञातत्वरूपेणाविद्यमानमेवाऽभिहितस्याङ्गत्वविधानात् कल्प्यमित्यर्थः। तदेतदित्यस्य श्रुत्यादित्रयपरामर्शित्वसूचनार्थम्। सामर्थ्यपूर्वकत्वादित्यादिवार्त्तिकेनानाशङ्कितमपि श्रुतिलिङ्गाभ्यां वाक्यस्याविवेकं निरस्यति—**वाक्ये पुनरिति**। सर्वेष्वेवेति भाष्यात् श्रुतिलिङ्गविरोधोदाहरणे श्रुत्यादित्रयविवेककथनस्य सर्ववाक्येषु विवेकज्ञानार्थत्वावगतेर्वाक्यप्रकरणादिविरोधोदाहरणेषु प्रकरणादिविवेकोऽपि कस्मात् भाष्ये न पृष्टः, कथितो वेत्याशङ्क्याह—**कथं भावेति**। तदाचष्टइत्यस्मिन्नर्थे विवेचिते इति णिन्प्रत्ययप्रयोगेन कथित इति वाच्ये प्रत्ययानुग्रहार्थो धातुः। व्याख्यातेऽर्थे श्रुत्यादित्रयशङ्कानिरासप्रतिज्ञानार्थं तदिति भाष्यावयवं योजयति—**तदिति**। लिङ्गाच्छ्रुतिविवेकोपपादनार्थं न त्वेवमिति भाष्यावयवं योजयति—**गार्हपत्ये पुनरिति**।

का पुनरत्र श्रुतिरित्यादिभाष्येण श्रुत्यादिविवेकोक्तेः। ऐन्द्र्युदाहरणे श्रुतिलिङ्गविरोधोपपादनार्थत्वसूचनार्थत्वेन यदि त्विति भाष्यं व्याख्यातुमाह—**इतीति**। 'यद्येवमित्यादिभाष्ये चोभयोर्वाक्यत्वात् श्रुतिलिङ्गविरोधोदाहरणत्वायोगे शङ्कितेनैव श्रवणात् गम्यते, नापि शब्दान्तरस्य समीपे उच्चरितसामर्थ्यमप्यस्ति, येनैतत् गम्यतेत्यनेनैन्द्रीत्वस्य वाक्यीयस्य श्रौतत्वनिरासेऽपि न त्वेवमस्यामृचि सामर्थ्यमालोच्यैव वाक्यात् (ऐन्द्र्या गार्हपत्योपस्थानं भवतीति अनेन गार्हपत्याङ्गत्वस्य लैङ्गिकत्वानिरासेऽपि वाक्यीयत्वा-

निरासात् वाक्यीयत्वाभ्युपगमे प्रतीते, यथा गार्हपत्यशब्दमात्रात् गार्हपत्यप्राथम्यप्रतीतावपि ऐन्द्रत्वस्य वाक्याधीनत्वादैन्द्रीवाक्ये वाक्यस्य विनियोजकत्वाभ्युपगम्यते, तथेन्द्रशब्दमात्रस्य लिङ्गादिन्द्राङ्गत्वप्रतीतावपि शेषाणां मन्त्रपदानाम् इन्द्राङ्गत्वस्य वाक्याधीनत्वात्, केवलस्य च पदस्याप्रयोज्यत्वेनाविनियोजकत्वामन्त्रेऽपि वाक्यस्य विनियोजकताभ्युपगन्तव्येत्याशङ्कोत्थानात् अथ वेति भाष्येणोभयत्र वाक्यस्य विनियोजकत्वे निरस्ते मन्त्रे केवलस्य पदस्याभिधानाशक्यत्वेऽनिराकाङ्क्षीकरणसमर्थपदान्तरान्वयं विना सम्पूर्णव्यवहारानङ्गत्वेनाप्रयोज्यतया विनियोक्तुमशक्यत्वात् इन्द्राभिधानशक्तेन्द्रपदैकवाक्यत्वाच्चावशिष्टानमपि पदानां विशेषणाभिधानद्वारेन्द्रप्रकाशनशक्त्युपपत्तेः, पदमात्रे च लैङ्गिकविनियोगस्य पर्यवसानाभ्युपगमे लिङ्गविरोधाद्वाक्येन कृत्स्नमन्त्रविनियोगापत्तेरिन्द्रपदसामर्थ्येन कृत्स्नमन्त्रविनियोगाय पदान्तराणाम्। इन्द्रविशेषणाभिधानासामर्थ्यसम्पादनमात्रे वाक्यव्यापारावगमात् लिङ्गेनैव कृत्स्नमन्त्रविनियोगसिद्धेर्न वाक्यस्य विनियोजक-इतीन्द्रशब्दवत् कृत्स्नस्य मन्त्रस्येन्द्रप्राधान्यमिति भाष्येणोपपादितत्वात्।

लिङ्गत्वमभ्युपगम्य ब्राह्मणवाक्यस्य विनियोजकत्वनिरासयुक्तचनभिधानादेव, तर्हि लिङ्गवाक्ये इति भाष्येण पुनः प्रत्यवस्थानमिति व्युत्क्रमेण परेषां भाष्यव्याख्यां दूषयितुम् उपन्यस्यति—अत्रेति। प्रश्नपूर्वकमपकर्षहेतुमाह—कुत इति। शङ्कावादिनैव तर्हि लिङ्गवाक्ये इति लिङ्गशब्देनेन्द्रोपस्थानकस्य प्रमाणस्य लिङ्गत्वाभ्युपगमात् पुनर्वाक्यत्वाभिधानाशक्तेस्तन्निरासार्थम् 'अथ वेति भाष्यमे'वं तर्हीत्यतःपश्चादसम्बन्धमित्याशयः। क्व तर्हि अथ वेत्ययं ग्रन्थो योजनीय इत्यपेक्षायां यत्र यद्येवमिति भाष्ये द्वयोर्वाक्यत्वं शङ्क्यते, तत्रैव तदभिधीयत इत्यादिना। ततो गार्हपत्येन द्वयोर्वाक्यत्वसम्भवेऽपि श्रुतिलिङ्गयोस्तावदन्योन्यविवेकोऽस्तीत्युक्ते वाक्याद्विवेकोक्त्येऽत्र वेत्यनेनैकवाक्यत्वव्यापारनिरास 'च कल्प्यते' इत्यभिधानपूर्वकं श्लोकं व्याचष्टे—यत्रेति। दूषयति—न त्विति।

यद्येवमिति भाष्येण श्रुतिलिङ्गयोर्वाक्यत्वोक्त्या वाक्यादविवेकं शङ्कित्वा, श्रुतिलिङ्गवाक्यानि विवेक्तव्यानीति अनेन द्वितीयासामर्थ्यात् गार्हपत्यप्राधान्यप्रतीते श्रुतेः लिङ्गत्वेन लिङ्गादविवेकः मन्त्रेन्द्राभिधानात् इन्द्रप्राधान्यात् इन्द्रप्रतीते लिङ्गस्य श्रुतित्वेन श्रुतेरविवेकः। वाक्ये चर्ग्वेदोवावाग्नेरजायतेत्यादिभिरुपक्रमस्थैः पदैर्वेदाभिधानात् उच्चेर्ऋचेत्यादीनां चोपसंहारस्थानाम्। ऋगादिशब्दानां वेदाभिधानसामर्थ्यात् उच्चैस्त्वादीनां वेदधर्मत्वप्रतीतेः।

वाक्यस्य श्रुतिलिङ्गाभ्यामविवेक इति, शङ्कात्रयसूचनाच्छङ्काचतुष्टयमध्ये कदाचनस्तरीत्यनेन मन्त्रेणेत्यादिभाष्येण लिङ्गश्रुतिवाक्याभ्यां विवेकाभिधानात्, तृतीयाशङ्कालिङ्गांशे चाद्यां परिहृत्य, नत्वेवमित्यादिना श्रुतेर्लिङ्गात् विवेकाभिधानात्, द्वितीयां परिहृत्य वाक्यस्य श्रुतिलिङ्गाभ्यामविवेक इत्यनिष्टापादनं कृत्वा, तदेतत्सर्वेष्वेव समवेतं विविक्तं च दृश्यत इति प्रतिज्ञामात्रेण निरासासिद्धेस्तत्परिहारमुपपाद्य, तत्परिहारकालेऽपि

लिङ्गयोर्वाक्यादविवेक इत्याद्यशङ्कां लिङ्गांशेनापि शब्दान्तरस्य समीपे उच्चरितस्य सामर्थ्यमस्तीत्यनेन परिहृतत्वात् उपेक्ष्ये 'एवं तर्हीत्यनेन श्रुत्यंशेऽनुभाष्य नैतदेवमित्यनेन श्रुतेर्वाक्यात्विवेकेऽपि श्रुतेरेव लिङ्गविरोधेन वाक्यस्येत्यपि विवेकाभ्युपगमेन परिहारे दत्ते, लिङ्गस्यापि तर्हि वाक्यादविवेकाभ्युपगमापत्तेः कृत्स्नस्य मन्त्रस्य श्रुत्या गार्हपत्ये विनियोगात् कृत्स्नस्य मन्त्रस्यैन्द्रे विनियोजकेन वाक्येन विनैव श्रुतेर्विरोधप्रतीतेः पदमात्रविनियोजकेन लिङ्गेन विरोधाभावात् श्रुतिवाक्ययोरसम्प्रधारणापत्तेर्न श्रुतिलिङ्गविरोधोदाहरणता युक्तेति, लिङ्गांशे वाक्यत्वादाशङ्कापरिहारार्थत्वाशङ्काया, नापि शब्दान्त-इत्यनेन परिहृताया अपि श्रुतिदृष्टान्तेन पुनरुज्जीवनमाशङ्क्य अथ वेत्यनेनोभयोर्वाक्याद्विवेकाभिधानात्परिहारः सम्भवतीत्याशयः। एतच्चाथवेत्यस्याद्यशङ्कापरिहारार्थादादौ निवेशो युक्त इत्यपकर्षवाद्याशयमापाद्योक्तं प्राक्चाथ चेत्यनेनोभयोर्वाक्यत्वे निरस्ते, श्रुतेर्वाक्यत्वशङ्कानुत्थानात्, एवं तर्हीत्यत्र वाक्यशब्दो न युज्येतेत्याह—अपि चेति।

अपकर्षवाद्युक्तम् अपकर्षकारणं त्रेधा निरस्यति अत यो देवताविशेषं वक्तुं शक्नोति इन्द्रशब्दः, सोऽस्यामृचि विद्यते कर्मसमवेतत्वात् चैन्द्रशब्दोक्तया देवतया प्रयोजनमस्तीति शक्त्यालोचनमात्रेण सा उपास्थातव्या इत्येवं गम्यते, न त्विन्द्रशब्दश्रवणमात्राच्छब्दान्तरसमीपाद्वेत्युक्ते कथं मिन्द्रशब्दशक्तिमात्रात् कृत्स्नस्य मन्त्रस्येन्द्राङ्गत्वावगतिरित्याशङ्क्य, येन कारणेनेन्द्राभिधायकः शब्दोऽस्मिन् मन्त्रे प्रयुज्यते, तदेकवाक्यत्वेन चावशिष्टानि पदानि प्रयुज्यन्ते। तेन कारणेन कृत्स्नस्य मन्त्रस्येन्द्राङ्गताऽवगम्यते इति शक्त्येकवाक्यत्वाभ्यां मन्त्रस्येन्द्रागतावगमाभिधानात् वाक्यसङ्कीर्त्तनमेव लिङ्गं श्रुतिलिङ्गविरोधाभिधायिनोऽभिमत इति मन्यमानेनाक्षेप्ता यद्येवं विधं लिङ्गं तवाभिमतं, तथापि लिङ्गवाक्यविरोधापत्तेः श्रुतिविरोधादाहरणता न युक्तेत्यभ्युपेत्यवादमात्रेण लिङ्गत्वस्योक्तत्वात् आक्षेप्तुर्वाक्यत्वाभिप्रायस्य नापिशब्दान्तरस्य समीपे उच्चरितस्य सामर्थ्यमस्तीत्यनेन केवलस्य वाक्यस्य विनियोजकत्वं निरस्यतापनीतस्यापि लिङ्गसहितं वाक्यं विनियोजकं भविष्यतीति शेषमपनेतुमथ वेत्यनेन उभयत्र वाक्यस्य निरासो युज्यते।

यद्वा श्रुतेरेव केवलया वाक्यात् विवेकायैन्द्रीवाक्यस्थस्यैवैकवाक्यत्वस्य विनियोगं प्रत्यकारणता विवक्षिता, न मन्त्रस्थस्य। दृष्टान्तार्थं तु मन्त्रस्थस्यैकवाक्यत्वस्य कारणत्वं पूर्वोक्तमेव प्रसङ्गात् स्मारितमित्येवं यथान्यासमेवस्थिते ग्रन्थसन्दर्भे, व्याख्यानं कार्यमिति भावे कृत्योत्पत्तेरर्थः।

स्वमतेन यथान्यासमेव व्याख्यातुम् एवं तर्हीति भाष्यस्य वाक्यं ह्येतदित्यवयवं ऐन्द्र्याः केचिदुपस्थानार्हपदार्थं प्रति तृतीयाङ्गत्वप्रतीतेर्गार्हपत्यस्य च कं चिन्मन्त्रं प्रति द्वितीययाऽङ्गत्वप्रतीतेर्वाक्यत्वे सत्यपि श्रुतेरपि विनियोजकत्वासम्भवेन श्रुतिलिङ्गविरोधसम्भवादयुक्तमाशङ्क्योपपादयति— तत्रेति।

श्रुतेर्वाक्यात् विवेकाभावेऽपि श्रुतेरेवात्र लिङ्गविरोधः, न वाक्यस्येत्याशङ्कापरिहारार्थं 'नैतदिति भाष्यमैन्द्र्यारुणादिवाक्ये श्रुत्या क्रियामात्रे, वाक्येन क्रियाविशेषे, प्रकरणेन

प्राकरणिके विनियोगं इत्येवंवादिमतेऽथ चेत्यस्य वाक्यव्यापारनिरासार्थत्वायोगात् भाष्य-द्वयेऽपि श्रुतिविरोधमात्रोक्तेःपौनरुक्त्यमाशङ्क्य, प्रातिपदिकेश्रुतिविरोधोक्त्यर्थत्वेन व्याचष्टे—नैतदिति। गार्हपत्यशब्दस्य यौगिकत्वात् गौणत्वाद्वेन्द्रार्थत्वाभावेऽपि द्वितीयायाः सप्तम्यर्थवृत्त्या गार्हपत्यसमीपे तिष्ठन्निन्द्रमुपतिष्ठेतेत्यैन्द्र्या विरोधो भविष्यतीत्याशङ्क्य, विभक्तिश्रुत्यनुग्रहीतायाः प्रातिपदिकश्रुतेर्विरोधोक्त्यर्थमग्निसमीपं चेति भाष्यावयवं व्याख्यातुम्, अग्निसमीपं वा लक्षयेदित्युक्तम्। समुदायप्रसिद्धिपरित्यागोक्त्या गौणत्व-सामीप्ये लक्षणयोर्निरासः।

अथ वेतिभाष्ये प्रतिपदिकश्रुत्यनुगृहीतविभक्तिविरोधोक्त्यर्थत्वेन व्याचष्टे—**अथ वेति**। श्रुतिविरोधयोः प्रातिपदिकविभक्तिभेदादपौनरुक्त्येऽपि लिङ्गविरोधस्य, नापि शक्त्यन्तरस्यसमीपेरुच्चरितस्य इत्यनेन मन्त्रे वाक्यस्य विनियोजकत्वनिरासेनोक्तत्वात्, श्रुतिवच्च लिङ्गवैलक्षण्यानुपलम्भान्नैकवाक्यत्वादिन्द्रप्राधान्यं, किं तु इन्द्रशब्दवत्त्वात् मन्त्रस्येति लिङ्गस्यैव श्रुत्या विरोधो न वाक्यस्येति, लिङ्गविरोधोक्तेः कथमपौनरुक्त्यम् इत्याशङ्क्य, नापीत्यनेन केवलस्य वाक्यस्य विनियोजकत्वे निरस्तेऽपीन्द्रशब्दस्य लिङ्गे-नाऽवशिष्टानां च पदानां वाक्येन विनियोगात् लिङ्गसहितस्य वाक्यस्य कृत्स्नविनियोज-कत्वावगतेः पदमात्रविनियोजकत्वेन च लिङ्गस्य कृत्स्नमन्त्रविनियोजकतया श्रुत्या विरोधाभावात् वाक्यस्यैव श्रुत्या विरोध इत्येवं वाक्यत्वविषयदीर्घद्वेषदोषापनयार्थं केवलस्य सम्पूर्णव्यवहारानङ्गत्वेनाप्रयोज्यतया विनियोगानर्हत्वात् इन्द्रविशेषणनोक्तिद्वारा चावशिष्टानामपि पदानमिन्द्रोक्तिशक्त्युपपत्तेः श्रुतिवाक्याभ्यां सामान्यविशेषविनियोगवच्च पदमात्रकृत्स्नमन्त्रविनियोगयोरन्योन्योपकारित्वाभावेन विरोधाल्लिङ्गविरोधिवाक्येन स्यो-नादिमन्त्रवत् कृत्स्नमन्त्रविनियोगायोगात् लिङ्गविनियोगापेक्षितपदान्तराणामिन्द्रविशे-षणोक्तिसामर्थ्यस्य सम्पादनमात्रे वाक्यस्य व्यापारो न विनियोगे इत्येवम्। एकवाक्यत्वस्य विनियोगव्यापारनिरासमात्रार्थं नैकवाक्यत्वात् इन्द्रप्रधान्यमित्युक्तमित्येवं परिहरति—**लिङ्गेति**। श्रुतिवाक्ययोर्द्वयोरपि अत्र विनियोजकताभ्युपगमे श्रुत्यनपेक्षस्य वाक्यस्य लिङ्गाविरोधाद्वाक्यानपेक्षाया श्रुतेरपि ऐन्द्र्यास्तृतीयाश्रुत्येत्यादिवार्त्तिकोक्तन्यायेना-विरोधात्, श्रुतेरेव विरोधो, न वाक्यस्येति परिहारो न युक्त इत्याशङ्किताक्षिपति—**कथं पुनरिति**।

आक्षेपनिरासोक्तेरेतत्परिहारार्थत्वेन भाष्यव्याख्यानापरितोषात्स्वमतेनाप्यथ वेति भाष्यस्य मन्त्रवद्ब्राह्मणेऽपि एकवाक्यत्वस्य विनियोगव्यापारनिरासार्थत्वेन व्याख्या-सूचनार्थं, विरोधे शीघ्रप्रवृत्तया श्रुत्या लिङ्गादिकल्प्यश्रुतिप्रतिबन्धवदविरोधेऽपि क्रिया-सामान्यस्य विरोधित्वेन साक्षात्परम्पराया वा पुरुषार्थाननुबन्धितया शेषित्वाद्धात्वर्थान-वच्छिन्नभावनाश्रयत्वेनासामान्योक्तेः संस्थाधिकरणभाष्ये धात्वर्थानवच्छिन्नाया भावनाया धर्मान्वयस्य निराकरिष्यमाणत्वेन दोषत्वात्। महत्वात्सामान्ये वा विनियोगायोगेन क्रियाविशेषेऽङ्गविनियोगं विना तृतीयाश्रुत्यपर्यवसानात् विधेश्च स्वविषयस्य साक्षात्स्वतः

समीहिताङ्गत्वे समीहितविशेषणसमर्पणद्वारा द्वितीयायाः प्रकृत्यर्थेऽङ्गविनियोजकत्वख्यातोक्तविधिविहितस्यैवाङ्गस्य द्वितीयाविनियोज्यत्वावगतेरङ्गमात्रविनियोगे पर्यवसानायोगादक्षरश्रवणकृत एवायं गार्हपत्याङ्गप्रत्यय, इति वार्त्तिकाच्च विशेषविनियोगएवश्रुतिपर्यवसानावगतेरैन्द्रया गार्हपत्याङ्गत्वबोधाख्ये विनियोगे शीघ्रप्रवृत्त्या श्रुत्या वाक्यकल्प्यश्रुतिप्रतिबन्धाद्विनियोगव्यापारानुपपत्तेर्न वाक्यलिङ्गविरोध इत्येवं परिहरति—**उच्यत इति**। कल्प्यश्रुतिप्रतिबन्धसूचनार्था दृष्टान्तोक्तिः। सैव प्रवर्त्तत इति एवकारेण वाक्यप्रवृत्तिं निरस्तामुपपादयितुं श्रुतिकल्पतप्रतिबन्धोक्त्यै पूर्वप्रवृत्त्युक्तिः श्रुतेः शीघ्रं प्रवृत्तावपि सामान्यविषयत्वादविरोधे वाक्यप्रवृत्तेश्च निरासाद्वाक्यविरोधमाशङ्क्य श्रुतिलिङ्गविरोधवाक्ये चाविरोधं वक्तुं विषयत्वं सूचयितुमाह—**यथेति**। विशेषविषयत्वं विना प्रतियोगित्वायोगात् प्रतियोग्युक्त्या विशेषविषयत्वं सूचितम्। परिहाराशयाज्ञानाच्छङ्कते—**ननु चेति**। तृतीयया गार्हपत्यमेव प्रत्यैन्द्र्याः शेषत्वोक्तेर्द्वितीयया चैन्द्रीमेव पति गार्हपत्यशेषित्वोक्तेः श्रुत्यैव विशेषविनियोगकृतवाक्यस्य विनियोजकत्वायोगात् विशेषविनियोगप्रवृत्त्याश्रुत्यपेक्षितविशेषणविशेषान्वयमात्रार्थत्वावगते श्रुतेरेव लिङ्गविरोधेन वाक्यस्येति स्वाभिमतपरिहाराशयविवरणेनाशङ्कां निरस्यति—**कथमिति**। एकः अश्रुतिकृतोऽन्यो वाक्यकृत इत्येवं प्रत्येकं व्यवस्थितेनाङ्गाङ्गयत्वस्य वाक्यकृतत्वाभावाद्वाक्यस्य लिङ्गविरोधाभावेऽपि श्रुतिकृतस्य सामान्यतोऽङ्गाङ्गयन्वयस्य कथं विरोध इत्याशङ्क्य विशेषित एवाङ्गाङ्गयन्वया श्रुत्या क्रियतइति सूचयितुम्—**तत्रेत्युक्तम्**।

निष्प्रतिद्वद्न्युक्त्या वाक्यस्याङ्गाङ्गयन्वये व्यापाराभावः स्पष्टीकृतः। क्रीणात्यरुणयेत्यत्र समवाये हि सत्यपीत्यादेस्तु परमते स्थित्वोक्तत्वादिह चारुण्यस्य क्रियासम्बन्धः श्रुत्येत्यादिश्चेतद्ग्रन्थानुसारेणैव व्याख्यातत्वान्न पूर्वापरवार्त्तिकविरोधः। तद्भाष्योक्तं द्वितीयाश्रुतेर्लिङ्गविरोधमुपपाद्य, विध्यानर्थक्यपरिहारायैवेन्द्रव्यतिरिक्ताङ्गत्वस्यैन्द्रयाः कल्प्यत्वेनाख्यातान्वयाधीनत्वात् वाक्यानपेक्षायास्तृतीयाश्रुतेरपि लिङ्गविरोधायोगात्। स्वानभिमतमपि तृतीयाश्रुतेर्लिङ्गविरोधं प्रौढिप्रदर्शनायाह—**अथ नेति**। श्रुतिलिङ्गविरोधोपसंहारार्थं तस्मादिति भाष्यं व्याचष्टे—**तस्मादिति**।

श्रुतिलिङ्गविरोधोपपादनस्य सूत्रोक्तसमवायोपपादनार्थत्वं सूचयितुं श्रुतिलिङ्गविरोधोपपादनभाष्यं व्याख्याय, भाष्ये शेषव्याख्यानात् प्राक्, सूत्रं व्याख्यातुं पूर्वपक्षं तावदाह—**किं तावदिति**। श्रुत्याद्यनुमानद्वारा लिङ्गादीनां प्रामाण्यात्प्रत्यक्षादिविरोधे च लिङ्गादिभिः श्रुत्यादेः प्रत्यक्षश्रुतिविरुद्ध या एवश्रुतेः कल्पयितुमशक्यत्वात् कथं तुल्यबलतेत्याशयेन प्रश्नपूर्वमुपपादयति—**कुत इति**। स्वशक्तेरित्यनेन स्वतः प्रामाण्यात्स्मृतिवैरूप्यं सूचितम्। स्वतः प्रामाण्यस्यापि न क्वचिद्बाधात् अप्रामाण्य प्रत्यक्षादिवद्भविष्यतीत्याशङ्क्याह—**सर्वत्रेति**। प्रत्यक्षादावपि किञ्चित्प्रमाणमेव, कश्चिच्च प्रमाणाभास एवेति नियतैकरूपप्रकारद्वयातिरिक्ताद्वैरूप्यलक्षणप्रकारान्तराभावात् प्रमाणस्याभासता। आभासस्य वा प्रमाणता नास्तीत्युक्ते स्वतोऽन्यथात्वाभावेऽपि वाक्यात्प्रमाणस्य प्रामाण्यं भवि-

ष्यतीत्याशङ्क्य, बाधकलक्षणत्वात्प्रामाण्यस्य न कदाचित्प्रमाणस्य बाधः, बाधस्य वा प्रमाणतेत्युक्त्वा । अपि तर्हि प्रमाणाभासा एव बाधिष्यन्ते इत्याशङ्क्य, प्रत्यक्षस्येन्द्रियसन्निकर्षार्थविषयत्वात् इन्द्रियार्थसन्निकृष्टार्थविषयसञ्चारेऽनुमानस्य व्यापकविषयत्वात्व्यापकविषयत्वादव्यापकविषयसञ्चारे प्रमाणाभासतेति एवं सर्वेषां विषयान्तरहेतुत्वात् प्रमाणाभासत्वस्य, श्रुत्यादीनां चाभिधेयाच्छक्यादन्वितादितिकर्त्तव्यताकाङ्क्षसमीपाम्नातात्समानदेशात्समाख्यानात् स्वविषयाद्विषयान्तरसञ्चाराभावेन प्रमाणाभासत्वं नास्तीत्युक्तम् । नचानुत्पत्तिविनाशसंस्कारोच्छेदे फलापहाराणां बाधप्रकाराणां मध्ये कश्चिदत्र सम्भवतीत्याह—**न चेति** । बाध्यत्वाभिमते विज्ञाने स्मृत्याख्यकार्यदर्शनेनानुच्छेदोपपादनार्थं स्मृतिहेतुतोक्ता । तुल्यबलत्वं पूर्वपक्षं सप्रयोजनमुपसंहरति—**तस्मादिति** ।

बलाबले वैपरीत्यपूर्वपक्षान्तरमाह—**बाधस्त्विति** । श्रुत्यादिकल्पनाद्वारापि लिङ्गादीनां प्रामाण्यविरोधेऽपि स्मृतिवद्भ्रान्त्यादिचतुष्टयान्यतरमूलत्वायोगेन श्रुत्यादिकल्पनस्य दुर्वारस्योक्तकल्पनापेक्षत्वेन श्रुत्यादिभ्यः पश्चात्प्रवृत्तेः कल्प्यश्रुत्याद्यपेक्षत्वेऽपि च विरोधिश्रुत्याद्यनपेक्षश्रुतत्वात् । पौर्वापर्यबलीयस्त्वन्यायेनैव वैपरीत्यं युक्तमित्येव । श्लोकं व्याचष्टे—**श्रुत्यादीनामिति** ।

परदौर्बल्यहेतुत्वेन सिद्धान्त्युक्तस्य विप्रकर्षवैपरीत्यादपि बलाबलवैपरीत्यमित्याह—**किं चेति** । यद्यपि श्रुत्या विनियोगः प्रतीयते, तथाप्यशक्तस्य नावकल्प्यतइत्यपिशब्दार्थः । सामर्थ्यैकवाक्यस्य त्वाकाङ्क्षारूपाणां तु लिङ्गवाक्यप्रकरणानामेकवाक्यत्वाकाङ्क्षासन्निधिरूपैर्वाक्यप्रकरणस्थानैर्विना रूपमेव नास्तीत्यर्थः । श्रुतेः शक्त्यपेक्ष्यत्वेऽपि विनियोगानुसारिशक्तिकल्पनया विनियोगोऽवकल्पतइत्याशङ्क्याह—**उत्पत्तीति** । प्रागविद्यमानसामर्थ्यविनियोगादपि । विनियोजकावस्थया च श्रुत्या विरोधाभावात्सामर्थ्यस्यैवाविनियोजकत्वावगतेर्बलीयस्त्वादनुमानकालावगतस्येन्द्रियविषयसामर्थ्यस्य श्रौतिविनियोगकाले निवर्त्तनाशक्तेर्गार्हपत्यशक्तिकल्पनायोगाच्छक्त्यनुसारेणेन्द्र एव विनियोगो युक्त इत्यर्थः ।

लिङ्गस्य वाक्यापेक्षतामुपपादयति—**केवलेति** । केवलस्य पदस्याप्रयोजकत्वे वा विनियोजकत्वात् लिङ्गेन कृत्स्नमन्त्रविनियोगायैव मन्त्रवाक्यस्यासमेवतार्थस्यापि देवस्येत्यादेः पदस्य समवेतार्थनिर्वपामीत्यादिपदेन सहैकवाक्यतालक्षणसम्बन्धबलेन निर्वपादिविषयाशक्तिकल्पेनेन विनियोगदर्शनात् । लिङ्गस्य वाक्यापेक्षावगते यस्य मन्त्रान्तरस्थपदस्य यत्मन्त्रातरस्थपदेन सहैकवाक्यतालक्षणः सम्बन्धो न विद्यते । तस्यैव विनियोज्यपदार्थविषयशक्तिर्न कल्प्यते । तस्मिन्सीद, तवैव सदनं कृणोमीत्यनेन सहैकवाक्यतालक्षणे सम्बन्धे सति तदन्यथानुपपत्त्यैव तस्मिन्सीदेत्यादेः सदनकरणविषयशक्तिसिद्धे । स्योनं तइत्यादेश्च सीदेत्यनेन सहैकवाक्यतालक्षणसम्बन्धान्यथानुपपत्त्या सादनविषयसिद्धेर्वाक्यस्यैव लिङ्गाद् बलीयस्तेत्यर्थः । वाक्यस्य प्रकरणापेक्षामुपपादयति—**तथेति** । **प्रकरणस्य क्रमापेक्षितामुपपादयति** । **तथा सर्वाकाङ्क्षा इति** । आकाङ्क्षायाः सम्बन्धसिद्ध्यर्थत्वाद-

सम्भवत्सम्बन्धिवैफल्यापत्तेः नाकाङ्क्षा युक्ते सूचनार्थम्—**सम्बन्धं वेत्युक्तम्**। **समाख्यायां पुनरिति**। वैपरीत्यपक्षमुपसंहरति—**तस्मादिति**।

समुच्चयेन पूर्वपक्षमाह—**अथ वेति**। सूत्रेण सिद्धान्तमाह—**इतीति**। प्रश्नपूर्वं लिङ्गादौ विनियोगाख्यसामर्थ्यस्य विप्रकर्षहेतुमाह—**कुत इति**। पूर्वार्द्धं व्याचष्टे—**यदेव हीति**। पठितश्रुतिग्रहणे प्रत्यक्षः समुदायः अपठितश्रुतिग्रहणे लिङ्गादीत्याशयः। पोढाव-स्थानोपपादनार्थं पूर्वपक्षाशयमुपन्यासपूर्वं दूषयितुमाह—**कथं पुनरिति**। चोदनाशब्दा-द्विधात्र्येव श्रुतिः प्रमाणम्, न विनियोक्त्रीत्याशङ्क्य शब्दमात्रमेव धर्मप्रमितिशक्तिप्रदर्शनार्थं चोदनाशब्देन विवक्षितमिति सूचनार्थम्—**तथा चेत्युक्तम्**। एवं सतिषट्प्रकारत्वं भवतीत्याह—**तत्रेति**। उत्तरार्द्धं व्याख्यातुमाह—**ततश्चेति**। प्रस्थितयोः प्रवृत्त-योर्मध्यइत्यर्थः।

विरोधेऽपि श्रुतिकल्पनस्य दुर्वारत्वात्। श्रुतिकल्पनत्वनिबन्धनविप्रकर्षस्य बलाबल-वैपरीत्यापादकत्वं बाधो यदि कल्प्येतेति द्वितीयपूर्वपक्षवार्त्तिकोक्तं निराकर्तुमाह—**तस्मिश्चेति**। आकाङ्क्षारूपप्रकरणावगतसामान्यव्यापेक्षत्वेनाकाङ्क्षासहितस्य लिङ्गस्य विनियोजकश्रुतिकल्पनत्वे नैराकाङ्क्षयेऽसति सामग्रीवैकल्याच्छ्रुतिकल्पनानुपपत्तेः श्रुतिं विना विनियोगासिद्धेर्लिङ्गप्रामाण्याद्वैपरीत्यं दूरोत्सारितमित्याशयः। न केवलं प्रकरणानु-मानान्यथानुपपत्तेः परिहृतत्वात् श्रुतिकल्पनायोगात्, किं न तु विध्याकाङ्क्षासहिताना-मेव श्रुत्यादीनां विनियोजकत्वात्। प्रत्यक्षया च विनियुक्ते मन्त्रे विध्याकाङ्क्षानिवृत्ते-र्विध्याकाङ्क्षाविरहादपीति सूचयितुम्।

सन्निकृष्टो न लभ्यते भा० पृ० ४५४ विप्रकृष्टोऽपि वैदिकः—**अपवादस्तु तस्य स्यात् प्राप्तः संन्निहितो यदा**।

इत्यनुषङ्गाधिकरणवार्त्तिकोक्तामाकाङ्क्षा विना कल्पितस्य वैदिकत्वं स्मारयति—**वर्णितं चेति**। विप्रकर्षस्य विपर्ययसाधनत्वनिरासमुपसंहरति—**तस्मादिति**। वृद्धश्लोके-नैतदेव दृढयति—**आह चेति**। इममेव श्लोकं व्याचष्टे—**श्रुत्यादीनां हीति**। 'पौर्वापर्ये पूर्वदौर्बल्यमि(६-५-१९५४)ति न्यायस्यान्योन्यानपेक्षबुद्धिजन्मविषयत्वात् सापेक्षे लिङ्गा-दावप्राप्तिसूचनार्थम्—**न हित्युक्तम्**।

विप्रकर्षवैपरीत्यं श्रुत्यापि नासमर्थस्येति वार्त्तिकोक्तं दूषयितुमनुभासते—**नन्विति**। दूषणप्रतिजानाति—**सत्यमिति**। प्रश्नपूर्वकमुपपादयति—**कुत इति**। शक्तिकल्पने विनानु-पपत्त्यपरिहारेऽपि अङ्गत्वरूपज्ञानोत्पादनेन श्रुतेः शक्त्यपेक्षेति पूर्वार्द्धेनोक्ते जातस्या-प्यङ्गत्वज्ञानस्य शक्तिं विना कथं प्रमितत्वनिर्वाह इत्याशङ्क्य, निरासार्थमुद्धरार्द्धं व्याचष्टे—**विनियोगेति**। स्वाभाविकशक्तिनिवृत्त्या शक्त्यन्तरस्यानेकत्र दर्शनान्नैषानु-पपत्तिरिति परिहारं सूचयितुमाह—**तत्रेति**।

स्वाभाविकशक्त्यनिवृत्त्ययोगवादी स्वाभिप्रायं प्रकटयति—**ननु चेति**। अनुमेयस्य लिङ्गस्य दुर्बलतरत्वोक्त्यानुमापिकायाः श्रुतेर्दुर्बलत्वं सूचितम्। विनियोगात्प्राक्

सामर्थ्ये कल्प्यमाने, तत्कल्पिकायाः श्रुतेस्तदानीमविनियोजकत्वाच्छ्रुतिविरोधाभावेन प्रत्यक्षस्य सामर्थ्यंविनियोजकत्वापत्तेः कल्प्यस्य सामर्थ्यस्य प्रत्यक्षदुर्बलतरताऽऽपद्येत।

ननु विनियोगात्प्राक् तत्कल्पनास्तीत्याह—**सत्यमिति**। एवं विप्रकर्षवैपरीत्यनिरासेन बलाबलवैपरीत्ये निरस्ते, मन्त्रप्रकरणिनोश्च नैराकाङ्क्षयोक्त्योभयत्र विनियोगनिरासात्। समुच्चयपूर्वपक्षस्यापि निरासे सूचिते विनियोजकश्रुत्यपेक्षितस्य शक्तिकल्पनस्य पश्चाद्भावं सिद्धान्त्युक्तमाश्रित्य विप्रकर्षतुल्यत्वादन्यूनतां शङ्कते—**नन्विति**। श्लोकं व्याचष्टे—**सर्वथा हीति**। एवं विधविप्रकर्षसाम्यं बलाबलसाम्येनोपपादयतीति परिहरति—**सत्यमिति**। प्रश्नपूर्वं बलाबलसाम्येनोपपादयति—**कुत इति**। लिङ्गविनियोगाभिधानात् पूर्वं श्रुत्यनुमानात् विनियोगाभिधानस्य दूरत्वम्। श्रुतौ तु विनियोगोत्तरकालं शक्त्यनुमानं न विनियोगोक्तेर्दूरतेत्यर्थः। श्लोकं व्याचष्टे—**लिङ्गे हीति**। श्रुतौ विनियोगप्रत्ययस्योत्पत्तिविक्षेपाभावेऽपि प्रमितत्वनिर्वाहाय विक्षेपस्य लैङ्गिकेन विनियोगप्रमितिविक्षेपेण साम्यात्तुल्लबलतैव युक्तेत्याशङ्क्याह—**सहेति**। प्रस्थानप्राप्यत्वेन विनियोगस्य देशत्वोपचारात् सह विनियोगाख्यं देशं प्रस्थितयोः सतोः प्रमाणयोर्येन विक्षेपेण कृत्वा प्रमाणस्य चिरेण विनियोगप्राप्तिः सम्भवति, तस्यैव दौर्बल्यकरत्वाद्विनियोगप्रत्ययोत्पत्त्युत्तरकालं तस्य प्रमितिप्रयोजकनिर्दोषकारणजन्मत्वावगमे प्रमितित्वावश्यम्भावावगमात्। प्रमितित्वनिर्वाहावापवादकशक्तिनिरासार्थं शक्त्यनुमानविक्षेपेऽपि न विनियोगविपरीतता, नापि तुल्यो विप्रकर्ष इत्यर्थः।

प्रत्युपयुज्यतइति हि शब्दान्वयाध्याहारार्थं युगलान्तरेष्वेतमेव न्यायमतिदिशति—**एतेनेति**। प्रकरणाम्नातत्वस्य देवस्यत्वेत्यादेरसमवेतार्थस्य पदस्य प्रकरणाङ्गत्वे ज्ञाते कथमुपकरिष्यतीति सन्देहे यथा शक्नोतीत्यवधारिते, कथं शक्नोतीत्यपेक्षायां निर्वपामीत्यादिवत् प्रत्यक्षसामर्थ्याभावात् समवेतार्थनिर्वपामीत्यादिपदैकवाक्यतामनुमाय तदन्यथानुपपत्त्या प्रकरण्यपेक्षितोपकारजनसामर्थ्यंकल्पनपूर्वम् अनेन प्रकरणिनमुपकुर्यादिति श्रुतिमनुमाय, विनियोगावगते उपांशुयाजादिसन्निध्याम्नातस्य च दब्धिमन्त्रादेरुपांशुयाजादिकाङ्क्षादर्शनाच्छिष्याद्याकाङ्क्षायाश्च, स्वतो निराकाङ्क्षेऽप्युपाध्यायादावाकाङ्क्षोत्पादकत्वदर्शनेनास्या अप्युपांशुयाजादावाकाङ्क्षोत्पादकत्वावगते उपांशुयाजादेर्दब्धिमन्त्राद्याकाङ्क्षामनुमाय तदेकवाक्यत्वसामर्थ्यश्रुत्यनुमानपूर्वं विनियोगावगतेः, आराध्वर्यवादिसमाख्यातस्य च कर्मणोऽध्वर्य्वादिसम्बन्धदर्शनात्तत्सन्निधिमनुमाय तदाकाङ्क्षयैकवाक्यत्वसामर्थ्यश्रुतिकल्पनपूर्वं विनियोगावगतेः परस्य वाक्यादेः पूर्वं लिङ्गाद्यननुमाय विनियोगोक्तितैव (दर्शनेन निर्वापादिविशेषणीभूतस्य स्वार्थाभिधानद्वारा स्वार्थे विशिष्टनिर्वापादिप्रतिपादनसामर्थ्यमनुमायानेनेन निर्वापादि प्रकाशयेदिति श्रुतिकल्पनद्वारा विनियोगावगतेः प्रयाजादेश्च प्रकरणाम्नातस्मोभयाकाङ्क्षादर्शनात् प्रकरणिना सहैकवाक्यतैव[1]) नोपपद्यते।

---

१. अयं पा० १ ना०।

पूर्वेण तु लिङ्गादिना वाच्याद्यनुमायैव पूर्वं श्रुत्याद्यनुमानेन विनियोगे कृते प्रत्यक्ष-दृष्टस्य सामर्थ्यादनेकवाक्यत्वाद्यन्तरेण प्रमित्यनिर्वाहान्निर्वापार्थं परस्य वाच्यादेर्नान्तरेणैक-वाक्यत्वादिलिङ्गाद्युपपद्यते इत्येवं, नान्तरीयकत्वेन सद्भावमात्रं विनियोगहेतुत्वाद्यपेक्ष्या इति बलाबलवैपरीत्यनिरासार्थं नान्तरीयकतोक्ता एकवाक्यत्वादिभिर्विना सामर्थ्यादेर्दृष्ट-मात्रस्याप्रमितत्वेन श्रुत्यादिकल्पनाद्वारा विनियोजकत्वायोगमाशङ्क्य, अप्रमितस्यापि गृहाभावादेर्निर्दोषकारणजनितत्वाख्यप्रमितिप्रयोजकयुक्तजातविषयत्वमात्रेण बहिर्भावादि-कल्पकत्ववत्सामर्थ्यादेरपि प्रमितिप्रयोजकत्वाद्युक्तज्ञानविषयत्वमात्रेणैकवाक्यत्वादिभिर्विनाऽ-नुपपद्यमानस्यैकवाक्यत्वादिकल्पकत्ववद् श्रुत्यादिभिर्विनानुपपद्यमानत्वात् श्रुत्यादिकल्प-कत्वस्याप्युपपत्तिसूचनायेति—**इत्युक्तम्**। सर्वलौकिकानामेव प्रतिपत्तिः सर्वस्वसंवेद्येत्यर्थः। वाक्यादीनामपि श्रुतिकल्पनमात्रेण लिङ्गवद्विनियोजकत्वोपपत्तेर्लिङ्गादिकल्पनानपेक्ष-त्वाच्छ्रुतितः सर्वेषां दौर्बल्येऽपि अन्योन्यं तुल्यबलतैव युक्तेत्याशङ्कते—**आहेति**। विनियोगसिद्ध्यै विनियोजकां श्रुतिं कल्पयितुं प्रवृत्तैर्वाक्यादिभिरसमर्थंविनियोगायोगेनाङ्गि-प्रतिपादकशब्दैकवाक्यतां च विनाङ्गाङ्ग्यन्वयायोगेनैकवाक्यतामकल्पयित्वा, एकवाक्य-तायाः कल्पयितुमशक्यत्वात्, समाख्यायाश्चाकाङ्क्षां विनैकवाक्यत्वायोगे साकाङ्क्षत्वम-कल्पयित्वा एकवाक्यतःकल्पयितुमशक्यत्वात् समाख्यायाश्चाकाङ्क्षां कल्पयितुं प्रवृत्तवाक्य-संहितालम्बनेन सन्निधिमकल्पयित्वा कल्पयितुमशक्यत्वाल्लिङ्गादीनां यथाक्रममेकादिभिः श्रुतिसमर्थैकवाक्यत्वाकाङ्क्षासन्निध्याख्यैर्वस्तुभिर्व्यवधिकारितं विनियोगं प्रति विप्रकर्ष-वैषम्यं बलाबलापादकमिति परिहरति—**तदिति**।

लिङ्गवाक्ययोर्मध्ये तावद् वाक्यस्यार्थविप्रकर्षमुपपादयितुं प्रतिजानाति—**श्रुतिमात्रेति**। प्रश्नपूर्वमुपपादयति—**कथमिति**। असमवेतार्थवाचिनाम्पदानां समवेतार्थवाचिना पदेनैक-वाक्यत्वात्समवेतार्थाभिधानशक्तिं कल्पयित्वा श्रुतिः कल्प्यतइत्यर्थः। श्लोकं व्याचष्टे। **सर्वत्र हीति**। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां, पूष्णोहस्ताभ्यामग्नये जुष्टंनिर्व-पामीतिमन्त्रपदानां देवादिविशिष्टनिर्वापप्रकाशनेन प्रयोगार्हत्वोक्त्या सकलस्यैव मन्त्रस्य प्रयोगार्हत्वाभिधानेनैकदेशस्याप्रयोज्यत्वसूचनात्, ततः शब्देन च प्रयोगार्हत्वं प्रतिपन्नानां विनियोज्यत्वाभिधानाद्वाक्यसहकृतेन लिङ्गेन सकलमन्त्रविषयश्रुत्यनुमानं सूचितम्।

एवं तर्हि स्योनन्ते तस्मिन् सीदेत्यनयोरपि तच्छब्दयोगावगतैकवाक्यत्वानु-पपत्त्या तस्मिन् सीदेत्यस्यापि सदनकरणे 'स्योनन्त' इत्यस्यापि च पुरोडाशसदनेन सामर्थ्यकल्पनोपपत्तेर्लिङ्गे बाधो न युज्येतेत्याशङ्क्याह—**तच्चेति**। द्वयोः सम-वेतार्थत्वसम्भवे भेदेन विनियोगाय प्रस्थानाद्विरोधावगतेर्युक्तो बाध इत्याशयः। प्रस्थित इति भावोत्पन्नया निष्ठया प्रस्थानमुक्तम्। लिङ्गेनैकत्र प्राप्तवतो वाक्येनान्यत्र नेतुमशक्यतां, लिङ्गाच्च प्राप्नुवतः स्वप्रकाश्येऽर्थे तेभ्यो वाक्यादागच्छद्भ्योऽवकाशदातृतां प्रश्नपूर्वमुपपादयितुं वाक्याल्लिङ्गस्यार्थसन्निकर्षमाह—**कथमिति**। केवलस्य पदस्याप्रयोज्य-त्वात् वाक्यसहकृतेन लिङ्गेन सकलस्यैव मन्त्रस्य विनियोगावगतेः तच्छब्दप्रयोगेण च

स्योनादेः सुमनस्यमानान्तस्यैकमन्त्रस्यावगमादकेनैव सामर्थ्येन तावतः पदसमूहस्य विनियोगसिद्धेः सामर्थ्यान्तरकल्पनाऽनापत्तिरित्याशङ्कां निरस्यन् श्लोकं व्याचष्टे—**समुदायो हीति**। कल्पयाम्यन्तस्य स्वार्थविशिष्टोपस्तरणप्रकाशेन नैराकाङ्क्षयात् तत्प्रकाशितस्योपस्तरणसंस्कृतस्य सदनशब्दोक्तस्य स्थानस्य तच्छब्देन ग्रहणात् सादनत्वविशेषणत्वेऽपि उपस्तरणविशेषणेन कल्पयाम्यन्तानां सादनविशेषणत्वानुपपत्तेः श्रुत्योपस्तरणविनियोगानपेक्षकल्पयाम्यन्तोऽवयवः सादने विनियोक्तुमशक्यः। तस्मिन्सीदेत्यादेश्च स्वार्थविशिष्टसादनप्रकाशेन नैराकाङ्क्षयात् तत्प्रकाशितस्य सादनस्योपस्तरणक्रियाविशेषणत्वेऽपि सादनविशेषणानामुपस्तीर्णस्थानादीनामुपस्तरणक्रियाविशेषणत्वानुपपत्तेः सादनविनियोगानपेक्षस्तस्मिन्नित्यादिरवयवो नोपस्तरणे विनियोक्तुं शक्य इत्याशङ्कानिरासाशयः।

समुदायविनियोगस्यावयवविनियोगापेक्षत्वात् शक्त्यन्तरकल्पनापेक्षत्वेऽपि एकवाक्यतयैव शक्तिद्वयस्यापि कल्प्यत्वात् विप्रकर्षसाम्यशङ्कां निराकर्त्तुम्, अवयवस्यैकवाक्यत्वमात्रमन्योन्यानपेक्षोपस्तरणसादनरूपभिन्नार्थाभिधानशक्त्यवगमात् प्राक्शब्दलोचनया प्रत्यक्षवच्छीघ्रं प्रतीयते, न उपस्तरणविशिष्टसादनरूपस्य साधनविशिष्टोपस्तरणरूपस्य चैकार्थस्याभिधाने शक्तिरन्योन्यानपेक्षार्थाभिधानशक्तिस्तु स्वविशेषणविशिष्टैकार्थप्रत्यायनेन प्रागेव सिद्धेत्युत्तरश्लोकव्याख्यार्थं तत्र समुदायेत्यादिना लिङ्गाद्वाक्यस्य विप्रकर्षोक्तिः।

पूर्वबाधसिद्ध्यर्थं प्रकरणे मन्त्राम्नानस्य नैराकाङ्क्षयमुक्तं साधयितुं, प्रकाशकयोर्मन्त्रयोर्लैङ्गिकेन विनियोगेन नैराकाङ्क्षयमुक्त्वा, प्राकरणिकप्रकाशनाख्योपकारनिवृत्त्या प्रकरणिनोऽपि नैराकाङ्क्षयं, प्रकाश्ययोरर्थयोर्नैराकाङ्क्षयोक्त्या वक्तुं कल्पयाम्यन्तमन्त्रावरुद्धत्वात् उपस्तरणस्य तस्मिन्नित्यादिमन्त्राग्राह्यत्वे तस्मिन्नित्यादिमन्त्रावरुद्धत्वाच्च सादनस्य कल्पयाम्यन्तमन्त्राग्राहकत्वेऽभिहिते, सादनस्योपस्तरणस्य सादनविशिष्टतया प्रकाश्यत्वात् कल्पयाम्यन्तमन्त्रमात्रेण तथा प्रकाशयितुमशक्यत्वात्। उत्तरमन्त्रग्राहितामुपस्तरणस्य वा सादनं प्रत्युपसर्जनत्वेन सादनस्योपस्तरणविशिष्टतया प्रकाश्यत्वात् तस्मिन्नित्यादिमन्त्रमात्रेण च तथा प्रकाशनाशक्तेः पूर्वमन्त्रग्राहितामाशङ्क्य—**स्वप्राधान्ये चेत्युक्तम्**। अतश्च लिङ्गवाक्ययोस्तावत् बलाबलं सिद्धमित्याह—**तस्मादिति**।

लिङ्गबलेन दृश्यमानैकवाक्यत्वबाधे लिङ्गविनियोज्यस्य पदस्य यावद्भिः पदैर्विना नैराकाङ्क्षयं न सम्भवति तावता लिङ्गापेक्षितेन वाक्येन विनियोगे व्यतिरिक्तानामसमवेतार्थवाचित्वात्पृथक्प्रयोगानर्हाणामपि लिङ्गेन बाधादविनियोगापत्तेः, शिष्टानि त्वसमवेतार्थाभिधायित्यादिवार्त्तिकेन देवस्य त्वेत्यादीनां निर्वापे विनियोगोक्तिर्विरुद्धेत्याशङ्कते—**नन्विति**। भिन्नप्रयोजनत्वे सति याज्यानुवाक्यादिवदेकवाक्यत्वाभावापत्तेर्भिन्नप्रयोजनकत्वायोगेन, न समुच्चयः सम्भवतीत्युक्ते, यष्टृतुज्ञाप्रकाशनं चेह प्रयोजनान्तरं शङ्कनीयम्। तस्य च नवमे निराकरिष्यमाणत्वेनायोगात् प्रयोजनान्तरशङ्काप्रयुक्तोत्पत्त्याशयायावश्यम्—**चेत्युक्तम्**। लिङ्गविनियोज्यस्य पदस्य देवस्यत्वेत्यादिपदाद्देवश्यत्वेत्यादीनां लिङ्गाविनि-

योज्याभिर्निर्वपामिपदैकवाक्यत्वं विनाऽनर्थक्यापत्तेस्तत्परिहाराय वाक्यस्याप्यनुग्राह्यत्वात् निर्वापविनियोगोक्तिरविरुद्धेत्याशयेन परिहरति—**अत्रेति**। आगत्युपपादनपूर्वं श्लोकं व्याचष्टे—**यानि हीति**। क्लृप्तनिर्वापान्वयोऽग्नये जुष्टमित्यादिभिर्निराकाङ्क्षीकृतोऽपि निर्वापो देवस्येत्यादीनां साकाङ्क्षत्वात् उत्पन्नपुनराकाङ्क्षः सन् देवस्येत्यादिपदप्रकाश्यत्वं प्रतिपद्यत इत्युक्ते, निराकाङ्क्षस्यान्योन्याकाङ्क्षोपपत्त्युपपादनार्थं प्रकरणप्राप्तैर्धर्मैर्निराकाङ्क्षीकृतानामप्युपांशुयाजादीनां निराकाङ्क्षफलवत्सन्निधिलक्षणेन क्रमेणाकाङ्क्षामुत्पाद्याऽनुमन्त्रणादिधर्मप्राप्ति, प्रयाजादीनां च प्रकृत्यन्वयेन निराकाङ्क्षीकृतानामपि विकृत्याकाङ्क्षयोत्पन्नाकाङ्क्षाणां विकृतिगमनं दृष्टान्तयित्वाऽत्यन्तसाम्यार्थं मन्त्रशेषस्यैकमन्त्रावयवान्वयेन निराकाङ्क्षीकृतस्यापि मन्त्रान्तरव्यवायाकाङ्क्षामुत्पाद्य मन्त्रान्तरान्वयं दृष्टान्तयितुं, यथाक्लृप्तावसकृदुच्चारितमन्त्रशेषयुक्तायां विचारितायां, सकृदुच्चारितमन्त्रशेषत्वात्प्रतियोगित्वेनानुषङ्गाधिकरणे प्रसक्ते मन्त्रशेषार्थो यथैकमन्त्रावयवान्वितशेषप्रकाशितत्वेन निराकाङ्क्षीकृतोऽपि मन्त्रान्तरावयवानां साकाङ्क्षत्वात्पुनरुत्पन्नाकाङ्क्षः सन् पुनरुच्चारितपूर्वमन्त्रशेषप्रकाशत्वं प्रतिपद्यत इति व्याख्यातम्। इत्येवं यथाक्लृप्ताविति पाठे।

यथा सोमभक्षणं वस्तुमङ्गलतादिपदैः प्रकाशने तु निराकाङ्क्षीकृतमपि मन्द्रादीनां तृप्यत्वन्तानां पदानाम् अनुष्ठेयतृप्तिप्रकाशने कर्मानङ्गत्वापत्तेः भक्षणावयवी भूततृप्तिप्रकाशनोऽर्थत्वेन साकाङ्क्षत्वात्पुनरुत्पन्नाकाङ्क्षः सन्मन्द्रादिप्रकाश्यत्वं प्रतिपद्यतइति व्याख्यातमित्येवं तृतीयं दृष्टान्तमुक्त्वा विप्रकृष्टप्राप्तानामपि देवस्येत्यादीनां निर्वापसम्बन्धोपपत्तेः निर्वापविनियोगविरोधमुपसंहृत्य, पदान्तराणि यत्रार्थमिति श्लोकवाक्यं व्याख्यातुम्—**येषां त्वित्युक्तम्**। देवस्येत्यादिपदानामानर्थक्यापत्तावपि लिङ्गेन बाधो निर्वापे विनियोगमाशङ्क्याह—**सर्वेषामेवेति**। विधिना सामान्यतः समीहिताङ्गतयाऽकाङ्क्षितस्य विशेषमात्रबोधे श्रुत्यादीनां व्यापारात्, अनर्थक्यापत्तौ च समीहिताङ्गत्वायोगान्न श्रुत्यादीनां व्यापारः सम्भवतीत्याशयः।

क्वेष्यतइत्यपेक्षायां नवमाद्यसिद्धप्रकरणेन श्रुतिबाधमुदाहरति—**तद्यथेति**। श्रुत्या स्वरूपेण शेषित्वं प्राप्तं, प्रकरणप्राप्तेन प्रकृतापूर्वसाधनीभूतानि व्रीह्यादीनि समीहिततया शेषित्वं बाधित्वा प्रकरणलभ्यं यदपूर्वसाधनत्वं, तत्कृतः प्रोक्षणादिसम्बन्धो नवमाद्ये भविष्यतीत्यर्थः। देवस्येत्यादिनां निर्वापाङ्गत्वविरोधापत्तेर्लिङ्गस्य वाक्याद् बलीयस्त्वायोगाशङ्कायाः परिहारमुपसंहरति—**तेनेति**। येन कारणेन लिङ्गस्य वाक्याद् बलीयस्त्वेऽपि नानिष्टापत्तिस्तेनेत्यर्थः। लिङ्गबलीयस्त्वानभ्युपगमे एवेत्येकोपक्रमोपसंहारवशेनैकवाक्यत्वस्य भक्षानुवाकगतस्य लिङ्गेन बाधो भक्षानुवाकाधिकरणोक्तो विरुध्येतेति सूचयितुमाह—**तथा चेति**।

वाक्यात्प्रकरणस्यार्थं विप्रकर्षं प्रतिज्ञापूर्वकमुपपादयितुमाह—**वाक्येति**। अङ्गाङ्गिसम्बन्धत्वाभावेऽपि उभयाकाङ्क्षामात्रेणाऽङ्गाङ्गचन्वयायोगावगतेराकाङ्क्षातोऽङ्गाङ्गिवाक्यरूपाणां शब्दानां सङ्गतिरनुमातव्येत्युक्तं श्लोकं व्याचष्टे—**प्रकरणे हीति**। वाक्या-

नामित्यनेन प्रकारणेऽङ्गाङ्गिवाक्यानां प्रत्यक्षा सङ्गतिर्नास्तीत्यर्थः सूचितः वाक्येपदानां सङ्गतिः प्रत्यक्षेत्यर्थः विप्रकृष्टत्वव्याख्यार्थम्—**ततश्चेत्युक्तम्** । यावदितरत्र प्रकरणे सामर्थ्येन श्रुतिः कल्प्यतइत्यनुषक्तेन पदेन कल्प्यमानाया वर्त्तमानत्वोक्तेस्तावदितरत्र वाक्ये श्रुत्यङ्गाभिहित इत्यनेन च विनियोगाभिधानस्य भूतत्वोक्तेः प्राकरिणिकरणस्यार्थविप्रकर्षं फलेनोपसंहरति—**तस्मादिति** ।

प्रकरणात्क्रमस्यार्थविप्रकर्षं प्रतिजानति—**तथेति** । प्रश्नपूर्वमुपपादयति—**कथमिति** । प्रकरणमाकाङ्क्षातः प्रकृतिश्रुतेरर्थं विनियोगं प्रति गच्छति, क्रमस्य तु विनियोजकत्वसिद्धयर्था श्रुतिराकाङ्क्षां विना गौरश्व इत्यादेः सन्निधानेऽप्यन्वयादर्शनात् आकाङ्क्षामपि इतराकाङ्क्षातो यथैकवाक्यत्वसामर्थ्यकल्पनपरम्परया कल्पयितुमारभ्यते इत्यर्थः । दब्धिमन्त्रस्यानिर्ज्ञातपरिमाणोपायत्वे त्वनिवृत्ताकाङ्क्षतयोपांशुयाजे साकाङ्क्षे क्रमेण विनियोगाभ्युपगमात् क्रमेऽप्युभयाकाङ्क्षायाः प्रत्यक्षत्वात् अङ्गाकाङ्क्ष्याङ्गयाकाङ्क्षाकल्पनोक्तिरयुक्तेत्याशङ्क्याह—**क्रमो नामेति** । मन्त्रस्याक्रियात्वेनानितिकर्त्तव्यतारूपतया इतिकर्त्तव्यताकाङ्क्षेणोपांशुयाजेनाभिधानक्रियानपेक्षितस्याकाङ्क्षितुमशक्यत्वात् दब्धिमन्त्रस्यापि ज्ञातलिङ्गत्वेनाभिधानक्रियाद्वाराकाङ्क्षितुमशक्यत्वान्नोपांशुयाजस्य स्वतो मन्त्राकाङ्क्षास्तीत्याशयः । निरपेक्षाणां सतां प्रधानानामनुष्ठानदेशतः, पाठदेशतो वाङ्गानां सान्निध्यमात्रं क्रम इत्यनुष्ठानतोक्त्या पाठस्याप्युपलक्षणादित्यर्थः । उपांशुयाजस्य दब्धिमन्त्रानपेक्षत्वसाकाङ्क्षत्वेऽनिष्ठापादनेनोपपादयितुमाह—**यदि त्विति** । निराकाङ्क्षसन्निधेः क्रमत्वे साकाङ्क्षसन्निध्याख्येन प्रकरणेन सह क्रमस्य क्वचित् समवायायोगान्न क्वचित्क्रमप्रकरणविरोधे प्रकरणं युक्तमित्याशङ्क्याह—**अत्र चेति** । विकृतित्वेन प्राकृतैरङ्गैर्निराकाङ्क्षीकरणात् क्रमस्थमहाप्रकरणोपनिपाताच्च प्रकरणसमवायस्तु सम्भवतीत्याशयः ।

दैक्षस्यापि तर्हि ज्योतिष्टोमिकमहाप्रकरणोपनिपाताद्दर्शपूर्णमासा विकृतित्वाच्चोदाहरणत्वोपपत्तेः, पशुधर्माणां क्रमप्राप्ते दैक्षाङ्गत्वं प्रकरणेन बाध्येतेत्याशङ्क्य, सन्निपत्त्योपकारिणां प्रकरणाविनियोज्यत्वाभावादनुदाहरणत्वसूचनार्थम्—**प्रायेणेत्युक्तम्** ।

राजसूयादिमहाप्रकरणान्तर्गतास्वभिषेचनाद्यासु ज्योतिष्टोमादिविकृतिषु शौनः शेपाख्यानादीनां माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते इत्यादिना प्राकृतमाहेन्द्रस्तोत्राद्यङ्गसबन्धित्वेन विधानात् माहेन्द्रस्तोत्राद्यङ्गत्वावगतेर्निरङ्गस्य माहेन्द्रस्तोत्रादेर्वैगुण्यादनिष्टमुपकारं प्रकृतौ शौनः शेपाख्यानाद्यनपेक्षमपि विकृतौ तद्रहितस्यासाधनत्वावगमादतिदिश्यमानानाम्माहेन्द्रस्तोत्रमुपदिश्यमानाङ्गवैशिष्ट्यं विनातिदेशापर्यवसानावगतेर्विकृतिकथम्भावाकाङ्क्षायामपिनिवृत्तायामेव शौनःशेपाख्यानाद्युपनिपातादवान्तरप्रकरणेन माहेन्द्रस्तोत्रादिद्वाराऽभिषेचनीयाङ्गत्वप्रकरणबाधमहाप्रकवणान्तर्गतानामपि विकृतीनां नोदाहरणता युक्तेति, 'मध्यस्थं यस्य तन्मध्ये' इति चतुर्थधिकरणपूर्वपक्षन्यायेनाशङ्क्य, माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यतेइत्यस्याभिषेचनीयाङ्गभूतमाहेन्द्रस्तोत्रदेशेऽभिषेकान्तः शौनः शेपाख्यानमभिषेचनीयप्राकृताङ्गानुवादेन विधानादभिषेचनीयकथम्भावग्राह्यत्वाशङ्कां निराकर्तुं, यत्प्रा-

कृतानुवादेनान्यदनुष्ठानविधानार्थत्वेनानुत्पत्तिविधेयत्वादुत्पत्तिविधिवेलायामेव तत्प्रयोजनापेक्षणादभिषेचनीयात् । बहिरुत्पन्नान्महाप्रकरणात् राजसूयाङ्गत्वावगत्या च कृतार्थत्वेन माहेन्द्रस्तोत्रसंयोगस्य देशार्थत्वोपपत्तेस्तद्द्वाराभिषेचनीयाङ्गत्वकल्पनायोगात् क्रमेणैवाभिषेचनीयाङ्गता कल्पनीयेतिऽसर्वासां वा समत्वाच्चोदनातः स्यान्न हि प्रकरणं तद्देशार्थमुच्यते तस्य मध्य ४४ इति तदीयसिद्धान्तन्यायेनोदाहरणसमर्थनं सूचयितुमाह—तासु हीति । शौनः शेपाख्यादीनामभिषेचनीयप्राकृताङ्गानुवादेन विधानादभिषेचनीयकथम्भावग्राह्यत्वाशङ्कां निराकर्तुं यत्प्राकृताङ्गानुवादेनोत्पन्नमिति वाच्ये प्राकृतानुयाजोद्देशविहितपृषदाज्यवद्विधानार्थानूदितप्राकृताङ्गानुवादेनाप्युत्पन्नस्याङ्गस्य सन्देशाभिव्यक्तकथम्भावग्राह्यत्वसूचनार्थं प्राकृताङ्गमध्यपतितत्वेनेत्युक्ते प्राकृताङ्गगुणविधानतः प्रागतिदेशापर्यवसानात्कथम्भावानिवृत्त्यभ्युपगमेऽपि तिष्ठन्तं पशुं प्रयजन्तीति प्राकृताङ्गापकर्षविधानात्प्रागुत्पन्नानानुपाकरणादीनामपि दैक्षप्रकरणग्राह्यत्वापत्तेः क्रमविनियोज्यत्वोक्तिर्विरुध्येतेत्याशङ्क्य, क्लृप्तोपकारप्राकृताङ्गग्रहणे प्रवृत्तस्य कथम्भावस्य स्वतोऽक्लृप्तोपकातापूर्वाङ्गग्राहित्वायोगात्प्राकृताङ्गान्वयस्य चाऽपूर्वाङ्गग्रहणहेतोः प्राकृताङ्गगुणविधितः पुरस्ताद्वावस्थितेष्वङ्गेषु अभावात् प्रकरणग्राह्यत्वापत्तिसूचनार्थं पुरस्तादित्युक्तम् । एवमन्योन्याकाङ्क्षायाः प्रत्यक्षत्वशङ्कां, क्रमप्रकरणविरोधोदाहरणायोगाशङ्कां च निरस्यन् प्रकरणाक्रमस्यार्थविप्रकर्षं दर्शयितुमारभते—तथेति । क्रमसमाख्ययोर्मध्ये क्रमे सम्बन्धार्थान्योन्याभिमुख्यरूपेण सन्निधानाख्यं परस्परपर्युपस्थापनं वेदरचितत्वात् प्रत्यक्षसमाख्यायामप्रत्यक्षमिति, विप्रकर्षविद्ध्यर्थमुक्ते, अपेक्षां विना सम्बन्धायोगात् समाख्योक्तसम्बन्धमात्रेणापेक्षासिद्धेर्विप्रकर्षायोगमाशङ्क्य, संशब्दस्यैकीभावार्थत्वात् सम्बन्धशब्दस्य च नियमार्थत्वात् अवयवव्युत्पत्त्याऽऽलोचनया नियम्यते । यदेकस्य सम्बन्धास्यार्थशब्दयोरित्याद्युदाहरणालोचनया च सम्बन्धस्यैकनियमरूपत्वावगतेः सम्बन्धिनोः केन चिदभिन्नेन सम्बन्धहेतुना विना सम्बन्धायोगादसिद्धात्मलाभेन च सम्बन्धिनाकाङ्क्षायाः कल्पयितुमशक्यत्वादेकत्र संनिधानाख्यसम्बन्धिनोः सन्निधानं सम्बन्धहेतुकत्वेनावश्यं कल्पनीयम् । पौरोडाशिकसमाख्यातं शुन्धध्वमिति मन्त्रस्य पुरोडाशपात्रशुन्धनेन सह न किञ्चित्पाठतो अनुष्ठानतो वा देशैक्यं वेदेन विरचितमस्ति, येन मन्त्रपुरोडाशपात्रशुन्धनेन सह तन्निमित्तसम्बन्धनार्थं सम्बन्धिनोरन्योन्याभिमुख्यं स्यात्, अभिमुख्यानपेक्षं च भवदपि न विनियोगायाऽलमिति सर्वत्र हीत्यादिनोक्तम् । समाख्या पुनः प्रत्यक्षमेव सम्बन्धं वदन्तीति पूर्वपक्षवार्त्तिकोक्तं समाख्यायाः श्रुतितुल्यत्वमनुभाषते—ननु चेति । दूषयति—नैतदिति । श्रुत्यभिधेयादङ्गाङ्गित्वविशेषरूपात्सम्बन्धात्सामाख्यानिकस्य सम्बन्धस्य सामान्यरूपात्मनोक्त्या श्रुतितुल्यत्वे निरस्तेऽप्यतिशयार्थं कल्प्यतोक्त्याभिधानं निरस्तम् । लौकिक्याः समाख्याया वैदिकसम्बन्धप्रतिपादने विप्रकर्षसूचनापूर्वं श्लोकं व्याचष्टे—अर्थानामिति । यापि वैदिकी समाख्यानवगतसम्बन्धार्थप्रतिपादने प्रवर्त्तते, सापि तावन्नाङ्गाङ्गित्वं प्रतिपादयतीति वदता विप्रकर्षो लौकिक्याः सूचितम् । येन केनचिदित्यनेन सामान्यरूप-

तयाऽन्यत्वं व्याख्यातम् । सर्वत्र हीति वार्त्तिकेनाङ्गाङ्गिसम्बन्धस्यैव सन्निध्यपेक्षोक्तेति, भ्रान्त्या समाख्याकल्पितस्य सम्बन्धमात्रस्य सन्निधिकल्पनहेतुकविप्रकर्षाभावशङ्कां निराकर्तुमाह—**सम्बन्धमात्रस्य चेति** । यदेतत्किञ्चिदभिन्नं सम्बन्धिनामस्तीत्यवगम इत्यध्याहारेण योज्यम् । सम्बन्धस्य सन्निध्युक्तेः क्रमसमाख्याबलसिद्धयर्थत्वं दर्शयितुमाह—**ततश्चेति** । विप्रकर्षमेव प्रपञ्चयति—**समाख्या हीति** । सूत्रार्थमुपसंहरति—**तस्मादिति** । एतदेव द्रढयितुं वृद्धानाम् श्लोकपञ्चकं पठति—**आह चेति** । अतश्च यत्पूर्वपक्षवार्त्तिके विरोधोऽपि बाधायोगोक्त्यर्थं क्वचिद्यस्य प्रमाणत्वमित्युक्तम् । तदयुक्तमित्याह—**तस्मादिति** ।

यदपि नित्यं च प्रमाणाभासस्यैव बाध इत्युक्तम् । तदप्यनुभाषणपूर्वं परिहरति—**यत्त्विति** । यदपि श्रुत्यादिषट्कस्य समस्तेत्यादिवार्त्तिकेन विषयान्तरसञ्चाराभावेन लिङ्गादीनां क्वचित्प्रमाणाभासत्वायोगात् बाध्यत्वं न युक्तमित्युक्तम् । तदपि दूषयितुं प्रश्नपूर्वम्—प्रमाणाभासतामुपपादयति—**कथमिति** । श्लोकं व्याचष्टे—**न हीति** ।

श्रौतविनियोगान्यथानुपपत्त्या यज्ञसाधनत्वगुणयोगेनेन्द्रइत्यर्थानुसाराद्वेन्द्रशब्दस्य गार्हपत्यपरत्वावगतेरिन्द्रोपस्थानस्य शक्यत्वेन लिङ्गाविषयत्वात् 'स्योनन्ते सदनं तस्मिन् सीदेत्यनयोश्च लिङ्गाद्भिन्नवाक्यत्वावगतेरनन्यत्वेन वाक्यविषयत्वात् पौर्णमासीदेवतापदशेषाणां च वाक्यादमावास्यादेवतापदैकवाक्यत्वाभावावगतेरामावास्यप्रयोगेणेतिकर्त्तव्यत्वेनानाङ्क्षणादमावस्यादेवतापदशेषाणां पौर्णमासीप्रयोगेणानाकाङ्क्षणात् प्रकरणविषयत्वानुपपत्तेः' शौनःशेपाख्यादीनां च प्रकरणात् प्रकृतसर्वसाधारण्यावगतेरभिषेचनीयमात्रसन्निध्यभावेन क्रमाविषयत्वात् शुन्धनमन्त्रस्य च क्रमात् सान्नाय्यपात्रशुन्धनार्थत्वावगतेः पौरोडाशिकसमाख्याया भूम्ना दर्शपूर्णमासकाण्डविषयत्वावगमेन पुरोडाशमात्रकाण्डपरसमाख्यानाविषयत्वाल्लिङ्गादीनां विषयान्तरसञ्चारो विषयापहारोक्त्या बलाबलवद् बाधिते विषये व्यापाराभावसिद्धेः सूचितः । बाधहेतुकत्वाद्व्यापाराभावस्य बाधात् प्राक् व्यापारोपक्रमे सत्यपि बाधा द्विषयान्तरसञ्चारावगमोत्तरकालसमासव्यापारत्वात् प्रमाणाभासत्वन्यथाप्रमाणाभासतामुपपादयितुमाह—**अथ वेति** । प्रमाणाभासतामेवोपसंहरति—**तेनेति** । यदपि 'न च तदुत्थापितं ज्ञानमित्यादिवार्त्तिकेन बाधप्रकारासम्भवात बाधो न सम्भवतीत्युक्तम् । तदपि उत्पत्तिप्रतिबन्धाख्यबाधाभ्युपगमेन परिहरति—**अनुत्पन्नमेव चेति** । व्यापारोक्रमप्रतिबन्धसूचनायैवकारः, व्यापारोपक्रमपक्षे आन्तरालिकश्रुतिलिङ्गादिकल्परूपज्ञानमिथ्यात्वकल्पनायेत्थम्भूतकल्पनार्थं तथा तृतीया बाधप्रकारतोक्ता । शेषशेषिज्ञान तु पक्षद्वयेऽप्यनुत्पन्नमेव बाध्यते वस्तुकथनार्थं चेह प्रकारान्तरस्यानाशङ्कनीयतोक्ता । न तूपपादनासामर्थ्यादिति सूचयितुं योऽप्यनुमानादीनां प्रत्यक्षदिभिरुत्पन्नबाधो बाधग्रन्थे वक्ष्यते । तमपि तत्रैवोपपादयिष्याम इत्याह—**योऽपि चेति** । एकैकस्य भाष्ये बाध्यत्वोक्तेः सूत्रे परशब्दस्य अनन्तरपदमात्रविषयभ्रान्ति निराकर्तुं व्यवहितपराणामपि बाध्यत्वस्य प्रपञ्चनीयतमाह—**एवमिति** ।

श्रुतेर्वाक्यविरोधं सोदाहरणं बलाबलं प्रपञ्चयति—**तथेति**। आनन्तर्यसमानाधिकरण्यावगतात् वाक्यसामर्थ्यादिकहायन्याद्यङ्गत्वेनारुणादि प्राप्नुवदित्यर्थः। षष्ठीश्रुतेः प्रकरणविरोधमुदाहरति—**श्रुतीति**। षष्ठीश्रुतिसंयोगाविशेषेऽप्यनुवचनानामेव प्रकरणविरोधो न द्वादशत्वस्येति परमतं दूषयितुमुपन्यस्यति **अनुवचनानाञ्चेति**। एवकारार्थे चकारः। दूषयति—**न त्विति**।

स्वविशेषणवैशिष्ट्यं विना वैगुण्यापत्तेरितिकर्त्तव्यत्वायोगेनाभिन्नेऽतिदिश्यमानानामुपसदामुपदिश्यमानद्वादशत्ववैशिष्ट्यात् प्रागतिदेशापर्यवसानादहीनकथम्भावग्राह्यताऽविरुद्धेत्याशयः। विप्रकर्षं दर्शयति—**इहापि चेति**। ज्योतिष्टोमे विध्यन्तदानाय कयाचिद्विकृत्या न दीयतइति व्युत्पत्त्याऽहीनश्रुत्युपपत्तेर्नेदं श्रुतिविरोधोदाहरणं युक्तमित्याशङ्क्याह—**नैव हीति**। श्रुतेः प्रश्नपूर्वं क्रमविरोधमुदाहरति—**श्रुतीति**। रशना, तद्धर्माश्च दर्भमय्यादयः, क्रमादग्नीषोमीययागाङ्गतया यूपं परिव्यतीति द्वितीयाश्रुत्या रशनाया यूपाङ्गत्वेऽवगते दर्भमयी रशना भवतीत्यादौ रशनाश्रुत्या रशनात्वैकार्थसमवायियूपाङ्गत्वं लक्षयित्वा, तदुद्देशेन दर्भमयीत्वादिविधानात् तद्धर्मश्चास्याङ्गमित्यर्थः। यूपस्याग्नीषोमीयाङ्गत्वात् स्वधर्मिकाया रशनाया यूपाङ्गत्वेऽपि ज्योतिष्टोमाङ्कक्रयाङ्गस्यारुण्यस्य ज्योतिष्टोमाङ्गवदग्नीषोमीयाङ्गत्वोपपत्तेरविरोधमाशङ्क्याऽलौकिकत्वेन यूपस्य स्वरूपोत्पत्त्यर्थमेव रशनादिधर्मान्वयोपपत्तेः क्रयवत् प्रकृतापूर्वसाधनत्वानपेक्षणात् यूपस्वरूपे विधीयमानानां रशनादीनामग्नीषोयीयाङ्गत्वानुपपत्तेः, यूपस्य च पशुयागप्रयोगात् बहिरुत्पन्नत्वेनाऽगृह्यमाणविशेषतया सर्वपशुयागसाधारण्यात् रशनादीनां यूपाङ्गत्वे सवनीयस्याप्राकृतत्वेऽपि परिव्याणान्तरे साधारण्यावगतेरग्नीषोमीयाङ्त्वसाधारण्यापत्तेः, विरोधं सूचयितुमाह—**एतद्यूपेति**। रशनया यूपं परिव्ययतीत्यग्नीषोमीये विहितात्परिव्याणात् स आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं व्यतीति सवनीये विहितस्य परिव्याणस्य भेदेऽपि, लौकिकत्वात् परिव्याणस्य स्वरूपे धर्मविध्ययोगेन यूपान्वयप्रयुक्तत्वात् धर्मान्वयस्य यूपसाधारण्यात् धर्माणामपि साधारण्याप्रतीतेः परिव्याणद्वयेऽपि रशनायाः सामानविध्यसूचनायेरागतावित्यस्माद्धातोरेतेस्तुड्वेत्युणादिसूत्रेणातिप्रत्ययस्य तुडागमसहितस्य विहितत्वादेति सर्वत्रागच्छतीत्यर्थविवक्षया साधारणवाच्ये तच्छब्दप्रयोगादेतस्य पशुत्रयसाधारणस्य यूपस्य यदेकं परिव्याणमग्नीषामीये परं च सवनीये विहितं, तस्योभयस्य साधारणशेषे रशना धर्मसंहितः श्रुत्यावगम्यते। अतस्तद्विरुद्धेन क्रमेणाग्निषोमीयपशुयागमात्राङ्तां न यातीत्यर्थः। विप्रकर्षं श्लोकद्वयेन दर्शयति—**यावदिति**। श्रुतिसमाख्याविरोधं प्रश्नपूर्वमुपसंहरति—**श्रुतीति**।

पौरोडाशिकसमाख्याते काण्डे पठितत्वात् समाख्याविरोधेऽभिहिते, दर्शपूर्णमासप्रकरणे वर्त्तमानत्वात् प्रकरणविरोधमाशङ्क्य साधारण्यात्, तस्येवात्रापि मन्त्रविनियोगे विरोधाभावमुक्त्वा, प्रकरणाबहिर्भावेऽपि सर्वार्थप्रतीतेर्विरोधापरिहारमाशङ्क्य, नचाविज्ञातलिङ्गानां प्रक्रिया विनियोजिकेतिन्यायेनानुन्मीलितलिङ्गत्वात् प्रकरणाविनियोज्यत्वे क्रमेण चेति चकारेण सूचिते। तसीत्यस्य सामर्थ्यं सन्निधावुपसंहृतमित्यनेन न्यायेनात्रापीषेत्वेति

युष्मदर्थविषयत्वात् सन्निहिताभिधायित्वान्तशब्दायोगात् प्रथमपदार्थेऽग्निप्रणयनेनाम्नातमन्त्रकत्वात् मन्त्राकाङ्क्षेक्रमेण विनियोगावगतेः श्रुतिक्रमविरोधापत्तेरित्याशङ्क्य, क्रियापदशून्यत्वेनानुन्मीलितलिङ्गत्वात् क्रमस्य विनियोगाशक्तावुक्तायां क्रियापदशून्यत्वेऽपि यागानुमन्त्रणसामाख्यानात् सामान्यतो यागाङ्गत्वावगमाद्वब्विमन्त्रस्य क्रमविनियोगोपपत्तिवत् पौरोडाशिकसमाख्यानादिषेत्वेत्यस्यापि सामान्यतः पुरोडाशयागाङ्गत्वेऽवगते, क्रमेणाग्निप्रणयने विनियोगोपपत्तिमाशङ्क्यानुमन्त्राख्या क्रिया विशेषवद्वब्विमन्त्रसाध्यक्रियाविशेषावगमात् न क्रमस्य विनियोगे शक्तिरिति परिहारसम्भवेऽपि, अभ्युपेत्य क्रमविनियोगं क्रमसमाख्ययोस्तावन्न विरोध इति परिहारसूचनार्थम् - **पुरोडाशस्यैव चेत्युक्तम्** । विप्रकर्षं दर्शयति—**तत्रापीति** ।

लिङ्गस्य प्रकरणादिविरोधोदाहरणानि प्रतिजानाति—**एवमिति** । प्रकरणं विरोधं तावदुदाहरति—**तत्रेति** । विप्रकर्षं दर्शयति—**यावच्चेति** । माहेन्द्रग्रहयागक्रमे पठितस्यैन्द्रस्य प्रगाथस्य लिङ्गेनापकर्षः । क्रमविरोधोदाहरणमित्याह—**अलिङ्गेति** । अनिष्टापादनार्थत्वाच्चापकर्षोक्तेरपरितोषात् तत्रार्थात् प्रतिवचनमि३-५-४२ति पञ्चमपादाधिकरणस्थितमुदाहरणमाह—**स्थितेति** । विप्रकर्षं दर्शयति—**यावद्धीति** । उदाहरणमाह—**तथेति** । परिवीरसि परित्वादेवीर्विशोव्ययन्तां परीमं रायस्योषो यजमानं मनुष्य इतिकरणमन्त्रस्य युवासुवासाः परिवीत आगात्स उ श्रेयान् भवति जायमान इति क्रियमाणानुवादिमनोतासूक्तस्य प्रकरणात् ज्योतिष्टोमान्वयावगतेर्मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति मनोतोद्देशेनावदीयमानपश्वाख्यहविरर्थत्वेन प्रैषाच्च पशुदेवताया मनोताशब्दवाच्यत्वावगमेन पशुयागान्यावगतेन सामान्येन लिङ्गेनाग्नषोमीयकर्म बाधित्वा सवनीयाङ्गत्वावगमस्योदाहरणत्वं शङ्कते—**कथमिति** । श्रुत्या लिङ्गबाधान्न मनोतासूक्तस्य सवनीयाङ्गतेति परिहरति—**नेति** । कासौ श्रुतिरित्यपेक्षायां श्रुतिमुदाहरति—**एवं हीति** । मनोतायां तु वचनानविकारः स्यादि१०-त्यत्र वायव्ये पशावतिदेशप्राप्तस्य मनोतासूक्तस्योहनिर्वार्यत्वेनास्याः श्रुतेर्व्याख्यास्यमानत्वात् न दैक्षे विनियोजकता युक्तेत्याशङ्क्याह—**अनया हीति** । दैक्षक्रमेऽधीतायाः श्रुतेर्लिङ्गप्राप्तोत्कर्षनिरासार्थत्वेन दैक्षार्थत्वसम्भवे दूरस्थे वायव्यादावूहनिवार्यत्वायोगात् लैङ्गिकोत्कर्षनिरासेन च लिङ्गस्यानादृत्यर्थेऽभिहितेऽर्थत्वान्मुख्यस्यार्थत्वाभावेनान्यायनिगदत्वात् बहुवचनान्तपाशशब्दवदनूह्य सिद्धेर्मनोताधिकरणविरोधभावात्लिङ्गेनोत्क्रष्यमाणा मनोता कार्यश्रुत्या वारितेत्याशयः । आग्नेय्येवेत्येवकारेणानाग्नेयीनिषेधावगतेः प्रकृतौ चानाग्नेय्या मनोतायाः प्राप्त्यभावेन निषेधायोगाद्विकृतौ त्वतिदेशप्राप्ताया'त्वं ह्यग्ने प्रथमो मनोतेति' मनोताया वायव्यादिवैकृतपशुदेवताया प्रकाशकाशक्तेस्तस्मादग्नेर्न्नोहेतिवचर्चानूहनिषेधाद्वाय्वादिदेवतस्य सूक्तान्तरस्य मनोताकार्ये प्राकृतस्यैवकारकश्रुत्यानिषेधोपपत्तेर्वायव्यादिपशावनाग्नेयादिसूक्तान्तरत्वे रूपविकारनिषेधार्थैवेयं श्रुतिर्न दैक्षादावाग्नेयसूक्तोत्कर्षार्थेत्याशङ्क्य द्वैधैवकारमुपादयति—**द्विदेवत्येऽपीति** । द्विदेवत्ये यद्यप्येकदेव त्याग्नेय्यशक्ता, तथापि सैव कार्या, न तूत्क्रष्टव्येत्याद्यव्याख्यायामेवकारार्थः । द्वितीयायां कार्यैवेत्यर्थः ।

भक्षानुवाकस्थान्ये हि सवितरित्यादिवाक्यानि समाख्यानात् भक्षाङ्गत्वरूपाय विनियोगाय प्रस्थितानि सन्ति, लिङ्गेन ग्रहणादिषु विनियुज्यन्तइति यत् भक्षानुवाकाधिकरणे स्थितम् । तदेकं सल्लिङ्गसमाख्याविरोधोदाहरणम् ।

यच्चाग्निरुक्थे पुरोहितइत्यादीनां मनोर्ऋचां 'पृथूपजास्तं स बाध' इति पृथुपाजवत्योश्च याज्यासमाख्यां बाधित्वा लिङ्गेन सामिधेनीकार्ये विनियोगइति लिङ्गक्रमसमाख्यानादित्यत्रोक्तवदपरमित्याह—**लिङ्गेति** । विप्रकर्षं दर्शयितुं भक्षाङ्गत्वरूपसम्बन्धाभिमुखार्थस्य कस्य चित्सामान्यस्यादिशब्दोक्तस्य वाक्यादेः कल्पनयेत्युक्तम् । वाक्यानि लिङ्गेन विनियुज्यन्तइति वदता लिङ्गस्य कृत्स्नामन्त्रविनियोजकतोक्ता । परिव्याणकरणमन्त्रे परिवीरसिपदव्यतिरिक्तानां 'परित्वादेवीर्विशोव्यंयन्तामित्यादिपदानां क्रियमाणानुवादिमन्त्रे च परिवीतपदव्यतिरिक्तानां युज्येत्यादिपदानां लिङ्गे विनियोक्तुमारभ्यमाणाभ्यां परिवीरसिपरिवीतपदाभ्याम् एकवाक्यत्वात् सवनीयार्थे द्वितीयेऽपि परिव्याणे विनियोगो वाक्यक्रमविरोधोदाहरणमित्याह—**वाक्येति** । परिवीतपदोक्त्या परिवीरसिपदमप्युपलक्षितम् ।

सन्ध्यासमाप्त्यादिपदेषु लिङ्गेन ग्रहणादौ विनियोक्तुमारभ्यमाणेषु सन्ध्यासमित्यादिपदैकवाक्यगतानां शेषाणां पदानां भक्षणादर्वाचीनग्रहणादावेव वृत्तिविनियोगाख्या वाक्यसमाख्याविरोध उदाहार्य्येत्याह—**वाक्यासमाख्ययोरिति** । आवृत्तिरितिपाठे त्वाङ्गऽर्वागर्थवाचित्वात् भक्षणात्प्रागनुष्ठीयमानत्वात्, ततोऽर्वाचीनेषु वृत्तिविनियोग इत्यर्थः ।

यद्वा भक्षणे शेषाणां पदानामवृत्तिरविनियोग इति समाख्याप्राप्तभक्षणाङ्गत्वाबाधो वृत्तिप्रतिषेधेनोक्तम् । एकपदमात्रे लैङ्गिकविनियोगापर्यवसाने चालिङ्गविरोधिना वाक्येन शेषपदविनियोगायोगात् शेषपदमात्रस्य कृत्स्नवाक्यत्वाभावेनाविरोधेन वाक्येन विनियोक्तुमशक्यत्वात् पदान्वये तु तस्य चैकवाक्यत्वस्य पदार्थान्वियत्वाभावेन वाक्यप्रतिपाद्यत्वाभावात् आत्माश्रयदोषापत्तेश्चाएमनेवात्मनो विनियोगाच्छेषाणां पदानां लिङ्गविनियोज्यपदार्थोपसर्जनीभूतार्थप्रतिपादनशक्तिमात्रमेकवाक्यत्वादवसीयते, न तु विनियोग इत्यपरितोषात् उदाहरणान्तरमाह—**तथेति** । चेतनस्य कर्मफलाभावं विना कर्तृत्वायोगात् । समाख्याकर्तृत्वस्य यजुर्वेदाध्ययनलब्धाध्वर्युसंज्ञस्य पुंसः कर्मफलभावेन प्राधान्यावगतेः समाख्यातोऽध्वर्य्वर्थत्वावगमेऽपि वाक्यावगतस्य स्वर्गकामार्थस्य समाख्यानुरोधेन यजुर्वेदाध्यायिस्वर्गकामविषयकल्पनया सङ्कोचायोगाद्वाक्येन च समाख्याबाध इत्याशयः ।

कर्त्रधिकरणे निषेत्स्यमानस्याख्यातेन कर्त्रभिधानस्याज्ञानात् श्रुतिसमाख्याविरोधोदाहरणत्वं शङ्कते—**नान्वति** । कर्त्रधिकरणसिद्धान्तस्मारणेन निरस्यति—**नात्रेति** ।

प्रयाजादीनां पुरोडाशमात्राङ्गत्वस्य प्रकृतप्रधानमात्राङ्गत्वेनबाधः प्रकरणसमाख्याविरोधोदाहरणमित्याह—**प्रकरणेति** । श्रुत्यादीनां शेषमात्रत्वेन शेषिविषयत्वाभावात्, शेष्यैकविषयत्वेऽपि शेषभेदे प्रमाणसमवायानुपपत्तेरुपस्तरणे कृत्स्नोमन्त्रः स्योनादिसुमनान्तः प्रयोज्यः । कल्पयास्यन्तो वेत्येकस्मिन्नुपस्तरणाख्ये शेषिणि समुदायावयवरूपयोस्समवायेऽपि

लिङ्गवाक्ययोः समवायायोगात् बलाबलचिन्ता न युक्तेत्याशङ्क्य, शेषसमवायद्वारा प्रमाण-समवायसूचनार्थं शेषसमवायोदाहरणानि दर्शयिष्यन् विरोधवृत्तवर्त्तिष्यमाणसङ्कीर्त्तनं तावत्-करोति—**एवं तावदिति**।

श्रुतेस्तावल्लिङ्गविरोधमुदाहरति—**तद्यथेति**। 'ऐरं कृत्वोद्गेयमिति'श्रुतेर्वाक्यविरोध इत्याह—**श्रुतीति**। पूर्ववदपरितोषादुदाहरणान्तरमाह—**तथेति**। प्रकारविरोधमुदाहरति—**प्रतिष्ठाकामेति**। एकविंशतिसंख्याविशिष्टस्यानुवचनान्तरस्यानुश्रुत्य नमः प्रवक्ते इति दर्शपूर्णमाशाङ्गभूतनिगदानन्तरं प्रयोज्यावगतिनिगदस्य च 'जातवेदो रमया पशून्मयीति' लिङ्गेन सामिधेनीवदग्निप्रकाशनाङ्गत्वात् सामिधेन्यनुवचनाङ्गत्वाभावेनानुवचनेन प्रयोक्तुमशक्तेः एकविंशतिसंख्यायाश्च संख्येयापेक्षया संख्याविशिष्टानुवचनचोदनासामा-न्येनाऽनुवचनान्तरस्य दार्शपौर्णमासिकस्य सामिधेन्यनुवचनविकृतित्वात्सामिधेनीनां संख्येयत्वेनाऽतिदेशात् तासां वार्थाभिधानकर्मत्वेनानुवचनप्रयुक्तत्वात्। अतः प्रयोज्यनिगद-सामिधेन्यनुरोधेन पुरुषार्थस्याप्यनुवचनान्तरस्यान्तःक्रतुप्रयोज्यत्वादेर्शविंशतिसंख्याविशिष्टे-नानुवचनान्तरेण प्रतिष्ठां कामयमानस्य नित्ये फलार्थे वा दर्शपूर्णमासप्रयोग इत्युक्तम्। अतः क्रतुःप्रयोज्यत्वादेव पुरुषार्थेनाप्यनुवचनान्तरेण प्रसङ्गात् क्रतूपकारसिद्धेः श्रुतिप्रकरण-विरोधोदाहरणसिद्धयेऽङ्गत्वोपचारः। प्रतिष्ठाकामस्येति षष्ठ्या दर्शपूर्णमासप्रयोगव्यति-रेकजनितत्वमनुवचनान्तरस्यान्तःक्रतुप्रयोज्यबलेनाङ्गीकृत्य षष्ठीश्रुतिप्रयोगाङ्गतोक्ता।

क्रमविरोधमुदाहरति—**पशुकामेति**। चमसोत्पत्तिसन्निधावपः प्रणयतीति श्रुतस्य करणत्वेनान्वयस्य विवक्षितत्वात् कर्तृव्यापारत्वलक्षणस्य शब्दतः साधनापेक्षितत्वावगमेऽपि चमसस्य साधनत्वानुक्तेः शब्दतः साध्यापेक्षित्वानवगमात् शब्दानपेक्षवस्तुमात्रायाश्चापेक्षाया दण्डोऽस्ति गामानयेत्युक्तेऽपि दण्डेनानयेत्यप्रतीतेः शाब्दव्यहारानुयोगित्वादन्यतराकाङ्क्षा-लक्षणेन क्रमेण च समस्याङ्गता (गोदोहनेन पशून् कामयमानस्यापि दर्शपूर्णमासप्रयोगे सामान्यतः प्राप्ता श्रौतात्तु गोदोहनात्तस्मिन् प्रयोगे चमसनिराक्रियेत्यर्थः। गोदोहनस्यापि क्रत्वर्थं प्रणयनाश्रिततयान्तःक्रतुप्रयोज्यत्वबलेन पशुकामस्येति षष्ठ्या दर्शपूर्णमासप्रयोगव्य-तिरेकजनितत्वाङ्गीकारात् गोदोहनस्थदर्शपूर्णमासप्रयोगाङ्गतायाः प्रासङ्गिकोपकारित्वेनोप-चरितायाः श्रौतत्वं श्रुतिक्रमविरोधोदाहरणत्वसिद्धयेऽभिप्रेतं समाख्याविरोधमुदाहरति—**वाजपेय इति**। स्वराज्यकामस्य कर्त्तृत्वेत्यध्याहारः। कर्त्रधिकरणपूर्वपक्षे स्मित्योदाहृ-तत्वेनैतदपरितोषात् उदाहरणान्तरमाह—**तथेति**। लिङ्गस्य वाक्यविरोधमुदाहरति—**स्योनादेरपीति**। एकस्मिन्सादनाख्ये शेषिण्येकसमुदायावयवात्मकशेषसमवायः प्रथमश्लोकेन, एकस्मिन्नुपस्तरणाख्ये शेषिणि द्वितीयेनोदाहृतः। पुरोडाशव्यापारस्य सदनस्याननुष्ठे-यत्वेनाप्रकाश्यत्वात् प्रयोजकसादनलक्षणार्था सदनोक्तिः। हविः संस्कारार्थत्वेऽप्युपस्तरणस्य हविराधारपात्राभिमुखक्षारणरूपत्वेनाभिघारणं विवक्षितम् एतयोः समुदायावयवयोः पूर्वोदाहृतत्वादविवेकमाशङ्क्याह—**अनेकेति**। अनेकयोः शेषिणोरन्योन्यविशिष्टशुद्धरूप-योरेकस्य शेषित्वमभिप्रेत्य प्रागुदाहृतौ। सम्प्रत्येकस्य सादनस्योपस्योपस्तरणस्य वा

शेषिणोऽनेकसमुदायावयवरूपा शेषान्वयमभिप्रेत्येत्यर्थः । पूर्वार्द्धं श्लोकद्वयेन व्याचष्टे—**पूर्वमिति** । कल्पयाम्यन्तस्योपस्तरणवाचित्वात्तस्मिन्नित्याद्येकवाक्यत्वेन सादनाङ्गत्वायोगमाशङ्क्य साभिघारणोक्त्योपस्तरणस्य सादनेनोपसर्जनतोक्ता । शेषः सादनविशिष्टेऽभिघारण इत्याध्याहार्यम् । तस्यैवोत्तरार्द्धं व्याचष्टे—**एकैकस्मिंस्त्विति** । द्वयोरवयवयोः समुदायापन्नयोर्वाक्यादेकस्य तु लिङ्गेनैकस्मिच्छेषिणि यस्मिच्छेषत्वं प्राप्तं, तत्सम्प्रति उदाहरणत्वेन गृह्यतइत्यर्थः ।

सादनोपस्तरणाख्यशेषिभेदेनोदाहरणभेदात् विशिष्टोपपत्तिः । समुदायस्य विकल्पेन समुच्चयो न वा शेषिद्वये विनियोगो, यथालिङ्गं वावयवस्येत्येकस्यैव लिङ्गवाक्यबलावलोक्तिप्रकारस्य भाष्यकृतोक्तत्वात्प्रकारचतुष्टयोक्तिर्भाष्यानारूढेत्याशङ्क्याह—**एकस्मिन्नेवेति** । यद्यप्येक एव मार्गो भाष्यकृतोक्तः । तथापि किमुपस्तरणं, पुरोडाशसादने च प्रयोक्तव्य, उतोपस्तरण इत्येतावता भाष्येण निष्कृष्टेनोपस्तरणे कृते यत्पुरोडाशसादनमित्येवं विशेषणविशेष्यभावप्रतीतेरुपस्तरणविशिष्टे सादने स्वप्रधाने चोपस्तरणे प्रयोक्तव्या इति अनेकयोः शेषिणोरेकशेषविषयप्रमाणद्वयसमवायादेको मार्गः । पुरोडाशसादने स्वप्रधाने चोपस्तरणे प्रयोक्तव्य इत्यनेकयोः शेषिणोरेकशेषविषयप्रमाणद्वयसमुदायादेको मार्गः । पुरोडाशसादने कार्ये यदुपस्तरणमिति विपरीतविशेषणविशेष्यभावात्सादनविशिष्टे उपस्तरणे स्वप्रधाने सादनइति द्वितीयाऽपि । किं कृत्स्न उपस्तरणे प्रयोक्तव्य इति कल्पयाम्यन्तइत्येतावतैकस्मिन्नुपस्तरणे शेषिणि समुदायावयवरूपशेषद्वयसमवायात् तृतीयः । किं कृत्स्नः पुरोडाशसादने प्रयोक्तव्यः, उत तस्मिन्सीदेत्येवमादिरित्येतावतैकस्मिन्पुरोडाशसादने शेषिणि तस्यैव शेषद्वयस्य समवायाच्चतुर्थ इति मार्गचतुष्टयमेकस्मिन्नेव मार्गे यत्सङ्कीर्त्तनमव्यक्तं प्रतीयते तद्व्याख्यातृभिरात्मना स्वयं विवेक्तव्यमित्यर्थः ।

लिङ्गस्य प्रकरणादिविरोधानुदाहरति—**लिङ्गस्येति** । लिङ्गेन प्राप्तेनेत्यध्याहार्य्यम् । वाक्यस्य प्रकरणविरोधमुदाहरति—**वाक्येति** । शेषद्वयसमवायमुपपादयति—**प्रकरणेन हीति** । गार्हपत्यस्योपरि हविःस्थापणं विधाय वेदिकरणविधानात् विधिपाठक्रमेणार्थादवगतस्य तदधिवासनोत्तरकालस्य प्रकरणेनाङ्गतया ग्रहणमुपपादयितुं विधानोक्तिः । कालाख्यविशेषणप्रधानानुष्ठानलक्षणार्थत्वादुत्तरकालविधानहेतुकस्योत्तरकालस्य ग्रहणमित्यर्थः । एवमप्यमावास्यायामिति सप्तमीश्रुत्यैव पूर्वेद्युः कालस्यामावास्याङ्गत्वोपगतेर्वाक्यप्रकरणविरोधोदाहरणतया न युक्तेत्याशङ्क्याह—**न चेति** । शेषिणः शेषेण सह सम्बन्धाख्यशेषित्वं न वदतीत्यर्थः ।

तावत्या दीक्षणीयामनुब्रूयादित्यादिवत्सप्तम्युक्तस्याधिकरणत्वस्याधयव्याप्यत्वात् प्राधान्यापेक्षकत्वेन सप्तम्याः शेषित्वे प्रमाणत्वमाशङ्क्य, स्वरादिवत् कालस्य कर्ममध्यपातित्वलक्षणाधेयत्वाभावात् कालं प्रति कर्मणोऽधिकरणत्वायोगोक्तिः (प्रतिपदासम्बन्धिकार्यमिति अपेक्षायां बहिष्पवमानस्तोत्राङ्गत्वावगतेर्नित्यप्रतिपत्सम्बन्धिन एव द्वितीयपादादि-

प्रभृतिद्वितीय) वाक्यप्रकरणविरोधोदाहरणत्वोपपादनमुपसंहरति—**तस्मादिति**। बाध्यबाधकतातूपपादितत्वात् सिद्धैवेत्याह—**स चेति**।

क्रमविरोधं प्रश्नपूर्वमुदाहरति—**वाक्येति**। इति राजन्याय प्रतिपदमितीतिकरणश्रुत्या विनियोगात् श्रुतिक्रमविरोधोदाहरणत्वशङ्कां निराकर्तुं पादमात्रमित्युक्तं श्रुतिविरोधाऽस हि वाक्येनापि द्वितीयादिपादविनियोगो न युज्येतेत्याशङ्क्य, विरोधार्थं प्रतीकोक्तिः। 'वृषा पवस्व धारयेत्याद्यपादानां विनियोगेनोपास्मै गायता नरः पवमानायेन्दवे अभिदेवं इयक्षत' इति नित्यायाः प्रतिपादं तुल्यार्थगत्वेनाद्यस्यैव पादस्य निर्वर्त्तितत्वात् द्वितीयादिपादविनियोगस्य श्रुत्याविरोधे सति द्वितीयपादप्रभृति कस्याः प्रतिपदसम्बन्धिकार्यमिति अपेक्षायां, बहिष्पवमानस्तोत्राङ्गत्वावगतेर्नित्यप्रतिपत्सम्बन्धिन एव द्वितीयापादादिप्रभृति द्वितीयतृतीयत्वलक्षण यथासंख्यं क्रमविनियोगप्रसङ्ग इति तत्रेत्यनेनोक्तम्। ततश्चैकस्मिन् बहिष्पवमानस्तोत्रे शेषिणि द्वितीयपादप्रभृतिशेषद्वयसमवायमुदाहरणपूर्वं दर्शयितुमाह—**तद्यथेति**: वृषेति प्रथमान्तस्य पदस्य पवमानायेत्यादिभिश्चतुर्थ्यन्तैरेकवाक्यतोपगमनासामर्थ्याल्लिङ्गेन क्रमस्य विरोधे सम्भवति ततो जघन्येन वाक्येन विरोधोक्तिरयुक्तेत्याशङ्कते—**नन्विति**। मत्सरादिपदवत्पवमानायेत्यादीनामपि सोमलिङ्गत्वान्न लिङ्गविरोध इति परिहरति—**नेति**। एकवाक्यत्वोपगमनशक्त्याख्यं तु लिङ्गमेकवाक्यत्वेन कल्प्यत्वात्, ततोऽपि जघन्यमित्याशङ्काशयनिरासार्थं दर्शयितुमाह—**विभक्तीति**। मरुत्वतइत्यस्यापि चतुर्थ्यन्तत्वादेकवाक्यत्वायोगमाशङ्क्य मरुत्वत इत्यस्य देवतावाचिनो वृषेत्यादिद्रव्यवाचिपदानन्तर्यान्मरुत्वद्द्रव्यत्वेन सोमद्रव्यस्तुत्यर्थत्वात् सोमस्तुत्यर्थवृषादिपदैकवाक्यत्वोपपत्तिर्मत्सरादिपदानां च वृषादिपदवत्सोमवाचित्वेन स्पष्टमेव वृषादिपदैः समानविषयत्वं विप्रकर्षोक्तिमिषेण सूचयितुमाह—**तदिति**। समाख्याविरोधमुदाहरति—**वाक्येति**। समुच्चयाशङ्कानिरासाय—**केनेत्युक्तम्**। तत्रेत्यनेन विप्रकर्षस्यानाशङ्क्यतोक्ता। प्रथमाया अप्यमिहितकारकविभक्तित्वादिति कर्त्रधिकरणवार्त्तिके प्रथमायाः कारकविभक्तित्वस्य वक्ष्यमाणत्वात्प्रथमाश्रुतेः समाख्याविरोन्यथानुपपत्त्या च प्रातिपदिकस्याख्यातोक्तभावनाक्षिप्तकर्तृत्वाश्रयत्वेन कर्त्रधिकरणवार्त्तिकोपपत्तेः, प्रथमायाः कारकविभक्तित्वाभावाच्छ्रुतिविरोधवादिनाख्यातस्य कर्तृवाचिता वैयाकरणेनाभ्युपगन्तव्येत्यापाद्य, तदसम्भवोक्त्या निरस्यति—**न चेति**।

प्रकरणस्य क्रमविरोधमुदाहरति—**क्रमेति**। पूर्वं श्रुतिवाक्यविरोधविषयत्वेनास्योदाहृतत्वात्क्रमविरोधोदाहरणत्वायोगमाशङ्क्य स्तोत्रापेक्षयेयुक्त्वा याग्निष्टोमित्युक्तम्। सामशब्दोऽत्र स्तोत्रवाची पूर्वं किमपेक्षयेत्याशङ्क्य यज्ञायज्ञीयसामापेक्षयेत्याह—**पूर्वे त्विति**।

समाख्याविरोधमुदाहरति—**प्रक्रियेति**। वाक्यसमाख्याविरोधविषयतयाऽस्योदाहृतत्वात्। प्रकरणसमाख्याविरोधोदाहरणत्वायोगमाशङ्क्य, ज्योतिष्टोमं प्रतीत्युक्त्वा, 'तस्य हीत्यादिना विविक्तविषयत्वं विवृत्तं क्रमसमाख्याविरोधं प्रश्नपूर्वमुदाहरति —**क्रमेति**। लिङ्गेनापूर्वकर्मद्वयाङ्गत्वापत्तेः लिङ्गक्रमविरोधोदाहरणत्वमाशङ्क्याह—**लिङ्गं त्विति**। सामान्य-

सम्बन्धापेक्षत्वेन लिङ्गस्याऽन्यतश्च सामान्यसम्बन्धानवगतेः क्रमसमाख्ययोर्मध्ये यद्बलीयः तदपेक्षत्वात् बाधेन विनियोजकत्वं न सम्भवतीत्याशयः ।

श्रुत्योः समवाये दौर्बल्यमर्थविप्रकर्षात्, लिङ्गयोः समवाये पारदौर्बल्यम् । अर्थविकर्षादित्येवमादिसूत्राभ्युपगमेन सजातीयबलाबलप्रदर्शनं सुखग्रहणार्थं प्रवृत्तानुकीर्त्तनपूर्वं प्रतिजानाति—**एवमिति** । शेषैकत्वेन साक्षाच्छेषभेदेन शेष्येकत्वे शेषसमवायद्वारा श्रुत्यादीनां विजातीयैः समवायस्य चिन्तितत्वोक्त्या सजातीयसमवायस्यापि द्वेधा चिन्तनीयत्वं सूचितम् । कारणदोषजन्यत्वात् मिथ्यात्वस्य अनाप्तप्रणीतत्वस्य च शब्ददोषत्वात्, अपौरुषेयत्वाद्वेदेतेऽनुपपत्तेः वेदार्थज्ञानस्योत्पन्नस्य मिथ्यात्वज्ञापनलक्षणबाधायोगात् । सामान्यशास्त्रादीनां बाधायोगमाशङ्क्य लिङ्गादिवत्सामान्यशास्त्रादेरपि ज्ञेयासद्वयुदासप्रकाशनलक्षणपरिच्छेदफलविज्ञानोत्पादकत्वप्रतिबन्धलक्षण एव । बाधोक्तिस्तु बाधग्रन्थे वक्ष्यमाणाज्ञानमात्रोत्पादकत्वाशयेति सूचयितुम्—**यथा चेत्युक्तम्** ।

श्रुत्युदाहरणानि तावद्दर्शयितुं सामान्यविशेषसन्दिग्धपौर्वापर्यविरोधादिविषयत्वेन भिन्नायाः श्रुतेरेकस्मिन् शेषे समवायो दर्शनीय इत्याह—**यद्यथेति** । सामान्यविशेषश्रुत्योरेव चतुर्द्धाकरणाख्यशेषयोर्विरोधमुदाहरति—**पुरोडाशमिति** । प्राप्नुवदित्यनेन प्राप्तबाधः सूचितः । एकस्मिन्नवभृथहोमे शेषिणि आहवनीयस्य आहवनीयाख्यशेषद्वयसमवाये सामान्यविशेषश्रुत्योर्विरोधमुदाहरति—**तथेति** । अपूर्वत्वेनावभृथे चतुरवत्तहोमाप्राप्तेराहवनीय (प्राप्त्युदाहरणान्तरमाह—**तथेति** । प्रकरणविरोधमुदाहरति—**प्रतिष्ठाकामेति** । एकविंशतिविशिष्टस्यानुवचनान्तरस्यानुश्रुत्या नवइति दर्शपूर्णमासाङ्गभूतनिगदानन्तरं प्रयोज्यावगतिनिगदवस्यवज्मातवेदी रमया पशुन्मेधालिङ्गेन सामिधेनीवदग्निप्रकाशनाङ्गत्वात् सामिधेन्यनुवचनाङ्गत्वाभावे सानुवचनविकृतित्वात्सामिधेनीनां सङ्ख्येयत्वेनातिदेशात् तासां चार्थाभिधानकर्मत्वेनानुवचनप्रयुक्तत्वाभावादतः प्रयोगनिगदसामिधेन्यनुरोधेन पुरुषार्थस्याप्यनुवचनान्तरस्यातः सन् प्रयोज्यत्वादेकविंशतिसंख्याविशिष्टेनानुवचनान्तरेण प्रतिष्ठां काममानस्य नित्ये फलान्तरे वा दर्शपूर्णमासप्रयोगइत्युक्तम् । तन्न । क्रतुःप्रयोज्यत्वादेव पुरुषार्थेन) प्राप्त्ययोगमाशङ्क्यातिदेशतो होमाप्राप्तावप्यवभृथे जुहोतीति उपदेशादेव प्राप्तिं दर्शयितुं जुहोतिसामानाधिकरण्योक्तिः । एकस्मिन्वैश्वदेवयागशेषिण्यामिक्षावाजिन इति चतुर्द्धा पञ्चमरूपेण सन्दिग्धायाः श्रुतेर्वैश्वदेव्यामिक्षेत्यसन्दिग्धस्तद्धितश्रुत्या विरोध इत्याह—**सन्दिग्धेति** ।

एकस्मिन् ज्योतिष्टोमे शेषिणि पूर्वोद्गात्रपिच्छेदनिमित्तादाक्षिण्यप्रतिहर्त्रवच्छेदनिमित्तसर्वस्वदाक्षिण्यरूपशेषद्वयसमवाये पूर्वशेषविषयादाक्षिण्यश्रुतेः ।

य इष्टचेति वाक्येनैकस्मिन् पर्वणि शेषे सोमेष्टिश्रुत्योः समवायोऽङ्गगुणविषयेष्टिश्रुतेरेकस्मिन् श्येन प्रयोगशेषिणि प्राकृतबर्हिर्वैकृतशराख्यशेषद्वयसमवाये प्राकृतविषयाया । बर्हिष्षिहवींष्यासादयतीति बर्हिश्रुतेः प्राप्तत्वेन विप्रकर्षायोगात् बाध्यत्वायोगमाशङ्क्य, विप्र-

कर्षाभावेऽपि विज्ञानोत्पादकत्वाभावात् बलवद्विरोधपरिहारं च विना तात्पर्यस्यावधारणाभावात्। विषयपरिच्छेदकरूपज्ञानाख्यज्ञानविशेषोक्तिप्रतिबन्धलक्षणबाध्यत्वं सम्भावयितुमाह—**एवमिति**। प्राकृतवैकृतविरोधग्रहणायादिशब्दः। एकस्मिन्संख्याख्ये भावनाख्ये च शेषे पदैकाभिधानश्रुत्योः समवाये पदश्रुतेरेकाभिधानश्रुत्या बाधात्।

श्लोकद्वयेनोदाहरति—**तथेति**। लिङ्गद्वयस्यैकस्मिन् शेषे शेषद्वयस्य च एकस्मिन्छेषिणि समवाये स्योनमित्येवोदाहरणमित्याह—**तथा लिङ्गेति**। किमत्र लिङ्गद्वयमित्याशङ्कयाह—**एतच्चेति**। तदेषोऽर्थविप्रकर्षा, यत् स्योनं त इत्यस्य प्रत्यक्षसादनाभिधानसामर्थ्यं मुख्यमित्यादिभाष्येण विशेषं द्रढयितुमाह—**इतीति**। एकस्मिन् वैश्यप्रयोगे शेषिणि पाञ्चदश्यसाप्तदश्याख्यशेषद्वयसमवाये वाक्ययोर्विशेषमुदाहरति—**वाक्ययोरिति**। उदाहरणत्वोपपादनपूर्वं विशेषमाह—**उभयत्रापीति**। सामान्यश्रुतिवत् सामान्यवाक्यस्यापि विशेषविषयज्ञानोत्पादने साङ्कर्याद्विप्रकर्ष इत्याशयः। एकस्मिन्नभिक्रमणं शेषे प्रकरणयोः समवायमुदाहरति—**प्रकरणयोरिति**। विरोधोपपदानपूर्वं विशेषमाह—**महाप्रकरणेन हीति**। सन्देशाभिव्यक्त्यावान्तरप्रकरणस्थस्याङ्गस्य सन्देशभूतश्रुत्यादिसंयुक्तत्वेन महाप्रकरणायग्राह्याभ्यामाद्यन्ताभ्यां अवान्तरप्रकरण्यङ्गाभ्यां व्यवधानादवान्तरप्रकरणिनः प्रयाजादेर्महाप्रकरणस्पर्शं विनाऽभिक्रमणादेर्महाप्रकरणस्पर्शानुपपत्तेस्तमनुभूयैवान्तरप्रकरणान्वयः प्रत्यासत्तेर्वाक्यस्थानीयत्वात् पूर्वं भवतीत्याशयः। आद्यस्य युगलस्य द्वितीयकर्मणः पूर्वत्वात्, द्वितीयस्य वा आद्यात् परत्वात् पौर्वापर्यक्रमेणाद्यस्य द्वितीयाङ्गत्वावगतेर्द्वितीयस्य पौर्वापर्वक्रमेणाद्याङ्गत्वात् द्वितीयाङ्गत्वानवगतेर्यथासंख्यक्रमेण त्वगतेरेकस्मिन्नाद्ये, द्वितीये वा शेषे क्रमद्वयसमवाये पौर्वापर्यक्रमेण वा आद्यस्य यथासंख्यक्रमेण, द्वितीयस्य च पौर्वापर्यक्रमेणाद्यस्य च यथासंख्यक्रमेणाद्याङ्गत्वावगतेरेकस्मिन्नाद्ये द्वितीये वा शेषिणि शेषद्वयसमवाये क्रमयोर्बलाबलमुदाहरति—**क्रमयोरिति**। सादेश्यलक्षणस्यैव क्रमस्य विनियोक्तृत्वाभ्युपगमात् पौर्वापर्यस्य क्रमत्वाभावमाशङ्क्य, सन्निधिरूपत्वेन क्रमस्य विनियोक्तृत्वात् पौर्वापर्यस्यापि सन्निधिरूपत्वाविशेषेण विनियोक्तृत्वसम्भवेऽप्यबाधितपौर्वापर्यदर्शनेन विनियोक्तृत्वानभ्युपगमाद्धस्तावनेजनोलपराजिकास्तरणादिपौर्वापर्यवच्च प्रकरणादिना बाधाभावाद्यथासंख्यक्रमेणाबाधे विनियोक्तृत्वापत्तेस्तेन बाधः सम्भवति। न चेति सम्प्रधारणा युक्तेति परिहारसूचनार्था प्रत्यासत्त्युक्तिः। एकस्मिन् पोत्रियाख्यकर्मणि शेषिणि पोत्राध्वर्य्वाख्यशेषद्वयसमवाये पोत्रियमिति विशेषसमाख्यया आध्वर्यवमिति समान्यसमाख्याया बाधस्तस्येति। सप्तमपादसूत्रबद्धः समाख्याद्वयविरोधोदाहरणमित्याह—**समाख्योस्त्विति**।

सन्दिग्धासन्दिग्धश्रुत्याद्युक्तोदाहरणेषु मध्ये क्वैकस्मिञ्छेषे प्रमाणद्वयसमवायः क्वचैकस्मिञ्छेषिणि शेषद्वयसमवाय इत्याशङ्क्याऽस्मदुक्तप्रकारविवेकं सूचयितुमाह—**शेषेति**। उपकारपृष्ठभावेन पदार्थशास्त्राणामप्यतिदेशाभ्युपगमादानुमानिकेष्वपि श्रुत्यादिषु बलाबलस्य विचार्यत्वं वृत्तानुकीर्त्तनपूर्वं प्रतिजानाति—**एवं तावदिति**। एतदेव विवृणोति—**तत्र चेति**। शरमयं भवतीत्यादीनां प्रत्यक्षगम्यानां श्रुत्यादीनां बर्हिषि हवींष्यासादय-

तीत्यादिभिः श्येनेऽनुमानगम्यैः श्रुत्यादिभिः सह पशौ चानुमेयानां प्रयाजादिविषयाणां श्रुत्यादीनां पशुपुराडाशे प्रयाजादिविषयैरानुमानिकैः श्रुत्यादिभिः सह बलाबलमनुत्पन्नमेव चेह श्रुत्यभावाच्छेषज्ञानम् बाध्यतइति पूर्ववार्त्तिकोक्तेन मार्गेण व्याख्येयमित्यर्थः ।

कीदृग्व्याख्येयमित्यपेक्षायाम्प्रत्यक्षाणामानुमानिकैः सजातीयैः सह विरोधे प्रत्यक्षाणां बलीयस्त्वमाह—**तद्यथेति** । विजातीयविरोधे पूर्वस्यापि श्रुत्यादेरानुमानिकस्य परेणापि लिङ्गादिना प्रत्यक्षेण बाध इत्याह—**विपरीतोऽपि चेति** । तथा कृष्णलेषु कृष्णलानवहन्तीत्यवहननातिदेशानुमितिश्रुतिप्राप्तावघातस्तुषकरणविमोचनसामर्थ्येन प्रत्यक्षेण तुषरहितेषु कृष्णलेष्वशक्यत्वावगमात् बाध्यतइत्युदाहरणमाह—**यथेति** । लिङ्गमात्रेषु वचनसामर्थ्यमिति प्रकरणाधिकरणोपक्रमभाष्ये मन्त्रसामर्थ्यस्य लिङ्गत्वाभिधानात्कृष्णलगतस्यासामर्थ्यस्वलिङ्गत्वं नास्तीत्याशङ्क्याह—**सर्वेति** । लैङ्गिकगौणमुख्यार्थविषयविनियोगप्रकारचिन्तायां मन्त्रस्यातिरिक्तविषयत्वायोगात्तदनुकीर्त्तनार्थे भाष्ये लैङ्गिकविनियोगसिध्यै लिङ्गविशेषणलक्षणं तदित्याशयः । सामर्थ्यमात्रस्य लिङ्गत्वे भाष्यसम्मतिमाह—**तथा चेति** । प्राप्त्मुक्त्या प्रापकं विवक्षितत्वाल्लिङ्गदर्शनोक्तेः प्रापकोपोद्बलार्थत्वाद्यत्प्रापकमनेन लिङ्गेनोपोद्बलनीयम् । तत्किमिति पृष्टेऽनन्यथासम्भवोक्त्यानन्यगतित्वलक्षणसाध्यतायाः प्रापकत्वाभिधानात् सामर्थ्यरूपता लिङ्गस्य भाष्यकृतोऽभिमता ज्ञायतइत्याशयः । भवत्वन्यार्थदर्शनस्य प्रापणसमर्थत्वाल्लिङ्गत्वम् । तस्य तु श्रुतिविरोधे बाधोक्तिर्न वेति पृच्छति—**यत्पुनरिति** । सन्देहोपपादनार्थं श्रुतेरानुमानिकत्वं लिङ्गस्य प्रत्यक्षत्वेऽभिहिते कृष्णलावघातवदेव तर्ह्यन्यत्राप्यानुमानिक्याः श्रुतेः प्रत्यक्षलिङ्गबाध्यत्वसिद्धेः प्रश्नो न युक्त इत्याशङ्क्य, अतिदेशानुमेयायाः श्रुतेर्वैकृतप्रयोगवाक्यैकवाक्यतयाऽनुमेयत्वाभ्युपगमात् समस्तप्राकृतवैकृताङ्गप्रापकश्रुत्यादिप्रमाणपर्यालोचनयानुमीयमानायां श्रुतौ विरोधपरिहारार्थं बलवत् प्रमाणाविरुद्धार्थविषयतयानुमानादशब्दरूपस्य वा लिङ्गस्य गौणसामर्थ्यायोगादसमर्थस्य च विनियोगायोगादवघातविषयप्रत्यक्षसामर्थ्यरूपलिङ्गानादरे विनियोगानुपपत्तेस्तस्याः श्रुतेः प्रत्यक्षलिङ्गबाध्यत्वसम्भवेऽपि स्मृत्यनुमेयायाः श्रुतेः स्वातन्त्र्येण पठ्यमानतयाऽनुमेयत्वाभ्युपगमेन प्रत्यक्षश्रुतितुल्यत्वावगमाद्गर्भेनुनौ जनिता दम्पती कर्देवस्त्वष्टज्जनिता विश्वरूप इत्यादेर्मातुलदुहितृपैतृष्वसेयीविवाहादिद्योतनार्थस्यान्यार्थदर्शनसामर्थ्यरूपस्य लिङ्गस्यानादरेऽपि पैतृष्वसेयीं मातुलसुतां सगोत्रां च परीणीय चान्द्रायणं चरेत्परित्यज्यैनां मातृवत् बिभृयात् इतिस्मृत्यनुमेयया श्रुत्या मातुलदुहितृपैतृष्वसेयीविवाहनिषेधादेरशक्यत्वाभावाद्वैषम्यसूचनार्थम्—**यथेत्युक्तम्** । उत्तरमाह—**तत्रेति** । प्रत्यक्षश्रुतिविरोधेऽपि स्मृतिमूलश्रुतिकल्पनाया दुर्वारत्वस्यैतावत्त्विह वक्तव्यमित्यादिविरोधाधिकरणवार्त्तिकोक्तत्वेन लिङ्गविरोधे मूलान्तरशङ्काया दूरोत्सारितत्वाद् यथार्थश्रुताश्रुतिमूलत्वं मूलान्तरोक्त्याभिप्रेतम् । यमेन स्वभगिनीं यमीं प्रति आवयोर्गर्भे दम्पती प्रजापतिर्जनितेत्यभिधानात् भ्रातृभगिन्यपत्ययोरन्योन्यं दाम्पत्यौचित्यश्रौतकत्वेऽनभिमतस्य गर्भेत्विति लिङ्गस्यौचित्येन वैवस्वतयोर्यमयस्योः संवादः षड्चुग्भिर्यमी-

मिथुनार्थं यमं प्रोवाच सतां नवमी युग्भिरनिच्छत्प्रत्याचष्टइति शौनकस्मृतेर्गर्भेत्वियूत्वः पञ्चमीत्वेनानायुक्त्वाद्यम्याः स्वभ्रातरं यमम्प्रति गर्भस्थावेवावां दम्पती जनितेत्यभिधानार्थं-तया भ्रातृभगिन्यपत्ययोर्दम्पत्यौचित्यद्योतकत्वायोगमाशङ्क्य, मम सप्तपुरुषान्तरात्तव च स्त्र्यन्तरेयो गर्भस्तज्जातयोस्तावत्स्त्रीपुंसयोर्दम्पतीतावश्यं स्वभाविनी तद्वरमावयोरे-वान्योन्यसम्पर्काद्यो गर्भो भविष्यति तज्जातयाः श्रीपुंसयोर्दम्पतितांऽस्त्वित्येवं यमी-वचनत्वेऽपि भ्रातृभगिन्यपत्ययोर्दम्पतीत्वौचित्यद्योतकत्वाविरोधसूचनार्थम्—**न त्वित्युक्तम्** । आयाहीन्द्रपथिभिरीणितेभिर्यज्ञमिमन्नो भागधेयं जुषस्वाभितृप्ताङ्जहुर्मातुलस्यैव योषा भागस्ते पैतृष्वसेयी वपामिवेति अस्यामप्यृचि घृतसेकतृप्तवपाख्यं भागधेयं जुषस्वेत्युक्तं वपायाः सेव्यत्वलक्षणं नामत्वं दृष्टान्तेनोपपादयितुं यथा मातुलस्य योषा रूपं जहुशब्दवाच्यमपत्यं यथा च पैतृष्वसेयी पुंसो भागो भजनीया सेव्या तथा वपा तद्वत् सेव्येत्यभिधानम् । स्रुचौ व्यूहति प्राचीं जुहूं प्रतीचीम्युपभृतमिति, स्रुग्व्यूहनविधिवाक्यशेषे च समाना-त्पुरुषदत्ता चाद्यश्च जायते इत्यनेनैकस्मात्पुंसो जाताभ्यां भ्रातृभगिनीभ्यां पुरुषादत्ता भोक्ता पुरुषसन्तानो वा, अद्यश्च भोग्यस्त्रीसन्तानो जाइतइत्युक्तेर्भ्रातृभगिन्योरेव भोक्तृ-भोग्यतेत्याशङ्क्य, निरासार्थमुत तृतीये सङ्गच्छामहैं चतुर्थे सङ्गच्छामहा इति यं देवन्दीव्यमाना जात्या आसनद्वेत्यनेनैकस्मात्पुंसो जाताभ्यां भ्रातृभागनीभ्यां द्वितीयाभ्यां स्वभार्यास्वपतिसंपृक्ताभ्यामेकस्मात्पुमानन्यस्मात् स्त्रीत्येवं जाते तृतीये ततो वा जाते चतुर्थे विवाहाख्यां सङ्गतिं कुर्म इत्येवं दीव्यमानाः क्रीडमानाः श्लाघ्यमानाः जात्याः कूलीना यस्मादासते तस्मादेकस्माद्भोक्ता भोग्यश्च जायते इत्यभिधानं भ्रातृभगिन्य-पत्ययोर्दम्पतित्वौचित्यद्योतकलिङ्गमनन्यगतित्वात् स्मृतिं बाधते । तस्मात्पुत्रिकाकरणं दुहितुः स्वत्वनिवृत्त्यभावात्सापिण्ड्यानिवृत्तेः ।

'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकाङ्कातामसपिण्डां यवीयसीन् ॥' या० आ० अ०

इति सपिण्डोद्वाहनिषेधात्तद्विषयत्वेन पैतृष्वसेयीमातुलसुतापरिणनयनिषेधस्मृति-र्व्याख्येया ।

अतएव—

'पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च ।
मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रयणं चरेदि' ॥ ति ।

गमने प्रायश्चित्तमुक्त्वा ।

'एतास्त्रिस्त्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् ।
ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः' ॥

इति पैतृष्वसेयादिपरिणयननिषेधे जातितैव सपिण्डताख्याहेतुत्वेनोक्ता । भगिनीत्वस्य पैतृष्वस्रयीविशेषणत्वाभावे चतुष्ट्वापत्तेरेतास्तिस्रस्त्वित्यनुपपत्तिप्रसङ्गात्पितृष्वसुः पुत्रिका-

करणे तृतीयः पुत्रः पुत्रिकैवेति पुत्रिकायाः पुत्रत्वस्मृतेः। अभ्रातै च पुंस एति प्रतीचीति मन्त्रे चाभ्रातृकादुहिता पुत्रिकाकरणात्पुंसः प्रतीचीनं पुत्रत्वङ्गच्छतीति पुत्रिकायाः पुत्रत्वदर्शनान् पुत्रिकायाः स्वभ्रातुः पुत्रं प्रति पितृव्यत्वापत्तेः। पितृव्यदुहितुश्च भगिनीत्वविशेषेणेन पुत्रिकायां पितृष्वसुर्यादुहिता पैतृष्वसेयीति प्रतीतेर्मातृभ्रातुश्चासत्व-विशेषणेन पुत्रिकाया मातुर्योभ्राता सपिण्डः तस्य दुहितुरङ्गत्वेत्यर्थावगमात् पैतृष्वसेयी-मातुलदुहितृपरिणयननिषेधः पुत्रिकाकरणविषयो निश्चीयते।

वसुदेवाङ्गजाता च कौन्तेयस्य विरुध्यत।

इत्यादिवार्त्तिकं त्वभ्युपेत्यवादमात्रत्वेन व्याख्येयम्। मातुलदुहितृपरिणयनस्याश्वविक्रया-दिवत् दुराचारत्वस्मृतिः पितृसन्ताने सप्तमान्मातृसन्ताने च पञ्चमादर्वाकपुत्रिकाकरणा-भावमनिश्रित्य परिणयनविषयेति सर्वमनवद्यम्।

न केवलमानुमानिकस्यैव श्रुत्यादेः परेण लिङ्गादिना प्रत्यक्षेण बाधः, किन्त्वानर्थक्या-पत्तौ प्रत्यक्षस्यापीत्याह—**सर्वत्र वेति**। विपरीतबाधोदाहरणार्थसाधनविशेषलक्षणार्था जातिनाध्यवसीयते। व्रीहिजातिरहितं यत्साधनं, किं तद्यस्तन्दुला भवन्ति तत्प्रोक्षितव्य-मिति तन्दुलनिर्वृत्तिकरणता हि साधनं, न द्रव्यतेति नवमाधिकरणभाष्यम् अर्थतः पठति—**तविति**। श्रौतं व्रीहिस्वरूपमनादृत्य प्रकरणगम्यापूर्वसाधनांशलक्षणो सृजतिना व्यवहिताः प्रमेयाख्याश्रयबलाबलवैपरीत्यादपि प्रमाणबलाबलवैपरीत्यं भवतीत्याह—**तथेति**। श्लोकं व्याचष्टे—**सर्वेति**। एतदेव लोकसिद्धयोपपादयति—**तथा चेति**।

श्रुतिलिङ्गविरोधापादनभाष्यस्य सूत्रोक्तसमवायोपपादनार्थत्वसूचनार्थं वृत्तवर्त्तिष्य-माणकीर्त्तनं करोति—**एवमिति**। किन्तावदित्यादिपूर्वपक्षभाष्यलिङ्गस्य श्रुत्यपेक्षत्वेना-सम्भवादर्थविषयप्रतिज्ञानुपपत्तेरयुक्तमाशङ्क्योपपादयितुमाह—**तत्रेति**। श्रुत्यपेक्षत्वाभ्यु-पगमेऽपि यस्मिन् विषये विरोधो नास्ति, यस्मिन् यल्लिङ्गस्य श्रुतिकल्पनहेतुभूतसमवे-तार्थोक्तिसामर्थ्यं करणाम्नातं च रूपं, तस्य विरोधविषयेऽपि तुल्यत्वात् श्रुतिकल्पना-विघातः, तुल्यबलत्वोपपत्तिं प्रदेशान्तरेत्यनेनोक्त्वा यथाश्रुतेर्विरोधयोस्तुल्यं रूपम्। तथा लिङ्गस्यापीति श्रुतिदृष्टान्तेन लिङ्गस्य रूपतुल्यत्वं द्वयोरपीत्यनेनोपपादितया पूर्वार्धं व्याचष्टे—**स्वत एवेति**।

श्रुतिलिङ्गजन्ययोर्ज्ञानयोस्तुल्यरूपत्वेन श्रुतिलिङ्गत्वोपपादनार्थं न हीति भाष्यं श्रौतविनियोगान्यथानुपपत्तिकल्पितया गार्हपत्योक्तिशक्त्यैन्द्रोक्तिशक्तिबाधात् श्रुत्याख्य-लिङ्गरूपविकल्पेन लिङ्गस्य ज्ञानोत्पादकत्वानुपपत्तेरयुक्तमाशङ्क्योपपादयितुमाह—**न हीति**। रूपोक्त्या शक्त्यभिधानादज्ञानत्वशक्तिकस्य मन्त्रस्य विनियोक्तमशक्यत्वात् विनि-योगात् प्राक्शक्तिनिरूपणे कार्ये स्वारसिकेन्द्रोक्तिजनितेन्द्राङ्गत्वज्ञानबाधा न शक्येत्यर्थः। लिङ्गजन्यस्य ज्ञानस्य सविचिकित्सत्वाल्लिङ्गस्य सारूप्यशङ्कार्थम्।

## विक्षेपशब्दार्थनिर्वचनम् ।

नन्वितिभाष्यं लिङ्गादपि सन्देहाख्यविचिकित्सानुत्पत्तेरयुक्तमाशङ्क्य, विक्षेपार्थत्वेन विचिकित्सोक्तिं व्याख्यातुमाह—**नन्विति** । स्वतःप्रामाण्यात् विक्षेपायोगमाशङ्क्य—**नहीत्युक्तम्** । नैतदिति परिहारभाष्यं श्रुत्यपेक्षत्वेन कुतश्चित् लिङ्गान्निर्विक्षेपप्रत्ययायोगादयुक्तमाशङ्क्योपपादयितुमाह—**परःपुनरिति** । भवतु लिङ्गात्प्रत्यय इति भाष्यत् लिङ्गेन ज्ञानोत्पादनं सिद्धान्तिनाप्यभ्युपगतत्वात् ऐकान्तिकभ्रान्त्या गृहीत्वा ज्ञानस्योत्पन्नस्य विक्षेपेऽपि दोषाभावेन सविक्षेपत्वस्य सविचिकित्सत्वस्य वाच्यत्वात्, सन्देहो, विपर्ययो, अनध्यवसायो वा सदसत्तासाधारणज्ञानरूपो विचिकित्साशब्देनोक्त इति मत्वा, सन्दिग्धबुध्यभावान्नैतदेवमिति वाचकाभावेन च विपर्ययायोगात्पारिशेष्यादिन्द्राङ्गत्वलक्षणयैन्द्रीत्वलक्षणयैन्द्रीत्वसदसत्त्वयोर्मध्येऽन्यतरानिश्चयरूपोऽनध्यवसायाख्यो भवति । तस्याविरोधेऽपि विषयसदसत्त्वादन्यत्र परिच्छेदफलविज्ञानरूपत्वाभावेनाप्रामाण्यात् बलाबलचिन्तानुपपत्तेर्बाध्यत्वेऽपि न पूर्वपक्षहानिः । यतस्तु कदाचनेति स्पष्टेन्द्रलिङ्गात् इन्द्रदेवत्योऽयं मन्त्रो भवत्येवेति, एवं सत्त्वनिश्चयरूपे निर्विचिकित्साख्यः प्रत्ययो भवति सप्रामाण्याविशेष्याद्विकल्पितुमर्हतीति पूर्वपक्ष्याहेत्यर्थः । नन्विति शङ्काभाष्यश्रुतिविरोधे मन्त्रस्येन्द्रपरत्वायोगात् विज्ञानोत्पादकशब्दसहकारितात्पर्यावधारणाभावे विज्ञानापरपर्यायाध्यवसायाख्यनिर्विचिकित्सत्वानुपपत्तेरयुक्तमाशङ्क्य, सविचिकित्सो हीति भाष्यवदिहापि विक्षेपार्थे विचिकित्सोक्तिरित्येवं व्याचष्टे—**नन्विति** । नैतदिति परिहारभाष्यं विक्षेपेऽप्यविरोधिविकल्पनोत्तरकालं प्रामाण्यासम्भवादयुक्तमाशङ्कानध्यवसायाख्यविचिकित्साशयत्वेन व्याचष्टे—**इतरस्त्विति** । काममित्यादि न लिङ्गं विनियोजकमित्यन्तं शङ्काभाष्यम् । सिद्धान्तिनः सार्वत्रिकलिङ्गात्प्रामाण्यानुज्ञानौचित्यादयुक्तमाशङ्क्य, विरोधे तावत् प्रामाण्यं नास्त्येवेत्येवमर्थत्वं कुपितोक्त्या सूचयन् व्याचष्टे—**सिद्धान्तेति** ।

विचिकित्सोक्तेर्विक्षेपार्थत्वव्याख्याया लिङ्गस्य चाप्राप्तबाधोक्तेरेतद्भाष्यविरोधं शङ्कते—**कथं पुनरिति** । यदि सविचिकित्सोक्त्या सविक्षेपतोच्यते कथं भाष्यकृता सविक्षेपकत्वम् सविचिकित्सशब्दवाच्यत्वेन परित्यज्य, संशयो यः स विचिकित्सशब्दवाच्यत्वेन लोके प्रसिद्धः । स एवात्र सविचिकित्सत्वेनोच्यते लिङ्गस्य वा प्राप्तबाधाभ्युपगमे कथं लक्षणस्य चाप्राप्तबाधाभ्युपगमे कथं लिङ्गपरिज्ञातत्वं भाष्यकृतोच्यते नास्मिन् विषयद्वये भाष्यविरोधो वार्त्तिकस्येत्याशयः । वाशब्दार्थे एवशब्दः ।

श्रुत्यविरोधे लिङ्गविनियोज्यस्य मुख्यार्थतात्पर्यावधारणा लिङ्गस्याङ्गत्वरूपार्थत्रिविषयपरिच्छेदकविज्ञानोत्पादकत्वेऽपि विरोधात्तत्पर्यानवधारणात् शक्तिप्रकरणाम्नानलक्षणलैङ्गिकज्ञानमात्रोपपादकसामग्रीसद्भावेऽपि विषयपरिच्छेदकस्वरूपज्ञानविशेषात्मना विज्ञानोत्पादकतात्पर्यावधारणाख्यसामग्र्यभावात्सदसत्त्वसाधारणज्ञानरूपोऽनध्यवसायः संशय एव प्रतिभादितुल्यो यस्माद्भवति । तस्माद्यद्यपि पूर्वपक्षिणोक्तोकोपेनाविरोधेऽपि प्रामाण्यं त्यज्यते ।

तथापि तद्वरमङ्गीकुर्मः । न तु विरोघे प्रामाण्यमित्येवमर्थत्वात् भाष्यस्य न तद्विरोघाख्यो दोषो वार्त्तिकस्यास्तीत्याह—**नैष इति** । ज्ञेयसत्वानिश्चयतुल्यत्वात् सन्दिग्धत्वोक्त्या नाध्यवसाय एवोक्तः । शक्तिप्रश्नाणाम्नानमात्रस्य च लैङ्गिकज्ञानसामग्रीत्वाभ्युपगमेनाऽविरोधेऽपि ज्ञानमात्रोत्पत्तिरुक्ता । वस्तुतः श्रुतिकल्पनां विना लिङ्गस्य विनियोक्तृत्वायोगात् आकाङ्क्षां च विना, श्रुतिकल्पनां विना लिङ्गस्य शक्तेराकाङ्क्षायामपि सामग्रीत्वावगमात् प्रत्यक्षया च श्रुत्यान्यत्र विनियुक्तस्य मन्त्रस्याकाङ्क्षानिवृत्तेः सामग्र्यभावेन ज्ञानमात्रस्याप्युत्पत्त्ययोगात् प्रामाण्यशङ्कैव नास्तीत्यभिघानार्थं 'यदेवेत्यादिभाष्यावयवं व्याचष्टे—**यदि चेति** ।

सामान्यतो लिङ्गप्रामाण्योक्त्यर्थमात्रेत्यादिप्रमाणमित्येतत्परिहारभाष्यं सिद्धान्तिना सार्वत्रिकप्रामाण्यापह्नवादयुक्तमाशङ्क्य काममित्यादिभाष्येण सिद्धान्तिना सार्वत्रिकप्रामाण्ये शङ्कितेऽपि पूर्वपक्षी भ्रान्त्या सार्वत्रिकप्रामाण्यापह्नवं सिद्धान्तिमते मत्वा प्रकरणवदित्यादिभाष्येण प्रामाण्यमार्गं दर्शयन्तीत्याह—**परस्त्विति** ।

इममेव लिङ्गप्रामाण्यमार्गं द्रढयितुमाह— **तदेतदिति** । यद्वा सार्वत्रिकं लिङ्गाप्रामाण्यं सिद्धान्त्यनभिमतं न विरोघविषयाप्रामाण्योक्तिसौकर्यार्थं काममिति भाष्येणाशङ्कितं तन्निरासार्थं च सामान्यतः प्रामाण्यमत्रेति भाष्येण पूर्वपक्षेनोक्तमित्येवमन्यथा भाष्यद्वयं व्याचष्टे—**अथ वेति** । तुल्यबलत्वाभावेऽप्यविरोधात् समुच्चय इति पूर्वपक्षभाष्ये व्याचष्टे—**अभ्युपगम्यापीति** । एकस्यानेकार्थता विरुद्धेत्याशङ्क्य, प्रयाजादिजन्यस्योपकारस्यैकस्याप्यनेकार्थत्वादर्शनादविरोघोक्त्यर्थं न चेति भाष्यावयवं व्याख्यातुमाह—**तद्यथेति** । अश्रुतावृत्तिदोषापत्तेः विरोधाशङ्कार्थं नन्विति भाष्यं व्याचष्टे—**सकृदिति** । प्रधानानुरोधेन गुणावृत्तेर्न्याय्यत्वात् विरोघपरिहारार्थमुपस्थापयेति भाष्यं व्याचष्टे—**नेति** । एकस्येन्द्रशब्दस्य मुख्यजघन्यवृत्तिद्वयविरोघशङ्कार्थमयं तर्हीति भाष्यं व्याचष्टे—**इन्द्रेति** । प्रयोगभेदेन विरोघपरिहारार्थं नेति ब्रूम इतिभाष्यं व्याचष्टे—**नेति** । इन्द्रार्थत्वे मुख्यवृत्तेः सम्भवस्य गार्हपत्यार्थत्वे द्वारसम्भवस्याश्रवणादित्यर्थः । अत इत्युपसंहारभाष्यं समुच्चयपूर्वपक्षानुरूपत्वादयुक्तमाशङ्क्य, परं लक्षणार्थत्वेन तुल्यबलोक्ति व्याचष्टे—**तस्मादिति** ।

एवमिति सिद्धान्तप्रतिज्ञाभाष्यं व्याचष्टे—**एवमिति** । कुत इत्याद्यवगम्य तं प्रश्नपूर्वमुपपत्तिभाष्यं व्याचष्टे—**कुत इति** । विधेरस्य मन्त्रस्य सामान्यतः समीहिताङ्गत्वे विघितोऽवगतेर्द्वितीयया गार्हपत्यस्येप्सिततमत्वेन समीहितत्वोक्तेर्गार्हपत्याङ्गतोक्ताभवतीत्याशयः । श्रुत्याख्यस्य वचनाभावेऽपि प्रकरणलभ्यसामान्यसम्बन्धेऽस्य लिङ्गाद्विनियोगो भविष्यतीति अत्राभिधीयतइत्यादि पूर्वपक्षभाष्योक्तानुभाषणार्थं नन्विति भाष्यं व्याचष्टे—**यस्त्विति** । वैदिकेऽर्थे शब्दातिरिक्तप्रमाणायोगात् श्रुत्यभावे लिङ्गादेः प्रमाण्येन सम्भवतीति परिहारार्थं नैतदित्यादिविप्रकृष्टः श्रुत्यर्थाल्लिङ्गमित्यन्तं भाष्यं व्याचष्टे—**तदिति** । श्रुतिं विना प्रामाण्याभावे लिङ्गस्य श्रुत्यभावेऽनुपपत्त्यभावात् श्रुतिसद्भावकल्पकत्वायोगात्प्रामाण्यापत्तेर्बलाबलचिन्तानुपपत्तिशङ्कार्थं तदित्यादिभाष्यं व्याचष्टे—**परस्त्विति** ।

अध्ययनविधितो मन्त्रस्य सामान्यतः समीहितार्थत्वेऽवगते तद्विशेषापेक्षायां प्रकरणेन प्रकृते कर्मणि समीहितविशेषत्वेन समर्पिते यदुद्देशेन विधिविषयत्वाख्यस्य तादर्थ्यस्यानेनेदं कुर्यादित्येवं रूपाङ्गाङ्गिवाचिशब्दाभावेऽनवगते समीहितविशेषार्थत्वं च विना सामान्यतोऽवगतस्य समीहितार्थत्वस्यानिर्वाहात्तन्निर्वाहायानेन यजेतेति श्रुतौ प्रकरणेन कल्पितायां कथं मन्त्रेण यागं कुर्यादित्यपेक्षायां यथा शक्नुयादिति सर्वाख्यातसाधारणोपबन्धात्सामान्यतः शक्त्याद्वाराऽवगमे तद्विशेषापेक्षायां लिङ्गेनाभिधानाख्ये द्वारविशेषे समर्पितेऽपि पूर्ववदेव मन्त्राभिधानयोरन्वयत्राचिशब्दाभावेऽन्वयानवगतेरभिधानद्वाराऽनेन मन्त्रेण यजतेति द्वारद्वार्यन्वयवाचिशब्दकल्पनेऽस्या लैङ्गिकविनियोगान्यथानुपपत्तिलक्षणार्थापत्त्याऽवगतश्रुतिमूलत्वेन लिङ्गप्रामाणयोक्त्यर्थं मन्त्रेत्यादिश्रुतिमूल एवायमर्थं इत्यन्तं भाष्यं व्याचष्टे—**सिद्धान्तेति** ।

लिङ्गस्य श्रुतिकल्पकत्वे सति विरोधेऽपि श्रुतेरेव कल्पकत्वाविघातात् प्रामाण्याविघातशङ्कार्थं यदीत्यादि अर्हतीत्यन्तं भाष्यं व्याचष्टे—**परस्तु मदीयमेवेति** । नापीत्यादि बाध्यतद्दृत्यन्तं भाष्यं प्रामाण्यविकल्पाख्यदोषपरीहारार्थत्वेन व्याचष्टे—**सिद्धान्तेति** ।

विकल्पायोगोपपादनार्थं यतस्त्वित्याद्यर्थविप्रकर्ष इत्यन्तं भाष्यावयवं व्याख्यातुम्—**विरोधे चेत्युक्तम्** । भाष्ये च लिङ्गभूतस्येन्द्रशब्दस्येन्द्रोक्तिमसामर्थ्यमालोच्य अनेन मन्त्रेणेन्द्रोपाख्यानमित्ययं ततोऽर्थो च गम्यतइत्युक्ते सामर्थ्यादिन्द्रशब्दमात्रविनियोगः स्यात्, न कृत्स्नमन्त्रस्येत्याशङ्क्य, कृत्स्नमन्त्रविनियोगविषयश्रुत्यनुमानाय प्राग्भवन्तीति कृत्स्नस्य मन्त्रस्यैकवाक्यतामपेक्ष्य—**आलोच्येत्युक्तम्** । तदस्मै प्रभवति सन्तापादिभ्य५-१-१०१इति स्मृतेः सन्तापादिष्वनुमानशब्दस्य पाठमङ्गीकृत्याप्रत्ययोत्पत्तिमलिङ्गेन पदमात्रविनियोगात् वाक्यीयकृत्स्नमन्त्रविनियोगायोगस्मृत्यनुमेयश्रुतिवच्च लिङ्गाद्यनुमेयायाः श्रुतेः क्व चिदपाठात्, पाठं च विना विशिष्टक्रमकवस्तुसमूहार्थश्रुत्यसम्भवात् लिङ्गादिभिः श्रुत्यनुमानायोगमाशङ्क्य पदमात्रस्य निराकाङ्क्षार्थे शक्तत्वेनाप्रयोज्यतया विनियोगानर्हत्वात् पदमात्रे लैङ्गिकविनियोगानर्हत्वात् पदमात्रे लैङ्गिकविनियोगपर्यवसानानुपपत्तेः प्रथमिन्द्रपदैकवाक्यत्वालोचनया कृत्स्नस्य मन्त्रस्येन्द्रोक्तिसामर्थ्यरूपं लिङ्गज्ञानं, ततः कृत्स्नमन्त्रसामर्थ्यालोचनयोच्चरितेनाप्यनेन मन्त्रेणेन्द्रोऽभिधेय इति शब्देन प्रयोगवाक्यैकदेशतयाभिसंहितेनोच्चारणक्रमाभावेऽपि अभिधानक्रमात्सम्भवाद्विशिष्टक्रमकवर्णसमूहात्मकत्वेनास्य मन्त्रस्येन्द्राङ्गस्वरूपोऽर्थोऽभिहितो भवतीति विज्ञानमित्येवं शङ्काद्वयपरिहारार्थं प्रथमं तावदिति भाष्यद्वयमविरोधे श्रुतिकल्पनोपपत्त्यर्थत्वेन व्याख्यातुम्—**यत्र हीत्युक्तम्** ।

प्रत्यक्षश्रुतिविरोधे लैङ्गिकश्रुतिकल्पनायोगोक्त्यर्थं तदेतदित्यादिभाष्यावयवं व्याख्यातुम्—**यत्रत्वित्युक्तम्** । गार्हपत्योपस्थानाख्येनैकेनैवोपकारेण निर्ज्ञातेन मन्त्रवाक्यस्य कृतायागोपकाराख्यप्रयोजनत्वात् प्रकरणस्य च कृतयागाङ्गत्वबोधाख्यप्रयोजनत्वान्नैराकाङ्क्षयं तत्रेत्यनेनोक्तप्रयोजनाख्यः समीहितोक्त्यर्थः । चातुर्वर्ण्यादिवत्स्वार्थिकस्यानेन

भाष्यस्थेन सामर्थ्यशब्देनोक्तः। विकल्पस्य चेत्यादिभाष्यं व्याचष्टे—**किं चेति**। अष्टदोषत्वेनान्याय्यत्वोपपादनार्थं नित्यवच्चेतिभाष्यं व्याचष्टे—**स्वतन्त्रयेति**। श्रुत्युपन्यासेन लिङ्गमप्युपलक्षितमिति सूचनार्थम्—**लिङ्गेन चेत्युक्तम्**। चोदितं सन्न कृतमित्यनेन श्रुतं चेति भाष्यावयवं व्याख्याय, अचोदिते सत्कृतमित्यनेनाश्रुतं सत्कृतं भवतीत्येवमश्रुतमिति भाष्यावयवे व्याख्याते व्युत्क्रमव्याख्यायां को हेतुरित्याशङ्क्य चोदितस्यापीतरालोचनेनाचोदितत्वापत्तिं हेतुं सूचयितुम्—**तदपेक्षेत्युक्तम्**। अन्यतराश्रयणे सति इतरकरणस्य चोदितत्ववदाश्रीयमाणस्य नियमार्थेन शास्त्रेणार्थादन्यनिवृत्तेरितराकरणस्यापि चोदितत्वात् दोषोऽकृतेनेत्याशङ्क्येतरन्न कार्यमिति निषेधाभावान्नियमस्य च स्वविषयनियतत्वमात्रपर्यवसानेनान्यनिवृत्तावव्यापारात्प्रकरणमपि चोदितमिति नास्ति येनाकृतत्वस्यादोषत्वं स्यादिति तदकरणमपीत्यनेनोक्तमश्रुतस्याप्यनिषिद्धत्वेनादुष्टं करणमित्याशङ्क्य न शास्त्रपरिमाणत्वादित्यनेन न्यायेन पदार्थेयत्तानियमात् अधिकपदार्थकरणे चेयत्ताबाधापत्तेरश्रुतकरणदोषत्वोक्त्यर्थं यावांश्चेति भाष्यं व्याचष्टे—**श्रुतेति**। तुल्यत्वोपपादनार्थं उभयत्र हीति भाष्यं व्याचष्टे—**प्रसिद्धीति**। विकल्पपक्षनिरासोपसंहारार्थं तस्मादीति भाष्यं व्याचष्टे—**तस्मात्तावदिति**। समुच्चयपक्षस्याविरोधात्खल्वपीत्यादिपूर्वपक्षभाष्योक्तस्यानुभाषणपूर्वं निरासार्थमथेत्यादिभाष्यं व्याचष्टे—**यस्त्विति**। विरोधोपपादनार्थं यत्कृतसामर्थ्ययोरित्यादिभाष्यं प्रश्नपूर्वं व्याचष्टे—**कथमिति**। भाष्यस्य वाक्योक्तिव्याख्यार्था मन्त्रोक्तिः। कृतप्रयोजनोक्तेर्नैराकाङ्क्ष्यसिद्ध्यर्थत्वसूचनार्थम्—**निराकाङ्क्षइत्युक्तम्**। यस्मान्मन्त्रप्रकरणे द्वे अपि निराकाङ्क्षे कृते, लिङ्गस्य च विनियोगरूपोऽर्थः, साकाङ्क्षाभ्यां मन्त्रप्रकरणाभ्यां साध्यः। तस्माल्लिङ्गं श्रुत्या विरुध्यतइत्यर्थः।

श्लोकं व्याचष्टे—**एक इति**।

मन्त्रप्रकरणयोर्नैराकाङ्क्ष्यं सति हविष्कृदेहीति त्रिवरघ्नन्नाह्वयतीत्यादिवच्छ्रुतेरपि विनियोजकत्वायोगात् लिङ्गविनियोज्यपदातिरिक्तपदमात्रसमूहस्य चाकृत्स्नवाक्यत्वेनाविनियोज्यत्वे विनियोगयोर्द्वयोरप्ययोगात् लिङ्गविनियोज्यपदैकवाक्यतायाश्च लैङ्गिकविनियोगापेक्षत्वस्य निःसन्दिग्धत्वात् लिङ्गेन सह तुल्यबलत्वशङ्कानुपपत्तेर्भाष्योक्तं लिङ्गवाक्यविरोधोदाहरणापरितोषात्स्वयमुदाहरणान्तरं तावदाह—**लिङ्गेति**। होता यक्षन्मित्रावरुणाप्रशास्ताराप्रशास्त्रऋतुना सोमं पिबतां प्रशास्तर्यजेति प्रैषः प्रशास्तृशब्दस्य मैत्रावरुणवाचित्वात् स्वशक्त्या मैत्रावरुणयागे नियुङ्क्ते। ततश्च मैत्रावरुणस्यनियोज्यत्वेन नियोक्तृत्वायोगाद्विनियोगार्थे प्रेष्येषु मैत्रावरुणविधिर्न केवलेष्विति सूचनार्थम्। हौत्रप्रवचनाधीनत्वविशेषणं कोऽनुष्ठाने विशेषइत्यपेक्षायामाह—**तत्रेति**। मैत्रावरुणस्य यागे नियोगेऽस्मिन्स्तस्य प्रैषे कर्तृत्वाशक्तेः अशक्तस्य च विनियोगायोगात् वाक्येन प्रैषे विनियोगायोगमाशङ्क्य वाक्यावगतेन प्रैषकर्तृत्वेन लिङ्गानवगतयागकर्तृत्वबाधात् होतुरेव समाख्यावगतं यागकर्तृत्वं बाधकाभावेन यागे नियोगावगतेर्मैत्रावरुणस्य प्रैषे शक्त्यविरोधोक्तौ त्वात्मनि चेत्युक्तम्। केन परेण मैत्रावरुणो यागे नियोक्तव्य इत्यपेक्षायां स च परो होता

नियोक्ता 'विप्रतिषेधेकरणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यादि३-८-२१-ति सूत्रशेषोक्तेन न्यायेन विज्ञायतइत्युक्तेष्वपकृष्टस्योत्कृष्टकार्यकारित्वप्रसिद्धेर्मैत्रावरुणादुत्कृष्टस्य होतुर्मैत्रावरुणकार्यकारित्वायोगान्मैत्रावरुणादपकृष्टस्यानन्तरस्य होतृपुरुषत्वेन-मैत्रावरुण-सदृशस्याच्छावाकस्यैवानेन न्यायेन मैत्रावरुणकार्यकारित्वप्राप्तेरपरितोषात्समाख्ययोर्होतृ-कर्तृकत्वं प्रैषस्योक्तं प्रैषार्थेऽपि तर्हि यागे समाख्यया होतैव कर्त्ता स्यादित्याशङ्क्य यागांशे लिङ्गेन समाख्याबाधः प्रैषार्थेत्यनेनोक्तः ।

मन्त्रब्राह्मणयोर्विरोधे मन्त्रस्य तु ब्राह्मणचोदितार्थप्रकाशनात् तत्परतन्त्रवृत्तेरित्यैन्द्रय-धिकरणवार्त्तिके मन्त्रस्य ब्राह्मणानुरोधवृत्तित्वोक्तेः प्रैषमन्त्रानुरोधेनेह ब्राह्मणवाक्यबाधो न युक्त इत्याशङ्क्याह—**यद्यपि चेति** । ब्राह्मणोक्ततया श्रुतिस्तत्र विवक्षितेत्याशयः । कीदृक् लिङ्गमित्यपेक्षायामाह—**यदि होति** । मैत्रावरुणस्य प्रैषकारित्वे होतुः समाख्यावगतप्रैषकार्यं यागकारित्वापत्तेर्यागनियोज्योक्तचर्थेन प्रशास्तृशब्देन होता वाच्यः । स च मैत्रावरुणकार्य-लोपं मत्वा न शक्यो वक्तुमित्याशयः । मैत्रावरुणस्य प्रैषार्थकारित्वेऽपि होतृशब्दो मैत्रा-वरुणेऽनर्थकः स्यान्न युक्तोऽनर्थकोऽभ्युपगन्तुमिति, लिङ्गद्वयविरोधस्यैतदुदाहरणम् । ततश्चो-पक्रमस्थेन होतुर्यष्टृत्वलिङ्गेनोपसंहारस्थस्य प्रशास्तुर्यष्टृलिङ्गस्य बाधः स्यादित्याशयेन शङ्कते—**ननु चेति** ।

ऋग्वेदविहितकर्मकारित्वगुणयोगेन होतृशब्दस्यार्थवत्त्वाभ्युपगमे प्रशास्तृशब्दस्यापि तुल्यार्थवत्तेत्याह—**गौण इति** । आदिरित्यादिशब्दसूचितं होतृशब्दस्य गौणत्वायोगं प्रकट-यितुमाह—**अपि चेति** । शङ्काशयं प्रकटयन्नुपसंहरति—**तस्मादिति** । होतृशब्दस्य होतरि मुख्यायां वृत्तौ ऋग्वेदविहितकर्मकारित्वस्य निमित्तत्वेन मैत्रावरुणेष्टयां वृत्तौ निमित्तत्वा-योगात् कार्यापत्तिरेव निमित्तं वाच्यो । मैत्रावरुण एव होतृकार्यम् ऋग्वेदविहितं करोति, न तु मैत्रावरुणकार्यं प्रैषानुवचनं होतेत्याशयेन परिहर्त्तुमाह—**अत्रेति** । एवमपि होतृ-शब्दस्य गौणत्वदोषो परिहृतः स्यादित्याशङ्क्य—**सर्वथा तावदित्युक्तम्** । अगत्या च मुख्यस्यापि गौणत्वं न दोषायेत्याशयः 'अध्वर्यवो यजयन्ति विनिषद्यो-द्गातारः स्तुवन्तीत्यादौ च मुख्यर्त्विग्वाचिनोरध्वर्यूद्गातृशब्दयोस्तत्पुरुषेष्वपि प्रयोगदर्शनात् होतृशब्दस्यापि मुख्यर्त्विग्वाचिनस्तत्पुरुषमैत्रावरुणवाचिता कल्पयितुं युक्तेति सूचयितुमाह—**सर्व एवेति** । अथाह 'यद्धोता यक्षद्धोता जक्ष'ति मैत्रावरुणो होत्रे प्रेष्य-त्यथ कस्मादहोतृभ्यः सद्भ्यो होत्राशंसिभ्यो होता यक्षद्धोता यक्षदिति प्रेष्यतीति चाहो-तृषु होतृशब्दप्रवृत्तिनिमित्तं पृष्ट्वा 'प्राणो वै होता, प्राण सार्वंऋत्विजः' प्रतिप्रतिवचना-लोचनायां होतृशब्दस्य गौणतावसीयतइति सूचनार्थः सर्वशब्दः । अतो होतृलिङ्गत्वा-भावान्नायं प्रैषमन्त्रो होतारं प्रयुङ्क्ते, किं तु प्रशातृलिङ्गत्वात् प्रशास्तारमेवेति नेह लिङ्ग-योर्विरोध इत्युपसंहर्तुमाह—**तस्मादिति** । एतत्प्रैषानुवचममात्रविषय एव लिङ्गेन वाक्य-बाधो, नार्थेषु प्रेषानुवचनेष्वित्याह—**न चेति** ।

भाष्यकारोदाहरणमाक्षिपति—**स्योनमिति**। श्लोकं व्याचष्टे—**सत्यपीति**। पुरोडाशाधारस्य पात्रस्य सीदति पुरोडाशोऽस्मिन्निति व्युत्पत्त्या सदनशब्दवाच्यस्याभिघारणमाघारद्वारा पुरोडाशसंस्कारार्थत्वाद्भाष्यकृतोपस्तरणत्वेनोक्ते निश्चलत्वफलप्रतिष्ठापनपर्यन्तं सादनं मन्त्रवर्णोत्कार्यमिति सूचनाय प्रतिष्ठापनोक्तिः। स्योनादिकल्पयाम्यन्तपदसमूहात्मकमेकं वाक्य, तस्मिन्नित्यादिसुमनस्यमानान्तपदसमूहात्मकमपरमित्यर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादि२-१-४२त्यत्र वाक्यैकत्वविशेषणप्रत्युदाहरणत्वेनोक्तत्वात् सकलस्य स्योनादेः सुमनस्यमानान्तस्य पदैकवाक्यत्वायोगेऽपि तस्मिन्निति तच्छब्दाद्वाक्यद्वयैकवाक्यतावगम्यते यद्यपि किं सकलस्योनादिसुमनस्यमानान्तपदसमूहात्मकावान्तरवाक्यभेदशून्यं वाक्यं लिङ्गविनियोज्यत्वविचारो न सम्भवति, तथापि किमेक एवावान्तरवाक्यरूपांशो लिङ्गबलीयस्त्वाद्विनियुज्यते, वाक्यबलीयस्त्वाद्वा द्वितीयोऽपि द्वितीयांशेन सहैकोऽशो विनियोज्यः, केवलो वेत्येवं विचारः सम्भवतीति परमतेन तावत्समाधत्ते—**तत्रेति**।

मन्त्रप्रकाश्यस्यार्थद्वयस्य विशेषणविशेष्यत्वेनोक्तावान्तरवाक्यभेदायोगात्स्वातन्त्र्येणोक्तौ विधेयत्वाभावेनाङ्गाङ्गित्वाद्यपेक्षाभावात् वाक्यैकवाक्यत्वानुपपत्तेरिहावान्तरवाक्यभेदे सति वाक्यैकत्वायोगात् सत्यपि च वाक्यैकवाक्यत्वे लिङ्गस्यावान्तरवाक्यविनियोगेन पर्यवसानसम्भवेन वाक्यान्तरैकवाक्यत्वानपेक्षाल्लिङ्गानपेक्षितस्यावान्तरस्यार्थान्तरे च लिङ्गविनियोगेन निराकाङ्क्षीकृतस्य लिङ्गविनियोज्यावान्तरवाक्यैकभूतावान्तरवाक्यान्तरविनियोजकतया लिङ्गापेक्षेण वाक्येन विनियोगाशक्तेर्वाक्यस्य विनियोजकत्वायोगात्सत्यपि विनियोजकत्वे लिङ्गस्य वाक्यानेकत्वनिश्चयाद्वाक्यस्य लिङ्गपेक्षत्वनिश्चयात्तुल्यबलत्ववाक्यबलीयस्त्वयोः शङ्कानुपपत्तेरेतत्समाधानापरितोषादन्यथा समाधत्ते—**अथ वेति**। श्लोकं व्याचष्टे—**तस्मिन्निति**। साकाङ्क्षावयवत्वे सत्यप्यर्थैक्याभावादेकवाक्यत्वायोगमाशङ्क्य साकाङ्क्षावयवत्वेनैवार्थैक्यस्य कल्पयितुं शक्यत्वादिदमेवैकवाक्यत्वे प्रधानकारणमित्युक्त्वा, साकाङ्क्षावयवत्वेनार्थैक्यकल्पनं शक्यते हीत्यादिनोपपादितं यदीत्यादिना लिङ्गबलीयस्त्वस्य नानावाक्यत्वानापादकतोपपादिता। वाक्यस्य तर्ह्यलब्धात्मकत्वाद्विरोधो बलाबलचिन्ता वा न युक्तेत्याशङ्क्याह—**तेनेति**।

वाक्यस्यात्रात्मलाभोऽस्ति न वेत्येवमिह चिन्त्यते। तेन लब्धात्मकस्य वाक्यस्य लिङ्गेन सह विरोधे सति बलाबलमिव वाक्यात्मलाभस्याशङ्क्यमानस्य बलाबलसहितो लिङ्गवाक्ययोर्विरोध इति भाष्यस्थविरोधोक्त्या चोक्तो। ननु लब्धात्मकस्य वाक्यस्येति वदता सूचिते वाक्यात्मलाभस्य भाष्यानारूढत्वमाशङ्क्य कृत्स्नमन्त्रविनियोगोक्तिद्वारा कृत्स्नस्यैकमन्त्रतोक्तेत्युक्तम्। अनेन न कृत्स्न एको मन्त्र इति कृत्स्न उभयत्र विकल्पेन, समुच्चयेन वा प्रयोक्तव्य, उत कल्पयाम्यन्त एको मन्त्रस्तस्मिन् सीदेत्यवमादिरपर इतिकृत्वा विभज्यैत्येव सन्देहभाष्यव्याख्यायां सूचिता। वाक्यात्मलाभ एव कथं तर्हि कस्मात्साक्षान्न विचारित इत्याशङ्क्याह—**तत्रापीति**। साकाङ्क्षावयवत्वेनापाततो वाक्यात्म-

लाभप्रतीतेर्लिङ्गेन वाक्यभेदप्रत्ययनेन बाधे सत्यनिर्वाहादबाधे तु निर्वाहाद्वाक्यात्मलाभसह-सद्भावार्थं बाधकसदसद्भावविचार इत्याशयः।

किं तावदिति पूर्वपक्षभाष्यं व्याचष्टे—**किमिति**। तुल्यबलत्वे पूर्वपक्ष्यमाणे कृत्स्नो मन्त्र उभयत्र प्रयोज्य इति पूर्वपक्षवचनव्यक्त्यसम्भवमाशङ्क्य, पुरोडाशसादने चेति चकारेण विभज्य प्रयोगोऽपि पाक्षिकः सूचितः पुरोडाशसादने वेति वाशब्दाध्याहारेणोभयत्र विकल्पेन कृत्स्नप्रयोगस्य शब्दावृत्त्या समुच्चयेन कृत्स्नप्रयोगोऽभिहित इत्येवं पूर्वपक्षवचनव्यक्तिभाष्यव्याख्यां सूचयितुमाह—**तदा चेति**। लैङ्गिकविनियोगपक्षे विभज्य प्रयोगः वाक्यीयविनियोगपक्षे विकल्पेनोपस्तरणसादनयोर्मध्येऽन्यतरत्र समुच्चयेन वोभयत्र समुदायः प्रयोक्तव्य इत्यर्थः। निभज्य प्रयोगस्य वाक्यभेदापेक्षत्वात्समुदायप्रयोगस्य वा भेदापेक्षत्वात् वाक्यभेदाभेदयोस्त्वार्थभेदाभेदापेक्षत्वात्तावत एव च स्योनादेः सुमस्यमानान्तस्य मन्त्रसमूहस्यैकोऽर्थो भिन्नो वेत्यनवस्थितमन्त्रशास्त्रार्थायोगाद्विभज्य समुदायप्रयोगयोर्विकल्पो न सम्भवतीत्याशङ्कते—**कथं पुनरिति**। समुदायावयववैकल्पिकप्रयोगोपादकवैकल्पिकभिन्नाभिन्नरूपतेत्यंशब्देनोक्ता। एकस्याप्यतो देवा अवन्तु न इत्यादेर्मन्त्रस्य देवविष्णवादिवैकल्पिकदेवतास्मृत्या वैकल्पिकानेकार्थत्वावगमात् एकस्यापि स्योनादेः सुनमस्यमानान्तपदसमूहस्य विशेष्यभावापन्नैकार्थत्वं, स्वतन्त्रार्थपरत्वं वेत्येवं वैकल्पिकानेकार्थत्वाविरोधेन वैकल्पिकवाक्यभेदाभेदविकल्पाविरोधाद्विभज्य समुदायप्रयोगयोरविरुद्धो विकल्प इत्याशयेन परिहरति—**सर्वथेति**।

कथं प्रमाणतो भिन्नाभिन्नरूपतयाऽनवस्थितस्योनादिसुमनस्यमानान्तमन्त्रशास्त्रार्थावगतिरित्यपेक्षायामाह—**लिङ्गेति**। वाक्यबलीयस्त्वपूर्वपक्षोक्तचर्थमथ वेति भाष्यं व्याचक्षाणस्तस्मिन्पक्षे प्रकारेण विभज्य प्रयोगसूचनाशङ्कां निराकर्त्तुमाह—**यदा त्विति**। यथा लिङ्गाच्छीघ्रम्प्रवृत्तेः श्रुतिर्लिङ्गाद् बलीयसी। तथा यस्य येन सह सम्बन्ध एकवाक्यतया न विद्यते, न तस्य तद्विषया शक्तिः कल्प्यते इति वार्त्तिकोक्तेन न्यायेन लिङ्गस्य केवलपदविनियोगे पर्यवसानायोगेन पदान्तरैकवाक्यत्वापेक्षित्वात् वाक्यमपि लिङ्गात् शीघ्रं प्रवृत्तेस्ततो बलीय इत्यभिधानार्थं तद्धीत्यादिभाष्यं व्याख्यातुम्—**श्रुतिर्वेत्युक्तम्**।

एवमित्यादिप्रयोजनमस्तीत्यन्तं सिद्धान्तभाष्यं व्याचष्टे—**एवमिति**। तस्मिन्नित्यस्याप्युपलक्षणस्योनादिरिति स्योनादिह उपस्तरणप्रकाशनाय, तस्मिन्नित्यादिश्च सादनप्रकाशनाय स्वतोऽवगतेन सामर्थ्येन विनियोगान्निराकाङ्क्षः शक्यते कर्त्तुमिति। यत्तु साकाङ्क्षत्वं कल्पयितुमारभते—**तत्तस्मिन्निति**। तच्छब्दाधीनं तच्च वैश्वदेवीतिवत्रैकवाक्यत्वापादकसाकाङ्क्षत्वं कर्त्तुं शक्नोतीत्यध्याहारेण योज्यम्। वाक्यात्मलाभहेतोः साकाङ्क्षावयवत्वस्य तच्छब्दादापाततः प्रतीतस्यापि स्वतोऽवगतेन सामर्थ्येन बाधादेकवाक्यत्वस्यात्मलाभ एव नास्ति। कुतस्तस्य तुल्यबलत्वं, बलीयस्त्वं वा शङ्क्यचेतेत्याशयः। स्योनादेः कल्पयाम्यन्तस्य स्वकार्यसामर्थ्येन विनियोगनिराकाङ्क्षोक्त्या केवलस्य पदस्य

लिङ्गविनियोज्यत्वशङ्कानिरासोऽपि सूचितः। तस्मिन्नित्यादेर्नैराकाङ्क्षोक्त्याऽर्थस्य प्रकरणवत इत्यादेर्विनियोज्यतेत्यन्तस्याद्यस्य श्रौतं व्याख्यानमकृत्वा, स्योनादेर्नैराकाङ्क्षोऽर्थस्य तथेत्यादेः दाश्वात्यस्य श्रौतव्याकरणं, स्योनादेर्नैराकाङ्क्षस्य स्पष्टत्वसूचनायेतिसर्वस्तावदित्यनेन सूचनपूर्वं श्लोकं व्याचष्टे—**सर्वस्तावदिति**। उपलक्षित भाष्यव्याख्याप्रकरणार्थम्—**न चेत्युक्ते**। तच्छब्दस्य पूर्वापेक्षत्वात्कथं च परस्य पूर्वेण विनानर्थकत्वानापत्तिरित्याशङ्कानिरासार्थत्वेन श्लोकान्त्यपादव्यानाख्यार्थम्—**यद्यपि चेत्युक्तम्**। नास्तीत्यस्य न पुरोडाशसादनइत्यस्य च भाष्यावयवस्यान्त्येनैव पादेन व्याख्येति सूचनार्थम्—**तस्मादित्युक्तम्**।

एवमिति भाष्यस्य तस्मिन्सीदेति पुरोडाशसादनाभिधानसामर्थ्यादित्यादिना सामर्थ्यावगतसादनविनियोगमात्रेण निराकाङ्क्षोक्तेः सामर्थ्यस्य विनियोजकप्रमाण्यभावेन वोपस्तरणे विनियोगोक्तेस्तस्मिन्सीदेत्यस्योपस्तरणार्थात्सामर्थ्याभावाभिधानात् पुरोडाशसादनेऽपीति भाष्यस्य तत्तमेत्यादिना सामर्थ्यावगतेरुपस्तरणविनियोगमात्रेण नैराकाङ्क्षचोक्तेः, सादनं च विनियुज्यमानस्य स्योनमित्यस्य प्रयोजकवाचिप्रयोजनशब्दोक्तविनियोगाक्षेपकसामर्थ्याख्यप्रमाणाभावेन सादने विनियोगानर्हत्वोक्तेरर्थात्सामर्थ्याभावाभिधानात्पौनरुक्त्यमाशङ्क्याह—**एवमिति**। अर्थसिद्धस्यापीतरविषये सामर्थ्याभावनिरूपणस्य दार्ढ्यायेत्यर्थः। तस्मिन्नित्यस्य सादने विनियोगान्नैराकाङ्क्षये स्योनमित्यस्याप्युपस्तरणे विनियोगान्नैराकाङ्क्षये सतीति भाष्यस्यैवशब्दार्थः। यत्स्योनं तइत्येतस्येति भाष्यस्य सदेत्यनेन सीदेत्यस्य पुनरिति भाष्यस्य च पूर्वेण सहेत्ययेन पौनरुक्त्यमाशङ्क्याह—**यच्चेति**।

तस्मिन्नित्यस्यैकत्र सादने सामर्थ्यस्य। तस्मिन्सीदेति पुरोडाशाभिधानसामर्थ्यादिति भाष्योक्तस्य इतरस्योपस्तरणवदिति भाष्येण स्योनमित्यस्य वैकत्रोपस्तरणे सामर्थ्यस्य, तथेति भाष्योक्तेरस्येतरत्र सादने पुरोडाशसादनेऽपीति भाष्येण नास्ति सामर्थ्यमित्यनुषङ्गसहितेनाभावं दर्शयित्वा तच्छब्दालोचनयैकवाक्यत्वस्यावगतस्यार्थैक्यं विनानुपपत्तेरवयवद्वयस्येतरेतरविषये सामर्थ्याविश्यंभावमाशङ्क्य सत्यन्तिस्मिन्सीदेत्यस्य पूर्वैकवाक्यत्वादुपस्तरणे पूर्वस्य च पदैकवाक्यत्वासादने शक्तिः तथापि स्वरूपेणोभयोर्मन्त्रयोरुभयार्थविषयशक्त्यभावाद्विनियोगस्य श्रुत्यर्थविप्रकर्ष इत्युक्ते तस्मिन्सीदेति वत्स्योनादिशब्दानामप्युस्तरणाख्यसदनकरणोक्तिः शक्तेः सदनम् करोमीत्येतदेकवाक्यत्वाधीनत्वेन तत्वायोगाद्विप्रकर्षतुल्यत्वमाशङ्क्य, सदनशब्दवत् स्योनसुशेवशब्दयोर्द्वितीयान्तत्वेन कृणोतिकर्मभूतस्य सदनशब्दोक्तस्य स्थानस्य ग्रहत्वसुमुखत्वरूपस्तुत्यर्थत्वेन तेशब्दस्य च स्थानापेक्षितख्यात्पुरोडाशसमर्पकत्वेन घृतस्य धारयेत्यस्य च करणसमर्कत्वेन कल्पयामिशब्दस्य च सदनक्रियाया रचनारूपस्तुत्यर्थत्वेन कृणोमिपदैकत्वस्य स्पष्टत्वात् स्योनादेः कल्पयाम्यन्तस्य सदनकरणोक्तिशक्तिः स्पष्टत्वरूपेण प्रत्यक्षत्वेन प्रथमावगतत्वान्मुख्येति वदता यत्स्योनं तइत्यस्येति भाष्येणात्मनिबन्धनं स्वरूपनिबन्धनं शक्त्याख्यं धर्ममुपनीय सिद्धत्वेनोक्ता।

तस्मिन्नित्यादेरपि तर्हि पुरोडाशसादनाख्यं सदनक्रियाफलोक्त्यर्थत्वेन कृणोमिपदैकवाक्यत्वात् सदनकरणोक्तिशक्तिस्तुल्येत्याशङ्क्य सदनक्रियाया मन्त्रविधेयत्वाभावेन फलानपेक्षत्वात्, तच्छब्दस्य च पूर्ववाक्योक्तसदनपरामर्शित्वसम्भवेनैकवाक्यत्वानाक्षेपत्वात् बलात्कृणोमिपदैकवाक्यतामापाद्य, सदनकरणोक्तिशक्तिः पाश्चात्यत्वेन जघन्येति वदता सीदेत्यस्य पुनरितिभाष्येणेतरमन्त्रावयवैकवाक्यत्वनिबन्धनस्य शक्त्याख्यसुधर्मस्य तेनाकाङ्क्षये सत्येकवाक्यत्वकल्पनायोगेन' तन्निबन्धने शक्तिकल्पनायोगान्निराकरणं कृतम्। ततश्च भिन्नार्थत्वान्न पौनरुक्त्यमित्येवं सकलो ग्रन्थो निराकुलीकार्य इत्यर्थः।

एवमप्येकवाक्यत्वोपगमनशक्त्याख्यलिङ्गविप्रकर्षार्थत्वोक्त्यर्थस्य सत्यमेवमित्यादिभाष्यस्य सीदेत्यनेनोत्तरस्य त्वित्यनेन चापिचेत्यादिभाष्यस्य च न ह्यस्मिन् विनियुज्यमानस्य किं चिदपि प्रयोजनयस्तीत्यनेन पौनरुक्त्यापरिहारात्कथं सकलस्य ग्रन्थस्यानाकलतेत्याशङ्क्याह—**पूर्वश्चेति**। को वा अर्थविप्रकर्षः प्रस्तुतः तत्र प्रकरणवत इत्यादिना लिङ्गं बलवत्तरमित्यनेनैकस्यावयवस्य स्वार्थेऽभिधानशक्त्याख्यविनियोगप्रमाणसद्भावात्; तस्य च श्रुतिकल्पनमात्रान्तरितत्वात्सन्निकृष्टो विनियोगाख्यश्रुत्यर्थः। अवयवान्तरार्थे त्वभिधानशक्त्याख्यप्रमाणाभावेन वाक्यस्य विनियोजकतयाभ्युपगमनीयत्वात्तस्य च लिङ्गश्रुतिकल्पनान्तरित्वात् विप्रकृष्ट इत्येववाक्यस्य लिङ्गापेक्षयाऽर्थं विप्रकर्षप्रस्तावे पूर्वकृते अवयवद्वयस्यैकवाक्यत्वावगमादैकार्थ्यं च विनैकवाक्यत्वायोगात् एकस्मिन्नर्थे शक्ते शक्तिनियुक्ते इत्याशङ्कानिरासार्थं, ततः स्योनमित्येषशब्दमित्यादिभाष्येण लिङ्गेन बाधापत्तेरेकवाक्यबाधायोगापत्तेर्विरोधस्यापरिहारार्थत्वमाशङ्क्यैकवाक्यत्वोपगमनशक्तेर्लिङ्गत्वविप्रकृष्टार्थत्वेन बाध्यत्वस्योचितत्वात् वाक्यभेदोपपत्तेः शक्त्यशक्त्योर्विरोध इत्येवं शक्त्यशक्तिभ्यामविरोधितयोपपाद्यत्वेन प्रयोगभूताभ्यां 'सत्यमेवमित्यादिभाष्येणैकवाक्यत्वोपगमनशक्त्याख्यस्य लिङ्गस्य सन्धानशक्त्याख्यलिङ्गापेक्षयार्थविप्रकर्षप्रस्तावो मध्ये कृत इत्यस्य तावद्भाष्ये सीदेत्यस्य पुनरित्यनेनोत्तरस्य त्वित्यनेन चार्थभेदादपौनरुक्त्यम्। अनेनापि चेति भाष्येण वाक्यस्य तन्निर्बाह्यार्थस्य शब्दलिङ्गस्याभिधानशक्त्याख्यलिङ्गापेक्षया दृष्टार्थत्वविशेषनिमित्तार्थविप्रकर्षप्रस्तावो न ह्यस्मिन्नित्यनेन च प्रमाणस्य चोक्तौ पौनरुक्त्यं तत्तच्छब्दावगतैकवाक्यनिर्वाहायैकवाक्यत्वोपगमनशक्त्याख्यलिङ्गात्कल्पितादेकवाक्यत्वनिर्वाहेऽवगतेऽप्यवयवान्तरोक्तक्रियाविशेषणोक्तिद्वाराऽवयवान्तरस्यावयवान्तरार्थाभिधानशक्तेः कल्प्यत्वात् स्वप्रधानभूतस्वार्थोक्त्या च निराकाङ्क्षणावयवारुत्तरार्थविशेषणीभूतत्वार्थोक्तौ च दृष्टार्थत्वापत्तेरस्यार्थविशेष्यस्यावयवान्तराकाङ्क्षां कल्पयित्वान्तरभिधानशक्तित्वात्कल्पनपूर्वकल्पनाद्विप्रकर्षो प्रधानभूतस्वार्थमात्रोक्तौ च दृष्टसमवेतार्थत्वेनावयवान्तरार्थाकाङ्क्षाकल्पनाभावात्संनिकर्ष इत्येवमाशयशब्दादपि वेति भाष्यस्येत्यर्थः।

एवमित्यादिभाष्यस्य तु निरूपणादाद्यार्थत्वेनाद्यप्रस्तावान्तत्वात्मध्यमप्रस्तावार्थत्वं न युक्तमित्यनवद्यम्—**तस्मादिति**। लिङ्गबलीयस्त्वसिद्धान्तोपसंहारभाष्यं—**तस्मादिति**।

अथेति भाष्येण वाक्यप्रकरणयोर्विरोधे कीदृग्बलाबलमिति पृष्ट्वा प्रकरणस्वरूपप्रश्नार्थं किं पुनरिति भाष्यमितिकर्त्तव्यतार्थित्वलक्षणस्य स्वरूपस्य सूत्रकृतैवोक्तत्वादयुक्तमाशङ्क्य शब्देनेतिकर्त्तव्यतार्थित्वरूपेण भावनानभिधाने वस्तुवृत्त्या तदर्थित्वेऽपि अङ्गप्रधानवाक्यानामन्योन्यानाकाङ्क्षत्वेनैकवाक्यत्वायोगापत्त्या तदनुमानद्वारविप्रकर्षायोगापत्तेः प्रकरणस्य वाक्यार्थविप्रकर्षेण दौर्बल्यं वस्तुमितिकर्त्तव्यताकाङ्क्षत्वेन भावनाभिधानस्य प्रकरणलक्षणत्वकथनायैतद्भाष्यमिति सूचयितुमाह—**किं पुनरिति**। प्रकरणस्य विनियोगसामर्थ्योपपादनायेतिकर्त्तव्यतार्थित्वादिति सूत्रावयवः, न तु लक्षणकथनायेति न चेत्यनेनोक्ते वस्तुवृत्त्येतिकर्त्तव्यताकाङ्क्षायाः सद्भावेऽपि शब्दैकसमधिगम्येऽर्थे प्रमाण्याभावापत्तेर्विनियोगसामर्थ्यस्याप्यसिद्धेस्तत्रैवैतल्लक्षणं वाच्यमित्याशङ्क्य, शब्दस्पर्शविनीतकर्त्तव्यताकाङ्क्षायाः परमार्थतो विनियोगप्रमाण्याभावेऽपि शब्दोक्तार्थत्वमात्रेण प्रमाण्यं वक्तुं शक्ष्यामीति प्रौढिसूचनार्थं तत्र लक्षणानुक्तिरिति सूचयितुम्—**तदित्याद्युक्तम्**।

यद्वा न लक्षणजिज्ञासयायं प्रश्नः, किं तु वाक्यक्रमाभ्यां भेदजिज्ञासयेत्यन्यथागतार्थत्वं परिहरति—**अथ वेति**। वाक्यात्तावदभेदशङ्कां दर्शयितुमारभते—**साकाङ्क्षेति**। इतिकर्त्तव्यतान्वयं विना भावनाकर्त्तव्यत्वोक्त्यपर्यवसानात्प्रकरणेऽप्याकाङ्क्षायाः शब्दस्पष्टत्वाविशेषसूचनार्थं पदसाकाङ्क्षत्वोक्तिः। प्रकरणस्य वाक्यसमूहात्मकत्वेन पदसमूहात्मकात् वाक्यात् भेदोऽस्मा भविष्यतीत्याशङ्क्याह—**न चेति**। यावतां पदानां विभज्यमानानां साकाङ्क्षत्वं संहत्यमानानां चैकप्रयोजनत्वं तावतां वाक्यतेत्येतावन्मात्रोपलक्षणत्वाद्वाक्यस्य तन्निरपेक्षायां पदसंख्यायां प्रमाणभावे नैराकाङ्क्ष्यात् प्राक् वाक्यत्वात् प्रकरणेऽपि पदानामेकसमूहो न वाक्यानामित्यपरं बहुपदमित्यनेनाशङ्कानिरासार्थं सूचितेऽवान्तरवाक्यार्थवशेनाऽवान्तरसमूहाख्यवर्गान्तरकृतात्यन्तभिन्नवाक्यत्वादेकवाक्यत्वायोगमाशङ्क्यावान्तरसमूहीकृतत्वेऽपि महावाक्यार्थाख्यप्रयोजनवशेन महासमूहापत्तेरेकवाक्यत्वोपपत्तिरुक्ता एतदेव न तद्वाक्यं हि तदर्थत्वादिति वेदाधिकरणसूत्रस्थभाष्यसम्मत्या द्रढयति—**वक्ष्यतिहीति**।

क्रमादभेदशङ्कां दर्शयति—**अथ वेति**। कर्त्तव्यस्येत्यादिभाष्यत्रयं लक्षणत्रयोक्त्यर्थत्वेनाभासमानत्वादयुक्तमाशङ्क्य, आद्यमेव लक्षणोक्त्यर्थं, द्वितीयं लक्षणोपपादनायावयवव्युत्पत्त्यर्थं, तृतीयं रूढित्वशङ्कानिरासाय यौगिकत्वमुपपादयितुं पर्यायोक्त्यर्थमित्येवं व्याचष्टे—**तदिति**। तत्वं-प्रकरणस्य प्रकरणत्वं प्रकरणशब्दप्रवृत्तौ निमित्तं सर्वप्रकरणेष्वनुवृत्तमन्यतो व्यावृत्तं लक्षणभेदो। अवयवार्थोक्तिः प्रकरणशब्दपर्यायो विध्यादिशब्दः। तैस्तैः प्रकरणं निरूपयतीत्यर्थः एतदेव विवेक्तुं कर्त्तव्यस्येतिभाष्यं तावत्तेन प्रकरणोक्त्यर्थतया व्याचष्टे—**तत्रेति**।

इतिकर्त्तव्यताकाङ्क्षायाः शब्दत्वोपपादनार्थं कर्त्तव्यतोक्तिं द्वेधा व्याचष्टे—**कर्तव्येति**। सेतिकर्त्तव्यताकप्रधानसाध्यत्वेनापूर्वस्येतिकर्त्तव्यतां विना साध्यत्वायोगात्साध्यत्वोक्त्या भावनाया वा सेतिकर्त्तव्यताकप्रधानावच्छिन्नाया विधेयत्वेतिकर्त्तव्यतां विना विधेयत्वा-

योगाद्भावनाविधिनेतिकर्त्तव्यताकाङ्क्षात्वरूपेण भावनोक्तिसूचनायानुष्ठापकप्रयोगविधिविषयत्वलक्षणार्थत्वेन कर्त्तव्यतोक्तिव्याख्यार्थानुष्ठेयत्वोक्तिभावनार्थत्वाकर्त्तव्यत्वोक्तेः स्त्रीलिङ्गत्वापत्तेर्भावनाशब्देन भावनोक्ताकर्त्तव्यत्वोक्तेः साध्यार्थत्वे फलवाचित्वापत्तेर्वापूर्ववाचित्वं स्यादित्याशङ्कते—**साध्यांशेति**। फलं भयद्भावयेदनेनेत्थमिति साध्यसाधनेतिकर्त्तव्यतावच्छिन्नाया भावनाया युगपत्प्रयोगविधिविषयत्वात्त्रयाणामपि भावनांशानामककालत्वावगतेः फलस्य चानिर्ज्ञातकालत्वेन साधनेतिकर्त्तव्यताकालत्वावगमात्स्वर्गादेश्च कालान्तरभावित्वेन साधनेतिकर्त्तव्यताप्रयोगेण सहैककालत्वाख्यसमवायाभावादपूर्वस्य तु

यदा त्वाद्यपरिस्पन्दात्प्रभृत्या फललाभतः।
क्रिया पूर्वापरीभूता लक्ष्यते वर्त्तते तदेति॥

न्यायेन फलनिष्पत्तिपर्यन्तं पूर्वापरौदासीन्यावस्थान्तरालकालैक्यात् प्रयोगसमवायोपपत्तिः तस्यैव कर्त्तव्यत्वावधारणान्न फलं कर्त्तव्यमिति परिहरति—**नेति**। अपूर्वस्य फलत्वाभावात्तन्निष्पत्तिमात्रेण प्रयोगसमाप्त्ययोगात्स्वर्गादिनिष्पत्तिपर्यन्तं कालैक्यात्स्वर्गादेरपि प्रयोगसमवायोपपत्तिमाशङ्क्य, पूर्वापरौदासीत्यावस्थान्तरालवर्त्तिप्रयोगबाह्यस्य कालस्य प्रयोगपरिच्छेदकत्वायोगात्स्वर्गादेश्चान्तरालवर्त्तित्वाभावाच्च-न्निष्पत्तिपर्यन्तकालैक्यानुपपत्तेः फलसिद्ध्यर्थत्वाच्चापूर्वस्यापि इत्युद्देश्यत्वलक्षणफलत्वोपपत्तेस्तन्निष्पत्तिमात्रेण प्रयोगसमाप्तिसूचनार्थम्—**तत्सिद्ध्यर्थेत्युक्तम्**। यस्य च शब्दस्यार्थेन फलं साध्यते तेनापूर्वं कृत्वेति भावार्थाधिकरणभाष्ये द्वितीयया पूर्वस्य कृतिकर्मत्वाभिधानेन कर्त्तव्यत्वावधारणं द्रढयितुं तदवयवं पठति—**तेनेति**।

नवमाद्यसूत्रे च यज्ञेन क्रियते इति व्युत्पत्त्यात्पूर्वस्य यज्ञकर्मशब्दोक्तस्य कर्तव्यतया चोद्यमानत्वेन हेतुना प्रयोजकत्वस्य वक्ष्यमाणत्वात्तस्यैव कर्त्तव्यतासूत्रकृतोऽभिप्रेतेति दर्शयितुमाह—**तथेति**। कर्त्तव्यताङ्गीकारेणेति तथाशब्दस्यार्थः। फलदेवतयोश्चेति नवमाधिकरणे पूर्वपक्षसूत्रे चागन्मास्वः सञ्ज्योतिषाऽभूमेति फलप्रकाशके मन्त्रे फलस्येग्निरहमुज्जितिमनुज्येषमित्यादिषु देवताप्रकाशकेषु देवतायाः प्रयोजकत्वमुपन्यस्य 'चोदनातो हि तादृगुण्यमिति सिद्धान्तसूत्रे कर्त्तव्यतया चोद्यमानत्वेनापूर्वस्य मन्त्राणामपि नवमाद्यन्यायेनापूर्वविगुणत्वावगतेः फलदेवतयोः कर्त्तव्यत्वाभावेन प्रयोजकत्वस्य निराकरिष्यमाणत्वात्फलस्याकर्त्तव्यता सूत्रकृतोऽभिप्रेताऽवसीयतइत्याह—**फलेति**। इतिकरणसूत्रावच्छेदायोमन्यासपूर्वनिराकार्यप्रयोजकत्वपरामर्शाय चावर्तनोयः।

कर्त्तव्योक्ति द्वेधा व्याख्यायेतिकर्त्तव्यताकाङ्क्षोक्तिं द्वेधा व्याचष्टे—**तत्रेति**। कर्त्तव्यस्य य इतिकर्त्तव्यताविषया आकाङ्क्षाऽभिलाषः तस्य यद्वचनमिति व्यधिकरणस्य षष्ठ्यन्तन्तपदद्वयसाद्ये व्याख्यानेऽभित्वात्, तस्येति षष्ठ्यां प्रयोज्यायां कर्त्तव्यतानुक्ताविति-कर्त्तव्यताया अभावेनाऽपूर्वनिष्पत्तावपि भावनायाश्च विधेयत्वायोगेऽतिशब्दविरोधाभावात्कयाचिदिविकर्त्तव्यतयावश्यम्भाव्यमितिकर्त्तव्यताऽकाङ्क्षायाः शब्देनापेक्षायोगेन शब्दत्वापत्तेः

शब्दे च सिध्यर्थमितिकर्त्तव्यताकाङ्क्षेण कर्त्तव्यत्वस्य निमित्ते च सूचनार्थं तत्रेति सप्तम्यर्थे त्रल्प्रयोगेण षष्ठ्यर्थो लक्षितः पर्यायेणेतिकर्त्तव्यतोक्तिव्याख्यानायाऽनुग्रहोपयोगोक्तिः। भावव्युत्पन्नत्वेनाकाङ्क्षोक्तौ ल्युडन्तयाकाङ्क्षणोक्त्याव्याख्यातायामाकाङ्क्षापदस्य स्त्रीलिङ्गत्वप्रसिद्धेः पुल्लिङ्गत्वायोगमाशङ्क्य, पुल्लिङ्गत्वसिद्ध्यै घञन्तताया-मुक्तायामलौकिकप्रयोगापत्तेर्घञन्तत्वायोगमाशङ्क्याकाङ्क्षायाः शाब्दत्वसिद्ध्यै, वाच्यत्वं विवक्षितुं, परमतेन षष्ठीसमासमभिप्रेत्येयं व्याख्याऽतिव्याख्यायतइत्यनेन सूचिते साकाङ्क्षत्वापादकेन रूपेणापूर्वस्य, भावनाया वाभिधानमात्रेणाऽऽकाङ्क्षायाः शाब्दत्वोपपत्तौ तद्वाचिशब्दकल्पनायोगादेतद्व्याख्यानापरितोषेण, कर्मत्रयेण प्रत्ययमभिप्रेत्योपपादसमासतया स्वमतेन व्याख्यातुं यद्वेत्युक्तेऽस्यां व्याख्यायां पदद्वयस्यापि सामानाधिकरण्याद्वचनपदेनान्वयः। पूर्वस्यां तु वैयधिकरण्यादितिकर्त्तव्यताकाङ्क्षाया विधिवाक्ये केनचिच्छब्देनानभिधानाद्वचनोक्तिमयुक्तामाशङ्क्य व्याचष्टे—**वचनेति**। आद्यव्याख्यानेऽङ्गप्रधानवाक्यैकवाक्यत्वान्यथानुपपत्त्या कल्पितेन कथमितिशब्देन प्रत्यायनं, द्वितीये त्वपूर्वकर्त्तव्यत्वपक्षे यागेनापूर्वं कृत्वा स्वर्गं भावयेदिति साध्यसाधनान्वयान्यथानुपपत्त्या कल्पितेनापूर्वकर्त्तव्यत्ववाचिनाऽपूर्वं कृत्वेति शब्देन भावनाकर्त्तव्यत्वपक्षे श्रुतेनैव विधिशब्देनेत्यर्थः। वचनविशेषणस्य किं प्रयोजनमित्यपेक्षायामाह—**एतदिति**।

प्रमाणान्तरेण प्रतीयमानत्वेऽपि शाब्दत्व सिद्धेः शब्देनेत्यध्याहार्यम्। आकाङ्क्षाशब्देन प्रत्यायनशङ्कां निवर्त्तयितुमाह—**तेनेति**। भावनेत्यत्राप्यभिधीयमानेत्यनुषञ्जनीयं भावव्युत्पत्त्याकाङ्क्षाया, भावनाया वा प्रकरणत्वोक्तिः। आकाङ्क्षावतोऽपूर्वस्य प्रकरणत्वानुपसंहारेणापूर्वनिष्पत्तिभावनयेतिकर्त्तव्यताकाङ्क्षणादपूर्वस्याकाङ्क्षोक्ता। वस्तुतस्त्वंशत्रयान्विता भावना विध्युत्तरकालं कल्प्यत्वेनापूर्वस्य प्रागप्रतीतेराकाङ्क्षायोगान्नावमिक्याश्चापूर्वप्रयुक्तत्वोक्तेर्भावनाया धर्मप्रयोजकस्यापूर्वनिष्पत्त्यर्थत्वाशयत्वेन व्याख्यातुं शक्यत्वान्नापूर्वस्याकाङ्क्षास्तीति सूचितम्। प्रारम्भो हीति भाष्यं यस्माद्यः प्रकरणशब्दवाच्योऽर्थः, स क इत्यपेक्षायामवयवार्थानुसारात् क्रियायाः प्रारम्भोऽवसीयते। क्रियानवयवत्वाच्चाकाङ्क्षायाः क्रियारम्भत्वं न सम्भवति। तस्मान्नाभिधानानपेक्षाप्रकरणं, किं त्वंशत्रयान्वितकर्त्तव्यभावनाभिधानं वा प्रकरणमित्येवमुपलक्षणोपपादनायावयवार्थभेदेन प्रकरणोक्त्यर्थतया व्याचष्टे—**इदानीमिति**। लक्षणोपपादनार्थत्वसूचनायेदानींशब्दः। क्रियाप्रारम्भवाचित्वं प्रकरणशब्दस्योपपादयितुमाह—**तत्रेति**। अवयवालोचनया क्रियामात्रारम्भप्रतीतेर्वचनविशेषणमयुक्तमाशङ्क्य आकाङ्क्षाभिधानस्य क्रियान्तरारम्भत्वायोगादंशत्रयोपेतां भावनामभिधानक्रियारम्भत्वोक्त्यर्थत्वेनोपपादयितुमाह—**का पुनरिति**।

किं विषया वचनक्रियेत्यपेक्षायां तस्येत्येतेन कर्त्तव्यस्य भावनाख्यस्यार्थविषयत्वेन परामर्शं सूचयन्वचनोक्तेश्च वाक्यवाचित्वाशङ्कां निवर्त्तयन्नवतारितं भाष्यावयवं व्याचष्टे—**अर्थेति**। भाष्ये स इत्यस्य प्रकरणपरामर्शित्वेऽप्यारम्भशब्दसामानाधिकरण्यात्पुल्लिङ्गत्वाविरोधः। इतिकर्त्तव्यताकाङ्क्षत्वरूपेण भावनाभिधानस्यांशत्रयोपेतभावनाभिधान-

क्रियारम्भत्वमुपपादयितुमारभते—**भावनेति**। त्र्यंशभावनाभिधानक्रियायाः प्रयोगवाक्यव्यापाराद्यतः प्रयोगवाक्यस्य प्रवृत्तिः तस्य तदारम्भत्वात्किं, केन, कथमिति च फलकरणेतिकर्त्तव्यसाकाङ्क्षत्वापादकेन भावयेदिति अनेन रूपेण भावनाभिधानस्य प्रयोगवाक्यप्रवर्त्तकत्वात्, तत्तस्यैव त्र्यंशभावनाभिधानक्रियारम्भताऽवसीयतइत्याशयः। प्रयोगवाक्यस्यास्मात् प्रवृत्तिरिति व्युत्पत्त्या प्रवर्त्तकं प्रवृत्तिशब्देनोक्तम्। यस्मादाद्यप्रयोगवाक्यप्रवर्त्तकं सम्भाविताभिधानक्रियारम्भः तस्मादिति कर्त्तव्यताकाङ्क्षभावनाभिधानस्य भावनाभिधानक्रियारम्भता युक्तेत्यर्थः।

फलाकाङ्क्षाया एव तर्ह्याद्यत्वादारम्भत्वं स्यादित्याशङ्क्याह—**फलेति**। फलद्वयमात्रसाध्यत्वेनाद्यांशद्वयपूरणस्य प्रकरणानपेक्षतयेतिकर्त्तव्यतालाभमात्रस्थानेकवाक्याधीनसिद्धित्वेन प्रकरणापेक्षत्वादितिकर्त्तव्यतालाभे च फलकरणाकाङ्क्षयोर्हेतुत्वाभावेन प्रकरणशब्दप्रवृत्तिनिमित्तभूतारम्भत्वेनावक्तव्यत्वात्कथम्भाव एवेति कर्त्तव्यतालाभाभावाद्धेतुप्रकरणशब्दप्रवृत्तिनिमित्तभूतारम्भत्वेनोच्यते इत्युक्ते कथम्भावस्य फलकरणाकाङ्क्षोत्तरकालत्वेनानादिभूतत्वादारम्भत्वायोगमाशङ्क्य, तेषामनेकेषां वाक्यान्तराणां समस्तानामालोचनापेक्षयेत्युक्तम्। वचनशब्देनाभिधानवाचिना विधानस्याप्युपलक्षणं सूचयितुं विधानोक्तिः। यथा च करणशब्दस्य स्वरसतः क्रियामात्रवाचित्वेऽप्यागमस्य क्रियान्तरायोगाद्योग्यतयाभिधानाख्यक्रियाविशेषणवाचिताऽवसीयते, तथारम्भवाचिनः प्रशब्दस्य स्वरसतः कथं किं भावविषयत्वावगमेऽपि, किं भावस्येतिकर्त्तव्यतालाभाहेतुप्रकरणशब्दप्रवृत्तिनिमित्तभूतारम्भत्वायोगाद्योग्यतयाङ्गवाक्यालोचनादिभूतकथम्भावविषयतापीति सूचयितुमाह—**करणेति**।

स एव इति भाष्ये प्रकरणशब्दस्य रूढित्वेनायौगिकतया क्रियारम्भवाचित्वाभावान्न तद्वशेनाकाङ्क्षाभिधानलक्षणताऽवसातुं शक्येत्याशङ्क्य, आरम्भवाचिविध्यादिशब्दपर्यायत्वात्प्रकरणशब्दस्यारम्भवाचित्वोपपादनार्थं पर्यायेण प्रकरणोक्तर्थतया व्याचष्टे—**स एष इति**। विध्यादिशब्दमात्रस्य पर्यायत्वात् विध्यन्तापेक्षोक्त्यानर्थक्यमाशङ्क्य परिहर्तुमाह—**आदीति**।

दृष्टान्तायान्तशब्दस्य सम्बन्धिशब्दतोक्ता। विध्यन्तशब्दस्यार्थमाह—**विध्यन्तो-नामेति**। विध्यन्तापेक्षया विध्यादित्वे तत्समस्तालोचनापेक्षया कथं भावः प्रकरणमविधानविधानक्रिययोरारम्भ इति वार्त्तिकं विरुध्येतेत्याशङ्क्याह—**तस्य चेति**। अनेकेषां प्रयाजाद्यङ्गवाक्यानां, वाक्यार्थानां च प्रयाजादीनां प्रयाजादिप्रयोजनानां चालोचनानि विधिमध्यभूतानि यस्येति बहुव्रीहिणा मत्वर्थोक्तेरङ्गवाक्याद्यालोचनाख्यविधिमध्यसहितविध्यन्तापेक्षयैव विध्यादित्वं भाष्यकृतोऽभिप्रेतं, नतु विध्यन्तमात्रापेक्षाया विध्यन्तोक्तिरूपलक्षणार्थेत्याशयः। विध्यन्तमात्रापेक्षाया च कथं भावस्यादित्वे विध्यन्तादित्वप्रसिद्ध्यापत्त्या विद्ध्यादिष्वप्रसिद्ध्ययोगापत्तेरङ्गवाक्याद्यालोचनाख्यविधिमध्यसहित-

विध्यन्तापेक्षयाऽदित्वेत्वादिभूतविधिभागव्यतिरिक्तसमस्तोत्तरविधिभागसमूहं विधित्वेनाभिप्रेत्य विध्यादित्वप्रसिद्ध्युपपत्तेरेतत्प्रसिद्धिबलादपि विध्यन्तमात्रापेक्षयादित्वं निराकर्त्तुमाह—**इतीति**। हेत्वर्थेनेतिकरणेनात एव मध्यसहितान्तादित्वाद्धेतोर्विध्यादित्वप्रसिद्धिर्युक्तेत्युक्ते प्रसिद्धेरप्रामाण्याशङ्कानिरासायाचार्याणामित्युक्तम्। आद्यन्तव्यपदेशयोर्वा मध्यापेक्षत्वात्तत्सम्बन्धित्वेन मध्योक्त्यर्थोऽयं ग्रन्थः।

वाक्यक्रमाभ्यां प्रकरणस्य भेदे जिज्ञासया प्रश्नपक्षे कर्त्तव्यस्येत्यादिभाष्येण भेदसिध्यै प्रकरणस्वरूपस्य, वाक्याद्भेदसिध्युपयोगित्वोक्त्यर्थत्वेन वाक्यं त्विति भाष्यव्याख्यां सूचयितुमाह—**तत्र चेति**। वाक्यार्थोक्तेः प्रयोजनत्वाभ्युपगमे तन्मात्रपर्यवसानेनाऽनपेक्षत्वाद्वाक्यानामन्योन्यान्वयायोगः। प्रयोजनत्वानभ्युपगमे पर्यवसानायोग इत्याशङ्क्य, वाक्यार्थस्य प्रमेयत्वेन प्रमाणभूतवाक्यप्रयोजनत्वात्तत्प्रतिपादनेन वाक्यानां स्वप्रयोजनादाकाङ्क्षानिवृत्तिलक्षणे पर्यवसाने सत्यपि वाक्यार्थभूतभावनाकार्यदृष्टादृष्टप्रयोजनापेक्षावशेनान्योन्यान्वयोपपत्तिसूचनार्थम्—**क्रियत्यपीत्युक्तम्**। पदानामपि पदार्थोक्त्याख्ये प्रयोजने पर्यवसितानां वाक्यप्रयोजनभूतवाक्यार्थोक्त्याख्यकार्यान्तरापेक्षावशेनान्वयादविशेषमाशङ्क्याह—**तथेति**।

पदमप्यधिकाभावात्स्मारकान्न विशिष्यते।

इत्यनेन न्यायेन पदार्थानां प्रमेयत्वाभावेन प्रमाणप्रयोजनत्वायोगान्न तन्मात्रे पर्यवसानं सम्भवतीत्याशयः।

वाक्ये पदानामन्योन्यान्वयादादौ विभज्यमानानां प्रयोजनलेशेऽपि वृत्तिर्नास्ति किं त्वन्योन्यान्वयेनैव वाक्यार्थस्य प्रयोजनलाभ इत्यर्थः। क्रमात्तु प्रकरणस्य भेदमनेकस्याम्नायमानस्य सन्निधिविशेषाम्नानमात्रं हि क्रम इति प्रकरणात्क्रमस्य दौर्बल्योक्त्यर्थं भाष्यं व्याचक्षाणा वक्ष्याम इत्याह—**क्रमेण त्विति**। वाक्यक्रमाभ्यां प्रकरणस्य भेदमुपसंहरति—**तस्मादिति**।

तयोरित्युदाहरणप्रश्नभाष्यमनेकोदाहरणसद्भावादयुक्तमाशङ्क्य, साकाङ्क्षापदसन्निधिमात्रं हीत्यादिवार्त्तिकोक्तेन प्रकरणेऽप्येकवाक्यत्वशङ्का येनेत्येवमुपपादयति—**किमिहेति**। सूक्तवाकेत्युदाहरणभाष्यं सूक्तवाकाख्यस्यापि निगदस्य दर्शपूर्णमाससन्निधिपाठेन तदेकवाक्यत्वशङ्कासम्भवादयुक्तमाशङ्क्योपपादयति—**सिद्धान्तेति**। साक्षाद्दर्शपूर्णमासवाक्यैकवाक्यत्वायोगेऽपि सूक्तवाकविधायिनः सूक्तवाक्येन प्रस्तरं प्रहरतीतिवाक्यस्य विधायकभावलक्षणेनान्वयेन सूक्तवाकैकवाक्यभूतस्य दर्शपूर्णमासवाक्यैकवाक्यत्वात्तद्द्वारा सूक्तवाकस्य दर्शपूर्णमासवाक्यैकवाक्यत्वं भविष्यतीत्याशङ्क्य, विषयविधायकत्वलक्षणस्यान्वयस्यैकार्थ्यानापादकत्वेनैकवाक्यत्वानापादकत्वं भिन्नप्रवृत्तित्वोक्त्या सूचितम्। मन्त्रब्राह्मणयोर्द्वयोरपि प्रहरणाख्यैकार्थ्यविषयत्वेनैकवाक्यत्वापादकमाशङ्क्य, विषयैक्येऽपि विधायकस्मारकत्वलक्षणव्यापारभेदादेकवाक्यत्वायोगोऽभिहितः। अग्नये पावकायेत्यादि-

वदिन्द्राग्नीपदस्याग्नीषोमाख्यपौर्णिमासीदेवताविशेषवाचित्वादग्नीषोमपदस्य चेन्द्राग्नाख्यामावास्यादेवताविशेषणवाचित्वादन्योन्यैकवाक्यत्वोपपत्तेर्लिङ्गविरोधाभावेन देवतापदोत्कर्षाभावात्तदेकवाक्यत्वहेतुकशेषोत्कर्षसिद्धान्तायोगेन सन्देहायोगमाशङ्क्योपपादनपूर्वं सन्देहोक्त्यर्थं तत्र हीत्यादिभाष्यं संक्षिप्य व्याचष्टे—**लिङ्गादिति**। निष्कृष्टे त्विति भूतनिष्ठया देवतापदनिष्कर्षस्य कृत्स्नोपदेशादुभयत्र सर्ववचनमि(३-२-१६)त्येतदधिकरणसिद्धत्वं स्मारितम्। तच्छक्त्या विकल्पेन प्रकरणस्य शेषप्रापकत्वपक्षेऽविवृधेनामित्यादिप्रतीकत्वमङ्गीकृत्य कृत्स्नस्येदं हविरजुषेतामवीवृधेतामहोज्यायोऽक्रातामिति शेषस्य बहुवचनेन चेन्द्रादिपदशेषाणामप्युदाहरणत्वं सूचितम्। देवतापदरहितानां शेषाणां देवताविशेषणवाचित्वायोगेनाऽप्रयोज्यत्वमाशङ्क्य, प्रयोगसमवेतदेवताविशेषणवाचितयैव प्रयोगसमवेतदेवतापदशेषैः, सह विकल्पेन प्रयोगोपपत्तिसूचनार्थम्—**तद्रहिता अपीत्युक्तम्**। प्रकरणस्य विकल्पेनानेकशेषविनियोजकत्वं मत्वा यावत् कृत्व इति भाष्यावयवं समुच्चयेनानेकशेषप्रयोगोक्त्यर्थतया भासमानं सर्वप्रयोगमात्रोक्त्यर्थत्वेन व्याख्यातुमाह—**प्रकरणेनेति**। विकल्पपक्षे शेषोदाहरणभाष्याणामाञ्जस्यापत्तेरस्या व्याख्याया परमतत्वसूचनार्थस्तावच्छब्दः। द्विवचनयोगिना शेषस्य द्विवचनयोगिना शेषेण सहैकवचनयोगिनश्चैकवचनयोगिभिः सह वैलक्षण्याद्विकल्पोक्त्यानर्थक्यापत्तेरेकवचनयोगिना द्विवचनायोगिनश्चैकवचनयोगिभिः सह विकल्पस्य वक्तव्यत्वात्तत्र लिङ्गात्समानसंख्ययोरेव विशेषणविशेष्यत्वावगतेः प्रकरणबाधः स्यादित्याशङ्क्याह—**लिङ्गमपीति**।

अवैलक्षण्येऽप्यग्नीषोमपदशेषस्येन्द्राग्निपदान्विते प्राजापत्यादिपदशेषस्य चेन्द्रादिपदान्वये पाठक्रमेण देवतापदात् प्राक् प्रयोज्यत्वाभावात् देवतापदशेषस्य तु पश्चात्प्रयोज्यत्वात्प्रयोगक्रमवैलक्षण्यार्थत्वेन विकल्पोक्त्यर्थवत्त्वोपपत्तेर्लिङ्गानुसारेणैवोभयोः पौर्णमास्यमावास्ययोः सर्वशेषप्रापकत्वान्न लिङ्गविरोधः प्रकरणस्येत्याशयः। प्रयोगसमवेतदेवतापदशेषस्य स्ववाक्यस्थत्वाद्देवतान्तरपदशेषस्य तु वाक्यान्तरस्थत्वाद्विषमशिष्टत्वेन विकल्पानुपपत्तेः प्रकरणबलीयस्त्वात्सर्वे शेषा विकल्पेन प्रयोक्तव्या वाक्यबलीयस्त्वाद्वा प्रयोगसमवेतदेवतोपदेशे एव नियमेनेति सन्देहो न युक्त इत्याशयेनाशङ्कते—**ननु चेति**। आत्मीयानात्मीयत्वलक्षणे विषमशिष्टत्वे सत्यपि प्रकरणेनापनीतदेवताकस्यापि वाक्यान्तरस्थस्य शेषस्य विकल्पेन प्रयोज्यत्वप्राप्तेर्वाक्येन तु स्ववाक्यस्थस्यैव नित्यं प्रयोज्यत्वप्राप्तेः वाक्यप्रकरणविरोधे सति वाक्यबलीयस्त्वं विना स्ववाक्यस्थशेषनियमाश्रयणायोगाद्विकल्पोत्थविरुद्ध इत्याशयेन परिहरति—**सत्यमिति**।

प्रकरणस्यापर्यायवृत्तित्वेन युगपत्सर्वाङ्गग्राहित्वादसमवेतविशेषणान्वयप्रकाशनस्य चादृष्टार्थत्वाच्छास्त्रैकसमधिगम्यत्वेन चादृष्टस्यैकैकस्माच्छेषाददृष्टसिद्ध्यवगतेरिदं हविरजुषेतामित्येतावतो विभागमन्त्रवद्विकल्पसम्भवेऽप्यवीवृधेतामित्यादेर्विकल्पायोगाच्छेषोदाहरणभाष्यस्य चास्मिन्पक्षेऽनाञ्जस्यापत्तेर्यावत् कृत्व इति भाष्यावयवस्य सर्वप्रयोगमात्रोक्त्यर्थत्वव्याख्यानायापरितोषात्स्वमतेन समुच्चयार्थत्वव्याख्यां सूचयन्नन्यथासन्देहं दर्शयितुमाह—

**असकृद्वेति** । सकृदसकृत्प्रयोगयोरविरोधपक्षायोगसूचनार्था विरोधोक्तिः । अवीवृधेतामिति शेषेणासकृत्प्रयुक्तेनेष्टां देवतां विशिषतां प्रस्तरं प्रहरेदिति प्रकरणकल्प्ययासकृत्प्रयुक्तेनेति वाक्यकल्प्याया वा श्रुतेः शेषस्येष्टदेवतापदैकवाक्यत्वपूर्वकेष्टदेवताविशेषणोक्तिसामर्थ्यं-कल्पनापूर्वकत्वाविशेषादेकवाक्यत्वस्य च वाक्यप्रकरणयोर्द्वयोरप्याकाङ्क्षाहेतुकत्वाविशेषा-त्तुल्य बलतेति पूर्वपक्षोक्त्यर्थं किं तावदित्यादिभाष्यमाकाङ्क्षाख्यप्रकरणपूर्वकत्वेन नैकवाक्य-त्वस्य लिङ्गादिव प्रकरणादपि विप्रकृष्टार्थत्वाद्वाक्यस्य दुर्बलतेति पूर्वपक्षान्तरोक्त्यर्थं चाथवेति भाष्यं स्पष्टत्वान्न व्याख्यातम् । एवमित्यादिसिद्धान्तभाष्ये वाक्यबलीयस्त्वसिद्धचै वाक्ये पदैकवाक्यत्वप्रत्यक्षतोक्ति पदैकवाक्यत्वस्याकाङ्क्षाविशेषादयुक्तमाशङ्क्याकाङ्क्षा-नवगमे ऽप्यन्योन्यान्वययोग्यपदसमभिव्याहारमात्रेऽस्यैकवाक्यत्वावगत्याशयत्वेनोपपादयितु-माह—**क्लृप्तेति** । वाक्यस्य वाक्यार्थाख्यप्रयोजनलाभेन नैराकाङ्क्ष्यरूपात्परिपूर्णत्वा-त्प्रकरणे वाक्यैकवाक्यत्वस्याप्रत्यक्षत्वोपपादनपूर्वं विप्रकर्षोपपादनार्थमितिकर्त्तव्यताकाङ्क्ष-स्येत्यादिभाष्यं सूक्तवाकमन्त्रात्मकस्य वाक्यस्य ब्राह्मात्मकदर्शपूर्णमासवाक्यैकवाक्यत्वायोगा-त्प्रहरणसंयुक्तत्वेन प्रकृतयागैकवाक्यतया तदाभिधानसामर्थ्यकल्पनपूर्वकप्रकृतयागाभिधाना-र्थत्वधाचिश्रुतिकल्पनस्यायुक्तत्वादयुक्तमाशङ्क्योपपादयितुमाह—**कथम्भावेन हीति** । इत्थं यजेतेति कथम्भावाख्यप्रकरणानुमितायां श्रुतौ दर्शपूर्णमासवाक्यविहितयागानुवादेन तदङ्गत्वेन सूक्तवाकविधिरेकवाक्यतयोपचरित इति सम्बन्धोक्त्या सूचितम् । प्रहरणसंयुक्त-त्वात्साक्षात्प्रकृतयागाङ्गत्वाभावेऽपि प्रकृतयागापूर्वान्वयिनिरूपे सूक्तवाकस्याङ्गत्वसिद्धचै सामान्यसम्बन्धानुमानपूर्वं प्रहरणाङ्गतया विहितसूक्तवाकस्थापनीतदेवतापदशेषाणामात्मी-यैर्वाक्यान्तरस्थत्वादन्यदीयैर्देवतापदैः क्लृप्तस्य वाक्यशेषान्वयत्वाच्छेषान्तराकाङ्क्षैः सह पुनःशेषान्तराकाङ्क्षामुत्पाद्यान्वयकल्पनेति प्रहरणाङ्गत्वविध्यपेक्षितसामान्यसम्बन्धसिध्यै प्रहरणाङ्गत्वद्वारा प्रकृतयागाङ्गत्वोक्तिरिति तथाशब्देन सूचिते सामान्यसम्बन्धापेक्षया शेषाणां वाक्यान्तरस्थदेवतापदान्वये स्ववाक्यस्थदेवतापदान्वये च तुल्यत्वेनोभयसाधारण्या-द्विप्रकर्षया वाच्यत्वमाशङ्क्य सर्वशेषप्रयोगसिद्ध्यर्थत्वं सामान्यसम्बन्धोक्तेः सूचयितुम्—**यावदाम्नानमित्युक्तम्** । भाष्ये चाभिधेयोऽयं प्रकृतो याग इति वाच्यं श्रौतप्रहरणाख्यद्वा-रविशेषान्वयस्य सामान्यान्वयापेक्षत्वसूचनाय पूर्वकालत्वोक्त्यर्थाभिहित इति भूतनिष्ठा । साक्षाद्यागाभिधानेऽपि श्रुतिविहितयागाङ्गभूतप्रहरणाभिधानद्वारा यागाभिधानोपपत्ति-सूचनार्थम् । तस्मात्सूक्तवाकेन प्रस्तरं प्रहरतीति सामान्यान्वयापेक्षत्वसूचनाय वक्ष्यमाण-भाष्योदाहृतश्रुतिविहितद्वारपरामर्शयैवंशब्दः । प्रकृतयागात्पूर्वसाधनभूतप्रस्तरप्रहरणाङ्गत्वेन सूक्तवाकविधिमात्रात् सूक्तवाकस्य विशेषणीभूतप्रकृतयागसिद्धेः प्रकृतापूर्वलक्षणामात्रे प्रकरण-व्यापारो, न त्वङ्गत्वावेदने यागेतिकर्त्तव्यताभूतप्रहरणकरणत्वेन सूक्तवाकस्य यागेति-कर्त्तव्यतात्वाभावात्प्रकरणविनियोज्यत्वानुपपत्तेः, सन्निपत्योपकारिणां च प्रकरणविनियो-ज्यत्वस्यासंयुक्तं प्रकरणादितिसंयुक्तत्वोक्त्या पर्युदस्तत्वादितिसूचयितुं प्रहरणाङ्गत्वविधि-मात्राद्यागाङ्गत्वसिद्ध्युक्त्यर्थं भववीत्युक्तम् । एषो ऽत्रेति भाष्यमुपपादितार्थविप्रकर्षोप-

संहारार्थत्वेन व्याख्यातुमाह—**इतीति**। तस्मादिति भाष्यं प्रकरणबाधसिद्धान्तोपसंहारार्थत्वेन व्याचष्टे—**तस्मादिति**। इतिकर्तव्यताकाङ्क्षेत्यादिभाष्येण सूक्तवाकस्य दर्शपूर्णमासवाक्यैकवाक्यतायाः प्रत्यक्षत्वनिरासेऽपि देवतान्तरपदशेषाणामुत्कर्षयिष्टदेवतापदैकवाक्यतायाः प्रत्यक्षत्वस्य निरसनीयस्यानिरासादुत्कर्षसिद्धेः कथं देवतान्तरपदशेषाणां निष्कृस्य प्रयोगसिद्धिरित्याशङ्क्य, प्रकरणसामर्थ्यालोचनं विना देवतान्तरपदशेषाणामिष्टदेवतापदैकवाक्यत्वस्यानवगतेरप्रत्यक्षत्वं सिद्धमङ्गीकृत्य, येन कारणेन यद्यप्यप्रत्यक्षा सती पौर्णमासीदेवतापदशेषाणाममावास्यादेवतापदैकवाक्यतानुमातुमारभ्यते, तथापि प्रत्यक्षेणामावास्यादेवतापदैः सहाम्नातानामेव शेषाणाममावास्यादेवतापदैकवाक्यत्वावगतेः प्रत्यक्षविरोधान्नानुमानं सम्भवति। वस्तुतस्तु शेषाणां स्ववाक्यदेवतापदान्वयाद्देवतापदानां च स्ववाक्यशेषान्वयात्प्रकरणाम्नानार्थत्वोपपत्तेर्निराकाङ्क्षाणां देवतापदान्तराणां शेषान्तराकाङ्क्षोत्पादनाशक्तेर्न प्रकरणस्यानुमानारम्भे सामर्थ्यमस्ति। तेन कारणेन निष्कृस्य प्रयोगसिद्धिरिति। तेन शब्दोत्कर्षसहितेन तच्छेषाणामपि निष्कृष्य प्रयोग इति भाष्यावयवानुषङ्गेण परिहारार्थं तेनेत्यादिभाष्यं बल्वशेषैरिति वार्त्तिकेनानागतावेक्षणन्यायेनाऽर्थतो व्याख्यातत्वाद्विपरीतबाधपूर्वपक्षस्य चाथेति भाष्येणानुभाष्य निरासार्थं न यदित्यादिभाष्यं वाक्ये पदैकवाक्यत्वस्य प्रत्यक्षत्वोक्त्या वाक्यस्य लिङ्गापेक्षया विप्रकर्षः प्रकरणापेक्षया सन्निकर्षः, इत्युपपादितार्थत्वादव्याख्याय, चिन्ताप्रयोजनं विवेक्तुमाह—**ततश्चेति**। देवतापदान्तरशेषाणां नित्यमपकर्षसिद्धान्तप्रयोजनमुक्त्वा, तुल्यबलत्वपूर्वपक्षे प्रकरणस्य विकल्पेन सर्वशेषप्रापकत्वे वाक्याश्रयणे नित्यमपकर्षः, प्रकरणाश्रयणे पाक्षिकः, समुच्चयेनासकृत्प्रयोगप्रापकत्वे तु प्रकरणाश्रयणे सर्वशेषविनियोग इति प्रयोजनं सूचयितुं न पाक्षिक इत्यादुक्तम्। बलाबलविपरीतपूर्वपक्षे तु न पाक्षिक एवापकर्षः सर्वदेवताविनियोग इत्युभयत्राप्यवधारणं कार्यम्। अथेति प्रश्नभाष्यस्यार्थतः पाठपूर्वमाशयं व्याचष्टे—**अथेति**। अनुक्तमुदाहरणं ज्ञातुमशक्नुवतः श्रोतृरज्ञानादापाततो ज्ञातं च निश्चेतुमशक्नुवतः संशयात्तावत्सम्भवत्येव प्रश्नः तावतिक्रस्यापि तुल्यक्रमाणामैन्द्राग्नादीनां कर्मणां याज्यानुवाक्यायुगलानां चानारभ्याधीतत्वेन कस्य चित्प्रकरणेऽनाम्नानाद्दब्धिमन्त्रस्य, शुन्धनमन्त्रस्य च यथासंख्यलक्षणक्रमविनियोज्यस्य दर्शपूर्णमासप्रकरणाम्नातस्यापि शुन्धध्वमिति सन्निहितोपसंहारियुष्मदर्थविषयशब्दसामर्थ्यात्मकलिङ्गविरोधेन दब्धिमन्त्रस्य चास्पष्टलिङ्गत्वेनापि प्रकरणाविनियोज्यत्वायोगाद्यथासंख्यलक्षणपाठसादेश्यहेतुकस्य क्रमस्य प्रकरणविरोधे कस्यचिदुदाहरणस्यानुपपत्तेरनुष्ठानसोदेश्यहेतुकात्। क्रमादभिषेचनीयाङ्गत्वावगतेः प्रकरणाच्च राजसूयाङ्गत्वावगतेरुदाहरणत्वेनाभिमतस्य पुरस्तात्परस्ताद्वाम्नानसन्निधिनैव लक्षणेन सन्दंशाभिव्यङ्ग्याचावान्तरप्रकरणत्वप्रसङ्गान्न किञ्चिदुदाहरणमस्तीति विपर्ययदार्ढ्याय सम्भवतीत्यर्थः।

राजसूयइत्युत्तरभाष्यमाशयोक्तिपूर्वं व्याचष्टे—**शङ्कत्विति**। कथं शक्यमित्यपेक्षितेनैकस्याम्नायमानस्येति भाष्यंवक्ष्यमाणाकाङ्क्षारहितसन्निधिमात्रलक्षणत्वात्क्रमस्येति

सूचयितुं तद्भाष्यकारीयं पुरस्तात्परस्ताद्वाम्नानसन्निधानलक्षणेन क्रमस्यावान्तरप्रकरणत्वापत्तिनिरासमुपपाद्यैव, तावत्सप्रयोजनसन्देहोक्त्यर्थं यदीतिभाष्यं शौनशेपाख्यानादीनां सामान्यतोऽङ्गत्वासिद्धेस्तद्विशेषचिन्तायोगादयुक्तमाशङ्क्ययापि, वाङ्गमानज्याः स्युरि४-४ति चतुर्थाधिकरणसिद्धान्तसूत्रेऽङ्गत्वस्य वक्ष्यमाणत्वान्सन्देहविपर्ययाभावेनोपपादयन्यदि तुल्यबले, सर्वेषां वाभिषेचनीयस्य वेति विकल्प इत्यध्याहारेण त्रेधा सन्देहोक्त्यर्थतया व्याख्यातुमाह—**तेषां चेति**। विपर्ययो विप्रतिपत्तिशब्देनोक्तः। समस्तैकाङ्गत्वयोः समुच्चयायोगादुक्तप्रकारेण त्रेधैव विचार्यतइति, इतिकरणान्वयः।

कैमर्थ्यचिन्ताया बलाबलचिन्ताप्रयोजनत्वसूचनार्थम्—**प्रकरणस्येत्युक्तम्**। आकाङ्क्षासन्निधियोग्यत्वानां त्रयाणाम् एकवाक्यत्वापादकत्वेनेष्टत्वादाकाङ्क्षालक्षणस्य प्रकरणस्य, सन्निधिलक्षणस्य च क्रमस्य, तुल्यबलत्वोक्त्यर्थं किं तावदित्यादिभाष्यं सम्बन्धार्थत्वादाकाङ्क्षायाः, सन्निधिं च विना सम्बन्धायोगात्सर्वासामाकाङ्क्षाणां सन्निहितावलंबिनीत्वावगतराकाङ्क्षालक्षणस्य प्रकरणस्य वाक्यादिव सन्निधिलक्षणाक्रमादर्थविप्रकर्षात् दुर्बलतेतिबलाबलवैपरीत्यपूर्वपक्षान्तरोक्त्यर्थं चापि वेति भाष्यमेव मिथ्याद्यर्थविप्रकर्षादित्यन्तं च सिद्धान्तभाष्यं स्पष्टत्वादव्याख्याय, सन्निधिलक्षणस्य क्रमस्यावान्तरप्रकरणत्वेन महाप्रकरणान्सन्निकृष्टार्थत्वावगतेर्नार्थविप्रकर्षसम्भवतीत्याशयत्वेन कोऽत्रेति प्रश्नभाष्यव्याख्यां सूचयन्नवान्तरप्रकरणत्वापत्तिनिरासमुपपादयितुं शङ्कते—**ननु चेति**। एतच्छङ्कानिरासार्थत्वेन प्रकरणवत इत्यादेः सन्निधिविशेषाम्नानमात्रं हि क्रम इत्यन्तस्योत्तरभाष्यस्य व्याख्यां सूचयन्नवान्तरप्रकरणत्वापत्तिनिरासमुपपादयति—**नैष इति**।

अनेन चावान्तरप्रकरणवत्त्वेनाभिमतस्याभिषेचनीयस्य यदि शौनः शेपादिपाठकाले साकाङ्क्षत्वं स्यात् ततस्तन्सन्निधावाम्नातेन शौनःशेपाख्यानादिना स्ववाक्यार्थपरिपूर्णनाऽध्यवान्तरप्रकरणलक्षणवाक्यैकवाक्यतावकल्पेत, तस्य त्वभिषेचनीयस्य विदेवनशौनःशेपाख्यानादिभ्यः प्रागेव निराकाङ्क्षीकृतत्वेनावान्तरप्रकरणवत्त्वायोगान्न तल्लक्षणैवाक्यतावकल्पत इत्येवं प्रकरणवत इति भाष्यावयवव्याख्या सूचिता। प्रत्यासन्नविदेवनाद्युल्लङ्घनेन प्राकृतधर्मापेक्षा न युक्तेत्याशङ्कानिरासार्थत्वेनोभिषेचनीयाख्यस्य क्रतोरुपकारापेक्षेत्यतोऽक्लृप्तोपकारान्संनिहितान्धर्मानुल्लङ्घ्यातिदेशतो धर्मलाभाय प्रकृत्यपेक्षत्वादाकाङ्क्षारहितसन्निधिमात्रलक्षणक्रमवत्त्वापत्तेः संन्निधिमात्रलक्षणे क्रमे शौनःशेपाख्यानादिनाम्नातेनार्थकवाक्यत्वं नावकल्पतइत्येवं न त्विति भाष्यावयवव्याख्यां सूचयितुमाह—**सत्यामपीति**।

क्रमत्वे सत्यपि साङ्ग्रहण्यादेस्तिस्र आहुतीर्जुहोतीत्यादिभिरेकवाक्यत्वोपपत्तेरनवक्लृप्त्युक्तिरयुक्तेत्याशङ्क्य प्रकरणविरोधेनानवक्लृप्त्युक्तिमुपपादयितुमाह—**निराकाङ्क्षस्य हीति**। अभिषेचनीयवत्सर्वेषां राजसूयशब्दवाच्यानां सोमेष्टिपशुबन्धानां विकृतित्वेन प्राकृतैर्धर्मैर्निराकाङ्क्षीकृतत्वात्कथम्भावायोगमाशङ्क्याह—**तदीयो हीति**। प्रत्यात्मिकापूर्वसिद्ध्यै कथम्भावस्य प्राकृतैर्धर्मैर्निवृत्तावपि समस्तसाध्यफलापूर्वसिध्यै कथम्भावस्य पवित्राख्यान्सोमयागादारभ्य क्षत्रस्य धृत्याख्यसोमयागपर्यन्तमनुवृत्तेस्तन्मध्यपातिविदेवनादिस्पर्शा-

तत्कथम्भावेन विनियोगः सिद्ध इत्याशयः। अवान्तरप्रकरणापत्तिनिरासमुपसंहरति—**अत इति**। कस्यां चिदपि तर्हि विकृतौ प्रात्यात्मिकं प्रकरणं न स्यादित्याशङ्क्याह—**यस्यां त्विति**। प्रकृतमङ्गमनूद्य तत्सम्बन्धित्वेन वैकृतमङ्गं यस्यां विधीयते, तत्सम्बन्धित्वेन वा विहितस्य वैकृतस्याङ्गस्यैकस्य विधीयमानादङ्गात्पुरस्तादपरस्य च परस्तादवस्थितस्य मध्ये स्वतन्त्रमङ्गं यस्यां विधीयते, प्रधानाद्वा पुरस्तात्प्राकृताङ्गानुवादेन विहितस्याङ्गस्य परस्तात्स्वतन्त्रमङ्गं परस्ताद्वा प्राकृताङ्गानुवादेन विहितस्य पुरस्तात्स्वतन्त्रमङ्गं यस्यां विधीयते, तस्यां कथम्भावगृहीतप्राकृताङ्गवर्त्तित्वात्कथम्भावग्रहीतप्राकृताङ्गानुवादेन विहिताङ्गद्वयमध्यवर्त्तित्वाद्वा प्रकरणोपपत्तिरिति यथायोगमध्याहारावृत्तिभ्यां योज्यम्।

अभिषेचनीयेऽपि तर्हि 'माहेन्द्रस्य स्तोत्रे प्रत्यभिषिच्यतइ'ति वाऽऽद्येन प्राकृतमाहेन्द्रस्तोत्रसम्बन्धित्वेन विधानलक्षणायोगात्प्रकरणोपाख्यानादीनां प्राकृतवर्त्तित्वात्पश्वादिषु प्राकृतसामिधेन्यनुवादेन विधीयमानसात्पदश्यवत्प्रकरणपाठो भविष्यतीत्याशङ्क्याह—**न चेति**। शौनःशेपाख्यानादीनां माहेन्द्रस्तोत्रकालेऽनुष्ठानविधानेऽपि स्तोत्राङ्गत्वाभावेन स्तोत्रद्वारा कथंभावग्रहणायोगात्प्रकरणव्यापारो न सम्भवतीत्याशयः। तात्पर्यतो व्याख्याते प्रकरणवत इति भाष्ये शौनः शेपाख्यानादेः परिपूर्णत्वोक्ति प्रकरणवतैकवाक्यत्वात्प्रयोजनालभेन नैराकाङ्क्षलक्षणपरिपूर्णत्वायोगादयुक्तामाशङ्क्योपपादयति—**सन्निधाविति**। क्रमस्यावान्तरप्रकरणत्वाशङ्कानिरासार्थंलक्षणोक्त्यर्थेऽनेकस्येति भाष्येऽनेकविशेषणानर्थक्यमाशङ्क्य, अनेकस्य मध्ये कस्य चित्सन्निधावाम्नानस्य नान्तरीयकत्वादेकाङ्गत्वं विनाप्येकसन्निध्युपपत्तिसूचनायानेकोक्तिः, लक्षणविशेषणायेत्येवमुपापदयितुमाह—**अनेकस्येति**। नान्तरीयकतामुपपादयति—**यो हीति**। एकस्यापि तर्हि प्रकरणिनोऽर्थेऽनाम्नायमानस्य प्रकरणापाठावश्यम्भावात्प्रकरणपाठोऽपि नान्तरीयकः स्यादित्याशङ्क्याह—**नत्विति**। क्रमवदङ्गत्वं विनापि क्रमस्योपपत्तिरूपं यादृशं नान्तरीयकत्वं तादृशं प्रकरणवदङ्गत्वं विनापि प्रकरणपाठस्योपपत्तिरूपं नान्तरीयकत्वं नास्ति, कञ्चित्प्रकरणवन्तं प्रत्यङ्गत्वाभावे बहिरपि पाठसम्भवात्प्रकरणपाठस्यादृष्टार्थत्वापत्तेरित्याशयः। सन्निधिलक्षणस्य क्रमस्यावान्तरप्रकरणत्वाभावेऽप्याकाङ्क्षासन्निध्योस्तुल्यवेदकवाक्यत्वहेतुत्वान्न क्रमस्याकाङ्क्षालक्षणात्प्रकरणाद्विप्रकर्षः सम्भवतीतितुल्यबलत्वपूर्वपक्षाशयस्याकाङ्क्षानपेक्षान्सन्निधिमात्रादेकवाक्यत्वानवगतेः क्रमे चाप्रत्यक्षत्वादाकाङ्क्षायाः प्रकरणे तु प्रत्यक्षत्वाद्विप्रकर्षोपपादनेन निरासार्थं जवेत्यादिभाष्यं सन्निहितालम्बनत्वेनाकाङ्क्षायाः सन्निध्यपेक्षत्वाद्विपरीतबलाबलपूर्वपक्षस्यानुभाषणपूर्वमाकाङ्क्षीयान्वयं विनानुपपत्तिरूपत्वेनार्थापत्त्याख्यप्रमाणतयाऽऽकाङ्क्षायाः साक्षादेकवाक्यत्वावगतिहेतुत्वात्संनिधेस्त्वाकाङ्क्षीयविषयविशेषसमर्पणद्वारैकवाक्यत्वावगतिहेतुत्वाद्विषयविशेषणसमर्पणायाकाङ्क्षायाः संनिध्यपेक्षत्वेऽप्येकवाक्यत्वावगमाय सन्निध्यनपेक्षत्वाद्वाक्यापेक्षयार्थविप्रकर्षात्प्रकरणस्य दौर्बल्येऽपि क्रमापेक्षयार्थसन्निकर्षादबलीयस्त्वेत्येवं निरासार्थं वाथेत्यादिभाष्यम्, एकग्रन्थेन संक्षिप्य व्याचष्टे—**अत इति**। क्रमस्य सन्निधिविशेषमात्रत्वेनावान्तरप्रकरणत्वाभावे सतीत्येवं तत्र सन्निधिविशेषम्नान-

सामर्थ्यादिति भाष्यस्थतत्रशब्दव्याख्यासूचनार्थं व्याख्यातभाष्योक्तक्रमलक्षणपरामर्शायातः शब्दः क्रमसमाख्याविरोधोदाहरणपक्षभाष्यमपि पूर्ववन्त्रेधा व्याख्येयमित्याह—**क्रमेति** ।

अधिकृत्य कृते ग्रन्थइत्यनुवर्त्तमाने पुरोडाशाठ्ठञिति स्मृतेः पौरोडाशिकसमाख्यायाः पुरोडाशविषयग्रन्थवाचित्वावसायान्मन्त्रपुरोडाशपात्रशुन्धनसम्बन्धाख्यविनियोगहेतुत्वस्य तद्धितशब्दकृतत्वेन बलीयस्त्वात्परदौर्बल्यसिद्धान्तोपयोगिविरोधोदाहरणत्वायोगादयौगिक्याश्च समाख्याया विनियोगहेतुत्वनिरासाद्रूढित्वाभ्युपगमेन सारूप्यमात्रेण विनियोगहेतुतया दौर्बल्यायोगान्न किञ्चिदुदाहरणं सम्भवतीति वक्तुं शक्यत्वेऽपि, पौरोडाशिकसमाख्यायाः समस्ते दर्शपूर्णमासकाण्डे 'पुरोडाशानलङ्कुर्वि'तिवद्गौणत्वाच्छ्रुतितुल्यत्वशङ्कापि नास्तीति, अतिशयोक्त्यर्थत्वेन पौरोडाशिकमित्युदाहरणभाष्यं व्याख्यातुमाह—**पौरोडाशिकमिति** । पुरोडाशपात्रशुन्धनार्थत्वाभावे पौरोडाशिकसमाख्यानुपपत्तिशङ्कापि समस्तकाण्डवाचित्वोक्त्या निरस्तलिङ्गाच्छुन्धनार्थत्वावगमेऽपि पात्रशुन्धनार्थत्वानवगमात्पात्रविशेषसन्देहो न युक्तः । पात्राणामेव प्रक्षालनाख्यशुन्धनविधानाच्छुन्धनार्थत्वलिङ्गवशेन पात्रशुन्धनार्थत्वरूपविशेषावगमेऽपि ग्रहणादिपात्रशुन्धनेऽपि लिङ्गाद्विनियोगावगतेः क्रमसमाख्ययोर्द्वयोरपि बाधप्रसङ्गान्सन्देहायोगमाशङ्क्य, प्रकरणाद्दार्शपौर्णमासिकत्वविशेषलाभ इत्येवं सन्देहोपपादनार्थत्वेन दर्शपूर्णमासकाण्डे शुन्धनार्थमन्त्रे समाम्नाते सतीत्येवं तत्रशब्दं व्याचक्षाणस्तत्रेति सन्देहभाष्यं व्याचष्टे—**स चेति** ।

प्रकरणावगतस्य सामान्यसम्बन्धस्य द्वारविशेषसम्बन्धापेक्षत्वात्प्रकरणविरोधस्य निर्ज्ञाति प्रकरणेनेति भाष्यव्याख्यायां निराकरिष्यमाणत्वेनानाशङ्क्यत्वसूचनार्थं—**सामान्येनेत्युक्तम्** । विनियोगविषयविशेषचिन्तायाः फलतो बलाबलचिन्तार्थत्वसूचनार्थतां समाख्यानस्येति भाष्यवयवस्य सूचयितुम्—**इतरदित्युक्तम्** । तुल्यफलत्वाद्विकल्पो, विरोधाभावाद्वोभयत्रेति पूर्वपक्षद्वयान्तरमपि किंशब्देन सूचितम् । पौरोडाशिकसमाख्यायाः पौरोडाशिकापौरोडाशिकसमुदायवाचित्वेऽप्यर्थवत्त्वाय श्रुत्यादित्रयानवगतद्वारविशेषस्य पुरोडाशशब्दान्वयार्थत्वावगतेस्तद्बलीयस्त्वे पुरोडाशमात्रपात्रशुन्धनार्थतोक्ता । समाख्योक्तसम्बन्धस्याकाङ्क्षाविनानुपपत्तेः सन्निधिमकल्पयित्वाऽप्याकङ्क्षाकल्पकत्वसम्भवान्समाख्यायाः क्रमाद्विप्रकर्षायोगाशयेन तुल्यबलत्वपूर्वपक्षोक्त्यर्थं 'किंतावदित्यादि स्यातामित्यन्तं भाष्यमते इत्यादिचावृत्त्या विच्छिन्नं द्वे अप्येतेऽविरोधाद्विनियोगकारणे इत्येवं समुच्चयपूर्वपक्षान्तरोक्त्यर्थं, 'यदि वेति भाष्यं च समाख्यायाः श्रुतितुल्यत्वाद् बलाबलवैपरीत्य पूर्वपक्षान्तरोक्त्यर्थमित्येकहेलया पूर्वपक्षभाष्यद्वयव्याख्या पूर्वमेवमित्यावर्त्य विप्रकर्षादित्यन्तं सिद्धान्तभाष्यं व्याचष्टे—**तुल्येति** । दृष्टबाधत्वोक्त्या क्रमस्य विप्रकर्षः, समाख्यायाश्चादृष्टबाधत्वोक्त्या सन्निकर्षो विवक्षितः । कथमर्थविप्रकर्ष इत्यपेक्षाया'मुपदिश्यते हि क्रमे समाम्नानात्सान्नाय्यसम्बन्ध' इत्यादिभाष्ये वक्ष्यमाणामुपपत्तिमनागतावेक्षणन्यायेन दर्शयति—**तथा हीति** ।

यावति प्रदेशे ब्राह्मणे सान्नाय्यपात्रशुन्धनं, तावत्येव मन्त्रसंहितायां शुन्धनमन्त्रपाठाद्वेदरचितत्वेन क्रमे सादेश्यं प्रत्यक्षत्वाच्छीघ्रं दृश्यते । समाख्यायां तु सम्बन्धान्यथानुपपत्त्या कल्प्यत्वाद्विलम्बेनेत्यर्थः—**कः पुनरिति** । सम्बन्धस्यावाच्यत्वेऽप्यन्तर्णीतसम्बन्धस्य सम्बन्धिनोऽभिधानात्सम्बन्धानुपपत्तिमात्रेणाकाङ्क्षाकल्पनसिद्धेरेकस्मिन्नेव च क्षणे सादेश्यसम्बन्धाभ्यामाकाङ्क्षाकल्पना न विप्रकर्ष इति तुल्यबलत्वपूर्वपक्षे प्रश्नाशयः । वैपरीत्यपूर्वपक्षे तु श्रुत्यभिधेयस्याङ्गाङ्गिसम्बन्धस्य समाख्यावाच्ये सम्बन्धिन्यन्तर्णीतत्वेन श्रुतितुल्यत्वात्समाख्यायाः क्रमस्यैव प्रकरणादिव समाख्यातोऽप्यर्थविप्रकर्ष इत्याशयः । निर्ज्ञात इत्युत्तरभाष्ये प्रकरणव्यापारोक्त्यानर्थक्यमाशङ्क्य परिहरति—**निर्ज्ञात इति** ।

अविरोधोपपादनार्थं विरोधं नावच्छङ्कते—**कथं पुनरिति** । मन्त्रस्य संन्निपत्त्योपकारित्वेन प्रकरणविनियोज्यत्वाभावेन सामान्यान्वयमात्रे प्रकरणव्यापारात्, तस्य च द्वारविशेषापेक्षत्वादविरोधे इत्याशयेनाविरोधमुपपादयति—**नैष इति** । लिङ्गाच्छुन्धनसंयुक्तस्य प्रकरणेन क्रत्वङ्गत्वबोधाशक्तेः शुन्धनस्वरूपाङ्गतायामानर्थक्यप्रसक्तिपरिहारायाऽपूर्वसाधनांशलक्षणामात्रार्थं प्रकरणव्यापारापेक्षणादेकापूर्वसाधनांशलक्षणया चानर्थक्ये परिहृते, अपूर्वान्तरसाधनांशलक्षणायां प्रकरणव्यापारापेक्षणादेकापूर्वसाधनांशलक्षणया चानर्थक्ये परिहृते, पूर्वान्तरसाधनांशलक्षणायां प्रकरणाम्नानात्सर्वार्थत्वावगतिसूचनार्थं प्रकृतदर्शपूर्णमासाख्ययागषट्कान्यतरार्थत्वावधारणोक्ता ।

परिहाराशयाज्ञानाच्छङ्कामपरिहृतां मत्वा पुनः शङ्कते—**नन्विति** । परिहाराशयं विवृणोति—**नावश्यमिति** । मन्त्रस्यैक प्रकरण्यन्वयेन कृतार्थत्वादानर्थक्यपरिहारेऽप्यन्येषां पुरोडाशाज्ययागाख्यानां प्रकरणिनां पात्रशुन्धनमन्त्राभावे वैगुण्यापत्त्याऽपूर्वाख्यप्रयोजनरूपार्थासिद्धेर्मन्त्रस्य सर्वार्थत्वमाशङ्क्य, मन्त्रस्य यागान्तरपात्रशुन्धनाङ्गत्वाभावात्तच्छुन्धनस्यामन्त्रकत्वेऽपि वैगुण्यानापत्तेर्यागान्तराणां क्वचिदप्यंशे मन्त्रभावोऽभियुक्तानां दृष्टार्थेषु कर्मसु मन्त्रादरदर्शनात्,

अमन्त्रमन्त्रे यत्किञ्चिद्धूयते च हुताशने ।
सम्वत्सरकृतं पापं तत्पावमानीभिरहं पुनामि ॥

इत्यादिलिङ्गाच्च वैगुण्यं वाच्यम् । तच्च प्रोक्षणादिष्वङ्गान्तरेषु मन्त्रसद्भावान्नोपपद्यतइति परिहारसूचनार्थम्—**मन्त्रान्तरैरपीत्युक्तम्** ।

क्रमात्पूर्वं च प्रकृतक्रत्वन्वयाख्यसामान्यविनियोगविषयश्रुतिकल्पनेऽपि क्रमविरोधाभावात्पात्रशुन्धनाख्यद्वारविशेषान्वयविषयश्रुतिकल्पनकाले च पात्रशुन्धनस्य सन्निपत्त्योपकारित्वेन प्रात्यात्मिकयागोत्पत्त्यपूर्वमात्रपर्यवसायित्वात् तेषां चापूर्वाणां धर्मान्वयेऽन्योन्यानपेक्षतया युगपत्पर्यालोचनायोगात् यावत्प्रकरणमेकैकयागापूर्वसाधनीभूतं पात्रशुन्धनं प्रतिद्वारविशेषान्वयविषयां श्रुतिं कल्पयितुमारभते, तावत्क्रमेण सान्नाय्यपात्रशुन्धन-

विषयाकाङ्क्षाख्यप्रकरणकल्पनापेक्षेणाप्येकविषयतयाऽन्यालोचननिमित्तविक्षेपशून्येन कल्पितत्वात्प्रकरणेन कल्पयितुमारभ्यमाणाया द्वारविशेषान्वयविषयायाः श्रुतेः क्रमकल्पितश्रुतिविषयभूतसान्नाय्यपात्रविषयतयोपसंहारापत्तेः प्रकरणेन सर्वार्थत्वानवधारणादविरोध इत्याह—**सामान्येति**।

समाख्याया अपि तर्हि समस्तदर्शपूर्णमासवाचित्वेनानेकविषयश्रुतिकल्पनापत्तौ क्रमकल्पितैकविषयश्रुतिविषयोपसंहारसम्भवादविरोधापत्तिरित्याशङ्क्यनेकविषयत्वे पौरोडाशिकसमाख्यानर्थक्यापत्तेर्द्वारापेक्षिणां धर्माणां पुरोडाशमात्रद्वारान्वयार्थेयं समाख्येत्यवसायाद्विरोध इति परिहारं सूचयितुमाह—**समाख्या पुनरिति**। लौकिकस्त्विति भाष्यमवैदिकत्वेनास्याः समाख्याया वैदिकेऽर्थे प्रामाण्यायोगोक्त्यर्थमिति भ्रमं निवर्तयितुं विप्रकर्षात्समाख्या दुर्बला, नत्ववैदिकत्वादित्याह—**विप्रकर्षाच्चेति**। समाख्योक्तेन सम्बन्धेन सन्निधिमकल्पयित्वैवाकाङ्क्षाकल्पनाद्विप्रकर्षाभावमाशङ्क्य, सम्बन्धिनोरेकत्र नियमरूपत्वात्सम्बन्धस्यैकत्र सम्बन्धिद्वयविधानाख्यं सन्निधिं विनात्मलाभाभावेनाकाङ्क्षाकल्पनाशक्तेर्विप्रकर्षोपपादनपूर्वं विप्रकर्षोक्त्यर्थस्योपदिश्यते हीति भाष्यस्य सान्नाय्यपात्रशुन्धनेन सह शुन्धनमन्त्रस्यैकत्र नियमरूपः सन्निधिः, क्रमेपाठेनैवोपदिश्यते अवगम्यते। समाख्यायां नावगम्यतइत्येव सशब्दस्यैकीभावार्थत्वाद् बन्धशब्दस्य च नियमार्थत्वात्सम्बन्धशब्देन सन्निध्युक्तिमङ्गीकृत्य व्याख्यासूचनेन विप्रकर्षं दर्शयति—**सर्वो हीति**। वैदिकत्वेऽपि तर्हि समाख्याया विप्रकर्षसिद्धेर्लौकिकत्वेन चाप्रामाण्यस्य भक्षानुवाकसमाख्यायां निरस्तत्वाल्लौकिकस्त्वित्यादिभाष्यमयुक्तमित्याशङ्क्य, वैदिकाङ्गाङ्गसम्बन्धविप्रकर्षस्य लौकिक्यां समाख्यायामतिशयाख्यप्रकर्षदर्शनार्थत्वेनोपपादयति—**लौकिकस्त्विति**।

यद्येवमित्याशयाशङ्काभाष्यं लौकिकत्वेनाप्रामाण्यस्य सिद्धान्तिनानुक्तत्वादयुक्तमाशङ्क्याज्ञाताशयशङ्कात्वेनोपपादयति—**परस्त्विति**। नैष इत्यादि न प्रमाणमित्यन्तं परिहारभाष्यं तात्पर्यतो व्याचष्टे—**सिद्धान्तेति**। कीदृगुत्तरमित्यपेक्षायामाह—**यदि हीति**। एतदेवभाष्यमवयवशो व्याचिख्यासुः पौरोडाशिकशब्द इति भाष्यावयवं तात्पर्यतस्तावद् व्याचष्टे—**पौराडशिकेति**। भवति चेति भाष्यावयवस्याशयं तावदाह—**शब्दश्चेति**। वाच्यवाचकसम्बन्धस्यानादित्वेनानासत्वेनानासत्वदोषाभावात्पुरोडाशाद्गुनितियौगिकत्वस्मृतेश्च प्रयोगमूलभूताया विद्यमानत्वेन यौगिकत्वाद्विनियोजकत्वोपपत्तेर्नाप्रमाणमित्युक्ते पुरोडाशान्वयस्य पौरोडाशिकशब्दवाच्यस्यातीन्द्रियत्वेन वाच्यवाचकसम्बन्धस्यातीन्द्रियत्वात्स्मृतेरपि निर्मूलत्वेनाप्रामाण्यापत्तेर्न तन्मूलत्वेन शब्दप्रमाणता युक्तेत्याशङ्क्य, याज्ञिकैरनुष्ठीयमानस्य पुरोणाशान्वयस्य प्रत्यक्षत्वोपपत्तेः सम्बन्धस्यापि प्रत्यक्षत्वसम्भवोक्त्यथंम्—**पौरोडाशिकेत्ययुक्तम्**। तदेतदवैदिकत्वेऽपि शब्दस्य प्रामाण्यं दृष्टान्तैर्दर्शयतीत्याह—**तदिति**।

साम्नायपात्रशुंधनक्रमे शुन्धनमन्त्राम्नानं दर्शपूर्णमासयोरिदं प्रकरणम्। शुन्धध्वं दैव्यायेत्यादिपदानामेकवाक्यत्वं काठकादिसमाख्यातवाक्यसमूहरूपः शब्दो वेद इत्यादिष्वर्थेषु। यथा पुरुषः प्रमाणं तथा पौरोडाशिकशब्दोऽस्य मन्त्रस्य वाचक इत्यस्मिन्नर्थे पुरुषः प्रमाणमित्यर्थः। न हीति भाष्यावयवं पुरुषप्रमाण्योपपादनायैन्द्रियकत्वोक्त्यर्थत्वेन तावद्व्याचष्टे—**सर्वत्र हीति**। अध्येतृपुरुषस्थक्रमाम्नानादिदर्शनपूर्वं श्रोतॄणां सर्वत्र क्रमाम्नानादौ क्रमादिशब्दप्रयोगप्रवृत्तिरित्यर्थः। अनिन्द्रियरूपवेदविषयत्वाभावात्पुरुषस्यस्मिन्नर्थे प्रमाणता युक्तेत्येवमर्थत्वेनैतमेव भाष्यावयवं व्याचष्टे—**समानेति**। पदानामन्योन्यान्वयलक्षणैकवाक्यत्वहेतुभूतस्यान्योन्यसन्निधेर्वेदनानभिधानेऽप्येकवाक्यत्वस्यैकार्थ्यनिबन्धनत्वाद्वेदार्थस्य चानन्यप्रमाणकत्वादर्थोक्तिद्वारैकवाक्यत्वस्यापि वद एव वक्तेत्याशङ्क्य, वेदानुक्तस्याप्येकवाक्यत्वस्य पदार्थाकाङ्क्षासन्निधियोग्यत्ववशेन ज्ञातुं शक्यत्वान्न वेदो वक्तेति परिहारसूचनार्थम्—**परस्परेत्याद्युक्तम्**। उपपद्यत इतिभाष्यावयवं पूर्वेणैन्द्रियकत्वोक्तावतः शब्दाध्याहारेण पुरुषप्रामाण्योपसंहारार्थत्वेन स्पष्टत्वादव्याख्याय वेदविषयत्वाभावोक्तिपक्षे मूलभूतप्रमाणाभावात्तर्ह्यप्रामाण्यं पुंसां स्यादित्याशङ्कानिरासार्थत्वेन व्याख्यातुमाह—**किं तर्हीति**। दृश्यतइत्यनेन प्रत्यक्षमूलतोक्ता। पुरुषदोषनिरासाया नादित्वे तैरपीत्यनेनोक्तेऽन्धपरम्परान्यायनिवृत्त्यै दर्शनसम्भवोक्तिः। ये त्विति भाष्यावयवमतीन्द्रियत्वं सर्वलोकप्रसिद्धवेदादिविवेकबाधापादनेनैन्द्रियकदृढीकरणार्थत्वेन व्याख्यातुमाह—**अन्यथा हीति**। बुद्धादिवाक्यानामपि तर्ह्यप्रामाण्यभयेनैन्द्रियकविषयताभ्युपगन्तव्येत्यतिप्रसङ्गशङ्कां वैषम्योक्त्या निराकर्तुमाह—**अनेकेति**। तस्मादिति परिहारापसंहारभाष्यं व्याचष्टे—**तस्मादिति**।

उपदिश्यते हीत्यादिभाष्योक्तस्य समाख्यायां सादेश्यलक्षणस्य सन्निधेः कल्पनीयत्वेन विप्रकर्षस्य समाख्योक्तसम्बन्धमात्रेणाकाङ्क्षादिकल्पनसिद्धेः सादेश्यस्याकल्पनीयत्वेनायोगमाशङ्क्य सर्वत्र हि केन चिदभिन्नेन सम्बन्धोऽवकल्पतेइति सूत्रव्याख्यावार्त्तिकेन सादेश्यस्य कल्पनीयत्वोपपादनादुक्षादिपरामर्शित्वायोगेनाऽन्यत्राप्यस्य ग्रन्थस्यासामर्थ्यान्नोत्कर्षो युक्त इत्याशङ्क्य—**विज्ञातेति**।

## बाधवैविध्यनिरूपणम्

श्रुत्यादिबाधप्रस्तावेन बाधान्तराणामपि बुद्धिस्थत्वात्सर्वनाम्ना परामर्शोपपत्तावुक्तायां सन्निधानात्प्रकरणस्य बलीयस्त्वात्प्रकृतश्रुत्यादिपरामर्श एव युक्त इत्याशङ्कानिरासार्थम्—**विज्ञातेत्युक्तम्**। बाधान्तरप्रकारोक्तेः स्वतन्त्रोपयोगसिध्यै मीमांसाशास्त्रोपनिबद्धतोक्ता। बाधान्तराणां बुद्धिस्थत्वेऽपि श्रुत्यादिबाधप्रकारोक्त्यैव ज्ञातप्रकारोक्तेः स्वतन्त्रोपयोगमाशङ्क्याह—**तेषां चेति**। एवमपि प्रकृतोपयोगाभावात्तत्प्रश्नो न युक्त इत्याशङ्क्य, प्राप्तबाधस्य मिथ्यात्वज्ञापनरूपत्वान्मिथ्यात्वस्य दोषजन्यत्वाद्वेदे चानाप्तोक्तत्वदोषाभावात्सामान्यादिशास्त्रस्य प्राप्तबाधाभ्युपगमे शास्त्रार्थप्रतिपत्तुरपरामृष्टप्रतियोगिशास्त्रत्वस्य दोषत्वाभ्युपगमापत्तेः तस्य च लिङ्गादिष्वपि सम्भवात्प्राप्तबाधोपपत्तौ

बाधस्य सर्वत्रैकप्रकारत्वसम्भवे प्रकारान्तरकल्पनायोगात्लिङ्गादिभिर्बाधकविषयप्राप्त्यै श्रुतेरवश्यानुमेयत्वादनुमितायाश्च श्रुतेः सामान्यशास्त्रादिवद्विषयव्यवस्थया विरोधपरिहारायोगात् प्रत्यक्षश्रुतितुल्यत्वेन चात्यन्तबाधायोगात्तुल्यबलत्वेन विकल्पापत्तेर्युक्त्युत्पादितमपि श्रुत्यादिषु परदौर्बल्यं न सम्भवति शास्त्रार्थं प्रतिपत्तुं परम्परामृष्टप्रतियोगिशास्त्रत्वस्य षल्वदोषवच्छब्दे संक्रान्त्ययोगाच्छाब्दज्ञानमिथ्यात्वापादकदोषत्वानुपपत्तेर्लिङ्गादिषु प्राप्तबाधायोगेनाप्राप्तबाधाभ्युगमे तु तेनैव हेतुना सामान्यशास्त्रादिष्वपि अप्राप्तबाधापत्तेः सामान्यशास्त्रादेर्ज्ञानजनकत्वाभावेन विशेषशास्त्रानवरुद्धे विषये, प्रामाण्याभावापत्तेः सार्वत्रिको बाधः प्रसज्येतेति, कृत्वा वेदेन क्व चिद्बाधः सम्भवतीति सूचनात् प्रकृतोपयोगं दर्शयितुमाह—**सर्वत्रेति**। बाधस्यानेकप्रकारत्वस्य बाऽयोगान्न क्वचिद्बाधः सम्भवतीत्येवमाशयत्वे प्रश्नस्य श्रुत्यादावपि साधारण्यापत्तेः श्रुत्यादिविषयत्वनिरासो न युक्त इत्याशङ्क्याह—**तत्रेति**। सर्वबाधो तरविषयत्वेन प्रश्न व्याख्यातुमाह—**प्रत्यक्षेणेति**। स्तम्भोऽयमित्यादिना बाह्यार्थविषयप्रत्यक्षेण निरालम्बनानुमानम्। मृगतृष्णादिप्रत्ययाश्च तत्सम्प्रयोगजत्वादिप्रत्यक्षादिप्रमाणलक्षणरहितत्वात्प्रमाणाभासाः। प्रत्यक्षेण प्रत्यक्षाभासः अनुमानेनानुमानाभास इत्येवं यथास्वं प्रत्यक्षादिभिः प्रमाणैः औदुम्बरीस्पर्शनानिश्रुत्या सर्ववेष्टनादिस्मृतिः। आप्तस्य मन्वादेरविगीतया 'नात्मानं घातयेत्प्राज्ञ' इत्याद्यया स्मृत्या केदारे पातयेद्देहमित्याद्यनाप्तपारवण्ड्यादिस्मृतिः। भार्गाश्चतस्रा विप्रस्येत्याद्याप्तस्मृतिरपि।

यदुच्यते द्विजातीनां शुद्राद्दारोपसंग्रहः।
नैतन्मम मतमिति याज्ञवल्क्यादिस्मृतिभिर्विगीता—

'शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिमित्याद्यया, अदृष्टार्थया' न जातु ब्राह्मणं हन्यादित्यादिस्मृत्या जिघांसन्तञ्जिघांसीयादित्यात्मरक्षणादिदृष्टार्था 'पुत्रं प्रतिग्रहोष्यन्धूमाहूपरज्ञे निवेद्यानिवेशनृस्य मध्ये व्याहृतिभि र्हुत्वा प्रतिगृह्णीयादित्याद्यया होमादिगत कर्तव्यतायुक्तपुत्रप्रतिग्रहादिविषयत्वातिप्रभवया स्मृत्या न शेषा अग्ने अन्यजातमस्तीत्यादे, शेषोऽपत्यमन्योत्पादितं नास्तीत्याद्यभिधायित्वेन दत्तकपुत्रनिषेधादिलिङ्गत्वात्तत्प्रमया। यस्य येनापादितो विप्रकर्ष इत्याह—**स चेति**।

तदेतेषामित्यादेरधिकरणार्थोपसंहारभाष्यस्य प्रत्यक्षानुमादिबाधप्रकारोक्तचर्थादथेत्यादिभाष्यात्प्रागपकृष्य व्याख्येयत्वं सूचयितुमधिकरणार्थं संक्षिप्योपसंहरति—**एवमिति**। सामान्यादिविषयायाः श्रुतेरपि विशेषादिविषयेण बाधादियस्य विशेषविषयायाश्च समाख्यायाः सामान्यविषयां समाख्यां प्रति बाधकत्वस्य सजातीयबलवार्त्तिकेऽभिहितत्वान्नित्यं श्रुतेर्बाधकतया समाख्यायाश्च बाध्यता न युक्तेत्याशङ्कानिरासार्थं यथाभाष्यावस्थितानाम्—**मध्यइत्युक्तम्**। अथेत्यादि न तन्मिथ्येत्यन्तस्य भाष्यस्याक्षेपपूर्वमेतदधिकरणोक्तश्रुतिलिङ्गादिबाधप्रकारोक्त्यर्थं, तया परमतेन व्याख्यां दूषयितुमुपन्यस्यति—**इदानीमिति**। श्रुतिलिङ्गादिमात्रविगयत्वे तत्र तत्रेति वीप्सायोगमाशङ्क्य, पञ्चधा विभक्तश्रुतिलिङ्गादियुगलविषयत्वेन विप्सोपपादनार्थम्—**द्वयोर्द्वयोरित्युक्तम्**। यदिति भाष्यं व्याचष्टे

**तद्यदि तावदिति**। अथेति भाष्यं व्याचष्टे—**समवायेति**। प्राप्ते बाधकविषयमित्यादिबाधप्रकारोक्त्यर्थं भाष्यं व्याचष्टे—**तत्रेति**। विरोधाविरोधसाधारणभूतात्सामर्थ्यैकवाक्यत्वाकाङ्क्षासादेश्ययौगिकत्वरूपाल्लैङ्गिकादिविनियोगज्ञानकारणाद् बाधकस्य श्रुत्यादिजन्यस्य ज्ञानस्य विषयमैत्र्यादिकं प्राप्तं सल्लैङ्गिकादिविनियोगज्ञानं बाधकेन मृषात्वेनावगम्यतइत्युक्ते लिङ्गादेर्विप्रकृष्टार्थश्रुत्यादिविरोधेऽननुमितश्रुतितया विनियोजकज्ञानजनकत्वायोगात्प्राप्तबाधायोगमाशङ्क्य विरुद्धार्थविषयज्ञानजनकत्वं विना लिङ्गादेर्विरोधायोगेन बाधायोगान्मृषात्वावगतेः प्राग्वस्तुतो सत्यामप्याकाङ्क्षायां श्रौत्याकाङ्क्षारोपेण श्रुत्यनुमानद्वारोत्पन्नस्य विनियोगज्ञानस्य श्रुत्यादिजनितेन ज्ञानान्तरेण विरोधे सति विप्रकर्षालोचनया वास्तवनैराकाङ्क्षचमध्यवसायश्रुत्यनुमानमृषात्वावगतिसूचनार्थत्वेन भाष्यस्थपूर्वंशब्दव्याख्यार्थम्—**पूर्वमित्युक्तम्**।

श्लोकं व्याचष्टे **यद्यपि चेति**। सामान्यस्येति भाष्येणोपपत्तेरुक्तत्वाद्विनोपपत्तेरित्ययुक्तमित्याशङ्क्य सामर्थ्यादिरूपाणां लिङ्गादीनां साक्षाद्विनियोगकारणताभावात्साक्षात्करणभूतायाश्च श्रुतेरभावादसिद्धेयमुपपत्तिरित्याह—**यदपीति**। श्रुत्यनुमानाभ्युपगमेन तुल्यबलतैवापद्यतइत्याह—**अथ त्विति**। अविद्यमानाकाङ्क्षारोपेणानुमितायाः श्रुतेः वस्तुतोऽसत्वान्न तुल्यबलत्वापत्तिरित्याशङ्क्य, पश्चाद्भावाभ्युपगमेन विप्रकर्षो वाच्यः। तदा च पौर्वापर्यबलीयस्त्वन्यायेनानुमितयैव श्रुत्येतरश्रुतिबाधापत्तेस्तद्विनियोगवशेन नैराकाङ्क्षाभ्यवसायायोगाच्छ्रुत्यनुमानमिथ्यात्वकल्पना न युक्तेति परिहारं सूचयितुमाह—**यदि चेति**।

पूर्वंबाधापत्तिं प्रश्नपूर्वमुपपादयति—**कथमिति**। श्लोकं व्याचष्टे—**श्रुत्यादाविति**।

परव्याख्यादूषणोपसंहरपूर्वं स्वमतेन व्याख्यातुमुपक्रमते—**तस्मादिति**। बाधग्रन्थान्तेऽधिकरणोपसंहाराद्यद्यप्येष ग्रन्थः श्रुत्यादिबलाबलप्रकरणान्तः पातित्वेन श्रुत्यादिविषयः प्रतिभाति, तथापि तेषु न घटतइति कृत्वोत्कृष्यतइत्यर्थः। तत्रेति सर्वनाम्ना प्रकृतश्रुत्यादित्यागेनाप्रकृतबाधान्तरविषयभूतप्रत्ययिनो जाताः, तस्य तेनेतरस्य त्वित्याद्या तद्यथा मनुष्यराजआगते अन्यस्मिन्वार्हत्युक्षाणं वा वेहतम्वाक्षदन्त इत्याद्यर्थवादप्रभवा च—

महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेदिति।

इत्याद्यामागामनागामदिति वधिष्टेत्यादिविविधश्रुतिप्रभवयागो ब्राह्मणाऽनलाम्भांसिनोच्छिष्टो न पदा स्पृशेत् न निन्दा ताडने कुर्यादित्याद्यया, सूर्याविदेव धूमवस्त्रन्दद्यादित्यादिस्मृत्या विवाहचतुर्थेऽह्नि वधूवस्त्रपरिधानाद्याचारः। वृद्धव्यवहाराभियुक्तानामपि म्लेच्छानां हस्त्यादौ पील्वादिशब्दप्रयोगाचारोऽभियुक्ततराणामार्याणां वृक्षविषयप्रयोगाचारेण, 'अक्ताः शर्करा इति सन्दिग्धमसन्दिग्धेन घृतस्तवनेन, दुर्बलक्रमाशयं' वेदं कृत्वा वेदिं करोतीति वेदवाक्यं बलवत्पदार्थाश्रयेण क्षुतादिनिमित्ताचमनवाक्येन, उपसंहारस्थमृगादिपदमुपक्रमस्थेन वेदपदेन, सान्नायाज्ययोरिश्यन्तास्पष्टार्थं अवघाताद्योषधे नियमादृष्टार्थेनावघातादिना, पशुपुरोडाशस्यारादुपकारित्वं सन्निपत्योपकारित्वेन, दध्ना जुहोतीति विशिष्टविधिपक्षे विशेषण-

विशेषणविशेष्यरूपानेकार्थविधानं, गुणविधिपक्षेऽल्पार्थविधानेन, एकस्यार्थस्यानेकगोगाव्यादिशब्दत्वम् एकगोशब्दत्वेन एकस्य च शब्दस्यानेकव्यक्त्याकृत्यर्थत्वमेकाकृत्यर्थत्वेन, प्रतिगृहीतुरिष्टिरिति पक्षे वरुणायेति चतुर्थ्याः पञ्चम्यर्थत्वेनाश्वमनयदिति नयतेश्च प्रतिगृह्णात्यर्थत्वेन कल्पनात्स स्वां देवतामिति च तच्छब्दस्याप्राधान्यनिर्दिष्टवरुणपरामर्शित्वाद्दातृत्वे च वरुणस्य देवतात्वाभावेन देवताशब्दस्याविवक्षितार्थत्वाद् बहुबाधो दातुरिष्टिरिति पक्षे वरुणायेति चतुर्थ्याः पञ्चम्यर्थत्वेनाश्वमनयदिति नयतेश्च प्रतिगृह्णात्यर्थत्वेन कल्पनात्स स्वां देवतामिति च तच्छब्दस्याप्राधान्यनिर्दिष्टवरुणपरामर्शित्वाद्दातृत्वे च वरुणस्य देवतात्वाभावेन देवताशब्दस्याविवक्षितार्थत्वाद् बहुबाधो दातुरिष्टिरिति पक्षे वरुणायेति चतुर्थ्याः पञ्चम्यर्थत्वेनाश्वमनयदिति नयतेश्च प्रतिगृह्णात्यर्थत्वेन कल्पनात्स स्वान्देवतामिति च तच्छब्दस्याप्राधान्यनिर्दिष्टवरुणपरामर्शित्वाद्दातृत्वे च वरुणस्य देवतात्वाभावेन देवताशब्दस्याविवक्षितार्थत्वाद् बहुबाधो दातुरिष्टिरितिपक्षे प्रतिगृह्णातिमात्रस्य दाने कल्प्यत्वादल्पबाधेन सामवेदोत्पन्नं वारवन्तीयादियजुर्वेदविहितत्वेनोपांशुत्वप्राप्त्योच्चैस्त्वरूपेण, परशाखाविहितं वार्तामात्रेणावगतं यावत्स्वयं श्रूयते तावत्स्वशाखाविहितेनाग्नीषोमीयादेर्द्वादशकपालत्वाद्येकादशकपालत्वादिना, नित्यं सामधेनीपाञ्चदश्यं वैश्यनिमित्तेन साप्तदश्येन, नित्यं पाञ्चदश्यं नैमित्तिकवशात्साप्तदश्यम्पुरुषार्थेनैकैविंशत्यादिनानारभ्याधीतं साप्तदश्यं प्रकरणाधीतेन पाञ्चदश्येन, सर्वस्वं दाक्षिण्यादाक्षिण्यानिमित्तभूतप्रतिहर्तृद्गात्रपच्छेदपौर्वापर्यात्सर्वस्वदाक्षिण्यादाक्षिण्ययोः पौर्वापर्येणापद्यमानयोर्विरोधे पूर्वंपरेण प्राकृतं बर्हिरादि वैकृतेन शरादिना, प्रयोगवचनाश्रितं श्येनेप्रकृतष्वङ्गेषु उद्गातृकर्तृकत्वं चोदकाश्रयेण नानर्त्विक्कर्तृकत्वेन, निःप्रयोजनं निगदेषु परसम्बोधनार्थेषु उपांशुत्वं सप्रयोजनेनोच्चैस्त्वेन, आग्नेयाग्नीषोमीययोर्ब्राह्मणक्रमो मन्त्रक्रमेण, देवताश्रयमैन्द्रपुरोडाशादौ सान्नाय्यविध्यन्तादिद्रव्याश्रयेणौषधविध्यन्तादिना, पश्चादप्याम्नातमुपांशुयाजविकारभूतं सारस्वतं कर्मामावास्यायामुपांशुयाजमङ्गीकृत्यामावास्यातन्त्रप्रवर्तकतयाभासमानं पूर्वाम्नातेनाग्नीषोमीयविकारभूतेनाग्नावैष्णवेन पौर्णमासतन्त्रप्रवर्त्तकेनाऽल्पं पञ्चदशरात्रेऽग्निष्टुत्कर्माग्नेयीसुब्रह्मण्याप्रवर्त्तकं भूयसा ज्योतिरादिनैन्द्रीसुब्रह्मण्याप्रवर्त्तकेन, गौणं बर्हिर्मन्त्रप्रकाश्यं कुशसदृशं मुख्येन कुशेन, सामान्यविहितमाहवनीयादि विशेषविहितेन पदादिना, सावकाशं यत्किञ्चित्प्राचीनमित्यग्नीषोमीयप्राग्भाविपदार्थविहितमुपांशुत्वं दीक्षणीयादिमात्राङ्गतया विहितेन स्वरेणान्यत्र निरवकाशेऽनाङ्गमाधानेऽग्निहोत्रहवणीप्रधानेन निर्वपेणा अङ्गधर्मो दीक्षणीयादौ पर्वकालत्वं प्रधानधर्मेण, सुत्यायाः पर्वकालत्वेन बाध्यत इति, यत्तत्रतन्त्रोच्यते, तत्सर्वं प्राप्तमप्राप्तं वा बाध्यतइत्यर्थः। सर्वशब्देनैकाभिधानश्रुत्या पदश्रुतिबाधोऽपि सूचिता ।

किञ्चेति भाष्येणाप्राप्तबाधपक्षे को दोषः प्राप्तबाधपक्षे क इति पृष्टे बाधकविषयमप्राप्तस्य बाधे दोषोक्त्यार्थं यदीतिभाष्यं यदि बाध्यं सामान्यशास्त्रादिज्ञानानुत्पादकत्वाद् बाधकस्य विशेषशास्त्रादेर्विषयभूतं होमादि आप्राप्तं, ततो विरोधाभावात्किं बाध्यतइत्येवमर्थत्वेन भासमानं बाधकज्ञानविषयविरुद्धज्ञानाभिमुख्यमात्रेणानुत्पादितज्ञानस्यापि सामान्य-

राज्यादेरन्योन्यराज्याभिमुख्यमात्रेणानपहृतराज्यानामपि राज्ञामिव विरोधोपपत्तेरयुक्तमाशङ्क्य, विरोधविषयभूतपदहोमादिवदविरोधविषयभूतेऽग्निहोत्रहोमादावप्याहवनीयाधिकरणत्वादिज्ञानानुत्पादकत्वेनातुल्यत्वात्सार्वत्रिकबाधापत्त्यर्थत्वेन व्याख्यातुमाह—**तद्यदि तावदिति**।

सामान्यशास्त्रादेः प्रत्यक्षेण स्वरूपेणाऽभावायोगेऽपि ज्ञानोत्पादेन प्रवृत्त्यभावेनाहवनीयादिविनियोजकत्वरूपेणाभावापत्त्युक्तौ विनयोजकस्येत्युक्तम्। अनेन च किं बाध्यतइति भाष्यस्थस्य किंशब्दस्य स्तोकवाचि किञ्चित् शब्दैकदेशत्वात्किमिव च रेतो विक्रियतइत्यादिदर्शनाद्वा, स्तोकवाचित्वाभ्युपगमपूर्वं विरुद्धलक्षणया सर्ववाचित्वमभ्युपगम्याव्ययत्वाभ्युपगमेन च सप्तम्यर्थत्वाचित्वमभ्युपगम्य सर्वत्र बाध्यतइति भाष्यार्थः सूचितः। ज्ञानोत्पत्तिप्रतिबन्धस्य विरोधनिबन्धनत्वादविरोधविषये प्रतिबन्धकाभावेनोत्पादकत्वोपपत्तेः नाप्रवृत्तिनिमित्ताऽसत्तुल्यत्वापत्तिरित्याशयेन—**अथेति**। सामान्यादिशास्त्रास्यापर्यवसानाद्विशेषादिषु प्रवृत्तावपि सामान्यादिद्वारैव प्रवृत्तेःविषये भेदाभावेन ज्ञानभेदायोगात्क्वचिदंशे ज्ञानोत्पत्तिः प्रतिबध्यते, क्व चिन्नेत्यनुपपत्तेरविरोधविषये प्रतिबन्धाभावेन ज्ञानोत्पादकत्वच्छास्त्रस्यासत्तुल्यत्वानापत्तौ विरोधविषयेऽप्यसत्तुल्यत्वापत्त्ययोगाद्विशेषादिशास्त्रेण सह तुल्यबलत्वापत्तिः। पौर्वापर्यबलीयस्त्वन्यायाद्वा विपरीतबाधापत्तिरित्याशयेन परिहरति—**तत इति**।

ज्ञानभेदाभावेनोत्पत्तिप्रतिबन्धाप्रतिबन्धव्यवस्थायोगसूचनार्थम्—**न हीत्युक्तम्**। सर्वमेतदुदाहरणनिष्ठतया विवृणोति—**तेनेति**। सामान्यविशेषशास्त्रयोस्तुल्यबलत्वं, विपरीतो वा बाधोऽस्त्वित्याशङ्कमानस्य लोकप्रसिद्धविरोधसूचनार्थं लौकिकोदाहरणम्। ज्ञानोत्पादने शास्त्रप्रवृत्तौ ज्ञानोत्पत्तिप्रतिबन्धाशक्तेरप्राप्तबाधवादिना ज्ञानोत्पत्तिप्रतिबन्धार्थं शास्त्रप्रवृत्तिप्रतिबन्धस्य वाच्यत्वात्, तन्मते शास्त्रस्याकिञ्चित्करत्वेनासत्तुल्यत्वापत्त्युपपादनायाऽप्रवृत्तिशब्दः। नहीति वार्त्तिकावयवव्याख्यानायाप्यतो प्रतीत्यनेनैकस्य ज्ञानस्य सदसत्त्वविरोधात्तज्जनकस्य शास्त्रस्य सदसत्तुल्यत्वविरोधमुक्तमेकस्यापि शब्दार्थसम्बन्धस्य—

ज्ञानं हि पुरुषाधारं, तद्भेदान्न विरुध्यते।

इत्यादिसम्बन्धग्रन्थवार्तिकोक्तग्रहणाग्रहणविरोधवत्, दृष्टान्तत्वेन वोक्तां घानन्धसमीपच्छरूपग्रहणाग्रहणाविरोधदेकस्यापि शास्त्रस्य ग्रहणाग्रहणाविरोधाद्, गृहीतस्यैव च शास्त्रस्य ज्ञानजनकत्वात्क्वचिदंशे ज्ञानजनकत्वं, क्व चिन्नेत्यविरोधोपपत्तेरयुक्तमाशङ्क्यांशभेदेऽपि प्रमातृभेदाभावाच्छास्त्रस्य ग्रहणाग्रहणाविरोधायोगो न चात्रेत्यनेनोक्तः। प्रमातृभेदाभावेऽपि विषयभेदेन तदधीननिरूपणाज्ज्ञानभेदादज्ञातज्ञानाख्यशासनात्मकशास्त्ररूपभेदावगतेः सदसत्त्वविरोधो नास्तीत्याशङ्क्याह—**न चेति**।

सकृच्छ्रुतस्य शास्त्रस्यानेकार्थपरत्वायोगाद्विषयभेदो न सम्भवतीत्याशयः। सामान्यशास्त्रस्य च व्यक्तिविषयत्वाभावादतिदेशशास्त्रस्यैकपदार्थविषयात्वाभावाद्विषयभेदो नास्ती-

त्याह—**व्यक्तीति** । व्यक्तिवाचित्वपदार्थातिदेशपक्षयोः । शास्त्रस्वरूपेण भेदेऽपि स्वरूपभेदाभावसूचनार्थं कदाचिद्भिन्नत्वं भवेदित्युक्तम् । आकृतिवाचित्वयागगामिपदार्थसमुदायव्यापारातिदेशयोरपि सामान्यशास्त्रस्यानुष्ठानाहंव्यक्तिपर्यवसायित्वादतिदेशशास्त्रस्य च पदार्थपर्यवसायित्वाद्वयक्तीनामङ्गाख्यानां च पदार्थानां भिन्नत्वात् भिन्नविषयत्वेन शास्त्रभेदो भविष्यतीत्याशङ्कयाह—**आकृतीति** । प्रवृत्तिप्रतिबन्धलक्षणबाधाभ्युपगमे सामान्यवाचिना ब्राह्मणादिशब्देन व्यक्तिलक्षणायाः प्रकृतिसादृश्योक्तिद्वारभूतयागगतव्यापारवाचित्वात् जनकपदार्थावान्तरकार्यलक्षणाद्वारायाः पदार्थलक्षणयाः प्रवृत्तित्वेनाभिप्रेतायाः प्रतिबद्धत्वेन नाभावाद्वयक्तीनां पदार्थानां वा विषयत्वानुपपत्तेर्विषयभेदो न सम्भवतीत्याशयः । व्यक्तयादिलक्षणात्मकप्रवृत्तिप्रतिबन्धलक्षणबाधाभ्युपगमे विषयभेदाभावेन शास्त्रभेदाभावात्सदसत्त्वविरोधपरिहारायोगेऽपि सर्वत्र प्रवृत्तस्य सामान्यादिशास्त्रस्य विशेषादिशास्त्रेण स्वविषयानिवृत्तिलक्षणबाधाभ्युपगमे विषयभेदाच्छास्त्रभेदोपपत्तेर्विरोधपरिहारो भविष्यतीत्याशङ्कयाह—**एतेनेति** । व्यक्तिषु सामान्यशास्त्रप्रवृत्तिहेतोर्ब्राह्मणशब्दस्य पदार्थेषु चातिदेशशास्त्रप्रवृत्तिहेतोः प्रकृतिवच्छब्दस्य सर्वव्यक्तिषु सर्वपदार्थेषु तुल्यत्वेन कस्याश्चिद्वयक्तेः कस्य चिद्वा पदार्थस्य वर्जनायोगादनेन ततोऽवश्यमित्यादिवार्त्तिकोक्तेन प्रवृत्तिप्रतिबन्धनिमित्तशास्त्राभावापादनलक्षणबाधनिरासेन निवर्त्तनाख्योत्कालनलक्षणोऽपि बाधो निरस्त इत्यर्थः ।

सूत्रकृत्सम्मत्या किं चिद्वर्जनायोगं दृढयितुमाह—**तथा चेति** । अनारभ्यादिकरणेऽनारम्यविधिना विकृतिष्वपि खादिरत्वादिप्राप्तेस्तद्वर्जं चोदकवचनमित्यनारभ्यवादानां प्रकृतिमात्रार्थत्वसिद्धान्तहेतोः प्रकृतिविकृत्यर्थत्वे द्विरुक्तत्वप्रसङ्गस्यासिद्धत्वशङ्कार्थमुक्त्वा· चोदकस्यानारम्यविधितो दौर्बल्यम् । तेनैव विकृतिनैराकाङ्क्षाच्चोदकाभावापत्त्या तत्प्राप्यप्रयाजादिदर्शनादितिचेदिति सूत्रेणाशङ्कय न चोदनैकार्थ्यादि३-६-४-५त्यनेनानारभ्यचोदनायाः खादिरत्वाद्येकार्थपरत्वेन स्रुवाद्यविधानाद्विकृतिनैराकाङ्क्षयकरणाशक्तेश्चोदकस्य दौर्बल्येऽप्यनारभ्यविध्यप्राप्तप्रयाजादिप्रापकत्वोपपत्तिमुक्त्वा, सिद्धान्तैकदेशिमतेन द्विरुक्तत्वप्रसङ्गस्यासिद्धत्वमभ्युपेत्य सङ्क्षेपविस्तररूपत्वेन हेतुना प्रयाजादिप्रायकत्वोपपत्तिमुक्त्वा सिद्धान्तैकदेशिमतेन द्विरुक्तत्वप्रसङ्गस्यासिद्धत्वमभ्युपेत्य संक्षेपविस्तररूपत्वेन हेतुना प्रयाजादिविधिदृष्टान्तेन खादिरादिविधेः प्रकृतिमात्रार्थत्वानुमानमुत्पत्तिरिति चेदित्यनेनाशङ्कय; न तुल्यत्वादित्यनेनाशङ्कय न तुल्यत्वादित्यनेनामनहोमादिविधेर्विकृत्यर्थस्यापि सङ्क्षेपविस्तररूपत्वदर्शनेनानैकान्तिकत्वादनुमानायोगमुक्त्वा, चोदनार्थंस्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थमित्यनेनानारभ्यविधेः स्वविधेयखादिरत्वाविषयभूतस्रुवादिप्राप्त्यै चोदकापेक्षत्वेन चोदकस्यैव बलीयस्त्वादनारभ्यविधिविषयवर्जनानुपपत्तेः कृत्स्नस्य प्राकृताङ्गजातस्य चोदकचोदनार्थत्वावगमेनाऽनारम्यविधेर्विकृत्यर्थत्वे मुख्यस्य विकृतिविधेश्चोदकः शेषौऽनारम्यविधिर्वेति विप्रतिषेधापत्तेस्तत्परिहारायानारम्यविधानं प्रकृतिमात्रार्थमिति द्विरुक्तत्वप्रसङ्गस्यासिद्धत्वशङ्कानिरासेन सिद्धान्तमुपसंहरिष्यंश्चोदनार्थकात्स्न्याद्वितोनं प्राप्त-

नन्वितिभाष्यं पूर्वपक्षोक्तश्रुतिविरोधपरिहारानुभाषणार्थत्वेन व्याचष्टे—**यत्त्विति**। नेतीत्यनुभाषणपरिहारभाष्यमौपचारिकत्वाख्यस्य मुख्यत्वप्रतियोगिनो गौणत्वस्य पूर्वपक्षिणानुक्तत्वादयुक्तमाशङ्क्य गौणोक्त्यौपचारिकत्वं विवक्षितम्। नञ्समासात्मिकावयवव्युत्पत्तिर्वेति विकल्प्याद्यकल्पनिरासायैतद्भाष्यमित्येवं व्याचष्टे—**तदिति**। प्रकरणबाधापत्तेर्मुख्यसम्भवोक्तिरयुक्तेत्याशङ्क्य, न प्रकरणानुरोधेनेत्युक्तम्। यो विदग्धः स नैर्ऋत इत्यादौ नैर्ऋतादिशब्दानां प्रकरणानुरोधे(तै० सं० २-६-३)नापि श्रुत्यर्थत्यागो दृष्ट इत्याशङ्क्याह—**न चेति**। विधावप्यष्टावुपभृतीत्यष्टशब्दस्य श्रुत्यर्थत्यागेन चतुष्ट्वद्वयलक्षणार्थता दृष्टेत्याशङ्क्याह—**न चास्येति**। चतुष्ट्वद्वयवाचिशब्दान्तराभावादष्टशब्देन तल्लक्षणाभ्युपगता। ज्योतिष्टोमवाचिनस्त्विह साह्नशब्दस्य भावान्नाहीनशब्देन तल्लक्षणा युक्तेत्याशयः। आद्यकल्पनिरासमुपसंहरति—**तस्मादिति**।

नन्वितिभाष्येण द्वितीयं कल्पमाशङ्क्य, तन्निरासार्थं नेतीतिभाष्यं मध्योदात्तत्वोक्त्या समूहवाचित्वप्रत्ययान्तत्वेनावयवव्युत्पत्त्याऽहर्गणवाचित्वोक्त्यर्थत्वेनाभासमानमहर्गणात्मकेष्वपि सत्रेष्वहीनशब्दप्रयोगाभावेन केवलयौगिकत्वायोगादयुक्तमाशङ्क्य, योगरूढ्याशयत्वेन व्याख्यातुमाह—**न चेति**।

अहीनशब्दस्याखण्डस्याहर्विशिष्टगुणवाचित्वेऽनेकशक्तिकल्पनापत्तेः समुदायप्रसिद्ध्ययोगादहीनशब्दावयवभूतस्याहश्शब्दस्याह परमिते सोमयागाभ्याससमूहे समुदायप्रसिद्ध्या नञ्समासनिरासादित्येवं व्याख्येयं विशेषणभूतश्च नञ्समासोऽनेन निषिद्ध्यते। न विशेष्यभूतावयवव्युत्पत्तिः। समुदायप्रसिद्ध्यैव नञ्समासनिरासेन नञ्समासचिह्नभूताद्युदात्तत्वाभावेन तन्निरासोऽनर्थक इत्याशङ्क्योपचयार्थत्वेनार्थवत्त्वं चशब्देन सूचयंस्तथासतीति भाष्यं व्याचष्टे—**न च नञ्समासस्येति**। नञित्यन्वाख्यानाख्यलक्षणसद्भावाचिह्नवाची लक्षणशब्दः। चिह्नाभावमुपपादयति—**नञ्समासे हि सतीति**। नञ्समासस्य तत्पुरुषत्वाद् 'बहुव्रीहौ प्रकृत्या पूर्वपदमि(६-२-१)त्यतः प्रकृत्या पूर्ववदमित्यनुवर्त्तमाने' तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या (६-२-२) इति स्मृत्याऽव्ययाख्यस्य नञः पूर्वपदस्योदात्ताख्यप्रकृतिस्वरत्वान्वाख्यानादित्याशयः।

मध्येतिभाष्यं खप्रत्ययां तत्वोपपादनार्थत्वेन व्याचष्टे—**मध्येति**। कथं मध्योदात्तत्वात्खप्रत्ययान्तत्वाध्यवसानमित्याशङ्क्याह—**तथा सति हीति**। आद्युदात्तश्चेतिप्रत्ययस्याद्युदात्तत्वविधानादाकारे प्रकृतिस्वरः सिद्ध्यतीत्युक्ते 'आयनेयीनीयियः फढखच्छघां प्रत्ययादीनामि(७-१-२)ति प्रत्ययादिभूतस्य खकारस्येनादेशविधाने यीनादिशब्दस्याप्रत्ययत्वादादेशादावीकारे कथमुदात्तस्वरसिद्धिरित्याशङ्क्यायन्नादिष्वादेशेषु स्वरसिध्यर्थमुपदेशो विद्यते येषां फगादिप्रत्ययानां तद्वद्भावस्य वचनङ्कार्यमितिस्मृतेरादेशसम्बन्धिन्यपीकारे—**स्वरः सिध्यतीत्युक्तम्**। तस्मादिति सिद्धान्तोपसंहारभाष्यं मध्योदात्तत्वोपपादितसिद्धान्तहेत्वहर्गणवाचित्वोपसंहारपूर्वकत्वेन व्याख्यातुमाह—**तस्मादिति**। साह्नाहीनशब्दयोः सह प्रयोगेणापर्यायत्वावगतेर्मुख्यस्य साह्नशब्दस्वार्थेन सहाहीनशब्द-

स्यार्थेन सहाहीनशब्दस्य वाच्यवाचकलक्षणसम्बन्धाभावादित्येवं सूत्रव्याख्यार्थमपि चेति-भाष्यं व्याचष्टे—**अपि चेति**।

अर्थान्तरवाचित्वाभावेऽहीनशब्दानर्थक्यापत्त्युक्त्यर्थत्वेन व्याख्याय, शब्दद्वयानर्थक्यापत्त्युक्त्यर्थत्वेनैतदेव भाष्यं व्याचष्टे—**प्रकरणाद्वेति**। अहीनशब्दस्यार्थान्तरवाचित्वेऽपि साह्नशब्दस्यानर्थक्यन्त दवस्थमेवेत्याशङ्क्याह—**अर्थान्तरत्वे त्विति**। 'तिस्रउपसद' इत्युपसदनुवादेन त्रित्वविधिमात्रेण नैराकाङ्क्षादहीनशब्दानुषङ्गानुपपत्तेरहीनशब्दस्य च साह्नशब्दवत्त्रित्वद्वादशत्वमध्यपाठाभावेनोभयान्वयानवगतेरनूद्यमानाहीनसन्निधेश्च प्रकरणविरोध्यहीनाङ्गत्वानापादकत्वात्कथं त्रित्वस्याहीनान्वयापत्तिरित्याशङ्क्य, वस्तुतोऽहीनान्वयानापत्तावप्यानन्तर्यात्तदन्वयापत्तिभ्रमं निवर्तयितुं साह्नशब्द इति सूचनायाऽऽनन्तर्यादित्युक्तम्।

**भाष्यमतेनाधिकरणार्थमुपवर्ण्य वार्तिकमतेनाधिकरणनिरूपणम्**

द्वादशोपसत्त्वं ज्योतिष्टोमे विधीयते, अहीने वेत्येवं यथाभाष्यधिकरणं व्याख्यातम्। स्वमतेनाहीने द्वादशत्वविध्ययोगमभिप्रेत्याक्षिपति—**न त्विति**। यथाहीनस्य द्वादशोपसत्तोचिता, तथा ज्योतिष्टोमस्य त्र्युपसत्तेत्यौचित्यरूपेण त्रित्वस्तुत्यै द्वादशताऽनूद्यते, न त्वहीने विधीयतइत्याक्षेपार्थः। स्वाभिप्रेतत्वेऽप्याक्षेपस्य स्तुत्यर्थतयैकवाक्यत्वसंभवे वाक्यभेदापादिका विध्यर्थता न युक्तेति टुप्टीकोक्त एवाक्षेपहेतुर्युक्तः, अत्र त्वन्यप्रकरणेऽन्यधर्मविधेरन्याय्यतान्यधर्मविधौ विच्छिन्नस्य प्रकरणस्यानुसन्धानक्लेशोऽहीने च द्वादशत्वप्राप्तिरिति हेतुत्रयं परमतेनोक्तमिति सूचनार्थः किलशब्दः। स्वमतेन ज्योतिष्टोमे द्वादशत्वं विधीयते वाक्यान्तराद्वाहीने प्राप्तं त्रित्वस्तुत्यर्थमनुद्यत इत्येवमधिकरणं प्रश्नपूर्वं व्याचष्टे—**कथं तर्हीति**। श्लोकं व्याचष्टे—**एतदिति**। अहीनसम्बन्धद्वादशत्वोक्तेर्ज्योतिष्टोमसम्बन्धित्रित्वस्तुत्यर्थत्वे प्रकृतज्योतिष्टोमोपयोगसम्भवात्प्रकरणविरोधाविरोधचिन्तास्मिन्नधिकरणे न युज्येत इत्याशङ्कते—**नन्विति**।

द्वादशत्वस्य विधेयत्वे प्रकरणस्य तद्विनियोजकत्वाद् बाधो, विरोधत्वे नेत्येवं विरोधाविरोधचिन्तामुपपादयति—**नैष इति**। प्रकरणस्याविनियोजकत्वेऽपि द्वादशत्वस्य प्रकृतज्योतिष्टोमसम्बन्धित्रित्वस्तुत्यर्थत्वेन प्रकरणपाठानर्थक्याभावात्प्रकरणबाधोक्तिरयुक्तेत्याशङ्क्याह—**अन्यत्त्विति**। प्रकरणपाठार्थत्वेऽपि विनियोगएव प्रकरणस्य प्रामाण्याद्विनियोगाभावे बाधो भवतीत्याशयः। द्वादशाहीनस्येत्यस्य स्तुत्यर्थत्वेन त्रित्वविध्येकवाक्यत्वसम्भवे वाक्यभेदानेकादृष्टकल्पनापादकविध्यर्थत्वायोगाद्द्वादशत्वस्याविधेयत्वेत्युक्तेन हेतुत्रयेण विधेयता निराकर्तुमशक्येति सूचयितुमाह—**यदा त्विति**। क्रत्वन्तरान्वयाख्यविशेषसम्बन्धविधिनैवापूर्वान्वयाख्यसामान्यसम्बन्धाक्षेपे गौरवापत्तेः किलान्यप्रकरणेऽन्यधर्मविधेरन्याय्यत्वं वाच्यं, सत्यां च गतौ गौरवं दोषो, नासत्यं, क्रत्वन्तराङ्गविधिश्च

क्रत्वन्तरविधायित्वाभावेनातुल्यकक्षत्वात्पूर्वोक्तराङ्गसन्देशावगतं प्रकरणं विच्छेत्तुं न शक्नोतीति उत्तराधिकरणन्यायोक्त्या सूचितम्। शाखाभेदाच्चापौनरुक्त्योपपत्तेर्विधित्वसम्भवे स्तुतेः प्रयोजनत्वायोगाद्विधितैव युक्तेति सूचनार्थम्—शाखान्तरेत्युक्तम्। स्तुत्यर्थत्वेऽप्येवं प्रकरणमनुगृहीतं भवति, प्रकरणे बाधित्वेति पूर्वपक्षभाष्य-सिद्धान्तभाष्ययोः पूर्वपक्षं होत्यादिवार्त्तिकोक्तोपपत्तावपि विधित्वपक्षे एवभाष्यार्जत्वं यथाभाष्यतोक्त्योक्तम्। ज्योतिष्टोमगतत्र्युपसत्वस्तुत्यर्थत्वे तस्मादपकृष्येतेति सूत्रावयवस्याप्यनार्जवापत्तेर्यथासूत्रमिति कस्मान्नोक्तमित्याशङ्क्याह—**सर्वथा तावदिति**। द्वादशत्वस्याहीनसम्बन्धित्वेनोक्तस्य पक्षद्वयेऽपि ज्योतिष्टोमानन्वयसाम्यादपकर्षोक्तिरविरुद्धेत्याशयः। प्रकरणविच्छेदशङ्कानिवृत्तिसूचनाय—**एतावदित्युक्तम्** ॥ १६ ॥

इत्यष्टममहीनाधिकरणम्।

भा० प्र०—सिद्धान्ती का कहना है कि पूर्वपक्षी ने जो यह कहा है कि ज्योतिष्टोम में विकल्प से द्वादशोपसत्ता विहित होगा यह कथन ठीक नहीं है, किन्तु "तस्मात् अपकृष्यते" इसको ज्योतिष्टोम प्रकरण से अन्यत्र हटाकर ले जाना होगा। अर्थात् अहीन नामक स्वतन्त्र याग में वह विदित होगा, कारण, "मुख्यस्य असंयोगात्"—अहीन को ज्योतिष्टोम मानने पर मुख्य अर्थ का असंयोग अर्थात् बाध होगा, क्योंकि, अहीन शब्द 'अहर्गण' नामके याग में रूढ है। सोमयाग की आवृत्ति करके जो द्विरात्र, त्रिरात्र आदि द्वादशाहपर्यन्त याग किया जाता है—उसको अहर्गण कहा जाता है, वही 'अहीन' शब्द का रूढिसिद्ध अर्थ है, किन्तु अहीन को ज्योतिष्टोम कहने पर ज्योतिष्टोम एक दिन से साध्य सोमयाग होने से उसके रूढिसिद्ध अर्थ के बिना कारण में बाध्य होता है। किन्तु—यह सङ्गत नहीं है, क्योंकि, मुख्य अर्थ सम्भव होने पर गौण अर्थ का ग्रहण करना उचित नहीं है, अतः, नञ् समास से निष्पन्न कर ज्योष्टोमवाचक मानने पर व्याकरण सिद्ध स्वरनियम का व्यतिक्रम होगा, क्योंकि उसमें आद्योदात्त हो जायेगा, किन्तु अहीन शब्द मध्योदात्त है, इसलिए अहीन शब्द के अहर्गण का वाचक होने पर "अहीनस्य" इस स्थल में जो षष्ठी विभक्ति श्रुति है उसके द्वारा ही द्वादशोपसत्ता जो अहीन का अङ्ग है—वह अवगत होगा। किन्तु यह प्रकरण बल से ज्योतिष्टोम का अङ्ग नहीं हो सकता हैं, क्योंकि, प्रकरण की अपेक्षा श्रुति बलवान् है।

"मुख्यस्य असंयोगात्" = मुख्य अर्थात् रूढ अर्थ का असंयोग अर्थात् बाध होने से, "तु" = पूर्वपक्ष का सिरासक है, "तस्मात् अपकृष्यते" = वहाँ से अर्थात् ज्योतिष्टोम के प्रकरण से अपकर्ष = विच्छिन्न करना होगा अर्थात् द्वादशोपसत्ता को अन्यत्र विहित करना होगा। सिद्धान्त ॥ १६ ॥

**इति अष्टम अहीनाधिकरण।**

## अथ नवमं नैमित्तिकप्रणिपदोरुत्कर्षाधिकरणम्

## [९] द्वित्वबहुत्वयुक्तं चोदनात्तस्य ॥१७॥ सि०

**शा० भा०—ज्योतिष्टोमे श्रूयते 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, तां० ब्रा० ६-१०-१४ एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य' इति। तत्र संदेहः—ज्योतिष्टोम एव निविशेते प्रतिपदौ, उत द्वियज्ञं कंचित्कुलायादि बहुयज्ञं च द्विरात्रादिमुत्क्रष्टव्ये इति। किं प्राप्तम्? द्वित्वबहुत्वयुक्ते ज्योतिष्टोमेनासंयोगादुत्कृष्येयातां प्रतिपदौ। न हि ज्योतिष्टोमस्य द्वौ यजमानौ श्रूयेते, यथा कुलायस्य, 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्,' इति ॥ १७ ॥ सिद्धान्तः ॥**

त० वा०—पूर्ववदेव विचारः। एतावत्तु भिद्यते। पूर्वत्र प्रधानान्तरेण प्रकृतासमर्थशब्दाभिधेयेन सह संबन्ध आसीत्, इह तु गुणेन यजमानद्वित्वादिना कथंचिदाशङ्कितप्रकृतसंबन्धेन। तत्र पूर्वन्यायेनैव सिद्धान्तोपक्रमं सूत्रम्। न तावदिह यजमानद्वित्वबहुत्वे विधीयेते। सिद्धानुवादेन निमित्तीकृत्य प्रवृत्तेः प्रतिपद्विधिपरत्वात्। अनेकविधौ च वाक्यभेदात्। अविहितत्वाच्च न ज्योतिष्टोमे यजमानद्वित्वबहुत्वे विद्येते। कुलायादिषु त्वेकाहेष्वहीनेषु च प्रत्यक्षविहिते विद्येते। 'राजपुरोहितौ यजेयाताम्' 'एतेनैव द्वौ याजयेत्' 'एतेनैव त्रीन्याजयेत्' 'एको द्वौ बहवो वाऽहीनैर्यजेरन्' इति। तस्मादुत्कर्षः ॥ १७ ॥

**॥ अथ नवमं नैमित्तिकयोः प्रतिपदोरुत्कर्षाधिकरणम् ॥ ९ ॥**

न्या० सु०—नातिदेशाधिकरणत्वेनानन्तरसङ्गतिं सूचयन्संदेहभाष्यं व्याचष्टे—**पूर्ववदेवेति**। का तर्ह्यधिका शङ्केत्याशङ्क्याह—**एतावदिति**। ज्योतिष्टोमानन्वयिगुणद्वाराप्युत्कर्षसिद्धेः पूर्वपक्षायोगमाशङ्क्य—**कथं चिदित्युक्तम्**। आशङ्कितः प्रकृतेन सम्बन्धो यस्येति समासार्थः प्राथम्यादस्य पूर्वपक्षत्वशङ्कां निवर्त्तयन् मुख्यस्य ज्योतिष्टोमस्य द्वित्वबहुत्वनिमित्तयुक्तमपि प्रति यद्विधानं तस्माज्ज्योतिष्टोमादपकृष्येतेति पूर्वाधिकरणसिद्धान्तसूत्रार्थानुकर्षणार्थत्वेन चकारव्याख्यार्थं द्वित्वेति भाष्यं व्याचष्टे—**तत्रेति**। सिद्धान्तेनाधिकरणोपक्रमो येनेति समासार्थः। असंयोगोपपादनार्थत्वेन तस्य ज्योतिष्टोमस्य यजमानद्वित्वबहुत्वाचोदनादित्येवमचोदनात्तस्येति सूत्रावयवव्याख्यार्थं नहीति भाष्यं व्याचष्टे—**न तावदिति**। अन्यतः सिद्धद्वित्वबहुत्वानुवादेन द्वित्वबहुत्वे निमित्तीकृत्य द्विबहुशब्दप्रवृत्त्यवगमेनाऽनयोर्वाक्ययोः प्रतिपन्मात्रविधिपरत्वात्संख्या-प्रतिपद्रूपानेकार्थविधौ च वाक्यभेदापत्तेर्नेह वाक्यद्वये ज्योतिष्टोमाङ्गत्वेन द्वित्वबहुत्वे विधीयेते इत्यर्थः। अविहितत्वाच्चेति वार्त्तिकस्य वक्ष्यमाणार्थानाक्षेपापेक्षया तावच्छब्दः संख्यानपेक्षस्य यजमानस्य यजमानानपेक्षाया वा संख्याया नित्यत्वेन संख्यायाश्च व्यवस्थितत्वाधिक्येन

निमित्तत्वायोगान्'मृष्यामहे हविषा विशेषणमि'तिवद्यजमानविशिष्टाया निमित्तत्वेऽपि न वाक्यभेदापत्तिः। प्रतिपत्प्रकरणे च यजमानद्वित्वे निमित्ते 'युवं हिस्थः स्वर्पतो' इति कुर्यादिति निमित्तोद्देशेन मन्त्रे विहिते प्रकरणादेव प्रतिपत्त्वावगतेर्यदग्नये च प्रजापतये च सायं जुहोतीति कालोद्देशेन देवतायां विहितायां प्रकरणप्राप्तजुहोत्यनुवादवत्प्रकरणप्राप्तप्रतिपदनुवादसम्भवान्न प्रतिपन्निमित्तयोर्द्वयोरुद्देशाद्वाक्यभेदापत्तिः। प्रतिपत्त्वेनैव च मन्त्रविधिमभिप्रेत्य प्रतिपद्विध्युक्तिः। अनेकस्तोत्रीयागणात्मके स्तोमे कस्याश्चित्स्तोत्रीयाया नियमेनाद्वित्वप्राप्तेराद्यस्तोत्रीयत्वाख्यप्रतिपत्त्वप्राप्तेः स्तोमविधिनैव सिद्धत्वात्स्वरूपेण प्रतिपद्विध्यनुपपत्तिः।

एकस्य यजमानस्य ज्योतिष्टोमानुष्ठानाशक्तावशक्तिकृताङ्गत्यागन्यायात् ज्योतिष्टोमेऽपि विहितयजमानैकत्वत्यागेनार्थात्तद्वित्वबहुत्वप्राप्तिर्भविष्यतीति आशङ्क्य, आख्यातादेकत्वविशिष्टस्यैव कर्तृत्वावगतेरेकत्वाभावेनाधिकाराभावादेव त्वस्याशक्तिकृताङ्गत्यागन्यायविषयत्वानुपपत्तेर्नार्थाद्द्वित्वप्राप्तिरिति परिहारमुत्तरसूत्रद्वयारूढमप्येकत्वस्याशक्तिकृताङ्गत्यागन्यायविषयत्वसदसद्भावसन्देह एवात्र सन्देहहेतुरिति सूचनार्थं तस्य द्वित्वस्य, बहुत्वस्य वा ज्योतिष्टोमेऽर्थाक्षेपाभावादित्येवमचोदनात्तस्येति सूत्रावयवारूढं कर्तुमाह—**अविहितत्वाच्चेति**। यथेति भाष्यं तात्पर्यतो व्याचष्टे—**कुलायादिषु त्विति**। सिद्धान्तमुपसंहरति—**तस्मादिति** ॥ १७ ॥

भा० प्र०—श्रुति में "युवं हि स्थः स्वःपती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्। एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः" अर्थात् "युवं हि वः स्वःपती" यह कह कर दो यजमानों को 'प्रतिपत्' करे और "एते असृग्रमिन्दवः" यह कह कर अनेक यजमानों को प्रतिपत् करे—यह उपदिष्ट है। स्तोत्र के प्रारम्भ में जो ऋक् पाठ है, उसका नाम 'प्रतिपत्' है इस स्थल में दो विधि वाक्यों में जो 'प्रतिपत्' पाठ विहित होता है, वह क्या प्रकरण के अनुसार ज्योतिष्टोम में विहित होगा। अथवा श्रुति के अनुसार दो एवं बहु यजमानविशिष्ट "कुलाय" आदि नाम से प्रसिद्ध याग में अनुष्ठित होगा—यही संशय है। इस प्रकार सन्देह होने पर सिद्धान्ती के मत का उल्लेख कर कहा गया है कि "द्वित्वबहुत्वमुक्तम्" यथाक्रम में द्वित्व और बहुत्वयुक्त 'प्रतिपत्' दो को प्रकरण से अपकर्ष करना होगा। अर्थात् उसका ज्योतिष्टोम में विनियोग नहीं करना होगा। इस स्थल में पूर्व सूत्र का "तस्मात् अपकृष्यते" इस अंश का अनुषङ्ग कर व्याख्या करनी होगी। उसके विच्छेद का कारण कहते हैं 'अचोदनात् तस्य', क्योंकि वह अर्थात् यजमान का द्वित्व एवं बहुत्व प्रकृतिभूत ज्योतिष्टोम में विहीन नहीं है, कारण, ज्योतिष्टोम में एक यजमान है। पक्षान्तर में "एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्" इस श्रुतिवाक्य से अवगत होता है कि 'कुलायनामक' यज्ञ में दो यजमान हैं, इसी प्रकार 'एको द्वौ बहवो वा अहीनैर्यजेरन्", इत्यादि विधि से अवगत है कि अहीनादि में एवं सत्र में बहु यजमान हैं—इसलिए वह उसी का अङ्ग है।

"द्वित्वबहुत्वयुक्तम्" = द्वित्व एवं बहुत्व युक्त प्रतिपत् दो विकृति यागों में उत्कर्ष करना होगा, "वा" = पक्ष परिवर्तनसूचक, "तस्य अचोदनात्" = क्योंकि वह अर्थात् द्वित्व एवं बहुत्व प्रकृतिभूत कर्म में चोदित (विधि बोधित) नहीं हैं। (सिद्धान्त) ॥ १७ ॥

## पक्षेणार्थंकृतस्येति चेत् ॥१८॥

**शा० भा०—इति चेत् पश्यसि प्रतिपदावुत्क्रष्टव्ये इति। नैतदेवम्। प्रकरणं हि बाध्येत। बाध्यताम्। असंयोगाद् द्वाभ्यां यजमानाभ्यां बहुभिश्च यजमानै-र्ज्योतिष्टोमस्येति चेत्? असत्यपि वचनेऽर्थाद् द्वौ यजमानौ भविष्यतः। य एको न शक्ष्यति, ससहायः स उपक्रंस्यते। अवश्ययष्टव्ये सति यथा शक्यते, तथा यष्टव्यमिति बाधित्वाऽपि कांचित्प्राप्तिं यजमानः सहायमुपादास्यते। एवं प्रकरणे प्रतिपदौ भविष्यतः। तस्मान्नोत्क्रष्टव्ये इति ॥ १८ ॥ पूर्वपक्षः ॥**

त० वा०—प्रकरणाज्ज्योतिष्टोमे निवेशः। न चाहीनवदप्रकृतयज्ञसंबन्धोऽस्ति। यजमानद्वित्वादिसंबन्धस्तु निमित्तमात्रौपयिकत्वान्नाङ्गाङ्गिभावाय प्रभवति। न च तद्द्वारेण क्रतुसंबन्धो घटते, लक्षणाप्रसङ्गात्। न हि श्रुत्योपयुक्तानां लक्षणयोपयोगान्तरं युज्यते। द्वित्वादिस्वरूपसंबन्धे तु विधिरेवानर्थंको भवेत्। फलकल्पनायाश्च प्रकरणसंबन्धकल्पना ज्यायसी।

यत्तु निमित्तं प्रकरणे नास्तीति, तदुच्यतेऽर्थाद्भविष्यति। न हि विहितमेवैकं निमित्त भवति। अर्थप्राप्तस्याप्युपपद्यमानत्वात्। अस्ति चैकशक्तिपक्षे द्वित्रादि-यजमानप्राप्तिः। न चाद्यापि यजमानैकत्वविवक्षामवधारयामः। सत्यामपि च विवक्षायाम् 'अपि+वाऽप्येकदेशे स्यात्' इत्यनेन यथैवाशक्तेरन्यत्किंचिदङ्गं हाप्यते, तथैव यजमानैकत्वमपि कदाचित्परिहाप्य द्वौ बहवो वा यजेरंस्ततश्चास्ति निमित्तम्।

अथवैतदेव प्रतिपद्विधानं दृष्ट्वाऽर्थाद् द्विबहुयजमानकर्तृश्रुतिं कल्पयिष्यामः। सा चैतस्मिन्नेव पक्षे भवति न प्रतिपदन्तरपक्षेष्विति नैकत्वचोदना विरोत्स्यते ॥ १८ ॥

न्या० सु०—एकाशक्तिपक्षेणापन्नादर्थाद्द्वाभ्यां बहुभिर्वा कृतस्य ज्योतिष्टोमस्य द्वित्वबहुत्वसंयोगो भविष्यतीति प्रतिपद्विधानस्यार्थप्राप्तद्वित्वबहुत्वसंयोगविषयत्वकल्पनोक्तेर्बीजं तावदाह—**प्रकरणाद्वेति**। द्विबहुश्रुतिविरोधात्प्रकरणबाधमाशङ्क्याह—**न चेति**। साक्षादङ्गान्तरसम्बन्धाश्रवणेऽपि द्वित्वबहुत्वसम्बन्धश्रवणाच्छ्रुतिविरोधोऽपरिहार्य इत्याशङ्क्याह—**यजमानेति**। द्विबहुश्रुत्योरङ्गाङ्गिभावार्थत्वे प्रकरणगम्याङ्गाङ्गिभावबाधकत्वस्यानिमित्तार्थत्वे तु भिन्नविषयत्वेनविरोधान्न बाधकतेत्याशयः। द्वित्वबहुत्वश्रुत्योर्द्विबहुयजमानकर्तृकक्रतुलक्षणया तदङ्गत्वावेदकत्वात् विरोधो भविष्यतीत्याशङ्क्याह—**न चेति**। लक्षणापि

लौकिकीत्वाद्युक्तैवेत्याशङ्क्याह—**न हीति**। श्रौतद्वित्वबहुत्वाङ्गत्वावेदकत्वादेव तर्हि विरोधो भविष्यतीत्याशङ्क्याह—**द्वित्वादीति**। श्रौतस्य द्वित्वादिसम्बन्धस्य निमित्तमात्रौपयिकत्वेऽपि संक्रान्त्यादौ निमित्ते फलार्थस्नानादिविधिवत् द्वित्वादौ निमित्ते प्रतिपद्विधेः फलार्थत्वसम्भवात्स्वातन्त्र्योपपत्तेर्न ज्योतिष्टोमे निवेशो युक्त इत्याशङ्क्याह—**फलेति**। फलकल्पनायामश्रुतफलतत्साधनेतिकर्त्तव्यताकल्पनागौरवापत्तेः प्रकृतक्रत्वन्वयकल्पनैव ततो ज्यायसीति वाच्ये प्रकरणप्रमाणकत्वेन कल्पनालाघवादिति हेतुसूचनार्थं कर्मव्युत्पत्त्या प्रकृतवाची प्रकरणशब्दः प्रयुक्तः। एतदन्तेन च प्रकरणादित्यादिवार्त्तिकेनेति चेदिति सूत्रावयवं तस्मादपकृष्येतेत्यनुकृष्टसूत्रावयवार्थानुभाषणार्थत्वेन व्याख्याय, पूर्वाधिकरणपूर्वपक्षसूत्रस्थेन प्रकरणादिति हेतुना मण्डूकप्लुतिन्यायादत्रागतेन परिहारोक्त्यर्थं बाध्येतेत्यन्तं भाष्यं व्याख्यातम्। असंयोगादित्यनुकृष्टसूत्रावयवार्थानुभाषणार्थत्वेनावृत्त्येति चेदिति सूत्रावयवव्याख्यार्थं बाध्यतामिति भाष्यं व्याचष्टे—**यस्त्विति**। तत्परिहारार्थत्वेनार्थकृतस्येति सूत्रावयवव्याख्यार्थमसत्यपीतिभाष्यं व्याचष्टे—**तदिति**। अचोदनात्तस्येति सूत्रावयवोक्तामुपपत्तिं निराकर्त्तुमाह—**न हीति**। द्वित्वबहुत्वयोरर्थप्राप्त्युपपादनार्थत्वेन पक्षेणेति सूत्रावयवव्याख्यार्थं य एक इति भाष्यं व्याचष्टे—**अस्ति चेति**। एकस्याशक्तावपि यजेतेत्येकत्वश्रुतिविरोधान्नानेकयजमानप्राप्तिः सम्भवतीत्याशङ्क्य, परमतेन तावत्परिहारं विवक्षितं हीत्युत्तरसूत्रस्थभाष्यसूचितमाह—**न चेति**। वक्ष्यमाणानालोचनेन प्रत्यवस्थाने सर्वविचाराणामनवस्थानापत्तेरेतत्परिहारापरितोषादशक्तिकृताङ्गत्यागन्यायेनैकत्वत्यागादनेकयजमानप्राप्तिरिति स्वमतेन परिहारान्तरोक्त्यर्थमवश्येतिभाष्यं व्याचष्टे—**सत्यामपि चेति**। षष्ठे 'सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशादि(६-३-१)ति सूत्रेण नित्येऽपि प्रयोगे सर्वाङ्गानुष्ठानशक्तौ सत्यां प्रवृत्तिर्युक्ता विधेस्त्वेकश्रुतित्वादपर्यायविधानात्सनित्यवच्छ्रुतिभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं स्वशब्दार्थो निवीतवत्तस्मात्सर्वप्रयोगे स्यादि(११-१-१६)त्येकादशाधिकरणन्यायेन सर्वाङ्गोपेतप्रयोगोपदेशादिति पूर्वपक्षयित्वा, अपि वाप्येकदेशे स्यात्प्रधाने ह्यर्थनिवृत्तिर्गुणमात्रमितरत्तदर्थत्वादित्यनेनाङ्गैकदेशेऽपि शक्तौ सत्यां नित्ये प्रयोगे प्रवृत्तिर्युक्ता शक्त्यपेक्षत्वेऽप्यधिकारस्य सर्वाङ्गानुष्ठानशक्तेरनित्यत्वेन नित्यं सर्वाङ्गोपेतं कुर्यादिति विध्ययोगाद्यदा सर्वाङ्गोपेतं कर्त्तुं शक्नुयात्तदा कुर्यादिति विध्यर्थाभ्युपगमे च यावज्जीवादिश्रुत्यवगतनित्यत्वविरोधापत्तेर्यावन्त्यङ्गानि कर्त्तुं शक्नुयात्तावद्भिरुपेतं नित्यं कुर्यादिति विध्यर्थवसायाद्यावच्छक्यङ्गोपेते प्रधानेऽनुष्ठिते विध्यर्थनिष्पत्तेरितरस्य चाशक्यस्याङ्गस्य प्रधानार्थत्वेन गुणमात्रत्वाद् गुणलोपे च मुख्यस्य क्रिया स्यादि(१०-२-६२)ति दशमाधिकरणन्यायेनाङ्गलोपेऽपि प्रधानानुष्ठानस्य युक्तत्वादिति सिद्धान्तयिष्यमाणत्वाद्यजमानैकत्वमपि कदाचित्परित्यज्या, अनेके यजेरन्नित्युक्ते कर्त्तुरेवाधिकारादेकत्वविशिष्टस्यैव च कर्त्तृत्वादेकत्वत्यागेऽधिकाराभावाद्यागानुष्ठानं न युक्तमित्याशङ्क्य 'बहुषु बहुवचनं, द्व्येकयोर्द्विवचनैकवचने इति बहुद्व्येकशब्दानां संख्याप्रधानत्वाभ्युपगमात्कर्तुरेकत्वे, द्वित्वे, बहुत्व इति च व्याख्यानात्संख्याविशेषणत्वेन संख्यान्वयात्प्रागेव कर्तृत्वप्रतीरेकत्वत्यागेऽपि

कर्तृत्वसद्भावेनाधिकारसद्भावाद्यागानुष्ठानोपपत्तिसूचनार्थम्—**यथैवेत्युक्तम्**। सूत्रतात्पर्यमुपसंहरति—**ततश्चेति**।

प्रतिपद्विधानान्यथानुपपत्तिरूपदर्थात्कल्पितया ज्योतिष्टोमस्य द्विबहुयजमानकत्वश्रुत्या विहिताभ्यां द्वाभ्यां, बहुभिर्वा कृतस्य ज्योतिष्टोमस्य द्वित्वबहुत्वसंयोगो भविष्यतीत्येवं स्वयमन्यथार्थंकृतस्येति सूत्रावयवं व्याचष्टे—**अथ वेति**। ज्योतिष्टोमेन द्वौ बहवो वा यजेरन्निति श्रुतिकल्पने द्विबहुश्रुत्योर्द्वित्वबहुत्वविधिं विनानर्थक्यापत्तेरन्यगतित्वेन निरवकाशत्वाद्यजेतेत्येकवचनाख्यातश्रुतेराख्यातानां मध्ये कस्मिंश्चिदाख्याते प्रयोक्तव्ये प्राथम्यात्प्रयोगोपपत्तेर्गत्यन्तरसम्भवेन सावकाशत्वादेकत्वमत्यन्तं बाध्येतेत्याशङ्कानिरासार्थंत्वेनैतत्प्रतिपद्विपक्षेणेति सूत्रावयवं व्याचष्टे—**सा चेति**। 'यदि च हेतुरवतिष्ठते'ति न्यायात् शूर्पत्वैकार्थसमवायिनोऽन्नकरणावान्तरसामान्यस्य होमसाधनत्वहेतुत्वान्यथानुपपत्त्याविधिः कल्प्यमानो यथा शूर्पविषयएव कल्प्यते, तथा द्वित्वादिनिमित्तप्रतिपद्विशेषविध्यन्यथानुपपत्त्या द्वित्वादिविधिः कल्प्यमानः प्रतिपद्विशेषपक्ष एव कल्प्यत इत्याशयः। न त्वेतद्युक्तं प्रतिपद्विशेषनिमित्तद्वित्वादिविधिकल्पनेऽन्योन्यनिमित्तत्वापत्त्याऽन्योन्याश्रयापत्तेः, निमित्तानपेक्षद्वित्वादिविधिकल्पने 'उपास्मै गायता नर' इति प्रतिपदं कुर्यादिति नित्यायाः प्रतिपदो नैमित्तिक्या प्रतिपदाबाधेनार्थाद्द्वित्वबहुत्वयोस्तन्निमित्ताभ्यां प्रतिपद्भ्यामेकविषयत्वनियमेऽपि तद्विधायिन्योः श्रुत्योः प्रतिपद्विशेषानपेक्षत्वात्, सर्वत्र प्राप्तेरेकत्वचोदनाया विरोधपरिहारायोगेन बाधे सति उपास्मै गायता नर इत्यस्या अपि प्रतिपदोऽनन्यगतित्वाद्द्विबहुयजमानकयोरेव प्रयोगयोर्विकल्पेन निवेशापत्तेः। तस्मात्प्रौढिमात्रेणेयं व्याख्याकृता ॥ १८ ॥

भा० प्र०—पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि ज्योतिष्टोम में एक यजमान होने के कारण उसमें "प्रतिपत्" विहित नहीं हो सकता है। इसके उत्तर में पूर्वपक्षी का कहना है कि "पक्षेण अर्थकृतस्य" जिस स्थल में एक यजमान ज्योतिष्टोम करने में असमर्थ होगा, वहाँ दो या अनेक व्यक्ति मिलकर ज्योतिष्टोम का अनुष्ठान करेंगे, कारण ज्योतिष्टोम नित्य कर्म होने से उसका परित्याग नहीं किया जा सकता है। एक ही ज्योतिष्टोम दो या अनेक यजमान मिलित होकर अनुष्ठित होने पर उसमें यजमान का द्वित्व या बहुत्व होने से 'प्रतिपत्' विधि होने में कोई बाधा नहीं है।

"पक्षेण" = असामर्थ्य के कारण, "अर्थंकृतस्य" = यजमान का 'द्वित्व अर्थकृत' अर्थात् आर्थिक भाव = अर्थापत्ति के बल से सम्भव होगा। "इति चेत्" = यदि यह कहा जाय ॥ १८ ॥ (आशङ्का)

## न प्रकृतेरेकसंयोगात् ॥ १९॥

**शा० भा०—प्रकृतिर्हि ज्योतिष्टोमः। प्रत्यक्षास्तत्र धर्मा आम्नाताः, न कुतश्चिच्चोदकेन प्राप्यन्ते। किमतो यद्येवम्? प्रत्यक्षश्रुता न शक्या बाधि-**

तुम्। विकृतौ तु चोदकप्राप्ताः सन्त आनुमानिका बाध्येरन्निति। विवक्षितं हि ज्यतिष्टोमे कर्तुरेकत्वं प्रत्यक्षश्रुतं, न सामर्थ्येन बाध्येत। यत्रापि ह्यवश्यकर्तव्यता श्रूयते, अत्राप्येक एव यजमानः श्रूयते। 'वसन्ते ज्योतिषा यजेत' इति। तस्माज्ज्योतिष्टोमादुत्कृष्टव्ये एते[1] प्रतिपदाविति।

अथ कस्मात्पत्न्यभिप्रायमेतन्न भवति। एकस्यां पत्न्या यजमाने च युवं हि स्थः इति, द्वयोर्बहुषु वा पत्नीषु 'एते असृग्रमिन्दवः' इति। यथा क्षौमे वसानावग्निमादधीयाताम् इति क्षौमवसानपरं च वचनमेवमिहापि प्रतिपद्विधानपरम्। उच्यते। असंभवात्तत्र मुख्यस्य, लक्षणाशब्दः। पुंसो वाचकः स्त्रियाम्। इह तु द्वियज्ञे, बहुयज्ञे च संभवति[2] न लक्षणाशब्दो भवितुमर्हति। बहुभ्यो यजमानेभ्य इति। यदप्येतद् द्विवचनं द्वयोर्यजमानयोरिति, अत्रापि य एकशेषः, पुमान्स्त्रिया इति, असावपि लक्षणाशब्द एव। अपि च 'उपास्मै गायता नर' इति प्रतिपदोर्निरवकाशत्वमेव स्यात्। तस्मादुत्कृष्टव्ये एते प्रतिपदाविति सिद्धम्॥ १९॥ पूर्वपक्षनिरासः॥

इति नवमं नैमित्तिकप्रतिपदोरुत्कर्षाधिकरणम्॥ ९॥

त० वा०—प्रकृतिग्रहणं प्रकृतप्रतिपत्त्यर्थम्। औपदेशिकत्वाद्वाऽत्यन्तानतिक्रमार्थम् आतिदेशिकं ह्यर्थवशेन बाध्येतापि। प्रत्यक्षविहितं त्वेतत्काम्ये, नित्ये च, यजेतेत्येकवचनश्रवणात्। न चास्याविवक्षायां कारणमस्ति। यथा च विवक्षा तथा षष्ठे प्रतिपादयिष्यते।

यदप्यशक्तिकृतं ज्ञापनं, तदप्येको यथा शक्नुयादित्युपबन्धादन्याङ्गविषयं विज्ञायते। शक्नोति हि दक्षिणापरिमाणं परित्यज्यैकोऽपि निर्वर्तयितुम्। उत्पत्तिप्रयोगचोदनास्थत्वाच्च संख्यानुग्रह एव युक्तः। तस्मादेकयजमानकत्वान्न प्रकृतौ निमित्तमस्तीत्युत्कृष्यते।

यात्त्विदमेव वचनं सामर्थ्यादाक्षेप्स्यतीति तन्न। अन्यथाऽप्युपपद्यमानत्वात्। यदि ह्येतन्निमित्तमनाक्षिपदनर्थकीभवेत्तत् आक्षिपेत्। कथं चैतदनर्थकं भवेद्यदि प्रकृताविवान्यत्रापि द्वित्वबहुत्वे न स्याताम्। ननु ते अन्यत्र न स्तः। कुलायादौ विद्यमानत्वात्। इह च सिद्धवन्निमित्तत्वेनोपादानाद्वाक्यभेदप्रसङ्गाच्च नार्थादाक्षेपमर्हतः। पत्न्याभिप्राये तु द्वित्वे नित्यत्वान्निमित्तोपादानानर्थक्यम्। बहुभ्य इति च विरूपैकशेषः, स्वरसतः पुंबहुत्वप्रतीतौ सत्यां विधिर्निष्प्रमाणः कल्प्येत। 'क्षौमेवसानौ' इत्यत्र त्वगत्या पत्न्यां द्वितीयशब्दः इष्टः। न हि द्वियज्ञवद् द्विपुरुषकर्माधानं क्वचिद्विहितम्। एकद्विपत्नीकप्रयोगावरोधाच्च

---

१. ब० एवैते। २. ब्र० संभवात्।

नित्यायाः प्रतिपद् आनर्थक्यं भवेत्। विषमशिष्टविकल्पो वाऽभ्युपगम्येत तस्मादप्युत्कृष्यते।

यत्तु क्रतुसम्बन्धो नाभिहित इति। नैष दोषः प्रतिपच्छब्दादेव क्रतुगामित्वप्रतीतौ सत्यां द्वित्वादिना विशेषप्रतिपत्तिसिद्धेः। यजमानशब्दो वाऽन्यथानुपपत्त्या यज्ञमुपस्थापयिष्यति। तस्माद्व्यतिरिक्तसंयोगे सत्यस्ति प्रकरणविरोधः तत्र च श्रुतेर्बलीयस्त्वम् ॥ १९ ॥

इति नवमं नैमित्तिकप्रतिपदोरुत्कर्षाधिकरणम् ॥ ९ ॥

न्या० सु०— प्रकृतिशब्दं स्वयं तावत्प्रक्रियतइतिकर्मव्युत्पत्त्या प्रकृतवाचित्वेनाऽसंयोगात्तु मुख्यस्येति मुख्यशब्दवत् ज्योतिष्टोमोक्त्यर्थतया व्याचष्टे—**प्रकृतीति**। यथाभाष्यं व्याचष्टे—**औपदेशिकत्वाद्वेति**। आतिदेशिकं सदेकत्वं प्रयोगाख्यस्यार्थस्यैकेन कर्त्तुमशक्यत्वात्तद्वशेन कपालवद् बाध्येत। द्विविधेऽपि तु ज्योतिष्टोमप्रयोगे तस्यैकवचनश्रुत्या प्रत्यक्षविहितत्वान्नार्थवशेन बाधो युक्त इत्यर्थः। 'विवक्षितं हीति भाष्यमविवक्षाशङ्कानिरासार्थत्वेन व्याचष्टे—**न चेति**।

पष्ठाद्यन्यानेन पुरुषस्य प्रधानतयोद्देश्यत्वेनैकत्वस्य पुंस्त्ववदुद्देश्यविशेषणत्वमविवक्षाकारणमस्तीत्याशङ्क्य, प्राधान्यस्य भावनानिष्पादकत्वाख्यगुणत्वान्यथानुपपत्तिकल्प्यत्वेन गुणत्वएव शास्त्रव्यापारादाख्यातोक्तस्यैकत्वस्य भावनाक्षिप्तगुणभूतोपादीयमानकर्त्तृविशेषणत्वाद्विवक्षोपपादयिष्यतइत्याह—**यथा चेति**। यत्रापि हीति भाष्यमेकत्वस्याशक्तिकृताङ्गत्यागन्यायविषयत्वाभावोक्त्यर्थत्वेन व्याचष्टे—**यदपीति**। भावनासंख्ययोरेकप्रत्ययवाचत्वाद्भावनाप्रतीतिकालएव संख्याप्रतीतेः, तदा च भावनाक्षेपमस्य कर्त्तुरप्रतीतत्वेन विशेषणत्वायोगाद्धात्वर्थेन तु निष्पाद्यत्वाद्यथाकथंचिन्निष्पादकाक्षेपेऽप्यक्रियात्वेन स्वतन्त्रनिष्पादककर्तृरूपाक्षेपायोगाद्यावदेवेह धात्वर्थः प्रतीतः तावदेव कापि भावना कर्त्तारं कञ्चिद्भविष्यतीत्यवधार्यत इति कर्त्रधिकरणवार्त्तिके च धात्वर्थेन स्वतन्त्रनिष्पादककर्त्राक्षेपस्य वक्ष्यमाणस्य प्रौढिमात्रत्वात् बहुत्त्वेकशब्दानां संख्यामात्रस्य वाच्यत्वान्बाख्यानमित्येवं परत्वात्प्रथमप्रतीतत्वेन संख्याया एव विशेषणत्वावगतेर्यजेतेत्येकवचनादेकत्वविशिष्टस्यैव कर्तृत्वप्रतीतेरेकत्वाभावे कर्त्तृत्वाभावेनाधिकाराभावान्नैकत्वस्याशक्तिकृताङ्गत्यागन्यायविषयता युक्तेत्याशयः। यदि च्यान्याङ्गत्यागेऽप्येकस्या शक्तिः स्यात्ततो गुणलोपे च मुख्यस्य [क्रिया स्यादि]ति न्यायात्प्रधानानुरोधेन गुणभूतैकत्वत्यागः शङ्क्येत, न त्वेतदस्तीत्याह—**शक्नोति हीति**। कर्त्तृविशेषणत्वाभ्युपगमेऽप्येकत्वस्य त्यागो न युक्त इति प्रौढिं दर्शयितुमाह—**उत्पत्तीति**। सोमेन यजेतेत्युत्पत्तिचोदनास्थत्वेनैकत्वस्य कर्मरूपत्वावधारणात्तत्त्यागे कर्मण एवाननुष्ठितत्वापत्तेरुत्पत्तिकाले च बहुदक्षिणत्वाद्येकाशक्तिहेत्वनवगमेनानुपसञ्जातविरोधावस्थायां श्रुतत्वा'द्वसन्ते वसन्ते ज्योतिषा यजेते'ति च प्रयोगचोदनास्थत्वेनानुष्ठानप्रत्ययप्रत्यासन्नतया बलवत्त्वादित्याशयः। तस्मादिति भाष्यं सूत्रार्थोपसंहा-

रार्थत्वेन व्याचष्टे—**तस्मादिति**। स्वयं व्याख्याते पक्षेणेतिशङ्कासूत्रार्थे विकृतौ क्व चिद्द्वित्वबहुत्वाभ्यामपि संयोगासद्भावेनार्थक्षेपायोगोक्त्यर्थत्वेन प्रकृतेरेवैकत्वसंयोगनियमादित्येवं व्याख्यातुमाह—**यत्त्विति**। प्रतिपद्विशेषनिमित्तो यजमानसंख्याविशेषः यजमानसंख्याविशेषनिमित्तश्च प्रतिपद्विशेष इत्यन्योन्याश्रयापत्तेः प्रतिपद्विशेषनिमित्तद्विबहुयजमानकत्वश्रुतिकल्पनायोगात्प्रतिपद्विशेशानपेक्षश्रुतिकल्पने चैकत्वचोदनाविरोधापरिहाराद्यजमानसंख्याविशेषविशिष्टप्रतिपद्विशेषविकल्पनपूर्वं तदन्यथानुपपत्त्या विशेषणभूतसंख्याविशेषविधिं कल्पयित्वा, संख्यान्तरपक्षे प्रतिपद्विशेषविध्यभावात् संख्याविशेषस्यार्थान्निमित्तत्वं वाच्यम्। कुलायादौ तु संख्याविशेषप्राप्तेर्गौरवलक्षणवाक्यभेदापत्तेश्च न विशिष्टविधिः सम्भवतीत्याशयः।

अथेत्यादिभाष्येण वसनाविति द्विवचनवत् ज्योतिष्टोमेऽपि पत्न्याशयं द्विवचनं, बहुवचनं वा भविष्यतीत्याशङ्क्य, वैषम्योक्त्यर्थमुच्यतइत्यादिभाष्यं व्याख्यास्यस्स्वयं तावद्धर्म्मप्रजासम्पन्नेदारेषु नान्यं कुर्वीतेति दारान्तरनिषेधेनैकपत्नीकत्वनियमात्पत्न्याशयस्य द्वित्वस्य नित्यत्वेन निमित्तत्वं न सम्भवतीति परिहारमाह—**पत्नीति**। व्याचष्टे—**बहुभ्य इति**। बहुशब्दस्यैकशेषत्वाभावान्मध्यप्रतीकेन बहुत्वयुक्तं वाक्यं गृहीत्वा तुल्यन्यायत्वाच्च चकारेण द्वित्वयुक्तं वाक्यमन्वाचित्यास्मिन्वाक्यद्वये यो यजमानशब्दः, स 'पुमान् स्त्रिये'ति लक्षणाद्विरूपैकशेषः कल्प्येत। स च पुंबहुत्वस्य, पुंद्वित्वस्य वा सत्राहीनेषु विहितस्य द्विबहुवचनाभ्यां स्वरसात्प्रतीतेर्निष्प्रमाणक इत्येवं योज्यम्। निमित्तोपादानानर्थक्यदोषोक्तिप्रसङ्गेनेह त्विति भाष्यावयवं व्याख्याया सम्भवादिति भाष्यावयवं व्याचष्टे—**क्षौमे इति**। ब्राह्मणोऽग्नीनादधीतेत्युत्पत्तिशिष्टैकत्वविरोधिपुन्द्वित्वविध्ययोगात् क्षौमाख्यगुणविधानार्थत्वेन च वाक्यास्यार्थवत्त्वोपपत्तेः पुन्द्वित्वाप्राप्तिमगतिहेतुं सूचयितुं गुणस्य तु विधानत्वात्पत्न्यां द्वितीयशब्दः प्रयुक्तः क्षौमवाक्ये पुन्द्वित्वाविधानेऽप्यन्यत्र क्व चिद्विधिर्भविष्यतीत्याशङ्कानिरासार्थम्—**न हीत्युक्तम्**। अपि चेतिभाष्यं व्याचष्टे—**एकेति**। विकल्पेनार्थवत्वमाशङ्क्य नित्यनैमित्तिकत्वेन विषमशिष्टत्वाद्विकल्पायोगोऽभिहितः।

तस्मादिति सिद्धान्तोपसंहारभाष्ये तस्मादुत्क्रष्टव्ये एवेति सिद्धान्तोपसंहारभाष्येण गतार्थमाशङ्क्य अपिशब्देन युक्त्यन्तरोपसंहारार्थत्वं सूचयन् व्याचष्टे—**तस्मादपीति**। न चाहीनवदप्रकृतयज्ञसम्बन्धोऽस्तीत्यादिवार्त्तिकेन क्रत्वन्तरान्वयावेदकप्रमाणाभावाद्यजमानद्वित्वबहुत्वस्वरूपान्वये चानर्थक्यापत्तेरुत्कर्षायोगमुक्तमनुभाषणपूर्वं द्वेधा परिहरति—**यत्त्विति**। ज्योतिष्टोमस्य प्रतिपन्निमित्तभूतयजमानद्वित्वबहुत्वसंयोगाभावात्प्रतिपदोरुत्कर्षेऽपि क्रत्वन्तराङ्गत्वे किं प्रमाणमित्याशङ्क्य, द्विवचनान्तयजमानशब्दोपस्थापितस्य द्वियजमानकस्य यज्ञस्याहीनवच्छष्ठ्या बहुवचनान्तोपस्थापितस्य च बहुयजमानकस्य तादर्थ्यचतुर्थ्याप्राधान्याभिधानाच्छ्रुतिं प्रमाणं सूचयन्नधिकरणार्थमुपसंहरति—**तस्मादिति** ॥ १९ ॥

इति नवमं नैमित्तिकप्रतिपदोरुत्कर्षाधिकरणम्।

भा० प्र०—पूर्वकथित आशङ्का के उत्तर में सिद्धान्ती का कहना है कि "न" उक्त आशङ्का सङ्गत नहीं है, कारण "प्रकृतेः एकसंयोगात्" ज्योतिष्टोम प्रकृतिभूत याग है, इससे सभी वचन प्रत्यक्ष वेदवचन के द्वारा उपदिष्ट होते हैं, इसमें कोई धर्म भी अतिदिष्ट अर्थात् अतिदेश विधि के द्वारा प्राप्त नहीं होता है, अतः इसमें जो धर्म उपदिष्ट होता है, उसको अन्यथा नहीं किया जा सकता है। इस स्थल में "वसन्ते वसन्ते ज्योतिषा यजेत" इस विधिवाक्य में "यजेत" इस पद में यज् के उत्तर विहित 'इत' प्रत्ययरूप आख्यात के द्वारा एकत्व अर्थात् एक पदश्रुति याग का अङ्ग है।

आशय यह है कि जो शब्द अङ्गत्व के बोध करने के लिए किसी की भी अपेक्षा नहीं रखता है—वही श्रुति है। विधात्री, अभिधात्री और विनियोक्त्री के भेद से श्रुति तीन प्रकार की है। लिङ्, लेट्, तव्य आदि को विधात्री श्रुति कहा जाता है। पद के प्रकृत्यंश को अभिधात्री श्रुति कहा जाता है, जैसे 'व्रीहिभिः', 'एकः' 'द्वौ' इत्यादि स्थल का व्रीहि, एक, दो आदि प्रकृत्यंश के द्वारा एकत्व का बोध होता है और जिस शब्द के सुनने मात्र से विनियोज्य = विनियोजकतारूप सम्बन्ध प्राप्त होता है, उसको विनियोक्त्री श्रुति कहा जाता है। विनियोक्त्री श्रुति विभक्तिस्वरूपा, एकाभिधानस्वरूपा या समानाभिधानस्वरूपा, एकपदरूपा, या समानपदरूपा इस तरह तीन प्रकार की है। जैसे "व्रीहिभिर्यजेत" इस वाक्य में "व्रीहिभिः" इसकी तृतीया विभक्ति विभक्तिरूपा श्रुति का उदाहरण है। इस स्थल में बहुवचन तृतीया विभक्ति के द्वारा सभी व्रीहियों की यागाङ्गता प्रतीत होती है। इसी प्रकार द्वितीया, सप्तमी भी इसका उदाहरण है। "पशुना यजेत" यह कहने पर पशुगत एकत्व और पुंस्त्व साथ ही साथ विभक्ति के प्रभाव से बोधित होता है, इससे पशुगत एकत्व एवं पुंस्त्व याग का अङ्ग है—यह बोधित होता है—इसको एकाभिधानरूपा या समानाभिधानरूपा श्रुति कहा जाता है। इसी प्रकार 'यजेत' कहने पर इत प्रत्ययवाच्य भावना का एकत्व आख्यातगत एकवचन के द्वारा साथ ही साथ बोधित होता है—यह भी समानाभिधान श्रुति का दृष्टान्त है। इसीलिये "यजेत" कहने पर एककृतिसाध्य याग की ही अवगति होती है। इसी तरह "यजेत" पद के आख्यात के एकत्व के द्वारा शब्दशक्तिबल से कर्ता का भी एकत्व प्रतीत होता है। अतः 'यजेत' पद का अर्थ एक कर्तृक याग होता है—यह समानपदरूपा श्रुति का या एकपदरूपा श्रुति का उदाहरण है।

एकपद श्रुति के अनुसार 'आक्षेपलभ्य' कर्ता उसका विशेषण होता है। फलस्वरूप 'यजेत' इसका अर्थ 'एकपुरुषकर्तृक' अर्थात् एकपुरुष जिसका कर्ता है, उस याग से इष्ट = अभिलषित स्वर्गादि भावित = उत्पादित करे। अतः एतादृश प्रकृतभूत याग स्थल में असामर्थ्यवश एक से अधिक कर्ता की कल्पना नहीं हो सकती है, किन्तु विकृतिस्थल में अर्थात् जहाँ अतिदेश विधि के द्वारा धर्म की प्राप्ति होती है, वहाँ सामर्थ्याभाव के कारण अर्थापत्ति के बल से अन्य धर्म कल्पित हो सकता है, कारण, वह प्रत्यक्ष वचन

से विहित नहीं है, अतः एकपद श्रुतिरूप प्रत्यक्ष श्रुति के द्वारा ज्योतिष्टोम के कर्ता के एकत्व का बोध न होने से आनुमानिक श्रुति के अनुसार कर्ता का द्वित्व या बहुत्व का बोध हो सकता है, क्योंकि, अमानुषिक श्रुति की अपेक्षा प्रत्यक्ष श्रुति प्रबल है, अतएव इस स्थल में द्वित्व एवं बहु शब्दरूप अभिधात्री श्रुति के द्वारा प्रकरण का बाध होने से 'प्रतिपत्' का उत्कर्ष करके कुलायादि यज्ञ में अनुष्ठित होगा।

"न" = ऐसा नहीं होगा, "प्रकृतेः एक संयोगात्"—क्योंकि प्रकृति का अर्थात् ज्योतिष्टोम का एक संयोग अर्थात् एक कर्ता के साथ सम्बन्ध रहता है।

(न) 'न' पद पूर्वपक्ष की व्यावृत्ति के लिये है। द्वित्व बहुत्व युक्त यजमानों से सम्बद्ध प्रतिपदों का ज्योतिष्टोम से उत्कर्ष नहीं करना चाहिये, ऐसा नहीं है। (प्रकृतेः) ज्योतिष्टोम प्रकृति का (एकसंयोगात्) एक यजमान के साथ संयोग होने से। 'वसन्ते-वसन्ते ज्योतिषा यजेत' इस विधि वाक्य में 'यजेत्' एकवचन ही श्रुत है।

सूत्र में 'प्रकृतेः' पद के पाठ का प्रयोजन यह है कि ज्योतिष्टोम = अग्निष्टोम अन्य सब सोमयागों की प्रकृतिभूत है[1]। प्रकृति याग में सब धर्मों का यथावत् उपदेश होता है। अतः उसमें किसी को बाध सकते, अर्थात् यथाश्रुत ही कर्म करना होता है। विकृति यागों में तो 'प्रकृतिवद् विकृतिः कर्तव्या' नियम से प्राप्त हुए अङ्गों में से किसी का बाध भी होता है। कहाँ किसका बाध होता है और क्यों होता है, इसकी विवेचना १२वें अध्याय में करेंगे।

ज्योतिष्टोम प्रकृति है, क्योंकि यहाँ [सब] धर्म प्रत्यक्ष पढ़े हैं। कहीं से चोदक (= अतिदेश वचन) से प्राप्त नहीं कराये जाते हैं। यदि ऐसा (= चोदक से धर्म प्राप्त नहीं होता) है, तो इस से क्या होता है ? प्रत्यक्ष श्रुत धर्म बाधे नहीं जा सकते। विकृति में तो चोदक वचन से प्राप्त हुए आनुमानिक बाधित हो। [इस कारण] ज्योतिष्टोम में कर्ता का विवक्षित तथा प्रत्यक्ष सुना हुआ एकत्व सामर्थ्य से बाधित नहीं होता है। जहाँ पर भी अवश्य कर्त्तव्यता (= नित्यता) सुनी जाती है, वहाँ पर भी एक ही यजमान सुना जाता है—वसन्ते-वसन्ते ज्योतिषा यजेत (= प्रति वसन्त ज्योतिष्टोम से यजन करे) इसलिये [द्वि और बहु से सम्बद्ध] प्रतिपदों को ज्योतिष्टोम से उत्कृष्ट करना चाहिये।

प्रकृतिर्हि ज्योतिष्टोमः—इसका तात्पर्य सूत्रार्थ के नीचे 'विशेष' शीर्षक में देखें। अवश्यकर्तव्यता—अर्थात् नित्यता।

---

१. इसका तात्पर्य यह है कि अग्निष्टोम में जितना सोम सम्बन्धी कर्म है वह वहाँ सम्पूर्ण पढ़ा है। अतः वह सोमयागों की प्रकृति है। परन्तु सोमयाग में दीक्षणीयादि अनेक इष्टियाँ भी विहित हैं। उनमें दर्शपूर्णमास से धर्मों का अतिदेश होता है। इस प्रकार अग्निष्टोम प्रकृति विकृति उभयात्मक है।

(आक्षेप) अच्छा तो पत्नी के अभिप्राय से यह (=द्वित्व वा बहुत्व) क्यों नहीं होता है ? एक पत्नी और यजमान होते पर युवं हि स्थः प्रतिपद होते, दो या बहुत पत्नियाँ होने पर दृते असृग्रमिन्दवः प्रतिपद हो। जैसे—क्षौमे वसानावग्निमादधीयाताम् (क्षुमा = अतसी के रेशे से निर्मित अथवा रेशमी वस्त्र धारण किये हुए दोनों अग्नि का आधान करें) यह क्षौम वस्त्रधारण परक वचन है, इसी प्रकार यहाँ भी प्रतिपद् विधान परक वचन है। (समाधान) वहाँ (=क्षौमेवसानौ में) मुख्य [दो यजमान] के सम्भव न होने से स्त्री में पुरुष का वाचक लक्षणा (=गौण) शब्द है। यहाँ (द्वि बहु यजमान सम्बद्ध प्रतिपद् वचन मे) तो [मुख्य का वाचक शब्द] दो वा बहुतों के यज्ञ में सम्भव है। इस कारण बहुत यजमानों के लिये लक्षणा शब्द नहीं हो सकता और जो यह (द्वयोर्यजमानयाः प्रतिपदम्) द्विवचन दो यजमानों के विषय में है, यहाँ भी [पत्नी सहित यजमान के द्वित्व में] पुमान् स्त्रिया (अष्टा० १।२।६७) से एकशेष है। यह भी लक्षणा शब्द है। और भो [नित्यरूप से विहित] उपास्मै गायता नरः इस प्रतिपद् का निरवकाशत्व ही हो जावे। इस कारण इन (=द्वि बहु सम्बद्ध) प्रतिपदों का उत्कर्ष करना चाहिये, यह सिद्ध होता है।

असम्भवात् तत्र मुख्यास्य—सम प्रधान दो यजमानों का अग्नि के आधान में विधान न होने से क्षौमे वसानौ में स्त्री को कहने वाला 'वसानौ' पुंलिङ्ग शब्द लाक्षणिक है। यहाँ पुमान् स्त्रिया (अष्टा० १।२।६७) से वसानश्च वसाना च = वसानौ एकशेष है, और यह लक्षणा = गौण शब्द है, यह भाष्यकार अनुपद कहेंगे। बहुभ्यो यजमानेभ्यः—इसका भाव यह है कि दो वा बहु पत्नी पक्ष में द्वे च एकश्च = बहवः अथवा तिस्रश्च एकश्च = बहवः इस प्रकार विरूपों का एकशेष मानना होगा। इससे बहुभ्यो यजमानेभ्यः पक्ष में लक्षणा शब्द सम्भव नहीं है। यह भट्ट कुमारिल के मतानुसार है। प्रकृत भाष्य मत में तो बहुत यजमान पक्ष में क्षौमे वसानौ यह लक्षणा शब्द भी सम्भव नहीं है। उपास्मै...निरवकाशत्वमेव—इसका भाव यह है कि पत्नी के अभिप्राय से द्वित्व की कल्पना करने पर नित्य विहित उपास्मै गायता नरः प्रतिपद् को कहीं अवकाश ही नहीं मिलेगा क्योंकि सम्पूर्ण यज्ञ कर्म पत्नी के सहित ही किया जाता है। अतः क्षौमे वसानौ में तो अगत्या पत्नी के अभिप्राय से एकशेषरूप लक्षणा शब्द स्वीकार करना पड़ता है॥ १९॥

इति नवम नैमित्तिक प्रतिपत् द्वय का उत्कर्षाधिकरण।

### अथ दशमं जाघन्यधिकरणम्

## [१०] जघनी चैकदेशत्वात् ॥२०॥ पू०

**शा० भा०—दर्शपूर्णमासयोः श्रूयते 'जाघन्या पत्नीः संयाजयन्ति' श० ब्रा० ३.६.६-१ इति। तत्र संशयः। किमेतद्विधानं दर्शपूर्णमासयोः, उत पशावि ति।**

**कथं दर्शपूर्णमासयोः ? कथं च पशाविति ? यदि जाघन्यां पत्नीसंयाजा विधीयन्ते, तत उत्कर्षः । अथ पत्नीसंयाजेषु जाघनी विधीयते, ततो दर्शपूर्णमासयोरेव । किं प्राप्तम् ? उत्कर्षः । कुत एतदुत्कृष्यते ? जाघन्यां पत्नीसंयाजा विधीयन्ते इति । कथम् ? शब्दात् पत्नीसंयाजानां विधानं, वाक्येन जाघन्याः । शब्दश्च बलवान्, न वाक्यम् ।**

**ननु पत्नीसंयाजा विहिता एव । सत्यं विहिताः । जाघन्यामिदानीं पुनर्विधीयन्ते । सा तत्संबद्धा कर्तव्येत्युच्यते । एवं सति दर्शपूर्णमासयोः पत्नीसंयाजा विनाऽपि जाघन्या न विगुणाः । जाघनी तु तत्र प्रतिपाद्यते । तस्माद् यत्र जाघनी प्रयोजनवती, तत्र तस्याः प्रतिपत्तिः । पशौ च सा, न दर्शपूर्णमासयोः, एकदेशश्च जाघनी प्रतिपाद्यमाना न पशुं प्रयोक्ष्यते । तस्मादस्य विधानस्योत्कर्ष इति ॥ २० ॥ पूर्वपक्षः ॥**

त० वा०—उत्कर्षबुद्धेरपवादः प्रस्तूयते । 'जाघन्या पत्नीः संयाजयन्ति' इति गुणप्रधानत्ववचनव्यक्तिद्वयात्सन्देहः । यदि जाघनीं संस्कार्यत्वेनोद्दिश्य पत्नीसंयाजाः संस्कारका विधीयन्ते ततः संस्कार्यस्य प्राधान्यात्स्वस्थानापरित्यागे सति यत्र जाघनी, तत्र पत्नीसंयाजा, न यत्र ते तत्रासौ । सा च लोकस्था निष्प्रयोजनत्वान्न संस्क्रियत इत्यग्नीषोमीयगता कृतार्थत्वात्संस्कर्तव्या । यदि तु पत्नीसंयाजोद्देशेन जाघनी विधीयते, ततः प्रकृतानुवादबुद्ध्यनपायाद्दर्शपूर्णमासयोरेव जाघनीविधानम् । किं प्राप्तम् ? आरादुपकारकत्वात्सामवायिकत्वस्याभ्यर्हितत्वादन्यत्र धात्वर्थविधानाद्विधिप्रत्यासत्तेरेकदेशद्रव्याणां चाप्रयोजकत्वात्, तथा सति च परप्रयुक्तकृतार्थग्रहणेन प्रतिपत्तिलक्षणापत्तेरग्नीषोमीयजाघनीसंस्कारविधानादुत्कर्ष इति सा तत्संबद्धा कर्तव्येत्युच्यत इति च्छेदः । परं च कर्मकथनमेवं सतीत्यादि । यदि पुनः उच्यते एवं सतीति योज्यते ततः परिचोदनाच्छायापत्तेः । न च तद्युक्तम्, उत्तरानभिधानात् । तस्मादात्मवचनत्वेनैव योज्यम् ।

नन्वेवं सति प्रतिपदादिवदेनोत्कर्षात्प्रकृतौ पत्नीसंयाजानामकरणं प्राप्नोति । प्राप्नुयादेवम् । यदि पशौ पत्नीसंयाजा न स्युः । ते त्वतिदेशप्राप्तास्तत्र विद्यमाना एव केवलं जाघनीसम्बन्धित्वेन विधीयन्ते नैव तर्ह्युत्कर्ष इति वक्तव्यम् । सत्यम् । न कस्यचित्पदार्थस्योत्कर्षः । इदमेव तु वाक्यं विकृतौ कार्यं कुर्वदुत्कृष्यत इत्युच्यते ॥ २० ॥

**॥ अथ दशमं जाघन्याधिकरणम् ॥ १० ॥**

न्या० सु०—जाघनीपत्नीसंयाजान्वयविधिर्दर्शपूर्णमासयोः, पशौ वेति चिन्तायाः प्रकरणपूर्वैः सविरोधाविरोधचिन्तात्वाभावेनासङ्गतिमाशङ्क्य निमित्तत्वेनोद्देशभूतयोर्द्वित्वबहुत्वयोः

प्रकृतकर्मसंयोगात्तत्संयुक्तानां पत्नीसंयाजानामप्युत्कर्षं प्रसक्तमपवदितुं चिन्तैषेति विरोधाविरोधचिन्ताफलभूतोत्कर्षानुत्कर्षचिन्तात्वात्सङ्गतिमाह—**उत्कर्षेति**। जाघन्यास्तृतीययाङ्गत्वोक्तेः संस्कार्यत्वायोगेनोत्कर्षकत्वायोगादुत्कर्षशङ्कानुपपत्तेरधिकरणानारम्भमाशङ्क्य, पश्ववयवत्वेन पशुं विनोपादानाशक्तेरवयवत्वेनैव चोत्तरार्द्धादिवदवयव्यप्रयोजकत्वादङ्गत्वानुपपत्तेः प्रयाजशेषवत् तृतीयाभङ्गेन संस्कार्यत्वं न्यायाभासात्पुरुषबुद्धिप्रभवाच्छङ्क्यतइति परिहारसूचनार्था बुद्ध्युक्तिः क्रियतइति वक्तुं प्रयुक्तस्य प्रत्ययस्यानुग्रहार्थं कस्मिंश्चिद्धातौ प्रयोज्ये नित्याया प्रतिपदः प्रकृतौ विहितायाः कुलायादिष्वप्यतिदेशात्प्राप्तिं प्रसङ्गाद्वारयितुं प्रतिपदन्तरविधिर्युक्तः। जाघन्यास्तु प्रकृतावप्रस्तुतत्वान्न युक्तः संस्कारविधिरित्याशङ्क्य, पत्नीसंयाजानां प्रकृताचारादुपकारित्वेन विहितानां प्रसङ्गात्पशावतिदेशप्राप्तानां जाघनीसंस्कारार्थत्वविधेर्युक्तत्वसूचनार्थं प्रसङ्गवाची प्रस्तौतिः प्रयुक्तः। प्रश्नपूर्वं सन्देहहेतूक्त्यर्थं कथमित्यादिभाष्यं व्याचष्टे—**जाघन्येति**। कीदृग्वचनव्यक्तिद्वयमित्यपेक्षिते पत्नीसंयाजानां प्राधान्यमिति द्वितीयेतिविवरणार्थं यदीत्याद्युक्तम्। सर्वपशुप्रकृतित्वादग्नीषोमीयगतेत्युक्तम्। संस्कार्यत्वोपपादनायोत्तराङ्गत्वात्पत्निसंयाजानां तत्काले पशुकार्यस्य प्रधानस्य कृतत्वात् तदवयवभूताया जाघन्याः कृतार्थतोक्ता। नेह पत्नीसंयाजानामुत्कर्षानुत्कर्षचिन्ता किन्त्वस्य वाक्यस्येत्येतद्विधानमिति भाष्यस्थविधानशब्देनोक्तमिति सूचनार्था विधानोक्तिः।

किं तावदित्यादिभाष्योक्तं पूर्वपक्षं सङ्गृह्णाति—**किमिति**। अचोदनादित्यस्य पूर्वाधिकरणाद्यसूत्रस्थस्य हेतोर्जाघन्याः पशुरहितयोर्दर्शपूर्णमासयोश्चोदयितुमशक्यत्वादित्येवमर्थाङ्गीकारेणोत्कर्षहेतुतयानुपक्तस्य व्याख्यार्थेन जाघन्यामिति भाष्येण प्रतिज्ञाते सन्निपत्योपकारित्वे कथमिति प्रश्नाक्षिप्तयोर्हेतूक्त्यर्थमारादुपकारित्वमपेक्ष्य सन्निपत्योपकारित्वस्य पशुपुरोडाशाधिकरणन्यायेनाभ्यर्हितत्वादित्युक्तम्। शब्दादितिभाष्ये शब्दोक्तेरेकपदोपादानलक्षणश्रुतिवाचित्वसूचनायान्यत्र चेत्युक्तम्। सौत्रं हेतुमेकदेशश्चेति भाष्यव्याख्यातं स्पष्टयितुमेकदेशेत्युक्ते विद्यमानैकदेशिसंयोगस्यैकदेशद्रव्याप्रयोजकत्वहेतुतया वक्ष्यमाणस्येहैकदेश्यभावेनाभावादेकदेशोः प्रयोक्ष्यतइत्याशङ्क्य, परप्रयुक्तश्रुतैकदेश्येकदेशग्रहणे सम्भवत्यन्यप्रयोजकता न युक्तेति सूचनार्थम्—**तथा सति चेत्युक्तम्**। अपकृष्येतेत्यहीनाधिकरणसिद्धान्तसूत्रावयवस्य द्वित्वबहुत्वयुक्तं चेति चकारानुकृष्टस्येहापि जाघनी चेति चकारेणानुकृष्य पूर्वपक्षप्रतिज्ञार्थत्वेन व्याख्यार्थं भाष्यस्थमुत्कर्षपदं व्याख्यातुमुत्कर्षोक्तिः।

नन्वित्याशङ्कायाः परिहारे सत्यमित्यादावुच्यतेशब्दस्योत्तरग्रन्थशेषत्वभ्रमं निवर्त्तयितुमाह—**सेति**। एवं सतीति भाष्यं पत्नीसंयाजानां सन्निपत्योपकारित्वोक्तिप्रयोजनोक्त्यर्थत्वेन व्याचष्टे—**परं चेति**। कर्मानुष्ठानं कथ्यतेनेनेति व्युत्पत्त्यानुष्ठानकथनार्थं परं भाष्यमित्यर्थः। कस्मान्नोत्तरग्रन्थशेषतोच्यते शब्दस्येष्यत इत्याशङ्क्याह—**यदि पुनरिति**। विहितत्वाभ्युपगमेन परिहारे दत्ते पत्नीसंयाजान्यजतीति वाक्यान्तरेण विहितत्वे सति दर्शपूर्णमासयोर्जाघन्यभावेऽपि पत्नीसंयाजानुष्ठानापत्तेः पूर्वपक्षीष्टोत्कर्षासिद्धिप्रसङ्गादनिष्टापत्तिपरिचोदनाच्छायापतनयुक्तमेवेत्याशङ्क्योत्तरेत्युक्तम्। पशौ जाघनीप्रतिपादनार्थत्वेऽपि

दर्शपूर्णमासयोराराादुपकारित्वेनानुष्ठानविरोधाज्जाघनी त्वित्यादेर्नोत्तरत्वं सम्भवतित्याशयः। अतः परिहारवाचिवचनत्वेनैवैवं सतीत्यादिग्रन्थजातं जाघनीवाक्येन पत्नीसंयाजसंस्कृता जाघनी कार्येति वचने सति वाक्यान्तराद्दर्शपूर्णमासयोः पत्नीसंयाजानुष्ठानेऽपि जाघनीवाक्यात्पत्नीसंयाजेषु जाघनी प्रतिपाद्यते। तस्मात्पशौ हृदयादिनिष्पत्तिप्रयोजनत्वेन विशस्यमानं पशुमनुनिष्पन्नाया जाघन्याः प्रतिपत्तिरित्येवं योज्यमित्युपसंहरति—**तस्मादिति**।

जाघनीवाक्यस्य जाघनीसंस्कारार्थतया पत्नीसंयाजविधायित्वे सति क्रत्वन्वयनिरपेक्षाणां जाघनीस्वरूपान्वये नैष्फल्यापत्तेः प्रतिपच्छब्दाक्रतुगामित्वप्रतीतिवदनेनैव वाक्येन जाघनीशब्दात्पश्वाख्यक्रतुगामित्वप्रतीतेरभ्युपगमनीयत्वात्प्रकरणगम्यदर्शपूर्णमासगामित्वबाधापत्त्या तत्राकरणप्राप्तेर्दर्शपूर्णमासयोः पत्नीसंयाजा इति भाष्यं न युज्येतेत्याशङ्कते—**नन्विति**। जाघनीवाक्यं विना पश्वाख्यक्रतुगामित्वासिद्धौ वाक्येन प्रकरणबाधाद्दर्शपूर्णमासयोः पत्नीसंयाजाकरणं प्राप्नुयादतिदेशात्तु तद्गामित्वप्रतीतिसम्भवे वाक्यस्य तत्राव्यापारादतिदेशेन चोपदेशात्मकप्रकरणबाधायोगात्प्रत्युतातिदेशेनात्मलाभार्थं प्रकरणगम्यदर्शपूर्णमासाङ्गत्वापेक्षणात्तत्राकरणाप्राप्तेन भाष्यविरोध इत्याशयेन परिहरति—**प्राप्नुयादिति**। उत्कर्षोक्तिस्तर्हि विरुद्धचेतेत्याशङ्कते—**तेन तर्हीति**। वाक्योत्कर्षोऽत्र विवक्षितः न विधेयोत्कर्ष इति परिहरति—**सत्यमिति**। पाठोत्कर्षशङ्कानिरासार्थं विकृतावित्युक्तम्। जाघन्याः पश्वेकदेशत्वात्पशुं विनोपादानाशक्तेरङ्गत्वेन चोदयितुमशक्यत्वात्पशौ कृतार्थत्वात्प्रतिपाद्यत्वावगतेरुद्देश्यत्वाज्जाघनीवाक्यमपकृष्येतेत्येवं सूत्रं योज्यमित्याशयः॥ २०॥

भा० प्र०—दर्शपूर्णमासप्रकरण में श्रुति में उपदिष्ट है कि "जाघन्या पत्नीः संयाजयन्ति" (आप० श्रौ० ३।८।१०) अर्थात् जाघनी के द्वारा देवपत्नी के उद्देश्य से याग करे। जाघनी पशु को पूंछ को कहते हैं। यह "जाघनो" विधि दर्शपूर्णमास में ही होगी या पशुयाग में भी इसका उत्कर्ष करना होगा—यह संशय है। इस संशय होने का कारण यह है कि यदि जाघनी के उद्देश्य में अर्थात् जाघनी के संस्कार के लिए "पत्नीसंयाज" नामक याग विदित है तो वाक्य के अनुरोध से पशुयाग मे इसका उत्कर्ष करना होगा, यदि "पत्नीसंयाज" नामक याग के उद्देश्य में "जाघनी" रूप द्रव्य विदित होता है, अतः, उत्कर्ष नहीं किया जायेगा।

इस प्रसङ्ग में पूर्वपक्षी का कहना है कि "जाघनी च" पशुयाग में "जाघनी" का उत्कर्ष करना होगा, कारण, "एकदेशत्वात्" जाघनी पशु की पूंछ होने से पशु का एकदेश = अंश हुआ। एकदेशी अर्थात् अंशी = अवयवी के न रहने पर एकदेशरूप अवयव की सत्ता सम्भव नहीं है, पशु ही जाघनो का एकदेशी अर्थात् अवयवी है। किन्तु दर्शपूर्णमास में पशु नहीं है, अतः दर्शपूर्णमास में जाघनी का स्थान न होने से पशुयाग में उसका उत्कर्ष होगा।

"जाघनी च" = जाघनी विषयक विधि का भी (पशुयाग में अपकर्ष होगा) "एकदेशत्वात्" = क्योंकि वह पशु का एकदेश है। यह पूर्वपक्ष है ॥ २० ॥

## चोदना वाऽपूर्वत्वात् ॥२१॥ सि०

शा० भा०—जाघनी वा पत्नीसंयाजानां गुणत्वेन विधीयते। कुतः? अपूर्वत्वात्। अप्राप्ता जाघनी पत्नीसंयाजानां गुणत्वेन। तत्र स्वशब्देन पत्नीसंयाजा विहिता जाघनीसंबन्धस्तेषामविहितः। यत्र न संबन्धो विधीयते, तत्रान्यतरस्यान्यत्र विधनम्। संबन्धो नान्तरीयकः।

यद्वा संबन्धस्य विधानं, नान्तरीयकौ संबन्धिनौ। यत्रोभौ लक्षणत्वेन, तत्र स्वशब्देन संबन्धो विधीयते। तत्र त्वन्यतरो लक्षणत्वेन, तत्रैकं लक्षयित्वाऽन्यतरो विधीयते, लक्षणत्वेन चात्र पत्नीसंयाजाः। कथमवगम्यते? पत्नीसंबन्धान्न सर्वो यागः। कश्चिदेव तु लक्ष्यते, यस्य पत्न्यः साधनत्वेन। अथ कस्मान्न जाघनीं लक्षयित्वा पत्नीसंयाजा विधीयन्ते। नास्यापूर्वस्य यागस्य पत्न्यः शक्यन्ते विधातुम्। जाघन्यां तु लक्ष्यमाणायां यागे सपत्नीके विधीयमाने वाक्यं भिद्येत। अस्ति त्वत्र विहितः सपत्नीको यागो यः पत्नीभिर्लक्ष्यते। तस्माद् यागं लक्षयित्वा जाघनी विधीयते। यत्तु वाक्येन जाघनीविधानं, श्रुत्या यागस्येति। तदिह यागविधानं न संभवतीत्युक्तम्, वाक्यभेदप्रसङ्गात्। तस्माज्जाघनीविधानम्। एवं चेद्दर्शपूर्णमासयोर्विना जाघन्या विगुणः पत्नीसंयाजयागः स्यात्। तस्मादनुत्कर्ष इति ॥ २१ ॥ सिद्धान्तः ॥

त० वा०—न वाऽस्य विधेरुत्कर्ष इति। कुतः?

जाघन्युद्दिश्यमाना स्यात्संस्कार्योत्कर्षकारणम्।
इहोपादीयतेऽङ्गत्वाद्यागेष्वाज्यवदेव सा ॥

सर्वत्रैवंविधे वाक्ये गुणे विधिशक्तिः संचरतीत्युक्तम्। पत्नीसंयाजाश्चानन्तरविहिता मनसि वर्तन्त इति, न विधातुं शक्यन्ते। न चेह स्थितेन पशुगतपत्नीसंयाजानुवादो युक्तः, तद्बुद्ध्यभावात्। न च जाघन्याः। कालादिवदनुपादेयत्वं, येनेमं विधिमाकर्षेत्। संस्कार्यत्वादिति चेत्? न। तृतीयावगतगुणत्वातिक्रमप्रमाणाभावात्। यदि च कृतार्थां जाघनीं प्रस्तुत्यायं विधिः प्रवर्तेत, तथाऽपि तावत्कदाचित्प्रयाजशेषवद् द्वितीयार्थे तृतीयेति व्याख्यायेत। सा त्वपूर्वा विधीयते। तस्मान्नोत्कर्षमर्हति।

न च प्रकरणबद्धत्वादेते पत्नीसंयाजा उत्कर्षं सहन्ते। वाक्यबलीयस्त्वादिति चेत्? तन्न। वाक्यस्याप्येवमादरेधिकृतापेक्षित्वेन प्रकरणाद् दुर्बलतरत्वात्। यदि ह्येतदेव पत्नीसंयाजानामुत्पत्तिवाक्यं भवेत्, ततः प्रकरणादाच्छिन्द्यात्।

एते तु वाक्यन्तरोत्पात्तत्वात्संनिधिवशेन यावता कलिनैतेन वाक्येन संगृह्यन्ते, तावता दर्शपूर्णमासाभ्यामपि शक्या ग्रहीतुम्। न च जाघन्याः फलवत्त्वं विज्ञातं, येनैषां प्रयोजनाकाङ्क्षामपनयेत्। अतो यावदसौ किमर्थेत्यालोच्यते, तावत्फलवद्दर्शपूर्णमासप्रसूतेन कथंभावेनाङ्गत्वमापादितम्। न चेहापूर्वयागविधानं, यजिमात्रत्वेनाश्रवणात्। पत्नीसंबद्धयागश्रवणं ह्येतत्। तत्र यदि जाघन्युद्देशेन च कर्म विधीयते, पत्न्यश्चास्य विधीयन्ते ततोऽनेकार्थविधानात् 'ऐकशब्द्ये परार्थवत्' इति वैरूप्यलक्षणो वाक्यभेदः स्यात्। अल्पार्थविधिसम्भवाच्च न विशिष्टविधानेन परिहारो घटते। तस्माद्विशिष्टं यागमुद्दिश्य द्रव्यं विधीयते।

नन्वेमपि विशिष्टानुवादात्सुतरां वाक्यं भिद्येत्। नैष दोषः। प्रकरणप्राप्तेः पत्नीशब्दस्यातन्त्रत्वात्। यथैव 'अभिकामं जुहोति' इति सामान्यशब्दोऽप्यधिकारात्प्रयाजविषयो भवति, तथैव यत्संयाजयन्तीत्येतावतैवाधिकृताः पत्नीसंयाजाः प्रत्येष्यन्ते। तस्मादनुत्कर्षः॥ २१॥

न्या० सु०—जाघनी वेति भाष्यं पूर्वाधिकरणाद्यसूत्रस्थानुपक्ता चोदनादितिशब्दोक्ताविधेयत्वनिरासार्थत्वेन वाशब्दव्याख्यार्थतयाभासमानं पूर्वपक्षसूत्रस्थचकारानुकृष्टापकृष्येतेतिशब्दोक्तोत्कर्षप्रतिज्ञानिरासाभावे पूर्वपक्षसिद्धान्तसूत्रयोरन्योन्यासङ्गत्यापत्तेः प्रथमान्तजाघनीशब्दपरेण तु चकारेण पंचम्यन्तभावव्युत्पन्नाचोदनादिति शब्दानुकर्षणमङ्गीकृत्याऽविधेयत्वपूर्वपक्षप्रतिज्ञानुपपत्तेरयुक्तमाशङ्क्य, सौत्रेण वाशब्देनोत्कर्षप्रतिज्ञायां निरस्तायां तद्धेतुत्वेनाभिमतोद्देश्यत्वनिरासार्थत्वेन सौत्रचोदनाशब्दव्याख्यार्थतया व्याख्यातुमाह—नवेति।

जाघनी संस्कार्या सत्युद्दिश्यमानत्वादुत्कर्षिका स्यात्, सा तु तृतीयया पत्नीसंयाजाख्येषु यागेष्वङ्गत्वावगतेः संस्कार्यत्वाभावान्नोद्दिश्यते, किं तूपादीयते। ततश्चेह दर्शपूर्णमासयोरेवैतद्वाक्यं विधानाख्यं कार्यं कुर्वन्नोत्कृष्यतइति श्लोकार्थः। भाष्ये विधेयत्वोक्तेरुपादेयत्वसिद्ध्यर्थत्वसूचनायोपादीयतइत्युक्तम्। पत्नीसंयाजाङ्गत्वेनाज्यस्य विहितत्वाज्जाघनीविध्यानर्थक्यमाशङ्क्य, विकल्पेनार्थवत्वसूचना—याज्यावदित्युक्तम्। विधेयत्वसिद्ध्यर्थत्वेनापूर्वत्वादिति हेतुव्याख्यार्थं कुत इत्यादिभाष्यं स्पष्टत्वादव्याख्याय, पत्नीसंयाजा इति भाष्यं स्वरूपेण विहितानामपि जाघनीसंस्कारार्थत्वेन विधेयत्वोपपत्तेः सत्यं विहिता इत्यादिपूर्वपक्षभाष्येऽभिहितत्वादयुक्तमाशङ्क्य तत्'सन्निधेर्गुणार्थेन पुनः श्रुतिरि'त्यनेनापि न्यायेन जाघन्या विधेयत्वोक्त्यर्थत्वेन व्याख्यातुमाह—सर्वत्रैवेति।

जाघनीवाक्यस्यैवंविधशब्दोक्तप्रत्यभिज्ञायमानधात्वर्थत्वोक्त्यर्थतां भाष्यस्य वक्तुं ततश्चानन्तरविहितत्वान्मनसि विपरिवृत्तेरशक्यः पत्नीसंयाजानां विधिरित्युक्तम्। ततश्चेति चकारार्थः। अन्तरविहितस्यापि स्विष्टकृद्यागस्योत्तरार्द्धसंस्कारार्थत्वेन विधिव-

देशामपि जाघनीसंस्कारार्थत्वेन विधिर्भविष्यतीति, सत्यमित्यादिपूर्वपक्षभाष्योक्तपरिहारनिरासार्थं यद्यपि जाघनीसम्बन्धः पत्नीसंयाजानमविहितः तथापि जाघन्याः प्राप्त्यभावेनोद्देश्यत्वायोगात्सम्बन्धिद्वयोद्देशं च विना सम्बन्धिनोऽपि विधेयत्वापत्त्या पौरवापत्तेः प्रकाशावध्वर्यवे ददातीत्यादिवत्सम्बन्धविधौ तात्पर्यायोगादक्रियात्वेन जाघन्याः स्वातन्त्र्येण विध्ययोगेऽपि पत्नीसंयाजोद्देशेन तत्सम्बन्धं नान्तरीयकमङ्गीकृत्य तस्य एव विधेयता युक्तेति जाघनीसम्बन्ध इत्यादिना लक्षणत्वेन चात्र पत्नीसंयाजा इत्यन्तेन भाष्येणोक्ते, कथं तेषामुद्देश्यतावगम्यत इति कथमिति भाष्येण पृष्ट्वा, पत्नीसंयाजानां जाघन्यन्वये विधेयत्वोपदेयत्वात्पत्न्यन्वये चानुवा'द्यत्वप्राधान्योद्देश्यत्वाद्वैरूप्यापत्तेः विधेयत्वायोगादित्यभिधानार्थं पत्नीसम्बन्धादिभाष्यं दर्शपौर्णमासिकानां पत्नीसंयाजानां जाघन्यन्वयविधेः पूर्वपक्षीष्टत्वात् । तेषां च पत्न्यन्वयस्य प्राप्तत्वेनाभिधेयत्वाद्वैरूप्यानापत्तेरयुक्तमाशङ्क्य, स्वरूपतो प्राप्तानामन्यान्वयविध्ययोगेन जाघन्यन्वयविधेः स्वरूपप्राप्त्यनुवादापेक्षत्वात्पशौ च प्राप्तानां दर्शपूर्णमासप्रकरणस्थेन वाक्येनाप्रत्यभिज्ञायमानत्वेनानुवादायोगादपूर्वस्य यागस्य जाघनीसंस्कारार्थत्वेन विधिः पूर्वपक्षिणां वाच्य इत्यापाद्य, दूषणोक्त्यर्थंतया व्याख्यास्यन्पूर्वपक्षीष्टं पक्षं दूषयितुमाह—**न चेति** ।

पाशुकपत्नीसंयाजानुवादसम्भवाभ्युपगमेऽप्युद्देश्यत्वायोगाज्जाघन्यानोत्कर्षकत्वं सम्भवतीत्याह—**न च जाघन्या इति** । इहोपादीयतइति वार्त्तिकेन पाशुकत्वानपेक्षपत्नीसंयाजान्वये जाघन्याः संस्कार्यत्वे निरस्तेऽपि, पाशुकपत्नीसंयाजान्वये संस्कार्यत्वादुद्देश्यत्वं भविष्यतीत्याशङ्कापूर्वं निरस्यति—**संस्कार्यत्वादिति** । पशौ जाघन्याः कृतार्थत्वमतिक्रमकारणमाशङ्क्य कृतार्थत्वावेदकशेषादिशब्दाभावाशयेन निरस्यति—**यदि चेति** । पूर्वपक्षनिरासमुपसंहरति—**तस्मादिति** । पाशुकत्वानपेक्षपत्नीसंयाजान्वयपक्षे तु पत्नीसंयाजानां प्रकरणगम्यदर्शपूर्णमासाङ्गत्वविरोधापत्तेर्जाघनीसंस्कारार्थत्वायोगान्नोत्कर्षशङ्काप्यस्तीत्याह—**न चेति** । पत्नीसंयाजोक्त्याऽस्मिन्पक्षे पदार्थोत्कर्षः सूचितः । वाक्याज्जाघन्यङ्गत्वावगतेः प्रकरणबाधं शङ्कते—**वाक्येति** । अनुत्पन्नानां, पत्नीसंयाजानां जाघन्यां विनियोक्तुमशक्यत्वा'त्पत्नीसंयाजान्यजतीत्युत्पत्तिवाक्यापेक्षित्वेनार्थविप्रकर्षाद्वाक्यमपीदं न बलीयत इति परिहरति—**नेति** । एतदेव विवृणोति—**यदि हीति** । एवमपि तुल्यबलत्वापत्तेदौर्बल्योक्तिरयुक्तेत्याशङ्क्य, जाघनीफलालोचनाद्विप्रकर्षाधिक्यमाह—**न चेति** । अतः पशौ दर्शपूर्णमासयोर्वा प्राप्तानां पत्नीसंयाजानां जाघनीसंस्कारार्थत्वविध्ययोगादपूर्वस्य यागस्य तादर्थ्यविधिः पूर्वपक्षिणा वाच्य इत्यापाद्य दूषणोक्त्यै पत्नीसम्बन्धादिति भाष्यमित्येवं व्याचष्टे—**न चेहेति** । भाष्ये च पत्नीसम्बन्धादित्यनेन वैरूप्ये सूचिते, सर्वयागेषु सपत्नीकस्यैवाधिकारात्पत्नीकर्तृत्वप्राप्तेः पत्नीशब्दस्य तदनुवादत्वेनाविधायकत्वाद्वैरूप्यानापत्तिमाशङ्क्यानर्थक्यापत्तेर्बहुपत्नीकर्तृकत्वस्य च नित्यमप्राप्तेर्देवपत्नीदेवत्यत्वनिमित्तपत्नीसंयाजनामधेयावयवत्वप्रत्यभिज्ञानाच्च पत्नीशब्दस्य देवताभूतदेवपत्नीवाचित्वावगमेन देवतारूपगुणविधायित्वावगमाद्वैरूप्यस्याऽपरिहार्यत्वसूचनार्थं नात्र यजमानपत्नी-

भिर्यागोऽन्वीयते, येन सर्वयागानां पत्न्यन्वयप्राप्तेः पत्नीशब्दोऽनुवादः स्यात्, किं तु यस्य यागस्य देवपत्न्यो देवतात्वरूपेण साधनत्वेनोच्यन्ते । तासां चापूर्वे यागे प्राप्त्यभावेन विधेयत्वापत्तेरपरिहार्यं वैरूप्यमित्युक्तम् । एतद्भाष्यविवरणार्थत्वेनाथेत्यादिप्रश्नोत्तरभाष्यं व्याख्यातुमाह—**तत्रेति** । जाघन्याख्यद्रव्यपत्न्याख्यदेवताविशिष्टयागविध्युत्तरकालं यागमैकथ्यकाङ्क्षायां जाघनीप्रतिपादनार्थत्वावगमेऽपि जाघन्युद्देशेनाविधानाद्वैरूप्यपरिहारशङ्काया निराससूचनार्थत्वेन जाघन्यां त्विति भाष्यस्थं तु शब्दं व्याख्यातुमाह—**अल्पार्थेति** । पत्नीविशिष्टयागोद्देशेन जाघनीविधियज्ञे विशिष्टानुवादलक्षणवाक्यभेदशङ्कानिरासार्थत्वेनास्ति त्विति भाष्यं व्याख्यातुं शङ्कापातनिकार्थं सिद्धान्त्यभिमतवचनव्यक्त्युपसंहारार्थं, तस्मादिति भाष्यं पश्चात्पठितमपि तावद्व्याचष्टे—**तस्मादिति** । शङ्कानिरासार्थत्वेनास्ति त्विति भाष्यमिदानीं व्याचष्टे—**नन्विति** । पत्नीसंयाजावान्तरप्रकरणात्पत्नीविशिष्टत्वाप्राप्तेः पत्नीशब्दानारादित्यर्थः । अवान्तरप्रकरणाद्विशेषलाभं दृष्टान्तेनोपपादयति—**यथैवेति** ।

यत्त्वित्यादिभाष्यं स्पष्टत्वादव्याख्याय तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ॥ २१ ॥

भा० प्र०—पूर्वकथित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "चोदना वा" यह अपूर्व कर्म की विधि है—'जाघनी' रूप द्रव्य ही 'पत्नीसंयाज' नामक याग में विदित होगा कारण, "अपूर्वत्वात्" पूर्व में पत्नी संयाज के गुणरूप में 'जाघनी' नामक द्रव्य की प्राप्ति नहीं थी, किन्तु इस वचन के द्वारा ही उसका विधान किया गया है।

"चोदना" = जाघनी वाक्य चोदना अर्थात् अपूर्व कर्म की विधि है, "वा" = पूर्वपक्ष के निरास के लिए है, "अपूर्वत्वात्" = क्योंकि 'जाघनी' पूर्व में प्राप्त नहीं है। सिद्धान्त ॥ २१ ॥

## एकदेश इति चेत् ॥ २२ ॥

शा० भा०—अथ यदुक्तमेकदेशो जाघनी न पशुं प्रयोक्ष्यते, तस्मादुत्कर्ष इति । तत्परिहर्तव्यम् ॥ २२ ॥ आभासः ॥

त० वा०—यदुक्तम् 'एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्' अप्रयोजक इति । तत्रोच्यते ॥ २२ ॥

न्या० सु०—पूर्वपक्षसूत्रोक्तोत्कर्षहेत्वनुभाषणार्थत्वेन सूत्रव्याख्यार्थमथेति भाष्यं व्याचष्टे—**अथ यदिति** । एकदेशत्वस्याप्रयोजकत्वे हेतुताया न्यायसिद्धत्वसूचनार्थं चतुर्थाधिकरणसूत्रं (पदकर्माप्रयोजकमित्येतत्सूत्रस्थविपरिणताप्रयोजकपदानुषङ्गसहितं पठितम्—**न प्रकृतेरशास्त्रनिष्पत्तेरिति**[1]) । सूत्रं परिहारार्थत्वेनावतारयति—**तत्रेति** । नवं व्याख्या-

---

१. इदं सूत्रं वार्तिके व्याख्यातम् ।

तुमाह—**स नामेति**। यद्यप्येकदेशो द्रव्यं यस्य यागस्येति चतुर्थाधिकरणसूत्रस्थैकदेशद्रव्यशब्दार्थः तथाप्येकदेशद्रव्योऽपि जाघनीशब्दो जाघन्या नाप्रयोजको नानुपादायक इत्येवं नञं व्याख्यातुं गत्यर्थात् द्रवतेर्द्धातोर्द्रव्यशब्दव्युत्पत्तिमङ्गीकृत्यैकदेशो द्रव्यो गम्यः प्रतिपाद्यो यस्य शब्दस्येत्येकदेशद्रव्यशब्दार्थं कृत्वा एकदेशवाची शब्दोऽर्थस्यानुपादाको यस्य सम्बन्धिशब्दत्वात्प्रतिसम्बन्धिनं च विना सम्बन्ध्युपादानाशक्तेरन्यतः सिद्धप्रतिसम्बन्धिसम्भवे च तदाक्षेपाशक्तेरन्यतः सिद्धत्वेन प्रकृतस्य प्रतिसम्बन्धिनो ग्रहणं विनार्थो न ज्ञायते। जाघनीशब्दस्य तु जातिवाचित्वेन सम्बन्धिशब्दत्वाभावात्तदर्थभूताया जाघन्याः पशुयागाङ्गत्वेन सिद्धस्य पशोर्ग्रहणं विनाप्युपादातुं शक्यत्वान्नानुपादेयत्वेनोत्कर्षकतेत्युक्तम्। न प्रकृताविति-भाष्ये प्रकृतौ दर्शपूर्णमासयोरित्यवयवं दैक्षवैषम्योक्त्यर्थसौत्रप्रकृतिशब्दव्याख्यार्थत्वादुत्क्र-व्यानेन विशसनादिप्रकारेण पशुतो निष्पन्नया जाघन्या पत्नीसंयाजाः कार्या इत्यनेन रूपेण जाघनीशास्त्रेण नोच्यते किं त्वविशिष्टा विधीयेत इत्येवं भाष्यशेषं व्याख्यातुमाह—**रूपं वेति**। यथा कथञ्चिच्छब्देन विशसनाद्युत्पत्तिप्रकारनियमाभावं येन केन चिदित्यनेन च क्रमाद्युपादानप्रकारनियमाभावमुक्तमनोत्रासोऽन्यायेनोपपादयितुं रूपं वेति सप्तमाधिकरणसिद्धान्तसूत्रं पठितम्। यदि चेयं पृथग्भूता न प्रचरेत्ततः पशुं विना न शक्येतोपादातुम्। न त्वेदस्तीत्येवमर्थत्वेन सतिभाष्यं व्याख्यातुमाह—**नचेति**। पृथक्त्वाच्यवयवशब्दः छागप्रकृतिकत्वनियमस्यापि चाभावाद्विशसनादिनियमो दूरापास्त इत्याह—**नचावश्यमिति**। दैक्षेऽपि तर्ह्यनियमः स्यादित्याशङ्क्य, वैषम्योक्त्यर्थसौत्रप्रकृतिशब्दव्याख्यार्थं प्रकृतौ दर्शपूर्णमासयोरिति भाष्यावयवमुत्कृष्टमिदानीं व्याख्यातुमाह—**अग्नीषोमीयेऽपीति**। पश्ववयवप्राप्तौ दर्शपूर्णमासयोर्दैक्षप्रकृतित्वाभावात्प्रकृत्युक्त्यानर्थक्यमाशङ्क्य, कर्मव्युत्पत्त्या प्रकृतवाचित्वेन दर्शपूर्णमासोपलक्षणार्थतयोपपादयति—**प्रकृतीति**। भाष्ये च सप्तम्यर्थे षष्ठीव्याख्यार्थम्—**प्रकृताविव्युक्तम्**। तस्मादित्यधिकरणार्थोपसंहारभाष्यं संस्कार्यत्वाभावेनोत्कर्षकत्वाऽयोगेऽपि दार्शपौर्णमासिकेषु पत्नीसंयाजेष्वाज्यावरोधेन जाघन्यनवकाशादुत्कर्षापत्तेरयुक्तमाशङ्क्योपपादयन्व्याचष्टे—**तस्मादिति**॥ २२॥

भा० प्र०—पूर्वपक्षी की आशङ्का के उत्थापन स्थल में प्रागुक्त पूर्वपक्ष के साधन का स्मरण कराते हैं—"एकदेशः" 'जाघनी' पशु का एकदेश अर्थात् अवयव और दर्शपूर्णमास याग में पशु नहीं है, अतः कैसे जाघनी की प्रवृत्ति होगी ?

"एकदेशः" = 'जाघनी' पशु का एकदेश अर्थात् अवयव होने से पशुहीन दर्शपूर्णमास में उसकी प्रवृत्ति नहीं हो सकती है, "इति चेत्" = यदि यह कहा जाय। (आशङ्का) ॥२२॥

## न प्रकृतेरशास्त्रनिष्पत्तेः ॥ २३ ॥

**शा० भा०—न प्रकृतौ दर्शपूर्णमासयोर्जाघनी शास्त्रेणोच्यते। एवं पशोर्निष्पन्नया जाघन्या पत्नीसंजाया यष्टव्या इति। अविशिष्टा जाघनी विधीयते।**

**सा संभवति दर्शपूर्णमासयोः क्रीत्याऽप्यानीयमाना । तस्मादनुत्कर्ष इति ॥ २३ ॥ आ० नि० ॥**

**इति दशमं जाघन्याधिकरणम् ॥ १० ॥**

त० वा०—स नामाप्रयोजको भवति, यस्य प्रकृतग्रहणाद्विनाऽर्थो न ज्ञायते। यथा 'उत्तरार्धात्स्विष्टकृते' आ० श्रौ० २-२१-३ इति। जाघनीशब्दस्तु हृदयादिशब्दवदाकृतिवचनः। सा चान्तरेणापि पशूपादानं, परप्रयुक्तपशूपजीवनं वा शक्योपादातुम्। 'रूपं वाऽशेषभूतत्वात्'। इति यथाकथंचिदुत्पन्ना येन केनचिदुपादाय शक्याऽनुष्ठातुम्। न चेयमवभूता लोके न प्रचरति। मांसविक्रयिणो हि प्रत्यङ्गविभक्तानेव पशून्विक्रीणते। तत्र शक्या जाघनी क्रमादिनोपादातुम्। न चावश्यमियं छागादेव ग्रहीतव्या। जघनावयवमात्रत्वेन श्रवणात्। अग्नीषोमीयेऽपि हृदयादीनां संभवत्येव लोकादुपादानम्। तथा सत्यपि तु तेषां भेदेनैव जातिविशेष, उत्पत्तिप्रकारश्च संज्ञापनादिर्नियत इति क्रयाद्यनाश्रयणम्। न त्विह तथा। शास्त्रकृता निष्पत्तिः। प्रकृतिग्रहणं च दर्शपूर्णमासप्रतिपत्त्यर्थम्। तस्मद्दार्शपौर्णमासिकपत्नीसंयाजाङ्गभूतेनाऽऽज्येन सह विकल्प्यमाना जाघनीति सिद्धम् ॥ २३ ॥

इति दशमं जाघन्यधिकरणम् ॥ १० ॥

भा० प्र०—दर्शपूर्णमास में पशु के न रहने पर भी शौनकादि के समीप पशु की पुच्छ क्रय आदि के द्वारा संग्रह की जा सकती है और उसके द्वारा ही कर्म हो सकता है। पुच्छ विदित होने से पशु भी वैसे ही आवश्यक है—यह बात नहीं है। अन्य स्थलों में पशु का संस्कारादि विदित हैं, वहाँ से क्रय करके कर्म का सम्पादन नहीं किया जा सकता है, कारण, उसमें जीवित पशु का संस्कारपूर्वक संज्ञपन = विशेषरूप से वध विदित है। किन्तु मांस विक्रेता के दुकान से पशु का अवयव खरीदकर होम नहीं किया जा सकता हैं, इसलिए, वहाँ जीवित पशु ही आवश्यक है, किन्तु इस स्थल में "पत्नीसंयाज" में जब उसका विधान नहीं है, तब पशुपुच्छ बाजार से खरीदकर उसके द्वारा कर्म का सम्पादन होने पर भी शास्त्रार्थ सिद्ध होगा, यही सूत्र का "प्रकृतेः अशास्त्रनिष्पत्तेः" इस अंश से सूचित है। पशु के उद्देश्य में जो 'पत्नीसंयाज' संस्कार विदित होगा—यह नहीं कह सकते हैं, क्योंकि, इस स्थल में "जाघन्या" इस पद में तृतीया विभक्ति है, वह संस्कार्यता को बोधित नहीं कराती है, किन्तु साधनता को ही बोधित करती है।

"न" = नहीं, यह आशङ्का ठीक नहीं है, "प्रकृतेः अशास्त्रत्वात्" = क्योंकि प्रकृति में अर्थात् प्रकृतिभूत दर्शपूर्णमास याग सम्बन्धीय पत्नीसंयाज में अशास्त्रीय अर्थात् असंस्कृत पशु का अवयव देकर भी कर्म की निष्पत्ति हो सकती है। इति दशम जाघनो अधिकरण ॥ २३ ॥

### अथैकादशं सन्तर्दनाधिकरणम्

## [११] संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥ २४ ॥ पू०

शा० भा०—ज्योतिष्टोमेऽधिषवणफलके प्रकृत्य श्रूयते 'दीर्घसोमे संतृद्याद् धृत्या' इति। तत्र संदेहः किं संतर्दनं ज्योतिष्टोम एव, आहोस्विद्दीर्घकालेषु सोमेष्विति। उच्यते। नैतल्लुप्तार्थं प्रकृतौ, तस्मान्नोत्कृष्येतेति। आह। नन्व-संतर्दनमपि श्रूयते। 'असंतृण्णे भवत' इति। उच्यते। क्रयणवद्विकल्पिष्यते। यथा, 'हिरण्येन क्रीणाति'[१], गवा क्रीणाति, इत्येवमादीनां विकल्पः। एवमत्रापि विकल्पो भविष्यति। संतर्दनं वा भविष्यतीति ॥ २४ ॥ पूर्वपक्षे पूर्वपक्षः ॥

### अथैकादशं सन्तर्दनाधिकरणम्

त० वा०—इह वाक्यप्रकरणयोर्विरोधाविरोधचिन्ता। ज्योतिष्टोमे सोमाभिषवाधारत्वेन फलकद्वयमाम्नातम्। तत्प्रकृत्य श्रूमते 'दीर्घसोमे संतृद्याद् धृत्यै' इति। भित्त्वा संघातयेदित्यर्थः किं प्रकृतावेव कथंचिदुपपद्यते, ततश्चाविरोधः प्रकरणस्य, अथ दीर्घकालसत्राहीनग्राहित्वादनुपपद्यमान उत्कर्षेदिति संशयः। एते चात्र पक्षा भविष्यन्ति। किं शुद्ध एव ज्योतिष्टोमे निवेशो, दीर्घयजमानके वा, अथवोक्थ्यादिसंस्थास्येव, अथवा सत्राहीनयोरेवाथवाऽग्निष्टोमान्यमात्र इति किं प्राप्तम्? दीर्घसोमशब्दस्येष्टिपशुदर्विहोमापेक्षया प्रकृतावेवोपपत्तेःसंतर्दन-प्रयोजनस्य च दार्ढ्यस्य[२] संभवात्, असंतर्दनविधिना च सह ब्रीहियववद्वि-कल्पसिद्धेः प्रकरणानुग्रहायानुत्कर्ष इति। क्रयणवद्विकल्पना इत्युपरिष्टात्समु-च्चयस्थापनात्पूर्वपक्षेण दृष्टान्त इति व्याख्येयम्। न चावश्यं सर्वत्र सिद्धान्त एव दृष्टान्तो भवति। यस्य कस्यचिन्निदर्शनस्य प्रतिपत्तिकारणत्वसिद्धेः।

असंतर्दनवाक्यमनपन्यस्यैव वाऽनर्थलोपदृष्टान्तः क्रयवदिति समर्थनीयः।

### प्रथमपक्षस्योपपादनम्

तत्रैवं योजना भवति—नन्वल्पकालत्वात्सोमस्य प्रकृतौ मन्दफलं संतर्दनम्। नैष दोषः। क्रयणवदर्थवत्त्वात्। यथाऽल्पमूल्यत्वात्सोमस्य वासःप्रभृतीनामेकेन केन-चित्क्रये सिद्धे, शेषाणि वचनसामर्थ्याद्दीयमानानि तस्यैवाऽऽनतस्य सुतरामानतिं कुर्वन्तीति, न लुप्तार्थानि भवन्ति। स्वानतात्क्रीतः सोमोऽभ्युदयकारी भवतीति च शास्त्रार्थो विज्ञायते। तथाऽत्र सत्यप्यसंतृण्णयोरपि प्रकृताभिषवक्षमत्वे वचनसामर्थ्याद् दृढतरकृतोऽभिषवः श्रेयस्कर इत्यवगमादलुप्तार्थत्वम्। तस्मादनु-त्कर्ष इति ॥ २४ ॥

---

१. ब 'वाससा क्रीणाति' इत्यधिकम्। २. क० दीर्घस्य।

## अथैकादशं सन्तर्दनाधिकरणम् ॥ ११ ॥

न्या० सु०—दीर्घसोम इति सप्तमीश्रुत्या प्राधान्यानुक्तेरधिकरणत्वस्य च सन्तर्दनं प्रति यागस्यायोगात्केन सहात्र प्रकरणस्य विरोधाविरोधचिन्तेत्यपेक्षायामाह—**इहेति**। ज्योतिष्टोमोक्त्या प्रकरणविरोधाविरोधचिन्तात्वसूचनपूर्वं हनू वा एते यज्ञस्य यदभिषवणे इति चाभिषवणफलकयोः प्रक्रमोक्त्या सन्तर्दनीयत्वसूचनपूर्वं ज्योतिष्टोम इत्युदाहरणभाष्यं व्याचष्टे—**ज्योतिष्टोम इति**। सम्पूर्वस्य तर्दतेरर्थं व्याचष्टे—**भित्त्वेति**। द्वयोः समीभूतयोः संश्लेषार्थं संश्लेषप्रदेशौ भेदनेन तनूकृत्यैकस्योपर्यपरं स्थापयित्वा संश्लेपयेत् इति यावत्। तत्रेति सन्देहभाष्यं कर्तृतो वेत्यादिपक्षान्तराणामपि वक्ष्यमाणत्वान्न्यूनमाशङ्क्याग्निष्टोम-पक्षवत्कर्तृपक्षेऽप्यविरोधाविशेषाद्भाष्यमतेन च संस्थापक्षेऽप्यविशेषाद्विरोधस्य च सत्राहीन-पक्षवदग्निष्टोमान्यमात्रपक्षेऽप्यविशेषाज्ज्योतिष्टोम एवेत्यनेनाग्निष्टोमकर्तृसंस्थापक्षाणामा-होस्विदित्यनेन च सत्राहीनाग्निष्टोमान्यमात्रपक्षयोः संग्रह इति सूचयितुमाह—**तत्रेति**। कियन्तोऽत्र पक्षाः सम्भवन्तीत्यपेक्षायामाह—**एते चेति**। अग्निष्टोमसंस्थातोक्त्यर्थः शुद्ध-शब्दः। सन्तर्दनं प्रकृतानर्थलोपादित्येतावत्सूत्रव्याख्यार्थमुच्यत इत्यादिभाष्यं व्याचष्टे—**किमिति**। दीर्घसोमशब्दार्थस्य दीर्घकालत्वस्य सोमयागत्वस्य च प्रकृतावग्निष्टोमेऽप्यलो-पादित्येवं व्याख्यार्थं दीर्घेत्युक्त्वाग्निष्टोमोदाहरणशङ्काभावेन दीर्घाख्यप्रयोजनलोपाद् धृत्यर्थत्वार्थवादायोगशङ्कानिरासार्थत्वेन व्याख्यार्थम्—**सन्तर्दनेत्युक्तम्**। क्रयणद्रव्याणां विकल्पदृष्टान्तत्वायोगसूचनार्थं स्वयं दृष्टान्तान्तरमुक्तम्। अग्निष्टोमनिवेशप्रतिज्ञार्थत्वेना-वृत्त्या प्रकृतिशब्दव्याख्यार्थं तस्मादिति भाष्यं व्याख्यातुमनुत्कर्ष इत्युक्ते कर्मव्युत्पन्नेन प्रकृतिशब्देनाग्निष्टोमोक्तेः प्रकरणाख्यानुत्कर्षहेतुसूचनार्थत्वं सूचयितुम्—**प्रकरणेत्युक्तम्**। दीर्घसोमत्वस्याग्निष्टोमेप्युपपत्तेर्वाक्यविरोधाभावेऽप्यसन्तर्दनविरोधादुत्कर्षमाहेति भाष्येणा-शङ्क्य, तन्निरासार्थत्वेन क्रयणद्रव्यवद्विकल्पो भविष्यतीत्येवं क्रयणवच्छब्दव्याख्यार्थमुच्यत-इत्यादिभाष्यं द्वादशे 'क्रयणेषु विकल्पः स्यादेकार्थत्वादिति(१२-४-५)सूत्रेण क्रयसाधनानां द्रव्याणां विकल्पं पूर्वपक्षयित्वा समुच्चयो वा प्रयोगे द्रव्यसमवायादि(१२-४-६)त्यनेन समुच्चयो वा प्रयोगे' द्रव्यसमवायादित्यनेन समुच्चयस्य सिद्धान्तयिष्यमाणत्वादयुक्त-माशङ्क्य, तत्रत्यपूर्वपक्षाशयत्वेन व्याख्येयमित्याह—**क्रयणवदिति**। पूर्वपक्षस्यास्थायित्वा-दत्र न युक्ता दृष्टान्ततेत्याशङ्क्यानतिविशेषकरत्वात्क्रयप्रयोगे द्रव्याणां समुच्चयोपपत्तेरिति विकल्पापवादकस्य सिद्धान्तहेतोः सन्तर्दनासन्तर्दनयोरभावेन पूर्वपक्षन्यायस्याप्यनपोदि-तत्वाद्युक्ता दृष्टान्ततेत्याह—**न चेति**।

यद्वा नायं विकल्पे दृष्टान्तः किं त्वनर्थलोपे इति स्वयमन्यथाक्रयणवच्छब्दं व्याचष्टे—**असन्तर्दनेति**। कथमयं दृष्टान्तो नार्थलोपे योज्य इत्याशङ्क्याह—**तत्रेति**। अग्निष्टोम-निवेशपक्षमुपसंहरति—**तस्मादिति** ॥ २४ ॥

भा० प्र०—ज्योतिष्टोमप्रकरण में श्रुति में कहा गया है "दीर्घसोमे संतृद्याद्धृत्यै" धृति के लिए दीर्घसोम में सन्तर्दन करे अर्थात् जोड़े सोमयोगविशेष का नाम दोर्घसोम है। उस

दीर्घसोम में सोमाभिषव का आधारस्वरूप जो दो अधिषवणफलक रहता है, उनको सन्तर्दन अर्थात् जोड़ना होगा—यही श्रुतिवाक्य का अर्थ है, अनन्तर इन दो पात्रों का परस्पर विश्लेष अर्थात् विच्छेद होता है, इसके लिए उनका जो दृढ़ संश्लेषण किया जाता है यही सन्तर्दन है अर्थात् "अधिषूयते सोमो यत्र" जिन पर सोम कूटा जाता है—वही काष्ठ से निर्मित अधिषवण फल है। गूलर या पलाश के दो तख्ते रहते हैं, किसी चीज से उनको जोड़ना और अनन्तर दोनों को पृथक् करना होता है।

यह विदित 'सन्तर्दन' ज्योतिष्टोमप्रकरण में विदित होने से ज्योतिष्टोम में अनुष्ठेय है या ज्योतिष्टोम प्रकरण से इसका उत्कर्ष कर दीर्घकालव्यापो सोमयाग में ही यह कर्तव्य है—यही संशय होता है।

पूर्वपक्षी का कहना है कि "सन्तर्दनं प्रकृतौ" इस 'सन्तर्दन' का उत्कर्ष नहीं होगा, वरन् सोमयाग के प्रकृतिभूत ज्योतिष्टोम में ही करणीय है। कारण, "अनर्थलोपात्" क्योंकि, ऐसा करने पर किसी प्रकार के अर्थ का लोप अर्थात् बाध नहीं है और प्रकरण की मर्यादा का भी रक्षण होता है। यदि यह कहा जाय कि प्रकृतिभूत ज्योतिष्टोम में असन्तर्दन भी अर्थात् सन्तर्दन अर्थात् उक्त काष्ठद्वय का दृढ-संश्लेष न करने पर भी उक्त रहता है। अतः एक ही यज्ञ में सन्तर्दन और असन्तर्दन दोनों का अनुष्ठान कैसे हो सकता है ? ऐसी स्थिति में यह कहना है कि "क्रयणवत् स्यात्" जैसे सोम के क्रयण में "हिरण्येन क्रीणाति", "गवा क्रीणाति" इत्यादि वचनों के रहने से हिरण्य अथवा गौ आदि से क्रय के साधन का विकल्प होता है, वैसे ही इस स्थल में भी सन्तर्दन एवं असन्तर्दन का विकल्प होगा। इच्छा के अनुसार सन्तर्दन करने पर भी और न करने पर भी कार्य चलेगा। अतः सन्तर्दन का उत्कर्ष नहीं है, किन्तु, वह प्रकृतिभूत ज्योतिष्टोम में ही अनुष्ठेय है।

"सन्तर्दनं प्रकृतौ" = सन्तर्दनकर्म प्रकृतिगामी ही है, "क्रयणवत् स्यात्" = सोम-क्रयण के समान विकल्प होने से, "अनर्थलोपात्" = अर्थलोप नहीं होगा ॥ २४ ॥

यह पूर्वपक्ष है।

## उत्कर्षो वा ग्रहणाद्विशेषस्य ॥ २५ ॥ सि०

**शा० भा०—उत्कृष्यते वा संतर्दनम्। गृह्यते हि विशेषो, 'दीर्घसोमे संतृद्यात्', इति। ज्योतिष्टोममपेक्ष्य सत्राणि कालतो दीर्घाणि भवन्ति ॥ २५ ॥ पूर्वपक्षे सिद्धान्तः ॥**

त० वा०—वाक्यकृताद्वा दीर्घसोमसंयोगादुत्कर्षः। कुतः ?

दृष्ट्वा ह्रस्वं सजातीयं दीर्घबुद्धिः प्रवर्तते।
तस्मात्सोमस्य दीर्घत्वं भवेत्सोमान्तरेक्षया ॥

न हीष्टिपशुदर्विहोमापेक्षया सोमस्य दीर्घत्वं युक्तं, विजातीयत्वात्, अनुपात्तत्वाच्च। सर्वत्र प्रतियोगिन्युपात्ते दीर्घह्रस्वादिविभागो भवति। न चात्रेष्ट्यादय उपात्ता, यानालोच्य ज्योतिष्टोमे दीर्घ इत्युच्येत।

ननु सोमयागभेदोऽप्यनुपात्त एव। यद्यप्यनुपात्तः तथापि तुल्यजातीयत्वं तावदस्त्यपेक्षाकारणम्। विशेषणविशेष्यभावाच्च सोमत्वे सरि दीर्घत्वमुपादीयमानं सोमन्तरस्य व्यवच्छेदार्थमेव विज्ञायते। तेषां कः पुनर्दीर्घः? इत्यपेक्षिते ज्योतिष्टोमस्तावन्न कुतश्चिदीर्घ इति, ततोऽन्ये गृह्यन्ते। तेषां च प्राथम्यात्स एवापेक्षाकारणं भवति ॥ २५ ॥

न्या० सु०—सूत्रव्याख्यार्थमुत्कृष्येत वेदि भाष्यं व्याचष्टे—**वाक्येति**। अग्निष्टोमस्यापीष्ट्याद्यपेक्षया दीर्घत्वाद्दीर्घसोमशब्दसंयोगोपपत्तेः कथमुत्कर्ष इति प्रश्नोत्तरत्वेन ज्योतिष्टोममिति भाष्यं व्याख्यातुमाह—**कृत इति**। सोमयागस्य दैर्घ्यमुक्तं, न कर्ममात्रस्य तत्तु सोमयागान्तरापेक्षयैवेत्यर्थः। श्लोकं व्याचष्टे—**नहीति**।

सोमयागान्तरस्याप्यनुपादानान्नापेक्षा युक्तेत्याशङ्कते **नन्विति**। बुद्धिस्थत्वायोपादानापेक्षणात्सोमयाङ्गान्तरस्य चानुपादानेऽपि सजातीयत्वाद् बुद्धिस्थत्वोपपत्तेर्युक्ताऽऽपेक्षेति परिहरति—**यद्यपीति**। सोमशब्देन चोपादानं सामान्यतोऽस्तीति परिहारान्तरमाह—**विशेषणेति**। एवं च सति ज्योतिष्टोमस्य दैर्घ्यायोगाद्दीर्घसोमशब्देनाऽन्येऽनूद्यन्त इत्युपसंहरति—**तत्रेति**। भाष्ये सत्रशब्दस्यान्यमात्रोपलक्षणार्थतान्योक्त्या सूचिता। दैर्घ्यस्य विशेषणत्वे विरोधिव्यावृत्त्या विशेषणत्वप्रसिद्धेर्विरोधिह्रस्वत्वव्यावृत्त्या विशेषणत्वप्रसङ्गात्तद्द्विरात्रादिषु च सहस्रसंवत्सरात्प्राचीनेषु ह्रस्वत्वव्यावृत्तदैर्घ्याभावात्सहस्रसंवत्सरमात्रग्रहणापत्तेः सत्राणीति भाष्ये बहुवचनं न युज्येतेत्याशङ्क्याह—**तेषां चेति**। द्विरात्रादिस्थस्य दैर्घ्यस्य त्रिरात्राद्यपेक्षह्रस्वत्वाव्यावर्त्तकत्वेऽपि दैर्घ्यंवुद्धेर्ह्रस्वापेक्षत्वान्त्रिरात्रादेश्च द्विरात्राद्यपेक्षया ह्रस्वत्वाभावेनानपेक्षणीयत्वाज्ज्योतिष्टोमवच्च निरतिशयत्वाभावेनान्यानपेक्षह्रस्वत्वायोगाज्ज्योतिष्टोम एवान्यानपेक्षह्रस्वत्वेन प्रथमं ह्रस्वतया बुद्धिस्थत्वादन्येषामपेक्षायाः कारणमालम्बनं विषयोऽपेक्षणीयः ततश्च ज्योतिष्टोमापेक्षह्रस्वत्वव्यावृत्तस्य दैर्घ्यस्य द्विरात्रादिष्वपि भावाद् बहुवचनं युक्तमित्याशयः। अपेक्षणीयस्यापेक्षाकारयितृत्वाद्वा णिजन्तात्करोतेर्ल्युटि कृते व्युत्पन्नेन कारणशब्देनोक्तिः। तच्छब्दसापेक्षत्वेऽप्यपेक्षाशब्दस्य नित्यसापेक्षत्वात्समासाविघातः। सोमयागानां मध्ये ज्योतिष्टोमस्यैवान्यानपेक्षह्रस्वत्वेन प्रथमं प्रतियोगितया बुद्धिस्थस्यातिक्रमायोगादिति वा योज्यम् ॥ २५ ॥

भा० प्र०—पूर्वकथित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "उत्कर्षो वा" = सन्तर्दन का उत्कर्ष करना होगा अर्थात् वह प्रकृतिभूत ज्योतिष्टोम में अनुष्ठेय नहीं होगा। कारण, "विशेषस्य ग्रहणात्" = श्रुति में "दीर्घसोमे सन्तृद्यात्" इस वचन में 'दीर्घ' शब्द का प्रयोग रहने से ज्योतिष्टोम की अपेक्षा पार्थक्य ही अभिहित होवा है।

क्योंकि, ज्योतिष्टोम में दीर्घसोम नहीं है—दीर्घकालव्यापी सोमयाग नहीं है, अपितु 'उक्थ्य' आदि विकृतियों में ग्रह का आधिक्य होने से एवं 'द्विरात्र' आदि याग में सोमयाग की आवृत्ति करनी होगी, अतः, ज्योतिष्टोम की अपेक्षा 'उक्थ्य' या 'द्विरात्र' या 'सत्र' आदि ही दीर्घसोम है, क्योंकि इनके सम्पादन में दीर्घकाल व्यतीत होता है और यह वाक्यविनियोग होने से वाक्य के द्वारा प्रकरण का बाध ही होगा।

"उत्कर्षः" = सन्तर्दन का उत्कर्ष करना होगा। "वा" = पूर्वपक्ष का निरासक है, "विशेषस्य ग्रहणात्" = क्योंकि दीर्घ शब्द रहने से विशेष गृहीत होता है, अर्थात् उसका विशेषत्व बोधित होता है ॥ २५ ॥ सिद्धान्त।

## कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ॥ २६ ॥

**शा० भा०—नोत्कृष्येत वा संतर्दनं ज्योतिष्टोमात्। एवं प्रकरणमनुगृहीतं भवति[1]। दीर्घसोमशब्दश्च कर्तृतो भविष्यति। दीर्घस्य यजमानस्य सोमो दीर्घसोम इति ॥ २६ ॥ आ० ॥**

### द्वितीयपक्षस्योपवर्णनम्

त० वा०—यथाकथंचिद्दीर्घसोमशब्देऽवकल्प्यमाने न युक्तः प्रकरणबाधः। स च कर्तृद्वारेणोपपत्स्यते। न च स्वरगतः कश्चित्समासे विशेषोऽस्ति। उभयथाऽप्यन्तोदात्तत्वात्। अतः सष्ठीसमास इति ॥ २६ ॥

न्या० सु०—कर्तृतो वा विशेषस्य तन्निमित्तत्वात् नोत्कृष्येति भाष्येण वाशब्दं व्याख्यायाऽनुत्कर्षे वाक्यविरोधपरिहारायोक्तस्य षष्ठीसमासत्वस्यानुपपत्तेर्यत्कर्तृकल्पनविक्षेपाद्दैर्घ्यस्य चानवस्थितत्वात्कर्मधारयापेक्षया च दौर्बल्यात् क्लिष्टस्यानुत्कर्षप्रमाणं विना कल्पनाशक्तेराद्यसूत्रस्थप्रकृतिशब्दसूचितप्रकरणाख्यमाणोवश्यर्थमेवमिति भाष्यं दुर्बलप्रमाणानुरोधेन दीर्घसोमश्रुतेः क्लिष्टकल्पनायोगादयुक्तमाशङ्क्य, अबाधपक्षसम्भवे बाधपक्षस्यायुक्तत्वादुपपादयितुमाह—**यथा कथं चिदिति**। दीर्घसोमसंयोगाख्यस्य विशेषस्य कर्तृद्वारत्वे कादाचित्कत्वात्सन्तर्दनं प्रति निमित्तत्वोपपत्तेः सन्तर्दनस्य नैमित्तिकत्वान्नित्यासन्तर्दनबाधेन ज्योतिष्टोमे निवेशोपपत्तिसूचनार्थं तन्निमित्तत्वादिति सूत्रावयवं नैमित्तिकत्वाभावेऽपि विकल्पेन निवेशोपपत्तेरुक्तत्वेनातिशयमात्रार्थत्वादनादृत्य कर्तृतो विशेष इत्येतावत्सूत्रावयवव्याख्यार्थं दीर्घेति भाष्यं व्याख्यातुमाह—**सचेति**।

स्थपत्यधिकरणे कर्मधारयाद्दौर्बल्यस्य वक्ष्यमाणत्वाच्छन्दासमासानुपपत्तेः कर्तृद्वारता न युक्तेत्याशङ्क्याह—**नचेति**। परविशेषणत्वस्य, षष्ठ्यर्थलक्षणाया वा दौर्बल्यहेतोस्तत्र वक्ष्यमाणस्य प्रमाणबाधापत्तावनादरणीयत्वात्स्वरगतं पूर्वपरनिपातलक्षणं वा विशेषं विना षष्ठीसमासोऽशक्यो निराकर्तुमित्याशयः ॥ २६ ॥

---

1. ब. भविष्यति।

भा० प्र०—पूर्वपक्षी ने कहा है कि ज्योतिष्टोम दीर्घसोम न होने से 'दीर्घ' यह विशेषण अनुपपन्न होगा, अतः सन्तर्दन ज्योष्टोम में अनुष्ठेय नहीं है, वरन् उसका उत्कर्ष होगा।

इसके समाधान में पूर्वपक्षी का कहना है कि "कर्तृतो वा" कर्ता की दीर्घता के अनुसार सोम का दीर्घत्व हो सकता है। जिस स्थल में कर्ता = यजमान दीर्घ है उस स्थल में उसके द्वारा अनुष्ठित सोम 'दीर्घ का सोम' इस प्रकार के अर्थ में षष्ठी समास के द्वारा निष्पन्न होने से वह 'दीर्घसोम' इस नाम से कहा जा सकता है। ज्योतिष्टोम का यजमान दीर्घ होने से, उस दीर्घ यजमान के द्वारा सम्पादित ज्योतिष्टोम सोमयाग में "सन्तर्दन" करना होगा, क्योंकि, "विशेषस्य तन्निमित्तत्वात्" क्योंकि, यजमान का दीर्घत्वरूप विशेष ही उस सन्तर्दन का निमित्त है।

"कर्तृव" = कर्ता के अनुसार सोम का दीर्घत्व होगा। "वा" = पक्ष की व्यावृत्तिका सूचक है, "विशेषस्य तन्निमित्तत्वात्" = क्योंकि, विशेष सन्तर्दन का निमित्त है ॥ २६ ॥ आशङ्का।

## क्रतुतो वाऽर्थवादानुपपत्तेः स्यात् ॥ २७ ॥

शा० भा०—न चैतदस्ति ज्योतिष्टोमे संनिवेश इति। दीर्घकाले सोमे क्रिये। क्रतुत एव दीर्घत्वं, न कर्तृतः। कुतः ? अर्थवादानुपपत्तेः। श्रुत्या इत्यर्थवादो भवति। धारणायेत्यर्थः। दीर्घकाले सोमे पुनःपुनर्ग्राविभिरभिहन्यमाने सोमाभिषवणफलकयोर्दारणशङ्कायां, धृत्या इत्यर्थवाद उपपद्यते। तस्मादुत्कर्ष इति ॥ २७ ॥ आ० नि० ॥

### तृतीयपक्षस्योपपादनम्

त० वा०— क्रतुत एव दैर्घ्यं समानाधिकरणसमास इत्यर्थः। किं कारणम् ? एवमुभयोस्वार्थं एव वादो भविष्यति। अन्यथैकस्य परविशेषणत्वात्स्वप्रधानभूतार्थवादाऽनुपपत्तिर्भवेत्। एवं च बहुसोमाभिषवाद् दृढत्वाकाङ्क्षायां सत्यां दृष्टार्थोऽयं वादो भविष्यति। अन्यथा मन्दत्वात् दृढत्वाकाङ्क्षायास्तदनुपपत्तिः स्यात्। तथा 'धृत्यै' इत्यर्थवादोऽमुमेवार्थं द्योतयति। तस्माद्यत्र फलकयोर्दारणशङ्का, तत्रैवैतद्विधानम्। इतरथा दीर्घेण कर्त्रा विशेषणमत्यन्तादृष्टार्थं भवेत्। दीर्घे ह्रस्वे च कर्तरि कर्मणस्तुल्यरूपत्वात्। बाह्यं चैतत्कर्त्रा विशेषणम्। स्वतो विशेषणं त्वन्तरङ्गम्। तस्मादुत्कर्षः ॥ २७ ॥

न्या० सु०—न चेति भाष्येण कर्तृपक्षनिरासार्थतया वाशब्दं व्याख्याय, क्रतुत इति सूत्रावयवस्य पूर्वसूत्रस्थप्रथमान्तविपरिणतविशेषशब्दानुषङ्गेण क्रतुत एवायं विशेषो, न कर्तृत इत्येवं व्याख्यार्थं क्रतुत इति भाष्यं व्याचष्टे—क्रतुत एवेति। कर्मधारयबलीयस्त्वो-

पपादनार्थत्वेऽनार्थवादेति सूत्रावयवं षष्ठीसमासे पूर्वपदेन स्वप्रधानभूतार्थाभिधानायगादित्येवं व्याख्यातुं क्रतुद्वारदीर्घसोमसंयोगाख्यविशेषोक्तः। कर्मधारयप्रतिज्ञार्थत्वं सूचयितुमाह—**समानाधिकरणेति**। स्वयं तावत्कर्मधारयबलीयस्त्वोपपादनार्थत्वेनार्थवादेत्यवयवं हेतुप्रश्नपूर्वं व्याचष्टे—**किमिति**।

स्वयमेव क्रतुदैर्घ्यस्य निमित्तत्वे बहुसोमाभिषवाद्दारणशङ्कां निवर्तयितुं दार्ढ्याकाङ्क्षायां सन्तर्दनस्य दीर्घसाधनत्वाद् दृष्टार्थस्य विधानस्य सम्भवतः कर्तृदैर्घ्यनिमित्तपक्षे दारणानाशङ्कनेन दार्ढ्यानाकाङ्क्षणादनुपपत्तेरित्येवं क्रतुदैर्घ्यनिमित्तत्वोपपादनार्थत्वेन, दीर्घसोमत्वाख्यस्य विशेषस्य क्रतुद्वारत्वोपपादनार्थत्वेना वा व्याचष्टे—**एवं चेति**।

विशेषस्य कर्तृद्वारत्वे वाक्यशेषायोगादित्येवं हेतुप्रश्नपूर्वं व्याख्यार्थं कुत इत्यादिभाष्यं कर्मधारयबलीयस्त्वेनऽत्यन्तादृष्टार्थं नियमदृष्टार्थं नियमादृष्टार्थेन बाध्यत इति बाधग्रन्थोक्तेन च न्यायेन क्रतुद्वारत्वनिश्चयात्सन्देहाभावेन वाक्यशेषान्निर्णयोक्त्यानुपपत्तेरयुक्तमाशङ्क्य, न्यायोपोद्बलनार्थत्वेन व्याख्यातुमाह—**तथेति**। क्रतुद्वारत्वोपपादनस्य प्रकृतोपयोगमाह—**तस्मादिति**।

मृदुदेशस्थापनेनापि दार्ढ्योपपत्तेर्दीर्घकालेऽपि सोमयागे सन्तर्दननियमस्यादृष्टार्थत्वात्साम्यमाशङ्क्य—**अत्यन्तमेवेत्युक्तम्**। स्वसमवेतस्यैव वानुरञ्जकत्वाद्विशेषणत्वप्रसिद्धेः कर्तुश्च क्रतावसमवायाद्यदेतद्दीर्घेण कर्त्रा क्रतोर्विशेषणं सन्तर्दनशेषितया प्रमित्सिते सोमयागरूपेऽनन्तःपातित्वेन सम्बन्धद्वारतया व्यवहितत्वाद्बाह्यं यत्तु स्वसमवेतेन दैर्घ्येण विशेषणं तत्प्रमित्सितक्रतुरूपान्तःपातित्वेन सन्निकृष्टत्वादन्तरङ्गम्। तस्मादेतदेव ज्याय इत्याह—**बाह्यं चेति**। तस्मादिति सूत्रार्थोपसंहरभाष्यं व्याचष्टे—**तस्मादिति** ॥ २७ ॥

भा० प्र०—पूर्वपक्षी के उत्थापित आशङ्का के निराकरण प्रसङ्ग में सिद्धान्ती ने कहा है "क्रतुतो वा स्यात्" सोम का दीर्घत्वरूप विशेष यजमान के अनुसार नहीं हो सकता है, किन्तु यज्ञसमुदायरूप क्रतु के अनुसार ही होगा, कारण, "अर्थवादानुपपत्तेः" ऐसा न होने पर विधि के साथ जो अर्थवाद पठित है, वह असङ्गत होगा। "दीर्घसोमे सन्तृद्यात् धृत्यै" इस विधिवाक्य में "धृत्यै" यह अंश अर्थवाद है। इसमें कहा गया है कि "धृति के लिए दीर्घसोम में सन्तर्दन करें"। इसका यह उद्देश्य है कि दीर्घकाल व्यापी सोमयाग में अनेक बार सोमलता को कूटना पड़ता है, अतः अधिषवण फलक दोनों टूट सकता है, इसलिए, इन दोनों को ऊपर-ऊपर रखकर कील के द्वारा दृढ़रूप से जोड़ देने पर उन दोनों के विदीर्ण होने की सम्भावना नहीं रह जाती है, किन्तु यजमान की दीर्घता के अनुसार यदि ज्योतिष्टोम में भी सन्तर्दन विहित होता तो ज्योतिष्टोम = अग्निष्टोम एक दिन से साध्य सोमयाग होने;से उसमें तीन बार मात्र सोमलता को कूट कर रस निकालना होगा, किन्तु यह अल्पमात्र अर्थात् तीन बार मात्र कूटने दोनों फलक विदीर्ण नहीं होंगे, इसलिए, इस पक्ष में "धृत्यै" इस विधि समभिव्याहृत अर्थवाद नहीं

लगता है, अतः, यजमान की दीर्घता के अनुसार ही सोम का दीर्घत्व होगा—यह नहीं कहा जा सकता है।

इस पक्ष में षष्ठी समास करना होगा, किन्तु, "दीर्घकालव्यापी सोम दीर्घ सोम" यह कर्मधारय समास से निष्पन्न है, षष्ठीतत्पुरुष और कर्मधारय समास में कर्मधारय समास ही प्रबल है। यह 'निषादस्थपति' अधिकरण में (६-२-१३ अधिकरण के ५१ सूत्र में) वर्णित है। इसलिए, सन्तर्दन ज्योतिष्टोम में कर्तव्य नहीं है, किन्तु दीर्घकालव्यापी सोमयाग में उत्कर्ष करना ही उसका करणीय अनुष्ठान है।

"क्रतुतः स्यात्" = क्रतु की दीर्घता के अनुसार सोम की दीर्घता होगा "वा" = आशङ्कानिरासक है, "अर्थवादानुपपत्तेः" = क्योंकि, ऐसा न मानने पर अर्थवाद की अनुपपत्ति अर्थात् असङ्गति होगी। आशङ्का का समाधान ॥ २७ ॥

## संस्थाश्च कर्तृवद्धारणार्थाविशेषात् ॥ २८ ॥

शा० भा०—इदं पदोत्तरं सूत्रम्। कानि पदानि। अथ किमर्थं संस्थासु न निवेशः। तथा सति प्रकरणमनुगृहीतं भविष्यति। दीर्घसोमशब्दश्च। दीर्घकालो ह्यग्निष्टोममपेक्ष्योक्थ्यादिषु संस्थासु सोम इति। उच्यते। न संस्थासु दीर्घकालत्वेऽपि सोमेऽर्थवाद उपपद्यते। तावानेव हि तत्र सोमो, 'दश मुष्टीर्मिमीते' इति वचनात्। तत्र धारणे न विशेषः कश्चित्। तस्मादुत्कर्ष एव ॥ २८ ॥ पूर्वपक्षः ॥

## उक्थ्यादिषु वाऽर्थस्य विद्यमानत्वात् ॥ २९ ॥

शा० भा०—न चैतदस्त्युत्कर्ष इति। प्रकरणानुग्रहादनुत्कर्षः। दीर्घसोमशब्दश्च दीर्घकालत्वादुपपद्यते। तत्राप्यधिकोऽग्निष्टोमात्सोमः। प्रदानानि हि विवर्धन्ते। तान्यविवृद्धे प्रदेये न शक्यानि विवर्धयितुम्। पूर्णे च ग्रहे ग्रहशब्दो भवति। तेन न शक्यानि न्यूनानि पात्राणि ग्रहीतुम्। तस्माद्धारणाशङ्कायां धारणमाशंसितव्यं भवति। तत्र 'धृत्या' इत्युपपद्यत इति ॥ २९ ॥ सि०

## अविशेषात् स्तुतिर्व्यर्थेति चेत् ॥ ३० ॥

शा० भा०—इति चेत्पश्यसि, संस्थास्वप्यर्थवादोऽवकल्पते प्रदेयविवृद्ध्या, इति। नैतदेवम्। व्यर्थैव हि स्तुतिर्भवेत्। कुतः ? सोमाविशेषात्। यावानेवाग्निष्टोमे सोमः, तावानेवोक्थ्यादिष्वपि संस्थासु। उक्थ्यादिष्वपि दशमुष्टिरेव सोमो ग्रहीतव्यः। नन्वार्थात्प्रदेयं विवर्त्स्यतीति। दशमुष्टिः स कथं शक्येत विवर्धयितुम्। त्रिपर्वेति च पर्वसंख्यानियमान्न शक्यो बहुपर्वा ग्रहीतुम्। तस्माद्धारणाविशेषादर्थवादानुपपत्तिः संस्थासु स्यात्। तस्मादुत्कर्षः ॥ ३० ॥ आ० ॥

त० वा०—परिचोदनापदोत्तरभूतमेतत्सूत्रम् । मा नामाग्निष्टोमसंस्थायां निवेशोऽभूत्, उक्थ्यादिषु त्वग्निष्टोमापेक्षया दीर्घसोमशब्द उपपत्स्यते, प्रकरणं चानुग्रहीष्यते । तस्मात्तिसृष्वपि संस्थासु निवेश इति । प्रकरणाविशेषः संस्थाधिकरणेनाद्यापि न निराकृत इत्येव युक्तम् ।

अथवाऽस्त्येवं संस्थानां प्रकरणम् । तत्र येषां धर्माणामग्निष्टोमार्थता संभवति, तेषु नित्यानित्यसंयोगविरोधाद्यावर्तते । संतर्दनस्य पुनर्नित्येनाग्रहणात्केवलानित्यविषयत्वं न विरुध्यते । तस्मात्संस्थासु निवेश इत्युक्ते ।

अभिधीयते ।

संस्थास्वपि तु तावत्त्वात्सोमस्याभिषवः समः ।
कर्तृपक्षवदेवातो धृत्या इति वृथा स्तुतिः ॥

सत्यप्यत्र कर्मकालयोर्दीर्घत्वे तावानेवातिदेशप्राप्तो दशमुष्टिः सोमोऽभिषूयते । धारणस्य तु तुल्यत्वाद् दृष्टार्थत्वार्थवादयोरनुपपत्तिः स्यात् । प्रदानविवृद्ध्या न्यूनपात्राग्रहणाच्च सोमवृद्धिर्भविष्यतीति चेत् ? दशमुष्टित्रिपर्वपरिमाणयोः शाब्दत्वात्प्रदानविवृद्धिस्तोयादिवृद्ध्या संपादनीया । तस्मादविशिष्टं धारणमित्युत्कर्षः ॥ २८–२९–३० ॥

न्या० सु०—कर्मधारयसम्भवे षष्ठीसमासायोगात्कर्तृद्वारदीर्घसोमत्वसम्भवान्नोत्कर्षो युक्त इत्येवं शङ्कोत्तरत्वेन सूत्रव्याख्यार्थमिदमिति भाष्यं व्याचष्टे—**परिचोदनापदेति ।** किमिति भाष्येण किं प्रकाराणि पदानीति पृष्ट्वा शङ्कापदप्रकारोक्त्यर्थमथेत्यादीत्यन्तं भाष्यं व्याचष्टे—**मा नामेति ।** संस्थानां ज्योतिष्टोमेन सह प्रकरणतुल्यत्वस्य संस्थाधिकरणेन निराकरिष्यमाणत्वात्संस्थास्वपि निवेशे प्रकरणानुग्रहायोगमाशङ्क्याह—**प्रकरणेति ।**

वक्ष्यमाणानालोचनेन शङ्काया मन्दत्वादित्थं संस्थाधिकरणविरोधपरिहारानुपपत्तेरग्निष्टोमसंस्थाया निष्फलत्वेन प्रकरणायोगात्प्रकरणस्य ज्योतिष्टोमीयत्वावगतेर्ज्योतिष्टोमस्य च संस्थाचतुष्टयेऽप्यनुवृत्तेर्ज्योतिष्टोमसमाप्तिविशेषरूपाणां फलवतां संस्थान्तराणां प्रकरणाविशेषणस्य निराकर्तुमशक्यत्वात्प्रकरणाविशेषेऽपि च नित्यानित्यसंयोगविरोधान्नित्याग्निष्टोमसंस्थज्योतिष्टोमगृहीतत्वेन नित्यानां धर्माणमनित्याभिः संस्थाभिः प्रकरणेनाग्रहणोपपत्तेः संस्थाधिकरणवक्ष्यमाणाऽसामानविध्याविरोध इत्यन्यथा परिहरति—**अथ वेति ।** अग्निष्टोमसंस्थाज्योतिष्टोमवाच्यग्निष्टोमशब्दः । तस्मात्संस्थास्वेव सन्तर्दननिवेश इति शङ्कामुपसंहरति—**तस्मादिति ।** अभिषूयमाणसोमधारणे सन्तर्दनप्रयोजनेऽर्थवादोक्ते कर्तृदैर्घ्यइव संस्थास्वप्यविशेषेणार्थत्वादायोगसाम्याद्यथादीर्घः कर्त्ता न सन्तर्दननिमित्तं, तथा संस्था अपीत्येवं सूत्रव्याख्यार्थमुच्यतइत्यादिभाष्यं व्याचष्टे—**इतीति ।** श्लोकं व्याचष्टे—**सत्यपीति ।**

सन्तर्दनाभावेऽपि धृतिसिद्धेरितिकरणपरामृष्टं सन्तर्दनं धृत्यै वृथा धृत्यर्थं न भवतीत्येवं धृत्या इति पदत्रयस्यावृत्त्या व्याख्या दृष्टार्थत्वोक्त्या सूचिता। उक्त्यादिषु वार्थस्य विद्यमानत्वादिति सूत्रस्य सोमवृद्धिं विना प्रदेयवृद्धययोगाद्धरणे संस्थासु विशेषोऽस्तीत्याशङ्काशयविवरणार्थत्वेन नवेत्यादिभाष्यं व्याख्यातुमाह—**प्रदानेति**। स्तोकसोमग्रहणात्सोमवृद्धिं विनापि प्रदानवृद्धिसम्भवशङ्कानिरासार्थं पूर्णे चेत्यादिभाष्यावयवं व्याख्यातुमन्यूनेत्युक्तम्। 'उपरि बिलाद् गृह्णाती'ति पूर्णग्रहणविधानान्न न्यूनग्रहणं युक्तमित्याशयः। अविशेषात्स्तुतिर्व्यर्थेति चेदिति[1]) सूत्रस्य तोयवृद्धया प्रदानवृद्धिसम्भवान्मुष्टिवृद्धया, पर्ववृद्धया वा सोमवृद्धिर्दशमुष्टित्रिपर्वनियमविरुद्धा न युक्तेति परिहाराशयविवरणार्थत्वे नेति चेदित्यादिभाष्यं व्याख्यातुमाह—**नेति**। पदोत्तराशयविवरणोपसंहारार्थं तस्मादुत्कर्ष इति भाष्यं व्याचष्टे—**तस्मादिति** ॥ २८ ॥

भा० प्र०—प्रकृतिभूत अग्निष्टोम में सन्तर्दन अनुष्ठेय नहीं है—इस सिद्धान्त के प्रसङ्ग में पूर्वपक्षी ने आशङ्का की है—"संस्थाः च" प्रकृतिभूत अग्निष्टोम का विकृतिभूत उक्थ्य आदि के नाम से प्रसिद्ध जो संस्थायें हैं—उनमें भी सन्तर्दन नहीं होगा, कारण, "कर्तृवत् धारणार्थाविशेषात्"—दीर्घसोम में इस स्थल में दीर्घत्व को कर्ता का विशेषण मानने पर "सन्तृद्यात् दीर्घसोमे धृत्यै" इस विधिवाक्य में समभिव्याहृत "धृत्यै" यह अर्थवाद सङ्गत नहीं होने से जैसे अग्निष्टोम में सन्तर्दन कर्म अनुष्ठेय नहीं होता है, वैसे ही प्रकृतिभूत अग्निष्टोम का विकृतिस्वरूप "उक्थ्य" आदि जो सभी संस्थाएँ हैं, उनमें सोम का आधिक्य न होने से उसमें भी "धृत्यै" यह अर्थवाद सङ्गत नहीं होता है। अर्थात् सिद्धान्ती के मत में केवल अग्निष्टोम में ही सन्तर्दन नहीं होगा—यह बात नहीं है, अपितु अग्निष्टोम को विकृति 'उक्थ्य' आदि संस्थाओं में सन्तर्दन हो सकता है एवं 'द्विरात्र' आदि नाम से प्रसिद्ध आवृत्त सोमयाग में भी सन्तर्दन होगा, पूर्वपक्षी यह कहें कि 'द्विरात्र' आदि से प्रसिद्ध आवृत्त सोमयाग मात्र में ही सन्तर्दन होगा, किन्तु अग्निष्टोम की 'उक्थ्य' आदि संस्थाओं में सन्तर्दन नहीं होगा, कारण, अग्निष्टोम में जिस कारण से सन्तर्दन नहीं हो सकता है, ठीक उसी कारण से ही 'उक्थ्य' आदि संस्थाओं में भी 'सन्तर्दन' सम्भव नहीं है और विधिवाक्य का 'दीर्घसोम' यह विशेषण भी अग्निष्टोम में सन्तर्दन का बाधक है।

"संस्थाः च" = संस्था अर्थात् सोम की अग्निष्टोम आदि संस्था भी सन्तर्दन का आश्रय नहीं है। अर्थात् अग्निष्टोम आदि संस्थाओं में भी सन्तर्दन नहीं होगा, "कर्तृवत् धारणाविशेषात्" = क्योंकि, वह कर्ता का अर्थात् यजमान के दीर्घत्व के समान धारण में अर्थात् धृति में अविशिष्ट अर्थात् उसी के समान अप्रयोजक है ॥ २८ ॥ अ.शङ्का।

भा० प्र०—पूर्वपक्षी की पूर्वोक्त आशङ्का के उत्तर में सिद्धान्ती का कहना है कि "उक्थ्यादिषु वा" उक्थ्य आदि अग्निष्टोम संस्थाओं में भी सन्तर्दन कर्तव्य है, कारण,

---

१. इद सूत्र भाष्ये व्याख्यातम्।

"अर्थस्य विद्यमानत्वात्" = उसमें दृढ संश्लेषण करना प्रयोजनीय है, क्योंकि, अग्निष्टोम में जिस परिमाण में सोम का निर्यास आवश्यक है, 'उक्थ्य' आदि में उसकी अपेक्षा अधिक सोम आवश्यक है, कारण, अग्निष्टोम में जितनी बार सोम की आहुति देनी पड़ती है, 'उक्थ्य' आदि स्थलों में उसकी अपेक्षा अधिक बार आहुति देने की विधि है। सोम के निर्यास के विना अधिक आहुति का देना सम्भव नहीं है। ग्रह अर्थात् जिस पात्र में सोम का रस निकाल आहुति देना पड़ता है, उसको सोम से पूर्ण किये विना अपूर्ण अवस्था में ही उसके द्वारा आहुति देना भी सम्भव नहीं है, इन कारणों से "उक्थ" आदि संस्थाओं में भी सन्तर्दन कर्तव्य है, क्योंकि, उसमें अधिक सोम आवश्यक होने से अधिक बार सोम को कूटने से फलक विदीर्ण हो सकता है, अतः उसकी धृति (धारण) करना आवश्यक है।

"उक्थ्यादिषु" = 'उक्थ्य' आदि में भी सन्तर्दन का उत्कर्ष होगा, "वा" = पूर्वपक्ष का निरासक है, "अर्थस्य विद्यमानत्वात्"—क्योंकि उसमें अर्थ = सन्तर्दन का प्रयोजन जो दृढ़संश्लेष है उसकी आवश्यकता होने से उसमें प्रयोजन विद्यमान है ॥ २९ ॥

आशङ्का का परिहार।

भा० प्र०—पूर्वोक्त विश्लेषण से 'उक्थ्य' आदि संस्थाओं में भी सन्तर्दन कर्तव्य है—इस सिद्धान्त के स्थिर होने पर उसके विरुद्ध पुनः आपत्ति का उत्थापन करते हुए पूर्वपक्षी का कहना है कि = "स्तुतिः व्यर्था" "उक्थ्य" आदि संस्था में यदि सन्तर्दन कर्तव्य होता तो विधिवाक्य समभिव्याहृत "धृत्यै" यह अर्थवाद व्यर्थ हो जायेगा। कारण, "अविशेषात्" प्रकृतिभूत अग्निष्टोम में जिस परिणाम में सोम का ग्रहण किया जाता है, विकृतिभूत 'उक्थ्य' आदि संस्था में भी उसी परिमाण में ही सोम का ग्रहण किया जाता है, अतः, दोनों स्थलों में सोम का कोई भी विशेष अर्थात् कमी या आधिक्य नहीं है। कारण, प्रकृतिभूत अग्निष्टोम में दशमुट्ठी सोम के ग्रहण का उपदेश है और विकृतिभूत 'उक्थ्य' आदि में भी उसका भी अतिदेश होगा, किन्तु, अधिक परिमाण में सोम के ग्रहण की कोई विधि नहीं है, अतः सोम का आधिक्य न होने से स्तुति विफल है। सोम के तीन पर्व वाला होने से बहुत पर्वों वाला सोम गृहीत नहीं हो सकता है, अतः उत्कर्ष करना चाहिए।

अविशेषात् = उक्थ्य आदि संस्था में सोम के परिमाण का विशेष न होने से "स्तुतिः व्यर्था" = इस पक्ष में अर्थवाद व्यर्थ हो जायेगा, "इति चेत्" = इस प्रकार की आशङ्का हो सकती है ॥ ३० ॥ आशङ्का।

## स्यादनित्यत्वात् ॥ ३१ ॥

**शा० भा०—नैतदस्त्युत्कर्ष इति। संस्थासु स्यात्। प्रकरणानुग्रहात्। अर्थाच्च प्रदेयविवृद्धया दारणशङ्कायामर्थवाद उपपद्यते। केन प्रकारेण प्रदेयं विवर्धिष्यत इति। विप्रकृष्टपर्वा सोमो ग्रहीष्यते। अपि च तृतीये सवनेऽशुरे-**

**कोऽभिषूयते। तस्य प्रमाणं च नाऽऽम्नातम्। तमनेकपर्वाणं च ग्रहीष्यति। तेन प्रदेयविवृ[1]द्धिर्भविष्यति। अतोऽर्थवादोऽवकल्पिष्यते। तस्मात्संस्थासु निवेश इति सिद्धम्॥ ३१॥ आ० निं०॥**

**इत्यैकादशं सन्तर्दनाधिकरणम्।**

त० वा०—स्याद्वा तेनैव हेतुना संस्थासु निवेशः। प्रदानविवृद्धया च प्रदेयविवृद्धौ सत्यामर्थवाद उपपत्स्यते। तोयेन विवृद्धिरिति चेत्? सोमसाधनत्वे सति वचनाद्विना द्रव्यान्तरप्रक्षेपानुपपत्तेः। तस्मात्सोम एव वर्धनीयः। स च स्थौल्यबहुपर्वत्वयोरसंभवाद्दीर्घपर्वा ग्रहीष्यते। तथा सति प्रदानविवृद्धिर्यथोक्तं च परिमाणं संभावितं भविष्यति। प्रकरणदीर्घसोमशब्दौ चोपपत्स्येते। शक्यं चेदानीं लतादैर्घ्येणापि सोमा दीर्घ इति वक्तुम्। अनित्यत्वादिति—नियतपरिमाणत्वस्यानियतत्वादिति मन्यते। शक्यं ह्युपायान्तरेण पूर्वपरिमाणमतिक्रमितुमित्यर्थः।

न त्वेतद्युक्तम्। सत्राहीनेष्वसंभवात् अतः 'अवशिष्टानंशूनभ्यूहेत्' इत्यभ्यूहो योऽनियतपरिमाणः तदाभिप्रायं 'स्यादनित्यत्वात्' इत्येतद्व्याख्येयम्। संस्थाधिकरणन्यायेनैव वा प्रकरणविरोधं ब्रुवाणस्य नित्येनाग्रहणादित्यनित्यत्वमुत्तरमभिधीयते।

**तृतीयसवनेऽशुरेको** गृह्यत इत्यत्र विवदन्ते। तस्यापि तत एव सोमादुपादानादतोऽत्रापि विप्रकृष्टपर्वत्वमात्रमेव कारणं वक्तव्यम्। तस्मादपि संस्थासु निवेश इति। न त्वत्र संस्थास्वेवेत्यवधारयितव्यम्। कुतः?

अग्निष्टोमान्यमात्रे विवेश इत्युपपादनम्—

अग्निष्टोमान्यमात्रे हि दीर्घशब्दोऽवकल्पते।
अथान्येनेतिवत्तस्मात्संस्थाक्रत्वन्तरग्रहः॥

यथैव 'य एतेनानिष्ट्वाऽन्येन यजेत्' इत्येतन्न संस्थास्वेव स्थास्यति। किं तर्हि? अग्निष्टोमव्यतिरेकमात्रे। तथा दीर्घत्वमप्यग्निष्टोमातिरिक्तमात्रावलम्बनमशक्यं प्रकरणेन सस्थास्वेव स्थापयितुम्। प्रकृतिवच्छब्दपूर्णत्वाच्च न तासां प्रकरणमस्ति। न ह्येतद् गृहीतं प्राकृतं किंचिदङ्गं पुनरुच्चार्य विधीयते, प्रथमोपदिश्यमानज्योतिष्टोमधममध्यपातित्वात्। इतश्च न संस्थानां प्रकरणमस्ति। कथम्?

असंबद्धव्यवाये हि सति तद्विनिवर्तते।
तेनाऽऽसां ज्यौतिषैर्धर्मैर्विच्छिन्ने नानुषङ्गधीः॥

---

१. ब. प्रदेयं विवर्धिष्यते।

यदि हि संतर्दनमुक्थ्यादीन्विधायाऽत्रान्तरप्रकरणे श्रूयेत, ततः स्यादपि प्रकरणग्रहणम्। इदं तु संस्थाधिकरणन्यायेन तदग्राह्यैर्ज्योतिष्टोमधर्मैरन्तरितत्वान्न संस्थाकथंभावानुषङ्गेण संस्पृश्यते। तस्मान्न प्रकरणं, संस्थानं वा संस्थासु विनियोजकम्। किं तर्हि ? वाक्यमेव। तच्च दीर्घसोमत्वाविशेषात्सत्त्वाहीनेष्वपि तुल्यमिति सर्वधर्मता॥ ३१॥

इत्येकादशं संतर्दनाधिकरणम्॥ ११॥

न्या० सु०—परिचोदनापदानामेव सिद्धान्तत्वोक्त्यर्थत्वेन सूत्रव्याख्यार्थं नैतदित्यादिभाष्यं व्याचष्टे—**स्यादिति**। प्रकरणानुग्रहादिति भाष्यावयवव्याख्यार्थम् तेनैवेत्युक्तम्। संस्थासु सन्तर्दननिवेशोऽप्यर्थवाद उपपन्नः स्यादित्येवमावृत्त्या स्याच्छब्दव्याख्यार्थमर्थाच्चेति भाष्यं व्याचष्टे—**प्रदानेति**। तोयवृद्ध्या प्रदानवृद्धिसम्भवशङ्कानिराससूचनार्थत्वेन भाष्यस्थां प्रदेयोक्तिं व्याख्यातुमाह—**तोयेनेति**। मुष्टिपर्वसंख्याविरोधात्सोमवृद्ध्ययोगं पूर्वपक्षोक्तं केनेति भाष्येणानुभाष्यं पर्वदैर्घ्यात्सोमवृद्धिसंभवोक्त्यर्थत्वेनानित्यत्वादिति सूत्रावयवव्याख्यार्थं विप्रकृष्टेति भाष्यं व्याचष्टे—**स चेति**।

तृतीयसवनेंऽशोरेकस्याभिषूयमाणस्यानेकपर्वणः स्थूलपर्वणाश्च ग्रहणादपि प्रदेयवृद्ध्युपपत्तेः दीर्घपर्वत्वकल्पनायोगशङ्कां तस्यापि दशमुष्टेरेव सोमादुपादानात्स्थौल्येऽपि प्रदेयवृद्ध्यसंभवात्त्रित्वविरोधेन च बहुपर्वत्वस्यासंभवान्निराकर्तुं स्थौल्येत्युक्तम्। सप्तमीषष्ठ्योस्तन्त्रेण द्विवचनं योज्यम्। पर्वदैर्घ्यं विधिं विना कथं गम्यतइत्याशङ्क्य, प्रदानवृद्धिमुष्टिपर्वसंख्यासंभवान्यथानुपपत्त्येति परिहारं सूचयितुमाह—**तथा सतीति**। सत्राहीनेषु संतर्दननिवेशे पर्व्वदैर्घ्यं विनापि प्रदानवृद्धिमुष्टिपर्वसंख्यासंभवोपपत्तेर्नान्यथानुपपत्तिरस्तीत्याशङ्क्य संस्थासु दीर्घसोमशब्दोपपत्तेर्वाक्याविरुद्धेन प्रकरणेन संस्थास्वेव निवेशावगमान्नान्यथोपपत्तिरस्तीति परिहारं सूचयितुमाह—**प्रकरणेति**। प्रकरणस्योपपत्तिविरोधः। संस्थासु च निवेशे सोमशब्दवाच्याया लतायाः स्वत एव दैर्घ्योपपत्तेः कालद्वारदैर्घ्यकल्पनायाः सोमशब्दस्य यागपरत्वकल्पनायाश्चाभावादांजस्येन दीर्घसोमशब्दोपपत्तिरित्याह—**शक्यं चेति**। विप्रकृष्टपर्वत्वस्यानित्यत्वादिति सूत्रावयवोक्तत्वोपपादनायोक्तेऽर्थे सूत्रावयवं योजयति—**अनित्यत्वादिति**।

दशमुष्टित्रिपर्वत्वनियमेनाग्निष्टोमसंस्थायां नियतस्य सोमपरिमाणस्योक्थ्यादिसंस्थास्वप्यतिदेशप्राप्तस्य प्राकृतनियमाबाधे बाधायोगात्कथमनियतत्वाख्यमनित्यत्वमित्याशंक्य, दशमुष्टित्रिपर्वत्वनियमाबाधेऽपि दीर्घपर्वग्रहणाख्येनोपायान्तरेणाग्निष्टोमसंस्थागतं परिमाणं बाधितुं शक्यमित्याह—**शक्यं हीति**। दीर्घसोमशब्दस्य दीर्घकालसोमयागवाचित्वेन सन्तर्दनविध्यपेक्षिताङ्गिसमर्पणोपयोग-सम्भवेऽनपेक्षितनिमित्तमात्रसमर्पणो -पयोगापादकलतादैर्घ्यवाचित्वाभ्युपगमायोगाद्दीर्घकालसोमयागमात्रवाचित्वावगतेः संस्थास्विव सत्राहीनेष्वपि सन्तर्दनविध्यवगमात्, तत्तेषु च केषां चिदह्लामग्निष्टोमसंस्थत्वेन प्रदानवृद्धिरहिततया

प्रदेयवृद्धयै लतादैर्घ्यकल्पनायोगान्नेदं भाष्यकारीयमनित्यत्वोक्तिव्याख्यानं युक्तमित्येवं विप्रकृष्टेति भाष्यं दूषयति—**नन्विति**। सत्राहीनेष्वप्युक्थ्यादिसंस्थेष्वहस्सु प्रदानवृद्धयर्थं-प्रदेयवृद्धिसिद्धयै लतादैर्घ्यकल्पनसम्भवेन पूर्वपरिमाणातिक्रमसम्भवात्सामस्त्येन भवन-मुपपत्तिः सम्भवोक्तयोक्ता। यत्र प्रदेयवृद्धिरपेक्ष्यते, तत्र लतादैर्घ्यकल्पनं भविष्यतीत्या-शङ्क्य दशमुष्टयवशिष्टलताद्रवीकरणविधाववशिष्टानां लतानामनियतपरिमाणत्वादतिरिक्त-लताद्रवीकरणेन प्रदेयवृद्धयुपपत्तेर्न क्वचिल्लतादैर्घ्यकल्पना युक्तेति परिहारं सूचयन्न-वशिष्टलताभ्यूहपरिमाणस्यानित्यत्वादित्येवं सूत्रावयवं व्याचष्टे—**अत इति**।

यद्वा न प्रदेयवृद्धिप्रकारोपपादनानित्यत्वोक्तिः, किं तु स्यादिति सूत्रावयवेन प्रकरणानुग्रहात्संस्थासु संतर्दनं स्यादित्युक्ते संस्थानां प्रकरणाभावस्य संस्थाधिकरणे वक्ष्यमाणत्वात्संस्थास्वपि निवेशे प्रकरणविरोधापत्तेस्तदनुग्रहो न सम्भवतीति ब्रुवाणस्य न संस्थानां प्रकरणाभावो वक्ष्यते किं तु प्रकरणाविशेषेऽपि नित्यानित्यसंयोगविरोधाद-समानतेति सूचनार्थं, धर्मान्तराणां नित्याग्निष्टोमगृहीतत्वेन नित्यत्वादनित्याभिः संस्थाभिर-ग्रहणं, सन्तर्दनस्य तु नित्याग्निष्टोमागृहीतत्वेनानित्यत्वात्संस्थाभिर्ग्रहणमविरुद्धमित्युत्तरम-नित्यत्वोक्तयोच्यतइत्येवं व्याख्येयमित्याह—**संस्थाधिकरणेति**। तृतीयसवनेऽभिपूयमाणे-कांशुपरिमाणस्यानित्यत्वादित्येवं व्याख्यान्तरार्थम्—**अपि चेति**। अपिचेति भाष्य-मेकस्याप्यंशोर्दशमुष्टेस्त्रिपर्वण एव सोमादुपादानात्प्रदेयवृद्धिकारणत्वानुपपत्तेर्दूषयति—**तृतीयेति**। विहितावशिष्टांश्वभ्यूहपरिमाणानियमेनैत्र प्रदेयवृद्धिसिद्धेर्विप्रकृष्टपर्वत्वकल्पन-निरासंऽवशिष्टांश्चभ्यूहपरिमाणानित्यत्वाशयत्वेनानित्यत्वोक्तिव्याख्यया सूचितेपि प्रकरण-विरोधशङ्कोत्तरत्वेनानित्यत्वोक्तिव्याख्यापन्नेन केन चिद्भाष्येणानित्यत्वोक्तिव्याख्यायते विप्रकृष्टेति भाष्यद्वयं तु विप्रकृष्टपर्वत्वात्तृतीयसवनेंशोरेकस्याभिपूयमाणस्यानेकस्थूल-पर्वत्वाप्रदेयस्य सोमस्य वृद्धयाख्यो विशेषः स्यादित्येवं प्रदेयवृद्धिप्रकारोपपादनार्थत्वेना-वृत्त्या स्याच्छब्दव्याख्यार्थमिति सूचनायैकस्मिन्नप्यंशौ विप्रकृष्टपर्वत्वमात्रं प्रदेयवृद्धिकारणं वाच्यं न त्वनेकस्थूलपर्वतेत्या—**अत इति**। मात्रशब्देनैव कारणान्तरनिराससिद्धावपि कारणान्तरनिरासमात्रे तात्पर्यं, न तु विप्रकृष्टपर्वत्वस्य कारणोक्ताविति सूचनायैत्रकारः। तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**तस्मादपीति**। संस्थावत्सत्राहीनेष्वपि निवेशे इति स्वाभिमतसिद्धान्तसूचनायापिशब्दः। अनुत्कर्षप्रतिज्ञालोचनया, प्रकरणानुग्रहोपपत्त्या-लोचनया च संस्थामात्रनिवेशसिद्धान्तावगतेः सत्राहीनेष्वपि निवेशसूचनार्थोऽपिशब्दो न युक्त इत्याशंक्य, संस्थामात्रनिवेशसिद्धान्तायोगं प्रतिजानाति—**नत्विति**। प्रश्नपूर्वमुप-पादयति—**कुत इति**। 'एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वान्यथान्येन यजेतगर्त्तपत्यमेव तज्जायते प्रावमीयत इति ज्योतिष्टोमात्प्राग्यदन्ययजनं तद्गर्तपतन-तुल्यम्। तस्माद्यान्येन प्राग्यजेत सजरां मृत्युं वा स्वप्नोतीति निन्दाकल्प्यप्राग्यजननिषेध-द्वारज्योतिष्टोमोत्तरकालत्वविधिवाक्ये य एतेनेत्यग्निष्टोमः प्रकरणादि(५-३-३७)ति पञ्चमा-धिकरणेनैतच्छब्दस्याग्निष्टोमसंस्थामात्रज्योतिष्टोमवाचितामुक्त्वा अर्थान्येनेति संस्थानां

सन्निधानादित्यनेनान्यशब्दस्य सर्वनामत्वेन सन्निहितवाचित्वाद्यागान्तराणां च संस्थाभिर्व्यवधानात्संस्थामात्रवाचित्वं पूर्वपक्षयित्वा, 'तत्प्रकृतेर्वापत्तिविहारौ न हि तुल्येपूपपद्येते' (५-३-४०) इत्यनेनान्यशब्दस्यानन्तर्याख्यसंनिध्यपेक्षायायामुख्यमात्रवाचित्वापत्तेस्तस्य च स्वशब्देनोक्तिसम्भवं सन्देहापादकान्यशब्दानर्थक्यप्रसङ्गाद्बुद्धिस्थत्वाख्यसंनिध्यपेक्षावगतेर्ज्योतिष्टोमप्रकृतिकत्वेन च सर्वेषां तद्विकाराणां बुद्धिस्थत्वाविशेषादग्निष्टोमान्यलाघवाचितायाः सिद्धान्तयिष्यमाणत्वाद्यथान्यशब्दोऽग्निष्टोमान्यमात्रेऽवकल्पते, तथादीर्घसोमशब्दोपीत्यर्थः—**श्लोकं व्याचष्टे-यथैवेति** ।

संस्थानां प्रकरणसद्भावाभ्युपगमेऽपि वाक्येन प्रकरणबाधात्सर्वधर्मतैव युक्तेति प्रौढिप्रदर्शनार्थं प्रकरणेनेत्युक्तम् । वस्तुतस्तु प्रकृतिवच्छब्देन संस्थानां निराकांक्षीकृतत्वात्प्रकरणं नास्तीति, अथवास्त्येव संस्थानां प्रकरणमिति पूर्वपक्षवार्त्तिकोक्तं प्रकरणविशेषं निराकर्तुमाह—**प्रकृतिवच्छब्देति** । कथं तर्हि दैक्षाद्यानां विकृतीनां प्रकरणेन पृषदाज्यादिग्रहणमित्याशंक्य, पृषदाज्येनानुयाजान्यजतीति प्राकृतानुयाजानुवादेन पृषदाज्यविधानात् प्राकृताङ्गग्रहणवेलायामेव पृषदाज्यग्रहणप्रतीतेस्तदानीं च नैराकाङ्क्ष्याभावात्प्रकरणेन पृषदाज्यं यथा गृहीतं, तथा यदि संस्थाभिर्गृहीतं किञ्चित्प्राकृतमङ्गमनूद्य सन्तर्दनं विधीयेत, ततस्ताभिः प्रकरणेन सन्तर्दनं गृह्येत, न त्वेतदस्ति ज्योतिष्टोमधर्ममध्यपातित्वात्संतर्दनस्येत्याह—**नहीति** ।

संस्थानामपि ज्योतिष्टोमान्तः पातित्वेन सन्निधानाविशेषात्फलवत्वाविशेषाच्च ज्योतिष्टोमस्यैव, दीक्षणीयादयो धर्मा, न संस्थानामिति कथं गम्यतइत्याशंक्य, 'नासौ साध्यस्य भवन्ती साधनेन सम्बध्यतइत्यादिसंस्थाधिकरणभाष्यवक्ष्यमाणन्यायसूचनार्थं प्रथमं ज्योतिष्टोमार्थतयोपदिश्यमानातोक्ता । संस्थानां धर्माकाङ्क्षासद्भावाभ्युपगमेऽपि संस्थावान्तरप्रकरणे सन्तर्दनापाठान्न सन्तर्दनविधिवेलायां संस्थानां प्रकरणमस्तीत्याह—**इतश्चेति** । श्लोकं व्याचष्टे—**यदि हीति** । असम्बद्धपदव्यवायेनैव प्रकरणवत्सन्निधानाख्यस्य स्थानस्यापि निवृत्तेस्तदपि न संस्थासु सन्तर्दनविनियोजकमिति स्थानंवेत्यनेन प्रसङ्गादुक्ते, कथं तर्हि संस्थासु सन्तर्दननिवेश इति किं तर्हीत्यनेन पृष्टे वाक्यमेवेत्युक्तम् । दीर्घसोमशब्दस्य लतादैर्घ्यवाचित्वात्संस्थास्वेव च तार्तीयसवनिके सकृदभिषवे प्रदेयवृद्ध्यै लतादैर्घ्यापेक्षणाद्वाक्यमपि तास्वेव विनियोक्ष्यतीत्याशङ्‌क्याह—**तच्चेति** । दशमुष्टयवशिष्टलताभ्यूहपरिमाणानियमादतिरिक्तलताभ्यूहेनैव प्रदेयवृद्धिसिद्धेर्लतादैर्घ्यानपेक्षणादपेक्षिताङ्गिसमर्पणोपयोगित्वार्थं च दीर्घसोमशब्दस्य यागपरत्वावसायात्त मंधारयेण च यागवाचित्वसम्भवे दीर्घः सोमोऽस्मिन्नस्तीति बहुव्रीह्याश्रयणायोगाद्दीर्घकालसोमयागमात्रवाच्ययं शब्द इत्याशयः ।

सूत्राणि तु पदोत्तरसूत्रेण संस्थास्वेवेत्यवधारणां निरस्योक्थ्यादिषु वेति सूत्रेणापिशब्दार्थे वाशब्दमङ्गीकृत्योक्थ्यादिषु चेति चकारयुक्तमेव वा पाठं कृत्वोक्थ्यशब्देन वा

संस्थास्तिस्रोऽप्यादिशब्देन च सत्राण्यहीनांश्चोक्त्वा संस्थासु सत्राहीनेषु च दीर्घसोम-शब्दार्थस्य दीर्घकालसोमयागत्वस्य विद्यमानत्वात्सन्तर्दनं स्यादिति द्वितीयपूर्वपक्षोक्तं सत्राहीनमात्रविषयतयोत्कर्षनिरासेनाग्निष्टोमान्यमात्रविषयतयोत्कर्षे सिद्धान्तिते संस्थासु प्रदेयस्य सोमस्य दशमुष्टित्रिपर्वत्वनियमेन वृद्ध्याख्यविशेषाभावान्निरालम्बनस्तुत्यापत्ते-रग्निष्टोमान्यमात्रविषयसिद्धान्तायोगविशेषादिति सूत्रेणाशङ्क्यावशिष्टांशवम्यूहपरिमाण-स्यानियत्वात्संस्थास्वपि प्रदेयस्य वृद्ध्याख्यो विशेषः स्यादित्यन्त्यसूत्रेण परिह्रियतइत्येवं व्याख्येयानि सिद्धान्तसूत्रस्थमनुत्कर्षभाष्यं प्रकरणानुग्रहभाष्यं चोपेक्षणीयम् ॥ ३१ ॥

इत्येकादशं सन्तर्दनाधिकरणम् ।

भा० प्र०—पूर्वोक्त पूर्वपक्षी की आपत्ति के उत्तर में सिद्धान्ती का कहना है कि "स्यात् अनित्यत्वात्" विकृतिभूत उक्थ्य आदि संस्था में अतिदेश प्राप्त परिमाण अनित्य होने से अर्थात् नियत न होने से अर्थात् तृतीय सवन में सोमलता का जो अंश कूटा जाता है वह परिमाण नियमबद्ध नहीं है, वह इतनी अङ्गुलि परिमाण में लम्बा, इस परिमाण में स्थूल—इस प्रकार का नियमन होने से सोम की वृद्धि होगी, कारण, ऐसा न होने से उक्थ्य आदि में जो अधिक दिया जाता है, वह प्रदेय सोम की वृद्धि = आधिक्य न होने से उपपन्न नहीं होगा और ऐसा होने पर विदारण के निवारण करने के लिए सन्तर्दन आवश्यक होने से "धृत्यै" यह अर्थवाद इस पक्ष में व्यर्थ नहीं होता है, किन्तु वह इस स्थल में सुसम्बद्ध ही होता है। इसीलिए सन्तर्दन 'द्विरात्र' आदि आवृत्त सोमयाग में किया ही जाता है और 'उक्थ्य' आदि अग्निष्टोम संस्था में भी अनुष्ठेय है।

आशय यह है कि प्रकरण के कारण और प्रयोजन से प्रदेय सोम की अधिकता में अधिषवण फलक के टूटने की आशङ्का से "धृत्यै" यह अर्थवाद उपपन्न होता है। प्रदेय सोम दूर पर्ववाला लिया जायेगा और तृतीय सवन में एक अंशुग्रह के लिए सोम का अभिषव होता है, किन्तु उसका परिमाण नहीं कहा गया है, उसको अनेक पर्वों से युक्त बड़े पर्ववाला ग्रहण करेंगे, फलतः सोम की वृद्धि होगी, अतः "धृत्यै" यह अर्थवाद उपपन्न होगा, अतः सन्तर्दन उक्थ्यादि में सन्निवेश होता है।

भाष्य में विप्रकृष्टपर्वा जिसमें दूर-दूर पर गाँठ है अर्थात् बड़े-बड़े पर्ववाला। आचार्य कुमारिल "तृतीयसवणेऽशुरेको गृह्यते" इसकी व्याख्या में लिखा है। तृतीय सवन के अंशुग्रह के लिए भी पूर्व-वर्णित सोम से ही ग्रहण होने से विप्रकृष्टपर्वमात्र का ग्रहण होना उचित है, यह कहा है। भाष्यकार ने अधिषवण फलकों के सन्तर्दन का उक्थ्यादि संस्थाओं में विधान किया है, किन्तु भट्टमत से उक्थ्यादि संस्था से अन्यत्र द्विरात्र आदि अहीनों में तथा सत्रों में भी सन्तर्दन का विधान माना है "तत्र च दीर्घसोमत्वाविशेषात् सत्राहीवेष्वपि तुल्यमिति सर्वधर्मता"।

"स्यात्" = होगा अर्थात् सोम की वृद्धि होगी, "अनित्यत्वात्" = क्योंकि दशमुट्ठी परिमाण अनित्य है। आशङ्कानिरसन ॥ ३१ ॥

एकादश सन्तर्दन अधिकरण।

### अथ द्वादशं प्रवर्ग्याधिकरणम्

## [१२] संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ ३२ ॥ पू०

**शा० भा०—ज्योतिष्टोमे प्रवर्ग्यं प्रकृत्य समाम्नायते 'न प्रथमयज्ञे प्रवृञ्ज्यात्, द्वितीये तृतीये वा प्रवृञ्ज्यात्', इति। तत्र संदेह—किं ज्योतिष्टोमे सर्वेष्वेव प्रयोगेषु न प्रवर्जितव्यम्, उत प्रथमे प्रयोगे प्रतिषेध इति। किं तावत्प्राप्तम्। ज्योतिष्टोमे प्रतिषेधः। कुतः ? यज्ञसंयोगात्। प्रथमशब्देन यज्ञोऽभिधीयते ज्योतिष्टोमः तस्य हि प्रथमसंयोग एवं समाम्नायते। 'एष वाव प्रथमो यज्ञो यज्ञानां (यज्ज्योतिष्टोमो) य एतेनाऽनिष्ट्वाऽथान्येन यजेत्' इति। यज्ञानां प्रथम इति कृत्वा प्रथमशब्देन ज्योतिष्टोमोऽभिधीयते। एवं च प्रकरणमनुगृह्यते। यदि क्रतोरेष वादः। तस्मात्संख्यायुक्तः प्रतिषेधो ज्योतिष्टोमस्य प्रवर्ग्यं प्रतिषेधेदिति ॥ ३२ ॥ पूर्वपक्षः ॥**

### अथ द्वादशं प्रवर्ग्याधिकरणम्

त० वा०—प्रवर्ग्योऽनारभ्य कंचित्क्रतुविशेषमाम्नायते 'यत्प्रवर्ग्यं प्रवृञ्जन्ति' इति। च स वाक्यसंयोगेन क्रतुसंबन्धं प्रतिपद्यते 'पुरस्तापसदां प्रवर्ग्येण चरन्ति' इति स च 'प्रकृतौ वा द्विरुक्तत्वात्' इत्येवं ज्योतिष्टोमं गच्छति। तत्र ह्युपसदः प्रत्यक्षविहिताः सन्ति। विकृतौ तु यावदनुमानेन ता गमिष्यन्ति, तावत्प्रवर्ग्योऽपि यास्यत्येवेति, नार्थं उपदेशेन। तेनाऽऽह—**ज्योतिष्टोमे प्रवर्ग्यं प्रकृत्य** श्रूयत इति।

यद्वा कौषीतकिब्राह्मणे ज्योतिष्टोमप्रकरण एव स्वक्रमस्थस्य प्रवर्ग्यस्योत्पत्तिः तदा तद्विषयः श्रवणोपन्यासो यथाश्रुत एव भवति। तं प्रवर्ग्यं प्रकृत्य श्रूयते 'न प्रथमे यज्ञे प्रवृञ्ज्यात्' इति। तत्र संदेहः—किं प्रथमयज्ञग्रहणेन सर्वसंस्थः सर्वप्रयोगावस्थश्च ज्योतिष्टोमो गृह्यत उत प्रथमप्रयोगमात्रमिति। तत्र किं प्राप्तम्। यज्ञशब्दसामानाधिकरण्यात् 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इति च प्रयोगात्प्रथमशब्दस्य ज्योतिष्टोमपर्यायत्वं विज्ञायते। 'य एतेनानिष्ट्वा' इति च सर्वयज्ञेभ्यः प्रथमं प्रयुज्यमानत्वेन विधानादेतस्यैव ग्रहणम्। तथा च प्रकरणमनुगृह्यते। ननु च तदीयप्रथमप्रयोगेऽपि प्रकरणानपकर्षादस्त्येवानुग्रहः। कथमनुग्रहो यदा दीक्षितहोमदानपाकादिप्रतिषेधवदयं

सर्वप्रयोगविषयः प्राप्नुवन्वाक्येनैकप्रयोगनिबन्धनः क्रियते। न हि तदा प्रकरणेन किंचन व्याप्रियते। ज्यौतिष्टोमिकप्रयोगाश्रयणस्यापि वाक्यकृतत्वात्। यदीहान्यः कश्चित्प्रथमप्रयोगार्हः स्यान्नैवेष प्रतिषेधो ज्योतिष्टोम एवावतिष्ठेत। तदभावात्तु यदि परिशेषादिदं वाक्यं संयुक्तप्राथम्यानुरोधेन ज्योतिष्टोमगामि भवेत्ततः प्रकरणस्य किमित्यवधारणाद्बाधः प्रसज्येतैव। तस्मात्प्रकरणानुग्रहार्थमपि प्रथमशब्दोपात्तादिसंख्यायुक्तमिदं ज्योतिष्टोमे स्यादिति॥ ३२॥

### अथ द्वादशं प्रवर्ग्यत्वाधिकरणम्॥ १२॥

न्या० सु०—वाक्यप्रकरणविरोधाविरोधचिन्तात्मकत्वेनावान्तरप्रकरणसङ्गतिसूचनपूर्वं विषयोक्त्यर्थं ज्योतिष्टोमइतिभाष्यं बह्वीषु शाखासु प्रवर्ग्यस्यानारभ्याधीतत्वेन ज्योतिष्टोमप्रकरणपाठाभावादयुक्तमाशङ्क्यानारभ्याधीतत्वेऽप्यव्यभिचरितक्रत्वन्वयाभिरूपसद्भिर्वाक्यकृतेनान्वयेन क्रत्वन्वयं प्राप्तस्य प्रकृतौ वेतिन्यायेन ज्योतिष्टोमगमनासयतया तावत्परमतेनोपपादयति—**प्रवर्ग्यं इति**। सर्वार्थत्वे द्विरुक्तत्वापत्ति प्रकृते योजयितुं—**तत्र हीत्युक्तम्**। एवं ज्योतिष्टोमगमनेऽपि ज्योतिष्टोमप्रकरणे प्रवर्ग्यपाठाभावाद्भाष्यानुपपत्तिमाशङ्क्यज्योतिष्टोमे न्यायाद्भवन्तं प्रवर्ग्यमिति भाष्यार्थो न तु ज्योतिष्टोमे प्रकृत्येत्येवं भाष्यव्याख्यायां सूचयितुं—**तेनेत्युक्तम्**। येन कारणेन प्रवर्ग्यो ज्योतिष्टोमे गच्छति तेन कारणेन ज्योतिष्टोम इत्याह, न तु ज्योतिष्टोमे प्रकृतत्वेनेत्यर्थः।

एवं व्याख्यायां प्रवर्ग्यनिषेधस्य ज्योतिष्टोमाङ्गत्वपूर्वपक्षोपयोगसम्भवेऽपि प्राकरणिकज्योतिष्टोमाङ्गत्वाभावात्प्रकरणविरोधाविरोधचिन्तात्मकत्वासिद्धेः सङ्गत्यनुपयोगप्रसङ्गादेतद्व्याख्यानापरितोषेणर्ज्जुवृत्यैव स्वमतेनोपपादयति—**कौषीतकीति**। मृदूक्त्यर्थस्तदाशब्दः। अस्मिन्पक्षे ज्योतिष्टोमप्रकरणे प्रवर्ग्यं प्रकृत्येति व्याख्यासूचनार्थं तमित्यनेन ज्योतिष्टोमप्रकरणएवोपसद्यः प्रागुत्पन्नमित्युक्तम्। द्वितीयतृतीयशब्दयोर्यागवाचित्वशङ्कानुपपत्तेः प्रयोगवाचित्वस्य निःसन्दिग्धत्वात्, तत्तत्साहचर्येण प्रथमशब्दस्यापि प्रयोगवाचित्वावसायात्सिद्धान्तोपयोगित्वैन द्वितीयेत्यादिवाक्यशेषो भाष्ये पठितो न तूदाहरणत्वैनेति सूचनार्थं निषेधमात्रं पठितम्। भाष्योक्तस्य सन्देहस्य हेतुभूतं सन्देहमाह—**तत्रेति**। य एतेनेत्येतच्छब्दवत्प्रथमयज्ञशब्दस्यापि प्रकरणादग्निष्टोमसंस्थज्योतिष्टोमवाचित्वावगतेरतिरात्रसंस्थज्योतिष्टोमप्रथमप्रयोगपक्षे निषेधायोगादतिरात्रसंस्थस्य प्रथमाहारे प्रतिषेध इत्यादिवक्ष्यमाणवार्तिकानुपपत्तिशङ्कानिरासायैतच्छब्दस्य सर्वनामत्वाभावेन प्रकृतवाचित्वनियमाभावात्प्रकरणानुरोधेनवश्रुतिसंकोचायोगात्सर्वसंस्थाज्योतिष्टोमवाचितोक्त्यै भाष्यानारूढमपि सर्वसंस्थ इत्युक्तम्। किं तावदिति भाष्येण पूर्वपक्षं प्रतिज्ञाय कुतइति हेतुं पृष्ट्वा वाक्यविरोधे प्रकरणव्यापारात्सौत्रहेत्वपरितोषेण ज्योतिष्टोमाङ्गत्वप्रतिज्ञार्थस्य सौत्रस्य क्रतुशब्दस्यैवावृत्त्या प्रथमशब्दस्य वाचकतया ज्योतिष्टोमाख्यक्रतुसम्बन्धित्वादित्येवमर्थत्वमङ्गीकृत्य हेत्वर्थतयापि व्याख्यार्थं प्रथमशब्दस्य ज्योतिष्टो-

माख्ययज्ञवाचित्वं प्रथमेति भाष्यावयवेन प्रतिज्ञाय, तदुपपादनार्थंत्वेनापि क्रतुशब्द-व्याख्यार्थं—**यज्ञेत्युक्तम्**। तत्प्रथमयज्ञशब्दे प्रथमश्चासौ यज्ञश्चेति प्रथमशब्दस्य सामानाधिकरण्यलक्षणाद्यज्ञसंयोगादेष वा वेति वाक्ये वा प्रयोगलक्षणाज्ज्योतिष्टोमाख्ययज्ञसंयोगादित्येवं द्वेधा व्याचष्टे—**यज्ञशब्देति**। आद्यव्याख्यायामुद्भिदादिवत्सामानाधिकरण्यं नामत्वहेतुः। द्वितीयस्यां वैदिकः प्रयोगः क्रतुशब्दोऽपि प्रथमशब्दस्य समानाधिकरणतया प्रयुज्यमानतया वा क्रतुसम्बन्धित्वादित्येवं द्विधायोज्यः। प्रथमशब्दस्य ज्योतिष्टोमे प्रवृत्तिनिमित्तोक्त्यर्थं तस्य हीत्यादिभाष्यं व्याचष्टे—**य इति**। अन्वाचयत्वेनसौत्रहेतुव्याख्यार्थमेवं चेतिभाष्यं व्याचष्टे—**तथा चेति**। एवं चेत्यनेनैव ज्योतिष्टोमवाचित्वपरामर्शाद्यदीति भाष्यावयवानर्थक्यमाशंक्य शङ्कोत्तरत्वेन व्याख्यास्येच्छङ्का तावदाह—**ननु चेति**। एतच्छङ्कात्तरत्वेन यदीतिभाष्यावयवं व्याख्यातुमाह—**कथमिति**। वाक्येनैकप्रयोगविषयत्वकरणेऽपि ज्यौतिष्टोमिकत्वार्थं प्रकरणापेक्षणात्तदनुग्रहो भविष्यतीत्याशङ्क्याह—**नहीति**। यागान्तरीयप्रथमप्रयोगविषयत्वेऽपि वाक्योपपत्तेर्ज्यौतिष्टोमिकत्वाश्रयणस्य वाक्यकृतता न युक्तेत्याशंक्याह—**यदि हीति**।

पारिशेष्यानुगृहीताद्वाक्यादेव ज्यौतिष्टोमिकप्रथमप्रयोगविषयत्वसिद्धेः प्रकरणस्य न किञ्चित्कार्यमस्तीत्यवधारणाद्बाधः स्यादेवेत्यर्थः॥ प्रथमशब्दोक्तसंख्यायुक्तं प्रवर्ग्यनिषेधनं ज्योतिष्टोमाख्यस्य क्रतोरङ्गं स्यादित्येवं सूत्रयोजनद्वारा पूर्वपक्षोपसंहारार्थं तस्मादिति भाष्यं प्रथमशब्दस्य संख्यावाचित्वाभावादयुक्तमाशङ्क्य, संख्यावाचित्वाभावेऽप्यादित्ववाचित्वादादित्वस्य वैकत्वसंख्यापेक्षत्वादिसंख्यानिबन्धनद्वितीयत्वाद्यनपेक्षित्वादेकत्वसंख्यैकान्तिकत्वावगतेः संख्यावाचित्वोपचारेणेयं संख्यावाचित्वोक्तिरित्युपपादनं सूचयन् व्याचष्टे—**तस्मादिति**। प्रकरणादपीत्येवं सौत्रहेतुव्याख्यासूचनायापि शब्दः॥ ३२॥

भा० प्र०—ज्योतिष्टोमप्रकरण में प्रवर्ग्य नामक कर्म के सम्बन्ध में श्रुति में कहा गया है "न प्रथमयज्ञे प्रवृञ्ज्यात्" प्रथम यज्ञ में प्रवर्ग्य कर्म न करें। (पात्र विशेष में स्थित शास्त्रीय भाव से तप्त घृत में शास्त्रोक्त नियम के अनुसार दुग्ध निक्षिप्त करने पर जो द्रव्य सम्पन्न होता है, उसको घर्म कहा जाता है, उस घर्म से सोमयाग से पूर्व में अनुष्ठित शास्त्रोक्त क्रिया प्रवर्ग्य कर्म है।) किन्तु द्वितीय या तृतीय में प्रवर्ग्यकर्म करना चाहिए। इस प्रसङ्ग में किया गया निषेध ज्योतिष्टोम यज्ञ के सभी प्रयोगों में प्रयोज्य है या ज्योतिष्टोम के प्रथम प्रयोग में ही प्रयोजनीय है—यही संशय हैं।

इसमें पूर्वपक्षी का कहना है कि "संख्यायुक्तं क्रतोः स्यात्", "न प्रथमयज्ञे प्रवृञ्ज्यात्" इस प्रकार संख्यायुक्त निषेध ज्योतिष्टोम के सभी प्रयोगों में ही प्रयोज्य है। कारण, "प्रकरणात्" क्योंकि ज्योतिष्टोम प्रकरण में ही यह पठित है और "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः" अर्थात् यह ज्योतिष्टोम सभी यज्ञों में प्रथम यज्ञ हैं, इति श्रुति वाक्य में ज्योतिष्टोम का ही प्रथम यज्ञ के नाम से अभिधान किया गया है।

"संख्यायुक्तं" = संख्यायुक्त निषेध अर्थात् "न प्रथमयज्ञे" यह जो निषेध है वह, "क्रतोः स्यात्" = क्रतु का अर्थात् समग्र ज्योतिष्टोमयज्ञ के पक्ष में ही प्रयोज्य होगा, "प्रकरणात्" = क्योंकि, वह ज्योतिष्टोम के प्रकरण में पढ़ा गया है। पूर्वपक्ष ॥ ३२ ॥

**नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ॥३३॥ सि०**

**शा० भा०—न चैतदस्ति। यज्ञस्यैष वाद इति। चतुर्ष्वपि वेदेषु न प्रथम इत्येवंसंज्ञकः कश्चिद्यज्ञोऽस्ति। भवति तु प्रथमो[1] यज्ञस्य प्रयोगः। कर्तृसंयोगात्। पूर्वस्य द्वितीयादीनपेक्ष्य प्रथमशब्दो भवति। स प्रयोगस्योपपद्यते, न क्रतोः। प्रयोगः श्रवणाद्गम्यते। क्रतुः प्रयोगसंबद्धत्वात्। श्रुतिश्च बलीयसी, न लक्षणा। तस्मात्प्रथमे प्रयोगे न प्रवर्जितव्यमिति।**

**अथ यदुक्तं ज्योतिष्टोमेन सामानाधिकरण्यात्तद्वचन इति। लक्षणया सामानाधिकरण्यमिति, तत्परिहृतम्। यत्तु प्रथमयज्ञ इति यज्ञशब्देन सामानाधिकरण्यं, तदपि यज्ञशब्दस्य यागवचनत्वादस्मत्पक्षस्याबाधकम् ॥ ३३ ॥ सिद्धान्तः ॥ इतिद्वादशं प्रवर्ग्यधिकरणम् ॥ १२ ॥**

त० वा०—यदि प्रथमशब्दोऽयं नाम स्याज्ज्योतिषः स्वतः।
तत एवं भवेदेष प्रयोगस्य तु वाचकः ॥

प्रथमशब्देन हि यत्कर्तुरप्रवृत्तपूर्वस्याऽऽद्यं प्रवर्तनं तदभिधीयते। न कर्म किंचित्। तद्योगात्तु कर्मणि प्रतीतिः स्यात्। साऽपि च तत्प्रयोगगतस्यैव। न हि द्वितीयादीन्प्रयुञ्जानः कश्चित्प्रथमं यजत इत्युच्यते। न चैवमयजमानस्य प्रथमयज्ञो नाम भवति। ततश्च पूर्वाभिहितप्राथम्यगुणलक्षणया तद्वति गृह्यमाणेऽर्थविप्रकर्ष आपद्यते। तत्र च स आश्रीयते यत्र तेन विनैकवाक्यत्वं नावकल्पते। यथा 'एष वाव प्रथमो यज्ञानाम्' इत्यत्र। न त्विह प्राथम्यस्य प्रतिषेधनिमित्तता न संभवति। येन पूर्वप्रतीतं सत्तदुल्लङ्घ्य तत्प्रयोगस्थोऽपि तावत्क्रतुर्गृह्येत। प्रयोगान्तरस्थस्तु दूरविप्रकृष्ट एव। नन्वेवं सति यस्य कस्यचित्प्रथमप्रयोगो निमित्तं प्राप्नोति। प्राप्नुयाद्यदि विधिरेष स्यात्। अयं तु प्रतिषेधत्वात्प्राप्तिमपेक्षमाणो लौकिकव्यापारेभ्यो वैदिकेभ्यश्चाध्ययनाधानाग्निहोत्रदर्शपूर्णमासादिभ्यः प्रवर्ग्यप्राप्त्यभावान्निवर्तमानः सामर्थ्येन सोमं गच्छति। तत्राप्यनारभ्यवादन्यायेन ज्योतिष्टोमं, प्रथमशब्दाच्च तस्याऽऽद्यं प्रयोगम्। एवं च सजातीयत्वेन प्रत्यासत्तेश्च तस्यैव द्वितीयादिप्रयोगापेक्षणं युक्ततरं भविष्यति। इतरथा तु दूरस्थयज्ञान्तरापेक्षायां सत्यां विप्रकृष्टतरत्वं भवेत्। तस्मात्प्रकरणं

---

१. ब० प्रथमं यज्ञप्रयोगः।

बाधित्वा वाक्येन प्रथमप्रयोगविषयता सिद्धा। तत्र तु केषांचित्तैत्तिरीयादीनाम् 'अग्निष्टोमे प्रवृणक्ति[१]' इति पुनर्विधानमस्ति। तद्यदि तावद् द्वितीयादिप्रयोग-विषयं कल्प्यते ततः प्रतिषेधाभावात्पूर्ववचनेनैव सिद्धेर्विधानानर्थक्यम्। तस्मा-दाद्यप्रयोगविषयमेवैतत्। ततश्च प्रतिषेधो बाध्यमानः क्रत्वन्तरप्रथमप्रयोगं सावकाशत्वाद् गच्छतीति केचित्। तत्तु न युक्तम्। अग्निष्टोमस्यापि संस्थारूप-स्यान्यत्रविद्यमानत्वात्। न च प्राथम्यं सावकाशम्। 'य एतेनानिष्ट्वा' इति केवलज्योतिष्टोमविषयत्वात्। प्रथमं हि यजनं प्रथमं यज्ञो न चैतदन्यस्य क्रतोरस्ति। तस्माज्ज्योतिष्टोमस्यैवातिरात्रसंस्थस्य प्रथमाहारे प्रतिषेधोऽग्निष्टोमे विधिरित्यपरे। विहितश्चातिरात्रस्यापि पाक्षिकः प्रथमाहारः 'तस्मात्प्रथमं यजमानोऽतिरात्रेण यजेत' इति। सोऽयं सामान्येनोभयोः संस्थयोः प्रतिषेधोऽग्नि-ष्टोमे तु विशेषविधिः स बलीयात्। एतदपि न युक्तम्। अग्निष्टोमस्यापि बहुप्रयोगान्तरक्रत्वन्तरगामित्वेन सुतरां सामान्यरूपत्वात्। अतोऽतिरात्रप्रथमा-हारे नित्यं प्रतिषेधोऽग्निष्टोमे तु विहित[२]प्रतिषिद्धत्वाद्विकल्प इति केचित्। अत्र पुनश्चोदयन्ति। यद्येष प्रतिषेधस्तत एवं स्यात्। पर्युदासास्त्वेवंविधा इति दशमे वक्ष्यते 'अपि तु वाक्यशेषः स्यात्' इति। न चासावग्निष्टोमवाक्यशेषो भवति। यदि ह्यप्रथमयज्ञेऽग्निष्टोमे प्रवृणक्तीति कल्प्येत ततस्तस्मादेव सामान्यशास्त्रा-त्प्राप्तत्वादग्निष्टोमयुक्तविध्यानर्थक्यमापद्यते। तेन सामान्यविधिरेवैष शेषो यत्प्रवर्ग्यं कुर्वन्ति तदप्रथमयज्ञ इति। ततश्चातिरात्रविषयत्वमेव फलतो भवति। न चैक एव शेष उभयोर्वाक्ययोः संभवति। एकसंबन्धेनैव कृतार्थत्वात्। तस्मा-दग्निष्टोमविधेर्निरपवादत्वान्नित्यमेव तत्र भवितव्यमिति। उच्यते। स्यादेतदेवं यद्ययं पर्युदासो भवेन्न त्वयं पर्युदासः। वाक्यशेषत्वानुपपत्तेः। तत्राग्निष्टोमवाक्ये तावद्ध्रुवतैव प्रतिपादितम्। अतिरात्रवाक्येऽपि यदि तदीयकथंभावपूरणवेला-यामेतदुच्येत ततः शेषो भवेत्। न तु तथोक्तम्। संस्था[३]नामसमानविधान-त्वादवान्तरप्रकरणे च प्रतिषेधाश्रवणात् न ह्यनेकज्योतिष्टोमिकवाक्यान्तरव्यव-हितातिरात्रप्रकृतिवच्छब्दस्यैष शेषोऽवकल्पते। तस्मात् 'न तौ पशौ' इति-वत्प्रतिषेध एवायं विज्ञायते। ननु प्रतिषेधोऽपि सत्प्रकृतिविषय एव प्राप्नोति। प्राप्नुयाद्यदि विकृतावपि नोपपद्येत। स तु प्राप्तिमात्रातेक्षित्वादुपदेशमतिदेशं वाऽनादृत्योभयत्रापि प्रवर्तते। शक्यं त्विह वक्तुं 'प्रकृतौ वा द्विरुक्तत्वात्' इति। ननु च तुल्यार्थत्व एतदेवं युक्तम्। अस्ति चेहार्थभेदः। प्रकृतौ वैकल्पिक-त्वादतिरात्रे च चोदकप्राप्तस्य नित्यप्रतिषेधात्। नैतदस्ति। वक्ष्यति ह्येतत्

---

१. क० प्रयोगक्रतुवाचकः। २. क० विहितप्रतिषेधात्।

३. क० संस्थासु नाम समाननामत्वात्।

प्रतिषेधः प्रदेशेऽनारभ्य विधाने च प्राप्तप्रतिसिद्धत्वाद्विकल्पः स्यात्' इति । यस्य शास्त्रादप्र प्राप्तिर्नास्ति तस्य प्राप्तिमनभ्यनुज्ञाय प्रतिषेधासंभवादवश्यं प्रतिषेधेनैव तद्विषयोऽपि विधिरङ्गीकर्तव्यः । स चेदङ्गीकृतः शास्त्रत्वाविशेषात्तुल्यबलत्वम् । अतः सर्वथाऽतिरात्रे विकल्पेन भवितव्यम् । तस्माद् द्विरुक्तत्वादुपदेशातिदेशयोश्च प्राप्तिकालवैषम्यात्प्रकृत्यर्थतैव वरमिति । अन्वेवं सति 'अग्निष्टोमे प्रवृणक्ति' इत्यनेनैव प्रकृतिविधेः सिद्धत्वादनारभ्यवादोऽनर्थकः प्राप्नोति । नैष दोषः । तेनोत्पत्तिरनेन विनियोग इत्येवं व्यापारभेदात् । अथवाऽनारभ्यवादोऽग्निष्टोमव्यतिरिक्तविषयो भविष्यति । नन्वग्निष्टोमवाक्येनोपसंह्रियते । न शक्यमेतदुपसंहर्तुम् । तन्नाम विशेषवचनेनोपसंह्रियते यत्क्रतुसंयोगायासमर्थं कथंचित्परोक्षवृत्त्या संयुज्यते । यथा साप्तदश्यम् । अयं तु साक्षाद्यज्ञसंबन्धसामर्थ्यान्नोपसंहारमर्हति । अतश्च विकृत्यर्थो भविष्यति । तथा सति च 'न प्रथमयज्ञे' इत्यनारभ्यवादशेष उपपद्यत इत्यतिरात्रप्रथमाहारे नित्यप्रयोगोऽग्निष्टोमे च केवलविधिसंस्पर्शान्नित्यं प्रयोगः । न हि तद्वाक्यशेषोऽप्ययं भवतीत्युक्तम् । एतावत्त्विहावधारयितुं शक्यम् । नायमनारभ्यवादाः प्रकृतेरन्यत्र गच्छति । यदि गच्छेत्तत इष्टिपशुबन्धानपि गच्छेत् । न च गन्तुमर्हति । 'पुरस्तादुपसदाम्' इति स्थाननियमस्य तत्रानुपपत्तेः । अतो यत्रोपसदस्तत्र गच्छति । ततश्च प्राप्तिकालवैषम्यात्प्रकृतौ तावताः सन्तीत्यन्तरेणापि वचनं गच्छेत्किमुत यदा विस्पष्टमेव वचनं, स्फुटसामान्यसंबन्धस्यापि चैत्रमादेरुपसंहार इति व्याख्यातं चतुर्थाधिकरणे । तस्मादुत्पत्तिविनियोगाभ्यामेवापुनरुक्तत्वम् । एवं सति येषां प्रकरण एव प्रवर्ग्यपाठैः तैः सह संगतार्थता भविष्यति । यदि तर्हि द्वयोरप्येकवाक्यत्वेन 'अग्निष्टोमे प्रवृणक्ति' इत्ययोमर्थो निष्पन्नः ततो 'न प्रथमयज्ञे' इत्येतस्याप्रथमयज्ञेऽग्निष्टोम इत्येवं प्रवर्तमानस्य न कश्चिद्विरोध[1] इति पर्युदासान्नित्यमेवाकरणेन भवितव्यम् ।

अतएव वर्णनीयम् । अनारभ्यवादस्य प्रकृत्यर्थतायां सिद्धायाम् 'अग्निष्टोमे प्रवृणक्ति' इत्येतस्यानन्यप्रयोजनत्वात्प्रतिषिद्धप्रतिप्रसवार्थता गम्यते । ननु नैवायं प्रतिषेध इति ब्रूमः । न ह्यनेन सह पर्युदासोऽत्रकल्पत इति दर्शितम् । न चानारभ्यवादोऽनग्निष्टोमार्थो, यतस्तद्विषयः पर्युदासोऽवकल्पते । तेन द्वयोरप्येतयोरग्निष्टोमविषयत्वम् । अतश्च यद्यप्ययं पर्युदासस्तथाऽप्युभयोः सामर्थ्याद्विकल्पेनैव भवितव्यम् । कुतः ?

नित्यं हि क्रियमाणेऽस्मिन्पर्युदासो वृथा भवेत् ।
नित्यमक्रियमाणे वा पुनर्विधिरनर्थकः ॥

---

१. क० विशेषः ।

ततश्च यस्माद्विकल्पाद्बिभ्यद्भिः पर्युदास आश्रीयते, स तस्मिन्सत्यप्यागत इति वरं शब्दस्वरसलभ्यः प्रतिषेध एवाऽऽश्रितः। तेन प्रथमाहारेऽग्निष्टोमे विकल्पः।

तत्रापि यदा केषांचिदीदृशं वचनं 'कामं तु योऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृञ्ज्यात्' इति तदा प्रतिप्रसववचनस्य विकल्पकारिणः कर्तृविशेषगामित्वात्तद्विषय एव विकल्पः। अन्येषां नित्यमेवाभावः। कथं पुनरश्रोत्रियस्य कर्मणि प्रवृत्तिः, येन तद्विशेषणत्वेन श्रूयते। सत्यं प्राप्तस्य पुनर्वचनं तावन्मात्रफलमनर्थकमिति सामर्थ्यात्प्रकर्षगतिर्विज्ञास्यते। यथाऽभिरूपाय कन्या देयेत्यत्राभिरूपतरायेति गम्यते। अनूचानग्रहणं तु ब्राह्मणस्यानुवचनसंबन्धात् क्षत्रियवैश्यनिवृत्त्यर्थं भविष्यति। तदेतदतिरात्रेऽप्येवमेव प्राप्नोति। तत्र न प्रथमयज्ञ इति प्रतिषेधादनग्निष्टोमत्वेन च प्रतिप्रसवाभावान्नित्यमेव न कर्तव्यः। विकृत्यन्तरेषु प्रथमप्रयोगानुपपत्तेर्नित्यमेव करणम्।

ननु तत्रापि न प्रथमयज्ञ इत्यतिदेशादग्निष्टोमस्वरूपस्य च प्रतिप्रसवनिमित्तस्याभावात् प्रथमप्रयोगेष्वभाव एव प्राप्नोति। नैतदेवम्। प्रथमशब्दस्याविशेषितस्य सर्वाद्ये प्रवर्तमानस्यान्यत्राप्रवृत्तेः। तस्मात्केवलज्योतिष्टोमप्रथमप्रयोगविषय एव चैष प्रतिषेध इति सिद्धम् ॥ ३३ ॥

इति द्वादशं प्रवर्ग्याधिकरणम् ॥ १२ ॥

न्या० सु०—प्रथमशब्दस्यावर्तितक्रतुशब्दोक्तयज्ञवाचित्वव्यापृत्त्यर्थतया वाशब्दव्याख्यार्थं नवेतिभाष्यं प्रवर्ग्यनिषेधस्य प्रथमप्रयोगनिमित्तत्वसिद्धान्तप्रतिज्ञार्थंनैमित्तिकशब्दपरत्वाद्वाशब्दस्य पूर्वपक्षप्रतिज्ञार्थक्रतुशब्दोक्तसर्वप्रयोगस्थक्रत्वङ्गत्वव्यावृत्त्यर्थत्वप्रतीतेरयुक्तमाशङ्क्य हेतुव्यावृत्तिं विना पूर्वपक्षाव्यावृत्तेस्तद्व्यावृत्त्यर्थत्वेनाप्यावृत्त्या व्याख्या युक्तेति सूचनपूर्वं यज्ञस्य प्रयोग इत्यन्तं भाष्यं व्याचष्टे—**यदीति**। अतःप्रयोगस्यैषप्रथमशब्दो वाद इत्यध्याहारेण भाष्यव्याख्यासूचनाय—**एषइत्युक्तम्**। प्रथमशब्दस्य प्रयोगवाचित्वोपपादनार्थत्वेन कर्त्राद्यप्रवर्त्तनाख्यकर्तृसंयोगनिमित्वात्प्रथमशब्दस्य प्रयोग एव च कर्तृसंयोगोपपत्तेरित्येवं कर्तृसंयोगादिति सूत्रावयवव्याख्यार्थं कर्त्रेत्यादिभाष्यं व्याचष्टे—**प्रथमेति**। शब्दप्रवृत्तिनिमित्तत्वमोक्त्यर्थत्वेन पञ्चमीव्याख्यानायभिधेयत्वोक्तिः। अप्रयुज्यमानावस्थस्यकर्मणः कर्त्रनपेक्षत्वात्स्वरूपेण कर्तृसंयोगानुपपत्तावप्येत एवाहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशादाक्षित्वासमांऽप्याग्नीस्तन्मुखाः सत्राण्यासते इत्यादौ प्रथमशब्दाज्ज्योतिष्टोमप्रतीतेस्तत्स्वरूपमेव प्रथमशब्दप्रवृत्तौ निमित्तं भविष्यतीत्याशङ्कानिरासार्थं प्रयोग इति भाष्यं व्याचष्टे—**तद्योगात्त्विति**। कर्मस्वरूपनिमित्तसूत्रशब्दसन्निधिपठितस्य प्रथमशब्दस्य कर्मस्वरूपनिमित्तत्यप्रतीतेः कर्तृसंयोगशब्दोक्तकर्त्राद्यप्रवर्त्तननिमित्तता न युक्तेत्याशङ्क्य प्रथमप्रयोगस्थस्यैव ज्योतिष्टोमस्य तस्मादपि **प्रथमशब्दा-**

त्प्रतीतेः कर्मस्वरूपनिमित्तता न युक्तेति परिहारं सूचयितुमाह—**सापिचेति**। एतदेव प्रयोगानुसारेण द्रढयति—**न हीति**। द्वितीयादिज्योतिष्टोमप्रयोगे प्रथमशब्दप्रयोगाभावात्कर्मवाचित्वाभावो निश्चीयतइत्याशयः। अयजमानस्येति षष्ठ्या ज्योतिष्टोमव्यतिरेकजनितत्वमङ्गीकृत्य 'प्रथमं यजमानोऽतिरात्रेण यजेतेति पक्षाश्रयणात्प्रथममग्निष्टोमसंस्थं ज्योतिष्टोमयागमकुर्वाणस्य यः पश्चादग्निष्टोमसंस्थो ज्योतिष्टोमस्तस्य लोके प्रथमयज्ञो नाम न भवतीति योज्यम्। एवमपि प्रथमयज्ञशब्दस्य प्रथमप्रयोगवाचित्वे यागान्तरप्रथमप्रयोगस्यापि प्रवर्ग्यनिषेधनिमित्तत्वापत्तेः प्रथमप्रयोगस्थज्योतिष्टोमवाचितैवावसीयतइत्याशङ्कानिरासार्थं श्रुतिश्चेति भाष्यं व्याख्यातुमाह—**ततश्चेति**। विप्रकर्षोऽप्येष वावेति वेदाश्रितत्वात्।

'गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम्।
वेदो यमाश्रयत्यर्थं को नु ते प्रतिकूलयेत्'॥ तं०वा०पृ० २३१

इत्येतेन न्यायेनाश्रयणीय इत्याशङ्क्याह—**तत्र चेति**। क्रतुवाचिज्योतिष्टोमशब्दैकवाक्यत्वसिद्धयै तत्र लक्षणाऽऽश्रिता, इह तु प्रयोगवाचित्वे अपि यज्ञशब्दसामानाधिकरण्यस्य लिङ्गस्येति सूत्रावयवेनोपपादयिष्यमाणत्वात्तद्वशेन लक्षणाकल्पनानुपपत्तेः, प्राथम्यनिमित्तत्वायोगो लक्षणाहेतुर्वाच्य इत्यापाद्य नत्विहेत्युक्तम्। लक्षणाश्रयणेऽपि पूर्वपक्षीष्टसिद्ध्यभावस्तत्प्रयोगस्थोऽपि वावदित्यादिनोक्तः। श्रुतिश्चेति भाष्यनिरसनीया शङ्का, येनाशयेनोत्तिष्ठति तन्निरसितुमुपन्यस्यति—**नन्विति**। विधित्वे प्राप्त्यनपेक्षित्वाद्यस्य कस्यचित्प्रथमप्रयोगो निमित्तं स्यान्निषेधत्वेन तु प्राप्त्यपेक्षित्वाल्लौकिकव्यापाराद्यर्थेन च प्राप्त्यभावात्प्राप्तिसामर्थ्येन सोमयागप्राप्तेस्तेष्वपि मध्येऽतारभ्यवादन्यायेनैष वावेत्यत्र च ज्योतिष्टोम एव प्रथमशब्दप्रयोगाद्य एतेनेति वा प्राथम्यविधायकाच्छब्दान्निमित्ताभावेनान्यत्र निषेधाप्राप्तेर्ज्योतिष्टोमस्यैवाद्यं प्रयोगमयं निषेधो गच्छतीत्येवं निरस्यति—**प्राप्नुयादिति**। प्राप्त्यभावान्निवर्तमान इति पाठे तु लौकिकव्यापारेभ्य इत्यादीनां पञ्चम्यन्तत्वेनान्वयः। ज्योतिष्टोमसमानाधिकरणो ज्योतिष्टोमप्राथम्यविधायी वाशब्दो ज्योतिष्टोमप्रथमशब्दः। ज्योतिष्टोममिति पाठे त्वनारभ्यवादन्यायेन ज्योतिष्टोमं गच्छति प्रथमयज्ञ इति प्रथमशब्दाच्च। तस्याद्ये प्रयोगे गच्छतीत्यर्थः।

ज्योतिष्टोमिकप्रथमप्रयोगगामित्वे च निषेधस्य द्वितीयादिप्रयोगस्थस्य ज्योतिष्टोमस्य व्यक्त्यन्तरत्वेऽपिज्योतिष्टोमत्वजात्यैक्यात्प्रत्यासत्तेस्तस्यैव द्वितीयादीन्प्रयोगानपेक्ष्य प्रथमशब्दोपपत्तेराज्यस्य भवति यत्किंचित्प्रथमप्रयोगगामित्वे तु दर्शपूर्णमासादिद्वितीयप्रयोगानपेक्षणेऽपि दूरस्थसोमयागान्तरद्वितीयादिप्रयोगापेक्षायां विप्रकर्षः स्यादित्याह—**एवंचेति**।

अनेन च तुल्यन्यायतया प्रथमशब्दस्य ज्योतिष्टोमवाचित्वे दूरस्थद्वितीयादियज्ञान्तरापेक्षायां विप्रकर्षः स्यादिति सूचनाद्द्वितीयादीनपेक्ष्येति भाष्योक्तविशेषणफलं दर्शितं भवति। प्रथमप्रयोगनिमित्तत्वसिद्धान्तप्रतिज्ञार्थनैमित्तिकपदव्याख्याद्वारा सिद्धान्तोपसंहारार्थं

वस्मादितिभाष्यमथेति भाष्येणैव वावेति वाक्ये प्रथमशब्दस्य ज्योतिष्टोमाख्यक्रतुसामानाधिकारण्येन प्रयोगाक्रतुवाचितेत्येवमर्थत्वेन पूर्वपक्षसूत्रस्थक्रतुशब्दोक्तं हेतुमनुभाष्यलक्षणयेत्यवेन ज्योतिष्टोमसामानाधिकरण्याख्यस्य ज्योतिष्टोमवाचित्वलिङ्गस्य प्रथमशब्दवाच्येन प्रयोगेण ज्योतिष्टोमलक्षणानिमित्तकत्वान्न क्रतुवाचित्वसाधकतेत्येवमर्थमङ्गीकृत्य, यत्त्वित्येतेन च प्रथमयज्ञशब्दे यज्ञशब्दसामानाधिकरण्याक्रतुवाचितेत्येवमर्थत्वेन क्रतुशब्दोक्तं हेतुमनुभाष्य, तदपीत्यनेन यज्ञशब्दसमानाधिकरण्याख्यस्य लिङ्गस्य भावव्युत्पत्त्या यज्ञशब्दस्य प्रयोगवाचित्वानिमित्तकत्वान्न क्रतुवाचित्वसाधकतेत्येवमर्थमङ्गीकृत्य लिङ्गस्येति सूत्रावयवेन परिहारे वक्ष्यमाणेऽपि, प्रकरणादिति पूर्वपक्षहेत्वपरिहारादयुक्तमाशङ्क्य, प्रकरणबाधाशयत्वेन व्याचष्टे—**तस्मादिति**। दीर्घसोमशब्दवत्प्रथमयज्ञशब्दस्यापेक्षिताङ्गिसमर्पणोपयोगसंभवे अनपेक्षितनिमित्तमात्रोपयोगस्यान्याय्यत्वात्प्रथमप्रयोगाङ्गस्य च निषेधस्य यदा प्रथमः प्रयोगः तदैव प्रवृत्त्युक्त्यै नैमित्तिकत्वोक्त्युपपत्तेः सप्तम्या चाङ्गित्वानभिधानाद्वाक्येनैव प्रकरणगम्यं सर्वप्रयोगस्थज्योतिष्टोमाङ्गत्वं बाधित्वा, प्रथमप्रयोगमात्राङ्गत्वावगतेः—**वाक्येनेत्युक्तम्**। एवमप्युत्कर्षानभिधानाज्ज्योतिष्टोमप्रथमप्रयोगे न प्रवर्जितव्यमिति सिद्धान्तोपसंहारार्थप्रतीतेस्तत्र 'चाग्निष्टोमे प्रवृणक्ती'ति विधिना निषेधस्य बाधात्क्रत्वन्तरप्रथमप्रयोगविषयत्वावगतेरुपसंहारभाष्यमाक्षिपति—**तत्र त्विति**।

विधेर्द्वितीयादिप्रयोगविषयत्वेनाविरोधमाशङ्क्य यत्प्रवर्ग्यं प्रवृञ्जन्तीत्यनेनैव द्वितीयादिप्रयोगे विधिसिद्धेः पुनर्विध्यानर्थक्यप्रसङ्गादाद्यप्रयोगविषयतोक्ता। प्राप्त्यपेक्षत्वेऽपि निषेधस्य पूर्वविधिनैव प्राप्तिसिद्धेः पुनर्विध्यनपेक्षत्वान्न तेन बाधः संभवतीत्याशंक्य सावकाशतोक्ता अग्निष्टोमसंस्थक्रत्वन्तरप्रथमप्रयोगेऽप्यतिदेशप्राप्तेनाग्निष्टोमवाक्येन निषेधबाधापत्तेः प्राथम्यस्य च क्रत्वन्तरेष्वभावान्न निषेधस्य क्रत्वन्तरप्रथमप्रयोगगमनं युक्तमित्येवमेतद्व्यवस्थानुपपत्तेरग्निष्टोमप्रथमप्रयोगे निषेधबाधेऽप्यतिरात्रसंस्थज्योतिष्टोमप्रथमप्रयोगविषयो निषेधो भविष्यतीत्यन्यथाव्यवस्थामभ्युपगम्य, तद्विषयत्वेनोपसंहारभाष्यं परमतेन समाधातुमाह—**तत्त्विति**। अग्निष्टोमशब्दस्याग्निष्टोमसंस्थज्योतिष्टोमवाचित्वात्कथमग्निष्टोमस्य क्रत्वन्तरे विद्यमानतेत्याशङ्क्य, श्रौतसंस्थावाचित्वत्यागेन लाक्षणिकज्योतिष्टोमवाचिता न युक्तेति परिहारसूचनार्थं—**संस्थारूपस्येत्युक्तम्**। आहारः प्रयोगः। 'य एतेनानिष्ट्वे'त्येतच्छब्दस्याग्निष्टोमपरामर्शितायाः पञ्चमेवक्ष्यमाणत्वान्नातिरात्रस्य प्रथमप्रयोगोऽस्तीत्याशङ्क्याह—**विहितश्चेति**। अग्निष्टोमविधेर्निषेधेनानपेक्षितत्वादग्निष्टोमस्यापि चान्यत्र विद्यमानवोक्त्या सामान्यरूपत्वाभिधानान्निषेधबाधकत्वं न संभवतीत्याशङ्क्य, पूर्वविधिनैव सिद्धेः पुनर्विध्यानर्थक्यप्रसङ्गादाद्यप्रयोगविषयत्ववत्क्रत्वन्तरेष्वतिदेशप्राप्तेर्विध्यानर्थक्यप्रसङ्गेनैव ज्योतिष्टोमविषयत्वस्याप्यवगमाद्विशेषविषयत्वेन बाधकत्वमुपपादयितुमाह—**सोऽयमिति**। द्वितीयादिप्रयोगेषु क्रत्वन्तरेषु वान्यतः प्राप्त्यालोचनया ज्योतिष्टोमिकाद्यप्रयोगाख्यविशेषविषयत्वावगमेऽपि स्वारसिकसामान्यविशेषविषयत्वालोचनया बाध्यबाधकभावप्रसिद्धेर्निषेधस्य चाग्निष्टोमातिरात्राद्यप्रयोगयोर्द्वयोरेव सामान्य-

रूपत्वाद्विधेस्तु बहुषु द्वितीयादिषु, क्रत्वन्तरेषु च सामान्यरूपत्वाद्विधेर्बाधकता शङ्कितुमपि न शक्येत्येतामपि व्यवस्थां दूषयति—**एतदपीति** ।

स्वमतेनातिरात्रप्रथमप्रयोगे नित्यं न प्रवर्जितव्यमग्निष्टोमप्रयोगे विकल्पेनेत्येवे भाष्यव्याख्यां सूचयितुमन्यथाव्यवस्थामाह—**अत इति** । निषेधत्वेऽतिरात्रप्रथमप्रयोगेऽपि विकल्पस्यापरिहार्यत्वात्पर्युदासत्वनिरासार्थस्य चोच्यतइत्यादेर्वक्ष्यमाणस्य वार्त्तिकस्याग्निष्टोमवाक्यातिरात्रप्रकृतिवच्छब्दशेषत्वनिरासमात्रार्थत्वोपपत्तेरग्निष्टोमवाक्यस्य च प्रतिप्रसवार्थताया वक्ष्यमाणत्वादतिरात्रप्रथमयोगेऽपि नित्यं पर्युदासः अग्निष्टोमप्रथमप्रयोगे त्वग्निष्टोमवाक्येन प्रतिप्रसूतत्वान्नञ्युक्तेन चानारभ्यवादप्राप्तस्य पर्युदासाद्विकल्प एवेत्येवं व्याख्येयम् ।

प्रतिषेधोक्तिं यथाश्रुतां विहितोक्तिं चाप्राप्तविध्याशयां मत्वा पर्युदासेन संभवद्विकल्पपरिहाराणां नञ्युक्तानां वाक्यानां पर्युदासत्वस्य अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यादि१०-८-४ति दशमाधिकरणसिद्धान्तसूत्रेण वक्ष्यमाणत्वादस्य पर्युदासत्वावगतेरग्निष्टोमवाक्यशेषत्वे च तस्य पर्युदासापेक्षितप्राप्तिसमर्पणमात्रे व्यापाराभ्युपगमापत्तेरनारभ्यवादादेव च प्राप्तिसिद्धेरग्निष्टोमवाक्यानर्थक्यप्रसङ्गादनारभ्यवादशेषत्वावगमादनश्ररयवादस्य चाग्निष्टोमवाक्यविहितप्रवर्ग्यायां प्रकृतावनर्थक्यापत्तेर्विकृत्यर्थत्वावगमादतिरात्रातिरिक्तायां च विकृतौ प्रथमप्रयोगाभावादनारभ्यवादशेषस्य पर्युदासस्यातिरात्रमात्रविषयत्वावगतेरग्निष्टोमवाक्यस्य पर्युदासानन्वयान्नित्यमेव वाग्निष्टोमे प्रवर्ग्यप्राप्तेर्विकल्पो न युक्त इत्याशंकते—**किंचित्पुनरिति** । अग्निष्टोमवाक्यादेव प्राप्तिसिद्धेरनारभ्यवादोऽनर्थक इति विपरीतं कस्मान्न स्यादित्याशङ्क्य, सामान्यविषयत्वेनानारम्भवादस्य बहुविशेषव्यापित्वान्नैकस्मिन्विशेषे प्राप्तावप्यानर्थक्यापत्तिरिति परिहारसूचनार्थं—**सामान्येत्युक्तम्** । अग्निष्टोमवाक्यस्य प्रकृतावनारभ्यवादस्य च विकृतौ प्रापकत्वात्पर्युदासस्योभयशेषत्वोपपत्तेरग्निष्टोमविधेर्निरपवादत्वायोगशङ्कां निराकर्तुं—**न चेत्युक्तम्** । पर्युदासत्वे सिद्धान्त्यभिमतेऽपि विकृत्यर्थानारभ्यवादशेषत्वे अग्निष्टोमवाक्यशेषत्वे चाग्निष्टोमे विकल्पसिद्धेरग्निष्टोमवाक्यशेषत्वे चातिरात्रप्रथमप्रयोगे अप्यकरणासिद्ध्याधिक्यात्तन्निरासार्थं सिद्धान्तैकदेशी विकृत्यर्थानारभ्यवादशेषभूतपर्युदासत्वे अग्निष्टोमविधेर्निरपवादत्वाद्विकल्पो न युज्येत । शक्यं त्विहेत्यादिवार्तिके वक्ष्यमाणेन तु न्यायेनाऽनारभ्यवादस्य विकृत्यर्थत्वायोगादतिरात्रे अतिदेशप्राप्तस्यानारभ्यवादस्य शेषो वाच्य इत्यापाद्यातिरात्रकथंभावपूरणवेलायामपाठात्तत्प्रकृतिवच्छब्दप्राप्तानारभ्यवादशेषत्वानुपपतेर्दर्शपूर्णमासप्रकरणपठितस्य 'तौ न पशौ करोती'त्यस्य पशुप्रकृतिवच्छब्दप्राप्ताज्यभागवाक्यशेषत्वायोगेन पर्युदासत्वायोगान्निषेधत्वम् । यथा अपूर्वे चार्थवादः स्यादि१०-८-५ति दशमाधिकरणेन सौम्येऽध्वरइत्यस्य 'तौ न पशौ करोती'ति निषेधशेषतयार्थवादत्वसिद्ध्यै भाष्यकृता वक्ष्यते । तत्तथा न प्रथमयज्ञइत्यस्यापि निषेधत्वावगमाद्युक्तो विकल्प

इत्येवं विकल्पायोगचोद्यं निराकर्त्तुमाह—**उच्यत इति**। दृष्टान्तत्वेनाग्निष्टोमवाक्यशेषत्वस्यानुपपन्नत्वं तावत् त्वयैवोक्तमित्युक्तम्। षष्ठ्यर्थे सप्तमी। अपिशब्देनानारभ्यवादसूचनात्।

ततोऽनारभ्यवादस्यातिरात्रवाक्यावयवभूतस्य न प्रथमयज्ञ इति शेषः स्याद्यद्यतिरात्रकथंभावपूरणवेलायां पठ्येत संस्थानां त्वसमानविधानत्वेन ज्योतिष्टोमकथंभावपूरणवेलायांस्तदीयत्वायोगान्नैतत्तदीयकथंभावपूरणवेलास्थत्वेन पठितं येनोपदेशतोऽतिरात्रवाक्यावयवभूतस्यानारभ्यवादस्य न प्रथमयज्ञइत्येतद्वाक्यं शेषः स्यादित्युक्ते, अतिदेशतस्तर्ह्यतिरात्रप्रकृतिवच्छब्दप्राप्तस्यानारभ्यवादस्य शेषो भविष्यतीत्याशङ्क्यातिरात्रावान्तरप्रकरणे पाठाभावादसाधारणातिरात्रकथंभावपूरणवेलास्थत्वेनापि न पठितः, येनातिदेशतोऽतिरात्रवाक्यावयवभूतस्यानारभ्यवादस्य शेषः स्यादित्युक्ते ज्योतिष्टोमप्रकरणपठितस्याप्यतिरात्रप्रकृतिवच्छब्दप्राप्तानारभ्यवादशेषत्वं कस्मान्न भवतीत्याशङ्क्य, व्यवहितत्वेनैकवाक्यत्वायोगो न हीत्यनेनोक्तः।

प्राकृतानामङ्गशास्त्राणां विकृतौ स्वरूपेणातिदेशस्य दशमाद्ये निषेत्स्यमानत्वात्प्रकृतिवच्छब्देनैवोपकारादिपरम्परयातिदेशावगतेरतिदेशप्राप्तानारभ्यवादशेषत्ववादिना प्रथमप्रयोगप्रवर्ग्यवर्जं प्रकृतिवदितिरात्रेण यजेतेत्येवमेकवाक्यता कल्प्येति मत्वा प्रकृतिवच्छब्दस्येत्युक्तम्। न प्रथमयज्ञइत्यस्य पर्युदासत्वपक्षे विकृतिविषयत्वायोगोक्त्या कुपितश्चोदयिता निषेधत्वपक्षेऽपि 'प्रकृतौ वा द्विरुक्तत्वादि३-६-२त्यनेन न्यायेन विकृतिविषयत्वायोगात्प्रकृतिमात्रविषयत्वावगतेः प्रकृतौ च वैकल्पिकत्वाद्विकृतावतिदेशप्राप्तस्यापि वैकल्पिकत्वापत्तेर्नातिरात्रप्रथमप्रयोगे निषेधस्य नित्यत्वं सिद्धांत्युक्तं समर्थितं भवतीत्येवमनिष्टापादनेनैकदेशिनमाक्षिपति—**नन्विति**।

पार्श्वस्थोऽतिरात्रे निषेधस्य नित्यत्वसिद्धये पर्णतादेर्जुह्वाद्यङ्गत्वानिरङ्गस्य चजुह्वादेरनुपकारित्वेनातिदेशायोगाद्विकृतौ जुह्वादिप्राप्त्यैव प्राप्तिसिद्धेरनाभ्यवादस्यानपेक्षितत्वाद्विकृतावनुपपत्तेः प्रकृतमात्रविषयत्वं युक्तम्। निषेधस्य तु प्रवर्ग्यानङ्गत्वात्प्रवर्ग्यप्राप्तिमात्रात्प्राप्त्यसिद्धेरौपदेशिकनिषेधप्राप्तिसंभवे चातिदेशिकप्राप्त्यनपेक्षणाद्विकृतावपि निषेधोपदेशस्यापेक्षितत्वेनोपपत्तेर्निषेध्यस्य च प्रवर्ग्यस्योभयत्र प्राप्तेर्न प्रकृतिमात्रविषयता युक्तेत्याशयेनाक्षेपं परिहरति—**प्राप्नुयादिति**। यथा जुह्वादेः प्रकृतौ शीघ्रं प्राप्तेर्विकृतौ च विलम्बेन प्राप्तेस्तत्प्राप्त्यपेक्षस्य पर्णतादिविधेः प्रकृतिमात्रार्थत्वं जातं, प्रवर्ग्यस्यापि प्रकृतौ शीघ्रं विकृतौ विलम्बेन प्राप्तेस्तत्प्राप्त्यपेक्षस्य निषेधस्य प्रकृतिमात्रार्थत्वं भविष्यतीत्याशङ्क्य जुह्वादेः पर्णतादिप्राधान्यसिद्धये क्रत्वपूर्वसाधनत्वापेक्षणात्प्रतिक्रतु चापूर्वभेदात्सकृत्प्राकृतवैकृतापूर्वसाधनीभूतजुह्वाद्युद्देशेन पर्णतादिविध्यनुपपत्तेः शीघ्रप्राप्तप्राकृतापूर्वसाधनीभूतजुह्वाद्युद्देशेन पर्णतादि विधाय, कृतार्थस्य विधेर्विकृतौ व्यापाराभावो युक्तः। निषेधस्य तु प्रवर्ग्यस्यापूर्वसाधनत्वानपक्षेणात्सकृद्यथाप्राप्तप्रवर्ग्यानुवादेन निषेधोपपत्तेः शीघ्रमन्थरप्राप्त्यालोचना न युक्तेति वैषम्यसूचनार्थं—**प्राप्तिमात्रेत्युक्तम्**। निषेधस्य

प्राप्तिमात्रं निषेधोऽपक्षेतेनापूर्वसाधनतामित्यर्थः । एकदेश्यग्निष्टोमविकल्पायोगचोद्यनिरासमात्रं, ममाभिप्रेतं, न त्वतिरात्रंनिषेधस्य नित्यत्वसमर्थनमपीति मत्वा प्रवर्ग्याननुष्ठानस्य प्रवर्ग्यानङ्गत्वेऽपि क्रत्वङ्गत्वसद्भावात्सर्वांगेषु च युगपच्चोदकप्रवृत्तेर्विकृतावतिदेशतः प्रवर्ग्यप्राप्तिवेलायामेव प्रवर्ग्याननुष्ठानस्यापि प्राप्तत्वेन निषेधोपदेशस्याप्यनपेक्षणादनुपपत्तेरिह निषेधेऽपि प्रकृतिमात्रविषयत्वं वक्तुं शक्यमित्येवं पार्श्वस्थनिरासेन चोदयित्वापादितं प्रकृतिमात्रविषयत्वमनुजानाति—**शक्यं त्विति** । इहापीत्यपिशब्दोऽध्याहार्यः ।

प्रकृतौ प्राप्तिनिषेधयोर्द्वयोरप्यौपदेशिकत्वेन तुल्यबलतया वैकल्पिकत्वाद्विकृतौ त्वातिदेशिक्याः प्राप्तेरौपदेशिकेन निषेधेन नित्यं बाधाद् द्विरुक्तत्वानापत्ति पार्श्वस्थः शंकते—**ननु चेति** । प्राप्त्यपेक्षत्वान्निषेधस्य दुर्बलाया अपि प्राप्तेर्निषेधेनात्यन्तबाधायोगस्य दशमाधिकरणपूर्वपक्षसूत्रे वक्ष्यमाणत्वादिद्वरुक्तत्वापत्ति समाधत्ते—**नैतदिति** । सूत्रार्थमुपपादयति—**यस्येति** । अतश्च निषेधयस्य प्रकृतिविकृतिविषयत्वाभ्युपगमेऽप्यतिरात्रे निषेधनिश्यत्वासिद्धेस्तदभ्युपगमोऽनर्थक इत्येवं पार्श्वस्थनिरासमुपसंहरति—**अत इति** ।

एवं सति सिद्धान्त्यनिष्टविकल्पाक्षिपशंकाया ननु प्रतिषेधोऽपि सन्निति वार्तिककृताया: कः परिहार इत्याशंक्य न प्रथमयज्ञ इत्यस्यातिरात्रवाक्यैकवाक्यभूतानारभ्यवादशेषत्वमात्रनिरासो ममाभिप्रेतो, न प्रर्युदासत्वनिरासो येनातिरात्रे सिद्धान्त्यनिष्टो विकल्पः प्रसज्येतेति सूचयन्नेकदेश्यनिष्टापत्तिशङ्कां परिहर्तुमाह—**तस्मादिति** । विकृतावपि निषेधोपदेशक्यानपेक्षितत्वेन द्विरुक्तत्वादुपदेशातिदेशयोश्च शीघ्रमंथरत्वलक्षणप्राप्तिकालवैषम्यान्न प्रथमयज्ञेइत्यस्य प्रकृतावेव व्यापारः, न त्वतिरात्रेऽतिदेशोनापदेशेन वा प्राप्तानारभ्यवादशेषतयेत्येतावदग्निष्टोमे विकल्पायोगचोद्यनिरासाभिप्रेतं वरं निषेधत्वादतिरात्रे विकल्पेन भवितव्यमित्यभ्युपेत्य, वादमात्रेण प्रतिषेध एवायमिति, प्रागुक्तं, न तु निषेधताभिप्रेता येन विकल्पः स्यात्, प्रकृतावेव त्वनारभ्यवादशेषभूतस्य पर्युदासस्यातिरात्रेऽतिदेशात्प्राप्तेर्नित्यमकरणं सेत्स्यतीत्येवं वरमतिरात्रे विकल्पेन भवितव्यमित्यनुषङ्गेण योज्यम् ।

चोदयितृकृताक्षेपपरिहर्तृपार्श्वस्थाननिरासेन गतकोपश्चोदयिताऽनिष्टापदनं त्यक्त्वा एकदेशिनइत्यादिनान्वयः न प्रथमयज्ञ इत्यस्य 'यत्प्रवर्ग्यं प्रवृंजन्ती'त्यनारभ्यवातशेषत्वमभ्यनुज्ञायातिरात्रवाक्यैकवाक्यभूतानारभ्यवादशेषत्वाख्य-विशेषमात्र-निरासात्प्रकृत्यर्थानारभ्यवादस्य च विकृत्यर्थतायां न प्रथमयज्ञइत्यस्यातिरात्रकथंभावपूरणवेलायामपाठेऽपि पर्युदसनीयप्रवर्ग्यप्रापकस्यानारभ्यवादस्य प्रकृतावव्यापारादग्निष्टोमवाक्यप्राप्तप्रवर्ग्यपर्युदासाभ्युपगमे चातिरात्रप्रथमप्रयोगे पर्युदासभावेन नित्यमनुष्ठानापत्तेर्निषेधत्वाभ्युपगमे चान्याय्यविकल्पापत्तेः, अतिरात्रवाक्यैकवाक्यभूतानारभ्यवादशेषत्वस्य निराकर्तुमशक्यत्वात्तन्निराकरणेनारभ्यवादस्य प्रकृत्यर्थत्वाभ्युपगमे सत्यग्निष्टोमवाक्येनैव प्रकृतौ प्रवर्ग्यविधिसिद्धेरनारभ्यवादस्यानर्थक्यप्रसंगाद्विकृत्यर्थत्वावगतेस्तच्छेषेण 'न प्रथमयज्ञे'इत्यनेनातिरात्रप्रथमप्रयोगे प्रवर्ग्यपर्युदासादतिरात्रे नित्यमप्रयोगोऽग्निष्टोमे चापवादान्नित्यं प्रयोगः सेत्स्यपीत्याशयेनैकदेशिनश्चोद्यनिरासं दूषयितुमाह—**नन्विति** ।

एकदेश्यानर्थक्यदोषपरिहारं शङ्कते—**नैव इति**। प्रवर्ग्यस्यानारभ्योत्पन्नस्यापि पर्णतादिवत्प्रकृतौ विनियोगसिद्धेर्व्यापाराभेदेनानर्थक्यपरिहासयोगाद्विकृत्यर्थतैवानारभ्यवादस्य युक्तेति चोदयिता, स्वाशयं प्राकटयति—**अथवेति**। पर्णतादिवदुत्पत्तिवाक्ये प्रकृतिविशेषाव्यभिचारिद्वारसंयोगाश्रुतेर्दर्शपूर्णमासादीनामपि च प्रकृतीनां भावादग्निष्टोमाख्यप्रकृतिविशेषोपसंहारार्थत्वेनार्थवान्विनियोगो भविष्यतीत्येकदेशीशङ्कते—**नन्विति**। प्रवर्ग्योत्पत्तिवाक्ये प्रकृतिविशेषाद्व्यभिचारिद्वारसंयोगाश्रवणेऽपि पुरस्तादुपसदां प्रवर्ग्येण चरन्तीत्यानुष्ठानस्थानवाक्येऽग्निष्टोमाव्यभिचार्युपसदाख्यद्वारसंयोगश्रुतेर्नोपसंहाराय विनियोगापेक्षेति चोदयिता परिहरति—**न शक्यमिति**। साप्तदश्यं सामिधेन्याख्यद्वारसंयुक्तमपि प्राकरणिकेन पांचदश्येन विकृतिष्वप्यतिदेशप्राप्तेन द्वारावरोधात्क्रत्वन्वयासमर्थमिति कृत्वा पशुमित्रविदादिप्रकरणाधीतेन साप्तदश्यवाक्येनोपसंह्रियते। यत्प्रवर्ग्यमित्ययं त्वनारभ्यवादोऽनन्यावरुद्धोपसद्वारतयोपसंहारमनपेक्ष्यैवाग्निष्टोमाख्ययज्ञान्वये शक्तत्वेनोपसंहारानपेक्षत्वान्नोपसंहारमर्हतीत्यर्थः। अनारभ्यवादस्य विकृत्यर्थत्वमुपसंहरति—**अतश्चेति**।

अनारभ्यवादस्य विकृत्यर्थत्वेपि 'न प्रथमयज्ञे' इत्यस्यातिरात्रकथम्भवपूरणवेलायामपाठेनातिरात्रवाक्यैकवाक्यभूतानारभ्यवादशेषत्वायोगान्नातिरात्रप्रथमयोगे नित्यमप्रयोगोऽग्निष्टोमे च नित्यं प्रयोगः सेत्स्यतीत्याशंक्य, अनारभ्यवादस्य प्राकरणिकेनाग्निष्टोमवाक्येनोत्कालनात्प्रकृतावव्यापारेऽप्यग्निष्टोमवाक्यालोचनात्प्रकृतिं प्रविष्टस्य शेषो भूत्वाऽनारभ्यवादसहितः पर्युदासः पश्चादतिरात्रं गमिष्यतीति परिहारं सूचयंश्चोदयिता स्वाभिप्रेतसिद्धिमुपसंहरति—**तथा सति चेति**।

केवलविधिस्पर्शोपपादनार्थं वाक्यद्वयशेषत्वनिरासो, न चैक एव शेष इति वार्त्तिकोक्तो न हीत्यनेन स्मारितः एकदेशी स्वाशयप्रकटनेनानारभ्यवादस्य विकृत्यर्थत्वं निरस्यति—**एतावत्विति**। प्रकृतौ प्रागुपसदः प्राप्नुवन्ति। पश्चाद्विकृतावित्युपसत्प्राप्तिकालवैषम्यात्प्रकृतौ प्रागुपसत्प्राप्तेरुपसंहारवाक्याभावेऽपि प्रवर्ग्यः प्रकृतिं गच्छेत्किमुतऽग्निष्टोमे प्रवृणक्ती'ति विस्पष्टोपसंहारकवाक्यसद्भाव इत्युक्ते, पुरस्तादुपसदामित्यनेन क्रत्वन्वयाख्यसामान्यसंबन्धावगमान्नोपसंहारः संभवतीत्याशङ्क्य, दर्शपूर्णमासप्रकरणपाठाच्चतुर्थाकरणस्यावगतक्रत्वन्वयस्याप्याग्नेयं चतुर्धा करोतित्यनेनोपसंहारदर्शनादविरोधमुक्त्वा प्रकृत्यर्थत्वेऽनारभ्यवादस्यानर्थक्यशङ्कानिरासायोत्पत्त्यर्थत्वेनार्थत्वं पूर्वोक्तं स्मारितम्। कौशीतकिब्राह्मणे ज्योतिष्टोमप्रकरणाधीतप्रवर्ग्यवाक्यसमानार्थत्वायाप्यनारभ्यवादस्य प्रकृत्यर्थतैवाभ्युपगन्तव्येत्याह—**एवं चेति**।

सिद्धान्तैकदेशिनाऽनारभ्यवादस्य विकृत्यर्थत्वनिरासेन चोद्यवादिनि निरस्ते, परमसिद्धान्ती चोद्यवाद्युक्तं पर्युदासत्वम्, एकदेश्युक्तं चानारभ्यवादस्य प्रकृत्यर्थत्वमभ्यनुज्ञायैव, अनारभ्यवादाग्निष्टोमवाक्ययोर्द्वयोरुत्पत्तिविनियोगार्थत्वेनैकवाक्यत्वे वाक्यद्वयस्याप्यग्निष्टोमे प्रवृणक्तीत्येतन्मात्रार्थनिष्पत्तेर्न प्रथमयज्ञइत्यस्यानारभ्यवादशेषत्वे अग्निष्टोमवाक्यशेषत्वे वा

विशेषाभावादग्निष्टोमवाक्यशेषत्वेऽपि चाग्निष्टोमवाक्यानर्थक्यापत्तिलक्षणविरोधाभावाद-विनियुक्तोत्पन्नमात्रप्रवर्ग्यपर्युदासे च पर्युदसनीयस्य क्रत्वर्थत्वाभावेन पर्युदासस्य क्रत्वर्थत्वाना-पत्तेरानर्थक्यप्रसंगाद्विनियुक्तपर्युदासत्वायाऽग्निष्टोमवाक्यशेषत्वापत्तेरग्निष्टोमे नित्यमकरणा-पत्त्या विकल्पासिद्धेरग्निष्टोमवाक्यस्यैकदेशयुक्तं विनियोगार्थत्वं दूषयति—**यदि तर्हीति।** किमर्थत्वेन तर्ह्यग्निष्टोमवाक्यं विकल्पसिद्ध्यै वर्णयितुमाह—**अत इति।**

विनियोगार्थत्वेनाऽर्थवत्त्वोपपत्तौ विकल्पापादिका प्रतिप्रसवार्थता न युक्तेत्याशंक्य, प्रकृत्यर्थादनारभ्यवादादेवाग्निष्टोमप्रवर्ग्योपसंहारसिद्धेश्चतुर्द्धाकरणवदनेकत्र प्राप्तस्यैकत्रोप-संहारप्रयोजनत्वायोगाद्विनियोगानर्थक्यसूचनायानन्यप्रयोजनत्वायोगाद्विनियोगानर्थक्यसूचना-यानन्यप्रयोजनत्वोक्तिः। 'न प्रथमयज्ञे' इत्यस्य प्रतिषेधत्वेऽतिरात्रे प्रतिप्रसवाभावेऽप्यतः सर्वथाऽतिरात्रे विकल्पेन भवितव्यमिति वार्तिके स्वयमेव विकल्पस्योक्तत्वादग्निष्टोमे चाना-रभ्यवादविहितप्रतिषेधादेव विकल्पसिद्धेः प्रतिप्रसवार्थत्वोपपत्तेरग्निष्टोमे च विकल्पे सत्य-प्यतिरात्रेऽतिदेशप्राप्तस्य पर्युदासस्य नित्यमकरणापादकत्वेनार्थवत्त्वोपपत्तेः पर्युदस्तवाची प्रतिषिद्धशब्दः। अकर्तव्यत्वोक्त्यर्थनिषेधविषयीकृतस्य कर्त्तव्यत्वोक्तेः प्रतिप्रसवत्वेन प्रसिद्धत्वात्पर्युदासस्य चाकर्तव्यत्वोक्त्यर्थत्वलक्षणनिषेधत्वायोगस्य 'विधीनामेकदेशः स्या-दिति दशमाधिकरणसिद्धान्तसूत्रावयवेनोक्तत्वात्पर्युदस्तस्य प्रवर्ग्यस्य प्रतिप्रसवो न युक्त इत्याशङ्कते—**नन्विति।** प्रतिषेधोक्ते [कर्त्तव्यत्वोक्त्यर्थलक्षणोयोभिधेयं यस्यास्तदङ्गावयव-स्तत्वं तस्मादित्यर्थः] कर्त्तव्यत्वोक्त्यर्थत्वलक्षणार्थत्वान्नायं पर्युदासः कर्त्तव्यत्वोद्धचर्थ इति दशमपर्युदासस्य विध्येकदेशत्वोक्त्योक्तमित्यर्थः। यद्यपि पर्युदासस्यापि प्राप्तिमभ्यनुज्ञायैव प्रवृतेः शास्त्रीयायाश्च प्राप्तेरत्यन्तबाधायोगान्निषेधवदन्याय्यविकल्पापादकत्वेनायुक्तत्वमाशंक्य विधिना कर्त्तव्यत्वोक्तेर्निषेधेन चाकर्त्तव्यत्वोक्तेः कर्त्तव्यत्वाकर्त्तव्यत्वयोश्च विरुद्धत्वेनै-कस्मिन्काले समावेशायोगाद्विकल्पापत्तिः। पर्युदासस्य तु पर्युदस्यमानव्यतिरिक्तार्थविषय-तया विध्युपसंहारार्थत्वेन विध्यनुग्राहित्वात्कर्त्तव्यत्वोक्त्यर्थविधिविरुद्धाकर्त्तव्यत्वोक्त्यर्थ-त्वानुपपत्तेर्न विकल्पापत्तिरित्याभिधानार्थंपर्युदासस्याकर्त्तव्यत्वोक्त्यर्थत्वायोगो 'विधानामेक-देशः स्यादि'ति सूत्रावयवेनोक्तः तथापि पर्युदस्यमानव्यतिरिक्तार्थविषयत्वोक्तेः पर्युदस्य-मानवर्जनफलत्वात् फलतो कर्त्तव्यतोक्त्यर्थत्वावगतेरिह पर्युदासेन प्रथमप्रयोगे प्रवर्ग्यस्या-कर्त्तव्यत्वानुक्तावनारभ्यवादेनैव प्रथमप्रयोगेऽपि कर्त्तव्यत्वसिद्धेरग्निष्टोमवाक्यानर्थक्य-प्रसंगात्तदर्थवत्वाय पर्युदासोऽप्ययमकर्त्तव्यत्वोक्त्यर्थ इति ब्रूम इति परिहरति—**अग्निष्टो-मेति।** पर्युदासापेक्षितप्राप्तिसमर्पणार्थत्वेनाग्निष्टोमवाक्यार्थवत्वं भविष्यतीत्याशंक्य, न चासावग्निष्टोमवाक्यस्य शेषो भवतीत्यादिवार्त्तिकेनाग्निष्टोमवाक्यैकवाक्यतया पर्युदासत्वा-योगस्य दर्शितत्वान्नैवमर्थत्वं संभवतीत्याह—**न हीति।** अनारभ्यवादस्याग्निष्टोमव्यति-रिक्तविषयत्वेन तच्छेषस्य पर्युदासस्याप्यग्निष्टोमव्यतिरिक्तविषयत्वाद्भिन्नविषयस्याग्निष्टो-मवाक्यस्य तत्प्रतिप्रसवार्थता न युक्तेत्याशंक्याह—**न चेति।**

तेन पर्युदासाग्निष्टोमवाक्ययोद्वयोरप्येकविषयत्वात्पर्युदस्तप्रतिप्रसवार्थताऽग्निष्टोम-वाक्यस्य युक्तेत्याशयः। पर्युदासाभ्युपगमे तस्य नित्यवर्जनफलत्वप्रसिद्धेरग्निष्टोमे तु विहितप्रतिषेधाद्विकल्प इति सिद्धान्तवार्त्तिकोक्तो विकल्पो न युज्येतेत्याशंक्य, पर्युदासत्वे अप्युभयो पयुदासप्रतिप्रसवयोः सामर्थ्याद्विकल्पसिद्धिमाह—**अतश्चेति**। एतदेव प्रश्नपूर्व-मुपपादयति—**कुत इति**। पर्युदासत्वे सति भाष्ये वार्त्तिके च प्रतिषेधोक्तिः किमर्थेत्याशंक्य प्रतिषेधवत्पर्युदासस्याप्यस्य फलतो कर्त्तव्यत्वोक्त्यर्थत्वादौपचारिका प्रतिषेधोक्तिः प्रति-प्रसवोपपत्त्यर्थेति सूचयितुमाह—**ततश्चेति**। यद्विकल्पभयेनान्यत्र पर्युदास आश्रीयते। स विकल्पोऽत्र पर्युदासे सत्यपि प्रतिप्रसवबलादापन्न इति कृत्वा, प्रतिप्रसवस्याकर्त्तव्योक्ति विनानुपपत्तेः प्रतिप्रसवसिद्ध्यै पर्युदासवृत्तेर्नञ्शब्दस्याकर्त्तव्यत्वोक्तौ तात्पर्याभावेऽपि नञ्शब्दसामर्थ्यादकर्त्तव्यत्वप्रतीतेः प्रतिषेधोक्तिर्भाष्यकारादिभिराश्रितेत्यर्थः। मुख्यनिषेध-स्यानभिमतत्वसूचनार्थं—**वरमित्युक्तम्**। अग्निष्टोमप्रथमप्रयोगे विकल्पसिद्धिमुपसंहरति—**तेनेति**।

अयं च विकल्पो वाक्यान्तरेण विकल्पकारिणः प्रतिप्रसववाक्यस्य प्रकृष्टश्रोत्रियब्राह्मण-कर्तृकाग्निष्टोमप्रथमप्रयोगविषयतयोपसंहारात्तन्मात्रविषयः। अप्रकृष्टश्रोत्रियाणां ब्राह्मणानां प्रकृष्टश्रोत्रियाणामपि च क्षत्रियादीनां त्वग्निष्टोमप्रथमप्रयोगे पर्युदस्तत्वात्प्रतिप्रसवाभावाच्च नित्यं प्रवर्ग्याभाव इत्याह—**अत्रापीति**। श्रोत्रियशब्दस्यच्छंदोऽध्येतृवाचित्वादनधीतवेदस्य च कर्मण्यप्रवृत्तेः श्रोत्रियत्वस्य विशेषणत्वायोगं शङ्कते—**कथं पुनरिति**। अनुष्ठानान्यथा-नुपपत्तिप्राप्तश्रोत्रियत्वमात्रविशेषणफलत्वे वचनस्यानर्थक्यापत्तेर्विशेषणवचनसामर्थ्यात्पाठतोऽ-र्थतश्चातिशयेन वेदज्ञानवांश्छ्रोत्रियो गम्यतइति परिहरति - **सत्यमिति**। प्रकर्षेण गतिर्ज्ञानं यस्येति बहुव्रीतिविग्रहः। अर्थज्ञत्वसूचनार्थं गतिशब्देन **ज्ञानयुक्तम्**। एतदेव दृष्टान्तेनोपपादयति—**यश्चेति**। अध्यापयितृवाचिनोऽनूचानविशेषणस्य प्रयोजनमाह—**अनूचानेति**।

एवं सत्यतिरात्रेऽप्यतिदेशात्प्रकृष्टश्रोत्रियब्राह्मणकर्तृकाद्यप्रयोगे विकल्पापत्तेरतिरात्र-प्रथमाहारे नित्यं प्रतिषेध इति सिद्धान्तवार्त्तिकोक्तं नियमकरणं न युज्येतेत्याशङ्कते—**तदिति**। अतिरात्रे न प्रथमयज्ञ इति पर्युदासेनातिदेशप्राप्तेन पर्युदासात्प्रतिप्रसवनिमित्ता-ग्निष्टोमसंस्थत्वाभावेन च प्रतिप्रसवानतिदेशान्नित्यमकरणमुपपादयति—**तत्रेति**। अग्नि-ष्टोमसंस्थत्वस्य प्रतिप्रसवनिमित्तत्वेऽतिरात्राद्विकृत्यन्तेरष्वग्निष्टोमसंस्थेषु पर्युदासप्रतिप्रसव-योरतिदेशाद्विकल्पशङ्कां निराकर्तुमाह—**विकृत्यन्तरेष्विति**। पर्युदसनीयप्रथमप्रयोगा-योगेन पर्युदासस्यैव तत्रायोगादित्याशयः। इष्टाग्निष्टोमसंस्थज्योतिष्टोमस्यैव विकृतिषु प्रवृत्तेरग्निष्टोमसंस्थासु विकृतिषु पर्युदसनीयप्रथमप्रयोगायोगात्पर्युदासायोगेऽप्युक्थ्यादि संस्थासु विकृतिपूक्थ्यादिसंस्थायाः प्रागनिष्टत्वेन सजातीयोक्थ्यादिसंस्थापेक्षया प्राथम्य-संभवात्पर्युदासातिदेशोपपत्तेः प्रतिप्रसवनिमित्ताग्निष्टोमसंस्थत्वाभावाच्च प्रथम-

प्रयोगेऽतिरात्रवन्नित्यमकरणापत्तेर्विकृत्यन्तरेष्वविशेषेण नित्यानुष्ठानोक्तिरयुक्तेत्याशङ्कते—**नन्विति** ।

एतदपेक्षया प्रथमयज्ञइत्यविशेषितात्प्रथमशब्दात्सर्वप्रवर्ग्यान्वयार्हे सोमयागप्रयोगापेक्षप्राथम्यप्रतीतेस्तस्य च विकृत्यन्तरे कस्मिंश्चिदयोगात्पर्युदासातिदेशो न युक्त इत्याशयेन परिहरति—**नैतदिति** ।

तत्र तु केषांचिदित्यादिवार्त्तिकोक्तस्याग्निष्टोमवाक्येन ज्योतिष्टोमाद्यप्रयोगविषयेण बाधान्निषेधस्य क्रत्वन्तराद्यप्रयोगविषयत्वप्रतीतेर्ज्योतिष्टोमप्रथमप्रयोगेन प्रवर्जितव्यमित्युपसंहारो न युक्त इत्युपसंहारभाष्यापेक्षस्य क्रत्वन्तरेषु प्रथमशब्दप्रवृत्त्यानिषेधाप्रवृत्तेर्निरासं सूचयन् ज्योतिष्टोमातिरात्रप्रथमप्रयोगे नित्यं न प्रवर्जितव्यं, ज्योतिष्टोमाग्निष्टोमप्रथमप्रयोगे विकल्पेनेत्येवमर्थाङ्गीकरणेनोपसंहारसमर्थनमतिरात्रप्रथमाहारे नित्यं प्रतिषेध इत्यादि वार्त्तिकोक्तमनारभ्यवादस्य प्रकृत्यर्थतायां सिद्धायामित्यादिवार्त्तिकोपपादितमुपसंहरति—**तस्मादिति** । आक्षेपवाद्युक्तक्रत्वन्तरप्रथमप्रयोगविषयत्वनिराससूचनार्था केवलोक्तिः ॥ ३२ ॥

इति द्वादशं प्रवर्ग्याधिकरणम् ॥

भा० प्र०—ज्योतिष्टोम ही प्रथम यज्ञ के नाम से अभिहित होने से प्रवर्ग्यकर्म का निषेध समग्र ज्योतिष्टोम के लिए है—इस पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "नैमित्तिकं वा" ज्योतिष्टोम का प्रथम यज्ञत्व नैमित्तिक अर्थात् निमित्तसापेक्ष है, कारण, "कर्तृसंयोगात्" कर्ता के साथ सम्बन्ध के कारण ही अर्थात् अनुष्ठाता के द्वारा जो एक बार, दो बार या अधिक बार जो उसका अनुष्ठान होता है, उसके अनुसार ही उसको प्रथम कहा गया है, क्योंकि, "लिङ्गस्य तन्निमित्तत्वात्" अनुष्ठान या क्रिया ही प्रथमत्व आदि व्यवहार का साधन है, आशय यह है कि प्रथम, द्वितीय आदि शब्द क्रिया की आवृत्ति अर्थात् एक से अधिक बार अनुष्ठान का बोध कराता हैं और क्रिया के साथ सम्बन्ध युक्त वस्तु को गौणभाव में प्रथम, द्वितीय आदि शब्दों से कहा जाता है जैसे जो प्रथम उत्पन्न होता है, वह प्रथम जो उसके बाद क्रम-क्रम से उत्पन्न होता है वह द्वितीय, तृतीय आदि नाम से कहा जाता है, अतः, ज्योतिष्टोम का एक से अधिक बार अनुष्ठान किया जाता हैं, उसी के अनुसार उसको "प्रथम" कहा गया हैं, कारण, ज्योतिष्टोम, उक्थ्य, षोडशी आदि की संज्ञा के भेद से सात है, प्रत्येक में अनुगत एक साधारणता है, किन्तु समाप्ति विषय में प्रत्येक में पृथक्त्वा हो जाती है । पृथक्-पृथक् रूप में समाप्ति ही संस्था है, अर्थात् सात प्रकार से समाप्ति कर उसका अनुष्ठान किया जाता है, अतः उसकी प्रथम प्रकार में समाप्ति करके अनुष्ठान का दूसरा नाम "अग्निष्टोम" है, वही यहाँ प्रथम यज्ञ के नाम से कहा जाता है, क्योंकि ऋग्वेद,

यजुर्वेद, सामवेद और [1]अथर्ववेद इन चार वेदों में कहीं भी प्रथम यज्ञ कहकर कोई यज्ञ नहीं है, इसलिए ज्योतिष्टोम की अग्निष्टोम नामक प्रथम संस्था में ही 'प्रवर्ग्य' कर्म का निषेध होता है।

यदि कहा जाय कि श्रुति में "अग्निष्टोमे प्रवृनक्ति" अर्थात् अग्निष्टोमयज्ञ में प्रवर्ग्य कर्म करे, इस प्रकार की विधि रहने पर भी किस प्रकार अग्निष्टोम में प्रवर्ग्य निषिद्ध होगा ? इसके समाधान में कहा गया है कि विशेष अधिकारी के पक्ष में कर्तव्य होने से अर्थात् साधारण अधिकारी के पक्ष में ही अग्निष्टोम में ही प्रवर्ग्य कर्म निषिद्ध होता है, किन्तु विशेष अधिकारी के अनूचान के पक्ष में अग्निष्टोम में भी प्रवर्ग्य करना चाहिये। इसलिये श्रुति में कहा गया है "स्यात् तस्य प्रव्रियज्यात्" अर्थात् जो व्यक्ति अनूचान = साङ्गवेद का अध्ययन करता है उसके लिये भी प्रवर्ग्य कर्म कर्तव्य है। इसलिये इस स्थल में व्यवस्थित विकल्प जानना चाहिये। अतएव ज्योतिष्टोम के प्रथम प्रयोग में ही प्रवर्ग्य कर्म निषिद्ध हैं।

"नैमित्तकम्" = संख्या युक्ति निषेध अर्थात् "न प्रथम यज्ञे" यह जो निषेध हैं वह "क्रतोः स्यात्" = क्रतु का अर्थात् समग्र ज्योतिष्टोम यज्ञ के पक्ष में ही प्रयोज्य होगा, "प्रकरणात्" = क्योंकि वह ज्योतिष्टोम के प्रकरण में पठित है। पूर्वपक्ष ॥ ३३ ॥

### अथ त्रयोदशं पेषणाधिकरणम्।

## [१३] पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥३४॥ सि०

**शा० भा०—दर्शपूर्णमासयोः समामनन्ति 'तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि स' इति। तत्र संदेह—किं पौष्णं पेषणं प्रकृतौ, उत विकृताविति। किं प्राप्तम् ? प्रकृताविति। कुतः ? प्रकरणात्। ननु प्रकृतौ पूषणं न कस्यचिद्धविषो देवतां समामनन्तीति। उच्यते। प्राकृतीं कांचिद्देवतां पूषशब्दो वक्ष्यति। एवं प्राप्ते—**

---

१. इस प्रसङ्ग में यह ज्ञातव्य है कि श्रौतयज्ञ ऋक्, यजुः, साम इन तीन वेदों में ही किया गया है। ब्रह्मा तीनों वेदों से मिलकर ब्रह्मत्व रूप है। "चतुर्षु वेदेषु" इत्यादि शाबरभाष्य का आशय यह है कि ऋक्, यजुः और सामसे मिलकर यज्ञ होता है और अथर्ववेद से अकेले ही यज्ञ होता है। "सर्वैर्ब्रह्मा" (आप०परि० २१) इस सूत्र की व्याख्या में हरदत्त ने लिखा है "वेदत्रयेण ब्रह्मत्वं सकलं भवति नैकेन। एकेनाप्यथर्वणवेदेन इति शेषः"। इदमर्थं हि 'स त्रिभिः (आप० परि० ३) तीनों वेदों में मिलकर ब्रह्मत्व होता है, एक से नहीं, किन्तु अथर्ववेद से अकेले ही ब्रह्मत्व होता है।

ब्रूमः—यत्र पौष्णं हविरस्ति, तत्र तस्य पेषणं विधातुं शक्यम्। न च प्रकृतौ पूषाऽस्ति। तस्मादुत्क्रष्टव्यं पेषणमिति। यदुक्तं, कांचिद्देवतां पूषशब्दो वक्ष्यतीति। ब्रूयाद्यद्यन्यत्रापि मुख्यः पूषा न स्यात्। नन्वन्यत्र क्रियमाणे प्रकरणमुपरुध्येत। उपरुध्यताम्। वाक्यं ह्यस्योपरोधकम्।

अथवा नैवात्र संदेहः। एवमेव प्राप्तमुच्यते। पौष्णं पेषणं विकृतौ, न प्रकृताविति। नास्ति पूष्णः प्रकृतौ चोदनेति। किमर्थं प्राप्तमुच्यते। उत्तरत्र कथा वर्तिष्यते॥ ३४॥

इति त्रयोदशं पेषणस्य विकृतौ विनियोगाधिकरणम्॥ १३॥

त० वा०—संतर्दनादिन्यायिनैव वाक्यप्रकरणविरोधे सति विकृत्यर्थत्वं सिद्धमुत्तरविवक्षार्थं प्रारभ्यते॥ ३४॥

इति त्रयोदशं पेषणाधिकरणम्॥ १३॥

अथ त्रयोदशपौष्णपेषस्य विकृतौ निवेशाधिकरणम्॥ १३॥

न्या० सु०—तत्र संदेह इत्यादिभाष्येणापूर्वन्यायव्युत्पादनार्थत्वेन प्राकृत्या देवतायाः पूषशब्देनाचोदितत्वात्पूषान्वितं पेषणं प्रकृतौ न संभवतीत्येवं सूत्रं व्याख्याय, अथ वेत्यादिना संदेहायोगेनापूर्वन्यायव्युत्पादनार्थत्वायोगादुत्तरचिन्तावतारार्थप्राप्त्यर्थत्वेन व्याख्याते श्रुतिप्रकरणविरोधे प्रकरणनिवेशे श्रुत्यर्थस्यात्यन्तबाधापत्तेः प्रकरणबाधेनोत्कर्षो युक्तः। इह तु भागशब्दस्य सेव्यवाचित्वे देवतायाः सेवितृत्वायोगेन विकृतावपि पूषभागायोगाद्वाक्यानर्थक्यापत्तेः, पूषशब्दस्य 'पूष्णो हस्ताभ्या'मिति मन्त्रे यजमानवाचित्वदर्शनाद्यजमानवाचित्वावगतेर्यजमानभागस्य च प्रकृतावपि सद्भावाद्विरोधानुपपत्तेर्देवतोद्देशेन त्यज्यद्रव्यवाचित्वस्य च देवतावाचिपूषशब्दसमभिव्याहारात्मकं वाक्यं विनाऽनवगतेः। सन्निहितवाचिसर्वनामार्थबहुव्रीहिश्रुत्या वैश्वदेवीति तद्धितश्रुत्येव देवतान्वितद्रव्यप्रतीतावपि वाक्येनैव प्रकरणस्य विरोधावगमात्प्रकरणाबाधेनापि च पूषशब्दस्य गुणवृत्त्या प्राकृतदेवतावाचित्वाभ्युपगमेन वाक्योपपत्तौ प्रकरणस्यात्यन्तबाधायोगात्कथं विकृत्यर्थत्वप्राप्तिरित्याशङ्क्याह—सन्तर्दनादीति। पदार्थपूर्वकत्वाद्वाक्यार्थस्य, पदार्थबाधे वाक्यार्थबाधापत्तेर्यथा दीर्घसोमशब्दस्य कर्तृदैर्घ्यवाचित्वाभ्युपगमेन प्रथमशब्दस्य वा ज्योतिष्टोमवाचित्वाभ्युपगमेन वाक्यस्य प्रकरणाविरोधोपपत्तावपि मुख्यपदार्थबाधेन वाक्यार्थबाधापत्तेः सन्तर्दनवाक्येन, प्रवर्ग्यनिषेधवाक्येन वा प्रकरणं बाधितं, तथात्रापि वाक्येन प्रकरणबाधात् विकृतिषु पूषदेवत्ये कर्मणि विहितं पेषणं विविशते, चरुद्रव्यकास्वेव वेत्युत्तरचिन्तोक्तिप्रसक्त्यर्थं प्राप्यत इति [इत्यर्थइत्यन्वयः १] कूलं पिपतिषतीतिवत्सना प्रत्यासत्तिवाचिना बुद्धिस्थत्वलक्षण [पञ्चमो २] प्रत्यासत्तिप्रसक्त्यभिधानाद्विवक्षाशब्देनाभिधानप्रसक्त्युक्ते [त्र्मं॰रयात्प्रत्यासत्तिरूपाप्रसक्तिरित्यर्थः ३] रर्थः॥ ३४॥

भा० प्र०—श्रुति में दर्शपूर्णमास प्रकरण में कहा गया है कि "तस्मात् पूषा प्रपिष्ट-भागः। अदन्तको हि सः।" (तै० सं० २६।८।५) पूषा देवता का भाग = चरु प्रपिष्ट होगा, क्योंकि, वह अदन्तक है। इस श्रुतिवाक्य में कहा गया है कि पूषा देवता का चरु प्रविष्ट अर्थात् तण्डुल का पेषण कर निष्पन्न होगा। यह पूषा देवता के चरु का पेषण अर्थात् पौष्णपेषण है, वह प्रकृतिभूत दर्शपूर्णमासयाग में होगा, या विकृतिभूत सौर्यादियाग में भी होगा ? यह संशय है।

पूर्वपक्षी का कहना है कि विधि जब दर्शपूर्णमास प्रकरण में पठित है तब प्रकरण के अनुसार यह वहीं कर्तव्य है। यदि यह कहा जाय कि दर्शपूर्णमास में पूषा देवता न होने से उसमें पूषा की प्राप्ति नहीं हो सकती है। इस शङ्का का यह समाधान है कि गौण अर्थ में "पूषा" कहने पर अग्नि ही अभिहित होगा और अग्निदर्श में एवं पूर्णमास में अर्थात् दोनों स्थलों में देवता है।

इसके समाधान में सिद्धान्ती का कहना है कि "पौष्णं पेषणं विकृतौ प्रतीयते" पौष्णपेषण विकृतिभूत सौर्ययागादि में ही अनुष्ठेय होगा। कारण, "अचोदनात् प्रकृतौ" प्रकृतिभूत दर्शपूर्णमास याग में पूषा देवता नाम से उपदिष्ट नहीं है। पूषा शब्द गौणार्थ में अग्नि को अवगति करायेगा—यह कथन भी सङ्गत नहीं है। क्योंकि, मुख्य अर्थ सम्भव होने पर गौण अर्थ मानना उचित नहीं है एवं दर्शपौर्णमास में पौष्णपेषण प्रकरण के अनुसार ही सिद्ध है, किन्तु सौर्यादियाग में वह वाक्य के बल से लब्ध है और प्रकरण की अपेक्षा वाक्य बलवान् होता है, इसलिए, प्रकरण से उसका उत्कर्ष होगा, फलतः विकृतिभूत सौर्यादियाग में ही पौष्णपेषण कर्तव्य होगा।

"पौष्णं पेषण" = पौष्णपेषण अर्थात् पूषादेवता के चरु का जो पेषण वह, "विकृतौ प्रतीयते" = विकृति कर्म में ही प्रतीत होगा, "प्रकृतौ अचोदनात्" = क्योंकि प्रकृतिभूत दर्शपूर्णमासकर्म में पूषादेवता को चोदना अर्थात् उपदेश नहीं है। इति तेरहवाँ निषेधाधिकरण ॥ ३४ ॥

## [१४] तत्सर्वार्थमविशेषात् ॥ ३५ ॥ पू०

**शा० भा०—पौष्णं पेषणं प्रकृतौ श्रूयमाणं विकृतावित्युक्तम्। तत्र संदेहः। किं चरौ, पशौ, पुरोडाशे च, उत चरावेवेति। किं तावत्प्राप्तम्? तत्सर्वत्र स्याच्चरौ पशौ पुरोडाशे च। कुतः? अविशेषात्। न कश्चिद्विशेष आश्रीयते। तस्मात्सर्वत्रेति ॥ ३५ ॥ पूर्वपक्षः ॥**

त० वा०—तत्सर्वार्थमविशेषात् ॥ ३५ ॥

अथ चतुर्दशं पौष्णपेषस्य चरावेव निवेशाधिकरणम् ॥ १४ ॥

न्या० सु०—यथाभाष्यं स्पष्टार्थत्वात्पूर्वपक्षसूत्रस्य पाठमात्रं कृतम् ॥ ३५ ॥

भा० प्र०—पूर्व अधिकरण में कहा गया है कि पूषा देवता के दन्तहीन होने से उसके चरु में पेषण होगा। इसमें यह सन्देह कि पूषा देवता के उद्देश्य से जो चरु, पशु एवं पुरोडाश विहित होता है, इन तीनों द्रव्यों का क्या पेषण करना होगा, या किसी एक ही द्रव्य का पेषण करना कर्तव्य है। इसमें पूर्वपक्षी का कहना है कि "तत् सर्वार्थम्" पौष्णप्रेषण जो पूर्व अधिकरण में कहा गया है, वह पूषा देवता के उद्देश्य से चरु, पशु एवं पुरोडाश जो-जो द्रव्य विहित है, उन सभी में कर्तव्य है। कारण, "अविशेषात्" इनमें किसी विशेष का उल्लेख नहीं है, अर्थात् इस द्रव्य में पेषण कर्तव्य है, इस द्रव्य में पेषण कर्तव्य नहीं है—इस प्रकार का कोई भी निर्देश शास्त्र में नहीं है।

"तत्" = वह, अर्थात् यह पौष्णपेषण, "सर्वार्थम्" = सभी के उद्देश्य में ही अर्थात् चरु, पशु एवं पुरोडाश सभी में कर्तव्य है, "अविशेषात्" = क्योंकि, कोई भी विशेष उपदिष्ट नहीं है। पूर्वपक्ष ॥ ३५ ॥

**चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात् ॥३६॥ सि०**

**शा० भा०—चरौ पौष्णं पेषणं विनियुज्येत। पुरोडाशे तावत्पेषणमर्थादेव प्राप्नोति। नैवान्यथा पुरोडाशो भवति। तदर्थं तावन्न वचनम्। पशौ च न स्यात्। हृदयादिषु पिष्यमाणेषु तेषामाकारविनाशः स्यात् तत्र को दोषः। 'हृदयस्याग्रेऽवद्यति' इति न हृदयादवदायिष्यते। तथाऽन्यदप्यवदानं न यथाश्रुतादवदास्यते। ननु शक्यते पिष्टेभ्योऽपि हृदयादिभ्योऽवदातुम्। नेति ब्रूमः। आकारा हृदयादयः न मांसानि। उक्तमेतदाकृतिः शब्दार्थ इति। यद्यपि पुनस्तदाकृतिकः क्रियते, तथाऽप्यस्योत्सादनप्रदेशं प्रति मुह्येयुः। तस्माच्चरौ पौष्णं पेषणं भविष्यतीत्येवमर्थं वचनम् ॥ ३६ ॥ सि० ॥**

त० वा०—यदि कश्चिद्वदेल्लौकिकपिष्टोपादानेनापि पुरोडाशसिद्धेर्नैकान्तेनार्थाक्षेप इति। तं प्रत्युच्यते—अर्थो नाम प्राकृत उपकारः। तस्य प्रकृतौ पेषणं साधनमासीत्। अतस्तेन पूर्वतरप्राप्तेनोक्तं पुरोडाशे पेषणम्। पशौ च प्रधानवैगुण्यं स्याद्। तद्धि हृदयाद्याकृतिकेन ततश्चावत्तेन साधयितव्यम्। न च पिष्टे तदाकृतिकादवदीयेत। पुनस्तदाकारकरणेऽपि भृद्गवयादिवद्गौणादवदीयमाने वैगुण्यमेव। (उत्सादनदेशादवद्यति) इति च श्रूयते। न च हृदयादेः पिष्टस्य ज्ञायेत कतरेण प्रदेशेनेदं पशोरुत्कृत्तमिति। तस्माच्चरावप्रतिषिद्धमनर्थप्राप्तं च पेषणमिति तत्रैव विधीयते।

ननु 'अदन्तको हि' इति हेत्वविशेषात्पशुपुरोडाशयोरपि प्राप्तेद्व्र्यवदानानि तच्छेषाश्च पिष्ट्वा दास्यन्ते। न च प्राप्तिविप्रतिषेधो भविष्यतः। उच्यते—

द्व्यवदानस्य प्रदानप्रक्रमत्वान्नान्तरा पेषणेन व्यवधानं युक्तम् । हेतुवन्निगदस्य च स्तुतिमात्रार्थत्वं वक्ष्यते । तेन स्वक्रमस्थस्यैव पेषणस्य विधिः । उपनीतमात्रमेव च पेषणं पुरोडाशेऽनुवादवुद्ध्या गृह्यते, चरौ च निवर्तमानं प्रतिप्रसवत्वेन । पशौ पुनरत्यन्ताप्राप्तविधित्वेन । न चैतान्येकस्यैव वाक्यस्यैतावन्ति रूपाणि विज्ञायन्ते । तत्रावश्यमैकरूप्येऽभ्युपगन्तव्ये, लाघवादर्थवत्त्वाच्च प्रतिप्रसवत्वमेवावधारणीयम् । एवं सिद्धं केवलचरुविषयत्वम् ॥ ३६ ॥

न्या० सु०—चराविति भाष्येण चरौ वेत्ति सूत्रावयवं चरावेवेत्यवधारणार्थवाशब्दयुक्तत्वेन सिद्धान्तप्रतिज्ञार्थतया व्याख्यायाऽर्थप्राप्तत्वेन विध्ययोगात्पुरोडाशे न स्यादित्येवं हेतूक्त्यर्थत्वेनाऽर्थोक्तं पुरोडाशे न स्यादिति सूत्रावयवव्याख्यार्थं पुरोडाशे तावदित्यादिभाष्यं सामर्थ्यप्राप्त्युक्त्यर्थतया भासमानमयुक्तमाशङ्क्योपकारप्राप्त्युक्त्यर्थतया व्याख्यातुमाह—**यदीति** । उपदेशात्प्राप्तिसम्भवेऽतिदेशात्प्राप्तिरयुक्तेरित्याशङ्क्य, विकृतौ पेषणसाध्यपिष्टसिद्ध्याख्योपकाराप्राप्तौ तत्साधनत्वेन पेषणोपदेशायोगात्पिष्टसिद्ध्याख्योपकारप्राप्त्यै प्राक्प्रवृत्तेनातिदेशेनापर्यायप्रवृत्तित्वात्पेषणस्यापि प्राप्तेरुपदेशानर्थक्यसूचनार्थं पूर्वतरेत्युक्तम् । पुरोडाशेऽर्थप्राप्तत्वेऽपि पेषणस्यानुष्ठेयत्वान्न स्यादिति सूत्रावयवमयुक्तमाशङ्क्य, पेषणोपदेशनिरासार्थत्वेन व्याख्यातार्थस्तदर्थं तावदिति भाष्यावयवः । प्रधानाख्यार्थविरोधापत्तेः पशौ पेषणोपदेशो न स्यादित्येवमर्थेति सूत्रावयवव्याख्यार्थं पशौ चेत्याद्यवदास्यतइत्यन्तं भाष्यं तात्पर्यतो व्याचष्टे—**पशौ चेति** ।

नन्विति भाष्येण हृदयादिशब्दानां स्थानविशेषस्य मांसविशेषवाचित्वात्पेषणेऽपि च तद्रूप्यानपायात्प्रधानवैगुण्यानापत्तिरित्याशङ्क्य, हृदयत्वादिजात्याख्याकारवाचित्वाज्जातेश्च संस्थानविशेषविशिष्टव्यक्त्याश्रयत्वेन पेषणाश्रयभूतव्यक्तिनाशे—

सामान्यान्यपि चैतानि नश्यंत्याश्रयनाशत ।

इत्यनेन नाशाद्वैगुण्यापत्त्युपपादनार्थं नेतीति भाष्यं व्याचष्टे—**तद्धीति** ।

स्वमतेन ह्यवदानं जुहोतीत्यस्य यागे ह्यवदानोपसंहारकत्वायोगं मत्वा पशुत्वजातेरमूर्तत्वात्, तत्तद्व्यक्तेश्च विशसनेन नाशात्साधनत्वायोगेऽपि हृदयादीनामवयवानामवदानोद्धरणेऽपि पुरोडाशवत्प्रत्यभिज्ञायमानत्वेनानाशात्साधनत्वोपपत्तेर्हृदयत्वादिजातीयेन व्यक्तिविशेषेण प्रधानं साधयितव्यमित्युक्त्वा भाष्यकृन्मतेनोपसंहारकत्वं मत्वा ततोवत्तेनावदानेनेत्युक्तम् । हृदयादेरप्युद्धृतावदानावस्थस्यैव साधनत्वान्न चेति पक्षद्वयसाधारणम् यद्यपीत्याशङ्कापरिहारभाष्यं व्याचष्टे—**पुनरिति** । आकारा हृदयादय इत्याकारशब्दवत्तदाकृतिक इत्याकृतिशब्दस्यापि जातिवाचित्वशङ्काऽऽकारोक्त्या निरस्ता । पारिणामिकस्यैव हृदयादेदयत्वादिजात्याश्रयत्वात्कृत्रिमाद्धृदयादेरवदानेऽपि वैगुण्यापरिहारसूचनार्थत्वेन तथापीत्यपिशब्दं व्याख्यातुं **मृद्गवयादिवदित्युक्तम्** ।

उत्सादनदेशमोहेऽपि को दोष इत्याशङ्क्योत्सादनदेशादिति श्रुत्यर्थानिष्पत्त्याख्यं दोषमुक्त्वोक्तवर्त्तनार्थत्वेनोत्सादोक्तिव्याख्यानायोक्तोक्तिः। तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**तस्मादीति**।

अदन्तकत्वहेतूक्त्या पेषणस्य भोजनार्हत्वसिद्धयर्थत्वेन भोजनत्वोपचरितयागकालत्वावसायादयदानानन्तर्यावसायात्तत्काले च न प्राप्तिविप्रतिषेधो वेति परिहारस्याविक्षेपादिति पूर्वपक्षसूत्रावयवेनादन्तकत्वहेतोः पशुपुरोडाशयोरप्यविशेषादित्येवमर्थेन विवक्षितत्वात्सिद्धान्तोपसंहारो न युक्त इत्याशङ्कते—**नन्विति**।

स्वमतेनावदानातिरिक्तस्यापि पुरोडाशस्य हृदयादेश्च यागाङ्गत्वं मत्वातच्छेपाग्रेत्युक्तम्। पेषणस्य भोजनार्हत्वसिद्धयर्थत्वेने भोजनत्वोपचरितयागकालत्वद्योतनार्थतामदन्तकत्वहेतोः सूचयितुं—**दास्यन्तइत्युक्तम्**।

सिद्धान्तोपसंहारभाष्योपपादनार्थं प्राप्तिविप्रतिषेधपरिहारशङ्कां दूषयितुमाह—**उच्यतइति**। द्व्यवदानं जुहोतीत्यनेनावत्तस्य होमविधानादवदानक्रियां च विनाऽवत्तहोमाशक्तेरर्थादवदानक्रियायाः प्राप्तेर्द्विर्हविषोऽवद्यतीत्यस्य च द्विरभ्यासमात्रविध्यर्थत्वोपपत्तेरविधेयत्वेन पृथक्पदार्थत्वाभावस्य पञ्चमे मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकैकेने(५-२-४)ति। सूत्रेणावदानोदाहरणे द्व्यवदानमात्रेणानुसमयं पूर्वपक्षयित्वा सर्वाणि त्वैककर्म्यादेतेषां तद्गुणत्वादि(५-२-५)त्यनेन द्व्यवदानादिना प्रदानान्तेनानुसमयं सिद्धान्तयितुमैककर्म्योक्त्या वक्ष्यमाणत्वान्मध्ये व्यवधानं न युक्तमित्यर्थः। हेत्वन्यथानुपपत्त्या न्यायानुपेतमपि व्यवधानमाश्रयिष्यतइत्याशङ्क्य, हेतुमात्रमदन्तत्वमित्यनन्तराधिकरणसूत्रे हेतूक्तेः स्तुतिमात्रार्थत्वस्य वक्ष्यमाणत्वान्न यागकालत्वद्योतनार्थतास्तीत्याह—**हेतुवन्निगदस्य चेति**। तस्मात्फलीकरणानन्तरमेवेह पेषणस्य विधेयत्वान्न प्राप्तिविप्रतिषेधपरिहारः सम्भवतीत्युपसंहरति—**तेनेति**। वैरूप्यापत्तेरपि न सर्वत्र विधिर्युक्त इत्याह—**उपनीतेति**। पुरोडाशसिद्धयर्थंपिष्टाख्यकार्यलोपाच्चरौ निवृत्तिः। पशुप्रकृतौ सायं दोहे विध्यभावेनातिदेशतोऽप्राप्तेः पशौ चानुपदेशादत्यन्ताप्राप्तिः। एवमपि पुरोडाशमात्रविषयत्वे, पशुमात्रविषयत्वेऽपि वैरूप्यसम्भवात्कथं चरुमात्रविषयत्वावधारणेत्याशङ्क्याह—**तत्रेति**। अत्यन्ताप्राप्तविधावदृष्टार्थत्वकल्पनागौरवापत्तेरनुवादे च वैयर्थ्यापत्तेर्नान्यविषयता युक्तेत्याशयः॥ ३६॥

**भा० प्रा०**—पूर्वकथित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है "चरौ वा" चरु में ही पेषण विधि से विहित है, "अर्थोक्तं पुरोडाशे" पेषण न करने पर पुरोडाश निष्पन्न नहीं हो सकता है, अतः, पेषण अर्थ सिद्ध है और जो अर्थ सिद्ध रहता है, वह विधेय अर्थात् विधि का विषय नहीं होता है। इसी प्रकार "पशौ न स्यात्" पशु में भी पेषण नहीं हो सकता; कारण, "अर्थविप्रतिषेधात्" ऐसा होने पर अर्थ का लोप हो जायेगा। क्योंकि, शास्त्र में कहा गया है "हृदयस्य अग्रे अवद्यति अथ वक्षसः अथ

जिह्वायाः", प्रथम हृदय का अंश का अवदान = टुकड़ा करे बाद में जिह्वा का अंश, उसके बाद वक्ष का अंश"। इन अंशों के द्वारा हवन करना चाहिए, यदि इनका पेषण किया जाय तो तब हृदय, जिह्वा एवं वक्षःस्थल के मांस का जो आकृति के कारण पार्थक्य है—वह नहीं रहेगा, कारण, पेषण करने पर अङ्गसमूह एक ही तरह का हो जायेगा। क्योंकि, मांसमात्र हृदयादि अवयव नहीं है, किन्तु तत्-तत् आकार विशिष्ट मांस ही हृदयादि पद वाच्य है, यदि सभी अङ्ग एक हो जाय तो "हृदयस्याग्रे अवद्यति" वचनों की सार्थकता नहीं रहेगी, केवल पौष्णचरु में ही पेषण कर्तव्य है।

"चरौ वा" = चरु में, पेषण विहित है, "पुरोडाशे अर्थोक्तं" पुरोडाश का पेषण अर्थ सिद्ध होने से विधि बोधित नहीं है, "अर्थविप्रतिषेधात् पशौ न स्यात्" = अर्थ के (प्रयोजन के) विप्रतिषेध (विरोधी होने से पशु में पेषण विहित नहीं हो सकता है)। सिद्धान्त ॥ ३६ ॥

## चरावपीति चेत् ॥ ३७ ॥

**शा० भा०—इति चेत्पश्यति भवान्, अर्थविप्रतिषेधान्न पश्वर्थमिति। ननु चरावप्यर्थविप्रतिषेधः। विशदसिद्धे ओदने चरुशब्दमुपचरन्ति। पिष्यमाणो हि पिष्टकं यवागूर्वा स्यात् खलिर्वा॥ ३७॥ आ०॥**

त० वा०—चरावपीति चेत् ॥ ३७ ॥

न्या० सु०—चरुशब्दस्यौदनवाचित्वादन्योन्यासंलग्नत्वलक्षणवैशद्ययुक्ततण्डुल-निष्पन्नस्य चान्नस्योदनत्वप्रसिद्धेः पेषणे वैशद्याभावेनाचरुत्वापत्तेश्चरावपि पाकात्प्राक्पेषणेऽर्थविप्रतिषेधप्रसङ्गस्य तुल्यत्वाद्धेतुवशेन न्यायं बाधित्वा यागकालत्वाभ्युपगमेन परिहारस्य च पशुपुरोडशयोरपि साम्यात्पर्यनुयोगपरिहारसाम्येनैकस्यापर्यनुयोज्यत्वोक्त्यर्थत्वेन यथाभाष्यं स्पष्टत्वात्सूत्रस्य पाठमात्रं कृतम् ॥ ३७ ॥

भा० प्र०—सिद्धान्ती ने कहा है कि अर्थ का विरोध होने से पशु का पेषण कर्तव्य नहीं है, इस प्रसङ्ग में पूर्वपक्षी की यह आशङ्का है कि "चरौ अपि" चरु में भी यह आपत्ति प्रयोज्य है, कारण, हव्य-पक्व भली-भाँति सिद्ध अन्न का ही नाम चरु है, यदि चावल को पीसकर दिया जाय तो भली-भाँति सिद्ध वह नहीं होगा, अतः, जिस युक्ति के आधार पर पशु का पेषण लुप्त होगा उसके अनुसार चरु में भी पेषण के लोप की आपत्ति होगी, अतः, चरु का यदि पेषण होता है तो पशु का भी पेषण होगा। पके चावल में चरु शब्द का व्यवहार होता है, पीसा हुआ आटा पकाने पर यवागू या खल ही होगा।

"चरौ अपि" = चरु में भी अर्थ का विप्रतिषेध होगा, "इति चेत्" = यदि यह कहा जाय। आशङ्का ॥ ३७ ॥

**न पक्तिनामत्वात् ॥ ३८ ॥**

**शा० भा०—अत्रोच्यते। सत्यं विशदसिद्ध ओदने चरुशब्दः प्रयुज्यते। विशदसिद्धश्चरुर्दीयत इति। न त्वस्य विशदसिद्धिर्निमित्तम्। यदि विशदसिद्धिर्निमित्तं स्यात्, न पिष्टसिद्धे प्रयुज्येत। तत्रापि हि प्रयुज्यते, पिष्टकचरुः साध्यत इति। अतोऽन्यदेतयोः सामान्यं तन्निमित्तम्। तदेतदुच्यते—न पक्तिनामत्वादिति। न चरौ विप्रतिषेधः। कथम्? पक्तिनामत्वात्। पक्तिनामैतत्—चरुरिति। अनवस्रावितान्तरूष्मपाकेनाभिनिर्वर्त्यस्य भवति चरुशब्दो वाचकः। तेन पिष्टे ओदने विशदौदने च प्रयोक्तारो भवन्ति चरुरिति। पक्षोक्तमेव प्रयोजनम्। पूर्वपक्षे पशावपि पेषणम्। सिद्धान्ते चरावेव ॥ ३८ ॥**

**आ० नि० ॥ पौष्णपेषणस्य चरावेव निवेशाधिकरणम् ॥ १४ ॥**

त० वा०—न चरावर्थविप्रतिषेधः। कथम्?

गतिः सर्वपदार्थानां लौकिकव्यवहारतः।
तत्र पाकविशेषश्च चरुत्वेनावधार्यते ॥

ओदनपिष्टकचरुप्रयुक्तस्य चरुशब्दस्यानेकार्थत्वमन्याय्यमित्युभयसामान्यवचनत्वं विज्ञायते। तयोश्च सामान्यमनवस्रावितान्तरूष्मपक्वत्वम्। तस्मादविप्रतिषेधः।

**पक्षोक्तं प्रयोजनमिति—**मन्दं फलमुक्तम्। एतावान्समाधिः। अविशेषेऽपि=न पुरोडाशार्थत्वं प्रयोजनम्। किं तर्हि। पश्वर्थत्वमिति ॥ ३८ ॥

इति चतुर्दशं पेषणस्य चरुविनियोगाधिकरणम् ॥ १४ ॥

न्या० सु०—ओदनशब्दस्यावस्रावितानवस्रावितयोस्तुल्यप्रयोगतयाऽनवस्रावितपाकनिमित्तत्वायोगेन विशदश्रपणनिमित्तत्वावसायाच्चरौ वैशद्यानपेक्षायामनोदनत्वापत्तेरोदनो वा प्रयुक्तत्वादि(१०-१-४२)ति दशमाधिकरणसिद्धान्तसूत्रे चरुशब्दस्यौदनवाचिता वक्ष्यमाणा विरुद्ध्येतेत्याशङ्क्यादितिमोदनेनेति वैशद्याख्यचरुविशेषणविधिसूचनार्थे वाक्यशेषे प्रयुक्तौदनशब्दवशेन चरुशब्दस्य स्थालीवाचित्वपूर्वपक्षनिवृत्त्यै तत्रोदनशब्दाऽनवस्रावितान्तरूष्मपक्वत्वयात्रवाचित्वे वा सूपशाकादेरपि चरुत्वापत्तेस्तन्निवृत्त्यै सूपादिव्यतिरिक्तत्वोपलक्षणार्थो न तु चरुशब्दस्यौदनवाचित्वोक्त्यर्थोऽवस्रावितौदने चरुशब्दाप्रयोगादित्येवं विरोधपरिहारसूचनार्थं सत्यमित्यादिभाष्येण यद्यप्योदने चरुशब्दः प्रयुज्यते विशदतण्डुलनिष्पन्नमेव चान्नमोदनत्वेन प्रसिद्धं तथापि पिष्टैरपि तण्डुलैर्निष्पन्ने चरुशब्दप्रयोगाद्वैशद्यानपेक्षत्वावगतेः पिष्टविशदसाधारणसूपादिव्यतिरिक्तान्तरूष्मपक्वत्वाख्यचरुशब्दप्रवृत्तिनिमित्तोपपत्तेश्च पिष्टसिद्धे चरुशब्दस्य गौणत्वकल्पनायोगान्न वैशद्यापेक्षेत्यस्मिन्नर्थे सूत्रयोजनपूर्वं नत्र्थंव्याख्यार्थं न चराविति भाष्यं व्याचष्टे—**न चराविति।**

हेतुप्रश्नोत्तरत्वेन पक्तिनामत्वादिति सूत्रावयवव्याख्यार्थं कथमित्यादिभाष्यमाशयतो व्याचष्टे—**कथमिति**। पिष्टौदन इति भाष्यावयवं पिष्टविशदसाधारणौदनमात्रवाची चरुशब्दो न तु विशदलक्षणौदनविशेषवाचीत्येवमर्थत्वेनाभासमानं पिष्टतण्डुलनिष्पन्नेऽन्ने क्वचिदुपचारादोदनशब्दप्रयोगादर्शनादवस्रावितेे च विशदतण्डुलनिष्पन्नौदनेऽपि चरुशब्दाप्रयोगादयुक्तमाशङ्क्य पिष्टतण्डुलनिष्पन्नेऽन्ने क्वचिदुपचारादोदनव्यपदेश्येमुख्ये चौदने विशदतण्डुलनिष्पन्नान्नलक्षणे चरुरिति प्रयोक्तारो भवन्तीत्येवं भाष्यव्याख्यां सूचयङ्छलोकं व्याचष्टे—**ओदनेति**। अनवस्रावितपाकेनेतिभाष्येऽनवस्रावितविशेषणेनावस्रावितौदननिवृत्तावप्यन्तरूष्मविशेषणमपि मण्डकादिनिवृत्त्ये विवक्षितमिति सूचनार्थं पिष्टौदनयोरनवस्रावितान्तरूष्मपक्वत्वं सामान्यमित्युक्तम्। सूत्रार्थमुपसंहरति—**तस्मादिति**।

पक्षोक्तमितिभाष्यं प्रयोजनाभावचोद्यस्य प्रयोजनसन्देहस्य वा पक्षोक्तत्वोक्तिव्यावर्त्यस्याभावादयुक्तमित्याशङ्कते—**पक्षोक्तमिति**। पुरोडाशे पक्षद्वयेपि पेषणसद्भावाच्चिन्ताप्रयोजनाभावमाशङ्क्य, चिन्तायाः पशुपुरोडाशयोरविशेषे सत्यपि न पेषणस्य पुरोडाशार्थत्वं निवर्त्यत्वेन चिन्ताप्रयोजनं, किं तु पश्वर्थत्वं निवर्त्यत्वेन प्रयोजनमित्येवं प्रयोजनसमाध्यर्थत्वेन भाष्यमुपपादयितुमाह—**एतावान्वेति**। पुरोडाशेऽप्यवदानानन्तरमप्राप्तमदृष्टार्थं पेषणं पूर्वपक्षे, सिद्धान्ते तु तन्नास्तीति विशेषसूचनायापिशब्दः ॥ ३८ ॥

भा० प्र०—पूर्वोक्त आशङ्का के उत्तर में सिद्धान्ती का कहना है कि "न" विशद सिद्ध अन्न ही चरु नहीं है, अपि तु अनवस्रावित = जिसका भाद्र न निकाला जाय एवं जो अन्तरूष्म अर्थात् भीतर की गर्मी के द्वारा जो अन्न पकता है, उसी को चरु कहा जाता है, अन्न को भली-भाँति सिद्ध ही होना चाहिए—ऐसा कोई नियम नहीं है, अतः, पिष्ट चरु भी उक्त रूप से पक्व होने से उसका चरुत्व रहेगा ही, अतः "प्रतिबन्दी" = वादी और प्रतिवादी दोनों पक्षों की शङ्का और समाधान हो तो उसे प्रतिवन्दी कहा जाता है। के बल से जिस पशु का पेषण विधान किया जायेगा—ऐसी बात नहीं है। इसलिए केवल चरु में ही पेषण कर्तव्य है। आशङ्का का परिहार ॥ ३८ ॥

इति चौदहवाँ पेषण का चरुविनियोगाधिकरण ॥

## [१५] एकस्मिन्नेकसंयोगात् ॥ ३९ ॥ सि०

**शा० भा०—पौष्णं पेषणं विकृतौ भवति चरावेवेत्युक्तम्। अथेदानीं संदिह्यते। किमेकदेवत्ये पौष्ण एतद्भवति, उत द्विदेवत्येऽपीति। किं द्विदेवत्य उदाहरणम्। राजसूय उत्तरे त्रिसंयुक्ते सौमापौष्णे एकादशकपाले ऐन्द्रापौष्णश्चरुः, श्यावो दक्षिणा इति। तत्रैन्द्रापौष्ण उदाहरणम्। किं प्राप्तम्? एकदेवत्यस्यैव पेषणमिति। केवलसंयोगात्, यथा चतुर्धाकरणे ॥३९॥ सिद्धान्तः ॥**

त० वा०—इदानीं किमन्यसहिते पूषणि देवतायामैन्द्रापौष्णे चरौ पेषणं भवति, उतैकस्मिन्नेवेति संदेहे चतुर्धाकरणेन्द्रपीतन्यायात्सिद्धान्तेनैव तावदुपक्रमते। पूषेत्येकसंयोगश्रवणात्तथाभूत एवार्थे स्यादिति ॥ ३९ ॥

**अथ पंचदशं पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम् ॥ १५ ॥**

न्या० सु०—पौष्णमित्यादिभाष्येण प्रासङ्गिकसङ्गत्युक्तिपूर्वं संदेहमुक्त्वा, सौमापौष्णे विधितोऽर्द्धपेषणनिश्चयादुदाहरणाभावं किं द्विदेवत्य इति भाष्येणाशङ्क्य, राजसूयइत्यनेनैन्द्रापौष्णस्योदाहरणत्वमुक्त्वैकस्मिन्नेव पूष्णि देवतायां पेषणं, न सद्वितीय इति सिद्धान्तोक्त्यर्थत्वेन सूत्रव्याख्यार्थं किमिति विना सर्वपेषणे धर्मविप्रतिषेधसूत्रोक्तभागसंकरासिद्धेर्देवताभागधर्मत्वाभ्युपगमेन पदसाध्यर्थावगम्यनिरपेक्षपूषसंयोगधर्मविप्रतिषेधाभ्यां सिद्धान्तोक्त्यर्थत्वावगमात्, तयोश्चापि वेति पूर्वपक्षसूत्रवक्ष्यमाणन्यायेन सुपरिहरत्वादयुक्तमाशङ्क्योपक्रममात्रार्थतयोपपादयितुं भाष्यं संक्षिप्य व्याचष्टे—**इदानीमिति**। उपक्रमते तावदित्यन्वयादुपक्रममात्रत्वोक्तिः। तद्धितसमासवत्पदमात्रेऽपि समर्थः पदविधिरिति सामर्थ्यापेक्षत्वस्मरणात्सापेक्षत्वे च व्यपेक्षालक्षणसामर्थ्यव्याघातापत्तेर्निरपेक्षस्य पूष्णः प्रविष्टभागसमासार्थत्वलक्षणात्संयोगादित्येवं केवलचतुर्द्धाकरणदृष्टान्तोक्तिभ्यां हेतुव्याख्यासूचनार्थं केवलेति भाष्यं व्याचष्टे—**पूषेति**। तथाभूतोक्त्या निरपेक्षपूषसंयुक्ततोक्ता ॥ ३९ ॥

भा० प्र०—पौष्णपेषण विकृति में ही कर्तव्य है एवं वह चरु में ही प्रयोज्य है—यह सिद्ध होता है। प्रकृत में यह सन्देह होता है कि केवल अविमिश्र पूषा देवता के चरु में ही क्या पेषण कर्तव्य है अथवा जहाँ पूषा अन्य देवता के साथ मिलितरूप में देवता है, वहाँ भी पेषण कर्तव्य है ? जैसे राजसूय यज्ञ में "सौमापौष्णं चरुं निर्वपति" इस वाक्य में सोमदेवता के साथ पूषा देवता का चरु विहित है, इस स्थल में सोम और पूषा व्यासज्य भाव से अर्थात् परस्पर मिलित भाव से देवता है। इस सौमापौष्ण चरु में पेषण कर्तव्य है या नहीं—यही संशय है। इसमें पूर्वपक्षी का कहना है कि इस स्थल में जब पूषा भी देवता है और समस्त पद के उत्तर तद्धित प्रत्यय का प्रयोग है, तब इस दो देवता वाले याग में भी पेषण कर्तव्य है।

उसके उत्तर में सिद्धान्ती का कहना है कि "एकस्मिन्" इस स्थल में पेषण कर्तव्य नहीं है, किन्तु जहाँ पूषा ही अकेले देवता रहता है, वहीं चरु का पेषण करना चाहिए, क्योंकि, "एकसंयोगात्" श्रुतिवाक्य में "पूषाप्रपिष्टभागः" इस स्थल में केवल पूषा के ही विषय में कहा गया है, अतः, एकमात्र पूषा के ही प्रपिष्ट भाग का संयोग = सम्बन्ध होने से केवल पूषा ही जहाँ देवता है वहीं चरु का पेषण होगा। इस प्रकार के सिद्धान्त से अधिकरण का आरम्भ किया गया है।

"एकस्मिन्" = एकमात्र शुद्ध पूषा देवता के चरु में ही पेषण विहित है, "एकसंयोगात्" = क्योंकि पूषानामक एक देवता के साथ ही पेषण का सम्बन्ध है। सिद्धान्त ॥ ३९ ॥

**धर्मविप्रतिषेधाच्च ॥ ४० ॥**

**शा० भा—द्विदेवत्ये विप्रतिषिध्येत धर्मः। पूष्णः पेषणं नेतरस्य। तत्र यदि पूष्णो भागः पिष्येत, अपिष्ट इतरस्य स्यात्। तत्र विषमः पाको भवेत्। पाकनिमित्तश्च चरुशब्दः स विप्रतिषिध्येत। अथाविरोधं मन्यमाना अपरस्यापि भागं पिष्युः भागसंमोहः स्यात्। तत्र को दोषः। अन्यस्य भागोऽन्यस्मा अवदीयेत। तथाऽयथाश्रुतं क्रियेत। तस्माद्प्येकदेवत्ये पेषणमिति ॥ ४० ॥ हेतुः ॥**

त० वा०—इतश्चैकदेवत्ये, कुतः ?

पिष्यादर्धं समस्तं वा द्विदेवत्ये चरौ भवान्।
पूर्वस्मिन्पाकवैषम्यं परस्मिन्भागसंकरः ॥

अर्धपेषणे हि पिष्टोंऽशः शीघ्रतरं सिध्यति, इतरश्चिरेण। तत्र पिष्टपाकानन्तरमुद्वासने सतीतरस्याऽऽमत्वं भवेत्। तत्पाकप्रतीक्षणेऽपि वा पिष्टस्य विलयनादचरुत्वं स्यात्। पाकवैशद्येन हि पिष्टकचरुरपि चरुर्भवति। न चैतदस्मिन्पक्षे भवति।

अथ तण्डुलान्पूर्वं प्रक्षिप्य पश्चात्पिष्टं निक्षिपेत् ततो यौगपद्यं गम्यमानं बाध्येत। पूषानुरोधेन त्वैन्द्रेऽपि भागे पिष्यमाणे भागसंकरादन्यदीये भागेन्यस्मै दीयमाने वैगुण्यं प्राप्नोति। ननु चैतत्सर्वं द्विदेवत्येषु भवतोऽपि समानम्।
तथा हि— चरौ पशौ पुरोडाशे दीयमाने द्विदैवते।
पूर्वं हविष एकत्वाज्जायते भागसंकरः ॥

स चाङ्गीकृतो मिश्रस्य हविषो मिश्रदेवतोद्देशेन युगपद्दाने विरोधाभावात्।
उच्यते— यागापूर्वप्रयुक्तेषु धर्मेष्वेवं भवेदिदम्।
भवतः पेषणं त्वेतद्देवताधर्मसंमतम् ॥

अस्मत्पक्षे पुनः पूषदेवत्ययागापूर्वप्रयुक्तं पेषणम्। न च तद्द्विदेवत्ये तथावस्थितमित्यप्रवृत्तिरेव। हविरन्तरेष्वपि च द्विदेवत्येष्वेवंप्रकारत्वमेवेति देवता गुणभूता। न च गुणानुरोधेन प्रधानमावर्तनीयमिति, सकृद्दानाभ्युपगमात्सर्वस्मिन्सह क्रियमाणे संकरदोषानाश्रयणम्। भवता पुनरस्मदभ्युपगमेन द्विदेवत्ये पेषणं वक्तुमशक्नुवताऽवश्यं देवतानिमित्तत्वमभ्युपगन्तव्यम्। ततश्च देवतयोः प्राधान्यादेकैका स्वभागमसंकीर्णं प्रार्थयत इति, तथैव दानमनुष्ठेयम्। आदितश्चैक एव भागः पेषणार्ह इत्यवधारितम्। ततश्च पक्तिदोषः स्यात्।

अथ तण्डुलात्मकोऽपि भागः पाकसाम्यार्थं पिष्यते। तत्र ब्रूमः—यावदनुत्पन्नभागविवेकं हविः, तावत्कियान्कस्य भाग इत्यनवधारणात्संकरदोषो न जायते। कल्पिते तु विवेके वचनादृते पुनरेकीकरणानुपपत्तेरसंकीर्णदानं प्राप्नोति।

तत्रान्यस्य भागात्, अन्यस्मा अवदीयमाने वैगुण्यं भवति । पात्रभेदेन वक्ष्यतीति चेत् ? न । चरुमिति यागं प्रत्युपादीयमानत्वेन विवक्षितैकसंख्यस्य पात्रकृतभेदाश्रयणे शास्त्रबाधप्रसङ्गात् । अतो न कथंचिदपि प्रतिषिद्धधर्मकं द्विदेवत्ये पेषणं भवतीति न कर्तव्यम् ॥ ४० ॥

न्या० सु०—सूत्रव्याख्यार्थं द्विदेवत्य इत्यादि भाष्यं संक्षिप्य व्याचष्टे—**इतश्चेति**। तत्र यद्यथाविरोधमिति भाष्यस्थयद्यथशब्दसूचितविकल्पव्याख्यार्थं पूर्वार्द्धं स्पष्टत्वादव्याख्याय, तत्रेत्यादि स विप्रतिषिद्धचैतेत्यन्तभाष्यावयवव्याख्यार्थं तृतीयं पादं व्याचष्टे—**अर्द्धेति**। 'पिष्टस्य तण्डुलेषु विलयनादवैषद्येनानोदनत्वेऽपि चारोर्वैशद्यानपेक्षत्वात्कथमचरुत्वांपत्तिरित्याशङ्क्य, अन्योन्यासंलग्नत्वलक्षणस्वाभाविकवैषद्यानपेक्षत्वेऽपि पाकविशेषापाद्यान्योन्यावयवानन्तर्गतिलक्षणवैशद्यापेक्षत्वादचरुत्वापत्ति, पाकनिमित्तञ्चेति भाष्यावयवोक्तां परिहारत्वेन वक्तुं पाकवैशद्ये'न हीत्युक्तं अथेत्यनेनेषत्पक्वत्रेषु स्थाल्यां पिष्टनिक्षेपाद्वैशद्यसिद्धिमाशङ्क्य, तत इत्यनेन पिष्टतण्डुलभागयोर्द्वयोरप्येकयागसाधत्वेनैकहविष्ट्वात्कृत्स्नस्य च हविषो 'हवींषि श्रपयतीति युगपच्छ्रपणविधानाच्छ्रपणार्थस्य निक्षेपस्यापि यौगपद्यमिहातिदेशादगम्यमानं—**बाध्येतेत्युक्तम्** । 'अथेत्यादिक्रियेतेत्यन्तभाष्यावयवव्याख्यार्थं चतुर्थं पादं व्याचष्टे—**पूषेति** ।

अर्द्धपेषणवत्पृथक्करणासक्तावपि बुद्ध्यानिष्कर्षसंभवादवैगुण्यमाशङ्क्य, सर्वपेषणेऽर्द्धपेषणवत्पिष्टापिष्टविवेकाभावाद्यावान्पिष्टो भागः, तावान्पूष्ण इत्येवं बुद्ध्या निष्कर्षायोगसूचनार्थं भागसङ्करोक्तिः । भाष्ये भागस्य प्रदेयावदानप्रकृतित्वात्प्रकृतिव्यत्ययोक्तावपि स्वमतेन कृत्स्नस्य भागस्य प्रदेयत्वं मत्वा भागव्यक्तयोक्तिः । द्विदेवत्ये हविषि देवताभेदाद्भागकल्पनानामापाद्य, सर्वपेषणे संकरापादनेन व्यत्ययापादनाद्वैगुण्यापादनमपेक्षणपक्षेऽपि साम्यादेकस्मिन्पक्षे पर्यनुयोगानुपपत्तेरयुक्तमित्याशङ्कते—**ननु चेति** ।

अपेषणे संकरानापत्तेः पर्यनुयोगासाम्यमाशङ्क्य दानात्प्रागघविषोऽपृथक्करणाद्दानकाले च भिन्नदेवतान्वयसिद्ध्यर्थमर्द्धमस्यै देवताया अर्द्धमस्या इति बुद्ध्या पृथक्करणात्संकरापत्तिमुपपादयति—**तथा हीति** । दानवेलायां बुद्ध्यानिष्कर्षाभावे प्रागपृथक्करणेऽपि संकरस्य व्यत्ययानापादकत्वेन तन्निमित्तवैगुण्यापादकत्वासिद्धेः पूर्वत्रिशेषणसामर्थ्यलभ्यं पश्चात्पृथक्करणमपि विवक्षितम् । अतोऽधिष्ठानभेदेऽपि व्यासङ्गित्वेन देवतात्वस्याभेदाद्दानकाले बुद्ध्या निष्कर्षहेत्वाभावेन व्यत्ययापत्तिद्वारवैगुण्यानापत्तिर्यथा पेषणशून्येषु द्विदेवत्येषु निर्दोषत्वात्संकरोऽङ्गीकृतः तथा पेषणयुक्तेष्वपि निर्दोषत्वादङ्गीकार्य इति परिहारसाम्यं सूचयितुमाह—**स चेति** ।

वैगुण्यं विरोधोक्तं, मिश्रोक्त्या चापृथक्करणम् । अपेक्षणवादमते धर्माणां यागपूर्वप्रयुक्तत्वात्, तस्य चैकत्वात्, तत्साधनकृत्स्नद्रव्याश्रितत्वेन पृथक्करणानपेक्षतया द्रव्यस्य पृथक्करणाभावात्कृत्स्नस्य युगपद्दानोपपत्तेर्भागाभावेन संकराभावाद्वैगुण्यानापत्तिः ।

पेषणवादिमते तु देवताप्रयुक्तत्वाभावे द्विदेवत्ये पेषणप्रयोजकपूषदेवत्ययागापूर्वंप्रयुक्तत्वेनानवस्थितत्वात्प्रयोजकाभावे [नापेषणापत्तेर्देवताप्रयुक्तत्वस्याभ्युपगमनीयत्वाद्देवताभेदाद्द्रव्यपृथक्करणापत्तेर्युगपद्दानविधानाच्च दानकाले संकरापत्तेर्वैगुण्यापत्तिरिति वैषम्योक्त्या परिहरति—**उच्यत इति**। एवमिदमंशद्वाभ्यां मिश्रस्य युगपद्दानपरामर्शादस्मत्पक्षे धर्माणां यागापूर्वप्रयुक्तत्वादिदंदानमेवंमिश्रस्य युगपदविरुद्धं भवेत्, भवत्पक्षे तु पेषणस्य देवताप्रयुक्तत्वेन भिन्नदेवतान्वयार्थं द्रव्यपृथक्करणाक्षेपान्मिश्रस्य युगपद्दानं विरुद्धमित्यर्थः। द्विदेवत्येष्वपेषणेऽपि वैगुण्यं समानमिति यदुक्तम्, तदैन्द्रापौष्णविषयं, द्विदेवत्यान्तरविषयं वेति विकल्प्य, आकल्प्ये तावत्प्रयोजकाभावादेवापेषणसिद्धेर्वैगुण्यापत्तिसाम्योक्तिर्व्यर्था। द्वितीये तु प्रयोजकाभावात्पृथक्करणापत्त्या संकरानापत्तेस्तन्निमित्तवैगुण्यानापत्तिरिति सूचयन् पूर्वार्द्धं व्याचष्टे—**अस्मत्पक्षे पुनरिति**। सद्वितीयपूषदेवत्ये तस्य पेषणस्य पूषदेवत्ययागापूर्वप्रयुक्तत्वेनावस्थितत्वात्प्रयोजकाभावे' नै] वाप्रवृत्तिः ततश्च वैगुण्यसाम्योक्तिर्व्यर्थेत्याशयः। इत्येवेत्यप्रवृत्तिशब्दादपकृष्यद्देवत्वर्थेनैयिकरणेनैवकारोऽन्वेतव्यः। द्विदेवत्यान्तरेष्वपि यागापूर्वप्रयुक्तत्वप्रकारतैवेतिकृत्वा देवताया गुणभूतत्वात्, तदनुरोधेन प्रधानावृत्त्यनौचित्येन युगपत्सर्वहविर्दानस्याभ्युपगमनीयत्वात्, तदर्थं सर्वस्मिन्हविष्यादित आरभ्य सहक्रियमाणे पृथक्करणाभावेन दोषतयोक्तस्य संकरस्य दानकालेऽनाश्रयणादङ्गीकृतत्वोक्तिरयुक्तेत्याशयः।

उत्तरार्द्धं व्याचष्टे—**भवता पुनरिति**। असंकीर्णमपेक्षत इति हेतोरसंकीर्णभागदानानुष्ठानौचित्यान्मिश्रदेवतोद्देशपूर्वकदानविध्याक्षिप्तयुगपत्कृत्स्नदानसिद्ध्यै दानकाले संकरापत्तेर्वैगुण्यापत्तिरपरिहार्येत्याशयः। एवं द्विदेवत्येऽर्द्धस्य, कृत्स्नस्य वा पेषणं स्यादिति पक्षद्वयं तुल्यबलत्वेन विकल्प्य, दूषणोक्तचर्थत्वेन 'तत्र यदीत्यादिभाष्यं व्याख्या अधुनैतदेव भाष्यं यदि पिष्येत, तत्र तस्मिन्पक्षे पूष्ण एव भागः पिष्यते, नेतरः ततश्च पाकवैषम्यापत्तिरित्येवमन्यथा व्याख्यातुमाह—**आदिश्चेति**। यदात्वसंकीर्णभागं देवतापेक्षते तदा तु सर्वपृष्टायां रथचक्रमात्रैकपुरोडाशविधौ यावद्देवतं चतुर्मुष्टिनिर्वापभेदवदिहापि चतुर्मुष्टिनिर्वापभेदापत्तेर्निर्वापवेलायामेव भागकल्पनादर्द्धपेषणमेवोचितं, न सर्वपेषणमित्यर्द्धपेषणस्य पूर्वपक्ष्यभिमतत्वसूचसार्थश्चकारः। 'अथेतिभाष्यमर्धपेषणौचित्येऽपि पाकवैषम्याख्यविरोधपरिहारार्थं कृत्स्नपेषणं पूर्वपक्ष्यनभिमतमप्याशङ्क्य, वैगुण्यापादनेन निरासार्थमित्येवमन्यथा व्याख्यातुमाह—**अथेति**। अपेषणवादिमतेऽपि संमोहशब्दोक्तसंकरसाम्येनैकस्य पर्यनुयोज्यत्वात्संकरे अप्यदोष इत्याशयेन तत्र को दोष इति पृष्ट्वा अस्मत्पक्षे यागापूर्वप्रयुक्तत्वाद्धर्माणां द्विदेवत्येऽपि च हविषि योगापूर्वैक्येन चतुर्मुष्टिनिर्वापभेदायोगादनुत्पन्नभागविवेकस्य हविषो विविक्तदेवतान्वयानवधारणात्संकराख्यो दोषो न जायते। भवत्पक्षे तु देवताप्रयुक्तत्वं विना द्विदेवत्ये पेषणप्रयोजकपूषदेवत्ययागापूर्वाभावेन पेषणसिद्ध्यै देवताप्रयुक्तत्वाभ्युपगमाद्देवताभेदेन चतुर्मुष्टिनिर्वापभेदनिबन्धनभागविवेककल्पनापत्तेश्चतुर्मुष्टिद्वयैकीकरणाक्षेपकवचनाभावाच्च रथचक्रमात्रपुरोडाशवन्निर्वापोत्तरमेकीकरणानु-

पपत्तेरसंकीर्णभागदानौचित्याद्वन्द्वावगतेरितरेतरयुक्त - देवतोद्देशपूर्वकदानविध्याक्षिप्तसकृत्-कृत्स्नदानसिद्ध्यै दानकाले संकरकरणाद्वैगुण्यापत्तिरित्यतुल्यपर्यनुयोगोक्तचर्थमन्यस्येति भाष्यमित्येवं ननु चैतत्सर्वमित्यादिवार्तिकोक्तयोः शङ्कापरिहारयोरेतद्भाष्यारूढत्व-सूचनार्थं—**यावदित्युक्तम्**। कृत्स्नपेषणानौचित्येऽपि देवताप्रयुक्तत्वेन चतुर्मुष्टिनिर्वाप-भेदाद्धविर्भेदावगतेर्भेदेनैव पाकान्नार्द्धपेषणेऽपि पाकवैषम्यापत्तिरित्याशङ्कते—**पात्रेति**। विहितैकत्वविरोधिचरुभेदापादकत्वाद्भेदेन पाको न युक्त इति परिहरति—**नेति**। आचार्य-प्रयुक्तद्वितीयान्यथानुपपत्त्या शाखान्तरीयमैंद्रापौष्णं चरुं निर्वपेदिति द्वितीयान्तचरुशब्दयुक्तं वाक्यं प्रकल्प्य, तस्मादपीति सूत्रार्थोपसंहारभाष्यं व्याचष्टे—**अत इति**॥ ४० ॥

भा० प्रा०—दो देवतावलि चरु में पेषण कर्तव्य नहीं है, इसमें अन्य हेतु का प्रदर्शन करते हुए कहा गया है कि "धर्मविप्रनिषेधात्" इसमें दो विरुद्ध कर्मों का एक स्थान में एक साथ सन्निवेश होता है। कारण, पूषादेवता के लिए पिष्ट चरु और सोम देवता के लिए अपिष्ट चरु देना चाहिए, किन्तु चरु के दो बार पाक करने की विधि नहीं है—एक ही बार करना चाहिये। अतः चरु के तण्डुल का कुछ अंश पिष्ट एवं कुछ अंश अपिष्ट होने पर भी उसका पाक करके जब चरु होगा तब एक बार हो जायेगा, फलतः, पूषा को अपिष्ट और सोम पिष्ट चरु पाने की सम्भावना हो जायेगी, और यह शास्त्रविरुद्ध है, अतः दोनों देवताओं के चरु के अवैध होने की अपेक्षा एक देवता के चरु में त्रुटि होना उसकी अपेक्षा दोषावह नहीं है, वस्तुतः इस स्थल में पेषण विहित न होने से पेषण न करने पर भी एक भी देवता का चरु त्रुटिपूर्ण नहीं होगा।

"धर्मविप्रतिषेधात्" = दो धर्मों विप्रतिषेध अर्थात् विरोध होने से, "च" = और शुद्ध पूषादेवता के चरु का ही पेषण कर्तव्य है, अन्यत्र नहीं ॥ ४० ॥

## अपि वा सद्वितीये स्याद्देवतानिमित्तत्वात् ॥४१॥

**शा० भा०—देवतानिमित्तमेतत्पेषणं श्रूयते। पूषा प्रपिष्टभागः कर्तव्य इति। स च द्विदेवत्येऽपि भागे पिष्यमाणे प्रपिष्टभागः कृतो भवति। न यथा चतुर्धाकरणे। तत्र हि तद्धितो निरपेक्षस्य भवति, न सद्वितीयस्य। इन्द्रपीत इति समासोऽपि निरपेक्षस्य, न सद्वितीयस्य। इह तु प्रपिष्टशब्दस्य भागशब्देन सहान्यपदार्थो बहुव्रीहिः समासः। एषोऽपि समर्थयोरेव, न त्वत्र द्विदेवत्ये कश्चिदेवंजातीयको दोषः। तस्मादेकदेवत्ये द्विदेवत्येऽपि वा चरावस्य भागः पेष्टव्य एव ॥ ४१ ॥ पूर्वपक्षः ॥**

त० वा०—सद्वितीयेऽपि वा पूषणि स्यादेव पेषणम्। कुतः ?

हविषो यदि पौष्णस्य तद्यागाङ्गस्य वा भवेत्।
अनुक्तत्वाद् द्विदेवत्ये न भवेत्पेषणं ततः॥

पूषसद्भावनिमित्तमेतत्पेषणम् । न च तद्विशेषितवस्तुनिमित्तम् । व्यासङ्गित्वाच्च देवतात्वस्य, द्विदेवत्ये पूषविशिष्टता न स्यात् । न तु पूषा, तद्भागो वा नास्तीति । यथा मनोतायां वक्ष्यति 'तत्राग्निर्देवता न त्वसमवेतः' इति तेनासत्यप्यत्र पूष्णो समवायमात्रेणोपलक्षणत्वाद् द्वयोर्द्देशेनापि च त्यज्यमानस्य 'समं स्यादश्रुतत्वात्' इत्यनेन न्यायेनार्धं पूष्णो भाग इति गम्यते। तस्य पेषणे क्रियमाणे यदि तावत्कांस्यभोजिन्यायेनाऽमुख्येऽपीत्येवमितरभागपेषणमपि क्रियते, तथाऽपि न किंचिद् दुष्यति ।

अथापि किमेतेनाश्रुतेन कृतेनेत्येवमर्धमात्रपेषणमेवाध्यवसीयते, तथाऽपि केनचित्कौशलेन पाकसंपादनाद्युगपन्निक्षेपत्पात्रैकत्वयोर्वा[1] गुणत्वाद्वरं बाध इति निरूप्य कार्यमेव पेषणमिति ।

अथ यदुक्तं चतुर्धाकरणेन्द्रपीतवदिति तत्राभिधीयते ।

समासतद्धितोत्पत्तिर्नासमर्थपदाश्रया ।
असमर्थत्वमेकस्य द्विदेवत्येषु चेष्यते ॥

तेनाऽऽग्नेयेन्द्रपीतशब्दाभ्यां समर्थाग्नीन्द्रग्राहिभ्यां द्विदेवत्याग्रहणं युक्तम्, इह पुनः पूषपदस्यासमासभाक्त्वात्प्रपिष्टभागशब्दयोश्च सापक्षेऽपि पूषणि सामर्थ्याविघातान्नकिंचिद् दुष्यतीत्युपलक्षणता ॥ ४१ ॥

न्या० सु०—पूर्वपक्षप्रतिज्ञार्थमपिवेतिसूत्रावयवं व्याचष्टे—**सद्वितीयेऽपीति** । वाशब्दस्य निरपेक्षपूषसंयोगधर्मविप्रतिषेधहेतुकसिद्धान्तनिवृत्यर्थत्वसूचनायैवकारः । निरपेक्षपूषसंयोगधर्मविप्रतिषेधाभ्यां सद्वितीये पूष्णि देवतायां सत्यां चरावपेषणावगतेः, कुतः पेषणं स्यादिति हेतुप्रश्नोत्तरत्वेन देवतानिमित्तत्वादिति सूत्रावयवव्याख्यार्थं देवतानिमित्तमिति भाष्यं व्यतिरेकमुखेन तावद्व्याचष्टे—**कुत इति** । पुरुषोद्देशेन त्यज्यमानत्वलक्षणपूषदेवत्यत्वाख्यस्य पौष्णत्वस्य साक्षात् प्रयोजकत्वे, प्रयोजकपूषदेवत्ययागापूर्वसाधनद्वारत्वे वा द्विदेवत्ये देवताभूतेन पूष्णा योगाभाव त् पेषणं न स्यान्नत्वेतद्द्वयमप्यस्तीत्याशयः । पौष्णत्वस्य साक्षात्प्रयोजकत्वे यागोक्तिलक्षितयागापूर्वसाधनत्वानपेक्षस्य पौष्णस्य हविषः पेषणं प्रति शेषित्वापत्तेः पौष्णत्वस्य प्रयोजकत्वसूचनार्था पौष्णाङ्गत्वोक्ति द्वारत्वे पौष्णस्य सतो यागापूर्वसाधनस्य शेषित्वापत्तेः द्वारत्वसूचनार्था । तस्य पौष्णस्य सतोयागापूर्वाङ्गस्याङ्गं इदि स्यादिति पौष्णपरामर्शिना तच्छब्देन समानाधिकरणेन पौष्णत्वस्य यागापूर्वसाधनविशेषणत्वोक्तिः । अन्वयमुखेनैतदेव भाष्यं व्याचष्टे—**पूषेति** ।

सीदतेस्तस्मिन्सीदेत्यादौ तिष्ठत्यर्थे प्रयोगात्तिष्ठतेश्चाधिपूर्वस्यास्मिन् ग्रामे देवदत्तो अधिष्ठातेत्यादौ स्वाम्यवाचित्वदर्शनात्सीदत्यधितिष्ठति स्वामी भवतीत्यस्मिन्नर्थे सीदतेः

---

१. क० यौगपद्यनिक्षेप ।

क्विप्प्रत्ययमुत्पाद्य सेदोऽधितिष्ठतः स्वामिनो भाव इति व्युत्पत्त्या सद्भावशब्देन स्वामित्वाभिधानात्सद्वितीयपूषोद्देशेनापि च त्यक्ते द्रव्ये गणोद्देशेनापि दत्ते ग्रामादौ तदंशे प्रत्येकं यथेष्टविनियोक्तृत्वलक्षणस्वाम्यदर्शनादर्द्धे केवलस्य पूष्णः स्वाम्योपपत्तेर्नैवमे चापूर्वप्रयुक्तत्वे वक्ष्यमाणेऽपि द्वारविशेषानपेक्षायां स्रुगादिष्वपि पेषणापत्तेर्द्वारविशेषस्यावश्याभ्युपगमनीयत्वाद्भागश्रुत्यालोचनया यत्पूषस्वामिकत्वाख्यपूषभागत्वद्वारापूर्वसाधनं तत्पेषणीयमित्येवं पूषभागत्वस्य द्वारत्वावगतेः पूष्णो यः सद्भावो अधिष्ठातृभावः स्वामिभावः तन्निमित्तं तद्द्वारापूर्वसाधनत्वप्रयुक्तम् पेषणमित्यर्थः। द्वारानपेक्षस्याऽपूर्वसाधनत्वमात्रस्याप्रयोजकत्वेनापूर्वसाधनत्वस्य प्रयोजकत्वे द्वारस्य निमित्तत्वावगमान्निमित्तोक्त्या देवतास्वामिकत्वस्य द्वारत्वाभ्युपगमे सद्वितीयाग्निदेवत्येऽपि पुरोडाशे अर्द्धस्य केवलाग्निस्वामिकत्वाच्चतुर्द्धाकरणं स्यादित्याशङ्क्य देवतातद्धितात् तत्राग्न्युद्देशेन त्याज्यत्वस्य सेवनार्हत्ववाचित्वाद्देवतायाश्च भोक्तृत्वाभावेन मुख्यदेवतासेवनार्हत्वायोगाल्लक्षणया स्वत्ववाचित्वावगतेः स्ववाक्योपात्तद्वारासम्भवे च द्वारान्तरकल्पनायोगात्पूषस्वत्वं‌ैव द्वारमिति वैषम्यसूचनायैतच्छब्दः। अनेन च सूत्रभाष्ययोर्देवताशब्दः स्वामित्ववाची न तु त्याज्यद्रव्योद्देश्यत्ववाचीनि सूचितम्। चरौ पेषणविधेः प्राकृतपेषणप्रतिप्रसवार्थत्वात्प्रकृतौ च यागोत्पत्तिवाक्यस्थदेवतातद्धितालोचनया देवतोद्देशेन त्याज्यस्य द्वारत्वावगमात्तस्यैवेहातिदेशाद्द्वारत्वावगतेरनपेक्षितद्वारान्तरकल्पना न युक्तेत्याशङ्क्य, भागशब्देनैव पूषस्वताया द्वारत्वस्योक्तत्वेन कल्पनीयत्वाच्छ्रुतेन च द्वारेणातिदेशिकद्वारबाधान्नेह पूषोद्देशेन त्याज्यताया द्वारता युक्तेति सूचयितुमाह—नेति।

न पूषदेवत्यद्रव्यनिमित्तमिति वाच्यद्रव्यान्वयानपेक्षाया देवतायाः सम्बन्धाभावेन द्रव्यपेषणे निमित्तत्वायोगाद्द्रव्यान्विता निमित्तत्वस्याभ्युपगमनीयत्वेनान्वयस्य द्विष्ठत्वाद्द्रव्यस्यापि निमित्तान्तर्भावापत्तेः पूषदेवत्यस्य द्रव्यस्य निमित्तत्वनिषेधायोगमाशङ्क्य, द्रव्यदेवतान्वयस्य निमित्तत्वे सत्यपि स्वस्वामिभावात्मकोऽन्वयो निमित्तं, न तूद्दिश्यत्यागात्मक इति सूचनायोद्दिश्यत्यागात्मके अन्वये देवताया 'गुणत्वे देवताश्रुतिरि'९-१-४ति न्यायेन गुणत्वात्स्वस्वामिभावात्मके तु स्वामित्वेन प्राधान्याद्, गुणत्वेन देवताया निमित्तत्वनिरासार्थं पूषणं प्रति प्रधानभूतं सद्द्रव्यं न निमित्तमिति विवक्षितत्वात् तद्धितनिर्देशे देवतायाः प्रकृत्यर्थत्वेन विशेषणत्वात् गुणता, द्रव्यस्य, प्रत्ययार्थत्वेन विशेष्यत्वात्प्रधानता युक्ता, अत्र त्वन्यपदार्थत्वात्प्रधानतैव पूष्णो युक्ता, न गुणतेत्युपपत्तिं सूचयितुं न पूषविशेषितशब्दप्रयोगः। द्रव्यशब्दे प्रयोज्ये वस्तुलक्षणो गुणप्राधान्यरूपोऽत्र विशेषणविशेष्यभावो विवक्षितो, न तु शब्दलक्षणोऽवच्छेद्यावच्छेदकरूप इति द्योतनार्थो वस्तुशब्दः।

पूषा प्रपिष्टभाग इत्यन्यपदार्थत्वेन प्रधानतया पूष्णः श्रवणात्स्वाम्यलक्षणदेवताभूतपूषनिमित्तं पेषणं, न तूद्देश्यभूतपूषनिमित्तमिति, देवतानिमित्तमिति भाष्येणोक्ते देवतायाः स्वाम्यस्य त्यज्यमानद्रव्योद्देश्यत्वापाद्यत्वाद्द्विदेवत्ये चैकस्योद्देश्यत्वाभावाद्द्विदेवत्ये केवलस्य पूष्णः स्वाम्यायोगमाशङ्क्य, सकृद्देवदत्तयज्ञदत्तोद्देशेन दत्ते द्रव्ये अर्द्धस्य

देवदत्तः स्वामीति व्यपदेशान्मिश्रोद्देशस्याप्यर्द्धे प्रत्येकस्वाम्यापादकत्वप्रसिद्धेः स पूषा द्विदेवत्येऽपि द्रव्ये यः स्वकीयत्वेन भजनीयत्वोपचारादर्द्धत्वाच्च भागः तस्मिन्देवता स्वामी भवतीत्येवं परिहारसूचनार्थत्वेन स च द्विदेवत्येऽपि भागे भवतीत्येतावद्भाष्यमवच्छिद्य, व्यतिरेकमुखेन व्याख्यातुमाह—**व्यासङ्गित्वाच्चेति**। गुणभूतोद्देश्यत्वलक्षणदेवतात्वस्य द्विदेवत्ये व्यासङ्गित्वाद्यद्यपि पूषोद्देशेन त्यज्यमानत्वनिमित्ता पूष्णः प्राधान्यरूपा पूषविशिष्टता न स्यात् तथापि पूषा विशिष्टभूतः प्रधानभूतः स्वामिभूतो न नास्ति, किंत्वस्त्येवेत्युक्ते देवताया भोक्तृत्ववत्स्वाम्यस्यापि नवमे निषेत्स्यमानत्वेनैकदेवत्येऽपि पूष्णः स्वाम्याभावाद्द्विदेवत्ये सुतरामभाव इत्याशङ्क्य, यागस्य देवताराधनार्थत्वनिरासार्थं देवताया यथेष्टविनियोक्तृत्वाख्यस्वाम्याभावेनादातृत्वादनाराध्यत्वोक्त्यै यथेष्टविनियोक्तृत्वाख्यस्वाम्यनिषेधेऽपि जीवत्पितृकस्य यथेष्टविनियोक्तृत्वाख्यस्वाम्याभावे अपि पितृद्रव्ये अन्यं प्रति यथेष्टविनियोज्यत्वप्रतिबन्धापादकत्वाख्यस्वाम्यसद्भाववद्देवताया अपि स्वोद्देशेन त्यक्ते द्रव्येऽन्यं प्रति यथेष्टविनियोज्यत्वप्रतिबन्धापादकत्वाख्यं स्वाम्यम्,

देवस्वं ब्राह्मणस्वं च लोभेनोपहिनस्ति यः।

इत्यादिस्मृतेर्देवतोद्देशेन त्यक्ते यथेष्टविनियोगार्हत्वप्रसिद्धे चास्त्येत्युक्तम्। द्विदेवत्वस्य द्वयोर्द्देशेन त्यक्तत्वादेकस्वामिकत्वायोगमाशङ्क्य,

अन्योद्देशेन त्यक्तस्य यच्चान्यस्मै प्रतिश्रुतम्।

इत्यादिस्मृत्यालोचनया यथेष्टविनियोगानर्हत्वावगतेर्देवतोद्देशेन त्यागस्यानन्यविनियोज्यत्वलक्षणदेवतास्वत्वापादनपर्यन्तत्वावगमाद्देवताद्वयोद्देशेन त्यक्ते द्रव्ये द्वयोः स्वाम्येऽवगते, दम्पतिवद्देवताद्वयस्य संहत्यैकद्रव्यसाध्यकर्मकारित्वाभावात्—

जायापत्योर्न विभागो विद्यते।

इतिवच्च विभागनिषेधाभावात्संहत्य स्वाम्यानवगतेरनेकस्वामिके च विभागं विना प्रत्येकं स्वाम्यायोगाद्विभक्तस्यैकैकस्वामिकत्वोपपत्तिसूचनार्थत्वेनार्द्धवाचितयापि भागोक्तिव्याख्यार्थं स्वकीयाख्यो वा भागो न नास्तीति विवक्षार्थो वाशब्दः।

मनोताधिकरणभाष्ये चाग्नीषोमीये पशावग्नेर्देवतात्वाभावेऽपि समवेतत्वोक्तेर्द्रव्यान्वयानपेक्षस्वरूपसत्तामात्रार्थत्वेऽग्नेः कर्मसमवायाभावेनाप्रकाश्यत्वापत्तेर्द्रव्यान्वितत्वोक्त्यर्थत्वावसायाद्द्विदेवत्ये चैकस्याग्नेः स्वस्वामिभावातिरिक्तद्रव्यान्वयायोगान्निर्विशेषान्वयसामान्ययोगाच्च स्वामित्वेनाग्निरसमवेतो न भवति, किं तु स्वामित्वेन समवेतएवेति वक्ष्यमाणत्वादुद्देश्यत्वातिरिक्ता देवतायाः स्वामिता द्विदेवत्येऽपि चैकस्या भाष्यकृतोऽभिप्रेतेति, स्वाम्योक्त्यर्थत्वेन सचेतिभाष्यव्याख्यौचित्यसूचनायाह—**यथेति**। व्याख्यातं भाष्यार्थं विवृण्वन्नुपसंहरति—**तेनेति**। अर्द्धस्य पूषभागत्वेऽप्यर्द्धपेषणे पाकवैषम्यापत्तेः सर्वपेषणे भागसंकरापत्तेरपेषणमाशङ्क्य, भागस्यार्द्धस्यैव पेषणात्प्रकृष्टपिष्टभागः सुपक्वपिष्टभागः पूषाकृती भवतीत्येवं परिहारार्थत्वेन सचेत्येतदेव कृत्स्नं भाष्यं सर्वपेषणेऽपि,

पौष्णभागानुरोधेनेतरस्य पेषणीयत्वात्पेषणकालेऽवश्यमस्मिन्द्रव्येऽर्द्धं पूष्णो, अर्द्धमिन्द्रस्यैति बुद्धचा निष्कर्षणीयत्वापत्तेर्दानकालेऽपि पुनरभ्युन्नीतद्रव्यत्पेषणकाले पूषभागत्वेन निष्कृष्टं तत्पूषणे, यदिन्द्रभागत्वेन तदिंद्रायेति बुद्धचा निष्कर्षसम्भवान्न सङ्करापत्तिरिति प्रौढि-सूचनार्थत्वेनापि भाग इत्यपिशब्दव्याख्यापूर्वं व्याचष्टे—तस्येति ।

अस्य भागः पेष्टव्य इत्युपसंहारभाष्यस्थभागशब्दालोचनया सर्वपेषणस्यानभिमतत्व-सूचनाय श्रुतोक्तिः । स्थाल्युपरिभागे वस्त्रादिना पिष्टधारणादिप्रकारेण केन चिन्नैपुण्येन पचनाद्युगपन्निक्षेपपात्रैक्ययोः पाकगुणतया पाकानुरोधेन बाधाद्वा, पाकदोषाभावं निरूप्यो-पपाद्य पेषणं कार्यमेवेत्यर्थः । न यथेत्यादि भाष्यं यथा चतुर्द्धाकरणइति पूर्वपक्षभाष्योक्त-दृष्टान्तवैषम्योक्त्यर्थत्वेन दृष्टान्तानुभाषणपूर्वं व्याचष्टे—अथेति । समर्थयोरेवेति भाष्य-स्यैवकारसूचितस्याविघातस्य सापेक्षत्वदोषाभावहेतुत्वोक्त्यर्थया सामर्थ्याविघातादिति पञ्चम्या न त्वत्रेति भाष्यस्यस्य तुशब्दस्यातो नात्रेत्येवमतःशब्दार्थे व्याख्येयत्वं सूचितम् । पदमात्रे सामर्थ्यापेक्षत्वस्मृतेः प्रकृत्यर्थस्य प्रत्ययार्थान्वयसिद्ध्यर्थत्वात्प्रथमान्तपदोक्तस्य च पूष्णो देवतात्वेऽन्यापेक्षस्यापि प्रत्ययार्थलिङ्गसंख्यान्वये स्वाभाविकनिरपेक्षान्व-यावगमेनान्यापेक्षायोगादेकसंयोगादितिसूत्रावयवोक्तनिरपेक्षसंयोगाविरोधसूचनार्थं—**न किंचिदित्युक्तम्** ।

तस्मादिति पूर्वपक्षसूत्रार्थोपसंहारभाष्यस्थं तस्माच्छब्दं सापेक्षत्वदोषाभावोक्ति-सूचितस्य द्विदेवत्येऽपि पूष्णः स्वामित्वेनपेष्टव्यद्रव्योपलक्षणत्वसम्भवस्यार्द्धपेषणहेतुत्वेन परामर्शार्थतया व्याख्यातुमाह—**इतीति** ॥ ४१ ॥

भा० प्र०—पूर्वप्रदर्शित सिद्धान्त पक्ष के मत का उल्लेख किया गया है, इस पर कोई पूर्वपक्ष कहता है कि "अपि वा सद्वितीये स्यात्" = पूषा देवता अकेले रहें या किसी के साथ मिलित रहें, चरु में उनकी उद्देश्यता रहने से पेषण करना ही होगा, कारण "तन्निमित्तत्वात्" = देवता ही यहाँ पेषण का निमित्त है, अतः, उसका सम्बन्ध रहने पर पेषण कर्तव्य है ।

"अपि वा" = पक्ष के परिवर्तन का सूचक है, "सद्वितीये स्यात्" = सद्वितीय अर्थात् द्वितीय अन्य देवता के साथ मिलित जो पूषा देवता, उसके चरु में भी पेषण होगा, "तन्निमित्तत्वात्" = क्योंकि, वह अर्थात् पूषा देवता पेषण का निमित्त है । अर्थात् पूषा देवता का अस्तित्व ही पेषण का हेतु है ॥ ४१ ॥ पूर्वपक्ष ।

## लिङ्गदर्शनाच्च ॥ ४२ ॥

**शा० भा०—लिङ्गमप्येवं भवति, 'तस्मात्पूषा प्रपिष्टभागोऽदन्तको हीति, देवतानिमित्तं पेषणमिति स्तुतिर्दर्शयति । तथा सौमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकाम इति नेमपिष्टतां दर्शयति । तथाऽर्धं पिष्टम्, अर्धमपिष्टं भवति द्विदेवत्य-त्वाय, इति देवतानिमित्तमेव पेषणं दर्शयति ॥ ४२ ॥ क० हेतुः ॥**

त० वा०—'अदन्तको हि' इति हेतुर्देवताधर्मत्वं दर्शयति। न च सद्वितीयस्य पूष्णो दन्ता जायन्त इति हेतुसाम्याद्युक्तं पेषणम्। तथा च सौमापौष्णे नेमपिष्टतानुवादोऽन्यत्र च द्विदेवत्ये 'अर्धं पिष्टम्, अर्धमपिष्टं द्विदेवतत्वाय' इति देवताधर्मत्वदर्शनमवकल्पिष्यते ॥ ४२ ॥

न्या० सु०—पेषणस्य भोजनार्हत्वापादनार्थत्वलिङ्गादपि भोजनार्हत्वोपचरितादन्तकपूषस्वामिकत्वद्वारत्वावगतेर्द्विदेवत्येऽपि पेषणं गम्यतइत्येवमर्थत्वेन सूत्रव्याख्यार्थं लिङ्गमपीत्यादिभाष्यं व्याचष्टे—अदन्तको हीति। पेषणमितीति भाष्यस्थमितिकरणमेतत्प्रभृतिस्तुतिर्दर्शयतीत्येवं प्रभृत्यर्थत्वाद्द्विदेवत्येऽपि पेषणं दर्शयतीत्येवमर्थत्वेन व्याख्यातुमाह—न चेति। 'तथा सौम्यापौष्णं तथार्द्धमिति च लिङ्गद्वयान्तरोक्त्यर्थं भाष्यद्वयमेकहेलया व्याचष्टे—तथेति ॥ ४२ ॥

भा० प्र०—दो देवताओं के स्थल में पेषण की कर्तव्यता में और भी कारण हैं—"लिङ्गदर्शनात्" पूषा देवता के चरु के पेषण में हेतु का प्रदर्शन करते हुए श्रुति में कहा गया है "अदन्तको हि सः" कारण, पूषा देवता दाँत रहित हैं, अतः चबाने में वह असमर्थ हैं। "तस्मात् पूषाप्रपिष्टभागः" अतः, प्रपिष्ट अर्थात् पेषण चरु ही उनका भाग है। अन्य देवताओं के साहचर्य में उनको दाँत हो जायेगा—ऐसी बात नहीं है, अन्यत्र भी श्रुति में कहा गया है कि "सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः", अर्थात् पशु की कामनावाला व्यक्ति सोमसहित पूषा देवता के उद्देश्य से "नेमपिष्ट= आधा पीसा हुआ चरु का निर्वाण करे। इस स्थल में 'नेमपिष्ट' अर्थात् अर्द्धपिष्ट कह कर श्रुति में यही व्यक्त किया गया है कि पूषा देवता हैं, अतः आधा पिष्ट और आधा अपिष्ट तण्डुल से भी चरु निष्पन्न होगा। इसलिए, इस प्रकार का लिङ्ग रहने पर भी यह निश्चय होता है कि दो देवताओं के स्थल में भी अर्थात् जहाँ पूषा देवता के साथ मिलकर रहते हैं, वहाँ भी चरु में पेषण करना चाहिए, क्योंकि, पेषण का अदृष्ट फल होगा।

"लिङ्गदर्शनात् च" = लिङ्ग अर्थात् ज्ञापक वेदवचन दृष्ट होने से दो देवताओं के स्थल में भी पेषण कर्तव्य है ॥ ४२ ॥ पूर्वपक्ष।

## वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चरावपेषणं भवति ॥ ४३ ॥

**शा० भा०—इदं पदोत्तरं सूत्रं, नेमपिष्टं भवतीति कस्मादेतन्न वचनमिति। उच्यते। यदि वचनमेतद्भवेत्। सौमापौष्णमात्रमनूद्य सर्वत्र पेषणं विदध्याच्चरौ पशौ, पुरोडाशे च। तत्र सौमापौष्णस्य चरुसंबन्धे नेमपिष्टसंबन्धे चोभयस्मिन्विधीयमाने वाक्यं भिद्येत। तस्माद्यो यः सौमापौष्णः तत्र तत्र नेमपिष्टता।**

**तं प्रति सौमापौष्णमात्रं प्रति शास्त्रवत्त्वधर्मपेषणस्य। पुरोडाशेऽर्थात्सर्वपेषणे प्राप्ते अर्थाभावाच्च पशौ चरौ वाऽपेषणे प्राप्ते वचनमिदं भवेत्। तत्र चरुशब्दो न विवक्षितस्वार्थः स्यात्। प्रदर्शनार्थः कल्प्येत। पेषणानुवादपक्षे पुनर्नैष विरोधो भवति। तस्माद्भवत्येव लिङ्गम्। नन्वङ्गनाशभयात्पशोरपेषणम्? नेति ब्रूमः। अर्धपेषणे नाङ्गनाशः, अपिष्टादवदास्यते। पेषणं चादृष्टार्थम् ॥४३॥ पूर्वपक्षे आशङ्कानिरासः॥**

त० वा०—विधित्वान्नेमपिष्टत्वमलिङ्गं विपर्ययसाधनं चेत्यत आह—**यद्येतद्वचनं** भवेत्, ततोऽनेकार्थविध्यसंभवान्नेमपिष्टत्वं विधीयमानं चरुं वोद्दिश्य विधीयेत, सौमापौष्णं वा। तत्र य तवोद्दिष्टः तस्यैवेतरेण विशेष्टुमशक्यत्वात्सार्वत्रिकत्वप्रतीतेः सर्वपेषणं प्राप्नोति। ततश्चान्यतरपदानर्थक्यप्रसङ्गः। तद्यदि तावद्यश्चरुः, स नेमपिष्ट इति विधीयते, ततः सर्वचरुविषयावधारणे सति सौमापौष्णशब्द एकदेशानुवादोऽनर्थकः स्यात्।

अथ सौमापौष्णवात्रमुद्दिश्यते, ततोऽपि सर्वपेषणमेव तद्देवत्यहविर्मात्रप्रतीत्या पशुपुरोडाशयोरपि ग्रहणात्। ततश्च पूर्ववच्चरुशब्दानर्थक्यप्रसङ्गः। **तं प्रति—हि** सौमापौष्णमविशेषितं प्रति पेपणस्य शास्त्रवत्त्वं विशेषणार्थाभावात्। एतस्मिन्पक्षे चरावपेषणं भवति।

नन्वर्थप्राप्तत्वात्पुरोडाशस्यावक्तव्यं पशोश्चार्थप्रतिषेधादित्युक्तमिति चेत्? न। अत्र तयोरुभयोरप्यप्रसङ्गात्। सर्वपेषणे हि प्राप्ते पुरोडाशस्याऽर्धपेषणं विधीयते। तावताऽपि च कथंचित्पुरोडाशो निष्पद्येत। हृदयादीनामप्युत्साददेशैकदेशवर्जं पिष्यमाणानां नार्थविप्रतिषेधो भवति। न चात्यन्ताकृतिर्नश्येत्। न चोत्साददेशमोहः स्यात्। इतरोत्साददेशस्य स्पष्टत्वेन च पिष्टोऽपि सन् पूषभाग उपलक्ष्यते, न सर्वपेषणवन्मुह्येत्।

अथवाऽस्मिन्पक्षे वाचनिकत्वाददृष्टार्थे पेषणे सत्यपिष्टादेवावदीयेत। न हि तदैतद्देवतानिमित्तं पेषणं स्यात्। तस्मात्सार्वत्रिकत्वप्रसङ्गान्न परिशेषसिद्धं चरोः पेषणमिति तच्छ्रुतिरनर्थिका प्राप्नोत्येवेति, चरुदेवतासंबन्धविधिपरे वाक्ये नेमपिष्टत्वमनूद्यत इत्यवश्यमभ्युपगन्तव्यम्। अतश्च लिङ्गत्वसिद्धिः॥ ४३॥

न्या० सु०—चोद्यपदोक्तयर्थं कस्मादिति भाष्यमननुवादत्वात्पूर्वपक्षलिङ्गत्वयोगोक्त्यै पूषवाक्येनैव द्विदेवत्येऽपि पेषणविधौ सोमापौष्णेऽपि तेनैव पेषणसिद्धेर्नेमपिष्टादि विध्यानर्थक्यप्रसङ्गात्सिद्धान्तलिङ्गत्वोक्त्यैवेत्येवं द्विधा व्याचष्टे—**विधित्वादिति**। अस्मात्पिष्टविधानादङ्गीकृतात्सर्वत्र चरौ, पशौ, पुरोडाशे च पेषणं प्रसज्येतेत्यनिष्टापादनरूपोत्तरत्वेन वचनादिति सूत्रावयवव्याख्यार्थमुच्यतइत्यादिनेमपिष्टतेत्यन्तं भाष्यं व्याचष्टे—**अत इति**। चरुमनूद्य सर्वत्र सोमापौष्णेऽन्यदेवत्ये च पेषणं विदध्यादित्यपि पुरोडाशे चेति चकारेण सूचिते।

चर्वनुवादेन पेषणविधावपि चरोर्नेमपिष्टान्वयवत्सोमापौष्णान्वयस्यापि विधानादन्यदेवत्ये पेषणानापत्तिमाशङ्क्य सोमापौष्णनेमपिष्टाभ्यां चरोः सम्बन्धविधौ नेमपिष्टसम्बन्धे चेति चकारसूचिते च। सोमापौष्णानुवादेन पेषणविधावपि सोमापौष्णस्य नेमपिष्टान्वयवच्चर्वन्वयस्यापि विधानात्पशुपुरोडाशयोः पेषणानापत्तिमाशङ्क्य, चरुनेमपिष्टाभ्यां सोमापौष्णसम्बन्धविधौ वाक्यभेदोक्त्यर्थत्वेन भाष्यं व्याख्यातुं—**चरुवेत्याद्युक्तम्।** यो यः सोमापौष्ण इत्यनेन यो यश्चरुरित्यप्युपलक्षितमिति सूचयितुं सर्वत्र चरौ, सर्वत्र च सोमापौष्णेपेषणं—**प्राप्नोतीत्युक्तम्।** सर्वपेषणापत्तौ को दोष इत्याशङ्क्याह—**ततश्चेति।** विविच्यानर्थक्यं विवृणोति—**तदिति।** तत्रेत्यस्मिन्नर्थे तदित्यव्ययम्। आनर्थक्यस्यैकदेशानुवादत्वहेतुकत्वं पूर्ववच्छब्देनोक्तम्। सूक्तस्य सोमापौष्णस्यापि पेषणाशक्तेः पेषणविधौ हविविशेषणानपेक्षसोमापौष्णोद्देशायोगेन मृष्यामहे हविषा विशेषणमितिवच्चर्वाख्यहविर्विशिष्टस्यैव सोमापौष्णस्योद्देश्यत्वावगमाद्विध्यानर्थक्यापत्तेश्चापूर्वसाधनत्वापादकदेवतान्वयानपेक्षचरूद्देशायोगेन सोमापौष्णशब्दोक्तदेवतान्वयविशिष्टस्यैव चरोरुद्देश्यत्वावगमान्न सर्वपेषणापत्तिरित्याशङ्क्य पेषणार्हत्वालोचनयैव सोमापौष्णशब्दस्य हविविषयत्वावगतेरुपधानार्थस्य च चरोर्देवतान्वयाभावेऽप्यपूर्वसाधनत्वसम्भवेन देवतान्वयानपेक्षताया विशेषणानपेक्षत्वात् दुर्वारा सर्वपेषणापत्तिरिति परिहारसूचनार्थत्वेन तं पेषणविधावुद्देश्यं सोमापौष्णं चरुं वा सर्वं प्रतीत्योपलक्षणीकृत्योद्दिश्य पेषणस्य शास्त्रविषयत्वाख्यशास्त्रवत्त्वसम्भवादित्येवं तं प्रतीतिसूत्रावयवव्याख्यार्थं तं प्रतीतिभाष्यं व्याचष्टे—**तं प्रति हीति।**

भाष्यवार्त्तिकयोः सोमापौष्णशब्देन चरुरप्युपलक्षितः। सर्वपरामर्शित्वेन तच्छब्दव्याख्यार्थमात्रशब्दव्याख्यानायाविशेषितशब्दः। शास्त्रवत्त्वादिति पञ्चमी व्याख्यातुं भाष्ये हिशब्दाध्याहारसूचनार्थो हिशब्दः। सोमापौष्णमात्रमुद्दिश्यपेषणस्य शास्त्रविषयत्वसम्भवेऽपि पुरोडाशेऽर्थादेव प्राप्ते पशौ च हृदयाद्याकृतिकावयवोत्सादादेशापादानकावदानसाध्यप्रधानरूपार्थाभावापत्तेर्विध्ययोगेन पारिशेष्यात्केवलचरुविषयत्वमाशङ्क्य, पुरोडाशेऽर्थादासमन्तात्सर्वस्य पेषणभावापत्तेश्चरौ त्वन्योन्यावयवानन्तर्गतिलक्षणपाकवैशद्यासिद्ध्या चरुशब्दवाच्यचरुत्वाख्यार्थाभावापत्तेश्चरुशब्दोपलक्षिते च पशौ प्रधानाख्यप्रयोजनरूपार्थाभावावर्त्तेर्हि यस्माद्पेषणं भवति, सर्वपेषणं भवति, सर्वपेषणं न सम्भवति। तेनेदमर्द्धपेषणवचनं सर्वत्र सम्भवतीति परिहारार्थत्वेनार्थाभावाद्धीत्यादिसूत्रावयवव्याख्यार्थं पुरोडाशइतिभाष्यमश्रुतपुरोडाशशब्दाध्याहारापत्तेरभावादभावादिति च दीर्घह्रस्वाकारयुक्तत्वेनार्थाभावशब्दस्याश्रुतावृत्त्यापत्तेश्चरुशब्दस्य चार्द्धपेषणव्यावृत्त्यै सर्वपेषणवाचित्वकल्पनापत्तेर्वचनात्सर्वपेषणमिति सूत्रावयवानुषङ्गापत्तेश्चापरितोषादुपेक्ष्य, स्वयमर्थाभावादिति सूत्रावयवमुत्तरावयवादवच्छिद्योद्देश्यस्य विशेषणान्वये वाक्यभेदापत्तेर्विशेषणरूपार्थाभावात्सर्वं प्रति पेषणस्य शास्त्रवत्त्वमित्येतत्सूत्रावयवार्थोपपादनार्थत्वेन व्याचष्टे—**विशेषणेति।**

तस्मान्नेमपिष्टत्वविधिपक्षे चरावेवपेषणं यदभिमतं, तन्न भवतीति पेषणशब्द-समस्तस्यापि नञो विवक्षितार्थत्वलाभान्यथानुपपत्त्या भवतीतिशब्दान्वयमभिप्रेत्य विधित्वे सर्वपेषणापत्त्युपसंहारार्थत्वेन स्वयं व्याचष्टे—**एतस्मिन्निति** । अस्मिन्व्याख्याने यस्मादेवं, तस्मान्नास्य विधित्वाभ्युपगमेनालिङ्गता, विपर्ययसाधनता च शङ्कनीयेत्येवं हि-शब्दो योज्यः ।

नन्वङ्गनाशभयादित्याशङ्कापरिहारयोः पुरोडाशइति भाष्यव्याख्यातस्यार्थाभावा-दित्यादिसूत्रावयवस्यैतच्छङ्कोत्तरत्वेन व्याख्यार्थत्वं सूचयितुं तत्रेत्यादिभाष्यात्प्रागपकृष्य-व्याख्यार्थं नन्वित्याशङ्काभाष्यं तावद्व्याचष्टे—**नन्विति** । शङ्काभाष्यस्योपलक्षणार्था-न्वयसूचनायार्थप्राप्तत्वादित्युक्तम् । अर्थोक्तमित्यादिपूर्वाधिकरणसिद्धान्तसूत्रावयवारूढत्वं शङ्काया वक्तुमुक्तवोक्ता । नेतीति परिहारभाष्यमप्युपलक्षणार्थत्वेन व्याख्यातुमाह—**नेति** ।

पुरोडाशेऽर्थप्राप्त्यप्रसङ्गं तावदुपपादयति—**सर्वेति** ।

अर्द्धपेषणे पिण्डानिष्पत्तेस्तत्साध्यपुरोडाशानिष्पत्तिमाशङ्क्य, शिथिलपिण्डनिष्पत्त्यापि पुरोडाशनिष्पत्तिमाह—**तावतापीति** । पशावर्थविप्रतिषेधाप्रसङ्गमुपपादयति—**हृदया-दीनामपीति** । उत्सादयो-उत्कर्त्तनस्य यो हृदयाद्येकदेशो देशः तद्वर्जमेकदेशान्तरेपिष्य-माणानां हृदयादीनां तेषामाकारनाशः स्यादिति पूर्वाधिकरणभाष्योक्तस्य संस्थाननाश-स्यात्यन्तमनापत्तेर्हृदयत्वादिजात्याश्रयभूतायाः संस्थानविशेषविशिष्टाया व्यक्तेरत्यन्तमनाशेन जातेरनाशात्तस्योत्सादेदेशं प्रति मुह्येयुरिति भाष्योक्तस्य मोहस्यानापत्तेर्हृदयत्वादिजातिका-वयवोत्साददेशापादानकावदानसाध्यप्रधानाख्यार्थाविप्रतिषेधाप्रसङ्ग इत्यर्थः ॥ प्रसङ्गाच्चरोः सर्वपेषणे भागसंमोहः स्यादिति धर्मविप्रतिषेधसूत्रस्थभाष्योक्तस्य कस्या देवताया को भाग इति मोहस्य तुल्यन्यायत्वात्पशौ प्राप्तस्यार्द्धपेषणे प्रसक्त्यभावमाह—**इतरेति** । इतरस्य देवतान्तरभागस्य य उत्साददेशः तस्य देवतान्तरभागावदानापादानतया स्पष्टत्वेन 'पूषभागः पिष्टोऽपि सन्यो देवतान्तरभागोत्साददेशव्यतिरिक्तादुत्साददेशादवत्तः सपूषभाग इत्येवमुपलक्षणसंभवान्न मोहापत्तिरित्यर्थः । अनेन चाङ्गनाशशब्दोवदानप्रकृतित्वेनाङ्गस्य हृदयादेर्विनाशोऽवादानत्वेन चाङ्गस्यो, उत्साददेशस्य मोहो देवताङ्गस्य वाऽर्द्धस्य मोह इत्येवं त्रेधा व्याख्यातः ।

पेषणस्य देवतानिमित्तत्वे पूषवाक्येनैव द्विदेवत्ये पेषणसिद्धेर्विध्यानर्थक्यप्रसङ्गाद-दृष्टार्थत्वावगतेः सद्वितीयपूषोद्देशेनाप्यपिष्टादर्द्धादवदानाविरोधात्त्रिविधोऽप्यङ्गनाशो न प्रसज्यतइति परिहारान्तरार्थमपिष्टादिति भाष्यं व्याचष्टे—**अथ वेति** । भाष्यकारीया-मर्थाभावाद्धीत्यादिसूत्रावयवव्याख्यामुपसंहरति—**तस्मादिति** । विधित्वे सर्वपेषणापत्तौ सूत्रेणोक्तायां सर्वपेषणापत्तावपि को दोष इत्याशङ्कावतारादुत्तरत्वेन सोमापोष्णोद्देशे चरुशब्दानार्थक्यं चरूद्देशे सोमापौष्णशब्दानार्थक्यमिति दोषोक्त्यर्थत्वात्तत्रेति भाष्यमिदानीं व्याचष्टे—**इतीति** । भाष्यवार्त्तिकयोश्चरूक्त्या सोमापौष्णोप्युपलक्षितः । पेषणेतिभाष्यं

पेषणविधावनिष्टापत्त्युक्ते पूर्वपक्षलिङ्गपेषणानुवादोपपादनार्थत्वेन—इति **चर्चिति**। नेमार्द्धं' पिष्टवाक्ययोः पेषणानुवादोपपादनस्य पूर्वपक्षलिङ्गत्वसिद्ध्युपयोगोक्त्यर्थं तस्मादिति भाष्यं व्याचष्टे—**अतश्चेति** ॥ ४३ ॥

भा०प्र०—पूर्वसूत्र में कहा गया है कि "सोमापौष्णं चरुं निर्वपेत् नेमपिष्टं पशुकामः", यह वचन दो देवताओं के स्थल में भी पौष्ण-पेषण का लिङ्ग अर्थात् ज्ञापक है, इसमें यह आपत्ति हो सकती है कि इस श्रुति को लिङ्ग अर्थात् ज्ञापक कैसे कहा जा सकता है? इसको दो देवताओं के स्थल में पौष्णपेषण का वचन अर्थात् विधि भी कहा जा सकता है? इसके समाधान में कहा गया है कि इसको विधि मानने पर वाक्यभेद आदि होगा, इसलिए विधि न कहकर लिङ्ग कहा गया है, क्योंकि, "वचनात् सर्वपेषणं" यदि इसको वचन = विधि माना जाय तो पूषा देवता के उद्देश्य से चरु, पशु एवं पुरोडाश जो कुछ भी रहेगा, सभी को पीसना पड़ेगा, कारण, "तं प्रति शास्त्रवत्त्वात्" ऐसा मानने पर इस स्थल में पौष्ण भाग के उद्देश्य में पेषण विहित होगा—यह कहना पड़ेगा। ऐसा मानने पर चरु, पशु एवं पुरोडाश सभी को पूषा का अंग मानकर सभी का पेषण करना होगा। किन्तु, यह नहीं माना जा सकता है। यदि कहा जाय कि केवल चरु में ही पेषण होगा, कारण, चरुशब्द ही उक्त वाक्य में पठित है। ऐसा मानने पर "अर्थाभावात् हि चरौ अपेषणं भवति" इस स्थल में 'चरु' शब्द विवक्षित स्वार्थ न होने से केवल चरु का ही पेषण नहीं हो सकता है। आशय यह है कि इस स्थल में यदि 'चरु' शब्द का अर्थ विवक्षित होने पर सौमापौष्ण चरु सम्बन्ध एवं नेमपिष्ट इस रूप में दो सम्बन्ध कहना होगा, ऐसा मानने पर वाक्यभेद हो जायेगा। इसलिए वाक्यदोष का परिहार करने के लिए 'चरु' पद का स्वार्थ अविवक्षित मानना पड़ेगा और ऐसा मानने पर पशु, पुरोडाश आदि सभी द्रव्यों के पेषण का प्रसङ्ग होगा—यह इष्ट नहीं है। इसलिए, इसको दो देवता सम्बन्धी स्थल में भी पौष्णपेषण को विधि नहीं कहा जा सकता है, किन्तु, यह लिङ्ग है।

"वचनात् सर्वपेषणं" यदि यह वचन = विधि होता तो चरु, पशु आदि सभी के पेषण का प्रसङ्ग होता, "तं प्रति शास्त्रवत्त्वात्" क्योंकि, उसके प्रति अर्थात् पौष्ण के काव्य के प्रति शास्त्र अर्थात् पेषण विधि रहती है, "हि" = क्योंकि, "अर्थाभावात्" = अर्थाभाव अर्थात् चरुपद के अर्थ की अविवक्षा होने से, "चरौ अपेषणम्" केवल चरु का पेषण नहीं है ॥ ४३ ॥

## एकस्मिन्वाऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥४४॥

**एकदेवत्ये वा पौष्णं पेषणं भवितुमर्हति, नैन्द्रापौष्णे। कुतः ? नैव देवताधर्मो विधीयते, पूष्णो' भागः पिष्ट उपयोक्तव्य इति। कस्य तर्हि। अर्थस्य**

१. ब. पौष्णो।

धर्मः । कः पुनरर्थः ? यागः । कथमवगम्यते न देवताधर्म इति । उच्यते । न हि तस्या भागोऽस्ति । ननु यद् देवतायै दीयते, तत् तस्या भागो भवति । उच्यते । एतद्धि देवतामुद्दिश्य त्यज्यते । न च त्यागमात्रेण देवतास्वत्वं भवति । परिग्रहणेन हि स्वस्वामिसंबन्ध आपद्यते । न च परिगृहीतं देवतयेति, किंचन प्रमाणमस्ति । यच्च यं भजते, स तस्य भागः । न च हविर्देवता भजते । तस्मान्नास्ति पूष्णो भागः ।

अथापि कथंचिद्भवेद्भागः तथाऽपि न देवताया धर्मः पेषणं भवितुमर्हति । निष्प्रयोजनो हि तथा स्यात्, अयागधर्मत्वात् । कथं तर्हि प्रकरणान्तरे समाम्नातो यागधर्मो भविष्यतीति । उच्यते । वाक्यसंयोगात् । ननु च देवतयैष संयोगः श्रूयते, न यागेनेति । उच्यते । भागाभावादनर्थकत्वाच्च न देवतासंयोग इत्युक्तम् । तथाऽपि तु यथा यागसंबन्धो भवति, तथा वक्तव्यम् । तदुच्यते । अयमत्र पूष्णो भागो यः पूषणमुद्दिश्य त्यज्यते । यस्य द्रव्यस्य त्यागे पूषा देवता । न स चरुः पूष्णः स्वत्वेन संबध्यते । तस्मादैन्द्रापौष्णे न कश्चिदस्ति पूष्णश्चरुणा संबन्धः । केवले तु पूषणि देवताभूते तस्मै संकल्पितो भागो भवति । कथम् ? यमुद्दिश्य संकल्पो भवति । स तस्य भाग इति प्रसिद्धिरेषा । तेन यद्यपि पूषा स्वेनोच्चारणेनेन्द्रापूष्णोरुपकारकमुच्चारणं कुर्वन्नुपकारको भवेत् तथाऽपि न तस्य द्विदेवत्यो भाग इत्युच्यते । असंकल्पनात् । केवले पूषणि देवतायां चरोः पेषणं क्रियते, नैन्द्रापौष्णेषु द्विदेवत्येष्विति ॥ ४४ ॥ पूर्वपक्षनिरासः ॥

त० वा०—एकस्मिन्नेव पूषणि देवतायामेतत्पेषणं भवेद्, न सद्वितीये ।

न ह्येष देवताधर्मो न तद्भागस्य गम्यते ।
पूषदेवत्ययागार्थं धर्मस्त्वेष प्रतीयते ॥

न तावद्देवतायां भागोऽस्ति, यस्यैव धर्मः कल्प्येते । न हि तदुद्देशत्यागमात्रेण भागो भवति । किं तर्हि ? परिग्रहेण । कर्मसाधनो हि भागशब्दः । भज्यत इति भागः । सेव्यत इत्यर्थः । तेन यं यो भजते, स तस्य भागः । न च हविरंशं देवता भजते, भोक्तृत्वस्य नवमे निषेधात् ।

अथापि भजेत्, तथाऽपि तस्याः प्रयोजकत्वं तत्रैव निवारयिष्यते । तेन देवतावद्भागधर्मत्वानुपपत्तेर्यागद्वाराऽपूर्वधर्म एवायं नवमाद्यन्यायेन देवताधिकरणन्यायेन च विज्ञायते । भाष्यकारेण तु देवताधर्मत्वनिराकरणपरेण यागधर्मत्वमभिहितमिति द्रष्टव्यम् ।

**कथं तर्हि प्रकरणान्तरे समाम्नातो यागधर्मो भविष्यतीति ।** वाक्यसंयोगस्य देवताविषयत्वात्प्रकरणेन च विनाऽपूर्वसाधनत्वलक्षणानुपपत्तेर्न कथंचिद्यागेन,

अपूर्वेण वा सम्बन्धं इति मन्यमानस्य प्रश्नः। तत्र **वाक्यसंयोगा**दित्युक्ते परेण स्वाभिप्राये विवृते भागशब्देनैव मुख्यार्थासम्भवाद्यागोपादानमिति दर्शयति। परस्वस्वस्वीकरणात्मकस्य भागरूपस्याविद्यमानत्वाद्यस्तदुद्देशेन त्यज्यमानत्व-नामांऽशो विद्यते, तेन यागो लक्ष्यते। स चैकदेवत्ये पूषविशिष्टो भवतीति तद्भागव्यपदेशो घटते। द्विदेवत्ये पुनर्व्यासङ्गी मिश्रः सङ्कल्पोऽन्यतरेण व्यपदेष्टु-मशक्य इति। यथैवैन्द्राग्नस्य पुरोडाशस्य, ग्रहस्य चाऽऽग्नेयेन्द्रपतिशब्दाभ्याम-ग्रहणं तथैन्द्रापौष्णादेः पूषभागत्वेन।

यद्यपि चैवंविधशब्दोच्चारणादिह समासोपालम्भो नास्ति तथाऽप्यर्थ एव भागशब्दग्राह्यो न विद्यत इत्यप्रवृत्तिः। यद्यपि च द्वयोरर्थयोर्देवतात्वं प्रतिपद्य-मानयोः समुदायप्रसिद्ध्यर्थत्वेनावयवावुपयुज्येते, तथाऽपि सङ्कल्पस्यान्यतरेणा-व्यपदेशादनुपलक्षणत्वं सिद्धम्॥ ४४॥

न्या० सु०—एकस्मिन्वेति पूर्वपक्षनिरासप्रतिज्ञार्थसूत्रावयवव्याख्यार्थमेवेति भाष्यं व्याचष्टे - **एकस्मिन्नेवेति**। हेतुप्रश्नोत्तरत्वेनार्थधर्म्मत्वादिति सूत्रावयवस्य व्यतिरेकमुखेन व्याख्यानार्थं 'नैप' इति भाष्यं देवतानिमित्तत्वादिति पूर्वपक्षसूत्रावयवेन हविषः पेषणाख्य-धर्मान्वये पूष्णो देवताशब्दोक्तस्य स्वामित्वस्य व्यधिकरणत्वेन साक्षान्निमित्तशब्दोक्त-द्वारत्वायोगात्पूषस्वत्वाख्यस्य पूषभागत्वस्य द्वारत्वोक्त्या पेषणस्य पूषभागभूतापूर्व-साधनधर्मत्वाभिधानाद्देवताधर्मत्वानुक्तेस्तन्निरासयोगादयुक्तमाशङ्क्य, पूषभागधर्मत्वनिरा-सार्थत्वेन व्याचष्टे—**कुत इति**। न देवताधर्म इति वदता न देवता भागधर्म्म इत्युक्त-मित्यर्थः।

अन्वयमुखेन व्याख्यार्थं 'कस्येत्यादियाग'इत्यन्तं भाष्यं व्याचष्टे—**पूषेति**। यागस्य योऽर्थः प्रयोजनपूर्वं तद्धर्मः पेषणमित्युक्तेऽपूर्वधर्मस्याप्यपूर्व्वसाधनेऽनुष्ठेयत्वात्साधनस्य च द्वारविशेषानपेक्षायां स्रुगादिष्वप्यनुष्ठानापत्तेर्द्वारविशेषेऽवश्याभ्युपगमनीये भागश्रुत्यालोचनया पूषस्वामित्वाख्यस्य पूषभागत्वस्य द्वारत्वावगतेः पूषभागधर्मत्वाविरोधमाशङ्क्य, देवतो-द्देशेन त्याज्यत्वस्य प्रकृतौ द्वारतयाऽवगतस्येहाप्यतिदेशाद्द्वारत्वावगतेः पूषभागत्वस्य द्वारत्वकल्पना न युक्तेति परिहारसूचनार्थं पूषदेवत्वस्य पूषोद्देशेन त्यज्यस्य धर्मः सन् यागार्थस्यापूर्वस्य धर्मो, न तु पूषभागधर्मः सन्नपूर्वधर्म्म इत्युक्तम्। प्रपिष्टभागशब्दाद्यो भागः, सप्रपिष्ट इति भागोद्देशेन पेषणविधानात्पूषभागधर्मत्वप्रतीतेः पूषभागत्वस्योपदेशतो द्वारत्वावगमाद्धातिदेशिकपूषदेवत्यत्वद्वारबाधावगतेः कथं देवताभागत्वस्य द्वारत्वनिरासार्थो देवताभागधर्मत्वनिरास इति 'कथमिति भाष्येण पृष्ठोच्यतइत्यनेन पितृधने पुत्रस्येव स्वतः सिद्धे भागे निरस्ते, नन्विति भाष्येण स्वतःसिद्धदेवताभागाभावेऽपि देवतायै दानात्तस्या-भागो भविष्यतीत्याशङ्क्योच्यतएतद्धीत्यादिनास्तिपूष्णो भाग इत्यन्तं भागाभावोक्त्यर्थं भाष्यं व्याचष्टे—**न तावदिति**। परिग्रहात्प्राक्स्वस्वामिसम्बन्धानापत्तावस्वपरिग्रहात्स्तेया-

पत्तेः परिग्रहाख्यपरिग्रहीतृव्यापारानपेक्षावुद्देशत्यागाख्याद्दातृव्यापारमात्रात्स्वस्वामिसम्बन्धापत्तिमाशङ्क्य, प्रतिग्रहीतृव्यापारानपेक्षत्वेऽपि दानस्य परेच्छाधीनविनियोगार्हत्वाख्यपरस्वत्वापादनपर्यन्तत्वात्परो यथेष्टविनियोगं करोत्वित्येवं संकल्पपर्यंतान्योद्देशपूर्वंस्वत्यागसंकल्पाख्याद्दातृव्यापारात्स्वस्वामिसम्बन्धापत्तेर्देवतायाश्च विग्रहादिराहित्येन यथेष्टविनियोक्तृत्वायोगात्, तदिच्छाधीनविनियोगार्हत्वापादानपर्यन्तोद्देशत्यागाशक्तेर्न देवतास्वत्वापत्तिरिति परिहारसूचनार्थं यश्चेत्यादि भाष्यावयवं व्याख्यातुं—**कर्मसाधनो हीत्याद्युक्तम्** । नवमे निषिद्धभोक्तृत्वाद्यभ्युपगमेन पूर्वपक्षायोगात्तन्निरासानर्थक्यापत्तेर्देवताया यागसाध्यस्वर्गादिस्वाम्याभावात्स्वर्गादिदानशक्तेर्यागानाराध्यत्वसिध्यै देवतोद्देशेनात्यक्तस्वर्गादौ स्वाम्ये नवमे निषेत्स्यमानेऽपि देवतोद्देशेन त्यक्ते हविषि स्वाम्यानिषेधाद्देवतोद्देशेन त्यक्तस्य हविषो देवतास्वत्वाख्यं तद्भागत्वं भविष्यतीति पूर्वपक्षाशयनिरासार्थंत्वेनायं ग्रन्थो यथेष्टविनियोगं सेवनाख्यभजनत्वेनोपचर्य यथेष्टं विनियुज्यतइति कर्मसाधनभागशब्दव्युत्पत्तेर्योऽयं यथेष्टं विनियुङ्क्ते नवमे विग्रहादिनिषेधेन यथेष्टविनियोगत्वतृत्वनिषेधादित्येव योज्यः ।

देवताया यथेष्टविनियोक्तृत्वाख्यस्वाम्यायोगेऽपि देवतोद्देशेन त्यक्तस्यान्येनाविनियोज्यत्वादन्यं प्रति यथेष्टविनियोज्यत्वप्रतिबन्धापादकत्वाख्यस्वाम्योपपत्तेः पूष्णो भागः संभवतीत्याशङ्क्य, अनन्यविनियोज्यत्वाख्यपूषस्वत्वलक्षणपूषभागत्वसंभवेऽपि तद्भागत्वस्यार्थानुपयोगित्वात्पेषणाख्यस्य धर्मस्य देवताभागधर्मत्वे निष्प्रयोजनत्वापत्तेर्न देवताभागधर्म्मता युक्तेति परिहारार्थमथापीत्यादिभाष्यं व्याख्यातुमाह—**अथापीति** ।

अन्यं प्रति यथेष्टविनियोज्यत्वप्रतिबन्धलक्षणस्य स्वीकारस्याऽस्मिन्ग्रन्थे भजनत्वोपचाराद्यद्यपि देवता हविरन्यं प्रति यथेष्टविनियोज्यत्वप्रतिबन्धापादनात्स्वीकुर्यात् तथापि देवतायाः प्रयोजकत्ववारणार्थं नवमे फलदातृत्ववारणात्, तद्भागधर्म्मत्वे पेषणस्य निष्प्रयोजनत्वप्रसङ्गात्तद्धर्मत्वानुपपत्तेः पूषभागत्वस्य द्वारत्वातोगाद्देवतोद्देशद्रव्यत्यागाख्यो याग एवापूर्वस्य धर्मान्वये द्वारमित्यर्थः । प्रयोजकत्ववारणोक्त्या तद्धेतुफलदातृत्ववारणे देवताभागधर्मत्वे पेषणस्य निष्प्रयोजनत्वोपपादनार्थं सूचितम् । भागोक्त्या देवताया इति भाष्यस्था षष्ठी भागव्यतिरेकजनितत्वेन व्याख्याता । यागोक्त्या भागशब्दस्य त्याज्यद्रव्यवाचित्वे सूचिते तर्हि समासश्रुत्या भागशब्दवाच्यस्य देवतोद्देशेन त्याज्यस्य साक्षात्पेषणान्वयावगतेर्देवतोद्देशेन त्याज्यत्वस्य द्वारमात्रत्वोक्तिरयुक्तेत्याशङ्कानिरासायापूर्वधर्मत्वव्युत्पादनार्था नवमाद्यन्यायोक्तिः ।

नावमिके देवताधिकरणे देवतायाः प्रयोजकत्ववारणार्थं फलदातृत्ववारणात्पेषणस्य देवताराधनप्रयोजनत्वायोगाद्देवताभागधर्मत्वे देवताराधनार्थत्वेन प्रयोजनत्वासिद्धावप्यपूर्वसाधने कृतस्यापूर्वार्थत्वाभ्युपगमात्तत्र च स्रुगादौ पेषणप्रसक्तिपरिहारार्थं द्वारविशेषापेक्षायांयागश्रुत्यालोचनयाऽनन्यविनियोज्यत्वलक्षणपूषभागतया यदपूर्वसाधनं, तत्पेष्टव्यमिति पषभागत्वस्य द्वारत्वावगतेः पूषभागेऽनुष्ठानलक्षणं पूषभागधर्मत्वं विना पेषणस्याविधेयत्वेना-

पूर्वसिध्यर्थत्वायोगात्पूषभागधर्मत्वे सत्येवापूर्वसिद्धयाख्यप्रयोजनवत्त्वं भविष्यतीत्याशङ्कय-अविधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदने१०-४ति दाशमिके देवताधिकरणे देवतायाः स्वरूपेण कर्मणि समवायनिषेधेनाऽन्यविनियोज्यत्वप्रतिबन्धलक्षणव्यापारायोगाद्दातव्यापारेणान्यविनियोज्यत्वप्रतिबन्धेऽपि देवताविनियोज्यत्वानापादनात् पूषस्वत्वाख्यपूषभागत्वानिष्पत्तेस्तस्य द्वारत्वायोगेन पूषणमुद्दिश्य त्यक्तस्यापि पूषभागत्वाद्वाराऽपूर्वसाधनत्वायोगात्तस्मिन्कृतस्य पेषणस्यापूर्वधर्मत्वासिद्धयाऽपूर्वसिद्धिप्रयोजनत्वायोगोक्त्यर्थस्यायागेतिभाष्यावयवस्यापूर्वधर्मत्वासिद्धेरित्येवं व्याख्यासूचनार्थं दाशमिकदेवताधिकरणान्यायोक्तिः ।

पेषणस्यापूर्वधर्मत्वे कः पुनरर्थो यागइतिप्रश्नोत्तरभाष्ये यागधर्मत्वोक्तियुक्तेत्याशङ्कया, पूर्वविवक्षयैव वा नादराद्यागोक्तिरिति परिहारं तद्व्याख्यानन्तरं वाच्यमयागेत्याद्यानामपि यागोक्तीनामनादरहेतुकत्वसूचनार्थं बहुयागोक्तिसन्निधावाह– **भाष्येति** । पूषयागसाधनस्य द्रव्यस्य पूषभागत्वाभावे पूषप्रधानबहुव्रीहिस्थेन भागशब्देन पूषयागलक्षणाशक्तेर्दर्शपूर्णमासप्रकरणाम्नातस्य च पेषणस्य पूषयागे प्राकरणिकविनियोगायोगात्पूषयागाङ्गत्वं न स्यादित्याशङ्कार्थं कथं तर्हीति भाष्यं व्याचष्टे—**कथं तर्हीति** । यागोक्तेः पूषयायाख्यविशेषपरत्वसूचनार्थोऽत्रशब्दः । पूषोद्देशेन त्याज्यस्य द्रव्यस्य पूषभागत्वाभावे भागशब्दस्य यागलक्षणाशक्ति तर्हि शब्दसूचितामुपपादयितुं—**वाक्येत्युक्तम्** । यागोक्तेरनदृत्यत्वसूचनाया—**पूर्वेण वेत्युक्तम्** । देवतावाचिपूषशब्दसमभिव्याहारात्मकवाक्यगम्यपूषोद्देशत्याज्यद्रव्यवाचित्वेन भागशब्देन पूषयागलक्षणात्पेषणं यागधर्मो भविष्यतीति परिहारार्थमुच्यतइति भाष्यं देवतास्वेन पेषणस्य भागश्रुत्या संयोगाद्वाक्यलभ्योयागसंयोगो न युक्त इति प्रश्नाशयविवरणार्थं च 'ननु चेति भाष्यमुत्तराशयविवरणार्थं चो'च्यते भागाभावादित्या'द्युक्तमित्यन्तं भाष्यमेकग्रन्थेन तात्पर्यतो व्याचष्टे—**तत्रेति** ।

भागाभावोक्तयोक्तस्य मुख्यदेवतास्वाख्यभागरूपार्थासंभवस्य देवताभागसंयोगायोगहेतोर्यागलक्षणार्थत्वोपपादने तात्पर्यसूचनार्थं—**मुख्येत्युक्तम्** । भाष्ये देवतायाः स्वामित्वान्वतेन भागेन पेषणस्य संयोगो देवतासंयोगो विवक्षितः । देवताभागान्वयायोगेऽपि यागान्वयः 'कथमिति तथापि त्विति भाष्येणाशङ्कय, भागोक्त्या पूषोद्देशत्याज्यत्वलक्षणद्वारा यागलक्षणादिति परिहारोक्त्यर्थं तदुच्यतइत्यादिदेवतेत्यन्तं भाष्यं व्याचष्टे—**परस्येति** । तच्छब्देन व्याख्येयभाष्यनिर्दिष्टपूषपरामर्शात्पूषोद्देशेन त्याज्यतेत्यर्थः । उभयोरित्यादिसूत्रावयवव्याख्यार्थं नचेत्यादिसम्बन्धइत्यन्तं भाष्यमुपेक्ष्य केवलेत्वित्याद्येषेत्यन्तं भाष्यं सेव्यवाचिना भागशब्देन कथं त्याज्यलक्षणेत्याशङ्कय, अन्यस्मै संकल्पितस्योद्देश्यं प्रति भागवत्वप्रसिद्धेः पूषोद्देशेन त्याज्यतया संकल्पितस्य भागशब्देन लक्षणोपपत्त्युक्त्यर्थत्वादपकृष्य व्याख्येयमिति मत्वादौ व्याचष्टे—**स चेति** । असावित्यनेन तस्मै संकल्पित इति व्याख्येयो निर्दिश्यमानसंकल्पितपरामर्शादेकदेवत्ये स त्याज्योऽर्थः पूषविशिष्टः संकल्पितो भागो भवतीति पूषभागव्यपदेशो युक्त इत्यर्थः ।

उपेक्षितं भाष्यं तात्पर्यतो व्याचष्टे—**द्विदेवत्ये पुनरिति**। ऐन्द्राग्नवदिति भाष्योपेक्षितसूत्रावयवव्याख्यार्थं—**यथैवेत्युक्तम्**। इह पुनः पूषपदस्येतिपूर्वपक्षवार्त्तिकोक्तं वैषम्यं परिहरति—**यद्यपि चेति**। इह द्विदेवत्ये पूषभागशब्दाप्रवृत्तिरित्यर्थः। एकैकोद्देशं विना द्वयोद्देशायोगाद्द्विदेवत्येऽपि केवलपूषभागत्वापत्तिमाशङ्क्य, येन कारणेन संकल्पो भागव्यपदेशहेतुस्तेनकारणेन यद्यपि पूषास्वशब्दोच्चारणेन भाष्ये इन्द्रापूष्णोरुच्चारणमित्यन्वयः। शब्दव्यतिरेकजनिता च षष्ठी तेनेन्द्रापूष्णोर्वाचकस्येन्द्रापूषशब्दस्योच्चारणं कुर्वन्नित्यर्थः। एकदेशभूतपूषशब्दोच्चारणस्य समस्तोच्चारणे हेतुत्वात्। उपकारकमिति वोच्चारणविशेषणम्। अर्थाच्चोपकार्यद्विदेवत्यत्वसंकल्पलाभ इति भावः इन्द्रपूषशब्दोच्चारणं द्विदेवत्य चरुसंकल्पोपकारि कुर्वन् द्विदेवत्यचरुसंकल्पोपकारी स्यात् तथापि पूष्णे द्विदेवत्यस्यासंकल्पनान्न तस्य पूष्णः सद्विदेवत्यो भागव्यपदेशार्ह इति परिहारार्थं तेनेति भाष्यं व्याचष्टे—**यद्यपि चेति**। यत्रैकः पूषा देवतेत्येवमेकस्मिन्नितिसूत्रावयवयोजनार्थं केवल इति भाष्यं यत्रोभे देवते इत्येवं चोभयोरिति सूत्रावयवयोजनार्थं नेन्द्रापौष्णादिष्वितिभाष्यं स्पष्टत्वान्न व्याख्यातम् ॥ ४४ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "एकस्मिन् वा" जिस स्थल में पूषा मात्र एक ही देवता है, उस स्थल में पेषण होगा, किन्तु दो देवता सम्बन्धी याग में पौष्ण-पेषण नहीं होगा, इसका उदाहरण है "ऐन्द्राग्नवत्" जैसे इन्द्र और अग्नि देवता वाले पुरोडाश में चतुर्धा विभाग नहीं होता है—यह पूर्व में कहा गया है, अतः ऐन्द्राग्न = इन्द्र और अग्नि के समान सौमपौष्ण आदि चरु स्थल में भी पेषण नहीं होगा, कारण, "अर्थधर्मत्वात्" यह पेषण यहाँ अर्थ अर्थात् याग का धर्म है, यदि यह देवता का धर्म होता, देवता यदि पेषण का प्रयोजक होता तो द्विदैवत्य स्थल में भी पौष्ण-पेषण करना आवश्यक होता, क्योंकि, पूषा, दन्तहीन है। किन्तु मीमांसा सिद्धान्त में देवता हविः का भोक्ता नहीं होता है = देवता की हविर्भोक्तृता नहीं है, यदि रहे भी तो देवता प्रयोजक न होने से पूषादेवता दन्तयुक्त हों या दन्तविहीन हो—उससे कुछ नहीं होने को है, जिस किसी तरह याग को साङ्ग परिपूर्ण करना होगा। क्योंकि, याग ही विधेय है और याग को साङ्ग = परिपूर्ण करने के लिए जैसी विधि है अर्थात् विधिवाक्य से जैसा अर्थ उपलब्ध होता है, उसके अनुरूप ही कर्म अनुष्ठेय है। प्रकृत में अर्थ का धर्म कह कर पेषण को देवता का धर्म नहीं माना गया है, याग ही अर्थ है। उसका परिपूर्ण ही अनुष्ठेय है, नवम अध्याय में देवता के शरीरी होने का निषेध है, अतः, उसकी सङ्गति, इसी रूप में हो सकती है।

"एकस्मिन्" = एक देवता स्थल में ही पौष्णपेषण होगा, "वा" = पूर्वपक्ष के निरास के लिए है, "अर्थ धर्मत्वात्" = क्योंकि, यह अर्थ का अर्थात् याग का धर्म है, इसलिए, "न स्यात्" = उस याग में पेषण नहीं होगा, "उभयोः अचोदितत्वात्" = क्योंकि, उभय अर्थात् सोम एवं पूषा ये दोनों याग के अङ्ग रूप में उपदिष्ट नहीं हैं,

"ऐन्द्राग्नवत्" ऐन्द्राग्न पुरोडाश के समान, इन्द्र और अग्नि देवता वाले पुरोडाश में चतुर्धाकरण नहीं होता है ॥ ४४ ॥

## हेतुमात्रमदन्तत्वम् ॥ ४५ ॥

**शा० भा०—यदुक्तम्, 'अदन्तको ही'ति देवताधर्मं दर्शयतीति । अर्थवाद एष इतरस्मिन्नपि पक्ष उपपद्यते ॥ ४५ ॥**

त० वा०—यत्तु 'अदन्तको हि' इति हेतुनिदर्शनाद्देवताधर्मत्वमिति । तत्रोच्यते । हेतुवन्निगदार्थवादत्वादस्य यागधर्मप्रशंसार्थत्वमप्यविरुद्धमित्यकारणता ॥ ४५ ॥

न्या० सु०—यददन्तत्वं देवताभागधर्मत्वे लिङ्गमुक्तम्, तद्धेतुवन्निगदार्थवादमात्रत्वाद्यागापूर्वधर्मत्वपक्षेऽप्युपपन्नमित्येवं सूत्रव्याख्यार्थं यदुक्तमितिभाष्यं व्याचष्टे—**यत्त्विति** ॥४५॥

भा० प्र०—पूर्वपक्षी ने "अदन्तको हि सः" इस अर्थवाद वाक्य का निर्देश किया है, उससे भी सर्वत्र पौष्ण-पेषण प्राप्त नहीं होता है, कारण, "हेतुमात्रमदन्तत्वम्" यह अदन्तत्व यहाँ हेतु नहीं है, वरन् "हेतुवन्निगद" हेतु के समान कथित है । अतः, अदन्तत्व यदि पेषण का हेतु नहीं है तो द्विदैवत्य स्थल में पेषण कैसे होगा ।

"अदन्तत्वम्"=अदन्तता, 'हेतुमात्रम्=हेतु के समान अर्थात् हेतुवन्निगद है ॥ ४५ ॥

## वचनं परम् ॥ ४६ ॥

**शा० भा०—अथापरं यत्कारणमुक्तं, नेमपिष्टमिति द्विदेवत्ये पेषणं दर्शयेति, 'अर्धं पिष्टं भवत्यर्धमपिष्टं द्विदेवत्यत्वाय', इति देवताधर्मं दर्शयतीति । अत्रोच्यते । एवं सति वचनमिदमप्राप्ते भवतीति । नन्वनेकार्थविधानामेकं वाक्यं प्राप्नोति । उच्यते । सति पक्षान्तरेऽनेकार्थविधिः पक्षान्तराश्रयणेन परिह्रियते । असति पुनः पक्षान्तर उच्चारणानर्थक्यप्रसङ्गपरिजिहीर्षयाऽनेकार्थं वाक्यमभ्युपगन्तव्यं भवति । तस्मान्न द्विदेवत्ये पेषणमिति सिद्धम् ॥ ४६ ॥ आशङ्कानिरासः ॥ पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम् ॥ १५ ॥**

**इति श्रीशबरस्वामिनः कृतौ धर्ममीमांसाभाष्ये तृतीयस्याध्यायस्य तृतीयः पादः समाप्तः ॥**

त० वा०—नेमपिटादिषु प्राप्त्यभावाद्वचनं भविष्यति । विशिष्टविधानाच्च वाक्यभेदाभावः । अरुणैकहायनीवच्च परस्परनियमादसर्वविषयत्वम् । अविशिष्टविधिं चापेक्ष्य विशिष्टविधिर्दुर्बलो भवति, न त्वत्रासावस्ति । तस्मादलिङ्गमित्येकदेवताविषयत्वमिति ॥ ४६ ॥

इति श्रीभट्टकुमारिलविरचिते धर्ममीमांसाभाष्यव्याख्याने तन्त्रवार्तिके तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥

न्या० सु०—यत्परं नेमपिष्टार्द्धपिष्टवाक्ययोः पेषणानुवदनं देवताभागधमंत्वे लिङ्गमुक्तं, तत्पेषणविधित्वेनाननुवादत्वादलिङ्गमित्येवं सूत्रव्याख्यार्थमथेत्यादिभवतीतीत्यन्तं भाष्यं व्याचष्टे—**नेमेति**। वचनात्सर्वपेषणमितिसूत्रे सोमापौष्णसम्बन्धे नेमपिष्टसंबंधे चेति भाष्योक्तां वाक्यभेदशङ्कां नन्विविभाष्यानूदितां स्वयं तावन्नेमपिष्टवाक्ये सर्वविशेषणविशिष्टयागभावनाविधानात्, अर्धपिष्टवाक्ये चार्धविशिष्टपेषण विधानात्परिहरति—**विशिष्टेति**। विशिष्टविधौ च सति वचनादिति सूत्रोक्तामपरिहृत्य, विधित्वाभ्युपगमेन लिङ्गपरिहाराशक्तेर्वचनमित्यनेन विशिष्टविधित्वस्यैवोक्तत्वादनेकार्थविधिलक्षणवाक्यभेदशङ्कानुपपत्तेर्नन्वितिभाष्येण गौरवलक्षणवाक्यभेदशङ्कोक्तेत्यापाद्य, अगतौ गौरवस्यादोषत्वं वक्तुमगौरवपक्षसंभवे तदाश्रयणेन गौरवं परिह्रियते। इह त्वगौरवपक्षासंभवादानर्थक्यपरिहारार्थं गौरवाभ्युपगमो न दोषायेत्येवं परिहारार्थमुच्यतइत्यादिभाष्यं व्याचष्टे—**अविशिष्टेति**। तस्मादितिभाष्यं सूत्रार्थोपसंहारद्वाराधिकरणार्थोपसंहारार्थत्वेन व्याचष्टे—**तस्मादिति** ॥ ४६ ॥

**इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिमाधवभट्टोपाध्यायात्मजसोमेश्वरकृतौ तन्त्रवार्तिकटीकायां सर्वानवद्यकरिण्यां न्यायसुधाख्यायां तृतीयस्याध्यायस्य तृतीयः पादः समाप्तः ॥**

भा० प्र०—पूर्वपक्षी ने "सौमापौष्णं चरुं निर्वपेत् नेमपिष्टं पशुकामः" इस वाक्य को द्विदैवत्य स्थल में भी पौष्ण-पेषण का लिङ्ग कहा गया है, उसका परिहार करते हुए कहा गया है—"वचनं परम्" उक्त वाक्य द्विदैवत्य स्थल में भी पौष्णपेषण का लिङ्ग नहीं है, किन्तु वह "वचनम्" पशु फल के लिए गुणविशिष्ट अपूर्व कर्म का विधायक है, क्योंकि, इस स्थल का "सौमापौष्णं चरुं निर्वपेत् नेमपिष्टं पशुकामः" यह वाक्य "पशुकामः" इस प्रकार का उल्लेख है, इसलिए, उक्त स्थल में वचन होने से चरु नेमिपिष्ट = अर्द्धपिष्ट होगा, किन्तु, सर्वत्र इस प्रकार नहीं होगा, वह यदि लिङ्ग = ज्ञापक होता तो इस दृष्टान्त में सर्वत्र द्विदैवत्य आदि स्थल में भी पौष्ण-पेषण हो सकता है। किन्तु यह लिङ्ग नहीं है, वरन् विधिवाक्य है और इस स्थल में एक से अधिक विधेय होने से वाक्य भेद नाम का जो दोष है, वह भी नहीं होगा, कारण यह प्राप्त कर्म में गुणविधि नहीं है, किन्तु अपूर्व कर्म ही है और अप्राप्त अपूर्व कर्म में भी एक साथ एक से अधिक विधेय का समावेश होने पर भी वाक्यभेद नहीं हो सकता है—इसका प्रतिपादन पूर्व में किया गया है।

"परम्" = परवर्ती अर्थात् "नेमपिष्ट" इत्यादि वाक्य, "वचनम्" = वचन अर्थात् विशिष्ट कर्म का विधायक वाक्य है, किन्तु, वह लिङ्ग नहीं है ॥ ४६ ॥

**पन्द्रहवाँ पौष्ण-पेषण का एक दैवत्यनिवेशाधिकरण मीमांसा दर्शन के तृतीय अध्याय का तृतीय पाद समाप्त हुआ।**

# अथ तृतीयेऽध्याये चतुर्थः पादः ॥

## अथ प्रथमं निवीताधिकरणम्

[१] निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥१॥ पू०

शा० भा०—दर्शपूर्णमासयोराम्नातं, 'निवीतं मनुष्याणां, प्राचीनावीतं पितॄणाम्, उपवीतं देवानाम्, उपव्ययते देवलक्ष्ममेव तत्कुरुते' इति। निवीतं मनुष्याणामित्यत्र संदेहः—किमयं विधिः, उतार्थवाद इति। यदा विधिः, तदा किमयं पुरुषधर्मः, उत कर्मधर्मः। अथ यत्प्रकरणे मनुष्याणां, तत्र विधिः, उत मनुष्यप्रधाने कर्मणि निविशत इति। किं प्राप्तम्? विधिर्मनुष्यधर्मश्चेति। यदि विधिः, एवमपूर्वमर्थं विदधदर्थवान् भवति। इतरथाऽर्थवादमात्रमनर्थकम्। विधिश्चेत्पुरुषधर्मः। निवीतं मनुष्याणामिति पुरुषप्रधानो निर्देशः। कथमवगम्यते? नात्र मनुष्या विधीयन्ते। मनुष्याणां निवीतं विधीयते। न चाविहितमङ्गं भवति। यदि मनुष्या अपि विधीयेरन्, वाक्यं भिद्येत। तस्मान्निवीतं मनुष्याणामुपकारकम्।

ननु प्रकरणाद्दर्शपूर्णमासयोरुपकारकम्। प्रकरणाद्धि वाक्यं बलवत्तरम्। अपि च गुणभूतेषु मनुष्येषु कारकसम्बन्धस्य विवक्षितत्वात्तृतीया भवेत्। षष्ठी त्वेषा सम्बन्धलक्षणा। तत्र गुणभूतेषु मनुष्येषु मनुष्यग्रहणं नैव कर्तव्यं स्यात्। मनुष्यैरेव तत् क्रियमाणं क्रियेत। मनुष्यप्रधानपक्षे तु कर्तव्यम् ॥ १ ॥ पूर्वपक्षः ॥

त० वा०—स एव श्रुत्यादित्रितयस्य प्रकरणेन सह विरोधाविरोधविचारः। तत्र 'निवीतं मनुष्याणाम्' इत्यत्रैते पक्षा भवन्ति—किमयं शुद्धमनुष्यधर्मः, कर्मयुक्तमनुष्यधर्मो वा, अयं शुद्धकर्मधर्मः, अथवा प्रकरणे 'यन्मनुष्यप्रधानं कर्मान्वाहार्यपचनादि, तस्य धर्मः; उताप्रकरणे या मनुष्यपूजाऽऽतिथ्यात्मिका, तस्यां निवेश इति। यौ तु विध्यर्थवादपक्षौ तौ शेषलक्षणेऽनोपयिकौ प्रमाणलक्षणविषयत्वाद्विधिवन्निगदार्थवादमध्ये च निर्णीतत्वादिह नैवोपन्यसनीयौ।

यस्तु भाष्यकारेणोपन्यासः कृतः। स कृत्वाचिन्तान्यायेनेति द्रष्टव्यम्। न हि विधित्वमनभ्युपेत्य मनुष्यधर्मादिपक्ष[1] उपपद्यत इति। विधिरिति कृत्वा प्रथमं प्रस्तुत्य पश्चाल्लक्षणानुरूपं विचार्यान्ते पूर्वावस्थितमेवार्यवादत्वमुपसंहरिष्यति। परेष्वप्यधिकरणेष्वेतद्यथासंभवं योजयितव्यम्।

---

१. क० पक्षपरिग्रहः।

तत्र 'विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्' इत्यनेनैव तावद्विधिः। अहीनाद्यधिकरणन्यायेन च षष्ठीश्रुत्या मनुष्यधर्मः। तेषां स्वत्वेन तत्प्रतीयते, न मनुष्यास्तदङ्गत्वेन। गुणविभक्तिनिर्देशाभावात्। अर्थादेव च तत्प्राप्तौ सत्यां नैव मनुष्यग्रहणं क्रियेत। कृतं चैतत्। अतोऽपि मनुष्यधर्म इत्यवगच्छामः॥ १॥

**अथ प्रथमं निवीताधिकरणम्। १।**

न्या० सु०—निवीतस्य मनुष्यधर्मत्वादिचिन्तायां प्रकरणस्य केन सह विरोधाविरोधचिन्तेत्याशङ्क्य, श्रुत्या मनुष्यधर्मत्वस्य, लिङ्गात्सर्वकर्मधर्मत्वस्य, वाक्याच्च मनुष्यप्रधानकर्मधर्मत्वस्यावगतेः त्रयेण सहेति दर्शयितुमाह—**स एवेति**। प्रासङ्गिकानन्तरचिन्ताद्वयेनाऽसंगतिशङ्कानिरासार्थप्रासङ्गिकसमाप्त्या यः प्रकृतो बुद्धिस्थीकृतः, स एवेत्युक्तं शुद्धमनुष्यातिथ्याङ्गत्वपक्षयोर्वा प्रकरणादुत्कर्षात् पक्षान्तरेषु चानुत्कर्षात् उत्कर्षानुत्कर्षफलत्वं स एवेत्यनेनोक्तम् प्राचीनावीतस्यापि पितृप्रधाने कर्मणि विधावुत्कर्षापत्तेः, सन्निधौ च निवीतोक्तेर्व्यवहितोपवीतश्रुत्यर्थत्वसिद्धान्तायोगप्रसङ्गात्प्राचीनावीतमपि कस्मान्न चिन्तितमित्याशङ्क्य, शुद्धपितृधर्मत्वादिपक्षासंभवात्तस्यात्राचिन्तनीयतां सूचयितुमाह—**तत्रेति**। अत्रैवैते सर्वे पक्षाः संभवन्ति। न प्राचीनावीतं पितृणामित्यत्रेति सावधारणं व्याख्येयम्। शुद्धकर्मयुक्तशब्दाभ्यां मनुष्यधर्मोक्तेः पक्षद्वयोक्तयर्थतोक्ता। विध्यर्थवादचिन्तायां विरोधाविरोधचिन्तात्मकत्वाभावेनाऽसंगतिमाशङ्क्याह—**यौ त्विति**। नोपन्यस्य याविति द्वितीयार्थवाचिना कृत्येन प्राधान्यं निरस्तं भाष्यकृतोपक्रमे विध्यर्थवादचिन्तायाः कृतत्वात्प्राधान्यशङ्कां निराकर्तुमाह—**यस्त्विति**।

कृत्वाचिन्तात्वमेवोपपादनपूर्वं विवृणोति—**न हीति**। विधिं विना सामान्यतोऽङ्गत्वासिद्धेः तद्विशेषं मनुष्याङ्गत्वादिबोधिश्रुत्याद्यव्यापारसूचनार्था मात्रोक्तिरिति हेतोः कृत्वा चिन्तात्वेन विधिरिति। प्राक्प्रस्तुत्येतिचिन्तात्वेनेति शब्दाध्याहारेणेति योज्यम्। विध्यर्थवादचिन्तायाः प्राधान्याभावेऽपि प्राक्प्रस्तावोपपत्तिसूचनार्थौ प्रथमपश्चाच्छब्दविधित्वनिगदानामपि 'शोभतेऽस्य मुखं, य एवं वेदेत्यादीनामर्थवादाधिकरण एवाऽत्रस्थितार्थवादत्वानामौदुम्बराधिकरणे विधित्वशङ्कामात्रनिरासाद्विधित्वायोगोर्थवादत्वोक्त्या विवक्षितः। यो भाष्यकृता विध्यर्थवादपक्षोपन्यासपूर्वको लक्षणानुरूपमनुष्यधर्मत्वादिपक्षोपन्यासः कृतः स कृत्वाचिन्तारूपेणेति यदुक्तम्, तदिदमित्रभागपरुषिदितपरकृतिपुराकल्पाधिकरणेऽत्रापि योज्यमिति प्रसङ्गादाह—**परेष्वपीति**। परकृतिपुराकल्पाधिकरणे माषपाको मनुष्यमात्रधर्मो वृष्णिसगोत्रधर्मो वेत्येतावन्मात्रविचारेण कर्मयुक्तमनुष्यधर्म्मत्वाद्यविचाराद्यथासंभवमित्युक्तम्। निवीतमिति कीर्त्तनं वचनम्। स च मनुष्यधर्म्म इत्येवं वचनं परमिति पूर्वाधिकरणान्त्यसूत्रस्थविधिवाचिवचनशब्दानुषङ्गेण विधित्वमनुष्यधर्मत्वपक्षद्वयप्रतिज्ञातार्थत्वेन निवीतमिति सूत्रावयवव्याख्यार्थं किमिति पूर्वपक्षभाष्यं स्पष्टत्वादव्याख्याय, विधित्वप्रतिज्ञायां हेत्वपेक्षायामौदुम्बराधिकरणपूर्वपक्षसूत्रोक्तहेतूक्त्यर्थं 'यदीति भाष्यं व्याचष्टे—**तत्रेति**।

तच्छब्देनाप्राप्तविधिताऽस्मिन् सूत्रे सूचिता । षष्ठ्याख्यस्य शब्दस्य मनुष्यप्रधानत्वा-दित्येवं मनुष्यधर्मत्वहेतूक्त्यर्थत्वेन शब्दस्येति सूत्रावयवव्याख्यार्थं त्रिधिश्चेदिति भाष्यं व्याचष्टे—अहीनादिति । प्रकरणानुरोधाच्छ्रुतेरन्यथाव्याख्यानौचित्यसूचनायाऽहीनाद्य-विकरणन्यायोक्तिः । अहीनादेः प्रकृतकर्मानन्वयाद् द्वादशोपसत्त्वादेस्तद्युक्ताहीनधर्मत्वा-योगेपि मनुष्याणां प्रकृतकर्मान्वियसंभवादबाधकस्यापि बाधायोगात् प्रकरणानुगृहीतया श्रुत्या प्रकृतकर्मयुक्तमनुष्यधर्मत्वसूचनार्थश्चकारः । प्रश्नपूर्वं मनुष्यप्राधान्योपपादनार्थं कथ-मित्यादिभाष्यं तात्पर्यतो व्याचष्टे—तेषां हीति ।

षष्ठ्युक्तसम्बन्धसामान्यस्य विशेषापेक्षायां षष्ठ्या विध्यपेक्षिताऽङ्गाङ्गित्वाख्यसम्बन्ध-विशेषसमर्पणेन विनियोजकत्वाद्विहितस्याविहितसम्बन्ध्यङ्गत्वावगतेः एकस्मिंश्च वाक्ये विधेयद्वयायोगान्निवीतस्यैव विहितत्वात् मनुष्याङ्गत्वेनाविहितानां मनुष्याणां निवीताङ्ग-तेत्याशयः स्वत्वशब्देनाङ्गत्ववाचिनोपकारकशब्दो भाष्यस्थोऽङ्गवाचितया व्याख्यातः प्रकरणाप्याङ्गत्वेन साक्षात् कर्तृसमोहितसाधनत्वोपपत्तौ पारम्पर्यसमीहितनिव्यानाङ्गत्वं कल्पनायोगात्क्रृतिबलेन निव्यानस्यैव मनुष्याङ्गता युक्तेति परिहारार्थं प्रकरणाद्धीति भाष्यं स्पष्टत्वादव्याख्याय, कर्तृवाचितृतीयाऽभावान्मनुष्याणां निव्यानाङ्गत्वानवगतेरपि, निव्यान-स्यैव मनुष्याङ्गता युक्तेति परिहारार्थमपिचेति भाष्यं व्याचष्टे—गुणेति । षष्ट्येव कृद्योगेन कर्तृवाचिनीत्वादगुणविभक्तिर्भविष्यतीत्याशङ्क्य, सम्बन्धमात्रवाचिनीयं षष्ठी, न कर्तृ-वाचिनीति षष्ठीत्वितिभाष्येणोक्ते, तदुपपादनार्थं 'तत्रेति भाष्यं व्याचष्टे—अर्थादेव चेति । अतो मनुष्यप्रातिपदिकश्रुत्यानर्थक्यपरिहारायापि तद्धर्मतेत्युपसंहरति—अतो पीति ॥ १ ॥

भा० प्र० दर्शपूर्णमास प्रकरण में कहा गया है कि "निवीतं मनुष्याणां प्राचीना-वीतं पितॄणामुपवीतं देवानाम् । "उपव्ययते देवलक्ष्ममेव कुरुते" (तै० सं० २।५।११) अर्थात् "निवीत मनुष्यों के पक्ष में प्राचीनावीत पितरों के पक्ष में एवं उपवीत देवों के पक्ष मे । यह जो उपव्यान किया है, वह देवचिह्न ही किया है । यह वचन अर्थवाद है या विधि है । यदि विधि है तो यह क्रत्वर्थ है अथवा पुरुषार्थ है—यह संशय है । इसमें पूर्वपक्षी का कहना है कि "निवीतमिति मनुष्याणाम्"—यह जो "निवीतम्" इत्यादि वाक्य है, इसके द्वारा निवीत मनुष्य-धर्मरूप अर्थात् मनुष्योद्देश्यक कर्म के अङ्ग के रूप में विहित होता है, कारण, "शब्दस्य तन्निमित्तत्वात्"—इस स्थल में "मनुष्याणां" इस पद में जो षष्ठी विभक्ति है, यह षष्ठी विभक्ति श्रुति के द्वारा मनुष्य का प्राधान्य अवगत होता है । "दध्ना इन्द्रियकामस्य जुहूयात्" इस वाक्य में जैसे दृष्टान्त "इन्द्रियकामस्य" इस पद का प्राधान्य बोधित होता है, इस स्थल में भी ऐसा हो समझना चाहिए ।

"निवीतम् इति" = "निवीतम्" इत्यादि वाक्य, "मनुष्यधर्मः" = मनुष्य का अङ्ग है, "शब्दस्य तत्प्रधानत्वात्" = क्योंकि "मनुष्याणाम्" इस षष्ठी विभक्ति से युक्त शब्द की तत्प्रधानता अर्थात् मनुष्य की प्रधानता है अर्थात् वह मनुष्य की प्रधानता अवगत कराता है ॥ १ ॥ पूर्वपक्ष ।

## अपदेशो वाऽर्थस्य विद्यमानत्वात् ॥ २ ॥

शा० भा०—अपदेश इति ज्ञायमानस्य वचनम्। स एष न विधिः। अनुवाद एषः। कुतः। अर्थस्य विद्यमानत्वात्। प्राप्त एवार्थो, यन्निवीतं मनुष्याणाम्। निवीतं हि मनुष्याः प्रायशः स्वार्थं कुर्वन्ति। तस्मादनुवादः ॥२॥ आशङ्कानिरासः ॥

त० वा०—निवीतं केचिद्गलवेणिकाबन्धं स्मरन्ति। केचित्पुनः परिकरबन्धम्। तत्र गलवेणिकाबन्धो युद्धादन्यत्र न प्राप्नोति। परिकरबन्धस्तु सर्वकर्मस्वव्यग्रताकरत्वात्प्राप्त इति तदाश्रयणेनानुवादमाह। स तु किंप्रयोजन इत्युत्तरत्र वक्ष्यते ॥ २ ॥

न्या० सु०—मनुष्यार्थस्य निवीतस्य लोके विद्यमानत्वादिति हेत्वर्थोपपादनार्थं निवीतं हीति भाष्यं विधेयत्वेनाभिमतस्य गलवेणिकाबन्धाख्यनिव्यानस्य युद्धादन्यत्राप्राप्तेर्विधिसंभवादयुक्तमाशङ्क्य, परिकरबन्धाख्यनिवीताशयत्वेन व्याचष्टे—निवीतमिति। उपवीतश्रुतेश्चानुवादप्रयोजनस्यार्थवादो वेति सूत्रे वक्ष्यमाणत्वान्नानर्थक्यापत्तिरित्याह—स त्विति ॥ २ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "अपदेशो वा" = निवीत वाक्य अनुवाद है, कारण, "अर्थस्य विद्यमानत्वात्" = लोक में स्वभावतः निवीती होकर लौकिक कर्म करता है, अतः निवीतरूप में अर्थ विद्यमान अर्थात् प्राप्त होने से विधि नहीं हो सकता है।

"अपदेशः = अपदेश अर्थात् अनुवाद, "वा" = पूर्वपक्ष के निरास के लिए है, "अर्थस्य विद्यमानत्वात्" = क्योंकि अर्थ अर्थात् निवीत विद्यमान अर्थात् स्वभावतः प्राप्त है। सिद्धान्त ॥ २ ॥

## विधिस्त्वपूर्वत्वात्स्यात् ॥ ३ ॥

शा० भा०—विधिरेव भवेत्, तथा प्रयोजनवान्। इतरथा वादमात्रमनर्थकम्। पूर्ववाननुवादो भवति। अयं त्वपूर्वो, यन्नियमेन निव्यातव्यमिति ॥ ३ ॥ आशङ्कानिरासः ॥

त० वा०—विधिरेवायाम्। कुतः ? पूर्ववत्त्वाद्धयनुवादो भवेदत्यन्तप्राप्तावित्यर्थः। न चायमत्यन्तप्राप्तः। तेन विनाऽप्यव्यग्रतायाः शक्यत्वात्। कण्ठबन्धः पुनः प्रायेणाप्राप्त एवेत्यस्ति नियमविधेरवकाशः ॥ ३ ॥

न्या० सु०—अप्राप्तविधित्वे निरस्तेऽपि, नियमविधित्वप्रतिज्ञार्थस्य विधिस्त्विति सूत्रावयवस्य व्याख्यार्थं विधिरेवेत्यादिभाष्यं संक्षिप्य व्याचष्टे—विधिरेवेति। पूर्ववत्वादपदेशः स्यान्न त्वयं निव्याननियमः पूर्ववानित्येवं, पूर्वसूत्रस्थापदेशोक्त्यनुषङ्गेण व्यवधारण-

कल्पनयापूर्ववत्वात्स्यादिति सूत्रावयवव्याख्यार्थं पूर्ववानित्यादिभाष्यं पक्षेपि प्राप्ती संभवन्त्यामश्रुतलिङ्गादिकल्पनया विधिकल्पना न युक्तेत्याशयहेतुप्रश्नोत्तरत्वेन व्याचष्टे—कुतइति। नित्यवत्कीर्त्तनान्यथानुपपत्त्या पक्षे प्राप्तस्यापि कल्प्यो विधिरित्युत्तराशयः। गलवेणिकाबन्धस्तु युद्धादन्यत्र पक्षेप्यप्राप्त इत्याह—कण्ठेति ॥ ३ ॥

भा० प्र०—पूर्वपक्षी का कहना है कि "विधिस्तु स्यात्" निवीत वाक्य विधि ही हो है। कारण, "अपूर्वत्वात्" क्योंकि यह अपूर्ववत् अर्थात् नियम रूप में प्राप्त नहीं है। आशय यह है कि लोक व्यवहार में निवीत प्रसिद्ध है, किन्तु, निवीति होकर ही कर्म करना होगा—ऐसा नियम नहीं है। इसलिए इत्यादि वाक्य में इस प्रकार का नियम कर दिया है कि निवीती होकर ही कर्म करे, अत एव यह नियमविधि है।

"विधिः स्यात्" = विधि होगी, "तु" = पक्षपरिवर्तनसूचक, "अपूर्वत्वात्" = क्योंकि, यह पूर्ववत् नहीं है। आशङ्का ॥ ३ ॥

## स प्रायात्कर्मधर्मः स्यात् ॥ ४ ॥

**शा० भा०—यदुक्तं विधिरिति, एतद् गृह्यते। यत्तु मनुष्यधर्म इति, तन्नानुमतम्। क्रतुधर्मोऽयं प्रकरणात्। प्रकृत्यैव हि कर्मप्रायेषु धर्मेषूच्यमानेष्वेतदभिधीयते। तस्मात्कर्मधर्मः ॥ ४ ॥**

त० वा०—सति विधित्वे कर्मधर्मप्रायप्रदेशाम्नानात्कथंभावसंस्पर्शात्कर्मधर्मः ॥ ४ ॥

न्या० सु०—नियमविधित्वे पक्षे प्राप्तस्य नियमविषयत्वात् कर्मार्थत्वेनैव च पक्षप्राप्ते समान्यतः कर्मधर्मत्वे नियमविधितोऽवगते विशेषापेक्षायां दर्शपूर्णमासाख्यकर्मधर्मप्रदेशाम्नानेन दर्शपूर्णमासकथंभावस्पर्शावगमात्तद्धर्म इत्येवं तृतीयपूर्वपक्षसूत्रव्याख्यार्थं 'यदुक्तमित्यादिभाष्यं व्याचष्टे—सतीति। प्रायोक्तिव्याख्यार्था प्रदेशोक्तिः ॥ ४ ॥

भा० प्र०—पूर्वपक्षी कह सकते हैं कि "निवीतम्" इत्यादि वाक्य विधि है। इसके द्वारा निवीत मनुष्य के धर्मरूप में अर्थात् मनुष्योद्देश्यक लौकिक कर्म के अङ्गरूप में विहित होता है। इसमें एक पक्ष का कहना है कि "निवीतम्" यह विधि है—यह मानता हूँ, किन्तु, यही कहकर वह मनुष्य धर्म है—ऐसी बात नहीं है, किन्तु वह "कर्मधर्मः स्यात्" = दर्शपूर्णमास नामक कर्म का ही धर्म अर्थात् अङ्ग होगा। कारण, "प्रायात्" = प्रकरण के अनुसार यही अवधारित है, जब वह दर्शपूर्णमास प्रकरण में पठित है, तब प्रकरण के अनुसार वह जो दर्शपूर्णमास का अङ्ग है, वही प्रमाणित है, अतएव निवीत मनुष्यधर्म नहीं है, वरन् क्रतु-धर्म है।

"सः" = वह अर्थात् "निवीतम्" इत्यादि वाक्य जो विषय विहित है वह, "कर्मधर्मः स्यात्" = कर्म का अर्थात् दर्शपूर्णमास कर्म का धर्म अर्थात् अङ्ग होगा, "प्रायात्" = प्रकरण के अनुसार। द्वितीय पूर्वपक्ष ॥ ४ ॥

## वाक्यशेषत्वात् ॥ ५ ॥

**शा० भा०—निवीतं मनुष्याणामित्यस्य वाक्यशेषः। समाख्या, आध्वर्यवमिति। यदि दर्शपूर्णमासयोः शेषः ततोऽध्वर्युणा कर्तव्यम्। तत्र समाख्याऽनुग्रहीष्यते ॥ ५ ॥**

त० वा०—द्वेधा संभवे तादृशी प्रमाणगतिराश्रयणीया। या प्रमाणान्तरं न बाधते। यजुर्वेदाम्नानाच्च निवीतादेराध्वर्यवसमाख्योपबद्धं वाक्यम्। तत्र यदि कर्मधर्मोऽयं, ततः कर्तृविशेषापेक्षायां सत्यां समाख्ययाऽध्वर्युनियमात्समाख्या-अर्थवती भविष्यति। मनुष्यधर्माणां तु न समाख्या नियामिकेति वक्ष्यामः। तत्रासौ बाध्येत। इतरथाऽनुग्रहीष्यते। तस्मादपि कर्मधर्मः ॥ ५ ॥

न्या० सु०—कर्माङ्गत्वे मनुष्योक्त्यानर्थक्यापत्तेः प्रकरणबाधभयाच्छुद्धमनुष्या अङ्गत्वानभ्युपगमेति प्रकृतकर्मयुक्तमनुष्याङ्गत्वं भविष्यतीत्याशङ्क्य, कर्मयुक्तमनुष्याङ्गत्वे 'यजमानास्तु तत्प्रधानत्वादि'३-८-१त्यनेन न्यायेन यजमानत्वापत्तेर्निवीतवाक्यस्य चाध्वर्यवसमाख्यात्मकशेषसम्बन्धान्निव्यानस्याऽध्वर्युकर्तृकत्वावगतेः कर्मयुक्तमनुष्याङ्गताप्ययुक्तेति परिहारार्थत्वेन वाक्यशेषसमासपरेण भावप्रत्ययेन सम्बन्धोक्तिमभिप्रेत्य, सूत्रव्याख्यार्थं निवीतमित्यादिभाष्यसमाख्यानुरोधेन श्रुतिबाधायोगादयुक्तमाशङ्क्य, मनुष्यश्रुतेर्विधित्वेन, अनुवादत्वेन वा द्विधा संभवे समाख्यायाविधित्वानुवादत्वयोरसंभवादत्यन्तबाधा न युक्तेत्येवमाशयोक्तिपूर्वं व्याचष्टे—**द्विधेति**। मनुष्याङ्गत्वे तु लोहितोष्णीषादिवद्गुणत्वाच्च वेदेन न व्यवस्था स्यादि३-८ति वक्ष्यमाणेन न्यायेन समाख्याया नियामकत्वायोगादत्यन्तबाधः स्यादित्याह—**मनुष्येति**। कर्माङ्गत्वेन केवलं बाधाभावः, किंत्वन्यतोऽध्वर्युकर्तृकत्वानवगमादनुग्रह एवेत्याह—**इतरथेति**। पूर्वसूत्रस्थप्रतिज्ञानुषङ्गेण सूत्रं योजयितुमाह—**तस्मादपीति** ॥ ५ ॥

भा० प्र०—इस पूर्वपक्ष के उत्तर में दूसरे एक वादी का कहना है कि यद्यपि प्रकरण के अनुसार "निवीत" कर्मधर्म है तथापि यह 'प्रयाज' आदि के समान क्रतु का अङ्ग नहीं है, किन्तु यह अध्वर्यु का कर्म है, कारण, यह "निवीतम्" इत्यादि वाक्य का 'आध्वर्यवम्' यह समाख्या शेष होती है, क्योंकि, यह अध्वर्युवेद में पठित है और ऐसी स्थिति में समाख्या का भी प्रामाण्य अव्याहत है, अन्य के प्रामाण्य को अव्याहत रखकर जो अर्थ प्राप्त होता है, उसी का ग्रहण करना उचित है। आशय यह है कि कर्म धर्म में कोई विवाद नहीं है।

"वाक्यशेषत्वात्" = वाक्यशेष अर्थात् समाख्या रहने पर भी यह मनुष्य धर्म नहीं वरन् कर्म का ही अङ्ग है ॥ ५ ॥

## तत्प्रकरणे यत्तत्संयुक्तमविप्रतिषेधात् ॥ ६ ॥

**शा० भा०—उच्यते। प्रकरणात्समाख्यानाच्च कर्मधर्मो विज्ञायते।**

**वाक्यान्मनुष्यधर्मः। तस्मादुत्कर्षमर्हति। नेति ब्रूमः। प्रकरण एवाभिनिविशमानस्य मनुष्यप्रधानताऽवकल्पिष्यते। कथम्? यद्दर्शपूर्णमासयोर्मनुष्यप्रधानं, तत्र निवेक्ष्यतेऽन्वाहार्यकर्मणि। प्रकरणं चैवमनुग्रहीष्यते, वाक्यं च॥ ६॥**

त० वा०—प्रथमं तावन्मनुष्यधर्मबलीयस्त्वेन कर्मधर्मत्वं निराकरोति। तथा हि सुखं सूचितः पक्षः परिग्रहीष्यते। श्रुत्या हि प्रकरणसमाख्ये बाधित्वा मनुष्यधर्म एव प्राप्नोति। तदुच्यते। सर्वानुग्रहार्थमयं पक्षोऽस्तु। मनुष्याणामिति तत्प्रधानकर्मव्यतिरेकजनिता षष्ठी न निवीतं गृह्णाति। तदपि च प्रकरणादन्वाहार्यदानादि प्रतीयते, नान्यत्। अत एष वाक्यार्थो यदिह मनुष्याणां कर्म, तत्र निव्यातव्यमिति॥ ६॥

न्या० सु०—उच्यते इत्यादिभाष्येण शुद्धकर्माङ्गत्वनिरासं सूत्रानारूढत्वादयुक्तमाशङ्क्य, उक्तपक्षनिरासं विना पक्षान्तरपरिग्रहायोगात्प्राकरणिकमनुष्यप्रधानान्वाहार्यपाकादिकर्माङ्गत्वपक्षापरिग्रहार्थाक्षिप्त शुद्धकर्माङ्गत्व-निरासार्थत्वेनोपपादयितुमाह—**प्रथमं तावदिति**। उपपादितं भाष्यं व्याचष्टे—**श्रुत्या हीति**। प्रकरणे यन्मनुष्यसंयुक्तं कर्म, तत्र निवीतं निविशते, न शुद्धे प्रकृते कर्मणि सर्वेषां श्रुतिप्रकरणसमाख्यानामविरोधाच्छुद्धप्रकृतकर्मनिवेशे श्रुतिविरोधापत्तेरित्येवं सप्तम्यर्थे तदित्यव्ययाङ्गीकरणेन सूत्रव्याख्यार्थं नेतीत्यादि भाष्यं संक्षिप्य व्याचष्टे—**तदिति**। सर्वोक्त्या प्रकरणं चेति चकारस्य समाख्याग्रहणार्थत्वं सूचितम्। कथमस्याद्वाक्यान्मनुष्यप्रधानकर्माङ्गत्वप्रतीतिरित्याशङ्क्याह—**मनुष्याणामिति**। एवसत्यातिथ्ये निवेशः कस्मान्न भवतीत्याशङ्क्याह—**तदपि चेति**। अन्वाहार्यदानेन यत्स्वसिद्ध्यर्थमादीयते, गृह्यतेऽन्वाहार्यपाकादि, तत्सर्वमन्वाहार्यदानादिशब्देनोक्तम्। अतो यदिह दर्शपूर्णमासयोर्मनुष्याणां कर्म, तत्र निव्यातव्यमिति वाक्यार्थो भवतीत्युपसंहरति—**अत इति**॥ ६॥

भा० प्र०—प्रकरण एवं समाख्या के अनुसार यह अवगत होता है कि निवीत कर्म धर्म; वाक्य के अनुसार मनुष्य धर्म, अवगत हो जायेगा। इसलिए जिस स्थल में मनुष्योद्देश्यक अर्थात् मनुष्य के उद्देश्य से अनुष्ठित जो वैसे कर्म हैं उसमें इसका उत्कर्ष होगा, इस प्रकार की आपत्ति होने पर उसके उत्तर में पूर्वपक्षी का कहना है कि "तत्प्रकरणे यत् तदयुक्तम्" उस दर्शपूर्णमास प्रकरण में ही अन्वाहार्यदानादि सभी मनुष्य के उद्देश्यक कर्म निवीत उसी के अङ्ग होंगे, कारण "अविप्रतिषेधात्" वाक्य एवं प्रकरण दोनों का ही उसमें अविप्रतिषेध अर्थात् अविरोध रहता है—इस प्रकार के स्थल में वाक्य एवं प्रकरण दोनों का ही प्रामाण्य अव्याहत रहता है।

"तत्प्रकरणे" = उस क्रतु के प्रकरण में, "यत्" = जो मनुष्य प्रधान कर्म हैं, "तत्संयुक्तम्" = निवीत संयुक्त अर्थात् उसका अङ्ग होगा, "अविप्रतिषेधात्" = क्योंकि इसमें किसी प्रकार का विप्रतिषेध अर्थात् विरोध नहीं है॥ ६॥

**तत्प्रधाने वा तुल्यवत् प्रसंख्यानादितरस्य तदर्थत्वात् ॥ ७ ॥ सि०**

**शा० भा०—नैतदस्ति, प्रकरणे निवेश इति । मनुष्यप्रधाने कर्मणि निवीतं स्यादातिथ्ये । कुतः ? तुल्यवत्प्रसंख्यानात् । तुल्यानि चैतानि प्रसंख्यायन्ते । यत्तावदुपवीतं देवानामुपव्ययत इति, तत्, प्रकृतयोर्दर्शपूर्णमासयोरुपवीतं विदधाति । यत्, प्राचीनावीतं पितॄणामिति, तत्, पितृप्रधाने कर्मणि प्राचीनावीतं विदधाति । यदप्येतद् निवीतं मनुष्याणामिति, तदप्यातिथ्येनिरपेक्षं विदधाति । कथं गम्यते ? मनुष्यप्रधाने विदधातीति । मनुष्याणामिति षष्ठ्यन्तेन संबन्धात् । मनुष्याणामेव प्राप्नोति, न मनुष्यप्रधाने । उच्यते । मनुष्याणां कल्प्यमाने फलं कल्पनीयम् । मनुष्यप्रधाने पुनः षष्ठी भविष्यति, संबन्धश्चैवमवकल्पिष्यते, फलं चैवं न कल्पनीयम् । तदुक्तं, समेषु वाक्यभेदः स्यादिति । न[1] तु मनुष्यप्रधानेन सहैकवाक्यतां प्राप्तम्, पुनः प्रकृताभ्यां दर्शपूर्णमासाभ्यामेकवाक्यतां यास्यति । न हि द्वौ सम्बन्धावेकस्मिन्वाक्ये विधीयेते । भिद्येत हि तथा वाक्यम् । इतरस्य—मनुष्यग्रहणस्य निवीतसम्बन्धार्थत्वात्तेनैव सहैकवाक्यता भविष्यति प्रत्यक्षेण शब्देन । तदेकवाक्यतया चार्थवत्त्वे सति न प्रकृतेनैकवाक्यताऽवकल्प्यते । तस्मात्प्रकरणं बाधित्वाऽऽतिथ्ये निवेक्ष्यत इति ॥ ७ ॥ पूर्व० ॥**

त० वा०—प्रकरणरहितमनुष्यप्रधानो वा स्यात् । कुतः ?

तुल्यवद्धि प्रसंख्यानं दृश्यतेऽस्मिन्विधित्रये ।
तस्मान्नरप्रधाने स्यात्पितृदेवप्रधानवत् ॥

यथैव 'उपवीतं देवानाम्' 'प्राचीनावीतं पितॄणाम्' इति च परस्परनिरपेक्षदेवपितृप्रधानकर्मण्येष विधिः एवं तद्बुद्ध्यनुवृत्तेर्मनुष्याणामित्यपि तत्प्रधानकर्म प्रत्येष्यामः । **कथं गम्यत** इति—**पृष्टे मनुष्याणामिति षष्ठ्यन्तेन संबन्धात्**—इत्येतावत्युत्तरे दत्ते **मनुष्याणामेव प्राप्नोतीति** पुनश्चोदयति ।

अथवा समस्त एव चैकः प्रश्नः । सत्यमेवं प्राप्नोति । फलकल्पनाप्रसङ्गगौरवात्तु परित्यज्यते । तस्मात्तदीयकर्मव्यतिरेकादेव षष्ठी । तत्संबद्धस्य निवीतस्य नासंबद्धफलकल्पना भविष्यति । मनुष्यग्रहणं च तत्प्रधानकर्मप्रतिपत्त्यर्थमिति नानुपात्तसंबन्धापत्तिः । न च तस्मिन्सति प्रकृतैकवाक्यता घटते ॥७॥

न्या० सु०—पूर्वसूत्रस्थतत्संयुक्तशब्दोक्तमनुष्यप्राधान्यपुनर्वचनस्य प्रकरणविशेषणपरिसंख्यार्थत्वेन तत्प्रधानकर्मनिवेशप्रतिज्ञा व्याख्यार्थं नैतदित्यादि भाष्यं व्याचष्टे—**प्रकरणेति** । हेतुप्रश्नोत्तरत्वेन तुल्यवदिति सूत्रावयवव्याख्यार्थं कुत इत्यादिभाष्यं व्याचष्टे—**कुत इति** । उपव्ययतइत्यनेनैव देवप्रधाने दर्शपूर्णमासाख्ये कर्मण्युपवीतप्राप्तेः

---

१. क० ननु ।

उपवीतं देवानामि'त्यस्य विधित्वायोगात्तुल्यानि चैतानि वाक्यानीति बहुवचनायोगमाशङ्क्य, तुल्यवत्कीर्त्तनादेवोपवीतं देवानामित्येस्यापि देवप्रधानकर्ममात्रे प्राप्त्यै विधित्वोपपत्तिसूचनार्था त्रयोक्तिः। भाष्ये तु दर्शपूर्णमासमात्रेऽपि विध्यभ्युपगमे षष्ठ्यन्तोक्तप्रधानस्य कर्मणः प्रकृतकर्मान्तरान्वयानपेक्षत्वसाम्यात्तुल्यवत्कीर्तनाविरोधोक्त्यै प्रौढिसूचनार्थं दर्शपूर्णमासयोरित्युक्त्वा देवानामिति सामान्यश्रुतौ कथं विशेषावगतिरित्याशङ्क्य—**प्रकृतयोरित्युक्तम्**। तुल्यवत्कीर्तनादेव च मनुष्यशब्दस्य पितृदेवतुल्यसनकादिमनुष्यवाचित्वावगतेर्दर्शपूर्णमासयोश्च पितृप्रधानवद्देवतुल्यमनुष्यप्रधानस्यापि कर्मणोऽभावात्प्रकरणसमाख्यानुग्रहानुपपत्तेरातिथ्ये प्रकरणानपेक्षं विदधातीत्युक्तम्। क्लिष्टोऽपि चायं पक्षो मनुष्यदेवत्ये कर्मणि निवीतस्मृतेः पितृदेवत्ये च प्राचीनावीतस्मृतेर्मूलान्तरादर्शनेन तच्छ्रुतिमूलत्वसिद्ध्युपयोगितया स्मृत्युपबृंहितत्वाद्बलीयस्त्वेनोपन्यस्तः।

श्लोकं व्याचष्टे—**यद्यपीति**। कथमिति भाष्यं शङ्कार्थं, मनुष्याणामित्युत्तरार्थम्। मनुष्याणामेवेति पुनः शङ्कार्थमित्येवं परमतेन तावद्व्याचष्टे—**कथमिति**। मनुष्यश्रुत्या मनुष्याङ्गत्वावगमाच्छ्रुत्यनादरे वा प्रकरणेन दर्शपूर्णमासाङ्गत्वावगमादुभयादरे वा प्रकरणस्थमनुष्यप्रधानकर्माङ्गत्वावगमान्नातिथ्ये विधिर्युक्त इत्येतच्छङ्कोत्तरत्वेनेतरस्येति सूत्रावयवव्याख्यार्थत्वेन 'कथमिति शङ्कायामनुष्याणामित्युत्तरानुपपत्तेरेतद्व्याख्यानापरितोषात्स्वमतेन कथमित्यादि नमनुष्यप्रधानइत्यन्तं भाष्यमेकग्रन्थत्वेन व्याचष्टे—**समस्त एव चेति**। एतच्छङ्कोत्तरत्वेनेतरस्येति सूत्रावयवस्य फलकल्पनापत्तेर्मनुष्यग्रहणस्वार्थान्वयायोगेन मनुष्यप्रधानकर्मप्रतिपत्त्यर्थत्वान्न मनुष्याङ्गनिव्यानम्। मनुष्यशब्दस्य चालौकिकसनकादिमनुष्यवाचित्वेन तत्तत्प्रधानस्य कर्मणो लौकिकत्वायोगादलौकिकस्य च पितृयज्ञादिवदपूर्वैकान्तिकत्वेनापूर्वान्वयसिद्ध्यै दर्शपूर्णमासस्थमनुष्यप्रधानकर्माङ्गतेत्येवं व्याख्यार्थमुच्यत इत्यादि भाष्यं व्याचष्टे—**सत्यमिति**। 'निवीतसम्बन्धार्थत्वादिति भाष्ये निवीतेन सम्बन्धो यस्य तत्प्रधानस्य कर्मणस्तन्निवीतसम्बन्धमिति बहुव्रीहिणा तदर्थत्वादिति। तच्छब्दपरामृष्टं तत्प्रधानकर्मोक्तम्। प्रतिपाद्यत्वेनैव च कर्मणः शब्दप्रयोजनत्वात्तत्प्रधानप्रतिपत्तिप्रयोजनतोक्तेतिसूचयितुं—**तत्प्रधानेत्युक्तम्**। नचेत्यनेन तदुक्तमित्यादिवाक्यशेषो मनुष्यप्रधानकर्माङ्गत्वे सत्यलौकिकसनकादिमनुष्यप्रधानस्य कर्मणो पूर्वैकान्तिकत्वेनानपेक्षितप्रकृतकर्मैकवाक्यत्वकल्पने प्रकरणस्याव्यापाराद्वाक्येनैव निवीतस्य मनुष्यार्थकर्मान्वयकरणान् तस्य च दर्शपूर्णमासान्वयकरणाद्वा वाक्यभेदापत्तेः 'समेषु वाक्यभेदः स्यादी(२-१-१५)ति क्लृप्त्यीधिकरणन्यायेन विभज्यमानसाकाङ्क्षत्वाभावाद्भिन्नवाक्यत्वमुक्तमिति, भिद्येत हि तथा वाक्यमित्यन्तेनोक्त्वा, तदेवेतरस्येति सूत्रावयवयोजनपूर्वं विवरीतुं मनुष्यशब्दस्यालौकिकमनुष्यवाचित्वसूचनार्थत्वमितरशब्दस्याभिप्रेत्यालौकिकार्थस्य मनुष्यग्रहणस्य तत्प्रधानकर्मप्रतिपत्त्यर्थत्वात् नैवातिथ्याख्यकर्मप्रतिपत्त्यर्थेन प्रत्यक्षेण मनुष्यशब्देन निवीतशब्दस्यैकवाक्यत्वावगतेस्तन्मात्रेण चापूर्वैकान्तिककर्मान्वयान्निव्यानस्यानर्थक्यपरिहारसिद्धेर्न प्रकृतैकवाक्यता युक्तेतीतरस्येत्यादिनोक्तमित्येवं व्याख्यातः। तदुक्तमिति तच्छब्दस्य सप्तम्यर्थान्वयत्वसूचनार्थं—**तस्मिन् सतीत्युक्तम्**॥ ७॥

भा० प्र०—पूर्व सूत्र में किसी वादी का कहना है कि निवीत क्रतुमध्यगत मनुष्य प्रधान कर्म का अङ्ग है। यह अर्थ मानने पर "मनुष्याणां" इस पद में लक्षणा कर मनुष्य प्रधान कर्म यह अर्थ करना होगा। किन्तु मुख्य अर्थ के सम्भव होने पर लक्षणा करना उचित नहीं है। इसलिए अन्य वादी का कहना है कि "तत्प्रबोध वा" = यह जो निवीत विधि है, यह बहिःक्रतु मनुष्य प्रधान आतिथ्य आदि स्वतन्त्र कर्म का ही अङ्ग है, किन्तु क्रतुमध्यगत मनुष्य प्रधान कर्म का अङ्ग नहीं है, कारण, "तुल्यवत् प्रसंख्यानात्"—इस स्थल में "उपवीतं देवानाम्" इस वाक्य में दर्शपूर्णमास आदि देव कर्म के अङ्ग रूप में जैसे उपवीत विहित है, एवं "प्राचीनावीतं पितृणाम्" इस वाक्य में दर्शपूर्णमास प्रकरण का बहिर्भूत पिण्डपितृयज्ञादि पित्र्य कर्म में जैसे प्राचीनावीतं विहित होता है "निवीतं मनुष्याणां" इस वाक्य में भी ठीक उसी भाव में अप्रकरण में स्वतन्त्र भाव से ही निवीत उपदिष्ट होता है। और भी इस स्थल में "मनुष्याणां" इस षष्ठी विभक्ति युक्त पद की सम्बन्धबोधक षष्ठी विभक्ति के रहने पर भी यह इतरनिरपेक्ष मनुष्य प्रधान कर्म का अङ्ग है—यह बोधित होता है। इसीलिए सूत्र में कहा गया है कि "तस्य तदर्थत्वात्" यह जो विधि है उसमें सन्देह करने का कोई हेतु नहीं है।

"तत्प्रधाने वा" तत्प्रधान अर्थात् मनुष्य प्रधान कर्म में ही निवीत होगा, "तुल्यवत् प्रसंख्यानात्" = क्योंकि तीन विधियों का ही तुल्यवत् अर्थात् समभाव में प्राधान्य उल्लेख है "इतरस्य तदर्थत्वात्" = क्योंकि "मनुष्याणां" इस षष्ठी विभक्ति युक्त पद प्रधानता अर्थ की अवगति कराता है। पूर्वपक्ष समाप्त ॥ ७ ॥

## अर्थवादो वा प्रकरणात् ॥ ८ ॥

**शा० भा०—नैतदस्ति, विधिः स च मनुष्यप्रधाने कर्मणीति। मनुष्याणामिति मनुष्यसम्बन्धोऽत्र श्रूयते, न मनुष्यप्रधानेन कर्मणा सम्बन्धः। मनुष्यप्राधान्ये च सति फलं कल्पनीयम्। आतिथ्यकर्मणा त्वनिर्दिष्टेनाप्राकृतेनानुमेयेन संबध्येत। तत्र को दोषः? प्रकरणादुत्कृष्येत सम्भवंस्तत्र। कथं संभव इति चेत्? अर्थवाद एषः। स[1] प्रकृतं स्तुवन्प्रकरणे संभविष्यति, विधिः सन्नुत्कृष्येत। तस्मान्न विधिर्मनुष्यप्रधाने कर्मणीति ॥ ८ ॥ सि० ॥**

त० वा०—सर्वथा नात्रैकोऽपि पक्षो निर्दोषः। प्रकरणसंबन्धे वाक्यसंबन्धबाधादन्वाहार्यादिसंबन्धे वाक्यभेदात्प्रकरणस्य च विशेषकत्वानुपपत्तेरातिथ्यादिसंबन्धोऽत्यन्तनिर्मूल एव।

षड्भिरपि श्रुत्यादिभिरसंस्पर्शान्मनुष्यसंबन्धेन तदनुमीयते। तच्च न युक्तम्। तस्या अपि षष्ठ्या विनीतपदसंबन्धिव्यतिरेकज्जनितत्वप्रतीतेः। न

---

१. क० प्रसङ्गात्।

ह्यनुपत्तिसंबन्धिव्यतिरेकैर्विभक्तय उत्पद्यन्ते। तस्मान्मनुष्यार्थतैव प्राप्नोति। तत्रापि च प्रकरणसमाख्याबाधफलकल्पनाप्रसङ्गः[1]। सति च मत्यन्तरे, न युक्तं तदाश्रयणम्। अस्ति चौदुम्बराधिकरणसिद्धमर्थवादत्वं गतिः ॥ ८ ॥

न्या० सु०—औदुम्बराधिकरणसिद्धान्तोपसंहारार्थत्वेनास्य सूत्रस्य विधित्वशङ्का-निरासार्थत्वाद्विधित्वायोगसिद्धान्तोक्त्यर्थत्वेन वाशब्दव्याख्यार्थं नवेत्यादिभाष्यं 'प्रकरणा-दुष्कृष्येत सम्भवंस्तत्रे'ति प्रकरणबाधापत्त्याख्यहेतूक्त्यर्थत्वेन प्रकरणोक्तिव्याख्याभाष्या-लोचनयाऽतिथ्याङ्गत्वमात्रनिरासार्थतया भासमानं प्रकरणानुग्रहार्थातिथ्याङ्गत्वे निरस्ते, दर्शपूर्णमासान्वाहार्याङ्गत्वपक्षयोर्निरस्तयोरपि प्रकरणबलेनोज्जीवनापत्तेः सर्वप्रकारविधित्व-निरासायोगादयुक्तमाशङ्क्य, मनुष्यप्रधाननेनान्वाहार्येण दर्शपूर्णमासाख्यकर्मयुक्तेन सम्बन्धा-श्रुतेस्तदङ्गत्वे निव्यानस्य मनुष्यप्रधानकर्मन्वयकल्पनात्, मनुष्यप्रधानस्य च कर्मणो दर्शपूर्णमासान्वयकल्पनाद्वाक्यभेदापत्तेर्दर्शपूर्णमासाख्येन वा कर्मणा सम्बन्धाश्रुतेः, तदङ्गत्वे-मनुष्यश्रुतिबाधापत्तेर्मनुष्याङ्गत्वे च फलकल्पनापत्तेः प्रागेवोक्तत्वात्, आतिथ्याङ्गत्वे तु निव्यानस्मृतेरेतच्छ्रुतिमूलत्वसिद्ध्यै कर्मव्यतिरेकजनितषष्ठीकल्पनेन तदन्वयकल्पनसम्भाव-नायामपि निष्कारणप्रकरणोत्कर्षापत्तेर्विधिरयं स च मनुष्ये तत्प्रधाने वा तिथ्याख्येऽन्वा-हार्याख्ये वा कर्माणि दर्शपूर्णमासाख्ये कर्मणीति यदुक्तं, तत्रास्तीति यथार्थयोगविभागेन सर्वपक्षनिरासार्थतया व्याख्यातुमाह—सर्वथेति। अनुपात्ताः सम्बन्धिनो येषां सम्बन्धा-ख्यानां व्यतिरेकाणां तैरनुपात्तसम्बन्धिभिर्व्यतिरेकैरिति विग्रहः। सम्भवन्निति भाष्योक्त-विशेषणफलोक्त्यै—सति चेतित्युक्तम्। प्रकरणसम्भवोपपादनार्थवादोक्तिव्याख्यार्थं कथ-मित्यादिभाष्यं व्याचष्टे—अस्ति चेति। विधित्वशङ्कानिरासेन दृढीकरणं सिद्धोक्त्या विवक्षितम् ॥ ८ ॥

भा० प्र०—निवीत वाक्य को लेकर जितने पूर्वपक्ष हैं उनमें कोई भी निर्दोष नहीं है, कारण प्रकरण के अनुसार क्रत्वर्थ कहने पर वाक्य की विनियोजकता बाधित होती है, वाक्य एवं प्रकरण के अनुसार क्रतुमध्यगत मनुष्योद्देश्यक कर्म का अङ्ग कहने पर वाक्य भेद होता है, यह जो बहिःक्रतु आतिथ्य आदि है वह कर्म का अङ्ग होगा—यह कहना सङ्गत नहीं है, कारण, इस पक्ष में श्रुति एवं लिङ्ग किसी की भी प्रमाण के प्रति विनियोजकता नहीं है, इन कारणों से—यह विधि नहीं अपितु अर्थवाद है।

"अर्थवादः" = निवीत वाक्य अर्थवाद है, "वा" पूर्वपक्ष के निरास के लिए है "प्रक-रणात्" = क्योंकि, ऐसा होने पर प्रकरण की मर्यादा रक्षित होती है। सिद्धान्त ॥ ८ ॥

## विधिना चैकवाक्यत्वात् ॥ ९ ॥

**शा० भा०—इतश्च न विधिः। कुतः? विधिनैकवाक्यत्वात्। 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इत्येष विधिः। अनेनास्य सहैकवाक्यता भवति। यदी-**

1. क० प्रसङ्गात्।

तरोऽपि विधिः स्यात्, तद्वाक्यं भिद्येत। न हि विधेर्विधेश्चैकवाक्यता भवति, वचनव्यक्तिभेदात्। तत्रैकवाक्यतारूपं बाध्येत। किमेकवाक्यतारूपम्। निवीतं मनुष्याणामिति प्राप्तानुवादः। प्राप्तस्य किमर्थेन पुनर्वचनम्? उपवीतस्तुत्यर्थेन। कथमुपवीतस्तुतिः? निवीतमयोग्यं देवकर्मणि दर्शपूर्णमाससंज्ञके। मनुष्याणां हि तत्। तथा प्राचीनावीतं पितॄणाम्, न देवकर्मणि। उपवीतं तु तत्र योग्यम्। तस्मादुपव्यातव्यमिति। यथा यादृशोऽस्य वेषः, तादृशो नटानाम्, यादृशो देवदत्तस्य, तादृशो ब्राह्मणानामिति देवदत्तवेषप्रशंसार्थमितरवेषसंकीर्तनम्। एवमिहाप्युपव्यानस्तुत्यर्थेन निवीतसंकीर्तनम्। नास्त्यत्र विधायकः शब्दो–निवीते मनुष्याणां कर्तव्यमिति।

आतिथ्यप्रयोगवचनं तस्य कर्तव्यताविधायकमिति चेत्? नैतदेवम्। स्तुत्यर्थेनाऽर्थवत्त्वे सति न शक्यं कल्पयितुम्। परोक्षं हि तदानर्थक्य परिजिहीर्षया कल्प्येत्। परिहृते त्वानर्थक्ये इह पुनर्न किंचित्कल्पनीयम्। तस्मादर्थवादः। एवं च वाक्येनाविरुद्धं प्रकरणमर्थवद्भवति ॥ ९ ॥ युक्तिः ॥

इति प्रथमं निवीताधिकरणम् ॥ १ ॥

त० वा०—'उपव्ययते' इत्यनेन च विधिनैकवाक्यत्वं निवीतप्राचीनावीतयोर्दृश्यते। तच्चानुवादद्वारेण स्तुतौ सत्यामवकल्पते, न विधौ। न ह्यङ्गाङ्गित्वरहितयोरुभयोः स्वतन्त्रयोः परस्परासंबद्धयोर्विधीयमानयोरेकवाक्यता भवति, वचनव्यक्तिभेदात्। अन्या हि प्रधानविधेस्तावन्मात्रोपसंहारिणी वचनव्यक्तिः अन्या च स्तुतेः पराङ्गभावानुगतरूपा। न चात्र विधायको दृश्यते। स यदि वाऽध्याहर्तव्यः, अथवाऽऽतिथ्यादिगतस्याप्यङ्गत्वाय परिकल्प्येत। न च तत्कल्पनं युक्तम्, अविहितस्यानङ्गत्वात्, अनङ्गस्य च प्रयोगवचनेनाऽग्रहणात्। वक्ष्यति हि न चाविहितमङ्गं भवतीति। तत्राङ्गत्वाद्विधिः, विधेश्चाङ्गत्वं कल्प्यत इतीतरेतराश्रयत्वं प्राप्नोतीति। प्रत्यक्षेण च विधिना यथाकथंचिदेकवाक्यतायां संभवन्त्यां, न परोक्षैकवाक्यता युक्ता। तथा सति चानेकादृष्टकल्पना स्यात्। तस्मादौचित्येन स्तुतिः। यथा निवीतप्राचीनावीते मनुष्याणां पितॄणां च प्रशस्ते, तथोपवीतं देवानामिति। लोकेऽपि चैवं दृश्यते—यथा वशिष्ठस्यारुन्धती यथा शशाङ्कस्य रोहिणी, यथा नलस्य दमयन्ती, तथा देवदत्तस्य यज्ञदत्तेति। विपर्ययेण वा स्तुतिरिति। तयोः पितृमनुष्यविषयत्वेन देवान्प्रत्ययोग्यत्वादुपवीतमेव देवानां प्रशस्तम्। अतश्च देवकर्माणि दर्शपूर्णमासाख्ये तदेव कर्तव्यमिति ॥ ९ ॥

(इति प्रथमं निवीताधिकरणम् ॥ १ ॥)

न्या० सु०—न केवलं सर्वविधिप्रकारायोगान्नविधिः, किंतु विध्येकवाक्यत्वादपीत्येवं सूत्रव्याख्यार्थमितश्चेत्यादिभाष्यं व्याचष्टे—उपव्ययत इति। प्राचीनावीतविधिव्यवधानादुपवीतविध्येकवाक्यत्वायोगमाशङ्क्य, प्राचीनावीतकीर्तनस्यापि विधित्वनिराससूचनार्था

प्राचीनावीतोक्तिः। यदीतिभाष्यं विध्येकवाक्यत्वस्य विधित्वनिरासहेतुत्वोपपादनार्थत्वेन व्याचष्टे—**न हीति**। द्वयोः स्वातन्त्र्येण विधीयमानयोरङ्गाङ्गित्वराहित्येनऽन्योन्यानन्वयान्नैकवाक्यतेत्यर्थः। एकवाक्यत्वयोगोपपादनार्थं वचनेति भाष्यं पाठपूर्वमुपपादयति—**वचनेति**। भात्यस्थभेदोक्तिव्याख्यानायऽन्यतोक्ता किमपेक्षयेत्यपक्षाया—**मन्या चेत्युक्तम्**। नास्त्यत्र विधायक इत्यादि न किंचित्कल्पनीयमित्यन्ते भाष्यं प्राप्तानुवादत्वाख्यैकवाक्यतारूपोपादनार्थत्वेनापकृष्य व्याख्येयमिति सूचयितुं प्रश्नपूर्वमनुवादप्रयोजनोक्त्यर्थं प्राप्तस्य किमर्थेनेत्याविभाष्यमव्याख्यायैव व्याचष्टे—**न चेति**। ब्रह्मयज्ञाङ्गभूतमनुष्यतर्पणग्रहणायाऽदिशब्दः। एतच्चातिथ्यप्रयोगवचनमिति भाष्योक्तायाः शङ्कायाः स्वयं निरासायोक्तम्। आतिथ्यानङ्गस्यातिथ्यप्रयोगविध्यग्रहणमङ्गं सत्प्रयोगवचनेन गृह्येत, न चाविहितमङ्गं भवतीति कर्त्रर्थधिकरणभाष्येण द्वितीयप्रतीकोदाहृतेन द्रढयितुमाह—**वक्ष्यति हीति**। प्रयोगविधिविहितत्वादेवाङ्गत्वं भविष्यतीत्याशङ्क्याह—**तत्रेति**। अनङ्गस्य प्रयोगविध्यग्रहणे सत्यङ्गत्वात्प्रयोगविधिना विधिः प्रयोगविधिना चाङ्गतेत्यर्थः।

नैतदेवमितिभाष्योक्तं शङ्कानिरासं व्याख्यातुं प्रत्यक्षोपवीतविध्येकवाक्यत्वसम्भवे परोक्षातिथ्यप्रयोगविध्येकवाक्यत्वयोगादपि नातिथ्यगतस्य विधायकस्य निवीतसम्बन्धित्वकल्पनं युक्तमित्याह—**प्रत्यक्षेण चेति**। इह पुनरिति भाष्यं व्यतिरेकमुखेनानेकेषामन्योन्याकाङ्क्षासन्निधियोग्यत्वानामदृष्टानां कल्पनापत्त्या परोक्षैकवाक्यत्वायोगोपपादनसूचनार्थत्वेन व्याख्यातुमाह—**तथा सति चेति**। हि शब्दार्थे चशब्दः।

तस्मादित्यधिकरणार्थोपसंहारभाष्यं स्वाभिमतं श्रुतिप्रकारं दर्शयन् व्याचष्टे—**तस्मादिति**। निवीतमयोग्यमित्यव्याख्यातभाष्योक्तं स्तुतिप्रकारं व्याचष्टे—**विपर्ययेण वेति**। यज्ञोपवीत्येवाधीयीताध्यापयेद्यजेत् याजयेद्वेति कठशाखाविहितस्य नवतन्तुकत्रिवृद्ग्रन्थिकस्य यज्ञोपवीतस्य प्राचीनावीतनिवीतत्वाख्ययोर्विन्यासविशेषयोः स्मृतिप्राप्तं पितृमनुष्यप्रधानकर्मविषयत्वयज्ञोपवीतविन्यासस्य विधेयोपवीतवद्वासोविन्यासत्वाभावेऽपि विन्यासत्वसाम्यात् श्रुत्यालम्बनवसोविन्यासविशेषलक्षणस्योपवीतस्य देवप्रधानकर्ममात्राङ्गत्वापादकमुपवीतं देवानामित्यस्य विधित्वं निराकर्त्तुं स्तुतिप्रकारोक्त्यर्थमुपवीतं तत्र योग्यमिति भाष्यमिति सूचनार्थं दर्शपूर्णमासाख्यविशेषणम्।

चिन्ताप्रयोजनं विधित्वे वासोविन्यासविशेषलक्षणं निवीतमातिथ्ये कार्यम्, अर्थवादत्वे न कार्यम् ॥ ९ ॥

भा० प्र०—निवीत वाक्य के अर्थवाद होने का अन्य कारण भी है "विधिना च एकवाक्यत्वात्" इस स्थल में "उपव्ययते" यही अंश विधि है, इसके द्वारा उपवीत का का ही विधान किया जाता है और "निवीतम्" इत्यादि अंश इसके साथ ही एकवाक्यता प्राप्त कर इसकी स्तुति का प्रकाश करता है। क्योंकि, निवीत मनुष्यों के लिए है, इसलिए, वह देवकर्म में अयोग्य होने से देवकर्म में उपवीत होना पड़ता है—यही उक्त विधि

का तात्पर्य है। दूसरी बात यह है कि इस स्थल में निवीत का विधायक कोई भी शब्द नहीं है जिसके प्रभाव से वह विधेय हो सकता है। अतः, निवीत अर्थवाद है।

"विधिना = विधि के साथ अर्थात् उपवीत विधि के साथ "एकवाक्यत्वात् च" = एकवाक्यता होने से भी यह अर्थवाद है। प्रथम निवीताधिकरण।

**भाष्यकार के द्वारा उपेक्षित छः सूत्र**

"उपवीतम्" इत्यादि छः सूत्रों की व्याख्या भाष्य में नहीं है, किन्तु, वृत्तिकार एवं वार्तिककार ने इसकी व्याख्या की है, पूज्यपाद पार्थसारथि मिश्र आदि निबन्धकार ने भी 'शास्त्रदीपिका' आदि ग्रन्थों में इनकी व्याख्या की है और अधिकरण की रचना की है।

पूर्व अधिकरण में "उपव्ययते" इस अंश को दर्शपूर्णमास के अङ्गरूप में विधि कहा गया है, उसमें यह सन्देह है कि वह केवल दर्शपूर्णमास का ही अङ्ग है या सभी कर्मों का अङ्ग है? इसमें पूर्वपक्षी का कहना है कि "उपवीतं सर्वधर्मः स्यात्" उपवीत सभी कर्मों का धर्म अर्थात् अङ्ग है, क्योंकि, "लिङ्गदर्शनात्" वैसा लिङ्ग-दृष्ट होता है। "यज्ञोपवीती हि देवेभ्यो दोहयति" अर्थात् यज्ञोपवीती होकर देवों के लिए दोहन किया जाता है, यह वाक्य उसका लिङ्ग अर्थात् ज्ञापक है—उपवीत सभी देवकर्मों में आवश्यक है, यह वाक्य स्वतः सिद्ध के समान मानकर उल्लेख करने से अन्य विषय का विधायक है।

"उपवीतं सर्वधर्मः स्यात्" = उपवीत सभी धर्म अर्थात् सभी कर्मों का अङ्ग होगा, "लिङ्गदर्शनात्" = क्योंकि वैसा लिङ्ग = ज्ञापक दृष्ट होता है। पूर्व पक्ष।

पूर्वपक्षी ने जो यह कहा है कि उपवीत सर्वधर्म है—यह कहना सङ्गत नहीं है, अपितु प्रकरण के अनुसार वह दर्शपूर्णमास का ही अङ्ग है। यदि यह कहा जाय कि पूर्वोक्त लिङ्ग की उपपत्ति कैसे होगी? इस प्रसङ्ग में यह कहना है कि अन्य प्रकार से भी इसकी उपपत्ति हो सकती है, कारण, लिङ्ग के रूप में जो यह वाक्य उदाहृत है, वह मृताग्निहोत्र के प्रकरण में कहा गया है, मृत व्यक्ति के मृत्यु के दिन उसका अग्निहोत्र अन्य सम्पादन करता है, उस दिन के उस स्थल में अग्निहोत्र के लिए जो गोदोहन किया जाता है, उसको प्राचीनावीती होकर करना पड़ता है, इस प्राचीनावीति के विधान करने के लिए ही "प्राचीनावीती दोहयेत्। यज्ञोपवीती हि देवेभ्यः" अर्थात् प्राचीनावीति होकर दोहन करे क्योंकि, 'यज्ञोपवीती होकर देवों के लिए दोहन किया जाता है' यह कह कर उसकी स्तुति के रूप में यज्ञोपवीतित्व का अनुवाद किया जाता है। इस अर्थवाद का यह अभिप्राय है कि यज्ञोपवीतित्व देवयुक्त कर्म का धर्म है अतः पित्र्य अग्निहोत्र में यह कर्म अनुष्ठेय नहीं है।

इस प्रसङ्ग में यह जो यज्ञोपवीत का विषय आलोचित होता है, वह नवतन्तुयुक्त त्रिसूत्रनिर्मित ब्रह्मग्रन्थिविशिष्ट त्रिवृत् ब्रह्मसूत्र नहीं है, कारण, इस सम्बन्ध में यह विचार यहाँ उपयोगी नहीं है, अपितु यह उत्तरीय वस्त्र का विन्यास विशेष है। बता

स्कन्ध के ऊपर माला के आकार में दक्षिण हस्त उठाकर जो उत्तरीय वस्त्र है परिधान किया जाता है—वही यह यज्ञोपवीत है। निवीत एवं प्राचीनावीत भी इस उत्तरीय वस्त्र विषयक समझना चाहिए, गले में माला के समान धारण करने से निवीत होता है और उपवीत को विपरीत भाव में धारण करना अर्थात् दक्षिण स्कन्ध पर उत्तरीय धारण करने पर प्राचीनावीत होता है।

"न" = नहीं अर्थात् उपवीत सर्वधर्म नहीं है, "वा" = पूर्वपक्ष के निरास के लिए है, "प्रकरणात्" = प्रकरण के अनुसार, "तस्य दर्शनम्" = यह जो लिङ्ग दर्शन है उसका अर्थात् दर्शपूर्णमास के कर्म का। सिद्धान्त।

प्रथम उपवीत का दर्शपूर्णमासाङ्गताधिकरण।

पूर्व में "उपव्ययते देवलक्ष्ममेव तत् कुरुते" यह वाक्य उदाहृत है, यह विधि है या अर्थवाद—यह संशय है। इस संशय में पूर्वपक्षी इसको अर्थवाद मानते हैं, कारण, "नित्योदकी नित्ययज्ञोपवीती" इस स्मृतिवचन के अनुसार उपवीतित्व पूर्व से ही प्राप्त होने से क्रतु में पुनः उपवीत की विधि प्राप्त नहीं हो सकती है। इसके समाधान में सिद्धान्ती का कहना है कि "विधिर्वा स्यात्" यह क्रत्वर्थ विधि होगी अर्थात् इस वाक्य में यज्ञ के अङ्ग के रूप में उपवीत का विधान किया गया है, कारण, "अपूर्वत्वात्" यह क्रत्वर्थ के रूप में अर्थात् यज्ञ के अङ्ग के रूप में प्राप्त नहीं था। उक्त स्मृतिवाक्य में यह पुरुषार्थ रूप में ही विहित है। जो पुरुषार्थ है वह क्रत्वर्थ होगा—यह विना वचन के निर्णीत नहीं हो सकता है, इसलिए, यह विधि है।

इस स्थल में यह द्रष्टव्य है कि अर्थ के अनुरोध से यह अधिकरण पूर्व अधिकरण का पूर्ववर्ती होगा। कारण, यज्ञोपवीतित्व का विहितत्व सिद्ध न होने पर वह सर्वकर्म धर्म है या दर्शपूर्णमास धर्म है—यह विचार सङ्गत नहीं है। इसलिए वार्तिकार ने कहा है "इदम् अर्थतः अधिकरणम् पूर्वं द्रष्टव्यम्" अर्थात् अर्थ के अनुसार यह अधिकरण पूर्ववर्ती समझना चाहिए।

"विधिः स्यात्" = उपवीत वाक्य विधि होगा, "वा" = पक्षपरिवर्तन का सूचक है, "अपूर्वत्वात्" = क्योंकि, यह क्रत्वर्थरूप में पूर्व से प्राप्त नहीं था।

द्वितीय उपवीतविधित्वाधिकरण।

श्रुति में प्रेताग्निहोत्र प्रकरण में कहा गया है कि—"ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् स्तृणीयात्" अर्थात् जो दर्भसमूह = कुशसमूह पूर्व में उत्तराग्रभाग में थे उनको दक्षिणाग्र में करके बिछाये। इस वाक्य का "ये पुरा उदञ्चः" अर्थात् जो दर्भसमूह उत्तराग्र में था—वह विधि है या अनुवाद है—यह संशय है। इस प्रसङ्ग में पूर्वपक्षी का कहना है कि "उदक्तूं च" उदक्तृ अर्थात् उत्तराग्रता वाक्य भी

विधि है। इस स्थल में 'च' शब्द के द्वारा पूर्वसूत्र से "विधिः" इस अंश की अनुवृत्ति है। उदक्तृ विधि है, इसका कारण सूचित करते हुए कहा है, "अपूर्वत्वात्" पूर्व से जिसकी प्राप्ति रहती है, वह अनुवाद रहता है। किन्तु मृत्यु के पूर्व में जो दर्भों को उत्तराग्र करना होगा, यह पूर्व से अप्राप्त होने से अनुवाद नहीं अपितु विधि है।

"उदक्तृं च" = उदक्तृ अर्थात् उदक् शब्द घटित वाक्य भी विधि है, "अपूर्वत्वात्" = क्योंकि, वह अपूर्व हैं अर्थात् पूर्व से प्राप्त नहीं है। पूर्वपक्ष।

पूर्वपक्षी ने कहा है "ये पुरा उदञ्चः" यह उदगग्रत्व की विधि है—यह सङ्गत नहीं है, किन्तु यह "सतो वा लिङ्गदर्शनम्" आचार प्राप्त उदक्तृ का लिङ्ग अर्थात् द्योतकमात्र है, यह विधि नही है, कारण, "ये पुरा उदञ्चः" इस स्थल में 'यद्' शब्द का प्रयोग रहने से वह विधि नहीं हो सकती है यह पूर्व में मन्त्र के अविधायकत्व अधिकरण में (मी० द० २।१।३०–३१) में प्रतिपादित है। "अग्रवन्ति उदग्राणि" इस स्मृतिवचन में उदक्तृ की = उदग्रत्व की प्राप्ति है, अतः यह अनुवाद है। यह भी नहीं कहा जा सकता है। श्रुतिवाक्य ही इस स्मृतिवचन का मूल है, कारण, इस स्मृतिवचन से अवगत होता है कि उदगग्रत्व सभी दैविककर्मों में कर्तव्य है, किन्तु "ये पुरा उदञ्चः" इस वाक्य में केवल अग्निहोत्र में ही उदक्तृत्व की विधि कही गई है, अतएव उदक्तृत्व विधि नहीं है अपितु विधेय दक्षिणाग्रत्व की प्रशंसा के लिए ही यह अनुवाद है।

"सतः" = विद्यमान का अर्थात् आचार प्राप्त उदग्रत्व का, "वा" = पूर्वपक्षनिरासार्थक है, "लिङ्गदर्शनम्" लिङ्गदर्शन अर्थात् ज्ञापक या द्योतकमात्र है। सिद्धान्त।

प्रेताग्निहोत्र प्रकरण में श्रुति कहा गया है "अधस्तात् समिधं धारयन्ननुद्रवेत्। उपरि हि देवेभ्यः" अर्थात् प्रेत की अग्निहोत्रीय हविः होम करने के समय स्रुक्दण्ड हाथ में धारण कर मन्त्र पाठ करने के समय उस स्रुक्दण्ड के नीचे में समिध् धारण, करें, किन्तु दैवहोम के समय में अर्थात् जीवित व्यक्ति के अग्निहोत्र होम के समय में समिध् नीच में न धारण कर ऊपर में धारण करेंगे। इस स्थल में जीवित व्यक्ति के अग्निहोत्र में जो समिध् धारण करने का विषय दृष्ट होता है—यह विधि है या अनुवाद है—यह संशय है। इसमें पूर्वपक्षी का कहना है कि यह अनुवाद है, कारण—

"सर्वमभ्यर्हितं द्रव्यं प्रच्छादनमपेक्षते"।

अर्थात् सभी अच्छी वस्तु का ही आच्छादन करना चाहिए, लौकिक अनुसार से आच्छादन पूर्व से ही प्राप्त है, अतः, यह पूर्व से प्राप्त होने से विधि नहीं हो सकता है अपितु अनुवाद है।

इसके समाधान में सिद्धान्ती का कहना है "विधिस्तु धारणे" इस स्थल में समिध् धारण विधि है, अनुवाद नहीं है, कारण, "अपूर्वत्वात्" कारण, यह अपूर्व है, पूर्व से

प्राप्त नहीं है। क्योंकि, अभ्यर्हित द्रव्य आच्छादन योग्य होने पर भी उसमें समिध् आच्छादन देना होगा, वह किसी वचन के द्वारा पूर्व में विहित नहीं है, अथवा किसी प्रमाण की सहायता से अवगत नहीं होता है, दूसरी बात यह है कि हाथ आदि के द्वारा भी आच्छादन दिया जा सकता है, अतः हस्त आदि ही आच्छादन के योग्य है, समिध् आच्छादन के योग्य नहीं है। इसलिए, आचार के द्वारा भी उसकी प्राप्ति नहीं हो सकती है, अतएव "उपरमे समिध् धारण" यह विधि है।

"धारणे तु विधिः" = धारण में अर्थात् समिध् के धारण में विधि है, "अपूर्व-त्वात्" = क्योंकि, वह अर्थात् समिध्-धारण अपूर्व अर्थात् पूर्व से अप्राप्त है। चतुर्थ समिध्-धारण का विधित्वाधिकरण ॥ ९ ॥

## [२] दिग्विभागश्च तद्वत्संबन्धस्यार्थहेतुत्वात् ॥१०॥ सि०

शा० भा०—ज्योतिष्टोमं प्रकृत्य श्रूयते, 'प्राचीं देवा अभजन्त दक्षिणां पितरः, प्रतीचीं मनुष्या, उदीचीमसुरा' इति। अपरेषाम्, उदीचीं रुद्रा इति। तत्र सन्देहः किं विधिः, उतार्थवादः। विधिः सन् किं मनुष्यधर्म उत कर्मधर्मः। अथ वा प्रकरणे मनुष्यप्रधाने कर्मणि निवेशः, किं वाऽऽतिथ्य इति। किं तावत्प्राप्तम्? दिग्विभागश्च तद्वत्, सम्बन्धस्यार्थहेतुत्वात्। य एष दिग्विभागः, स निवीतवद्विचार्यः। यो निवीते पूर्वपक्षः, स इह पूर्वपक्षो, यो मध्यमः, स मध्यमः, य सिद्धान्तः, स सिद्धान्तः। अर्थवत्त्वाद्विधिर्मनुष्य-सम्बन्धान्मनुष्यधर्म इति पूर्वपक्षः। प्रत्यङ्मुखा उदङ्मुखा वा पृष्ठत आदित्यं प्राक्षु पदार्थाननुतिष्ठन्ति मनुष्या इत्यनुवादः। विधिरेव प्रकरणानुग्रहाच्च ज्योतिष्टोमधर्मः। वाक्यप्रकरणानुग्रहाय ज्योतिष्टोमे मनुष्यप्रधाने दक्षिणा-व्यापारे निवेश इत्यपरः पक्षः। भिन्नत्वाद्वाक्यानामातिथ्ये निवेश, इत्यपरं मतम्। अर्थवादोऽयं प्रकरणानुग्रहाय। (प्राचीनवंशं करोति इत्यनेन विधि-नैकवाक्यत्वस्य प्रत्यक्षसिद्धत्वादिति सिद्धान्तः ॥ १० ॥

दिग्विभागस्याऽनुवादताधिकरणम् ॥ २ ॥

## [३] परुषि दित-पूर्ण-घृत-विदग्धं च तद्वत् ॥ ११ ॥ सि०

शा० भा०—दर्शपूर्णमासयोराम्नातं यत्परुषि = दितं, तद्देवानां, यदन्तरा तन्मनुष्याणां, यत्समूलं तत्पितृणाम्' इति। तथा 'यो विदग्धः स नैर्ऋतः। योऽश्रृतः, स रौद्रः, यः श्रृतः, स देवत्यः[२]। तस्मादविदहता श्रपयितव्यं सदेवत्वाय' इति। ज्योतिष्टोमे श्रूयते 'यत्पूर्णं तन्मनुष्याणाम् उपर्यधो

---

१. ब० अनुवादः।　　　२. क० सदैवत्यः।

देवानाम् । अधः पितृणाम्' इति । तथा 'घृतं देवानां, मस्तु पितृणां, निष्पक्वं मनुष्याणाम्' इति । तत्र मनुष्यसम्बद्धेषु रौद्रे च संदेहः किं मनुष्याणां धर्मा विधय, उत कर्मधर्मा अनुवादाः । अथ यत्प्रकरणे[1] मनुष्यप्रधानं, रौद्रं च, तत्र निविशेरन्, उताऽऽतिथ्ये, उतार्थवाद इति । किं तावत्प्राप्तम् । एतान्यपि तद्वत् । यो निवीते पूर्वः पक्षः, स एतेषां पूर्वः पक्षः । यो मध्यमः, स मध्यमः । यः सिद्धान्तः, स एव सिद्धान्तः । अर्थवत्त्वात् मनुष्यसंबन्धाच्च विधयो मनुष्यधर्माश्चेति पूर्वः पक्षः । उपरि मूले चानियमाल्लाघवम् । अश्रुते रोगवत्वाद् रौद्रे, पूर्णेऽपि श्लक्ष्णत्वाल्लाघवम् । एवमायुतं शिरसि निहितं मनुष्याणां सुखकरमेव । अर्थप्राप्तत्वादनुवादइत्युत्तरः पक्षः । विधिः कर्मधर्मप्रायात्समाख्यानाच्च कर्मधर्म इति पक्षः । अन्वाहार्ये[2]दक्षिणासु चेति वाक्यप्रकरणानुग्रहात् पक्षः । आतिथ्य इति वाक्यभेदप्रसङ्गात् । अर्थवाद इति, प्रकरणाद् विधिनैकवाक्यत्वादिति । पूर्वं प्रति लुनाति, उपरि बिलाद् गृह्णाति, नवनीतेनाऽभ्यङ्क्ते, अविदहता श्रपयितव्यम्, इत्येभिः सहैषामेकवाक्यभावः । तस्मादेते न विधयः अर्थवादा इति ॥ ११ ॥ परुषिदितादीनामनुवादताधिकरणम् ॥ ३ ॥

उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ॥ १ ॥ पू०

एषां सूत्राणाम् व्याख्याने व्याख्यातॄणां वैमत्योपन्यासः
केषाञ्चिद्वृत्तिकाराणां तद्व्याख्यानञ्च ।

त० वा०—अतः परं षट्सूत्राणि भाष्यकारेण न लिखितानि । तत्र व्याख्यातारो विवदन्ते । केचिदाहुर्विस्मृतानि, लिखितो ग्रन्थः प्रलीन इत्यपरे फल्गुत्वादुपेक्षितानीत्यन्ये, अनार्षेयत्वादित्यपरे, तथा च 'दिग्विभागश्च तद्वत्' । इति विनीताधिकरणातिदेशतदानन्तर्यादुपपद्यत इति ।

वृत्त्यन्तरकारैस्तु सर्वैर्व्याख्यानि । सन्ति च जैमिनेरेव प्रकाराण्यप्यनत्यन्तसारभूतानि सूत्राणि, व्यवहितादिदेशाश्च 'पानव्यापच्च[3] तद्वत्' इत्यादिष्वाश्रिताः तस्मात्सूत्रमात्रं[4] व्याख्येयम् ।

अधिकरणकल्पनेऽधिवैमत्योपन्यासः ।

तत्र कैश्चित्त्रिण्यधिकरणानि कल्पितानि । अपरैश्चत्वारि ।

तत्र प्रथमाधिकरणम्

प्रथमं तावदिदं चिन्त्यते—यदेतत्पूर्वाधिकरणे दर्शपूर्णमासयोर्विधीयमानत्वेनोपवीतमुदाहृतम् । तत्र संदेहः—किं तद्दर्शपूर्णमासयोरेवावतिष्ठते, अथवा सर्व-

---

१. प्रकरणं । २. क० त० ।
३. क० या न । ४. क० सूत्रार्थमात्रं ।

कर्मार्थमिति। येत्वधिकरणत्रयं समर्थयन्ते। तेषामेवं संदेहः—किं दर्शपूर्णमासयोरवस्थानं विविधश्च, अथ सर्वकर्मार्थत्वमनुवादश्चेति। किं प्राप्तं? सर्वधर्मः स्यात्। कुतः?

कर्मान्तरेऽनुवादोऽस्य सिद्धवद्यः प्रतीयते।
सोऽन्यथानुपपत्त्यैतां लिङ्गत्वात्मक्रियां जयेत्॥

मृताग्निहोत्रे हि पितृदेवत्ये श्रूयते 'प्राचीनावीती[1] दोहयेत्। यज्ञोपवीती हि देवेभ्यो दोहयति' इति। तद्यदि सर्वार्थमुपवीतं, ततोऽयं पित्र्येऽग्निहोत्रसंबन्धी नित्यवद्यज्ञोपवीतानुवादोऽवकल्पते। न चायं दर्शपूर्णमासस्थस्यैवाऽनुवादः, विप्रकृष्टत्वात्। हेतुवन्निगदार्थवादानर्थक्याच्च। यदि हि तस्मिन्नेव कर्मण्यन्यावस्थायां धर्मो भवति, ततश्च तदवस्थापरिजिहीर्षया हेतुवन्निगदोऽवकल्पते। न तु क्रत्वन्तरस्थं परिहर्तव्यम्, अत्यन्तविप्रकर्षेणैवाप्रसक्तत्वात्। न च देवेभ्य इति बहुवचनं दर्शपूर्णमासयोरवकल्पते। वैकल्पिकेन्द्रमहेन्द्रैकदेवत्यत्वात्सांनाय्यस्य। अग्निहोत्रे तु सायंप्रातर्देवतालोचनेनोपपन्नं बहुत्वम्। तस्मादग्निहोत्रस्योपवीतानुवादन्यथानुपपत्तेः सर्वधर्मत्वमिति॥ १॥

**न वा प्रकरणात्तस्य दर्शनम्॥ २॥ सि०**

न वा सर्वधर्मः। कुतः? प्रकरणाद्दर्शपौर्णमासार्थत्वप्रतीतेः। अथ यदुक्तं लिङ्गदर्शनादिति। परिहृतं तत्। तस्यैवेतद्दर्शनं दर्शपूर्णमासस्थस्येति। संनिकृष्टानुवादासंभवे च विप्रकृष्टानुवादोऽप्याश्रीयते। यथाप्राप्त्यपेक्षोऽहि स भवति। बहुवचनं चाविवक्षितम्।

अथवा प्रकृतिविकृतिदेवतालोचनेनोपपत्स्यते। ततश्चायमर्थो भवति। यस्माद्दैवयुक्तकर्मान्तरधर्मोऽयम्। अतः पित्र्येऽग्निहोत्रे न कर्तव्य इति॥ २॥

**विधिर्वा स्यादपूर्वत्वात्॥ ३॥ सि०**

तदेवोदाहरणम् 'उपव्ययते देवलक्ष्यमेव तत्कुरुते' इति। तत्र विधिरनुवाद इति संदेहः। कथं पुनरवधारिते विधित्वे, सर्वार्थत्व-दर्शपूर्णमासार्थत्वविचारो वृत्तः। सिद्धेन व्यवहारादिदमर्थतोऽधिकरणं पूर्वं द्रष्टव्यम्। किं प्राप्तम्? अनुवाद इति। कुतः?

स्मृतिभिः पुरुषो नित्यं कृतो यज्ञोपवीतवान्।
वर्तमानापदेशश्च न विधावुपपद्यते॥

'नित्योदकी नित्ययज्ञोपवीती' इति हि सर्वदा यज्ञोपवीतं प्राप्तं क्रतावप्यस्ति। न चैष विधिसरूपः शब्दः। तस्मादनुवाद इति। एवं च निवीतप्राचीनावीताभ्यामवैलक्षण्यं भविष्यतीत्येवं प्राप्ते।

१. क० प्राचीनावीतो।

ब्रूमः— विधिरेष भवेदेवमपूर्वोऽर्थो विधास्यते ।
सर्वानुवादो व्यर्थो हि स्तुतेश्च विधिकल्पना ॥

न हि समस्तानुवादवाक्यस्य किंचित्फलमस्ति । निवीतप्राचीनावीतसंकीर्तनमपि च विधीयमानोपवीतस्तुत्यर्थत्वेनैवार्थवद्भविष्यति । वर्तमानापदेशानामपि च तदाभासत्वात्प्रयोगवचनार्थवादपञ्चमलकारेभ्यो विधिशक्तिर्व्याख्याता । तस्माद्विधिः ।

यत्तु स्मृतेरेव प्राप्तमिति । तत्राप्यपूर्वत्वादिदमेवोत्तरम् । अन्य एव ह्यसौ पुरुषधर्मं प्राप्तः । अन्यश्चायमपूर्वः क्रतुधर्मो विधीयते । तस्मान्नानुवादः । अस्य च प्रयोजनं कर्त्रधिकरणे वक्ष्यामः ।

**अधिकरणचतुष्टयेन व्याख्याय व्यधिकरणवादिमते न व्याख्यानवर्णनम्**

एवं वा । यत्तु मृताग्निहोत्रे श्रूयते प्राचीनावीती दोहयेत्, यज्ञोपवीती हि देवेभ्यो दोहयति' इति तत्रैवं विचार्यते—किमिदमहीनस्थितमिव द्वादशत्वं दर्शपौर्णमासगतमेव स्तुत्यर्थमुक्तम्, उत जीवदग्निहोत्रे विधानार्थमिति । किं प्राप्तम् ? ततः पूर्ववदेव सूत्रं व्याख्यातव्यम् । एवं च सति प्रकरण-बहुवचनयोरनुग्रहो भविष्यति । तस्मात्सत्यप्यनुवादसरूपत्वेऽर्थवत्त्वाय प्रयोगवचनादिभ्यो विधित्वं कल्पनीयम् । एतस्मिंश्च व्याख्याने स्थितं तावदपर्यवसितमित्येवमुत्तरमधिकरणमारब्धव्यम् ॥ ३ ॥

**उदक्त्वं चापूर्वत्वात् ॥ ४ ॥ पू०**

तस्मिन्नेव मृताग्निहोत्रे श्रूयते—'ये पुरोदञ्चो दर्भास्तान्दक्षिणाग्रांस्तृणीयात्' इति । केचित्तु महापितृयज्ञे श्रूयत इत्युदाहरन्ति । तत्र 'ये पुरोदञ्चः' इत्यत्र संदेहः—किं विधिः अनुवाद इति । किं प्राप्तम् ? ततश्च शब्देनान्वादिश्यते—अयमपि विधिरपूर्वत्वादिति । प्राप्तिपूर्वको ह्यनुवादो भवति । न चास्य पुरुषार्थतयाऽपि प्राप्तिरस्ति । न चास्य स्तुत्यर्थताऽपि युज्यते, हिशब्दाद्यप्रयोगात् । तस्मात्सिद्धवदुक्तान्यथानुपपत्त्यैवाऽस्यापि विधित्वमिति ॥ ४ ॥

**सतो वा लिङ्गदर्शनम् ॥ ५ ॥ सि०**

आचारप्राप्तस्योदगग्रत्वस्य द्योतकमात्रं लिङ्गदर्शनमेतत् विधिः । कुतः ?

लिङ्गादिरहिते वाक्ये तदा विधिरुपेयते ।
न कथंचिद्यदा युक्त्या प्राप्तिलेशोऽपि गम्यते ॥

यच्छब्दयोगादाख्याततद्विशेषरहितत्वाच्च स्फुटमिहानुवादत्वमवधारितम् । तद्यथाकथंचिदपि प्राप्तौ सत्यां नातिक्रमितव्यम् । अस्ति चात्र प्राप्तिः, 'अग्रवन्ति प्रागग्राणि, उदगग्राणि वाऽपवर्गवन्ति, प्रागपवर्गाण्युदगपवर्गाणि वा' इति स्मृतेः ।

तस्मात्तत्समानार्थ एवायं सिद्धवदनुवादः। तथैव च स्तुत्यर्थः। पुरा ह्येतदुक्तं, न तु सांप्रतं मृतावस्थायामिति।

स्थितादप्येतदेवोत्तरम्। हिशब्दवदाख्यातेन यतः कुतश्चित्प्राप्तेरपेक्षितत्वात्। प्रकरणे च तदभावात्किमनवगम्यमानमेव विधित्वं कल्पितम्। उत यत्रतत्रस्था प्राप्तिराश्रीयतामिति। तत्र प्राप्त्याश्रयणमपेक्षितं, न तु विधित्वमिति। तदेव ज्यायः। प्रकरणबहुवचनयोश्चोक्तम्। अस्त्येव चान्योऽत्र विधिरिति, नाऽऽनर्थक्यम्। तस्मादनुवाद इति, नित्येऽग्निहोत्रे दोहे विनाऽप्युपवीतेनावैगुण्यम्॥ ५॥

## उपरि धारणाधिकरणम्

### विधिस्तु धारणेऽपूर्वत्वात्॥ ६॥ सि०

इदानीमेवंविधशब्दाभावेऽनुवादत्वस्यातिप्रसक्तस्यापवाद आरभ्यते। तत्रैव दिष्टगताग्निहोत्रे, महापितृयज्ञे वा श्रूयते 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इति। तत्र 'उपरि हि देवेभ्यः' इत्यत्र पूर्ववदेव विध्यनुवादत्वसंदेहे हिशब्दयोगात् वर्तमानापदेशत् द्विध्यन्तरेण चैकवाक्यत्वात् आचारतश्च प्राप्तेरनुवाद इति प्राप्नोति।

कथमाचारतः प्राप्तिरिति चेत्? उच्यते।

सर्वमभ्यर्हितं द्रव्यं प्रच्छादनमपेक्षते।
यत्र क्वचन च प्राप्ते समित्तत्र नियम्यते॥

देवार्थस्य स्रुचि प्रक्षिप्तस्य हविष आहवनीयदेशं नीयमानस्याऽवश्यमेव हस्तो वाऽन्यद्वा किंचिद् द्रव्यमाचारादुपरि दातव्यम्। तत्र प्रत्यासत्तेः—समिन्नियम्यते। 'स्रुग्दण्डे समिधमुपगृह्यानुद्रवति' इति चास्यापि विधेराचारापेक्षितार्थविधानादेतदेव फलं विज्ञायते। तस्मादुपरि धारयतीति प्राप्तस्योपवीतादेरिवानुवादः। सतो वा लिङ्गदर्शनमिति प्राप्ते—

अभिधीयते—

धारणे विधिरेव स्यान्न हि प्राप्तिः कुतश्चन।
समित्प्रच्छादनाशक्तेर्नाऽऽचारादुपरिस्थता॥

सत्यमाचारात्प्रच्छादनं कर्तव्यं, न तु तत्र समित् पक्षेऽपि प्राप्नोति। य संनिधेर्नियम्येत। हस्ताद्येव हि तत्र योग्यत्वात्प्राप्नुयात् न समित्।

ननु च सोमचमसादीनां वचनसामर्थ्याद्या काचिदानत्यर्थता भवति, एवमत्रापि या काचित्प्रच्छित्तिर्भविष्यतीति। भवेदेवं यदि तदीयदक्षिणासंयोगवदिहापि प्रच्छादनसंयोगः श्रूयेत। न तु श्रूयते। उपसंग्रहमात्रविधानात्। यदि सोमचमसेऽपि दक्षिणासंयोगरहितं दानमात्रमश्रोष्यत्। ततो नैवाऽऽनत्यर्थत्व-

माश्रयिष्यत। स्रुग्दण्ड इति च देशनियमात्सुतरां हविषः प्रागसौ धारयितव्या। तेनोपरि धारणमप्राप्तम्। न चाप्राप्तं हेतुवन्निगदेन, वर्तमानापदेशेन वाऽनुवदितुं शक्यम्। अतोऽस्य व्यवधारणकल्पनयाऽनुवादसरूपत्वं भङ्क्त्वा, वाक्यं भित्त्वा विधित्वमाश्रीयते। पित्र्ये होमेऽधस्तात् स्रुग्दण्डस्य समिद्धारयितव्या। दैवे च पुनरुपरिष्टादिति। विधित्वे चैवमादीनामुक्तः कल्पनाप्रकारः। तस्माद्विधिरिति ॥ ६ ॥

( इति—वार्तिककारीयषट्सूत्रीव्याख्या )

**अधिकाशंकानिरासार्थमतिदेशः इति वर्णनम् ॥**

त० वा०—दिग्विभागपरुषिदितघृतादीनां निवीताधिकरणवत्सर्वे प्रकारा अवगमयितव्याः। का पुनरत्रातुल्याऽऽशङ्कायां व्यावर्तयितुमतिदेशः क्रियते। किमर्थं वाऽधिकरणद्वयमारभ्यते ?

तदुच्यते—

पुराकल्पस्वरूपेण भजत्यर्थानुषङ्गिणा।
दिग्विभागस्य संबन्धान्निवीतातुल्यतामतिः ॥
इतरेषां तु षष्ठ्यन्तसंबन्धेऽपि फलोदयः।
पुरुषं प्रति विस्पष्टस्तत्क्रियान्तर्गतात्मनाम् ॥

स्वाभाविकं दिगादीनां सर्वक्रियाङ्गत्वं न निवीतवदपूर्वं विधातव्यम्। तत्र मनुष्यसंबन्धेऽपि नियमफलमात्रकल्पनमेव, न क्रियाफलकल्पना। तदपि च लौकिकीनामेव क्रियाणामविघ्नसमापनमपेक्षावशात्कल्प्यते, नान्यत्स्वर्गादि। तेनैवमाभाति। यावत्किंचिन्मनुष्याः स्वार्थं कर्मानुतिष्ठन्ति, तत्र प्रतीच्युदीची चाङ्गं भवति। यावच्च दर्भलवनं, तदन्तरा कर्तव्यम्। यावन्मीयते, तत्पूर्णेन मातव्यम्। यावच्च स्नेहकार्यं, तत्सर्वं विलीननवनीतेन निष्पक्वायुतशब्दवाच्येन कर्तव्यम्। नैर्ऋतरौद्रयोश्च विदग्धत्वाश्रृतत्वे कर्तव्ये इति। तेनात्रापि पूर्वतुल्यत्वं साधयितव्यमित्यारम्भः।

तत्र 'मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात्' इति विनाऽपि षष्ठीनिर्देशादभजन्तेति मनुष्यसम्बन्धात्तादर्थ्यम्। इतरेषु षष्ठ्येव। तथा 'अपदेशो वा' इति सौकर्यात्प्राप्तिरभिधीयते। पूर्वाह्णे हि पृष्ठत आदित्यं कृत्वा सुखं व्यापियन्त इति प्रतीचीप्राप्तिः। तथाऽन्तरालवनपूर्णयोरप्रयत्नसाध्यत्वात्प्राप्तिः। तथा विदग्धे कृष्णत्वादेकवर्णनिर्ऋत्याख्यपृथिवीसंबन्धप्राप्तिः। अश्रृते च रोगदत्वाद्रौद्रता। नियोगतस्त्वप्राप्तेः सर्वत्र नियमविधिः। प्रकरणसमाख्याभ्यां च कर्मधर्मः, सर्वप्रमाणानुग्रहार्थं प्रकरणे मनुष्यप्रधाने निवेशः। वाक्येन प्रकरणसमाख्ययोर्बाधात्फलकल्पनाभयाच्चाऽऽतिथ्यादौ निवेशः। तेनापि सह संबन्ध-

प्रमाणाभावात्प्रकरणे संभाविनश्चानुत्कर्षात्प्राचीनविधिशेषत्वच्चार्थवाद इति सिद्धान्तः। सम्यक्श्रुतयथाविदितविषयान्यविषयस्तुतिविवेकसिद्धिः ॥१०-११॥

इति दिग्विभागाधिकरणम्। परुषिदिताधिकरणं च ॥ २-३ ॥

न्या० सु०—भाष्यकृतः सूत्रषट्कोपेक्षणे कारणमाह—**अत इति**। अनार्षेयत्ववादिनामुपपत्तिमाह—**तथा चेति**। यज्ञोपवीती हीत्यस्य नवतन्तुकत्रिसूत्रत्रिवृद्ग्रन्थिकब्रह्मसूत्रविषयत्वेन वासोविन्यासविशेषरूपस्योपवीतस्य सर्वधर्मत्वे लिङ्गत्वाशङ्कायोगात्, उपव्ययत इत्यस्य च विधित्वाभावे समस्तवाक्यानर्थक्यापत्तेरनुवादत्वाशङ्कायोगात्सर्वकर्मार्थाचारप्राप्तोदगग्रत्वानुवादोपपत्तेश्च 'ये पुर' इत्यस्य विधित्वशङ्कायोगा'द्दण्डे निधाय समिधमनुद्रवती'ति वाक्यप्राप्तोपरिधारणानुवादोपपत्तेश्चोपरि हीत्यस्य विधित्वसिद्धान्तायोगादनत्यन्तसारभूताख्योपपत्यन्तरसूचनार्थश्चकारः ॥

वृत्यन्तरेषु व्याख्यानादनार्षेयतां निरस्य निवृत्यन्तरेति चकारसूचितामुपपत्तिं निरस्यति—**सन्ति चेति**। कण्ठोक्तान्निरस्यति—**व्यवहितेति**। अतो जैमिनीयत्वाद्व्याख्या कार्येत्याह—**तस्मादिति**। आख्यानादसारत्वशङ्कां निवर्त्तयितुं मात्रशब्दः 'उपव्ययत- इत्यनुवादत्वात्सर्व'दैवकर्मार्थं विधित्वाद्वा दर्शपूर्णमासमात्रार्थमिति सूत्रद्वयेनैकमधिकरणम्। उदकत्वं' चेति सूत्रस्थचशब्दसमर्थनार्थं विधिर्वेत्यस्य यज्ञोपवीती हीत्युदाहरणान्तरविषयत्वव्याख्यानेपि, तृतीयचतुर्थसूत्राभ्यां विधेरित्येकरूपपूर्वपक्षकरणात्पञ्चमसूत्रेण चानुवादइत्येकरूपसिद्धान्तकरणादधिकरणद्वयस्यैक्यमङ्गीकृत्य, सूत्रत्रयेण द्वितीयं, षष्ठेन सूत्रेणोपरिहीत्यनुवादे विधिर्वेति तृतीयमित्येवं, कैश्चित्त्रीण्यधिकरणानि रचितानि।

अन्यैर्विधिर्वेति सूत्रेणोपव्ययत इत्यनुवादे विधिर्वेत्यधिकरणान्तरकरणाच्चत्वारीति द्विधा, षट्सूत्रीं व्याख्यातुमारभते—**तत्रेति**। विधिर्वेत्यधिकरणान्तरे सिद्धविधित्वाभ्युपगमेनाद्याधिकरणचिन्तामधिकरणचतुष्टयवादिमतेनाह—**प्रथमं तावदिति**। अधिकरणत्रयवादिमतेनाह—**ये त्विति**। एतन्मताभ्युपगमेनैव तावदाद्यसूत्रेण पूर्वपक्षमाह—**किमिति**। उपवीतस्य सर्वार्थत्वाभावेपि कर्मान्तरे ब्रह्मसूत्रानुवादोपपत्तिमाशङ्क्य, दक्षिणोत्तरवासोविन्यासलक्षणप्राचीनावीतसाहचर्याद्यज्ञोपवीतशब्दस्य सव्योत्तरदक्षिणाधरवासोविन्यासवाचिसूचनायास्येत्युक्तम्। सर्वार्थतां विनोपवीतस्य जीवदग्निहोत्रेऽनुवादायोगाद्दर्शपूर्णमासप्रकरणस्थेन च वाक्येन विधौ सर्वार्थत्वायोगादुपव्ययतइत्यस्यानुवादत्वावगतेः प्रकरणयोगेन तद्बाधोक्त्ययोगमाशङ्क्य, अभ्युपेत्य वादत्वसूचनार्थमेतामित्युक्तम्। यद्यप्यनुवादात्मिका प्रक्रिया, तथाप्येषा कर्मान्तरेऽनुवादोऽन्यथानुपपत्तिलक्षणसामर्थ्यरूपतया लिङ्गत्वाद्बाधितेत्यर्थः।

श्लोकं व्याचष्टे—**तृतीयेति**। अन्यथानुपपत्तिमुपपादयितुमाह—**न चेति**। आनर्थक्यमुपपादयति—**यदि हीति**। इतश्च दर्शपूर्णमासस्योपवीतानुवादो न युक्त इत्याह—

**न वेति** । अग्निहोत्रे सायमग्निप्रजापत्योः, प्रातर्वा सूर्यप्रजापत्योर्द्वयोरेव देवतात्वाद्बहुवचनायोगमाशङ्क्याह—**अग्निहोत्रे त्विति** । पूर्वपक्षसूत्रार्थमुपसंहरति—**तस्मादिति** ॥१०॥

न्या० सु०—न वेति सूत्रावयवमनुषङ्गेण पूरयति—**न वेति** । प्रकरणादिति सूत्रावयवं हेतुप्रश्नोत्तरत्वेन व्याचष्टे—**कुत इति** । तस्येति सूत्रावयवं लिङ्गदर्शनपरिहारार्थत्वेनाऽनुभाषणपूर्वं व्याचष्टे—**अथेति** । प्राप्तिशून्यस्य लिङ्गस्यासाधकत्वात् 'उपवीतं देवानां देवलक्ष्ममेव तत्कुरुते' इत्यनयोश्चार्थवादत्वेन प्रापकत्वाभावात्सुपरिहरत्वसूचनार्था परिहृतमिति निष्ठा । विप्रकृष्टत्वाद्दर्शपूर्णमासस्योपवीतानुवादायोगं परिहरति—**सन्निकृष्टेति** । बहुवचनायोगं द्वेधा परिहरति—**बह्विति** । जीवदग्निहोत्रे विधिः कस्मान्न भवतीत्याशङ्क्य, प्राचीनावीतीति विध्यन्तरैकवाक्यत्वाद्विधित्वायोगं सूचयतिमाह—**ततश्चेति** ॥ ११ ॥

भा० प्र०—श्रुति में ज्योतिष्टोम प्रकरण में पठित है कि "प्राचीनवंशं करोति । देवमनुष्या दिशं व्यभजन्तु । प्राचीं देवाः, दक्षिणां पितरः । प्रतीचीं मनुष्याः । उदीचीं रौद्राः । यत् प्राचीनवंशं करोति देवलोकमेव तद् यजमान उपावर्तते ।" (तै० सं० ६।१।१) अर्थात् प्राचीन वंश नाम की यज्ञशाला करे, देवों और मनुष्यों ने दिशा का विभाग किया, देवों ने पूर्व दिशा, पितरों ने दक्षिण दिशा, मनुष्यों ने पश्चिम दिशा एवं रौद्रों ने उत्तर दिशा ली । यह जो प्राचीन वंश किया है, इसमें यजमान (यागकर्ता) देवलोक में ही उपस्थित होते हैं ।" इस वाक्य में "प्राचीं देवाः" इत्यादि जो दिग्विभाग है—यह विधि है या अनुवाद ? यदि विधि है तो क्या यह मनुष्य धर्म है अर्थात् लौकिक कर्म का अङ्ग है या यह कर्म धर्म है अर्थात् वैदिक कर्म का अङ्ग है ? यदि मनुष्य धर्म है तो अन्तःक्रतु = यज्ञ मध्यवर्ती मनुष्य प्रधान कर्म है इसका स्थान है या बहिःक्रतु आतिथ्य आदि कर्मों में इसका स्थान है—यह संशय है ।

इस प्रसङ्ग में सूत्रकार ने कहा है "दिग्विभागश्च तद्वत्"—यह दिग्विभाग भी निवीताधिकरण के समान समझना होगा और इस स्थल में भी वैसा ही सिद्धान्त होगा अर्थात् दिग्विभाग अर्थवाद होगा । कारण, "सम्बन्धस्य अर्थहेतुत्वात्" पश्चिम दिशा के साथ मनुष्य का सम्बन्ध प्रयोजन के कारण स्वभाव से ही प्राप्त होगा, कारण, मनुष्य रात्रि के बाद पूर्वाह्न में ही अपने-अपने कर्म में व्यापृत रहता है, उस समय पूर्व दिशा में दिवाकर उदय होने से आतपताप के परिहार के लिए सूर्य की ओर पीठ करना होगा, इसलिए उनको पश्चिम दिशा की ओर होना होगा, अतः मनुष्य का जो यह पश्चिम दिशा का सम्बन्ध है, वह इस रूप में प्रयोजनवश स्वतः प्राप्त होने से वह विधेय नहीं हो सकता है । प्राचीनवंश नामक मण्डपका में विधि उसी के समीप पठित है—अतः यह उसका ही अर्थवाद है ।

प्राकृत में यह ज्ञातव्य है कि उक्त 'प्राचीं देवाः' इत्यादि श्रुति वाक्य का 'प्रतीचीं मनुष्याः' यह अंश लेकर वह विधि है या अर्थवाद—इस विचार में प्रवृत्ति होती है ।

कारण, पूर्व, उत्तर एवं दक्षिण ये तीन दिशाएँ यथाक्रम में देवों एवं पितरों के लिए उल्लिखित हैं। देवों एवं पितरों के कर्म में अधिकार न होने से केवल वर्णाश्रमी मनुष्य ही वेदविहित कर्म का अधिकारी है—यह षष्ठ अध्याय के प्रथम पाद में वर्णित है। उक्त श्रुति का पूर्व, उत्तर एवं दक्षिण दिशा का विधायक अंश लेकर विचार नहीं किया जाता है।

"दिग्विभागः च" दिग्विभाग भी, "तद्वत्" = उसके समान अर्थात् विनीताधिकरण के समान अर्थवाद है ॥ १० ॥

## द्वितीय दिंग्विभागाधिकरण

भा० प्र०—श्रुति में दर्शपूर्णमास प्रकरण में कहा गया है "यत् परुषिदितं तद्देवानां यदन्तरा तन्मनुष्याणां यत् समूलं तत्पितॄणाम्" (तै० ब्राह्मण १।६।८) अर्थात् कुश का प्रथम पर्व अर्थात् गाँठ से काटा है वह दोनों के लिए जिनको मूल और प्रथम पर्व के मध्य में काटा जाता है, वह मनुष्यों के लिए और जो मूल के साथ काटा जाता है—वह पितरों के लिए होता है। इसी प्रकार "यो विदग्धः स नैर्ऋतः योऽश्रृतः स रौद्रः, यः श्रृतः स देवत्यः। तस्मादविहिता श्रपयितव्यं स देवत्वाय" (तै० सं० २।६।३) जो पुरोडाश विदग्ध = अतिशय पक जाता है अथवा जल जाता है—वह निर्ऋति देवता के लिए, जो कच्चा रहता है—वह रुद्रदेवता के लिए, और जो पका हुआ है—वह देवों के साथ, इसलिए पुरोडाश को इस प्रकार पकाना चाहिए जिससे न जले और न कच्चा रहे और ठीक से पक्व रहे। इसी प्रकार ज्यतिष्टोम में कहा गया है "यत्पूर्णं तन्मनुष्याणाम्" जो पूर्ण है वह मनुष्यों के लिए। इसी तरह "घृतं देवानां यस्तु पितॄणां, निष्पक्वं मनुष्याणाम्" घृत देवों के लिए दधिमण्ड = सर पितरों के लिए, निष्पक्व = कम गला हुआ मनुष्यों के लिए। इन वाक्यों में यथाक्रम से "यदन्तरा तन्मनुष्याणां" "यो श्रृतः स रौद्रः" "यत्पूर्णं तन्मनुष्याणाम्" एवं "निष्पक्वं मनुष्याणां।" ये कहे गये हैं—ये मनुष्योद्देश्यक कर्म के धर्म की अर्थात् अङ्ग की विधि है अथवा ये अनुवाद हैं—यह संशय है।

इस प्रसङ्ग में सूत्रकार का कहना है कि "परुषिदितपूर्णघृतविदग्धं च तद्वत्" ये भी "तद्वत्" अर्थात् निवीताधिकरण के समान है। निवीताधिकरण में जिस प्रकार पूर्वपक्ष हुआ था, इसके सम्बन्ध में भी ठीक वैसा ही पूर्वपक्ष होगा और उसी तरह वैसा ही सिद्धान्त होगा अर्थात् विनीत वाक्य जैसे अर्थवाद है—ये भी वैसे ही अर्थवाद हैं। इस स्थल में "यत्परुषिदितं" इत्यादि वाक्य अर्थवाद है, कारण, कुश को जो समूल छेदन विहित होता है—इसके द्वारा उसी की स्तुति अवगत होती है, इसी प्रकार "यो विदग्धः" इत्यादि वाक्य भी अर्थवाद है, कारण, पुरोडाश का जो यथोचित पाक विहित है, इसके द्वारा उसी की प्रशंसा की जा रही है, इसी प्रकार "यत्पूर्णं तन्मनुष्याणां" यह वाक्य भी स्तुतिवाद है, क्योंकि, "अर्द्धं उपमन्थति" इस वाक्य में पात्र के

अधोभागरूप आधे अंश से परिमित दूध में मन्थन कर्तव्य होने से अर्द्धत्र विधेय है, इसके द्वारा उसी की प्रशंसा की गई है, इसी प्रकार "घृतं देवानां" इत्यादि वाक्य का "निष्पक्वं मनुष्याणां" यह अंश भी अर्थवाद है, कारण, इसके द्वारा अभ्यङ्ग कर्म में जो नवनीत विहित है, उसी की प्रशंसा की गई है।

'यत्परुषि' यह तैत्तिरीय ब्राह्मण संहिता १-६-८ चातुर्मास्य के साकमेध्य तृतीय पर्व के यज्ञ हैं। 'दितम्' यह शब्द दो अवखण्डने धातु से क्त प्रत्यय "आदे च उपदेशेऽशिति' (६।१।४५) से आत्व आदेश—'दात' इस स्थिति में "द्यतिस्यति मास्थामित् ति कि ति" (७।४।४०) सूत्र से इकार आदेश कर 'दितम्' निष्पन्न होता है। तै० ब्राह्मण में 'दितम्' के स्थान पर 'दित्रम्' पाठ है, वैदिक तकार को नकार मानना होगा। 'यत्परुषिदितम्' = मूल से ऊपर प्रथम पर्व से काटा हुआ, "यदन्तरा" प्रथम पर्व और जड़ के मध्य से काटा हुआ, "यत्समूलम्" = जड़ खोदकर जड़ से काटा हुआ। "यो विदग्धः स नैर्ऋतः" आग्नेय पुरोडाश के पाक विषय (तै० सं० २।६।३) में है। "विदग्धः" = विशेषेण दग्धः अर्थात् जला हुआ, 'शृतः' ठीक से पक्व।

"घृतम्—यस्तु-निष्पक्वम्" घृतम् = अग्नि पर पिघलाया हुआ, 'स्वयं विलीन' = साधारण गर्मी से पिघला हुआ। ज्योतिष्टोम के दीक्षान्तर्गत पाठ है—"आज्यं वै देवानां सुरभि, घृतं मनुष्याणाम्, आयुतम् पितॄणाम्" = षड्गुरु शिष्य और सायणचार्य के अनुसार इसका अर्थ है—

सर्पिविलीनमाज्यं स्याद् घनीभूतं घृतं विदुः।
विलीनार्धमायुतं तु नवनीतं यतो घृतम्॥

स्वयं पिघला हुआ आज्य, घनीभूत = जमा हुआ, घृतम्, आधा पिघला हुआ :'आयुतम्" नवनीतम् = मक्खन। यन्नवमेवैतन्नवनीतमभवत्। यद सर्पत तत्सर्पिः। यदध्रियत् तद् घृतम्" दही के द्वारा नवीन प्राप्त नवनीत, साधारण गर्मी से पिघल कर बहने योग्य सर्पि, जमकर धारण करने योग्य घृत है।

"परुषिदितपूर्णघृतविदग्धं च" = 'परुषिदितं' इत्यादि वाक्योक्त एवं अन्य वाक्योक्त-दित, पूर्ण, घृत, विदग्ध एवं शृत भी, "तद्वत्" = उसके समान अर्थात् त्रिनीताधिकरण के समान॥ ११॥

## [४] अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात्॥१२॥ पू०

**शा० भा०—दर्शपूर्णमासयोराम्नायते 'नानृतं वदेत्' इति। तत्र संदेहः—किमयं प्रतिषेधो दार्शपौर्णमासिकस्य पदार्थस्य, प्रकरण एव निवेशः। अथ प्रायेण प्राप्तस्य कर्मणः पुरुषं प्रति प्रतिषेधः, पुरुषधर्मोऽयमिति। किं प्राप्तम्? पुरुषधर्मः स्यात्। पुरुषस्यायमुपदिश्यते, न दर्शपूर्णमासयोः। कुतः? पुरुष-**

प्रयत्नस्य श्रवणात् । वदेदिति—वदनमनुतिष्ठेदिति श्रुत्या गम्यते । तस्य पुरुषसंबन्धः श्रुत्यैव । कर्मसंबन्धः प्रकरणात् । श्रुतिश्च प्रकरणाद्बलीयसी । इतरथा वदनं भवतीत्येतावत्यर्थे वदनमनुतिष्ठेदित्यविवक्षितस्वार्थः परार्थो विध्यर्थो भवेत् । पुरुषव्योपदेशे पुनर्विवक्षितस्वार्थ एव शब्दः । तस्मात्पुरुषस्योपदेशः । यस्य चोपदेशः तस्यायं प्रतिषेधः । स चायमर्थ उपनयनकाल एव पुरुषस्य प्रतिषिद्धः, तेन संयोगेनायं नित्यानुवादः ।

नन्वेषा श्रुतिस्तस्याः स्मृतेर्मूलम् । नैषा तस्या मूलं भवितुमर्हति । यदीयं तन्मूलिका भवेत्, दर्शपूर्णमासयोरिति स्मर्येत । उपनपनकाल एव चास्योपदेष्टारो भवन्ति । अपि च पुरुषधर्म इत्युपदिशन्ति । तस्मान्नैषा स्मृतिरतः श्रुतेरिति ॥१२॥ पूर्व० ॥

त० वा०—तेनैव श्रुत्यादित्रयस्य प्रकरणेन सह विराधाविरोधविचारप्रस्तावेन दर्शपौर्णमासादिप्रकरणगताः पूर्वमनवधारितक्रत्वर्थपुरुषार्थविषया 'नानृतं वदेत्' इत्येवमादयः प्रतिषेधाः सामर्थ्यप्राप्तानृतवदनादीनि प्रतिषेधन्त उदाहरणम् । तेषु संदेहः—किं क्रत्वर्थाः, पुरुषार्था इति । ततः सर्वप्रतिषेधानां प्रवृत्तिविषयत्वात्तदवधारणाधीनो निर्णय इति, सैव प्रथमं विचारयितव्या किमर्था सति प्रतिषिध्यत इति । यदर्था चासौ निर्धारयिष्यते, तदर्थंप्रतिषेधो विज्ञास्यते । न ह्यन्यार्थायाः प्रतिषेधोऽन्यार्थो भवति, अनाकाङ्क्षितत्वात् । एव यो यदर्थंप्रवृत्तः सन्निवार्यते, स तदर्थमेव प्रतिषिद्धो भवतीत्यवधार्यते । तस्मात्प्रवृत्तिकैमर्थ्यचिन्ता । प्रवृत्तीनामप्यभिधायकाख्यातवशेनैदमर्थ्यं निरूप्यत इत्याख्यातशब्दाश्चिन्तयितव्याः, किमर्थाः पुनः प्रवृत्तीरुपादातुं शक्नुवन्तीति । तावच्च प्रतिषेधैरुदासितव्यं यावदाख्यातनिर्णयो न जातः ।

### वार्तिकमतेन विषयवाक्यव्यवस्थापनम्

तेनैतदुक्तं भवति ये पुरुषार्थपदान्तरेणासंबद्धाः प्रकरणगता विधयः ते किमर्थं भावनामभिदधतीति । ततश्चैतस्मिन्नेव काले 'समिधो यजति 'तनूनपातं यजति' इत्येवमादयोऽपि सर्वं उदाहरणम् । किं क्रत्वर्थं 'समिधो यजति' उत पुरुषार्थमिति । तथा किं क्रत्वर्थं वदेत्, उत पुरुषार्थमिति । यदर्थं च वदनं, तदर्थस्यैवानृतपदं विशेषणम् । प्रतिषेधवेलायां च तत्परो विधिरिति शेषमवधारितैदमर्थ्यमनुवदितव्यम् । ततश्चैकदेवं वचनं व्यज्यते यत्पुरुषार्थमनृतवदनं तन्न कुर्यात् । अपरत्र त्वेवं यत्क्रत्वर्थमनृतं वदेत्तन्नेति । ततश्चैतस्य सर्वस्याऽऽख्यातनिरूपणायत्तत्वात्तद्गतोऽयं विचारो भविष्यति ।

### शाब्दिकमतेन पूर्वपक्षः

किमाख्यातेन कर्ताऽभिधीयते, नेति । तत्र यद्यभिधीयते, ततः श्रौतत्वात्प्रयोजनकाङ्क्षिणी भावनाप्रकरणगम्यक्रत्वर्थत्वबाधनेन पुरुषार्था भवति । अथ

नाभिधीयते, ततः श्रुतिविरोधाभावात्प्रकरणेन क्रत्वर्थता। ननु सत्यपि कर्तुर-भिधाने भावनाप्रधानत्वादाख्यातेन तां प्रत्युपादीयमानस्य श्रौतोऽपि सम्बन्धः प्रकरणानुगुणत्वादविरुद्धो नैव क्रत्वर्थतां बाधते। विरोधिनो हि तुल्यकक्षौ संबन्धौ परस्परं बाधेयातां, न गुणप्रधानभूतौ। तद्यथा 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यत्र दशावित्रोपसर्जनस्य संमार्गस्य ग्रहं प्रत्युतादीयमानस्य नैवमाशङ्कां भवति किं दशापवित्रेण संबध्यताम्, उत ग्रहेणेति। तथाऽत्रापि गुणभूतकर्तृकायाः क्रियायाः कर्तुं प्रत्युपादीयमानाया न कश्चिद्विरोधः। यदि त्वाख्यातेन कर्तुः प्राधान्यमुच्येत, ततः प्रकरणगम्येन कर्तुप्रधान्येन विरोधः स्यात्। यदि वा कर्तुरिव क्रतोरपि गुणत्वं स्यात्, तत् उभयोः शेषयोः शेषिसमवायविरोधो लक्ष्यते। न तु तदुभयमप्यस्ति। अतः श्रुत्या कर्तुगुणभावात्प्रकरणेन च क्रतोः प्राधान्यात् नानाविषयत्वेनासमवायादविरोधः। तदभावादबाधः स्यादिति।

नैतदेवम्—

यद्यप्यादौ गुणत्वेन कर्ता कर्मणि गम्यते।
तथाऽप्यस्य प्रधानत्वं न पश्चात्प्रतिषिध्यते॥

यद्यपि प्रथमं साधकमपेक्षमाणा क्रिया कर्तारि गुणत्वेन गृह्णाति, तथाऽपि तस्याः प्रयोजनाकाङ्क्षावेलायामपि कर्तैव संनिहितस्तां निर्वर्तयितुं समर्थः। सोऽपि च साधकत्वं प्रतिपद्यमानः किमयं ममोपकरिष्यतीत्येवमपेक्षते। तयोश्चैक-शब्दोपात्तयोः परस्परसंबन्धे निर्वर्तमाने विप्रकर्षाद्यागसम्बन्धो न गृह्यते। न च सामवायिकत्वे=सम्भवत्याराद्उप[1]कारकल्पना युक्ता। तद्यथा 'अग्नीषो-मीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति' इत्यत्र सत्यपि तद्धितेन देवतोपसर्जनत्वोपादाने यागस्य प्रयोजनाकाङ्क्षायां सत्यामग्नीषोम-योरेव संनिहितयोः संस्कार्यत्वं विज्ञायत इति, न पशोराराद्उपकारकत्वेन कल्प्यते। न हि पूर्वं गुणत्वमुत्तरेण प्राधान्येन विरुध्यते। अवश्यभाविन्यां प्रयोजनकल्पनायां कस्यचित्प्राधान्यमेवम्, अत्रापीति।

अथवाऽऽख्यातेन कर्ता केवलमभिधीयते, गुणप्रधानभावस्त्वर्थाद्यथेष्टं यथा-योग्यं भविष्यतीति। तेनोभयोः क्रियाकर्त्रोरपेक्षासंनिधियोग्यत्वैरन्योन्यं गुण-प्रधानभावावुपपत्स्येते।

यद्वैतदविशेषेण स्थितं क्रमवशादुभौ।
प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययाविति॥
तेनाऽऽख्यातेऽपि कर्तैव प्रकृत्यर्थोपसर्जनः।
प्राधान्येनाभिधीयेत द्वाभ्यामपि कृदन्तवत्॥

---

१. क० उपकारकत्व।

न ह्यस्यौत्सर्गिकस्य न्यायस्य, स्मरणस्य वाऽपवादभूतं न्यायान्तरं स्मरणान्तरं चोपलभ्यते। तेन कृत्तद्धितान्तवदेव प्रत्ययार्थप्राधान्यं प्राप्नोति। ततश्च शब्देनेव धात्वर्थस्य शेषत्वमुक्तं नातिक्रमितुं शक्यते।

ननु सामान्यमुत्सृष्टं प्रतीतिविशेषणापोद्येत।

तथा हि—

धात्वर्थस्य प्रधानत्वमाख्यातेषु प्रतीयते।
कर्तोपसर्जनं तस्य प्रधानत्वे ह्यसंगतिः॥

द्वयोस्तावत्प्रधानयोर्गुणयोर्वा सर्वत्रैव सम्बन्धो नावकल्पते तत्रावश्यं कल्पनीये गुणप्रधानत्वे, यथाप्रतीति व्यवस्थाऽवधार्यते। तत्प्रतीतिश्च यथाऽन्यत्र प्रकृत्यर्थोपसर्जनप्रत्ययार्थविषयत्वेनोपलभ्यते, तथाऽत्र प्रत्ययार्थोपसर्जनप्रकृत्यर्थविषया सर्वस्य स्वसंवेद्या। न च ततोऽन्यद् बलवत्कारणमस्ति। तस्मादप्रसङ्गः कर्तुः प्रधानत्वस्येति। उच्यते।

धात्वर्थस्य प्रधानत्वं न तावदिह जन्मनि।
औत्सर्गिको न च न्यायो मत्पक्षे हि निवर्त्स्यति॥

भावप्रधानत्वादाख्यातेषु न कदाचिद्धात्वर्थस्य नित्यं करणभूतस्य प्राधान्यमिति स्थितम्। न च धात्वर्थ एव भाव इत्युक्तम्। ननु प्रतीतिवशात्कर्तृप्राधान्यं तावन्निवृत्तम्। सत्यं निवृत्तं, न तु भवत्पक्षे। किं तर्हि, अस्मत्पक्षे। यो हि भावमेव प्रत्ययार्थं वदति, तस्य प्रकृतिप्रत्ययार्थप्राधान्यन्यायो लौकिकी प्रतीतिरुभयमपि न विरुध्यते। यस्य तु कर्तैव शुद्धः प्रत्ययार्थः तस्य नैव केनचिद्भावोपादानमिति, तत्प्राधान्यानुगमलक्षणं न स्यात्। लक्षणत एव कर्तुः प्राधान्यं प्राप्नोति। तच्च प्रतीतिविरुद्धम्। तत्र यदि प्रतीतिरनुगन्तव्या, ततस्तदनुसार्येव प्रत्ययार्थलक्षणं प्रणेतव्यम्। तच्च भावप्रत्ययार्थवादिभिरेव प्रणीतं, नेतरैः। अतस्तैरतिक्रान्तायां लौकिकप्रसिद्धावभिधेयत्ववत्कर्तुः प्राधान्यमभ्युपगन्तव्यमिति क्रियायास्तादर्थ्यप्रसङ्गः।

आह—तत्रैतत्प्रसज्यते यत्र तादर्थ्यसंबन्धमेव श्रुतिरुपादत्ते। प्रकृतिप्रत्ययार्थयोः पुनरपेततादर्थ्यं विशेषणविशेष्यभावमात्रं प्रतीयते। तत्र यद्यपि विशेषणत्वेन धात्वर्थस्योपसर्जनता, तथाऽपि राजपुरुष इत्यादिष्विव कदाचिदङ्गाङ्गिभावो विपरीतः स्यात्। तथा हि।

विशेषणतया राजा पुरुषस्योपसर्जनम्।
अर्थयोः शेषशेषित्वे तस्यैवेष्टा प्रधानता॥

अपि च।

निःसंदिग्धप्रधानत्वं पाचकादिषु कारकम्।
तथाऽपि तु न तादर्थ्यं क्रियाणामवधार्यते ॥

तथा च पश्वेकत्वपुंस्त्वादिषु समानपदोपादानलक्षणश्रुतिसंबन्धेषु वाक्येन क्रियार्थत्वेनाऽवधार्यमाणेषु वक्ष्यते 'न श्रुतिर्ब्रूते वाक्यार्थो नेति'। तेनात्रापि शक्यं वक्तुं न श्रुतिर्ब्रूते प्रकरणार्थो नेति।

अपि च—

प्राधान्येनेह कर्तृत्वं यदि नामाभिधीयते।
ततस्तात्पर्यतो वाच्ये गुणत्वमवधारितम् ॥

प्राधान्येनाभिधानं तात्पर्येणाभिधानं न शेषित्वेन। तदिह यदि कर्तृत्वपरमाख्यातं, ततः सुतरां गुणत्वमभिहितं भवति। न ह्यकुर्वन्कर्तेत्युच्यते। यश्च यत्करोति, स तस्यैकान्तेन गुणभूतः। तेनास्यानुपपन्नं शेषित्वेन प्राधान्यम्। एतदौदासीन्याभिधानपक्षेऽपि वक्तव्यम्।

यत्तूक्तमभिधीयते केवलं प्रत्ययेन कर्ता गुणप्रधानभावस्त्वर्थाद्भविष्यतीति। तत्रापि यदि वस्तुमात्रत्वेन कर्ताऽभिधीयते। तत औदासीन्यावस्थानाद्यथेष्टमङ्गाङ्गिभावं प्रतिपद्येत। स तु कर्तृरूपत्वेन गुणात्मनैवाभिधीयत इति, नास्त्यौदासीन्यावस्थानम्। यदप्युक्तं गुणत्वेनाभिहितोऽपि द्वितीययाऽऽकाङ्क्षया पुनः प्राधान्यं प्रतिपत्स्यत इति। तदपि श्रुति, विरोधादयुक्तम्। आख्यातेन हि श्रुत्यैव गुणपर्यायात्मना कर्तृत्वमभिहितं, तत्पश्चाद्व्यावर्तयतः श्रुतिविरोध आपद्येत। न च तत्कल्पनामन्तरेणाऽऽनर्थक्यप्रसक्तिः। यत एवं कल्प्येत। प्रकरणेन प्रयोजनसंबन्धसिद्धेः। यथैव चानभिहिते कर्तरी निष्प्रतिद्वंद्वं प्रकरणं विनियोगाय पर्याप्तं भवति; तथैवंरूपेणाभिहितेऽप्यविरोधः न चैक एव प्रत्ययः सकृदुच्चरितः शक्नोति गुणप्रधानत्वे युगपदभिधातुम् तत्रैकस्मिन्नाश्रीयमाणे यदि प्राधान्यमाश्रीयते, ततः क्रियागुणत्वलक्षणं कर्तृत्वमुत्सृज्य, तथाऽऽप्यमानत्वेन कर्मत्वप्रसङ्गात्तत्रैव लकारोत्पत्तेर्यागात्मनेपदादिकरणादन्यरूप एव शब्दः स्यात्।

अथोच्येत सर्वः कर्ता किंचित्प्रयोजनमनुद्दिश्य क्रियायां न प्रवर्तते। ततश्च द्व्यात्मकमेव कर्तृत्वं साधकरूपं क्रियाफलस्वामिरूपं चेति। उभयरूपेणाभिहिते सत्याकाङ्क्षाद्वयंप्रसृतं क्रियातो निर्वर्तयिष्यत इति। यदयुक्तम्। कुतः।

कर्तृत्वं साधकत्वेन सिद्धं तच्चाभिधीयते।
स्वामित्वं तु ततः पाश्चात्प्रमाणान्तरगोचरः ॥

यद्यपि स्वामित्वेन विना कर्तृत्वं नोपपद्यते, तथाऽपि प्रमाणान्तरलभ्ये तस्मिन्नाख्यातैरनुष्ठातृत्वांशमात्रमभिधीयते। तथा च स्वामित्वप्रतिपादनार्थास्तत्र तत्र स्वर्गकामादिशब्दाः प्रयुक्ताः। तस्माद् गुणत्वमेव केवलं कर्तृत्वम्।

अतश्चैतदेवम् । तथा हि—

अचेतनेऽपि काष्ठादौ कर्तृत्वमभिधीयते ।
न च तत्र फलोद्देशस्तस्मान्नैषावधारणा ॥

व्यापि हि कर्तृलक्षणमङ्गीकर्तव्यम् । न च फलोद्देशस्य व्यापित्वम्, अचेतनेष्वभावात् । साधकत्वं तु व्यापि, तेन तदेवाऽऽश्रयितव्यम् । तस्मान्नैव पुरुषार्थता युक्तेति । तस्मान्नाऽऽरब्धव्यम् ।

अत्राभिधीयते । यद्यपि श्रुत्या शेषत्वं नाभिहितम् । तथाऽपि यदेव तद्विशेषणत्वेनोपसर्जनत्वं, तदेव शेषत्वमप्यापादयति । तेन ह्येकं तावत्तादर्थ्यमभिधानात्मकमुपात्तमेव । केवलमनुष्ठानेऽपि तदेवाङ्गीकर्तव्यम् । राजपुरुषादिष्वपि शब्दार्थवृत्त्या राजादीनां गुणत्वमेव प्राप्तम् । प्रमाणान्तरवशेन तु विपरीतं कल्प्यते । तच्च सक्त्वधिकरणे दर्शितम् । न चैतावता शब्दार्थत्वं भवतीत्युक्तमेव । यश्च वस्तुतोऽपि तत्र राज्ञो गुणत्वांशःतमेवोपादाय शब्दः प्रवर्तते । अस्ति चासौ । कथम् ।

बिभ्राणः पुरुषं राजा गुणत्वं तावदृच्छति ।
स्वामित्वं भजते पश्चाद्विवक्षा तु यथारुचि ॥

तत्र यदा राजविशिष्टः पुरुषो विवक्षितः तदा शब्दार्थानुगुण्यादेकान्तेन वस्तुगतमप्युपकारकत्वं विवक्षितव्यम् । यदा पुनरुपकार्यत्वं विवक्ष्यते, तदा तस्य विशेष्यलक्षणापत्ते राजाज्ञाकरत्वेनोपकारकभूताः पुरुषा विशेषणं भवन्तीति पुरुषराजशब्द एव प्रयोक्तव्यः । प्रयोगद्वयस्य विद्यमानस्य तावद्व्यवस्थाहेतावर्थद्वये संभवति, किमपि वक्ष्यमाणक्रियोपयोगापेक्षया विवक्षाभेदमात्रेण विलष्टां व्यवस्थामाश्रयिष्यामहे । तेन भूतं निमित्तमालोच्य शब्दे प्रयुज्यमाने राजपुरुष इत्यत्रोपकारांशकृतं शेषत्वमेव विवक्षितमिति गम्यते । यत्रापि गोगर्भदासादिस्वामिन्यत्यन्ताविद्यमानमेव शेषत्वं तत्राप्युपकारकत्वसंभवादुपचरितमिति द्रष्टव्यम् । अथाप्येवमादीनां मुख्यत्वसिद्ध्यर्थमुपकारकत्वमेवोपसर्जनत्वं, न शेषत्वम् । तथाऽपि शेषस्यैवं फलवत्त्वादेतत्प्रत्यासन्नतरं, न शेषिण इति शेषत्वप्रतिपत्त्यर्थत्वमेव विज्ञायते । पाचकादावपि सर्वत्र तत्कृतवृत्तिलाभादुपकारकत्वसद्भावात्क्रियाणामुपसर्जनत्वं, न निर्वर्त्यत्वेनावस्थानात्प्राधान्यम् ।

नन्वेवं सति 'प्रोक्षिताभ्यामुलूखलमुसलाभ्याम्' इत्यत्रापि प्रोक्षणस्य द्रव्यार्थत्वं प्राप्नोति । कस्य वैतदनिष्ठम् । नन्वेवं सति हन्तिपिषिप्रयुक्तत्वा[1]पूर्वप्रयुक्तत्वविचारो विरुध्यते । कथं नाम विरुध्यते । यदाऽन्यदेव तत्प्रयुक्तत्वम्,

१. प्रयुक्तत्वापूर्वत्वविचारः ।

अन्येच्च तादर्थ्यम् । अवस्थिते हि द्रव्यार्थत्वे कार्यप्रयुक्तो हि धर्मः किमनन्तरकार्येण हन्तिना पिषिणा च प्रयुज्यतां, उत व्यवहितेनाऽपूर्वेणेति । योऽपि च तादर्थ्यविचारः तत्र, सोऽप्येवमेवोलुखलमुसलापरित्यागेनैव द्रष्टव्यः । किं यत्तयोर्हन्तिपिषिसाधनत्वं तदर्थमेतत्प्रोक्षणम्, उत् यदपूर्वसाधनत्वं, तदर्थमिति ।

तिरोहितं च कर्मत्वं न गृह्णीयादपि क्रियाम् ।
आविर्भूतं तु कर्तृत्वमाख्यातस्थं ग्रहीष्यति ॥

कृन्दताभिहितानि कारकाणि तिरोहितत्वान्न शक्नुयुरपि नामार्थत्वेन क्रियां ग्रहीतुम् । सुप्तिङन्तस्थानि त्वाविर्भूतत्वाच्छक्नुवन्ति । यत्तु पश्वेकत्वादिवदपेततादर्थ्यसम्बन्धो न क्रत्वर्थत्वेन विरोत्स्यत इति । तत्रोच्यते ।

कारकेण गृहीतत्वादेकत्वादेः क्रियार्थता ।
कारकश्रुतिगम्यत्वाद्बाधते द्रव्यशेषताम् ॥

कारकोपसर्जनीभूतस्य द्रव्यस्य प्रत्यासत्तिमात्रेण संख्यादयः शेषाः संभवेयुः । ते त्वत्यन्तप्रत्यासन्नाप्रधानभूतेन कारकेणापहृत्य क्रियायै नीयन्ते । न त्वेवं धात्वर्थानां केनचिद्बलवत्तरेण प्रमाणेन क्रत्वर्थत्वमवगम्यते, येन कर्तृत्वशेषता बाध्येत ।

यत्तु कर्तृत्वस्य गुणात्मकत्वात्प्राधान्याभिधाने सति सुतरां गुणत्वं प्राप्नोति । तदसत् । कुतः ।

कर्तृणां शास्त्रगम्येऽर्थे चेतनानामधिक्रिया ।
विधिश्च न भवेत्तेषां फलसंकल्पनादृते ॥

यद्यप्यनुष्ठातृमात्रात्मकं कर्तृत्वं, तथाऽपि तद्बुद्धिपूर्वकारिणां फलसंकल्पनमिश्रम् । तादृशानामेव वैदिकेषु कर्मस्वधिकारः नाचेतनानाम् । विधियुक्ताश्चैताः सर्वाः क्रियाः । प्रतिषेधानामपि विधिप्रत्ययसंबन्धाधीनत्वात् । न च पुरुषार्थकर्तव्यतामन्तरेण विधिः संभवति । तेनावश्यमनुष्ठातृत्वेनोच्यमानः पुरुषः किमपि ममैषा क्रिया साक्षात्पारम्पर्येण वोपकरिष्यतीत्यध्यवस्यति । साक्षादुपकारके च संभवति, न पारम्पर्योपकारकल्पना लभ्यते । न च संस्कारानर्हः कर्ता । क्रतुफलाधारत्वेन सप्रयोजनत्वात् । कस्तस्योपकार इति चेत् ? सर्वथा तावत्सामान्येनोपकारमात्रमवधारितम् । तावता च क्रत्वर्थत्वं व्यावर्तितम् । तद्विशेषावधारणं च यथेष्टं कल्पयिष्यते । न तदत्रोपयुज्यते । तस्मान्न क्रत्वर्थता । यद्यपि च प्राधान्यांशः कर्तृत्ववचनेनानभिहितः तत्र चानन्तर्गतः तथाऽपि तदन्यथानुपपत्त्यैव प्रत्यायितत्वात्संबध्यते । यथा स्वर्गकामादिशब्देन पुरुषविशेषवचनेनानुक्तमपि स्वर्गस्य साध्यत्वं कल्पयिष्यते । तथा स्वामित्वमपि बुद्धिपूर्वकारिणः पुरुषस्य फललिप्सयैव कर्तृत्वप्रतीत्या प्रतिपत्स्यते । तत्र तथैव देवतायाः कर्मणाऽभिप्रेय-

माणायाः प्राधान्यं यागसाधनत्वप्रतिपत्त्यर्थमेव ज्ञायते, न प्राधान्यस्वरूपपर्यवसायित्वेन, तथेह गुणत्वं प्राधान्यसिद्धयर्थमेव द्रष्टव्यम् ।

गुणभावो हि कर्तॄणां न धात्वर्थान्प्रतीष्यते ।
भावनायां तु शेषस्य धात्वर्थः किं न ते गुणः ॥

यस्यापि कर्ता प्रत्ययार्थः तेनाप्यवश्यं प्रतीतिवशाद्भावनाऽभ्युपगन्तव्या। ततश्चैकप्रत्ययोपादानात्प्राधान्याच्च सैव कर्तारमङ्गीकरोतीति, न धात्वर्थाङ्गता भवतीति। स तु भावनायां व्यापृततामन्यथा कर्तुमशक्नुवन्धात्वर्थमेवाङ्गीकरोति। न चोभयात्मकत्वं विप्रतिषिद्धं, विषयान्यत्वादेव। यदि धात्वर्थमेव प्रति गुणत्वमेव कल्प्येत, ततः सकृदुपादाने विप्रतिषिद्धमिव स्यात्। इह तु भावनां प्रति गुणत्वं, धात्वर्थेषु प्राधान्यमित्यविरोधः। स्वभावश्चोभयात्मकं वस्तु, यदि तथैव शब्द उपादत्ते, किं तत्र विप्रतिषिद्धम्। अथवैकं शब्दादेकं सामर्थ्यादित्यविरोधः। सर्वथाऽस्ति तावत्कर्तुः प्राधान्यप्रसक्तिरिति पुरुषार्थो धात्वर्थः प्राप्नोति।

अयं चापरो विशेषः—

क्रियान्तरेण संबन्धः पाचकादेः प्रतीयते।
तत्र शब्दार्थमात्रेण भवेद्धातुर्विशेषणम् ॥

शब्दार्थवस्त्वर्थात्मनोभयप्रकारस्योपसर्जनत्वस्यायं विवेकः। पाचकं राजपुरुषं वाऽऽनयेत्यत्र पुरुषस्याऽऽनयनसंबन्धिनः पाचको राजा वा शब्दार्थमात्रतयोपसर्जनत्वं प्रतिपन्न इति, शेषत्वं यावन्न गच्छेदपि। वदेदित्येवमादिषु तु कर्तुः कार्यान्तरसंबन्धानुपादानान्न शब्दार्थोपसर्जनत्वमाकाङ्क्षितमिति परिशेषाद्वस्त्वर्थोपसर्जनत्वमेव शेषत्वमवधार्यते। तस्मादस्त्यभिधानपक्षे धात्वर्थानां पुरुषार्थत्वे प्रमाणमिति।

नन्वेवं सत्यनभिधीयमानोऽपि समानपदोपात्तभावनालक्षितः प्रकरणात्स एव प्रत्यासन्नतरः शक्नोति धात्वर्थस्य प्रयोजनाकाङ्क्षां निर्वर्तयितुमित्यभिधीयमानपक्षतुल्यत्वं प्राप्नोति। नैष दोषः।

स शब्दो लक्षणां याति यः श्रुत्या नोपयुज्यते।
श्रुत्यर्थेनोपयुक्ते तु लक्षणा नान्तरीयकी ॥

अभिधीयमानो ह्यगम्यमानविशेषया श्रुत्या तन्त्रेणोपात्तो यद्यत्कार्यमुपतिष्ठते, तत्तत्सर्वं निराकाङ्क्षीकर्तुं समर्थ इति, न कचिच्छास्त्रार्थत्वाद्धीयते। लक्ष्यमाणः पुनरादित एव नैष शास्त्रेणोक्त इत्येवं, तावत्प्रतीयते। न च तेनानुक्त आदतंव्ये भवति। तद्यदि लक्षणाबीजं शास्त्रं तत्रोपसंहरिष्यते। ततः शास्त्रार्थत्वमध्यवसाय प्रमाणीकरिष्यते। सर्वमेव शास्त्रं यदा श्रुत्यर्थः कर्मणि नोपयुज्यते, तदा लक्षणार्थ-

मात्मानं प्रापयति। श्रुत्यर्थं एव चेह भावनोपयुज्यते। न च युगपच्छ्रुतिलक्षणावृत्त्युपयोगित्वमवकल्पते। तस्माद्यथैव पूर्वो धावतीत्युक्ते संबन्धित्वादपरो गम्यमानोऽपि न कार्येण संबध्यते, तथेहान्यपरेऽपि शब्दबलात्संबन्धी कर्ता गम्यत एव केवलमित्यवधारणान्नोपयोगित्वेन गृह्यते। या चासौ प्रतीतिः, सा गुणत्वेनाप्युपयुक्तेति, न पुनः प्राधान्यकल्पनामपि करोति। तदा च भावना कर्तारमात्मसिद्ध्यर्थमनन्यथासंभवमात्रेणोपसर्जनीकृतमेव गमयति, न प्रधानभूतमिति निष्प्रमाणिकैव प्राधान्यप्रतिपत्तिर्भवेत्। न हि तं प्रधानभूतं भावना गमयितुं समर्था। तेन यदैव कर्ता प्रधानत्वं प्रतिपत्तुमारभते, तदैव किमेतस्य प्रमाणमित्यन्विष्यमाणे शब्दो भावना चोभयमप्युदासीनम्। न च ततोऽन्यत्प्रमाणमस्ति। तस्मादर्थवानभिधानानभिधानाविचारः।

किं प्राप्तम्। प्रायेण वाचोऽनृतवादिनीत्वाद्यत्पुरुषस्याऽऽत्मार्थे वदनेऽनृतं प्रसक्तं, तस्यैव प्रतिषेधः पुरुषाणां प्रत्यवायपरिहारार्थो[1] विधीयत इति। कुतः?

वदेदिति श्रुतैरत्र पुरुषः संप्रतीयते।
विधिरप्यर्थवानेवं क्रत्वर्थेऽनर्थको भवेत्॥

समानपदोपात्तेन हि कर्त्रा संबन्धः श्रौतत्वात्प्रकरणं बाधते। योऽपि विधिव्यापारः, सोऽपि पुरुषार्थधर्मपक्षेऽत्यन्ताप्राप्तो विधीयमानोऽर्थवान्। क्रत्वर्थपक्षे तु प्रयोगवचनेनैवोपनीतमात्रधात्वर्थविधानात्प्रात्यात्मिको विधिरनर्थकः स्यात्। तद्दर्शयति—**इतरथा वदनं भवतीत्येतावत्यर्थे** सकर्तृकं सविधिकं च पदं **वदनमनुतिष्ठेदि**त्येवंरूपमनर्थकं स्यात्। तस्माद्विधयस्तावत्पुरुषार्थाः। ततश्च प्रतिषेधानामपि तदनुसारित्वात्पुरुषार्थत्वसिद्धिः। तत आत्मोपकाराय पुरुषो नानृतं वदेदिति शास्त्रार्थोऽवधार्यते।

सूत्रमिदानीं योजयति स चायमर्थः पुरुषस्य प्रागेव दर्शपूर्णमासाधिकारादुपनयनसमकालमेव स्मृतितः प्राप्तः तेन पुरुषस्य संयोगात्क्रतुसंयुक्तवदनं नित्यानुवादः। कथं पुनः पुरुषार्थतायां क्रतुसंयुक्तग्रहणम्। उच्यते।

सिद्धान्ते क्रतुसंयुक्तं समाम्नायेन वोच्यते।
यद्वा प्रकरणप्राप्त्या संयुक्तं बाधगोचरः॥

यदेतत्तत्क्रतुसंयुक्तमभिप्रेतं, क्रतुसंयुक्तं वा समाम्नातं, प्रकरणाद्वा यत्क्रतुसंयुक्तं प्राप्तं, तत्पुरुषार्थभूतत्वान्नित्यानुवादः स्यादिति।

**नन्वेषा श्रुतिस्तस्याः स्मृतेर्मूलमिति।**

सर्वा तावत्स्मृतिर्नित्यं श्रुतिमूलप्रमाणिका।
तेन स्मृत्यर्थवाचित्वान्नानुवादो भवेदसौ॥

---

१. क० परिहारार्थं।

यदि तु स्मृतेः स्वातन्त्र्येण प्रामाण्यं भवेत्, ततस्तद्वशेन श्रुतिर्नित्यानुवादो भवेदपि। तस्यास्तु मूलभूता श्रुतिरवश्यं कल्पनीया। तत्किमन्यां कांचित्कल्पयित्वेयमनुवादी क्रियताम्, उतेयमेव मूलं भवत्वित्यस्यां प्रत्यक्षेणोपलभ्यमानायां नान्यस्याः कल्पनायां प्रमाणमस्ति। द्वयं हि तथा निष्प्रमाणकमाश्रीयेत। श्रुतपरित्यागाश्रुतकल्पनाभ्युपगमात्। तस्मान्नित्यानुवादो नेति।

यत्त्वत्रोत्तरं दर्शपौर्णमासयोरिति हि स्मर्येत। **उपनयनकाल एव चास्योपदेष्टारो भवन्ति। अपि च पुरुषधर्म इत्युपदिशन्ति। तस्मान्नैषा स्मृतिरतः श्रुतेरिति।** नैवैतत्पौर्वापर्येण संबद्धं दृश्यते। तथा हि।

यदि प्रकरणं त्यक्त्वा पुरुषार्थेयमिष्यते।
ततः स्मृतिसमानार्था नेष्टा मूलं कथं श्रुतिः॥

यदि हि क्रत्वर्था सती श्रुतिर्मूलत्वेनाभ्युपगम्यते, तत् उभयोर्मूलमूलिनोरैकरूप्यस्वाभाव्यादस्याश्चातद्रूपत्वान्मूलत्वं न स्यात्। इयं तु यतः प्रकरणं बधित्वा पुरुषार्थधर्मत्वेन स्थापिता। तेनोपनयनसमकालमेव प्राप्नुवती किमिति श्रुतिः स्मृतेर्मूलं न भविष्यति। किमिति वा दर्शपौर्णमासयोरिति स्मर्यते। का चोपनयनकालपुरुषार्थत्वोपदेशयोर्विरुद्धता। तेनायुक्तं मूलत्वनिराकरणमिति।

**अत्र भाष्यकारस्याभिप्रेतं पक्षत्रयमिति निरूपणम्**

नैष दोषः कथम्।

पूर्वपक्षास्त्रयो ह्यत्र भाष्यकारस्य संमताः।
पूर्वस्मिन्मूलमूलित्वं परयोस्त्वनुवादता॥

यद्यत्र केवलपुरुषधर्मत्वमेव पूर्वपक्षः स्यात्, ततोऽयमसंबद्धो ग्रन्थो भवेत्। इह त्वेतद् ग्रन्थान्यथानुपपत्त्यैव त्रयः पक्षाः क्रमवन्तो हृदये वृत्तिकारस्य विपरिवर्तमाना गम्यन्ते। तत्र प्रथमं तावत्सूत्रनिरपेक्षः केवलपुरुषार्थत्वपक्षः। तस्मिंश्च नैव स्मृतिरुपन्यस्यते। यदि त्ववश्यमुपन्यसितव्या, ततो मूलमूलिभावाभ्युपगमेनैव नेतव्या। तस्मिंस्तु विध्यनुवादविकल्परहिते परिगृहीते 'सूत्रपदागमितं[1] पश्यन्ननुवादत्वसमर्थनार्थं क्रतुयुक्तपुरुषधर्मपक्षं हृदि कृत्वा 'स चायमर्थ उपनयनकाल एव प्रतिषिद्धः' इति ब्रवीति। तत्र परस्तमेव केवलपुरुषार्थत्वपक्षमङ्गीकृत्य मूलत्वप्रतिपत्त्याऽनुवादत्वमाक्षिपति। सिद्धान्तवादी तु 'नैषा तस्या मूलम्' इति ब्रुवन्निमं पक्षं परिगृह्णाति। नैव केवलपुरुषार्थत्वं मयाऽङ्गीकृतं, किं तर्हि, 'प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवत्' इत्यनेन क्रतुयुक्तपुरुषधर्माऽभिक्रमणवद्विज्ञायते, न सार्वत्रिकः। एवं श्रुतिः प्रकरणं

१. क्र० सूत्रद्वयमगमितं।

चोभयमप्यनुग्रहीष्यते। ततश्च स्मृतिरविशेषेण प्रवृत्ता न विशेषस्थया श्रुत्या मूलतो निराकाङ्क्षीकर्तुं शक्यत इति, अवश्यमात्मानुरूपश्रुत्यन्तरं मूलं कल्पयति। तस्मिंश्च कल्पिते तदर्थैकदेशान्तर्गतत्वाद्दर्शपौर्णमासयजिस्थः प्रतिषेधोऽनुवादी भवति। यो ह्युपनयनादारभ्यानृतं वर्जयति, वर्जयतितरामसौ दर्शपौर्णमासस्थः। तस्मादुपनयनमरणान्तरालवर्तित्वाद्दर्शपौर्णमासयोर्नित्यप्राप्त एव पुरुषस्यानृतवदनप्रतिषेधोऽनूद्यते, न मूलत्वम्। 'अपि च पुरुषधर्मं इत्युपदिशन्ति' इत्येतदपि केवलपुरुषधर्मोपदेशित्वेन स्मृतेः पूर्वेणैव योजयितव्यम्।

अथवाऽनेनैव पक्षान्तरं परिगृह्यते। नैवात्र क्रत्वर्थपुरुषार्थोपन्यासः क्रियते। किं तर्हि दर्शपूर्णमासयोरनृतवदनप्रतिषेधः श्रूयते। स किमप्राप्तविधिः, उत प्राप्तानुवाद इति। किं प्राप्तम्? स्मृतिक्लृप्तात्संयोगान्नित्यानुवाद इति। ननु चान्य एव स्मार्तः संयोगः पुरुषार्थः अन्यश्चैष क्रत्वर्थ इति। सत्यमेवम्। तथाऽपि नित्यानुवादः। कुतः?

पुरुषं हि परित्यज्य नानृतं प्राप्यते क्रतौ।
पुरुषे तन्निषिद्धं चेन्निषिद्धं तत्क्रतावपि॥

यद्यपि पुरुषार्थात्प्रतिषेधात्क्रत्वर्थः प्रतिषेधो विषयान्तरं भवति, तथाऽपि प्रसङ्गोपनतार्थत्वान्न विधित्वं प्रतिपद्यते। न हि पुरुषः स्वार्थं चानृतं वर्जयिष्यति, क्रत्वर्थं च वक्ष्यतीति संभवति। तस्मात्पुरुषार्थप्रतिषेधान्तरालपातित्वात्क्रतोरप्यस्त्येव प्रतिषेध इति, नित्यानुवादता। न चैतस्मिन्पक्षे मूलमूलिभावाशङ्का। स्मृतौ पुरुषधर्मत्वोपदेशात्।

अथवाऽऽदित एवाऽऽस्य दर्शपौर्णमासयोरिति हि स्मर्येतेत्यादि समस्तमेवोत्तरम्। अतो मूलान्तरप्रभवस्मृत्यर्थानुवादमात्रमेव क्रतुप्रशंसार्थम्। अन्यार्थप्रसक्तैरप्येवमादिभिः क्रतुर्युज्यमानो बह्वङ्गत्वेन प्रशस्तः प्रतिभातीत्यर्थवादता॥ १२॥

न्या० सु०—अधिकरणचतुष्टयवादिमतेनैतत्सूत्रमस्मिन्नेवोदाहरणे विध्यनुवादचिन्तार्थत्वेन व्याख्यातुमारभते—तदेवेति। अस्मिन्मते पूर्वाधिकरणे पक्षद्वयेपि विधीयमानस्यैवोपवीतस्य दर्शपूर्णमाससर्वार्थत्वविचाराद्विधित्वेनवधारिते, विचारायोगं शङ्कते—कथंपुनरिति। एतदधिकरणसिद्धविधित्वाभ्युपगमेन पूर्वाचिन्तेति परिहरति—सिद्धेनेति। पूर्वपक्षमाह—किमिति। यज्ञोपवीतिना कर्त्तव्यमित्यादिस्मृतिविहितस्य ब्रह्मसूत्रस्यैवोपव्ययत इत्यनेन विन्यासविशेषः कीर्त्यत इति पूर्वपक्षाशयः।

श्लोकं व्याचष्टे—नित्येति। पुरुषार्थस्यापि ब्रह्मसूत्रस्य प्रौढ्या पुरुषं हि परित्यज्य नानृतं प्राप्यते क्रतौ पुरुषे तन्निषिद्धं चेत्? निषिद्धन्तत्क्रतावपीति वार्त्तिकवक्ष्यमाणन्यायेन क्रतावपि प्राप्तेरनुवादोपपत्तिं वक्तुं पुरुषार्थब्रह्मसूत्रस्मृतिरुदाहृता दर्शपूर्णमासयोर्यज्ञोपवीतीति

स्मृत्यापत्तेर्मूलमूलिभावयोगसूचनार्थं—**सर्वदेत्युक्तम्**। नचेत्यनेनोत्तरार्द्धव्याख्या। अनुवादकै-मर्थ्याकाङ्क्षायामन्यार्थप्रसक्तैरप्येवमादिभिः क्रतुः प्रयुज्यमाना बह्वङ्गत्वेन प्रशस्त इति कर्त्रधिकरणपूर्वपक्षवार्त्तिकवक्ष्यमाणन्यायेन दर्शपूर्णमासस्तुत्यर्थत्वसूचनायाह—**एवं चेति**। स्तुत्यर्थत्वमात्रसाम्येनाऽवैलक्षण्योक्तिः।

सिद्धान्तोक्तत्यर्थत्वेन सूत्रं व्याख्यातुमाह—**एवमिति**। दर्शपूर्णमासविध्यसन्निधानेनास्य तत्स्तुत्यर्थत्वायोगान्निवीतप्राचीनावीतकीर्तनस्याप्यविधीयमानोपवीतस्तुत्यर्थत्वायोगादानर्थ-क्यापत्तिरित्येवं तृतीयपादं व्याचष्टे—**नहीति**।

वर्त्तमानापदेशश्च न विधावुपपद्यत।

इत्येतत्परिहारार्थत्वेन निवीतं मनुष्याणामित्यादेः श्रुतित्वनाभासमानस्य श्रुतित्वनिर्वाहा-न्यथानुपपत्त्या प्रयोगवचने च प्रकरणपठितस्य सर्वस्याङ्गत्वसिद्ध्यै विध्यपेक्षणादुपव्ययत इत्यस्य पञ्चमलकाररूपविधित्वकल्पनेत्येवं चतुर्थपादं व्याख्यातुमाह—**वर्त्तमानेति**। प्रयोगवचनार्थवादयोः पञ्चमलकारत्वनिश्चायकत्वात्तद्द्वारा विधित्वज्ञानोपयोगेऽभिहिते, विध्येकवाक्यत्वं विनार्थवादत्वानवगतेः ततः पञ्चमलकारत्वनिश्चयायोगमाशङ्क्य, वर्तमाना-पदेशस्याप्यप्राप्तार्थत्वेनानुवादत्वायोगादानर्थक्यपरिहारार्थं विधिवदाभासनात्, तदेकवाक्य-त्वेनाभासमानस्यार्थवादत्वस्य निर्वाहार्थं विधित्वनिश्चयोपपत्तिसूचनार्थं तदाभासत्वा-दित्युक्तम्।

नन्वेवं सति वर्तमानापदेशेष्वनाकाङ्क्षणादर्थवादा न संबद्ध्येरन्नित्याशङ्क्यै एवमेतत् तथापि तु प्रमाणान्तरप्राप्त्यभावात् क्व चित्प्रयोगवचनेन क्व चित्पञ्चमलकारेणाऽथवा श्रुतवर्त्तमानान्यथानुपपत्त्या कल्पिते विधित्वेऽर्थवादानां संगतिरित्यर्थवादाधिकरणवार्तिकेर्थ-वादान्वयस्य विधित्वकल्पनपूर्वकत्वोक्तेरर्थवादमात्रेण विधिशक्त्यवधारणायोगादङ्गं सत्प्र-योगवचनेन गृह्यते, न चाविहितमङ्गं भवतीति कर्त्रधिकरणभाष्ये च प्रयोगवचनग्रहणस्य विधित्वकल्पनपूर्वकत्वोक्तेः प्रयोगवचनेन विधिशक्त्यवधारणायोगात्प्रयोगवचनार्थवादयो-र्विधित्वद्योतकमात्रत्वं गत्वा प्रयोगवचनादिभ्यो विधिशक्तिर्व्याख्यातेत्युक्तम्।

स्मृतिभिः प्राप्तिं पूर्वपक्षोक्तामनुभाषणपूर्वं परिहरति—**यत्त्विति**। नित्ययज्ञोपवीतीति स्मृत्युक्तस्य ब्रह्मसूत्रस्य पुरुषधर्मत्वेपि यज्ञोपवीतिना कर्त्तव्यमिति स्मृत्युक्तस्य ब्रह्मसूत्रस्य कर्मार्थत्वादनुवादोपपत्तिमाशङ्क्यो, उपव्ययत इत्यस्य वासोविन्यासविशेषविधायित्वसूचनाया-पूर्वोक्तिः। सिद्धान्तमुपसंहरति—**तस्मादिति**। यदादि शिष्टाकोपाधिकरणभाष्यभङ्गवार्त्ति-कोपव्ययतइत्यस्य ब्रह्मसूत्रविधायिताऽभ्युपेयते, तदाप्यस्य विधेर्दर्शपूर्णमासधर्मभ्रेषे याजुर्वेदिकं प्रायश्चित्तमिति प्रयोजनस्य कर्त्रधिकरणे तुल्यन्यायतया वक्ष्यमाणत्वान्नानर्थक्यमित्याह—**अस्य चेति**। परमार्थतस्त्वन्यथोपवीतम्। अन्यथायज्ञोपवीतम् उपवीतं हि कर्त्तुर्वासोविन्यासो, यज्ञोपवीतं तु सूत्रस्य विन्यासविशेषः तत्समाचारतः सर्वकर्मार्थं प्राप्तम्। उपवीतं तु प्रकरणा-द्दर्शपूर्णमासयोरेव यज्ञोपवीतेन चास्याविरोधात्समुच्चय इति टुप्टीकायां वार्त्तिककृद्वोक्त्वा

सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यादि(३-१-२१)त्यत्र च कर्त्तुश्च वासोविन्यासमात्रं गुणो भवत्युपवीतं नामेति भाष्यकृतोक्तत्वान्नानेन ब्रह्मसूत्रं विधीयते। शिष्टाकोपाधिकरणे तु यज्ञोपवीत्येवाधीयीताध्यापयेद्यजेत याजयेद्वेत्यनेनैव च ब्रह्मसूत्रस्य श्रौतत्वसिद्धावप्यभ्युच्चयायैतदुदाहृतम्।

अधिकरणत्रयवादिमतेनैतदेव सूत्रं यज्ञोपवीती हीत्युदाहरणे पूर्वपक्षोक्तचर्थत्वेन व्याख्यातुमारभते—**एवं चेति**। सूत्रस्य पूर्वपक्षोक्तचर्थत्वसूचनायाह—**तत इति**। उपव्ययत इत्यस्याप्राप्तवासोविन्यासविषयत्वाद्विधित्वोपपत्तावपि यज्ञोपवीतीत्यस्य स्मृतिप्राप्तब्रह्मसूत्रविषयत्वान्न विधितेत्याशङ्क्यास्यापि वासोविन्यासरूपप्राचीनावीतसाहचर्याद्वासोविन्यासविषयत्वसूचनायैतद्वाक्योक्तस्य यज्ञोपवीतस्य ब्रह्मसूत्रत्वाभावेनापूर्वत्वादप्राप्तत्वादित्येवं सूत्रं व्याख्येयमित्याह—**पूर्ववदेवेति**। विधित्वे च प्रकरणस्थानामग्निहोत्रदेवतानां सायम्प्रातःकालीनानामग्निसूर्यप्रजापत्याख्यानां देवेभ्यइत्यनेनोक्तेः प्रकरणबहुवचनयोरनुग्रहः अनुवादत्वे त्वप्रकृतकसान्नाय्यदेवतोक्तेर्बाध इत्याह—**एवं चेति**। हिशब्दयोगेनानुवादसारूप्याद्विधित्वायोगमाशङ्क्याह—**तस्मादिति**। विधित्वसिद्धान्तोक्तचर्थत्वेनैतत्सूत्रव्याख्याने विधित्वापदादायोत्तराधिकरणारम्भो युज्यते। पूर्वपक्षोक्तचार्थत्वेन त्वेतत्सूत्रव्याख्यानेऽनुवादत्वसिद्धान्तमनुक्त्वोत्तराधिकरणान्तरारम्भो न प्रयुज्येतेत्याशङ्क्य, दोहयतीत्याख्यातयुक्तस्यापि प्रतीयमानविध्यन्तरैकवाक्यत्वस्यानुवादत्वे सिद्धन्तिते ये पुरउदञ्च इत्याख्यातशून्यस्य प्रतीयमानविध्यन्तरैकवाक्यत्वस्यानुवादत्वे सिद्धन्तिते ये पुरउदञ्च इत्याख्यातशून्यस्य च विधित्वनिरासं विनाऽऽख्यातयुक्तस्य विधित्वनिरासाशक्तेरन्तरागर्भिणीत्वान्मध्येधिकरणान्तरोपपत्ति सूचयितुमाह—**एतस्मिंश्चेति** ॥१२॥

### तृतीय 'वत्सविदित' अधिकरण

भा० प्र०—दर्शपूर्णमास प्रकरण में श्रुति में कहा गया है—"नानृतं वदेत्" (तै० सं० ६।१।१) मिथ्या नहीं बोलना चाहिए। यह निषेध प्रकरण के अनुसार क्रत्वर्थ है। अर्थात् दर्शपूर्णमास प्रकरण के धर्म का अङ्ग है या पुरुषार्थ अर्थात् पुरुष धर्म है—यह संशय है। इस प्रसङ्ग में पूर्वपक्षी का कहना है कि—यह पुरुषार्थ है अर्थात् यह निषेध पुरुष के धर्म के रूप में विहित है। कारण; "अनृतं न वदेत्" इसका अर्थ है "यत् पुरुषार्थमनृतवदनं न कुर्यात्" पुरुषार्थ जो अनृतवदन = मिथ्या बोलना वह नहीं करना चाहिए। प्रकृत में अनृतवदन निषिद्ध होने से अनृतवदन उक्त निषेध का प्रतियोगी है, क्योंकि जिसका निषेध होता है वही उस निषेध का प्रतियोगी होता है। निषेध का प्रतियोगी जो अनृतवदन यह पुरुष का = मनुष्य का धर्म होने से इसका जो निषेध है; वह भी पुरुष धर्म के रूप में ही विहित होगा। क्योंकि 'वदेत्' इस स्थल में आख्यात कर्ता का वाचक है। क्योंकि, आख्यात से कर्ता ही प्रतीयमान होता है। जो जिससे नियमित रूप से प्रतीत होता है, वही उसका वाचक होता है। अतः, 'वदेत्' इस पद का आख्यातांश यदि कर्ता का वाचक होता, तो उसका प्रकृत्यर्थ

'वदन' बोलना ('वदेत्' में 'वद्') धातु प्रकृति है एवं यात् प्रत्यय आख्यात है, प्रकृति और प्रत्यय मिलकर 'वदेत्' यह एक पद होगा है।) इसको पुरुष का धर्म ही कहना उचित है। क्योंकि, वैयाकरणों की दृष्टि में 'प्रकृति प्रत्ययोः प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन", अर्थात् प्रकृति एवं प्रत्यय ये दोनों मिलकर प्रत्यय का अर्थ ही प्रकट करते हैं और इन दोनों में प्रत्यय की प्रधानता के रूप में स्वार्थ का प्रकाश करते हैं, अर्थात् प्रत्यय ही प्रधान होता है और प्रकृत्यर्थ गुणभूत होता है। अतः, वदन=कथन जब पुरुष का धर्म है, तब उस वदन का निषेध वह भी युक्ति के अनुसार पुरुषार्थ अर्थात् पुरुष का धर्म ही होना चाहिए, किन्तु वह क्रत्वर्थ=क्रतु का धर्म=अङ्ग नहीं हो सकता है, कारण, ऐसा होने पर मिथ्यावदन पुरुष धर्म एवं उसका निषेध क्रतु धर्म होने से परस्पर भिन्न विषय हो जायेगा। निषेध यदि निषेध्य का समानविषयक न होते अर्थात् दोनों का विषय भिन्न हो, तो बाध्यबाधक भाव न होने से इस निषेध के द्वारा मिथ्या वदन का निषेध नहीं होगा, कारण, क्रतु मध्य में मिथ्यावदन की प्रसङ्ग ही नहीं है अर्थात् प्राप्ति ही नहीं है। जिसकी प्राप्ति नहीं रहती है, उसका निषेध हो ही नहीं सकता है। अतः दर्शपूर्णमास में पठित होने से इस निषेध के प्रकरण के अनुसार क्रत्वर्थ नहीं हो सकता है, वरन् इस स्थल में पुरुषवाचक आख्यात श्रुति के द्वारा प्रकरण का बाध ही होगा। ऐसी स्थिति में पुरुषार्थ होकर जहाँ मिथ्यावदन प्राप्त होगा उसका निषेध करेगा, यह केवल क्रतु मध्य में मिथ्याभाषण का निषेध की अवगति नहीं करायेगा।

यदि यह कहा जाय कि अमृतवदन निषेध उपनयन काल में स्मृति विहित है, कारण, उपनयन के समय स्मृति के अनुसार मनुष्य को मिथ्या बोलने के लिए निषेध किया गया है। अतः, उसके बाद के समय में क्रतु मध्य में यह पुनः किस प्रकार विधि हो सकती है? कारण, अप्राप्त में ही विधि होती है, किन्तु यह उपनयन काल से प्राप्त होने से पुनः इसकी विधि नहीं हो सकती है। ऐसी स्थिति में कहा जा सकता है कि उपनयनकाल में निषेध की स्मृति ही इस श्रुति की मूल है। किन्तु स्मृति के प्रामाण्य के लिए श्रुति को अनुवादी कहना उचित नहीं है। क्योंकि, श्रुतिमूलक ही स्मृति में प्रामाण्य होता है। इसीलिए कुमारिल भट्टपाद ने कहा है कि—

सर्वा तावत् स्मृतिर्नित्यं श्रुतिमूलप्रमाणिका।
तेन स्मृत्यर्थवाचित्वान्नानुवादो भवेदसौ॥

जब सभी स्मृतियाँ श्रुति को मूल रूप में कल्पना करके ही प्रमाण होती है, तब यह श्रुतिवाक्य स्मृति विहित अर्थ का ही बोधक होकर यह अनुवाद होगा—यह नहीं कहा जा सकता है।

इस श्रुतिवाक्य को अनुवाद मानने पर दो प्रमाणहीन विषयों का आश्रयण करना होगा; स्मृतिवचन के मूलीभूत इस श्रुति का परित्याग करना होगा एवं उक्त स्मृति के

प्रामाण्य के लिए उसके मूलीभूत एक अन्य श्रुति की भी कल्पना करनी पड़ेगी। किन्तु प्रत्यक्ष श्रुति का परित्याग कर इस रूप में अप्रामाणिक विषय का आश्रयण करना युक्तिसङ्गत नहीं है, अतएव यह अमृतवदन निषेध पुरुषार्थ है। यह प्रथम पूर्वपक्ष है।

इसके समाधान में अन्य एक पक्ष ने कहा है कि अमृतवदन का निषेध शुद्ध पुरुषार्थ नहीं है अर्थात् पुरुष धर्म नहीं है, वरन् यह क्रतु प्रयुक्त पुरुष का धर्म है। क्योंकि, ऐसा स्वीकार करने पर श्रुति और प्रकरण दोनों का ही प्रामाण्य अव्याहत रहता है। प्रथम पूर्वपक्षी ने जो इस श्रुतिवाक्य को उपनयनकालीन मिथ्याभाषण निषेध का मूल कहा है—वह ठीक नहीं है। कारण, स्मृति एवं श्रुति यदि समान विषयक ही तो उस श्रुति को उस स्मृति का मूल कहा जाता है। प्रकृत में अमृत-वाक निषेध विषयक श्रुति और उपनयनकालीन मिथ्याभाषण प्रतिषेध-स्मृति दोनों समानविषयक नहीं हैं। क्योंकि, उपनयनकालीन मिथ्याभाषण प्रतिषेधविषयक स्मृति कहती है—उपनयन से लेकर मरणपर्यन्त मिथ्या नहीं बोलना चाहिए और दर्शपूर्णमास प्रकरण की "नानृतं-वदेत्" यह श्रुति का अर्थ है कि क्रतु मध्य में मिथ्या नहीं बोलना चाहिए। अतः, यह श्रुतिवाक्य उक्त स्मृति का मूल नहीं हो सकता है। इसको उक्त स्मृति का मूल न होने पर इसको अनुवाद ही मानना पड़ेगा। कारण, उपनयनकाल से मृत्युपर्यन्त स्मार्त प्रतिषेध का विषय होने पर क्रतुमध्यगत मिथ्यावदन भी उसी के मध्य में हो जाने से उक्त श्रुतिवाक्य प्राप्त विषयक होने से अनुवादी ही होगा। इसलिए, इसके क्रत्वर्थ और पुरुषार्थ होने पर भी यह अनुवाद ही होगा। द्वितीय पूर्वपक्ष।

इसके उत्तर में अन्य पूर्वपक्षी का कहना है कि "अकर्म क्रतुसंयुक्तं नित्यानुवादः स्यात्" यह अकर्म अर्थात् क्रतुप्रकरणपठित अनृतवदननिषेध नित्यानुवाद है। यह क्रतु-युक्त पुरुष का धर्म भी नहीं है। वरन् यह प्रकरण के अनुसार क्रतुधर्म अर्थात् क्रत्वर्थ है। कारण, पुरुष स्वार्थ के लिए अर्थात् अनर्थ परिहार के लिए अनृतवदन का परित्याग करता है। यज्ञ में अनृतवदन परिहार भी प्रयाजादि के समान क्रतुमध्य में प्रकरण के अनुसार ही प्राप्त है और वह प्रसङ्ग सिद्ध है। क्योंकि, पुरुष को छोड़ने पर यज्ञ में मिथ्याभाषण सम्भव ही नहीं है, कारण, यह पुरुष का ही धर्म है और पुरुष के पक्ष में ही मिथ्याकथन निषिद्ध है, इसलिए क्रत्वर्थ होने पर विधि नहीं है वरन् नित्यानुवाद ही है, कारण, "संयोगात्"—उपनयनकालीन स्मृति में ही इसकी प्राप्ति होती है।

"क्रतुसंयुक्तम् अकर्म" = क्रतुसंयुक्त अर्थात् क्रतुप्रकरण में पठित अकर्म अर्थात् 'न अनृतं वदेत्' इत्यादि निषेध वाक्य, "नित्यनुवादः स्यात्" = नित्यानुवाद होगा, "संयोगात्" = क्योंकि उसका संयोग अर्थात् अन्य वचन रहने से प्राप्ति रहती है ॥१२॥ तृतीय पूर्वपक्ष।

## विधिर्वा संयोगान्तरात् ॥ १३ ॥ सि०

शा० भा०—विधिर्वाऽयं दर्शपूर्णमासयोः,—नानृतं वदेद् इति, नानुवादः। कुतः ? संयोगान्तरात्। नियमानुष्ठानेन पुरुषस्य संबन्धः स्मर्यते। पदार्थप्रतिषेधेनेह संयोगः पुरुषस्य। कथमन्यच्छ्रूयमाणमन्यस्यानुवादो भविष्यति। तस्माद् विधिः प्रतिषेधस्यायम्। आह। गृह्णीम एतद्विधिरिति। पुरुषधर्म इति तु गृह्णीमः। पुरुषप्रयत्नस्य श्रुतत्वात्। अत्र ब्रूमः। सर्वेष्वाख्यातेषु क्रियानुष्ठानं श्रूयते, न कारकं किंचित्। कथमेतद्गम्यते ? प्रत्ययात्। यतः क्रियामनुष्ठेयां प्रतीमः। ननु कर्तारमपि प्रतियन्ति। सत्यं प्रतियन्ति, न तु शब्दात्। कुतस्तर्हि ? अर्थात्। यदा क्रियाऽनुष्ठातव्या विधीयते, तदाऽर्थात्कारकव्यापारो गम्यते। यश्चार्थाद्गम्यते, न स श्रौतः। यश्च न श्रौतो न स वाक्याद्गम्यते। कथमसौ प्रकरणं बाधिष्यते। आह 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इत्याचार्योपदेशात्कर्ता शब्दार्थः, कर्म चेत्यवगम्यते। कर्तरि शप्, कर्मणि यगिति प्रत्ययार्थं कर्तारं कर्म च समामनन्त्याचार्याः। तस्माच्छब्दार्थः कर्ता कर्म चेति। उच्यते। नाऽऽचार्यवचनात्सूत्रकारवचनाद्वा शब्दार्थो भवति। प्रत्ययादसौ गम्यते। अनुष्ठेया च क्रिया प्रतीता सती कारकाणि प्रत्याययतीत्यवगतमेतत्। अपि च नैव कर्ता प्रत्ययार्थः कर्म वेत्याचार्या आहुः।

ननु कर्तरि कर्मणि च लकारः श्रूयते। नासौ कर्तरि कर्मणि वा श्रूयते किं त्वेकस्मिन्नेकवचनं, द्वयोर्द्विवचनं, बहुषु बहुवचनमिति। तत्रापरं वचनम्। तत्रैवमभिसंबन्धः क्रियते-एकस्मिन् कर्तरि, द्वयोः कर्त्रोः, बहुषु कर्तृष्विति। एवं कर्मण्येकत्वादिसंबन्धः। तत्र नैवं भवति। कर्तरि भवत्येकस्मिश्चेति। कथं तर्हि। कर्तर्येकस्मिन्नेकवचनं कर्तुरेकत्व इत्यर्थः। एवं द्वित्वे बहुत्वे, कर्मणि च। एवं वर्ण्यमाने लौकिकन्यायानुगतः सूत्रार्थो वर्णितो भवति। सूत्राक्षराणि च न्यायानुगतानि भवन्ति। आगमोऽपि चायमेव-यदेकत्वादयो विभक्त्यर्थाः तदा कर्मादयो विशेषणत्वेनेति।

नन्वेतदप्यस्ति। यदा कर्मादयो विभक्त्यर्थास्तदैकत्वादयो विशेषणत्वेनेति। उच्यते। अर्थप्राप्ता हि कर्मादयस्ते न भवन्ति शब्दस्याभिधेयभूताः। न त्वेकत्वादयोऽर्थात्प्राप्नुवन्ति। तेन ते शब्दार्थभूताः। तस्माद्यद्यपि विशेषणमेकत्वादयः तथाऽपि विशेषणमेवाभिधीयते। यथा, 'हिरण्यमालिन ऋत्विजः प्रचरन्ति' इति हिरण्यमालित्वं विशेषणत्वेन, तथाऽपि तदेव विधीयते। तस्मात्कर्तुरेकत्वं शब्दार्थो, न कर्ता।

ननु कर्तुरेकत्वादेकवचनं, कर्तुर्द्वित्वाद् द्विवचनं, कर्तुर्बहुत्वाद्बहुवचनम्। तेन नूनं कर्ता शब्दार्थ इति गम्यते। उच्यते। नैतदनुमानाच्छक्यम्। कर्ताऽनु-

ष्ठेयक्रियावगमादेवावगम्यत इति प्रत्यक्षम्। तत्तावत्केनचिन्न बाध्यते। एकवचननिर्देशे कर्त्रैकत्वं गम्यते, द्विवचननिर्देशे कर्तुर्द्वित्वं, बहुवचननिर्देशे कर्तुर्बहुत्वम्। तदपि प्रत्यक्षम्। कतरदत्रानुमानं बाधितुमर्हतीति यथाऽऽकृतिवचने शब्दे द्विवचने द्रव्यभेदोऽवगम्यते, एकवचने द्रव्यैकत्वम्, एवमिहापि द्रष्टव्यम्।

तस्मान्न श्रौतः। न चेच्छ्रौतो न प्रकरणं बाधिष्यते।

यत्तु पुरुषप्रयत्नोऽनर्थको भवति। कर्मधर्मपक्षे प्रयोगवचनेन कर्तव्यतावचनादिति। तदुच्यते। अङ्गं सत्प्रकरणेन गृह्येत। न चाविहितमङ्गं भवति। तस्मादङ्गत्वाय विधातव्यमस्मिन्नपि पक्षे। अतो मन्यामहे प्राकरणिकस्यायं निषेध इति। तस्मादङ्गं यदनृतं, तन्न वाच्यमिति। तेन यत्संकल्पितं, तदङ्गं, तदेव कर्तव्यम्। व्रीहिमयं संकल्प्य न यवमयः प्रदेयः। आह। यदोभयोरपि पक्षयोर्नानृतं वदितव्यं, तदा को विचारेणाऽर्थं इति। उच्यते। पूर्वस्मिन्पक्षे पुरुषधर्मः। तत्र भ्रंशे स्मार्तं प्रायश्चित्तम्। सिद्धान्ते दर्शपूर्णमासधर्मः। तत्र भ्रंशे याजुर्वेदिकं प्रायश्चित्तम्॥ १२॥ सिद्धान्तः।

इति चतुर्थं कर्त्रधिकरणम्॥ ४॥

त० वा०—केवलपुरुषार्थत्वपक्षे तावद्भाष्यकारः संयोगान्तरं वर्णयति। स्मृतौ हि 'सत्यं ब्रूयात्' इति धर्माय सत्यनियमः श्रूयते। 'नानृतं वदेत्' इति त्वनृतप्रतिषेधः। भिन्नौ चैतावर्थौ। न चान्यच्छ्रूयमाणमन्यस्य श्रूयमाणस्यानुवादो भवति। तस्माद्विधिः।

ननु द्वय्येव पुरुषस्य वाक्यप्रवृत्तिः, सत्यवचनम्। अनृतवदनं च। तत्र यदा सत्यं नियतं[1] तदाऽर्थादेवानृतं प्रतिसिद्धं भवतीत्यनुवादत्वं प्राप्नोत्येव। नैतदेवम्। कुतः? संयोगान्तरादेव। स नामानुवादो भवति योऽत्यन्तसमानार्थत्वेनावधार्यते। अस्ति च विधिप्रतिषेधयोः फलभेदादर्थभेदः। कथम्?

विधिः प्रवर्तमानो हि श्रेयःसिद्ध्यै प्रवर्तते।
प्रतिषेधः पुनः पापान्निवर्तयति भेदतः॥

'सत्यं ब्रूयात्' इत्यस्यां हि भावनायां प्रयोजनाकाङ्क्षा सर्वविधीनां पुरुषार्थफलत्वात्स्वर्गादिना निवर्त्यते। तेनैषोऽर्थः—सति वचनद्वयेन व्यवहारे सत्यवचनेन व्यहरन्नभ्युदयेन संबध्यत इति। तत्र सत्यं ब्रुवाणस्य स्वर्गो भवति। अनृतवादिनस्तु न गुणो न दोषः। तथा 'नानृतं वदेत्' इत्यनेनापि प्रतिषेधे नानृतवदनान्नरकप्राप्तिर्भवति। सत्यवदनात्तु न दोषो न गुणः। तस्मादर्थभेदादुभयोरप्यपुनरुक्ततया विधित्वम्।

---

१. क० तन्नियतं।

आह। भवदेतत्संयोगान्तरम्। यदि स्मृतौ सत्यं ब्रूयादित्येतावन्मात्रमेवोच्येत्। तस्यां तु सत्यवचनविधिवदनृतप्रतिषेधोऽपि भेदेन स्मर्यते। तस्मान्न संयोगान्तरमिति उच्यते।

प्रजापतिव्रतस्थत्वात्तत्रानीक्षणयुक्तितः।
पर्युदासेन सत्यस्य विधिरित्यवगम्यते॥

अननृतं हि वदेदित्येवं हि तत्रापि नियम्यते। ततश्चास्त्येव संयोगान्तरम्। न हि दार्शपौर्णमासिके कश्चित्पर्युदासहेतुरस्ति, व्रतशब्दप्रयोगो, विकल्पप्रसक्तिर्वा। शास्त्रप्राप्तप्रतिषेधेषु हि विकल्पो। नार्थप्राप्तिपूर्वकेष्विति वक्ष्यति। तस्माद्विधिरिति।

यदा त्वेवं प्रत्यवस्थीयते यथा प्रजापतिव्रतव्यतिरेकेणाप्यवमादयः प्रतिषेधाः स्मृतिषु सन्तीति, तदैवं संयोगान्तरं व्याख्यातव्यम्।

स्मार्तः पुरुषमात्रस्य संयोगः स्वार्थसिद्धये।
अयं तु क्रतुसंयुक्तपुरुषार्थः फलान्तरे॥

नन्वेतेनैव हेतुना सामान्यप्राप्त्यपेक्षया विशेषस्यानुवादत्वं युक्तम्। नैतदस्ति। पूर्ववदेव फलभेदात्। यो हि स्मार्तोऽनृतप्रतिषेधस्तेनैतावदवगतम्। आत्मदोषपरिहाराय पुरुषेण नानृतं वदितव्यमिति। तत्र यदा दर्शपौर्णमासस्थोऽपि तदतिक्रमं करोति तदा बाह्यातिक्रमवदस्य स्वयं प्रत्यवायमात्रं स्यान्न कर्मफलप्रतिबन्धः। न हि शुद्धपुरुषधर्मातिक्रमैः क्रतवः प्रत्यवयन्ति तथा हि।

यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्।
न क्रतोस्तत्र वैगुण्यं यथाचोदितसिद्धितः॥

क्रतवो हि स्वसंबन्धिनौ विधिप्रतिषेधावपेक्षमाणास्तदतिक्रमे सति विगुणा भवन्ति ये पुरुषगता विधिप्रतिषेधास्ते क्रत्वन्तरगता इवास्य सदसद्भावयोरविशिष्टाः। न हि तेषु गुणबुद्धिरुत्पन्ना, येनातिक्रमे वैगुण्यबुद्धिः स्यात्। तेन दर्शपौर्णमासयोरनृतं वदन्, नरकं च प्राप्नुयात्, दर्शपूर्णमासफलं चाविकलमेवाऽऽप्नुयादिति च स्मृत्यर्थः। श्रौतः पुनः प्रकरणयुक्तपुरुषधर्म इत्यत्रैषोऽर्थो विज्ञायते। वर्जितानृतवचनकेन पुरुषेण क्रतौ दर्शपौर्णमासौ फलं साधयत इति। प्रकरणसामर्थ्याद्धि पुरुषगतमपूर्वसाधनत्वं लक्षयित्वाऽनृतं प्रतिषिद्धम्। अतस्तदतिक्रमे दर्शपूर्णमासापूर्वमेव वैगुण्यान्न स्यात्। न तु पुरुषस्यैव कश्चित्प्रत्यवायः। न हि तदानीं प्रत्यवायः कल्प्यमानः स्वतन्त्रपुरुषसंबन्धित्वेन कल्पयितुं शक्यते। तस्मादस्ति संयोगान्तरमिति विधिः। एवं शुद्धक्रतुधर्मपक्षेऽपि क्रतुपुरुषप्रत्यवायविशेषात्संयोगान्तरं व्याख्येयम्। तेन नित्यानुवादस्तावन्न भवति। यस्तु

क्रतुधर्मत्वतद्गतपुरुषधर्मत्वयोर्विशेषस्तमुपरिष्टाद्वक्ष्यामः। उभयथाऽपि विधिसिद्धेरिदानीं नोपयुज्यत इति नोच्यते।

परस्त्वाह। **गृह्णीम एतद्विधिरिति।** पूर्वोक्तेनैव कारणेन पुरुषधर्म इति वदामः। उभाविदानीं पूर्वपक्षावासाते। यश्च पुरुषमात्रधर्म एव सत्यविधेः संयोगान्तरत्वेन, यश्च क्रतुयुक्तपुरुषधर्म इति।

तत्राप्युत्तरम्।

सर्वाख्यातेषु कर्तॄणामिष्टा नैवाभिधेयता।
या तु तेभ्यः प्रतीतिः सा संयोगान्तरतो भवेत्॥

**भावना आख्यातवाच्येति स्वसिद्धान्तवर्णनम्**

सर्वत्रैव तावच्छब्दादुच्चरितादनेकोऽर्थो गम्यते। न च तावता सर्व एवाभिधेयो भवति। तद्भावभावित्वान्यथानुपपत्त्यधीनत्वाद्वाचककल्पनायाः। स नामार्थोऽभिधीयते, यत्र शब्दस्य वाचकशक्तिः कल्प्यते। क्व चासावदृष्टा सती कल्प्यते, यत्र तत्कल्पनामन्तरेण प्रतीतिप्रयोगौ नावकल्पेते। यत्र त्वन्यविषययैव शक्त्याऽकल्पितया तयाऽन्यत्रापि तौ सिध्यतः तत्रानुपलब्ध्या शक्त्यभावः प्रतीयते। यथाऽऽकृतिशब्दानां व्यक्तौ, सिंहादिशब्दानां च माणवकादौ तदिह पचत्यादिशब्दोच्चारणादियन्तोऽर्था गम्यन्ते, भावनाधात्वर्थकर्तृतत्संख्यापुरुषोपग्रहकालविशेषाः। तेषां तु कः शब्दः, कोऽर्थादिति विभागो न ज्ञायते। लक्षणं चेतावद्योऽर्थान्न, गम्यते स शब्दार्थ इति। भावनायास्तावन्न शब्दव्यतिरिक्तं प्रत्यायकं पश्यामः। तत्र कालादीनां व्यभिचारित्वात्। संभवन्ति हि विनाऽपि भावनया कालसंख्यादयः। कर्तृधात्वर्थाभ्यामव्यभिचाराद्गम्यत इति चेत्? न कृदन्तवदप्राधान्यप्रतीतिप्रसङ्गात्। यदि कर्त्रा धात्वर्थेन च भावना गम्येत, ततः पाचकादिशब्देष्विव तिरोहितस्वरूपा गम्येत। प्राधान्यप्रत्ययात्तु शब्दार्थत्वाध्यवसानम्। न च तया कालादयः प्रतिपाद्यन्ते। कालान्तरसंख्यान्तरधात्वर्थान्तरपुरुषो ग्रहान्तरेष्वपि दृष्टत्वात्। एवं कालसंख्यादीनां परस्परव्यभिचारादेवागमकत्वं वाच्यम्।

यादृशश्च गुणभूतः कर्ताऽत्रावगम्यते, न तादृशेन विना भावनोपपद्यत इत्यर्थापत्त्या अनुमानेन वा शक्ता गमयितुम्। कारकान्तरेऽपि संबन्धेन व्यभिचाराद[1]शक्नोति चेत्? न। अन्यसंबन्धमात्रात्मकव्यभिचारानभ्युपगमात्। द्विधा ह्येकः संबन्ध्यनेकेन संबध्यते, कश्चित्संबन्ध्यन्तरं परित्यजन्, कश्चित् पूर्वापरित्यागेन। तत्र यः परित्यज्यान्यत्रान्यत्र वर्तते, स व्यभिचारादगमको

---

१. ज० अशक्तेति।

भवति । यथोर्ध्वत्वं स्थाणुपुरुषयोः । न च तत्रान्यसंबन्धः कारणं व्यभिचारस्य । किं तर्हि ? तेन विनाऽपि प्रवृत्तिः । यस्त्वन्यत्रापि वर्तमानः पूर्वाविगतसंबन्ध्यपरित्यागेनैव वर्तते, यथा शिंशपात्वं वृक्षत्वपार्थिवत्वद्रव्यत्वसत्त्वेषु । न तस्यानैकान्तिकत्वं, सर्वेषु प्रत्यायनशक्त्यविघातात् ।

**भावनाया अव्यभिचारित्ववर्णनम् तिङ्वाच्यसंख्यान्वयश्च कर्तुरिति ।**

भावना च कारकेषु वर्तमाना न विकल्परूपेण वर्तते । किं तर्हि ? सर्वेषु युगपत् । न चेदृशं व्यभिचारित्वमुच्यते । अन्यत्रापि वृत्तौ पूर्वापरित्यागात् । अतः सर्वकारकाण्यसंशयं गम्यन्ते । यत्रापि नामाकर्मकत्वात्संप्रदानापादानयोस्तु बाह्यतरत्वादप्रतीत्या व्यभिचार आशङ्क्यते, तत्रापि तेषामेव न तु कर्तुः कदाचित् । न हि क्वचित्कर्तृरहिता काचित्क्रिया विद्यते । तन्मूलत्वात्क्रियाप्रवृत्तेः तदव्यभिचारेण चेह सुतरां प्रयोजनम् । यावदितराणि व्यभिचरन्ति तावत्केवलकर्तृप्रत्यायनसामर्थ्यमस्याः स्फुटतरं व्यज्यते ।

समर्थनीय एव चैषोऽर्थः संख्यासंबन्धे कर्तुरसाधारणतासिद्ध्यर्थम् । आसितिष्ठत्यादिषु करणानपेक्षणाच्चलनपतनादिषु[1] चाऽऽधारानाश्रयणादकर्मकेषु कर्माभावात्, आसनस्थानवचनादिषु संप्रदानापादानाभावात्कर्तैव सर्वभावनास्वेकान्तसंनिहित इत्यसाधारणत्वेन तिङ्वाच्यया[2] संख्यया संभन्त्स्यते । कर्तृविशिष्टा चेह संख्या गम्यते न कारकान्तरगतेति सर्वेषां प्रत्यक्षम् । तत्र यदि कश्चिद्वदेत्समाने सर्वकारकाणां गम्यमानत्वे कस्मात्कर्त्रैव संख्यासंबन्धो न करणादिभिरपीति । स वक्तव्यो यथैव भवतः इति । स चेद ब्रूयान्मम कर्ता संख्या चैकेन शब्देनोपात्तौ परस्परं नियम्येते इति, तेनानभिधेयेभ्यो बाह्येभ्यो निवृत्ता संख्या कर्तर्येव वर्तिष्यत इति ।

**समाने कारकत्वे कर्तुरभिधाने शक्तिरेव नियामिका इति निरूपणम्**

तत्रैवं प्रत्यवस्थेयम् । अथ समाने कारकत्वे किं कारणं भवतः कर्तैवाभिधीयते, न कारकान्तराणीति । तत्रावश्यं फलावगम्या शब्दशक्तिरेव शरणं प्रतिपत्तव्या यतस्तद्विषया बुद्धिरुत्पद्यते इति । सा चास्मत्पक्षेऽप्यविशिष्टा ।

> यतः कर्तृगतां संख्यां प्रतीमः केवलामतः ।
> तस्मादेतावती शक्तिस्तिङां कार्यात्प्रतीयते ॥

समाने भावनया कारकोपस्थाने कः शक्तिनियमे हेतुरिति चेत् । उक्तं यस्तव समाने कारकत्वे कर्त्रभिधाने शक्तिनियमहेतुरिति । न च शक्तयः पर्यनुयुज्यन्ते यथाकार्यं व्यवस्थयाऽनुगन्तव्या इत्युक्तम् ।

---

१. क० भवनपतनादिषु । २. क० तद्वाच्यया ।

अपि च भवता कर्त्रभिधाने शक्तिं कल्पयित्वा भूयस्तद्गतसंख्याभिधाने शक्तिः कल्पयितव्या। नन्वेकप्रत्ययोपादानादेव तत्सिद्धेर्न कल्पनान्तरमाश्रयिष्यते। कुतः खल्वनेकशक्तिकल्पनया विना नियमः सिध्यति। अवश्यं ह्येतदपि कल्पनीयं यत्समाने संख्याभावत्वेऽभिहितस्यैव संख्यामाह नानभिहितस्य। शक्या हि विनैतदेव विपरीतमप्युचेत यतश्चाभिधीयते कर्ता तत एवास्य न वक्तव्या संख्या वरमनभिहितानामेतावता संविभागः कृत इति। न चाभिहितत्वं केवलं व्यवस्थाकारणं भवति। तेनैव प्रत्ययेनाभिहितानामपि भावनाकालोपग्रहपुरुषविशेषाणां संख्यासंबन्धोऽभिधीयते, तद्गम्यमानेषु कारकान्तरेष्वप्यविशिष्टम्। अथोच्येत, अस्ति तेषां संख्यासंबन्धयोग्यत्वं, येन शब्दान्तराभिहितया संवध्यत इतितद्भावनादिष्वपि भावनादिशब्दातिभिहितेषु समानम्। अथेह तेषामसत्त्वभूतत्वादयोग्यत्वमिति। तदयुक्तम्। असत्त्वभावस्यैव पर्यनुयुक्तत्वात्। न हि संख्यासंबन्धायोग्यत्वादन्यदसत्त्वभूतत्वम्। तत्रैतदेवाभ्युपगन्तव्यम्। तादृशेन शब्देनाभिहिता संख्या भावनादयो वा न परस्परं संबन्धुं शक्नुवन्तीति। तच्च तुल्यम्। एतदभिहितायाः कारकान्तरसंबन्धायोग्यत्वात्। कथमयोग्यत्वमिति चेत्? शब्दशक्तिवशेन भावनादिष्विवेत्युक्तम्।

ननु चाऽऽख्याताभिहितसंख्यायोग्यत्वं कर्मणो दृष्टमिति तस्य संबन्धः प्राप्नोति। यथा पच्यत ओदन इति। नैतदस्ति। कुतः?

यथैव क्वचिदुक्त्वाऽपि कर्मान्यत्र न वक्ष्यति।
तथैवैतस्य संख्याऽपि शब्दशक्तेर्व्यवस्थिता॥

यो हि मन्यते कर्मणः क्वचित्तिङभिहितसंख्यार्हत्वं दृष्टम्। अतोऽन्यत्रापि तेन भवितव्यमिति, तस्य क्वचित्तिङन्ताभिधेयत्वदर्शनात्सर्वत्राभिधेयत्वमपि स्यात्। अथ तत्कथं चिद्व्यवतिष्ठते, ततः संख्याऽपि तथैव व्यवस्थास्यत इत्यचोद्यमेतत्।

### कर्तृविशिष्टसंख्याभिधानपक्षस्य निरासः

तत्रैतत्स्यात्। कर्तृविशिष्टा संख्याऽभिधीयमाना न शक्या कर्तारमनभिधाय वक्तुमिति। उच्यते।

विशिष्टग्रहणं नेष्टमगृहीतविशेषणम्।
अभिधानाभिधाने तु न केन चिदिहाऽऽश्रिते॥

अगृहीतविशेषणे तदनुरक्ता विशेष्यबुद्धिर्नोपजायत इति, तद्ग्रहणमादर्तव्यम्। न त्वनभिहितविशेषणत्वेन किंचिद्दुष्यति। यदि नामानभिहितमपि विशेषणं केनचिदन्येन प्रत्याय्यमानं विशिष्टप्रत्ययोत्पादनाय पर्याप्तं भवति, किं तत्राभिधानानुरोधेन। अस्ति चेह भावनयैव प्रत्यायितस्य कर्तुर्विशेषणत्वशक्तिरिति,

नाभिधानमपेक्षते। सर्वत्र विशिष्टप्रत्ययेषु चैतदवस्थितम् न चेदन्येन शिष्टा इति। तत्र विशिष्टप्रत्यये जाते विशेषणविशेष्ययोः किं शब्देनोपात्तं किमन्येनेति परीक्षायां यत्र यत्र विशेष्यमन्यतः सिध्यति तत्र विशेषणे शब्दव्यापारः यत्र विशेषणमन्यतो लभ्यते, तत्र विशेष्ये। सर्वत्र च विशिष्टप्रत्ययादेवार्थापत्त्यैकस्य, द्वयोर्वाऽवयवयोर्विशेषणविशेष्ययोर्व्यापारः शब्दे कल्प्यते। सा चान्यथानुपपत्तिरूपत्वादनन्यलभ्ये विषये भवति। तदिह विशेषणभूतं विशेष्यभूतं वैकत्वं तावन्नान्यतो लभ्यते, येनानभिधेयं कल्प्येत। यदि हि कर्ता तत्प्रतिपादयितुं शक्नुयात्तत आकृतिन्यायेन स एवाभिधेयः। इतरत्तु व्यक्तिवद्गम्यमानमित्याश्रीयते। तस्य तु व्यभिचारेणाशक्तत्वादेकत्वमप्यभिधेयमेवाऽऽश्रयणीयम्। ततश्च तत्र संचरितायामभिधानशक्तौ गम्यमानलक्षणापन्नः कर्ता सत्यपि विशेषणत्वे नाभिधेयः संपद्यते। यदा त्वेकत्वमेव विशेषणं तदाऽप्यवश्यं तदेव प्रथमं[1] तावदभिधातव्यम्। तच्चेदभिहितं क्षीणशक्तिः शब्दः कर्तारमन्यतः सिध्यन्तमपेक्षते। सिध्यति चासौ भावनात इति नाभिधानशक्तिकल्पनाहेतुर्भवति।

### अनन्यलभ्यः शब्दार्थः इति न्यायवर्णनम्

यत्त्वन्यान्यपि कारकाणि प्रतीयन्ते, न तं प्रतीतैरप्रतीतैर्वा कश्चिदुपकारोऽनुपकारो वा भवति। सर्वथा तावद्यः प्रार्थितः कर्ता, स प्रतीतः। यदि त्वन्यदपि प्रतीयते किं नो बाध्यते। तेन ह्यप्रतीतेन वयं बाध्येमहि, नाभ्यधिकप्रत्ययेन। प्रतीतान्यपि तु करणादीनि शब्दशक्तिवशात्कर्त्रभिलाषिण्या संख्यया न ग्रहीष्यन्ते। न हि तया यद्यत्प्रतीतं, तत्तद् ग्रहीतव्यम्। सर्वत्र हि प्रतीत्यपेक्षायोग्यत्वादि ग्रहणे कारणं भवति। तदत्रोभयसिद्धेन संख्यायाः कर्तृगामित्वेन कारकान्तराण्यनपेक्षितत्वादयोग्यत्वाच्च संनिहितान्यपि न संबन्धित्वं प्रतिपद्यन्ते। न च तेषामपि तिङभिहितसंख्याभिलाषो विद्यते। सर्वत्र सुबनिहितसंख्यापरिच्छेद्यत्वात्। न चैषा संख्या सामान्यरूपेण प्रतीता सती संबध्यन्तरमपेक्षते। कथितो हि पदवाक्ययोर्विशेषः पौर्वापर्यनियमात्। तद्यावदेवेह धात्वर्थः प्रतीतः तावदेव काऽपि भावना कर्ता च कश्चिद्भविष्यतीत्यवधार्यते। ततश्च पूर्वतरप्रतीते कर्तरि संख्या केवलैवाभिधीयमाना विशेषणत्वं विशेष्यत्वं वा प्रतिपत्स्यते।

### भावना कर्त्रोरसाधारणसंबन्धवर्णनम्

यदा भावनया कर्ता प्रथमं प्रतिपद्यते।
न संख्यासंगतेश्चास्ति तदतिक्रमकारणम्॥

---

1. क० प्रथमान्त।

सत्यपि कारकसंबन्धाविशेषे भावना पूर्वं तावत्कर्तारमपेक्षते, गृह्णाति च। तदधीनत्वादितरकारकसमवधानस्य। कर्तृव्यापारसामान्यरूपैव चासौ तमेव विशेषतः पर्युपस्थापयति। कारकान्तराणि तु धात्वर्थसंबन्धित्वात् सर्वंजघन्येतिकर्तव्यतात्मकव्यापारनिबन्धनत्वाद्वा बहिरङ्गतराणि भवन्ति। न च किंचित्कारणमस्ति, येन प्राथम्यप्राधान्योपस्थितकर्त्रतिक्रमेण कारकान्तराणि संख्या गच्छेत्।

अपि च यस्य कारकस्यावान्तरव्यापारं धातुः प्राधान्येनाऽऽह, स कर्तेति। व्याकरणेऽपि कारकान्तराणि कर्तारमेवाऽऽविर्भूतरूपं ज्ञापयन्ति। तेन स एव संख्यया संबध्यते। अभिहितवच्च विशेषरूपेण प्रतीयते। कारकान्तरेषु तादृगर्थाभावादनादरेण सदपि गम्यमानत्वमसदिव प्रतिभाति। परमार्थनिरीक्षणवेलायां त्वविनाभावात्तान्यपि भावनया तुल्यवदुवस्थाप्यन्त इति नात्यन्तमना दृतानि।

**संख्या कर्तृगामिनीतिनियमस्य व्यभिचारशंकानिरासौ**

नन्वेवं सति 'ओदनः पच्यतां त्वया' इत्यादिषु कर्मसंख्याभिधानं न प्राप्नोति। कुतः।

प्राधान्येनात्र नोपात्ता धातुना ह्योदनक्रिया।
मा भूत्तस्यैव कर्तृत्वमभिधेयं न भावना॥

नात्रोदनव्यापारो धातुना प्राधान्येनोपादीयते, यतः कर्मणो विशेषप्रतीतस्य संख्योच्येत। मा भूत्तस्यैव कर्तृलक्षणापन्नत्वात्कर्मत्वमुत्सृज्य कर्तृत्वम्। अकर्तृत्वादेव च न तद्व्यापारो भावना तेन तथाऽपि न विशेषरूपेण कर्मणः पर्युपस्थापनम्। अवश्यं च पुरुषव्यापार एव प्राधान्येन वक्तव्यः। अन्यथा हि परव्यापारेऽस्य नियोग एव न भवेत्। आख्यातपदेन चाकल्पितं कर्तृत्वं पदान्तरोपात्तस्यापि नाऽऽविर्भवेत्। ततश्च त्वयेत्यपि तृतीया न स्यात्। तद्व्यापारेण वाऽनभिभूतव्यापारं कर्म तेनानाप्यमानत्वात्कर्मत्वं हित्वाऽऽविर्भूतव्यापारतया कर्तृत्वमेव प्रतिपद्येतेति, स्वसंबन्धत्यागेन कर्तृसंख्ययैव संबध्येत। तेन पचति शब्दवदेव पच्यत इत्येवमाद्यभिहिताऽपि संख्याऽनभिभूतत्वात्कर्तुरेव प्राप्नोति न कर्मण इति।

उच्यते।

यस्यापि कारकं वाच्यं तस्याप्येतत्प्रसज्यते।
न चोभयाश्रयं दोषमेकश्चोद्यो विचारयन्॥

सर्वथा।

यल्लक्षणो हि भवतः कर्ता सन्नभिधीयते।
कर्म वा तादृशस्यैव यत्र संख्याऽभिधीयते॥

तद्यदि मम कर्मोत्पन्नलकारेष्वपि कर्तुरेव संख्या प्राप्नोति, तवापि तर्हि तत्र कर्त्रभिधानेन भवितव्यम्। अथ तत्र एव कथंचित्कर्तुरनभिधानं, तद्वन्ममापि तत्संख्यानभिधानमित्यदोषः। तदेतदवश्यमावाभ्यामेवं परिहर्तव्यम्।

सर्वत्रैव तावदीप्सिततमत्वाद्वस्तुलक्षणं कारकान्तरेभ्यः कर्मणः प्राधान्यं, भाव्यांशेन च तद्व्यापारस्य भावनान्तर्गतत्वम्। तत्र यदा तत्प्राधान्यमाख्यातेनैव दर्शयामीति विवक्ष्यते, तदा सत्यपि कर्तुः शब्दार्थरूपेण लिङ्धातुभ्यामभिधीयमानप्रधानभूतसामान्यविशेषरूपव्यापारत्वे तावता च कर्तृत्वलाभेऽपरस्य वस्तुलक्षणस्य प्राधान्यस्य विवक्षितत्वात्कर्मणि, तत्संख्यायां वा लकारोत्पत्तिः। यदा तु खलु तद्विद्यमानमप्यविवक्षितत्वाद्धातुविशेषवशेन वा नैव तदस्तीत्यवगम्यते शब्दार्थरूपप्राधान्यमात्रे विवक्षा भवति, तदा सुपा कर्मप्राधान्याभिव्यक्तिमङ्गीकृत्य कर्तरि, तत्संख्यायां वा लकार उत्पद्यते। करणादीनां तु न वस्तुलक्षणा नापि शब्दलक्षणा प्राधान्यविवक्षाऽस्तीति नित्यमेव बाह्यशब्दोपादेयत्वम्।

केचित्पुनराहुः। यदैवंविधं शब्दसामर्थ्यमवगम्यते, यथाऽयं कर्तुरेव संख्यां शक्नोति वक्तुम्। अयं कर्मण एवेति पदाऽन्तरेणापि भावनोपस्थापनं सैव संख्याऽनन्यविषयत्वेनाभिहितत्वात्कर्तारमुपादास्यते। तद्यथा शोणशब्दोऽन्येनानुपात्तेऽप्यश्वे तद्गतं गुणं वदन्नात्मनैवाश्वत्वमपि गमयति। तथा च सत्यनेनैव न्यायेन सर्वे गवादयोऽप्यनभिधेयाः प्राप्नुवन्ति। कथम्।

### केषाञ्चिन्मतस्य दूषणम्

कश्चित्तद्गत एवेह लिङ्गसंख्यादिरुच्यताम्।
स एवाभिहितः पश्चाद्गवादीञ्ज्ञापयिष्यति॥

एतावती चेच्छब्दशक्तिः कल्पिता तद्गतमेवैषा गुणं ब्रवीति। किं ततःपरं शक्त्यन्तरकल्पनया, पूर्वयैव व्यवहारोपपत्तेः। अयं त्वेवमादिष्वेकशब्दोपात्तत्वेन संबन्धनियमो न शब्दशक्तिवशेन। ततः कर्तृसंख्यादिष्वपि तदेवाभ्युपगन्तव्यमित्यनभिधेयत्वहानिः।

### तत्रापरेषां मतोपन्यासनिरासौ

तत्रापरे मन्यन्ते।

शोणेऽपि नैव वाजित्वमनुक्त्वा तद्गतेऽभिधा।
दृष्टा हि न क्वचिद्बुद्धिरगृहीतविशेषणा॥

कथं ह्यश्वत्वेऽनुच्यमाने तदवच्छिन्नरक्तत्वप्रत्ययो जायेत। रक्तत्वविशिष्टो ह्यसौ गुणो गमयिष्यतीति चेत्? न। गवादिषु व्यभिचारात्। ऐकान्तिकं हि गमकं भवति। न च रक्तत्वमश्वत्वाव्यभिचारि। द्रव्यमात्रं त्वैकान्तिकत्वाद्गम-

येन्न तद्विशेषम् । तस्मादुभयोरप्यश्वत्वरक्तत्वयोरन्यव्यभिचारित्वेनागमकत्वाद्वस्त्वन्तरोपस्थापितान्यतरग्रहणासंभवाच्च शोणशब्दाभिधेयत्वमभ्युपगन्तव्यम् । न हि तत्र वस्त्वन्तरसाधारण्येनाश्वत्वमनैकान्तिकं केनचिद्गमितम् । कर्तुः पुनरैकान्तिकं भावनयोपादानं विशेषरूपेण चेत्युक्तम् ।

अथवाऽस्तु शोणशब्देनाश्वत्वैकार्थसमवायिगुणमात्राभिधानम् । कथमनवगतविशेषणा विशेष्ये बुद्धिरिति चेत् ? उच्यते ।

अश्वत्वं नैव शोणस्य विशेषणतयेष्यते ।
गुणजात्यन्तरं त्वेतद्दैवात्तत्संगतिं गतम् ॥

यदि हि रक्तत्वमात्रमयं ब्रूयात् ततोऽश्वत्वेन विशेषणमाकाङ्क्षेच्छक्त्यन्तरं वा, येन तदेकार्थसमवाय्येव रक्तत्वं वदेत् । एष तु यथैव सत्तागुणत्वयोरवाचकः तथा रक्तत्वमतिक्रम्य शोणत्वं नाम रक्तावान्तरजातिं वदति । सा चाश्वेष्वेव विद्यते, न गवादिष्वित्यश्वत्वं प्रतीयते, न रक्तत्वादिवत्संशयो ।

कीदृशं पुनस्तद्गवादिरक्तत्वातिरेकेण शोणत्वं, यदश्वेषु समवेतमन्यत्र चासमवेतमिति ।

उच्यते ।

सर्वपुंसां स्वसंवेद्यं प्रतिजाति गुणान्तरम् ।
क्वचित्तस्य विशेषेण क्वचित्सामान्यतोऽभिधा ॥

सर्वजातिषु यावत्स्वव्यक्तिमात्रानुसारिणः कृष्णशुक्लरक्तत्वादयो विलक्षणाः प्रत्यक्षमुपलभ्यन्ते । तत्र क्वचित्सतो विशेषस्य वाचकः शब्दो नास्तीति प्रमाणान्तरगम्यविशेषमङ्गीकृत्य सामान्यमात्रेणाभिधेयत्वम् । क्वचित्पुनः शोणादिविशेषशब्दसद्भावाद्विशेषरूपेणाभिधानम् । तथा क्वचिदपभ्रंशेन कश्चिद्विशेषः प्रतिदेशमभिधीयते । यथा रौहिणिका गौरिति । न कदाचिदश्वायां शाट्यां वा रक्तगुणायामेवमभिधानं भवति । तस्माज्जात्यन्तराण्येव शोणत्वकर्कत्वगौरत्वादीन्यश्वमनुष्यादिसंबन्धीन्यभिधीयमानानि तेष्वपि प्रत्ययमादधति यथा गोत्वं सास्नादिमत्स्विति न वाच्यत्वमाशङ्क्यम् । एतेनैव कुमारकरभकलभकिशोरवत्सबर्करादयो विशिष्टजातिसंबद्धवयोर्विशेषवचनत्वेन मनुष्योष्ट्रहस्त्यश्वादीनां ग्रहणे सत्यप्यवाचका इति व्याख्यातम् । तथा हि ।

बालत्वादौ समानेऽपि तद्गतैश्चेष्टितादिभिः ।
वयोभेदाः प्रसिध्यन्ति प्रतिजाति व्यवस्थिताः ॥

अथ यदुक्तं गवादिष्वपि तद्गतसंख्यादिमात्राभिधानादेव जातिविशेषसिद्धेरनभिधेयत्वं प्रसज्यत इति । तत्र ब्रूमः ।

**एकत्वशोणत्वयोर्वैलक्षण्यप्रतिपादनमुखेन गोत्वादेर्वाच्यत्वम्**

न शोणत्वादिवत्संख्या जातिभेदेऽपि भिद्यते ।
उभयोरभिधेयत्वं नात्र शब्देन तावता ॥

यदि हि शोणत्वादिवद्गवाश्वगतानामेकत्वादीनामपि प्रत्यक्षेण विशेषो लक्ष्येत, तत एवं कल्प्येत । यदि च यथा शोणप्रातिपदिकमविभक्तावयवं गुणाश्वत्वयोर्वाचकमापद्यमानमनेकशक्तिकल्पनोभयादन्यतरवाचित्वेनाध्यवसीयमानमश्वत्वस्य व्यभिचारित्वेनागमकत्वादव्यभिचारिगुणवचनत्वेनावधारितम्, एवं गोत्वसंख्ययोरपि समानशब्दाभिधानभाजोरन्यतरस्याव्यभिचारितया वाचकत्वमवधार्येत । न तु तदस्ति । संख्यायास्तावत्सर्वत्र परिच्छेदात्मकत्वान्न कश्चिद्भेदो दृश्यते । न च तावानेव शब्द उभयोर्वाचकत्वेन संभाव्यते । अन्वयव्यतिरेकाभ्यां प्रातिपदिकेन जात्यभिधानाद्विभक्त्या च संख्याभिधानात् । न चानेकशब्दस्यानेकार्थकल्पनादोषः । यदि तत्रानेकस्य शब्दस्य शक्त्यनेकत्वं न कल्प्येत ततोऽन्यतरस्यानर्थकत्वमेव भवेत् । न च संख्यासंख्येययोरव्यभिचारित्वं, येनान्यतरदुच्यमानमितरस्य गमकं स्यात् । तथा हि ।

परिच्छेदो गवादीनां न कयाचिन्न संख्यया ।
न क्वचिच्च न संख्येये संख्या सैव प्रवर्तते ॥

ननु च लिङ्गं प्रातिपदिकेनैवोच्यमानं प्रतिजाति विलक्षणमव्यभिचारिरूपेण प्रवर्तमानं शोणत्वादितुल्यं स्यात् । नैतदेवम् ।

अचेतनेषु यत्तावद्गम्यते न विलक्षणम् ।
तेन वृक्षादिजातीनां वाच्यत्वं न निषेधति ॥
तथा यत्रापि टाबादिसंबन्धात्स्त्री प्रतीयते ।
तत्रापि प्राक् ततो जातेर्वाच्यत्वमवधार्यते ॥

यद्यपि टाबादयः स्त्रीलिङ्गस्य द्योतकत्वान्न भेदेन वाचका भवन्ति । पूर्वस्यैव च शक्त्यन्तरमाविर्भावयन्ति, तथाऽपि प्राक् टाबादिभ्यो यच्छब्दरूपं तस्याप्रतीतावस्थे लिङ्गे जातिं प्रति शक्तिः कल्पिता न पश्चादपनेतुं शक्या । तथा यत्र विभक्तिसंबन्धात् पुंस्त्वं, नपुंसकत्वं चाभिव्यज्यते, तत्राप्येवमेव जात्यभिधानं योज्यम् । यत्र तु प्रागेव विभक्तेस्तन्निवृत्तौ वा सत्यां शुद्धादेव प्रातिपदिकादन्यतरलिङ्गप्रत्ययो भवति । यथा हस्ती ना देवदत्तः, श्रीः सरित् तोयं वारीति, तत्र तथात्वाभ्युपगमेऽपि न किंचिद्विरुद्धम् ।

अथवा विनाऽपि शब्दविभागेनार्थप्रतीतावुत्पाद्यमानायां सर्वस्वसंवेद्येन विभागेन प्रथमतरं जातिं प्रतिपद्यते ।

किंच ।

व्यक्तिधर्मश्च पुंस्त्वादिः प्राक्ततो न प्रतीयते ।
न च जातावबुद्धायां व्यक्तिः कैश्चित्प्रतीयते ॥

तेन कामं लिङ्गमेव जातिगम्यं भवेत्, न जातिर्लिङ्गगम्या । नित्यं चोपसर्जनीभूतमेवैतद्गम्यमानं नार्हति प्राधान्येन प्रतीयमानाया जातेरभिधेयत्वं वारयितुम् । न च गोपश्वादिशब्देष्वन्तरलिङ्गाभिव्यक्तिर्जातिवदस्ति । तस्माज्जातिस्तावदभिधेया । सा तत्र लिङ्गं न व्यभिचरिष्यति, तत्र गमिष्यत्यपि । यत्रापि व्यभिचारे सत्यन्यतः प्रतीयते, तत्र तदेव गमकं । तदनुगृहीता वा जातिः प्रातिपदिकं वेति यथेष्टं कल्प्यते । तस्मान्न शोणादितुल्यता ।

पचत्यादिशब्देष्वपि यदि संख्या सर्वकारकान्तरव्यावृत्तरूपा कर्तृमात्रानुसारिणी शोणत्ववदुपलभ्येत ततस्तया नाम कर्ता गम्यतां, तावताऽप्यनभिधेयो भवत्येव । यदा तु पूर्वोक्तेन न्यायेन संख्याभेदो न लभ्यते, प्रतिवस्तु चानन्तान्येकत्वादिजात्यन्तराणि न शक्यन्ते कल्पयितुं, तदा भावनाधात्वर्थाभ्यामेवोपादानमादर्तव्यम् ।

किंच—

शोणादीनां न चान्येन जातिर्बुद्धौ निधीयते ।
क्लेशस्तेनाऽऽश्रितस्तत्र न त्वत्राप्येवमिष्यते ॥

यदि शोणस्यापि कश्चिदन्योऽश्वमुपनयेन्नैवासौ स्वयं क्लिश्येत् । संख्यायाश्च भावनाधात्वर्थावुपनेताराविति न स्वयमायस्यति । भावनोपस्थाने चोक्तो विशेषः । तस्मादनभिधेयस्यैव कर्तुर्विशेष्यत्वविशेषणत्वोपपत्तेरप्रमाणमभिधानशक्तिकल्पनमित्यवगच्छामः ।

### व्याकरणस्मृतिविरोधपरिहारः

एवं न्यायेनावधारिते कश्चिदागमविरोधं दर्शयन्नाह—**प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इत्याचार्योपदेशात्कर्ता शब्दार्थः कर्म चेत्यवगम्यत इति ।**

लः कर्मणीति सूत्रेण चशब्दात्कर्त्तरीति च ।
आदेशस्थानिवत्त्वाच्च लिङर्थौ कर्तृकर्मणी ॥

ननु सूत्रार्थेनैवाऽऽगमविरोधे दर्शिते । प्रकृतिप्रत्ययौ प्रत्ययार्थमित्येतदसंबद्धम् । कथमसंबद्धम् ? यदा पूर्वेण न्यायेन कर्तुः प्राधान्यमपि पूर्वपक्षवादिना दर्शयितव्यम् । तदेतदभिधानं प्राधान्ये चोभयमपि स्मृतिसिद्धं दर्शयति । यस्मात्प्रकृतिप्रत्ययौ सह ब्रूतः प्रत्ययार्थश्च कर्ता कर्म च स्मर्यते, तस्मात्क्रियाविशिष्टयोस्तयोरभिधानादस्त्येव श्रुतिप्रकरणविरोध इति । तत्र 'लः कर्मणि च' इत्यत्र तावदेकान्तेना-

भिधेयत्वेन कर्तृकर्मणोरुपादानम् । 'कर्तरि शप्' इत्यत्र पुनरेकभिधेयत्वदर्शनम् । अन्यत्तु कर्तरीति परसप्तमी । न च शब्दसंनिवेशे कर्ता परत्रावस्थितः संभवत्यः 'आनर्थक्यात्तदङ्गेषु' इति शब्दे कार्यं विज्ञायते । अत्रैषोऽर्थः—कर्तृवाचिनि सार्वधातुके प्रत्यये परत्रावस्थित इति । सर्वथा तावत्प्रत्ययार्थः कर्तेत्युक्तमाचार्यैः । तस्मादयुक्तमनभिधेयत्वानुमानमिति ।

तदुच्यते—

वाच्यवाचकसंबन्धो नाऽऽचार्यैरुपदिश्यते ।
अन्यथाऽनुपपत्त्या हि व्यवहारात्स गम्यते ॥

तत्र नामाऽऽगमविरोधी युक्त उद्भावयितुं, यत्र न्यायागमौ समानविषयौ भवतः । इह तु न्यायस्यान्य एव विषयः, किं वाच्यं किं गम्यमानमिति । अन्य एव व्याकरणस्मृतेरेकार्थप्रयुक्तानां कः साधुः, कोऽपभ्रंश इति । न चान्यविषयेणान्यविषयस्य दुर्बलस्यापि बाधो युक्तः । किमुत वाच्यगम्यमानविषयत्वेन प्रत्यक्षमेव सर्वस्वसंवेद्यस्य । तेन यद्यपि कर्ता शब्दार्थ इत्येत्रमाचार्या वदेयुः तथाऽपि स्वविषयादन्यत्र वदन्तो । नाऽऽदर्तव्या भवेयुः । ते तु नैव तथा वदन्ति । ननु प्रत्यक्षमेव सूत्रमुदाहृतम् सत्यम् । न तु शास्त्रस्वरूपमालोच्य । किं तर्हि । एकदेशालोचनेन । न च तावन्मात्रेण शास्त्रविरोधोद्भावनं शक्यम् । कुतः ?

सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैः सह ।
एकवाक्यतया युक्तमुपदेशं प्रतन्वते ॥

यदि शास्त्रैकदेशालोचनेन तद्विरुद्धत्वमभ्युपगच्छता शास्त्रविरोध उद्भाव्यते । ततः 'सुरा न पातव्या' इत्यस्याप्येकदेशेन पानं हि विहितमकुर्वन् शास्त्रविरुद्धं कुर्यात् । तथा भिन्नवाक्येषु 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिमात्रापेक्षया दीक्षितोऽप्यजुह्वन् प्रत्यवेयात् । व्याकरणेऽपि 'मिदेर्गुणः' इत्येतावन्मात्रे दृश्यमाने भिन्न इत्यत्र गुणाकरणं शास्त्रविरुद्धं स्यात् । तस्मान्नैकदेशेन विरोध उद्भावनीयः ।

आह च—

अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते ।
अन्यश्च परिपूर्णेन समस्याङ्गोपसंहृतौ ॥

**व्याकरणशास्त्रे प्रतिपदमेकवाक्यताकल्पनेन व्याख्यातमिति नानास्थलनिर्देशः**

विशेषेण तु व्याकरणे । तत्र ह्येकस्मिन्पदे प्रायेणाष्टाध्यायी व्याप्रियते । तेन 'लः कर्मणि च' इत्यस्यैकदेशान्तरपरिपूर्णस्य योऽर्थस्तेन सह विरोधः परिहर्तव्यः । इह चैतावता प्रत्ययविधिः परिपूर्यते । प्रत्ययः । परश्च । आद्युदात्तश्च । अनुदात्तौ

सुप्तिङौ। धातोः। तत्रोपपदं सप्तमीस्थम्। कृदतिङ्। वाऽसरूपोऽस्त्रियाम्। वर्तमाने लट्। कर्तरि कृत्। लः कर्मणि च भावे चाकर्मकेभ्यः। लस्य। तिबादयः। अनुदात्तङित आत्मनेपदम्। शेषात्कर्तरि परस्मैदपम्। युष्मदस्मदुपपदादिषु मध्यमादयः। तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः। तान्येकवचनद्विवचनबहुवचनान्येकशः। बहुषु बहुवचनम् द्व्येकयोर्द्विवचनैकवचने इति। पराणि च संज्ञापरिभाषादिरूपेण लोपागमवर्णविकारादिशास्त्राणि सर्वाण्येकं वाक्यम्। एकवाक्यता च सति विशेषणविशेष्यभावे भवति नान्यथा। सोऽपि च समानाधिकरण्येन वा भवति समानविभक्त्यन्तानां, वैयाधिकरण्येन वा। क्रियाकारकरूपः शेषशेषिरूपश्च तदिहानौपयिकत्वादवयवान्तराण्युपेक्ष्य लादेशाः कर्तरि कर्मणि च भवन्ति।

## आकृत्याधिकरणोक्तस्यार्थस्य सिंहावलोकन्यायेन स्मरणम्

**एकस्मिन्नेकवचनम्। बहुषु बहुवचन**मित्येषां विशेषणविशेष्यभावः समानाधिकरण्यवैयाधिकरण्यप्रवृत्तिश्च चिन्त्यते। तत्र तावद्बहुद्व्येकशब्दाः संख्यावचनास्तामनाभिधाय संख्येये वृत्त्यसंभवादित्याकृत्यधिकरणे स्थापितम्।

## शाब्दिकानां रहस्योद्घाटनम्

पातञ्जलेऽपि च केषु बहुष्विति प्रश्नपूर्वकमुपक्रम्य तत्र दोषानभिधाय संख्यावचनत्वमेवावधारितम्। बहुत्वे द्वित्वैकत्वयोरिति विवरणात्। कथमन्तरेण भावप्रत्ययं भावप्रधानो भवति निर्देश इति पृष्टे भवति यदा प्रथम एव गुणः स्वप्राधान्येन विवक्ष्यत इति व्याकृतम्।

तथा हि—

पूर्वमेव गुणः कश्चित्स्वातन्त्र्येण विधीयते।
कश्चिद् द्रव्याङ्गभावेन ततो निष्कृप्य चापरः॥

यत्र गुणः प्रथममेव स्वप्रधानो विवक्षितः तत्रानुत्पाद्यैव भावप्रत्ययं विना च सामानाधिकरण्यं संबद्धो भवति—**पटस्य शुक्ल** इति। यत्र तु द्रव्योपसर्जनत्वेन च न निष्कर्षो विवक्ष्यते। तत्र समानाधिकरण्यं भवति—शुक्लः पट इति। यत्र पुनरुपसर्जनत्वेन पश्चान्निष्कर्षविवक्षा भवति। तत्र यस्य गुणस्य हि भावात् द्रव्ये शब्दनिवेशस्तदभिधाने 'त्वतलौ' इति भावप्रत्ययोत्पत्तिः। स्वप्राधान्यविवक्षायां त्वत्सावनङ्गत्वाद् गुण एव न भवति। न तद्द्वारेण द्रव्ये शब्दनिवेशः तेन नासौ तदा तस्य द्रव्यस्य शब्दप्रयोगं भावयतीति भावप्रत्ययेन नाभिधीयते। पूर्वमेव निष्कृष्टत्वान्निष्कर्षकारिणः प्रत्ययस्य निष्फलत्वं स्यात्। तदा तर्हि नित्यं संख्येये षष्ठ्येव भवितव्यम्। सत्यमेष उत्सर्गः। कदाचित्तु यथैव गुणवचनः शब्दो गुणोपसर्जनद्रव्यप्रतिपिपादयिषया तच्छब्दसमानाधिकरणो भवत्येवमेव गुण्युपसर्जनगुणविवक्षायां गुणशब्दानुरोधेन सामानाधिकरण्यं भवति। तुल्यो हि

हेतुरभेदोपचारलक्षणयोः तथाऽपि त्वेष प्रयोगो न प्रचुर इति न शीघ्रमितरवत्प्रतिभाति ।

यदा तु नाम कथंचिदापतति तदैतेन न्यायेनानुसर्तव्य इति कथ्यते । तस्मादस्त्यन्तरेणापि भावप्रत्ययं प्रत्यययोग्यवस्तुप्रधानो निर्देशः । एवं च सति 'द्व्येकयोः' इति द्विवचनं समर्थितं भविष्यति । अन्यथा हि—

द्व्येकसंख्येसंघाते बहुत्वमुपजायते ।
द्व्येकेष्विति भवेत्तत्र यदि संख्येयतन्त्रता ॥

संख्येयप्रधाने हि निर्देशे द्वौ चैकश्चेति कृते बहुवचनमेव प्राप्नोति । संख्याप्राधान्ये तु द्वित्वैकत्वयोः प्राधान्यादात्मीयसंख्यानिर्देशो भवति द्व्येकयोरिति प्रयोगः ।

कस्मात्पुनर्विशिष्टमेव भावप्रत्ययेन न निर्दिश्यते । वक्तृविवक्षाया बहुप्रकारत्वात् । अथवा यदि बहुत्वे बहुवचनमिति क्रियते, यथा वैपुल्यं महत्त्वं वा शब्दस्यार्थः, बहुः समुद्रो बहुरोदन इति । यच्च त्रिप्रभृतीनां द्वित्वातिरेकसामान्यं, तयोरुभयोरप्यविशेषेण बहुवचनं प्राप्नोति । तत्र बहुष्वित्युच्यते । कथं नाम भेदनिबन्धनसंख्यावाच्येव बहुवचनं स्यात् । अतश्च बहुरोदन इत्येकवचनं सिद्धम् । यस्तु संख्याप्राधान्यपक्षे तदेके मन्यन्त इत्येकत्वप्राधान्यादेकवचनप्रसङ्गश्चोदितः । सोऽन्यत्ववाच्यत्वेन परिहृतः । तस्माद्बहुत्वादिषु बहुवचनादीनीति सिद्धम् ।

एवं च सति तिङ्विधाने लादेशत्वात्कर्तरि तिविव्येकं वचनम् । एकवचनसंज्ञत्वाच्चैकत्वे तिविव्यपरम् । तत्र यदि वाऽनयोः परस्परमसंबध्य तिपैव केवलेन संबन्धः स्यात्, कर्तरि तिबेकत्वे वेति । अथवैकस्मिन्कर्तरीति प्रतिपन्नविशेषणविशेष्यत्वयोस्तिब्विषयत्वम् । तत्र न तावदविशेषितयोस्तिपा संबन्धः । कुतः ।

अनेकस्मिन्नपि प्राप्तिः कर्तरि स्यात्तिपस्तथा ।
सर्वकारकसंस्थे च सैकत्वे च प्रसज्यते ॥

यदि हि स्वतन्त्रमेव कर्तर्येकत्वे चान्योन्यनिरपेक्षवाक्यभेदेन तिब्विधानमिष्यते, ततः प्रयोगकाले तद्वदेव नैरपेक्ष्यमिति द्विबहुष्वपि कर्तृषु प्राप्नोति । कारकान्तरगतेऽपि वैकत्वे । तस्मादवश्यं प्रथमं विशेषणविशेष्यसंबन्धोऽभ्युपगन्तव्यः । स चैकविभक्त्यन्तत्वात्समानाधिकरण्येन । तत्रापि श्रौतत्वाभावादेकस्य लक्षणावृत्तिर्विभक्तिपरिणामेन वा वैयधिकरण्यसंबन्धः । सामानाधिकरण्ये तावदवस्थितसंख्याप्राधान्यानुरोधेन कर्तृशब्दो लक्षणामभेदोपचारं वा भजते, नैकशब्दः, संख्येयप्राधान्यप्रसङ्गात् । ततश्च सामानाधिकरण्यसंबन्धमर्थं मुख्यया वृत्त्या दर्शयितुमुपसर्जने षष्ठी प्रयुक्ता कर्तुरेकत्व इत्यर्थ इति ।

अथवा भिन्नार्थविषये सामानाधिकरण्यं न भवति । न च व्यधिकरणयोरेकविभक्त्यन्तयोः[1] षष्ठ्या विनैवंजातीयकः संबन्धोऽवकल्पते । न च संबन्धमन्तरेणाभिप्रेतोऽर्थः सिध्यति । तदाऽवश्यं कर्तव्येऽन्यतरविभक्तिविपरिणामे तेनैव न्यायेन संख्याप्राधान्यान्नित्यं च विशेषणे षष्ठीप्रयोगादेवं विपरिणामेन कथ्यते **कर्तुरेकत्व इति** । दूरापगतश्चात्रैकत्वस्य विभक्तिविपरिणामः । अर्थान्तरबुद्धिप्रसङ्गात् । यदि चैकत्वस्य कर्तरि, कर्मणि चेत्युच्यते ततोऽन्य एवार्थ आपद्येत । एकत्वं यः करोति, यच्च तस्य कर्मेति । तस्मात्कर्तुरेकत्व इत्येवमादिना दर्शिते कर्तृकर्मविशिष्टा एकत्वादयः प्रत्ययवाच्याः शास्त्रानुगता इत्यविरोधः । एवं च व्याख्यायमाने यल्लौकिकेन न्यायेन भावनातः प्राप्तत्वात्कारकानभिधानमवगतं, तदप्यनुगतं सूत्रैर्भविष्यति । सूत्राक्षराणि च 'द्व्येकयोः' इत्येवमादीन्येतदपेक्ष्य नियम्यमानानि विशेषणविशेष्यत्वादिन्यायानुगतानि भविष्यन्ति ।

**लौकिकन्यायानुगतश्च सूत्रार्थं इत्यस्यापरोऽप्यभिप्रायो** । यथा लोके कर्तृकर्मविशिष्टसंख्याप्रतिपत्तिरियमेवं व्याख्यायमानेऽनुगता भवति । अन्यथा हि स्वातन्त्र्येणेतरनिरपेक्षलक्षणव्याख्याने लोकप्रसिद्धिविपरीतपरस्परासंबद्धसंख्याकारकमात्रवाचित्वग्राही सूत्रार्थः स्यात् । न केवलमेतावन्मात्रम् । किं तर्हि । स्वगोत्रेणापि सूत्राक्षराणि न्यायापेतानि स्युः । विशेषणविशेष्यतया तु व्याख्याने सर्वं न्याय्यं भविष्यति ।

## कात्यायनपतञ्जलिमुनिभ्यां बहुवचनवार्त्तिके, अनभिहितवार्तिके च वाचकत्वपक्षसमर्थनम्

तत्रैतत्स्यात् । त्वया मीमांसकेन वचनव्यक्तिकुशलेन भूत्वा स्वमनीषिकयैवमुच्यते । न तु व्याकरणसंप्रदाय एवमवस्थित इत्यत आह—**आगमोऽपि चायमेव यदा एकत्वादयो विभक्त्यर्थास्तदा कर्मादयो विशेषणत्वेनेति** । द्वाभ्यामपि वाक्यकारभाष्यकाराभ्यां बहुवचनवार्तिकेऽनभिहितवार्तिके च द्वावपि कर्मत्वाद्येकत्वादिवाच्यत्वपक्षौ दूरमनुसृत्यान्ते निर्दोषतयाऽवधारितम् । कर्मादिविशिष्टा एकत्वादयो विभक्त्यर्थाः । इतरथा येषु केषुचिद्बहुवचनं प्राप्नोति । अनभिहिताधिकारश्च न कर्तव्यः स्यात् । अन्यत्राप्यभिहितेऽभिधानाभावात्तिङ्कृत्तद्धितसमासाभिहितेषु कर्मादिषु कः प्रसङ्गो द्वितीयादीनां, येनानभिहिताधिकारः क्रियेत । अनभिहितानां तु कर्मादीनामेकत्वादिषु द्वितीयादय इति नैतदनुक्तं गम्यते । न हि न्यायेन तेषामभिहितानामनभिहितानां च कश्चिद्विशेषो दृश्यते । तदेतद्वार्तिकोपसंहारे स्पष्टं भाष्यकारेणोक्तम् 'एकत्वादिषु विभक्त्यर्थेषु कर्तव्योऽनभिहिताधिकारः कर्मादिषु त्वनर्थः' इति ।

---

१. क० एकविभक्त्यन्तत्वं ।

नन्वेतदप्यस्ति । यदा कर्मादयो विभक्त्यर्थाः तदैकत्वादयो विशेषणत्वेने-त्येतत्पूर्वपक्षवचनत्वादनुपन्यसनीयं सदभ्युपेत्यवादेनोपन्यस्तम् । एतदुक्तं भवति । यदाऽपि कर्मादयो विशेष्यभूताः प्राधान्येन विभक्त्यर्थाश्चिन्त्यन्ते, तदाऽप्येकत्वादय एव विशेषणत्वेनावस्थिताः सन्तोऽभिधीयन्ते । अनभिहितानां विशेषणत्वानुपपत्ते-र्विशेष्यस्य चान्यत एव सिद्धेः । भवति हीदृश्यामवस्थायामुपसर्जनपरत्वं विधेर्यथा लोहितोष्णीषादिषु ।

अथवाऽर्थ शब्देन प्रयोजनमभिधीयते । यदाऽपि ते प्रयोजनम्—तादर्थ्येन विभक्तिः प्रयुज्यत इत्यर्थः ।

यद्वोभयोर्वचनयोरुत्सृष्टयोर्यथासंभवं निवेशादेकं तिङ्विषयं यत्पूर्वमुदाहृतम् । अपरं तु सुब्विषयं भविष्यति । तत्र कर्मादीनां विभक्त्यर्थत्वाभ्युपगमात् ।

## अत्र विरोधशङ्का

ननु च समानत्वाद्बहुवचनादिशास्त्रस्यैकरूप्ये सति यथैव तिङा कर्मादिवि-शिष्टसंख्याभिधानान्न कारकाभिधानं जातं, तथैव सुपामपि प्राप्नोति । ततश्च 'यत्करणाभिधायिन्या विभक्त्या संयुज्य निर्दिशति' । 'तदागमे हि तद्दृश्यते तस्य ज्ञानम्' इत्यादिव्यवहारविरोधः स्यात् ।

## केषां विरोधपरिहारः

तत्र केचिदाहुः । एकमपि शास्त्रं प्रयोजनवशात्संबन्धिभेदेन भिद्यमानमन्यथा च विशेषणविशेष्यभावप्रतिपत्तेस्तिङ्क्षु विशेष्यत्वे[1] संख्या च वक्ष्यति । सुप्सु विशेषणत्वेनेति ।

## केषाञ्चित्परिहारेऽपरितोषात् समाधानान्तरम

अथैतेनापरितोषः, ततोऽन्यथोच्यते ।

शास्त्रे यद्यपि नैतेषामभिधेयत्वमाश्रितम् ।
तथाऽप्याश्रितसिद्ध्यर्थमभिधेयत्वमिष्यते ॥

शास्त्रे हि कार्यवशेनानभिधेयस्याप्यभिधेयत्वं पारिभाषिकमाश्रीयते । न च तावता लोके तथैव प्रसज्यते । न च कर्मादयोऽनभिधेया एवेत्येतच्छास्त्रेऽ-भिहितम् । किं तर्हि । एकान्ताभिधेयैवकत्वादिविशेषणं तावद्ब्रुवन्तीत्येतद्व्याख्या-तमेव । तस्माद्विशेषणतामेवैते प्रतिपत्स्यन्ते ।

तद्यत्र न शास्त्रेण न न्यायेनाभिधेयत्वप्राप्तिस्तत्रानभिधेया विज्ञास्यन्ते । यत्र पुनः शास्त्रोक्तां विशेषणतामनभिधीयमानाः प्रतिपत्तुं न शक्ष्यन्ति, तत्र न्याय-

---

१. क० विशेष्यत्वेन ।

लभ्यामनन्यगतित्वादभिधेयतामपि प्रतिपत्स्यन्ते। अर्थापत्त्या वा शास्त्रेणाप्यभिधेयतयोक्ता भविष्यन्ति। तत्र तिङ्क्षु भावनोपस्थानाद्विशेषणत्वसिद्धेर्नावश्यमभिधेयत्वमङ्गीकर्तव्यः। सुप्सु पुनः प्रातिपदिकार्थानामेकत्वादीनां चाकारकेषु कारकान्तरेषु च व्यभिचारादन्यतरप्रतिपादनशक्तौ विहतायामन्यस्य च भावनाधात्वर्थादेर्गमकस्यानभिधानान्न किंचिदुपस्थापकमस्तीति स्वयं कारकमनभिधाय तद्विशिष्टसंख्याभिज्ञानानुपपत्तेः कारकमप्यभिधेयं भवति।

ननु च केवलकारकपदप्रयोगाभावादवश्यंभाव्याख्यातपदाभिहितभावनोपनीतानामेव कारकाणां तिङ्क्ष्विव संख्यासंबन्धोऽत्रकल्पिष्यते। कथमेवकल्पते। यदा वाक्ये स्वनियतपदक्रमेषु कदाचिदाख्यातशब्दात्प्रथमप्रयुक्तेन सुबन्तेन वृक्षमिति कारकप्रत्ययो जन्यमानो नाभिधानमन्तरेण सिध्यति। ननु तत्रापि क्रियासंबन्धात्प्राक्कारकत्वानुपपत्तेस्तावत्कारकविभक्त्यानोत्पत्तव्यं यावत्क्रियासंबन्धो नोपदर्शितः। ततश्च क्रियापूर्वकत्वं संप्रतिपद्यत इति। सत्यम्। वक्तुरेवं, श्रोता पुनर्यः प्रथममेव वृक्षमितिश्रृणोति न तेन क्रिया तत्संबन्धो वाऽन्यतः पूर्वमवधारितः। किं तर्हि। शब्दमात्रात्कारकं प्रतिपद्यानुमानेनार्थापत्त्या वा वक्त्रा पूर्वतरसंकल्पितां क्रियां प्रतिपद्यते। अन्यथा हीतरेतराश्रयत्वं स्यात्। कुतः।

**क्रियया कारकस्य कारकेण क्रियाया आक्षेप इति शंका**

क्रियया कारकं गम्यं कारकेण क्रिया तथा।
एकस्याप्यनपेक्षत्वे न मूलमवधारितम्॥

द्वयोः संबन्धिनोरवश्यमेकस्येतरनिरपेक्षं प्रतीतिमूलमभ्युपगन्तव्यम्। तदिह यदि क्रियागम्यं कारकं ततः क्रिया केन प्रत्याय्यत इति वक्तव्यम्। न च तावद् वृक्षप्रातिपदिकं क्रियाया वाचकं, शाखादिमज्जातिमात्रवचनत्वात्। नापि प्रादिपदिकार्थो गमको, विनाऽपि क्रिययोपपत्तेः। अथोच्येत। न जातुचित्कश्चिन्निष्क्रियः संभवत्यतोऽस्तितिष्ठत्यादिका काचिदेकान्तेनाऽऽक्षिप्ता क्रिया भविष्यति।

अथवा 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते' इत्येवं सक्रियत्वात्कारकाक्षेपः सेत्स्यतीति।

**तन्निरासः**

तदनुपपन्नम्। कुतः।

तिष्ठत्यादावुपात्तेऽपि क्रियामात्रे ह्यकर्मके।
कर्तृमात्रमुपात्तं स्यान्न कर्मादि नियोगतः॥

सामान्येन ह्यत्रास्त्यादिक्रिया काचित्प्रातिपदिकार्थेनाऽऽक्षिप्येत। न चासौ सर्वकारकाक्षेपे समर्थेति कर्मादीनामन्यत्प्राकं मृग्यम्। न च विभक्तिः क्रियां

ब्रवीति यथा कर्माऽऽक्षिप्येत। न च संख्या क्रियाकारकविशेषाक्षेपसमर्थेत्युक्तम्। अतो न कारकप्रतीतिं भुक्त्वाऽन्यत्क्रियायाः प्रत्यायकमस्ति। तत्र यदि कारकस्यापि क्रिया प्रत्यायिकेष्यते ततः स्फुटतरमितरेतराश्रयेणोभयोरपि निर्मूलत्वमापद्यते। तस्मादिहानन्यगतिकत्वात्कारकं विभक्तिवाच्यं, तत्सम्बन्धाच्च तदनुरूपक्रियाक्षेप इति वक्तव्यम्। यदा तर्हि क्रियापदपूर्वकं कारकपदं प्रयुज्यते, तदा तत्संबन्धयोग्यायाः क्रियायाः पूर्वतरप्रतीतत्वेन कारकप्रत्यायनसामर्थ्यं-पाद्विभक्तिभिः संख्यामात्रमभिधीयेत्। सत्यमेवमपि प्राप्स्यद्यदि नित्यमाख्यातोक्रमाण्येव वाक्यानि प्रायोक्ष्यन्त, तेषां त्वनियमेनैव प्रयोगः सर्वदा स्थितः। गां पश्य पश्य गां चेति। तस्मान्नानभिधेयता।

नन्वेवमप्यभिधानशक्तेरप्यनियमेन भवितव्यम्। न शक्यमेवं भवितुं यदा हि सुबन्तपूर्वप्रयोगापेक्षया कल्पिता वाचकशक्तिस्तदा किमसौ प्रयोगान्तरेऽपनेतुं शक्यते। न ह्यनित्यः शब्दार्थसंबन्धः, शक्तिद्वयनियमश्च संबन्ध इत्युक्तम्।

अथोच्येत। आख्यातपूर्वप्रयोगापेक्षया विभक्तेः शक्त्यभावेऽवधारितेऽवश्यंभाविनि चैकरूप्येऽत्यन्तमशक्तिरेव भवत्विति। तदयुक्तम्। कुतः ?

सत्यप्यव्यापृता शक्तिः कृतार्थत्वान्न दुष्यति।
असत्यास्तु फलं तस्याः प्रार्थितं दुर्लभं भवेत्॥

सर्वत्रैव यस्य कस्यचित्कार्यस्य सदसद्भावदर्शनाद्विरुद्धमदसद्भावात्मकत्वानभ्युपगमे सत्यैकरूप्यं परिगृह्यते। तत्सद्भावः परिग्रहीतव्यः। सतामपि प्रतिबन्धात्, कारणान्तराभावात्, अदन्यतो वा सिद्धेः कार्यानारम्भाविरोधात्। असतश्च कार्यवेलायां देवेरप्यप्राप्तेरनिमित्तकार्योत्पादप्रसङ्गादित्युक्तं संबन्धनित्यत्वे। तस्मात्कल्पिता वाचकशक्तिर्नामपूर्वं तावत्प्रयोगे व्यापरिष्यते। विपर्यये पुनरुदासिष्यते। लब्धात्मकत्वाद्वा श्रौतत्वे सति अनुमानप्रत्ययं निराकुर्वन्ती कार्यमारप्स्यते। अतश्च सिद्धाः सुपां कर्मादयोऽर्थाः। तिङां तु नियतपौर्वापर्यवशादेकान्तेन धात्वर्थ-भावनाभ्यामुपस्थापितयोः कर्तृकर्मणोः पश्चात्संख्याऽवगम्यत इति न कदाचिदपि कारके विशेषणे वाचकशक्तिकल्पनावसरः, ततश्च नित्यानुमेये कर्तृकर्मणी इति सिद्धम्।

अथात्र कश्चिदनुमानकुशल आह—ननु कर्तुरेकत्वादेकवचनं कर्तृद्वित्वाद्द्विवचनं कर्तृबहुत्वाद्बहुवचनम्। तेन नूनं कर्ता शब्दार्थ इति। कोऽभिप्रायः। कर्तृविशेषप्रत्यायनार्थं यः शब्द उच्यते, देवदत्तादिः, तेन सह पचत्यादीनां प्रयुज्यमानानां तदनुवर्तनं सर्वप्रकारं दृश्यते। तत्तु सामानाधिकरण्याद्भवति। सामानाधिकरण्यं च द्वयोरप्येकविषयत्वे कल्प्येत। तेन यदि हि देवदत्तादयः सामान्यतः पचतिशब्देनाभिहिताः, ततस्तैः सामानाधिकरण्यं लभ्यते। लक्षण-

याऽऽक्रुत्यरुणाधिकरणोक्तन्यायेन भविष्यतीति चेत् ? न। तण्डुलस्थेन पाकेन लक्षयितुमशक्यत्वात्। तत्समवेतमेव ह्येकत्वादि लक्षयितुं शक्यते, नान्यसमवायि।

## शङ्का-तन्निरासौ

तत्रैतत्स्यात्। अधिश्रयणादयोऽपि देवदत्तसमवेतास्तस्य पाकत्वेनोच्यन्त इति। सत्यमुच्यन्ते, न तु तद्द्वारं सामानाधिकरण्यं भवति। गोत्वारुणत्वादीनि हि विशेष्ये स्वात्मानुरूपप्रत्ययोत्पादनान्मतुब्लोपाभेदोपचारनिमित्ततां प्रतिपद्य शब्दं प्रवर्तयन्ति, सामानाधिकरण्यं कारयन्ति नत्वेवमधिश्रयणादिरूपापन्नो देवदत्तो गम्यते, येनाभेदोपचारमतुब्लोपौ स्याताम्। अतो यथा दण्डादिशब्दा देवदत्तादिसामानाधिकरण्यं न प्रतिपद्यन्ते दण्डो देवदत्त इति, यथा वाऽधिश्रयणोदयः, पाको वा देवदत्त इति प्रयोगो न भवति, तथा पचति देवदत्त इत्यपि न स्यात्।

तस्मात्पचतिशब्दादिर्वाचकः कर्तृकर्मणोः।
तत्पदाभेदवर्तित्वात्पक्तपकादिशब्दवत् ॥

अभेदवर्तित्वं हि तत्पदसामानाधिकरण्यमसंदिग्धवाचकेषु कृदन्तेषु पक्ता देवदत्तः, पक्व ओदन इत्यादिषु दृष्टम्। यत्र च कर्तृकर्मवचनत्वं नास्ति, तत्र सामानाधिकरण्यम् दृष्टं। यथा पाकादिशब्दे।

किं च— तच्छब्दोपात्ततद्भूतसंख्याभेदानुवर्तनात्।
तथैव वाचकत्वं स्याद्दृष्टान्तौ ताविहापि च ॥

पचति देवदत्तः, पचतो देवदत्तयज्ञदत्तौ, पचन्ति देवदत्तयज्ञदत्तविष्णुमित्रादय इति यैव कर्तृवाचिनि देवदत्तादिशब्दे संख्या, सैवाऽऽख्यातेऽपि दृश्यते। यत्र चासौ दृश्यते, स वाचको दृष्टो। यथा पक्ता देवदत्तः—पक्तारावित्यादि। तथा कर्मण्यपि पच्यत ओदनः, पच्येते ओदनशाकौ, पक्व ओदनः, पक्वौ शाकौदनावित्यादीनि पक्षदृष्टान्तोदाहरणानि वक्तव्यानीति।

## विशेषबोधकस्य सामान्यबोधकत्वमिति प्रतिपादनम्

किञ्च— तयोरभिहितत्वेन विभक्तिप्रतिबन्धनात्।
साधर्म्यं पूर्वमेवान्यद्देवदत्तेन पच्यते ॥

इतश्च वाचको येनानभिहिताधिकारविहितकारकविभक्तिप्रतिबन्धो दृश्यते। पचति देवदत्तः। पच्यत ओदन इति। यदि हि वाचकत्वं न स्यात्, ततः 'अनभिहिते' 'कर्मणि द्वितीया' 'कर्तृकरणयोस्तृतीया' इति च विभक्तिप्राप्तिर्न केनचित्प्रतिबध्येत्। यथा पच्यते देवदत्तेन पचत्योदनमिति। यतस्तु खलु

प्रतिबन्धस्तेनावगम्यते पक्तृपकसाधर्म्येणैव वाचकत्वम्, साधर्म्यादिन्यद्वैधर्म्यं, तदेवं दर्शयितव्यम्। यत्र च वाचकत्वं नास्ति, तत्र कारकविभक्तिप्रतिबन्धोऽपि नास्ति, यथा पच्यते देवदत्तेन। पचत्योदनमिति।

इतश्च बोधकः शब्दस्तद्विशेषावबोधनात्।
यथा श्रोत्रप्रकारस्य बोधकं शब्दबोधकम्॥

यदि पचतिशब्दादिभिः कर्तृकर्मणी नोच्येयातां, कथं तद्विशेषः संख्याऽभिधीयते। तन्नाभिधत्ते तद्विशेषमभिधत्त इति हि विप्रतिषिद्धमेतत्। न हि श्रोत्रं शब्दसामान्यमगमयत्तद्विशेषमकारं गमयति। न च शब्दस्याभिधातृत्वादन्यादृशं बोधकत्वं भवति। भावनया हि गम्यमानत्वेऽर्थं एव बोधकः स्यात्, शब्दः तस्मादपि वाचकत्वम्।

**वाचकत्वमेव बोधकत्वं, नान्यदित्यादिना**

किञ्च— विशेषणैश्च सम्बन्धादुच्यते कर्तृकर्मणी।
न ह्यनुक्तस्य संबन्धः स्वगुणैरवकल्पते॥

इतश्चाभिधीयेते विशेषणैः संबध्यमानत्वादिह शोभनः पचति, शोभनः पच्यते। यत्रानयोर्विशेषणसंबन्धः। तत्राभिधेयत्वमपि दृष्टम्। तथा शोभनः पक्ता, रमणीयः पक्व इति। यत्र त्वभिधेयत्वं नास्ति, तत्र विशेषणसम्बन्धोऽपि न दृष्टो। यथा शोभनमास्यत इति। न च गम्यमानस्य इति। न च गम्यमानस्य विशेषणसम्बन्धो। यथा धूमशब्दादग्नेरवगतस्य न ज्वलनादिभिः संबन्ध इति।

तदेतत्सर्वं 'ननु कर्तुरेकत्वादेकवचनम्' इत्यादिनैव दर्शितत्वाद्भाष्यकारेण न प्रपञ्चितम्। तद्गतसंख्यायोग्यत्वं सामाधिकरण्यादिर्भिविना नोपपद्यते। तस्मादभिधानपक्ष एव न्याय्य इति।

**उक्तस्य पूर्वपक्षस्य निरासः**

अत्राभिधीयते यत्तावदुक्तं वाचकः पचत्यादिशब्दः कर्तृकर्मणोः सामानाधिकरण्यादिति। तत्र यदि वाचकशक्त्याऽस्तित्वमनुमीयेत, ततः पूर्वोक्तेनार्थापत्तिभङ्गेन सर्वप्रमाणानुपपत्तेरनुपलब्धिविरोधः। सर्वशक्तीनां चार्थापत्तिरेवैकं प्रमाणम्। सा चेहान्यथाऽप्युपपत्तेर्निराकृता। अनुमानविरोधश्च। नाभिधाता कर्तृकर्मणोः पचत्यादिशब्दः तदत्यन्ता विनाभूतार्थाभिधायित्वात्। यो यदत्यन्ताविनाभूतार्थाभिधायी, स तस्य न वाचकः। यथा शिंशपाशब्दो वृक्षत्वनियतशिंशपात्वस्य। तथा कर्तृकर्मणी नाभिधेये तिङा, तदभिधेयापरित्यागात्। तद्व्यापारद्विनाऽपि च प्रतीयमानत्वात् द्रव्यत्ववत्। तस्मिन्नेव

शिंशपाशब्दे वृक्षत्ववत् । कारकत्वादाख्यातानभिधानं करणादिवत् । तिङ्-शब्दस्यावाचत्वमाख्यातत्वावास्यत इत्यादिवदित्येवमपि शक्यं वक्तुम् ।

नन्वचन्द्रः शशीतिवदेतलौकिकविरुद्धमनुपानम् । नैव दोषः । यदि वयं प्रत्याय्यत्वं, प्रत्यायकत्वं वा निह्नुमहि, ततो लोकविरुद्धं ब्रूयाम् । वाच्यवाचक-शक्तिप्रतिषेधस्त्वयं क्रियते । न च तेन लोकप्रसिद्धिविरोधः, प्रत्ययोत्पादमात्रेण कृतार्थस्य लोकस्याभिधेय-गम्यमान-द्योत्य-विषयरूपार्थचतुष्टयविवेकानादरात् । यदि तु लोकप्रसिद्धं प्रत्याय्यप्रत्यायकत्वमात्रं साध्येत, ततः प्रागुक्तेन भावना-द्वारप्रतीत्यभ्युपगमात्सिद्धसाधनम् । लोकविरोधोऽपि तवैवाऽऽपद्येत । कुतः ?

लोको यदन्यतः सिद्धं नाभिधेयं तदिच्छति ।
यथा श्रोत्रगृहीतत्वात्स्वरूपं नाभिधीयते ॥

**शब्दाधिकरणोक्तलक्षणवैयाकरण्ये प्रतिज्ञादोषादीनां वर्णनम्**

शेषा अपि प्रतिज्ञादोषाः पूर्वोक्तेन मार्गेण वर्णस्फोटजात्यादिशब्दवि-कल्पनया शक्तिद्रव्यकारकविकल्पेन व्यतिरेकाव्यतिरेकप्रश्नेन च वैयाकरणं प्रति योजयितव्याः ।

**स्मृतिविरोधं परिहृत्य, समानाधिकरण्यस्योपपादनम्**
**तच्च लाक्षणिकमेव न तु मुख्यमिति**

तथा सामानाधिकरण्यं श्रौतं लाक्षणिकं वा हेतुरुच्यते । श्रौतं तावदुभयो-रप्यसिद्धम् । कस्मात् ? अस्माकं भावनामात्राभिधानात् । तव शक्तिमात्र-रूपेणाभिदध्यात्, न द्रव्यरूपेण तस्याऽकारकत्वात् । यस्यापि हि द्रव्यं कारकं, तेनापि शक्तिर्विशेषणत्वेनावश्यमभ्युपगन्तव्या । तद्रहितद्रव्यव्यापारासम्भवात् । ततश्चाऽऽकृत्यधिकरणाच्छक्तेरेवाभिधानमिति द्रव्यशब्देन सह समानाधिकरण्या-नुपपत्तिः । शक्तिवचनस्तु नैवाऽऽख्यातसमभिव्याहृतः कश्चिच्छब्दोऽस्ति, येन सह श्रौतं सामानाधिकरण्यं स्यात् । स हि कारकविभक्त्यन्तो भवेत् । न चेदानीं कारकविभक्तिः प्रयुज्यते । यस्य तु द्रव्यं कारकं, तस्य यद् द्रव्यं केनचित्कारका-त्मनाऽवधारितं, तस्य जातिवत् तत्त्वानपायात् यावत्सद्भावं कारकान्तराविवक्षा प्राप्नोति ।

**आश्रयशक्तिरेव वा भाष्योक्तपक्षद्वयस्य क्रमेण विकल्प्य निरासः**

शक्तिपक्षेऽप्यविशिष्टमिति चेत् ? न । एकद्रव्याश्रितानां तासामाविर्भावतिरो-भावविवक्षावशेन तथा तथाऽभिधानात् । द्रव्यस्य त्वेकात्मकत्वादपेक्षाकारण-रहितस्य न विवक्षान्तरं प्राप्नोति ।

यदि च द्रव्यवाचित्वं सुप्तिङन्तेष्वपीष्यते ।
ततो लिङ्गादियोगः स्यात्सत्त्वभावात् कृदन्तवत् ॥

यथैव पाचकादिशब्देषु द्रव्यप्राधान्यात्सत्त्वरूपप्रत्ययो भवति, एवं सुप्तिङ-न्तेष्वपि स्यात्। ततश्च यथैतेष्वेव पाचकं ब्रूहि, पाचकेन कृतं, पाचकाय देहीति कारकान्तरयोगो भवति, एवं पचत्योदनमित्यादिष्वपि प्राप्नोति। तस्माच्छक्तिमद् द्रव्यकारकपक्षेऽप्यवश्यं निष्कृष्य शक्तिमात्रं सुप्तिङ्भ्यामभिधेयमेष्टव्यम्। तथा सति हि।

आविर्भूतैकया शक्त्या द्रव्यमात्मवशीकृतम्।
न शक्त्यन्तरयोगित्वं तदैव प्रतिपत्स्यते॥

तेन कारकान्तरायोगो, लिङ्गसंख्यारहितत्वं च द्रव्यप्रधानकृतवैलक्षण्येन सिद्धम्। ततश्चावस्थितं श्रुतिसामानाधिकरण्यस्योभयोरसिद्धत्वम्।

अथ लक्षणया सामानाधिकरण्यम् अविशेषितं वा हेतुः ततः सिंहो माणवक इत्यादिष्वन्तरेणापि वाच्यवाचकभावं समानाधिकरण्यं दृष्टमित्यनैकान्तिकता। यच्च श्रौतं सामानाधिकरण्यं, तस्य कोऽर्थः। समानमधिकरणमिति-समानं वाच्य-मित्यर्थः। न ह्यन्यथा शब्दस्यार्थोऽधिकरणं भवति। सर्वशब्दानामनधिकरणत्वात्, आकाशाधिकरणत्वाद्वा। वाच्यस्य तु विषयत्वप्रतिपत्त्याऽधिकरणत्वमुच्यते। तदपि च लक्षणादिनिवृत्त्यर्थं मुख्यत्वेन विशेष्यते। ततश्च मुख्यया वृत्त्या समाना-धिकरणं समानो विषयः, समानमभिधेयमिति यावत्। ततश्चैवं साधनं भवति। वाचकः पचतिशब्दो देवदत्तस्य, तच्छब्दसमानार्थत्वाद्देवदत्तवचनत्वादित्यर्थः। ततश्चानित्यः शब्दोऽनित्यत्वादितिवत्प्रतिज्ञातार्थैकदेशो हेतुः स्यात्।

तद्भूताधिकरणोक्तेन च न्यायेन, षष्ठान्तवक्ष्यमाणेन च शब्दयोस्तद्बुद्ध्यो-रर्थयोरर्थबुद्ध्योरित्यादिभिर्व्यवहारकाले सामानाधिकरण्यं विकल्प्य सर्वप्रकार-मसिद्धत्वं गवाश्वादिशब्दाविशेषाद्वाऽनैकान्तिकत्वमुद्भावनीयम्। अनुमानविरोधो-क्तैरेव हेतुभिर्मुख्यसामानाधिकरण्यनिराकरणादसिद्धता निर्णेतव्या।

संप्रतिसाधनता च वक्तव्या। दृष्टान्तोऽपि यदि तावच्छक्त्यभिधानत्वेन, ततः साध्यविकलता। न हि पाचकादिशब्दाः शक्तिपराः। किं तर्हि। शक्त्यन्त-रायोगित्वाच्छक्तिमत्परा इत्युक्तम्। सति च शक्तिपरत्वे, तथैव मुख्यसामाना-धिकरण्यात्मकमेव हेतुविकलत्वम्। पाचकादिशब्दवदेव प्रधानभूतशक्त्यनभिधान-प्रसङ्गात्सिषाधयिषितधर्मविशेषविपरीतसाधनता।

अथवा यदा मुख्यं सामानाधिकरण्यमसिद्धं तदेतरदवाचकेष्वेव दृष्टमिति विरुद्धता। न च लक्षणायां गौणत्वे वा वाचकत्वमस्तीति तत्सिद्धिसूत्रे 'अर्थाभि-धानसंयोगात्' इत्यत्र च साधितम्। तेन विपक्ष एव नास्तीत्येवं शक्यं वक्तुम्। एवं परेष्वपि साधनेषु यथासंभवं योजयितव्यम्।

### शक्तिपक्षे संख्याभिधानस्यानुपपत्तिवर्णनम्

तद्गतसंख्योपादानमपि शक्तिगतत्वेन तावदसिद्धम्। न हि शक्यात्मककारकाश्रयाः संख्याः केनचिदिष्यन्ते, द्रव्याश्रितत्वात्तासाम्। अथ तु यद्गतामसो संख्यामुपादत्ते, तस्यैव प्रतिद्रव्यस्य वाचक इति प्रतिज्ञायते। ततः पूर्वाभ्युपगमविरोधः। न हि कश्चिद्वैयाकरण आख्यातस्य द्रव्यवचनत्वमिच्छति। यदि तु वाच्यलक्षितगतसंख्याभेदोपादानभेदोपचाराद्वा गौणमेवैतद्धेतुः। ततः सिंहो देवदत्तः, सिंहौ देवदत्तयज्ञदत्तौ। सिंहा देवदत्तयज्ञदत्तविष्णुमित्रा इत्यादिभिरनैकान्तिकम्। पाचकादौ यावति पचतिकर्त्रभिधानं, तावति संख्याभेदोपादायित्वं नास्ति, विभक्तिवाच्यत्वात्संख्याया इति हेतुविकलता। यत्र तु विभक्तौ तदस्ति, तस्यां कर्त्रभिधानाभावात्साध्यविकलता। तेन तृतीयान्तमेव किंचित्पदमुदाहर्तव्यम्। तत्रापि तु सर्वे सामानाधिकरण्यवद्दोषाः संभवन्तत्यसाधनत्वम्।

### अत्रानैकान्तिकदोषोद्भावनम्

इदमपरमनैकान्तिकत्वम्। गोशब्दो न ब्रवीति द्रव्यम्। अथ तु तद्गतसंख्याभेदमुपादत्ते। नैवैष विपक्ष इति यदि वदेत्, अकृत्यधिकरणमस्मै व्याख्यातव्यम्। **कतरदत्रानुमानं बाधितुमर्हतीति**—सप्रतिसाधनतां यथोक्तां दर्शयित्वा, **यथाऽऽकृतिवचने शब्द** इति परकीयस्यानैकान्तिकतामुद्भाव्या, आत्मीयेन निर्णयः कृतः। यदपि च कारकविभक्तेः प्रतिबन्धनं, तदपि यदि तावत्सर्वस्यास्ततोऽसिद्धम्। प्रथमाया अप्यभिहितकारकविभक्तित्वात्। अथ यस्याः कस्यश्चित् ततोऽनभिधायकेष्वप्यपवादेषु तदस्तीत्यनैकान्तिकता। 'उभयप्राप्तौ कर्मणि' इति परिसंख्यानात्कर्मगता षष्ठी न तावत्कर्तारमभिधत्ते। अथ च कृदन्ताभिहितक्रियासंबन्धिकर्तृविभक्तिः षष्ठी प्रतिबध्नाति।

### द्वितीयातृतीयाविभक्तेः पूर्वपक्षिणोद्भाविताया निरासः

यत्त्वनभिहिताधिकारोक्ते द्वितीयातृतीये प्राप्नुत इति। तदनुपपन्नम्। कुतः ?

संख्यायां कारके वा धीर्विभक्त्या हि प्रवर्तते।
उभयं चात्र तत्सिद्धं भावनातिङ्विभक्तितः॥

पचति देवदत्त इत्यत्र कर्तृत्वं तावद्भावनयैव बोधितम्। याऽपि संख्या, वाऽपि तिङा। किमन्यदवशिष्यते, यदर्थं विभक्तिरुत्पद्येत।

### भावनया योग्यतया कर्त्रैवाक्षिप्यते करणानीतीत्याक्षेपे केषाञ्चिन्मतम्

कथं पुनरनेककारकसंनिपाते सति कर्तृत्वमेव भावनया देवदत्तस्यावगमितं, न कारकान्तरत्वमिति। योग्यतावशेनेति केचित्। देवदत्तो हि पाकस्य कर्तृत्वयोग्यो, न करणत्वादियोग्यः। न चाकारकस्य सत आख्यातेन संबन्धोऽवकल्पते।

तस्मात्कर्तृत्वं गृह्णातीति । न त्वेतत्काष्ठानि पचन्तीत्यत्र संभवति । न हि तानि कर्तृत्वयोग्यानि । किं तर्हि ? करणत्वार्हाणीति प्रसिद्धमेतत् । अथोच्येत नैवात्र काष्ठानां कर्तृत्वम् । किं तर्हि ? करणत्वमेवेदमुक्तेन न्यायेन कर्तृत्ववत्स्वां विभक्तिं नोत्पादयति । एवं स्थाली पचतीत्यधिकरणत्वं सप्तमीम् । तण्डुलाः पचन्तीति कर्मत्वं द्वितीयाम् । कुशूलः पचतीत्यपादानत्वं पञ्चमीम् । ब्राह्मणाः पचन्तीति संप्रदानत्वं च चतुर्थीम् । सर्वत्र योग्यत्वस्य निर्णयकारणत्वादिति ।

### केषाञ्चित्समाधानस्य निरासः

तदनुपपन्नम् । कर्तृप्रतीतेः सर्वस्य स्वसंवेद्यत्वात् । आह । नैवेयं कर्तृत्वप्रतीतिः ननाकारकप्रतीतिरेव तु सती तिङ्वाच्यकर्तृत्वप्रसिद्धिवासनावशेन तत्सामानाधिकरण्यबुद्ध्या कर्तृप्रत्ययवदाभासते = यस्तु निपुणः पश्यति, तस्य भवत्येव तत्र तत्र कारकविवेकः । तथा हि ।

स्थाल्यादेर्योऽपि कर्तृत्वं तदानीमध्यवस्यति ।
नाऽऽधारादन्यथाभूतं व्यापारं सोऽपि विन्दति ॥

यं हि व्यापारं साधयन्ती स्थाली अधिकरणत्वं प्रतिपन्नवती, कर्तृत्वेनाप्यभिधीयमाना तमेव प्रतिपद्यते । तस्माद्वरमधिकरणत्वेनैव स्थाल्युच्यत इति कल्पितम् । लकारवाच्ये तु सति कर्तर्यधिकरणादिषु लकारानुत्पादात्सामानाधिकरण्यानुपपत्तेस्तिङा च संख्यानभिधानात्सप्तम्यादिप्रसक्तौ सत्यां प्रथमासिद्ध्यर्थं तिङभिधानार्हकर्तृत्वमेषामुच्यत इति बलादभ्युपगमनीयं स्यात् । अनभिधाने तु यस्यैव तिङुक्तसंख्यासंबन्धो विवक्षितः तदेव सिद्धफलत्वात्फलभूतां वैभक्तिमनुत्पादयदपि गम्यते, शिष्टानि पुनरुत्पादयिष्यन्ति ।

नन्वेवं सति सर्वेषां भावनया गम्यमानत्वं संख्यासंबन्धयोग्यत्वं चास्तीति, सर्वदेव द्वितीयानुत्पादः प्राप्नोति । नैष दोषः । यद्यपि कारकाणि स्वरूपतो गम्यमानत्वात् तदर्थं विभक्तिं न प्रयोजयन्ति, तथाऽपि तिङुपात्ता संख्या केन संबध्योपयुज्यत इति, शेषसंख्यार्थमवश्यं विभक्त्यन्तराणि प्रयोक्तव्यानि । ननु तिङुपात्तैवागृह्यमाणविशेषत्वात्सर्वैः संबध्यते । कथमेका सती शक्नोति संबन्धुम् । संबध्यमानायां च संख्यान्तरोपजन एव प्राप्नोति । विकल्पः स्यादिति चेत् । इष्ट एवासौ । यथाप्रयोगं तु व्यवस्थितो, न प्रयोगान्तरकालं यथेष्टकल्पनया । यदेव प्रथमान्तमादितः प्रयुक्तं, तदेव तिङ्वाच्यसंख्यायोग्यत्वेन विवक्षितमित्यवगम्य, शेषेषु यथास्वं विभक्त्यन्तराणि प्रार्थ्यन्ते । यदा तर्हि बहुवचनप्रयोगः तदा साधारण्यविभवाच्छेशेषु विभक्त्यन्तरासंभवप्रसङ्गः । इष्ट एवैषोऽपि । यदा सर्वाणि तुल्यकल्पत्वेन विवक्ष्यन्ते, यथा काष्ठादीनि पचन्तीत्यत्र । यदा तु खलु कर्तृमात्रगतमेव बहुत्वं विवक्ष्यते, कारकान्तराणि च श्रुत्यैव गुणभूतानि दर्शयि-

तव्यानि। तदानीं प्राथम्यप्राधान्याभ्यां कर्तर्येव संभवात्, तदतिक्रमकारणभावाच्च न कारकान्तराणि गच्छतीति, कर्तृष्वेव लीयते। कारकान्तराणां च स्वविभक्तिभिरेव संख्याऽभिधीयते।

यद्येवं ततः सर्वदैव तिङभिहितया संख्यया कर्ता नातिक्रमितव्यः। कथं तर्हि स्थाली पचतीति प्रयोगः ? उच्यते।

किं पुनरत्र युक्तं किं कुतश्चित्कारणात्कर्तारमतिक्रम्याधिकरणं संख्ययाऽऽश्रितम्, अथवा तत्संख्यार्हं कर्तृत्वमेव स्थाल्यां विवक्ष्यते, इति। कर्तृत्वविवक्षा युक्तेति मन्यामहे। कुतः ?

न मुख्यातिक्रमे किंचिद् दृश्यते कारणान्तरम्।
मुख्यत्वस्य विवक्षा तु यथेष्टं ननु युज्यते॥

सर्वत्रैवार्थद्वये संभवत्यन्तररूपविवक्षा युक्ता। संभवति च सर्वकारकाणां स्वव्यापारापेक्षया कर्तृत्वमिति पुरस्तात्प्रतिपादितम्। न हि प्रधानक्रियागतं कारकवैचित्र्यं स्वव्यापारविषयात्कर्तृत्वाद्विनोपपद्यते। तस्मात्तदेव विवक्षितमिति न्याय्यम्। न कारकान्तरसंख्याभिधानमिति। एवं च सति यत्कर्मसंख्याऽपि कचिदभिधीयते, तत्रोक्तं कारणम्। न च तदन्यत्रास्तीति व्यवस्था। तदा त्वनभिहिताधिकारोऽप्येवं करिष्यते अनभिहिते कर्मण एकत्वे, द्वित्वे, बहुत्वे चेत्यादि। कुतः ?

विभक्तयो विधीयन्ते यत्र तस्य विशेषणम्।
युज्यतेऽनभिधानं हि न पुनस्तद्विशेषणे॥

न ह्युपसर्जनस्य विशेषणसंबन्धो युज्यते। विशेष्यास्त्वेकत्वादय एव पुनर्विशेषणान्तरसंबन्धं सहन्ते, प्रधानत्वात्। तथा च समासाधिकारेऽप्युक्तं 'भवति वै प्रधानस्य सापेक्षस्यापि समासः' इति। तस्मादेकत्वादिष्वनभिहितेष्विति संबन्धः।

एतस्मिंस्तु व्याख्याने कुतः कट इति शब्दयोरपि द्वितीया स्यात्। उभयत्रापि कर्मैकत्वस्यानभिहितत्वात्। अथप्रथमयैवाभिहितत्वान्न भविष्यतीत्युच्यते। तदयुक्तम्। प्रागेव प्रथमोत्पत्तेस्तत्प्रसङ्गात्। अपि च कटं करोति, भीष्ममुदारं दर्शनीयमित्यत्रापि कटद्वितीययैवाभिहितत्वाद्भीष्मादिष्वभावः प्रसज्यते।

ननु कर्मादिविभक्त्यर्थवादिनोऽप्यविशिष्टमेतत्। न। तस्य तिङकृत्तद्धितसमासैरनभिहितेष्विति परिसंख्यानात्। न च कटद्वितीया तिङादिष्वन्तर्भूता, यतस्तयोक्तानां पर्युदासो भवेत्। ननु ममापि परिसंख्या भविष्यति। भवेत्। यदि कृदादीनामपि संख्या वाच्या स्यात्। न त्वेते संख्यायां स्मर्यन्ते। नापि

वदन्तो दृश्यन्ते। तेन तिङः केवलस्य ग्रहणमुपपद्यते, नेतरेषाम्। कर्मादयस्तु सर्वेषामर्था इति वैषम्यम्। अतः कृतपाचकादिशब्देभ्यः प्राप्नुवन्त्येव द्वितीयादय इत्यन्यः परिहारो वक्तव्यः। स चैवं संभवति। यैर्हि कर्मादिविशेषणमनभिहिताधिकारः। तथा हि।

कृतः कट इतीहापि कर्मत्वं निष्ठयोच्यते।
तस्मिन्नभिहिते संख्या न द्वितीयां ग्रहीष्यति॥

यस्य च कर्मादयो वाच्या, यस्य च तद्विशिष्टा एकत्वादयः, तयोरुभयोरप्यनभिहितत्त्वं कर्मादिविशेषणम्। अनभिहिते कर्मणि द्वितीया अभिहिते वा कर्मणि ये एकत्वादयो वर्तन्ते, तेषु द्वितीयेति। यद्यपि चोपसर्जनं कर्मादयस्तथाऽपि विशेषणेन सम्बध्यन्ते। समासस्थं ह्युपसर्जने विशेषणैर्न संबध्यते। वाक्यस्थं तु 'ऋद्धस्य राज्ञः पुरुषः' इतिवत् संबध्यमानं दृष्टमेवमादि। एवं च वृत्तिवाक्ययोर्विशेषो भविष्यति। वाक्यस्थाश्च कर्मादयः। अतः सत्यप्युपसर्जनत्वे शक्नुवन्ति समानविभक्तिकानानभिहिताधिकारविशेष्यतां प्रतिपत्तुम्। ततश्च पचति देवदत्त इति तिङादिभिरनभिहितस्य कर्तुः संख्यामभिधातुं तृतीया प्राप्नोत्येव। गतार्थत्वादप्राप्तिरिति चेन्न। भीष्मादिभिरनेकान्तात्। उक्तं ह्येतत्कटद्वितीययोक्तेऽपि कर्मणि भीष्मादिभ्यस्तदुत्पत्तिरिति। यदि च तृतीया गतार्थत्वान्नोत्पद्यते, ततः प्रथमावाच्याऽपि संख्या गतैवेति कामं सा नोत्पद्यते। केवलप्रातिपदिकप्रयोगासम्भवात्तदुत्पत्तिरिति चेत्? न। एवं सति यथाविहिततृतीयाप्रसङ्गात्।

न चैष न्यायेन प्रसङ्ग आपादितः। किं तर्हि? आगमेन। न चाऽऽगमविरोधे न्यायः कार्यक्षमो भवति। तस्मादनभिहितशब्द एवं लक्षणया विशेषात्मनाऽनवगतत्वे वर्तते। पचति-पच्यतेशब्दाभ्यां च संख्यासम्बन्धादराद्विशेषरूपेण कर्तृकर्मणी गम्येते। तस्मात्ततद्विभक्तिर्नोत्पत्स्यते। कारकान्तराणि न कदाचिदेवं विशेषरूपेण प्रतीयन्त इति, स्वविभक्तीरुत्पादयन्ति। कारकत्वाविशेषेऽपि च यथा कर्तृकर्मणोरेव विशेषप्रतीतिः संख्यासम्बन्धश्च भवतीति तथोक्तम्। यत्तु भावोत्पन्नलकारपक्षेण व्यभिचारी नेह पच्यते, नेह भुज्यत— इत्यादिषु पचिमात्रविवक्षायां कर्तृकर्मणोरनाश्रयणाद्धात्वर्थभावनयोराशङ्क्यते, ततश्चागमकत्वमिति।

तत्रोच्यते—

तुल्योऽभिधानपक्षेऽपि स दोषः शब्दगोचरः।
वाचकस्याप्यनेकान्तो गमकस्येव नेष्यते॥

यथैवात्र क्रियाया अनैकान्तिकत्वादन्यत्रागमकत्वमापाद्यते, तथैव शब्दस्यापि कर्मानभिधानात्, ओदनः पच्यत इत्यत्राप्यनभिधातृत्वप्रसङ्गः। अथ व्यभिचार्यप्यसौ केनचिदनुगृहीतः सन्नभिधास्यति, तथा ममापि तदर्थो गमयिष्यतीत्यविशेषः। तच्च सर्वत्र सकर्मकाकर्मकश्यन्विकरणेतरधिकरणोपपदविशेषज्ञानादनभिधातृत्ववद्गमकत्वं विविच्यत इत्यनुपालम्भः। इतरथा तेशब्दस्य भावकर्तृकर्मसु त्रिष्वपि दर्शनं, यतेशब्दस्य श्यन्विकरणात्मनेपदयियक्यङ्क्यङ्प्रत्ययेषु चाविशेष इत्यत्यन्तसंशयहेतुत्वमेवाभिधानपक्षेऽपि स्यात्। तस्मात्तद्भूताधिकरणोक्तेनैवान्वयव्यतिरेकभङ्गपरिहारेण पक्षद्वयमपि समर्थनीयम्। ततश्च विशेषहेतुभिः शक्यो गमकत्वपक्षो निर्णेतुम्। अथवा मुख्य एवानभिहितशब्दः।

कथं तर्हि पचति देवदत्त इति तृतीया नोत्पद्यते, पर्युदस्तत्वात्। कथं प्रर्युदस्तत्वम्। तिङाऽभिहितत्वात्। किमर्थं तर्हि पुरस्तादनभिधानक्लेशः कृतः। लोकवेदार्थं न व्याकरणार्थम् किं लोकवेदव्यतिरेकेणापि व्याकरणव्यवहाराः सन्ति। बाढम्। न हि वृद्धिगुणशब्दौ लोकवेदयोरादैजदेङां वाचकौ दृष्टौ। भवतु संज्ञापरिभाषाणामलौकिकत्वम्। प्रकृतिप्रत्ययार्थास्तु न लोकवेदव्यतिरिक्ताः प्रयुज्यन्ते। कथं न प्रयुज्यन्ते यदा 'लः कर्मणि च' इति वेदलोकयोरत्यन्तमसन्नेव लकारः कर्तृककर्माभिधायित्वेन कथ्यते। ननु लादेशानामत्र। लकारग्रहणेन ग्रहणं युक्तम्। स्थानिनि वाऽर्थदिशनमादेशार्थम्। नैतद्युक्तम्। कुतः।

लकारे लक्षणां तावदादेशार्थे प्रसज्यते।
स्थानिद्वाराऽपरोक्षा च वृत्तिरादेशभाग्भवेत्॥

लकारं श्रूयमाणमुत्सृज्य, आदेशा गृह्यन्त इति श्रुतिबाधः। अथापि लकारस्यैव वाच्याः कर्मादयोऽप्युच्यन्ते, तथाऽपि तेनानभिधीयमानाः सन्तः प्रागादेशोत्पत्तेर्न शक्यास्तथाऽध्यवसातुम्। अन्ते च न्यायविरोधः स्थित एव। अतश्च कस्मिंश्चिदसमञ्जसेऽवश्यकल्पनीये वरमभिधेयत्वमेव पारिभाषिकं कल्पितम्, एकान्तस्याऽऽश्रयणीयत्वात्। न हि कथञ्चिदपि लावस्थायामपारिभाषिकमभिधेयत्वं सम्भवति। तेन 'लः कर्मणि च' इत्यादेशद्वारेण लोकवेदार्थमर्थदिशनम्, उत स्वशास्त्रे व्यवहारार्थमिति परीक्षायां यदि लोकवेदयोस्तिङ्वाच्यत्वं युक्त्याऽवकल्पयिष्यते, ततस्तादर्थ्यपरिकल्पनं युक्तम्। अथानवक्लृप्तिः, ततः स्वशास्त्रार्थत्वमिति। तत्र तु लोकवेदार्थत्वस्य पूर्वं निराकृतत्वात्। परिशेषता। तेनैतदुक्तं भवति। पाणिनेर्मम कर्तृकर्मणी लकाराभिहिते द्रष्टव्ये इति। किं पुनरस्य प्रयोजनम्? यदा न लोकवेदयोस्ते तथोपलभ्येते। यद्यपि च तत्र नास्ति प्रयोजनं, स्वशास्त्रे त्वस्ति। कथं नामानभिहिताधिकारेण लकारप्रयोगे तयोरभिहितत्त्वाश्रयणात्पर्युदासः स्यादिति। तस्माद्य-

द्यपि परमार्थतो नाभिधीयेते, तथाऽपि शास्त्रेऽभिहितवदाश्रयणादनभिहिताधिकारविहिते विभक्ति न लक्ष्येते इति परिहृतः कारकविभक्तिप्रसङ्गः।

यत्तु तद्विशेषाभिधानादिति। तच्छिंशपादिशब्दैरनैकान्तिकम्। शिंशपाशब्दो हि न तावद् वृक्षत्वपार्थिवत्वद्रव्यत्वसत्ताप्रमेयत्वज्ञेयत्वानामभिधायकः, अथ च तद्विशेषमेव शिंशपामभिधत्ते। तेन यथाऽस्य सामान्यमनभिधाय विशेषाभिधानशक्तिर्न विरुध्यते यथा च चक्षुषः सामान्यमनित्यत्वमगृह्णतोऽपि रूपग्रहणशक्तिर्न विरुध्यते। यथा च भवतोऽपि द्रव्यमनभिधायैव तिङा तद्विशेषः कर्तृत्वमुच्यते, तथा मम कर्त्रभिधानादृते तद्विशेषसंख्याभिधानं द्रष्टव्यम्।

यद्यपि गम्यमानस्य विशेषणसम्बन्धो नास्ति, अतस्तत्सम्बन्धदर्शनादभिधानमिति। तदप्याकृत्यरुणाधिकरणयोभयथाऽपि दर्शनान्निराकृतम्। अपि च मधुरो रसः स्निग्धः शीतो गुरुश्चेत्यनेनानैकान्तिकत्वम्। अत्र हि मधुररसस्य गुणत्वाद् गुणान्तरैः शीतादिभिः सम्बन्धो नावकल्पत इत्येतत्प्रतिपादितं द्रव्यं संबध्यते। न च कथंचिदपि रसशब्दस्य द्रव्यवचनत्वम्। तथाऽश्वसहस्रेण नगरं मुषितमिति गम्यमानानामेव (सादिनां) मोषक्रियासम्बन्धः। यत्तु क्वचिद्धूमादौ, रूपादौ वा न दृश्यते, न तावता सर्वत्र स्थितिः कल्पयितुं शक्यते। तस्मान्नाभिधेयः कर्ता। ततश्च श्रौतत्वाभावान्न प्रकरणं बाध्यते।

### नानृतं वदेदित्यस्यानर्थक्योपन्यासन्निरासौ

यत्तु कर्मधर्मपक्षे दर्शपूर्णमासविधिनैव विहितत्वात् प्रात्यात्मिको विधिरनर्थकः स्यात्। तस्मात्पुरुषार्थतेति।

तत्र ब्रूमः—

यावन्न विधिसंस्पर्शस्तावन्नास्य प्रयोजनम्।
विना च तेन धात्वर्थो न क्रत्वङ्गं प्रतीयते॥

विधिरहितो हि धात्वर्थः स्वयमेव साध्यतां प्रतिपद्यमानोऽनपेक्षितप्रयोजनत्वान्न शक्यते दर्शपूर्णमासकथंभावेन ग्रहीतुम्। न च तेनागृहीतः प्रयोगवचनेन विधातुं शक्यते। तस्मादवश्यं प्रात्यात्मिकेन विधिना साक्षात्पारम्पर्येण वा पुरुषोपकारित्वं बोधयित्वा, धात्वर्थं करणीकृत्य तदतिरिक्तप्रयोजनसाध्यापेक्षायां सत्यां संनिहितदर्शपूर्णमासोपकारसम्बन्धे तथाऽङ्गत्वं कल्पयितव्यम्। अन्यथा चेतरेतराश्रयं स्यात्। अङ्गत्वाद्विधिर्विधेश्चाङ्गत्वमिति। तस्मादर्थवानङ्गविधिः। अतश्च वदेदित्यनेनैतावदवगतं दर्शपूर्णमासोपकारं वदनेन साधयेदिति। ततोऽनृतपदसामर्थ्यादेवं भवति यद्वदनेन कुर्यात्, तदनृतेनेति। पुनश्च नञ्सम्बन्धाद्यदनृतवदनेनोपकुर्यात्, तन्नेति वचनं व्यज्यते। तस्माद्दर्शपूर्णमासोपकाराय वदतो

यदनृतं प्रसज्यते, तत्प्रतिषेधो विधीयते। ततश्च यावत्कर्मार्थः संवादः तत्र सर्वत्रानृतं वर्जनीयम्। तेन यवमयः पुरोडाशः कर्तव्य इत्येवमादावध्वर्युमुक्त्वा सक्त्वर्थं मे यदा भविष्यन्ति। तस्माद् व्रीहिमयः क्रियतामित्येवं न विसंवदितव्यम्। **संकल्पस्येति**—च तत्पूर्वत्वाद्वदनमेव प्रतिलक्षयति। अथवा स्वेन वचनेनाध्वर्युमेव संकल्पं कारयित्वेति ण्विजन्तस्य रूपं द्रष्टव्यम्।

**प्रयोजनविषये शङ्कासमाधाने**

आह। यदा स्मृतिप्राप्तनित्यानुवादे, संयोगान्तराच्च विधौ, नानृतं वदितव्यमित्ययमंशस्तुल्यः। किं तदा चिन्तायाः प्रयोजनमिति ? तदुच्यते—

स्मृतिप्राप्तानुवादे हि स्मार्तं नैमित्तिकं भवेत्।
विधिपक्षे यजुर्वेदविधेस्तद्भ्रेषजक्रिया॥

स्मृतौ च यदनृतवदननिमित्तं प्रायश्चित्तं, कर्तव्यं यद्यनुवादः। विधौ पुनरस्य याजुर्वेदिकत्वाद् भ्रेषस्य यजुर्वेदतो यज्ञो विनष्ट इत्यन्वाहार्यपचने 'भुवः स्वाहेति होतव्यम्। स्मृतेस्त्वन्यतरमूलत्वानवधारणान्न वेदभ्रेषनिमित्तप्रायश्चित्तावधारणं स्यात्। एवं मूलमूलिभावाभ्युपगमेऽपि स्मृत्यैव तदर्थस्तदतिक्रमश्चानुसृत इति, तदीयमेव प्रायश्चित्तम्।

ननु तत्रापि याजुर्वेदिकत्वज्ञानात्तद्वेद प्रायश्चित्तमेव भवेत्। नैतदस्ति। एतद्ध्याहवनीयादिविषयत्वादाहिताग्न्यधिकारमवलम्बते। अनृतप्रतिषेधश्च पुरुषमात्रधर्मत्वादनाहिताग्नेरप्यवस्थितः। तेनास्य तावदश्यं स्मार्तं प्रायश्चित्तमपेक्षणीयम्। तच्चेदपेक्षितमेकत्वान्निमित्तस्याऽऽहिताग्नेरपि तदेव युक्तमिति, वैदिकप्रायश्चित्ताभावः।

किं च—

यज्ञेऽन्यतमवेदाङ्गे भ्रष्टे नैमित्तिकं श्रुतम्।
अयज्ञाङ्गविनाशे तु न तस्यावसरो भवेत्॥

'यद्दृक्तो यज्ञ आर्त्तिमियात्' इति हि सर्वे भ्रेषा यज्ञसम्बन्धिनो निमित्तत्वेन श्रूयन्ते। ज्योतिष्टोमसम्बन्धिनश्च प्रकरणादासन्। तत्र 'वेदसंयोगान्न प्रकरणेन बाध्येत' इत्यनेन न्यायेन वाक्यबलीयस्त्वात्प्रकरणं तावदतिक्रम्येत। न तु यज्ञसम्बन्धपरित्यागे हेतुरस्ति। तस्मादवगतवेदविशेषमूलेष्वपि पुरुषधर्मेषु न तन्निमित्तं प्रायश्चित्तं कर्तव्यम्।

**निषेधस्य क्रतुयुक्तपुरुषधर्मा प्रयोजनविचारः**

यदा तु फलकल्पनाभयात् प्रकरणाश्च क्रतुयुक्तपुरुषधर्मा भवन्त्येवंजातीयका इति पूर्वः पक्षः। शुद्धक्रतुधर्मत्वं च सिद्धान्तः तदोभयत्रापि याजुर्वेदिकयज्ञभ्रेषनिमित्तमेव प्रायश्चित्तमिति, प्रयोजनान्तरं वक्तव्यम्।

**अस्मिन् पक्षे पूर्वपक्षे प्रयोजनम्**

तदुच्यते—

विधयोऽपि हि पूर्वस्मिन्पक्षे संस्कारतां गताः।
ते सर्वे याजमानाः स्युर्दीक्षासंस्कारवर्गवत् ॥

सर्वे हि समिदादयः क्रत्वन्तरगताः, स्तोत्रशस्त्रजपादयश्च पूर्वपक्षवादिना पुरुषसंस्काराः। ते च 'याजमानास्तत्प्रधानत्वात्कर्मवत्' इत्यनेनाधिकरणेन याजमानाः स्युः। तत्र समिदादीनां यागात्मकत्वाद् द्रव्यत्यागव्यापारेण दीक्षणीयादिवदुभयथाऽपि याजमानत्वात्। तद्वदेव च यजमानविवृद्धावपि तन्त्रेण प्रयोग इति न कश्चिद्विशेषो दृश्यते। ये व स्तोत्रशस्त्रजपादयः ते गुणभूतकर्तृकर्मनियमसमर्थो प्रधाननियमानधिकृतां प्रधानौद्गात्रादिसमाख्यां बाधित्वा दन्तधावनादिवद्यजमानकर्तृका भवेयुः यजमानविवृद्धौ च साधारणद्रव्यत्यागन्यायेन तन्त्रत्वं न संभवतीति प्रतियजमानं भिद्येरन्। प्रतिषेधेष्वपि च यदा विध्यंश एवमवधारितः क्रतुयुक्तपुरुषोपकार्यनृतवदनमिति; तदाऽस्यैवानृतविशिष्टप्रतिषेधादयमर्थो भवति यजमानेनाऽऽत्मसंस्कारार्थमाशीःप्रयोगादिषु यदुच्यते, तत्र वैकल्पिकावधारणे, स्वरूपोच्चारणे वा मृषात्वं न कर्तव्यम्, अन्यत्र त्वन्येषां च यथेष्टवादित्वमिति।

**सिद्धान्ते प्रयोजनम्**

शुद्धक्रतुधर्मप्रतिषेधे तु यावत्क्रतौ किंचिद्वदनं यजमानस्यर्त्विजां वाऽनृतं प्रसज्यते, तत्सर्वं न कर्त्तव्यं क्रतुसंबन्धित्वाविशेषात्। अतश्च यथैव यजमानेन व्रीहिमयं संकल्प्य, न यवमयो दातव्यः, तथैवाऽध्वर्य्वादिभिरप्यन्यतरं पक्षं करिष्याम इत्युक्त्वा, न लाघवादिवशेन पुनर्विसंवदिव्यम्। यदपि च पुनः संस्कारार्थं किंचित् तदपि क्रत्वर्थांशेनैव वर्जयितव्यम्।

ननु च प्रतिषेधार्थे गुणभूतः पुरुषः तत् आध्वर्यवसमाख्या नियामिकेति प्रणीताप्रणयनादिवदध्वर्युरेकोऽनृतप्रतिषेधमवलम्बेत। सत्यमवलम्बेत, यदि प्रतिषेधार्थोऽनुष्ठेयो भवेत्। अयं त्वनुष्ठानाभावात्मकत्वान्न कर्तृविशेषमपेक्षते श्रुत्यैव च प्रतिषेधः प्राप्त्या संबद्धः। स यत्र प्राप्तः तत्र स्वसामर्थ्येन गच्छन्न शक्यते समाख्यया वारयितुम्।

**निषेधस्य समाख्यया नियन्त्रणमिति शंकापरिहारः**

ननु वदेदित्येतायद्विध्वंशमात्रमालोच्यमानं समाख्या नियंस्यति। ततश्च प्रतिषेधोऽपि तदनुसारित्वान्नियतो भविष्यति। नैतदेवम्। पर्यवसिते हि शास्त्रार्थे तत्कर्तुरपेक्षायां सत्यां समाख्याऽवतरति। न च वदेदित्येतावतः शास्त्रार्थत्वं

विज्ञायते । प्रतिषेधसंबन्धाद्धि तदनुवादत्वेन स्थितम् । न चानूद्यमानस्य श्रुतमपि विशेषणं भवतीति ग्रहाधिकरणे साधितम् । किमुत समाख्यया विधीयमानपदार्थ-कर्तृविशेषसंबन्धमात्र एव व्याप्रियते ।

तस्मादनूद्यमानत्वाद्वदनं न विशेष्यते ।
प्रतिषेधोऽपि तद्गामी विशेष्टुं नैव शक्यते ॥

तस्मादस्ति सर्वत्र प्रयोजनमतः सम्यग्विचारितमिति सिद्धम् ॥ १३ ॥

(इति चतुर्थं कर्त्रधिकरणम् ॥ ४ ॥)

न्या० सु०—उदाहरणं तावदाह—**तस्मिन्नेवेति** । उदाहरणनिष्कर्षपूर्वसन्देहमाह—**तत्रेति** । सूत्रेण पूर्वपक्षमाह—**किमिति** । अतिदेशोपपादनायाऽधिकां शङ्कां दर्शयितुमाह—**न चेति** । विधिप्रत्ययशून्यत्वाद्विधित्वायोगशङ्कां निरस्य, तत्पूर्वपक्षमुपसंहरति—**तस्मादिति** ॥ १३ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि "विधिर्वा" यह अनृतवदननिषेध विधि है; कारण, "संयोगान्तरात्" इस स्थल में अन्य तरह का संयोग अर्थात् विधिवाक्य रहता है । स्मृतिवाक्य में निषेध विधि का अर्थ है कि 'सत्य ही बोलना चाहिए अनृत नहीं बोलना चाहिए'—इस प्रकार का है और यह पुरुषार्थ है, इससे अन्यथा करने पर पुरुष को प्रत्यवाय होता है । इस स्थल के निषेधवाक्य का पालन न करने पर क्रतु की विगुणता होगी और पुरुष के प्रत्यवाय से अतिरिक्त व्यापार एवं क्रतु का वैगुण्य अर्थात् अङ्ग हानि होना अन्य विषय है । जैसे कलञ्ज भक्षण निषिद्ध होने से कलञ्ज के भक्षण से प्रत्यवाय ही होगा, अतः क्रतु मध्य में कलञ्ज भक्षण करने पर उस व्यक्ति को प्रत्यवाय होगा, किन्तु उससे क्रतु का कोई वैगुण्य अर्थात् अङ्गहानि नहीं होगी, कारण क्रतु का अनुष्ठान जिस रूप में कर्तव्य श्रुति में कहा गया है, उसका अनुष्ठान ठीक उसी तरह करने पर क्रतु की विगुणता का कोई कारण ही नहीं है, इसलिए, क्रतु के फल में भी न्यूनता नहीं होगी, किन्तु निषिद्ध कलञ्ज के भक्षण से प्रत्यवाय अवश्य होगा । इसीलिए कुमारिल भट्ट ने कहा है—

यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् ।
न क्रतोस्तत्र वैगुण्यं यथा चोदित सिद्धितः ॥

जो क्रतु मध्यस्थ होकर कलञ्जादि निषिद्ध द्रव्य का भक्षण करता है, उससे उस क्रतु में किसी प्रकार का वैगुण्य नहीं होगा, कारण, जिस रूप में उपदेश है उस रूप में उसका अनुष्ठान होने से सिद्धि होगी ।

अन्य पक्ष में जो निषेध क्रत्वर्थ है उसका यदि क्रतु के मध्य में परिपालन नहीं किया जाय तो उसके कारण क्रतु का वैगुण्य होगा । इस स्थल में "नानृतं वदेत्" यह जो

निषेध है, वह यदि केवल पुरुषार्थ रहे तो क्रतु के मध्य में मिथ्या कहने पर भी क्रतु का कुछ भी वैगुण्य नहीं होगा, किन्तु, निषिद्ध मिथ्या भाषण से स्वतन्त्र प्रत्यवाय होगा। किन्तु, यह इस प्रकार नहीं है अर्थात् क्रतुमध्य में बोलने पर क्रतु का वैगुण्य नहीं होगा ऐसी बात नहीं है, इसलिए इसको क्रत्वर्थ विधि ही कहना चाहिए।

यदि यह कहा जाय कि क्रत्वर्थ विधि न मानकर इसको पुरुषार्थ क्यों नहीं कहा जाता है ? पुरुष यदि आख्यातवाच्य होता तो इसको क्रतु युक्त पुरुष धर्म कहा जाता। किन्तु, पुरुष आख्यात वाच्य नहीं है और कर्ता के विना भावना उत्पन्न नहीं होती है अतः, कर्ता आक्षेपलभ्य अर्थात् अर्थापत्तिसिद्ध है और अर्थापत्तिसिद्ध शब्द का अर्थ नहीं हो सकता है, क्योंकि, वैयाकरणों ने कहा है "अनन्यलभ्ये हि शब्दार्थः" शब्द का अर्थ अन्य से लभ्य नहीं होता है अर्थात् शक्ति और लक्षणा को छोड़कर अन्य किसी प्रमाण से वह बोध्य नहीं होता है। अतः, कर्ता आख्यातवाच्य न होने से "नानृतं वदेत्" इस स्थल में अनृतवदन की पुरुषार्थता आख्यात श्रुति से बोधित नहीं है। आख्यात श्रुति के द्वारा अनृतवदन की पुरुषार्थता बोधित न होने पर उसका निषेध भी पुरुषार्थ नहीं होगा। अनृतवदन का निषेध पुरुषार्थ न होने पर "नानृतं वदेत्" यह निषेध दर्शपूर्णमास क्रतु के प्रकरण में पठित होने से वह उसी क्रतु का धर्म अर्थात् क्रत्वर्थ होगा क्योंकि, इस स्थल में प्रकरण में बाध करने वाला कोई नहीं है। कारण, आख्यात श्रुति कर्ता की भी वाचक नहीं है, वरन् विधि है एवं क्रतु सम्बन्ध की भी बोधक न होने से उसकी पुरुषार्थता या क्रत्वर्थता कुछ भी अवगत नहीं है। इसलिए "नानृतं वदेत्" यह निषेध अनुवाद नहीं है, वरन् विधि है एवं यह शुद्ध क्रत्वर्थ है। इस स्थल में पर्युदास के कारण "आनृत बोलना चाहिए" इस प्रकार का अर्थ विवक्षित होने से नियमादृष्ट का हेतु होता है। आशय यह है कि "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" यह काशिका में कहा गया है। "प्रधानप्रत्ययार्थवचनार्थस्यान्यप्रमाणत्वात् (पा० १।२।५६) सूत्र की व्याख्या में यह वामन ने कहा है। शास्त्रकार अर्थों का विधान नहीं करते हैं, वरन् लोकप्रसिद्ध अर्थ का शब्दों के साधुत्व के द्वारा अनुवाद करते हैं, अतः, व्याकरण को स्मृति माना गया है।

इस अधिकरण का यह प्रयोजन है कि अनृतवदन यदि पुरुषार्थ होता तो उससे क्रतु का वैगुण्य नहीं होगा। वरन् पुरुष को ही प्रत्यवाय होगा और उसको हटाने के लिए स्मार्त प्रायश्चित्त भी करना होगा। यदि यह क्रत्वर्थ रहेगा तो तब क्रतु के मध्य में उसका पालन न करने पर क्रतु की विगुणता होगी और उसके परिहार के लिए शास्त्र में निर्दिष्ट प्रायश्चित्त अनुष्ठेय होगा जो क्रतुगामी होकर क्रतु के वैगुण्य का समाधान करेगा।

"विधिः" = दर्शपूर्णमास प्रकरण में अनृत बोलने का निषेध है वह विधि है, "वा" = पूर्वपक्ष के खण्डन के लिए है, "संयोगान्तरात्" = क्योंकि, संयोगान्तर अर्थात् अन्य सम्बन्ध रहता है, अर्थात् क्रतु के साथ सम्बन्ध रहता है।

अथवा संयोगान्तर अर्थात् पुरुषार्थ स्मार्त विधि से भिन्न क्रत्वर्थ वाक्यान्तर अर्थात् विधान्तर रहता है।

अनृतवदन निषेध के क्रतुधर्मता अधिकरण। (सिद्धान्त) ॥ १३ ॥

### अथ पञ्चमं जञ्जभ्यमानाधिकरणम्

## [५] अहीनवत्पुरुषस्तदर्थत्वात् ॥ १४ ॥ पू०

शा० भा०—ज्योतिष्टोमे श्रूयते, अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन् तेऽप्सु दीक्षातपसी प्रावेशयंस्तीर्थे स्नाति, तीर्थमेव हि सजातानां भवति इति। दर्शपूर्णमासयोराम्नायते, 'तस्माज्जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू इति, प्राणापानावेवाऽऽत्मन्धत्ते इति। तत्र संदेहः—किमयं धर्मः प्रकरणे निविशते, उत पुरुषस्योपदिश्यते—इति। किं तावत् प्राप्तम्? अहीनवत्पुरुषस्तदर्थत्वात् एष विधिः प्रकरणादुत्कृष्येत। कुतः? पुरुषश्रुतेः। ब्रूयादिति पुरुषप्रयत्नस्य विवक्षितत्वात्।

ननु प्रकरणं बाध्यते। उच्यते। बाध्यतां प्रकरणं, वाक्यं त्वस्य बाधकं, जञ्जभ्यमानसंयोगात्। प्रकरणाद्दर्शपूर्णमासयोरुपदिश्यते इति गम्यते, वाक्याज्जञ्जभ्यमानस्य। वाक्यञ्च प्रकरणाद्बलीयः। तस्मादुत्कृष्येतेति। फलमप्यामनन्ति, 'प्राणापानावेवाऽऽत्मन्धत्ते' इति। स च संयोगो बाध्यते। तस्मात् पुरुषधर्मः प्रकरणादुत्कृष्येत अहीनवत्। यथाऽहीनसंयोगाद् द्वादशोपसत्ता प्रकरणादुत्कृष्यते। एवं जञ्जभ्यमानसंयोगान्मयि दक्षक्रतू इति वचनम्॥ १४॥

त० वा०—पूर्वत्र श्रुत्या सह प्रकरणं विरुध्यते, न विरुध्यत इति विचारितम्। इदानीं लिङ्गवाक्याभ्यां सह विचार्यते। तत्र ज्योतिष्टोमप्रकरणविहितस्य तीर्थस्नानस्य, दर्शपूर्णमासप्रकरणविहितस्य जृम्भिकानिमित्तस्य मन्त्रोच्चारणस्य किमर्थत्वं पुनः स्यादिति। निवीताधिकरणवदेव पक्षा रचयितव्याः। तेषामपि सारवत्तरत्वादनन्तराधिकरणे यत्र उपन्यस्ताः-पुरुषमात्रधर्मः, प्रकरणयुक्तपुरुषधर्मः क्रतुधर्म इति। त एवात्राप्यनुवर्तन्ते। तत्र पूर्वाधिकरणेनैव प्रकरणात् क्रत्वर्थत्वे प्रति, पूर्वपक्षः परिगृह्यते।

यथा प्रकरणं हित्वा द्वादशत्वं वशीकृतम्।
अहीनेन तथा पुंसा धर्माविमौ वशीकृतौ॥

स्नानं तावद्योग्यतयैव मलापकर्षणार्थत्वात्पुरुषार्थं गम्यते। तीर्थविशेषणं च सुखावतरत्वाद् दुःखावतरह्रदादि व्यावर्तयत् पुरुषस्योपकरोति, न क्रतोः। यदपि च स्मरणं भोजनादिपूर्वभाविनियमरूपेण, तदपि तदर्थस्यैव नियमोदृष्टं

पुरुषगाम्येव करोति। तेनावधारितप्रयोजनेन संबध्यमानस्तीर्थनियमोऽपि पुरुषार्थो विज्ञायते। तत्राप्येकं तावद्दृष्टमेव प्रयोजनमवतरणसुखम्। अथाप्युद्धृतोदकादिनिवृत्तिरूपो न दृष्टं साधयतीत्यदृष्टं कल्प्यते, तथाऽप्यस्त्येव फलं 'तीर्थमेव हि सजातानां भवति' इति।

न चैवं, वाक्यात् पुरुषसंयुक्तस्य प्रकरणमीश्वरम् 'असंयुक्तं प्रकरणात्' इति स्थितत्वात्।

तथा यद्यपि ब्रूयादित्यनेन कर्ता नोपात्तः तथाऽपि जञ्जभ्यमानशब्दः कृतन्तत्वात् 'कर्तरि कृत्' इति चानन्यपरस्मरणात्कर्तृविशेषणं पुरुषमुपादत्ते। तेन स्ववाक्योपात्तेन संयुक्तं मन्त्राभिधानं प्रकरणग्राह्यत्वं न प्रतिपद्यते। पुरुषसंयोगे चास्त्येव तत्फलम्। प्राणापानयोरात्मनि धारणाच्चिरजीवित्वम्। तस्मात्पुरुषमात्रधर्मा एवं जातीयका इति॥ १४॥

न्या० सु०—सिद्धान्तसूत्रं व्याचष्टे—**आचारेति**। प्राप्तस्यैतद्दर्शनं कीर्तनमित्युक्ते, श्रुत्यपेक्षाचारप्राप्तस्य निरपेक्षया श्रुत्यनुवादायोगमाशङ्क्याचारमूलभूतश्रुत्यन्तरप्राप्तानुवादिनीयं श्रुतिरिति सूचनार्थप्रापकस्य श्रुत्यन्तरस्येदं प्राप्त्यपेक्षत्वाल्लिङ्गं द्योतकमिति दर्शनोक्तिसमानाधिकरणया लिङ्गोक्त्योक्तम्। सौत्रप्रतिज्ञासूचितं हेतुं प्रश्नपूर्वमाह—**कुत इति**। लिङ्गादिरहितोक्त्याधिका शङ्कोक्ता।

श्लोकं व्याचष्टे—**यच्छब्देति**। 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदित्यविधायकस्याव्याख्यातस्य तिङान्तिङो भवन्तीति व्यत्ययकल्पनया विधित्वं स्यात्। नत्वत्राख्यातमात्रमप्यस्तीत्याख्यातोक्त्योक्तम्॥ आचारदार्ढ्यार्थं यान्यग्रवन्ति दर्भसमित्स्रुगादीनि द्रव्याणि, तानि प्रागग्राण्युदगग्राणि वा कुर्यादिति स्मृतावुदाहृतायामुदक्संस्थत्वविधानार्थं तर्ह्यप्राप्तार्थत्वात्पुरउदञ्चो दर्भा इतिवाक्यं भविष्यतीत्याशङ्क्य, तस्यापि प्राप्तिं दर्शयितुं यान्येकदेशे क्रमेण निपेध्यत्वात्समाम्नमन्ति दर्भपात्रादीनि, तानि प्राक्संस्थान्युदक्संस्थानि वेति स्मृतिरुदाहृता। सिद्धान्तमुपसंहरति—**तस्मादिति**।

स्मृतिपरामर्शी तच्छब्दः। निवीतवच्च विपर्ययेण श्रुतिरनुवादप्रयोजनमित्याह—**तथैव चेति**। जीवदग्निहोत्रं पुराशब्देनोक्तम्। यज्ञोपवीतीत्युदाहरणस्थितात्पूर्वपक्षादपि दर्शपूर्णमासयोः सतः प्राप्तस्यैवोपवीतस्य दर्शनं कीर्तनं हिशब्दोक्तहेत्वाख्यलिङ्गयुक्तत्वेन प्राप्तापेक्षत्वादित्येत्रमैतदेव सूत्रं लिङ्गयुक्तदर्शनमिति मध्यमपदलोपिसमासाङ्गीकरणेनोत्तरमित्याह—**स्थितावपीति**। एवं लिङ्गदर्शनशब्दव्याख्यार्थहिशब्दवतेत्यादिवार्त्तिकवक्ष्यमाणप्रकारेणैतदेवसूत्रमुत्तरमित्यर्थः। अग्निहोत्रप्रकरणे वासोविन्यासरूपयज्ञोपवीतप्राप्त्यभावादनुवादायोगमाशङ्क्य, हिशब्दंप्रतिविधिशक्तेर्विधित्वकल्पनातो यत्रतत्रस्थप्राप्त्याश्रयणमेवानुवादत्वावगमेनापेक्षितत्वाद्युक्तमिति संप्रधारणपूर्वमाह—**प्रकरणे चेति**। अनुवादापेक्षितप्रकरणप्राप्त्यलाभलक्षणप्रकरणबाधचोद्ये सन्निकृष्टासंभवे विप्रकृष्टानुवादोप्याश्रीयत इत्युत्तरम्।

देवेभ्य इति बहुवचनबाधचोद्ये च प्रकृतिविकृतिदेवतालोचनेनोपपत्स्यत इत्युत्तरमुक्तमित्याह—**प्रकरणेति**। यच्चोपव्ययत इत्यस्य विधित्वे सर्वानुवादो व्यर्थो हीति कारणमुक्तं। तद्यज्ञोपवीतीत्यत्र प्राचीनावीतीति विध्यन्तरसद्भावात्तत्स्तुत्यर्थत्वेनार्थवत्त्वोपपत्तेर्नास्तीत्याह—**अस्त्येवेति**। अत्रापि सिद्धान्तमुपसंहरति—**तस्मादिति**। अन्तरागर्भिणीविचारे विधौ यजुर्वेदविहितत्वात्तद्भ्रषे यदि यजुष्टो भत्र इति दक्षिणे जुहुयादिति प्रायश्चित्तं स्मृत्याचारप्राप्तानुवादे तयोरज्ञातवेदविशेषमूलत्वाद्यद्यविज्ञाते भूर्भुवः स्वरिति सर्वा अनुद्रुत्याहवनीये जुहुयादिति प्रायश्चित्तमिति प्रयोजनं स्पष्टत्वादनुक्त्वा, एतदधिकरणसिद्धान्तप्रयोजनमाह—**इतीति**॥ १४॥

भा० प्र०—"अङ्गिरसो वा इत उत्तमाः सुवर्णं लोकमायन्, तेऽप्सुदीक्षातपसी प्रविशयन्, तीर्थे स्नाति, तीर्थमेव सजातानां भवति"—क्रतु में दर्शपूर्णमास प्रकरण में कहा गया है कि "जञ्जभ्यमानेऽनुब्रूयान्मयि दक्षक्रतू प्राणापानावेवात्मन् धत्ते" जम्भाई लेते हुए 'मयि दक्षक्रतू' यह कहे, प्राण और अपान को ही अपने में धारण करता है। जञ्जभ्यमान पुरुष का पाठ पुरुषार्थ है या क्रत्वर्थ है—यह संशय होता है।

इसमें पूर्वपक्षी का कथन है कि "अहीनवत् पुरुषः=अहीन के समान पुरुषार्थ अर्थात् पूर्व के अहीनाधिकरण में (३ अ० ३ पा० ८ अधिकरण) जैसे 'अहीन' इस शब्द के अनुसार द्वादश उपसदों का प्रकरण विच्छेद सिद्धान्तित होता है, इसी प्रकार यहाँ भी इसके प्रकरण का विच्छेद होता है अर्थात् यह प्रकरण के अनुसार क्रत्वर्थ नहीं होगा, अतः क्रतु प्रकरण से इसका उत्कर्ष होगा।

पूर्व श्रुति अर्थ यह है कि अङ्गिरस के पुत्र ने यहाँ से उत्क्रमण स्वर्गलोक गये, उन्होंने अपनी दीक्षा और तप को जल में सन्निविष्ट किया, अतः जो यजमान तीर्थस्थान के जल में स्नान करता है, यह समान पुरुषों में तीर्थों के समान उपकार करने वाला होता है।

इसके विवरण में मीमांसक जी का विवरण दे रहा हूँ। "दीक्षा = मुण्डन तप = उपसद्रूपकर्म, यह पुराकल्पस्वरूप अर्थवाद है। यहाँ शब्दार्थ से प्रतीयमान अङ्गिरस (अङ्गिरा) नाम सूर्य का है, उसके पुत्र = उससे उत्पन्न अङ्गिरस किरणों का नाम है, बहुवचन में अपत्यार्थक प्रत्यय का लोप होकर 'अङ्गिरस' प्रयोग होता है। ये यह अङ्गिरस मध्यम स्थानीय (अन्तरिक्ष में है व्याप्त) देव हैं। जब सूर्य की किरणें नदी या तालाब के पानी पर पड़ती है, तब अपनी दीक्षा = प्राण और तप = उष्णता जल में छोड़कर वापस उत्क्रमण करती हुई सूर्यलोक को प्राप्त होती है। सूर्य किरणों के इस प्रभाव से नदी या तालाब का जल प्राण और तेज का वर्धक होता है। 'तीर्थे स्नाति'—तीर्थ नाम जल का है। जञ्जभ्यमानोऽनुब्रूयात्—जञ्जभ्यमान शब्द जो भी गात्रविना में धातु के यङन्त शानच् प्रत्यय का रूप है, इसका अर्थ 'जम्भाई लेने वाला',

तै० सं० २।५।१२ इस प्रकरण में लिखा है। जम्भाई लेनेवाले के प्राण और अपान निकल जाते हैं। उन्हें पुनः प्राप्त करने के लिए मयि दक्षक्रतू मन्त्र का पाठ करे। दक्षप्राण है और क्रतु अपान। वहाँ इतना ही अंश मन्त्र रूप से विवक्षित है। पूरा मन्त्र संहिता वा ब्राह्मण आदि में हमें अन्यत्र नहीं दिखा है"।

वस्तुतः तीर्थ में सूर्यरश्मि आदि अर्थ मानकर तीर्थ में स्नान निषेध उचित नहीं है। कारण सूर्यकिरण के बाद ही स्नान प्रशस्त नहीं है, वरन् सूर्योदय से पूर्व का ही स्नान प्रशस्त है। तीर्थ में काल विशेष में स्नान करने का व्यवहार है, अतः, अलौकिक अर्थ से सम्प्रदाय के आग्रह के आधार पर भागना विद्वान् के लिए समीचीन नहीं है।

"अहीनवत्" = अहीन के समान अर्थात् "अहीनस्य" इस श्रुतिवाक्य में द्वादश उपसत्ता के अहीन के धर्म के समान, "पुरुषः" = पुरुष का धर्म, "तदर्थत्वात्" = क्योंकि वाक्य के अनुसार इसकी पुरुषार्थता बोधित होती है ॥ १४ ॥

## प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत्[1] ॥१५॥ सि०

शा० भा०—न वोत्क्रष्टव्यम्। कुतः? प्रकरणविशेषात्। प्रकरणयुक्त एव जञ्जभ्यमानो वचनेन संस्क्रियते। यथा यवादिद्रव्यं प्रोक्षणादिना।

ननु न शक्नोति प्रकरणं जञ्जभ्यमानशब्दमेकदेशेऽवस्थापयितुम्। वाक्यं हि प्रकरणाद् बलवत्तरमिति। उच्यते। न ब्रूमो जञ्जभ्यमानशब्दः प्रकरणेनाप्राकरणिकात्पुरुषान्निवर्त्यत इति। किंतु फलं तत्र कल्पनीयम्। ननु प्रत्यक्षं श्रूयते फलं, 'प्राणापानावेवाऽऽत्मन्धत्त' इति। नेति ब्रूमः। नात्र विधायकं शब्दमुपलभामहे। यः एषः, प्राणापानावेवाऽऽत्मन्धत्ते इति। वर्तमानापदेश एष, न विधायकः। तावकस्तु भवति मन्त्रवचनस्य। तस्माद्दर्शपूर्णमासाभ्यामन्यत्रैतन्न फलवत्। अतः पुरुषस्य दर्शपूर्णमासौ कुर्वतः संस्कारकर्मेति गम्यते।

आह पुरुषसंस्कारकर्मेति गृह्यते, दर्शपूर्णमासावेव कुर्वत इत्येतन्न। कथम्? योऽपि ह्यन्यत्र दर्शपूर्णमासाभ्यां जञ्जभ्यते, सोऽपि जञ्जभ्यमानशब्देनोच्यत एव। न च प्रकरणेन व्यावर्त्यत इत्येतदुक्तम्। तस्मादुत्कृष्यते। अत्रोच्यते। नैव व्यावर्त्यते। संस्कृतेन तु तेन नास्ति प्रयोजनम्।

ननु प्रकरणे पुरुषसंस्कारेणापि नास्ति प्रयोजनम्। उच्यते। संस्कृतपुरुषो दर्शपूर्णमासावनुष्ठास्यति। आह। उत्कर्षेऽपि सति संस्कृतोऽन्यदनुष्ठास्यति। उच्यते। नान्यस्य संस्कारो गुणो भवति। अप्रकृतत्वात्। आह। प्रकृतस्यापि न गुणः। वाक्येन पुरुषधर्म इत्यवगमात्। उच्यते। आनर्थक्यान्न पुरुषधर्मो-

१. ब. द्रव्यत्वात्।

ऽवगम्यते । तस्मादस्य प्रकृताभ्यां दर्शपूर्णमासाभ्यामेकवाक्यता, नान्येन फलवताऽपि कर्मणा । प्रकरणाभावात् । तस्मान्नोत्कर्षः । यत्तु प्रकरणे निवेश इत्येतस्मिन्पक्षे ब्रूयादित्यनुष्ठानवचनमविवक्षितस्वार्थमिति । एवं सति अनुवादो भविष्यति, न पुरुषसंबन्धविधानस्य प्रयोजनमस्तीति ॥ १५ ॥ सि०

त० वा०—पुरुषधर्म इत्येतावद्गृह्णीमः । यत्तु पुरुषमात्रधर्मः इत्येतदसह्यम् । कुतः ?

अविरोधात्समावेशे लभ्यमाने प्रमाणयोः ।
बाधो न युज्यते कर्तुं न च दूरात्फलश्रुतिः ॥

पुरुषमात्रसंयोगे हि विना कारणेन प्रकरणं बाध्येत । नन्वितरत्रापि लिङ्गवाक्ये बाध्येयाताम् । सत्यं बाध्येयातां, यद्यपुरुषेण संबन्धोऽभ्युपगम्येत् ।

वयं तु प्रकरणगतपुरुषधर्मं ब्रुवाणा न किंचिदपि बाधिष्यामहे । न प्रकरणिकेजञ्जभ्यमाने, स्नातरि च सकलशब्दार्थो, योग्यत्वं वा नास्ति । नन्वविशेषबुद्धिर्बलवत्प्रमाणप्रभूता दुर्बलप्रमाणमूलया विशेषबुद्ध्या न युक्ता निवर्तयितुम् । एषा तावदवश्यमेव निवर्तनीया । न ह्यविदुषोऽसमर्थस्य वाऽधिकारः संभवति ।

नन्वेवं प्रकरणं विशेषकमभ्युपगतं भवति । नैतदेवम् । ग्राह्यकमेवात्रापि प्रकरणं, येनोद्दिश्यमानजञ्जभ्यमानविशेषणत्वं प्रतिपद्यते । न हि तस्यैष व्यापारोऽवकल्पते । कथंभावस्येत्थंभावादन्येनासंबन्धात् । योऽपि प्रकरणगृहीतपुरुषमपेक्षमाणः प्रकरणाद्विशेषलाभं मन्यते, तस्यापि व्यावृत्ते प्रकरणव्यापारे तद्गृहीतत्वापेक्षा भवतीति नैव तद्विशेषणमवकल्पते । कथं तर्हि प्रकृतपुरुषप्रत्ययः । उच्यते । विनैव विशेषणत्वेनात्र प्रकरणस्थपुरुषग्रहणसिद्धिः । तथाहि ।

व्रीहीणां प्रोक्षणं यद्वल्लौकिकानामनर्थम् ।
तद्वदेतदपीत्येवं फलाय प्रकृतं गतम् ॥

यथा हि व्रीह्यादि प्रोक्षणादिभिः संबध्यमानं न च तावत्प्रकरणेन विशेष्यते । अथ चाऽऽनर्थक्यभयाद्विप्रकृष्टफलकल्पनाप्रमाणाभावाच्च क्रतुसाधत्वेन प्रयोजनवत्त्वाच्च प्रकृतं गृह्यते, तथाऽत्र फलकल्पनाभयात्प्रत्यसत्त्यनुरोधेन प्रकरणिकजञ्जभ्यमानग्रहणं क्रियते । न हि तत्संभवेऽन्यफलकल्पनाप्रमाणं लभ्यते ।

ननु च क्लृप्तमेवानयोः फलमित्युक्तम् । सत्यमुक्तम् । न त्वीदृशेन शब्देन फलमुच्यते, कामशब्दोपबन्धाभावात् । एतदेव च नात्र विधायकं शब्दमुपलभामह इत्याह । फलविधानं हीदृशेन शब्देन न क्रियत इति वक्ष्यामः । इतरथा पुनर्ब्रूयादित्यत्राप्यस्त्येव विधिविभक्तिरित्ययुक्तमेव विधायकाभाववचनम् । न हि धत्त इत्येतस्याविधायकत्वादुपालम्भो भवति । सर्वत्रैव फलांशस्याविधेयत्वात् ।

तस्माद्यथोक्तमेव योजनीयम् । 'द्रव्यसंस्कारकर्मसु' इत्यनेन चार्थवादत्वं वक्ष्यते । 'फलं तु तत्प्रधानायाम्' इति च कामपदोपबद्धायां तदर्थत्वम् ।

आह—पुरुषस्य संस्कारकमिति गृह्णीम इति—संस्कारशब्दोच्चारणात्क्रतुयुक्तपुरुषधर्मत्वमभ्युपगच्छति । न हि स्वतन्त्रः फलवत्त्वात्संस्कार इत्यभिधीयते । **दर्शपूर्णमासावेव कुर्वत इत्येतन्नेति—कोऽभिप्रायः ?** सर्वथा तावज्जञ्जभ्यमानधर्मत्वेनैष गम्यमान आनर्थक्येन लौकिकान्निवर्त्येत । यस्तु ज्योतिष्टोमादौ जञ्जभ्यमानः स दार्शपूर्णमासिकवदेव सप्रयोजन इत्यशक्यो वर्जयितुमिति । अतः क्रतुमात्रयुक्तपुरुषधर्मो भवति । अस्योत्तरं गूढाभिप्रायम् । **संस्कृतेन तु तेन प्रयोजनं नास्तीति ।** कुतः ?

न संबन्धो निवीतस्य यथैवाऽऽतिथ्यकर्मणा ।
श्रुत्यादिभिरसंयोगात्तथैवास्य क्रियान्तरैः ॥

यदि सर्वत्र विहितः सन्ननर्थकत्वेन लौकिकान्निवर्त्येत, तत एतदेवं स्यात् । न त्वसावेवं निवर्तयितुं शक्यते । न हि प्रवृत्तानि शास्त्राणि केन चिन्निवर्त्यन्ते । किं तर्हि ? आदित एवैषां प्रवृत्तिप्रतिबन्धोऽवधार्यते । सा चैवं प्रतिबध्यते । यदि 'द्रव्यसंख्याहेतुसमुदायं वा' इत्यधिकरणन्यायेन स्वरूपसंगतावनर्थकत्वाज्जञ्जभ्यमानशब्देनापूर्वसाधनत्वं लक्ष्यते । तल्लक्षणां च न प्रकारणादृते लभ्यते । न च दर्शपूर्णमासापूर्वं मुक्त्वाऽन्यस्य प्रकरणमस्ति । तस्मात्तदपूर्वसाधनं यो जञ्जभ्यमानः, तस्यैवेष संस्कारः । एवं तीर्थस्नानमपि वक्तव्यम् । एतौ च परिचोदनापरिहारौ सूत्रकार एव वक्ष्यति । 'आरादपीति चेत्' 'न तद्वाक्यं हि तदर्थत्वात्' इति । यत्तु प्रयोगवचनेन सिद्धेर्विध्यानर्थक्यमिति । तत्राऽऽह । वरं तस्यानुवादत्वं न च निष्फलपुरुषमात्रधर्मविधानमिति ।

## भाष्यसन्दर्भद्वयस्य सामञ्जस्य संपादनम्

इह भाष्यकारेण निरन्तरयोर्द्वयोरधिकरणयोरेकस्याः परिचोदनायाः परस्परविरुद्धपरिहारद्वयमुक्तम् 'अङ्गं सत्प्रयोगवचनेन गृह्यते । न चाविहितमङ्गं भवति' इत्येकः । **एवं सत्यनुवादो भविष्यति,** इत्यपरः । तत्र कस्य सत्यत्वं, कस्यानृतत्वमिति विवेक्तव्यम् । यथा तावत्पूर्वत्र व्याख्यातं तथा विधित्वमेव सत्यम् ।

## केषाञ्चिन्मतं परेषाञ्च मतम्

अनुवादाभिधानं त्वभ्युपेत्यवादमात्रमिति गम्यते । शक्यं त्वनुवादत्वं समर्थयितुम् । कुतः ?

अपर्यायविधायित्वादेकोऽङ्गानां विधिर्यतः ।
प्रात्यात्मिकानुवादत्वं शक्यते भाषितुं ततः ॥

'विधेस्त्वेकश्रुतित्वादपर्यायविधानात्' इत्यत्र सर्वेषामेवाङ्गानामेकप्रयोजनकल्पनयैकं विधिं वक्ष्यति। स च प्रयोगवचनेन विधीयमानानां भविष्यति। प्रात्यात्मिकविधीनां पर्यायप्रवृत्तेः। पुरुषश्च येन प्रवर्त्यते स विधिः। अङ्गप्रधानवत्यां च भावनायां युगपत्पुरुषनियोगः। तस्मात् प्रात्यात्मिकानामनुवादत्वम्।

**अत्रविषये वार्तिकमतम्**

अत्राभिधीयते। द्वावप्येतौ ग्रन्थौ साधू। कथम्? पूर्वस्तावत् 'न चाविहितमङ्गं भवति' इत्यनया चोपपत्त्या न विरुद्धः। उक्तं ह्येतद्विधावनाश्रीयमाणे धात्वर्थमात्रस्य साध्यत्वान्निष्प्रयोजनत्वे सति न शक्यमङ्गत्वं कल्पयितुम्। तेन तावद्विधिः। अथ चानुवादः कथम्? पूर्वेण विधिनाङ्गत्वं प्रकल्प्य प्रयोगवचनं यावन्नीयते तावन्तं च कालमसौ विधिरूपेणाऽवतिष्ठते। प्रयोगवचनग्रहणे तु सति तद्गतविधिसंस्पर्शादेव पुरुषप्रवृत्तिसिद्धेरनुवादत्वम्। अतः प्राक् प्रयोगवचनसमर्पणाद्विधित्वेन विना न व्यवहारः सिध्यतीति विधिः। उत्तरकाले तु तत एव प्रवृत्तिसिद्धेरनुवाद इत्युभयमपि साधूक्तम् ॥ १५ ॥

न्या० सु०—पूर्वाधिकरणसंगतिमाह—**इदानीमिति**। उदाहरणमाह—**तत्रैवेति**। दिष्टं विधिप्राप्तमायुः पर्यवसानम्। तत्प्राप्तो दिष्टगतो मृतः तस्याग्निहोत्र इत्येवं व्याख्यासूचनार्थं—**तत्रैवेत्युक्तम्**। उदाहरणनिष्कर्षपूर्वं संदेहमाह—**तत्रेति**। पूर्वपक्षमाह—**हिशब्देति**। स्रुग्दण्डे समिधमुपसंगृह्यानुद्रवतीति वाक्यात्, स्रुग्दण्डे समिधमभ्युद्गृह्णन्ननुद्रवतीत्यस्माद्वा स्रुग्दण्डे निधाय समिधमनुद्रवतीत्यस्माद्वा स्रुग्दण्डोपरिधारणप्राप्तावपि हविरुपरिधारणात्प्राप्तेराचारतः प्राप्तिरुक्ता। प्रश्नपूर्वमाचारतः प्राप्तिमुपपादयति—**कथमिति**।

श्लोकं व्याचष्टे—**देवतार्थस्येति**। आचारस्य च श्रुते मूले संभवत्यश्रुतमूलकल्पनायोगात् स्रुग्दण्ड इति सप्तम्या दण्डस्याधारत्वोक्तेस्तदुपरिधारणावगमेऽपि वितस्तिमात्रया प्रादेशमात्रया वा समिधा दंडस्योपरि हविराधारभूतस्रुग्बिलसमीपे धृतमूलयांगुष्ठमात्रया करपुष्करमात्रस्रुग्बिलस्थसमस्तहविःप्रच्छादनाशक्तावपि कतिपयहविःप्रच्छादनसंभवात्स्रुग्दण्डइतिं विधेरपि हविरुपरिधारणप्रयोजनत्वावगतेर्वाक्यादपि प्राप्तिः संभवतीति सूचयितुमाह—**स्रुग्दण्डइति**। पूर्वपक्षमुपसंहरति—**तस्मादिति**।

पूर्वाधिकरणसिद्धान्तसूत्रमेव तदधिकरणपूर्वपक्षे वाशब्देन [समुद्रो वा महासत्व] इतिवदिवार्थेन 'यज्ञोपवीती हि ये पुर उदञ्च' इतिदृष्टान्तोक्तचानुवादत्वप्रतिज्ञासूचनाद्दर्शनशब्दोक्तादाचारात्, तन्मूलभूताच्चद्योतकशब्दापरपर्यायलिङ्गशब्दोक्तात्प्रापकाद्वाक्यात्सतः प्राप्तस्योपरिधारणस्यानुवाद इत्येवं कर्मधारयीभूताल्लिङ्गदर्शनशब्दाऽपरायाः प्रथमायाः पञ्चमीरूपविपरिणामाङ्गीकारेण व्याख्यातुं—**प्राप्तस्यैवेत्युक्तम्**। सूत्रेण सिद्धान्तमाह—**इतीति**। उत्तरार्द्धं व्याचष्टे—**सत्यमिति**।

समिधः समस्तहविः प्रच्छादनासामर्थ्येन, आचारतोप्राप्तावपि कतिपयहविःप्रच्छादनशक्तेरीषदानतिशक्तस्य सोमचमसस्याश्वशफस्य वा सोमचमसो दक्षिणेत्यादिवचनसामर्थ्यादानत्यर्थत्वावगमवत्स्रुग्दण्ड इति वचनसामर्थ्यात्प्रच्छादनार्थत्वेन प्राप्तिर्भविष्यतीत्याशङ्कते—नन्विति। हविःसमीपे समिद्ग्रहणविधानेपि प्रच्छादनसंयोगाश्रुतेस्तादर्थ्यायोगादप्राप्तिरिति परिहरति—भवेदिति। समस्तायाश्च समिधोदण्डोपरिधारणविधानाद्धविषोर्वाग्धारणीयत्वेनेषत्प्रच्छादनेऽप्यशक्तेः सुतरामप्राप्तिरित्याह—स्रुग्दण्डइति। हिशब्दयोगाद्वर्त्तमानापदेशाच्चानुवादतां पूर्वपक्षोक्तां परिहर्तुमाह—न चेति। हिशब्दावगतेनैकवाक्यत्वेनोक्तामनुवादतां हिशब्दत्यागरूपव्यवधारणकल्पनयैकवाक्यात्वापादकहिशब्दानुवादसारूप्यभङ्गाद्भिन्नवाक्यत्वावगतेः परिहरति—अत इति। व्यवधारणकल्पनां दर्शयति—पित्र्य इति। स्रुग्दण्डदेशत्वनियमात् स्रुग्दण्डस्यैवाधस्तादुपरि वा धारणमिह विधीयते, न तु हविष इति सूचनार्थं स्रुग्दण्डस्येत्युक्तम्॥ वर्त्तमानापदेशत्वेनाभासमानस्याप्याख्यातस्याप्राप्तार्थविषयत्वेन पञ्चमलकारत्वकल्पनया विधित्वोपपत्तिमाह—विधित्वे चेति। सिद्धान्तमुपसंहरति—तस्मादिति॥ १५॥

इति द्वितीयमुपरिधारणाधिकरणम्

भा० प्र०—पूर्व में कथित पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि क्रतु के पकरण में उसका उत्कर्ष नहीं होगा, कारण, "प्रकरणविशेषात्' प्रयाज आदि जिस तरह प्रकरण के बल से दर्शपूर्णमास का अङ्ग है, वैसे ही इस स्थल में भी प्रकरण की विनियोजकता रहती है। इसलिए प्रकरण रूप विशेष रहने से इसका उत्कर्ष नहीं रह सकता है।

यदि यह कहा जाय कि "जञ्जभ्यमानः" इत्यादि वचन में वाक्य के अनुसार पुरुष की ही प्रबलता रहती है। वाक्य प्रकरण की अपेक्षा बलवान् होता है, अतः, वाक्य के द्वारा प्रकरण का ही बाध होगा, अतः, इसका उत्कर्ष होगा। ऐसी स्थिति में यह कहा गया है कि "तदयुक्तस्य संस्कारो द्रव्यवत्" जहाँ वाक्य और प्रकरण का विरोध रहता है, वहाँ वाक्य के द्वारा प्रकरण का बाध होता है। किन्तु इस स्थल में वाक्य और प्रकरण का विरोध न होने से प्रकरण का कैसे बाध होगा ? कारण, क्रतु के मध्य में भी 'जञ्जभ्यमान' पुरुष रह सकता है। अतः, 'व्रीहिन् प्रोक्षति' इत्यादि स्थल में जैसे व्रीहि आदि द्रव्य के प्रोक्षणादि संस्कार के विषय में वाक्य और प्रकरण का विरोध नहीं है वैसे ही यहाँ भी वाक्य एवं प्रकरण का विरोध नहीं है; अतः, यह क्रतुयुक्त पुरुष का संस्कार होगा अर्थात् क्रतुयुक्त पुरुष का धर्म होगा।

"प्रकरणविशेषात्" = इस स्थान में प्रकरण रूप विशेष रहने से अर्थात् इस स्थान में प्रकरण का विनियोग प्रयाजादि के समान अविशेष अर्थात् एक तरह का होने से यह क्रत्वर्थ है, "वा" = पूर्व पक्ष के निरास के लिए, "तद्युक्तस्य संस्कारः" = यह तद्युक्त जो पुरुष उसी का संस्कार, "द्रव्यवत्" = व्रीहि आदि द्रव्य के समान। सिद्धान्त॥१५॥

**व्यपदेशादपकृष्येत ॥ १६ ॥**

**शा० भा०—अथ यदुपर्वाणतं द्वादशोपसत्ता यथोत्कृष्यते, तथेदमप्युत्कृष्टव्यमिति। उच्यते। तद्धि वाक्येनाऽहीनानां व्यपदिश्यते। फलवन्तश्चाहीनाः। न च तत्र ज्योतिष्टोमेऽहीनशब्दः। गौणत्वात्, व्यपदेशाच्च 'तिस्र एव साह्नस्योपसदो, द्वादशाहीनस्ये'ति। ततो युक्तं द्वादशोपसत्ता यत्प्रकरणादुष्कृष्यते। न त्विह पुरुषसंबन्धो निष्प्रयोजनत्वात्, अन्यस्य च प्रयोजनवतः प्रकरणेऽभावात् ॥ १६ ॥**

॥ जञ्जभ्यमानाधिकरणम् ॥ ५ ॥

त० वा०—प्रकरणेऽहीनस्यात्यन्तमविद्यमानत्वाद्वाक्यसंयुक्तद्वादशोपसत्त्वं प्रकरणेनानुगृह्यमाणमुत्कृष्यत इत्यदृष्टान्तः ॥ १६ ॥

( इति पञ्चमं–जञ्जभ्यमानाधिकरणम् ॥ ५ ॥ )

दिग्विभागस्यानुवादत्वम् ॥ अधि० ३ ॥

न्या० सु०—निवीताधिकरणातिदेशार्थत्वेनाधिकरणद्वयस्य तुल्यत्वात्सहारम्भार्थं परुषिदितपूर्णघृतविदग्धं च तद्वदित्यधिकरणान्तरसूत्रमप्यनेन सह पठितम्। मनुष्याणां प्रतीचीदिक्सम्बन्धस्यानुष्ठानसौकर्यरूपप्रयोजनभूतार्थं हेतुभूतत्वाद्विधिं विनापि प्राप्तेर्विधित्वायोगोक्त्यर्थश्च सम्बन्धस्येति सूत्रावयवोऽर्थस्य विद्यमानत्वादिति निवीताधिकरणद्वितीयसूत्रावयवोक्तार्यस्मृतिमात्रार्थत्वेन मन्दप्रयोजनत्वान्न पठितः। सूत्रे समासनिर्देशेऽपि 'यत्परुषिदितमिति वाक्यानुकरणत्वात्परुषीतिविभक्तेर्लुङ्ग कृतः। द्वन्द्वैकवद्भावाच्च विदग्धमित्येकवचनम्।

अधिकरणद्वयस्य निवीताधिकरणातिदेशत्वं दर्शयितुमाह—**दिग्विभागेति**। दिशो विविच्य भजनं दिग्विभागः पर्व्वणि लवनं-परुषिदितम्। मनुष्यसम्बद्धेषु, रौद्रे च संदेह इति भाष्याद्यदन्तरा तन्मनुष्याणामित्यस्यैव निष्पक्वं मनुष्याणामित्यस्यैव च मनुष्यधर्मत्वादिपक्षविषयत्वेपि विध्यर्थवादसंदेहे देवपितृसम्बद्धानामप्युदाहरणत्वात्परुषिदितं घृतादीनामित्युक्तम्। विदग्धवाक्ये मनुष्यधर्ममनुष्यप्रधानप्राकरणिकाप्राकरणिककर्मधर्मपक्षाणां रचनायोगादावृत्तेनादिशब्देन घृतादेरादिरिति षष्ठीसमासी भूतेन पूर्णवाक्यग्रहणं भाष्यम्। रौद्रे चकारान्नैर्ऋते च संदेहः—किमन्तरा मनुष्याणां पूर्णं मनुष्याणां, निष्पक्वं मनुष्याणां, यो विदग्धः, स नैर्ऋतो, योऽश्रुतः, स रौद्र' इत्येते विधयः तदा च मनुष्यसम्बद्धाः किमनुष्याणां, शुद्धानां, प्रकृतकर्मयुक्तानां वा धर्मा, उत सर्वे प्रकृतकर्मधर्मा, अथ प्रकरणे यन्मनुष्यप्रधानं कर्म, तत्र मनुष्यसम्बद्धा निविशेरन्। रौद्रत्वं नैर्ऋतत्वं चाश्रुतविदग्धत्वयोर्निमित्तयोः प्रकरणे निविशेयाताम्, अथवा यत्किं चिद्रौद्रं नैर्ऋतं च हविः, तत्राश्रुतविदग्धत्वे निविशेयाताम्, उतातिथ्ये मनुष्यसम्बन्धा निविशेरन्, अथवा, सर्वेऽर्थवादा इत्येवं व्याख्येयम्।

दिग्विभागपरुषिदितादौ काऽधिकाशङ्का, यन्निवृत्त्यै निवीताधिकरणातिदेशेऽधिका शङ्का संभवे, वा दिग्विभागपरुषिदितपूर्णघृतविदग्धं च तद्वदित्येकत्रैवाधिकरणे सर्वोदाहरणोपपत्तेरधिकरणभेदोऽनर्थक इत्याशङ्कते—**का पुनरिति**। द्विविधामप्याशङ्कां निराकर्तुं दिग्विभागस्य तावन्निवीतेन, परुषिदितादिभिश्च तुल्यतामाह—**तदिति**। दिग्विभागस्याऽभजन्तेत्याख्यातान्वयाद्विधेयत्वप्रतीतेर्निवीतेन तदुपलक्षितैश्च परुषिदितादिभिरतुल्यत्वावगतिरित्याशङ्काद्वयनिरासार्थं निवीतोक्तेरुपलक्षणार्थत्वाभ्युपगमेन, वाच्ये पुराकल्परूपत्वे, नास्याख्यातस्य विध्यशक्तिमाशङ्क्योपाख्यानमात्रानर्थक्यापत्तेः यस्मात्पूर्वे मनुष्याः प्रतीचीमभजन्त, तस्मादिदानानीन्तना अपि तां भजेरन्नित्येवं विध्यनुमानाच्छ्रुतस्यैव वाऽऽख्यातस्य भजेरन्निति विपरिणामकल्पनया पुराकल्पाभासत्वेपि विधिपरत्वसूचनार्थं पुराकल्पसारूप्योक्त्याख्यातमुपलक्षितम्। लङ्वाच्यभूतत्वाविवक्षासूचनार्थं भजतिधात्वर्थमात्रमर्थोऽस्याख्यातस्येति बहुव्रीहिणोक्तम्। मनुष्यसम्बद्धस्य कैमर्थ्यचिन्तोदाहरणस्याख्यातभावमाशङ्क्यानुषङ्गिणेत्युक्तम्॥ यजत्यर्थवादोनुषङ्गि चेति विग्रहः। दिग्विभागस्याख्यातान्वयादतुल्यत्वेप्युत्तराधिकरणोदाहरणानामख्यातानन्वयाद् विदग्धव्यतिरिक्तानां च षष्ठ्यन्तशब्दान्वयाधिक्याच्च निवीतस्य साम्यप्रतीतेः कथं तदतुल्यत्वाशङ्केत्याशङ्कां निरस्यन्, तेषामतुल्यतामाह—**इतरेषां त्विति**।

पर्वादेर्लूयमानबर्हिःप्रदेशस्य लवनक्रियां प्रत्यधिकरणत्वेन पूर्णादेश्च ग्रहणक्रियाविशेषस्य ग्रहणप्रयोजनभूतां ग्राह्यद्रव्यपरिमाणक्रियां प्रति साधनत्वादेतिशयविवक्षायां करणत्वेन श्रुतादेश्च स्नेहनक्रियां प्रति करणत्वेनाद्यपरिस्पन्दप्रभृतिपक्वत्वाख्यफलसिद्धिपर्यन्तक्रियाक्षणप्रचयात्मिकायाश्च श्रपणक्रियायाः प्रचयसाधनीभूतश्रपणक्रियाक्षणबहुत्वसंख्यासाध्यत्वेन यावद्भिः क्षणैः फलसिद्धिः, तावद्भ्योऽधिकसंख्यक्षणानुष्ठानाख्यविदहनस्य न्यूनसंख्यक्षणानुष्ठानाख्यस्यचाश्रपणस्य श्रपणक्रियां प्रति साधनत्वात्, इतरेषां पर्वादीनां लवनादिक्रियाख्यफलोत्पत्तेः स्पष्टत्वेन विधावपि फलकल्पनक्लेशाभावान्निवीतातुल्यत्वमतिरित्युक्ते, कर्मधर्मसिद्धेरेव फलत्वात्फलकल्पनाभावेऽपि मनुष्याणामिति षष्ठ्यन्तसम्बन्धात्कर्मधर्मत्वबाधेन मनुष्यधर्मत्वप्रतीतेः पुरुषं प्रति फलकल्पनापत्तेर्निवीततुल्यतामाशङ्क्य. पुरुषानुष्ठेयासु लवनादिक्रियासु पर्वादीनां कारकत्वेनान्तर्गतस्वरूपत्वात्क्रियाफलेनैव फलवत्वसिद्धेः, पुरुषार्थभोजनकारकस्यौदनादेरिव पुरुषं प्रति फलोत्पादकत्वव्यपदेशोपपत्तेर्नादृष्टफलकल्पनापत्तिरिति सूचनार्थं मनुष्यसम्बन्धे यः पुरुषं प्रति फलोदयः, सोऽपि पुरुषक्रियान्तर्गतात्मत्वाद्धि स्पष्ट इत्युक्तम्। विधिशक्तिप्रतिबन्धकभूतार्थवाच्याख्यातयोगिपुरा कल्पशून्यत्वेन दिग्विभागाधिकरणादधिका शङ्कापीतरोक्त्या सूचिता।

श्लोकं व्याचष्टे—**स्वाभाविकमिति**। दिशाप्यधिकरणकारकत्वेन सर्वक्रियाङ्गत्वात्, तत्तद्विधावपि फलकल्पनक्लेशाभावसाम्योक्त्यै दिग्ग्रहणम्॥ आख्यातयोगनिमित्तविधिलाघवस्य तु दिश्यसाधारण्यादधिकरणभेदोपपत्तिः। सर्वशब्दो दिङ्मात्रविषयः। विध्यनपेक्षोक्त्यै स्वाभाविकोक्तिः। निवीतादेस्त्वविघ्नसमाप्तिप्रतिबन्धकवैयग्र्यापादकशीतादि-

वारकत्वेन क्रियाङ्गत्वसम्भवेपि शौताद्यभाव निवीतादिनाविनाप्यवैयर्थ्योपपत्तेः, स्वाभाविकक्रियाङ्गत्वाभावाद्वैषम्यसूचनार्थं न निवीतवदित्युक्तम्। एतावतेतरेषां फलोदयो विस्पष्ट इत्येतावद्व्याख्याय, मनुष्यधर्मत्वपक्षेपि फलकल्पनक्लेशानापत्युक्तचर्थत्वेनैतावदावृत्या कृत्स्नश्लोकव्याख्यार्थं तत्रेत्यनेन दिगादेः सामान्यतः क्रियासाधनत्वेपि प्रतीच्यादिविशेषनियमस्य फलकल्पनापत्तेः, क्लेशमाशङ्क्याः, दिगादिसामान्यसाध्यस्य क्रियासिद्ध्याख्यस्य फलस्य वल्त्वाद्विशेषनियमफलमात्रकल्पनेऽप्यल्पकल्पनात् क्लेशाभावमुक्त्व, तदपि चेत्यनेन नियमे फलस्याप्यविघ्नक्रियासमापनस्यात्यन्तादृष्टत्वाभावात्क्लेशलेशोऽपि नास्तीत्युक्तं वैदिकक्रियासाधननियमस्यादृष्टार्थत्वात्तद्व्यावृत्यै लौकिकोक्तिः। लौकिकक्रियासामननियमावधित्वमेव वचनव्यक्तिभिः स्पष्टयितुमाह— **तेनेति**। वैदिकीनामपि क्रियाणां वैधत्वानपेक्षणे लौकिकत्वाद्वैधत्वानपेक्षासूचनार्था यावच्छब्देन सर्वलौकिकवैदिकक्रियाव्याप्त्युक्तिरविरुद्धा॥ प्रतीच्यादेर्मनुष्यप्राधान्यसिद्ध्यै तन्नियमफलस्याविघ्नसमापनस्य मनुष्याभिमतत्वसिद्ध्यर्थं कर्मणः स्वार्थस्य विशेषणं स्वाम्यर्थस्यापि कर्मणो भृतिलाभार्थत्वात्स्वार्थत्वोपपत्तिः। बर्हिर्लवनप्रक्रमाद्दर्भविषयत्वावगतिः।

पूर्णस्य क्रियाङ्गत्वसिद्ध्यै प्रस्थादौ घृतादिग्रहणस्य ग्राह्यद्रव्यपरिमाणार्थत्वप्रसिद्धेरविहितामपि परिमाणक्रियामध्याहृत्य मातव्यमित्युक्तं वेदभाष्यस्थो निष्पक्वायुतशब्दौ व्याख्यातुं—**विलीनेत्युक्तम्**। विदग्धाश्रृतत्वयोर्निमित्तयोर्नैर्ऋतरौद्रत्वविधावभ्युदितेष्टिवन्नैमित्तिक्या देवतयोत्पत्तिशिष्टनित्याग्न्यादिबाधापत्तेर्यो नैर्ऋतः, स विदग्धोऽयो रौद्रः, सो श्रृत इति व्यवहितान्वयकल्पनां मत्वा विदहनाश्रपणविध्युक्तिः। अतो तुल्यत्वाशङ्कोपपत्तेर्युक्तोऽतिदेश इत्युपसंहरति—**तेनेति**।

तत्र विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकमि१-२त्यनेनैव तावद्विधिरिति निवीताधिकरणवार्त्तिकोक्ताया वचनं परमिति पूर्वपादान्त्यसूत्रस्थवचनशब्दानुषङ्गेण विधित्वप्रतिज्ञायाः परेष्वप्यधिकरणेष्वेतद् योजमितव्यमिति वार्त्तिकोक्तस्य दिग्विभागपरुषिदितादिवाक्यमपि विधिरित्यादियोजनस्य सम्भवेऽपि, 'प्रतीचीं मनुष्या' इत्यत्र षष्ठीश्रुत्यभावात् दिग्विभागोमनुष्यधर्मः। षष्ठीशब्दस्य मनुष्यप्रधानत्वादिति योजनायोगमाशङ्क्य, मनुष्या अभजन्तेति सामानाधिकरण्यश्रुत्याशयत्वेन मनुष्यधर्मपक्षे दिग्विभागसूत्रं योजयितुमाह—**तत्रेति**।

विदग्धं, तदुपलक्षितं चाश्रृतं सामानाधिकरण्यनिर्दिष्टनैर्ऋतरौद्रधर्मः समानाधिकरण्यश्रुतिलक्षणस्य शब्दस्य नैर्ऋतरौद्रप्रधानत्वादित्येवं विदग्धं च तद्वदित्युत्तरसूत्रावयवयोजनाप्यनेनैव सूचिता। अन्तरोदितं मनुष्याणां, पूर्णं मनुष्याणां, निष्पक्वं मनुष्याणामिति मनुष्यधर्मः। षष्ठीशब्दस्य तत्प्रधानत्वादित्येवं वाक्योपलक्षणार्थैः परुषिदितादिशब्दैर्मनुष्यधर्मादिपक्षेषु मनुष्यसम्बद्धतत्तद्वाक्यावयवोदाहरणं मत्वा 'परुषिदितपूर्णघृतं च तद्वदि'त्युत्तरसूत्रावयवं योजयितुमाह—**इतरेषु त्विति**। तादर्थ्यमित्यनुषङ्गः।

दिग्विभागादिरपि निवीतवदपदेशः। प्रतीच्यादिसम्बन्धस्य सौकर्यादिरूपार्थहेतुत्वेन विधिं विनापि विद्यमानत्वादित्येवं निवीताधिकरणद्वितीयसूत्रार्थातिदेशार्थत्वेन सूत्रद्वयं योजयितुमाह—**तथेति**।

यथा तद्वच्छब्देनातिदेशान्मनुष्यधर्म इत्यभिधीयते, तथापदेशो वेत्यपीति तथाशब्दार्थः। अर्थस्य विद्यमानत्वादित्यतिदिष्टसूत्रावयवार्थोपपादनार्थत्वेन सम्बन्धस्यार्थहेतुत्वादिति सूत्रावयवव्याख्यार्थे प्रत्यङ्मुखा इति भाष्ये प्रांशुपदार्थानुष्ठानोक्तिमनुष्ठानशैघ्र्ये दिशोऽकारणत्वादयुक्तामाशङ्क्य, सौकर्याशयत्वेनोपपादयितुं सौकर्योक्तिः। सम्बन्धस्येति सूत्रावयवस्यार्थस्येति सूत्रावयवोक्तापदेशहेतूपपादनार्थत्वसूचनार्थं तद्गतविद्यमानशब्दोक्तप्राप्तिहेतुत्वं पञ्चम्योक्तम्। पृष्ठतइति भाष्यावयवमुदङ्मुखस्य प्रायशः पृष्ठत आदित्यकरणसंभवेऽपि प्रत्यङ्मुखस्यापराह्णे पृष्ठत आदित्यकरणासंभवादयुक्तमाशङ्क्य, पूर्वाह्णविषयत्वेन कृत्वाशब्दाध्याहारेण च व्याख्यातुं पूर्वाह्णे हीत्युक्तम्। पूर्वाह्णस्यैव च प्रायेण व्यापारकालत्वात्कालान्तरे प्राप्त्यभावेऽप्यविरोधः। सम्बन्धस्येत्यस्यैव सूत्रावयवस्य परुषिदितसूत्रे चशब्देनानुकृष्टस्यान्तरादितोदाहरणे मूलपर्वान्तरालसम्बन्धस्य सूक्ष्मप्रदेशविशेषनियमाभावेन प्रयत्नगौरवानपेक्षतया लाघवरूपार्थहेतुत्वादित्येवं व्याख्यार्थमुपरीतिभाष्यं, पूर्णोदाहरणे च पात्रसंमिताख्यपूर्णसम्बन्धस्य प्रयत्नगौरवाभावेनान्यूनानतिरिक्तसुष्ठुमानलक्षणसाधनलाघवाख्यार्थहेतुत्वादित्येवं व्याख्यार्थं पूर्णे पोति भाष्यं, तुल्यपायव्याख्यार्थत्वाद्विदग्धाशृतोदाहरणयोः सम्बन्धस्येति सूत्रावयवव्याख्यार्थमशृतमिति भाष्यं मध्येपठितमुपेक्ष्य व्याख्यातुं—**तथेत्युक्तम्**। मूलपर्वणोरन्तरादर्भलवने सति लवनस्यायत्नसाध्यत्वात्पूर्णग्रहणं च सति ग्रहणप्रयोजनभूतस्य ग्राह्यद्रव्यपरिमाणस्यायत्नसाध्यत्वादन्तरालवनपूर्णयोः प्राप्तिरित्यर्थः।

विदग्धोदाहरणेऽनुवादपक्षे स्वरसतो रौद्रनैर्ऋतयोरुपादेयतयावगतयोरप्यनुवादसंभवने विपरीतवचनव्यवस्थाश्रयणायोगाद्यो विदग्धः, स कृष्ण इति विवक्षितेऽर्थे कृष्णवर्णनिर्ऋतिशब्दवाच्यपृथिवीसम्बन्धस्य हेतुत्वादित्येवं सम्बन्धस्येति सूत्रावयवव्याख्यां कारणगुणप्रक्रमेण कार्येगुणारम्भप्रसिद्ध्यैव ज्ञातुं शक्यत्वाद्भाष्यकृतोपेक्षितां दर्शयितुं—**तथाविदग्धइत्युक्तम्**।

अशृतोदाहरणेऽप्यक्षरवर्णसामान्यान्निर्ब्रूयादिति यास्कस्मृतेर्धात्ववयवस्यापि धात्वर्थवाचित्वकल्पनया व्याख्यावगमात्, रौद्रशब्दस्य रुजत्यर्थरोगवाचित्वं, दकारस्य च ददात्यर्थदानवाचित्वं कल्पयित्वा रोगदानाख्यावयवार्थसम्बन्धरूपस्य रोगदत्वस्याशृतत्वरूपार्थहेतुकत्वादित्येवं सम्बन्धस्येति सूत्रावयवव्याख्यार्थमशृतमिति भाष्यमुपेक्षितं व्याख्यातु—**मशृते चेत्युक्तम्**। निष्पक्वसम्बन्धस्य सुस्वरूपार्थहेतुत्वादित्येवं सम्बन्धस्येति। सूत्रावयवव्याख्यार्थम् अयुतमिति भाष्यं विलीनेति वार्त्तिकावयवेन निष्पक्वायुतशब्दसामानाधिकरण्योक्त्या निष्पक्वशब्दव्याख्यार्थतया सूचितस्यायुतशब्दस्य व्याख्यानान्न व्याख्यातम्। विधिस्त्विति सूत्रार्थातिदेशार्थत्वेन सूत्रद्वयं योजयितुमाह—**नियोगतस्त्विति**। सप्रायादिति वाक्येति च सूत्रद्वयार्थातिदेशार्थत्वेन विदग्धवर्जं सूत्रद्वयं योजयितुमाह—**प्रकरणेति**। भाष्यकृता'त्वप्राप्तिविधिपक्षे दिग्विभागसूत्रयोजनार्थेनार्थत्वाद्विधिरिति भाष्येण परुषिदित-

सूत्रयोजनार्थेन चार्थवत्वान्मनुष्यसम्बन्धाच्चेतिभाष्यान्निष्कृष्टेनार्थवत्वाद्विधय' इत्यवयवेन विधिस्त्वति सूत्रोक्ते नियमविधिपक्षेप्यर्थात्सूत्रद्वययोजनसिद्धेर्मनुष्यश्रुतिविरोधेन चातितुच्छशुद्धकर्मपक्षे स प्रायाद्वाक्येति सूत्रद्वयोक्तेयोजनस्य मन्दप्रयोजनत्वान्न सूत्रत्रयार्थातिदेशार्थत्वेन योजितम्। तत्प्रकरणे यदितिसूत्रार्थातिदेशार्थत्वेन योजयितुमाह—**सर्वेति**। 'वाक्यप्रकरणानुग्रहाये'तिभाष्ये 'वाक्यप्रकरणानुग्रहादिति भाष्ये च प्रकरणोक्त्या कर्मधर्म्मत्वप्रमाणत्वसाम्यात्समाख्याप्युपलक्षितेति सूचनार्थः सर्वशब्दः। एतत्सूत्रार्थातिदेशार्थत्वेन परुषिदितसूत्रयोजार्थ'मन्वाहार्य इति भाष्यं दर्शपूर्णमासदक्षिणाभूतान्वयाहार्थाङ्गभूतास्तरणगर्भेष्वन्तरालवनसम्भवेऽपि ज्योतिष्टोमदक्षिणासु च व्रीहियवतिलमाषरूपासु प्रस्थादिसंमितत्वरूपपूर्णत्वसंभवेऽपि ज्योतिष्टोमदक्षिणायां कस्यांचित्स्नेहकार्याभावेन निष्पक्वासंभवादयुक्तमाशङ्क्य दक्षिणासु चेतिचकारोक्ते 'नवनीतेभ्याङ्क्ते'(तै० सं० ६ १.१.४) इति विहितेऽभ्यञ्जने यजमानसंस्कारार्थत्वात् मनुष्यप्रधाने विलीनत्वगुणविधानेन निष्पक्वत्वापन्नस्य नवनीतस्य निवेशोपपत्तिसूचनार्था मनुष्यप्रधानोक्तिः॥ तत्प्रधाने वेति सूत्रार्थातिदेशार्थत्वेन योजयितुमाह—**वाक्येनेति**। भिन्नत्वाद्वाक्यानामिति 'दिग्विभागसूत्रस्थेन 'परुषदितिसूत्रस्थेन च वाक्यभेदप्रसंगादिति भाष्यावयवेनोक्तस्य दक्षिणादौ निवेशे वाक्यभेदप्रसङ्गस्य प्रकरणसमाख्याबाधार्थत्वसूचनार्थं—**प्रकरणेत्युक्तम्**। षष्ठयन्तसम्बन्धापन्नमनुष्यप्राधान्यशङ्कानिरासार्थं—**फलेत्युक्तम्**। 'अर्थवादो वे'ति 'विधिना चेति न सिद्धान्तसूत्रद्वयार्थातिदेशार्थत्वेन योजयितुमाह—**तेनापि सहेति**। पर्वप्रदेशत्वग्रहचमसपात्रविलाधिकत्वनवनीताविदहनविधिशेषत्वं चकारेणेक्तम्॥

कीदृशी स्तुतिरित्याशङ्क्य, यथा प्रतीत्युदीची वा दिङ्मनुष्याणां पितृणां वा दक्षिणोचिता तथा प्राची देवानां, यथा च मूलपर्वान्तराले दर्भलवनं मनुष्याणां, समूलं च दर्भलवनं पितृणामुचितं, तथा पर्वणि देवानां, यथा च पात्रविलसंमितं ग्रहणं मनुष्याणां, पात्रविलाच्चाधोग्रहणं पितृणामुचितं, तथा देवानां पात्रविलादधिकग्रहणमित्यौचित्येन प्रतीच्यादिदक्षिणादि च मनुष्याणां, पितृणां च यथाक्रममुचितं, नदेवानां प्राच्या, देवे तु तेषामुचितमिति विपर्ययेण वा स्तुरिति प्रकारद्वयमाह—**सम्यगिति**।

यत्प्रतीत्यादियन्मनुष्यादिसम्बन्धत्वेन श्रुतं, तत्तत्सम्बन्धित्वेन सम्यक्छ्रुतोक्तयौचित्योक्तेर्यथाविदितोनुवाद्यो मनुष्यादिर्विषयो यस्य प्रतीच्यादेस्तद्विधेयस्य प्राच्यादेर्विषयो देवाख्यादन्यमनुष्यादिविषयमित्येवं च यथाविदितान्यविषयोक्त्या बहुव्रीहिद्वयगर्भकर्मधारयभूतया त्रिपर्ययोक्तेः सम्यक्छ्रुतत्वेनौचित्येन यथाविदितविषयान्यविषयत्वेन विपर्ययेण वा स्तुतेर्निवीतोदाहरणे यद्यौचित्येन स्तुतिस्ततोत्राप्यौचित्येन तत्र विपर्ययेण स्तुतावत्रापि विपर्ययेणैत्येवंविवेकेनातिदेशात्सिद्धिरित्यर्थः।

विदग्धोदाहरणे वा विदग्धाशृतत्वयोः कार्ष्ण्यरोगदत्वापादकत्वेनाऽप्राशस्त्यादविदहनश्रपणमेव प्रशस्तमित्येवंरूपत्वेनौचित्यविपर्ययरूपत्वाभावाद्विदग्धोदाहरणाद्विवेकेनोदाहरणान्तरेष्वीदृश्याः स्तुतेः सिद्धिरिति विवेकोवश्या सूचितम्॥ १६॥

भा० प्र०—यदि कहा जाय कि अहीन जो द्वादश उपसत्ता है, उसी का प्रकरण-बाध-पूर्वक अपकर्ष कैसे होगा ? ऐसी स्थिति में कहा गया है कि "व्यपदेशात् अपकृष्यते" वहाँ व्यपदेश अर्थात् पृथक् उल्लेख है, "तिस्र एव साहनस्योपसदः द्वादशाहीनस्य" इस वाक्य में साहन का अर्थात् एक दिन का तीन उपसत् और अहीन का द्वादश उपसत् इस रूप में पृथक् उल्लेख होने से प्रकरण से अपकृष्ट होगा।

"व्यपदेशात्" = व्यपदेश अर्थात् पृथक् उल्लेख होने से "अपकृष्यते" = अपकर्ष होगा ॥ १६ ॥

पञ्चम जञ्जभ्यमान अधिकरण।

### अथ षष्ठं शंय्वधिकरणम्

## [६] शंयौ च सर्वपरिदानात् ॥ १७ ॥

शा० भा०—दर्शपूर्णमासयोः श्रूयते, देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नो वहेति, प्रकृत्य वचनमिदं भवति 'किं मे प्रजाया इति' तेऽब्रुवन् यो ब्राह्मणायावगुरेत्, तं शतेन यातयात्, यो निहनत् तं सहस्रेण यातयात्, यो लोहितं करवत्, यावतः प्रस्कन्द्य पांसून् संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानीयात् (तै० सं० २-६-१०) इति। तस्मान्न ब्राह्मणायाऽवगुरेद् न हन्याद् न लोहितं कुर्यात्' इति। तत्र संदेहः—किं दर्शपूर्णमासयोरगोरणप्रतिषेधः[1], उत पुरुषस्योपदिश्यत इति। किं प्राप्तम् ? प्रकरणाद्दर्शपूर्णमासयोरवगोरणादिप्रतिषेधः। न दर्शपूर्णमासयोर्ब्राह्मणस्यावगोरितव्यं, वधो वा कार्यो, लोहितं वा प्रस्कन्दनीयम्। अन्य उपाय आस्थातव्य आनतये, ते नान्वाहार्येणाऽऽनमन्तोति प्रकरणात्प्राप्नोति। एवं प्राप्ते—

ब्रूमः—शंयौ च प्रकरणादुत्कर्षः कस्मात्, सर्वपरिदानात्। सर्वावस्थस्य ब्राह्मणस्यायं प्रतिषेध उक्तः। न दर्शपूर्णमासगतेनैव नावगोरणादि कर्तव्यमिति। ननु प्रकरणाद्दर्शपूर्णमासधर्मोऽयम्। सत्यं प्रकरणादेवम्। वाक्येनावगुरमाणस्य धर्मः। वाक्यं च प्रकरणाद्बलीयः। ननु जञ्जभ्यमानस्येव प्रकरणे निवेशो भवेत्। नेत्युच्यते। तत्र फलं कल्पनीयम्। इह वल्प्तम्। अस्ति ह्यत्र विधायकविभक्तिः—शतेन यातायात्, सहस्रेण यातयात्, स्वर्गं लोकं प्रजानीयादिति। तस्मादुत्कर्ष एवंजातीयकस्येति ॥ १७ ॥

इति षष्ठं शंय्वधिकरणम् ॥ ६ ॥

---

१. ब. अवगोरणादिप्रतिषेधः।

त० वा०—शंयाविति ब्राह्मणावगोरणादिप्रतिषेधवाक्योपलक्षणम् । तत्र पूर्ववदेव पक्षाः । तेषामपि प्राकरणिकं संबन्धद्वयमप्येकीकृत्य निर्दिष्टौ क्रतुधर्मः, शुद्धपुरुषधर्मश्चेति द्वावेव पक्षौ । समस्तेन चानृतवदनप्रतिषेधन्यायेन क्रत्वर्थस्यावगोरणस्य प्रसज्यमानस्य प्रतिषेधः । का च तत्र प्रसक्तिः । चतुर्ब्राह्मणसाध्यत्वाद्दर्शपूर्णमासयोस्तदानत्यर्थं सामदानभेददण्डेषु प्रसज्यमानेष्वन्वाहार्यदानेनाऽऽनमयेदिति गम्यते । यदा तन्मात्रेण नाऽऽनमन्ति, तदा पुनर्यथा दानादानतिर्भवति, तथा प्रयत्यमाने लौकिकोपायप्रसक्तौ सत्यामयं दण्डप्रकारोऽवगोरणादिः पक्षे प्राप्नोति, स प्रतिषिध्यते । न कर्तव्यं तेन, तद्व्यतिरेकोपायान्तराश्रयणं कार्यमित्युक्तं भवति । तथा प्राप्ते ।

अभिधीयते—

वाक्येन सर्वसंयोगात्सर्वेभ्यो वरदानतः ।
फलस्याकल्पितत्वाच्च नेष्टः प्रकरणग्रहः ॥

यच्छब्दस्ताच्छ्रुत्यैव पुरुषमुपादत्ते । न च प्रकरणयुक्तपुरुषधर्मः । न ह्येष कश्चित्संस्कारः । किं तर्हि ? नरकपरिहारार्थोऽयं प्रतिषेधः । स च पुरुषगत एव । नरकपातः संकीर्तितो, न तु क्रतुगतः । यस्य च प्रत्यवायः तस्य तत्परिहारार्थः प्रतिषेधः । 'शतेन यातयात्, सहस्रेण यातयात्' इति शतगुणं, सहस्रगुणमनुभवेदित्यर्थः ।

अथ वा संख्येयान्तरानुपादानादुपरि संवत्सरग्रहणादिहापि संवत्सरशतेन यातनां निस्तरेत्, सहस्रेणेत्येवं संबध्यते । निषेधफलं च प्रदर्शनमात्रेणैव संबध्यते, न विधिफलवत्कामपदोपबन्धमपेक्षते । न हि कश्चित्संत्यक्तव्यमर्थं कामयते । न चान्यः कश्चितस्योपादानप्रकारोऽस्ति । तेनानुभवेदित्येतावतैवोपादानं विज्ञायते। तच्चेहाविकलमस्ति ।

यत्तु भाष्यकारेण लिङ्प्रदर्शनं कृतं तत्फलस्याविधेयत्वादसंबद्धम् । यदपि तावदिष्टं, तदपि न विधीयते, यत्त्वनिष्टं तत्र पुरुषप्रवृत्त्यसंभावादत्यन्तविपरीत एव विध्युपन्यासः । तस्मादिष्टफलोपादानमात्रेणैव तद्विषयनिषेधसिद्धेरनिष्टफलस्य च पुरुषाधामित्यात्पुरुषधर्मता । तथा च 'सोऽब्रवीमेप्रत्कनेवजाया इति। प्रजाभावानुवह एव शंयुना प्रार्थितः । देवैश्च यत्कामयसै इत्युक्ते शंयुना ब्राह्मणमात्रमेव तेभ्यः परित्तं परिपालनायोपक्षिप्तम् । तैश्च ब्राह्मणमात्रमेव तेभ्यः परित्तं परिपालनायोपक्षिप्तम् । तैश्च ब्राह्मणमात्रमेवोदिश्यानुग्रहः प्रत इति वाक्यशेषः समर्थितो भविष्यतीति ॥ १७ ॥

( इति षष्ठं सर्वपरिदानाधिकरणम् ॥ ६ ॥ )

भा० प्र०—श्रुति में दर्शपूर्णमास प्रकरण में "देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नो वह = देवों ने बृहस्पति के पुत्र शंयु को कहा—हमारी हवियों को प्राप्त कराओ, यह कह कर "किं मे प्रज्या इति ? तेऽब्रुवन् यो ब्राह्मणायावगुरेत् तं शतेन यातयात्, यो निहनत् तं सहस्रेण यातयात्, यो लोहितं करवत् यावतः प्रस्कन्दय पांशून् संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानीयादिति। तस्मान्न ब्राह्मणायावगुरेन्न हन्यान्न लोहितं कुर्यातं कुर्यात्" = शंयु ने पूछा—देवों को हवि प्राप्त कराने से मेरी पुत्र-पौत्रादि प्रजा के लिए क्या देखोगे ? देवों ने कहा—जो ब्राह्मणों को मारने के लिए प्रयत्न करे उसको सहस्र निष्क से पीड़ा दे, उसे सौ निष्क-दण्ड दे, जो ब्राह्मण को डण्डे से मारे उसको सहस्र निष्क से पीड़ा दे, जो रक्त निकाल दे, वह रक्त पृथ्वी पर गिरकर जितने धूलि के कणों को संगृहीत करे = गीला करके उतने संवत्सर तक वह पितृलोक को न जाने, इसलिए न ब्राह्मण को मारने का प्रयास करे, न मारे, न खून करे। (तै० सं० २।६।१०) यह वचन मिलता है, इस स्थल में जो अवगोरण = मारने के प्रयास का निषेध किया गया है, यह क्या दर्शपूर्णमास सम्बन्धीय अथवा पुरुष सम्बन्धीय है अर्थात् यह क्रत्वर्थ है या पुरुषार्थ है—यह सन्देह है।

इसमें पूर्वपक्षी का कहना है कि अवगोरण निषेध यह अवगोरण का निषेधपूर्व अधिकरण में कहे गये विषय के समान दर्शपूर्णमास का ही धर्म अर्थात् दर्शपूर्णमास के मध्य में उस क्रतु सम्बन्धीय ब्राह्मण का अवगोरण आदि न करे—यही इस वाक्य में कहा गया है, इस प्रकार प्रकरण की मर्यादा सुरक्षित होती है।

इसके समाधान में सिद्धान्त का कहना है कि ब्राह्मण के अवगोरण आदि का निषेध, इसका उत्कर्ष होगा अर्थात् यह पुरुषार्थक होगा। कारण, "यो विप्रायावगुरेत् तं शतेन यातयात्" इस स्थल में 'हेतुहेतुमतोर्लिङ्' (३।३।१५६) इस सूत्र के अनुसार लिङ् लकार होता है, इसमें एक हेतु अर्थात् कारण और दूसरा कार्य है, अवगोरण ही शतपीडा का साधन है। इसलिए अवगोरण का अभाव भी यातना के परिहार का कारण और यह पुरुष का कोई संस्कार नहीं है, वरन् नरक के परिहार के लिए ही यह निषेध है, इसलिए यह नरक परिहार सर्वावस्थ पुरुष का ही प्रयोजन होने से यह प्रतिषेध भी पुरुषार्थक है।

"शंयो च" = शंयु यह शब्द देकर उपक्रान्त वाक्य में जो अवगोरण आदिका प्रतिषेध है उसका भी प्रकरण से अपकर्ष होगा। "सर्वपरिदानात्" = सभी अवस्था में अवहित पुरुष के लिए ही परि = नरक के परिहार के लिए दान (दा + अन) अर्थात् अवगोरण आदिका खण्डन अर्थात् निषेध होने से।

सर्वावस्थस्य का विवरण देते हुए मीमांसक जी ने कहा है—"सर्वावस्थस्य" इसका तात्पर्य यज्ञकर्म में लगे हुए समय में, तथा यज्ञकाल से अन्यत्र से है। जो विद्वान् वेदवेत्ता

होते हुए भी रावण आदि के समान नीच कर्मरत हो, उसके अवगोरण आदि का प्रतिषेध नहीं किया है, क्योंकि शास्त्रकारों ने कहा है—

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य दण्डं भवति शासनम् ॥

नीच कर्म में लिप्त, कार्य-अकार्य को न जाननेवाले, कुमार्गगामी गुरु का भी दण्ड शासन होता है, अर्थात् वह दण्डनीय होता है ॥ १७ ॥

षष्ठ सर्वपरिदानाधिकरण ॥

## [७] प्रागपरोधान्मलवद्वाससः ॥ १८ ॥

शा० भा०—दर्शपूर्णमासयोः श्रूयते, 'मलवद्वाससा न संवदेत, नास्या अन्नमद्यात् (तै० सं० २-५-१) इति । तत्र संदेहः—किं मलवद्वाससा सह दर्शपूर्णमासाङ्गस्य संवादस्य प्रतिषेध, उत पुरुषस्य सर्वत्र प्रतिषेध इति । किं प्राप्तम् ? प्रकरणाद् दर्शपूर्णमासयोः प्रतिषेधविधिः । एवं प्राप्ते—

ब्रूमः—मलवद्वाससा सह संवाद उत्कृष्येत । प्रकरणात् । कस्मात् ? प्रागपरोधात् । एवं श्रूयते 'यस्य व्रत्येऽहनि पत्न्यनालम्भुका स्यात् तामपरुध्य यजेत (तै० ब्रा० ३-७-१) इति । पत्न्या च सह संवादोऽध्वर्योर्दर्शपूर्णमासयोरस्ति, पत्नि पत्न्येष ते लोक इति प्रसज्यमानः प्रतिषिध्येत । स चाप्राप्त एव प्रागपरोधादपनीयतां यागमनुतिष्ठतां कथं संवादः [1]प्रसज्येत । यतः प्रतिषेधमर्हेत् । तस्मादुत्कृष्येत मलवद्वाससा सह संवादः ॥ १८ ॥ सि० ॥

त० वा—'नास्या अन्नमद्यात्' इति वाक्यान्तरमपि सदन्यार्थदर्शनौपयिकत्वात्सहोदाहृतम् । मलवद्वासाः—ऋतुमती स्त्री । तत्संवादप्रतिषेधेऽपि त एव पक्षाः । तत्र यच्छब्दजञ्जभ्यमानशब्दतुल्योपादानशब्दाभावात्संवादस्य च क्रतौ, पुरुषे चाविशेषप्रसक्तेरभिहितेनानृतवदनप्रतिषेधन्यायेन 'पत्नि पत्न्येष ते लोकः' इत्यादेः क्रत्वर्थस्य संवादस्य प्रतिषेध इति प्राप्ते ।

अन्यथा प्रत्यवस्थीयते ।

निषेधः प्राप्तिपूर्वोऽयं प्राप्तिश्च पुरुषे स्थिता ।
न हि प्रागपरुद्धायाः प्राप्तिरस्ति क्रतुं प्रति ॥

'तामपरुध्य यजेत्' इति हि सामान्यतः सर्वस्मादेव क्रत्वनुष्ठानादसौ निर्वर्तिता कथं संवादे प्रसज्येत । पुरुषस्य तु स्वातन्त्र्यात्सर्वकालसंवादे प्राप्ते, निषेधस्यार्थं-

---

१. क० प्रतिषज्येत ।

वक्ता। यदि च स्मृतिरेवमर्था विद्यते, ततो मूलिमूलिभाव—एवाभ्युपगन्तव्यः। न हि केनचिन्नित्यानुवादत्वमुक्तम् ॥ १८ ॥

**कर्त्रधिकरणम्**

न्या० सु०—निवीताधिकरणवदिहापि प्रकरणत्रयेण सह प्रकरणस्य विरोधाविरोधचिन्तेति शङ्कानिराशायाऽस्मिन्नधिकरणे श्रुत्या सहोत्तरस्मिल्लिङ्गवाक्याभ्यां, तदुत्तरयोर्वाक्येन सहेति लाघवायाधिकरणचतुष्टयस्य प्रकरणसङ्गत्युक्तिपूर्वं प्रस्तुताधिकरणविषयं विविनक्ति—**तेनैवेति**। अकर्मक्रतुसंयुक्तमित्यक्तदाहरणोक्त्यार्थे सौत्रे पदद्वये प्रतिषेधाद्दर्शपूर्णमासादिप्रकरणगता इति पदाभ्यां व्याख्याते।

निषेध्यैदमर्थ्यनिर्णयान्निषेधैदमर्थ्यनिर्णयसिद्धेः सन्देहार्योगात्तेषामुदाहरणत्वायोगमाशङ्क्यैतदधिकरणकार्यप्रवृत्तिकैमर्थ्यविचारात्प्रागनवधारितैदमर्थ्यपदार्थविषयतयोदाहरणे विशेषिते'नार्षेयं वृणीते नानुयाजेषु येयजामहंकरोतीतिवद्विधिप्रासे विकल्पापत्तेर्निषेधायोगान्निषेधे कैमर्थ्यनिर्णयस्य निषेध्यैदमर्थ्यनिर्णयाधीनत्वानुपपत्तेस्तन्निमित्तसन्देहायोगाशङ्कानिरासायोदाहरणविशेषणानर्थक्यमाशङ्क्यानृतवदनादीनां विधिं विनाप्य पूर्वानपेक्षलौकिकक्रतूपकारार्थत्वेन, पुरुषोपकारार्थत्वेन वा तत्साधनसामर्थ्यात्प्रासानां निषेधोपपत्तिरुक्त॥ तत्रेति भाष्येण किमयं निषेधो दर्शपूर्णमासाङ्गभूतस्यानृतवदनस्य, ततश्च प्रकरण एव निषेधनिवेशोऽयं, प्रायेण वाचोऽनृतवादिनीत्वादिनीत्वात्पुरुषार्थत्वेन प्रासस्यानृतवदनकर्मणोयं निषेध ततश्च पुरुषधर्म इति वदता निषेध्यनिषेधयोरपि कैमर्थ्यसंदेहमुक्तम्। हेतुहेतुमद्भावेनोपपादयितुमाह—**तेष्विति**।

निषेधकैमर्थ्यनिर्णयस्य प्रवृत्तिकैमर्थ्यावधारणाधीनत्वोपपादनार्थं यदर्था चेति प्रतिज्ञाय निषेधेन निषेध्यस्यानिष्टहेतुत्वज्ञापनादिष्टविपरीतस्य वाऽनिष्टत्वेनात्मापकारेच्छया निषेध्यक्रियायां प्रवृतावात्मापकारस्यानिष्टत्वात्क्रतूपकारेच्छया तु प्रवृत्तौ क्रत्वपकारस्यानिष्टत्वात्पुरुषोपकारार्थक्रियावाचिना शब्देनोपकारार्थितया पुरुषमुपस्थापयता पुरुषापकारस्यैवानिष्टतयोपस्थापनेन क्रत्वपकारस्य शब्दस्पर्शायोगादात्मोपकारार्थिनश्च क्रत्वपकाराख्यानिष्टहेतुत्वज्ञापनेपि निवर्तयितुमशक्यत्वात्पुरुषार्थक्रियानिषेधेन निवृत्तिसिद्धयै क्रत्वर्थायाः क्रियायाः क्रत्वपकाराख्यानिष्टहेतुत्वाकाङ्क्षानुपपत्तेः क्रतूपकारार्थक्रियावाचिना वाशब्देनोपकारार्थितया क्रतुमुपस्थापयता क्रत्वपकारस्यैवानिष्टतयोपस्थापनेन ['पुरुषापकारस्य शब्दस्पर्शायोगात्क्रतूपकारार्थिनश्चात्मापकाराख्यानिष्टहेतुत्वज्ञापनेपि निवर्त्तयितुमशक्याक्रत्वर्थक्रियानिषेधेन] पुरुषार्थायाः क्रियायाः पुरुषापकाराख्यानिष्टहेतुत्वाकाङ्क्षानुपपत्तेरन्यार्थक्रियानिषेधस्यान्यार्थत्वायोगे नहीत्यनेनोक्तेऽस्त्युपायमांसभक्षणादिपुरुषार्थक्रियानिषेधस्य क्रत्वर्थत्वाभ्युपगमाद्व्यभिचारमाशङ्क्य, तस्यामनिषिद्धानुष्ठानापादितवैगुण्यात्क्रतोः फलानुत्पत्तेः पुरुषस्य क्रतुसफलकामस्येष्टफलालाभाख्यानिष्टप्रसंगात्तत्परिहारार्थत्वेपुरुषार्थंसिद्धेरव्यभिचारसूचनार्थं—**सर्वएवेत्युक्तम्**। अतोनिषेधकैमर्थ्यनिर्णयार्थत्वात्प्रवृत्तिकैमर्थ्यचिन्तापि युक्तेत्युपसंहरति—**तस्मादिति**। सर्वेष्वेवाख्यातेष्वित्यादिसिद्धान्तभाष्ये वक्ष्यमाणस्य कर्तुराख्या-

वानभिधेयत्वस्य प्रवृत्तिकैमर्थ्यनिर्णयार्थत्वाद्वक्तव्यतामुपपादयितुमाह—**प्रवृत्तीनामपि**। अनारभ्याधीतानां निषेधानां निषेध्यैदमर्थ्यविचारणं विनैदमर्थ्यविधारणशक्तेर्निषेध्यैदमर्थ्यावधारणायाख्यातचिन्ता युक्ता प्रकरणाधीतानां त्वनृतवदनादिनिषेधानां स्त्रीगमनमांसभक्षणादिवत्प्रकरणादेवैदमर्थ्यविचारणोपपत्तेर्निषेधैश्च साक्षात्त्वैदमर्थ्यविधारणाया आख्यातानां कर्तृवाचित्वावाचित्वेन चिन्ता न युक्तेत्याशङ्क्याह—**तावच्चेति**।

एवंपदार्थवाक्यार्थसंघातैरुपकल्पितां

विशिष्टां भावनां प्राप्यवृत्तिर्विधिनिषेधयोः ॥ (१.१.७ श्लो०)

इति न्यायेन विधिवन्निषेधस्यापि विशिष्टभावनाविषयत्वादनृतादिनिषेध्यवदनभावनादिविशेषणवत्पुरुषार्थत्वक्रत्वर्थत्वयोरपि विशेषणयोर्निषेधविषयत्वावगतेराख्यातानां च कर्तृवाचित्वावाचित्वान्यतररूपेण निर्णयं विना स्त्रीगमनमांसभक्षणादिवदनृतवदनादीनामैकान्तिकपुरुषार्थत्वनिर्णयायोगान्निषेधानां स्वविषयभूतविशिष्टभावनाप्राप्त्यर्थमाख्यातापेक्षोपपत्तेस्तच्चिन्ता युक्तेत्याशयः।

आख्यातचिन्तायाः संदेहभाष्यारूढत्वोक्तचै येन कारणेन क्रत्वर्थपुरुषार्थत्वनिर्णयं विना भावनायाः साध्यांशस्यैवापूर्णत्वेनापूर्णतया विधिनिषेधविषयत्वायोगादन्यतोमवधारितैकान्तिकक्रत्वर्थपुरुषार्थत्वायाश्च भावनायाः पुरुषवाचिकमिपदाद्यन्वयं विना पुरुषार्थत्वानवधारणात्, बलवत्प्रमाणविरोधपरिहारं च विना प्रकरणेन क्रत्वर्थत्वानवधारणात्कर्तृवाचित्वावाचित्वेनाऽऽख्यातनिर्णयं विना क्रत्वर्थपुरुषार्थत्वनिर्णयासिद्धिः। तेन कारणेनाख्यातशब्दाः किंपुरुषार्थां भावनामभिदधति, क्रत्वर्थां वेत्येतत्संदेहभाष्येनार्थादुक्तं भवतीत्याह—**तेनेति**।

अनुवादकस्याख्यातस्य कर्तृवाचित्वेपि पुरुषार्थत्वाक्षेपाशक्तेर्विधायकत्वविशेषणसूचनार्थं विध्युक्तचाख्यातोपलक्षणम्। विधायकाख्यातचिन्तायां समिदादिवाक्यस्थानामप्याख्यातानामुदाहार्यत्वापत्तेः प्रतिषेधोदाहरणमितिविशेषणानर्थक्यामाशङ्क्य, प्रवृत्तिकैमर्थचिन्ताकाले सर्वेषामुदाहरणत्वेपि, तस्याः प्राधान्याभावाद्विशेषणार्थवत्त्वोपपत्ति सूचयितुमाह—**ततश्चेति**। प्रधानचिन्ताकाले विधीनामुदाहरणत्वनिरासायैवकारः। एतस्मिन्नधिकरणे प्रयाजादीनामाख्यातगम्यपुरुषार्थत्वनिरासेऽपि प्रकरणाधिकरणे विश्वजिदादिवत्फलकल्पनया पुरुषार्थत्वमाशङ्क्य निरासादपौनरुक्त्यम्॥ विधायकाख्यातवशेन प्रवृत्त्यैतदमर्थ्यनिरूपणे नानृतं वदेदित्यस्याविधायकत्वान्न तद्वशेन प्रवृत्त्यैदमर्थ्यं निरूप्येतेत्याशङ्क्य अवान्तरवाक्यार्थविवक्षायां विधायकत्वोपपत्तिसूचनार्थं प्रवृत्तिकैमर्थ्यचिन्तां विवृणोति—**तथेति**। यथा प्रवृत्तिकैमर्थ्यचिन्ताकाले समिदादौ चिन्ता, तथात्रापीति तथाशब्दार्थः। अनृतस्यैव निषेध्यत्वेनैदमर्थ्यस्य निरूप्यत्वादनिषेध्यवदनकैमर्थ्यचिन्तानर्थक्यमाशङ्क्यानृतैदमर्थ्यनिर्णयार्थत्वं वदनैदमर्थ्यनिर्णयस्य सूचयितुमाह—**यदर्थं चेति**। अवान्तरवाक्यार्थविवक्षया विधायकत्वोपपत्तावपि, महावाक्येवान्तरवाक्यार्थविवक्षितत्वात्, अविधेयत्वेनाऽनृतवदनस्य प्रयोजनानाकाङ्क्षत्वात्कैमर्थ्यचिन्ता न युक्तेत्याशङ्क्य, निषेधरूपमहावाक्यार्थवेलायां विधेर्निषेधपरत्वे-

नाऽनृतवदनस्याविधेयत्वेपि शेषस्य निषेधात्परिशिष्टस्य निषेध्यस्यानृतवदनस्य विषेधान्वयायाऽवश्यमनुवदितव्यत्वादप्राप्तस्य चानुवादायोगात्प्रापकं च विना प्राप्त्ययोगात्प्रापकस्य च लौकिकस्यापि रागादेरैदमर्थ्यविचारणापेक्षत्वात् अनुवादसिद्धयै प्रापकोक्त्येऽवान्तरवाक्यार्थस्यावश्यविवक्षणीत्वं सूचयितुमाह—प्रतिषेधेति। निषेधोऽपलक्षितमहावाक्यार्थवेलायां यद्यपि निषेधपरो विधिरविधिर्वा विधिविरुद्धो नञ्। तथापि यत एव निषेधपरोः अत एव शेषस्य निषेध्यस्यानुवाद्यत्वादवधारितैदमर्थ्यस्यैव च [विशिष्टां भावनां प्राप्य वृत्तिर्विधिनिषेधयोरि]ति न्यायेन निषेध्यत्वात् तादृशस्यैवानुवाद्यत्वावगतेरनुवादसिद्धयर्थं प्रापकोक्त्येऽवान्तरवाक्यार्थं विवक्षित्वा नृतवदनकैमर्थ्यचिन्ता कार्येत्यध्याहारेणावृत्तविधिशब्दाकारप्रश्लेषेण च व्याख्येयम्।

सकृच्छ्रुतस्याऽख्यातस्य निषेधनिषिध्यरूपार्थद्वयविधायित्वायोगमाशङ्कय, नञोऽभावमात्रवाचित्वेन निवर्तनाख्यनिषेधार्थत्वायोगाच्छ्रुतस्य विधेर्नञनुरक्तस्य निषेधपरत्वपक्षे निषेध्यानुवादान्यथानुगपत्तिगम्य प्रापकमङ्गीकृत्य, यत्पुरुषार्थं, क्रत्वर्थं वाऽनृतवदनं, तन्न कुर्यादिति वचनव्यक्तिः अभावमात्रवाचिनोपि विधिप्रत्ययोक्तकर्त्तव्यत्वाभावाख्यानिवर्त्तनार्थत्वोपपत्तेः, नञ्मात्रस्य निषेधपरत्वपक्षे तु यत्क्रत्वर्थं, पुरुषार्थं वाऽनृतवदनं कुर्यात्तन्नेतिश्रुतविधिप्रत्ययसंहितेन प्रापकसंहितं निषेध्यमनूद्य, नञ्मात्रेण निषेधोक्तौ वचनव्यक्तिरित्याह—ततश्चेति। उभयत्रोपलक्षणार्थे पुरुषार्थक्रत्वर्थोक्ती। शेषानुवाद्यत्वपरामर्शार्थस्ततःशब्दः। एकत्र विधेर्निषेधपरत्वपक्षे, अपरत्रत्वविधेर्नञोनिषेधपरत्वपक्ष इत्यर्थः॥ यतश्चावधारितैदमर्थ्यमेवशेषमनुवाद्यं, ततः सर्व्वस्य निषेध्यैदमर्थस्य, निषेध्यैदमर्थ्यस्य च विधेर्निषेधपरत्वे साक्षादाख्याताधीनत्वान्नञोपि निषेधपरत्वे कर्तव्यत्वाभावाख्यनिषेधप्रतियोगिकर्त्तव्यतोक्तेराख्याताधीनत्वेनाख्याताधीनत्वादाख्यातेन कर्त्तोच्यते। नचेत्याख्यातगता चिन्ता। सर्वेष्वेवाख्यातेष्वित्यादि सिद्धान्तभाष्ये भविष्यतीति कर्त्तुराख्याताताभिधेयत्वस्य वक्तव्यतामुपपादितामुपसंहरति—ततश्चेति। ऐदमर्थ्यनिरूपणस्याख्यातायत्तत्वमुपपादयितुमाह—तत्रेति।

कर्त्तुराख्यातवाच्यावाच्यत्वचिन्तामानर्थक्येनाक्षिप्तुमाह—ननु चेति। वैयाकरणेन कर्त्रभिधानाभ्युपगमात्प्रयाजादीनां क्रत्वर्थत्वाभ्युपगमाच्चेहाक्षेपा धात्वर्थातिरिक्तभावनानभ्युपगमेपि धात्वर्थसामान्यंभावनामभिप्रेत्य 'भावप्रधानमाख्यातमिति स्मृतिमूलत्वसूचनार्थं भावनाप्रधानाख्यातवादिमिमांसकं प्रतिबोधनार्थं च भावनाप्रधानत्वोक्तिः। अनिष्पादितायाः क्रियायाः क्रत्वर्थत्वायोगान्निष्पादककर्त्रन्वयस्य प्रकरणानुगुणत्वोक्तिः।

आख्यातवाच्यं कर्त्तारं प्रति भावनायाः श्रौतेन प्रधानतया त्रयेण सह प्राकरणिकस्य क्रतुं प्रत्यङ्गतयाऽन्वयस्यातुल्यकक्षत्वेनाविरोधं संमार्गभावनाया ग्रहदशापवित्रान्वयाविरोधदृष्टान्तपूर्वमन्वयमुखेन तावद्विवृणोति—तद्यथेति। द्वावपि प्रत्यङ्गतयाऽन्वये द्वयोः शेषिणोरेकशेषसमवायलक्षणो विरोधः। प्राधान्येन त्वन्वये द्वयोः शेषयोरेकशेषिसमवाय-

लक्षणो विरोधः। स्यात्, नत्वेतद्द्वयमप्यस्तीति व्यतिरेकमुखेन विवृणोति—यदि त्विति। क्रतुप्राधान्येन सह कर्त्तुः प्राधान्यस्योभयोः शेषिणोरेकशेषसमवायलक्षणो विरोधः स्यादित्यर्थः। अतः श्रुतिप्रकरणयोर्नानाविषयत्वेनैकविषयत्वाख्यसमवायाभावाद्विरोधानुपपत्तेः, श्रुत्या प्रकरणबाधायोगात्कर्त्तुराख्यातवाच्यवाच्यत्वचिन्तानर्थिकेत्याक्षेपमुपसंहरति—अत इति। अङ्गत्वेन कर्त्तुर्वाच्यतामाक्षेप्ताऽभिमतामभ्युपेत्यैवतावत्प्राधान्यमुपपादयति—नैतदिति। श्लोकं व्याचष्टे—यद्यपीति। पाकादिशक्तस्यापि काष्ठादेर्ज्वलनादिव्यापारं विना पाकादिसाधकत्वाख्यकारकत्वाभावप्रसिद्धेः, सव्यापारस्यैव कर्तृरूपकारकत्वेनाख्यातवाच्यत्वावगमात् परोद्देशेन व्याप्रियमाणत्वस्यैव चाङ्गत्वात्कर्तृशक्त्यतिरिक्तव्यापारवत्वाख्याङ्गत्वरूपेणाख्यातवाच्यत्वोपपदनार्था साधकापेक्षोक्तिः। एकपदोपादानेप्यनृतवदनादिक्रियायाः श्रुत्या कर्त्तारं प्रति प्राधान्यावगतेः, प्रयोजनाकाङ्क्षावेलायामप्यङ्गत्वेन कर्त्रन्वयानिष्पत्तेर्विप्रकृष्टस्यापि यागं प्रत्यङ्गत्वेनान्वयस्याविरोधाद्ग्रहणोपपत्तिमाशङ्क्य, 'यथाग्नीषोमीयमि'ति तद्धितश्रुत्या प्रकृत्यर्थभूतयोरग्नीषोमयोर्द्रव्यद्वारा द्रव्यदेवतान्वयकल्प्ययागाङ्गत्वोक्तावपि यागस्य प्रयोजनाकाङ्क्षायां तयोरेव संस्कार्यत्वाख्यप्रयोजनत्वलक्षणप्राधान्यावगतेः, सन्निपत्योपकारिणश्च संस्कारातिरिक्तापूर्वकल्पनाभावेन गौरवानापादकत्वात्तत्संभवे कल्पनागौरवापादकारादुपकारकत्वकल्पनानुपपत्तेः, [सर्वंपाकादिसम्बन्धे द्व्याकारास्तण्डुलादय] इत्यनेन च न्यायेन पूर्वावगतस्याङ्गत्वस्योत्तरकालावगतेन प्राधान्येनाऽविरोधात्पशुयागाङ्गभूतस्य पुरोडाशयागस्य पशुयागसमवेताग्नीषोमसंस्कारार्थत्वं दशमे वक्ष्यते, तथाख्यातश्रुत्याकर्त्तुरनृतवदनाङ्गत्वोक्तावप्यनृतवदनस्य प्रयोजनाकाङ्क्षायां कर्त्तुरेव क्रतुसमवेतस्य संस्कार्यत्वलक्षणा प्रधानता न विरुद्धेत्याह—नचेति।

प्रकर्षसेचनक्रियायामव्याप्रियमाणत्येनानङ्गभूतास्वप्यप्सु करणरूपकारकत्ववाचिप्रोक्षणीशब्दप्रयोगाद्देवतायां च कारकत्वाभावेप्यङ्गत्वाभ्युपगमादङ्गत्वातिरिक्तशक्तिमात्ररूपेण कारकत्वावगतेः काष्ठादेश्चाव्याप्रियमाणावस्थायां कारककार्यकरत्वाभावात्पुत्रे न ममैव पुत्र इतिवत्कारकत्वाभावापत्तेरङ्गत्वानपेक्षस्य कर्तृत्वमात्रस्याख्यातवाच्यत्वादङ्गत्वानुक्तेः प्राधान्याविरोध इत्यन्यथाक्षेपं परिहरति—अथ वेति। कर्तृत्वमात्रोक्तावङ्गप्रधानत्वान्यतरनिर्णयायोगमाशङ्क्यार्थविध्यपेक्षितं प्रयोजनमालोच्य, गुणप्रधानत्वं भविष्यतीत्युक्ते द्वेधापि प्रयोजनाविशेषो योग्यत्वानुसारात्, योग्यत्वाविशेषे च विवक्षानुसारादित्युक्तम्। कर्तुर्वाच्यत्वे प्राधान्येनैवोक्त्यापत्तिरित्यन्यथाश्लोकद्वयेन परिहरति—यद्येति। प्रत्ययार्थत्वाविशेषाद्भावनां प्रति प्राधान्यायोगमाशङ्क्य, अख्यातवाच्यकर्तृवादिनाख्यातवाच्यभावनानभ्युपगमाद्धात्वर्थ एव भावनाप्रधानत्वादित्याक्षेप्तर्वार्त्तिकस्थेन भावनाशब्देनोक्त इति सूचनार्था प्रकृत्यर्थोक्तिः॥ क्रमवशोक्तिसूचितस्य नागृहीतविशेषणन्यायस्योयावित्यादिसूचितस्य च 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेति स्मरणस्याख्यातेप्यपवादाभावोक्त्यर्थत्वेनाविशेषोक्तिं व्याचष्टे—नहीति। कृद्ग्रहणस्य प्रदर्शनार्थत्वेन व्याख्यापूर्वं द्वितीयं श्लोकं व्याचष्टे—तेनेति। पाचकः पठतीति कृदुक्तस्य कर्तुः

प्रधानभूतस्य पाकविशिष्टस्यैव पठनान्वयवदाख्यातोक्तस्यापि प्राधान्ये सति पठनविशिष्टस्यैव पाकान्वयावगमापत्तेः पावको गृहे पठतीत्यादिप्रयोगे च गृहादीनां सन्निध्यविशेषेऽप्याख्यातपदोक्तेनैव धात्वर्थेनान्वयावगमात्सामान्यरूपेण न्यायेनावस्थितं प्रत्ययार्थप्राधान्यमाख्यातेप्युत्सर्गतः प्राप्तं प्रतीति वैलक्षण्यरूपेण न्यायान्तरेणापोद्यतेत्याशङ्कते—**ननु चेति**। न्यायान्तरं विवृणोति—**तथा हीति**। चतुर्थपादपूर्वकं श्लोकं व्याचष्टे—**द्वयोस्तावदिति**। प्रतीतेरपवादकत्वोपपादनार्थं—**नचेत्युक्तम्**। आख्याते कर्तुरुपसर्जनत्वोक्तिर्धात्वर्थप्राधान्यसिद्धयर्था, प्रत्ययार्थप्राधान्यविषयौत्सर्गिकन्यायापवादार्था वेति विकल्प्य, कर्तुरुपसर्जनत्वेप्याख्याते भावनायाः प्राधान्यात्, तस्याश्च स्वपदस्थधात्वर्थविशिष्टाया एव पदान्तरार्थान्वयाभ्युपगमेनानिष्टापत्त्यभावाद्गृहादीनां चाधिकरणादिकारकाणां कारकभूतेन कर्त्रान्वयार्हत्वात्क्रियात्मिकां भावनां प्राधान्येनाख्यातोक्तामुक्त्वा, कृदन्तपदस्थधात्वर्थाक्षिप्तोपसर्जनभूतभावनान्वयायोगात्कृदाख्यातसन्निध्यविशेषेप्याख्यातेनैवान्वयोपपत्तेर्धात्वर्थप्राधान्यापादकहेत्वभावान्न तावदाद्यः कल्पः। आख्याते च मत्पक्षे भावनायाः प्रत्ययार्थभूतायाः प्राधान्यानपवादेनौत्सर्गिकप्रत्ययार्थप्राधान्यविषयन्यायापवादायोगान्न द्वितीयोपीति परिहर्तुमाह—**उच्यतइति**। पूर्वार्द्धं व्याचष्टे—**भावेति**। कर्तुः प्राधान्याभावेऽपि प्रधानभूतां भावनां प्रति धात्वर्थस्योपसर्जनत्वेन प्राधान्यानापत्तौ भावप्रधानत्वोक्त्या सूचितायां, तथापि प्रतीतिवशाद्धात्वर्थस्य प्राधान्यं भविष्यतीत्याशङ्क्य, भावनाकाङ्क्षावशेन धात्वर्थाद्यन्वयात् यत्तस्याश्च प्रयत्नात्मकत्वेनेच्छायोनितयेच्छाविषयत्वार्हपुरुषार्थरूपभाव्याकाङ्क्षत्वाद्धात्वर्थस्याऽपुरुषार्थत्वेन भाव्यत्वानुपपत्तेर्नित्यं कर्त्तुः प्राधान्ये, गुणत्वे वा करणत्वान्न कदाचित्प्राधान्यमिति सर्वत्र स्थितमितीह जन्मनीति व्याख्यानायोक्ते—

धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते।

इति धात्वर्थस्यैव भावशब्दवाच्यत्वेन स्मृतस्य 'भावप्रधानमाख्यात'मिति प्राधान्यस्मृतेर्धात्वर्थप्राधान्यशङ्कानिरासायाऽन्यदेव हि धात्वर्थसामान्यं करणात्मकं, अन्यञ्च भावनानामसाध्यत्वेन व्यवस्थितमित्यत्राख्याते प्रधानतया स्मृतस्य भावनाख्यस्य भावस्य, धात्वर्थादन्यतोक्तेत्युक्तम्। धात्वर्थस्य भावत्वस्मृतिस्तु नपुंसके भावे क्त इत्यादौ शुद्धः सामान्यरूपो धात्वर्थ एव भावोऽभिधीयते, न तु "तस्य भावस्त्वतलाऽवित्यादाविव शब्दप्रवृत्तिनिमित्तमित्येवं व्याख्येयेत्याशयः। द्वितीयकल्पनिरासार्थत्वेनोत्तरार्द्धं व्याख्यातुं शङ्कते—**नन्विति**। ततश्चौत्सर्गिकन्यायापवादार्थं कर्तुरुपसर्जनत्वोक्तिरित्याशयः। कर्तुरुपसर्जनत्वेपि मत्पक्षे प्रत्ययार्थभूताया भावनायाः प्राधान्यानिवृत्तेः कर्तृप्राधान्यनिवृत्तावपि, नौत्सर्गिको न्यायो निवर्त्स्यति, कर्तृप्रत्ययार्थत्वरूपे तु त्वत्पक्षे कर्तृप्राधान्यानिवृत्तेरेव नौत्सर्गिको न्यायो निवर्त्स्यतीत्येवं व्याचष्टे—**सत्यमिति**।

मीमांसकपक्षे कर्तृप्राधान्यं चेन्निवृत्तं, कथं नौत्सर्गिकन्यायनिवृत्तिरित्याशङ्क्याह—**यो हीति**। कर्तृप्रत्ययार्थपक्षे तर्हि न्यायप्रतीत्योर्विरोधात्प्रतीतिबलीयस्त्वेनौत्सर्गिकोन्यायो

निवर्त्स्यतीत्याशङ्क्य, स्मृत्युपबृंहितस्यौत्सर्गिकस्यापि न्यायस्य लौकिकप्रतीतिबलेन निवृत्त्ययोगात्प्रतीत्यतिक्रमेण कर्त्तुः प्राधान्यमभ्युपगन्तव्यमित्याह—**यस्य त्विति ।**

कर्तृप्रत्ययार्थवादी चेद्भावनामपि प्रत्ययार्थं वदेत्, ततः प्रत्ययेन भावनोपादानात्कर्तृसंख्यादिप्रत्ययार्थवत्कर्त्तुरप्युपसर्जनत्वे प्रत्ययार्थप्राधान्यलक्षणस्य भावनाप्राधान्यानुगमविषयत्वात्प्रतीतिरपि प्रत्ययार्थप्राधान्यस्मृत्युपबृंहिता स्यात् न त्वसौ भावनां प्रत्ययार्थं वदतीति कर्त्तैवेत्यनेनोक्ते, धात्वर्थाख्यस्य भावस्य विशेषरूपेण धातूपात्तस्य, सामान्यरूपेण वा धात्वर्थसामान्यवाचिकरोतिसमानाधिकरणाख्यातप्रत्ययोपात्तस्य भावप्रधानाख्यातलक्षणेन प्राधान्यस्मृतेस्तदुपबृंहिता प्रतीतिर्भविष्यतीत्याशङ्क्य, धात्वर्थविशेषस्य भावनाया वैयाकरणेनाप्यनिष्टत्वाद्धात्वर्थसामान्यस्यापि भावार्थाधिकरणे भावत्वनिरासाद्वैयाकरणेनाप्याख्यातस्य करोत्यर्थवाचित्वानभ्युपगमेन धात्वर्थसामान्यवाचित्वानभ्युपगमान्न केनचिद्धातुना प्रत्ययेन वा भावोपादानमिति कृत्वा कर्तृप्रत्ययार्थपक्षे भावप्राधान्यानुगमविषयं लक्षणमेव न स्यादित्युक्तम् ॥

प्रत्ययार्थप्राधान्यलक्षणस्य भावनाप्राधान्यानुगमविषयत्वाभावेऽपि कर्तृसंख्याकालोपग्रहविशेषविध्यादीनामपि प्रत्ययार्थत्वात्प्राधान्योपपत्तेः सर्व्वप्राधान्यस्य चान्योन्यानन्वयापादकत्वेनाऽयोगात्कर्तृप्राधान्यानिर्णयमाशङ्क्य, संख्यादीनां स्वाभाविकैकान्तिकोपसर्जनत्वात्प्राधान्यशङ्कानुपपत्तेर्विधेरपि प्रमाणत्वेन प्रमेयं प्रत्यैकान्तिकोपसर्जनत्वात्कर्तृप्राधान्यनिर्णयसूचनार्थं यथा चेदं लक्षणं भावनाप्राधान्यानुगमविषयं न भवति, तदाऽस्मादेव लक्षणात्कर्तृप्राधान्यं प्राप्नोतीत्युक्तेप्रतीतिविरोधाच्चकारसूचितेन चाख्यातोक्तस्य कर्त्तुः कृदुक्तकर्तृवैलक्षण्यरूपेण न्यायेन विरोधात्कर्तुः प्राधान्यनिवृत्ति तच्चेत्यनेनाशङ्क्य, प्रतीतिमूललक्षणाभ्युपगमे तद्विपरीतलक्षणप्रणयनायोगात् प्रतीतिविपरीतलक्षणप्रणेतृभिः कर्तृप्रत्ययार्थवादिभिः प्रतीतिमूलत्वानभ्युपगमावगतेः, प्रमाणान्तरमूलस्य च लक्षणस्य तद्बाधं विना बाधायोगाल्लक्षणान्यथानुपपत्तिकल्पितमूलभूतप्रामाणान्तरोपबृंहितलक्षणबलेन लौकिकीं कर्तुरुपसर्जनत्वप्रतीतिं बाधित्वा, प्राधान्यमभ्युपगन्तव्यमिति तत्रेत्यादिनोक्त्वा, त्रिविधमप्याक्षेपपरिहारमुपसंहर्तु—**इतीत्युक्तम् ।** आक्षेपा परिहारत्रयमप्ययुक्तं मत्वाऽनन्तरमेव तावत्परिहारं यद्वै तदविशेषेणेति श्लोकद्वयोक्तं दूषयितुमारभते—**आहेति ।** सम्बन्धोक्तेर्गुणप्रधानभावाश्रयत्वात्तादर्थ्योक्तेश्च भावप्रत्ययान्तसमासत्वेनाङ्गाङ्गिसम्बन्धवाचित्वाद्यत्र 'व्रीहीन्प्रोक्षती'त्यादावङ्गाङ्गित्वलक्षणं गुणप्रधानभावं श्रुतिरुपादत्ते, तत्रैकस्य प्राधान्योक्तावितरस्य तादर्थ्यं प्रसज्यते, प्रकृतिप्रत्ययार्थयोस्त्वङ्गाङ्गित्वानपेक्षविशेषणविशेष्यत्वमात्ररूपं गुणप्रधानत्वं प्रकृतिप्रत्ययान्वयात्मकपदश्रुत्या प्रतीयते । एवं च सति प्रत्ययार्थस्य विशेष्यत्वलक्षणप्राधान्योक्त्या धात्वर्थस्य विशेषणत्वलक्षणोपसर्जनत्वावगमेपि तादर्थ्यनियमो नास्तीत्यर्थः ।

राजपुरुषदृष्टान्तं विवृणोति—**तथाहीति ।** आदिशब्दगृहीतं दृष्टान्तं विवृणोति—**अपि चेति ।** निःसंदिग्धं प्रधानत्वमस्येति बहुव्रीह्यर्थः । पदश्रुत्याङ्गाङ्गित्वानुकावपि

श्रुत्युक्तविशेषणविशेष्यत्वानुसारेणाङ्गाङ्गित्वनियमाशङ्कानिरासायाङ्गाङ्गित्वस्य विशेषणविशेष्यत्वानुसारित्वनियमाभावे चतुर्थाधिकरणभाष्यसंमतिमाह—**तथा चेति**। तदेव भाष्यमूहेन प्रकृते योजयति—**तेनेति**। एवं प्रत्ययार्थप्राधान्यस्मृतेर्विशेषणविशेष्यत्वाख्यगुणप्रधानत्वाशयत्वाङ्गीकारेण क्रियायाः कर्त्रर्थत्वप्रसङ्गाभावमुक्त्वा, अधुनाऽङ्गाङ्गित्वाख्यगुणप्रधानत्वाशयत्वेप्याभिधानिकाङ्गाङ्गित्वाशयत्वान्न वास्तवः क्रियायाः कर्त्रर्थत्वप्रसंगः। प्रत्युत प्राधान्याख्येन तात्पर्येण कर्तृत्वाभिधानात्कर्तुरेव क्रियार्थत्वप्रसङ्ग इत्याह—**अपि चेति**। यद्यपीह व्याकरणे प्रसिद्धेनाभिधानिकेनाङ्गित्वाख्येन प्राधान्येन कर्तृत्वमभिधीयते, कर्तृत्वमभिधीयते, तथापि कर्तुः प्राधान्येनाभिधानात्क्रियायास्तादर्थ्यप्रसङ्ग इति यदुक्तं, तन्नास्तीत्युक्ते कथमित्यपेक्षायां तदुपपादनार्थं यस्मात्प्राधान्याभिधानस्मृत्या तात्पर्यतः कर्तृत्वस्य वाच्यत्वावधारणाद् गुणत्वं वाच्यमवधारितं भवतीति योज्यं ततस्तात्पर्यतः इति तु पाठः स्पष्टार्थः।

श्लोकं व्याचष्टे—**प्राधान्येति**। व्याकरणे वस्त्वर्थमनपेक्ष्यशब्दार्थेन व्यवहारात्प्रकृत्या स्वार्थाविच्छिन्नप्रत्ययार्थप्रतीत्यर्थं स्वार्थाभिधानात् तात्पर्येण प्रत्ययार्थपरत्वेन प्रकृतिप्रत्ययाभ्यां स्वार्थाभिधानात्मकमाभिधानिकेन शेषित्वेनाभिधानं प्राधान्याभिधानं विवक्षितं, नतु वास्तवेन शेषित्वेनाभिधानम्। प्राधान्याभिधानोक्त्या विवक्षितम्। तस्मादिह व्याक्रियायामाख्यातस्य कर्तृत्वपरत्वाभ्युपगमे गुणताऽऽख्यातेनोक्ता भवतीत्युक्ते, कथं तात्पर्येण कर्तृत्वोक्त्या भवतीत्याशङ्क्य, नहीत्युक्त्वा नतदिति श्लोकावयवव्याख्यार्थं—**तेनेत्युक्तम्**। प्रकृत्यर्थस्य प्रत्ययार्थ-प्रतीत्यर्थत्वाभावेनाभिधानिकाङ्गाङ्गित्वानभिधानात्मकेनौदासीन्येन कर्त्रभिधानपक्षेप्याख्यातेन कर्तुर्गुणतोक्ता भवति, आभिधानिकप्राधान्याभिधानपक्षे तु सुतरामिति तत्त्वर्थसूचनायैतद्गुणत्वाभिधानम्, औदासीन्याभिधानात्मकद्वितीयपरिहारपक्षेप्यतिदेष्टव्यमित्याह—**एतदिति**। एतदेवोपपादयितुं द्वितीयं परिहारमनुभाषणपूर्वं दूषयति—**यत्त्विति**। तत्राप्याभिधानिकाङ्गाङ्गित्वानभिधात्मकौदासीन्याख्यकेवलाभिधानपक्षेपि वास्तवाङ्गाङ्गित्वानपेक्ष्यवस्तुरूपेण कर्त्रभिधाने सति, वास्तवौदासीन्यरूपेणावस्थानाद्यथेष्टं, यथायोग्यं वा वास्तवमङ्गाङ्गित्वं कर्त्ताप्रतिपद्येत, तस्य तु कर्तृत्वरूपेणाभिधानात्कर्तृत्वस्य च वास्तवगुणत्वैकान्तिकत्याद्वास्तवौदासीन्याभिधानं नास्तीत्यर्थः।

यद्यप्यादौ गुणत्वेनेति श्लोकोक्तमाद्यं परिहारमनुभाषणपूर्वं दूषयति—**यदपीति**। श्रुतिविरोधं विवृणोति—**आख्यातेन हीति**। पशुपुरोडाशे देवतोद्देशपूर्वकद्रव्यत्यागात्मकस्य यागस्योद्देश्यदेवतासाध्यत्वाद्देवतायास्तद्धितश्रुत्युक्तस्य द्रव्यद्वारा यागाङ्गत्वस्य यागप्रयोजनाकाङ्क्षावेलायामुद्देशांशेन संस्कार्यत्वाख्यप्राधान्यावगमेप्यव्यावृत्तेरिह त्वंशभेदाभावाद्व्यावृत्यापत्तेर्वैषम्यसूचनार्थं—**व्यावर्त्तयतइत्युक्तम्**। श्रुतिविरोधेप्यनर्थक्यापत्तौ बलाबलवैपरीत्यात्सन्निधिनोपकार्यत्वाख्यप्रधान्योपपत्तिमाशङ्क्य, सन्निधितो बलवता प्रकरणेनानर्थक्यपरिहारसंभवे सन्निधिनानर्थक्यपरिहारायोगमाह—**नचेति**। श्रुत्यविरोधात्सन्निधिनैवानर्थक्यपरिहारोपपत्तिमाशङ्क्य, प्रकरणस्याप्यविरोधमाह—**यथैवेति**। गुणत्ववत्प्राधा-

न्याख्यातश्रुत्यैव विधिरूपयोक्तेर्बलाबलविशेषाभावमाशंक्योभयोक्तचशक्तेः प्राधान्योक्तौ गुणत्वत्यागापत्त्ययाख्यातवाच्यगुणत्ववादिना गुणत्वातिरिक्तकर्तृत्वानभ्युपगमात्कर्तृत्वत्यागापत्तेः स्वमित्वाख्यप्राधान्यायोगात्कर्मत्वाख्यप्राधान्यापत्तेः कर्मणि लकारोत्पत्तौ यगात्मनेपदसंप्रसारणशीयुट्करणादुद्येतेत्यन्यरूपशब्दः स्यात् न तु वदेदित्येवंरूप इत्याह—**नचेति**। कर्त्रन्तराभावेन कर्त्रीप्सिततमत्वाख्यकर्मत्वायोगादाप्यमानत्वोक्तिः। कर्तृत्वस्य ह्यात्मत्वादुभयोक्त्युपपत्ति शङ्कते—**अथेति**। कर्तृत्वस्य क्रियावेलायामेव सिद्धत्वात् स्वामित्वस्य तु भोगकालभावित्वात्साधकरूपमेव कर्तृत्वं, न स्वामिरूपमिति न तावद्द्व्यात्मकं कर्तृत्वम्। यदि तु स्वाम्यं विना कर्तृत्वायोगात्कर्तृत्ववाचिनास्वाख्यातेन स्वाम्योक्तिः शङ्क्यते, ततोऽनन्यलभ्यस्यैव शब्दार्थत्वाद्विपरीतसाधनो हेतुः स्यादिति परिहरति—**एतदिति**। कर्तृत्वमात्राभिधानोपपादनार्थत्वेन प्रामाणान्तरगोचरोक्ति व्याचष्टे—**यद्यपीति**। तदेवाभिधीयत इत्येवकारार्थे तच्चेति चशब्दव्याख्यसूचनार्था मात्रोक्तिः॥ स्वाम्योक्त्यर्थस्वर्गकामादिशब्दानर्थक्यापत्तेरपि नाख्यातेन स्वाम्योक्तिरित्याह—**तथा चेति**। श्लोकार्थमुपसंहरति—**तस्मादिति**। काष्ठादौ फलोद्देशाभावेन स्वाम्याभावेऽपि काष्ठानि चलन्तीत्यादिप्रयोगे कर्तृत्वोक्तेरपि द्व्यात्मकमेव कर्तृत्वमित्यवधारणायोगाद्गुणत्वमेव केवलं कर्तृत्वमित्याह—**अतश्चेति**॥ इतश्चेत्यर्थः॥ श्लोकं व्याचष्टे—**व्यापिहीति**। परिहारत्रयदूषणमुपसंहरति—**तस्मादिति**।

परिहर्ता तृतीयं परिहारं समाधातुं तत्रैतत्प्रसज्येतेत्यादिवार्त्तिकोक्तं तावद्दूषणं परिहरति—**अत्रेति**। विशेषणत्वरूपेणोपसर्जनत्वेन प्रकृत्या स्वार्थावच्छिन्नप्रत्ययार्थाभिधानार्थं स्वार्थाभिधानमित्येवंरूपस्याभिधानधर्मतया धर्मधर्मिणोरत्यन्तभेदाभावेनाभिधानात्मकस्य तादर्थ्यस्योपात्तत्वादभिधानस्य चानुष्ठानार्थत्वात्प्रकृत्यर्थानुष्ठानस्य प्रकृत्यर्थावच्छिन्नप्रत्ययार्थानुष्ठानार्थत्वात्प्रकृत्यर्थोऽङ्गं, प्रत्ययार्थः प्रधानमित्यनुष्ठानविषयम्। अपिशब्दात्स्वरूपविषयमपि तादर्थ्यं तादृगेवाङ्गीकार्यमित्यर्थः। वस्तुधर्मभूतस्याङ्गाङ्गित्वस्याभिधानधर्मभूताङ्गाङ्गित्ववैपरीत्ये राजपुरुषदृष्टान्तस्य विशेषणतया राजेतिवार्त्तिकोक्तस्य साध्यविकलतामाह—**राजेति**। राजाभिधानस्य राजविशिष्टपुरुषाभिधानार्थत्वलक्षणशब्दार्थवृत्त्यालोचनया राजाख्यस्य वस्तुनोपि पुरुषाख्यं वस्तु प्रत्यङ्गतैव प्राप्तेति कृत्वा, साध्यविकलो दृष्टान्त इत्याशयः। राजपुरुषमानयेत्यादौ राजाज्ञप्तदुष्टनिग्रहाद्यर्थे राजपुरुषानयने राजाज्ञाकरत्वे पुंसो राजाङ्गत्वावगमाद्राज्ञोऽङ्गता न युक्तेत्याशङ्क्य, तत्रापिशब्दार्थवृत्त्यालोचनया राज्ञोऽङ्गत्वावगमेऽपि राजाज्ञानुष्ठानार्थानयनान्वयान्यथानुपपत्तिलक्षणप्रमाणान्तरवशात्प्राधान्यकल्पनेत्याह—**प्रमाणान्तरेणेति**। विशेषेणसमासश्रुत्युक्ताङ्गत्वविरोधाद्वाक्यलभ्यानयनान्वयान्यथानुपपत्त्या विपरीतकल्पना न युक्तेत्याशङ्क्य, सक्तूनां द्वितीयाश्रुत्युक्तप्राधान्यविरोधेऽपि वाक्यलभ्यहोमान्वयान्यथानुपपत्त्याङ्गत्वकल्पनवद्विपरीतकल्पनोपपत्ति सूचयितुं शब्दार्थविपरीतकल्पनं सक्त्वधिकरणे दर्शितमित्याह—**तच्चेति**। व्यभिचारात्तर्हि विशेषणसमासश्रुतेर्नाङ्गत्ववाचिता युक्तेत्याशङ्क्य, प्रमाणान्तरवशाद्विपरीतकल्पनामात्रेण शब्दार्थत्वाभावो न

भवतीति, तत्रैवोक्तमित्याह—**न चेति** । राजपुरुषशब्दस्याङ्गाङ्गिभाववाचित्वे राज्ञोंगत्वाभावात्प्रयोगे । न युज्येतेत्याशङ्कयाह—**यश्चेति** । राज्ञः प्राधान्येप्रसिद्धेर्गुणत्वं नास्तीत्याशङ्कय, प्रतिज्ञाहेतुप्रश्नपूर्वमुपपादयति—**अस्ति चेति** ।

गुणत्वप्राधान्ययोर्हेतुहेतुमद्भावेनाविरोधसूचनार्था तावत्पश्चाच्छब्दाभ्यां पौर्वापर्योक्तिः । द्व्यात्मकत्वे प्राधान्यमपि कस्मान्नविवक्षतइत्याशङ्कय, विवक्षात्विति यदुक्तं, तद्व्याचष्टे—**तत्रेति** । उपकारकोपकार्योक्तिभ्यामङ्गप्रधानत्वे लक्षणयोक्ते पुरुषस्य राजान्वयविवक्षया राजपुरुषोः, यमिति प्रयोगे निर्विशेषान्वयोक्त्यानर्थक्त्यापत्तेर्विशेषाकाङ्क्षायामभिधानगतस्याङ्गाङ्गित्वाख्यस्यान्वयविशेषस्य बुद्धिस्थत्वेनाभिधेयगततयापि कल्पनाद्वस्तुतोऽपि राज्ञोऽङ्गत्वं, पुंसश्चाङ्गितास्तु राजपुरुषमानयेत्यादिप्रयोगे त्वानयनादिक्रियान्वये संयुक्तस्य पुरुषस्योपलक्षणार्थं राजान्वयोक्तेः सामान्यमात्रेणाप्युपलक्षणोपपत्तेर्विशेषानाकाङ्क्षात्वान्नशब्दार्थवृत्यालोचनयावस्तुतो राज्ञोङ्गत्वप्राप्तिरित्याशङ्कयाह—**प्रयोगेति** ।

निर्विशेषस्याप्यन्वयस्योपलक्षणत्वोपपत्तावपि, निर्विशेषसामान्यायोगादभिधानगतस्य चाङ्गाङ्गित्वाख्यास्यान्वयविशेषस्याभिधेयगतान्वयसामान्यविशेषायोगाद्वास्तवाभिधेयगतान्वयसंभवे चाभिधानगतस्थान्वयविशेषस्याभिधेयसमारोपायोगाद्वास्तवस्य चाङ्गाङ्गित्वस्य पदवेलायामेव प्रतीतेः, प्राथम्यादाभिधानिकस्य त्वङ्गाङ्गित्वस्य पदान्तरवक्ष्यमाणक्रियोपयोगं पुरुषस्यापेक्ष्यालोच्य तदुपलक्षणार्थं राजान्वयोक्तेराभिधानिकेनापि चाङ्गाङ्गयन्वयेनोपलक्षणोपपत्तेर्वास्तवाङ्गाङ्गयन्वयानाकाङ्क्षणाद्वाक्यवेलायां प्रतीतेर्जघन्यत्वाद्राज्ञा भृतिदानेन पुरुषस्योपकार्यत्वविवक्षायां, राजपुरुषब्दप्रयोगो राजाज्ञाकरत्वेनोपकारकत्वविवक्षायां वा पुरुषराजशब्दप्रयोग इति व्यवस्थाहेतौ वास्तवेङ्गाङ्गित्वाख्येर्थद्वये पदान्तरवक्ष्यमाणक्रियोपयोगमनपेक्ष्यैव तावत्पदवेलायामेव संभवति सत्यानयादिपदान्तरवक्ष्यमाणक्रियोपयोगस्यानादृत्य वास्तवाङ्गाङ्गित्वं यथा कथंचिदन्वयमात्रापेक्षया वैवक्षिकाङ्गाङ्गित्वविशेषमात्रेण क्लिष्टव्यवस्थाश्रयणं न युक्तमित्याशयः । शैघ्रचविलम्बाख्यविशेषोक्त्यर्थं तावद्वक्ष्यमाणोक्तौ । तत्पुरुषसमासस्य चोत्तरपदार्थप्राधान्यवाचित्वाद्वास्तवाङ्गाङ्गित्वाभावे निरालम्बनत्वापत्तेः प्रयोगासंभावात्तदन्यथानुपपत्त्यापि वास्तवाङ्गाङ्गित्वकल्पनसूचनार्था विद्यमानोक्तिः । अतो वास्तवमेवाङ्गाङ्गित्वं शब्दप्रवृत्तिनिमित्तमालोच्य राजपुरुषशब्दप्रयोगाद्वास्तवमेवराज्ञः पुरुषाङ्गत्वं विवक्षितमित्युपसंहरति—**तेनेति** ।

उपकाराख्येनाङ्गत्वफलेनाङ्गत्वोपपादनार्थोपकारकृतोक्तिः । भृतिदानोपादेयं पुरुषं प्रति स्वामिनोऽङ्गत्वसंभवेऽपि, गां गर्भदासं वा प्रत्यङ्गत्वाभावाद् देवदत्तस्वं गौः गर्भदासो वेत्यादिः प्रयोगो वास्तवाङ्गाङ्गित्वाविवक्षायां तत्स्यादित्याशङ्कय, तत्रापि वस्तुगतौ वोपकारतोङ्गत्वेनोपचर्यंते, नत्वभिधानगताङ्गताभिधेयगतत्वेनोपचर्यंत इत्याह—**यत्रापीति** । देवदत्तादानांगवादीन्युत्योपचारिकाङ्गत्वविवक्षायां मुख्यबुद्धभावापत्तिभयेनाङ्गत्वानपेक्षोपकारित्वलक्षणोपसर्जनत्वाभ्युपगमेऽप्येतदुपकारकत्वं शेषफलत्वाच्छेषस्यैव प्रत्यासन्नतरं, शेषिफलत्वाभावात्तु न शेषिणः प्रत्यासन्नतरमिति कृत्वा, उपकारकत्वस्य शेषप्रतिपत्त्यर्थ-

त्वविज्ञानाऽसंभवच्छेषत्वस्य धात्वर्थादिकरूपकारकत्वलक्षणेनोपसर्जनत्वेन प्रत्ययार्थकर्त्तारं प्रत्यङ्गत्वावगतेः कर्तुः प्रधानसिद्धिरिति सूचयितुमाह—**यथापीति**। निःसंदिग्धप्रधानत्वमिति वार्त्तिकोक्तस्य पाचकादिदृष्टान्तस्य साध्यविकलतामाह—**पाचकादावपिचेति**। यथा राजपुरुषादिशब्दे राजादीनां पुरुषादीन्प्रत्यङ्गत्वं, तथापाचकादिशब्देऽपि देवदत्तादेः पाकादिकृतवृत्तिलाभाद्युपकारद्धावात्पाकादिक्रियाणां देवदत्तादीन् प्रत्यङ्गत्वं विवक्ष्यते, प्राधान्यं तु निष्पाद्यत्वेनावस्थानात्सदपि न विवक्ष्यते। ततश्च वस्तुधर्मभूतस्याङ्गाङ्गित्वस्याभिधानधर्मभूताङ्गाङ्गित्ववैपरीत्ये पाचकादिदृष्टान्तस्य साध्यविकलतेत्याशयः यथा कर्मोत्पन्नकृदन्ते पक्त्रादिशब्दे कर्मभूतानोदतादीन् प्रत्यङ्गत्वं, तथा कर्तृभूतानपि देवदत्तादीन् प्रतीति सूचनार्थं—**सर्वत्रेत्युक्तम्**।

शब्दार्थवृत्त्यालोचनया वास्तवाङ्गाङ्गित्वाभ्युपगमे प्रोक्षितशब्दे कर्मोत्पन्नकृदन्ते शब्दार्थवृत्या प्रोक्षणस्य द्रव्यार्थत्वाद्वस्तुवृत्यापि द्रव्यार्थत्वापत्तेः 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति, प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टीति वाक्याभ्यां विहितं मोक्षणम् अवहननपेषणप्रयुक्तम्, अपूर्वप्रयुक्तं वेति नावमिकी चिन्ता तादर्थ्यं विना प्रयुक्त्ययोगान्न युज्येतेत्याशङ्कते—**नन्विति**। द्रव्यार्थत्वेपि द्रव्यकार्यप्रयुक्त्यविरोधाद्धन्तिपिपिस्वरूपेणोलूखलादिद्रव्यकार्येणोलूखलाद्यर्थं प्रोक्षणं प्रयुज्यतेऽपूर्वसाधनांशेन वा हन्तिपिपिगतेनेति नावमिकचिन्तोपपत्तेः प्रोक्षणस्य द्रव्यार्थतेष्टैवेऽति परिहरति—**कस्यवेति**। शङ्कापरिहाराशयौ क्रमेण विवृणोति—**नन्विति**। तादर्थ्यस्य तदधीनविधिविषयत्वाख्यत्वात्, तत्तत्प्रयुक्तत्वस्य च तत्तत्प्रयोजनत्वाख्यत्वात्, तत्तादर्थ्यतत्प्रयुक्तत्वयोरभेदाशयेन द्रव्यार्थत्वान्यप्रयुक्त्योर्विरोधाशङ्कानुपपत्तेर्द्रव्यार्थत्वे द्रव्यस्यैव शेषित्वात्प्रयोजकत्वापत्तेरन्यप्रयुक्तिविरोधः शङ्कनीयः।

सोऽपि द्रव्यार्थत्वेऽपि धर्मस्य नवमाद्यन्यायेन कार्यप्रयुक्तत्वाद्, द्रव्यधर्मः प्रोक्षणं हन्तिपिषिस्वरूपात्मकेन द्रव्यकार्येणाऽदृष्टार्थधर्मानपेक्षेणाप्यानन्तर्यात्प्रयुज्यते इत्याद्यतण्डुलपिष्टादिनिष्पादनद्वारा हन्तिपिषिसाध्यस्यौषधयागापूर्वस्य व्यवहितत्वेप्यदृष्टार्थधर्माकाङ्क्षत्वात्, तत्तत्साधनांशेन हन्तिपिषित्वैकार्थसमवायिनोलूखलमुसलादिद्रव्यकार्येणेत्येवं चिन्तोपपत्तेर्नास्तीति परिहाराशयः॥ इतिकरणस्य प्रकारवाचित्वाद्यस्यादेव प्रकारो विचारः तस्माद्द्रव्यार्थत्वेऽवस्थितेऽपि न विरुद्ध्यतइत्यावृत्तस्य हिशब्दस्यापि शब्दार्थवाचित्वाङ्गीकारेण योज्यम्।

यद्यपूर्वमनेन क्रियते ततोऽस्याऽपूर्वं प्रयोजकं, यदि हन्तिपिषी ततस्तौ प्रयोजकावित्यादिभाष्येण प्रयुक्तिनिर्णयार्थं तादर्थ्यस्यापि तत्राधिकरणे विचाराद् द्रव्यार्थत्वविरोधमाशङ्क्य, यदुलूखलमुसलाभ्यामवहन्ति, पिनष्टि वा, तत्प्रोक्षिताभ्यामिति तृतीयानिर्देशात्साधनीभूतयोरुलुखलमुसलयोः, दृषदुपलयोर्वा प्रोक्षणं प्रत्यङ्गित्वावगतेः, किमवघातं पेषणं वा करोतीति हन्तिपिष्योः कर्मत्वेन करोत्यर्थान्वयाद्यदुलूखलमुसलयोर्दृषदुपलयोर्वाहन्तिपिषिसाधनत्वं, तदर्थं प्रोक्षणम्, उतावघातेन वा, पेषणेन वा करोतीति करणत्वे-

नान्वयाद्यत्तयोरपूर्वसाधनत्वमित्युलूखलमुसलापरित्यागेनैव तादर्थ्यविचारादविरोधमाह—**योपिचेति**।

यद्वा द्रव्यस्य स्वरूपेण प्रत्ययार्थत्वाभावात्प्रकृत्यर्थं प्रत्यङ्गित्वानुपपत्तेः कारकरूपेणाङ्गित्वस्याभ्युपगमनीयत्वात्, कृदुक्तस्य च कारकरूपस्य द्रव्योपसर्जनत्वेन निष्कर्षातिरोहितत्वेनात्मार्थतया क्रियाग्रहणाशक्तेः प्रोक्षणस्य कर्मभूतोलूखलादिद्रव्यार्थत्वायोगेऽपि, आख्यातोक्तस्य कारकरूपस्य स्वप्राधान्यान्निष्कर्षप्रतीतेराविर्भूतत्वेनात्मार्थतया क्रियाग्रहणशक्तत्वाद्वदनस्यकर्त्रर्थत्वाविरोध इति वैधर्म्योक्त्यानिष्टापत्तिं परिहरति—**तिरोहितं चेति**। पाचकादिशब्दे कर्तृत्वस्यापि कृदुक्तस्य तिरोहितत्वेन क्रियाग्रहणशक्तिश्चकारेण सूचिता।

श्लोकं व्याचष्टे—**कृदन्तेति**। यदेतद्विशेषणत्वेनोपसर्जनत्वं, तदेव शेषत्वमप्यापादयतीत्यादिवार्त्तिकोक्तस्य श्रुत्युक्तविशेषणविशेष्यत्वानुसारेणाऽङ्गाङ्गित्वनियमस्य न श्रुतिर्ब्रूते वाक्यार्थो नेतीति पश्वेकत्वाधिकरणभाष्यविरोधमाशङ्क्यैकाभिधानश्रुतिबलीयस्त्वेनैकपदोपादानश्रुत्यवगतदव्यार्थत्वाबाधाशयं तद्भाष्यमित्येव विरोधपरिहारसूचनार्थं तथा-चेत्यादिवार्त्तिकोक्तामङ्गाङ्गित्वस्य विशेषणविशेष्यत्वनियमाभावे भाष्यसंमतिमनुभाषणपूर्वं निरसितुमाह—**यत्त्विति**।

श्लोकं व्याचष्टे—**कारकोपसर्ज्जनीभूतस्येति**। तेनात्रापीतिवार्त्तिकोक्तमूहेन भाष्ययोजनं निरसितुमाह—**नत्विति**। प्राधान्येनेह कर्त्तृत्वमिति वार्त्तिकोक्तं तात्पर्याख्येन प्राधान्येन कर्त्तृत्वोक्तौ कर्त्तुरेकक्रियार्थत्वापत्तिमनुभाषणपूर्वं क्रियाफलभोक्तृत्वात्मकस्वाम्याख्यं प्राधान्यं विना कर्त्तव्यत्वावगतिपूर्वककर्तृत्वनिर्वाहाद्विधायकेनाख्यातेन प्राधान्यपर्यन्तकर्तृत्वोक्तेर्गुणत्ववत्प्रधानतापि कर्त्तुः प्राप्नोतीत्येवं निरस्यति—**यत्त्विति**।

अधिगम्य ममेदमनुष्ठेयमिति ज्ञात्वा क्रियेत्यधीत्युपसर्गस्यान्तर्गतगमनक्रियायोगविषयत्वाङ्गीकारेणाधिक्रियोक्तेरनुष्ठेयत्वावगतिपूर्वकानुष्ठानाख्यामधिक्रियां विना शास्त्रीयेऽर्थे कर्तृत्वानिर्वाहात्कर्तृणामधिक्रियावगम्यते। सा च चेतनानां प्रेक्षापूर्वकारिणां फलोद्देशादृते न भवेदित्युक्तेनानृतं वदेदित्यत्र विध्यभावेनानुष्ठेयत्वावगत्यभावात्तत्पूर्वकानुष्ठानाख्याधिकाराभावात्फलोद्देशकल्पनायोगमाशङ्क्याननूदितनिषेधायोगादप्राप्तस्य चानुवादायोगात्प्रापकं च विना प्राप्त्ययोगादशाब्दस्य च प्रापकस्य शाब्दे व्यवहारेऽन्वयायोगान्निषेध्यतयापि शास्त्रगम्येऽर्थे विधिरवगम्यत इति विधिश्चेत्येतावतीक्त्वा पुनः सकलनुत्तरार्द्धं विधिरप्यधिक्रियावत्फलोद्देशं विनात्मानं लभेतेत्येवं योज्यमित्येवं श्लोकं व्याख्यातुमाह—**यद्यपीति**। अनुष्ठेयत्वावगतिपूर्वकानुष्ठानवाचित्वेनाऽधिक्रियोक्तिव्याख्यानायाऽनुष्ठानोक्तिः कृत्यल्युटो बहुलमि(३-३-११३)ति स्मृतेरनुतिष्ठतीति व्युत्पत्त्यानुष्ठातृत्ववाचिनी अनुष्ठेयत्वावगतिपूर्वकानुष्ठातृत्वात्मकस्यापि कर्तृत्वस्य गुणात्मकत्वात्प्राधान्यविरोधशङ्कानिराससूचनार्था मात्रोक्तिः। प्रेक्षापूर्वकारिणां फलोद्देशं विनाऽधिकारायोगेऽपि, मन्दधियां

निष्फलेऽपि कर्मणि यादृच्छिकानुष्ठेयत्वावगतिपूर्वकानुष्ठानाख्याधिकारदर्शनात् फलोद्देशा-व्यभिचारमाशङ्क्य, यदृच्छया प्रवृत्तस्य वेदेन कर्तृत्वानुक्तेः स्वसम्बन्धिप्रेरणावगतिहेतु-कानुष्ठेयत्वावगतिपूर्व्वकस्यैवानुष्ठानस्य वैदिकेषु कर्मस्वधिकारशब्दे विवक्षितत्वाच्चितीति-संज्ञा न इतिसम्यग्ज्ञानाख्यसंज्ञानवाचिचेतयतिधातुत्पन्नचेतनशब्दवाच्यानां प्रकृष्टधियामेवा-धिकारो, न मन्दधियामिति सूचयितुं—**तादृशामेवेत्युक्तम्** । निषेध्यतयापि शास्त्रगम्यार्थे-धिक्रिया विधियुक्तत्वादवगम्यत इत्येवं विधिश्चेत्युत्तरार्द्धावयवव्याख्यार्थं विधियुक्ता-श्चेत्युक्त्वावृत्तेतदवयवसहितोत्तरार्द्धावयवव्याख्यार्थं विधियुक्ताश्चेत्युक्त्वावृत्तैतदवयवसहि-तोत्तरार्द्धव्याख्यानार्थं—**नचेत्युक्तम्** । अनुष्ठेयत्वावगतिपूर्वकानुष्ठातृत्वात्मककर्तृत्वात्म-लाभान्यथानुपपत्त्या, विध्यात्मलाभान्यथानुपपत्त्या वा फलोद्देशकल्पनस्य कर्तृप्राधान्य-सिद्ध्युपयोगमाह—**तेनेति** । प्रकरणावगतक्रत्वर्थत्वाबोधेनापि तर्हि पारंपर्येणानृतोक्ति-निषेधस्य पुरुषोपकारित्वसिद्धेर्न तद्बाधेन श्रुत्या साक्षात्पुरुषोपकारिता कल्पनीयेत्याशङ्क्याह-**साक्षादिति** । फलाश्रवणेन पुरुषापेक्षितफलसाधनतया पुरुषार्थत्वायोगात्पुरुषसंस्कारकत्वेन पुरुषार्थत्वस्य वाच्यत्वापत्तेः, शुद्धस्य च पुंसो निष्प्रयोजनत्वेनाऽसंस्कार्यत्वात्क्रतुयुक्तस्य तु प्रकरणं विनाऽवगतेः, तस्य च श्रुत्या बाधान्न कथं चित्साक्षात्पुरुषोपकारः सम्भव-तीत्याशङ्क्य, शुद्धपुरुषधर्मत्वायोगेऽपि संस्कार्यस्य पुंसः क्रत्वर्थत्वसिद्ध्यै श्रुत्या प्रकरण-स्यापेक्षितत्वेन तस्मिन्नंशेऽबाधात्प्रकरणावगतक्रतुयुक्तपुरुषसंस्कारत्वेन साक्षात्पुरुषोपकार-सम्भवमुपपादयितुमाह—**नचेति** । क्रत्वर्थस्य पुंसोऽदृष्टोपकारित्वेनादृष्टकार्ययोग्यत्वाधान-लक्षणसंस्कारानपेक्षत्वात्, फलभोक्तृत्वयोग्यतायाश्च साङ्गप्रधानानुष्ठानमात्रात्सिद्धेस्तदा-धानलक्षणस्यापि संस्कारस्यानपेक्षणाक्रतुयुक्तपुरुषसंस्कारताप्ययुक्तेत्यांशङ्कते—**क इति** । प्राप्तस्याप्योदनादेर्भोज्यस्य रोगादिना भोक्तृतायामयोग्यस्य भोजनादर्शनात्फलसाधनता-तिरिक्तभोक्तृत्वायोग्यताधानापेक्षोपपत्तेः 'योजमानास्तु तत्प्रधानत्वादि(३-८-१)त्यत्र वक्ष्य-माणाया ग्रन्थगौरवभयादत्रानभिधानेपि सामान्यतः पुरुषार्थत्वावधारणमात्रात्प्रकरण-गम्यक्रत्वर्थत्वव्यावृत्तिः सेत्स्यतीति परिहरति—**सर्वथावदिति** । भोक्तृत्वयोग्यताधानाख्यस्य चोपकारविशेषस्य वक्ष्यमाणत्वाविशेषाभावात्सामान्ययोगः शङ्कनीय इत्याह—**तद्विशेषेति** । तस्मादाभिधानिकेनापि प्राधान्येन कर्त्रभिधाने वास्तवप्राधान्यसिद्धेः, श्रुत्या क्रियायाः क्रत्वर्थत्वावधारणान्न प्रकरणेन क्रत्वर्थत्वं सेत्स्यतीति, तृतीयपरिहारसमाधानमुपसंहरति—**तस्मादिति** । द्वितीयाद्यपरिहारयोः प्राधान्यांशानुक्तिसाम्यादेकहेलया परिहारद्वयं समाधातुं यद्यपि कर्तृत्वं साधकत्वंनेत्यादिवार्तिकोक्तन्यायेन कर्तृवाचिना प्रत्ययेन प्राधान्यांशो नोक्तः, कर्तृत्वे चानन्तर्गतः, तथापि कर्तृत्वान्यथानुपपत्तिद्वारा प्रत्ययेन प्रत्यायितत्वा-क्रियायाः प्रयोजनाकाङ्क्षावेलायां सम्बद्ध्यत इत्याह—**यद्यपि चेति** ।

श्रुत्यनुक्तस्यापि स्वामित्वाख्यस्य प्राधान्यांशस्य लक्षणया प्रत्यायनं तावद् दृष्टान्त-पूर्वमुपपादयति—**यथेति** । कर्तृत्वस्योक्तस्य पुरुषं प्रति इतिर्गमनं प्राप्तिरिति व्युत्पत्त्या प्रतीतिशब्देनोक्तया कर्तृत्वसिद्ध्या फललिप्सां विनानुपपद्यमानया स्वामित्वं ज्ञातस्य

इत्यर्थः । लक्षणया स्वामित्वाख्यस्य प्राधान्यस्य प्रत्यायनेऽप्यशाब्दत्वाच्छाब्दक्रिययान्वयायोगमाशङ्क्य, प्राधान्यप्रत्ययनार्थं प्रत्ययेन गुणत्वात्मकर्तृत्वोक्तेः प्रत्ययस्य प्राधान्ये तात्पर्यावसायात्, तात्पर्यवृत्त्या शाब्दत्वं दृष्टान्तपूर्वमुपपादयितुमाह—**तत्रेति** । गुणत्वस्य प्राधान्यविरोधित्वात्, तत्सिद्ध्यर्थत्वायोगमाशङ्क्य भिन्नविषयत्वेनाविरोधमाह—**गुणभावो हीति** । तेशब्दोक्तस्य कर्तृप्रत्ययार्थवादिनो वैयाकरणस्य मते धात्वर्थातिरिक्तभावनाभावाद्भिन्नविषयत्वायोगशङ्कानिरासपूर्वं श्लोकं व्याचष्टे—**यस्यापीति** । करोतिसामानाधिकरण्येनाख्यातप्रत्ययस्य तदर्थवाचित्वावगतेः, करोतेश्च धात्वर्थसामान्यवाचित्वे पाकं करोति, पाकेन करोतीति वा धात्वर्थस्य कारकत्वेन करोत्यर्थान्वयायोगापत्तेर्धात्वर्थातिरिक्ता भावना प्रत्ययवाच्या यद्यप्यभ्युपगम्यते, तथापि सैव कर्त्तारमङ्गङ्करोति, न धात्वर्थ इति कथमवसीयत इत्याशङ्क्य, ततश्चेत्युक्ते धात्वर्थोऽपि तर्हि कर्त्रनभिधानपक्षवदभिधानपक्षेऽपि भावनाङ्गमेवास्त्वित्याशङ्क्य, अनभिधानपक्षे भावनाक्षेपं विना कर्त्रन्वयानवगतेरनुष्ठानसिद्ध्यर्थेन च कर्त्राक्षेपस्यानुष्ठानयोग्यभावनावगत्युत्तरकालत्वात्करणाद्यन्वयं च विनानुष्ठायोग्यत्वाभावात्कारणत्वेन धात्वर्थस्यान्वयाद्भावनाङ्गत्वं युक्तम् । अभिधानपक्षे त्वादावेव कर्त्रन्वयावगतेः सकलकारकसमवधातृत्वलक्षणत्वाच्च कर्तृत्वस्य सकलकारकसमवधानात्प्रागसिद्धेः सिद्धे कर्त्रन्वये भावनायाः सिद्ध्यव्यभिचारित्वेन कारकानाकाङ्क्षत्वाद्धात्वर्थान्वयानुपपत्तेर्भावनायां व्यापृतः कर्त्ता धात्वर्थं विना भावनां कर्तुमशक्नुवन्नात्मन एव कर्तृत्वसिद्ध्यै धात्वर्थमङ्गं करोतीत्युक्तम् । द्वावप्यङ्गीकरोतिशब्दौ च्विप्रत्यययुक्तौ भिन्नविषयत्वोक्तेराख्यातेन हि श्रुत्यैव गुणपर्यायात्मना कर्तृत्वमभिहितं, तत्पश्चाद्व्यावर्त्तयतः श्रुतिविरोध आपद्यत इति वार्त्तिकोक्तविरोधनिरासोपयोगमाह—**नचेति** । चकारेण ततश्चेत्युक्तम् । विषयान्यत्वोक्त्या विवृतम् ॥ नचैक एव प्रत्ययः सकृदुच्चरितः शक्नोति गुणत्वप्रधानत्वे युगपदभिधातुमिति वार्तिकोक्तयुगपदुभयरूपोक्त्याशक्तिनिरासेऽपि विषयान्यत्वोक्तेरुपयोगमाह—**यदीति** । सकृदुच्चरितस्यापि प्रत्ययस्याविरुद्धानेकभावनाकर्तृसंख्योपग्रहविशेषाद्यर्थवाचित्वाभ्युपगमेनानेकार्थोक्त्यशक्तेर्विरोधनिबन्धनत्वावसायात्कर्तुश्च गुणप्रधानत्वयोर्भिन्नविषयत्वेनाऽविरोधान्न प्रत्ययस्योभयरूपोक्त्यशक्त्याख्यो विप्रतिषेध इत्युक्ते, भावनाधात्वर्थाख्यावच्छेदकरूपविषयभेदेऽपि कर्त्राख्याश्रयरूपविषयैक्याद्विरोधमाशङ्क्य, ह्रस्वदीर्घत्ववद् गुणप्रधानत्वयोरापेक्षिकत्वेन शुक्लकृष्णत्ववत्स्वभावतो विरोधाभावादाश्रयैक्यमात्रेण विरोधायोगोक्त्यै स्वभावतश्चेत्युक्तेऽर्थगतविरोधाभावेऽपि विशेषणविशेष्यभावनापन्नानेकार्थोक्तौ शब्दतात्पर्यभेदापत्तेर्भावनाकर्तृसंख्यादिवच्च गुणप्रधानत्वयोर्विशेषणविशेष्यत्वाभावादेतत्परिहारापरितोषात्स्वमतेन गुणत्वं शब्दाद् गम्यते प्राधान्यं गुणत्वान्यथानुपपत्तिसामर्थ्यादित्येवमुभयरूपोक्त्यशक्त्याख्यविरोधपरिहारेऽथवेत्यनेनोक्ते, कर्तृप्राधान्यस्याशाब्दत्वे धात्वर्थस्य कर्त्रर्थत्वायोगमाशङ्क्य धात्वर्थविशिष्टस्य कर्त्तुर्भावनाङ्गत्वे शब्देनोक्ते कर्त्रङ्गत्वं विना धात्वर्थस्य तद्विशेषणत्वायोगाच्छ्रुतार्थोपपत्तिकल्पितेन शब्दान्तरेण तदङ्गत्वोक्तिमभिप्रेत्य कर्त्रभिधाने पक्षे सर्वथाशब्दात्, सामर्थ्याद्वा प्रतीतौ कर्त्तुः प्राधान्य-

प्रसक्तेर्धात्वर्थस्य पुरुषार्थत्वं प्राप्नोतीत्युक्तम् ॥ अनया चाख्यातप्रत्ययोक्तां भावनां प्रति कर्तुर्गुणत्वाद्धात्वर्थं प्रति प्राधान्याद्भिन्नविषयत्वोक्त्या कृदन्ते भावनायुक्तेर्द्धात्वर्थमेव प्रति गुणप्रधानत्वप्रसङ्गाद्विषयैक्येनाख्यातशब्दस्य पाचकादिशब्देभ्यो विशेषसूचनाद्वहिष्ठं विशेषान्तरमाह—**अयं चेति**। पाचकमानयेत्यादावानयनादिक्रियान्तरान्वयित्वेन कृदुक्तं पुरुषमुपलक्षयितुमुक्तस्य धात्वर्थस्याभिधानिकाङ्गत्वाख्यशब्दार्थवृत्तिमात्रेण विशेषणपरपर्यायोपलक्षणत्वसिद्धेर्न वास्तवाङ्गत्वाकाङ्क्षा। 'नानृतं वदेदित्यादौ तु क्रियान्तरान्वयानुपादानेनोपलक्षणयाभिधानिकाङ्गत्वाख्यशब्दार्थतया विशेषणत्वस्यानाकाङ्क्षितत्वाद्वास्तवमेवाङ्गत्वं धात्वर्थस्य विशेषणत्वान्यथानुपपत्तेः परिशेषादवधार्यत इति, तत्रेति विशेषणसामर्थ्येन सूचनाद्वैषम्यमित्याशयः। धात्वर्थलक्षणार्था धातूक्तिः।

श्लोकं व्याचष्टे—**शब्दार्थेति**। राजपुरुषादिशब्देभ्यो व्याख्यातस्योभयप्रकारविशेषोक्त्यै राजपुरुषं वेत्युक्तम्। कर्त्रभिधानपूर्वपक्षप्रयोजनसमाधानमुपसंहरति—**तस्मादिति**।

विधिना सामान्यतो धात्वर्थानां पुरुषार्थत्वेऽवगते साक्षात्परंपरया वा पुरुषार्थतेति विशेषापेक्षायामेकपदोपादानलक्षणया श्रुत्यात्पुरुषार्थत्वावगमात् प्रकरणस्य क्रत्वर्थस्य श्रुतिविरोधोपसंहारार्था प्रमाणोक्तिः परंपरया पुरुषार्थत्वाभ्युपगमाच्छ्रुतिप्रकरणयोरविरोधसंभवेऽपि श्रुत्या साक्षात्पुरुषार्थत्वावगमात्प्रकरणबाधाभ्युपगमे सति लक्षितस्यापि तात्पर्यवृत्त्या श्रौतत्वादनभिधानपक्षात्पुरुषार्थत्वापत्तेः सिद्धान्तप्रयोजनाभावात्कर्तुराख्यातवाच्यावाच्यत्वचिन्ताऽनर्थिकेत्याक्षिपति—**नन्विति**। पदानां वाक्यार्थप्रतिपत्त्यर्थत्वाच्छ्रौतेनार्थेन वाक्यार्थप्रतीत्यनुपयोगे लाक्षणिकार्थतात्पर्यं युक्तम्। आख्यातस्य तु श्रौतेनैव भावनाख्येनार्थेनोपयोगसंभवात् लाक्षणिकेर्थे तात्पर्यानुपपत्तेरवाच्यत्वे कर्तुरशाब्दत्वापत्त्या वाक्यार्थानन्वयप्रसङ्गात्प्राधान्यासिद्धेर्न धात्वर्थस्य साक्षात्पुरुषार्थत्वापत्तिरित्याशयेन परिहरति—**नैष इति**। कर्तुर्वाक्यार्थानन्वये लक्षणानर्थिकेत्याशङ्क्य गङ्गादिसम्बन्धि नीरादिस्वरूपे गङ्गादिशब्दानामिव कर्तृस्वरूपे प्रत्ययस्य तात्पर्याभावात् स्वरूपेणाशाब्दतया कर्तुर्वाक्यार्थानन्वयात्सर्वाकाङ्क्षापूरणाशक्तेः प्राधान्यायोगेऽपि, भावनानिष्पादकरूपशब्दतात्पर्यविषयत्वाच्छाब्दत्वोपपत्तेस्तेन रूपेण भावनाख्यवाक्यार्थान्वयसिद्ध्यै लक्षणार्थवतीति सूचयितुं कर्त्तारमन्तरेण भावना न सिध्यतीति कृत्वा लक्षणा। ननु तस्य कर्तृत्वाधिष्ठानस्वरूपेण सर्वाकाङ्क्षापूरणायेति लक्षणेत्यनेनोक्तम् ॥ श्लोकोपपाद्यं तावदर्थं नैष दोष इत्यनेन सूचितम्। अभिधानपक्षेपि भावनान्वयपरत्वाच्छब्दस्य धात्वर्थान्वयस्याशाब्दत्वापत्तिशङ्कां निरस्यन् व्याचष्टे—**अभिधीयमानो हीति**। श्रुत्युपात्तस्य योग्यत्ववशेनार्थान्तरान्वये तात्पर्यविसायादनेकान्वययोग्यस्यागम्यमानविशेषतया सर्वान्वयसाधारणतात्पर्यावगतेः सर्वाकाङ्क्षापूरणशक्तत्वान्न कस्मिंश्चिदन्वये शास्त्रार्थत्वहानिः। लक्ष्यमाणस्य तु लक्षणातः प्राक्तावच्छास्त्रानुक्तत्वेन शास्त्रतात्पर्यविषयत्वाख्यादत्तत्वायोगाल्लक्षणाकालेऽपि तद्बीजस्य कर्तृस्वरूपे तात्पर्यस्योपसंहारे सति तस्य शास्त्रतात्पर्यविषयत्वाध्यवसायात्सर्वान्वये शास्त्रं-

प्रमाणं भवेन्न तु कर्तृस्वरूपे प्रत्ययाख्यस्य शास्त्रस्य तात्पर्यं संभवतीत्याशयः। एतदुपपादनार्थत्वेन श्लोकपूर्वार्द्धं यः शब्दः श्रौतेनार्थेन वाक्यार्थे नोपयुज्यते, स लाक्षणिकार्थपर्यन्तं तात्पर्यवृत्त्या यातीत्येवं व्याचष्टे—**सर्वमेवेति**। लक्षणयाऽवगतमर्थं प्रत्यात्मानं तात्पर्ययावृत्या प्रापयतीत्यर्थः। तृतीयपादं तुशब्देनोक्तव्यतिरेकाभिधानमनादृत्य, आख्यातप्रत्यये श्रौतेन भावनाख्येनार्थेन पदार्थान्तरान्वितभावनात्मकवाक्यार्थोपयुक्ते सति न लाक्षणिकार्थपर्यन्तेतात्पर्यगमनं युक्तमित्येवं व्याख्यातुमाह—**श्रुत्यर्थ एव चेति**। अन्यपरे शब्दे कर्त्ता व वाक्यार्थोपयोगित्वेन गृह्योतेत्युक्ते, कर्तुरप्युपयोगः संभवन् कस्मान्न गृह्यत इत्याशङ्क्य, सकृदुच्चरितस्य श्रौते लाक्षणिके चार्थे वृत्त्याख्यव्यापारायोगेनार्थद्वयोद्देशेन वृत्त्याख्यतादर्थ्यापरपर्यायार्थद्वयतात्पर्यायोगात् तद्द्वारार्थद्वयोपयोगित्वानवकल्पनात्पूर्वशब्दाल्लक्षणया परस्यावगतस्य संभवद्वाक्यार्थोपयोगस्यापि चशब्दतात्पर्यविषयत्वाभावाद्वाक्यार्थानन्वयवल्लाक्षणिकत्वे कर्तुः संभवदुपयोगस्याप्यनन्वये नचेत्यादिनोक्ते, अन्यपराच्छब्दात्कर्त्रवगत्ययोगमाशङ्क्य, निष्पादकत्वेन भावनासम्बन्धित्वान्निष्पादनान्यथानुपपत्तिबलाद् गम्यत इत्यन्यपरेपीत्यनेनोक्ते गङ्गादिशब्दात्तीरादिवत्तात्पर्यवृत्या गम्यत्वशङ्कायां च केवलोक्त्या निरस्तायां भावनादिनिष्पादनान्यथानुपपत्तिबलात्कर्तृप्रतीतिवत्प्राधान्यं विना चेतनस्य कर्तृत्वानुपपत्तेः कर्तृप्रतीतिरन्यथानुपपत्तिबलात् प्राधान्यकल्पनामपि करिष्यतीत्याशङ्क्य, प्रकरणगम्यक्रतूपकारद्वारकर्त्रभिमतस्वर्गादिसिद्ध्युपयोगितद्वयापिकर्तृप्राधान्यात्कर्तृत्वानुपपत्तिपरिहारोपपत्तेर्न साक्षात्प्राधान्यकल्पना शक्येति परिहारसूचनार्थं—**या चेत्युक्तम्**। कर्तुर्वाक्यार्थानन्वये लक्षणानर्थक्यशङ्कानिरासार्थत्वेन चतुर्थं पादं व्याख्यातुमाह—**तदा चेति**। प्राधान्यप्रतिपत्तेः निष्प्रमाणकत्वे मात्रोक्त्या शब्दव्यापारनिरासेनोपपादिते शब्दात्कर्तृप्राधान्यानवगमेऽपि भावनयैव कर्तृव्यापाररूपत्वात्कर्तृस्वरूपोपसर्जनत्वावगतिवत्प्रयत्नरूपतयेच्छायोनित्वात्कर्त्रभिमतसाधनत्वं च विना कर्त्रिच्छानुदयाद्भावनानिष्पत्यसिद्धेर्भावनायाः कर्त्रभिमतसाधनत्वावगमात्कर्त्तुः प्राधान्यावगतिरपि भविष्यतीत्याशङ्क्य, प्रकरणगम्यक्रतुपकारद्वारकर्त्रभिमतस्वर्गादिसिद्ध्युपयोगितयापि कर्त्रिच्छोदयोपपत्तेरिच्छायोनित्वेनापि साक्षात् प्राधान्यकल्पनाऽशक्तिसूचनार्थं—**नहीत्युक्तम्**। लक्ष्यमाणस्यापि कर्तुर्भावनोक्तिमात्रात्प्रतीतस्य प्रकरणगम्याक्रतूपकारात् सन्निकृष्टतरत्वात् साक्षादुपकारसंभवे च पारंपर्योपकारकल्पनायोगात् साक्षात्प्राधान्यकल्पनैवयुक्तेत्याशङ्क्य, आख्यातशब्दस्य प्राधान्येतात्पर्याभावाच्छ्रुत्यासाक्षात्प्राधान्यानवगतेः पारम्पर्योपकारिण्यपि च कर्त्रिच्छासंभवादिच्छायोनित्वेपि भावनायाः साक्षात्प्राधान्यावगतौ शक्त्यभावेन लिङ्गस्यापि तत्र प्रामाण्याभावात्साक्षात्प्राधान्यकल्पना निष्प्रमाणिकेत्याह—**तेनेति**। येन कारणेन शब्दः कर्त्रवगतौ न व्याप्रियते। न च भावना कर्तृप्राधान्यावगतौ शक्ता। तेन कारणेनाख्यातशब्दरूपा श्रुतिर्भावनासामर्थ्यरूपं वा लिङ्गं प्राधान्यप्रमायामुदासीनमित्यर्थः॥ श्रुतिलिङ्गयोः साक्षात्प्राधान्यप्रमायां व्यापाराभावेऽपि कर्त्तुः सन्निकृष्टतरत्वात्साक्षात्प्राधान्यं भविष्यतीत्याशङ्क्य, सन्निकर्षस्य सन्निधित्वेन स्थानत्वात् तस्य च

प्रकरणाद्दौर्बल्यात्तद्विरोधे प्रामाण्यं नास्तीत्याह—नचेति। कर्तृवाच्यावाच्यत्वविचारस्यार्थवत्त्वमुपपादितमुपसंहरति—तस्मादिति। किंप्राप्तमिति भाष्यं पुरुषस्यायं वदनाख्यः पदार्थ उपदिश्यते, ततश्चायं निषेधः पुरुषस्य धर्म इत्येवं शुद्धपुरुषधर्मत्वपूर्वपक्षप्रतिज्ञार्थत्वेन व्याचष्टे—किमिति। प्राप्तिपूर्वकत्वान्निषेधस्य प्राप्त्युक्त्यै प्रायेणेत्युक्तम्। कः पुरुषस्योपकार इत्यपेक्षायां प्रत्यवायपरिहारार्थमित्युक्तम् ॥ प्रश्नपूर्वं हेतूक्त्यर्थं कुत इत्यादिभाष्यं पुरुषस्य प्रयत्नशब्दवाच्यभावनालक्षितस्य च विधेः श्रवणादित्येवं व्याचष्टे—कुतइति। श्रुतेः पुरुषो, विधिश्च प्रतीयते, स चोभयः पुरुषधर्मत्वपक्षेऽर्थवान्, क्रत्वर्थे हि वदनेऽनर्थको भवेदित्यर्थः। 'वदनमनुतिष्ठेदि'ति भाष्यावयवेनानुष्ठाता विधिश्च श्रुत्या गम्यत इति वदताऽऽद्ये भाष्यावयवे व्याख्याते, श्रुतस्याप्यनुष्ठातुर्गुणत्वेनान्वयाद्वदनस्य पुरुषार्थत्वासिद्धिमाशङ्क्य, कर्तृणां शास्त्रगम्येऽर्थ इति वार्त्तिकोक्तेन न्यायेन कर्तृत्वस्य विधेश्चापुरुषार्थे कर्मण्यात्मलाभायोगात्तदुभयश्रुत्यर्थवत्त्वाय तस्य पुरुषेण समीहितेन प्रधानभूतेन सम्बन्धो अन्वयः पदश्रुत्या गम्यत एव, दर्शपूर्णमासाख्यकर्मणाऽन्वयः प्रकरणात् ततश्च प्रकरणगम्यक्रत्वर्थत्वबाधेन पुरुषार्थतैव युक्तेत्येवं परिहारार्थं तस्येश्याद्येष शब्द इत्यन्तं भाष्यावयवं श्लोकेन व्याख्यातं सूचयन् श्लोकं व्याचष्टे—समानेति। 'योऽपि चेत्यनेन पुरुषस्येति भाष्यावयवोऽपकृष्य व्याख्यातः। कर्त्रभिधानस्यापि पुरुषधर्मपक्षेऽर्थवत्ताऽपिशब्दाभ्यामुक्ता। प्रयोगवचनेनैवोपनीतस्य प्रधानकर्तुस्तदङ्गभूतधात्वर्थविधानात्प्रात्यात्मिकः कर्तृविधिर्धातुनोपनीतमात्रस्य च धात्वर्थस्य प्रयोगवचनेनैव विधानात्प्रात्यात्मिको धात्वर्थविधिरनर्थक इत्यावृत्त्या योज्यम् व्याख्यातेर्थः। इतरथेति भाष्यावयवं वदनमनुतिष्ठेदित्येव सकर्तृकधात्वर्थविध्यर्थो वदेदिति यः शब्दः, स क्रत्वर्थत्वपक्षे वदनं भवतीत्येतावत्यर्थे भवेत् ततश्चाविवक्षितकर्तृविध्याख्यस्वार्थो भवेदित्येवं योजयति—तदिति। प्राप्तेः पुरुषधर्मत्वोपसंहारार्थं [तस्मादिति भाष्यं व्याचष्टे—तस्मादिति। प्राप्तः पुरुषार्थत्वेप्यकर्मेति सूत्रावयवोदाहृतस्य कथं पुरुषार्थतेत्याशङ्क्य, प्राप्तिपुरुषार्थत्वादेवेति परिहारार्थं] यस्य चेति भाष्यं व्याचष्टे—ततश्चेति। निषेधपुरुषार्थतैवात्र पूर्वपक्षार्थः। पुरुषार्थता तु तत्सिद्धचै पुरुषप्रत्ययस्येत्यादिभाष्येणोपादितेति सूचनार्थं निषेधपुरुषार्थतामुपसंहरति—अत इति। एतावता च भाष्येण पूर्वाधिकरणसूत्रस्थतद्वच्छब्दबुद्धिस्थीकृतस्य मनुष्यधर्मशब्दस्य तत्प्रधानत्वादिति निवीताधिकरणाद्यसूत्रावयवस्येहानुषङ्गमङ्गीकृत्याकर्मानृतनिषेधनं मनुष्यधर्म आख्यातशब्दस्य मनुष्यप्रधानत्वादित्येवं लक्षणौपयिकपूर्वपक्षार्थत्वेनाकर्मेति सूत्रावयवं व्याख्याय इदानीं सचेति भाष्येण यतोऽकर्ममनुष्यधर्मः। स च नानृतं ब्रूयादिति स्मृत्यैव मनुष्यस्य प्राप्तेः। अतः स्मृत्यैव मनुष्यसंयोगान्नानृतं वदेदिति ॠतुसंयुक्तं वचने नित्यानुवाद इत्येयं सकलं सूत्रं योजनीयमित्याह—सूत्रमिति।

उपनयनसमकालत्वोक्तेः स्मृतिमूलत्वाच्छ्रुतेरनुवादत्वायोगशङ्कानिरासार्थत्वसूचनार्थे दर्शपूर्णमासयोः कृतारम्भणीयत्वेनाधिकारात्प्रागेवेत्युक्तम् ॥ क्रतुसंयुक्तोक्तिमाक्षेपपूर्वं त्रेधा समाधत्ते—कथं पुनरिति। प्रकरणप्राप्त्या संयुक्तत्वस्य पूर्वपक्षविरुद्धत्वेनाऽवाच्यत्वशङ्का-

निरासार्था बाधार्हत्वाशया बाधगोचरोक्तिः। श्लोकं व्याचष्टे—**यदेतदिति**। शुद्धपुरुषधर्मविषयत्वाच्छ्रुतेर्दर्शपूर्णमासाभ्यां प्राक्प्रवृत्तामपि स्मृतिं प्रति मूलत्वसम्भवाच्छ्रुतमूलत्यागाश्रुतमूलकल्पनयोश्चाप्रमाणकत्वादनुवादत्वायोगशङ्कार्थं नन्वितिभाष्यं व्याचष्टे—**नन्विति**। श्लोक व्याचष्टे—**यदि हीति**।

नैषेत्यादिपरिहारभाष्यं शङ्कानिरासाशक्तत्वात्तदसम्यन्घत्वेनाक्षेप्तुमारभते—**यत्त्विति**। नैतच्छङ्कया सम्बद्धमित्युक्ते पुरुषधर्मत्वोक्तेः क्रतुसंयुक्तपुरुषधर्माशयत्वेनापि सम्भवात्तद्विषयायाश्च श्रुतेः शुद्धपुरुषधर्मविषयस्मृतिमूलत्वायोगाच्छङ्कानिरासशक्तत्वेन तत्सम्बन्धोपपत्तिमाशङ्क्य, यदि श्रुतिश्च प्रकरणाद्बलीयसीति प्रकरणबाधमनुक्त्वैव पुरुषधर्मत्वमात्रमुक्त्वानुवादतोक्ता स्यात् ततः श्रुतिप्रकरणानुकूल्येन क्रतुयुक्तपुरुषधर्मत्वावसायाद्भिन्नविषयत्वं स्यात् प्रकरणबाधोक्त्या तु श्रुतेरपि शुद्धपुरुषधर्मविषयत्वावसायान्मूलत्वशङ्का निराकर्त्तुमशक्येति परिहारसूचनार्थं प्रकरणबाधानुवादोक्त्योः पौर्वापर्येण हेतुनेत्युक्तम्॥ एतदेव विवृणोति—**तथाहीति**। श्लोकं व्याचष्टे—**यदि हीति**। क्रत्वर्थत्वपूर्वपक्षानुपन्यासाक्रतुयुक्तपुरुषार्थतैव क्रत्वर्थोक्त्या विवक्षिता। सम्भवमात्रेण वा क्रत्वर्थोक्तिः। श्रुतेः पुरुषमात्रधर्मविषयत्वेऽप्यविशेषश्रवणेनोपनयनात्प्रागपि प्रवृत्तेः स्मार्त्तानां तु धर्माणामुपनयनादिनियम इत्युपनयनकालत्वोपदेशाच्छ्रुतिमूलत्वे तद्विरोधं 'प्रागुपनयनात्कामचारवादभक्षा' इति स्मृत्यालोचनया श्रुतेरप्युपनयनात्प्रागप्रवृत्त्यभ्युपगमे वा 'हिताग्निर्न क्लिन्नं दार्वभ्यादध्यादि'त्यादीनां शुद्धपुरुषधर्माणामभ्युपनयनकालत्वादर्शनाद्दर्शपूर्णमासप्रकरणाम्नार्थवत्वार्थं दर्शपूर्णमासाधिकारसमकालत्वापत्तेस्तन्मूलत्वे स्मृतेः (गौ-ध-सू)

सत्यं ब्रूयात्प्रियं ब्रूयान्नब्रूयात्सत्यमप्रियम्।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातन॥

इति सर्वकालीनपुरुषधर्मत्वोपदेशविरोधमभिप्रेत्योपनयनकाल एवेत्यादिभाष्योपपत्तिमाशङ्क्योपनयनकालत्वोपदेशस्याविशेषेण श्रौतस्मार्त्तपुरुषमात्रधर्मविषयत्वादाहिताग्न्यादिवच्चानृतनिषेधेऽविकारिविशेषानुपादानात्प्रकरणानुरोधेन च श्रुतिसंकोचायोगान्मूलमूलिभावेप्युपनयनकालत्वसर्वकालीनपुरुषधर्मत्वोपदेशाविरोधान्नैतदपि भाष्यमुपपादयितुं शक्यमिति सूचनार्थं—**का चेत्युक्तम्**। आक्षेपमुपसंहरति—**तेनेति**।

समाधातुमारभते—**नैष इति**। दोषाभावं प्रश्नपूर्वमुपपादयितुमाह—**कथमिति**। शुद्धपुरुषधर्मतयाद्यः पूर्वपक्षोऽक्रर्मेत्येतावता मनुष्यधर्मः शब्दस्य तत्प्रधानत्वादित्यनुषङ्गसहितो न क्रतुयुक्तपुरुषधर्मतया कृत्स्नेन सूत्रेणानुषङ्गसहितेनेति पक्षद्वयं भाष्यात्प्रतीतेर्भाष्यकृत्संमतं, तृतीयानुवादमात्रतयानुषङ्गानपेक्षसूत्रमात्रात्प्रतीतेः सूत्रकृत्समीहितत्वेन भाष्यकृतो मत इत्येवं तन्त्रेण संमतोक्तिर्द्वेधा व्याख्येया। तत्राद्येमूलमूलित्वं संभवति, परयोस्त्वनुवादतेत्यर्थः॥ श्लोकं व्याचष्टे—**यदीति**। कैमर्थ्यानपेक्षविध्यनुवादचिन्ताया लक्षणासंगतेरनुवादत्वमात्रपूर्वपक्षायोगादनुवादत्वे च तादर्थ्याक्षेपकविध्यभावेन क्रतुयुक्तपुरुषार्थत्वपूर्वपक्षस्याप्ययोगात्सूत्रापरितोषेण शुद्धपुरुषार्थत्वपक्षः।

तस्मिंस्तु विध्यैकान्तिकत्वाद्विकल्पशून्येऽनुषङ्गपर्यालोचनया गृहीते कृत्स्नसूत्रागमनापत्तेः सूत्रोक्तानुवादत्वसमर्थनार्थं, विधित्वे जञ्जम्यमानन्यायेन क्रतुयुक्तपुरुषधर्मत्वापत्तेः पुरुषमात्रे च स्मृतितोऽनृतनिषेधात्क्रतुयुक्तस्यापि पुंसः प्राप्ते विधियोगात्सचेति भाष्येणानुवादत्वं ब्रवीतीत्यर्थः ॥ स चेति भाष्येण क्रतुयुक्तपुरुषार्थत्वानुवादत्वोक्तौ मूलमूलित्वाऽऽशङ्का न युक्तेत्याशङ्क्य ज्ञाताशयत्वेनोपपादयति—**तत्रेति**। नैषेति परिहारभाष्यं क्रतुयुक्तपुरुषधर्मत्वाशयद्वितीयपूर्वपक्षविवरणार्थत्वेन व्याचष्टे—**सिद्धान्तेति**। पूर्वपक्षान्तरमेव सौत्रत्वसूचनार्थं सिद्धान्तत्वेनोक्तम्।

परेवंज्जनार्थत्वाच्छुद्धपुरुषधर्मत्वपक्षवर्जनेन क्रतुयुक्तपुरुषधर्मत्वपक्षं गृह्णाति-सूत्रगृहीतं द्योतयतीत्यर्थः ॥ एतदेव विवृणोति—**नैवेति**। अभिक्रमणस्याभिक्राममिति धातुसम्बन्धाधिकारविहितप्रत्ययश्रुत्याहोमाङ्गतयाऽवगतस्यारादुपकारित्वे वीप्सानुवादायोगापत्तेर्होमसाधनसंस्कारत्वेन सन्निपत्योपकारित्वावगमाद्धोमसाधनपुरुषधर्मतावहनीयप्रत्यासत्तिजननसामर्थ्यलक्षणलिङ्गम्या न विरुध्यते। अनृतोक्तिनिषेधादेस्तु क्रतुयुक्तपुरुषधर्मत्वे 'याजमानास्तु तत्प्रधानत्वादि'३-८-१त्यनेन न्यायेन भोक्त्रंशपातित्वाभावेन क्रतुसाधनभूतपुरुषधर्मत्वाभावात्प्रकरणगम्यं क्रत्वाङ्गत्वं विरुद्धचेतेत्याशङ्क्य, भोक्त्रंशपातिनोऽपि पुरुषधर्मस्य पुंसो भोक्तृत्वयोग्यतां विना क्रतोः फलसाधनत्वासिद्धेरात्मनः साधनत्वसिद्धचै पुंसो योग्यतासाधनार्थं क्रतुनापेक्षितत्वात्प्रकरणाविरोधसूचनानाऽभिक्रमणवदित्युक्तम्। धर्मप्रणिहितमनसो रागाद्ययोगाद्वर्जयिततरामित्युक्तम्। अनेन च यदि 'नानृतं ब्रूयादि'ति स्मृतिर्दर्शपूर्णमासप्रकरणस्थश्रुतिमूलिका स्यात् ततो दर्शपूर्णमासयोरिति विशेषणं स्मर्येत, नतु स्मर्यते। प्रत्युतोपनयनादिनियम इति स्मरंतोऽनृतोक्तिनिषेधादेरुपनयनकाल एवोपदेष्टारो भवन्तीत्येवं भाष्यं व्याख्यातम्।

अपिचेति भाष्यं क्रतुयुक्तपुरुषधर्मोपदेशिश्रुतिमूलत्वेऽपि स्मृतेः पुरुषधर्मोपदेशित्वाविरोधादयुक्तमाशङ्क्यैषधर्मः सनातन इति स्मरंतः शुद्धपुरुषधर्म इत्युपदिशन्ति, नतु क्रतुयुक्तपुरुषधर्म इत्युपदिशन्तीत्येवं युक्त्यंतरोक्त्यर्थतया नैषा, तस्या मूलमित्यनेनैव भाष्येण सहान्वेतव्यमित्याह—**अपिचेति**। क्रतुयुक्तपुरुषधर्मोपदेशित्वोक्त्युपपत्तेर्मूलिभावनिरासक्तत्वात्पूर्वभाष्यान्वयायोगमाशङ्क्य, यस्मात्स्मृतेः केवलपुरुषधर्मोपदेशिताऽनेन भाष्येणोच्यते। तस्मादेतद्भाष्यं पूर्वभाष्येण सह योज्यमिति विवक्षितुं स्मृतेः केवलपुरुषधर्मोपदेशित्वेनैतद्भाष्योक्तेन हेतुनेत्युक्तम्। ततश्च क्रतुयुक्तपुरुषधर्मपक्षपरिग्रहार्थं भाष्यैकवाक्यत्वेनास्य भाष्यस्य पक्षान्तरपरिग्रहार्थत्वाभावाद्द्वावेव पूर्वपक्षावितिसूचनायैवकारः। केवलशब्दाध्याहारशून्येन भाष्येण स्मर्त्तारः पुरुषधर्मविषया त्वेषा श्रुतिः तस्मान्नास्याः स्मृतेर्मूलमित्येवं शुद्धपुरुषधर्मक्रतुयुक्तपुरुषधर्मपक्षाभ्यां पक्षान्तरं परिगृह्यत इत्येतदेव भाष्यमन्यथा व्याचष्टे—**अथवेति**। पूर्वभाष्यैकवाक्यन्वयनिरासायैवकारः। क्रत्वर्थत्वस्य सिद्धान्तत्वात्पूर्वपक्षे तत्परिग्रहो न युक्त इत्यशङ्क्याह, अनुवादत्वसिद्धचै सिद्धान्त्यभिमता क्रत्वर्थतास्मिन्पूर्वपक्षे विवक्ष्यते, न तात्पर्येणेति सूचयितुमेतद्भाष्यसूचितविचारान्तरप्रदर्शनपूर्वं पूर्वपक्षसूत्र

योजयति—**नैवेति**। नात्रपक्षान्तरपरिग्रहावसरे क्रत्वर्थपुरुषार्थत्वोपन्यासोत्राधिकरणे क्रियत इत्यर्थः।

क्रत्वर्थत्वाभ्युपगमेनानुवादत्वोक्तौ स्मार्त्तस्य संयोगस्यान्यविषयत्वाद्धेतुत्वायोगं शङ्कते—**ननु चेति**। प्रासङ्गिकैकविषयत्वाद्धेतुत्वमुपपादयितुमाह—**सत्यमिति**। श्लोकं व्याचष्टे—**यद्यपीति**। प्रसङ्गप्राप्तार्थत्वोपपादनार्थं—**नहीत्युक्तम्**। पक्षान्तरपरिग्रहेऽपि चेति भाष्यस्य योजनामस्मदुक्तां सूचयितुमाह—**न चेति**।

यद्वा नैषेत्यादिसमस्तमेव भाष्यं क्रत्वर्थत्वमभिप्रेत्य मूलमूलित्वशङ्कोत्तरमित्यन्यथा व्याचष्टे—**अथवेति**। क्रतुयुक्तपुरुषधर्मत्वाशयेनानुवादत्वे स चायमिति भाष्येणोक्ते तदाशयाज्ञानान्नन्विवितिभाष्योक्तायाः शङ्कायाः पूर्वपक्षाशयविवरणेन परिहारार्थे नैषेति-भाष्ये क्रत्वर्थत्वाशयायोगमाशङ्क्य, योर्थो 'नानृतं वदेदि'त्यनेन श्रुतिबलात्प्रकरणं बाधित्वा पुंसो निषेध्यः, स स्मृत्यैव निषिद्धः। तेन पुरुषार्थेन निषेधसंयोगेन क्रतावपि प्रसङ्गान्निषेधसंयोगासिद्धेनित्यानुवादोयमित्येवं 'सचायमित्य'पि भाष्यमस्मिन्व्याख्याने क्रत्वर्थत्वाशयमेवेति परिहारसूचनाय—**आदित एवेत्युक्तम्**। श्रुतमूलत्यागेनाश्रुतमूल-कल्पनायोगमनुवादमात्रानर्थक्यं चाशङ्क्य, प्रकरणबाधापत्तेः श्रुतस्य मूलत्वायोगान्मूलान्तर-कल्पनोपपत्तिं, दर्शपूर्णमासस्तुतिं वाऽनुवादप्रयोजनं सूचयितुमाह—**अतइति**। कीदृशी प्रशंसेत्यपेक्षायामाह—**अभ्यार्थेति** ॥ १८ ॥

भा० प्र०—श्रुति में दर्शपूर्णमास प्रकरण में कहा गया है कि "मलवद्वाससा" संवदेत्, नास्या अन्नम् अद्याद् (तै० सं० २।५।१) मलवद्वासा = रजस्वला पत्नी के साथ सम्भाषण न करे। यह क्रत्वर्थक है या पुरुषार्थक है—यह सन्देह है। इस प्रसङ्ग में पूर्वपक्षी का कहना है कि यह क्रतु के प्रकरण में पठित होने से यह क्रत्वर्थक है।

इसके उत्तर में सिद्धान्ती का कहना हैं कि यह जो मलवद्वास के साथ संवाद निषेध—यह भी पुरुषार्थक है। कारण, श्रुति में कहा गया है कि "पत्नि-पत्नि एष ते लोकः" हे पत्नि ! यह तुम्हारा स्थान है। यह कह कर यजमान के यज्ञ के मध्य में पत्नी के साथ सम्भाषण करना चाहिए, किन्तु श्रुति में पुनः कहा गया है "यस्य व्रत्ये-ऽहनि-पत्नी अनालम्भुका स्यात् तामपरुध्य यजेत्" = जिस यजमान की पत्नी व्रत्य = उपवास के दिन अस्पर्शनीया हो, उसका परित्याग करके यजन करे। अस्पृश्या अर्थात् रजस्वला। वैसा होने पर उसको अवरुद्ध अर्थात् यज्ञशाला से बहिष्कृत कर याग का आरम्भ करे। इस प्रकार यज्ञ के पूर्व में ही रजस्वला पत्नी बहिष्कृत होने पर यज्ञ में उसकी प्राप्ति नहीं है, उसके सम्बन्ध में जो निषेध है, वह क्रत्वर्थ नहीं हो सकता है। इसलिए, इस अवस्था में पुरुष जो पत्नी के साथ सम्भाषण करता है, वह उसके स्वाभाविक अनुरागवश प्राप्त होने से उसका जो निषेध है वह पुरुषार्थक ही होगा। इसी का "प्रागपरोधात्" से कहा गया है।

"मलवद्वाससः" = मलवद्वासा अर्थात् रजस्वला पत्नी के साथ बातचीत का निषेध अर्थात् संवाद का जो निषेध है—वह भी पुरुषार्थ है। "प्रागपरोधात्" = क्योंकि कर्मारम्भ के पूर्व से ही उसको अवरुद्ध अर्थात् यज्ञशाला से बहिष्कृत किया जाता है ॥ १८ ॥ सिद्धान्त पक्ष।

## अन्नप्रतिषेधाच्च ॥ १९ ॥

**शा० भा०—अन्नप्रतिषेधश्च भवति। नास्या अन्नमद्यात्, अभ्यञ्जनं वै स्त्रिया अन्नम् इत्युपगमनप्रतिषेध एव विधीयते। स च प्रकरणे न प्रसक्त इति, प्रकरणादुत्कृष्टः पुरुषधर्म एष निश्चीयते ॥ १९ ॥ हेतुः ॥**

**इति सप्तमं संवादाधिकरणम्।**

त० वा०—इतश्च पुरुषमात्रधर्मः। कुतः?

प्रायोवचननिर्णेयं संदिग्धं वस्तु वर्णितम्।
असंदिग्धश्च पुंधर्मो नास्या अन्नमिति स्मृतेः ॥

'नास्या अन्नमद्यात्' इति 'अभ्यञ्जनं वै स्त्रिया अन्नम्' इति वाक्यशेषादुपगमनप्रतिषेधः। तथा हि। लाटानामप्यभ्यञ्जनपर्यायान्तरवाच्यलक्षणमुपगमनं प्रसिद्धम्। तच्च न कदाचिच्छब्दात्, अर्थाद्वा क्रत्वर्थं प्रसक्तम्। पुरुषार्थं तु सर्वप्राणिप्रसिद्धम्। यदर्था च प्राप्तिः तदर्थः प्रतिषेध इत्युक्तम्। ब्रह्मचर्यविधानाच्च न ऋतुकाले पुरुषार्थस्यापि ततस्तत्प्रसक्तिः येन स्वकाले निषिध्यते। तस्मादुल्लङ्घ्य तावत्प्रकरणमेष तावत्पुरुषधर्मो भवति। ततश्च तत्सामान्यादितरेषु तथात्वमिति संवादतादर्थ्यसिद्धः ॥ १९ ॥

( इति सप्तमं संवादाधिकरणम् ॥ ७ ॥ )

न्या० सु०—पुरुषार्थत्वाविशेषाभ्युपगमेनानुष्ठानाननुष्ठानविषयत्वेन संयोगान्तरव्याख्यार्थं नियमानुष्ठानेनेत्यादिभाष्यं पुरुषार्थत्वाविशेषस्य शुद्धपुरुषार्थत्वपक्षादन्यत्रायोगात्तस्मिंश्च पक्षेऽनुवादत्वानुक्तेरयुक्तमाशङ्क्य, शुद्धपुरुषार्थत्वपक्षेऽनुवादत्वानुक्तावपि भाष्यकृतलक्षणानुरूपचिन्तार्थं निवीताधिकरणाद्यसूत्रस्थमनुष्यधर्मशब्दानुषङ्गमभिप्रेत्य पुरुषस्यायमुपदिश्यत इत्यादिभाष्येण सूत्रस्य व्याख्यातत्वान्मनुष्योक्तेश्चाञ्जसा शुद्धमनुष्यविषयत्वावगमात्, तदनुषङ्गसहितेनाकर्मेति सूत्रावयवेन शुद्धपुरुषधर्मतामुक्त्वानुवादत्वोक्तेः शुद्धपुरुषधर्मपक्षेप्यनुवादतोक्तेति—कस्य चिद् भ्रान्तिसंभवात्सिद्धान्ती तस्मिन्पक्षे मूलमूलित्वाभ्युपगमेनाप्यनुवादत्वनिरासशक्तोऽपि वस्तुतो मूलमूलित्वाभावात्संयोगान्तरत्वेनानुवादतां निरस्यतीति परिहारं सूचयितुमाह—केवलेति। स्वानभिमतत्वसूचनार्था भाष्यकारोक्तिः। कीदृशं संयोगान्तरं वर्ण्यतीत्यपेक्षयामाह—स्मृतौ हीति। तस्मादिति सूत्रार्थोपसंहारभाष्यं व्याचष्टे—तस्मादिति।

भावार्थविधित्वशङ्कानिरासार्थं भाष्ये प्रतिषेधस्येत्युक्तम् । सत्यनियमस्मृत्यैवानृतनिषेधसिद्धेरनुवादत्वनिरासायोगं शङ्कते—**ननु चेति** । एतच्छङ्कानिरासेऽपि फलभेदनिमित्ताद्विषयभेदादित्येवं संयोगान्तरोक्तिं योजयितुमाह—**नैतदिति** । फलभेदेपि श्रुतिविषयस्यानृतनिषेधस्याऽर्थात्स्मृतितः सिद्धेर्विषयैक्यादनुवादत्वापत्तिमाशङ्क्य सर्वात्मना विषयैक्यं विनानुवादत्वानापत्तिमाह—**सनामेति** । फलस्य विधेयनिषेध्यत्वाभावेन विधिनिषेधविषयत्वायोगात्तद्भेदनिमित्तविषयभेदायोगमाशङ्क्य—

साध्यसाधनसम्बन्धे विधिना प्रतिपादिते ।

लक्षमाणत्वमुभयोरित्यनेन न्यायेन फलस्यापि विषयत्वोपपत्तिं सूचयितुमाह—**अस्ति चेति** । प्रश्नपूर्वं फलभेदमुपपादयति—**कथमिति** । विधिः श्रेयःसिद्ध्यै प्रेरणायां प्रवर्त्तत इत्यनेन विधेः श्रेयःसिद्धिफलत्वे, निषेधः पापशब्दवाच्यान्नरकपातसाधनान्निवर्त्तयतीत्यनेन च निषेधस्य नरकपातसाधनान्निवर्त्तकत्वोक्त्या निषिद्धानुष्ठानापाद्यनरकपातनिवृत्तिफलत्वेभिहिते, सत्यविधेरप्यर्थतोनृताख्यात्पापान्निवर्त्तकत्वेन नरकपातनिवृत्तिफलत्वोपपत्तेः फलभेदायोगमाशङ्क्य, विधितो भेदेन यो निषेधः, स एव नरकनिवृत्तिफलो, नतु विधिः सन् योर्थान्निषेधतामनुभवतीति भेदोक्त्या सूचिते । प्रेरणायां प्रवर्तमानस्यैव विधेः फलकल्पकत्ववन्निषेधस्यापि निवारणायां प्रवर्त्तमानस्यैव फलकल्पत्वादार्थे च निषेधे तद्वाचिशब्दाश्रवणादर्थात्प्रतीतस्यापि च निषेधस्य पूर्वोधावतीत्यत्रापरस्यैव वाक्यार्थान्वयाभावेनान्वयसिद्ध्यै शब्दकल्पकत्वाभावान्निवारणायां प्रवर्त्तमानशब्दाभावेन फलकल्पना न युक्तेत्युपपत्तिसूचनार्था प्रवर्त्तमानोक्तिः ।

श्लोकं व्याचष्टे—**कल्पमिति** । विषयभेदनानुवादत्वायोगमुपपादितमुपसंहरति—**तस्मादिति** । सत्यं ब्रूयादिति सत्यविधिवत्, प्रियं च नानृतं ब्रूयादित्यनृतनिषेधस्यापि स्मृतौ भावादनुवादोपपत्तिं शङ्कते—**आहेति** । 'सत्यं ब्रूयादि'त्यनेन विहितेऽपि सत्यवचने 'प्रियं ब्रूया दि'ति प्रियमात्रविध्यालोचनयाऽनृतस्यापि प्रियस्यानुज्ञाप्रतीतेरप्रियानृतवृत्तिमात्रेण च सत्यनियमोपपत्तेर्यत्प्रियं ब्रूयात्तदननृतमित्येवं प्रियं च नानृते ब्रूयादित्यनेनापि प्रियं ब्रूयादित्येतच्छेषभूतेन प्रियस्य सत्यत्वविशेषणाविधानात्संयोगान्तरत्वमुपपादयितुमाह—**उच्यत इति** । नेक्षेतोद्यन्तमादित्यमित्यस्य प्रजापतिव्रतस्थत्वाद्व्रतशब्देन वानुष्ठेयवाचिनेक्षणाभावस्याननुष्ठेयस्य वक्तुमशक्यत्वादिति यानीक्षणसंकल्पविश्रो युक्तिः, तदालोचनया तत्र स्मृतावेष धर्मः सनातन इति व्रतशब्दवद्धर्मशब्देनानुष्ठेयवाचिनानृताभावस्य वक्तुमशक्यत्वात्पर्युदासस्य विधिरित्यर्थे पर्युदासे सत्यनीक्षणसंकल्पविधिवदननृतसंकल्पविधिः कस्मान्नेष्ट इत्याशङ्क्यानृतादन्यस्य तत्प्रतियोगिनः सत्यस्यान्यवाचिना नञोक्तिसंभवे संकल्पस्याप्रतियोगित्वाच्छीघ्रमबुद्धिस्थस्योक्त्ययोगं सूचयितुमाह—**अनृतमिति** । पर्युदासत्वोक्तेः प्रकृतसंयोगान्तरत्वोपपादनोपयोगमाह—**ततश्चेति** । दर्शपौर्णमासिकस्याप्यनृतनिषेधस्य तैत्तिरीयशाखायामेष देवानभ्यारोहति य एषां यज्ञमभ्यारोहतीति दर्शपूर्णमासयाजिनं निर्दिश्य

तस्यैतद् व्रतमित्युपक्रमाम्नानात्पर्युदासत्वापत्तेः संयोगान्तरत्वायोगमाशङ्क्य तस्य संकर्षे १-३-१९दाक्षायणयाजिविषयतायाः वक्ष्यमाणत्वान्नेह कश्चित्पर्युदासहेतुरस्तीत्याह—**नहीति**। दये तत्वेनेनेति शास्त्रेण तस्मादनृतं न वदेदिति प्रकृतस्यानृतस्य प्रीत्युत्पादनाख्यदयार्थे प्राप्तेर्विकल्पशक्ति पर्युदासहेतुमाशङ्क्य तां प्राप्तिमनपेक्ष्यापि निषेधात्मलाभोपपत्तेर्विकल्पप्रसक्ति निरस्यति—**शास्त्रेति**। दशमेतै० सं० २-५-६प्रतिषेधः प्रदेशेनारम्यविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यादि१०-८-१ति सूत्रेण पूर्वपक्षयित्वाऽर्थप्राप्तवदि १०-८-२ति चेदित्यनेनार्थप्राप्तसुरापानादिनिषेधे विकल्पानापत्तिवच्छास्त्रप्राप्तविषेधेप्यनापत्तिमाशङ्क्य, न तुल्यहेतुत्वादुभयशब्दलक्षणमि१०-८-३त्यनेन वैषम्यं वक्ष्यतीत्यर्थः। यथा भाष्यं सूत्रार्थमुपसंहरति—**तस्मादिति**।

केवलपुरुषार्थत्वपक्षे भाष्यकारीयसंयोगान्तरव्याख्यादूषणपूर्वं स्वयं क्रतुयुक्तपुरुषार्थत्वपक्षे संयोगान्तरव्याख्यां प्रतिजानीते—**यदा त्विति**। व्रतशब्दव्यतिरेकेण तत्समानार्थधर्मशब्द व्यतिरेकेणापि च—

न संशयं प्रपद्येत नाकस्मान्नाप्रियं वदेत्।
नाहितं नानृतं चैव न स्तेनः स्यान्नवार्द्धुषी॥

इत्यादिस्मार्त्तनिषेधसद्भावेन शुद्धपुरुषार्थपक्षे संयोगान्तरं न संभवतीति प्रत्यवस्थानस्य दुर्वारत्वात् क्रतुयुक्तपुरुषार्थपक्षे संयोगान्तरं व्याख्येयमित्यर्थः। मृदुक्त्यै यदा तदा शब्दौ।

कथं व्याख्येयमित्यपेक्षायामाह—**स्मार्तं इति**। ईदृशस्य संयोगान्तरस्यानुवादत्वहेतुतयोक्तत्वाद्विधित्वहेतुता न युक्तेत्याशङ्कते—**नन्विति**। सत्यनियमस्मृत्यर्थादनृतनिषेधेऽपि फलभेदनिमित्ताद्भिन्नविषयत्वादनुवादत्वायोगवत्पुरुषमात्रस्यानृतनिषेधेनाऽर्थात्क्रतुयुक्तस्य पुंसोऽनृतनिषेधेप्यनुवादत्वायोग इति परिहरति—**नैतदिति**। फलभेदमेवोपपादयितं स्यार्त्तस्य निषेधस्य नरकपरिहारफलतामाह—**यो हीति**। अनृतापाद्यदोषपरिहारार्थत्वे अनृतनिषेधस्यानृतापादितदोषत्वेनाशुचिनानुष्ठीयमानस्य क्रतोः 'शुचिना कर्म कर्त्तव्यमि'ति कर्माङ्गतया विहितशौचहान्या वैगुण्यापत्तेः—

वेदिरेव ह्यनाचम्य कुर्वतो विगुणा भवेत्।

इति वार्त्तिकालोचनयाऽवगमाच्छ्रौतनिषेधफलस्य क्रतुवैगुण्यपरिहारस्य स्मार्त्तेनापि निषेधेनाऽर्थात्सिद्धेः फलभेदायोगमाशङ्क्य क्षुतस्य श्लेष्माख्यमलबिंदूत्सर्जनात्मकत्वेनाशुचित्वापादकत्वाद्वैगुण्यापादकत्वं युक्तम्। अनृतोक्तेः—

त्वनृतं वदन्नाविर्मूलमात्मानं करोति, स शुष्यति, स उद्वर्त्तते।

इत्यर्थवादावगतदोषापादकत्वेप्यशुचितापादकत्वप्रमाणाभावान्न वैगुण्यापादकतेति वैषम्यं सूचयितुमाह—**तत्रेति**। क्रतुयुक्तपुरुषधर्माणामपि पुरुषद्वारा क्रत्वङ्गत्वेनातिक्रमे क्रतुवैगुण्यापादकत्वात्तद्वैषम्योक्त्यै शुद्धपुरुषधर्मातिक्रमैर्न क्रतवो विगुणीभवन्तीत्युक्तम्।

एतदेवोपपादयति—**तथाहीति**। श्लोकं व्याचष्टे—**क्रतवोहीति**। स्मार्त्तस्य निषेधस्य श्रौतनिषेधफलासाधनतामुपपादितामुपसंहरति—**तेनेति**। श्रौतस्य निषेधस्य क्रतुवैगुण्य-परिहारफलतामाह—**श्रौतः पुनरिति**। श्रौतो निषेधः प्रकृतकर्मयुक्तपुरुषधर्म इति कृत्वा ऽत्र श्रौते निषेधे वर्जितानृतेन पुंसा कृतौ दर्शपूर्णमासौ फलं साधयत इत्येषोर्थो ज्ञायत इत्यन्वयः। पुरुषसमवेतदर्शपूर्णमासापूर्वसाधनत्वांशोद्देशेन विहितस्यानृतनिषेधस्यातिक्रमे पुंसोऽपूर्वसाधनत्वासिद्धेः साधनाभावेनापूर्वसिद्ध्ययोगात्फलासाधनत्वमुपपादयितुमाह—**प्रक-रणेति**। दर्शपूर्णमासापूर्वसाधनीभूतो यः कर्त्तेत्येवं कर्तृपुरुषगतसाधनत्वोद्देशे पुंसो व्युद्दे-श्यत्वेन निषेधशेषित्वात् तदतिक्रमे स्मार्त्तनिषेधातिक्रमवत्प्रत्यवायभाक्त्वापत्तेः फलभेदायोग-माशङ्क्य पुंसः प्रत्यवायापत्तिनिरासं प्रतिज्ञपूर्वमुपपादयति—**नन्विति**। यत्र लक्षणमुद्दिश्य लक्ष्ये कार्यं विधीयते, तन्मात्रग्रहणं तस्मिन्नित्यनेन न्यायेनोद्देश्यापूर्वसाधनांशलक्षणत्वोपक्षी-णस्य पुरुषस्वरूपस्योद्देश्यत्वाभावादित्याशयः। क्रतुयुक्तपुरुषधर्मत्वपक्षे संयोगान्तरत्वमुप-संहरति—**तस्मादिति**। सिद्धान्तिनोभयविधस्यापि पुरुषधर्मत्वस्यानिष्टत्वादस्मिन्पक्षद्वये सिद्धान्तिनः संयोगान्तरत्वोक्तिरयुक्तेत्याशङ्क्य, पूर्वपक्षाभ्युपगमेनानुवादत्वनिरासासामर्थ्यं-प्रदर्शनार्थत्वं संयोगान्तरत्वोक्तेः सूचयितुमाह—**इतीति**। क्रत्वर्थत्वपक्षेऽपि क्रत्वर्थनिषेधा-तिक्रमे क्रतोर्वैगुण्याख्यप्रत्यवायपरिहारः फलम्। पुरुषार्थनिषेधातिक्रमे पुंसो नरकपाताख्य-प्रत्यवायपरिहारइत्येवंविधेन फलविशेषेण संयोगान्तरत्वोपपत्तेः तस्मिन्नपि पक्षे संयोगान्तर-व्याख्या संभवतीत्याह—**एवमिति**। क्रत्वर्थत्वक्रतुयुक्तपुरुषार्थत्वपक्षयोर्द्वयोरपि श्रौतस्य निषेधस्य क्रतुवैगुण्यपरिहारफलत्वेनैव नरकपरिहारफलात्स्मार्त्तान्निषेधात्संयोगान्तरत्व-व्याख्यायां पक्षद्वयेऽपि निषेधातिक्रमे याजुर्वेदिकयज्ञाङ्गभ्रेषनिमित्तप्रायश्चित्ताविशेषापत्तेः प्रयोजनविशेषो न स्यादित्याशङ्क्य, प्रयोजनविशेषाभावेऽपि पूर्वपक्ष्युक्तनित्यानुवादत्वनिरास-सिद्धेः पक्षद्वयेपि क्रतुवैगुण्यपरिहारफलत्वेन संयोगान्तरव्याख्यौचित्यं सूचयितुमाह—**तेनेति**। प्रायश्चित्तविशेषाख्यप्रयोजनभेदाभावसूचनार्थस्तावच्छब्दः। क्रतुवैगुण्यपरिहारफलत्वेन संयोगान्तरत्वादनुवादत्वनिरासंसंभवेऽपि प्रयोजनविशेषाभावे क्रतुधर्मः क्रतुगतपुरुषधर्मो वेति चिन्ता निष्प्रयोजना स्यादित्याशङ्क्य—

विषयोऽपि हि पूर्वस्मिन् पक्षे संस्कारताङ्गता।

इत्यादिवार्तिकेऽनृतनिषेधस्य क्रतुगतपुरुषधर्मत्वे यजमानेनैवानृतं वर्जनीयं, क्रतुधर्मत्वे यजमा-नेनर्त्विग्भिश्चेति प्रयोजनविशेषं वक्ष्याम इत्याह—**यस्त्विति**। यजमानत्वेऽनृतवर्जनस्य भोक्तृत्वयोग्यताधानार्थत्वापत्तेस्तदतिक्रमे पुरुषगाम्ययोग्यत्वाख्यप्रत्यवायप्रसंगात्कर्त्रंशपाति-त्वाभावेन चापूर्वसाधनत्वांशोद्देशेनानृतनिषेधायोगात्तदतिक्रमेऽपि क्रत्वपूर्वसिद्ध्युपपत्तेः क्रत्वङ्गातिक्रमाभावेन च क्रतुवैगुण्यप्रसक्त्ययोगात् संयोगान्तरत्वासिद्ध्यापत्तेस्तत्सिद्ध्यर्थं-मिदानीमेव क्रतुयुक्तपुरुषधर्मत्वेऽनृतवर्जनस्य पुरुषप्रत्यवायफलत्वाविशेषेण स्मार्त्तान्निषेधा-त्संयोगान्तरत्वासिद्धावपि क्रतुधर्मत्वे क्रतुवैगुण्यपरिहारफलत्वात्संयोगान्तरं सेत्स्यतीति विशेषो वाच्य इत्याशङ्क्य, दर्शपूर्णमासादिना पुरुषभोज्यतयैव फलस्योत्पादनीयत्वाद्भो-

कृत्वे वा योग्यं पुरुषं प्रति भोज्यतयोत्पादनाशक्तेर्भोक्तृत्वयोग्यताधानस्यापि क्रत्वपेक्षितत्वेन, तदर्थानामपि धर्माणां क्रत्वर्थत्वाविरोधात्तदतिक्रमे तु वैगुण्योपपत्तेः क्रतुयुक्तपुरुषार्थत्वेऽपि क्रतुवैगुण्यपरिहारफलत्वेन संयोगान्तरत्वाद्विधेयत्वासिद्धेः प्रयोजनोक्त्यवसराभावेनेदानीमनुपयोगान्न प्रयोजनविशेषो वाच्य इत्याह—**उभयथापीति**। क्रतुधर्मवत्तद्गतपुरुषधर्मत्वेपीत्यर्थः। पुरुषधर्मत्वपूर्वपक्षस्य सौत्रेण वाशब्देन निरासायाऽनुभाषणार्थमाहेति भाष्यं व्याचष्टे—**परस्त्विति**। पुरुषप्रयत्नस्येति भाष्यावयवव्याख्यार्थमाख्यातशब्दस्य मनुष्यप्रधानत्वादित्यनेनानुक्तनिवीताधिकरणाद्यसूत्रावयवोक्तेन कारणेनेत्युक्तम्। भाष्यस्य द्विविधपुरुषधर्मत्वानुभाषणार्थत्वं सूचयितुमाह—**उभाविति**। भाष्यस्याद्विविधशब्दात्पर्युदासत्वशङ्कां निराकर्तुं सत्यविधेरित्युक्तम्। क्रतुयुक्तपुरुषधर्म इतीतीतिकरणेनैव तावन्मात्रत्ववाचिनानुवादत्वांशवैकल्यं सूचितम्। 'मनुष्यधर्मः शब्दस्य तत्प्रधानत्वादि'त्यनुषक्तसूत्रावयवोक्तसहेतुकपुरुषधर्मत्वनिरासार्थत्वेन वाशब्दव्याख्यार्थमत्रेत्यादिप्रतीमइत्यन्तं भाष्यं व्याचष्टे—**तत्रापीति**। आख्यातशब्दस्य कर्तृवाचित्वाभावात्, तत्प्राधान्यं न संभवतीतित्याशयः।

नन्विति भाष्येण कर्तुरप्याख्यातात्प्रतीतेर्वाच्यत्वमाशङ्क्य, वाच्यवाचकलक्षणसम्बन्धापेक्षया सम्बन्धान्तरादभिधेयाविनाभावलक्षणात्कर्तृप्रतीतेरित्येवं तन्निरासेप्यावृत्त्या संयोगान्तरादिति। सूत्रावयवव्याख्यार्थं सत्यमित्याद्यर्थादित्यन्तं भाष्यं व्याचष्टे—**या त्विति**। कर्तुरशाब्दत्वोपपादनार्थं यदेत्यादि न स श्रौत इत्यन्तं भाष्यं सामान्यन्यायोक्तिपूर्वमुपपादयितुमारभते—**सर्वत्रैव तावदिति**। योग्यार्थापत्त्यनुदयोऽनुपलब्ध्योक्त्योक्तः। मध्यमोत्तमप्रथमपुरुषसंज्ञकाख्यातविशेषवाच्यो युष्मदस्मत्तद्व्यतिरिक्तत्वरूपोऽर्थः पुरुषः। क्रियाफलस्यात्मपरगामित्वविभागाख्यस्तूपग्रहः। स्वरितेतो ञकारेतो वा धातोः परादात्मनेपदपरस्मैपदाख्यादाख्यातविशेषाद्गम्यते। लोकादज्ञातस्य विवेकस्य ज्ञानोपायो लक्षणं चेत्यनेनोक्तः। कर्त्राक्षेपकत्वसिद्ध्यै भावनाया वाच्यत्वमुपपादयति—**तत्रेति**। कालादेर्व्यभिचाराद्गमकत्वायोगेऽपि कर्त्ता, धात्वर्थो वा गमयिष्यतीत्याशङ्कते—**कर्त्रिति**।

कर्तुरप्रयतमानस्य पाकादौ कर्तृत्वासिद्धेः, तत्सिद्ध्यै गम्यमानायाः प्रयत्नाख्याया भावनायाः प्रयत्ननिष्पाद्येन च धात्वर्थेन स्वसिद्ध्यै गम्यमानायाः प्राधान्यप्रतीत्ययोगापत्तेस्तद्गम्यत्वं न संभवतीति परिहरति—**नेति**। एतदेव विवृणोति—**यदि हीति**। भावनयाक्षेपसंभवात्कर्तुरवाच्यत्वे कालादेरप्यवाच्यतापद्येतेत्याशङ्क्याह—**नचेति**। कालादीनां मध्ये केनचिदन्येषामवगतिसंभवादवाच्यत्वं भविष्यतीत्याशङ्क्याह—**एवमिति**। कर्तुस्तु भावनयाऽवगतिसंभवान्न युक्ता वाच्यतेत्याह—**यादृशस्त्विति**।

दह्यमानगृहान्तर्गततण्डुलपूर्णकाष्ठमयकुसूलसमीपस्थायां सोदकायां स्थाल्यामपावृतायां कथं चित्पतितानां तण्डुलानां कर्त्रभावेऽपि करणादिकारकान्तरमात्रात्पाकक्रियाख्यभावनासिद्ध्युपपत्तेर्भावनापि न कर्त्राक्षेपशक्तेत्याशयेनाशङ्कते—**कारकान्तरेति**।

पाकादेर्धात्वर्थस्य कर्त्तारं विना कथं चित्सिद्ध्युपपत्तावपि तस्य भावनात्वाभावात् प्रयत्नाख्यायास्तु भावनायाः कर्त्तारं विना सिद्धिलक्षणव्यभिचारायोगादन्यान्वयमात्रात्मको

व्यभिचारः शङ्कनीय इत्यापाद्य दूषयति—**नेति**। कस्मान्नान्यान्वयमात्रात्मको व्यभिचारोऽभ्युपगमनीय इत्याशङ्क्याह—**द्विधा हीति**। भावना च शिंशपात्वतुल्या, अन्योदृर्ध्वत्वतुल्येत्याह—**भावना चेति**।

शिंशपात्वस्यान्योन्यसापेक्षानेकवृक्षत्वाद्यन्वयादनेकभर्त्रन्वितद्रौपदीवद्व्यभिचारित्वाभावेऽपि भावनायाः परस्परानपेक्षानेककारकान्वयादेकात्यागेनान्यपुरुषगामिस्त्र्यन्तरवत्समुच्चयेऽपि व्यभिचारित्वापत्तिमाशङ्क्याह—**नचेति**। सन्देहापादकोऽत्राव्यभिचारो विवक्षितो न स्त्रीणामिव प्रत्यवायापादकः। समुच्चये च न सन्देहापत्तिरित्याशयः। अतः कारकान्तरावगतावपि शक्तिमापादयेन्न तु कर्त्रवगतावशक्तिमित्युपसंहरति—**अत इति**।

युगपत्सर्वकारकान्विताया भावनायाः सर्वकारकगमकत्वोपपत्तावपि कर्मादित्यागेन कारकान्तरान्वितायाः कर्माद्यवगतावशक्तिवत्कर्तृत्यागेन कारकान्तरान्वितायाः कर्तारं विना सिद्धिलक्षणाद्व्यभिचारात्कर्त्रन्वयगतावशक्तिर्भविष्यतीत्याशङ्काशयं निराकर्तुमाह—**यत्रापिनामेति**। कारकान्तरत्यागेऽपि कर्तृत्यागो न कदाचिदस्तीति, वक्तुं कर्मादिप्रविभावनाया इति गतिरिति व्युत्पत्त्या प्रतीतिशब्देनान्वयोक्तेरप्रतीतिशब्देनाऽन्वयाख्यत्यागाभिधानाद्यत्राप्यासितिष्ठत्यादिप्रयोगे कारकान्तराणां भावनया त्यागाद्व्यभिचारः शङ्क्यते। तत्रापि न कर्तुर्व्यभिचारशङ्केत्युक्ते, सर्वकारकसाध्यत्वाद्भावनायाः कारकान्तराणामपि व्यभिचारायोगमाशङ्क्य भावनाया धात्वर्थद्वारा धात्वर्थकर्मान्वयादासितिष्ठत्यादेश्च धातोरकर्मकत्वाद्धात्वर्थद्वारकर्मान्वयानुपपत्तेः, संप्रदानस्य च दानादिधात्वर्थविशेषान्वयिसंप्रदेयान्वयित्वेन धात्वर्थव्यवहिततया भावनातो बाह्यात्संप्रदेयादपि बाह्यादग्राह्यादेरपि बाह्यत्वाद्व्यवहितत्वात्, चकारसूचिताच्च करणाधिकरणयोर्धात्वर्थ [ १ त्वादपादानस्य च ग्रहणादिधात्वर्थविशेषान्वयिग्राह्याद्यन्वयित्वेन धात्वर्थविशेषान्वयिग्राह्याद्यन्वयित्वेनधात्वर्थव्यवहिततया भावनातो बाह्याद्ग्राह्यादेरपिबाह्यत्वाद् ] व्यवहितत्वेन भावनातो बाह्यत्वात्कर्मसंप्रदानापादानकरणाधिकरणशून्येषु धात्वर्थेषु कर्मादीन् प्रति भावनाया अगत्या कर्मादीनां भावनाव्यभिचारेऽपि कर्मादीनामेव च व्यभिचारो, न तु कारकत्वसामान्यात्कदाचित्कर्तुर्व्यभिचारशङ्केत्युक्तम्। प्रयत्नस्य चेतनधर्मत्वेन चेतनं विनानुपपत्तेश्चेतनस्य प्रयत्ने स्वातन्त्र्येण कर्तृत्वैकान्तिकत्वात्प्रयत्नात्मकभावनाख्यायाः क्रियायाः कर्तृशून्यायाः कस्याश्चिदभावात्कर्तुर्भावनाव्यभिचारायोगमुपपादयति—**नहीति**। कारकान्तरव्यभिचारसहितश्च कर्तुर्व्यभिचारः प्रयोजनवानेवेत्याह—**तदव्यभिचारेण वेति**। तस्यैवाव्यभिचारेणेति सावधारणोक्त्या कारकान्तरव्यभिचारोक्तिः सुतरामित्यनेन प्रयोजनस्यावश्यकतोक्ता। किंप्रयोजनमित्यपेक्षिते भावनायाः केवलकर्तृप्रत्यायनशक्त्यवधारणप्रयोजनमाह—**यावदिति**। येषु धातुषु यानि कारकान्तराणि भावना व्यभिचरति, तेषु तत्प्रत्यायनशक्त्यभावे यावत्तावच्छब्दाभ्यामुक्ते। तथाप्यव्यभिचारिकारकान्तरप्रत्यायनशक्त्युपपत्तिमाशङ्क्य, क्वचिद्व्यभिचारात्कर्तृवदैकान्तिककारकान्तरप्रत्यायनशक्त्यभावसूचनार्थं कर्तृप्रत्यायनशक्तिज्ञानस्य स्फुटतरतोक्ता। केवलकर्तृप्रत्यायनशक्तिज्ञानस्य प्रयोजनत्वोपपादनार्थं कारकान्तरव्यभिचारे

सति भावनायाः केवलकर्तृप्रत्यायनशक्तिज्ञानात्कर्तुरसाधारण्येन भावनागम्यत्वात्संख्यान्वयसिद्धेर्न कारकान्तरव्यभिचारो निराकार्यः, प्रत्युत समर्थनीय एवेत्याह—**समर्थनीय एवेति**। सम्बन्धे घटनीय इत्यध्याहार्यम्।

कारकान्तरव्यभिचारसमर्थनपूर्वं कर्तुः संख्यान्वयघटनां विवृणोति—**आसीतेति**। कारकान्तराणां सर्वभावनास्वैकान्तिकत्वाभावेऽपि यस्यां भावनायां यत्कारकान्तरं गम्यते, तस्यां तस्यापि कर्तृवद्गम्यमानत्वसाम्यात्संख्यान्वयः प्रसज्येतेत्याशङ्क्य, कर्तृगतैव संख्याऽऽख्याते गम्यते, नान्यगतेति सर्वस्वसंवेद्यव्यवस्थादर्शनात्कर्तुर्वाच्यत्वपक्षवदवाच्यत्वपक्षेऽपि शब्दशक्तिव्यवस्थापिका कल्प्येति साम्यपादनेन परिहरति—**कर्तृविशिष्टा चेति**।

वाच्यत्वपक्षे वाच्यावाच्यत्वव्यवस्थयैव संख्यान्वयानन्वयव्यवस्थासिद्धेः शक्तिकल्पनानापत्तिं शङ्कते—**स चेदिति**। वाच्यावाच्यत्वव्यवस्थाया अपि शक्तिं विनानुपपत्तेः साम्यमापादयति—**तत्रेति**। अवाच्यत्वपक्षे कीदृशी शक्तिः कल्प्येत्यपेक्षायामाह—**यतइति**। यस्मात्कर्तृगतां केवलां संख्यामतस्तिङ्रूपाच्छब्दात्प्रतीमः, तस्मात्केवलकर्तृगतसंख्याप्रतीत्याख्यात्कार्यात्तिङां संख्याभिधानशक्तिरेतावती कर्तृगतत्वपर्यन्ता प्रतीयत इत्यर्थः। कर्तृगतायामेव संख्यायां तिङोऽभिधानशक्तिर्नान्यगतायामिति व्यवस्थायां को हेतुरिति पृच्छति—**समानइति**। ज्ञापकहेतुः। पृच्छयते **कारकहेतुर्वेति**। विकल्प आद्यकल्पे तत्रावश्यमित्यादिना तद्विषयबुद्धयाख्यस्य ज्ञापकहेतोः पक्षद्वयतुल्यत्वेनोक्तत्वात्प्रश्नायोगमाह—**उक्तमिति**। शक्तीनां स्वाभाविकत्वेन निर्हेतुकतयाऽनुयोज्यत्वस्य—

शक्तयः सर्वभावानां नानुयोज्याः स्वभावतः।

इत्याकृतिवादवार्त्तिके निरस्तत्वात्कारकहेतुप्रश्नोप्ययुक्त इत्याह—**नचेति**।

एवमपि साम्यादन्यतरपक्षनिर्द्धारणायोगमाशङ्क्य, वाच्यत्वपक्षे शक्तिद्वयकल्पनापत्तेर्वैषम्यमाह—**अपि चेति**।

एकप्रत्ययोपादानमात्रात्कर्तृगतसंख्याभिधानसिद्धेस्तद्विषयशक्तिकल्पनापत्तिशङ्कां स चेद्ब्रूयादिति वार्त्तिकोक्तां विवृणोति—**नन्विति**। तत्रैव प्रत्यवस्थेयमित्यादिवार्त्तिकोक्तपरिहाराशयं विवरीतुमापातनिकां तावत्करोति **कुतः खल्विति**। विवृणोति—**न चेति**। भावनादीनामेकप्रत्ययोपादानाविशेषेऽपि क्वचिदाख्यातोक्तसंख्यान्वयादर्शनेनायोग्यत्वावशाच्छब्दशक्तिकल्पनां विनापि संख्याया भावनाद्यनन्वयोपपत्त्यभिधाने सर्वकारकाणां गम्यमानत्वाविशेषेऽपि कारकान्तराणां क्वचिदाख्यातोक्तसंख्यान्वयादर्शनेनायोग्यत्वविशिष्टत्वान्नास्मत्पक्षेऽपि कर्तृगतसंख्याभिधानशक्तिकल्पनापत्तिरित्याह—**यदि त्विति**।

कारकान्तराणां सुबाख्यशब्दान्तरोक्तसंख्यान्वयाद्योग्यत्वोक्तौ भावनादीनामपि सुबुक्तसंख्यान्वयाद्योग्यता समानेत्याह—**अथेति**। आख्याते भावनादीनामसिद्धत्वाख्यादसत्वभावात्संख्यान्वयायोग्यत्वं शङ्कते—**अथेहेति**। अनुत्पन्नस्यापि भावनादेः सुबुक्तसंख्यान्वयदर्शनात्संख्यालिङ्गान्वयायोग्यत्वस्यैवासत्वभूतत्वप्रसिद्धेर्न तस्यायोग्यत्वहेतुतेति परिहरति—**तदिति**। एतदेव विवृणोति—**नहीति**।

एवं च सत्याख्यातोक्तैव संख्याया भावनादीनां चान्योन्यान्वयायोग्यत्वे हेतुर्वाच्या। सा च कारकान्तरान्वयायोग्यत्वेऽपि तुल्येत्याह—**तत्रेति**। कर्तर्यनुक्ते कर्त्रन्वितसंख्योक्त्ययोगात्स्वरूपेण चोक्तायाः सर्वकारकेष्वविशेषात्कथमाख्यातोक्तत्वस्य कारकान्तरान्वयायोग्यत्वे हेतुतेति पृच्छति—**कथमिति**। यथा त्वत्पक्षे कर्तुर्भावनादीनां चाख्यातोक्तत्वाविशेषेऽपि शब्दशक्तिवशात्संख्यायाः कर्तृमात्रान्वये योग्यता, न भावनाद्यन्वये तथा कर्तृकरणादीनां कारकत्वाविशेषेपीत्युत्तरमाह—**शब्देति**। असत्वभावाख्यायोग्यत्वहेतुनिरासाद् दृष्टान्तसिद्धिमाह—**इतीति**।

वाच्यत्वपक्षे यत्राख्याते कर्त्ता वाच्यः, तत्र तस्य संख्यान्वयो, यत्र कर्म तस्येति व्यवस्था। तत्तद्विशिष्टसंख्याभिधानविषयशब्दशक्तिवशाद्युक्ता। अवाच्यत्वपक्षे तु स्वरूपेणोक्तया संख्यया करणादीनामयोग्यत्वादनन्वयेऽपि कर्तृकर्मणोर्योग्यत्वाविशेषाच्छब्दशक्तेश्च कर्तृकर्मानवगाहित्वाद्व्यवस्था न युक्तेत्य।शयेनाशङ्कते—**ननु चेति**। क्व चिदाख्याते कर्त्ता वाच्यः, क्व चित्कर्मेति व्यवस्थावत्क्व चित्कर्त्रन्विता संख्या वाच्या, क्व चित्कर्मान्वितेति व्यवस्थापि शब्दशक्तिवशाद्युक्तेति साम्यपादनेन परिहरति—**परिहरतीति**। श्लोकं व्याचष्टे—**यो हीति**।

शक्तेः कर्तृकर्मविशिष्टसंख्याविषयत्वं विना व्यवस्थापकत्वयोगद्व्यवस्थापकत्वसिद्धये विशिष्टविषयत्वाभ्युपगमापत्तेर्विशेषणविषयत्वं च विना विशिष्टविषयत्वायोगाद्विशेषणभूतयोः कर्तृकर्मणोरपि शक्तिविषयतावश्याभ्युपगमनीयेत्याशङ्किता स्वाशयं विवृणोति—**तत्रेति**। सुरभिचन्दनादिज्ञाने चक्षुषो गन्धादिविषयत्वाभावेऽपि गन्धादिविशिष्टद्रव्यविषयत्ववच्छब्दशक्तेः। कर्तृकर्मविषयत्वाभावेपि तद्विशिष्टसंख्याविषयत्वाविरोधाद्विशिष्टसंख्याज्ञानसिद्धये विशेषणभूतयोः कर्तृकर्मणोर्ज्ञानमात्रमादर्तव्यं, न तु शब्दशक्तिजन्यज्ञानाख्याभिधानलक्षणज्ञानविशेषादरः प्रमाणवानिति परिहर्त्ता स्वाशयं विवृणोति—**उच्यत इति**। श्लोकं व्याचष्टे—**अगृहीत इति**। न चेदन्येनेत्यनेन चान्यतोऽवगतस्य विशेषणांशस्य वा विशिष्टप्रत्ययविषयत्वापवादान्न शब्दजन्यकर्तृविशिष्टसंख्याज्ञानस्य कर्तृविषयतादरणीयेत्याह—**सर्वेति**।

विशेषणविशेष्यभूतयोः कर्तृसंख्यायोराख्यातशब्दजन्यकर्तृविशिष्टसंख्याज्ञानविषयत्वाभावेऽपि विशिष्टरूपावयवत्वाद्विशेषणविशेष्ययोस्तज्ज्ञानं विना विशिष्टज्ञानानुत्पत्तेर्विशिष्टज्ञाने व्याप्रियमाणस्य शब्दस्य विशेषणविशेष्यज्ञानेऽपि व्यापारोऽवसीयत इत्याशङ्क्य, शब्दव्यापारस्यार्थापत्तिरूपविशिष्टप्रत्ययकल्प्यत्वादर्थापत्तेश्चान्यथानुपपत्तिरूपत्वेनान्यलभ्यावयवमात्रविषयत्वाद्बुद्धिद्वयस्याख्यातापेक्षितत्वेप्यनन्यलभ्यावयवबुद्धेः साक्षादाख्यातजन्यत्वादन्यलभ्यावयवबुद्धेस्त्वभिधेयाविनाभावद्वाराख्यातजन्यत्वाद्विशिष्टबुद्धावाख्यातव्यापारोपपत्तेर्बुद्धिद्वये व्याख्यातव्यापारकल्पनायां नार्थपत्तिः प्रभवतीति सूचयितुमाह—**सर्वत्र चेति**।

एवमपि विशेषणस्य प्राक्प्रत्याय्यत्वाद्विशेषणत्वाभिमतस्य च कर्तुरवाच्यत्वे प्राक्प्रतीत्ययोगाद्वाच्यतैव युक्तेत्याङ्क्य, यथाऽनन्यलभ्यत्वात्संख्याया न कथं चिदवाच्यता युक्ता,

तथान्यलभ्यत्वात्कर्तुर्वाच्यता न युक्तेति विशेषणत्वस्य वाच्यत्वानापादकत्वं वक्तुमाह—**तद्विहेति**। कर्तृविशिष्टा संख्याविधीयमानेत्यादावन्वयमात्रविवक्षया कर्त्तुर्विशेषणत्वोक्तिः।

वस्तुतस्तु धात्वर्थस्य पूर्वापरीभावलक्षणव्यापारत्वेऽप्यन्योत्पादानुकूलत्वलक्षणक्रियात्वाभावेन कर्त्रनाक्षेपकत्वात्साक्षेपकत्वेपि वा धात्वर्थज्ञानानन्तरमेव प्रत्ययवाच्यसंख्याज्ञानात्कर्तृज्ञानस्य च संख्याज्ञानसमकालधात्वर्थाविनाभावस्मृतिव्यवहितत्वेन संख्याज्ञानोत्तरकालत्वात्कर्तुर्विशेषणत्वानुपपत्तिः, संख्यान्वयाच्च प्राक्कर्तृज्ञानाभ्युपगमे ज्योतिष्टोमे संख्यानपेक्षस्य कर्तुरविकारावगमादेकस्याशक्तावङ्गान्तरवदेकत्वस्यापि त्यागोपपत्तेर्यजमानानेकत्वसंभवेन द्वित्वबहुत्वयुक्तप्रातिपदुत्कर्षसिद्धान्तभङ्गप्रसङ्गात्संख्यैव कर्तृविशेषणं न तु कर्त्ता संख्याविशेषणमिति, विशेषणभूतं विशेष्यभूतं वेत्यनवक्लृप्त्या सूचितम्। कर्त्रनभिधानेऽपि शब्दानर्थक्यनङ्का नास्तीत्येकत्वसंचारोक्त्या सूचितम्। एकत्वाभिधानेपि भावनादेरिव कर्तुरप्यभिधेयत्वाविरोधशङ्काभिधेयाविनाभावाख्यगम्यमानलक्षणापन्नत्वोक्त्या निरस्ता। यावदेवेह च धात्वर्थः प्रतीतस्तावदेव कापि भावना कर्त्ता च कश्चिद्भवतीत्यवधार्यते। इति वार्तिकवक्ष्यमाणात्कर्तुः पूर्वज्ञानसंभवाद्विशेषणत्वोपपत्तिः सत्यपीत्यनेनोक्ता। विशेषत्वात्कर्तुर्वाच्यत्वशङ्कायाः प्रौढ्या विशेषणत्वाभ्युपगमेन परिहारमुक्त्वापारिमार्थिकपरिहारमाह—**यदा त्विति**। मृद्वत्यै यदा शब्दः।

संख्यापरिच्छेद्यत्वेनापेक्ष्यमाणस्य कर्तुर्भावनातः सिद्धावपि कारकान्तरानादरेण कर्तैव परिछेद्य इति नियमसिद्धिः कर्त्रभिधानशक्तिकल्पनाहेतुर्भविष्यतीत्याशङ्कां, तिङुक्तायाः संख्यायाः कर्त्रन्वय एव योग्यत्वं, न कारकान्तरान्वय इति शब्दशक्तिकृतयोग्यायोग्यत्वव्यवस्थोक्त्या निरस्तामपि तिङुक्ता संख्या कर्त्तारमेव परिछेद्यमपेक्षते, न कारकान्तराणीत्याकाङ्क्षाव्यवस्थया निरसितुमनुभाषते—**यत्त्विति**। ततश्च समाने सर्वकारकाणां गम्यमानत्वे कस्मात्कर्तैवा संख्याया सम्बध्यते, न करणादिभिरपीति पूर्वोक्तशङ्कानुषङ्गेण पूरणीयं निरस्यति—**न तैरिति**।

कर्तृप्रार्थनीक्त्याकाङ्क्षानाकाङ्क्षाव्यवस्थयानन्वयव्यवस्था सूचिता। आकाङ्क्षानाकाङ्क्षाव्यवस्थैव कथमित्याशङ्क्यायोग्यायोग्यत्वव्यवस्थावच्छब्दशक्तिवशेनेति परिहारं सूचयितुं—**प्रतीतान्यपि त्विति**। तिङ्रूपस्य शब्दस्य कर्त्राकाङ्क्षसंख्योक्तावेव शक्तिर्न कारकान्तराकाङ्क्षसंख्योक्तावित्याशयः। संख्यायाः समानप्रत्ययोक्तभावनागम्यकर्त्रन्वयस्य पदान्तरानधीनत्वेनऽवाक्याङ्गतयाकाङ्क्षयोग्यत्वानपेक्षत्वाद्योग्यत्वाकाङ्क्षाभावेऽपि समानप्रत्ययोक्तगम्यत्वविशेषात्करणादीनामपि संख्याया ग्रहणं प्राप्नोतीत्याशङ्क्य, सर्वत्र श्रौते वाक्यीये वा शाब्दे व्यवहारे प्रतीत्याख्यसन्निधिवद्योग्यत्वापेक्षयोरप्यन्वयाख्यग्रहणकारणत्वान्न प्रतीतिमात्रेण करणादीनां ग्रहणापत्तिरित्याह—**नहीति**। तिङुक्तायाः संख्यायाः सर्वस्वसंवेद्यकर्तृमात्रान्वयान्यथानुपपत्तिकल्पितशब्दशक्तिकृतकर्तृमात्रान्वयं योग्यत्वाकाङ्क्षावशादवाच्यत्वेऽपि कर्त्तुरेव संख्यान्वयोपपत्ति कर्त्तुर्विशिष्टावेह संख्या गम्यते इत्यादिग्रन्थसन्दर्भोक्तामुपसंहरति—**तदत्रेति**। तिङुक्तायाः संख्यायाः कारकान्तराना-

काङ्क्षत्वेऽपि कारकान्तराणां संख्यापरिच्छेदं विनानुपादेयत्वेन संख्याकाङ्क्षत्वादत्यतराकाङ्क्षयाऽन्वयो भविष्यतीत्याशङ्क्याह—**नचेति**। प्रथमायास्तिङुक्तकारकाधिष्ठानत्वप्रतीतिहेतुत्वात्कारकविभक्तित्वे प्रथमाया अप्यभिहितकारकविभक्तित्वादिति वार्त्तिके वक्ष्यमाणेति कर्त्तृसंख्यावाचित्वाभावेन सुबुक्तया संख्याया कर्तुः परिच्छेदात्संख्याकाङ्क्षोपपत्तिरित्याशयः। तिङुक्तायाः संख्यायाः समानप्रत्ययोक्तभावनागम्यकारकान्वयस्यापि सन्निध्यपेक्षायोग्यत्वकारणकत्वप्रतीतेः प्राक्सन्निध्याद्यनवगमेनान्वितरूपप्रतीत्ययोगात्कर्तृगतसंख्याभिधानानुपपत्तेस्तत्सिद्धचै कर्तृमात्रान्वययोग्यत्वाकाङ्क्षाकल्पना न युक्तेत्याशङ्क्य अनवगतयोरेवाकाङ्क्षा अयोग्यत्वयोः कर्त्रन्वयप्रतीतिहेतुत्वं सूचयितुमाह—**न चैषेति**। अन्यानन्वितसामान्यरूपेण प्रतीतायाः संख्यायाः पदार्थस्य पदार्थान्तरान्वयवदाकाङ्क्षादिवशेनान्यान्वये सत्याकाङ्क्षादेरवगतस्यान्वयप्रतीतिहेतुत्वं स्यात्। शुद्धसंख्याप्रतीत्ययोगात्वनवगतस्यैवाकाङ्क्षादेर्हेतुत्वावगतेस्तदनवगमेप्यन्वितरूपप्रतीतिर्युक्तेत्याशयः। वाक्ये पदार्थानामन्योन्यान्वयेऽवगतस्याकाङ्क्षादेर्हेतुत्वदर्शनात्पदेपि प्रकृतिप्रत्ययार्थयोः, प्रत्ययार्थानां चाऽनेकेषामन्योन्यान्वयेऽवगतस्यैव हेतुता स्यादित्याशङ्क्याह—**कथितो हीति**।

अयमेव विशेषश्च कथ्यते पदवाक्ययोः।
अर्थवद्भागतुल्यत्वे प्रकृतिप्रत्ययार्थतः।
दृष्टा यथा हि साकाङ्क्षाः पदार्थाः केवलाः क्वचित्।
स्वातन्त्र्येण गृहीताश्च विशिष्टार्थविबोधकाः।
प्रकृतिप्रत्ययौ नैवं कदाचिदुपलक्षितौ।

इति तद्भूताधिकरणवार्तिके वैषम्यस्योक्तत्वान्न वाक्यभागपदार्थवत्पदभागप्रकृतिप्रत्ययार्थानामपि साकाङ्क्षत्वदर्शनपूर्वकान्वयावगतिरित्याशयः। प्रत्ययस्य प्रकृतिपरत्वानियमाच्छुद्धप्रत्ययार्थानवगमेनाकाङ्क्षादेरवगत्ययोगाख्यवैषम्यहेतूक्त्यै पौर्वापर्येत्युक्तम्॥ कर्त्रनपेक्षशुद्धसंख्याप्रतीत्यभावे संख्यैव तिङ्वाच्या, न कर्त्तेति विवेकावगत्ययोगमाशङ्क्य, तिङं विनापि भावनान्यथानुपपत्त्या प्रतीतिसंभवात्पूर्वोक्ताविवेकावगत्युपपत्तिसूचनार्थं धात्वर्थमात्रात्कर्तृप्रतीतिसिद्धेर्भावनापि कर्तृप्रतीत्यै नापेक्षते, किमुत तिङ्विभक्तिरित्यतिशयमाह—**तदिति**। करोतेस्तृच्प्रत्यये कृते कर्तृशब्दव्युत्पत्तेः करोत्यर्थभावनान्वयिनः कर्तृत्वाद्भावनाज्ञानं विना कर्तृज्ञानायोगमाशङ्क्य, कर्तृभावनयोर्द्वयोरपि धात्वर्थमात्रात्प्रतीतिर्भावनोक्त्योक्ता। धात्वर्थगम्यत्वेऽपि कर्तुः प्रत्ययवाच्यसंख्याज्ञानसमकालधात्वर्थान्यथानुपपत्त्यालाचनान्तरगम्यत्वेन संख्यातः प्राक्प्रतीत्ययोगात्प्राक्प्रतीते च कर्तरि संख्याया विशेषणत्वोक्त्ययोगापत्तेर्नैरपेक्ष्यलक्षणार्थः पूर्वशब्दः। अन्यलभ्यत्वात्कर्तुर्वाचकत्वेन तावत्तिङपेक्षा नाऽऽशङ्क्यैव, गमकभावनापेक्षाद्वारा तद्वाचितिङपेक्षां त्वाशङ्क्य, भावनानपेक्षत्वान्नतरां तिङपेक्षेति तरपा सूचितम्। कर्त्रन्वितसंख्याभिधानेऽपि कर्त्रभिधाननिरासार्था केवलोक्तिः॥ एवं समाने सर्वकारकाणां गम्यमानत्वे, कस्मात्कर्त्रैव संख्या सम्बध्यते, न करणादिभिरपीत्याशङ्कां तिङः कर्त्रन्वितसंख्याभिधानशक्तिकल्पनया परिहृत्य, शुद्धसंख्याभिधानेऽपि प्रथमप्रतीत-

कर्त्रन्वयनैराकाङ्क्ष्यात्संख्याया न पश्चात्प्रतीतकारकान्तरान्वय इत्यन्यथा परिहरति—**यद्वेति**। श्लोकं व्याचष्टे—**सत्यपीति**। ज्वलनाद्यवान्तरव्यापारशून्यानां काष्ठादीनां कारकत्वायोगादसमाहितानां चावान्तरव्यापारायोगात्समाधानस्य च कर्त्रधीनत्वात्कर्तुः प्रागपेक्षयान्वयोक्त्यास्वान्वयित्वेन प्राक्कर्त्ता ज्ञाप्यत इत्येवं पूर्वार्द्धं व्याख्याय, सर्वधात्वर्थानुरञ्जनसहतया सामान्यरूपस्य प्रयत्नाख्यस्य व्यापारस्य भावनात्वात् तस्य कर्त्राश्रितत्वात् कर्त्तारमेवाविर्भावाख्यविशेषरूपेण प्रागुपस्थापयतीति पूर्वं तावदित्यनुषङ्गेण वदता स्वरूपेण ज्ञाप्यत इत्येवं व्याख्यातम्। तदेव व्यतिरेकमुखेन व्याख्यातुं कारकान्तराणां धात्वर्थान्वयित्वेन साक्षाद्भावनानन्वयाद्बहिरङ्गत्वं, सर्वसाध्यसाधनेतिकर्त्तव्यताख्यभावनांशमध्ये यो ज्वालादिरितिकर्त्तव्यतात्मको व्यापारः तत्कारणत्वाद्वा बहिरङ्गतरतोक्ता। नचेत्यनेनोत्तरार्द्धंव्याख्या कर्त्रधीनत्वात्कारकान्तरप्रवृत्तेस्तद्धेतुकप्राथम्योक्तिसूचितं कर्तुः प्राधान्यमनतिक्रमहेतुत्वेनोक्तम्। धात्वर्थेनापि भावनादत्कर्तृव्यापारतया कर्तुरेवाविर्भावाख्यविशेषरूपेण ज्ञापनात्तस्यैव संख्यान्वय इत्याह—**अपिचेति**। कः पच्यर्थोनाम येयं तण्डुलानां विक्लित्तिरिति तण्डुलविक्लित्तेः पाकफलत्ववचनात्फलसिद्धिपर्यन्तं सर्वकारकव्यापारसमूहवाचिनं धातुमङ्गीकृत्य प्राधान्यविशेषणे कृते समूहस्यैक्याद् गुणप्रधानत्वायोगमाशङ्क्य, समूहसाधनसमूहीभूतप्रत्येककारकव्यापारभेदाद् गुणप्रधानत्वोपपत्तिसूचनायावान्तरविशेषणम्। सर्वेषां भावनाकारकत्वात्कर्तृत्वापत्तेः 'प्रत्ययोपात्तभावनाकारकं कर्त्तेति' व्याकरणोक्तकर्तृलक्षणायोगवत्सर्वकारकव्यापाराणामेकधातूक्तत्वे गुणप्रधानत्वायोगाद्धातूक्तप्राधान्यव्यापारवत्त्वस्यापि कर्तृलक्षणस्यायोगमाशङ्क्य, भावनाकर्तृसंख्यादीनामेकप्रत्ययोक्तत्वेपि प्रतीतिबलाद् गुणप्रधानत्वाविरोधवत्सर्वकारकव्यापाराणामेकधातूक्तत्वेऽपि गुणप्रधानत्वाविरोधसूचनार्थं न केवलमेतत्कर्तृलक्षणं व्यापारेऽङ्गीकृतं, किन्तु लोकेपीत्युक्त्यर्थोपिशब्दः॥

आविर्भूतरूपप्रतीत्यन्यथानुपपत्त्या कर्तुर्वाच्यत्वकल्पनामाशङ्क्य, भावनाया धात्वर्थस्य व्यापारत्वेनाश्रितरूपतयाभिधानाच्छुक्लादिशब्दोक्तस्य गुणस्याविर्भूतरूपद्रव्यज्ञापकत्ववत्कर्त्रनभिधानेप्याविर्भूतरूपाश्रयभूतकर्तृज्ञापकत्वोपपत्तिं सूचयितुमाह—**अभिहितवच्चेति**। विशेषोवस्याविर्भावोविवक्षितः॥ गम्यमानस्याप्याविर्भूतरूपप्रतीत्यापत्तिमाशङ्क्याह—**कारकान्तरेष्विति**। धात्वर्थस्य कारकान्तरानाश्रितत्वेन तादृशस्याश्रितरूपस्य ज्ञापकस्यार्थस्याभावात्कारकान्तराणामनादरहेतुकाभिभूतरूपप्रतीतिरित्यर्थः॥ कारकान्तराणां गम्यमानत्वस्यासत्वप्रतिभाने कथं सत्वावधारणेत्याशङ्क्याविनाभावाख्यकारणसद्भावादित्याह—**परमार्थेति**।

प्राथम्यप्राधान्याभ्यां कर्तुः संख्यान्वये कर्मणस्तदभावात्संख्यान्वयायोगं शङ्कते—**नन्विति**। भाव्यनिष्ठत्वाद्भावनायां भाव्यांशनिपातिनः कर्मणोंशान्तरेभ्यः प्रागपेक्षाग्रहणं च भावनारूपत्वानालोचनेनानादृत्यव्यापाररूपत्वालोचनेन कारकापेक्षाग्रहणप्राथम्यादरात् कर्तुः कारकान्तरेभ्यः प्राथम्येति व्यापारस्वरूपनिष्पादने कारकानां तुल्यत्वेनान्योन्यमङ्ग-

प्रधानत्वायोगादुत्पादनाख्यभावनारूपे कर्त्रादीनामुत्पादकत्वेनोत्पाद्यं कर्म प्रत्यङ्गत्वात्कर्मणश्चोत्पाद्यत्वेनोत्पादकान् कर्त्रादीन् प्रति प्राधान्यादन्योन्यमङ्गप्रधानत्वोपपत्तेः कर्मणोऽपि प्राधान्यात्संख्यान्वयो युक्त इत्याशयेन पृच्छति—**कुत इति**। शाब्देसंख्यान्वये कर्तुरिव शाब्दस्यैव प्राधान्यस्य हेतुत्वात्कर्मणश्च धातूक्तप्राधान्यव्यापारत्वाभावेन धात्वाख्यशब्दलक्षणप्राधान्याभावाद्भावनानाश्रयत्वेन च तद्वाचितिङाख्यशब्दलक्षणप्राधान्याभावात्संख्यान्वयानुपपत्तिरित्युत्तरमाह—**प्राधान्येनेति**। नात्रप्रयोगे धातुनौदनीभावमापत्स्यमानानां तण्डुलानां विक्लेदनाख्या क्रिया प्राधान्येनोक्ता, न चौदनक्रिया भावनेत्येतद्द्वयमुपपादयितुं माभूदोदनस्यैव धातूक्तप्राधान्यव्यापारवत्त्वात्कर्तृलक्षणात्कर्तुरेव च भावनाश्रयत्वप्रसिद्धेः कर्तृतेत्युक्ते, कर्तृत्वे सत्यप्योदनः पच्यतां स्वमेवेत्यादिवत्कर्मत्वस्यापि सद्भावात् सद्भावात्कर्मसंख्याभिधानोपपत्तिमाशङ्क्य, यदत्र प्रयोगे तिङभिधेयं कर्मत्वं, तन्न माभूदित्युक्तम् ॥

यद्वा यद्भावनारूपं तिङा प्राधान्येनाभिधेयं, सा नौदनक्रियेत्येवमभिधेयोक्तिर्योज्या। श्लोकं व्याचष्टे—**नात्रेति**। कर्मत्वमुपपद्येतेत्यनेनाभिधेयोक्तिः कर्मत्वोपलक्षणार्था। नकारश्चाभिधेयभावनोक्तिभ्यां द्वाभ्यां द्वाभ्यामपि काकाक्षिवत्सम्बद्ध्यत इति सूचितम्। अकर्तृत्वादेव चेत्यनेन न भावनोदनक्रिया मा भूत्तस्यैव कर्तृतेत्यनुषङ्गेण न भावनेत्यवयवो व्याख्यातः। स्वातन्त्र्येण धात्वर्थनिष्पादकत्वाख्यकर्तृत्वसिद्धयर्थत्वेन प्रयत्नाख्याया भावनायाः कर्तृव्यापारत्वादित्याशयः। कर्मव्यापारस्य धातुना प्राधान्योक्तिनिरासस्याविर्भूतत्वरूपेण कर्मोपस्थानायोगोक्तयर्थत्वसूचनार्थं—**तेनेत्युक्तम्**। कर्मव्यापारस्य भावनात्वे सति प्रत्ययार्थत्वेन प्राधान्यात्प्राधान्येन्योन्यकर्मोपस्थापकत्वं स्यान्नत्वेतदस्तीत्याशयः ॥

नकेवलमोदनस्य कर्तृत्वापत्तेस्तद्व्यापारस्य प्राधान्योक्तिर्न संभवति, किन्तु चेतनप्रवर्त्तकनियोगविषयत्वायोगादपीत्याह—**अवश्यं चेति**। पुंव्यापारस्य च प्राधान्यानुक्तावाख्यातेनानाक्षिप्तस्य पुंसः कर्तृत्वस्य पदान्तरोक्तेपि पुंस्याविर्भावायोगात्तृतीयानुपपत्तिः स्यादित्याह—**आख्यातेति**। पुंव्यापारप्राधान्याभावे चौदनाख्यकर्मव्यापारस्य पुंव्यापारेणाभिभावायोगादाविर्भूतव्यापारतयौदनस्य कर्तृत्वापत्तेः, पुंसश्च प्रधानभूतव्यापारवत्त्वाख्यकर्तृलक्षणाभावेनाकर्तृत्वप्रसक्तेरोदनस्य कर्तृव्यापारेणाऽऽप्यमानत्वायोगात्कर्तृव्याप्यत्वाख्यकर्मलक्षणाभावेन कर्मत्वहान्यापत्तिः, यदि कश्चिच्छबादिविकरणायास्तिङः कर्त्रन्वितसंख्याभिधानशक्तिकल्पनावद्यग्विकरणायास्तिङः कर्मान्वितसंख्याभिधानशक्तिकल्पनया परिहारं वदेत् तथाप्योदनस्य यग्विकरणतिङुक्तकर्मसंख्यान्वयत्यागेन शब्विकरणतिङ्वाच्यकर्तृसंख्यान्वयस्य न्यायत्वान्नौदनः पच्यतामिति प्रयोगः स्यात्किमोदनः पचतामित्येवमेवेत्याह—**तद्व्यापारेण वेति**। फक्किकाद्वयेप्यन्यथाहीत्यनुषक्तव्यम्। शङ्कामुपसंहरति—**तेनेति**। दोषसाम्यापादनेन तावत्परिहरति—**उच्यतइति**। द्वयाश्रयमपि दोषमेको भ्रामयितुं पर्यनुयुज्येत। मीमांसकस्तु विचारकुशलत्वाद् भ्रामयितुमशक्य इति सूचयितुं विचारयन्नि-

त्युक्तम् ।। परिहारसाम्यापादनेन परिहरति—**सर्वथेति** । लक्षणशब्दस्य व्यवस्थाकारण-वाचित्वाद्यद्भवत्पक्षे कर्तुर्वाच्यत्वे शाब्दं प्राधान्यं, कर्मणो वा वाच्यत्वे वास्तवप्राधान्यं व्यवस्थाकारणं, तन्मत्पक्षे वाच्यसंख्यान्वयव्यवस्थाकारणं भविष्यतीत्युक्ते, वाच्यत्वपक्षे विकरणभेदभिन्नशब्दशक्तिवशादेव व्यवस्थासिद्धेर्व्यवस्थाहेत्वन्तरानपेक्षामाशङ्क्य, सर्व-कारकाणामन्यलभ्यत्वाविशेषेऽपि क्व चित्कर्तृवाचिन एवेति व्यवस्थासिद्धयै वाच्यत्वपक्षेऽपि हेत्वपेक्षास्तीति सूचयितुं सर्वथेत्युक्तम् । भवत्पक्षे कर्त्ता यल्लक्षणः सन् कर्म वा यल्लक्षणं सदभिधीयते, तल्लक्षणस्यैव कर्तुः, कर्मणो वा संख्या मत्पक्षेऽभिधीयत इत्यर्थः । दोषसाम्यो-क्त्यर्थमाद्यश्लोकं व्याचष्टे—**तद्यदीति** । व्याख्योपक्रमसूचनार्थं तत्र शब्दार्थे तदित्यव्ययम् । परिहारसाम्योक्त्यर्थं द्वितीयश्लोकं संक्षेपतस्तावद्व्याचष्टे—**अथेति** । विस्तरतो व्याचष्टे—**तदेतदिति** ।

भवनप्रकृतिरूपत्वाद्भावनाया भवनोपादानं विना भवितृरूपभाव्यान्वयानुपपत्तेर्भाव्य-व्यापारस्य भवनस्य भावनावाचिना शब्देनोपादानाद्वस्तुलक्षणस्यापि कर्मप्राधान्यस्य शाब्दत्वेनं शाब्दसंख्यान्वयहेतुत्वोपपत्तिसूचनार्थं भाव्यांशेन चेत्युक्तम् । सत्यपि कर्तुः शब्दार्थरूपेण प्राधान्ये:, वस्तुलक्षणस्य कर्मप्राधान्यस्य भाव्याकाङ्क्षाकाले प्रतीते-र्भावनास्वरूपावगतिकालकर्तृप्राधान्यप्रतीत्युत्तरकालत्वेन परतया समाप्तिः शब्दार्थ इति न्यायाद्विपक्षौचित्ये प्राधान्य इति शब्दाध्याहारेणोक्ते कर्तृप्राधान्योपपादनार्थं तिङ्-धातुभ्यां यथासंख्येनाभिधीयमानौ प्रधानभूतौ सामान्यविशेषरूपौ, व्यापारो यस्य कर्तु-स्तद्भावरूपे प्राधान्य इत्युक्तम् । सर्वधात्वर्थानुरञ्जनार्हत्वात्सामान्योक्त्या भावना विवक्षिता । तद्विशेषणत्वाद्विशेषोक्त्या धात्वर्थः कर्तृप्राधान्याविवक्षायां तद्व्यापारप्राधान्यो-क्त्यानर्थक्यमाशङ्क्य, कर्तृत्वसिद्धयर्थत्वसूचनार्थं व्यापारप्राधान्योक्तिमात्रेण कर्तृत्वलाभे सत्यपीत्युक्तम् । वैयाकरणमते कर्मणि मीमांसकमते कर्मसंख्यायां तिङुत्पत्तिरिति व्यवस्था वाशब्देन सूचिता । अकर्मका धातवो विशेषोक्तयोक्ता धात्वर्थकर्मणोकर्मकेषु धातुष्व-भावाद्भावेऽपि वा प्रयोजनाभावादविवक्षायामपि भाव्याख्यकर्मनिष्ठत्वाद्भावनाया भावना-कर्मणो सत्त्वाविवशे क्वचिदप्ययुक्ते इत्याशङ्क्य, सकर्मकेषु श्रुतया द्वितीयाख्यया सुपा स्वास्थ्यकामः शेत इत्यादिषु चाकर्मकेषु स्वास्थ्यं कामयत इत्यादिविग्रहलभ्यया सुपा कर्मप्राधान्याभिव्यक्त्युक्तिः कर्मणोपि संख्यान्वये महता प्रबन्धेन संख्यान्वये कर्तुरसाधार-णोक्तेरानर्थक्यमाशङ्क्य करणादीनां संख्यान्वयनिरासार्थत्वं सूचयितुमाह—**करणादीनां त्विति** । शवादिविकरणायास्तिङः कर्तृगतसंख्यावाचित्वे यग्विकरणायाश्च कर्मगतसंख्या-वाचित्वे विशिष्टसंख्यन्यथानुपपत्त्यैव विशेषणभूतकर्तृकर्माक्षेपसिद्धेर्यदा क्रियानुष्ठातव्या प्रतीयते तदार्थकारकव्यापारो गम्यते इति भाष्ये भावनागम्यत्वोक्तिर्विरुद्धयेतेत्याशयेना-शङ्कते—**के चित्पुनरिति** ।

कर्त्रनवगतौ तद्विशिष्टसंख्यावगत्ययोगात्कर्तृविशिष्टसंख्यान्यथानुपपत्त्या कर्त्रनवगत्य-भ्युपगमेन्योन्याश्रयापत्तेः शङ्कानुपपत्तिमाशङ्क्य, शोणादिशब्दे विशेषणबुद्धिं विनापि

विशिष्टबुद्धिदर्शनाद्विशेषणविशेष्यग्राहकप्रमाणद्वयसद्भाव एवंविशिष्टबुद्धिर्विशेषणबुद्धिपूर्वकत्वनियमो, न सर्वत्रेति सूचयितुं दृष्टान्तमाह—**तद्यथेति**।

शोणादौ शब्दभेदाभावादेकस्य च शब्दस्यैकव्यक्तिकल्पनेनाभिधेयाविनाभावाद्द्वारानेकार्थप्रत्यायकत्वसम्भवेनैकशक्तिकल्पनायोगादश्वत्वादेश्चान्यतोवगत्ययोगाद्विशिष्टस्य गुणस्य वाच्यत्वं, तदन्यथानुपपत्त्या च विशेषणभूताश्वत्वाद्यवगतिरिति युक्तम्। कर्त्तुस्त्वन्यतोवगतिसम्भवेऽपि तद्विशिष्टायाः संख्याया वाच्यत्वमभ्युपेत्य, तथैव कर्त्राक्षेपाभ्युपगमे सति कर्तृन्यायेन गवादावपि गोत्वादिविशिष्टस्य संख्यादेर्वाच्यत्वमभ्युपेत्य, तेनैव गोत्वाद्याक्षेपसिद्धेरवाच्यत्वापत्तिरित्यनिष्टापादनेनाशङ्कां निरस्यति—**तथा च सतीति**। एतदेव प्रश्नपूर्वं विवृणोति—**कथमिति**। श्लोकं व्याचष्टे—**एतावतो चेदिति**। गवादौ प्रकृत्यंशाद्गोत्वाद्यवगतिसिद्धेरेकपदीपादानाच्चान्येनान्वयनियमसिद्धेरेकस्य शब्दस्य गोत्वादिविशिष्टसंख्याद्युक्तिशक्तिकल्पनायोगेनानिष्टापत्तिपरिहारे तु कर्तृसंख्यादिष्वपि विशिष्टविषयशक्तिकल्पनां विनाप्यन्वयनियमसिद्धेर्यद्गवादिषु शुद्धसंख्याभिधानमभ्युपगतं, तदेवाभ्युपगन्तव्यं, ततश्च संख्ययाकर्त्राक्षेपायोगाद्भावनयाक्षेपानभ्युपगमेनाभिधेयत्वसिद्धान्तहान्यापत्तेर्भाष्ये भावनागम्यतोक्तेत्याशयेनाह—**अयं त्विति**।

यत्तु दृष्टान्तबलेन शङ्कोत्थानमुक्तं, तत्रापरे—

स्वबुद्धया रज्यते येन विशेष्यं तद्विशेषणम्।

इत्येवलक्षणस्य विशेषणस्याज्ञातस्य विशेषणत्वायोगात्सर्वत्र विशिष्टज्ञानस्य विशेषणज्ञानपूर्वकत्वनियमावगतेःशोणशब्देप्यश्वत्वरक्तत्वयोर्द्वयोरपि वाच्यत्वात्साध्यविकलं दृष्टान्तं मन्यन्तइत्याह—**तत्रेति**। श्लोकार्थमुपपादयति—**कथं हीति**। यस्माच्छोणशब्दवाच्यरक्तत्वजातिविशिष्टोऽसावर्थो गुणत्वाद् गुणिनमश्वं गमयिष्यति तस्माच्छब्दानुक्तेप्यश्वत्वे तद्विशिष्टप्रत्ययो जायत इत्याशङ्कते—**रक्तत्वेति**। गवादौ रक्तत्वस्य व्यभिचारान्नाश्वगमकतायुक्तेति परिहरति—**नेति**। व्यभिचारेऽपि सामान्यस्य विशेषगमकत्ववद्रक्तत्वस्याश्वगमकत्वोपपत्तिमाशङ्क्य, शोणशब्दान्निश्चितरूपाश्वबुद्धिर्जायते न विशेषणबुद्धिवत्संदिग्धारूपा न च व्यभिचारिणो निश्चितबुद्धिहेतुतास्तीत्याशयेन परिहरति—**ऐकान्तिकं हीति**। यच्चाश्वगमकत्वेगुणत्वं हेतुत्वेनोक्तम्। तद् द्रव्यमात्रगमकत्वे हेतुर्न तद्विशेष इत्याह—**द्रव्यमात्रं त्विति**। श्लोकार्थोपपादनमुपसंहरति—**तस्मादिति**। रक्तत्वस्याश्वत्वागमकत्वेप्यश्वत्वस्य रक्तत्वगमकत्वसम्भवे द्वयोर्वाच्यत्वायोगापत्तेस्तन्निरासायान्योन्येत्युक्तम्। अन्योन्यगमकत्वायोगेति वस्त्वन्तराव्यभिचारित्वेन व्याप्तिज्ञानकालेवगतस्याश्वत्वस्य रक्तत्वस्य वा शोणशब्दप्रयोगकाले शब्दानपेक्षज्ञानसम्भवे द्वयोरवाच्यत्वोपख्यानायोगमुपपादयितुमाह—**नहीति**। केवलाश्वत्वोपस्थापनं तावदनाशङ्क्यमेव। यथा तु तत्र शोणशब्दे सत्वज्ञेयत्वादिवस्त्वन्तरसाधारण्येन द्रव्यत्वं रक्तत्वैनैकान्ततो ज्ञापितं, तथाश्वत्वं न केनचिदेकान्ततो ज्ञापितमित्यर्थः। द्रव्यान्तरव्यावृत्तत्वरूपैकान्तिकतैवैकशब्दाभ्यामुक्ता।

कर्त्तुस्तु वस्त्वन्तरोपस्थापितस्य ग्रहणसम्भवान्नतिङ्गाच्यतेत्युक्तमेवार्थं व्यतिरेकार्थं स्मारयति—**कर्त्तुः पुनरिति** ।

कारकान्तराणामपि भावनयोपस्थापनात्कर्तुः संख्यान्वयनियमायोगात्तेपस्तत्सिद्धये वाच्यत्वकल्पनामाशङ्क्य विशेषरूपेणोपादानं स्मारितम् ॥ शब्दस्योच्चारणेन वाच्यबुद्धौ व्यापारणादनावृत्तोच्चारणस्य विरम्य व्यापारानुपपत्तेः पूर्वापरीभूतवाच्यद्वयबुद्धिजनकत्वायोगेन साध्यविकल्पत्वापरितोषात्स्वमतेन शोणशब्दवाच्यस्य गुणविशेषस्याश्वत्वैकान्तिकत्वात्तद्गमककत्वं युक्तम् । संख्यायास्तु प्रतिजाति विलक्षणविशेषाभावेन कर्त्रैकान्तिकत्वाभावान्न कर्तृगमकता युक्तेतिवैषम्यं वक्तुमुपक्रमते—**अथवेति** । मात्रशब्दोऽश्वत्वाभिधाननिरासार्थः । तथापि न तद्दृष्टान्तेन संख्याया कर्तृगमकतायुक्तेति वाक्यशेषः ॥ एकार्थसमवायित्वोक्त्या विशिष्टाभिधानमुक्तमिति भ्रान्त्या मन्वानः पृच्छति—**कथमिति** । भ्रान्तिं निरस्यन्नुत्तरमाह—**उच्यत इति** । रक्तगुणस्य रक्तत्वजातेर्जात्यन्तरमेतच्छोणत्वं स्वभावादसत्वान्वयं प्राप्तमिति कृत्वा शक्नोत्यश्वत्वं गमयितुमिति शेषः ।

व्यतिरेकमुखेनोत्तरार्द्धं व्याचष्टे—**यदि हीति** । अन्येनानुपात्तेप्यश्ये तद्गतं गुणं वदन्नितिवार्तिकोक्त एक एव शक्त्याऽश्वत्वविशिष्टरक्तत्वाभिधानपक्षे शोणशब्दो अश्वत्वेन विशेषणमाकाङ्क्षेत्—

शोणेऽपि नैव वाजित्वमनुक्त्वा तद्गुणतेभिधा ।

इति वार्तिकोक्ते वा विशेषणविशेष्यरूपार्थद्वयाभिधानपक्षे शक्त्यन्तरमाकाङ्क्षेदित्युक्ते, किमर्थमित्यपेक्षायां येन विशेषणेन, शक्त्यन्तरेण वा कृत्वा शोणशब्दः स्वयमेवाश्वत्वैकार्थसमवायि रक्तत्वं वदेदिति विशिष्टोक्तिः प्रयोजनमुक्ता । अन्वयमुखेन व्याचष्टे—**एष त्विति** ।

इत्यव्यभिचाराद्धेतोः शोणत्वजातितोऽश्वत्वं प्रतीयत इति प्रत्युक्तेनिश्चितप्रतीतिविषयत्वव्याख्यार्थं यथा रक्तत्वकृष्णत्वादितोऽश्वत्वेसंशयो भवति नैवमित्युक्तम् । वैलक्षण्यानुपलम्भेनावान्तरजातिमपह्नुते—**कीदृशं पुनरिति** । क्षीरादौ माधुर्याद्यवान्तरजातिवैलक्षण्यवच्चन्दनादौ च सौरभ्याद्यवान्तरजातिवैलक्षण्यवद्रक्तत्वादानामपि प्रतिद्रव्यजात्यवान्तरजातिवैलक्षण्यस्य निपुणतो निरीक्षमाणैरुपलम्भान्नापह्नवः सम्भवतीत्याशयेनोत्तरमाह—**उच्यत इति** । जपाकुसुमादौ रक्ताद्यवान्तरजातेर्वाचकशब्दाभावेनाभावमाशङ्क्य, विशेषवाचिशब्दरहितानामपि कृमिकीटाद्यवान्तरभेदानामनेकशो दर्शनात्सामान्यतोऽभिधानेनापि च व्यवहारसिद्धेर्विशेषशब्दाभावेप्यवान्तरजात्यपह्नवायोगसूचनायोत्तरार्द्धः । श्लोकं व्याचष्टे—**सर्वेति** । गोत्वैकार्यसमवायिन्यां तु रक्ताद्यान्तरजातौ लोके विशेषवाचिसाधुरोहिणीशब्दाभावेऽपि रौहिणीकेत्यपभ्रंशदर्शनान्नान्यत्रापि सर्वथा विशेषवाचिशब्दाभाव इत्याह—**यथेति** । रोहिणिकाशब्दस्य गोत्वैकार्थसमवायिरक्तावान्तरजातिवाचितामुपपादयितुमाह—**कदा चिदिति** । शोणादिशब्दस्याभिधेयाविनाभावेनाश्वत्वादिगमकत्वादश्वत्वादेर्वाच्यत्वाभावमुपपादितमुपसंहरति—**तस्मादिति** । अश्वत्वैकार्थसमवायि-

शुक्लावान्तरजातिः कर्कत्वं मनुष्यत्वैकार्थसमवायिशुक्लावान्तरजातिर्गौरत्वं पद्मत्वैकार्थ-समवायिशुक्लावान्तरजातिः पुण्डरीकत्वं रक्तावान्तरजातिः कोकनदत्वमित्याद्यादि-शब्दाभ्यामुक्तम् । प्रतीतिमात्राद्वाच्यत्वाशङ्कायोगोपपादनार्थो दृष्टान्तः ॥ तिङो विशिष्ट-वाचितायां शोणादिशब्दानां दृष्टान्तत्वे निरस्ते, कुमारादिशब्दानां दृष्टान्तत्वाशङ्का-निरासार्थं शोणादिन्यायं तेष्वतिदिशति—**एतेनैवेति** ।

मनुष्यत्वैकार्थसमवायिनी बाल्यावान्तरजातिः कुमारत्वम् । उष्ट्रत्वैकार्थसमवायिनी करभत्वं, हस्तित्वैकार्थसमवायिनी कलभत्वम् । अश्वत्वैकार्थसमवायिनी किशोरत्वम् । गोत्वैकार्थसमवायिनी वत्सत्वम् । महिषत्वैकार्थसमवायिनी वर्करत्वं प्रतिप्राणिजाति बाल्यावान्तरजातिभेदं बाल्यगतस्वसंवेद्यचेष्टा-स्वर-वर्णवैलक्षण्यात्साधयितुमाह—**तथा हीति** ।

युववृद्धत्वयोरपि प्रतिप्राणिजात्यवान्तरजातिभेदोक्त्यर्थं बालत्वादावित्यादिशब्दः ॥ शोणादिशब्दानां रक्तादिगुणावान्तरजातिवाचित्वात्, तदविनाभावेनाश्वत्वादीनां प्रतीति-सिद्धेरवाच्यत्वाभ्युपगमे गवादिप्रातिपदिकानामप्येकवचनाद्यनुगृहीतानां गोत्वाद्येकार्थसम-वाय्येकत्वादिसंख्यावान्तरजातिवाचित्वात्, तदविनाभावेन गोत्वादीनामपि प्रतीतिसिद्धेर-वाच्यत्वापत्तिरित्याशङ्कानिरासार्थं तिङ्वाच्यया संख्यया कर्त्राक्षेपशङ्कायाः, केचित्पुन-रित्यादिवार्त्तिकोक्ताया निरासायाऽनिष्टापत्ति, तथासत्यनेनैव न्यायेनेत्यादिवार्त्तिकोक्ता-मनुभाषणपूर्वं निरस्यति—**अथेति** । गवादिजातिभेदेपि संख्याया वैलक्षण्यानुपलम्भेनावा-न्तरजातिभेदाभावात्, एकस्य च विरम्य व्यापारायोगेन पूर्वापरीभूतवाक्यद्वयबुद्धिजन-कत्वस्यासंभवतोप्रसक्तेर्नानिष्टापत्तिरित्याशयः ।

व्यतिरेकमुखेन तावच्छ्लोकं व्याचष्टे—**यदि हीति** । गोत्वसंख्ययोरविभक्तावयवैक-शब्दाभिधानार्हयोर्मध्ये यद्यव्यभिचारितया हेतुभूतयाऽन्तरद्वाच्यत्वेनावधारितं प्रत्यविभक्ता-वयवस्यैकस्य शब्दस्य वाचकतावधार्येत, ततोप्येवं कल्पेत, नतु द्वयमप्यस्तीत्यर्थः ।

अन्वयमुखेन व्याचष्टे—**संख्यायास्तावदिति** । न चोभयोर्मध्येऽन्यतरस्यापीतराव्यभि-चारोस्तीत्यर्थं श्लोकस्थशब्दसूचितं 'न च संख्यासंख्येययोरि'ति वार्त्तिकव्याख्यातमुप-पादयति—**तथाहीति** । संख्याया गोत्वादिगमकत्वयोगेपि लिङ्गस्य प्रतिजाति विलक्षणत्वे-नाऽव्यभिचारितया गोत्वादिबोधे प्रवृत्त्युपपत्तेः शोणत्वादितुल्यत्वाद्गोत्वोदरवाच्यत्वापत्तिर-शक्यपरिहारेत्याशङ्कते—**ननु चेति** । अचेतनेषु तावल्लिङ्गस्यागम्यमानत्वेनाभावाद्वृक्ष-त्वादिगमकत्वानुपपत्तेस्तद्वशेन वृक्षत्वादिजातीनां वाच्यताऽपह्नोतुमशक्येत्यव्यापकत्वेन तावच्छङ्कां निरस्यति—**नैतदिति** । वृक्षादिशब्देभ्यःपुंस्त्वाद्यवगतेरगम्यमानत्वासिद्धिमा-शङ्क्य, पुंस्त्वादिवाचिदेवदत्तादिशब्दस्वरूपवृक्षादिशब्दसामर्थ्यात्पुंस्त्वादिप्रतीतावपि चेतने-ष्विवाचेतनेषु प्रतिजाति विलक्षणस्य पुंस्त्वादेः प्रत्यक्षेणानुपलम्भात्, शब्दस्य च—

पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते ।

इति पदार्थे प्रामाण्यनिषेधादभावावगतेर्न वृक्षत्वादिगमकत्वं संभवतीति सूचनार्था विलक्षणोक्तिः। चेतनेषु तर्हि प्रतिप्राणिजातिविलक्षणस्य लिङ्गस्य प्रत्यक्षेण प्रतीतेः शोणादिन्यायेन मनुष्यादिशब्दस्य मनुष्यत्वाद्येकार्थसमवायिस्त्रीलिङ्गावान्तरजातिवाचित्वं ब्राह्मण्यादिशब्दानां च ब्राह्मणत्वाद्येकार्थसमवायिस्त्रीलिङ्गावान्तरजातिवाचित्वमभ्युपगम्य मनुष्यत्वादिजातीनां लिङ्गविशेषादेव प्रतीतिसिद्धेरवाच्यत्वापत्तिः परिहर्तुमशक्येत्याशङ्क्याह—**तथेति**।

यत्रापि चेतने प्रतिजाति विलक्षणं स्वाभाविकं स्त्रीत्वादि प्रत्यक्षेण प्रतीयते, तत्रापि स्त्रीत्वस्य टाबाद्यन्वयसहकृतात्प्रातिपदिकात्प्रतीयमानत्वेन टाबाद्यन्वयात्प्राक्छुद्धात्प्रातिपदिकात्प्रतीयमानाया मनुष्यत्वादिजातेर्वाच्यताऽवधार्यत इत्यर्थः। स्त्रियां यत्प्रातिपकं वर्त्तते, तस्मात् टाबादयो भवन्तीति स्मृतेर्लिङ्गस्य प्रातिपदिकमात्रवाच्यत्वावसायाज्जातिगमकत्वोपपत्त्या शङ्कां निरस्यन् श्लोकं व्याचष्टे—**यद्यपीति**।

स्त्रीत्वस्य टाबाद्यन्वयात्प्राक्प्रतीयमानायां जातावप्रतीतावस्थत्वाज्जातिगमकत्वायोगेऽपि पुंस्त्वनपुंसकत्वयोष्टाबाद्यन्वयानपेक्षान्मनुष्यब्राह्मणादिपदिकात्प्रतीतेर्मनुष्यब्राह्मणत्वादिजातिगमकत्वोपपत्तेर्जातीनामवाच्यत्वापत्तिपरिहार्येत्याशङ्क्य टाबाद्यन्वयानपेक्षत्वेऽपि ब्राह्मणो, मनुष्यं, ब्राह्मणो, ब्राह्मणमित्यादिविभक्त्यन्वयापेक्षत्वात् पुंस्त्वनपुंसकत्वप्रतीतेर्विभक्त्यन्वयात्प्राक्छुद्धात्प्रातिपदिकात्प्रतीयमानाया मनुष्यब्राह्मणत्वादिजातेर्वाच्यत्वावधारणमतिदिशति—**तथा यत्रेति**। स्वादिविभक्तेर्लिङ्गविशेषं प्रति वाचकत्वेनद्योतकत्वेन वा स्मृत्यभावेऽपि, मनुष्य इत्यादौ विभक्त्यन्वयवेलायां पुंस्त्वप्रतीतेर्मनुष्यमित्यादौ चाकारान्तान्नपुंसकलिङ्गात्प्रतिपदिकात्परयोः स्वमोरतोमित्यमादेशेन स्मृतेन विभक्त्यादेशत्वाद्विभक्तिव्यपदिश्येनान्वये नपुंसकत्वप्रतीतेः शुद्धाच्च प्रातिपदिकात्कस्य चिल्लिङ्गस्याप्रतीतेर्विभक्तेर्वाचकत्वाभावेऽपि द्योतकत्वनिवारणा न शक्येति सूचनायाभिव्यज्यत इत्युक्तम्॥

यत्र तर्हि शुद्धात्प्रातिपदिकाद् लिङ्गविशेषबुद्धिर्भवति, तत्र लिङ्गविशेषादेव जातिबुद्धिसिद्धेर्जातीनामवाच्यत्वापत्तिपरिहार्येत्याशङ्क्य, परमतेन तावत्परिहारमाह—**यत्र त्विति**। हस्तिशब्दस्य पङ्कजादिशब्दवद्योगरूढित्वाद्गजत्वजातिविषयत्वेऽपि हस्तशब्दवाच्यशुण्डायोगेनावयवार्थप्रत्यभिज्ञानात्, तत्तिरस्कारेणाश्वकर्णादिवज्जातिवाचित्वानुपपत्तेर्नृशब्दस्य पुमांसो वै नरः, स्त्रियो नार्य इति लिङ्गदर्शनात्पुंशब्दवत्पुंस्त्ववाचित्वावगतेर्देवदत्तशब्दस्य च संकेतितव्यक्तिविशेषवाचित्वाद्धस्त्यादिशब्देषु जातीनां वाच्यत्वनिषेधाभ्युपगमेऽपि नानिष्टापत्तिलक्षणो विरोधः, श्वयादिषु त्वचेतनत्वेन वृक्षादिवद्वास्तवलिङ्गाभावादवास्तवस्य च शब्दसामर्थ्यात्प्रतीतस्यारोपितत्वेन वाऽस्यारोपितधूमवज्जातिगमकत्वायोगाद् लिङ्गवाचित्वाभ्युपगमेऽपि, जातीनां वाचित्वनिषेधायोगान्नानिष्टापत्तिलक्षणो विरोधः इत्यर्थः।

श्रीतोयशब्दयोर्विभक्तिसद्भावाच्छुद्धस्य प्रातिपदिकस्य लिङ्गविशेषबुद्धिहेतुत्वासिद्धिमाशङ्क्य, शरद्वारिशब्दवन्नियतस्त्रीनपुंसकलिङ्गत्वाद्विभक्त्यनपेक्षायां प्रागेवेत्यनेनोक्तायां

हस्त्यादिशब्दानां तद्वन्नियतलिङ्गत्वाद्दैर्घ्यं च विना नृहस्तिशब्दाभ्यां पुंस्त्वप्रतीतेर्दैर्घ्यस्य च नृशब्देऽनङ् सावित्यधिकृत्य 'ऋतुशनस्पुरुदंसोनेहसांचे'त्यनङादेशे सुविभक्तिनिमित्ते सति नकारान्तत्वा'न्नोपधाया' इत्यधिकृत्य 'सर्वनामस्थाने चासम्बुद्धावि'ति सर्वनामस्थानाख्य-सुविभक्तिनिमित्तत्वस्मृतेर्हस्तिशब्देप्यत इनिठनावितीन्प्रत्ययान्तत्वादिन्हन्पूषार्यम्णांशावित्य-धिकृत्य सौ चेति सुविभक्तावेव परभूतायां स्मृतेः शुद्धस्य प्रातिपदिकस्य लिङ्गविशेषबुद्धि-हेतुत्वायोग इत्याशङ्क्यान्वाख्यानमात्रार्थं विभक्तिनिमित्तदैर्घ्यस्मृतावपि हल्ङ्याविविसूत्रेण सुविभक्तिलोपस्मृतेः प्रत्ययलोपे च क्विबन्तवत्प्रत्ययार्थस्यापि प्रातिपदिकमात्रावाच्यत्वा-भ्युपगमाच्छुद्धस्य प्रातिपदिकस्य लिङ्गविशेषबुद्धिहेतुत्वोपपत्तेः सूचनार्थं तन्निवृत्तावित्युक्तम् । देवदत्तशब्दस्यानियतलिङ्गत्वात्सम्बोधनप्रयोगे च विभक्तिनिवृत्तौ पुंनपुंसकत्वसंदेहोत्पत्तेः शुद्धस्य प्रातिपदिकस्य लिङ्गविशेषबुद्धिहेतुत्वायोगमाशङ्क्य, संकेताल्लिङ्गविशेषबुद्धिहेतुत्वो-पपत्तिसूचनार्थो वशब्दः । हस्तिशब्दान्वाख्यानार्थं शुण्डायां हस्तशब्दोपचारेप्यनेकार्थत्व-स्यान्याय्यत्वेन मुख्यवृत्त्या शुण्डायां हस्तशब्दवाच्यत्वाभावादवयवार्थप्रत्यभिज्ञानाभावेन हस्तिशब्दस्य जातिवाचित्वापह्नवायोगान्नृशब्दस्य च ङीबन्तत्वापन्नस्य नारीशब्दत्वापन्नस्य स्त्रियां प्रयोगाच्छुद्धस्य चेदं नृनपुंसकमिति नपुंसकेऽपि प्रयोगान्मनुष्यत्वातिरिक्ते च जात्यन्तरे क्व चिदप्रयोगान्मनुष्यत्वजातिमात्रवाचित्वावगतेरेवमनिष्टापत्तिपरिहारापरितोषात्स्वमतेन यद्यपि नृहस्तिशब्दयोर्दीर्घत्वापादिका द्वितीया मात्राविभक्तिस्थानीयत्वात्पुंस्त्ववाचिना प्राचीनं शब्दरूपं जातिवाचीति विभागोऽर्थद्वयप्रत्ययात् प्राङ्गजायते, तथाप्यर्थद्वयप्रतीतौ क्रमेणोत्पद्यमानाया मात्राया विच्छेद्योच्चारणाशक्तेः—

ज्ञायते वा विधिस्तत्र व्यञ्जनान्तो न तूच्यते

इति वदकथ्यमानस्यापि शब्दविभागस्य सर्वस्वसंवेद्यत्वात्प्राचीनेन शब्दभागेन जातिं प्राक्प्रतिपद्यते, द्वितीयेन पुंस्त्वं, पश्चादिति ज्ञानान्न शुद्धान्नृहस्तिप्रातिपदिकाल्लिङ्गविशेष-बुद्धिर्भवतीत्यन्यथानिष्टापत्तिं परिहरति—**अथवेति** ।

प्रतिजाति च लिङ्गवैलक्षण्यस्य संस्थानपरिमाणवैलक्षण्यातिरिक्तस्यानुपलब्धेः पुंस्त्वा-दिलिङ्गावान्तरजातिसद्भावे प्रमाणाभावेन कस्य चिच्छब्दस्य तद्वाचित्वायोगात्संस्थान-परिमाणे वैलक्षण्यात्मकस्य लिङ्गवैलक्षण्यस्य प्रतिलिङ्गव्यक्तिभिन्नत्वेनैकमुपलक्षणंविनैक-शब्दवाच्यत्वायोगान्मनुष्यत्वादिजातिव्यतिरिक्तस्य चैकस्योपलक्षणस्याप्रतीतेः, जातेश्च साक्षाद्व्यक्तिधर्मभूतपुंस्त्वादिलिङ्गविशेषोपलक्षणत्वायोगान्मनुष्यजातीयव्यक्तिगतः पुंस्त्वा-दिलिङ्गविशेषो मनुष्यशब्दवाच्यो ब्राह्मणादिजातीयव्यक्तिगतो ब्राह्मणादिशब्दवाच्य इति, व्यक्तिद्वारा जात्युपलक्षितस्यैव लिङ्गविशेषस्य वाच्यत्वावगतेरपि जातिं प्रथमतरं प्रतिपाद्यते इत्याह—**किं चेति** ।

एवं च सति यद्यवश्यमेकस्यैवार्थस्य वाच्यत्वमभ्युपेत्य, अर्थान्तरस्य गम्यताऽभ्युपेतव्या । ततो वरं लिङ्गस्यैव गम्यतास्तु, न तु जातेरित्याह—**तेनेति** । अङ्गगुणविरोधन्यायविरो-धादपि लिङ्गस्य वाच्यतामभ्युपेत्य, जातेर्वाच्यत्वनिरासो न युक्त इत्याह—**नित्यं चेति** ।

गोशब्दस्य द्विलिङ्गत्वात्पशुशब्दस्य च नियतलिङ्गत्वेन स्त्रियामपि पुंलिङ्गस्यैव प्रयोगात्, तयोरादिशब्दोक्तेषु च दारमक्षिकादिशब्देषु नियतपुंस्त्रीलिङ्गेषु लिङ्गविशेषानभिव्यक्तेः शोणादितुल्यता शङ्कितुमेव न शक्येत्याह—**न चेति**। लिङ्गस्यावाच्यत्वे कथं प्रतीतिरित्यपेक्षायामाह—**सेति**। लिङ्गविशेषाव्यभिचारिण्याः कस्याश्चिदपि जातेरभावाद्यत्र चेतने वर्त्तमाना मनुष्यत्वादिजातिर्यत्र सामान्यान्यांशे लिङ्गं न व्यभिचरिष्यति, तत्र गमयिष्यति। यत्र त्वचेतने वर्त्तमानायाः खट्वात्वादिजातेर्यत्र वा विशेषांशे मनुष्यत्वादिजातेर्व्यभिचारे सत्यन्यतष्टावादेः, 'तस्माच्छसो नः पुंसि' न पुंसकाज्जस्ससोः शिरित्यादिविहितान्नत्वशित्वादिविभक्तिविकारविशेषाद्वा स्त्रीत्वादिलिङ्गविशेषः प्रत्येष्यते। तत्र तदेव टावादि, नत्वादि वा खट्वादावचेतने गमकमारोपकं चेतने वा वास्तवलिङ्गविशेषवाचकं, टाबादेर्वाचकत्वाभावे वा स्त्रीत्वादिलिङ्गव्यक्तिस्था जातिः प्रातिपदिकेनोक्तेत्येवं तेन टाबादिना प्रातिपदिकेन जात्यभिधानादनु पश्चाद्गृहीता द्योतिता सती जातिः प्रातिपदिकं वा तथाविधजातिवाचित्वेन द्योतितं सदचेतने गमकमारोपकं चेतने जातिर्लक्षिकाप्रातिपदिकं वास्तवलिङ्गविशेषवाचकमिति गमकविशेषचर्चोपयोगाभावाद्यथेष्टं कल्पत इत्येवं व्याख्येयत्। टाबाद्यवगग स्त्रीत्वादिविशेषान्यथानुपपत्त्यैव लिङ्गसामान्यावगतिसिद्धेः सम्भावनामात्रेण जातेर्लिङ्गसामान्यगमकतोक्तेति सूचनार्थो गमयिष्यत्यपि शब्दः॥ गवादिशब्देष्वेकत्वादिसंख्यावान्तरजात्यभिधानात्, पुंस्त्वादिलिङ्गावान्तरजात्यभिधानाद्वा शोणादिशब्दतुल्यत्वाशङ्काया अथ यदुक्तमित्यादिवार्तिकेनोपन्यासपूर्वं कृतं निरासमुपसंहरति—**तस्मादिति**।

गवादिप्रातिपदिकानामेकवचनाद्यनुगृहीतानामेकत्वाद्यवान्तरजातिवाचित्वेन गोत्वादिजात्यनभिधायितया शोणादितुल्यत्वस्य गवादिद्रव्यसंख्याया अवान्तरजातिभेदाभावादयोगेऽपि 'बहुषु बहुवचनं' 'द्व्येकयोर्द्विवचनैकवचने' इति सूत्रयोर्लः कर्मणि चेत्येतदेकवाक्यतया कर्त्रादिकारकगतसंख्योक्त्यभ्युपगमस्य विशेषणमनुक्त्वा विशिष्टोक्त्यशक्तेर्विरम्य व्यापारापादकविशिष्टोक्तिविषयत्वायोगात्कर्तृत्वाद्येकार्थसमवाय्येकत्वाद्यवान्तरजात्युक्तिविषयत्वावगतेस्तदन्यथानुपपत्त्या कारकेष्वेकत्वाद्यवान्तरजातिसद्भावावगतेस्तदन्यथानुपपत्त्या कारकेष्वेकत्वाद्यवान्तरजातिसद्भावावगमात्तिङः शोणादितुल्यत्वोपपत्तिमाशङ्क्य, द्रव्यवत्कारकेष्येकत्वादिवैलक्षण्यानुपलम्भेनैकत्वाद्यवान्तरजात्यभ्युपगमायोगादवान्तरजात्यभावेऽपि च कारकविशेषोक्तेर्विस्तरेणोपपादितत्वात्तिङ्यपि शोणादितुल्यत्वायोगमतिदिशति—**पचत्यादिति**। शोणादितुल्यत्वाभ्युपगमेऽपि सिद्धान्तसिद्धिस्तावतापीत्यनेनोक्ता।

'न शोणत्वादिवत्संख्या जातिभेदेषु भिद्यते'

इति वार्त्तिकोक्तेनैकत्वादिवैलक्षण्यानुपलम्भन्यायेन द्रव्यवत्कारकेष्वप्येकत्वाद्यवान्तरजात्ययोगेभिहितेऽनुपलभ्यमानानामप्येकत्वाद्यवान्तरजातिभेदानां कर्त्रादिकारकगतसंख्योक्त्यभ्युपगमान्यथानुपपत्त्या कल्पनाशङ्का प्रतिवस्तु चेत्यनेन कल्पनागौरवापत्त्या निरस्ता शोणादितुल्यत्वनिरासस्य यदा क्रियाऽनुष्ठातव्या प्रतीयते, तदाऽर्थात्कारकव्यापारो गम्यत इति भाष्योपपादनार्थत्वसूचनार्थं भावनाधात्वर्थाभ्यां कर्त्रु पादानोक्तिः॥ यदा चैकत्वादेर्ना-

वान्तरजातिभेदोस्ति, तवैकत्वादेः कर्त्रेकान्तिकत्वाभावान्न संख्यया कर्त्रुपादानं संभवतीत्येवकारार्थः ॥ एकत्वादेः कर्तृत्वैकार्थसमवाय्यवान्तरजात्यभ्युपगमेन कर्त्राक्षेपशक्तिमभ्युपेत्याऽन्यतः सिद्धे कर्त्तर्यनायासेन परिच्छेदकत्वोपपत्तौ स्वयं कर्त्राक्षेपतत्परिच्छेदाख्यव्यापारद्वयक्लेशाभ्युपगमो न युक्त इत्याह—**किं चेति**। श्लोकं व्याचष्टे—**यदीति**। भावनया सर्वकारकोपस्थापनात्कर्तृनियमसिद्धचै स्वयमाक्षेपमाशङ्कच, समर्थनीय एव चैषोऽर्थः संख्यासम्बन्धे कर्त्तुरसाधारणतासिद्धचर्थमित्यादिना कर्त्तुः कारकान्तरेभ्यो विशेषस्योक्तत्वान्नियमोपपत्तिमाह—**भावनेति**। कर्त्तुर्भावनयोपस्थानसम्भवेऽपि संख्यान्वयनियमार्थानुपपत्त्या वाच्यत्वशङ्कानिरासार्थत्वेन यश्चार्थादितिभाष्यावयवं व्याख्यातुमाह—**तस्मादिति**। यद्यप्यनभिधेयः तथापि कर्त्तुरेव संख्यां प्रतिविशेषणत्वस्य, विशेष्यत्वस्य वा सिद्धेरित्यर्थः ॥ कर्त्तुरश्रौतत्वेऽपि समानपदोपात्तभावनालक्षितत्वेन प्रकृताह क्रतोः प्रत्यासन्नतरतया धात्वर्थं प्रति शेषित्वसिद्धेरनृतोक्तिनिषेधस्य पुरुषार्थत्वनिरासेन क्रत्वर्थत्वसिद्धचै कर्त्तुर्वाच्यत्वनिरासोऽनर्थक इत्याशङ्कानिरासार्थं यश्च न श्रौतं इति भाष्यं लक्ष्यमाणः पुनरादित एव नैव शास्त्रेणोक्त इत्येवं तावत्प्रतीयते नच तेनानुक्त आदर्त्तव्यो भवतीति वाच्यावाच्यचिन्ताप्रयोजनवार्त्तिकालोचनेनाश्रौतत्वे कर्त्तुर्निष्पादकत्वेन तल्लक्षणायामाख्यातशब्दस्य व्यापारानिष्पादकांशे तात्पर्यवृत्त्या शाब्दत्वाच्छाब्दधात्वर्थभावनान्वयोपपत्तावपि शेषित्वेन लक्षणाभावाच्छेषित्वांशे शब्दतात्पर्याभाविनाशाब्दत्वाद् धात्वर्थभावनान्वयायोगसूचनार्थस्य वाक्यशब्दस्य शास्त्रवाचित्वावगतेरश्रौतस्य शास्त्रापरिगृहीतत्वेनानादृत्यत्वात्प्रकरणबाधकत्वं न सम्भवतीत्येवमर्थतया स्पष्टत्वान्न व्याख्यातम्।

आहेत्याशङ्काभाष्यं यदा क्रियानुष्ठातव्येत्यादिभाष्योक्तेन न्यायेन कर्त्तुरवाच्यत्वावधारणादयुक्तमाशङ्कच, न्यायस्यागमविरोधोवत्यर्थत्वेनोपपादयितुमाह—**एवमिति**। भाष्योदाहृतागमापरितोषात्स्वयं तावदन्यमागममुदाहरति—**तथा हीति**। लः कर्मणि च भावे चाकर्मकेभ्य इति सूत्रावयवेन लः कर्मणि चेत्यनेन योगविभागात्सूत्रेण तिङर्थौ कर्तृकर्मणी इत्युक्ते सूत्रे कर्तृपदाभावात्कथमनेन कर्तुस्तिङर्थतेत्याशङ्कायां कर्त्तरि कृदित्येतत्कर्त्तरीत्यनुकर्षणार्थाच्चाकारात्कर्त्तरि च लकारा भवन्तीति प्रतीतेरित्येवं निरस्तायां, तथापि लकारार्थौ स्यातां, न तिङर्थावित्याशङ्कय स्थानिन्यर्थादेशतमादेशार्थमित्योदेशस्य स्थानिवद्भावविधानात्स्थानिनि लकारर्थकथनमादेशस्यार्थज्ञानार्थमिति प्रतीतेरित्युक्तम् ॥ एतच्छ्लोकोक्तेन लः कर्म्मणि चेति सूत्रार्थनैव तद्द्यागमविरोधदर्शनसिद्धेः प्रकृतिप्रत्ययावित्युदाहरणं कर्तृकर्मणोस्तिङर्थत्वानभिधायित्वान्नागमविरोधोदाहरणत्वेन सङ्गच्छत इत्याशङ्कते—**ननु चेति**।

यद्वैतदविशेषेण स्थितं क्रमवशादुभौ।
प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ ॥

इतिवार्त्तिकोक्तेन न्यायेन कर्तुः प्राधान्यस्यापि वाच्यत्ववदागमिकतया दर्शनीयत्वान्नासम्बद्धमिति परिहरति—**कथमिति**। एवमपि प्राधान्योक्त्यशक्तेरिदं भाष्यमयुक्तमाशङ्कच,

'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेत्याचार्याणां प्रत्ययार्थ-प्राधान्योपदेशात्कर्त्ता शब्दार्थः कर्म चेति चाऽऽचार्याणां कर्तृकर्मणोः प्रत्ययार्थत्वोपदेशात्, तस्य पुरुषसम्बन्धः श्रुत्यैव, कर्मसम्बन्धः प्रकरणाच्छ्रुतिश्च प्रकरणाद्बलीयसीति यत्पूर्व-पक्षेऽभिहितं, तद्गम्यते बुक्तं भवतीत्येवं व्याख्यातुमाह—तदिति। यस्मात्प्राधान्यमपि-शब्दादभिधानं च दर्शयितव्यं तस्मादुभयमप्येतद्ग्रन्थः स्मृतिसिद्धं दर्शयति तस्मिन्नर्थे तदित्यव्ययमङ्गीकृत्य व्याख्येयम् ॥ ततश्चैष भाष्यार्थो भवतीत्याह—**यस्मादिति**। कोऽसौ कर्तृकर्मणोः शब्दार्थत्वोपदेश इत्यपेक्षायां कर्त्तरीत्युपदेशोदाहरणभाष्यं ननु कर्त्तरि कर्मणि च लकारः श्रूयत इति वक्ष्यमाणभाष्याल्लःकर्म्मणि चेत्यस्योदाहरणीयत्वप्रतीतेस्त-द्विरुद्धमाशङ्क्य, लः कर्मणि चेत्यत्र कर्तृकर्मवाचिपरशब्दाभावेन परसप्तमीन्वायोगाद्वाच्य-सप्तमीत्वायगतेस्तदेवोदाहरणीयं भाष्ये तु कर्त्तरि शबिति सूत्रे कर्तृशब्दस्याशब्दस्या शब्दवाचित्वेन सार्वधातुके यगिति पूर्वसूत्रस्थेन सार्वधातुकशब्देनानुवर्त्तमानेनापि सामाना-धिकरण्यायोगाल्लः कर्मणिति सूत्रविरोधात्कर्त्तरि वाच्ये शबितिव्याख्यानायोगेपि कर्त्तरि वाच्यं यत्सार्वधातुकं तस्मिञ्छबित्यवयवः प्रयोक्तव्य इत्येकैर्व्याख्यानात्, अन्येस्तु तस्मिन्निति निर्दिष्टेपूर्वस्येति सूत्रपरिभाषितपरसप्तमीत्वसम्भवे क्लिष्टव्याख्यापादकवाच्य-सप्तमीत्वायोगं मत्वा, कर्तृशब्दस्यानर्थक्यतदङ्गन्यायेन कर्तृवाचिशब्दवाचित्वमङ्गीकृत्य सार्वधातुकशब्दसामानाधिकरण्येन व्याख्यानात्पक्षद्वयेपि कर्तुः सार्वधातुकाख्यप्रत्ययार्थ-त्वद्योतकत्वेन कर्त्तरि शबिति सूत्रमुदाहृतमिति सूचयितुमाह—**तत्रेति**। अनेन च सार्व-धातुके यगितिसूत्रेपि चिण् भावकर्म्मणोरितिं पूर्वसूत्रस्थस्य भावकर्म्मशब्दस्यानुवर्त्तमानस्य भावकर्मणोर्वाच्ययोर्यत्सार्वधातुकं तस्मिन् यगित्यवयवः प्रयोक्तव्य इत्येकेषां, भावकर्म-वाचिनि सार्वधातुके परत्रावस्थिते यगित्यन्येषां व्याख्या सूचिता। सार्वधातुके यगिति सूत्रे च भावकर्मणोरिति शब्दद्वयानुवृत्तावपि प्रकृतानुपयोगाद्भावशब्दानुवृत्तिमुपेक्ष्य कर्मशब्दमात्रानुवृत्तिप्रदर्शनार्थं कर्मणि यगित्युदाहरणं भाष्याकृतोक्तं न त्वेतत्सूत्रमिति। लः कर्मणीति सूत्रावयवे सूत्रोक्त्या कर्मणः प्रत्ययार्थत्वोक्त्यै सूत्रमेतदेव न तु कर्मणि यगितीदृक्सूत्रमस्तीत्येवं परिसंख्यारूपेण सूचितत्वात् कर्मणीति भाष्यावयवो न व्याख्यातः तस्मादित्याशङ्कोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**।

उच्यत इति परिहारभाष्यं व्याचष्टे—**तदिति**। श्लोकं व्याचष्टे—**तत्र नामेति**। गौणलाक्षणिकयोरपि स्वाभाविकार्थपरत्वाख्यसाधुत्वसद्भावान्न साध्वसाधुविवेकविषय-त्वाद्व्याकरणस्य वाचकावाचकविवेकविषयत्वापत्त्या वाच्यावाच्यविवेकविषयत्वापत्तिः॥ आगमस्य न्यायविषये तात्पर्याभावात्तद्विषयत्वाभावेऽपि न्यायविरुद्धार्थाभिधायित्वात्तद्बाधकत्वं भविष्यतीत्याशङ्क्य तात्पर्यं विनाऽऽगमस्य प्रामाण्याभावाद्बाधकत्वायोगमाह—**न चेति**। न्यायस्य वाच्यगम्यमानविषयत्वेन सर्वस्वसंवेद्यत्वादतद्विषयत्वनिमित्ते दौर्बल्ये निरस्येप्य-लभ्योर्थो वाच्यः, अन्यलभ्यो गम्य इति न्यायस्य सामान्यविषयत्वात्कर्त्तान्यलभ्योऽपि वाच्य इति विशेषविषयेणागमेन बाधोपपत्तिमाशङ्क्य, सामान्यविषयस्यापि न्यायस्य न्याया-

पेक्षत्वेनमन्थरात्पौरुषेयागमाच्छीघ्रं प्रवृत्तेः प्रत्यक्षस्येवानुमानादिना बाधायोगसूचनार्थं प्रत्यक्षवदित्युक्तम् ॥ आचार्याणामाप्तत्वात्तद्धारणात्तद्वाक्यानामप्रामाण्यायोगमाशङ्क्य आप्तवाक्यस्यापि स्तुत्याद्यर्थस्य स्वरूपार्थे प्रामाण्यादर्शनात्तात्पर्यशून्यार्थे प्रामाण्यायोगमाह—**तेनेति** ।

अभ्युपेत्यवादत्वं चास्य परिहारस्य द्योतयितुं यद्यपि तावदित्युक्तम् । अपि चेति वास्तवपरिहारभाष्यं व्याचष्टे—**त्विति** । लः कर्म्मणि चेति प्रत्यक्षाचार्योक्तिश्रुतेस्तदपवादायोगशङ्कार्थं नन्विति भाष्यं व्याचष्टे—**नन्विति** । नासावित्यादित्रापरं वचनमित्यन्तं परिहारभाष्यं तात्पर्यतो व्याचष्टे—**सत्यमिति** । एकदेशालोचनमात्रेण शास्त्रविरोधोद्भावनस्याशक्यत्वं प्रश्नपूर्वमुपपादयति—**कुतइति** । स्वैरात्मीयैरेकदेशान्तरैः सहैकवाक्यभूतानि सन्ति युक्तम् सम्पूर्णमुपदेशं कुर्वन्तीतीत्थंभूतलक्षणार्थमेकवाक्यतयेति तृतीयामङ्गीकृत्य व्याख्येयम् । ततश्चैकदेशस्यापरिपूर्णत्वेनाप्रामाण्यात्तद्विरोधो नोद्भावनीय इत्याशयः । न केवलमेकदेशस्याप्रामाण्यात्, तद्विरोधो नोद्भावनीयः, किं त्वनिष्टापत्तेरपीत्याह—**यदीति** । यदि चेति चकारोध्याहार्यः ।

सुरा पातव्येत्येतावतो वाक्यत्वाभावेनाशास्त्रत्वात्तद्विरोधायोगेऽपि लः कर्मणि चेत्येतावतः—

स्वार्थबोधासमाप्तानामङ्गाङ्गित्वाद्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः सहत्य जायते ॥

इत्यनेन न्यायेन वाक्यान्तरैकवाक्यत्वेऽपि वाक्यत्वसद्भावात्तद्विरोधोद्भावनोपपत्तिमाशङ्क्योत्सर्गरूपस्याग्निहोत्रादिवाक्यस्य 'दीक्षितो न ददाति, न जुहोति; न पचतीत्याद्यपवादादिरूपवाक्यान्तरैकवाक्यत्वेऽपि केवलस्य शास्त्रत्वानपह्नवात्तद्विरोधापत्तिरित्यनिष्टापत्युदाहरणान्तमाह—**तथेति** । व्याकरणेऽपि' क्ङिति चेत्येपपवादरूपवाक्यान्तरैकवाक्यत्वानपेक्षोत्सर्गरूपगुणवाच्यमात्रालोचनेऽनिष्टापत्तिः स्यादित्याह—**व्याकरणेपीति** । एकदेशालोचनमात्रेण शास्त्रविरोधोद्भावनायोगमुपपादितमुपसंहरति—**तस्मादिति** । सर्वाण्येव हि शास्त्राणीति श्लोकोपक्षिप्तमेकदेशस्यापरिपूर्णत्वेनाप्रामाण्यं वृद्धश्लोकेन द्रढयति—**आह चेति** । समस्तां शास्त्रावयवोपसंहृत्ति विना तात्पर्यानवधारणादनवधारिततात्पर्यानवधारणादनवधारिततात्पर्यस्य च शब्दस्य प्रामाण्यार्हज्ञेयपरिच्छेदकविज्ञानानुत्पादकत्वादपरिपूर्णेन शास्त्रैकदेशेनातात्विकोऽर्थः प्रतीयेत समस्तावयवोपसंहृतौ सत्यां परिपूर्णेन शास्त्रेण तात्त्विक इत्यर्थः ।

व्याकरणे तु विशेषतो नैकदेशेन तात्त्विकोर्थः प्रतीयते इत्याह—**विशेषेण स्त्विति** ।

विशेषहेतुमाह—**तत्र हीति** । अतो लः कर्मणि चेत्यागमस्यैकदेशान्तरैः पूर्णस्य योर्थः, तद्विरोधः कर्त्रनभिधानन्यायं बाधेत । न चासावस्तीत्याशयत्वेन भाष्यव्याख्यामुपसहरति—**तेनेति** । कियद्भिरेकदेशान्तरैर्लः कर्मणीति प्रत्ययविधिः परिपूर्णो भवतित्यपेक्षायामाह—**इह चेति** । प्रत्ययकार्यपरत्वादिसिद्धये प्रत्ययसंज्ञाधिकारकसूत्रं, स्थाननियमार्थं

परत्वसूत्रं, सामान्यविशेषाभ्यां स्वरनियमायाद्युदात्तानुदात्तसूत्रे, प्रकृतिसूचनार्थं धातुसूत्रं, माङि लुङित्यादौ लकारस्योपपदविशेषं निमित्तीकृत्य विधानात्तृतीये धात्वधिकारे सप्तमीनिर्दिष्टस्योपपदसंज्ञासूत्रं, लकारविधेर्वचनसूत्रैकवाक्यत्वाभ्युपगमे लकारादेशत्वात्तिङामिवशतृशानजादीनामपि संख्यावाचित्वशङ्का शत्रादीनां कृत्संज्ञाविधायकलकारार्थमनपेक्ष्य स्वातन्त्र्येण कर्तृरूपार्थविधौ तिङामिव कृतां वचनसंज्ञाभावेन वचनसूत्रैकवाक्यत्वायोगान्निवर्त्तयितुं प्रसङ्गात्कृत्संज्ञासूत्रं पठितम् । विशेषविहितानां प्रत्ययानां नित्यं सामान्यविहितप्रत्ययबाधकत्वे प्राप्ते तृतीय धात्वधिकारविहितानामसरूपाणामस्त्रीविषयाणां च पाक्षिकबाधकत्वोक्त्यै वासरूपसूत्रे, लकारविशेषस्यार्थविशेषविध्युपलक्षणार्थं वर्त्तमानसूत्रं' लकाराणामर्थविधौ कर्त्तरीत्यनुवृत्तिसिद्धयै कृत्सूत्रपाठः । सर्वकर्मकाकर्मकधातुपराणां लकाराणां व्यवस्थायार्थविध्यर्थं लसूत्रं, लकारस्यादेशद्वारा वाचकत्वोक्त्यै लस्येति सूत्रम् । तिप्तस्झिसिप्थस्थमिब्वस्मसतातांझथासाथांध्वमिड्वहिमहिङित्यादेशसूत्रं तिबाद्युक्त्या लक्षितम् ॥ आत्मनेपदसंज्ञका लकारादेशाः केभ्यो धातुभ्यः, कस्मिन् वा विषये भवन्तीत्यपेक्षिते, नुदात्तेभ्योङकारेभ्योवाऽऽदिशब्दाद्भावकर्मादिविषयेऽन्येभ्योऽपि धातुभ्यः इत्युक्त्यर्थान्यनुदात्तङित आत्मनेपदमित्यादीनि । [सर्वाणि सूत्रलक्षितानि परस्मैपदसंज्ञकानां लकारादेशानां धातुविषयोविवेकोक्त्यर्थानि] शेषसूत्रप्रभृतीनि सर्वाणि सूत्राणिः शेषसूत्रपाठेनोपलक्षितानि । मध्यमोत्तमप्रथमपुरुषसंज्ञकानां लकारादेशानां विषयविवेकोक्त्यर्थानि युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः, प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च, अस्मद्युत्तमः, शेषे प्रथम, इति चत्वारि सूत्राणि युष्मदित्यनेन लक्षितानि । नवसु परस्मैपदेषु, नवसु चात्मनेपदेषु मध्ये त्रयाणामाद्यानां प्रथमसंज्ञां, मध्यमाणां मध्यमसंज्ञां अन्त्यानामुत्तमसंज्ञां, विधातुं तिङ्सूत्रं, एकैकस्य क्रमेणैकवचनादिसंज्ञाविध्यर्थं तानीतिसूत्र वाच्यसंख्याविशेषोक्त्यै बहुद्विसूत्रे, इत्येतावता लकाराख्यप्रत्ययविधिः परिपूर्यंत इतीतिकरणान्वयः । ततश्चैतावातामेकवाक्यत्वान्न लः कर्मणि चेत्येतावन्मात्रालोचनेन विरोधोद्भावनं युक्तमित्याशयः । अस्माद्धातोरेतदुपसर्गाद्यन्वितादेतदर्थवाचिनोऽयं प्रत्ययो भवतीत्यनेन रूपेण प्रत्ययविधावेतावता पूर्णेऽपि कीदृगसौ प्रयोज्य इति प्रयोक्तव्यप्रत्ययरूपविधेर्लोपादिसूत्रापेक्षत्वाल्लोपादेश्चेत्संज्ञादिसूत्रापेक्षत्वात्तेषामपि प्रत्ययविध्येकवाक्यत्वावगतेः पूर्वोदाहृतसूत्रैकवाक्यता निःसंदिग्धैवेत्याह—**पराणि चेति** । उपदेशेऽजनुनासिक इत्यादीनि संज्ञारूपेणाऽऽद्यन्तौ टकितावित्यादीनि परिभाषारूपेणादिशब्दाद्व्यत्ययो बहुलमित्यादीनि बाहुलकरूपेण प्रवर्त्तमानानि शास्त्राणि तस्य लोप इत्यादीनि लोपशास्त्राणि, लिङः सीयुडित्यादीन्यागमशास्त्राणि । सेह्यंपिच्चेत्यादीनि वर्णविकारशास्त्राण्यादिशब्दात्कृतेराद्यन्तविपर्ययश्चेत्यादीनि वर्णविपर्ययशास्त्राणि । तत्रैवमित्यादि कर्मणि चेत्यन्तं भाष्यमुपपादयितुं सामान्यन्यायं तावदाह—**एकवाक्यता चेति** ।

एकेषां सामानाधिकरण्येन विशेषणविशेष्यभावः, केषां वैयधिकरण्येनेत्यपेक्षायां समानविभक्त्यन्तानां सामानाधिकरण्येनेति, विशेषणेनार्थाद्भिन्नविभक्त्यन्तानां वैयधिकरण्ये-

नेति सूचितम्। वैयधिकरण्येऽत्यन्तभिन्नार्थत्वाद्विशेषणविशेष्यत्वायोगमाशङ्क्यात्यन्तभिन्नस्य विशेष्ये स्वानुरूपबुद्धिजनकत्वाख्यविशेषणत्वायोगेऽपि कारकानवच्छिन्नायाः क्रियायाः शेषानवच्छिन्नस्य च शेषित्वस्य निरूपणाशक्तेः क्रियाकारकयोः शेषिणोश्चावच्छेद्यावच्छेदकत्वाख्यविशेषणविशेष्यत्वोपपत्तिसूचनार्थं वैयधिकरण्येन विशेषणविशेष्यभावस्य द्वैरूप्योक्तिः। विशेषणविशेष्यत्वं विनैकवाक्यत्वासिद्धौ सामान्यविभक्त्यन्तानां च सामानाधिकरण्येन विशेषणविशेष्यत्वे सर्वेषामेकवाक्यत्वेनाभिमतत्वात्समानविशेषणविशेष्यत्वसामानाधिकरण्ययोर्वाच्यत्वापत्तेर्न्यूनत्वं भाष्यस्याशङ्क्याह—**तदिहेति**।

तत्र नैवं भवतीति प्रतिपक्षनिरासार्थेन भाष्यावयवेन युक्तायुक्तचिन्ता हृदि कृतेति सूचनायोच्यत इति वाच्ये चिन्त्यत इत्युक्तम्। बह्वादिशब्दानां संख्याविशिष्टसंख्येयवाचित्वादेकत्वविशिष्टे कर्त्तरि द्वित्वविशिष्टयोः कर्त्रोर्बहुत्वविशिष्टेषु कर्तृष्विति सामानाधिकरण्येन विशेषणविशेष्यतयैकवाक्यत्वेऽपि कर्त्तरि लकारश्रुतिरापद्येतेत्याशङ्कानिरासार्थं बह्वादिशब्दानां संख्यामात्रवाचितां विस्तारेणोपपादयितुमारभते—**तत्र तावदिति**। महाभाष्येपि प्रश्नपूर्वं संख्येयवाचित्वमुपक्रम्य शब्देषु बहुषु वचनमित्युच्यमाने वृक्षा इत्येकशेषे शब्दैक्याद्बहुवचनं न प्राप्नोति प्रातिपदिकार्थेष्वित्युच्यमाने वैयाकरणपक्षे जात्यभावादवयवातिरिक्तावयव्यभावाच्चावयवानामेव वृक्षादिप्रातिपदिकार्थत्वात्तद्बहुत्वात्सर्व्वत्र बहुवचनं प्राप्नोति। विभक्त्यर्थपक्षोपि कर्मादीनामेकत्वादिविशेषणत्वेनोपादानाद्विभक्त्यर्थत्वानुपपत्तेरयुक्तमिति संख्येयपक्षे दोषाभिधानात्संख्यावाचिताऽवधारितेत्याह—**पातञ्जलेपि चेति**। न केवलं पक्षान्तरेषु दोषाभिधानान्महाभाष्ये संख्यावाचित्वावधारणं गम्यते, किन्त्वेकत्वादिष्वपि विभक्त्यर्थेष्ववश्यं कर्मादयो निमित्तत्वेनोपादेयाः, कर्मण एकत्वे कर्मणो द्वित्वे कर्मणा बहुत्व इत्युत्तरभाष्ये बह्वादिशब्दविकरणादपीत्याह—**बहुत्व इति**।

स तर्हि तथा निर्देशः कर्त्तव्यो न ह्यन्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देश इत्याशङ्कां चान्तरेणापि भावप्रत्ययं गुणप्रधानो भवति निर्देश इति [भाष्येण निरस्यति—**कथमिति**। पृष्टे यदा गुणिना गुणो व्यपदिश्यते, पटस्य शुक्ल इति स्वप्रधानस्तदा गुणो न भवति, द्रव्ये षष्ठ्यन्तर स्यापि भावप्रत्यये गुणप्रधानो भवति निर्द्देश इति] व्युत्पादनादपि महाभाष्ये संख्यावाचित्वावधारणं गम्यत इति सूचयितुमाह—**कथमिति**। कथं व्याकृतमित्यपेक्षायामिह कदाचिद् गुणो गुणिविशेषको भवति। तद्यथा पटः शुक्ल इत्यादिसमस्तं माहाभाष्यं व्याख्यातुं गुणविवक्षायास्त्रैविध्यं तावदाह—**तथा हीति**। तत्राद्यायां विधायां गुणशब्दस्य द्रव्यशब्दसामानाधिकरण्याभावेन प्रागेव निष्कृष्टत्वाद्, द्वितीयायां सामानाधिकरण्येऽपि निष्कर्षस्याविवक्षितत्वान्निष्कर्षकारिभावप्रत्ययानपेक्षा तृतीयायामेव तूपसर्जनत्वविवक्षया गुणशब्दस्य द्रव्ये निवेशलक्षणं सामानाधिकरण्यं विवक्षित्वा निष्कर्षस्य विवक्षितत्वाद्भावप्रत्ययापेक्षेति विवेकमाह—**यत्रेति**। प्रागेव स्वप्राधान्यविवक्षायामपि गुणस्य वस्तुतो द्रव्योपसर्जनत्वात्तच्छब्दस्य द्रव्ये निवेशापत्तेर्निष्कर्षकारिभावप्रत्ययापेक्षणा-

देतद्भाष्यमयुक्तमाशङ्क्य, शाब्दे व्यवहारे वास्तवोपसर्ज्जनत्वादनादराशयेनोपपादयति— **स्वप्राधान्येति**।

उपसर्जनत्वानादरेपि संख्यायास्तार्किकप्रसिद्धगुणत्वानपायाद्यद्गुणसद्भावन्निमित्तो द्रव्ये गुणशब्दनिवेशः तस्य गुणस्य निष्कृष्याभिधाने त्वतलाविति स्मृतेर्भावे प्रत्ययापत्तिमशङ्क्याङ्गत्वाख्यस्योपसर्जनत्वस्य व्याकरणे गुणत्वप्रसिद्धेः स्वातन्त्र्यविवक्षायामसौ बहुत्वादिवस्तुतो गुणोप्यनुपसर्जनत्वाद् गुणो न भवति। ततश्च गुणद्वारे द्रव्ये तच्छब्दनिवेशायोगात्तदा स्वातन्त्र्यविवक्षाकालेऽसौ गुणः स्वकीयं शब्दं प्रत्ययं वा तद्गुणकस्य द्रव्यस्य सम्बन्धितया न भावयतीति कृत्वा भावकत्वनिमित्तभावत्वाभावान्न भाववाचिना त्वतलादिप्रत्ययेनोच्यत इत्युक्ते गुणशब्दस्य गुणद्वारा द्रव्यनिवेशाभावे च न केवलं भावप्रत्ययस्य भावकत्वाख्यवाच्याभावादनुत्पत्तिः, किंतु निष्कर्षाख्यफलाभावादपीति पूर्वमेवेत्यनेनोक्तम्। बह्वादिशब्दानां स्वप्रधानगुणवाचित्वे पटस्य शुक्ल इतिवत्संख्येये कर्त्तरि कर्मणि वा नित्यं षष्ठ्यापत्तेः कर्त्तर्येकस्मिन्निति सामानाधिकरण्यायोगं शङ्कते—**तदा तर्हीति**। उत्सर्गतः षष्ठ्यापत्तावपि गुणोपसर्जनस्य प्रधानद्रव्यविवक्षायाया द्रव्यशब्दस्य प्राधान्यात्, तदनुरोधेन द्रव्यशब्दसामानाधिकरण्यवद् गुण्युपसर्जनगुणविवक्षायां गुणशब्दस्य प्राधान्यात्, तदनुरोधेन गुणशब्दसामानाधिकरण्यं कादाचित्कमविरुद्धमिति परिहरति—**सत्यमिति**। ततस्तल्लक्षितव्यक्तिक्रियासम्बन्धचोदनाजातिव्यक्त्योरभेदो वाक्यार्थेषु विवक्षित इति जातिगुणशब्दानां द्रव्ये लक्षणयाऽभेदविवक्षया वाऽऽवृत्त्यभ्युपगमाद् गुणशब्दस्य द्रव्यशब्दानुरोधवृत्तित्वेऽपि गुणिशब्दानां गुणे वृत्त्यभावाद् गुणिशब्दस्य गुणशब्दानुरोधवृत्तिता न युक्तेत्याह—**तुल्यो हीति**। लक्षणाऽभेदविवक्षोपपत्तिमात्रात्सामानाधिकरण्ये द्रव्यशब्दानुरोधेन सामानाधिकरण्यवद्, गुणशब्दानुरोधेनापि सामानाधिकरण्यस्याऽर्थप्रकरण्यानपेक्षत्वाच्छीघ्रं प्रतिभानापत्तेराश्रितरूपार्थवाचित्वस्याश्रयभूतार्थवाचिशब्दानुरोधवृत्तित्वे हेतुत्वावगमाद् गुणिनश्च गुणानाश्रितत्वाद् गुणिशब्दस्य गुणशब्दानुरोधेने [त्याशङ्क्याभेदविवक्षाहेतोस्तादात्म्यस्य, लक्षणाहेतोर्वाअविनाभावस्य, द्विविधेपि] सामानाधिकरण्यायोगमाशङ्क्य, रूपादिशब्दानामाश्रितरूपार्थवाचित्वे यथाऽऽश्रयभूतार्थवाचित्वादर्शनाल्लक्षणाभेदविवक्षाव्यवस्थापकशक्तिकल्पकसमानाधिकरण्यप्रयोगप्राचुर्याभावाच्च गुणिशब्दस्य गुणशब्दानुरोधेन सामानाधिकरण्यस्य शीघ्रमप्रतिभानोपपत्तेराश्रितरूपार्थवाचित्वस्य हेतुत्वनिराससूचनार्थं यद्यप्यभेदोपचारलक्षणाहेतुर्द्विविधेपि सामानाधिकरण्ये तुल्यः स्तथापि गुणिशब्दस्य गुणशब्दानुरोधेन सामानाधिकरण्यप्रयोगस्याप्राचुर्यान्नैतत्सामानाधिकरण्यम्। गुणशब्दस्य गुणिशब्दानुरोधेन सामानाधिकरण्यवच्छीघ्रं प्रतिभाति। अर्थप्रकरणवशात्तु कथं चिदापद्यमानोऽयं प्रयोगो अभेदोपचारलक्षणाहेतुतुल्यत्वन्यायेनानुसर्त्तव्यतयोक्त इत्याह—**तथापि त्विति**। स्वप्राधान्यविवक्षायां गुणस्य द्रव्यपरतया, स्वकीयशब्दप्रत्ययभावकत्वाभावेन भावत्वाभावान्महाभाष्यस्थाया गुणप्रधान इति गुणोक्तेर्भावोक्त्या व्याख्यामयुक्तामाशङ्क्य स्वकीयां भावोक्ति योग्यत्वाशयतया व्याख्यामयुक्तामाशङ्क्य स्वकीयां भावोक्ति योग्यत्वाशयतया व्याचक्षाण

उपसंहरति—**तस्मादीति**। द्व्येकयोरिति द्विवचनान्यथानुपपत्त्यापि संख्याप्रधानताऽवसीयत इत्याह—**एवं चेति**। अन्यथानुपपत्तिमुपपादयति—**अन्यथा हीति**। अन्वयमुखेन श्लोकं व्याचष्टे—**संख्यानेति**। भावप्रत्ययेन कृत्वा स्पष्टं संख्याप्राधान्यं कस्मान्न निर्दिश्यत इति पृच्छति—**कस्मात्पुनरीति**। परमतेन तावदुत्तरमाह—**वक्रिति**।

सूत्रकृतो निराशयत्वापत्तेरेतदुत्तरापरितोषात्स्वमतेनोपयुज्यमानातिरिक्तत्वाख्ये वैपुल्ये, परिमाणविशेषात्मके वा महत्वे बहुः समुद्र, इत्यादौ बहुशब्दवाच्यत्वेनावगते, त्रिप्रभृतीनां च परार्द्धपर्यन्तानां द्वित्वातिरेके सामान्यरूपे त्रिप्रभृतिषु बहुशब्दप्रवृत्तिनिमित्ते बहुवचनापत्तेः केनापि प्रकारेण द्वित्वातिरिक्तसंख्यावाच्येव बहुवचनं स्यादित्येतदर्थं भावप्रत्ययं त्यक्त्वा बहुष्वित्युच्यते इत्युत्तरं 'बहुषु बहुवचन'मित्येतदेव ज्ञापयत्याचार्यो नानाधिकरणवाची यो बहुशब्दः तस्येदं ग्रहणं। न वैपुल्यवाचिन इति महाभाष्यसूचितमाह—**अथवेति**। वैपुल्यमहत्वयोर्वैकल्पिकत्वेन वाच्यद्वित्वानापादकत्वात्तयोरिति द्वित्वातिरेकसामान्येन सह द्विवचनाविरोधः। बहुष्वित्यप्युक्ते कथं संख्यावाचित्वनियमावधारणेत्यपेक्षायां, भेदा भिद्यमाना भूता निबन्धनमाश्रयो यस्याः सा भेदनिबन्धनेति नानाधिकरणत्वं हेतुगर्भं संख्याविशेषणकृतम्। वैपुल्ये महत्वे चैकैकाश्रयाश्रितत्वेनाश्रयबहुत्वादपि बहुवचनानुपपत्तेः संख्यायां त्वाश्रयबहुत्वाद् बहुवचनोपपत्तेर्बहुवचनान्तस्य बहुशब्दस्य संख्याविषयत्वावगमादित्याशयः। वाच्यान्तरपक्षे बहुवचनानुपपत्तिं द्रढयितुं यत एव संख्यावाचितां विना बहुवचनं नोपपद्यते, तत एव वैपुल्यमहत्ववाचिन्येकवचनं प्रसिद्धमित्याह—**अतश्चेति**। इह चेत्येके मन्यन्ते, तदेके न मन्यन्त इति परत्वादेकवचनं प्राप्नोतीति महाभाष्येण वचनसूत्रस्थानां बहुद्व्येकशब्दानां संख्याप्राधान्यपक्षे तदेके मन्यन्त इत्यादिप्रयोगेप्येकत्वप्राधान्यापत्तिं मत्वैकवचनप्रसंगस्य चोदितस्य, द्व्येकयोरिति संख्याप्राधान्यद्योतकद्विवचनाभावेनेह संख्याप्राधान्याभावान्नैकवचनापत्तिरिति परिहारसंभवेप्येकशब्दोऽयं बह्वर्थं इत्युपक्रम्य तद्योत्यार्थे वर्त्तते, तस्यैव प्रयोग इति महाभाष्येण वस्तुतोऽन्यवाचित्वेन परिहारोक्तिरेकशब्ददृष्टान्तेन बहुशब्दस्यानेकार्थत्वदृढीकरणार्थेति सूचयितुमाह—**यस्त्विति**। बह्वादिशब्दानां संख्यामात्रवाचितामुपपादितामुपसंहरति—**तस्मादिति**।

एवमुक्तेन प्रकारेण बह्वादिशब्दानां संख्यामात्रवाचित्वे सति लः कर्मणि चेत्यस्य वचनसूत्रैकवाक्यतायाः कर्त्तरि लकारश्रुतिनिरासकत्वोपपत्तेरेकवाक्यत्वसिद्धयर्थस्य विशेषणविशेष्यत्वप्रकृतागमविरोधपरिहारोपयोगित्वादनयोः कर्त्रेकत्वयोरन्योन्यान्वयानपेक्षस्तिपान्वयो विशेषणविशेष्यत्वापन्नयोर्वा कर्त्रेकत्वयोस्तिपान्वय इति विशेषणविशेष्यत्वचिन्ता युक्तेति बह्वादिशब्दानासंख्यामात्रवाचित्वोपपादनस्य विशेषणविशेष्यत्वचिन्ताकर्त्तव्यत्वसिद्धयर्थत्वं सूचयितुमाह—**एवं सतीति**। एकस्मिन्नित्यस्यैकवचन मात्रविषयत्वात्कर्त्तरीत्यस्य च लकारमात्रविषयत्वाद्विषयैक्याभावेन विशेषणविशेष्यत्वायोगमाशङ्क्य तिङ्विधान इत्यादिनैकतिङ्विषयतोक्ता। प्रतिपक्षनिरासार्थं तत्र नित्यं भवतीति भाष्याविषयं व्याचष्टे—**न तावदिति**। प्रश्नपूर्वमुपपादयति—**कुत इति**। श्लोकं व्याचष्टे—

**यदि हीति**। कः प्राद्गोतीत्यपेक्षायां तिविधानसमासान्निष्कृष्य तिबितिवाच्यम्। विशेषण-विशेष्यत्वापन्नयोस्तिवन्वयोवत्यर्थं कथं तर्हीति भाष्यवयवं व्याचष्टे—**तस्मादिति**।

एकशब्दस्य संख्याप्राधान्यात्सामानाधिकरण्यनिर्देशायोगमाशङ्क्य, सौत्रैकविभक्त्यन्तत्वालोचनात् सामानाधिकरण्यनिर्देशोपपत्तिमाह—**सचेति**। सामानाधिकरण्येन विशेषण-विशेष्यत्वे व्याख्याभावे षष्ठ्ययोगमाशङ्क्य लक्षणावृत्त्याशया, विभक्तिविपरिणामाशया वा षष्ठीति सूचयितुमाह—**तत्रापीति**। द्वयोः श्रौतत्वायोगो लक्षणावृत्तौ हेतुः। लक्षणा-शब्देनाभेदोपचारोऽप्युपलक्षितः एकस्य लक्षणावृत्तौ कर्तृशब्दस्यैव सा नैकशब्दस्येति कथमवधारणेत्याशङ्क्याह—**सामानाधिकरण्ये तावदिति**। अस्मिन् पक्षे षष्ठी न युक्तेत्या-शङ्क्य, समानाधिकरण्योक्त्या विवक्षितं कर्तृसम्बन्धरूपमर्थं मुख्यवृत्या दर्शयितुं षष्ठी प्रयुक्तेत्याह—**ततश्चेति**। वस्तुगत्या कर्तुः संख्यां प्रत्युपसर्जनत्वाभावेऽपि शब्दार्थवृत्योप-सर्जनत्वात्तत्रैव षष्ठी युक्तेति सूचनायोपसर्जनोक्तिः।

विपरिणामपक्षोपपादनपूर्वं कर्तृशब्द एव विभक्तिविपरिणामो युक्तो नैकशब्द इत्युप-पादयति—**अथवेति**। एकविभक्त्यन्तत्वे सम्बन्धानवक्लृप्तौ षष्ठ्यभावे हेतावुक्ते देवदत्त-यज्ञदत्तौ गच्छत इत्यादौ षष्ठ्यभावेपीतरेतरयोगादिसम्बन्धदर्शनाद्व्यभिचारमाशङ्क्य, विशेषणविशेष्यस्वरूपत्वं सम्बन्धविशेषणमेवंजातीयकोक्त्या कृतम्। अनेकस्मिन् कर्त्तरि-कारकान्तरस्थे चैकत्वेति योऽप्राप्तिरभिप्रेतोऽर्थो द्व्येकयोरिति द्विवचनान्यथानुपपत्तिलक्षणेन न्यायेन संख्यान्यस्य प्राधान्येऽपि 'द्वादशाहीनस्येत्या'दिवत्षष्ठी कस्मान्न भवतीत्याशङ्क्या-हीनादेर्वस्तुतः प्राधान्येऽपि व्याकरणे वास्तवस्याङ्गप्रधानत्वस्याविवक्षितत्वाच्छब्दार्थवृत्या तूपसर्जनत्वात्षष्ठी युक्ता। संख्यायास्तु शब्दार्थवृत्यैव प्राधान्यान्न युक्ता षष्ठीति परिहार-सूचनार्थं—**नित्यं चेत्युक्तम्**। अर्थान्तरापत्तेरपि नैकशब्दे विभक्तिविपरिणामो युक्त इत्याह—**दूरापगतश्चेति**। अर्थान्तरापत्तिं विवृणोति—**यदि हीति**। सत्यमुदाहृतमित्यादिवार्त्तिको-मागमविरोधपरिहारमुहसंहरति—**तस्मादिति**।

एवमित्यादिभाष्यशेषग्रहणायादिशब्दैः शास्त्रेणानुगत इति वक्ष्यमाणत्वाच्छास्त्रार्थे दर्शिते इत्यवगतेः कर्तुरित्यादिभाष्येण शास्त्रार्थे दर्शित सत्येकवादय एव वाच्यतया शास्त्रेणानुगता इति कृत्वा कर्तृकर्मणोर्वाच्यत्वापह्नवस्य नागमविरोधइत्यर्थः। विशेषण-भूतयोः कर्तृकर्मणोरवाच्यत्वेऽपि तद्विशिष्टानामेकत्वादीनां वाच्यत्वोपपत्तिः प्रागेवोक्ता। संख्यामात्रस्य प्रत्ययवाच्यत्वोक्त्यर्थत्वेन सूत्रव्याख्यानस्योचितत्वोक्त्यर्थमेव वर्ण्यमान इत्यादिभाष्यमन्यतः प्राप्तः कर्तृकर्मणोरवाच्यतेति लौकिकन्यायानुसारी सूत्रार्थो भवति।

सूत्राक्षराणि च द्व्येकयोरित्येतानि कारकानभिधानमालोच्य संख्याप्रधानमालोच्य संख्याप्रधानत्वेन नीयमानानि लोकप्रसिद्धिविपरीतान्योन्यसम्बन्धसंख्याकारकमात्रवाचित्वा-पत्तिपरिहारार्थं विशेषणविशेष्यतोचितेति न्यायमनुगतानि भवन्तीत्येव तावद्व्याचष्टे—**एवं चेति**। आद्येनैव वा भाष्यवयवेन विशेषणविशेष्यत्वन्यायानुगततोक्तेत्यन्यथा व्याचष्टे—

**लौकिकमिति** । स्वातन्त्र्योक्तिव्याख्यार्थेतरेतरनिरपेक्षोक्तिः । सूत्राक्षराणि चेति भाष्यावयव-स्तर्हि गतार्थः स्याद्व्याकरणसंप्रदायागतविशेषणविशेष्यत्वे व्याख्याप्रकाराख्यन्यायानुगत-त्वागमोपि चेत्युत्तरभाष्येण गतार्थः स्यादित्याशङ्क्य, संप्रदायगतन्यायानुगतान्यपि सूत्राक्षरा-ण्येवमेव वर्ण्यमाने भवन्ति, नान्यथेत्यपिशब्दार्थस्य च शब्दस्योत्कर्षमङ्गीकृत्य परिसंख्यार्थ-त्वेन व्याचष्टे—**न केवलमिति** । स्वातन्त्र्येण लक्षणसूत्रव्याख्यानेन केवलं लोकप्रसिद्धि-विपरीतग्राही सूत्रार्थः स्यात्किं तु व्याकरणगोत्रेण योनुसृतो न्यायो व्याख्याप्रकारः तेनाप्यपेतानि वर्जितानि सूत्राक्षराणि स्युरित्यर्थः व्याख्याग्रन्थानुगतत्वस्योत्तरभाष्ये वक्ष्यमाणत्वग्रन्थकारातिरिक्तव्याख्यातृगतव्याख्याप्रकारानुगतत्वोक्त्यर्थत्वेऽर्थपौनरुक्त्यसूचनार्थं विशेष्यतया लक्षणव्याख्याने सूत्रार्थस्य कर्तृकर्मविशिष्टसंख्यावगत्याख्यलौकिकन्यायानुगव-त्वात्संप्रदायागतविशेषणविशेष्यत्वव्याख्याप्रकाराख्यमपि च न्याय सूत्राक्षराणामनुगतत्वा-त्सर्वं न्याय्यं भविष्यतीत्युक्तम् । आगमोऽपि चेति भाष्यं पूर्वभाष्यस्य द्वितीयव्याख्याने व्याख्यातृगतव्याख्याप्रकारमूलोक्त्यर्थत्वेन स्पष्टत्वादव्याख्याय, आद्यव्याख्यायां शङ्कोत्तरत्वेन व्याख्यातुमवतारयति—**तत्रेति** । व्याचष्टे—**द्वाभ्यामपीति** ।

एकत्वादिषु विभक्त्यर्थेषु कर्मादिविशेषणस्य किं प्रयोजनमित्यपेक्षायां कर्माद्यनपेक्ष्य बहुत्वादिसंख्यामात्रे द्वितीयाबहुवचनाद्यापत्तिनिवृत्तिं प्रयोजनमाह—**इतरथा हीति** । कर्मादय एव तर्ह्येकत्वाद्यनपेक्षा विभक्त्यर्थाः सन्तु, नैकत्वादय इत्याशङ्क्या, अनभिहित इत्यनभिहिताधिकारकरणान्यथानुपपत्त्यैकत्वादिषु विभक्तिविधिः सूत्रकृतोभिप्रेतोऽवसीयत इत्याह—**अनभिहितेति** । एकत्वादीनां विभक्त्यर्थत्वाभावेऽपि कर्मादिषु विभक्तिविधौ तिङाद्यभिहितेष्वपि कर्मादिषु द्वितीयादिविभक्तिप्रयोगापत्तेस्तन्निवृत्तयेऽनभिहिताधिकारोऽर्थो वा भविष्यतीत्याशङ्क्याभिहिताभिधानानार्थक्यापत्त्यैवाप्रसक्तेः पर्युदासानर्थक्यमाह—**अन्यत्रापीति** ।

कटं करोति भीष्ममित्यादौ कटाद्द्वितीयाभिहितेऽपि कर्मणि भीष्मादिद्वितीयात्प्रसक्ति-माशङ्क्य कटद्वितीयया भीष्मादीनां कर्मत्वानभिधानान् तदुक्त्यै भीष्मादद्वितीयाऽर्थवतीति वपैम्यसूचनायऽन्यत्र कटं करोति भीष्ममित्यादिप्रयोगेप्यभिहिते कर्मादौ कटद्वितीयाद्य भावादित्येतावत्युक्तेप्येको द्वौ बहव इति प्रातिपदिकाभिहितेप्येकत्वादावेकवचनादिवत्प्र-सक्तिमाशङ्क्य केवलप्रातिपदिकप्रयोगायोगाद्वचनरहितविभक्त्यभावाच्च कस्मिंश्चिद्वचनेऽ-वश्यप्रोक्तव्येऽनुवादार्थैकवचनादिप्रयोगो युक्तः । कर्मादौ त्वभिहिते प्रातिपदिकार्थमात्रविहित-प्रथमाविभक्तिप्रयोगोपपत्तेर्द्वितीयाद्यप्रसक्तिरिति वैषम्यसूचनायऽन्यत्रैकत्वादावप्यभिहिते वधानाभावादित्युक्तम् । कर्मादिविशिष्टैकत्वादिविभक्त्यर्थप्रक्षे त्वनभिहितानां कर्मादीना-मेकत्वादिषु द्वितीयादय इत्येतदर्थोऽनभिहिताधिकारो, न चैतदनुक्तं गम्यत इत्याह—**अनभिहितानां त्विति** । तिङाद्यभिहितानां कर्मादीनां द्वितीयादिवाच्यत्वायोगेन तद्वाच्यै-कत्वादिविशेषणत्वायोगादनभिहितकर्मादिविशिष्टेष्वेवैकत्वादिषु द्वितीयादय इत्यनुक्तमपि न्यायाद्गम्यत इत्याशङ्क्य,

विशिष्टग्रहणं नेष्टमगृहीतविशेषणम् ।
अभिधानाभिधाने तु न केन चिदिहाश्रिते ॥

इति वार्तिकेनावाच्यस्यापि वाच्यविशेषणत्वोपपत्त्यभिधाना विशिष्टवाचिशब्दवाच्यत्वादरोऽत्यन्तमयुक्तइत्याशयेन परिहरति—**नहीति** । एतच्चैकत्वादिनिरपेक्षकर्मादिविभक्त्यर्थपक्षेऽनभिहिताधिकारानर्थक्यं स्पष्टमेव महाभाष्यकृतोक्तमित्याह—**तदेतदिति** । एकत्वादिविशिष्टकर्मादिविभक्त्यर्थपक्षेप्यनभिहिताधिकारार्थवत्त्वादेकत्वादिनिरपेक्षेषु कर्मादिषु त्वित्यर्थः ।

नन्विति भाष्यं न चेह वयमेकत्वादिभिः कर्मादीन् विशेषयामः । किं तर्हि कर्मादिभिरेकत्वादीन् विशेषयाम इति बहुवचनमहाभाष्येणैकत्वादीनां विशेषणत्वस्य निरस्तत्वात्संख्येयप्राधान्ये च श्लोकयोरिति द्विवचनानुपपत्तिपरिहाराशक्तेर्यदा कर्मादय इत्यस्य पूर्वपक्षोक्तित्वावगमेनानुपन्यसनीयत्वादयुक्तमाशङ्क्य, सिद्धान्तवचनत्वं मत्वाभ्युपेत्यवादत्वेन व्याख्यानायोपन्यासोपपत्तिमाह—**नन्विति** ।

अभ्युपेत्यवादत्वेन यदा कर्मादय इत्यागमव्याख्यार्थमुच्यते इत्यादिभाष्यं व्याचष्टे—**एवमिति** । यदापि वचनमात्रस्थानां बहुद्व्येकशब्दानां संख्योपसर्जनसंख्येयप्रधानत्वेनैकत्वादीनां विशेषणत्वात्कर्मादयो विशेष्यत्वावगतेविभक्तिवाच्याः प्रतिभान्ति, तदाप्येकत्वादय एकविशेषणत्वेनावस्थिता विभक्तिवाच्या इति विभक्त्यर्थपदानृत्याऽऽगमव्याख्यार्थं 'यद्यपि विशेषणमिति भाष्यावयवं व्याख्यातुं कर्मादयो विशेष्यभूताः प्राधान्येन हेतुना विभक्तिवाच्यतयाऽऽलोच्यन्त इत्युक्तम् । विशेषणमेव वाच्यत्वेनाज्ञातं ज्ञाप्यत इत्येवं भाष्यस्थं विधीयतेपदं व्याख्यातुमभिधीयत इत्युक्तम् ॥ यथेति दृष्टान्तभाष्यं व्याचष्टे—**भवति हीति** । विशेषणस्यान्यतोऽसिद्धिर्विशेष्यस्यान्यतः सिद्धिरितीदृश्यामित्यर्थः । यदपि कर्मादयो विभक्तिं प्रति प्रयोजनभूतास्तदाप्येकत्वादय एव विभक्तिवाच्या इत्याचार्यां विभक्त्यर्थपदावृत्तौ प्रयोजनवाक्यार्थशब्दो द्वितीयायां त्वभिधेयवाच्ये वेत्येतदेव भाष्यमन्यथा व्याचष्टे—**अथवेति** । एकत्वादीनां विभक्त्यर्थत्वागमस्तिङ्विषयः, कर्मादीनां विभक्त्यर्थत्वागमः सुब्विषय इति परमतेनान्यथागमद्वयं व्याचष्टे—**यद्वेति** । यथासम्भवं विषयविशेषे निवेशोपपत्त्यर्थमनिर्दिष्टविषयविशेषतोत्सृष्टोक्त्योक्ता कथं पश्चादुदाहृतस्य वचनस्य सुब्विषयत्वावगतिरित्यपेक्षायां, तत्र सुप्सु कर्मादीनां यत्करणाभिधायिन्या तृतीययेत्यादिव्यवहारदर्शनेन विभक्त्यर्थत्वाभ्युपगमादित्युक्तम् । सुप्सु कर्मादीनां विभक्त्यर्थत्वाभ्युपगमजातबलस्तन्यथानुपपत्त्यां तिङ्क्ष्वपि कर्तृकर्मणोर्विभक्त्यर्थत्वापत्तिं पूर्वपक्षी शङ्कते—**ननु चेति** । अभियुक्तव्यवहारविरोधपरिहारावश्यं सुपां कारकवाचित्वस्याभ्युपगन्तव्यत्वद्बाहुवचनादिशास्त्रवैरूप्यायोगाच्च तिङां कारकानभिधायित्वे सुपामपि कारकानभिधायित्वापत्तेस्तिङामप्यर्थापत्त्या कारवाचितावसीयत इत्याशयः । यत्करणाभिधायिन्या तृतीया विभक्त्या संयुज्यारुणिमानयरुणयेतिशब्दो निर्दिशति दस्मादरुणिमा करणमित्याहे (शा० भा० ६७९) त्यरुणाधिकरणभाष्यावयवार्थः यस्मादेकवचनाख्यशब्दागमे सत्येकत्वस्य क्रिया-

न्वयो दृश्यते तस्माच्छब्दवच्छब्दगम्यमेकत्वस्य क्रियाङ्गत्वमुपलभ्यत इत्युक्ते पदश्रुत्यैकत्वस्य प्रातिपदिकार्थाङ्गत्वावगतेर्वाक्यात् क्रियाङ्गत्वायोगमाशङ्क्य यथान्येषां प्रातिपदिकार्थानां विभक्त्युक्तकारकद्वारा विभक्तिश्रुत्या क्रियाङ्गत्वज्ञानं तथैकत्वस्यापीति पश्वेकत्वाधिकरण-सूत्रावयेवन वक्ष्यते पौरुषेयत्वेन व्याकरणस्य प्रमाणान्तरापेक्षत्वात् तदनुसारेण वैरूप्यमपि युक्तमित्याशयेनागमद्वयस्य व्यवस्थितविषयत्ववादिनामेव समाधानमाह—**तत्रेति**। बहु-वचनादिशास्त्रस्यैकरूप्येऽप्यभियुक्तव्यवहारविरोधपरिहारोपपत्तेरेकत्वादिविशेषणत्वागमस्य च पूर्वपक्षोक्तित्वात् अभ्युपेत्यवादमात्रत्वाद्वा तद्वशेनापि सूत्रवैरूप्यकल्पनानुपपत्तेरेतत्समाधाना-परितोषात्स्वमतेनान्यथाव्यवहारविरोधपरिहारं प्रतिज्ञापूर्वमाह—**अथेति**। शास्त्रानुक्त-स्यापि सुप्सु कर्मादीनां वाच्यत्वस्य कर्माद्याश्रितैकत्वादिवाच्यत्वसिद्ध्यर्थमभियुक्तैरिष्ट-त्वान्नाभियुक्तव्यवहारविरोधापत्तिरित्याशयः। शास्त्राश्रितानभिधेयत्वस्य कर्मादेर्वाच्यत्वा-भ्युपगमे शास्त्रविरोधमाशङ्क्य, पारिभाषिकानभिधेयत्वोक्त्यभ्युपगमेन तावत्परिहरति—**शास्त्रे हीति**। परमार्थतश्च कर्मादिवाच्यत्वे शास्त्रस्यौदासीन्यान्न विरोधशङ्काप्यस्तीत्याह—**न च कर्मादय इति**। एतच्च कर्मादीनामेकत्वादिविशेषणत्वं बह्वादिशब्दानां संख्याप्राधा-न्योक्त्या व्याख्यातत्वान्नापन्होतव्यमित्याशयः। ततश्च सुप्स्वपि कर्मादीनां विशेषणत्वस्यैव शास्त्रेणोक्तत्वादेकत्वादिविशेषणत्वागमस्य सुब्विषयत्वोक्तिरयुक्तेति सूचयितुमाह—**तस्मादीति**।

कर्मादिवाच्यत्वोक्तौ शास्त्रस्यौदासीन्ये सुप्सु वाच्यत्वं, न तिङ्क्ष्विति व्यवस्था किंनिबन्धनेत्याशङ्क्य, न्यायव्यवस्थोपपत्तिमाह—**तद्यत्रेति**। शास्त्रेण कर्मादेः सुब्वाच्य-त्वानुक्तौ शक्यत्वधिकरणे द्वितीयायाः कर्मवाचित्वस्य कर्मणि द्वितीयेति शास्त्रोपदिष्टत्वोक्ति-र्विरुध्येतेत्याशङ्क्य, संख्याप्रधानबह्वादिशब्दोक्तसंख्याविशेषणत्वात्कर्मादेः शास्त्रेण श्रुत्या वाच्यत्वानुक्तावप्यर्थाद्वाच्यत्वोक्तिमाह—**अर्थापत्त्या वेति**। न्यायाद् व्यवस्थां विवृणोति—**तत्रेति**। पारिभाषिक्येव चेह कर्मादीनां विशेषणतोच्यते, वस्तुतस्तु कारकविभक्तिभिः कारकस्यैव प्राधान्येनाभिधानाभ्युपगमादन्यथा चैकत्वादेः कारकद्वारा क्रियाङ्गत्वोक्त्य-योगापत्तेः संख्यैव कारकविशेषणमिति द्रष्टव्यम्।

तिङ्क्षु भावनयोपस्थापनात्कारकस्यावाच्यत्वाभ्युपगमे सुप्स्वपि निष्क्रियाकारकायोगेन क्रियावाच्याख्यातानपेक्षकारकपदप्रयोगभावादवश्यंभाविनाख्यातपदेनोक्तया भावनयोपस्था-पनोपपत्तेः कारकस्यावाच्यत्वापत्तिं शङ्कते—**ननु चेति**। आख्यातपदात्प्राक्कारकपदप्रयोगे तावत्कारकप्रतीत्यन्यथानुपपत्तेः कारकस्य वाच्यतावश्यं कल्पनीयेति परिहरति—**कथमिति**। निष्क्रियकारकायोगेन क्रियान्वयविवक्षातः प्राक्कारकविभक्त्यनुपपत्तेः, कारकविभक्त्यु-च्चारणान्यथानुपपत्त्या कल्प्यमानायाः कारकविवक्षायाः क्रियाविवक्षापूर्वकत्वकल्पनात्प्रथमं सुबन्तप्रयोगेऽपि कारकप्रत्ययस्य क्रियाप्रतीतिपूर्वकत्वसम्पत्तिं स एव शङ्कते—**नन्विति**। उपदर्शिता विवक्षोक्त वक्तुर्वस्तुतः कारकविवक्षायाः क्रियाविवक्षापूर्वकत्वेऽप्यर्थप्रतीतिनिर-पेक्षस्य विभक्त्युच्चारणमात्रस्य कारकविवक्षापूर्वकत्वकल्पनायोगान्न तत्र श्रोतुः क्रिया-

विवक्षापूर्वककारकविवक्षाकल्पनाद्वारा कारकप्रतीतेः प्राक् क्रियाप्रतीतिः सम्भवतीति परिहर्त्तां शङ्कां दूषयति—**सत्यमिति**। कारकमप्रतिपद्यैव पूर्वंतरविवक्षितक्रियाप्रतीत्यभ्युपगमेऽन्योन्याश्रयोपपादनार्थमुत्तरार्द्धं विवृणोति—**कुत इति**। पूर्वार्द्धविवृतान्योन्याश्रयोपपादनार्थमुत्तरार्द्धं विवृणोति—**द्वयोरिति**।

जायते, अस्ति विपरिणमते, वर्द्धतेऽपक्षीयते, विनश्यतीति, षड्विधा क्रिया, अन्यतमक्रियाशून्यस्य कस्य चित्प्रातिपदिकार्थस्याभावादथापत्त्याऽस्तिर्धातुः प्रथमपुरुषस्थवर्तमानविभक्तिपरोऽप्रयुज्यमानोप्यस्तीति गम्यते इत्यागमगम्यास्त्यादिधातुवशाद्वा सर्वस्य प्रातिपदिकार्थस्य सक्रियत्वावगतेः क्रियाक्षेपद्वारा कारकाक्षेपः सेत्स्यतीति, प्रातिपदिकार्थस्य क्रियागमकत्वोपपत्तेरस्त्यादिधातुनैव वा क्रियपादानोपपत्तेरन्योन्याश्रयपरिहारं शङ्कते—**अथेति**। तिष्ठतिनात्रद्वितीयभावविकारोक्तौ प्रथमभावविकारवाच्यस्तिः प्रतिपदिकार्थं नास्तिविष्ठत्याद्यकर्मकक्रियाक्षेपेपि कर्मादिकारकाक्षेपायोगात् तत्प्रतिपादकशब्दाभावेन्योन्याश्रयमपरिहार्यमित्याह—**तदिति**। श्लोकं व्याचष्टे—**सामान्ये न हीति**।

क्रियाशक्तिरूपत्वात्कारकस्य क्रियां विना भावनाशक्तेर्वाच्यत्वाभ्युपगमे क्रियाविशिष्टस्यैववाच्यत्वप्रसंगान्नागृहीतविशेषणन्यायेय क्रियाया एव वाच्यत्वावगतेः क्रियया कारकाक्षेपोपपत्तिमाशङ्क्य, कर्माद्याख्यानां कारकत्वभिमतानां क्रियाविषयत्वेऽपि शक्त्यन्तरेभ्योन्यं च स्वत एव प्रतिकारकं वैलक्षण्याच्छोणत्वादेरिवाश्वत्वाद्यनपेक्षस्य क्रियापेक्षाणां वाच्यत्वोपपत्तेः क्रियायाः द्वितीयायादिविभक्तिवाच्यत्वानापत्तिमाह—**न च विभक्तिरिति**।

विभक्त्युक्ता तु संख्या यथा क्रियाविशेषाक्षेपे कारकविशेषाक्षेपे वा न शक्ता, तथा
न शोणत्वादिवत्संख्याजातिभेदेषु भिद्यते।

इत्यादिवार्त्तिकेनोक्तामित्याह—**न च संख्येति**। तेनाख्यातात्प्राक्कारकविभक्त्यन्तपदप्रयोगे कारकातिरिक्तक्रियाप्रत्यायकाभावादपरिहार्यमन्योन्याश्रयमित्युपसंहरति—**अत इति**। प्राक्कारकपदप्रयोगे कारकस्य वाच्यत्वमुपपादितमुपसंहरति—**तस्मादिति**। विलक्षणकार्यान्यथानुपपत्त्या स्वतो विलक्षणानामेव शक्तीनां कल्पनात्कर्माद्याख्यानां कारकशक्त्यवान्तरजातीनां कल्पनात्कर्माद्याख्यानां कारकशक्त्यवान्तरजातीनां क्रियाक्षेपकत्वायोगात् क्रियान्वयविवक्षातः प्राक्कारकविभक्त्या नोत्पत्तव्यमित्याशङ्कामनुमोद्य, शब्दमात्रात्कारकं प्रतिपद्य, वक्त्रा प्राग्विक्षितां क्रियां प्रतिपद्यत इति परिहारोक्तिरनर्थिकेत्याशङ्क्यऽनिर्विषयशक्तिनिरूपणाशक्तेर्विषयभूतक्रियाक्षेपं विना शक्त्यात्मककारकोक्त्यपर्यवसानात्कारकोक्तिपर्यवसानार्थत्वेन क्रियाक्षेपोक्तेरर्थवत्त्वसूचनार्थं कारकेण सह क्रियाया विषयविषयित्वलक्षणसम्बन्धसद्भावात्कर्मादिकारकविषयत्वार्हसकर्यकक्रियाक्षेपोऽवश्यं वक्तव्य इत्याह **तत्सम्बन्धाच्चेति**। प्राक्कारकपदप्रयोगे कारकस्य क्रिययाक्षेपायोगाद्वाच्यत्वावगमेपि पश्चात्प्रयोगे क्रिययाक्षेपोपपत्तेरवाच्यत्वं भविष्यतीत्याशङ्कते—**यदा तर्हीति**। प्राक्प्रयोगेऽवधारितायां विभक्तेः कारकाभिधानशक्तेः पश्चात्प्रयोगेप्यपह्नवो न संभवतीत्याशयेन परिहरति—**सत्यमिति**। शङ्काशयं विवृणोति—**नन्विति**। परिहाराशयं

विवृणोति **नन्विति न शक्यमिति**। शक्तेरनित्यत्वे सम्बन्धस्य कथमनित्यत्वापत्तिरित्याशङ्क्य, [नियम्यते यदेकस्य सम्बन्धः सोर्थशब्दयोरि]ति वार्तिके वाच्यवाचकशक्तिद्वयनियमस्य सम्बन्धतयोक्तत्वादित्युक्तम्। एवमपि शक्तिरेव सर्वदा, न त्वशक्तिरिति कथमवधारणेत्याशयेनाशङ्कते—**अथेति**। अवधारणोपायोक्त्यापरिहरति—**तदिति**। परिहारप्रतिज्ञार्थं तदितिवार्त्तिकावयवं तावद्व्याचष्टे—**सर्वत्रैवेति**। अवधारणोपायोक्त्यर्थं श्लोकं व्याचष्टे—**सतामपीति**।

अन्यतः सिद्धयुक्त्या व्याख्यातस्य कृतार्थत्वस्यानारम्भहेतुतायां दृष्टान्तोक्त्यर्थे प्रतिबन्धसहकारिकारणान्तराभावोक्ती। अव्याप्ततत्वदोषाभावोक्तिव्याख्यार्थं कार्येत्युक्तम्। असतश्चेत्यनेनोत्तरार्द्धं व्याख्यातमुपपादयितुमनिमित्तेत्युक्तम्। सतोपि कार्यानारम्भकत्वोपपत्तिमसतश्च कार्यारम्भकत्वानुपपत्तिं सतोऽप्यग्रहणापपत्त्युक्त्यर्थेनासतश्च ग्रहणानुपपत्त्युक्त्यर्थेन—

विद्यमानस्य चार्थस्य दृष्टमग्रहणे क्वचित्
न त्वत्यन्तासतोऽस्तित्वं कांश्चित्प्रत्युपपद्यते॥

इत्यादिसम्बन्धग्रन्थवार्तिकेन द्रढयितुमाह—**इतीति**। श्लोकार्थमुपसंहरति—**तस्मादिति**। एकस्याः शक्तेः सदसद्भावविरोधात्सत्त्वैव युक्ता, नासत्तेत्यवधारणोपायत्वेन सामान्यन्यायमात्रमेतदुक्तम्। वस्तुतस्तुलब्धज्जात्मकत्वाच्छक्तेः कारकस्य विभक्तिश्रुत्युक्तत्वसंभवेऽनुमाननिरासेनाख्यातपूर्वेऽपि प्रयोगे कारकोक्त्याख्यकार्यारम्भकत्वोपपत्तेर्न कदा चिदसत्वशङ्कास्तीत्याह—**लब्धात्मकत्वाच्चेति**। तद्यत्र नशास्त्रेणेत्यादिवार्त्तिकेन न्यायाद्व्यवस्थामुपपादितामुपसंहरति—**अतश्चेति**। वैयाकरणमतेन धात्वर्थातिरिक्तभावनाभावाभ्युपगमेऽपि धात्वर्थेनोपस्थापनासंभवात्कर्तृकर्मणोरवाच्यत्वेऽभिहिते तस्मिन् पक्षे संख्यावगमात्प्राक्कर्तृकर्मणोरुपस्थानस्यैकान्तिकत्वाद्विशेषणत्वेऽपि वाच्यत्वाशङ्का नास्तीति नियतेत्यनेनोक्तम्। वस्तुतस्त्वकर्तृकस्यापि कुसूलभेदनादिधात्वर्थस्य कदा चिद्दर्शनेन कर्त्रुपस्थानैकान्तिकत्वायोगात् उपस्थापकत्वेऽपि च धातुप्रत्यययोर्व्यवधानाभावात्प्रत्ययवाच्यसंभवाद्वाच्यत्वानापत्तिसूचनार्था नित्यानुमेयोक्तिः। भाष्ये कर्तृग्रहणस्योपलक्षणार्थत्वसूचनार्था कर्मोक्तिः॥

नन्विति भाष्ये तात्पर्यतो व्याचष्टे—**अथात्रेति**।

कर्त्रभिधानव्याप्तहेत्वनुक्तेः कथमनेन भाष्येणानुमानमुक्तं भवतीत्याशङ्क्य, कर्तृविशेषवाचिदेवदत्तादिपदस्थसंख्याविशेषानुवर्त्तनस्य भाष्योक्तस्य हेतोस्तत्सूचितस्य च सामानाधिकरण्यस्य हेतोस्तावत्कर्त्रभिधानव्याप्तिं प्रश्नपूर्वमुपपादयितुमारभते—**क इति**। कर्तृत्वाधिष्ठानभूतो द्रव्यविशेषः कर्तृविशेषोक्त्योक्तः। पचयत्युक्त्या च शब्विकरणः पचतिशब्दः। संख्यानुवर्त्तनेन भाष्योक्तेन देवदत्तादिपदस्थकारकविभक्तिप्रतिबन्धलक्षणं तद्विशेषणशोभनत्वाद्यन्वयलक्षणमपि च देवदत्तादिपदानुवर्त्तवे सामानाधिकरण्यसूचनद्वारा सूचितमिति सूचनार्थं सर्वेत्युक्तम्। पचतिशब्दस्य कर्तृवाचित्वे देवदत्तशब्दानुवर्त्तनस्य सामानाधिकरण्यापादनद्वारा हेतुत्वसिद्धये सामानाधिकरण्यादनुवर्त्तनं भवति। द्वयोरेकार्थतात्पर्यस्यैकार्थ-

वृत्तिलक्षणैकविषयत्वे च सत्येकार्थविषयबुद्धिजनकत्वाख्यं सामानाधिकरण्यमवकल्पत इत्युक्ते विषयोक्त्या वाच्यत्वविवक्षायां पर्यायत्वापत्तिः, शब्दव्यापारविषयत्वमात्रविवक्षायां तु साध्यासिद्धिरित्याशङ्क्य, शब्दस्याभिधानातिरिक्तव्यापाराभावात्तद्व्यापारविषयभिधान-विषयीभूतकर्तृत्वाभेदोपचाराद्देवदत्तादीनां पचतिशब्दव्यापारभूताभिधानविषयतया लब्ध-कर्तृत्वविषयत्वैर्देवदत्तादिशब्दैः सहैकविषयत्वनिबन्धनात् सामानाधिकरण्यात्पचतिशब्दस्य कर्तृवाचित्वसाध्यासिद्धिः, पचतिशब्दवच्च देवदत्तादिशब्दानामभेदोपचारानपेक्षकर्तृत्वविषय-व्यापाराभावात्पर्यायत्वानापत्तिरिति सूचयितुं पचतिशब्देन देवदत्तादिसर्वपुरुषानुगतकर्तृत्व-सामान्याभिधानद्वारात्द्विशेषभूतानां देवदत्तादीनां स्वव्यापारविषयीकृतत्वक्षिप्तत्वे सति पचतिशब्दस्य देवदत्तादिशब्दसामानधिकरण्यं लभ्यते, नान्यथेत्युक्तम् । आक्षेपहेत्वभेदो-पचारोपपत्तिसूचनार्थं कर्तृत्वस्य सामान्यरूपतोक्ता । जातिवाचिनां गवादिशब्दानां, वारुणादिशब्दानां व्यक्तिद्रव्यवाचित्वाभावेऽपि तद्वाचिशावलेयघटादिशब्दसामानाधिकरण्यवत्प-चतिशब्दस्य कर्तृवाचित्वाभावेऽपि लक्षणया कर्तृपरत्वोपपत्तेर्देवदत्तादिशब्दैः सहैकविषयत्वा-त्सामानाधिकरण्यं भविष्यतीत्याशङ्कते—**लक्षणयेति** । वैयाकरणमते धात्वर्थातिरिक्त-भावनाभावाद्धात्वर्थेनैव लक्षणापत्तिमापाद्य विक्लेदनधात्वर्थपक्षे तावल्लक्षणाशक्त्यैव परिहरति—**नेति** । देवदत्तसमवेतस्य कर्तृत्वस्य पाकेनैकार्थसमवाया भावेऽपि गङ्गयेव तीरस्य लक्षणोपपत्तिमाशङ्क्य, सामानाधिकरण्यसिद्धये च लक्षणाभ्युपेक्षया तच्चान्यसमवेत-लक्षणायामपि न सिद्ध्यतीति परिहारायैकत्वमभिन्नत्वं सामानाधिकरण्यमभेदोपचारो वा येनाऽऽदीयते गृह्यत आपाद्यते तण्डुलसमवेतमेव पाकेन लक्षयितुं शक्यमित्युक्तम् ।

यद्वा यथा लः कर्मणि चेति ससम्यन्तेन कर्मशब्देन कर्तृशब्देन वा ससम्यन्तबहुह्येक-शब्दसामानाधिकरण्यसिद्ध्यै बहुत्वादिलक्ष्यमाणं कर्मत्वेन कर्मसमवेतमेकत्वादि लक्षयितुं शक्यते न कर्तृसमवेतमेव न कर्मसमवायि, तथा पाकेनान्यसमवायिकर्तृत्वं न लक्षयितुं शक्यमिति दृष्टान्तायैतदुक्तम् । देवदत्तस्थानामधिश्रयणादीनां पाकत्वात्पाकेन कर्तृलक्षणो-पपत्तिं शङ्कते—**तत्रेति** । कः पच्यर्थो नाम येयं तण्डुलानां विक्लित्तिरिति महाभाष्ये विक्लेदनस्य पाकत्वोक्तेरधिश्रयणादीनां पाकत्वायोगमाशङ्क्य, यद्यपि विक्लित्तिः पच्यर्थ इत्युक्तं । तथापि विक्लित्तेः पाकत्वे देवदत्तः पचतीति सामानाधिकरण्यायोगापत्तेर्धातूक्त-व्यापारस्य च कर्तृत्वाभ्युपगमाद्देवदत्तव्यापारपाकत्वाभ्युपगमाद्देवदत्तव्यापारस्य पाकत्वा-भावे तस्य कर्तृत्वायोगापतेर्विक्लित्तिफलस्याधिश्रयणादिव्यापारसमूहस्य पचिवाच्यत्वं नाधिश्रयणादिमात्रस्यैकैकस्येत्येवमर्थत्वेन विक्लित्तिः पाकफलमिति प्रयोजनवाच्यर्थशब्दा-भ्युपगमेन भाष्यं व्याख्येयमिति सूचनायापितस्य शब्दो । यद्यपि महाभाष्यात्तण्डुलस्थः पाक इत्याभाति, तथापि देवदत्तशब्दसामानाधिकरण्यसिद्ध्यै देवदत्तस्य कर्तृत्वसिद्ध्यै च तस्य सम्बन्धिना पाकेन भाव्यमिति कृत्वाधिश्रयणादय एव भाष्ये पाकत्वेनोच्यन्त इत्यर्थः । यद्यप्यधिश्रयणादयः पाकत्वेनोच्यन्त इति कृत्वा पाकेन कर्ता लक्षयितुं शक्यः, तथाप्यत्र लक्षण द्वारं सामानाधिकरण्यं संभवतीति परिहारं प्रतिजानाति—**सत्यमिति** । गोत्वारुण्या-

दीनां साक्षाद्‌व्यक्तिद्रव्यसमवायाद्विशेष्ये व्यक्तयादौ स्वानुरक्तबुद्ध्युत्पादकत्वेन गवादिशब्दस्य विशेष्यपर्यन्ताभिधानव्यापारावगतौ हेतुभूते मतुब्लोपे वाच्याभेदोपचारे वा निमित्ततया-विशेष्ये गवादिशब्दप्रवर्तकत्वात्सामानाधिकरण्यापादकत्वसंभवेऽप्यधिश्रयणादीनां देहसम-वायाद्देहदेहिनोरभेदोपचाराद्देह्यात्मसमेवतत्त्वव्यपदेशोऽपि परिस्पन्दरूपत्वेन साक्षादमूर्तात्म-समवायायोगाद्देहस्य वाऽचेतनत्वेनाऽस्वातन्त्र्यात्कर्तृत्वानुपपत्तेरात्मन एव चेतनत्वेन न्याय्यत्वाद्विशेष्यस्य कर्तृत्वाभिमतस्य देवदत्ताख्यस्यात्मनोऽधिश्रयणाद्यनुरक्तस्यानवगतेः पाकवाचिनो धातोः कर्तृपर्यन्तव्यापारावगतिहेतुभूते मतुब्लोपे, वाच्याभेदोपचारे वाऽधि-श्रयणादीनां निमित्तत्वायोगेन देवदत्ते पचिशब्दप्रवर्तकत्वायोगान्न सामानाधिकरण्यापादकत्वं संभवतीति वैषम्योक्त्योपपादयति—**गोत्वेति**। एतदेव दृष्टान्तैरुपपादयितुमुपसंहरति—**अत इति**।

मतुब् लोपाभेदोपचारौ विना सामानाधिकरण्याभावे दण्डादिशब्ददृष्टान्तः। अधि-श्रयणादयो देवदत्त इति प्रयोगाभावदृष्टान्तेनाऽधिश्रयणादीनां देवदत्ते स्वानुरक्तबुद्ध्य-नुत्पादकतायामुपपादितायां रूपादिशब्दोक्तानां गुणानां द्रव्ये स्वानुरक्तबुद्ध्यनुत्पादक-त्वेप्यरुणादिशब्दोक्तानामुत्पादकत्ववदधिश्रयणादिशब्दोक्तानामधिश्रयणादीनां कर्त्तरि स्वानु-रक्तबुद्ध्यनुत्पादकत्वेऽपि पच्युक्तानामुत्पादकत्वोपपत्तिशङ्कानिरासार्थं पाको देवदत्त इति प्रयोगाभावप्रदृष्टान्तोक्तिः। भाष्योक्तस्य कर्तृविशेषवाचिदेवदत्तादिपदस्यसंख्यानुवर्त्तनस्य सामानाधिकरण्यगमकत्वद्वारा कर्त्रभिधानगमकत्वात्सामानाधिकरण्येनैव तावत्कर्त्रभिधाने साध्ये कर्त्रभिधानन्यायेनैव कर्माभिधानस्यापि भाष्याभिमतत्वात्कर्माभिधानेऽपि साध्ये प्रयोगमाह—**तस्मादिति**।

आद्येनादिशब्देन पच्यतेशब्दोपादानात्पचतिशब्दः कर्तृवाची देवदत्तादिकर्तृपदाभेद-वर्तित्वात्पक्तृशब्दवत्पच्यतेशब्दः कर्मवाच्योदनादिकर्मपदाभेदवर्तित्वात्पक्वशब्दवदिति तन्त्रेण प्रयोगद्वयं, द्वितीयेनादिशब्देन पाकादिशब्दवदिति वैधर्म्यदृष्टान्तः सूचितः। **उत्तरार्द्धं व्याचष्टे—अभेदेति**।

साक्षाद्भाष्योक्तेन हेतुनास्मिन्नेव साध्ये प्रयोगमाह—**किं चेति**।

पचतिपच्यतइत्येवंप्रकारयोः शब्दयोरित्येवं धर्मिणोः कर्तृकर्मप्रकारयोर्वाच्ययोरित्येवं च वाचकत्वविषययोस्तथाशब्देनोक्तेः, पचतिशब्दस्यकर्तृवाचित्वं कर्तृगतसंख्याविशेषानुवर्त्त-नात्पक्तृशब्दवत्पच्येतशब्दस्य कर्मवाचित्वं कर्मगतसंख्याविशेषानुवर्त्तनात्पक्वशब्दवदिति प्रयोगद्वये च शब्देन पाकादिशब्दे वैधर्म्यदृष्टान्ते सूचिते दाराः पचन्तीति दाराख्यस्य कर्तुरेकत्वेऽपि, आख्याते बहुवचनदर्शनात्कर्तृगतसंख्यानुवर्त्तनस्य भाष्योक्तस्य हेतोस्तत्र कर्त्तरि, कर्मणि वा भूतस्य विद्यमानस्य संख्याभेदस्यानुवर्त्तनादित्येवं तद्भूतोक्त्या व्याख्यातस्यासिद्धत्वमाशङ्क्य, कर्तुरेकत्वादिति भाष्योक्तेन कर्तृसंख्यानुवर्त्तनेन कर्तु-विशेषवाचिशब्दोक्तसंख्यानुवर्त्तनं विवक्षितमिति सूचनार्थं कर्तृकर्मशब्दोपात्तेत्येवं तच्छब्दो-

पातोक्त्या तद्भूतोक्तिर्व्याख्याता । श्लोकं व्याख्यातुमाह—**पचतीति** । यैत्र कर्तृवाचिनि शब्दे संख्येत्यनेन शाब्दीसंख्याऽत्र विवक्षिता न वास्तवीति हेत्वसिद्धिशङ्कानिरासार्थं सूचितं देवदत्तयज्ञदत्तयोः पाको देवदत्तस्य पाकावोदनस्य पाकौ शाकौदनयोः पाक इति वा वैधर्म्यदृष्टान्तसूचनायादिशब्दौ । तथैव वाचकत्वमित्यनेनोक्तयोः कर्तृकर्मवाचित्वपक्षयोर्दृष्टान्ता यैर्वाक्यैरुदाह्रियन्ते, तान्येवं वक्तव्यानीत्यर्थः । कर्तृकर्मविशेषवाचिदेवदत्तौदनादिशब्दोक्तसंख्याविशेषानुवर्त्तनवत्कर्तृकर्मविभक्तिप्रतिबन्धकत्वस्यापि कर्तृकर्मविशेषस्यापि च सामानाधिकरण्यगमकत्वद्वारा कर्तृकर्माभिधानगमकत्वोपपत्तेः कर्तृविभक्तिप्रतिबन्धकत्वेन हेतुना कर्त्रभिधाने साध्ये कर्मविभक्तिप्रतिबन्धकत्वेन च हेतुना कर्माभिधाने साध्ये प्रयोगमाह—**किंचेति** । पचतिपच्यतेशब्दयोः कर्तृकर्मवाचित्वप्रतिज्ञायाः, किंचशब्देनानुकर्षणाद्धेतोः प्रतिज्ञाकाङ्क्षा पूरणीया उभयप्राप्तौ कर्मणिति परिसंख्यायाः कर्त्रनभिधायित्वेऽपि कर्तृविभक्तिषष्ठीप्रतिबन्धकत्वसद्भावात्तयानैकान्तिकत्वशङ्कानिवृत्तयेऽभिहितत्वेन निमित्तेनेति विशेषणे कृते कर्मषष्ठ्याः कर्मणोभिहितत्वेनैव निमित्तेन कर्तृषष्ठीप्रतिबन्धकत्वात्तयानैकान्तिकत्वमाशङ्क्य कर्तुरभिहितत्वेन निमित्तेन कर्तृविभक्तिप्रतिबन्धकत्वं कर्त्रभिधाने हेतुः कर्मणोभिहितत्वेन निमित्तेन, कर्मविभक्तिप्रतिबन्धकत्वंकर्माभिधाने हेतुरिति, विशिष्टहेतूक्त्यै तयोरिति विशेषणान्तरं कृतं कर्तृकर्मणोरभिहितत्वेन निमित्तेनेति विशेषणसामर्थ्यात्कर्तृकर्मविभक्तिप्रतिबन्धकत्वहेत्ववगते प्रथमविभक्तिप्रतिबन्धकत्वाभावाद्धेतोरसिद्धत्वं न शङ्कनीयम् ॥ प्रतिज्ञानुकर्षणार्थत्वेन किं च शब्दं व्याचष्टे—**इतश्चेति** । हेतूक्त्यर्थं पूर्वार्द्धं व्याचष्टे—**येनेति** । प्रथमाविभक्त्यप्रतिबन्धकत्वेनासिद्धत्वशङ्कानिवृत्त्यैकारकविषयम् अनभिहिताधिकारविहितोक्त्याभिहितत्वस्य निमित्तत्वे सूचितां युक्तिं विवृणोति—**यदीहीति** । पक्तृपक्वशब्दयोर्दृष्टान्तत्वोक्त्यर्थत्वेन साधर्म्यमिति श्लोकावयवव्याख्यार्थं पक्त्रित्युक्तम् ॥ पचतिशब्दस्य कर्त्रनभिधायित्वे साध्ये, पच्यतेशब्दो वैधर्म्यदृष्टान्तः श्रुत्योक्तः पच्यतेशब्दस्य कर्माभिधायित्वे साध्ये पचतिशब्दो वैधर्म्यदृष्टान्तोऽर्थादुक्त इत्येवमन्यदिति । श्लोकावयवं व्याचष्टे—**साधर्म्यादिति** । यो यद्विशेषबोधकः, स तद्बोधक इति श्रोत्रादौ व्याप्तिदर्शनादेकत्वादिसंख्यायाश्च संख्यान्तरपरिच्छेद्यात्कर्तुः स्वपरिच्छेद्यकर्तृव्यावर्तकत्वेन कर्तृविशेषरूपत्वात्कर्तृसंख्याबोधकत्वेनाख्यातस्य कर्तृबोधकत्वानुमानाशयतया कर्तुरेकत्वं वाच्यविषयीकृत्ययेन कारणेनैकवचनं प्रयुज्यते, तेन कारणेन कर्ता वाच्य इत्येवमेतद्भाष्यव्याख्यानायैतत्सूचितं प्रयोगमाह—**इतश्चेति** ।

पचतिपच्यतेशब्दाख्यस्य धर्मिविशेषणस्य कर्तृकर्मविषयत्वाख्यस्य च साध्यधर्मविशेषणस्याधिकारतो लाभात्पचतिशब्दादिः कर्तृकर्मणोर्बोधकः कर्तृकर्मविशेषबोधकत्वाद्यद्यद्विशेषबोधकतत्तद्बोधकम् । यथा श्रोत्रं शब्दविशेषाकारबोधकं शब्दबोधकमिति प्रयोगार्थः ॥

श्लोकं व्याचष्टे—**यदि हीति** । नागृहीतविशेषणन्यायबलेन कर्तृकर्मविशिष्टसंख्याबोधकताऽत्र हेतुत्वेन विवक्षितेति विप्रतिषेधोक्त्या सूचितम् । अभिधेयभावनाविनाभाव-

द्वाराख्यातस्य कर्तृकर्मबोधकताया मीमांसकेनाप्यभ्युपेतत्वात्सिद्धसाध्यतामाशङ्क्य, तद्विशेषवाचित्वात्तद्विशेषबोधकत्वाद्वा तद्वाचित्वसाधने कारकतद्विशेषसंख्यावाचिन्यां द्वितीयादिविभक्ताविव वृक्षत्वादिसामान्योक्त्यनपेक्षतद्विशेषशिशपात्वादिवाचिनि शिंशपादिशब्देऽपि तद्विशेषवाचित्वतद्विशेषबोधकत्वयोः सद्भावेनानैकान्तिकत्वापत्तेः कर्तृकर्मवाचित्वसिद्धचै कर्तृकर्मबोधकत्वसाधनात्सिद्धसाध्यत्वपरिहारं सूचयितुमाह—**नचेति**। प्रयोगाभिप्रेतं साध्यमुपसंहरति—**तस्मादपीति**।

यदेकत्वं वाच्यं विषयीकृत्यैकवचनं प्रयुज्यते, तद्येन कारणेन पचतिशब्दे कर्तृसम्बन्धित्वेन कारणेन कर्त्ता वाच्य इत्येवं कर्तृविशेषदेवदत्तादिविशेषणसंख्यान्वयस्य कर्तुर्वाच्यत्वे हेतुतया भाष्योक्तस्य विशेषणमात्रोपलक्षणत्वात्कर्तृकर्मणी पचतिपच्यतेशब्दवाच्ये पचतिपच्यतेशब्दप्रयोगे कर्तृकर्मविशेषभूतदेवदत्तौदनादिविशेषणैः सम्बद्धचमानत्वाद्यच्छब्दप्रयोगे कर्तृकर्मणो विशेषणैः सम्बध्येते तच्छब्दवाच्ये। यथा पक्तृपक्वशब्दवाच्ये। यच्छब्दवाच्ये च न भवतस्तच्छब्दप्रयोगे विशेषणैर्न सम्बद्धचेते। यथा भावोत्पन्नाख्यातवाच्ये इत्येतद्भाष्यसूचितं प्रयोगं साधर्म्यवैधर्म्यदृष्टान्तद्वययुक्तमाह—**किंचेति**। श्लोकं व्याचष्टे—**इतश्चेति**। यत्रेत्यनेनोत्तरार्द्धोक्तवैधर्म्यदृष्टान्तं सूचितं साधर्म्यदृष्टान्तं व्याख्याय वैधर्म्यदृष्टान्तव्याख्यार्थं यत्र त्वित्युक्तम्। जातिगुणशब्दानभिधेययोरपि व्यक्तिद्रव्ययोर्विशेषणान्वयदर्शनादनैकान्तिकत्वमाशङ्क्य, विशेषणान्वयान्यथानुपपत्त्या तयोरपि वाच्यत्वकल्पनेनानैकान्तिकत्वपरिहारं सूचयितुमाह—**नचेति**।

पञ्चानामपि प्रयोगाणां भाष्यकाराभिप्रेतत्वं दर्शयितुमाह—**तदिति**। कर्तृविशेषदेवदत्तादिगतसंख्यायोगित्वमात्रेण भाष्योक्तेन कथं सामानाधिकरण्यादि दर्शितं भवतीत्याशङ्क्याह—**तद्गतेति**। भिन्नयोरर्थयोः संख्यैक्यनियमाभावेन पचतिदेवदत्तशब्दयोरर्थैक्यं विना पचतिशब्दस्य देवदत्तशब्दगतसंख्यायोगित्वायोगादेकार्थलक्षणं सामानाधिकरण्यं विनानुपपत्तिस्तावत्स्पष्टा कारकविभक्तिप्रयोगे चानर्थक्यापत्तेराख्यातस्य कारकानभिधायित्वप्रसङ्गेन कारकवाचिना देवदत्तादिपदेन सहैकार्थ्यलक्षणसामानधिकरण्यायोगप्रसंगात्कारकविभक्त्यप्रयोगं विना सामानाधिकरण्यानुपपत्तिः। प्रतिबन्धभावे च कर्मणि द्वितीयेत्यादिविधानादवश्यं कारकविभक्तिप्रयोगापत्तेराख्यातस्य कारकविभक्तिप्रतिबन्धकत्वं विना कारकविभक्त्यप्रयोगानुपपत्तिरित्येवं परम्परया कारकविभक्तिप्रतिबन्धकत्वं विना तद्गतसंख्यायोगित्वानुपपत्तिः, कर्तृभूतदेवदत्तादिगतसंख्याविशेषानुवर्त्तनाख्यस्य तद्गतसंख्याया बोधकत्वं विनायोगात्तद्गतायाश्च संख्यायास्तद्विशेषत्वात्साक्षादेव तद्विशेषबोधकत्वं विनानुपपत्तिः। अर्थान्तरस्यार्थान्तरासामान्यरूपविशेषणान्वयायोगाद्देवदत्तपचतिशब्दयोरैकार्थ्याभावे पचतिशब्दार्थस्य देवदत्तशब्दार्थविशेषणान्वयानुपपत्तौ, विशेषणान्वयानुपपत्तौ विशेषणान्वयं विना विशेषणवाचिशोभनादिशब्दसामानाधिकरण्यानुपपत्तेः शोभनादिशब्दोक्ताया अपि च संख्यायाः कर्तृगतत्वात्सामानाधिकरण्यं विनानुपपत्तिरित्येवं परम्परया

कर्तृविशेषणान्वयं विना तद्गतसंख्याया योगित्वानुपपत्तिरित्याशयः। शङ्काभाष्यार्थमुपसंहरति—**तस्मादिति**।

उच्यतइत्यादि नकेन चिद्वाच्यतइत्यन्तं परिहारभाष्यं कर्तुरवाच्यत्वेप्याख्यातश्रवणेनुष्ठेयक्रियावगमादवगमोपपत्तेर्वाच्यत्वप्रमाणार्थापत्त्यनुदयेनानुपलब्धिविरोधोक्त्यर्थतया व्याचिख्यासुराख्यातान्वयव्यतिरेकान्यथानुपपत्तिप्रभवयाऽर्थापत्त्याख्यातगम्यत्वावगमादनुपलब्धि-विरोधायोगमाशङ्क्य, सिद्धसाधनत्वापत्तेर्गम्यत्वमात्रस्यासाध्यत्वाद्वाच्यत्वसाधनार्थं शङ्काभाष्यं तत्र त्वनुपलब्धिविरोधोस्त्येवेति परिहारसूचनार्थं भाष्यसूचितैः पञ्चभिः प्रयोगैर्वाच्यवाचकशक्ततानुमीयते, गम्यगमकत्वमात्रं वेति विकल्पा, आद्यकल्पे भाष्यं व्याख्यातुमारभते—**तत्रेति**। प्रतिज्ञादोषाणां सर्वप्रयोगसाधारण्येऽपि, हेतुदोषाणां प्रतिहेतूपपादनवैलक्षण्यसूचनार्थं सामानाधिकरण्यात्तावत्पचत्यादिशब्दः कर्तृकर्मवाचीति यदुक्तमित्युक्तम्। एकप्रमाणानुदयमात्रेणानु-पलब्ध्यसिद्धेरर्थापत्तिभङ्गमात्रेणानु - पलब्धिविरोधायोगमाशङ्क्य, अर्थापत्तिभङ्गमात्रेण सर्वप्रमाणानुत्पत्तिसिद्धिरित्युक्तम्। प्रमाणान्तराणां शक्तिविषयत्वाभावादेवानुत्पत्तेरर्थापत्तिभङ्गमात्रेण सर्वप्रमाणानुत्पत्तिसिद्धिमुपपादयितुमाह—**सर्वेति**।

अनुमानविरोधोक्त्यर्थतयैतदेव भाष्यं व्याख्यातुमाह—**अनुमानेति**। धात्वर्थस्याकर्तृकस्यापि क्वचिद्दर्शनेन कर्त्रविनाभावात्कर्तृकर्माविनाभूतार्थाभिधायित्वस्यासिद्धत्वमाशङ्क्य, प्रत्ययस्य कर्तृकर्माभिधानानभिधानविचारविषयत्वात्, तद्वाच्याया भावनायाः क्वचित्कर्तृव्यभिचाराभावेनासिद्धत्वपरिहारसूचनायात्यन्तोक्तिः। तिङः कर्तृकर्मवाचित्वाभावे प्रयोगमुक्त्वा, कर्तृकर्मणोस्तिङ्वाच्यत्वाभावे प्रयोगमाह—**तथेति**। तिङ्वाच्यया भावनया कदाचिदत्यज्यमानत्वादित्याद्यहेत्वर्थः।

भावोत्पन्नलकारेषु तिङः कर्तृकर्मविषयव्यापाराभावेप्यभिधेयाविनाभावेन प्रतीयमानत्वादिति द्वितीयहेत्वर्थः। यत्तिङ्वाच्येन न त्यज्यते, तिङ्व्यापाराद्विनापि च प्रतीयते, तत्र तिङ्वाच्यं यथा कर्तृत्वाश्रयभूतं देवदत्तादिद्रव्यं, कर्मत्वाश्रयभूतं चोदनादिद्रव्यमित्याद्यदृष्टान्तार्थः। यद्यद्वाच्येन न त्यज्यते, यद्व्यापाराद्विनापि च प्रतीयते, तत्र तद्वाच्यम्। यथा शिंशपाशब्दवाच्येन शिंशपात्वेनात्यज्यमानं शिंशपाशब्दव्यापाराद्विनापि च प्रतीयमानं वृक्षत्वं न शिंशपाशब्दवाच्यमिति द्वितीयदृष्टान्तार्थः।

कर्तृकर्मणी नाख्यातेनाभिधीयते, कारकत्वात्करणादिवत् कर्तृकर्मोत्पन्नस्तिङ्शब्दः कर्तृकर्मणोरवाचकः आख्यातत्वाद्भावोत्पन्नतिङ्शब्दवदिति स्वयं प्रयोगद्वयमाह—**कारकत्वादिति**। भाष्यानारूढमप्येतत्प्रयोगद्वयं सम्भवादुक्तमिति सूचयितुमाह—**अपीति**। एवमपीति पूरणीयम्। सर्वेषां प्रयोगाणां लोकविरोधं शङ्कापूर्वं निरस्यति—**नन्विति**। अभिधेयोर्थो गवादिशब्दानां जातिः गम्ययानो व्यक्तिः द्योत्यः प्रादीनामुपसर्गाणां। गमनादिस्तिष्ठित्यादि धात्वर्थः विषयो। योगरूढानां पङ्कजादिशब्दानां पद्मत्वाद्येकार्थसमवायिपङ्कजननकर्तृत्वादिवाचिनां पद्मत्वादिः। कर्तृकर्मणोराख्यातगम्यत्वमात्रानुमानमाख्या-

तस्य कर्तृकर्मगमकत्वमात्रानुमानं च कस्मान्न भाष्यकृता दूषितमित्याशङ्क्य, सिद्धसाधनापत्त्यैव निरस्तत्वादिति परिहारं सूचयितुमाह—**यदित्विति** ।

वाच्यवाचकशक्त्यनुमानस्य लोकविरोधोक्त्यर्थंतयैतदेव भाष्यं व्याख्यातुमाह—**लोकेति** । एतदेव प्रश्नपूर्वमुपपादयति—**कुत इति** ।

वक्तव्यं चैष वः शब्दो विनाशित्वेन साध्यते ।

इत्यादिशब्दाधिकरणवार्त्तिकोक्तेन च मार्गेण वर्णात्मकशब्दः कारकवाचित्वेन साध्यते स्फोटात्मको वा, जातित्रिगुणाद्यात्मको वेति त्रेधाशब्दविकल्पनया, शक्त्यात्मकं कारकमाख्यातवाच्यत्वेन साध्यते, द्रव्यात्मकं वेति द्वेधा कारकविकल्पेन, शक्तिर्द्रव्यादत्यन्तव्यतिरिक्ताऽत्यन्ताव्यतिरिक्ता वाच्यतिरिक्ता वेति त्रेधा व्यतिरेकाव्यतिरेकप्रश्नेन वर्णात्मकशब्दधर्मिपक्षे तवाप्रसिद्धविशेष्यः पक्षः । स्फोटात्मकपक्षे, मम जात्याद्यात्मकपक्षे, द्वयोर्द्रव्यात्मककारकधर्मिपक्षे तव शक्त्यात्मकपक्षे मम व्यतिरिक्ताव्यतिरिक्तपक्षे तवात्यन्ताव्यतिरिक्तपक्षे, ममात्यन्तव्यतिरिक्तपक्षे, द्वयोः कारकधर्मिपक्षे वर्णस्फोटजात्यादिशब्दविकल्पनया, तथैवाप्रसिद्धविशेषणः शब्दधर्मिपक्षे, शक्तिद्रव्यकारकविकल्पेन व्यतिरेकाव्यतिरेकप्रश्नेन च युगपद्धर्मधर्मिविकल्पेष्वप्रसिद्धोभय इति । प्रतिज्ञादोषा वैयाकरणं प्रति योज्या इत्याह—**शेषा अपीति** ।

सामानाधिकरण्यं श्रौतं, लाक्षणिकम्, अविशेषितं वा हेतुरिति त्रेधा सामानाधिकरण्याख्यहेतुं विकल्प्या, कल्पे तावदसिद्धतामाह—**तथेति** । वाशब्देन तृतीयः कल्पः सूचितः । संख्याद्यभिधानाभ्युपगमेऽपि कारकनिवृत्त्यर्थाऽऽद्यमात्रोक्तिः । शक्तिमात्रस्य कारकत्वेश्रौतसामानाधिकरण्यायोगमुपपादयति—**देवदत्तादीति** ।

द्रव्यकारकपक्षेऽपि निर्व्यापारस्य कारकत्वायोगाच्छक्तिरहितस्य च व्यापारायोगाच्छक्तिविशिष्टस्यैव कारकतयाभ्युपगन्तव्यत्वेन, कारकाभिधानपक्षे नागृहीतविशेषणन्यायाच्छक्तिमात्राभिधानापत्तेः श्रौतं द्रव्यशब्दसामानाधिकरण्यं यस्मान्न युज्यते, तस्माच्छक्तिकारकपक्षे सुतरां न युज्यत इत्यतिशयार्थमाह—**यस्यापि हीति** ।

द्रव्यशब्देन सहाख्यातस्य श्रौतसामानाधिकरण्यायोगेऽपि शक्तिवाचिना पाचकादिशब्देन कृदन्तेन सह श्रौतसामानाधिकरण्यं भविष्यतीत्याशङ्क्य, भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तेस्तात्पर्याख्यायाः सामानाधिकरण्यशब्दवाच्यत्वाद्वाच्यार्थतात्पर्यं विना श्रौतसामानाधिकरण्यानुपपत्तेः, कृतां च कारकाख्यशक्तिवाचित्वेऽपि द्रव्योपसर्जनीभूतशक्तिवाचित्वेन, शक्तौ तात्पर्याख्यवृत्त्यभावान्न कृदन्तेनापि सह श्रौतसामानाधिकरण्योपपत्तिरित्याशयेन परिहरति—**शक्तीति** । कारकपराख्यातप्रयोगेन कारकविभक्तिर्देवदत्तेनेति तृतीया ओदनमिति द्वितीया वा प्रयुज्यत इति—**न चेत्यनेनोक्तम्** ।

शक्त्यभाववादिवैशेषिकादिमतेन शुद्धस्य द्रव्यस्य कारकत्वात् कारकवाचित्वेप्याख्यातस्य द्रव्यवाचित्वोपपत्तेर्द्रव्यशब्देन सह श्रौतसामानाधिकरण्योपपत्तिमाशङ्क्याह—**यस्य**

**त्विति**। शक्तिमद्द्रव्यकारकपक्षेप्येकस्य द्रव्यस्यानेकशक्तिकत्वे युगपदनेककारकरूपत्वापत्ते-रेकशक्तिकत्वावगमाशक्तेश्च स्वाभाविकत्वेन यावद् द्रव्यसद्भावमनपाकाष्ठादिद्रव्यं काष्ठैर्दहतीत्यादिप्रयोगे केन चित्करणादिकारकरूपेणावधारितं, तस्य काष्ठानि दहतीति कर्मादिकारकान्तररूपत्वविवक्षा न कदा चित्स्यादिति दूषणं तुल्यमित्याशङ्कते—**शक्तीति**।

शक्तेः कारकत्वे करणादिशक्तेः कदा चित्कर्मादिकारकान्तररूपत्वविवक्षाभावेनै-तच्छङ्कोत्थानायोगाच्छक्तिमत्पक्षोऽत्र शक्तिपक्षत्वेनोक्तः आविर्भूताया एव शक्तेः कारकत्वा-पादकत्वात्सर्वासां च शक्तीनां युगपदाविर्भावाभावे द्रव्यस्यानेकशक्तिकत्वेऽपि न युगपदेनक-कारकरूपत्वापत्तिरित्याशयेन परिहरति—**नेति**। शुद्धस्यादि द्रव्यस्य कस्यां चित्क्रियायां करणत्वं, कस्यां चित्कर्मतेति क्रियाभेदात्तत्र कारकरूपेणाभिधानोपपत्तिमाशङ्क्य, क्रिया-भेदेऽनेककारकत्वोपपत्तावपि क्रियैक्ये यदपेक्ष्य नानाकारकरूपत्वं स्यात् तस्या पेक्षा कारणस्य क्रियाभेदस्याभावाच्छक्तिवच्च द्रव्यस्य स्वरूपेण भेदाभावान्नैककारकत्वेनाव-धारितस्य कारकान्तरत्वविवक्षोपपत्तिरित्याशयेन परिहरति—**द्रव्यस्य त्विति**। पाचकादि-पाचकादिशब्दानां द्रव्यवाचित्वाभावेऽपि द्रव्यवाचिना देवदत्तादिशब्देन सह श्रौतसामाना-धिकरण्यप्रसिद्धेर्नशब्दद्वयस्यैकस्मिन् वाच्ये तात्पर्यं, शुक्लादिशब्दानां तु समानविभक्त्यन्तद्रव्य-शब्दसमभिव्याहारनिबन्धनत्वेन द्रव्यपरत्वस्य स्वाभाविकत्वाभावान्न श्रौते द्रव्यशब्द-सामानाधिकरण्यम्। ततश्चाख्यातस्याकृत्यधिकरणन्यायाच्छक्तिमात्राभिधायित्वे कृदन्तवत् स्वभावतः शक्तिमद् द्रव्यपरत्वाच्छ्रौतसामानाधिकरण्योपपत्तिरित्याशङ्क्यस्वाभाविकैकार्थ-परत्वलक्षणश्रौतसामानाधिकरण्याभ्युपगमेऽप्याख्यातस्य द्रव्यपरत्वाभावाच्छ्रौतद्रव्यशब्द-सामानाधिकरण्यायोगं सूचयितुमाह—**यदि चेति**। शुद्धस्य द्रव्यस्याकारकत्वेन वाच्यताया दुराशङ्कित्वात् शक्तिमतश्च शक्तिमनभिधायाऽभिधानशक्तेः कृदन्तेष्वपि शक्तिमात्राभिधा-नावगमेनाख्यतस्य द्रव्यवाचित्वाशङ्काया दूरापास्तत्वाद् द्रव्यवाचिनोक्त्या स्वभावतो द्रव्यपरत्वं विवक्षितम्।

प्रसंगात्सुपां कारकवाचिनीनां द्रव्यपरत्वनिरासः। नामाख्यस्य प्रातिपदिकस्य द्रव्य-परत्वेपि धातोर्द्रव्यपरत्वनिरासायांतशब्दप्रयोगात्सुप्सु च तिङन्तेषु चेति विग्रहः कार्यः। निपातोपसर्गाणां द्रव्यपरत्वनिराससूचनार्थोपि शब्दः। सत्वभावाल्लिङ्गसंख्याकारकान्वयार्हं-त्वात्सुप्सु तिङन्तेषु च लिङ्गकारकान्तरान्वयः अपिशब्दोक्तेषु न निपातोपसर्गेषु लिङ्ग-संख्याकारकान्वयः स्यादित्यर्थः।

चतुर्थं पादं व्याचष्टे—**यथैवेति**। तृतीयं व्याचष्टे—**ततश्चेति**। तिङन्तेषु पचतीति प्रयोगे कर्त्तुः, पचति ब्रूहीति कर्मादिकारकान्तरयोगः, पक्त्वे भुङ्क्ष्वेत्यादिवच्चादिशब्दोक्ते पच्यत इति प्रयोगे कर्मणः, पच्यते भुङ्क्ष्वेत्यादिकारकान्तरयोगः सुप्सु चोदनमिति कर्मणः, पक्वेन तृप्यतीत्यादिवदोदनं तृप्यतीति करणादिकारकान्तरयोगः प्राप्नोतीत्यर्थः। श्लोकार्थमुपसंहरति—**तस्मादिति**।

निष्कृष्यैष्टव्यं सदभिधेयमित्येष्टव्योक्त्या शक्तिमात्रे तात्पर्याभिधानाच्छक्तिमत्परत्व-निरासोपसंहारः सूचितः। शक्तिमात्रपरत्वेऽपि कारकान्तरयोगः कस्मान्न भवतीत्यशङ्क्य असम्बन्धः समत्वात्स्याद् ३–१–२२इत्यनेन न्यायेन शक्तेः शक्त्यन्तरायोगाद् द्रव्यस्य चैक-शक्तिवशीकृतस्य शक्त्यन्तरायोगादित्याह—**तथासति हीति**। काष्ठैर्दहतीति प्रयोगे करणशक्तिवशीकृतानामपि काष्ठानां काष्ठानि दहतीति प्रयोगे कर्मशक्तियोगदर्शनात्तदै-वेत्युक्तम्। येन कारणेन शक्तिमात्रपरत्वे सति प्राधान्यं प्रतिपद्यैकया शक्त्या वशीकृतस्य द्रव्यस्य शक्त्यन्तरान्वयार्हत्वं नास्ति। तेन कारणेन कारकान्तरायोग इत्यर्थः। यथा निपातोपसर्गेषु लिङ्गसंख्याराहित्ये चकारात् कारकराहित्यं च सुप्सु, तिङन्तेषु च लिङ्ग-राहित्यं, कृदन्तवैलक्षण्येन सिद्धं, तथा सुप्तिङन्तेषु कारकान्तराराहित्यमपि तेनैव कारणेन सिद्धमिति दृष्टान्तेन द्रढयितुमाह—**लिङ्गेति**। सुप्सु तिङ्क्षु च द्रव्यस्याप्राधान्यात्कार-कान्तरान्वयवत्संख्यान्वयस्याप्यनुपपत्तावपि कारकशक्तिगतसंख्याभिधानात्संख्यायोगा-विरोधः। कारकशक्तीनां लिङ्गाभावेऽपि सुप्सु प्रातिपदिकार्थगताभिधानाल्लिङ्गयोगा-विरोधः। श्रौतत्वविशिष्टस्य सामानाधिकरण्यस्य हेतुतायामुभयासिद्धतामुपपादितामुप-संहरति—**ततश्चेति**। लाक्षणिकम् अविशेषितं वेति कल्पद्वयं, तथा सामानाधिकरण्यं श्रौत-लाक्षणिकं वेति वाशब्देनाविशेषितकल्पस्य गृहीतत्वसूचनार्थं सहानुभाष्य अविशेषितकल्पे तावदनैकान्तिकमाह—**अथेति**। श्रौतत्वविशेषणपक्ष एव हेतोः साध्याविशिष्टत्वलक्षणप्रतिज्ञा-र्थैकदेशत्वेनाऽन्यतरासिद्धत्व वक्तुमारभते—**यच्चेति**। अधिकरणशब्दस्याश्रयवाचित्वात्क-स्माद्वाच्यत्वं विनाऽर्थस्य शब्दाधिकरणत्व न भवतीत्याशङ्क्य, मीमांसकमते शब्दस्य द्रव्य-त्वेनाऽनाश्रयत्वात् वैयाकरणमते त्वाकाशाश्रयत्वादित्याह—**सर्वेति**। वाच्यत्वे तु विषयत्वा-द्याधिकरणतायुक्तेत्याह—**वाच्यस्यत्विति**। विषयवाचित्वेऽधिकरणशब्दस्य गौणलाक्षणि-कयोरपि विषयत्वोपपत्तेः, कथं वाच्यत्वोक्त्यापत्तिरित्याशङ्क्य, श्रौतत्वविशेषणाद्वाच्यत्वो-क्त्यापत्तिमाह—**तदपीति**। श्रौतसामानाधिकरण्यशब्देनैकार्थवाचित्वोक्तावपि कथं प्रतिज्ञा-र्थैकदेशतेत्याशङ्क्यैवंविधप्रयोगापत्तेरित्याह—**ततश्चेति**। एवं च सति प्रतिज्ञार्थैकदेशत्वं भवतीत्याह—**ततश्चानित्यइति**।

### चतुर्धा सामानाधिकरण्यं विकल्प्य दूषणम्

शब्दयोः सामानाधिकरण्यं, शब्दबुद्ध्योर्वा, अर्थयोर्वा अर्थबुद्ध्योर्वेत्येवंप्रकारैरादि-शब्दादेकार्थसमवायलक्षणमेकार्थप्रतिपादकत्वलक्षणं वैककार्यजनकत्वलक्षणं वेत्येवंप्रकारैश्च विकल्पैः सामानाधिकरण्यं विकल्प्य तद्भूताधिकरणपूर्वपक्षवार्तिक—

पदानि तावद्वर्णा वेति

इत्युपक्रम्यैकार्थं समवायेऽपि सर्वेषां व्योम्नि तुल्यतेत्येकार्थसमवायलक्षणशब्दसामानाधिकर-ण्मनिरासात्—

व्यङ्ग्यास्तावत्पृथग्भूताः पदार्थाः पदभेदतः।

इत्येकार्थप्रतिपादनलक्षणानिरासात्—

तथा तद्विषयाप्येतैर्बुद्धिर्नैकोपजन्यते ।
जातु स्वविषया बुद्धिः प्रतिशब्दमसावपि ।
न चैकज्ञानजननं भिन्नैस्तैः क्रमवर्त्तिभिः ॥

इत्येककार्यजननलक्षणनिरासात्—

एकाप्रवृत्तिता तुल्या घटहस्त्यादिधीष्वपि ।

इत्येकार्थसमवायलक्षणपदार्थबुद्धिसामानाधिकरण्यनिरासात्—

अत एव विशिष्टाधीस्ताभिर्नैकोपजन्यते ।

इत्येककार्यजननलक्षणनिरासात्—

न चैकव्यक्तिवृत्तित्वे प्रमाणं गोत्वशुक्लयोः ।

इत्येकार्थसमवायलक्षणपदार्थसामानाधिकरण्यनिरासात्—

न च वस्त्वन्तरारम्भः पदार्थैस्तदनुग्रहादि ।

इत्यादिना चैककार्यजननलक्षणसामानाधिकरण्यनिरासात्तेनैव न्यायेन नियमो वार्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदात्स्यादिति षष्ठान्तपूर्वपक्षसूत्रेऽर्थयोरत्र सामानाधिकरण्यं न शब्दयोरिति भाष्ये व्यतिरेकशब्दभेदादित्यर्थान्यत्वहेतुव्याख्यार्थं वक्ष्यमाणेन च पशुत्वान्वयेऽपि गवादौ छागत्वव्यतिरेकात् अर्थैक्ये च पशुः छाग इति शब्दभेदानर्थक्यापत्तेरित्यनेन न्यायेनासिद्धत्वमुद्भावनीयम् । अर्थयोरेकव्यक्त्याधारत्वाच्छब्दयोर्वा गम्यमानैकार्थत्वात्सामानाधिकरण्यस्य गवाश्वादिशब्दानामेकार्थवाचित्वाभावेप्येकाधारार्थद्वयवाचित्वलक्षणसामानाधिकरण्याविशेषादनैकान्तिकत्वमुद्भावनीयमित्याह—**तद्भूतेति** ।

सामानाधिकरण्यस्य निरासे मीमांसकमतेऽनुपपत्तिमाशंक्य, व्यवहारकाले वादिपराजयाय निरास इति ।

मीमांसकैरपि गोशुक्लादिशब्दानां सामानाधिकरण्याभ्युपगमात्सर्वप्रकारविकल्पेष्वसिद्धत्वोद्भावनमयुक्तमित्याशङ्क्य, परमार्थतः सामानाधिकरण्यसद्भावेप्यनुमानव्यवहारकाले वादिनं पराजेतुं सर्वप्रकारं विकल्प्याऽसिद्धत्वोद्भावनं युक्तमिति, व्यवहारकालविशेषणेनोक्तम् । कर्तृकर्माविनाभूतार्थवाचित्वादिभिश्चानुमानविरोधायोक्तैर्हेतुभिस्तिङः कर्तृकर्मवाचित्वनिरासेन मुख्यसामानाधिकरण्यनिरासादसिद्धतोपपादनीयेत्याह—**अनुमानेति** ।

तैरेव हेतुभिस्तुल्यबलत्वाभ्युपगमे सप्रतिसाधनतापि वाच्येत्याह—**सप्रतिसाधनता वेति** । यथा च पक्षहेतू विकल्पदूषितौ, तथादृष्टान्तोपि शक्तिपरत्वाशयेन, शक्तिमत्परत्वाशयेन वेति । विकल्प्य, आद्यकल्पे साध्यहेतुविकलत्वाभ्यां दूषणीयइत्याह—**दृष्टान्तोपीति** । शक्तेः, शक्तिमतो वा कारकत्वे शक्तेरेवाकृत्यधिकरणन्यायेनाख्यातेष्विव, कृदन्तेष्वपि वाच्यत्वान्न वैयाकरणमते, मीमांसकमते वा साध्यविकलत्वं संभवतीत्याशङ्क्य, शक्त्यभि-

धानोक्त्या शक्तिपरत्वस्य विवक्षितत्वाच्छक्तिमतश्च कारकत्वे शक्तावकारकत्वेऽपि नैव तात्पर्यायोगाच्छक्तेरपि कारकत्वेऽपि कृदन्तवैलक्षण्येन सुप्तिङन्तेषु शक्तिमात्रपरत्वोक्त्या कृदन्तानां शक्तिमात्रवाचित्वेऽपि शक्तिमत्परत्वस्योक्तत्वाच्छक्तिमात्रपरत्वाशयेन दृष्टान्तोक्तौ भवत्येवमेतद् द्वयेऽपि साध्यविकलतेति परिहारसूचनार्थं नहीत्युक्तम् ।

हेतुविकलत्वोपपादनार्थं यच्च श्रौतं सामानाधिकरण्यमित्यादिवार्त्तिकोपपादिता देवदत्तवचनत्वादिति हेत्वर्थापत्तिः परामृष्टा । द्वितीयकल्पे कारकशक्त्यभिधानाख्यसाध्यधर्मस्य यो विशेषः स्वप्रधानशक्त्यभिधानं नाम, तद्विपर्ययद्रव्योपसर्जनीभूतशक्त्यभिधानापत्तेर्द्धर्मविशेषविपर्ययसाधनत्वलक्षणं हेतोर्विरुद्धत्वमाह—**पाचकादीति** । लाक्षणिकत्वविशेषणकल्पे प्रागनुभाषितेऽपि लाक्षणिकसामानाधिकरण्यस्य वाद्यनभिमतत्वेनापाद्य विकल्पमात्रत्वसूचनायान्ते धर्मस्वरूपविपरीतसाधनत्वलक्षणं हेतोर्विरुद्धत्वमाह—**अथवेति** । श्रौतस्यैव सामानाधिकरण्यस्य वादिनो हेतुतयाभिप्रेतत्वाल्लाक्षणिकसामानाधिकरण्यस्य हेतुता वाच्येत्यापाद्य, दोषोक्त्युपपादनार्थं यदेत्युक्तम् । अस्य विकल्पस्यानावश्यकत्वसूचनायाऽथवाशब्दः । गौणत्वविशेषणकल्पोऽनीतरशब्देन सूचितः । गौणलक्षणावृत्त्योरपि शब्दवाच्यत्वाभावेऽर्थस्य शब्दार्थान्तरानन्वयापत्तेः शब्दस्य वाचकत्वावगतेर्विपक्षाभावाद्विरुद्धत्वायोगमाशङ्क्य अशब्दस्वरूपनिमित्तबोधकत्वाभावेऽपि तात्पर्याख्यशब्दव्यापारस्य सर्वत्र भावाच्छाब्दत्वेनार्थान्तरान्वयोपपत्तेः सर्ववृत्तीनां वाऽजहत्स्वार्थत्वस्य तत्सिद्धिसूत्रे भाष्यकृताऽर्थाभिधानेसूत्रे चार्थेन नित्यसंयोगादित्यसंयोगादित्यवयवेन सूत्रकृतोक्तत्वाद्वाचकत्वाभावेन विपक्षत्वोपपत्तिमाह—**न चेति** । परेष्वपि प्रयोगेषु सर्वे पूर्वोक्ताः पक्षदोषाः, सप्रतिसाधनत्वं च हेतुदोषः, साध्यविकलत्वं च दृष्टान्तदोषजातं योज्यमित्याह—**एवमिति** । सामानाधिकरण्यविकल्पोक्तहेतुदृष्टान्तदोषनिवृत्त्यै यथासंभवोक्तिः ।

परेषु प्रयोगेष्वसाधारणान् दोषान्विवक्षन् कर्तृकर्मवाचिदेवदत्तौदनादिपक्षोक्तसंख्यानुवर्त्तमानादिति द्वितीयप्रयोगस्थं तावद्धेतुं, देवदत्तादिपदेन कारकशक्ति गता संख्योक्तेत्याशयेनायं हेतुर्द्रव्यगतोक्तेत्याशयेन वेति विकल्प्या आद्यकल्पे शक्त्याश्रितायाः संख्याया देवदत्तादिपदवाच्यतया केन चिदनिष्टत्वादसिद्धत्वेन दूषयति—**तद्गतेति** ।

**अभ्युपगमविरोधाख्यं प्रतिज्ञादोषोपपादनम्**

निपातोपसर्गेष्विव तिङ्क्ष्वपि द्रव्यस्योपसर्जनत्वेन कथं चेल्लक्ष्यमाणस्यापि संख्यान्वयायोगादप्रधानभूतस्यापि च संख्यान्वयाभ्युपगमे लिङ्गसंख्यारहितत्वं च द्रव्यप्रधानकृदन्तवैलक्षण्येन सिद्धमिति वार्त्तिकायोगापत्तेः, शक्त्यात्मककारकाश्रिताः संख्या देवदत्तादिपदवाच्यतया केन चिन्नेष्यन्ते, द्रव्याश्रितत्वाद् देवदत्तादिपदवाच्यानां संख्यानामित्यर्थः । द्वितीयकल्पेन देवदत्तादिपदोक्तकारकशक्त्याश्रयभूतद्रव्यगतसंख्योपादानादिति हेत्वर्थापत्तेर्न केवलमसिद्धत्वं, किंतु पाचकादिशब्दे कारकशक्त्याश्रयभूतद्रव्यगतसंख्योपादानस्य तथाविधद्रव्यपरत्वेन सह प्रासिदर्शनाद्यत्कारकशक्त्याश्रयभूतद्रव्यगतां संख्यामसावाख्यातशब्द

उपादत्ते, तत्कारकशक्त्याश्रयभूतद्रव्यपर इति प्रतिज्ञापत्तेरभ्युपगमविरोधाख्यः पक्षदोषोऽपि स्यादित्याह—**अथत्विति**। शुद्धद्रव्यवाचित्वप्रतिज्ञायाः प्रकृतानुपयोगेना नाशङ्क्यत्वात्कारकशक्त्याश्रयभूतद्रव्यवाचित्वे च दृष्टान्ताभावात्तात्पर्याशया वाचकोक्तिः।

अभ्युपगमविरोधोपपादनार्थं वैयाकरणोप्याख्यातस्य द्रव्यपरत्वं नेच्छतीत्युक्तम्। कर्तृकर्मशक्तिलक्षितद्रव्यगतसंख्योपादायिनि पक्तृपक्त्रादिशब्दे कर्तृकर्मशक्ति [वाचित्वेदर्शनाद्योपलक्षितगतसंख्योपादायी स तद्वाचीति व्याप्तेराख्यातस्य कर्तृकर्मशक्तिसामान्यवाचित्वे साध्ये तल्लक्षितकर्तृकर्मशक्ति] व्यक्तिगतसंख्योपादायिनोप्याख्यातस्य गौणं शक्तिमत्संख्योपादायित्वं शक्तिवाचित्वे साध्ये हेतुर्भविष्यतीत्याशङ्क्य, प्रसह्यकारित्वादिसिंहगुणानभिधायिन्यपि सिंहशब्दे प्रसह्यकारित्वादिगुणलक्षितदेवदत्तगतसंख्यावाचित्वाख्यहेतुवृत्तेर्गुणगुणिनोर्वा भेदोपचाराद् देवदत्तसंख्यावाचिन्यपि सिंहशब्दे गौणप्रसह्यकारित्वादिगुणसमूहसंख्यावाचित्वाख्यहेतुवृत्तेरनैकान्तिकतामाह—**यदि त्विति**। पाचकादिशब्दे च कृदंशो दृष्टान्तो, विभक्त्यंशो वेति विकल्प्य आद्ये कल्पे हेतुविकलत्वं, द्वितीये साध्यविकलतेत्याह—**पाचकादौ चेति**। तेनाख्यातस्य कर्तृसंख्या वाचित्वेन हेतुना कर्तृत्वाचित्वे साध्ये कर्तृतत्संख्ययोवाचिका तृतीया विभक्तिर्दृष्टान्तयितव्या। न तु पाचकशब्द इत्याह—**तेनेति**। सैव तर्हि दृष्टान्तोस्त्वित्याशङ्क्य, तृतीयावत्कर्तृसंख्यावाचित्वात्कर्तृवाच्याख्यातमित्येवंविधविधप्रयोगपक्षे हेतुसाध्यविकल्पनिमित्तहेतुदृष्टान्तदोषासंभवेऽपि कर्तृवाचिदेवदत्तादिपदसामानाधिकरण्यहेतुके प्रयोगे यथानुपलब्धिविरोधादयः पक्षदोषाः। सप्रतिसाधनत्वं च हेतुदोषो विकल्पान् विनैव धर्मिविकल्पे नच प्रसिद्धविशेष्यत्वं पक्षदोष इति दोषाः संभवन्ति, तथास्मिन्नपि प्रयोगे सभवन्तीत्याह—**तत्रापीति**। यद्यद्गतसंख्यावाचि, तत्तद्वाचीति व्याप्तिविवक्षया चास्मिन् प्रयोगे गोव्यक्त्यनभिधायिन्यपि गोशब्दे व्यक्तिसंख्यावाचित्वदर्शनादनैकान्तिकतापि स्यादित्याह—**इदमिति**। इदमपरं दूषणं यदुतानैकान्तिकत्वमित्यर्थः। व्यक्तिवाचितायाश्चाऽऽकृत्यधिकरणे निरस्तत्वान्न व्यक्त्यभिधानवादिनापि वैयाकरणेन गोशब्दस्यापि पक्षत्वाभ्युपगमेनानैकान्तिकता परिहर्तुं शक्येत्याह—**नैवेति**। सर्वकारकाणां भावनागम्यत्वाविशेषाद्वाच्यत्वं विना कर्तुरसाधारण्येन संख्यान्वयायोगाशयेनाख्यातं कर्तृवाचिकर्तृसंख्यावाचित्वात्तृतीयावदिति प्रयोगस्य तृतीयान्तपदोदाहर्तव्यत्वोक्त्या सूचितत्वाद्यद्यङ्गतसंख्यावाचि, तत्तद्वाचीति सामान्यव्याप्तिविवक्षानुपत्तेर्गौशब्देनानैकान्तिकत्वोक्तिरयुक्तेत्याशङ्क्य, कर्त्रनभिधानानुमानस्याभिधानशक्तिग्राहकयोग्यार्थापत्त्यनुदयलक्षणलक्षणाभावाख्यप्रमाणोपबृंहितत्वेन दृढतया बलीयस्त्वान्नत्विपि शङ्काभाष्योक्तकर्त्रभिधानानुमानबाधकत्वे तत्तावत्प्रत्यक्षवद् दृढतया बलीयस्त्वान्न केन चिद्बाध्यतइति भाष्येणोक्तपाचकादिशब्ददृष्टान्तेन कर्तृविशेषवाचिदेवदत्तादिशब्दोक्तसंख्यानुवर्त्तनेन हेतुना कर्तृवाचित्वसाधने हेत्वसिद्ध्यादिदोषदुष्टत्वेन कर्तृवाचित्वानुमानस्य दौर्बल्याद्बाधो युक्तः। तृतीयादृष्टान्तेन तु कर्तृसंख्यावाचित्वेन हेतुनाऽऽख्यातस्य कर्तृवाचित्वसाधने दोषाभावाद्विशेषणभूतकर्त्रभिधानं च विना कर्तृविशिष्टसंख्याभिधानाशक्तेः कर्तृविशिष्टसंख्योक्त्यन्यथानुप-

पपत्तिलक्षणार्थापत्त्युपबृंहितत्वेनानभिधानानुमानवदभिधानानुमानस्यापि प्रत्यक्षवद् दार्ढ्यान्न बाधा युक्तेत्येकवचनेत्यादिभाष्येणाशङ्क्य, बाधायोगेऽपि सप्रतिसाधनतावदपरिहार्येति, कतरदिति भाष्येणात्रानुमानद्वयमध्ये कतरदनुमानं कतरदनुमानं बाधितुमर्हतीत्यावृत्ताभ्यां कतरदनुमानशब्दाभ्यामेकस्यामावृत्तौ प्रथमान्ताभ्यामन्यस्यां द्वितीयान्ताभ्यां वदतोक्ते, तथापि संदेहापत्तेर्न निर्णयः स्यादित्याशङ्क्य, यथेति भाष्येण कर्तृसंख्यावाचित्वादिति परकीयहेतोः सामान्यव्याप्तिविवक्षयानैकान्तिकत्वमुद्भाव्यैवमिति भाष्येणानभिधाननिर्णयस्य कृतत्वात्तद्व्याख्यार्थं गोशब्देनानैकान्तिकतोक्तेति सूचयितुमाह—**कतरदिति**। सर्वकारकाणां गम्यमात्रत्वाविशेषेऽपि कर्तुरसाधारण्येन संख्यान्वयस्य विस्तरेणोपपादितत्वात् द्विशेषणावगतिमात्रेण च विशिष्टाभिधानस्योपपादितत्वात्कर्तृविशिष्टसंख्योक्तान्यथानुपपत्तेः क्षीणत्वेनोपबृंहकत्वायोगात्तृतीयायाश्च कर्तृवाचित्वस्यानन्यथासिद्धकर्तृप्रतीतिप्रयुक्तत्वेन कर्तृसंख्यावाचित्वस्याप्रयोजकत्वात्स्वरूपप्रयुक्तसाहित्यलक्षणाया व्याप्तेर्विशेषरूपेणासंभवसूचनार्था सामान्यव्याप्तेर्विवक्षयानैकान्तिकत्वोक्तिर्युक्तेत्याशयः।

तृतीयप्रयोगस्थं कारकविभक्तिप्रतिबन्धकत्वादिति हेतुं सर्वकारकविभक्तिप्रतिबन्धकत्वं हेत्वर्थो, यत्किंचित्कारकविभक्तिप्रतिबन्धकत्वं वेति विकल्प्य, अद्यकल्पे प्रथमायाः कारकत्वाश्रयभूतद्रव्यपरत्वेन कारकविभक्तित्वेऽपि प्रतिबन्धाभावादसिद्धतामाह—**यदपीति**। द्वितीयकल्पे 'कर्तृकर्मणोः कृतीति सूत्रात्कृद्योगे कर्तरि कर्मणि च षष्ठ्यां प्राप्तायामुभयप्राप्तौ कर्मणीति पुनर्वचने कर्तृषष्ठीपरिसंख्यार्थत्वेन कर्तृषष्ठ्यपवादतया कारकविभक्तिषष्ठीप्रतिबन्धकत्वसद्भावादनैकान्तिकत्वमभिहितत्वेन निमित्तेन कारकविभक्तिप्रतिबन्धकत्वादिति विशिष्टहेत्वभ्युपगमेपि, कर्मवाचिन्यां षष्ठ्यां कर्मणोभिहितत्वेन निमित्तेन कर्तृषष्ठीप्रतिबन्धकत्वसद्भावादनैकान्तिकतेत्याह—**अथेति**।

एतदेव विवृणोति—**उभयेति**। येन यत्कारकविभक्तिः प्रतिबद्ध्यते, तस्य तत्कारकाभिधाननिमित्ततत्कारकविभक्तिप्रतिबन्धकताया हेतुत्वेन विवक्षितायाः कर्माभिधाननिमित्तकर्तृषष्ठीप्रतिबन्धिकायां कर्मषष्ठ्यामभावादनैकान्तिकत्वपरिहारं तयोरभिहितत्वेनेति वार्त्तिकस्थेन तयोरिति विशेषणेन सूचितं दूषयितुमनुभाषते—**यस्त्विति**। तिङ्वाच्यभावनाऽवगतत्वेन निमित्तेन तिङः कारकविभक्तिप्रतिबन्धकतयाऽभिधाननिमित्तत्वाभावाद्विशेषणसिद्ध्यापत्तेः कारकविभक्तिप्रतिबन्धकत्वमात्रस्य हेतुत्वापादनसूचनेन दूषयति—**तस्मादिति**। श्लोकं व्याचष्टे—**पचतीति**।

भावनया कर्तृत्वावगमात्कारकान्तरस्याप्यवगमोपपत्तेः कर्तृतैव देवदत्तस्येत्यवगमस्य कर्तृविभक्तिं विनायोगादवगममात्रस्य कारकविभक्तिप्रतिबन्धकत्वानुपपत्तेः, अभिधाने त्वभिहितत्वेनैव विशेषेण कारकान्तरान्यावृत्तिसिद्धेः कर्तृविभक्तिं विनापि कर्तृतैवाख्यातसामानाधिकरण्येनोक्तस्य देवदत्तस्येत्यवगतिसंभवादभिधानमेव प्रतिबन्धे निमित्तमित्याशयेन पूर्वपक्षी शङ्कते—**कथं पुनरिति**। 'असितिष्ठत्यादिषु करणानपेक्षणादि'त्यादिवार्त्तिकोक्तेन

न्यायेन कारकान्तराणां व्यभिचाराद्वयावृत्तिमाशङ्क्य यत्राव्यभिचारः तत्राभिधानं विना व्यावृत्त्ययोगसूचनायाऽनेकेत्युक्तम् ।

एकदेशिनः परिहारं दूषयितुमुपन्यस्यति—योग्यतेति । देवदत्तस्य सामान्यतः कारकत्वावगमं विना योग्यतया विशेषनिर्णयायोगात्सामान्यतः कारकत्वमुपपादयितुमाह—न चेति । एकदेशिनः परिहारमुपसंहरति—तस्मादिति । पूर्वपक्षव्यापकत्वेनैनं परिहारं दूषणपरिहारायैकदेशी स्वाशयं विवृणोति—अथेति । काष्ठादीनामप्याख्यातान्वयान्यथानुपपत्त्या सामान्यतः कारकत्वेऽवगते, योग्यतया विशेषनिर्णयोपपत्तिरुक्तेनेत्यनेनोक्ता ॥ पूर्वपक्षैकदेश्याशयं दूषयति—तदिति । एकदेशी स्वाशयोपपादनार्थं काष्ठादीनां कर्तृत्वप्रतीतिमपह्नुते—आहेति ।

कर्तृत्वप्रतीतेः सर्वस्वसंवेद्यत्वस्यान्यथासिद्धिं नानेत्यनेनोक्तामुपपादयितुं यस्त्वित्यनेन कारकविवेकस्य निपुणदृशां स्वसंवेद्यतोक्ता ॥ निपुणदृक्स्वसंवेद्यत्वमेवोपपादयति—तथा हीति । श्लोकं व्याचष्टे—यं हीति । आख्यातसामानाधिकरण्यस्य कर्तृत्वभ्रान्तिहेतुत्वेन कर्तृत्वोपचारात् सामानाधिकरण्येनाभिधीयमानस्थाली तस्यैव धारणाख्यस्य व्यापारस्य साधनात् । तदेवाधिकरणत्वं प्रतिपद्यत इत्यर्थः ॥ अधिकरणत्वे स्थाल्याः कर्तृत्वाभिधानानर्थक्यमाशङ्क्य, भ्रान्त्या भासमानकर्तृत्वाभिधानाभ्युपगमेप्यधिकरणत्वानपह्नवोक्तिसामर्थ्यप्रदर्शनार्था कर्तृत्वाभिधानोक्तिः ॥

वस्तुतस्तु कर्तृत्वापादकव्यापारान्तरासाधनेन स्थाल्यां निरालम्बनकर्तृत्वाभिधानायोगाद्वस्तुतोऽधिकरणत्वेन स्थितत्वादधिकरणत्वेनैव स्थाल्युच्यत इति कल्पितं सच्छ्रेयं भवतीत्याह—तस्मादिति ।

अधिकरणतोक्तेः सिद्धान्त्यनभिमतत्वसूचनार्थं कल्पितं वरमित्युक्तम् । यदा च स्थाल्यादेर्वस्तुतः कर्तृत्वं नास्ति, तदा प्रथमान्तैः स्थाल्यादिशब्दैः स्थाल्यादीनां निरालम्बनकर्तृत्वोक्तिदोषापत्तेरपि कर्त्तुराख्यातवाच्यता युक्तेति सूचयन् कारकविभक्तिप्रतिबन्धस्याभिधाननिमित्तकत्वेऽधिकरणादीनां तत्संख्याया वा, आख्यातवाच्यत्वाभावादधिकरणाद्यभिधानहेतुकस्याधिकरणादिसंख्याभिधानहेतुतस्य वा सप्तम्यादिकारकविभक्तिप्रतिबन्धस्य स्थाली पचतीत्यादिप्रयोगेष्वयोगापत्तेर्न कारकविभक्तिप्रतिबन्धस्याभिधानहेतुकता युक्तेत्याह—लकारेति ।

तयोरभिहितत्वेनेति षष्ठ्यास्तयोः संख्याया अभिहितत्वेन निमित्तेनेति संख्याव्यतिरेकजनितत्वाभ्युपगमेप्यभिधानस्य निमित्तत्वायोगसूचनार्थं तिङा चेत्युक्तम् । आख्यातप्रत्ययस्य कारकवाचिताया लः कर्मणि चेति लकारद्वारा संख्यावाचितायाश्च 'बहुषु बहुवचनं द्व्येकयोर्द्विवचनैकवचने' इति तिङ्प्रत्याहारग्राह्यबहुवचनादिद्वारान्वा'ख्यादानदधिकरणादिष्वित्यत्र लकारोपादानेन 'तिङा चेत्यत्र च तिङापादानेनाधिकरणादेस्तत्संख्यायाश्चाख्यातानभिधेयत्वेन्वाख्यानस्य प्रामाण्यं सूचितम् । स्थाल्यादिशब्दैः स्थाल्यादीनां

कर्तृत्वोक्तेर्वैयाकरणेन नन्वेतत्काष्ठानि पचन्तीत्यत्र संभवतीति वदता स्वयमेवाभ्युपेतत्वाद-पगमनीयमित्यनिष्टापत्युक्तिरयुक्तेत्याशङ्क्याभ्युपगमनीयत्वोक्तेरवास्तवाथभ्युपगमदोषापत्यु-क्त्यर्थत्वसूचनार्थं बलादित्युक्तम् ॥ अवगतिमात्रस्य कारकविभक्तिप्रतिबन्धहेतुत्वं, कर्तृत्वादि-कारकविशेषस्य योग्यता देवदत्तादिगतत्वव्यवस्थोपपत्तेस्तत्सिद्धचै कारकविभक्त्यनपेक्षा-[वत्तिङुक्तसंख्यायायोग्यतयैव सर्वकारकान्वयस्याप्यवगमात्सर्वकारकानां स्वरूपावगत्यै, संख्यावगत्यै वा कारकविभक्त्यनपेक्षा]पत्तेस्तिङुक्तभावनातः सर्वकारकावगमेन निमित्तेन तिङः सर्वकारकविभक्तिप्रतिबन्धकत्वप्रसंगान्नावगतिमात्रस्यापि कारकविभक्तिप्रतिबन्धहेतुता युक्तेत्याशङ्क्य, तिङुक्तायाः संख्यायाः सर्वकारकान्वयायोगादेकेनैव कारकेणान्वयात्रगतेः कारकान्तराणां संख्यावगत्यै यथा स्वकारकविभक्त्यपेक्षोपपत्तेः कारकविभक्त्यानर्थक्यापाद-कत्वेन निमित्तीभूतस्य कारकावगमस्य संख्यागवत्यर्थत्वेन कारकविभक्त्यर्थवत्वोपपत्तौ कारकविभक्त्यानर्थक्दापादकत्वाख्यसहकार्यभावात्कारकावगमेऽपि कारकविभक्तिप्रतिबन्धा-भावोपपत्तिर्निमित्तत्वाविघातं सूचयितुमाह—**अनभिधानेस्विति** ।

सिद्धफलत्वोक्त्या कारकविभक्त्यानर्थक्यापादकत्वस्य सहकारित्वेऽभिहिते तस्य सहकारित्वोपपादनार्थं कारकविभक्तिः । कारकसंख्यागवत्याख्येन फलेन फलवत्त्वं विशेषणं कृतम् ॥ अवगतिमात्रस्य निमित्तत्वे सर्वकारकविभक्तिप्रतिबन्धापत्तेर्न तस्य निमित्तता युक्तेति परिहारसूचितशङ्काशयमाह—**नन्विति** ॥ काष्ठादीनि पचन्तीति प्रयोगे सर्व-कारकविभक्त्यनुत्पादसद्भावानिष्टापत्युक्त्ययोगमाशङ्क्य—**सर्वंदेवेत्युक्तम्** ॥ शङ्काशय-निरासार्थं परिहर्त्ता स्वाशयमाह—**नैष इति** ॥ शङ्किता स्वाशयं विवृणोति—**न न्विति** । परिहर्त्तास्वाशयं विवृणोति—**कथमिति** ।

एकस्यापि क्रियादेरनेककारकाद्यन्वयदर्शनादेकत्वमात्रस्य सर्वान्वयिशक्तिहेतुत्वायोग-माशङ्क्य, सकृदुच्चरिततिङ्वाच्यसंख्यापरिच्छेद्यतयायुगपत्सर्वकारक[लोचने प्रत्येकालोचना-देकत्वात्यागेन बहुत्वापत्तेर्हेतुत्वं सम्बुद्धचमात्रायां ,चेत्यनेनोक्तम् । संख्याया युगपत्सर्व-कारकान्वयायोगेपि विकल्पेन सर्वकारका]न्वयोपपत्तेः कदा चित्स्थाल्यादिभिरप्यन्वय-संभवात्सप्तम्यादिप्रतिबन्धोप्यवगतिमात्रस्य हेतुत्वे प्रसज्येतेत्याशयेन शङ्कते —**विकल्प इति** । विकल्पाभ्युपगमेपि प्रथमान्ततां विनातिङ्वाच्यसंख्यन्वयाभावात्प्रथमारहितेषु स्थाल्यादिषु कारकविभक्त्यानर्थक्यापत्याख्यसहकार्यभावात्सप्तम्यादिप्रतिबन्धाभावोपपत्तेर्नावगतिमात्रस्य हेतुत्वविघातापत्तिरित्याशयेन परिहरति—**इष्ट एवेति** । एकत्वसंख्याया युगपत्सर्वकारका-न्वयायोगेपि बहुत्वसंख्याया युगपत्सर्वकारकान्वयोपपत्तेर्बहुवचनान्ताख्यातप्रयोगे सर्वसाधा-रण्यसंभवादवगतिमात्रस्य हेतुत्वे कारकविभक्त्यभावप्रसक्तेर्न तस्य प्रतिबन्धहेतुतेत्याशयेना-शङ्कते—**यदा तर्हीति** । कारकैक्येप्या'दधीयातामि'ति द्विवचनवत्कारकाश्रयभूतबहुत्वाद्य-जेरन्नितिवद्वा, एकरूपकारकव्यक्तिबहुत्वाद्बहुवचनोपपत्तावनेककारकान्वयनिश्चयायोगमा-शङ्क्याख्यातोक्ताया संख्यायाः साक्षाद्भावनालक्षितकारकान्वयसंभवे कारकद्वारलक्षितद्रव्या-न्वयायोगाद् द्रव्यान्वयाभ्युपगमे च, दम्पत्योर्द्वयोर्यागे कर्तृत्वाद्यजेतेत्येकवचनायोगापत्तेः

पारम्पर्यलक्षितत्वेनैव चैकरूपकारकव्यक्तिभिरप्यन्वयायोगादनेकविधकारकान्वयनिश्चयोपपत्तिसूचनार्थं सम्भवं धातुमात्रेण विवक्षित्वा समित्युपसर्गस्थाने विविधत्ववाची वीत्युपसर्गः प्रयुक्तः। प्रथमापेक्षया कारकविभक्तयो विभक्त्यन्तरत्वेन विवक्षिताः॥ अनेकविधानामपि कारकाणां संख्यान्वयार्हत्वरूपेण, समप्रधानत्वेन वा तुल्यत्वविवक्षायां सर्वकारकविभक्त्यभावस्येष्टत्वादनिष्टापत्त्युक्त्ययोगोक्त्या परिहरति—**इष्ट एवेति**। स्थाल्यामोदनं काष्ठैर्देवदत्तयज्ञदत्तविष्णुमित्राः पचन्तीति प्रयोगे तु बहुत्वस्य कर्तृमात्रगतत्वेन विवक्षिततया कारकान्तरगमनाशक्तेः कर्तृमात्रे पर्यवसानात्कारकान्तराणामनवगतसंख्यावगत्यर्थतया कारकविभक्त्यन्तरार्थवत्त्वोपपत्तेः पूर्ववत्सहकार्यभावेनैव सप्तम्याद्यप्रतिबन्धसंभवान्नावगतिमात्रस्य हेतुत्वव्याहतिरित्याह—**यदा त्विति**। तदानीं न कारकान्तराणि गन्तुं शक्नोतीति कृत्वा कर्तृमात्रे पर्यवस्यति। ततश्च कारकान्तराणां संख्यावगत्यै स्वविभक्त्यपेक्षोपपत्तेर्न विभक्त्यन्तराभावप्रसंग इत्युक्ते, वचनेच्छया वस्तुरचनाशक्तेः शब्दस्य चेच्छामनपेक्ष्य वस्त्वनुसारित्वात्सर्वकारकान्वयार्हस्य बहुत्वस्य कर्तृमात्रगतत्वविवक्षा न युक्तेत्याशङ्क्य।

यद्वा भावनया कर्ता प्रथमं प्रतिपाद्यत इति वार्त्तिकोक्तात्कारकान्तरेभ्यः कर्तुः प्रागगम्यमानतया प्राथम्यात्तदधीनत्वादितरकारकसमाधानस्येति वार्त्तिकोक्ताच्च कारकान्तरसमाधातृत्वेन प्राधान्यात्कर्तृमात्रगतत्वसम्भवोक्त्या तन्मात्रगतत्वविवक्षोपपादने कृते, प्राथम्यप्राधान्याभ्यां प्राक्कर्त्रन्वयेपि कारकान्तराणामपि संख्यापेक्षत्वात्तदन्वयस्यापि पश्चादुपपत्तेः कर्तृमात्रगतत्वविवक्षा न युक्तेत्याशङ्क्य, प्रातिपदिकमात्रप्रयोगायोगात्तदनुग्राहायाऽवश्यंप्रतिकारकप्रतिपदिकं प्रयोज्यविभक्त्युक्तसंख्यान्वयात् कारकान्तराणां नैराकाङ्क्षसम्भवात्कर्त्रन्वयमात्रेण निराकाङ्क्षायाः संख्यायाः कारकान्तराकाङ्क्षावशेनाकाङ्क्षोत्थापनायोगात्पश्चादपि कारकान्तरान्वये कारणं नास्तीति, तदतिक्रमेत्यनेनोक्ते प्रथमयैव तर्हि सर्वकारकाणां संख्यान्वयसिद्धेर्योग्यतया च कारकविशेषव्यवस्थासिद्धेः कारकविभक्त्यानर्थक्यस्य सहकारिणां सम्भावाद्व्याहन्येतैवावगतिमात्रस्य कारकविभक्तिप्रतिबन्धहेतुतेत्याशङ्क्य, स्थाल्यादीनां योग्यतयैवाधिकरणत्वादिरूपकारकान्तरत्वावगतेऽकर्त्तारं प्रति तदधीनप्रवृत्तित्वलक्षणगुणभावावगमसम्भवेपि सप्तम्यादिविभक्तिश्रुत्यैव गुणभावप्रदर्शनार्थत्वेन कारकविभक्त्यर्थवत्त्वोपपत्तिसूचनार्थं यदा कारकान्तराणि श्रुत्यैव गुणभूतानि दर्शयितव्यानीत्युक्तम्। कर्तृव्यक्तिबहुत्वात्कर्तृकारकैक्येपि बहुत्वोपपत्तिसूचनार्थं कर्तृष्वेवेति बहुवचम्। प्राथम्यप्राधान्यरूपाद्विशेषात्कर्तुरेवं संख्यान्वयार्हत्वे कारकान्तराणां च कर्त्तारं प्रति गुणभावे सति शब्दस्य वस्त्वनुविधायित्वाद्वचनेच्छामात्रेण च वस्तुरचनाशक्तेरेवाविद्यमानस्य सर्वकारकाणां संख्यान्वयार्हत्वरूपेण समप्राधान्येन च तुल्यत्वस्य विवक्षितुमशक्यत्वात्सर्वदा तिङ्वाच्यायाः संख्यायाः कारकाकान्तरगमनाशक्त्यापत्तेः कर्तुरेव तिङ्वाच्यसंख्यान्वयार्हत्वाद्देवदत्तस्य कर्तृत्वाभावे तिङो देवदत्तपदोक्तसंख्यानुवर्तनायोगापत्तेरनेककारकसन्निपातेऽपि देवदत्तपदोक्तसंख्यानुवर्तनान्यथानुपपत्त्या कर्तृत्वमेव भावनया देवदत्तस्यावगमितं, न कारकान्तरत्वमित्यवगतिः सम्भवतीति, स्वमतेन कथं पुनरिति वार्तिकोक्त-

पूर्वपक्षशङ्कापरिहारं सूचयन् सर्वेषां संख्यान्वयार्हत्वरूपेण तुल्यत्वविवक्षायां कारकविभक्त्यभावस्येष्टत्वोक्तिरयुक्तेत्येकदेशिनं प्रति सिद्धान्त्याह—**यदीति**। देवदत्तस्य कारकान्तरत्वव्यावृत्त्या कर्तृत्वावधारणे देवदत्तपदोक्तसंख्यानुवर्त्तनान्यथानुपपत्तेर्हेतुतां संख्यया कर्त्तुः सदाऽनतिक्रमितव्यत्वोक्त्या सूचितामजानन्नेकदेशी सर्वेषां यथायथं कारकविशेषावधारणं मत्वा तिङ्वाच्यया संख्यया कर्त्रनतिक्रमे स्थालीकाष्ठादीनां योग्यतावशेन कर्तृत्वव्यावृत्त्याधिकरणत्वाद्यवधारणात् स्थाली पचतीतिकाष्ठादीनि पचन्तीति वा प्रयोगः कदा चिदपि न युज्येतेत्याशङ्कते—**कथं तर्हीति**। सिद्धान्ती स्थाली पचतीत्यादिप्रयोगे संख्यया कर्त्रतिक्रमोयुक्तः, स्थाल्यादीनां कर्तृत्वविवक्षा वेति सम्प्रधारणपूर्वं कर्तृविवक्षौचित्योक्त्या प्रयोगोपपत्तिमाह—**उच्यत इति**।

कर्त्रभिधानपक्षे कर्तृसंख्ययोरेकशब्दोक्तत्वेनान्योन्यनियमात्कर्त्रनतिक्रमावगतेः स्थाल्यादीनां तिङ्वाच्यसंख्यानुवर्तनान्यथानुपपत्त्या कर्तृत्वविवक्षाशङ्क्येतापि, सापि त्वधिकरणादिप्रतिपत्तिहेतुभूतधारणादिव्यापारातिरिक्तव्यापाराभावेनैकदेशिना निरस्ता।

अनभिधानपक्षे तु कर्तृत्वविवक्षायाः शङ्कितुमप्यशक्यत्वात्सप्तदशप्राजापत्यानिति बहुवचनेन प्रथमत्रित्वातिक्रमवत्, पूर्वकालत्वेन प्रधानवाजपेयातिक्रमवच्च तिङः स्थाल्यादिपदोक्तसंख्यानुवर्त्तनान्यथानुपपत्त्या कर्त्रतिक्रमेणाधिकरणादि संख्यावाचित्वकल्पनैव युक्तेत्याशयेन प्रश्नपूर्वं सर्वकारकाणां स्वव्यापारेषु कर्तृत्वसद्भावात् स्थाल्यादीनां कर्तृत्वाविवक्षया तिङः स्थाल्यादिपदोक्तसंख्यानुवर्त्तनानुपपत्तिपरिहारोपपत्तेर्न कर्त्रतिक्रमेणाधिकरणादिसंख्यावाचित्वकल्पना युक्तेत्याशयेन परिहरति—**कुत इति**।

प्राथम्यप्राधान्ययोग्यस्यानतिक्रमे हेतोः कदाचित्कर्तृत्वानपायात्कर्त्रतिक्रमायोगसूचनार्थं प्राथम्यप्राधान्यवाचिन्या मुख्योक्त्या तद्योगी कर्त्ता लक्षितः। कर्तृत्वविवक्षा यथेष्टं यस्माद् युज्यते, तस्मान्न कर्त्रतिक्रमे कारणमस्तीत्यन्वयसूचनार्थे यस्माच्छब्दार्थे नन्विति-निपातः। उत्तरार्द्धमुपपादयितुमाह—**सर्वत्रैवेति**।

स्वव्यापारे च काष्ठादेः करणत्वाद्यसम्भवः।

इति तद्भूताधिकरणवार्त्तिके सर्वकारकाणां स्वव्यापारेषु कर्तृत्वस्योक्तत्वात्, तत्तस्मिन्नेव चाधिकरणे,

तत्स्वातन्त्र्यावगत्यैव विनियुङ्क्ते प्रयोजकः।

इत्यादिवार्त्तिकेन स्वव्यापारकर्तृत्वाद्विना प्रधानक्रियागतकारकवैचित्र्यानुपपत्त्युक्त्या स्वव्यापारे कर्तृत्वस्योपपादितत्वात्स्थाल्यादिव्यापाराणां पच्यर्थत्वात्पाकत्वविवक्षया यत्स्थाल्यादीनां स्वव्यापारे कर्तृत्वं, तदेव पाके कर्तृत्वं विवक्षितमिति कल्पनं न्याय्यमित्यर्थः। ततश्च तिङ्वाच्यया संख्यया कर्त्रनतिक्रमेऽपि तिङः स्थाल्यादिपदोक्तसंख्यानुवर्तनोपपत्तेः कर्त्रतिक्रमहेत्वभावान्न कारकान्तरसंख्याभिधानकल्पनयित्येवं पूर्वार्द्धस्योत्तरार्द्धोपपाद्यत्वसूचनार्थं पश्चाद्व्याख्यायै न कारकान्तरेत्युक्तम्॥ संख्यया सदा कर्त्रनतिक्रमे सत्योदनः

पच्यत इति प्रयोगायोगमाशङ्क्य वस्तुलक्षणकर्मप्राधान्यविवक्षाख्यस्य कर्मसंख्योक्तिकारणस्य तदेतदवश्यभावाभ्यामेवं परिहर्त्तव्यमित्यादिवार्तिकोक्तत्वात्कर्मान्वयोपपत्तिमाह—**एवं तु सतीति**। कर्त्रन्वयनियमायोगात्तर्हि काष्ठानि पचन्तीत्यादौ करणादिसंख्योक्तिरपि न्याय्या स्यादित्याशङ्क्य, कर्मवद्वस्तुलक्षणायाः, कर्तृवद्वा शब्दलक्षणायाः प्राधान्यविवक्षायाः संख्यान्वयकारणभूतायाः करणादौ कदा चिदभावाद्यवस्थायाः करणादीनां तु न वस्तुलक्षणेत्यादिवार्तिकोक्तत्वात्परिहरति—**न चेति**। प्राधान्यभावात्कारकान्तराणां तिङ्वाच्यसंख्यान्वयायोगाभ्युपगमे तेनैव न्यायेन कर्मण एकत्वे द्वितीयैकवचनमित्येकत्वादिविशेषणत्वेन कर्मादिशब्दव्याख्यानात्कर्मादीनां प्राधान्याभावेनानभिहितत्वविशेषणत्वविशेषणान्वयस्याप्ययोगापत्तेरनभिहिताधिकारेणाभिहितत्वस्य कारकविभक्तिप्रतिबन्धे हेतुत्वान्वाख्यानायोगात्पूर्वपक्ष्यभिमताभिहितत्वस्य कारकविभक्तिप्रतिबन्धहेतुतापि न सिद्धचेदित्यादित्याशयेनान्य एकदेशी प्रसङ्गादाह—**तदा त्विति**। अनभिधानस्य संख्याविशेषणत्वं प्रश्नपूर्वमुपपादयति—**कुत इति**। तस्य विभक्तिवाच्यविशेषणस्यासम्बन्धः समत्वादिति न्यायाद्विशेषणं न युक्तमित्यर्थः। श्लोकं व्याचष्टे—**न हीति**। एकेनैव विशेषणेन विशेष्यत्वसिद्धेर्विशेषणान्तरान्वयायोगमाशङ्क्य पुनरपीत्युक्तम्॥ एतदेव दृष्टान्तेनोपपादयितुमाह—**तथा चेति**।

संख्याविशेषणत्वेनानभिहिताधिकारव्याख्यामुपसंहरति—**तस्मादिति**। अनिष्टापत्त्यै तां व्याख्यां दूषयति—**एतस्मिंस्त्विति**। संख्यामात्रविशेषणेनानभिधानेन तन्मात्रस्याभिहितस्य व्यावृत्तेः प्रथमया कर्मैकत्वानभिधानेप्येकत्वस्य तावदभिधानान्नानिष्टद्वितीयापत्तिरिति परिहारं शङ्कते—**अथेति**। प्रथमायां प्रयुक्तायां द्वितीयानापत्तावपि तत्प्रयोगात् प्राग्द्वितीयापत्तिरनिवार्येति परिहरति—**तदिति**। न केवलमनिष्टद्वितीयापत्तिः किंत्विष्टद्वितीयानापत्तिरपीत्याह—**अपि चेति**। कर्मादिविशेषणानभिहितत्ववादिनोपि कटद्वितीयया कर्मैकत्वस्येव कर्मणोप्यभिहितत्वाद्भीष्मादौ द्वितीयाभावप्रसञ्जनं तुल्यमित्याशङ्कते—**नन्विति**। विशेषणान्वयार्हत्वसूचनार्था विभक्तयर्थतोक्तिः॥

कर्मादिविशेषणानभिहितत्ववादिपक्षे तिङादिभिरन्यैश्चानभिहितत्वस्याभिहितपर्युदासकत्व। [प्राप्तौ तिङादिपुनर्वचनेनान्यैरनभिहितत्वस्य पर्युदासकत्व] परिसंख्यानाद् द्वितीयायाश्च तिङादिभ्योऽन्यत्वात्तयाभिहितानां भीष्मादिगतानां कर्मणां द्वितीयाविषयत्वपर्युदासानुपपत्तेर्न द्वितीयाभावप्रसञ्जनं तुल्यमिति परिहरति—**नेति**। संख्याविशेषणानभिहितत्ववादिपक्षेपि परिसंख्यातुल्यत्वेनाशङ्किता प्रत्यवतिष्ठते—**नन्विति**। पर्युदासस्यापि निषेधवत्प्राप्तिपूर्वकत्वेन संख्यायां कृदाद्यभिहितत्वाप्राप्तेरयोगादनभिहितत्वस्य कृदाद्यभिहितपर्युदासकत्वाप्राप्तेः कृदादिविशेषणस्य पुनर्वचनत्वायोगेन परिसंख्यानायोगापत्त्या वैषम्यं परिहर्त्ताह—**भवेदिति**। तिङ भावनायां स्मृत्यभावेपि भावनावाचित्ववत्कृदादीनामस्मृतापि संख्यावाचिता भविष्यतीत्याशङ्क्य, 'पूर्वापरीभूतं भावमाख्यातेनाचष्टे' इति स्मृतेर्द्वात्वर्थविषयत्वाभ्युपगमेनापि परिहारोक्तिशक्तिप्रदर्शनार्थं नापीत्युक्तम्। तिङादीना-

मिति वाच्ये कृदाद्युक्तिः किमर्थेत्याशङ्कानिरासहेतूक्तिपूर्वं वैषम्यमुपसंहरति—**तेनेति**। अनिष्टापत्तीष्टानापत्ती उपसंहरति—**अत इति**। भीष्मादिभ्यो द्वितीयादिप्रासिव्यावृत्त्यर्थेनैवकारेणेष्टानापत्त्युपसंहारः सूचितः। पर्यनुयोगसाम्यवैषम्योक्त्योरनिष्टापत्तीष्टानापत्त्याख्यपर्यनुयोगद्वयसाधारण्यसूचनार्थः श्रुत्या निष्टापत्त्युपसंहारः। अतोस्य पर्यनुयोगद्वयस्य पक्षद्वयसाम्याख्यात्परिहारान्ननु चेति वार्त्तिकशङ्कितादन्यः परिहारो वाच्य इत्याह—**इतीति**। कर्मादिवाच्यवादिमते, तद्विशिष्टसंख्यावाच्यवादिमते वाऽनभिहितत्वस्य कर्मादिविशेषणतायामेवानिष्टापत्तीष्टानापत्त्योः परिहारः सम्भवति, न तु संख्याविशेषणतायामिति तावत्कर्मादिविशेषणत्वाभ्युपगमेन परिहारवाच्यत्वसूचनायाह—**स चेति**। एतदेवोपपादयति—**तथा हीति**। परिहारार्थं कर्मादिविशेषणतामाह—**यस्य चेति**। कर्मादिविशिष्टैकत्वादिवाच्यवादिमते कर्मादेर्विशेषणत्वाद्विशेषणान्वयायोगमुक्तं परिहरति—**यद्यपि चेति**। परिहारोपपादनार्थं सामान्यन्याय तावदाह—**समासस्थं हीति**। वाक्यसमासस्थयोर्विशेषणयोर्वैषम्यस्यावश्याङ्गीकार्यतां सूचयितुमाह—**एवमादय एवं चेति**। प्रकृते योजयितुमाह—**वाक्यस्थाश्चेति**। पूर्वसिद्धान्तपक्षसाधारणे कर्मादिविशेषणत्वेनाभिधानस्योक्ते लब्धावकाशः पूर्वपक्षी सिद्धान्तेऽनिष्टतृतीयापत्ति—

संख्यायां कारके वा धीर्विभक्त्या हि प्रवर्तते।

इत्यादिवार्तिकोक्तन्यायनिरस्तामत्यागमविरोधे न्यायस्याक्षमत्वादनिरस्तां मत्वा पुनः शङ्कते—**ततश्चेति**। कर्त्तरि तृतीयाविध्यभावात्संख्यायास्तु तिङाभिहितत्वात्कस्योक्त्यै तृतीयाप्राप्तिरित्याशङ्क्य, संख्यामभिधातुमित्युक्तेनाभिहितत्वस्य विशेषणत्वाभावेनाभिहिताया अपि संख्यायाः पर्युदासायोगात्तृतीययाभिधानाविरोधसूचनार्थश्चकारः। ततः संख्याविशेषणत्वाभावात्कर्मादिविशेषणेनाऽनाभिहितत्वेन संख्यापर्युदासायोगाच्चेत्यर्थः।

संख्यायां कारके वेत्यादिवार्तिके निरस्तायास्तृतीयाप्राप्तेः पुनः शङ्काऽयोगं शङ्कते—**गतार्थत्वादिति**। शास्त्रेण पर्युदासायोगात्कृदाद्युक्तकारकगतसंख्याविषयायां कारकविभक्तौ गतार्थत्वस्य प्रतिबन्धकत्वदर्शनात्तिङ्वाच्यभावनाक्षिप्तकारकगतसंख्याविषयायामपि कारकविभक्तौ गतार्थत्वस्य प्रतिबन्धकत्वानुमानाशयत्वं तस्य वार्त्तिकस्यापाद्य, भीष्मादिकारकविभक्तिभिरनैकान्तिकत्वेन हेतुं दूषयति—**नेति**। संख्याविशेषणत्वेऽनभिधानस्य भीष्मादिषु कारकविभक्त्यनापत्त्युक्त्याऽर्थाद्भीष्मादिकारकविभक्त्युत्पत्तेरिष्टत्वादनैकान्तिकतेत्यर्थः।

इष्टप्रथमाविघातकारी चायं हेतुरित्याह—**यदि चेति**। प्रातिपदिकानुग्रहार्थत्वेनार्थवत्त्वात्प्रथमायामानर्थक्याख्यगतार्थत्वाभावादिष्टविघातानापत्तिं शङ्कते—**केवलेति**। तृतीयायामपि तर्हि प्रातिपदिकानुग्रहार्थत्वेनार्थवत्त्वोपपत्तेर्हेतोरसिद्धत्वं स्यादित्याह—**नेति**। एवमपि प्रथमातृतीययोर्विकल्पापत्तौ तृतीयानियमोपपादनार्था यथाविहितोक्तिः। अनुमानापादिते च तृतीयाप्रसङ्गे सति गतार्थत्वानुमानेन निरासः शङ्क्येत, कर्तृकरणयोस्तृतीयेत्यागमेन त्वादितत्वादागमविरोधे चानुमानाप्रामाण्यान्न तन्निरासोपपत्तिरिति पुनः

शङ्काशयं पूर्वपक्षी प्रकटयति—**न चैषइति** । अनभिहिताधिकारस्थस्याभिदधातेरभिधानाख्यशब्दव्यापारवाचिनस्तदेकार्थसमवेततात्पर्याख्यशब्दव्यापारलक्षणार्थत्वादनभिहितशब्दस्य शब्दतात्पर्यविषयत्वाख्यविशेषरूपेणानवगतत्वे वृत्तेरनभिहिताधिकाराख्येनागमेनैव तृतीयापर्युदासोपपत्तिं मत्वा सिद्धान्ती पुनः शङ्कां परिहरति—**तस्मादिति** । तात्पर्यवृत्त्या कर्तृकर्मावगत्युपपादनार्थं कर्तृकर्मणोरशाब्दत्वे शाब्द्या संख्ययान्वयायोगापत्तेः संख्यान्वयसिद्धयर्थं शाब्दत्वसिद्धयै पचतिपच्यतेशब्दाभ्यां कर्तृकर्मणोरादृतत्वोक्तिः । अवाच्ययोरपि कर्तृकर्मणोः शब्दतात्पर्यविषयत्वसंभवे कारकान्तराणामपि गम्यमानत्वाविशेषेण शब्दतात्पर्यविषयत्वसंभवात्स्वविभक्ति-प्रतिबन्धकत्वापत्तिमाशङ्कय संख्यान्वयान्यथानुपपत्तेः शब्दतात्पर्यकल्पिकायाः कारकान्तरे स्वभावाद्वैषम्यमाह—**कारकान्तराणीति** । कर्तृकर्मणोरेवाख्यातात्तात्पर्यविषयतया प्रतीतिः तन्निमित्तश्च संख्यान्वयो न कारकान्तराणामिति नियमे को हेतुरित्याशङ्कय, प्राधान्यविवक्षाहेतुकत्वात्तात्पर्यस्य, कारकान्तराणां च कर्मवद्वस्तुलक्षणस्य, कर्तृवद्वा शब्दलक्षणस्य प्राधान्यस्य विवक्षितुमशक्यत्वं नियमहेतुतया करणादीनां तु न वस्तुलक्षणा नापि शब्दलक्षणा प्राधान्यविवक्षास्तीत्यादिवार्तिकेनोक्तमित्याह—**कारकत्वेति** ।

नेह पच्यतइत्यादिषु भावे लकारोत्पत्तौ धात्वर्थभावनामात्रस्य विवक्षितत्वेन कर्तृकर्मानाश्रयणाद्धात्वर्थभावनयोर्व्यभिचारितया कर्तृकर्मागमकत्वाशङ्कां वैयाकरणैः स्वग्रन्थोक्तां कर्तृकर्मणोरसाधारण्येभिहिते, समर्थनीय एव चैषोर्थः संख्यासम्बन्धे कर्त्तुरसाधारणतासिद्धयर्थमित्युपक्रम्याऽऽसितिष्ठत्वादिषु करणानपेक्षणादित्यादिवार्तिकोक्तस्य कारकान्तरव्यभिचारस्य बुद्धिस्थत्वात्तद्दृष्टान्तेन बुद्धिस्थां कर्तृकर्मानभिधानोपपादनाय परिहर्तुमनुभाषते—**यत्त्विति** । तुल्यपर्यनुयोगापादनेन परिहरति—**तत्रेति** । एकान्तान्निर्णयादन्य एकान्तो व्यभिचार इत्यर्थः । श्लोकं व्याचष्टे—**यथैवेति** ।

शब्दस्य शक्तया वाचकत्वात्, तस्याश्च सकर्मकधात्वाद्यनुग्रहादन्यथात्वोपपत्तेर्व्यभिचारेऽपि वाचकत्वाविघातः । अर्थस्य त्वव्यभिचारिण एव गमकत्वाद्व्यभिचारे गमकत्वव्याहतिरित्याशयेन वैषम्यं शङ्कते—**अथेति** । अर्थत्वेप्यव्यभिचारतुल्यत्वेऽपि च शुक्लादिशब्दोक्तस्यार्थस्य शब्दार्थान्तरान्वयार्हद्रव्यगमकत्वदर्शनाच्छुक्लत्वरूपादिशब्दोक्तस्य त्वदर्शनादर्थस्यापि शब्दविशेषापादितशक्तिविशेषवशेनैव गमकताम्—

तस्माद्यथैव शब्दानां शक्तिभेदोऽभिधां प्रति ।
प्रत्येतव्यः, तथार्थानां लक्ष्यार्थान्तरगोचरः ॥

इत्याद्यरुणाटीकोक्तामभिप्रेत्य परिहारसाम्यमाह—**तथेति** । अनुग्राहकसाम्यं दर्शयितुमाह—**तच्चेति** । अकर्मकादश्यन्विकरणात्सर्वस्माद्धातोः श्यन्विकरणात्तु परस्मैपदिनः परो यतेशब्दः कर्मणोऽनभिधाता, अन्यस्मात्तु परः कर्मवाचिन्युपपदे सत्यभिधाता तदभावे विवक्षावशात्क्वचित्कर्माभिधायि क्वचिद्भावाभिधायीति यथा विविच्यते तथागमकतापि

विवेक्तुं शक्येत्याशयः। अनुग्राहकानपेक्षायां तु ते शब्दस्य त्रिष्वपि दर्शनाद्यतेशब्दस्य च श्यन्विकरणेष्वात्मनेपदिषु धातुष्वृतेरीयङितीयङ्प्रत्ययेषु धातोरेकाचो हलादेः, क्रियासमभिहारे यङिति यङ्प्रत्ययेषु सार्वधातुके यगिति यक्प्रत्ययेषु कर्त्तुः क्यङ् सलोपश्चेति क्यङ्प्रत्ययेषु च भावकर्तृकर्मसु त्रिष्वथ विशेषादभिधानपक्षेऽपि सन्देहहेतुत्वं स्यादित्याह— **इतरथेति।**

अन्वयव्यतिरेकाभ्यां निष्कृष्टेर्थे नियम्यते।

इत्यभिधानशक्तिनियमस्याप्यन्वयव्यतिरेकाधीनत्वाभ्युपगमेनाव्यभिचारावेक्षत्वाद्व्यभिचारेऽभिधातृत्वस्याप्यनुपपत्तेस्तद्वद्गमकत्वोपपत्त्युक्तिरयुक्तेत्याशङ्क्य,

नामाख्यावादिसाकल्ये वैकल्यानुगमे सति।
तदर्थानुगमो दृष्टः पदवाक्यान्तराश्रयः॥
इत्याशङ्कितस्यान्वयव्यतिरेकभङ्गस्य ।
अत्र ब्रूमः पदात्मानः सर्वेष्वेतेषु भिद्यते॥

इत्यादितद्भूताधिकरणवार्तिकोक्तेन परिहारेणाभिधातृत्वगमकत्वविषयं पक्षद्वयं समर्थनीयमित्येव परिहारसाम्यमुपसंहरति—**तस्मादिति।** साम्ये सति कथं वाचकपक्षत्यागेन गमकापेक्षावधारणेत्याशङ्क्य कर्तृकर्माविनाभूतार्थाभिधायित्वादिभिरनुमानविरोधायोक्तैर्हेतुभिरित्याह—**ततश्चेति।**

तत्पदाभेदवर्त्तित्वादित्यादिभिर्वाचकत्वहेतुभिः सप्रतिसाधनत्वशङ्कानिरासायाऽनभिधानहेतूनां निर्दोषतयेतरेभ्यो विशेषो बलीयस्त्वाय विशेषोक्तयोक्तः। कृदादिष्वनुभिहितशब्दस्य मुख्यत्वसम्भवे लक्षणाश्रयणायोगेन मुख्यत्वावधारणात्सकृच्छ्रुतस्य वैरूप्यपरिहाराय तिङ्क्ष्वपि मुख्यत्वावगतेर्भाष्यकाराभिमतलक्षणावृत्त्यपरितोषात्स्वयं मुख्यत्वाभ्युपगमेन पर्युदासोपपत्तिं वक्तुमारभते—**अथ वेति।** अज्ञानाशयः पृच्छति—**कथंतर्हीति।** गूढाशय उत्तरमाह—**पर्युदस्तत्वाविति।** कर्त्रनभिधानाभ्युपगमात्पर्युदासायोगं शङ्कते—**कथमिति।** परिभाषिकाभिहितत्वाशयेन परिहरति—**तिङेति।** पारिभाषिकाशयमज्ञात्वा पृच्छति— **किमर्थं तर्हीति।** आशयप्रकटनेनोत्तरमाह—**लोकेति।** शब्दार्थान्वाख्यानस्य पारिभाषिकत्वायोगाशयेन सोपहासं शङ्कते—**किमिति।** अज्ञाताशयः परिहरति—**बाढमिति।** शङ्किताशयं प्रकटयति—**भवत्विति।** शङ्काशयं दृष्टविरोधेन दूषयति—**कथमिति।** लकारलक्षितानामादेशानां कर्तृकर्मवाचित्ववर्णनात्, लकारद्वारादेशानां वाचकत्वसिद्धचै लकारस्य वाचकत्ववर्णनाद्वा नाविद्यमानवाचकवर्णनं व्याकरणेस्तीति द्वेधा दृष्टविरोधपरिहारं शङ्कते—**नन्विति।** आद्यपक्षे लक्षणादोषापत्तेः, द्वितोयपक्षे च परोक्षवृत्त्यान्वाख्यानदोषापत्तेः पक्षद्वयमप्ययुक्तमित्याह—**नैतदिति।** न्यायविरोधसूचनार्थश्चकारः। आद्यपक्षदूषणार्थं पूर्वार्द्धं व्याचष्टे—**लकारमिति।** द्वितीयपक्षदूषणार्थमुत्तरार्द्धं व्याचष्टे— **अथापीति।** वस्तुनो लकारेणानभिधीयमानत्वादादेशोत्पत्तेः प्राग्लकारवाच्यत्वाध्यवसानाशक्तेस्तद्द्वारादेशवाच्यत्वान्वाख्यानं न युक्तमित्याशयः। पक्षद्वयमध्येऽन्यतरपक्षसम्भवेप्यर्था-

पत्तिभङ्गन्यायेन कर्तृकर्मणोरवाच्यत्वावगमादन्यायविरोधापत्तेरप्यविद्यमानवाचकवर्णनं गम्यत इति चशब्दव्याख्यार्थमाह—**अन्ते चेति** ।

पक्षद्वये दोषद्वयस्योक्तस्योपेक्षणात्समासावपीत्यन्तेचेत्यस्यार्थः । अतोन्यायविरोधेन कर्तृकर्मणोरादेशवाच्यत्वस्याप्ययोगाल्लकारवाचकत्व - कर्तृकर्मवाच्यत्वयोर्मध्येकस्मिश्चित् पारिभाषिके कल्पनीये वाच्यत्वस्यादेशावस्थायामप्यसंभवेनैकान्ततः पारिभाषिकत्वस्याश्रयणीयत्वात् लकारस्य तु स्वरूपेणाऽप्रत्वेप्यादेशरूपेण सत्वात् संख्यान्वयरूपेण च कर्तृकर्मवाचित्वस्याप्यौपचारिकस्य सत्वाद्वाच्यत्वस्यैव पारिभाषिकत्वकल्पनायाः श्रेष्ठत्वावगतेर्लकारस्यासत्वाद्वाचकता पारिभाषिक्यस्तु न तु कर्तृकर्मणोर्वाच्यतेत्याशङ्का न कार्येत्याशयेनाह—**अत इति** । संख्यान्वयरूपेण वाचकत्वस्येव वाच्यत्वस्याप्यौपचारिकस्य संभवात्पारिभाषिकता न युक्तेत्याशङ्क्य, लकारावस्थायामौपचारिकस्यापि वाच्यत्वस्यायोगादादेशावस्थायां तु कर्तुरेवत्वेतिबितिविशेषेणविशेष्यान्वयाभ्युपगमनेन कर्तृकर्मणोर्वाच्यसंख्याविशेषणत्वमात्रप्रतीतेर्वाच्यत्वानन्वाख्यानात्पारिभाषिकतैव युक्तेत्याशयेन परिहर्तुमाह—**न हीति** । एतदेव मीमांसापक्षद्वयहेतूक्तिपूर्वं विवृणोति—**तेनेति** । ततश्चैष सूत्रार्थो भवतीत्याह—**तेनैतदिति** ।

प्रयोजनाऽपेक्षायां च स्वशास्त्रव्यवहारार्थंताऽवसीयत इत्याह—**किं पुनरिति** । मुख्यत्वाभ्युपगमेन पर्युदासोपपत्तिमुपपादितामुपसंहरति—**तस्मादिति** । एवं सति कर्तुरभिहितत्वेन निमितेन पचतिशब्दस्य कर्तृविभक्तिप्रतिबन्धकत्वात्कर्मणश्चाभिहितत्वेन निमित्तेन पच्यतेशब्दस्य कर्मविभक्तिप्रतिबन्धकत्वादित्येवं विशिष्टस्य हेतोर्विशेषेणासिद्धयोगापत्तेर्विशिष्टस्य चानैकान्तिकत्वाभावान्न कश्चिद्दोषः स्यादित्याशङ्क्य 'कर्तृकरणयोस्तृतीया, कर्मणि द्वितीयेत्यागमापादितस्य कारकविभक्तिप्रसङ्गस्य पारिभाषिकेणाभिहितत्वेन प्रतिबन्धाख्यपरिहारसंभवेऽपि पारिभाषिकस्यावास्तवत्वाद्विशेषणासिद्धिरपहृतैवेति सूचयितुमाह—**इतीति** । उक्तेन प्रकारेण कारकविभक्तिप्रसङ्गमात्रं परिहृतं, न तु 'संख्यायां कारके वा धीरित्या'दिवार्तिकसूचिताविशेषणाऽसिद्धिः परिहृतेत्यर्थः ।

चतुर्थप्रयोगस्थं तद्विशेषावबोधकत्वादिति हेतुमनैकान्तिकत्वेन दूषयितुमाह—**यस्त्विति** । तद्विशिष्टाभिधायित्वस्यात्र हेतुत्वेन विवक्षितस्य शिंशपादिशब्देष्वभावान्नानैकान्तिकतेत्याशङ्क्य, शुद्धसंख्याभिधानेऽपि प्राथम्यप्राधान्यविशेषात्कर्तृकर्मान्वयनियमस्य, यद्वा भावनया कर्त्ता प्रथमं प्रतिपाद्यते इत्यादिवार्तिकेनोपपादितत्वाद्भावनासमकालसंख्याप्रतीतेश्च प्राक्कर्तृकर्मणोरप्रतीतित्वेन विशेषणत्वायोगाद्

यतः कर्तृगतां संख्यां प्रतीमः केवलामतः ।

इत्यादिवार्तिकोक्तस्य तु विशिष्टसंख्याभिधानस्य परमतत्वात्तद्विशिष्टाभिधायित्वस्यासिद्धत्वापत्तेः, कारकविभक्तिषु कारकवाचित्वस्य, तद्विशिष्टसंख्यावाचित्वस्य च दर्शनाद्यद्विशेषवाचि न तद्वाचीति सामान्यव्याप्तिविवक्षया तद्विशेषवाचिताऽत्र हेतुर्वाच्येति कृत्वा शिंशपा-

दिशब्दैरनैकान्तिकतास्त्येव । तद्विशेषबोधकत्वहेतुपक्षे त्विन्द्रयैरप्यनैकान्तिकत्वं सामान्यव्याप्तिविवक्षायां च तिङो द्रव्यविशेषकारकशक्तिवाचित्वेन द्रव्यवाचित्वस्यापि साध्यत्वापत्तेः पक्षस्यापि तिङः साध्यशून्यत्वात्तत्राप्यनैकान्तिकता भवन्तं प्रतिवक्तुं शक्येत्याशयेन परिहर्तुमाह—**तेनेति** ।

पञ्चमप्रयोगस्थं तद्विशेषणैः सम्बध्यमानत्वादिति हेतुं जातिगुणशब्दानां गौः शुक्लः, अरुणा स्त्रीति व्यक्तिद्रव्यविशेषगुणलिङ्गान्वयिनामप्याकृत्यरुणाधिकरणयोर्व्यक्तिद्रव्यवाचित्वनिरासादनैकान्तिकत्वेन दूषयितुमाह—**यद्यपीति** ।

जातिगुणशब्दानां व्यक्तिद्रव्यवाचित्वाभ्युपगमेऽपि, रसशब्दे द्रव्यविशेषणस्नेहाद्यन्वयिन्यपि द्रव्यवाचित्वाभावदनैकान्तिकतामाह—**अपिचेति** । अश्वशब्दे चाश्वारोहविशेषणहरणक्रियान्वयिन्यप्यश्वारोहवाचित्वाभावदनैकान्तिकतामाह—**तथेति** । या तु न च गम्यमानस्य विशेषणसम्बन्धो । यथा धूमशब्दादग्नेरवगतस्येति वार्तिके गम्यमानस्य विशेषणान्वयानर्हतोक्ता, सा धूमादिशब्दस्याग्न्यादौ तात्पर्याभावात् न त्ववाचकत्वादिति सूचयितुमाह—**यत्त्विति** । कर्त्रनभिधानोपसंहारभाष्यं व्याचष्टे—**तस्मादीति** । कर्त्रनभिधानव्युत्पादनफलश्रुतिप्रकरणाविरोधसिद्धयुक्तचर्थं न चेदिति भाष्यं व्याचष्टे—**ततश्चेति** । इतरथेत्यादिपूर्वपक्षभाष्योक्तसिद्धान्तदोषानुभाषणार्थं यत्त्विति भाष्यं व्याचष्टे—**यत्त्विति** । पुरुषः प्रयत्यते व्यापार्यतेनुष्ठाने प्रेर्यतेनेनेति व्युत्पत्त्या पुरुषप्रयत्नशब्देन विध्युक्तिसूचनार्था विध्यानर्थक्योक्तिः । कर्मधर्मपक्षोक्तचा कर्मयुक्तपुरुषधर्मपक्षेप्यानर्थक्योक्तेः सूचनार्थः शुद्धपुरुषार्थत्वोपसंहारः । दोषपरिहारार्थं तदित्यादिभवतीत्यन्तं भाष्यं प्रयोजनापेक्षत्वात् सामान्यतः किंचित्प्रत्यङ्गत्वेनावगतं सत्प्रकरणेन प्रकरण्यङ्गतया गृह्यते न चा विहितं सामान्यतोङ्गतयावगतं भवतीत्येवं व्याख्यातुमाह—**तत्रेति** । तावन्नास्य वदनस्य प्रयोजनमपेक्ष्यते विना चापेक्ष्यमाणेन प्रयोजनेन वदनधात्वर्थः सामान्यतोङ्गत्वानवगमान्न प्रकरणेन क्रत्वङ्गं प्रतीयत इत्यर्थः ।

श्लोकं व्याचष्टे—**विधीति** । प्रकरणग्रहणोक्तेः प्रयोगवचनग्रहणसिद्धचर्थत्वसूचनार्थं—**न चेत्युक्तम्** । अङ्गत्वसिद्धचर्थतयाङ्गविध्यर्थवत्त्वोपसंहारार्थं तस्मादिति भाष्यं व्याचष्टे—**तस्मादिति** । साक्षाच्छब्दः प्रधानविषयः । पारम्पर्यशब्दोऽङ्गविषयः दर्शपूर्णमासोपकारसम्बन्धितया प्रयोजनभूतया तत्सिद्धचर्थमित्यर्थः ।

निषेधस्य क्रत्वर्थत्वसिद्धान्तसिद्धचै क्रत्वर्थवदनविषयत्वोपसंहारार्थमत इति भाष्यं व्याचष्टे—**अतश्चेति** । ततश्चैष शास्त्रार्थो भवतीत्युक्तचर्थं तेनेत्यादिभाष्यं संकल्पानृतनिषेधोक्तचर्थतया भासमानमयुक्तत्वापत्तेर्वदनानृतनिषेधोक्तचर्थतया व्याचष्टे—**ततश्चेति** । शास्त्रार्थोदाहरणोक्त्यर्थं तेनेत्यादिभाष्यं संकल्पानृतनिषेधोक्तचर्थतया भासमानमयुक्तत्वापत्तेर्वदनानृतनिषेधोक्तचर्थतया व्याचष्टे—**तेनेति** । वद्युदित्वेति वाच्ये न संकल्प्येतीत्याशङ्कच, वदनलक्षणार्था संकल्पोक्तिर्द्विर्णिजन्तत्वाद्वादित्वेत्यर्थसिद्धिरित्येवं द्वेधा व्याचष्टे—**संकल्प्येति चेति** । संकल्पितशब्दोप्येवं द्विधा व्याख्येयः ।

आहेति भाष्यं विध्यनुवादचिन्ताप्रयोजनाक्षेपार्थत्वेन मूलमूलिभावसंयोगान्तरविधिचिन्ताप्रयोजनाक्षेपार्थत्वेन च व्याचष्टे—**आहेति**। स्मृतिमूलतया च विधाविति चकारार्थः। उच्यत इति भाष्यं पूर्वपक्षे स्मृतिप्राप्तक्रतुयुक्तपुरुषधर्मानुवादत्वात्तत्र क्रतौ निषेधातिक्रमे स्मार्त्तंक्रत्वङ्ग [ यद्यविज्ञाते भूर्भुवः स्वाहेत्याहवनीयहोतव्यमिति यद्विहितं प्रायश्चित्तं, तत्कार्यं, सिद्धान्ते क्रत्वङ्गतया यजुर्वेदविहितत्वाद्याजुर्वैदिकक्रत्वङ्गभ्रेषे यदि यजुष्टो, भुवः स्वाहेत्यन्वाहार्यपचने होतव्यमिति यद्विहितं, तत्कार्यमित्येवं विध्यनुवादचिन्ताप्रयोजनसमाधानार्थत्वेन तावद्व्याचष्टे—**तस्मादिति**। स्मृतिविहितक्रत्वङ्ग ] भ्रेषनिमित्तत्वोक्त्यर्थतया भाष्यस्थस्मार्तशब्दव्याख्यार्था नैमित्तिकोक्तिः। यजुर्वेदविहितक्रत्वङ्गभ्रेषनिमित्तस्य प्रायश्चित्तस्य करणमित्यर्थः।

श्लोकं व्याचष्टे—**स्मृतौ चेति**। चकारेण क्रत्वङ्गतया विहितत्वसूचनात्स्मृतौ क्रत्वङ्गत्वेन विहितस्य भ्रेषे यत्प्रायश्चित्तं तदेवानृतवदननिमित्तं कार्यमित्यर्थः। पूर्वपक्षप्रयोजनोपपादनार्थं स्मृतेस्त्वित्युक्तम्।

मूलमूलिभावपूर्वपक्षे शुद्धपुरुषधर्मः तत्रैवं सति भ्रेषे।
गायत्रीमशुचौ दृष्टे चापले चानृतेति चेति।

स्मृतिविहिते प्रायश्चित्तमित्येवं व्याख्यातुमाह—**एवमिति**। स्मृत्यैव नानृतं ब्रूयादित्यनया निषेधार्थस्य विधेयतया 'गायत्रीमनृते जपेदित्यनया च यज्ञाङ्गत्वानपेक्षस्य निषेधातिक्रमस्य प्रायश्चित्तनिमित्ततयानुसृतत्वात्स्मार्त्तमेव प्रायश्चित्तमित्यर्थः। मूलमूलिभावेप्यस्य निषेधस्य याजुर्वैदिकत्वाद्यदि यजुष्टः प्राप्तः पदार्थ आर्तिनाशमियादित्येतावतश्च निमित्तत्वसिद्धेरुद्देश्यनिमित्तविशेषणस्य यज्ञान्वयस्य विवक्षायोगाद्यजुर्वेदविहितनिमित्तमेव भ्रेषे प्रायश्चित्तं स्यादित्याशङ्कते—**नन्विति**। विशेषणाविवक्षाभ्युपगमेनैव तावत्परिहरति—**नैतदिति**। यज्ञशब्दस्यार्तिविषयनिर्देशकत्वानभ्युपगमे यजुष्ट इत्यस्य विषयनिर्देशकत्वायोगात्साकाङ्क्षत्वापत्तेर्यज्ञशब्दस्यैव यज्ञाङ्गलक्षणया विषयनिर्देशकत्वावगमाद्धविः शब्दवन्नाविवक्षितार्थता युक्तेत्याशयेन परिहारान्तरमाह—**किंचेति**। पूर्वार्द्धं व्याचष्टे—**यदीति**। यज्ञशब्दस्य तर्हि प्रकरणाज्ज्योतिष्टोमविषयत्वावगतेदर्शपूर्णमासाङ्गभ्रेषे नैतत्प्रायश्चित्तं युज्येतेत्याशङ्क्याह—**ज्योतिष्टोमेति**। निमित्तस्योद्देश्यत्वाद्यज्ञविशेषणायोगशङ्कां निराकर्तुमाह—**नत्विति**। उत्तरार्द्धं व्याचष्टे—**तस्मादिति**।

क्रतुयुक्तपुरुषधर्मविधिपूर्वपक्षेऽपि याजुर्वैदिकयज्ञाङ्गभ्रेषनिमित्तप्रायश्चित्तसाम्यात्क्रतुयुक्तपुरुषधर्मशुद्धक्रतुधर्मचिन्तायाः किंप्रयोजनमित्याशङ्कते—**यदा त्विति**। विहितानां, निषिद्धानां च याजमानतां प्रतियजमानं वा वृत्तिं पूर्वपक्षप्रयोजनमाह—**तदिति**। कर्मण्युत्पन्ने विधिशब्दः आवृत्तिसूचनार्थो, निषेधग्रहणार्थश्चापिशब्दः, सर्वशब्दः क्रत्वन्तरगतपदार्थग्रहणार्थः। श्लोकं व्याचष्टे—**सर्वे हीति**। समिदादीनामारादुपकारित्वेपि प्रयोजनाविशेषाद् दृष्टान्तमात्रत्वेनोपादानमिति सूचनार्थं—**तत्रेत्युक्तम्**। निषेधानामननुष्ठानात्मकत्वात्कथं याजमानतेत्याशङ्क्योपपादयितुं प्रतिषेधेष्वपीत्युक्ते विषयविशेषोक्त्यै यद्यजमानेनात्म-

संस्कारायोच्चार्यंते तत्र वैकल्पिकानां प्रयोगारम्भेन्यतरपक्षावधारणे कृते पक्षान्तरकार्यंतोक्त्यात्मकमवैकल्पिकाशीर्मन्त्रादिस्वरूपोच्चारणेऽपि चान्यथोच्चारणात्मकं मृषात्वं न कार्यं यजमानसंस्कारार्थोच्चारणादन्यत्र यजमानाच्चान्येषां यथेष्टवादितेत्युक्तम्। सिद्धान्ते तु सर्वत्र सर्वेषां च निषेधादध्वर्यादिभिरपि नान्यथा कार्यं यजमानसंस्कारार्थमपि च क्रत्ववैगुण्यायैव वर्जनीयमित्याह—**शुद्धेति**। शुद्धक्रतुधर्मपक्षे कर्तुर्गुणभूतत्वाद्विध्यर्थवन्निषेधार्थेपि सामाख्यानिककर्तृनियमोपपत्तेर्न सर्वेषां वर्जनं युक्तमित्याशङ्कते—**ननु चेति**। गुणभावेऽपि कर्तुरनपेक्षितत्वानियमायोगमाह—**सत्यमिति**। नञश्च निपातत्वेन केवलाप्रयोगित्वान्नित्यनिषेध्यपदसाहचर्यलक्षणया श्रुत्यैव निषेध्यप्राप्त्यान्वयात्प्रकृतक्रत्वर्थस्य निषेधस्य तदर्थप्राप्तिसंभवेऽन्यार्थप्राप्त्यनपेक्षत्वेपि यत्र प्रकृतेऽध्वर्यादौ कर्त्तरि निषेध्योर्थः प्राप्तः तत्र सर्वत्र गच्छन्निषेधो न वार्यते समाख्ययेति युक्त्यन्तरमाह—**श्रुत्यैव चेति**। निषेधान्वयात्प्राङ् निषेध्यस्यानुष्ठेयत्वावगमात्कर्त्रपेक्षानुपपत्तेर्निषेधान्वये चानुवाद्यत्वेन निषेध्यस्य श्रुतेनापि कर्त्राविशेष्यत्वायोगात्सायाख्यानिकेन विशेष्यता दूरोत्सारितेत्याह—**नैतदिति**। एतदेवोपसंहरति—**तस्मादिति**। क्रतुयुक्तपुरुषधर्मशुद्धक्रतुधर्मचिन्ताप्रयोजन[ स्य भाष्यानुक्तस्योक्तेस्तच्चिन्तानर्थवत् शङ्कानिरासार्थतां दर्शयत्सर्वत्र विधिषु निषेधेषु च क्रतुयुक्तपुरुषधर्मशुद्धक्रतुधर्मचिन्तायाः प्रयोजन ] मस्तीत्युपसंहरति—**तस्मादस्तीति** ॥ १९ ॥

इति तृतीयं कर्त्रधिकरणम् ॥

भा० प्र०—मलवद्वासा के साथ संवाद का निषेध जो पुरुषार्थक है, इसका अन्य भी कारण है, क्योंकि, कहा गया है कि "अन्नप्रतिषेधात् च"=इस स्थल में अन्न अर्थ में संसर्ग है। श्रुति में "नास्या अन्नमद्यात्। अभ्यञ्जनं वै स्त्रिया अन्नम्" इस स्त्री का अन्न नहीं खाए अभ्यञ्जन अर्थात् संसर्ग ही स्त्री का अन्न है। इस प्रकार श्रुति में कहा है कि रजस्वला स्त्री का संसर्ग न करे। दर्शपूर्णमास प्रकरण में स्त्रीसंसर्ग करने का प्रसङ्ग ही नहीं है। इसलिए इसको प्रकरण से उत्कृष्ट मानना पड़ेगा। अतः, यह जो मलवद्वासा के साथ संवाद निषेध है, वह पुरुषार्थक ही है।

"अप्रतिषेधात् च" = अन्नप्रतिषेध होने से यह क्रत्वर्थक नहीं है पुरुषार्थक है ॥१९॥

## अथाऽष्टमं सुवर्णधारणाधिकरणम्

## [८] अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ २० ॥ सि०

**शा० भा०—अनारभ्य श्रूयते, तस्मात्सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवति इति। सुवाससा भवितव्यं रूपमेव बिभर्त्ति इति। तत्र किं प्रकरणधर्म उत पुरुषधर्म इति संशयः। अत्रोच्यते। अप्रकरणे तु तद्धर्मस्ततो विशेषात्। पुरुषधर्म एवंजातीयकः स्यात्। कुतः। ततः—प्रकरणाधीतात्, विशेषोऽस्य। नायं प्रकरणाधीतः। यद्यप्रकरणे समाम्नातः, सर्वप्रकरणधर्मः**

स्यात्। अप्रकरणे समाम्नानं न कंचिद्विशेषं कुर्यात्। तस्मादेवंजातीयकः पुरुषधर्म इति ॥ २० ॥ सि० ॥

## अथाऽष्टमं सुवर्णधारणाधिकरणम्

त० वा०—इदानीमप्रकरणाधीतानि श्रुतिलिङ्गवाक्यानि प्रकरणसमवायं गच्छन्ति, नेति विचार्यते। 'तस्मात्सुवर्णं हिरण्यं भार्यं, दुर्वर्णोऽस्ये भ्रातृव्यो भवति' इत्येवमादिषु संदेहः—किं कर्मसु हिरण्यधारणमनूद्य सुवर्णता विधीयते, वासःपरिधाने च शोभनत्वम्, उत विशिष्टविधानरूपेण नित्यः पुरुषधर्मो विधीयत इति। तत्रानेकार्थविधिभयात्कर्मस्थहिरण्यवासोनुवादेन सुवर्णशोभनत्वविधिप्राप्तौ उच्यते पुरुषधर्म इति। कुतः ?

हिरण्यवाससो धर्मो भवंस्तावदनर्थकः।
कर्मणा सह सम्बन्धे प्रमाणं तु न विद्यते ॥

प्रकरणाम्नानस्य ह्येतदेव प्रयोजनं कथं नाम तदङ्गत्वं विज्ञायेतेति। यद्यप्रकरणाधीतस्यापि कर्माङ्गतैव स्यात्, ततः प्रकरणाम्नानर्थकं भवेत्। यतस्तु वेदेनैव प्रकरणाप्रकरणाम्नानविवेकः कृतः ततोऽत्रगम्यते नूनं प्रकरणाधीतानां पुरुषधर्मत्वमिति ॥ २० ॥

न्या० सु०—प्रकरणस्य पूर्वः सर्वविरोधाविरोधचिन्तात्मकत्वेनानन्तराधिकरणवदस्यापि प्रकरणसंगतिमाह—**पूर्वत्रेति**। तीर्थस्नानोदाहरणे लिङ्गवाक्याभ्यां मन्त्रोदाहरणे तु वाक्येनैवेत्यर्थः॥ एकहेलयोदाहरणसन्देहभाष्यं व्याचष्टे—**तत्रेति**। लक्षणहेत्वोः क्रियाया इति स्मृतेर्जृम्भायाः शानचाद्देश्यत्वाख्यस्य लक्षणत्वस्योक्तत्वान्निमित्ततां च विनोद्देश्यत्वायोगान्निमित्तत्वावगतिः।

शुद्धक्रतुधर्मत्वापवादतयाऽनन्तराधिकरणसङ्गतिसिद्ध्यै प्रकरणनिवेशोक्त्या क्रतुयुक्तपुरुषधर्मपक्षवच्छुद्धक्रतुधर्मपक्षस्याप्युक्तत्वसूचनायाऽधिकारात्प्राप्तिं दर्शयितुं कैमर्थ्यापेक्षायां निवीताधिकरणवत्पक्षरचनीयत्वेऽभिहिते पञ्चानामपि रचनापत्तिमाशङ्क्याऽनन्तराधिकरणत्रयाणामेवोपन्यासादिनानुवृत्तिरुक्ता। किंतावदित्येतावता किंतावद्युक्तमिति पृष्टे प्राप्तमित्यनेन यत्पूर्वाधिकरणात्प्राप्तं तद्युक्तमित्येवमित्येतावतो भाष्यस्य शुद्धक्रतुधर्मपक्षोक्त्यर्थत्वसूचनार्थं, पूर्वाधिकरणेन क्रत्वर्थे स्नाने मन्त्रोच्चारणे च प्राप्ते, सूत्रेणान्यः पूर्वपक्षो गृह्यत इत्याह—**तत्रेति**। यथा अहीनो द्वादशत्वं प्रकरणादुत्कर्षति, तथा पुरुषः स्नानमन्त्रवित्येवं शुद्धपुरुषधर्मपक्षोक्त्यर्थत्वेनाहीनवत्पुरुषइति सूत्रावयवं व्याचष्टे—**यथेति**। तदर्थत्वादिति सौत्रं हेतुं भाष्यकृता स्नानोदाहरणे स्पष्टत्वादव्याख्यातं स्वयं स्नानस्य मलापकर्षणाख्यपुरुषोपकारसामर्थ्यात्मकेन लिङ्गेन पुरुषार्थत्वादित्येवं तावद्योजयितुमाह—**स्नानेतावदिति**। तीर्थविशिष्टस्य स्नानस्य विधेयत्वाद्विशेषणांशेन पुरुषोपकाराशक्तेर्लिङ्गाविरोधिना प्रकरणेन शुद्धक्रत्वर्थत्वमाशङ्क्य, तीर्थविशिष्टस्य सुखावतरणाख्यपुरुषोपकारशक्त्यात्मकेन लिङ्गेन पुरुषार्थत्वादित्येवं योजयितुमाह—**तीर्थेति**।

अस्नाताशी मलं भुङ्क्ते इत्यादिना भोजनादिपूर्वभावित्वनियमरूपेण स्मृतं स्नानमनूद्यानेन तीर्थनियममात्रविधानाद्भोजनादिपूर्वभावित्वनियमस्य च पुरुषार्थत्वायोगेन तद्विशिष्टस्य स्नानस्यापि पुरुषार्थत्वायोगादेतद्वाक्यविहितस्य तीर्थनियमस्यापि पुरुषार्थता न युक्तेत्याशङ्क्य, तदपि स्मरणं पुरुषार्थस्यैव स्नानस्य तत्रश्च भोजनादिपूर्वभावित्वनियमजन्यमदृष्टं पुरुषगाम्ये च ज्ञापयति, तेन कारणेन भोजनादिपूर्वभावित्वनियमयुक्तेनापि स्नानेनावधारितपुरुषोपकाराख्यप्रयोजनेनान्वयात्तीर्थनियमस्यापि पुरुषार्थता ज्ञायत इत्याह—**यदपीति**। क्रियासामान्यवाचिना करोतिना ज्ञापनाख्यः क्रियाविशेषो लक्ष्यते। किं पुनस्तीर्थनियमेन पुरुषापेक्षितं प्रयोजनं साध्यते, येनास्य पुरुषार्थता स्यादित्याशङ्क्य, लिङ्गस्य पूर्वोक्तमेव तावत्प्रयोजनं स्मारयति—**तत्रापीति**। दुःखावतरह्रदादिमात्रनिवृत्यर्थत्वे सत्यवतरणदुःखानापत्तिरूपस्यावतरणसुखस्य प्रयोजनत्वं युज्येत नियम्यमानान्यमात्रनिवृत्यर्थत्वात्तु नियमस्योद्धृतोदकादेः सुखकरस्याप्यन्यत्वाविशेषानिवृत्तिप्रतीतेः, तन्निवृत्यर्थस्य नियमस्य दृष्टार्थता न युक्तेत्याशङ्क्य अदृष्टं वाक्यगम्यं प्रयोजनमाह—**अथापीति**। अनेन च तीर्थस्नानस्य वाक्येन पुरुषार्थत्वावगमादिति सौत्रहेतुयोजना सूचिता। तीर्थस्नाने फलश्रुतेः फलसमर्थकत्वपूर्वपक्षं पर्णमप्यधिकरणे निराकरिष्यमाणत्वाद्युक्तमाशङ्क्य, अस्मिन्नधिकरणे लैङ्गिकपुरुषार्थत्वनिरासे सति लिङ्गाविरोधिना प्रकरणेन स्नानस्य क्रत्वर्थत्वेन पारार्थ्यनिर्ज्ञानात्फलश्रुतेरर्थवादमात्रता सेत्स्यति। इह तु लिङ्गविरोधिना प्रकरणेन पारार्थ्यनिर्ज्ञानाशक्तेः फलसमर्पकतारात्रिसत्रन्यायेन पूर्वपक्षयितुं शक्येति, परिहारसूचनायैवभूताल्लिङ्गानुगृहीताद्वाक्यात्पुरुषसंयुक्तस्य तीर्थविशिष्टस्य स्नानस्य प्रकरणेनेश्वरमित्याह—**न चेति**।

जञ्जभ्यमानोदाहरणे सौत्रहेतुव्याख्यार्थं ब्रूयादिति भाष्यमाख्यातश्रुत्या मन्त्रोच्चारणस्य पुरुषार्थत्वावगमादित्येवं व्याख्यार्थतया भासमानमाख्यातेन कर्त्रनभिधानादयुक्तमाशङ्क्य, ब्रूयाच्छब्दसमभिव्याहृतपुरुषवाचिजञ्जभ्यमानशब्दश्रवणस्य पुरुषप्राधान्योक्त्यर्थत्वेनादृतत्वादित्येवं वाक्यीयपुरुषार्थत्वोक्त्यर्थतया हेतुव्याख्यार्थमिति सूचयितुमाह—**यद्यपीति**। लकारविधाविव कृद्विधावपि कर्त्तरीत्यस्य संख्याविशेषणत्वशङ्कानिरासायाऽनन्यपरेत्युक्तम्। जञ्जभ्यमानशब्दस्य गुणभूतपुरुषोक्त्यर्थत्वेनाविरोधसम्भवे प्रकरणबाधायोगाच्छुद्धपुरुषार्थत्वायोगं नन्वितिभाष्येणाशङ्क्य नात्र मनुष्या विधीयन्तइत्यादिनिवीताधिकरणभाष्योक्तेन न्यायेन पुंसो गुणत्वायोगं मत्वा परिहारार्थमुच्यत इत्यादिभाष्यं व्याख्यातुमाह—**तेनेति**। ब्रूतेरभिधानार्थत्वसूचनार्थं मन्त्रेणाभिधानमित्युक्तम्। जृम्भिकानिमित्तस्य मन्त्रोच्चारणस्येत्यनेनाप्यर्थाभिधानर्थस्यैवोच्चारणस्य विवक्षितत्वादविरोधः॥ शुद्धपुरुषार्थतायामश्रुतफलकल्पनाशङ्कानिरासार्थं फलमपीति भाष्ये व्याचष्टे—**पुरुषेति**। पूर्वपक्षोपसंहारार्थं तस्मादिति भाष्यं व्याचष्टे—**तस्मादिति**। उत्कर्षप्रतिज्ञानस्याद्यसूत्रावयवारूढत्वसूचनार्थो भाष्यशेषो यथाप्रकरणं भित्त्वेत्येनेनैव व्याख्यातः॥ २०॥

**सप्तमं संवादाधिकरणम्**

भा० प्र०—अनरम्याधीत श्रुति, लिङ्ग एवं वाक्य प्रकरण के साथ समन्वित हो सकती

है कि नहीं—यही विचारणीय है। श्रुति में "तस्मात् सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवति" (तै० ब्रा० २।२।४) इसीलिए शोभन वर्ण से युक्त स्वर्ण का धारण जो व्यक्ति करता है, इस प्रकार की जो सभी अनरभ्याधीत विधि है वे क्या प्रकरण का धर्म अर्थात् क्रत्वर्थ या पुरुषार्थ है—यह संशय होता है।

इस संशय में पूर्वपक्ष को दृढ करने के लिए प्रथम सिद्धान्त मत का उल्लेख कर कहा गया है कि "अप्रकरणे तु तद्धर्मः" ये अनारभ्य पठित विधियाँ पुरुषार्थक हैं, कारण, "ततो विशेषात्" = प्रकरण पठित विधियों की अपेक्षा इनमें वैलक्षण्य रहता है।

"अप्रकरणे तु" = अप्रकरण में पठित, अर्थात् अनारम्याधीत सुवर्ण धारण आदि, "तद्धर्मः" = उसका धर्म अर्थात् पुरुष के धर्म या पुरुषार्थ है, "ततः विशेषात्" = क्योंकि उससे अर्थात् प्रकरणपठित से इसका विशेषत्व अर्थात् अनारम्याधीतत्वरूप पार्थक्य है ॥ २० ॥

## अद्रव्यात्वात्तु शेषः स्यात् ॥ २१ ॥

**शा० भा०—तुशब्दः पक्षव्यावृत्तौ। न पुरुषधर्मो भवेत्। अग्निहोत्रादीनां शेषः स्यात्। कस्मात्? अद्रव्यत्वात्। नात्र द्रव्यदेवतं श्रूयते। तच्छ्रवणात् भार्यं यष्टव्यमिति परिकल्प्येत। असति तु द्रव्यदेवतासम्बन्धे बिभर्तिरयं धारणावचनः संस्कारवाची। संस्कारश्च शेषभूतस्याऽवकल्पते, नान्यथा। तस्मात्कर्मणामग्निहोत्रादीनां शेषः। एवं सुवाससा भवितव्यमिति ॥ २१ ॥ ॥ पूर्वपक्षः ॥**

त० वा०—यद्यपि तावद्विशिष्टविधानं, तथाऽपि कर्मशेष एव स्यात्। अन्यथा हि फलं कल्प्येत। ननु क्रतुसम्बन्धेऽपि कल्पयितव्य एव। सत्यं। प्रमाणवतो हि तत्कल्पना। कर्मणश्च सामान्ये प्रयोजनकाङ्क्षायां कर्मैवोपतिष्ठते। तेन तत्संबन्धः प्रमाणवान्. न स्वर्गसंबन्धः। एवं च मन्यते—यथा यागदानहोमान्मुक्त्वा नान्यत्प्रधानकर्मत्वं प्रतिपद्यते। न चेह यागादित्वमस्ति, सम्प्रदानाद्यभावात्। अत औत्पत्तिकेनाऽङ्गत्वेन कर्मशेषत्वम्।

अथवा धारणमेतच्छ्रूयते। तच्चोत्पत्त्यैव धार्यमाणशेषभूतम्। न च लौकिकस्य निष्प्रयोजनत्वात्संस्काराहत्वम्। अतः कर्माङ्गभूतयोर्वासोहिरण्ययोर्विधिः।

अथवा तत एवानेकार्थविधिदोषात्सति च सम्भवे बलाद्गुणे विधिशक्तिसंचारणाद्धिरण्यधारणं 'हिरण्यं हस्तेन भवति' अथ गृह्णाति, 'हिरण्यं हस्ते सम्प्रदाय षोडशिना स्तुवते' इत्येवमादिवाक्यविहितमनूद्य सुवर्णता विधीयते। 'वासः परिधत्ते' इति चैतद्विहिते वाससि शोभनत्वम्। एवं च सूत्रकाराणां 'हिरण्यमिति जातरूपं प्रतीयात् (आ०परि०सू) इत्यादिपरिभाषणस्यैतदेव मूलम्। अन्यथा रजत-जातरूपसाधारणे सति हिरण्यशब्देऽन्यतरावधारणमूलमन्यत्कल्प्यं

स्यात्। 'अद्रव्यत्वात्' इति च नात्र द्रव्यं विधीयते। किं तर्हि ? तद्विशेषमात्रविधानमेतत्। अतश्च यत्र द्रव्यं, तत्रानेन गन्तव्यमिति।

**अत्र भाष्यमतप्रतिक्षेपः**

यत्त्वत्र भाष्यकारेण देवताग्रहणं कृतम्।
तदुत्सूत्रमयुक्तं च प्रधाने हि जपाद्यपि॥

अयागानामपि प्राधान्यदर्शनान्न किंचिद्देवताग्रहणेनेति॥ २१॥

न्या० सु०—प्रकरणयुक्तस्यैव पुंसः स्नानेन, मन्त्रवचनेन च संस्कारो न तु शुद्धस्य द्रव्यस्येव प्रोक्षणादिनेत्येवं सूत्रव्याख्यार्थं न चेत्यादिभाष्यं व्याचष्टे—**पुरुषेति**। लिङ्गवाक्यसमर्पितपुरुषसामान्याविरोधिपुरुषविशेषसमर्पकत्वेनाविरोधात्प्रकरणस्य बाधायोगसूचनार्थत्वेन तावत्प्रकरणविशेषादिति सूत्रावयवं हेतुप्रश्नोत्तरतया व्याचष्टे—**कुतइति**। प्रकरणस्य व्यावर्त्तकत्वाभावाद्विशेषसमर्पकत्वायोगमाशङ्क्य, प्रकृतस्य क्रतूपकाराख्यफलस्य सन्निहितत्वेन विशिष्टत्वाद्बलीयस्त्वात्तत्सम्भवे विप्रकृष्टपुरुषाभिमतस्वर्गाख्यफलकल्पनानुपपत्तेरकल्पने चानर्थक्यापत्तेर्व्यावर्त्तकत्वं विनापि विशेषसमर्पकत्वोपपत्त्युक्त्यर्थत्वेनाप्येतमेव सूत्रावयवं व्याख्यातुमाह—**न चेति**। दूरवर्तिनी फलश्रुतिः कल्पयितुं न युज्यत इति करोतिना कल्पनक्रियाविशेषलक्षणादर्थः। यदि कश्चित्प्रकृतसंयोगेपि लिङ्गवाक्याबाधस्य वक्ष्यमाणत्वाद् भ्रान्त्या शुद्धपुरुषसंयोगेऽपि प्रकराणाबाधं शङ्केत तं प्रत्याह—**पुरुषामात्रेति**। अविरोधायोगशङ्कानिरासार्थत्वेन सौत्रहेतुव्याख्यानायाऽविरोधायोगशङ्कार्थं नन्वितिभाष्यं व्याचष्टे—**नन्विति**। एतच्छङ्कानिरासार्थत्वेन प्रकरणविशेषोक्तिव्याख्यार्थमुच्यतइति भाष्यं व्याख्यातुमारभते—**सत्यमिति**।

जञ्जभ्यमानशब्दस्य यौगिकत्वेन व्यक्तिवाचित्वादाग्नेयीशब्दवच्च सर्वनामार्थवृत्तित्वाभावेन सन्निहितार्थवाचित्वाभावादाग्नेय्यधिकरणपूर्वपक्षन्यायेन सर्वव्यक्तिवाचित्वावगतेः प्रकृतजञ्जभ्यमानमात्रग्रहणे जञ्जभ्यमानशब्दार्थसाकल्यासिद्धि, प्रकृतस्य च पुंसः कर्मारम्भात्प्राचीनेनैव सर्वकर्माङ्गतया स्मृतिप्राप्तेन स्नानेनापकृष्टमलत्वान्न लिङ्गावगतमलापकर्षणार्थत्वं स्नानं प्रत्ययोग्यतामाशङ्क्य, सर्वासां व्यक्तीनां जञ्जभ्यमानशब्दवाच्यत्वेऽपि प्रत्येकमेव वाचित्वादाग्नेयीवच्चोपादेयत्वाभावेनागृह्यमाणविशेषत्वाभावात्प्रकृतमात्रग्रहणेऽपि शब्दार्थसाकल्यसिद्धि मलानां चापकृष्टानामपि पुनः पुनः प्रवृत्तिदर्शनात्—

इत्यन्तमलिन कायोनवच्छिद्रसमन्वितिः।

स्रवत्येव दिवारात्राविति चोक्तत्वाद्योग्यत्वोपपत्तिमाह—**न हीति**। प्राकरणिके जञ्जभ्यमाने समस्तः शब्दार्थः प्राकरणिके च स्नानशेषिणि योग्यत्वं न नास्ति, किं चास्त्यवेत्यर्थः। स्नानशेषिपुरुषोपलक्षणार्थः स्नातृशब्दः। प्रकृतेऽपि पुंसि योग्यत्वशब्दार्थसाकल्यसम्भवाल्लिङ्गवाक्ययोः प्रकरणेन स्वविषयादुत्कालनलक्षणबाधानोपपत्तावपि सङ्कोचनलक्षणो बाधः प्रसज्येतैवेत्याशङ्कते—**नन्विति**।

व्रीहिप्रोक्षणादिवदिहापि संकोचोपपत्तिमाशङ्क्य, शुद्धपुरुषार्थत्वेऽग्निहोत्रादिवत्साक्षात्पुरुषोपकारित्वात्सुतरामर्थत्त्वोपपत्तेः शुद्धव्रीह्यर्थतायामिवानर्थक्यापत्त्याशङ्काभावाद्वैषम्यसूचनायाऽयुक्ततोक्ता। शक्तिमदर्थित्वस्याप्यधिकारेणापेक्षणादनर्थके कर्मण्यधिकारानुपपत्तेरशक्त्यैवानर्थक्यापत्त्याप्यविशेषबुद्धिनिवृत्तेर्युक्तत्वात्प्रकरणावगतसन्निकृष्टक्रतूपकाराख्यफलसम्भवे विप्रकृष्टफलकल्पनायोगेन शब्दपुरुषार्थतायामानर्थक्यापत्तिपरिहायायोगाद्व्रीहिप्रोक्षणसाम्याशयेन परिहरति—**एवा तावदिति**। विद्वत्त्वस्यापि शक्त्याधानायैवापेक्षणेऽप्यविदुषः सामर्थ्यस्याप्यविज्ञानेनेन्द्रियदार्ढ्यादिहेतुकशक्तिसद्भावेऽप्यधिकारायोगात्पृथगुपादानम्। अगृहीताशयः प्रकरणातिरिक्तव्यावर्तकायोगं मत्वाऽनभ्युपगमनीयाभ्युपगमापत्तिं शङ्कते—**नन्विति**। स्वयमेव मयानभ्युपगमनीयत्वज्ञानान्न ममानभ्युपगमनीयप्रकरणविशेषकत्वाभ्युपगमापत्तिरित्याशयेन परिहरति—**नैतदिति**।

प्रयाजादिष्विव मन्त्रस्नानयोरपि विनियोजकमेव प्रकरणं, न तु विशेषणत्वं प्रतिपद्यते इत्युक्ते, कथंभावाख्यस्य प्रकरणस्य विनियोगार्थत्वाद्विशेषकत्वायोगेऽप्यधिकाराख्यस्य प्रकरणस्याग्नेय्यादौ विशेषकत्वदर्शनात्, अत्रापि विशेषकत्वं भविष्यतीत्याशङ्क्योपादेयत्वादाग्नेय्यादेर्विशेषणसम्भवेऽपि जञ्जभ्यमानस्योद्देश्यत्वाद्विशेष्टुमशक्यतोद्दिश्यमानोक्त्योक्ता। विनियोजकत्ववद्व्यावर्त्तकतापि कस्मान्न भवतीत्याशङ्क्य प्रकरणस्य कथमिति प्रकाराकाङ्क्षारूपस्येत्थमित्युपायेतिकर्त्तव्यता'द्यपरपर्यायप्रकाररूपादन्येन विशेष्यादिनाऽनन्वयादित्याह—**न हीति**।

जञ्जभ्यमानस्योद्देश्यत्वाद्विशेषणायोगेऽपि स्नातीत्याख्यातोक्ताभावनाक्षिप्तस्य कर्त्तुरुपादेयत्वाद्विशेषणोपपत्तेः कथंभावाख्यस्य प्रकरणस्य विशेषकत्वायोगेऽप्यपूर्वसाधनांशलक्षणायै पुंसोधिकाराख्यप्रकरण - गृहीत्वापेक्षणादधिकाराख्यात्प्रकरणाद्विशेष - लाभोपपत्तिमाशङ्क्य अधिकाराख्यस्य प्रकरणस्य वाक्यप्राप्तेभ्यः पुरुषान्तरेभ्यो वाक्यविधेयक्रियाशेषिभूतपुरुषनिवर्त्तनात्मकविशेषणाख्यस्य व्यापारस्य वाक्यविरोधेन व्यावृत्तत्वाद्बाधितत्वान्न प्रस्तावलक्षणव्यापारबाधे तद्गृहीतत्वापेक्षा न युक्तेत्याशङ्क्य, विशेषणाख्यव्यापारबाधेऽपि बुद्धिस्थापनाख्यव्यापाराबाधाद्युक्तत्वसूचनार्थं व्यावृत्तव्यापारोक्त्योः सप्तम्यन्तयोरपेक्षोक्तेश्च। प्रथमान्तायाः पाठेऽपि प्रकरणगृहीतत्वापेक्षायामपि तद्व्यापारस्य बाधितत्वान्न प्रकरणं विशेषणमित्यर्थस्य विवक्षितत्वात्, यद्यपि तथापिशब्दार्थौ निपातत्वादनेकार्थेनेतिकरणेन विवक्षित्वा यद्यपि प्रकरणगृहीतत्वापेक्षा भवति, तथापि तद्व्यापारे बाधेते नैव तद्विशेषणमवकल्पत इत्येवं योज्यम्। युगपत्सर्वपदार्थविषयत्वात्तु प्रकरणव्यापारस्याद्यपदार्थादारभ्यान्त्यपदार्थपर्यन्तमनुवृत्तेः प्रकरणगृहीतत्वापेक्षायास्तद्व्यापारपर्यवसानोत्तरकालत्वं व्याख्यातुमुपक्रमते—**कथं तर्हीति**। द्रव्यवदिति सौत्रस्य दृष्टान्तस्य प्रकृतपुरुषप्रत्ययप्रकारोक्त्यर्थत्वसूचनपूर्वं किं त्विति भाष्यं व्याचिख्यासुः प्रकरणस्य विशेषकत्वाभावेऽपि प्रकृतपुरुषग्रहणसिद्धिमुपपादयति—**तथा हीति**। श्लोकं व्याचष्टे—**यथाहीति**।

नन्वित्याशङ्काभाष्यं फलमपीति भाष्ये लुप्तत्वस्योक्तत्वात्फलकल्पनापत्त्युक्त्ययोगोक्त्यर्थं-

त्वेन व्याचष्टे—**ननु चेति**। प्राणा'पानावेवे'ति फलश्रुत्युदाहरणेन तीर्थमिव हीत्यस्याप्युपलक्षणादनयोरिति द्विवचनोपपत्तिः। नेतीति परिहारभाष्यं फलस्य विध्यनधीनत्वादयुक्तमाशङ्क्य, विधायकशब्दस्यात्राज्ञानज्ञापकवाचित्वात्फलज्ञापककामशब्दाभावोवत्यर्थत्वेन व्याचष्टे—**सत्यमिति**। प्राणापानावेवेत्यस्याज्ञातचिरायुष्ट्वाख्यफलज्ञापकत्वाद्विधायकानुपलम्भोऽत्ययोगाशङ्कानिरासार्थं 'य एष' इति भाष्यमेतावदत्रशब्देन गम्यते। यस्यैवं लक्षणा जुहूः। तस्य पापश्लोकाश्रवणमिति जुहूतः क्रियते, जुहूर्वा तदर्थेति नैतच्छब्द आहेति पर्णमय्यधिकरणभाष्यवक्ष्यमाणयुक्त्याशयत्वेन व्याचष्टे—**फलेति**। वर्त्तमानापदेशस्याप्रवृत्तप्रवर्त्तकत्वाभावात्तदाशयत्वेनैव विधायकाभावोक्तिः कस्मान्न व्याख्यातेत्याशङ्क्य—**इतरथा पुनरिति**। फलज्ञापकत्वाभावे सत्यानर्थक्यापत्त्याशङ्कानिरासार्थं स्तावकस्त्विति भाष्यं व्याचष्टे—**द्रव्येति**। पारार्थ्यहेतुकस्यार्थवादत्वस्य तत्र वक्ष्यमाणत्वात्कामशब्दव्यतिरिक्तेन शब्देन फलविधानाकरणस्य वक्ष्यमाणतोक्तिरयुक्तेत्याशङ्क्य, पर्णमय्यधिकरणसूत्र एव 'खादिरं वीर्यकामस्य यूपं कुर्यादि'त्येवमाद्यायां फलप्रधानायां श्रुतौ फलमुच्यतइति वदता सूत्रकृता कामपदयुक्तायां श्रुतौ फलार्थत्वस्य वक्ष्यमाणतामाह—**फलं त्विति**। तस्मादिति सिद्धान्तोपसंहारभाष्यं स्पष्टत्वादव्याख्यायाहेतिशङ्काभाष्यं शुद्धपुरुषार्थत्वाभ्युपगमार्थत्वेनाभासमानं फलकल्पनभयेन शुद्धपुरुषार्थत्वनिरासादयुक्तमाशङ्क्य, क्रतुयुक्तपुरुषार्थत्वाभ्युपगमार्थत्वेन व्याचष्टे—**आहेति**। दर्शपूर्णमासावेवेत्यादिभाष्यावयवपाठपूर्वं कथमिति प्रश्नभाष्यं व्याचष्टे—**कइति**। शङ्काशयोक्त्यर्थं योपिहीति भाष्यं व्याचष्टे—**सर्वथा तावदिति**। अत्रेति परिहारभाष्यं क्रत्वन्तरेपि संस्कृतेन पुंसा प्रयोजनोपपत्तेरयुक्तमाशङ्क्याह—**अस्येति**। कोसावाशय इत्यपेक्षायां संस्कृतेन पुंसाक्रत्वन्तरे प्रयोजनं कुतो नास्तीति प्रश्नपूर्वं गूढमाशयं विवृणोति—**कुतइति**। श्लोकाशयं व्याचक्षाणो नैवेति परिहारभाष्यावयवं व्याचष्टे—**यदिति**। निर्दोषशास्त्रोक्तस्य विज्ञानस्य दोषजन्यमिथ्यात्वज्ञापनलक्षणबाधायोगाद्बलवच्छास्त्राविरुद्धविषये विज्ञानोत्पत्तिप्रतिबन्ध एव शास्त्राणां बाधः क्व चित्प्रासबाधोक्तिस्तु ज्ञानमात्रोत्पत्त्याशयेत्यविरोधः। प्रतिबन्धप्रकारापेक्षायां संस्कृतेन त्विति भाष्यावयवं व्याचक्षाणः प्रकारमाह—**सा चेति**।

नवमे व्रीहीन् प्रोक्षतीति श्रुत्या द्रव्यसंयुक्तं प्रोक्षणं, त्रीन् परिधीनिति मन्त्रं लिङ्गात् संख्यासंयुक्तं शूर्प्पेण जुहोति, तेन ह्यन्नं क्रियते इति वाक्याद्धेतुसंयुक्तं होमं, चतुर्होत्रा पौर्णमासीमभिमृशेदिति श्रुत्याग्नेयादिसमुदायसंयुक्तं मन्त्रं चोदाहृत्य प्रोक्षणादयो द्रव्यादिस्वरूपप्रयुक्ताः अपूर्वप्रयुक्ता वेति संदेहे 'द्रव्यसंख्याहेतुसमुदायं चाश्रुतिसंयोगा'दि९-१-ति सूत्रेण श्रुतिसंयोगात् तद्रूपलक्षितात्लिङ्गवाक्यसंयोगाच्च द्रव्यादिस्वरूपप्रयुक्तत्वं पूर्वपक्षयित्वा अर्थो वा स्यात्प्रयोजनीमतरेषामचोदनार्थस्य गुणभूतत्वादि९-१-त्यनेनार्थ्यमानमपूर्वं प्रयोजनं द्रव्यादीनामर्थ्यमानमपूर्वं प्रति गुणभूततया कर्त्तव्यत्वनाचोदनादिति सिद्धान्तिते भाष्यकृता श्रुत्यादिगम्यस्वरूपान्वयविरोधात् प्राकरणिकापूर्वान्वयायोगमाशङ्क्यानर्थक्यभयात्स्वरूपान्वयाविवक्षयाऽपूर्वसाधनत्वलक्षणाया वक्ष्यमाणत्वात् तेनैव न्यायेनेहाप्यपूर्व-

साधनत्वलक्षणावगतेः प्रकरणं च विना क्रत्वैकान्तिकत्वाभावेन लक्षणायोगात्क्रत्वन्तरस्य चाप्रकृतत्वात्प्रतिबन्धसिद्धिरित्यर्थः ।

अनेन च संस्कृतेन च पुंसा साध्यं प्रयोजकमपूर्वमन्यत्र नास्तीति भाष्ययोजना सूचिता । पुंसः साक्षादपूर्वसाधनत्वाभावात्प्रकृतपुरुषसंस्कारेष्यपूर्वाभावाविशेषं नन्विति-भाष्येणाशङ्कयोच्यतइत्यनेन साक्षात्साधनत्वाभावेऽपि दर्शपूर्णमास—द्वारा साधनत्वाद-पूर्वोत्पत्त्युपपत्त्याशयेन परिहृत्याहेत्यनेन क्रत्वन्तरस्यापि तर्हि द्वारत्वसंभवात्प्रकृतग्रहणा-सिद्धिरिक्ति पुनराशङ्कयो उच्यते, नान्यस्येत्यनेन संस्कारस्याप्रकृतक्रत्वन्तरगुणत्वायोगान्न तस्य द्वारत्वं संभवतीत्याशयेन परिहृते, पुनराह प्रकृतस्यापीत्यनेन क्रत्वन्तरस्य संस्कारे प्रत्यशेषित्वादपूर्वोत्पत्तिद्वारत्वायोगे प्रकृतस्याप्यशेषित्वात् द्वारत्वायोगापत्तौ शङ्किताया-मुच्यते आनर्थक्यादित्यादिनानर्थक्यापत्तेर्वाक्यीयशुद्धपुरुषार्थत्वबाधेन प्रकरणकल्प्यया प्रकृतक्रत्वेकवाक्यतया पुरुषवत्प्रकृतस्य क्रतोरपि शेषित्वावगतेरपूर्वोत्पत्तिद्वारत्वसंभवात् प्रकृते क्रतौ प्रयोजनमस्ति । क्रत्वन्तरैकवाक्यत्वकल्पकाभावात्तु क्रत्वन्तरस्य शेषित्वानवगते-र्द्वारत्वायोगात्तत्र प्रयोजनं नास्तीति परिहारोक्तेर्गूढाशयविवरणार्थत्वसूचनार्थं पृथग् व्याख्या । तस्मादिति प्रकृतग्रहणसिद्धयुपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ।

मन्त्रोदाहरणे न्यायव्युत्पादनभाष्यस्योपलक्षणार्थत्वात्स्नानोदाहरणेऽपि तुल्यत्वसूचनार्थं स्नानेऽप्येतमेव न्यायमतिदिशति—**एवमिति** । दर्शपूर्णमासावेव कुर्वत इत्येतन्नेत्याशङ्काया नैव व्यवस्त्यंत इत्यादेश्च परिहारस्य सप्तमपादाद्याधिकरणस्थसूत्रद्वयारूढत्वं दर्शयति—**एतौ चेति** ।

इतरथा वदनं भवतीत्येतावत्यर्थे वदनमनुतिष्ठेदिति वदेदित्यविवक्षितस्वार्थः, परार्थ-विध्यर्थो भवेदिति पूर्वाधिकरणपूर्वपक्षभाष्योक्तायाः प्रकरणनिवेशपक्षे विध्यानर्थक्यापत्ति-शङ्कापत्तिशङ्कायास्तुल्यन्यायतयेहापि प्राप्ताया परिहारायानुभाषणार्थं यत्त्विति भाष्यं व्याचष्टे—**यत्त्विति** । एवं सतीत्यादिपरिहारभाष्यं व्याचष्टे—**तत्रेति** । पूर्वाधिकरणोक्त-परिहारेण सहास्यपरिहारस्य विरोधं शङ्कते—**इह चेति** । केषां चिन्मतेन पूर्वपरिहारस्य सत्यत्वमाह—**यथा तावदिति** । द्वितीयस्यान्येषां मतेन सत्यत्वमाह—**शक्यं त्विति** । पूर्वार्धं व्याचष्टे—**विधिस्त्विति** । एकादशे सर्वाङ्गसमुच्चयसिद्धयै सर्वेषामङ्गानामेकं क्रतूपकाराख्यं प्रयोजनमिति कल्पनायाः पर्यायविधानेन हेतुना विधिशब्दवाच्यस्याङ्गग्रामस्यैकविधिश्रुति-कत्वं वदता सूत्रकृता सर्वाङ्गविधायकस्यैकस्य विधेर्वक्ष्यमाणत्वात्प्रात्यात्मिकविधीनां च क्रमप्रवृत्तित्वेनाङ्गानां प्रयोगवचनविधीयमानतां विना विध्यैक्यायोगात्प्रयोगवचनस्यैव विधित्वावगतेः स एवैकः सर्वेषामङ्गानां विधिरित्यर्थः । न केवलं सूत्रानुसारात्प्रयोगवचन-स्यैव विधित्वे, किंतु युक्तत्वादपीत्याह—**पुरुषश्चेति** । प्रवर्त्तकस्यैव विधित्वप्रसिद्धेरपरिपूर्णायां च भावनायां प्रवर्त्तनाशक्तेः साङ्गप्रधानविषयस्य प्रयोगवचनस्यैव विधिता युक्तेत्याशयः ।

उत्तरार्द्धं व्यचष्टे—**तस्मादिति** । स्वमतेन परिहारद्वयस्यापि सत्यत्वमाह—**अत्रेति** ।

पूर्वस्य तावत्प्रश्नपूर्वं साधुत्वमुपपादयति—**कथमिति**। विधित्वे सति द्वितीयोऽसाधुः स्यादित्याशयेन पृच्छति—**अथेति**। प्रत्यात्मिकवाक्यार्थालोचनवेलायां विधित्वे सत्यपि, प्रकरणकल्प्यवाक्यैकवाक्यतापन्नसमस्ताङ्गप्रधानवाक्यसमूहात्मकमहावाक्यार्थीभूतत्र्यंशपरिपूर्णभावनाविधिवेलायां प्रयोगविधिसिद्धप्रवृत्त्यनुवादाविरोधाशयेनोत्तरमाह—**पूर्वेण हीति**। सोपपत्तिशङ्काग्रन्थद्वयसाधुतामुपसंहरति—**अत इति** ॥ २१ ॥

इस प्रसङ्ग में पूर्वपक्षी ने अपने मत को व्यक्त करते हुए कहा है कि "शेषः स्यात्" यह जो शोभनवर्ण सुवर्ण का धारण है, यह शेष अर्थात् क्रतुशेष = क्रतु का अङ्ग =क्रत्वर्थ होगा। कारण, "अद्रव्यत्वात्" = इस स्थल में द्रव्य एवं देवता वाचक पद नहीं हैं।

आशय यह है कि प्रधानयाग ही स्वयं फल का उत्पादन करता है, किन्तु, उसके अङ्ग से फल की उत्पत्ति नहीं होती है। इस स्थल में द्रव्य एवं देवता के सम्बन्ध का उल्लेख न होने से फल का उत्पादन नहीं कर सकता है। इसको व्यर्थ भी नहीं कहा जा है। इस कारण से इसका फल सम्बन्ध न होने से इसको क्रतु का अङ्ग या क्रत्वर्थ मानना ही उचित है। भरण के द्वारा अर्थात् धारण के द्वारा सुवर्ण संस्कृत होता है। यह संस्कृत सुवर्ण यदि किसी याग का अङ्ग होता है तभी उसका संस्कार सार्थक होता है, अन्यथा फल की कल्पना करनी पड़ेगी, इसलिए इसको क्रत्वर्थ ही मानना पड़ेगा।

"अद्रव्यत्वात्" = द्रव्य एवं देवता न होने से, "तु" = पक्ष परिवर्तन का सूचक है, "शेषः स्यात्" = ये सभी विषय शेष अर्थात् क्रतु का अङ्ग होगा।

यह सूत्र के स्वरूप एवं व्याख्या के विषय में भाष्यकार एवं वार्तिककार के मध्य में मतभेद है। वेदान्त दर्शन के परिमल टीका के चतुर्थ सूत्र में एवं भाष्य के अनुसार "अद्रव्यत्वात्" इसके स्थान पर "अद्रव्यदेवतत्वात्" यह पाठ है। किन्तु वार्तिककार ने कहा है कि इस सूत्र में "देवता" ग्रहण निरर्थक है अतएव "अद्रव्यत्वात्" यही वार्तिक सम्मत पाठ है ॥ २१ ॥

## वेदसंयोगात् ॥ २२ ॥

**शा० भा०—आध्वर्यवमिति वेदसंयोगः शेषभूतस्य युज्यते। शेषभूतो ह्यध्वर्युणा क्रियते, न पुरुषधर्मः[1] दर्शपूर्णमासादीनां हि कर्मणां साङ्गानामङ्गानामध्वर्युः कर्ता। तस्मादपि कर्मधर्मा एवंजातीयका इति ॥ २२ ॥**

त० वा०—कर्माङ्गत्वे चास्याः क्रियाया आध्वर्यवसमाख्या विनियोक्त्री भविष्यति। पुरुषधर्मत्वे बाध्येत। यदाऽपि हिरण्यानुवादेन सुवर्णता विधीयते, तदाऽपि तद्विधिवशवर्तित्वात्, अक्रियात्मकत्वाच्च नैव समाख्या व्याप्रियत इति, वैदिकत्वसामान्यं वेदसंयोगस्यार्थः। तेन यो नाम वदेल्लोकतोऽप्यस्त्येव वासोहिरण्यधारणप्राप्तिः अतस्तदनुवादेनापि शक्यं गुणविधानमिति, सोऽपि व्यावर्तितो भवति ॥ २२ ॥

---

१ ब. पुरुषप्रधानः।

न्या० सु०—अहीनस्य फलवत्त्वेन ज्योतिष्टोमानङ्गत्वापत्तेश्च ज्योतिष्टोमत्वाभावात्प्रकरणाद्विगतस्य बहिर्भूतस्याङ्गतया द्वादशत्वस्यापदेशात्कीर्त्तनाद्युक्तोपकर्ष इत्येव वैषम्योक्त्यर्थत्वेनानुभाषणपूर्वं सूत्रव्याख्यार्थमथेत्यादिभाष्यं व्याचष्टे—प्रकरण इति। साह्नशब्दवाच्यज्योतिष्टोमाङ्गत्वेन त्रित्वापदेशाद्भेदेन द्वादशत्वापदेशादित्येवमन्यथावैषम्योक्त्यर्थत्वेन व्याख्यार्थं व्यपदेशाच्चेति भाष्यं स्पष्टत्वान्न व्याख्यातम् ॥ २२ ॥

इति चतुर्थजञ्जभ्यमानाधिकरणम् ।

पूर्वपक्षी ने अपने पक्ष के समर्थन में यह भी कहा है कि जो यज्ञ का अङ्ग होता है, वही अध्वर्यु सम्पादन करता है। इसीलिए उसको "आध्वर्यव" कहा जाता है। अध्वर्यु ही साङ्गदर्शपूर्णमासपूर्णमासादिकर्म का सम्पादनकर्ता होता है। यह भी क्रिया है, अतः अध्वर्यु से ही सम्पाद्य होने से 'आध्वर्यव' शब्द से कहा जाता है। अतः क्रतु का अङ्ग अर्थात् क्रत्वर्थ है।

"वेदसंयोगात्" = वेदसंयोग अर्थात् 'आध्वर्यव' इस संज्ञा से अभिहित होता है, अतः, यजुर्वेद से सम्बद्ध होने से यह क्रत्वर्थ ही है ॥ २२ ॥

भा० प्र०—पूर्वपक्ष के समर्थन में यह भी कहा गया है कि जो यज्ञ का अङ्ग होता है, वही अध्वर्यु का सम्पादन करता है, इसीलिए उसको 'आध्वर्यव' कहा जाता है। अध्वर्यु ही सङ्ग दर्शपूर्णमास आदि कर्मों का सम्पादनकर्ता होता है और जब यह भी क्रिया है, तब यह भी अध्वर्यु से ही सम्पाद्य होने से 'आध्वर्यव' शब्द से कहा गया है। इसलिए यह क्रतु का अङ्ग अर्थात् क्रत्वर्थ है।

"वेदसंयोगात्" = वेदसंयोग अर्थात् 'आध्वर्यव' इस संज्ञा से युक्त होने से यजुर्वेद के साथ सम्बन्ध रहता है, यह क्रत्वर्थ है ॥ २२ ॥

## द्रव्यसंयोगाच्च[1] ॥ २३ ॥

**शा० भा०—द्रव्यपरश्चात्र भवति निर्देशः। सुवर्णं भार्यमि'ति द्वितीयार्थसंयोगात्। द्रव्यसंस्कारश्च कर्मशेषपक्षे प्रयोजनवान्, अनर्थकः पुरुषधर्मे ॥ २३ ॥**

**पूर्वपक्षे युक्तिः ॥**

त० वा०—पूर्वं धारणस्य स्वाभाविकमेव संस्कारत्वमित्युपन्यस्तम्। इदानीं तत्रैवोपचयहेतुरुच्यते कर्णत्वनिर्देशादिति। तत्र हिरण्यमित्यमन्तत्वदर्शनाद् **द्वितीयसंयोगादिति** च भाष्याद् व्रीहीनेतिवत् द्वितीयेयमिति भ्रान्तिर्भविष्यति। कृत्यप्रत्ययेन त्वभिहितत्वान्नात्र कर्मणि द्वितीयोत्पन्ना। प्रथमैवेयम् द्वितीयार्थस्तु भार्यमिति ण्यप्रत्ययेनोक्त इति, द्रव्यपरत्वाभिधानम्। अत एव भाष्यकारेणापि **द्वितीयार्थसंयोगादित्युक्तम्**। अन्यथा द्वितीयासंयोगादित्येवावक्ष्यत्। तस्मात्संस्कारत्वात्कर्मशेषत्वं धारणस्य ॥ २३ ॥

---

१. ब. द्रव्यपरत्वाच्च ।

**अथ पञ्चमशंय्वधिकरणम्**

न्या० सु०—न प्रजानीयादितीत्यादिशब्दार्थेनेतिकरणेन तस्मान्न ब्राह्मणायावगुरेन् न निहन्या न लोहितं कुर्यादिति निषेधवाक्यानां गृहीतानां भाष्यकृतोदाहरणतोक्तेति सूचनार्थं सौत्रं शंयुशब्दं तदुपलक्षणार्थत्वेन व्याचष्टे—**शेयाविति**। भाष्ये क्रतयुक्तपुरुषधर्मपक्षानव-गमात्पूर्वापवादत्वेन सङ्गत्ययोगमाशङ्क्य, तत्सिद्धचै शुद्धक्रतुधर्मः क्रतुयुक्तपुरुषधर्मं शुद्धपुरुष-धर्मश्चेति त्रीन्पक्षानाह—**तत्रेति**। भाष्ये तर्हि कथं द्वावेवपक्षावित्याशङ्क्य, शुद्धक्रतु-सम्बन्धस्य क्रतुयुक्तपुरुषसंबन्धस्य च प्रकरणगम्यत्वसाम्येनैकीकरणादित्याह—**तेषामपीति**। प्रकरणादिति पूर्वपक्षभाष्यमवगोरणादेः क्रतौ विध्यभावेनाऽप्रसक्तेस्तन्निषेधस्य क्रत्वर्थत्वा-योगादयुक्तमाशङ्क्यो अनृतवदनवद्विध्यभावेप्यर्थात्प्रसक्त्योपपादयितुमाह—**समस्तेन चेति**। आख्यातेन कर्त्रनभिधानाच्छ्रुत्यविरोधसूचनार्था समस्तोक्तिः। अन्य इति भाष्यं प्रसक्त्यु-पपत्तिसूचनार्थत्वेन प्रश्नपूर्वं व्याख्यातुमाह—**का चेति**।

महापिठरपरिमितस्याप्यन्वाहार्यस्य सकुटुम्बर्त्विक्चतुष्टयापर्याप्तत्वादानत्यशक्त्युपपत्ति-सूचनार्थश्चतुःशब्दः। पूर्वसूत्रस्थापकृष्येतेति शब्दानुषङ्गेण, मण्डूकप्लुतया च व्यवहित-स्यापि कर्त्रधिकरणपूर्वपक्षसूत्रस्थस्याकर्मशब्दस्यानुषङ्गेण शंयूपक्रमे वाक्ये यदकर्मनिषेधनं, तत्प्रकरणादकृष्येत सर्वावस्थस्य दर्शपूर्णमासकर्तृत्वावस्थानपेक्षस्य पुंसो नरकपरिहारार्थं ब्राह्मणावगोरणादीनां दानात्खण्डनान्निषेधादित्येवं सूत्रव्याख्यार्थमेवमितिभाष्यमनुभाषणपूर्वं पूर्वपक्षनिरासाय प्रकरणस्य वाक्यविरोधोक्त्यर्थं च ननु प्रकरणादित्यादिभाष्यं क्रतुयुक्तपुरुष-धर्मत्वशङ्कोक्तिनिरासार्थं च ननु जञ्जभ्यमानस्येत्यादिभाष्यं संक्षेपाद्व्याख्यातुं स्वयं च सर्वेभ्य ऋत्विग्भ्योऽनृत्विग्भ्यो वा ब्राह्मणेभ्यः परिपालनाख्यवरदानादित्येवं सूत्रं व्याख्यातु-माह—**तथेति**।

आद्यं पादं व्याचष्टे—**यच्छब्दस्तावदिति**। सर्वस्य पुंसो ब्राह्मणावगोरणादिनिषेध-संयोगादित्येवं सर्वसंयोगोक्तिव्याख्यार्थं यो ब्राह्मणायेत्यर्थवादस्थो यच्छब्दः पुरुषमात्र-मुपादत्तइत्युक्तम्। प्रकृतदर्शपूर्णमासयाज्ञिकपुरुषविषयत्वेनापि यच्छब्दोपपत्तेर्विध्यर्थवादसम-भिव्याहारात्मकेन वाक् येन पुरुषमात्रस्य निषेधसंयोगायोगमाशङ्क्य, यच्छब्दस्योपक्रमस्थ-त्वादुपसंहारस्थनिषेध्योत्तरकालप्रकरणव्यापारानुरोधेन संकोचायोगसूचनार्थं श्रुत्यैवेत्युक्तम्। योऽयं ब्राह्मणस्यावगोरणादिनिषेधः, स सर्वावस्थस्य पुंस इत्येवं च भाष्यव्याख्या पुरुषोक्त्या सूचिता। अन्यथा सूत्रव्याख्यार्थत्वाद् द्वितीयं पादं तावदुपेक्ष्य, क्रतुयुक्तपुरुषधर्मत्व-शङ्कोक्तिनिरासार्थत्वेन ननु जञ्जभ्यमानस्येवेत्यादिभाष्यव्याख्यार्थं तृतीयं पादं व्याख्यातु-माह—**न चेति**। क्रतुयुक्तपुरुषपेक्षितभोक्तृत्वयोग्यताधानाख्यफलनिरासेन पुरुषमात्रा-पेक्षितनरकपरिहाराख्यफलोक्त्यर्थत्वेन सौत्रपरिशब्दव्याख्यासूचनार्थं नरकेत्युक्तम्। दोअवखण्डनइत्येतद्धातुरूपाश्रयणेन खण्डनार्थतया दानशब्दस्य निषेधवाचित्वसूचनार्था प्रतिषेधोक्तिः नरकपरिहारार्थस्य शुद्धपुरुषधर्मत्वहेतुतोपपादनार्थं स चेत्याद्युक्तम्। फलश्रुतिं द्विधा व्याख्यातुं शतेनेत्याद्युक्तम्। आद्यव्याख्याने यातनानुभवनमाख्यातार्थो।

द्वितीये यातनानिस्तरणम् । स्वयं फलस्य क्लृप्तत्वोपपादनार्थं निषेधेत्याद्युक्तम् । भाष्योक्तामुपपत्तिं दूषयितुं यत्त्वित्याद्युक्तम् । कथं तर्हि भाष्यसमर्थनत्यपेक्षायां वर्त्तमानकालसुपादानेन योग्यतानुपलब्ध्यभावात्तिङ्विभक्तिः फलज्ञापिकास्तीत्येव समर्थन-सूचनपूर्वं नरकपरिहारार्थत्वस्य शुद्धपुरुषधर्मत्वहेतुतामुपसंहर्तुं तस्मादित्युक्तम् । अवगोरणा-देर्वर्त्तमानकालशून्येनानिष्टफलोपादानेन कामपदोपबन्धमनपेक्ष्यावगोरणादिविषयनिषेधसिद्धे-स्तस्य च पुरुषमात्रे सम्भवात्तत्परिहार्थस्य निषेधस्य पुरुषधर्मतेत्यर्थः । वर्त्तमानकाल-शून्यतोक्त्यर्था मात्रोक्तिः । एवशब्देन कामपदानपेक्षतोक्ता । उपेक्षितं द्वितीयं पादं व्याचष्टे—तथा चेति । सौत्रपरिशब्दस्य परिपालनशब्दैकदेशत्वसूचनार्था पालनोक्तिः ॥ २३ ॥

इति पञ्चमं शंय्वधिकरणम् ।

भा० प्र०—पूर्वपक्ष के समर्थन में यह भी कहा गया है कि "द्रव्यसंयोगात् च" 'सुवर्णं आर्यम्' इस स्थल में आर्यं इस पद में 'ण्यत्' प्रत्यय होने से और 'ण्यत्' प्रत्यय कर्मवाच्य में हो होता है, अतः इससे कर्म का ही प्राधान्य बोधित होता है, हिरण्य ही कर्म है, इसलिए इसको संस्कार कर्म मानना पड़ेगा, अतः, "हिरण्यं भार्यम्" इसका अर्थ उपयोक्ष्यमाण = बाद में जिसका उपयोग व्यवहार होता है वैसे हिरण्य के धारण से संस्कार युक्त करे । अतएव धारण ही हिरण्य का संस्कार होने से धारण-संस्कृत हिरण्य यज्ञ का अङ्ग ही होगा, अन्यथा हिरण्य का संस्कार व्यर्थ हो जायेगा । इन कारणों से यह पुरुषार्थ नहीं वरन् क्रत्वर्थ है ।

"द्रव्यसंयोगात् च" = द्रव्य के साथ संयोग अर्थात् सम्बन्ध होने से द्रव्य का प्राधान्य बोधित होता है और यह पुरुषार्थ नहीं क्रत्वर्थ है ॥ २३ ॥

## स्याद्वाऽस्य संयोगवत्फलेन संबन्धस्तस्मात्कर्मैतिशायनः ॥२४॥

शा० भा०—स्याद्वा फलेनैवंजातीयकानां संबन्धः । पुरुषधर्म इत्यर्थः । सुवर्णस्य, वाससो वा धर्मो भवन्निष्प्रयोजनः स्यात् । ननु संस्कृतेन सुवर्णेन, वाससा च कर्म सेत्स्यति । नैतदेवम् । सुवर्णस्याङ्गं न कर्मण उपकुर्यात् । श्रुत्यादीनामभावान्न कर्माङ्गम् । तस्मात् 'दुर्वर्णोऽस्य भ्रातृव्यो भवती'त्येव-मादिना एवंजातीयकानां फलेन संबन्धः । ननु वर्तमानोपदेशोऽयम् । सत्यमेव-मेतत् । आनर्थक्यपरिहाराय फलचोदनया संबन्ध एषितव्यो भवति । अन्यस्माच्चैषितव्यादकवाक्यगतस्य विपरिमाणो लघीयान् । कुतः ? प्रत्यक्षा तेनैकवाक्यता, परोक्षाऽन्येन । विपरिणामश्च वर्तमानकालस्याविवक्षा । संबन्धस्य च तात्पर्याध्यवसानम् । तस्मादेवंजातीयकः प्रधानकर्मोपदेशः स्यात् । यथा प्रजापतिव्रतानां फलेन संबन्धः—'एतावता हैनसाऽवियुक्तो भवती'ति । एवमत्रापि द्रष्टव्यम् । तस्मादेवजातीयकः पुरुषधर्म इति ॥ २४ ॥ पूर्वपक्ष-निरासः ॥ इत्यष्टमं सुवर्णधारणाधिकरणम् ॥ ८ ॥

त० वा०—कर्मसंबन्धस्तावन्न केनचित्क्रियते। सर्वो ह्यनारभ्यवादो वाक्यसंयोगेनाङ्गं विधत्ते, लिङ्गेन वा केनचिदव्यभिचारिणा। तदिह वाक्यसंयोगस्तावन्नास्त्येव हिरण्यधारणमपि व्यभिचारादलिङ्गम्। तदेव कर्तव्यतावचनेन विशेष्यते। यदि कर्तव्यतावचनं विशेषणं, ततश्च तद्व्यापारोपक्षयादविधायकत्वप्रसङ्गः। तेन द्रव्यस्वरूपसंबन्धमात्रमेव प्रमाणवत्। तत्र चाऽऽनर्थक्यमिति, न संस्कारता। न चेहापूर्वसाधनताकारितः संबन्धोऽवकल्पते। प्रकरणलभ्यत्वादपूर्वसाधनलक्षणायाः।

तस्माद्भूतभव्यसमुच्चारणन्यायेनैव हिरण्यसाधनकं वासःसाधनकं च धारणं, परिधानं च कर्तव्यम्। किं प्रयोजनमित्यर्थाक्षिप्तेनापि तावत्कर्त्रा संबन्ध इति पुरुषोपकारकल्पना। सुवाससेति बहुव्रीहेरन्यपदार्थप्रधानत्वाद्विस्पष्टमेव पुरुषप्राधान्यम्।

नन्वेवं सति फलं कल्प्यम्। नैष दोषः। सामान्यतः पुरुषार्थत्वऽवधारिते तस्य सुकल्प्यत्वात्। स्वर्गाद्युत्पत्तेश्च क्रियात्मकत्वादन्यत्र वेदमूलत्वादुभयमपि साधारणं पर्युपस्थापकमिति, कर्मोपस्थापननिवृत्तिः।

अपि च स्ववाक्यगतमेव भ्रातृव्यदुर्वर्णताकरणं, रूपधारणं फलमुभयत्रापि श्रूयते। सत्यपि चार्थवादसरूपत्वे पारार्थ्यानवधारणादेवंजातीयकेषु फलविधित्वं वक्ष्यति 'फलमात्रेयो निर्देशात्' इति। तत्र हि क्लृप्तसंबन्धस्यैव कामत्वमात्रं परिकल्प्य, क्रियायास्तादर्थ्यमध्यवसातव्यम्। अन्यत्र क्रतुसंबन्धात्प्रभृति सर्वं कल्पनीयम्। तस्मात्सर्वकामादिपदसंयोगवदिहापि फलेन संबन्धाद्विशिष्टविधानाच्च कर्मोपदिश्यते। तथा च स्मृतिः—'न जीर्णमलवद्वासाः स्यात्। धारयेद्वैणवं दण्डं शुभे रौक्मे च कुण्डले' इत्यादि सूपपत्स्यते ॥ २४ ॥

इत्यष्टमं हिरण्यधारणाधिकरणम् ॥ ८ ॥

न्या० सु०—नास्याइत्युपगमननिषेधस्य क्रत्वर्थत्वशङ्कायोगाद्देवा वै शंयुमित्यादिवच्चोदाहरणभूतवाच्यशेषत्वाभावादुपन्यासानर्थक्यमाशङ्क्यो अन्यार्थमप्येतदुदक्या संभाषणनिषेधस्य शुद्धपुरुषधर्मत्वज्ञाने भवत्युपयोगीति कृत्वो उदाहरणेन सहोपन्यस्तमित्याह—नास्याइति। क्रतावुदक्या संवादस्य कथंचिदप्राप्तेनिषेद्धुमशक्यत्वाच्छुद्धपुरुषनिवर्त्तनसामर्थ्यात्मकेन लिङ्गेन सह प्रकरणेस्याविरोधशङ्कायोगान्मलापकर्षणाख्यपुरुषोपकारसामर्थ्यात्मकलिङ्गवच्चेह क्रत्वक्रतुयुक्तपुरुषसाधारणधर्मत्वावेदकलिङ्गादर्शन।त्क्रतुयुक्तपुरुषधर्मत्वपूर्वपक्षानुपपत्तेरनन्तराधिकरणवत्क्रतुयुक्तपुरुषधर्मतापवादत्वायोगाच्छुद्धक्रतुधर्मत्वमात्रापवादत्वे च कर्त्रधिकरणानन्तरं जञ्जभ्यमानाधिकरणानन्तरं वैतदधिकरणारम्भापत्तेरनन्तराधिकरणसंगत्ययोगमाशङ्क्य, अपरोधविधानात्क्रत्वर्थसंवादाप्राप्तावपि स्त्रैणस्य पुंसः क्रतुकालेऽपि पुरुषार्थसंवादप्राप्तिसंभवात्प्राप्तिवशत्वसामर्थ्यात्मकेन निषेधस्य क्रत्वक्रतुयुक्तपुरुषसाधारणधर्मत्वावदेकेन लिङ्गेन सह प्रकरणस्याविरोधात्समावेशोपपत्तेः क्रतुयुक्तपुरुषधर्मत्वपक्षोपि

संभवतीति सूचियितुं पुरुषस्य सर्वत्र क्रतावन्यत्र वा निषेधः ततश्च स्मृतिसमानार्थत्वेन तन्मूलत्वाद्विधिरिति विध्युक्त्या क्रतुयुक्तस्यैव पुरुषस्य निषेधः ततश्च स्मृत्या सर्वदा निषेधप्राप्तेरतुल्यार्थत्वेन च मूलमूलित्वायोगादनुवादइत्यपि सूचितं भवतीत्येवं पक्षत्रयोक्त्यर्थत्वेन किं मलवद्वाससेति संदेहभाष्यं मलवद्वासःशब्दव्याख्यापूर्वं व्याख्यातुमाह—**मलवद्वासा इति**। किं प्राप्तमिति पूर्वपक्षभाष्यमयं निषेधो दर्शपूर्णमासयोः तद्युक्तस्य वा पुंसः धर्म इत्येवं पूर्वपक्षद्वयोक्त्यर्थत्वेन व्याख्यातुमाह— **तत्रेति**। प्रकरणग्राह्यानिषेधात् प्राक्कृतत्वात्प्रकरणावशादशक्यसंकोचतया, शुद्धपुरुषार्थत्वावेदकेन यच्छब्देन सह प्रकरणाग्राह्यविध्युद्देशान्तर्गतत्वद्वा, तद्वशाच्छक्यसंकोचतया क्रतुयुक्तपुरुषार्थत्वावेदकेन जञ्जन्यमानशब्देन सह तुल्यपुरुषोपादायकस्य शब्दस्याभावाच्छुद्धक्रत्वर्थस्य संवादस्यायं निषेधः ततश्च शुद्धक्रत्वर्थः।

यद्वा यथा क्रतावपरोधविधानात्सहाधिकारनिषेधेऽपि पत्नीयजमानसाधारणस्य व्रीह्यादेः पत्न्यनुज्ञां विना क्रतौ विनियोक्तुमशक्यत्वादनुज्ञाप्रश्नोर्थसंवादप्राप्तिः तथा पुरुषोऽपि स्त्रैणत्वेन क्रतुयुक्त इव क्रतुयुक्तेऽप्यविशेषेण प्राप्तिसंभवात्क्रतूक्तिलक्षितक्रतुयुक्तपुरुषार्थस्य संवादस्य निषेधः ततश्च क्रतुयुक्तपुरुषार्थइत्युक्ते क्रतावुदक्या संवादप्राप्तिसंभवे पुरुषार्थत्वज्ञापकपुरुषनिवर्त्तनसामर्थ्यात्मकलिङ्गाभावादविरोधिनाप्रकरणेन शुद्धक्रत्वर्थत्वोपपत्तावपि क्रतुयुक्तपुरुषार्थताप्रमाणाभावादयुक्तेत्याशङ्क्य, निषेधस्य साक्षात् क्रतुयुक्तपुरुषार्थत्वप्रमाणाभावेऽपि प्रियासंवादस्यानंदजननसामर्थ्यात्मकेन लिङ्गेन क्रत्वक्रतुयुक्तसर्वपुरुषार्थत्वावगतिसंभवात्सर्वप्रतिषेधानां प्रवृत्तिविषयत्वात्तदवधारणाधीनो निर्णय इत्यादिकर्त्रधिकरणवार्त्तिकाभिहितेनानृतवदनैदमर्थ्यावधारणाधीनतन्निषधैदमर्थ्यावधारणन्यायेन संवादनिषेधस्यापि क्रतुयुक्तसर्वपुरुषार्थत्वावगत्युपपत्ते'र्युक्ता मे यज्ञमन्वासाता' इति मन्त्रोच्चारणलक्षणस्य यजमानकर्तृकस्य पत्नीसंवादस्य सहाधिकारप्रकाशनार्थत्वेन यजमानसंस्कारार्थस्य मन्त्रलिङ्गात्प्राप्तेः तद्विषयत्वसंभवादपि निषेधस्य क्रतुयुक्ता पुरुषार्थता युक्तेत्यभिहितेत्यादिनोक्तम्।

अग्ने गृहपमउपसमाहूय स्वदेवानां पत्नीरुपमाह्वयध्वं पत्निपत्न्येषते लोको नमस्तेऽस्तु मा मा हिंसाः सुप्रजसस्त्वाय सुपत्नीरुपसेदिमेन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्राध्छूरित्वागार्हपत्योपनिषदे सुप्रजास्त्वायेति मन्त्रस्य पत्नीप्रयोज्यत्वात्पतिपत्नीति संवादस्याध्वर्यूकर्तृकतया यजमानकर्तृकतयानुपपत्तेर्देवपत्न्युपस्थानार्थत्वेन वाऽस्य यजमानपत्नीसंवादत्वायोगात्पत्न्या च संवादोऽध्वर्योरिति भाष्ये तु क्रतुविनियोज्यद्रव्यानुज्ञाप्रश्नार्थस्य यजमानकर्तृकस्य संवादस्य अपरुद्धयेति त्वकाशब्दोक्तयागसमानकर्तृकापरोधविधानेन प्राप्त्ययोगात्पत्न्या प्रयोगाद्वहिरनुपनीतत्वेन मन्त्रशिक्षणाभावादर्थप्राप्तस्य तद्वाचनस्य यजुर्विदध्वर्युकर्तृकस्यायं निषेधोभ्युपगन्तव्यइत्यापाद्य, दूषणाभिधानात्पत्नीत्ययं मन्त्रो यस्य 'युक्तो' मे यज्ञमिति मन्त्रोच्चारणस्य संवादस्यादिरित्यतद्गुणसंविज्ञानबहुव्रीह्याश्रयणेन पुनः पत्न्यभिध्यानजनितात्कामोद्रेकात्पत्नीसंवादप्राप्तिसंभवसूचनार्थी 'युक्ता मे यज्ञमिति मन्त्रः

पलिपल्येषते लोक' इत्यादेरित्यनेनोक्तः। शुद्धपुरुषार्थस्यापि संवादस्य क्रतौ कथंचित् प्राप्तिसंभवे, तन्निषेधस्य स्त्र्युपायत्मांसभक्षणादिवत्प्रकरणात् क्रत्वर्थत्वोपपत्तेस्तन्निरासो न युक्त इत्याशङ्क्य, नेहावगोरणादिवत्प्राप्तिसंभवाभ्युपगमे क्रत्वर्थत्वनिरासः, किंतु क्रतौ कथंचित्प्राप्त्यसंभवेनेति सूचनपूर्वं मलवद्वासः संवादविषयं यदकर्मनिषेधनं, तत्प्रकरणादपकृष्येत प्रयोगारम्भात्प्रागेव मलवद्वाससोपनयनाख्यापरोधविधानादित्येवं सूत्रव्याख्यार्थमेवमित्यादिभाष्यं तात्पर्यतो व्याचष्टे—**इतीति**।

अपरोधविधानात् क्रत्वनुष्ठानान्निवर्त्तनेपि क्रतुविनियोज्यद्रव्यानुज्ञाप्रश्नार्थसंवादोपपत्तिमाशङ्क्य, अपरोधस्य रकाशब्देन प्रयोगप्राग्भावविधानात्सर्वस्मादनुष्ठानसिद्धयर्थानुज्ञाप्रश्नादिसहितादनुज्ञानान्निवर्त्तनावगतेः तदर्थोपि संवादे न प्राप्नोतीति परिहारार्थत्वेन सौत्रप्राक्च्छब्दव्याख्यार्थमुत्तरार्द्धं व्याचष्टे—**तामिति**। तच्छब्देनानालम्भका लम्भानर्हापरामृष्टा। क्रत्वनुष्ठानानौपयिकत्वेनोदक्यायाः क्रत्वर्थसंवादाप्राप्तौ पुरुषार्थेप्युपगमनादिव्यवहारे उपयोगात्पुरुषार्थस्यापि संवादस्याप्राप्तिः स्यादित्याशङ्क्यानुपयोगोऽपि स्वाच्छन्द्यात्संवादप्राप्त्युपपत्तेर्निषेधार्थवत्वोक्त्या पूर्वार्द्धं व्याष्टे—**पुरुषस्य त्विति**।

पुरुषार्थस्य संवादस्य प्राप्तिसंभवेऽपि 'नोदक्ययाभिभाषेते'ति स्मृत्यैवं निषिद्धत्वात् निषेधानर्थक्यमाशङ्क्याह—**यदि चेति**। 'शास्त्राणि चेत्प्रमाणं स्युरिति वदसंदिग्धेऽपि यदीति संदिग्धवचनं स्मृतिप्राप्तनिषेधविषयायाः श्रुतेः स वायमर्थ उपनयनकाल एव पुरुषस्य प्रतिषिद्धः तेन संयोगगेनायं नित्यानुवाद इति कर्त्रधिकरणभाष्येऽनुवादत्वाभिधानान् मूलमूलित्वोक्तिमयुक्तामाशङ्क्य, क्रतुयुक्तपुरुषार्थत्वेनुवादतोक्ता, न तु शुद्धपुरुषार्थतयामित्याह—**न होति**। शुद्धपुरुषार्थतायामिति शेषः।

निश्चितशुद्धपुरुषार्थत्वोपगमननिषेधसाहचर्यादपि संवादनिषेधः शुद्धपुरुषार्थ इत्येवं सूत्रं व्याख्यातुमाह—**इतश्चेति**। अपकृष्येतेत्यनुषङ्गस्य शुद्धपुरुषार्थत्वप्रतिज्ञार्थत्वसूचनायाऽपकृष्येतेति वाच्ये पुरुषमात्रधर्मइत्युक्तम्। उपगमननिषेधवाक्यसंवादनिषेधवादनिषेधवाक्यशेषत्वाभावात्कुतस्तद्वशेन निर्णय इति पृच्छति—**कुतइति**। 'विषये प्रायदर्शनादि २-३-१६त्यत्र संदिग्धस्य वस्तुनः प्रायेवचननिर्णयत्वाभिधानादवाक्यशेषत्वेऽपि युक्ता निर्णायकतेत्युत्तरमाह—**प्रायेवचनेति**। अन्नादननिषेधस्याभ्यञ्जनवाक्यशेषादुपगमनविषयत्वनिर्णयोक्त्यर्थमभ्यञ्जनं वा इति भाष्यं व्याचष्टे—**नास्याइति**। मैथुनस्याभ्यञ्जनशब्दवाच्यत्वाभावात्कथमस्माद् वाक्यशेषादन्नादननिषेधस्य मैथुनविषयत्वनिर्णय इत्याशङ्क्य, अभ्यञ्जनशब्दपर्यायस्य म्रक्षणशब्दस्य मैथुने प्रयोगदर्शनादभ्यञ्जनशब्दस्यापि मैथुनवाचित्वं गम्यत इत्याह—**तथा होति**। मैथुननिषेधस्यापि शुद्धपुरुषार्थत्वनिश्चयः कथमित्याशङ्कानिरासार्थं स चेतिभाष्यमुपगमननिषेधः प्रकरणेन प्रसक्तविषय इति कृत्वा, प्रकरणादुत्कृष्टः शुद्धपुरुषार्थ इत्येवं लक्षणया विषयप्रसक्तिनिरासार्थत्वेन व्याख्यातुमाह—**तच्चेति**। शुद्धपुरुषार्थस्याप्युपगमनस्य ऋतुकालेऽपि रागतः प्रसक्तिसंभवात्तदहर्मांसमैथुने वर्ज्जयेदि (गो.ध.सू.) तिवदस्यापि निषेधस्य क्रत्वर्थतोपपत्स्यत इत्याशङ्क्य, तदहरित्यनेन क्रतुकाले

ब्रह्मचर्यविधानात्पुरुषार्थस्याप्युपगमनस्याप्रसक्तेस्तन्निषेधस्य क्रतुकालीनत्वायोगान्न क्रत्वर्थता युक्तेत्याह—**ब्रह्मचर्येति** । इतीति भाष्यावयवमुपपादितं स्वरूपतो व्याचष्टे—**तस्मादिति** । एष इतिभाष्यमुपगमननिषेधस्य पुरुषधर्मत्वोक्तेः प्रकृतोपयोगोक्त्यर्थत्वेन व्याचष्टे—**ततश्चेति** । सकलं वा भाष्यमुपगमननिषेधविषयतया पूर्वग्रन्थेन व्याख्यायऽनेन स्वयंप्रकृतोपयोगोवितः ॥ २४ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "स्याद् वा अस्य फलेन सम्बन्धः" = हिरण्य धारण आदि कर्म का फल के साथ सम्बन्ध होगा अर्थात् वह किसी का भी अङ्ग नहीं हो सकता है । क्योंकि जो अङ्ग होता है, उसका फल के साथ सम्बन्ध नहीं होता है । अर्थात् वह फल का जनक नहीं होता है । इसी का उदाहरण दिया गया है—"संयोगवत्" = प्रजापतिव्रतनाम का ब्रह्मचारी के द्वारा अनुष्ठेय जो कर्म विशेष है, जैसे "एतावता ह एनसा वियुक्तो भवति" = इसके द्वारा यह व्यक्ति पाप से मुक्त होता है" इस प्रकार के अर्थवाद बोधित फल के साथ सम्बन्ध-युक्त वह किसी का भी अङ्ग नहीं है और कोई यज्ञ भी नहीं है, अतः पुरुषार्थ है। इस स्थल में जो सुवर्ण हिरण्य धारण का विषय कहा गया है, वह भी इस प्रकार 'सुवर्ण एवं भवति दुर्बलः अस्य भ्रातृव्यः भवति" अर्थात् जो शोभन वर्णयुक्त है उसका शत्रु विवर्ण होता है । इस आर्थवादिक फल के साथ सम्बन्ध युक्त और वह अनारम्य पठित होने से किसी के भी अङ्गरूप में निर्दिष्ट नहीं होता है एवं स्वयं भी यागस्वरूप नहीं है । "तस्मात् कर्म" = इसलिए वह पुरुषार्थ कर्म क्रत्वर्थ नहीं है ।

आशय यह है कि क्रतु में इसका कोई भी उपयोग न होने से वह क्रत्वर्थ = क्रतु का अङ्ग नहीं है । इसलिए, इसको संस्कार कर्म मान कर किसी कर्म का अङ्ग नहीं माना जा सकता है । अन्य पक्ष में किसी कर्म पुरुष से द्वारा प्रार्थित उक्त फल का हेतु होने से पुरुषार्थ है ।

यदि यह कहा जाय कि इससे इसकी क्रतु के प्रति उपयोग की कल्पना की जायगी अर्थात् क्रतु का उपयोगी न होने पर संस्कार्यता सिद्ध न होने से अर्थापत्ति के द्वारा इसको क्रतु का ही उपयोगी कहकर कल्पना की जायेगी । ऐसा मानने पर यह कहा जा सकता है कि—वह कथन युक्ति समर्थित नहीं है । कारण, ऐसी स्थिति में अन्योऽन्याश्रय दोष होगा, यथा क्रतु का उपयोगी होने से वह संस्कार्य होता है और संस्कार्य होने पर क्रतु का उपयोगी होता है; इस प्रकार अन्योऽन्याश्रय होगा । अतः हिरण्य धारण विधि पुरुषार्थ है ।

"स्यात् अस्य फलेन सम्बन्धः" = इस प्रकार के कर्म का फल के साथ ही सम्बन्ध होगा । "वा" पूर्व पक्ष के निरसन के लिए हैं । "संयोगवत्" = प्रजापति व्रत के फल के साथ सम्बन्ध के समान, "तस्मात् कर्म" = अतएव यह कर्म अर्थात् पुरुषार्थ रूप कर्म है "ऐतिशायनः" = यह ऐतिशायन नाम के आचार्य को भी अभिमत है ॥ सिद्धान्त ।

**सुवर्णं हिरण्यं भार्यम्**—हिरण्य शब्द पृथिवी से उत्पन्न धातु का वाचक निघण्टु १।२ हेम, चन्द्र, अयः, लोहम् आदि हिरण्य के नाम हैं। अतः सुवर्णं अर्थात् अच्छे वर्ण वाला हिरण्य कहा गया है। दुर्वर्ण शत्रु माना गया है। "यो बिभर्ति दाक्षायणं हिरण्यम्, स देवेषु कृणुते दीर्घमायुः, स मनुष्येषु कृणुते दीर्घमायुः", जो दाक्षायण = सर्वथा शुद्ध हिरण्य को धारण करता है, वह हिरण्यधारण निश्चय ही देवों में दीर्घायु करता है, वह निश्चय ही मनुष्यों में दीर्घायु करता है। इसीलिए दुर्वर्ण अनारोग्य अनायुष्य आदि शरीरस्थ शत्रु का वर्धक माना है। सुवर्ण के धारण से आर्यों ने दीर्घायुष्य का साधन माना है, इसीलिए कानों में कुण्डल नाक में नथ, लौंग आदि को धारण किया जाता है, सुवर्ण कनक का बोधक और कर्णवेध आदि संस्कार किये जाते हैं ॥ २४ ॥

## [९] शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ॥ २५ ॥ पू०

**शा० भा०—इह कर्मसंयुक्ता होमा जयादय उदाहरणम्। येन कर्मणेर्त्सेत्, तत्र जयाञ्जुहुयात्, राष्ट्रभृतो जुहोतीति, अभ्यातानाञ्जुहोतीति। तत्रैते किं सर्वकर्मणां कृष्णादीनां शेषभूता, उत वैदिकानामग्निहोत्रादीनामिति। शेषत्वं तु निर्ज्ञातकर्मसंबन्धात्, फलाश्रवणाच्च। किं तावत्प्राप्तम्? सर्वकर्मणां शेषाः, विशेषानभिधानादिति ॥ २५ ॥ पूर्वपक्षः ॥**

त० वा०—इह वाक्यावधारितकर्मशेषत्वानां तद्विशेषसंबन्धश्चिन्त्यते। पूर्वपक्षवादी तत्र पश्यन्नप्याहवनीयसंयोगं होमानां प्राधान्यात् तद्वशेनाऽऽहवनीयप्रवृत्तेः कृतिसेवादीनामपि ऋद्धिसाधनकर्मत्वाविशेषाच्छक्यते, येन कर्मणा ऋद्धिमिच्छेदित्येवमुपलक्षणं कर्तुमिति मन्यमान आह—सर्वकर्मणा शेषो जयादिरिति। तेन सेवादिनाऽपि ऋद्धिमिच्छन्नाहवनीये जयादीञ्जुहुयात्। न चाऽऽहवनीयत्वेते न प्रयोजकाः। होममात्रोद्देशेनाऽऽहवनीयविधानात्। तेनानाहिताग्नेर्मा नाम भूवन्। आहिताग्निना तु वर्णानुरूपं लौकिकमपि कर्मानुतिष्ठता कर्तव्याः। एवं चानारभ्यवादस्वरतो न भग्नो भविष्यति। न चैवमादयः साक्षात्कर्मसंबन्धिनः प्रकृत्यर्थाः स्थास्यन्ति। कामं वा पुनरुक्तमयादिकृतिं वर्जयेयुः। कृष्यादिषु तु न काचित्पुनरुक्तताशङ्केत्यवर्जनमेव युक्तम् ॥ २५ ॥

### अथ षष्ठं सुवर्णधारणाधिकरणम्।

न्या० सु०—अस्यापि विचारस्य क्रत्वर्थविषयत्वेनाऽवान्तरप्रकरणसंगतिसंभवेप्यनारभ्याधीतेषु प्रकरणस्य पूर्वैः सह विरोधाविरोधचिन्तायोगान्महाप्रकरणासंगीवमाशङ्क्य, विरोधचिन्तात्वाभावेऽपि तत्कलभूतप्रकरणसमावेशासमावेशचिन्तात्वेन प्रकरणाधीतानां चान्यत्र गमनागमनचिन्तायां कृतायां, तद्वैपरीत्येनाऽन्यत्राधीतानां प्रकरणनिवेशानिवेशचिन्ताया बुद्धिस्थत्वात्प्रासंगिकत्वेन संगतिमाह—इदानीमिति। लिङ्गवतः शब्दस्य

लिङ्गोक्त्याविवक्षितत्वाल्लिङ्गस्याप्यप्रकरणाधीतत्वोपपत्तिः अप्रकरणाधीतानां साकाङ्क्षफलवत्सन्निध्याख्यप्रकरणाभावेऽपि हिरण्यधारणवासःपरिधानशून्येषु कर्मसु कीदृग्धिरण्यं चासौ वेत्यनाकाङ्क्षणात्तद्विशेषणत्वेन सुवर्णशोभनत्वविध्यनुपपत्तेर्वासोहिरण्यशून्येषु च किं धर्मकं सद्धिरण्यं, वासो वाऽपूर्वसाधनमित्यनाकाङ्क्षणात्, तत्संस्कारत्वेन धारणपरिधानविध्यनुपपत्तेस्तद्वन्ति विशेषणाकाङ्क्षाणि संस्काराकाङ्क्षाणि वा कर्माणि प्रकरणशब्देनाकाङ्क्षाख्यैकदेशलक्षणयोक्तानि प्रधानकर्मविधिपक्षविश्वजिदादिवत्फलकल्पनापत्तावपि क्रत्वर्थत्वपूर्वपक्षस्य क्लिष्टत्वात्संस्कारकर्मविधित्वेन पूर्वपक्षे भाष्यकृता वक्ष्यमाणेऽपि सुवर्णोद्देशेन, हिरण्योद्देशेन वा धारणविधावुद्देशस्य विशेषणायोगादन्यतरशब्दानर्थक्यापत्तेः, परिधानस्य वाऽश्रुतत्वात्क्रत्वनर्हत्वापादकत्वेन च संस्कारकत्वस्य दुराशङ्क्यत्वाद्धारणपरिधानयोः संस्कारविध्यनुपपत्तेरपरितोषात्स्वाभिमतं पूर्वपक्षं सूचयन्नुदाहरणपूर्वं संदेहमाह—**तस्मादिति**। धारणं संस्कार्यस्य यथोपात्तस्य संस्कार्यत्वेन विशेषणेनाकाङ्क्षत्वात्सुवर्णत्वविशिष्टहिरण्योद्देशेन धारणाख्यसंस्कारविध्यनुपपत्तेर्हिरण्यानुवादेन सुवर्णत्वविध्यवगमात्तस्य च क्रियायामव्याप्रियमाणस्यानाकाङ्क्षितसुवर्णत्वविध्ययोगादनुवाद्यत्वेऽपि भार्यत्वेन विशेषणीयत्वोपपत्तेर्हिरण्यधारणस्यानुवाद्यत्वाविरोधः। वाससो विशेषणाकाङ्क्षासिद्ध्यै क्रियापेक्षायां योग्यत्वात्परिधानक्रियावगते कर्मस्थवासःपरिधाने शोभनत्वविध्यविरोधः। हिरण्यवासोनुवादनिरासार्था प्रधानकर्मत्वोक्त्यर्था च विशिष्टोक्तिः।

धारयेद्वैणवन्दण्डं[1] शुभे रौक्मे च कुण्डले।
न जीर्णमलवद्वासा भवेच्च विभवे सति॥

इति स्नातकव्रतत्वेन नित्यत्वेन नित्यत्वस्मृतेः पुत्रजन्मनिमित्तवैश्वानरेष्टिवत्फलश्रवणेऽपि काम्यत्वाभावोक्त्यर्थानित्योक्तिः। स्वाभिमतपूर्वपक्षनिरासार्थत्वेन सिद्धान्तसूत्रस्थं तुशब्द व्याख्यापूर्वं सिद्धान्तसूत्रं व्याख्यातुमाह—**तत्रेति**। तद्धर्म इति तच्छब्दोऽहीनवत्पुरुष इति जञ्जभ्यमानाधिकरणपूर्वपक्षसूत्रनिर्दिष्टपुरुषपरामर्शित्वेन पुरुषधर्मोक्त्या व्याख्यातः। क्रत्वर्थप्रमाणाभावोक्तिद्वारा पुरुषार्थत्वोपपादनार्थं तत इति सूत्रावयवं ततःप्रकरणवशेन निरस्तशुद्धपुरुषार्थत्वात्प्रकरणाधीताज्जञ्जभ्यमान-मन्त्रोच्चारणादेरस्या-प्रकरणाधीतत्वाद्वैषम्येण क्रत्वर्थत्वप्रमाणाभावेऽपि वाक्याद्वासोहिरण्यार्थत्वावगतेः पुरुषार्थत्वपारिशेष्याभावादयुक्तमाशङ्क्य, हेतुप्रश्नपूर्वमुपपादयितुमाह—**कुत इति**। प्रकरणाधीतस्यापि पुरुषार्थत्वे फलपदकल्पनया फलस्य सन्निधिं कल्पयित्वाऽन्वयकल्पना, तत्सिद्ध्यै वा श्रुतेतिकर्त्तव्यताकल्पना, प्रकृतस्यापि कर्मणो श्रुतेतिकर्त्तव्यतान्तरकल्पनेति कल्पनागौरवपरिहारायैव क्रत्वर्थाभ्युपगमात्, अप्रकरणाधीतस्यापि कल्पनालाघवाख्येनैव प्रमाणेन क्रत्वर्थत्वं भविष्यतीत्याशङ्कानिरासार्थत्वेन लाघवमात्रस्य प्रमाणत्वे, ततः प्रकरणाम्नानादङ्गत्वाख्यविशेषासिद्धिप्रसंगादित्यकारप्रश्लेषेणावृत्त्यैतत्सूत्रावयवव्याख्यार्थं यद्यप्रकरणइति भाष्यं व्याचष्टे—**प्रकरणाम्नानस्य हीति**। 'तस्मादिति सिद्धान्तोपसंहारभाष्यं पुरुषार्थत्वं विना

१. मनु० श्लो०

सर्वविध्यपर्यवसानात्क्रत्वर्थस्यापि तद्द्वारा पुरुषार्थत्वस्यावदयाभ्युपगमनीयत्वात्तदसम्भवे पारिशेष्यात्साक्षात्पुरुषार्थत्वावगत्युक्तचर्यत्वेन व्याचष्टे—यतस्त्विति ॥ २५ ॥

### आठवाँ हिरण्यधारणाधिकरण

भा० प्र०—श्रुति में "येन कर्मणा इर्त्सेत् तत्र जयान् जुहुयात् राष्ट्रभृतो जुहोति अभ्यातानान् जुहोति" (तै० सं० २।४।६) = जिस कर्म से समृद्धि की इच्छा करे, उस कर्म में जय नाम का होम करता है, राष्ट्रभृत नाम का होम करता है, अभ्यातनाम का होम करता है।" यह अनारम्य पठित वाक्य है। इस वाक्य में वृद्धि की कामना के उद्देश्य से जो जयानाम के होम का उपदेश हैं, वह क्या लौकिक कृषि आदि कर्म एवं वैदिक यज्ञ आदि सभी कर्मों का अङ्ग है अथवा वह केवल वैदिक कर्म का ही अङ्ग है—यह संशय है।

इसमें पूर्वपक्षी का कहना है कि "अप्रकरणे शेषः सर्वकर्मणाम्" यह जो शेष अर्थात् अङ्ग कर्म—वह किसी कर्म के प्रकरण में पठित न होने से, वह लौकिक एवं वैदिक सभी कर्मों का अङ्ग होगा। कारण, "अविशेषात्" जब यह किसी प्रकरण में पठित नहीं है, तब यह वैदिक कर्म का ही अङ्ग होगा, लौकिक कर्म का अङ्ग नहीं होगा, ऐसा कोई विशेष नहीं हो सकता है। अतएव इसके सम्बन्ध में कोई भी विशेष उल्लिखित न होने से इसको केवल वैदिक कर्म का ही अङ्ग मानने में कोई कारण नहीं है, अतः, यह वैदिक और लौकिक सभी कर्मों का अङ्ग होगा।

"अप्रकरणे शेषः" = अप्रकरण में स्थित शेष अर्थात् जो अङ्ग कर्म है, किन्तु वह किसी प्रकरण में पठित नहीं है, वह, "सर्वकर्मणाम्" सभी कर्मों का ही अङ्ग होगा "अविशेषात्" क्योंकि, उसका विशेष नहीं है अर्थात् कोई एक स्वतन्त्र कर्म का ही अङ्ग होगा—ऐसा विशेष नहीं है ॥ २५ ॥

**होमास्तुव्यवतिष्ठेरन्नाहवनीयसंयोगात् ॥ २६ ॥ सि०**

**शा० भा०—न चैतदस्ति, सर्वकर्मणां कर्षणादीनामप्यङ्गभूता इति। होमा एते। अतो व्यवतिष्ठेरन्, आहवनीयसंयोगो भवति होमेषु। 'यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवती'ति। तेन यस्याऽऽहवनीयः तस्यैतेऽङ्गम्। न च कृष्णादीन्याहवनीये वर्तन्ते। न चैषां गार्हपत्योऽस्ति। यतः प्रणीते, आहवनीयः स्यात्। तस्मान्न कर्षणादीनां जयादयः ॥ २६ ॥ सि० ॥**

त० वा०—व्यवतिष्ठेरन्नेते होमा वैदिकेष्वेव, न सर्वत्र भवेयुः। कुतः ?

समानदेशता नित्यमिष्यतेऽङ्गप्रधानयोः।
न च कृष्यादिभिः साकमेषां स्यात्तुल्यदेशता ॥

कर्षणं हि भूमौ क्रियते, राजकुले च सेवा। दयादयश्च होमत्वादविहिताधिकरणान्तरा एकान्तेनाऽऽहवनीये कर्तव्याः। तत्र विना वचनेनाङ्गप्रधानवैदेश्यमापद्यमानं वैगुण्यं जनयेत्।

अस्ति चैषामन्यो विषयो यत्राविगुणा भवन्ति। तस्मिंश्च सति नार्थापत्त्या वैदेश्यमभ्यनुज्ञास्यते। न च शास्त्रेणानभ्यनुज्ञातं कृतं फलं ददाति। अतः सगुणसंपादनायैवानाहिताग्नीनामविदुषाममनुष्याणां चैते न भवन्ति। तथा कर्मान्तराणामपि।

ननु क्षेत्रमेवाऽऽहवनीयं नीत्वा हीष्यते। न तथाऽपि विलेखनहोमयोर्देशभेदापरिहारात्। सामीप्यमात्रं हि तत्रानुगृह्येत, न तु समानदेशत्वम्। न ह्येकैकस्मिन्विदारण आहवनीयं निक्षिप्य होतुं शक्यते। न च तावताऽपि समानदेशत्वं भवति, होमास्त्विति च हेतुव्यपदेशः। यतोऽमी होमाः तस्माद्व्यवतिष्ठेरन् ॥ २६ ॥

न्या० सु०—संस्कारविधित्वशङ्कायोगात्, तत्तदाशयेन पूर्वपक्षायोगेऽपि सूत्रयोजनशक्तिमात्रेण संस्कारविधित्वात्कर्माङ्गत्वपूर्वपक्षे भाष्यकृता कृतेपि विशिष्टविधित्वाभ्युपगमेनापि कर्माङ्गत्वं पूर्वपक्षे सूत्रयोजनशक्तोहमिति सूचनायाऽनभिमतेऽपि विशिष्टविधित्वाभ्युपगमेन पूर्वपक्षे धारणं, परिधानं वा द्रव्यत्वात्कर्मत्वसामान्येन बुद्धिस्थस्य फलवतोऽग्निहोत्रादिकर्मणाङ्गं स्यादित्येव स्वयं योजयितुं सन्देहकाले उक्तमपि पूर्वपक्षमाह—**यद्यपि तावदिति**। शङ्कोत्तरत्वेनाऽद्रव्यत्वादिति सूत्रावयवं योजयितुं शङ्कां तावदाह—**न त्विति**। नञोऽन्यवाचित्वादद्रव्यशब्देन कर्मोक्तिमभिप्रेत्य परिहरति—**सत्यमिति**। द्रव्यशब्देन देवताया अप्युपलक्षणं, द्रुगतावित्यस्माद्धातोरचो यदिति यत्प्रत्यये कृते द्रव्यशब्दव्युत्पत्तेरुपगम्यत्वाद्धविशेषोपचरणीयत्वादावृत्तेन द्रव्यशब्देनैव देवतोक्ति वाभिप्रेत्य द्रव्यदेवताभावेन यागत्वाभावात्प्रधानकर्मत्वानुपपत्तेः संस्कारकर्मत्वावगमात्, अकर्माङ्गभूतयोश्च वासोहिरण्ययोः संस्कारानर्हत्वात्कर्माङ्गं परिधानं, धारण चेत्येवं सूत्रव्याख्यार्थं नात्रेत्यादिभाष्यं मन्यतेशब्देनायुक्तं सूचयन् व्याचष्टे—**एवं चेति**।

यष्टव्योक्तेरुपलक्षणार्थत्वसूचनार्था दानहोमोक्तिः। देवताया अप्यौपचारिक संप्रदानत्वमभिप्रेत्याऽद्रव्योक्तिव्याख्यार्थं संप्रदानाभावोक्तिः। संस्कारकर्मत्वपक्ष एव द्रव्यशब्देन लक्षणया द्रव्यधर्मस्वातन्त्र्योक्तेर्गुणकर्मवाचित्वेनाद्रव्यशब्दं स्वयं व्याचष्टे—**अथ वेति**। स्वाभिमतं पूर्वपक्षमाह—**अथ वानेकार्थेति**। सुवर्णत्वविधेरपेक्षितपरिभाषामूलसमर्पकत्वेनोपयोगाधिक्यमाह—**एवं चेति**। रजतेपि दुर्वर्णरजतापेक्षया सुवर्णत्वसंभवेप्येकजातीयसर्वरजतव्यक्तिप्रत्ययबाधापत्तेर्दुर्वर्णरजतव्यावृत्त्ययोगाज्जातिद्वयेऽपि साधारणस्यापि हिरण्यशब्दस्य—

सकृदुच्चरिते वास्मिन् विवक्षैकैव दृश्यते।

इत्यनेन न्यायेन सकृदुच्चरितस्य जातिद्वयपरत्वायोगात्कात्र जातिर्विवक्षितेति संदेहे, सुवर्णत्वविशेषणस्य तद्व्यावृत्त्यर्थत्वावगमाद्रजतजातिमात्रव्यावृत्तिः साधारणोक्त्या सूचिता। अस्मिन् पूर्वपक्षे सूत्रं योजयितुमाह—**अद्रव्यत्वादिति चेति**।

भाष्यकृद्व्याख्यायामन्यतेशब्देनायुक्तत्वं सूचितं प्रकटयितुमाह—**यत्त्विति**। हविषि रूढस्य द्रव्यशब्दस्यावयवयोगेन देवतावाचित्वायोगादुत्सूत्रत्वम्। उत्तरार्द्धं व्याचष्टे—**अयागानामपीति** ॥ २६ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि—"होमास्तु व्यवतिष्ठेरन्" जया जो होम का विषय कहा गया है, वह वैदिक कर्म में ही व्यवस्थित रहेगा, अर्थात् वैदिक कर्मों से ही निबद्ध रहेगा, कृषि आदि कर्मों का अङ्ग नहीं है। क्योंकि, "आहवनीयसंयोगात्" आहवनीय अग्नि के साथ इसका सम्बन्ध रहता है।

आशय यह है कि याज्ञिकों को प्रथम अग्न्या धान नाम का यज्ञ करना होता है। इस कर्म में शास्त्रीय नियम के अनुसार एक स्वतन्त्र घर में तीन अग्नियों की स्थापना होती है, उन अग्नियों का नाम दक्षिणाग्नि, गार्हपत्याग्नि और आहवीय अग्नि है। इनमें देवों के उद्देश्य से जो होम किया जाता है, वह इस आहवनीय अग्नि में ही कर्त्तव्य होता है, इसी प्रकार यज्ञ का कतिपय उदीच्य कर्म भी गार्हपतय अग्नि में किया जाता है और पितरों के उद्देध्य से जो पिण्ड पितृयज्ञ आदि कर्म किया जाता है, वह दक्षिणाग्नि में सम्पाद्य होता है। अतः, यह जो जया होम है, वह होम होने से आहवनीय अग्नि में ही सम्पाद्य हैं, किन्तु लौकिक कृषि आदि कर्मों में आहवनीय अग्नि नहीं है, यद्यपि गृहस्थ के लिए आहवनीय अग्नि रहती है तथापि उसका स्थान घर है और कृषि आदि कर्मों का स्थान अन्यत्र है, इसलिए वह भिन्न स्थान में स्थित होने से उगको अङ्ग प्रधान भाव अवस्थिति नहीं मानी जा सकती है क्योंकि, अङ्ग एवं प्रधान एक स्थानस्थित ही होता है, इसीलिए, कुमारिलभट्ट ने कहा है—

"समानदेशता नित्यमिष्यतेऽङ्ग प्रधानयोः"।

अङ्ग एवं प्रधान की सभी समय समान-देशता आवश्यक है॥

"होमाः" = कथित जयाहोम, "तु" = पूर्वपक्ष के निरास के लिए, "वावतिष्ठेरन्" = श्रौतयज्ञ में ही व्यवस्थित होगा, "आहवनीयसंयोगात्" = क्योंकि, कथित होम का आहवनीय के साथ सम्बन्ध रहता है। सिद्धान्त ॥ २६ ॥

## शेषश्च समाख्यानात् ॥ २७ ॥

**शा० भा०—इतश्च पश्यामो वैदिकानां शेषभूता इति। कुतः ? समाख्यानात्। आध्वर्यवमिति हि समाख्याते वेदे जयादयः समाम्नाताः—सन्तोऽध्वर्युणा करिष्यन्ते। कर्षगादिष्वध्वर्योरभावादनध्वर्युणापि क्रियमाणाः समाख्यां बाधेरन्। तस्माद्वैदिकानां शेषभूता इति ॥ २७ ॥ हेतुः ॥ इति नवमम् जयादीनां वैदिककर्माङ्गताधिकरणम् ॥ ९ ॥**

त० वा०—इतश्च वेदिकानामेव जयादिः शेषो, यतः समाख्यानुग्रहो भवति। दर्शपूर्णमासादिष्वध्वर्युर्विद्यते। तदङ्गभूताः सन्त एते तत्कर्तृकतां प्रतिपद्यन्ते। कृष्यादीनां तु ऋत्विगभावाद्भेदेन च जयादीनां वरणादीनामनाम्नानादपूर्वत्वाच्चोदकेन प्राप्तिर्नास्ति। यदि च तदर्थमेवाध्वर्युर्व्रियते, ततः कर्तृभेदोऽप्यापद्यते। न हि कृषिमध्वर्युः करोति। तेन समाख्यानाद्यो वाक्यशेषोऽध्वर्युणा कर्तव्यमध्वर्युर्वा यः कर्तृत्वेन शेषभूतः स एवमनुगृहीतो भवतीति व्यवस्थासिद्धिः ॥ २७ ॥

इति नवमं जयादीनां वैदिककर्माङ्गताधिकरणम् ॥ ९ ॥

न्या०सु०—यजुर्वेदविहितपदार्थानुष्ठातृत्वाद्वेदसंयुक्तेनाऽध्वर्युणा योगस्याध्वर्यवसमाख्यारूपस्य कर्माङ्गत्वे योगाद्युक्तत्वादपि कर्मशेष इत्येवं संशब्दस्य वेदसंयुक्ताध्वर्युवाचित्वेन यागशब्दावृत्त्या च सूत्रव्याख्यार्थमाध्वर्यवमित्यादिभाष्यं व्याचष्टे—कर्माङ्गत्वे वेति। धारणपरिधारणानुवादेन सुवर्णशोभनत्वविधिपक्षे क्रियात्मकत्वेपि यस्य धारणपरिधाने विहिते, तस्यैव तद्विशेषणेऽपि कर्तृत्वावगते सुवर्णशोभनत्वयोस्त्वक्रियात्मकत्वेन कर्त्रपेक्षाया एवाभावात्समाख्यायाः कर्तृनियमे व्यापारानुपपत्तेरेतत्सूत्रानर्थक्यमाशङ्क्य, तदापि वैदिकत्वसामान्यस्य वेदसंयोगशब्दार्थत्वान्नानर्थक्यमित्याह—यदापीति। वैदिकत्वसामान्योक्तेः प्रयोजनापेक्षायां वासोहिरण्ययोर्लोकवेदसाधारण्याद्वैदिकमात्रानुवादायोगशङ्कानिरासं प्रयोजनमाह—तेनेति ॥ २७ ॥

भा० प्र०—जयाहोम वैदिककर्म का ही अङ्ग होता है, क्योंकि, "शेषश्च समाख्यानात्" 'आध्वर्यव' इस नाम से प्रसिद्ध वेद के विभाग में यह जयाहोम विषयक वाक्य पठित है, अतः यह भी 'आध्वर्यव' इस संज्ञा का विषय है। जो अध्वर्यु के द्वारा अनुष्ठित होता है, उसी को 'आध्वर्यव' कहा जाता है, लौकिक कृषि आदि कर्म में अध्वर्यु नहीं रहता है, अतः, जयाहोम को लौकिक कर्म का अङ्ग मानने पर 'अध्वर्यव' यह संज्ञा बाधित होगी, अतएव, यह लौकिक कर्म का अङ्ग नहीं है।

"शेषः च" = यह शेष अर्थात् अध्वर्यु के द्वारा अनुष्ठेय कर्म का अङ्ग है, "समाख्यानात्" = समाख्या के अनुसार ॥ २७ ॥

इति नवम जया आदिका वैदिककर्माङ्गत्व अधिकरण।

## अथ दशमं वारुणेष्टेर्वैदिकाश्वदाननिमित्ताधिकरणम्

## [१०] दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् ॥ २८ ॥ पू०

**शा० भा०—अस्त्यश्वप्रतिग्रहेष्टिः—'वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान्प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालान्निर्वपेत्', इति। तत्र सन्देहः—किं लौकिकेऽश्वप्रतिग्रहे, इष्टिः, अथ वैदिके, इति। कः पुनर्लौकिकोऽश्वप्रतिग्रहः? को वा वैदिक इति? लोके भिक्षमाणो वा, अभिक्षमाणो वा यत्राश्वं लभते, तत्र लौकिकाश्वप्रतिग्रहः। वैदिकोऽपि पौण्डरीकेऽश्वसहस्रं दक्षिणा, ज्योतिष्टोमे 'गौश्चाश्वश्चेति। तत्रोच्यते। वैदिकत्वसामान्याद्वैदिके, इति प्राप्ते। उच्यते। दोषात्त्विष्टिर्लौकिके स्यात्। दोषो हि श्रूयते, 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाती'ति। स चायमनुवादो यत्र दोषः, तत्रेति। स च लौकिकेऽश्वप्रतिग्रहे शूद्रादन्यस्माद्वा पापकर्मणः कृतो भवतीत्युपपद्यते। दोषसंयोगाल्लौकिके, इति गम्यते।**

आह। न दोषसंकीर्तनं प्रायश्चित्तविषयविशेषणं, किंतु प्रायश्चित्तस्तुत्यर्थेन। उच्यते। दोषनिर्घातार्थे सति एवं स्यात्। वरुणप्रमोचनमिदं कर्म तल्लौकिके भवितुमर्हति। लोके वरुणग्रहणस्य विद्यमानत्वात्। वैदिके त्वश्वप्रतिग्रहे तन्न स्यात्। शास्त्राद्धि वचनेन तस्य कर्तव्यताऽवगम्यते। यदि च ततः पापं स्यात्, न तस्य कर्तव्यताऽवगम्येत्। अकर्तव्यं हि पापफलम्।

ननु वैदिकेऽपि प्रतिग्रहेऽप्रतिग्राह्यात्प्रतिगृह्णतः पापमस्ति। उच्यते। भवेदेवं, यदि प्रतिग्रहस्य कर्तुरिष्टिर्भवेत्, सा तु खलु यथा हेतुकर्तुस्तथोत्तराधिकरणे वक्ष्यामः। तस्मान्न वेदचोदितेऽश्वप्रतिग्रहे, इष्टिरित्येतावदिहाधिकरणे सिद्धम्॥ २८॥ क० पूर्व०॥

अथ दशमं वारुणेष्टेर्वैदिकाश्वदाननिमित्ताधिकरणम्।

त० वा०—वैदिकलौकिकप्रधानसंबन्धविचारप्रसङ्गाद्यत्र निमित्तानां लौकिकवैदिकत्वाशङ्का, तानि विचार्यन्ते। तत्र 'यावतोऽश्वान्प्रतिगृह्णीयादिति यावच्छब्दोपबन्धादश्वप्रतिग्रहाणां निमित्तत्वम्'। तत्र संदिह्यते—'किमश्वप्रतिग्रहमात्रस्याथ लौकिकस्यैव' अथ वैदिकस्यैवेति। कः पुनर्लौकिकोऽश्वप्रतिग्रहः? को वा वैदिक इति—लोके प्रतिषेधाद्वेदे च प्रतिग्रहीतव्यमित्येवमविधानादुभयत्राप्यश्वप्रतिग्रहो नास्तीति मन्यमानस्य प्रश्नः। इतरो विधिप्रतिषेधनिरपेक्षस्वरूपमात्रं दर्शयति, अकर्माङ्गभूतदानाश्रयपुरुषार्थत्वाभिमतो लौकिकः, कर्माङ्गभूतदानाश्रयस्तु वैदिक इति। किं प्राप्तम्? अविशेषाभिधानादुद्दिश्यमानविशेषणासंभवाच्चाश्वप्रतिग्रहमात्रं निमित्तमिति।

तथा प्राप्ते लौकिकपक्षपरिग्रहः। भाष्यकारेण त्वविशेषपक्षमनाभाष्यं तुशब्दार्थवत्त्वाय सिद्धान्तोपक्रमः कृतः। वैदिकत्वसामान्यात्फलकल्पनाभयाच्च वैदिक इति। नैमित्तिकं हि विधीयमानं निमित्तमपि वैदिकमेव बुधौ संनिधापयति। तेनैव निराकाङ्क्षीभूतत्वान्न लौकिकेन संबध्यते। फलं च तत्र कल्पनीयम्। इतरत्र तु संबद्धस्य क्रतोरुपकारः सुखेनैव कल्पिष्यत इति प्राप्ते।

अभिधीयते—लौकिके स्यादिति। कुतः?

श्रूयते दोषसंयुक्तः स च दोषोऽस्ति लौकिके।
वैदिके विधिगम्यत्वान्न हि दोषः प्रतीयते॥

'वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाती'ति पापेन ग्रहणं यस्मिन्नश्वप्रतिग्रहे, स निमित्तं प्रतीयते। तदपि च पापग्रहणं प्राप्तमनूद्यते। यदि हि विधीयते, ततः कदाचिदेतद्वाक्यसामर्थ्यादेव वैदिकेऽपि स्यात्। न तु विधीयते, सर्वफलानामविधेयत्वात्। न च तत्र कर्मविधानं, विधेयस्य कर्मणः पापफलत्वासंभवात्। न चेहाश्वप्रतिग्रहः प्रतिषिध्यते, तदश्रवणात्। निमित्तसंबन्धमात्रा-

पयोगाच्च। तस्मादत्यन्तसंबन्धाद्यत्र प्रतिषेधः तत्र दोषः। स च लौकिकस्य प्रतिषेधो 'न केसरिणो ददाति, नोभयतोदतः प्रतिगृह्णाति' इति।

नन्वयमपि प्रतिषेधः सामान्यनैव श्रूयते। सत्यं। तेनैव तु लौकिकस्येति ब्रूमः। इतरस्य विशेषविधिसंस्पृष्टस्य प्रतिषेधविषयत्वासंभवात्। अतश्च दोषसमभिव्याहृतत्वादिष्टिरपि लौकिकविषया स्यात्। ननु च निमित्तभावादुद्दिश्यमानोऽश्वप्रतिग्रहो न दोषेण विशेष्टुं शक्यत इति विधीयमानेष्टिस्तुतिमात्रपरे दोषसंकीर्तने वैदिकोऽपि निमित्तं भवेत्। उच्यते।

विशेषणतया नैव दोषोऽयं कल्प्यते मया।
दोषनिर्घातकार्येष्टिसामर्थ्याल्लौकिकाङ्गता॥

नह्येवं क्रियते दोषवान्योऽश्वप्रतिग्रहः। किं तर्हि? निमित्तवेलायां तावत् सामान्यमात्रमेव गृह्यते। यदा त्विष्टिभावनायाः प्रयोजनाकाङ्क्षा भवति, तदा अन्यस्य स्वर्गादेः, कर्मोपकारस्य वा संनिध्यपेक्षयोरभावात् अस्य च दोषस्य समानवाक्योपात्तत्वेन प्रत्यासत्तेः स्वरूपेण कर्मानपेक्षितत्वेन फलत्वप्रतिपत्त्यसंभवात्पुरुषौपयिकं विधिसंबन्धार्हं निर्घातमपेक्षमाणस्यापनीयमानतया कर्मणा संबन्धः। एकेन च नैराकाङ्क्ष्ये संभवति, न प्रयोजनान्तरं कल्पयितुं शक्यम्। अतश्च यत्र दोषः तत्र निर्घातोऽपि प्रतिषेधानुसारी। स च प्रतिषेधो लौकिकस्येत्यन्तरेणापि विशेषणमर्थवशात्तस्यैव निमित्तत्वम्। एतद्दर्शयति—**वरुणप्रमोचनं त्विदं कर्म तल्लौकिके भवितुमर्हति।**

**भाष्योक्तस्याऽथ आक्षेपसमाधाने**

यत्तु भाष्यकारेण दोषं प्रदर्शयतोक्ते **स च लौकिकेऽश्वप्रतिग्रहे शूद्रादन्यस्माद्वा पापकर्मणः क्रियमाणे भवतीति।** पुनश्च वैदिकेऽप्येतत्समानमिति मन्यमानेन **ननु वैदिकेऽप्यप्रतिग्राह्यात्प्रतिगृह्णतः** पापग्रहणमस्तीति चोदयित्वा परिहार उक्तः। भवेदेतदेवं यदि प्रतिग्रहीतुरिष्टिः स्यात् सा खलु दातुरिति। स लौकिकेऽप्यविशिष्टः। तथा हि।

लौकिकेऽपि तु यो दाता शूद्रादिर्न स दोषवान्।
प्रतिग्रहीतृदोषस्तु पुनरप्युभयोः समः॥

यदि वैदिके दातुरिष्टिरिति कृत्वा सत्यप्यप्रतिग्राह्यायाज्ययाजननिमित्ते प्रतिग्रहीतॄणां पापे दोषरहितनिमित्तमुच्यते, ततो लौकिकेऽपि शूद्रादिभ्य उपादाने दुष्यत्यपि प्रतिग्रहीतरि दातुस्तद्द्वारेणादुष्टत्वाद्दोषरहितमेव निमित्तम्। अथेह प्रतिग्रहीतृव्यापारो निमित्तं, स च दुष्ट इति गृह्यते, तत्तुल्यं वैदिकेऽपि। अथ वैदिके दातुः लौकिके प्रतिग्रहीतुरिष्टिरिति कल्प्यते। तत्राप्युपपत्तिविशेषो वक्तव्यः।

किं च—

योऽश्वप्रतिग्रहादेव दोषः सोऽत्र प्रतीयते ।
दातृदोषस्तु सर्वत्र तुल्योऽश्वैर्न विशेष्यते ॥

**अस्य भाष्यसन्दर्भस्यासंगत्याक्षेपः**

न ह्यप्रतिग्राह्यान्प्रतिगृह्णन्नेवं विशेष्टुं शक्यते, योऽश्वं प्रतिगृह्णातीति । सर्वद्रव्यप्रतिग्रहीणां दातृदोषेण दुष्टत्वात् । तेनैष ग्रन्थः पूर्वं प्रतिग्रहीतृव्यापारोपन्यासात्पश्चाच्च दातृव्यापाराश्रयणादसम्बद्धः ।

**तत्र केषाञ्चित्परिहारः**

तत्र केचिदाहुः । अनपेक्ष्योत्तराधिकरणसिद्धान्तं प्रतिग्रहीतुरेवेष्टिरित्यत्र विचारितम् । लोकेऽश्वानां प्रतिग्रह एव तावत् 'नोभयतादेतः प्रतिगृह्णापि' इति प्रतिषिद्धः । किम् ? शूद्रादिभ्य उपादानम् । यज्ञे त्वसावृत्विजां पुनः—प्रसूतः । तत्रैतत्स्यात् दानमात्रं यज्ञे विहितं, न प्रतिग्रह इति । तदयुक्तम् । दानविधानेनैव प्राक् परस्परत्वापादनादपर्यवस्यता तस्याऽऽक्षिप्तत्वात् । अपि च सर्वत्र समाप्तिविधानं सिद्धान्तः । तेन दद्यादिति सामर्थ्यगृहीतः स्वत्वपरित्यागं परस्वत्वापानदमेव विधत्त इति प्रतिग्रहविधानम् ।

अपि च । मन्त्रैर्वानियमैर्युक्तः कर्ममध्येऽङ्गसंगतः ।
क्रियमाणः कथं नाम विधिना नावगम्यते ॥

यदि प्रतिग्रहो न विधीयेत, कथं तस्येतिकर्त्तव्यता विधीयेत किमिति वा तस्मिन्नकृते कर्मवैगुण्यं स्यात् ।

**अत्र वार्तिकमतेन समाधानम्**

अत्र वदामः ।

ऋत्विग्भ्यो दक्षिणां दद्यादिति दानं विधीयते ।
लोभादेवार्जनाङ्गत्वात्प्राप्तस्तेषां प्ररिग्रहः ॥

न हि दद्यादित्यस्य प्रतिगृह्णीयादित्ययमर्थो भवति । भवेदपि सामर्थ्यात्, यदि तदाक्षेपमन्तरेण दानविधिर्नोपपद्येत । स तु लोभप्राप्तप्रतिग्रहबलेनोपपद्यमानो न शक्नोत्याक्षेप्तुम् । **न हि विधिशतेनापि तथा पुरुष प्रवर्तते यथा लोभेन ।** यद्यपि च समाप्तिश्चोद्यते, तथापि दातृव्यापार एवासौ परस्वत्वापादनं नाम । द्वौ हि तत्रापि व्यापारावेकः प्रतिग्रहीतुः स्वीकरणम्, अपरोदातुः तत्समर्थाचरणं समर्पणादिरूपम् । तन्मात्रमेव विधास्यते, नापरम् । तेन यथा सोमक्रये विधीयमानेऽर्थाल्लोभेन प्राप्तो विक्रयो न विधीयते । न च कर्माङ्गं भवेति । एवमिह प्रतिग्रहो न विधास्यते, नाप्यङ्गं भविष्यति । यदपीतिकर्तव्यताविधानं, तदर्थप्राप्तानुवादेनैव भविष्यति । यदा वृत्त्यर्थं दक्षिणां प्रतिगृह्णीयात्, तदित्थमित्थं चेति ।

### दानस्य तथात्वेऽपि न प्रतिग्रहस्य तथात्वमिति वैलक्षण्यम्

नन्वेवं सति प्रतिग्रहस्य पुरुषार्थत्वान्मत्रादीनांमपि पुरुषार्थत्वमेव प्राप्नोति। नैष दोषः। प्रकरणसामर्थ्यादेवमितिकर्तव्यताकप्रतिग्रहावसानं दानं क्रतोरुपकरोतीत्यध्यवसानात्। तेन प्रतिग्रहसम्बन्धेऽपि दानस्यैवेतिकर्तव्यता। तच्च विधिलक्षणमिति नेतव्यम्। तत्र चोदितेऽपि प्रतिग्रहे गवादीनां प्रतिषेधोऽपि नास्तीति न कश्चिदोषः। अश्वप्रतिग्रहस्य तु प्रतिसिद्धत्वाद्यो नाम प्रतिषेधमतिक्रम्य ग्रहीष्यति, तं परिक्रीय यजमान आर्त्विज्यं कारयिष्यति। यथा 'ब्रह्महाऽश्वमेधेन यजेत' इति। यो लोभात्पतितयाजनमङ्गीकृत्य याजयिष्यति, तदपेक्षं विधानम्। न तु तद्विधानान्यथानुपपत्त्या याजनमितरेषामपि विहितमिति कल्प्यते। तथेहाश्वप्रतिग्रहस्याविधानमिति द्रष्टव्यम्। अतश्च यथैव लोके दोषस्तथा वेदोऽपीति न तद्द्वारेण विशेषविषयत्वं गम्यते।

### अत्र विषये केषाञ्चित्पक्षस्य निरूपणम्

केचित्पुनराहुः। लौकिकपक्षे प्रतिग्रहीतुरिष्टिर्वैदिकत्वे तु कर्माङ्गत्वाद्दातुः। प्रतिग्रहश्चोभयत्रापि दोषवानविहितत्वात्प्रतिसिद्धत्वाच्च। दानं पुनर्वैदिकविहितमतो यथाभाष्यमेव परिहारः।

अथवोभयत्रापि दातुरिष्टिः। तत्र दानं लौकिकं प्रतिषिद्धम्। तथा च दक्षिणाधिकरणे वक्ष्यति। अश्वा उपकारकतरा भवेयुर्यदि तेषां दानप्रतिग्रहौ न प्रतिषिद्धौ स्यातामिति। विश्वजित्यपि सर्वस्वदाने प्रतिसिद्धत्वादश्वादीनामदानमिति वक्ष्यति। पौण्डरीकेऽश्वसहस्रमिति तु प्रत्यक्षोपदेशाज्ज्योतिष्टोमे चैकस्याश्वस्यावश्यं विधेयत्वात्सामान्यप्राप्तनिषेधबाधान्न दोषो विज्ञायते। तस्माद्य एव लोके भ्रान्त्या मित्रदायादिना वा ददाति तस्यैवेष्टिः, यो वा विक्रीणीते। विक्रयेऽपि हि स्वत्वपरित्यागपरस्वत्वापादानसद्भावात्सकलो ददात्यर्थो विद्यते। न ह्यदृष्टार्थमेव केवलं दानं विज्ञायते। दानत्वे दृष्टादृष्टफलकल्पनावसरात्। यद्यपि न तस्य विक्रयशब्दाभिधेयत्वं, तथाऽपि सामान्यविशेषसंज्ञयोः समावेशादविरोधः। तथा च लोके विक्रीय वक्तारो भवन्ति, अस्माभिर्धान्यं दत्तमिति। क्रीत्वा वदन्त्यस्माभिर्धान्यं गृहीतमिति। तस्मात्सोऽपि ददातिरिति निमित्तम्।

ननु च वासोऽश्वा भूमिरिति देयद्रव्यमध्याम्नानान्नश्वदानं दुष्येत्। यत्र तद्विहितं, तत्र नैष दोक्ष्यति। देयद्रव्यापि ह्येतानि स्मर्यन्ते, न तु दानमेव विधीयते। तत्र दानविधायिवाक्यापेक्षत्वाद्यत्राश्वो विहितस्तद्गतमेवेदं देयस्मरणम्। यानि तु गवादीनि सामान्यतोऽपि न प्रतिषिद्धानि। तानि दानमात्रचोदनायामपि भविष्यन्ति। तस्मान्न लौकिकोऽश्वप्रतिग्रहो निमित्तम्॥ २८॥

न्या० सु०—संस्कारान्वयाद् द्रव्यत्वसूत्रे भाष्यकृतोक्तत्वात्तद्व्याख्यानेऽस्य सूत्रस्य पौनरुक्त्यमाशङ्क्य न केवलमयागादित्वात्स्वभावाद्वा धारणपरिधानयोः संस्कारत्वं, किन्तु द्रव्य-

प्राधान्यनिर्द्देशादपीति हेत्वन्तरोक्तचर्थत्वेनापौनरुक्त्यमाह—**पूर्वमिति**। भाष्योपन्यस्ताप्ययागादिता स्वानभिमतत्वान्नोक्ता, युक्तत्वेऽपि द्वितीयोदाहरणव्यापकत्वादुपचयहेतुतोक्ता।

अन्येषां व्याख्यां भ्रान्तिमूलत्वेन दूषयितुं भ्रान्तिहेतुं तावदाह—**तत्रेति**। दूषयति—**कृत्येति**। संस्कारत्वसाधनद्वाराऽस्य हेतोः पूर्वपक्षप्रतिज्ञान्वयोक्त्यर्थं द्रव्यसंस्कारश्चेति भाष्यं व्याचष्टे—**तस्मादिति** ॥ २८ ॥

भा० प्र०—श्रुति में कहा गया है "वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति। यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणाच्चतुष्कपालान्निर्वपेत्" (तै० सं० २।३।१२) जो पुरुष अश्व को प्रतिग्राहित करता है, उसको वरुणदेव पकड़ लेता है अर्थात् जलोदर रोग होता है, जितने अश्वों का प्रतिग्रह ले वरुण देवता के उद्‌देश्य से चार कपालों में संस्कृत उतने पुरोडाश का निर्वाप = दान करे। इस वाक्य में अश्व के प्रतिग्रह के निमित्त इष्टि का विधान किया गया है। इस वाक्य में अश्व के प्रतिग्रह निमित्तक इष्टि का विधान किया गया है, यह अश्व प्रतिग्रह इष्टि है, वह लौकिक अश्वग्रहण में कर्तव्य है या वैदिक अश्व के ग्रहण में अनुष्ठेय होगा—यह संशय होता है।

कर्म विशेष में शास्त्र में जो अश्वदान करने का विधान है, वैसे स्थल में जो अश्वदान है—वह वैदिक अश्वदान है। शास्त्र में जहाँ विधि नहीं है, किन्तु कोई व्यक्ति अपनी इच्छा से प्रेरित होकर अश्व का दान करता है—वह लौकिक अश्वदान है।

अर्थात् लोक में याचना करके या विना याचना के ही अश्व को प्रतिग्रह रूप में प्राप्त करता है, वह लौकिक अश्व प्रतिग्रह है और पौण्डरीक कर्म में सहस्र अश्व की दक्षिणा होती है, इसी प्रकार ज्योतिष्टोम में अश्व का दान है—ये वैदिक अश्व प्रतिग्रह है।

प्रदर्शित संशय के उत्तर में पूर्वपक्ष के रूप में कहा गया है "इष्टिः लौकिके" यह अश्वप्रतिग्रहेष्टि लौकिक अश्वदान में ही कर्तव्य है, कारण, "दोषात्" अश्व के दान में दोष कहा गया है। क्योंकि, 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति" जो व्यक्ति अश्व का प्रतिग्राहित करता है अर्थात् दान करता है, उसको वरुण ग्रहण करता है, अर्थात् उसको जलोदर रोग ग्रस्त होता है। यह श्रुतिवाक्य व्यक्त करता है कि अश्वदान जलोदर रोग का कारण होने से दोषयुक्त है।

यदि यह कहा जाय कि वैदिक अश्वदान में भी यह दोष हो सकता है। इसके उत्तर के लिए कहा है "वैदिके न दोषः" वैदिक अश्वदान में दोष नहीं हो सकता है, कारण, "शास्त्रात्" क्योंकि वह शास्त्र-विहित है। जो शास्त्र से विहित रहता है, वह दोष का साधन नहीं हो सकता है, उससे किसी प्रकार का अनिष्ट नहीं हो सकता है—यह चोदना सूत्र में (मी० १।१।२) कहा गया है। इसीलिए यहाँ पर तन्त्रवार्तिक में श्रीमान् कुमारिलभट्ट ने कहा है—

"वैदिके विधिगम्यत्वान्न हि दोषः प्रतीयते"

वैदिक अश्वदान विधि से बोधित होने से उसमें दोष नहीं हो सकता है। अन्य पक्ष में "न केशरिणो ददाति" अश्वदान नहीं करना चाहिए, इस स्मृतिवाक्य में लौकिक अश्वदान निषिद्ध है, इसलिए लौकिक अश्वदान करने में ही यह प्रतिग्रहेष्टि कर्तव्य है।

"दोषात्" = अश्वदान में दोष कहने से, "तु" = प्रत्यवस्थान में, "इष्टिः" = वारुणेष्टि या अश्वप्रतिग्रहेष्टि, "लौकिके स्यात्" = लौकिकदान में अर्थात् स्वेच्छाप्रेरित दान में कर्तव्य होगा, "हि" = क्योंकि, "वैदिके न दोषः स्यात्" = वैदिक अर्थात् वेदविधिविहित दान में दोष नहीं हो सकता है, "शास्त्रात्" = कारण, वह शास्त्र से विहित रहता है ॥ पूर्वपक्ष ॥ २८ ॥

**अर्थवादो ऽवाऽनुपपातात्तस्माद्यज्ञे प्रतीयेत ॥ २९ ॥ सि०**

**शा० भा०—न चैतदस्ति, यदुक्तं, यः शूद्रादन्यस्माद्वा प्रापकृतो लोकेऽश्वं प्रतिगृह्णीयात्स एतामिष्टिं निर्वपेत्। स हि वरुणगृहीता इत्युच्यते, जलोदरेण यो गृहीतो, यस्योदरं जलवृद्ध्या श्वयति—जलोदरमित्येव लोके तत्प्रसिद्धम्। न च तस्याश्वप्रतिग्रहो लौकिको निदानमिति प्रतिज्ञायते। न चानेन विधीयते। तस्मान्नाश्वप्रतिग्रहाज्जलोदरोपपातः। अथ पापं वरुणशब्देनोच्यते, वृणीत इत्येषोऽभिप्राय इति, तदा प्रसिद्धौ त्यक्तायां क्लेशमात्रं वृण्वद्वरुणशब्देनोच्यते। तत्र याज्ञेऽपि प्रतिग्रहे वरुणगृहीतः स्यात्। रक्षणपोषणविचिकित्सादिना क्लेशेन नैष पक्षो व्यवतिष्ठेत। लौकिकेऽश्वप्रतिग्रहे इति प्रसिद्धश्च बाध्येत। तस्मार्थवाद एषः। यावद्वरुणगृहीतस्य वरुणन्मोचने श्रेयः, तावदेतेनेत्युपमानेनैषा स्तुतिः। योऽस्य प्रतिग्रहः, तद्वरुणग्रहणमिव, येष्टिस्सा तदुन्मोचनीव। यथा वरुणगृहीतेनोन्मोचनमवश्यकर्तव्यं तादृगेवैतदिति। तस्माद्यज्ञे प्रतीयेत। लौकिके हि फलं कल्पनीयम्। वैदिके यस्मिन्नश्वप्रतिग्रहः, तस्याङ्गभूता भविष्यति। तत्र प्रयोगवचनेन सहैकवाक्यतासंबन्धादवकल्प्यमाना परोक्षायाः फलवचनेन सहैकवाक्यताया लघीयसीति युक्तमिष्टिर्वैदिके दान इति ॥ २९ ॥ सिद्धान्तः ॥ इति दशमं वैदिकाश्वप्रतिग्रहे इष्टिकर्तव्यताधिकरणम् ॥ १० ॥**

त० वा०—यद्येषा दोषनिर्घातार्था भवेत्, ततो लौकिके कल्प्येत, न तु तदर्था। कुतः ?

अन्यतोऽवगते दोषे तन्निर्घातार्थतेष्यते।
यश्चात्र कीर्त्यते दोषो नासावस्तीति गम्यते॥

कर्मविधानवाक्ये यो दोषः श्रूयते, स निर्घात्यत्वेनावधार्यते। यश्चात्र दोष उपात्तो नासौ लौकिकस्य सत्यपि प्रतिषिद्धत्वे कुतश्चित्प्रमाणाद्गम्यते। जलोदरं ह्यत्र वरुणग्रहणरूपेणोपात्तम्। न च कस्यांचिद्वैद्यकसंहितायां लौकिकोऽश्वप्रतिग्रहो निदानं श्रूयते। नापि प्रत्यक्षानुमानादिभिर्गम्यते। न च वाक्ये 'न केसरिणो

ददाति' 'नोभयतोदतः प्रतिगृह्णाति' इति श्रूयते। नाप्येतस्य वाक्यस्य तत्प्रतिपत्तो व्यापारो, विद्यमानानुवादेन तत्र निर्धातार्थकर्मविधिमात्रपरत्वात्।

यस्तु दोषः प्रतिषेधवाक्यान्नरकपातात्मकः कल्पितः, स इह नोपात्तो 'वरुणो वा एतं गृह्णाती त्यनेनाभिधातुमशक्यत्वात् अथ पापमात्रं वृणोतीति वरुणस्तद्-गृह्णातीत्यवमभिधीयते। ततो या तावद्वरुणगृहीतशब्दस्य जलोदरविषया समुदाय-प्रसिद्धिः, सा परित्यक्ता। य त्ववयवप्रसिद्धिः सा वैदिकेऽपि त्यागे दुःखदर्शनात्। प्रतिग्रहे च रक्षणपोषणादिना क्लेशात्किंचिद्वरुणात्मकं विद्यत इत्येवं सम्भवतीति न शक्यं तद्द्वारेणेष्टेर्लौकिकविषयत्वमवधारयितुम् **रक्षणपोषणादिना क्लेशे-नेति**—प्रतिग्रहीतृव्यापारस्य निमित्तत्वेनानिवारितत्वादेवं ब्रवीति।

अथवा दातुरपि प्राक् परस्वत्वापादनादेष क्लेशोऽस्तीति गमयितव्यम्।

धर्मोऽपि च वृणोत्येव नरं संसारवर्तिनम्।
न हि केवलपापेन देहेनाऽऽच्छाद्यते नरः॥

तस्मादुभयथाऽपि लौकिकाश्वप्रतिग्रहणगतोऽयं दोषो न प्रसिध्यतीति मुख्यो-पपाताभावादर्थवादोऽयं विज्ञायते। तत्र पुरस्तादुपाख्यानोपात्तम्। 'प्रजापति-र्वरुणायाश्वमनयत्' इत्यर्थमिदानींतनेऽपि काले रूपकधर्मेणाऽध्यारोप्य प्रशंसति। यथैव प्रजापतिर्वरुणेन गृहीत आसीत्, तथाऽद्यत्वेऽप्यश्वप्रतिग्रहश्चेज्जातः, स एव वरुणग्रहणदोषो भवति। यथा च प्रजापतेर्वारुणीष्टिः तत उन्मोचन्यासीत्, तथाऽद्यत्वेऽप्यसावुन्मोचनी विज्ञायते। तस्माद्वरुणग्रहव्याधिगृहीतेनेव तेन तद्वि-मोचनायाऽवश्यं कर्तव्येष्टिरित्येतावानर्थो विवक्षितः। ततश्च वाक्योपात्तफला-भावादध्याहारेण वा स्वर्गः कल्पयितव्यः, कर्माङ्गभावो वा। तत्र स्वर्गसंनिधि-कारणाभावाद्वैदिकक्रियात्वसामान्येनाश्वप्रतिग्रहेण च संनिधापनोक्तक्रतुसंबन्धः सुकल्पः। वैदिको ह्यश्वप्रतिग्रहः कर्मान्तःपातीति, निमित्तत्वेन प्रतीयमानस्तद्देश-वार्तिकथंभावापन्नमङ्गीनमुपनयन्नुभयोः साकाङ्क्षत्वादङ्गाङ्गिसंबन्धं कल्पयति। तस्माद्यज्ञे प्रतीयेतेति सिद्धम्॥ २९॥

( इति दशमं वारुणेष्टेर्वैदिकाश्वदाननिमित्तताधिकरणम्। १०॥)

न्या० सु०—स्याद्वेति भाष्यं सिद्धान्तप्रतिज्ञार्थत्वेन फलेनेति सूत्रावयवव्याख्यार्थतया भासमानमाद्यसूत्रेणैव सिद्धान्तोक्तेः पुरुषार्थत्वे फलकल्पनापत्तिशङ्कानिरासार्थत्वेन चैतद-वयवव्याख्योपपत्तेरयुक्तमाशङ्क्य वाशब्देन कर्माङ्गत्वपूर्वपक्षे, येन कर्मणेत्सत् एषवैसप्तदशः प्रजापतिर्यज्ञे यज्ञेयन्वायत्तइत्यादिवद्वाच्यसंयोगस्य 'खादिरः स्रुवो भवती'त्यादिवत्कर्मा-व्यभिचारिणो लिङ्गस्य कर्माङ्गविधिप्रमाणस्याभावान्निरस्ते, फलककल्पनापत्तेः पुरुषार्थ-त्वायोगात्पारिशेष्यानुगृहीतो विधिरेव कर्माङ्गत्वे प्रमाणमित्याशङ्क्य, फलेनेत्यवयवेन फलकल्पनक्लेशाभावोक्त्यपुरुषार्थत्वस्योपपादयिष्यमाणत्वात्पारिशेष्यनिरासार्थतया फले-

वेत्यवयवेन पुरुषार्थत्वोपपादनाद्विधेरर्थः प्रयोजनं कर्मानङ्गत्वेपि स्यात्सम्भवेदित्येवं व्याख्यातुमाह — **कर्मेति** ।

वारुणीष्टिं प्रतिनिमित्तत्वोद्दिश्यमानस्याश्वदानस्य वैदिकत्वसामान्येन कर्माङ्गस्यैव निमित्तत्वावगमादित्यकर्माङ्गत्वे लिङ्गत्ववद्धिरण्यधारणस्यापि सुवर्णत्वं प्रति शेषित्वेनोद्देश्यमानस्य कर्माङ्गस्यैव शेषित्वावगमात्सुवर्णत्वस्य कर्माङ्गत्वलिङ्गत्वोपपत्तिमाशङ्क्य, परिगृह्णीयादित्यनेन विहितत्वोपलक्षणात्कर्माङ्गस्येव निमित्तत्वावगतिर्युक्ता भार्यमित्यस्य त्वविधायकत्वापत्तेरुपलक्षणत्वायोगाद्वैद्रिषम्योक्त्यै हिरण्येत्याद्युक्तम् । विशिष्टविधिपक्षे हिरण्यधारणानुवादेन सुवर्णत्वविधिपक्षे वा धर्माव्यभिचारिलिङ्गाभावात्कर्माङ्गत्वानवगमेऽपि संस्कारविधिपक्षे वासोहिरण्ययोः संस्कार्यत्वान्यथानुपपत्त्या कर्माङ्गत्वावगतेर्धारणपरिधानयोः कर्माङ्गत्वे लिङ्गत्वे भविष्यतीत्याशङ्क्याप्रकरणाधीतत्वेनाऽपूर्वसाधनलक्षणायोगाद्वासोहिरण्यस्वरूपसंस्कारापत्तेर्लिङ्गत्वानुपपत्तिः, आनर्थक्यापत्तिश्चाधिकेति परिहारसूचनार्थत्वेन सुवर्णस्येत्यादिनकर्माङ्गमित्यन्यन्ते भाष्यं व्याख्यातुमाह—**तेनेति** ।

लिङ्गभावपरामर्शिना तच्छब्देन श्रुत्यादीनां चेति भाष्यस्य लिङ्गाभावोक्त्यर्थत्वं सूचितम् । तस्मादितिभाष्यमैतिशायनो धारणं परिधानं च प्रधानं कर्म मेनइत्यन्तसूत्रावयवोक्तप्रधानकर्मत्वसम्भवोक्त्यर्थत्वेन फलेनेति सूत्रावयवव्याख्यार्थतया व्याख्यातुं प्रधानकर्मत्वं तावदुपपादयति—**तस्मादिति** ।

कर्माऽनङ्गस्य प्रधानकर्मणः प्रयोजनं विना विध्ययोगमाशङ्क्य, प्रयोजनाकाङ्क्षायां फलाश्रवणेऽपि भावनायाः स्वाक्षिप्तेन कर्त्रान्यथान्वयायोगात्सुवाससेत्यत्र बहुव्रीहिणैव पुरुषप्राधान्यावगमात्पुरुषापेक्षितेन फलेनान्वयोऽवगम्यतइत्येवं तावत्फलेनेति सूत्रावयवं स्वयं व्याचष्टे—**किमिति** । फलविशेषावगतिं विना सामान्यतोवगतस्यापि पुरुषार्थत्वस्यानिर्वाहात् शङ्कोत्तरत्वेनाप्येतमेव सूत्रावयवं पुरुषार्थत्वान्यथानुपपत्त्यैव फलविशेषान्वयः सुकल्प इत्येवं व्याख्यातुमाह—**नन्विति** । कर्मत्वसामान्येन हीत्यादिपूर्वपक्षवार्त्तिके क्रियात्मकत्वेन, वेदसंयोगसूत्रे च वेदमूलत्वेन प्रयोजनाकाङ्क्षायां कर्मोपस्थापनस्योक्तत्वात्पुरुषार्थकर्मद्वारापि च पुरुषार्थत्वोपपत्तेः साक्षात्पुरुषापेक्षितफलविशेषकल्पनायोगमाशङ्क्य, विश्वजिन्न्यायावगतस्य स्वर्गस्य, अर्थवादावगतस्य वा भ्रातृव्यदुवर्णत्वादेः स्वरूपेणाक्रियात्मकत्वेप्युत्पत्तिरूपेण क्रियाप्युक्तत्वात्, तेनैव च रूपेण फलत्वात्स्वर्गकामादिवाक्ये च वेदमूलत्वात्कर्मत्वसामान्यस्य वैदिकत्वसामान्यस्य च कर्मफले प्रत्युपपत्त्यापकत्वसाधारण्ये सति साक्षात्पुरुषार्थसम्भवे कर्मद्वारा पुरुषार्थकल्पनायोगात्कर्मोपस्थापननिवृत्तिरित्याह—**स्वर्गादिति** । तस्मादिति भाष्योक्तामार्थवादिकेन फलेनान्वयइत्येवमेतत्सूत्रावयवव्याख्यामनुसरति—**अपिचेति** । नन्वित्यादिभवतीत्यन्तं भाष्यं रात्रिसत्राधिकरणन्यायाशयेत्वेन व्याख्यातुमाह—**सत्यपि चेति** ।

चतुर्थे क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ।

इतिपूर्वपक्षसूत्रे विषयत्वेनोक्ते क्रतौप्रविविष्ठन्ति हवाद्यं एता रात्रीरुपयन्ततीत्याशर्थवादावगतमेव फलमात्रेयो मन्यते, तस्य क्रियया सह गुणगुणिसम्बन्धनिर्देशेन वलृप्तसामान्यसम्बन्धत्वादितिवक्ष्यतीत्यर्थः निर्देद्शादिति रात्रिसत्राधिकरणसिद्धान्तहेतोः प्रस्तुतोदाहरणयोर्योजनार्थमन्यस्माच्चेत्यादितादर्थ्याध्यवसानमित्यन्तं भाष्यं प्रत्यक्षपरोक्षोक्तिभ्यां क्लृप्तकल्प्यतोक्तेत्येवं व्याचष्टे—**तत्र हीति** ।

तस्मादिति सूत्रावयवव्याख्यार्थं तस्मादितिभाष्यं संयोगवदितिसूत्रावयस्य भाष्यव्याख्यानाद्यथा स्वर्गकामादिपदसंयोगे फलान्वयावगमः तथेहापि वाक्यशेषतां फलान्वयावगमात्प्रधानकर्मेतिशायनो मेनइत्येवमन्यथाव्याख्यापूर्वं व्याचष्टे—**तस्मादिति** । 'एतावताहैनसाऽयुक्तो भवती'ति पुरुषसंबद्धो दोषः कीर्त्यत इति प्रजापतिव्रताधिकरणभाष्ये दोषोक्त्या प्रजापतिव्रतानामकरणनिमित्तदोषपरिहारार्थत्वस्यैतावता कर्म्मणा कृतेन सता पापेनाऽयुक्तो भवतीति वाक्यशेषार्थाभ्युपगमनेन वक्ष्यमाणत्वात्सुवर्णधारणवासपरिधानयोः काम्यत्वशङ्कानिराससूचनार्था नोद्यन्तमादित्यमोक्षेतेत्यादिप्रजापतिव्रतविषयत्वेन संयोगदृष्टान्तोक्तिरित्यर्थान्तरन्यासेन सूचयितुमाह—**तथा चेति** ।।२९।।

इति षष्ठं सुवर्णधारणाधिकरणम् ।

भा० प्र०—इस प्रदर्शित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "अर्थवादो वा", अश्वदान में दोष का कथन अर्थवाद है, कारण, "अनुपपातात्" "वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति" इस श्रुतिवाक्य में कहा गया है, अश्वदान में वरुणग्रह अर्थात् जलोदर योग होता है। किन्तु, लौकिक अश्वदान में जो जलोदर रोग होता है, उसको किसी ने कभी देखा नहीं है। इसलिए कहा है कि वैदिक जो अश्वदान उसके फलस्वरूप अन्य जन्म में यह रोग उत्पन्न होता है। इसलिए, वैदिक जो अश्वदान अर्थात्, यज्ञादिकर्मों के दक्षिणा के रूप में जो अश्व का दान उपदिष्ट होता है, उसके बाद ही यह इष्टि कर्तव्य है। इसीलिए, सूत्र में कहा गया है कि "तस्माद् यज्ञे प्रतीयते" = यदि कहा जाय कि अर्थवाद के द्वारा वेदविहित कर्म की अनिष्ट-जनकता किस प्रकार से बोधित हो सकती हैं ? इसके समाधान में कहा जा सकता है कि, कुछ अनिष्ट होता है, इसीलिए, यह इष्टि कर्तव्य है—ऐसी बात नहीं है। किन्तु, इस स्थल में अर्थवाद वाक्य में सादृश्यमात्र विवक्षित है। विधिविहित होने से ही अश्वदान के बाद कथित इष्टि कर्तव्य है। वरुणगृहीत अर्थात् जलोदर रोगयुक्त व्यक्ति का जलोदर रोग के उपनयन में जैसा कल्याण होता है, यह, वारुण इष्टि करने पर अश्वदान करने वाले का भी वैसा ही कल्याण होता है, यह जो अश्वदान है, यह वरुण रोग-ग्रहण के समान है, इसीलिए, यह जो वारुण इष्टि है, यह भी जिससे उससे उद्धार करती है, वरुणगृहीत व्यक्ति के लिए जिस तरह उस रोग से उद्धार करने का उपाय कर्तव्य है, वैसे ही अश्वदान करने वाले के लिए भी यह इष्टि कर्तव्य है। इस प्रकार सादृश्य ही यहाँ विवक्षित है, यह सूत्र के

"अनुपपातात्" इसके द्वारा कहा गया है, इसीलिए वैदिक अश्वदान में ही यह इष्टि अनुष्ठानयोग्य है।

"अर्थवादः" = यह जो दोष श्रवण है, यह अर्थवाद है, "वा" = पूर्वपक्ष के निरसन के लिए है, "अनुपपातात्" = क्योंकि, अश्वदान में जलोदर रोग का उपपात अर्थात् आक्रमण नहीं देखा जाता है, "तस्मात्" = इसलिए, "यज्ञे प्रतीयते" = यज्ञ में अर्थात् यज्ञ सम्बन्धीय दान में यह वारुण इष्टि प्रतीत है अर्थात् कर्तव्य है। सिद्धान्त ॥ २९ ॥

[ कुतूहलवृत्ति में 'यज्ञे' के स्थान पर 'याज्ञे' पाठ है। पृ० ९०७ एवं ९०८ का युधिष्ठिर की व्याख्या तथा ९११–९१३ की व्याख्या। ]

इति दसवाँ वारुणेष्टिका वैदिकाश्वदाननिमित्तता अधिकरण।

## [११] अचोदितं च कर्मभेदात् ॥ ३० ॥ पू०

**शा० भा०—'यावतोऽश्वान्प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालानिर्वपेत्'। इति। तत्रैतत्समधिगतं, वैदिकेऽश्वप्रतिग्रहे इष्टिरिति। अथेदानीं संदिह्यते—किं प्रतिग्रहकर्त्रा कर्तव्या, यस्मै दीयते, उत हेतुकर्त्रा यो ददातीति। किं प्राप्तम् ? अचोदितं च कर्मभेदात्। न दानस्य कर्तुरिष्टिश्चोद्यते। प्रतिग्रहकर्तुस्तामवगच्छामः। 'यावतोऽश्वान्प्रतिगृह्णीयात्, तावतश्चतुष्कपालान्वारुणानिर्वपे'दिति। तस्मात्प्रतिग्रहीत्राऽऽर्त्विजा कर्तव्येति ॥ ३० ॥ पूर्वपक्षः ॥**

त० वा०—तत्रैवेदानीमिदं विचार्यते—किं प्रतीग्रहीतुरिष्टिः, उत दातुरिति। कथं पुनर्योऽश्वं प्रतिगृह्णातीति विस्पष्टे प्रतिग्रहीतृसम्बन्धे सति संदेहः ? उपक्रमे दातृप्रसिद्धेः। 'प्रजापतिर्वरुणायाश्वमनयत्' इति दर्शयिष्यामः। यदि तर्हि वाक्यशेषाद्दातुप्रतीयते, 'संदिग्धेषु वाक्यशेषात्' इत्यनेनैव गतार्थत्वादधिकरणं नाऽऽरब्धव्यम्। उच्यते।

संदिग्धं वाक्यशेषेण निर्णयमवधारितम्।
विध्युद्देशेन निर्णीते किं नु शेषः करिष्यति ॥

यत्र विध्युद्देशः संदिग्धः, तत्र वाक्यशेषान्निर्णयो न विरुध्यते। यत्र त्वसंदिग्धः तत्र तद्बलीयस्त्वाद्वाक्यशेषबाधेनैव भवितव्यम्। अत इह यद्यपि 'प्रजापतिर्वरुणायाश्वमनयत्' इति प्रजापतिर्दाता संकीर्तितो। वरुणः प्रतिग्रहीता। पुनश्च 'स स्वां देवताम्' इति प्रजापतिरेव समानविभक्त्यन्तः सामानाधिकरण्येनोपात्तः। स्वा च तस्य दे वता वरुणः, पूर्वं सम्प्रदानत्वेनोपात्तत्वात्। नाऽऽत्मा, कर्तृत्वसम्प्रदानत्वयोर्विरोधिनोरेकत्र कल्पनेऽन्यतरस्य गौणत्वापत्तेः। नापि प्रजापतेर्वरुणो दाता, विभक्तिव्यत्ययप्रसङ्गात्। तेन प्रजापतिरश्वं दत्त्वा, वरुणं प्राप्त इत्यर्थः। स तथाभूतः परिदीर्णः—उदरमस्य श्वयथुना विदीर्णम्। 'स एवं वारुणं चतुष्कपालमपश्यत्, तं निरवपत्' इति प्रजापतेरेव

तच्छब्देन परामर्शात्। तन्निरवपदिति च कर्तृत्वनिर्देशः, तस्यैवाऽवकल्पते, न वरुणस्य, सम्प्रदानत्वेन स्थितत्वात्। न वरुणस्याऽऽत्मोद्देशेन यागः सम्भवति। न ह्यात्मने संकल्प्यमानं त्यक्तं स्यात्। तेन प्रजापतिनाऽश्वं दत्त्वा वरुणाय, वरुणगृहीतेन वारुणेष्ट्या तदुन्मोचनमात्मनः कृतम्। अतोऽन्योऽपि दत्त्वैवं कुर्यादिति दातुरिति विज्ञायते।

किं च—

यज्ञाङ्गत्वाच्च तच्छेषाः प्रधानेनैककर्तृकाः।
प्रधानस्य च यः कर्ता स्वामी दाता स वाजिनाम्॥

तथाऽपि विध्युद्देशार्थवादयोर्विप्रतिपन्नार्थत्वात्, संदेहाभावेन 'संदिग्धेषु वाक्यशेषात्' इत्यनेनागच्छदन्यतरबाधेन व्यवधारणकल्पनयाऽन्यतरविषयं वाक्यमुपक्रमोपसंहारचिन्तया कथमपि क्लेशेन गमयितव्यमित्यारम्भे सति, किं तावत्प्राप्तम्? अर्थवादस्य विध्युद्देशाधीनप्रवृत्तेस्तच्छेषत्वाच्च, विनाऽऽनर्थक्यप्रसङ्गात्। विध्युद्देशस्य च तेन विनाऽपि स्वार्थसिद्धेः। यच्च विधीयते, तस्य स्तुतिः, यस्य स्तुतिर्न तस्य विधानं, विधिनैव स्तुत्यपेक्षायाः कृतत्वात्। तस्मात् 'अङ्गगुणविरोधे च तादर्थ्यात्' इत्यनेनैव न्यायेनार्थवादस्यासमञ्जसत्वं न्याय्यम्।

नित्यं चार्थवादानां प्रमाणान्तरावगतार्थविषयत्वम्। अतोऽपि तद्गतमेव लक्षणाश्रयणं युक्तं, न त्रिधिगतं, विधीनामन्येनात्यन्ताप्राप्तविषयत्वेन श्रुतान्यथात्वकल्पनस्याप्रमाणकत्वम्। यथा च 'ऊर्गुदुम्बरः' 'आदित्यो यूपः' इत्यादयोऽर्थवादा नीयन्ते, तथाऽयं न यास्यतीति को हेतुः। तस्माद्द्विस्पष्टाऽपि पुरस्तादर्थवादे दातृव्यापारस्तुतिः 'आपो वै शान्ता' इतिवत्संबन्धिद्वारेण प्रतिग्रहीतृविषयाऽवधारयितव्या। तेन दानप्रतिग्रहकर्मणोर्भेदात्प्रतिग्रहसंबन्धित्वेन श्रुतमेतत्कर्म दातुरचोदितमिति मन्यामहे। तुशब्दस्य स्थाने चशब्दः। किं चेह भवत इतिवद्गमयितव्यः। यजमानं वाऽस्थाः कर्तृत्वेनाचोदितं विजानोमः। तत्कर्म चेष्टेर्निमित्तत्त्वेनाचोदितमिति सूत्रार्थः॥ ३०॥

**अथ सप्तमं जयादीनां वैदिककर्माङ्गत्वमधिरणम्।**

न्या० सु०—प्रकरणाधीतानां द्वादशोपसत्त्वादीनामन्यत्र [नमनसाना] गमनचिन्तायां कृतायाम्, अन्यत्राधीतानां सुवर्णधारणादीनां तद्वैपरीत्ये तु बुद्धिस्थानां प्रकरणनिवेशानिवेशविचारे प्रसंगात्कृते तदनुप्रसंगेनास्याश्चिन्तायाः संगतिसूचनार्थतया शेषत्वं त्विति भाष्ये व्याख्यातुमाह—इहेति। धारणापरिधानयोः फलपरवाक्यशेषसमभिव्याहारलक्षणाद्वाक्यात्पुरुषार्थत्वे व्युत्पादिते, वाक्यावगतसिद्धिसाधनकर्मार्थत्वानां जयाहोमादीनां तद्वैपरीत्येन बुद्धिस्थानां सर्वर्द्धिसाधनकर्मार्थत्वं प्रधानसादेश्यसामर्थ्यलक्षणाद्वा लिङ्गादाहवनीयसाध्यर्द्धिसाधनकर्मार्थंतेति विशेषचिन्ता प्रसंगादवतरतीत्याशयः। यो प्रकरणाधीतो वाक्यात्कर्मशेषोऽवगतः, स विशेषाभावात्सर्वकर्मशेष इत्येवं पूर्वपक्षसूत्रव्याख्यार्थं कितात्रदिति

भाष्यं होमानामाहवनीयसाध्यत्वेनानाहवनीयसाध्येषु कर्मसु प्रधानसादेश्यासम्भवात्प्रधानसादेश्यसामर्थ्यलक्षणेन लिङ्गेन वाक्यं बाधित्वाऽऽहवनीयसाध्यकर्मार्थत्वावगतेरयुक्तमाशङ्क्य, अानाहवनीयसाध्यकर्मदेशे होमानुरोधेनाहवनीयनयनात्प्रधानसादेश्योपपत्तेर्लिङ्गाविरोधमुपपादयति—**पूर्वपक्षेति** । लिङ्गाविरोधेपि वैदिकत्वसामान्याद्वैदिककर्ममात्रार्थत्वावगतेर्न च कृष्यादीन्याहवनीये वर्त्तन्तइत्यादिसिद्धान्तभाष्यावगतकृष्यादिलौकिकर्मार्थपूर्वपक्षायोगशङ्कानिरासे वैदिकत्वसामान्यस्य सन्निधानापरपर्यायपञ्चमस्थानाख्यप्रमाणत्वाद्वाक्यविरोधे प्रामाण्यायोगाशयेनर्द्धिसाधनकर्मत्वाविशेषादित्यविशेषोक्त्या सूचिते, तथापि लौकिकानां दृष्टार्थत्वेनाऽदृष्टार्थाङ्गानाकाङ्क्षत्वाददृष्टोपकारजननसामर्थ्यलक्षणेन लिङ्गेनादृष्टार्थकर्ममात्राङ्गत्वावगतेर्वाक्यबाधमाशङ्क्य, दृष्टार्थानामपि विघ्नोपशमार्थं 'कृष्यादिनैव वैश्यो धनमर्जयेदि' त्याद्युपायनियमादृष्टार्थं वाऽदृष्टार्थाङ्गाकाङ्क्षोपपत्तेः 'रोहिण्यां कृपिकर्माणि कारयेत्पुरस्तात्कृषिकर्मणां प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिं हरेदित्यादिवदष्टार्थाङ्गग्रहणेऽपि लिङ्गाविरोधसूचनार्थमीत्सेदितिलिङ्गाविहितत्वेन कृष्याद्युपलक्षणं वक्तुमृद्धिमिच्छेदिति लिङन्तेनैव सन्नन्तःशब्दो व्याख्यातः । अङ्गगुणाविरोधन्यायेनाहवनीयत्यागशङ्का त्वाहवनीयसाध्येषु कर्मस्ववैगुण्यसम्भवे वैगुण्यापादकाङ्गत्यागायोगादयुक्तेति सूचयितुमाह—**तेनेति** ।

जयादिसंज्ञकानां होमानामफलत्वेनाङ्गानपेक्षत्वात्फलवत्स्वेव कर्मस्वाहवनीयविध्यवगतेराहवनीयत्यागोपपत्तिमाशङ्क्य, साक्षात्फलाभावेऽपि फलवत्कर्माङ्गत्वात्प्रयोजकत्वोपपत्त्याशयेन परिहरति—**न चेति** । अनाहिताग्नेरनाहवनीये जयादिहोमापत्तेराहिताग्निरप्यानाहवनीये जुहुयादित्याशङ्क्याग्निहोत्रादिवज्जयादीनामप्यनाहिताग्नेरभावादाहवनीयनैरपेक्ष्यानवगतेस्तत्त्यागायोगं ब्रुवन् पूर्वपक्षमुपसंहरति—**तेनेति** ।

लौकिकस्यापि कर्मणो नियमादृष्टायाऽदृष्टार्थाङ्गाकाङ्क्षोपपत्तिसूचनार्थं वर्णव्यवस्थया कृष्याद्यर्जनोपायनियमविधिं बुद्धिस्थीकर्तुं वर्णानुरूपोक्तिः । अनारभ्यवादसंकोचापत्त्या सिद्धान्तयोगमाह—**एवं चेति** । प्रकृत्यर्थत्वेनारभ्यवादानां संकोचो युक्तएवेत्याशङ्क्याह—**न चेति** । सर्वानारभ्यवादानां प्रकृत्यर्थत्वन्यायविषयत्वाभ्युपगमेऽपि विकृतिवर्जनहेतोः पौनरुक्त्यापत्तेः कृष्यादिष्वभावात्तद्वर्जनं न युक्तमित्याह—**कामं चेति** ॥ ३० ॥

भा० प्र०—पूर्व अधिकरण में विचारित वारुणेष्टि के विषय में कहा है कि यह अश्वदानकर्ता ही कर्तव्य है । प्रकृत में "यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेत्" इस पूर्व में कथित वाक्य को ग्रहण कर विचार किया जा सकता है कि क्या वह दाता के लिए अनुष्ठेय है या प्रतिग्रहीता के लिए कर्तव्य है । वारुणेष्टि दाता का कर्तव्य है या प्रतिग्रहीता का कर्तव्य है—यह संशय है ? इसमें पूर्वपक्षी का कहना है "अचोदितं च" यह दाता के कर्तव्य के रूप में उपदिष्ट नहीं होता है, कारण, "कर्मभेदात्" दान एवं प्रतिग्रह ये दोनों ही कर्म अत्यन्त भिन्न हैं । श्रुति में कहा है—"यावतोऽश्वान् प्रतिगृह्णीयात्" अर्थात् जितने अश्व का प्रतिग्रह अर्थात् ग्रहण करे । इस

स्थल में यदि दान अर्थ लिया जाय तो "प्रतिगृह्णीयात्" इस प्रत्यक्षपठितश्रुति को "प्रतिग्राहयेत्" इस प्रकार णिजन्त में परिणत करना पड़ेगा, ऐसी स्थिति श्रुति का अन्यथा करण होगा, किन्तु, यह सङ्गत नहीं है, अतः, उक्त वारुण इष्टि दाता का कर्तव्य नहीं है, वरन्, प्रतिग्रहीता का ही अनुष्ठेय है, अतः, जो व्यक्ति अश्वग्रहण करेगा, उसी को इष्टि करना होगा।

"अचोदितं" = दाता के पक्ष में चोदित अर्थात् विहित नहीं है, "च" = 'तु' शब्द का अर्थ कहने वाला अर्थात् प्रत्यवस्थानसूचक है, "कर्मभेदात्" = क्योंकि, दान एवं प्रतिग्रह कर्म भिन्न है ॥ ३० ॥

## सा लिङ्गादार्त्विजे स्यात् ॥ ३१ ॥ सि०

शा० भा०—नैषा प्रतिग्रहकर्तुः, किं तर्हि? हेतुकर्तुः स्यात्। कुतः? लिङ्गात्। किं लिङ्गम्। पूर्वपदानामुत्तरैः पदैर्यथार्थमभिसंबन्धः। इदं श्रूयते। प्रजापतिर्वरुणायाऽश्वमनयत्, इति प्रजापतिरश्वस्य दाता कीर्तितः। 'वरुणः प्रतिग्रहीता, स स्वां देवतामार्च्छत्' इति। स इति सापेक्षं पूर्वप्रकृतं वाक्यशेषमपेक्षते। स इति प्रजापतिं प्रतिनिर्दिशतीति तेन सहैकवाक्यतां याति। सामानाधिकरण्याच्च प्रजापतेरेव प्रतिनिर्देशोऽवकल्पते, न तु वरुणस्य, वैयधिकरण्यात्। स पर्यदीर्यत इत्येषोऽपि प्रजापतिमेव प्रतिनिर्दिशति पूर्वप्रकृतम्। तेन च सहैकवाक्यतां याति। 'स एवैतं वारुणं चतुष्कपालमपश्यत्', इति प्रजापतिरेवेति, 'तं निरवपत् प्रजापति'रेवेति, ततो वै स वरुणपाशादमुच्यत प्रजापतिः। 'वरुणो वा एतं गृह्णाति' इति हेत्वपदेशोऽयम्। यस्मादेव प्रजापतिर्वरुणायाश्वं दत्त्वा परिदीर्णः तस्माद्योऽश्वं प्रतिगृह्णाति प्रयच्छति। तं वरुणो गृह्णाति, 'स परिदीर्यत' इति। यतस्तु वारुणेन प्रतिमुक्तः तस्मादन्येनाप्यश्वं वारुणो निर्वप्तव्य इत्यश्वस्य दातुर्वारुणीष्टिः प्रशस्यते कर्तव्याऽनेनाऽऽख्यानेन। तस्मादश्वं दत्त्वा वारुणीमिष्टिं निर्वपेदिति।

आह। ननु योऽश्वं प्रतिगृह्णाति, स निर्वपेदित्युच्यते। एवं सति अन्यथोपक्रान्ते वाक्ये, अन्यथोपसंहृते उपक्रमोऽप्यनर्थकः स्यात्, उपसंहारोऽपि। तस्मादुपक्रमे वा शब्दार्थ उपसंहारवशेन कल्पनीयः, उपसंहारे वोपक्रमवशेन। तत्र प्रजापतिर्वरुणायाश्वमनयदिति, वरुणादश्वं प्रत्यगृह्णादित्युपसंहारानुरोधेन कल्प्येत। यद्वोपक्रमवशेनोपसंहारं, योऽश्वं प्रतिगृह्णातीति, योऽश्वं प्रतिग्राह्यतीति। तत्र 'मुख्यं वा पूर्वं चोदनाल्लोकवदि'ति प्रथममनुग्रहीतव्यं, विरोधाभावात्। पश्चात्तनं तु विरोधाल्लक्षणया कल्पनीयम्। अपि च प्रजापतिर्वरुणायाश्वमनयदिति वरुणादश्वं प्रत्यगृह्णादिति बह्वसमञ्जसं कल्पयितव्यम्। प्रतिगृह्णातीत्येष शब्दः प्रतिग्राहयतीत्येतमर्थं शक्नोति यया कयाचिच्छक्त्या

वक्तुम्। यो हि तदाचरति, येन च क्रिया प्रणाड्याऽपि सिध्यति, स तस्याः क्रियायाः कर्तेति शक्यते वदितुम्। यथा षड्भिर्हलैः कर्षतीति संविधानं कुर्वन्विलेखनमकुर्वन्नप्युच्यते। तत्समर्थमाचरतीति, एवमिहापि स प्रतिग्रहसमर्थमाचरति यो ददाति। तस्माद्ददत्, प्रतिगृह्णातीति शक्यते वदितुम्। तस्मादध्यवधार्येदमवक्लृप्तम्—ददत्प्रतिगृह्णातीत्युच्यते,। तस्य च वारुणीष्टिरिति ॥ ३१ ॥ सिद्धान्तः ॥ इत्येकादशं दातुर्वारुणीष्ट्यधिकरणम् ॥ ११ ॥

दातुरितिसिद्धान्तः

त० वा०—सा खल्विष्टिरार्त्विजे स्यात्। यजमाने स्यादित्यर्थः। स ह्यृत्विजामयमित्येवमार्त्विजोऽभिधीयते।

अथवा 'स्वामिसप्तदशाः कर्मसामान्यात्, इति यजमानस्यापि ब्रह्मादिवदृत्विक्त्वं वक्ष्यति। तेन शक्यं याजमानमपि प्रदानमार्त्विजमित्यभिधातुम्।

अथवा स्वापिकर्मार्त्विजयोः कतरस्मिन्स्यादिति संदिग्धे यत्र लिङ्गं सामर्थ्यात्मकमवकल्पते, तत्रेति सूत्रार्थः। कथं पुनर्यजमानव्यापारो निमित्तमिति लिङ्गेन गम्यते ? तदुच्यते।

सामर्थ्यं कर्मणस्तावदेकं लिङ्गं विवक्षितम्।
अपरं वाक्यसामर्थ्यं पौर्वापर्यनिरोक्षणात् ॥

पूर्वाधिकरणेनैवैतत्प्रतिपादितप्रायं, यदत्र दातुरिष्टिरिति। यदा ह्यश्वप्रतिग्रहवतः कर्मणोऽङ्गमेवेत्यवधारितं, तदाऽङ्गप्रधानानामेकदेशकालकर्तृकन्यायाद्य एव क्रतोः कर्ता, तेनैवेयमपि कर्तव्या। यश्च क्रतोः कर्ता स 'स्वामिकर्मपरिक्रयः' इत्येवमश्वस्य दाता। तस्मादसंदिग्धमेव दातुरिष्ट्या भवितव्यम्। एतद्ध्यङ्गस्य सामर्थ्यं यत्प्रधानेनैककर्तृकं सदुपकारं शक्नोति कर्तुं, न भिन्नकर्तृकम्। तेन प्रधानवदेवेतरैस्तस्यामप्यौर्त्विज्यं कर्तव्यं, न जायमानमिति। एवं सिद्धेऽपि, वाक्योपक्रमोपसंहारविरोधकृतभ्रान्तिसंशयव्युदासमात्रार्थमुत्तरमधिकरणमारब्धव्यम्। तस्यापि च वाक्यसम्बन्धोपक्रमोपसंहारस्येदृशमेव सामर्थ्यं यद्दातुर्विधत्ते। न ह्येतावदेव वाक्ये 'यावतोऽश्वान्प्रतिगृह्णीयात्तावतश्चतुष्कपालान्वारुणान्निर्वपेत्' इति। किं तर्हि। अन्योऽप्युपक्रमः 'प्रजापतिर्वरुणायाश्वमनयत्' इत्यादिरस्य विद्यते। स च दातुरिष्टिं प्रतिपादयतीत्युक्तम्।

नन्वेतदप्युक्तं विध्युद्देशबलीयस्त्वाद्बाध्यतेऽसाविति। नेतदस्ति। कुतः।

स्तुतिर्लब्धात्मकत्वेन विध्युद्देशेन बाध्यते।
प्रतिग्रहीतरित्यत्र विध्युद्देशो न कल्पितः ॥

यदि लब्धात्मकोऽत्र प्रतिग्रहीतृविषयो विध्युद्देशो भवेत्, ततो विचार एव न क्रियेत। न त्वसौ लब्धात्मकः। कुतः ?

परस्तादर्थवादेषु स्वतन्त्रो जायते ह्यसौ।
पुरस्तादर्थवादेषु तत्पूर्वा विधिकल्पना॥

**उपक्रमन्यायेनागतार्थत्वेनाधिकाशंकानिवर्तकत्वेनाधिकरणस्यावश्यकत्वम्**

सत्यपि प्रधानगुणभावे विध्यर्थवादानां पूर्वापरोच्चारणतृतोऽन्यो विशेषो भवति। सर्वत्रैव तावत् 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति च श्रुतिलिङ्गाधिकरणन्यायेन च पूर्वं विज्ञानमनुपजातप्रतिद्वन्द्वि द्वितीयविज्ञानान्तरानुत्पत्त्यवस्थत्वादाञ्जस्येनाऽऽत्मानं लभते। पश्चात्तनं तु पूर्वविज्ञानावरुद्धज्ञानविषय उपजायमानं सत्यां विरोधावस्थायां तदानुगण्यातिरिक्तेन रूपेणोत्पत्तुमेव न शक्नोतीति, अन्यथात्वमपि प्रतिपद्यते। तदिह विध्यर्थवादत्वकृतं विशेषं पूर्वपश्चाद्भावितयाऽनाश्रित्योपक्रमोपसंहारयोर्दातृप्रतिग्रहीतृविषयत्वेन विप्रतिपद्यमानार्थत्वात्तथा सति चैकवाक्यत्वासंभवात्पृथक्त्वे चोभयोरपि परस्परसंनिधिवशेनाकल्पितविध्यन्तरप्ररोचनान्तरशक्त्योः साकाङ्क्षत्वेनापरिपूर्णार्थयोरानर्थक्यप्रसङ्गादवश्यंभाव्येकवाक्यत्ववशेन समानविषयत्वे कल्प्यमानेऽनुपजातविरोधावस्थपूर्वावधारितदातृगामित्वपरित्यागासंभवादुत्तरमलब्धावस्थमेव प्रतिग्रहीतृज्ञानं गौणगृह्णातिकल्पनया दातृविषयत्वेनाध्यवसीयते।

किं च।

भूयसां च सधर्मत्वमस्मिन्पक्षे भविष्यति।
अन्यथा हि भवेत्पूर्वं सर्वमेवासमञ्जसम्॥

प्रजापतिर्वरुणादश्वं प्रत्यगृह्णात्स्वां देवतामपादानभूतां वरुणमेवेति बह्वसमञ्जसं स्यात्। मम तु गृह्णातिरेव कथंचित्प्रयोजकव्यापारे वर्तयितव्यः।

यत्तु विधिरर्थवादाद्बलवत्तर इति। सत्यम्। यो विधिः, स बलीयान् भवति। न तु प्रतिग्रहीतुरिष्टिरिति विधिः। सर्वत्र हि वाक्ये यत्पूर्वपदेरनवगतमपेक्षितं च तदुत्तरपदेभ्यः परिगृह्यते, नेतरत्प्रतीयमानमपि। तद्यथा 'सत्रादुदवसाय। इति क्त्वाप्रत्ययेनैवोत्तरस्यां क्रियायामुदवसानवदन्योन्यनिरपेक्षा बहवः कर्तारो अवधारिताः। उद्दिश्यमानत्वाच्चाविवक्षितसाहित्या इति। 'पृष्ठशमनीयेन यजेरन्' इत्यत्र सत्यप्युपादीयमानत्वे संहतबहुकर्तृप्रत्ययः पूर्वेणानपेक्षितत्वादविवक्षितो भविष्यति। एवमिह यावदेव 'प्रजापतिर्वरुणायाश्वमनयत्' इत्यर्थवादेन दातुर्वरुणनिर्मोचने हेतुत्वेनेष्टिः प्रशस्यमानाऽवगता तावदेव तस्य किमपि वक्तव्यमितीयमेवेष्टिर्विधास्यत इत्यवधार्यते। ततश्च पूर्वावधारितविधिविषयः पुरुषो विध्यनुमानाभिमुखस्तन्मात्रमेवोच्यमानं प्रार्थयते, नाधिकम्। तुल्या च विषयावबोधने विध्यर्थवादयोः शक्तिः। यत्त्वर्थवादस्य विधिशक्तिर्नास्ति, तावन्मात्रे विधायकात्गृह्यत एव, न तु तावता सर्वमेव तद्गतं विवक्ष्यतेऽनपेक्षितत्वात्।

अतो निमित्तार्थं लिङुच्चारणं धातुमन्तरेण न संभवतीति, यत्र ववचन धातौ प्रयोक्तव्ये दातृव्यापारार्थगृहीतो गृह्णातिः प्रयुक्त इति द्रष्टव्यम्। अन्यथा हि यस्मात्पुराकल्पे दातुरेवं वृत्तम्। तस्मादद्यत्वेऽपि प्रतिग्रहीतृभिरेवं कर्तव्यमित्यसंबद्धमेव वाक्यं स्यात्। तस्माद्विध्युद्देशेनैवेत्थं प्रवृत्तेन दाताऽऽश्रित इत्यविरोधः। तदेतत् 'श्रुतेर्जाताधिकारः स्यात्' इत्यत्र प्रपञ्चितम्।

## सूत्रभेदेन शंकोत्तरत्वेन व्याख्या

ननु च तेनैव गतत्वादिह नाऽऽरब्धव्यमेतत्? सत्यं, गतप्रायमेतत्। भाष्यान्तरजनितभ्रान्त्यपनयार्थं तु पुनरारम्भः। इतरथा हि शक्यमिदं सूत्रद्वयं पूर्वाधिकरणेऽपि व्याख्यातुम्। यो नामाऽऽलम्भनिवोपवल्लोकवेदयोरश्वप्रतिग्रहाविशेषादनेकान्ते सति न वियोगतः कर्माङ्गत्वं गम्यत इति मन्यमानो वदेत्, याज्ञेऽप्यचोदितमेतत्कर्मभेदे सति निर्णयकारणाभावादिति, तस्योत्तरे 'सा लिङ्गादार्त्विजे स्यात्' इति यदृत्विग्भ्योऽश्वदानं तत्र स्यात् वैदिकत्वयज्ञियत्वलिङ्गविशेषात्, निमित्तत्वोपयुक्तस्यापि लिङ एव लिङ्गत्वात्। वैदिको हि लिङ्गसंबद्धो दृष्टो न लौकिकः।

## सूत्रद्वयमेकीकृत्यव्याख्यानम्

अथवैतदेव चोद्यं विना सूत्रेण कृतत्वात्सूत्रद्वयमप्येकीकृत्य परिहारो वर्णनीयः। यस्मादचोदितं लौकिकं न तत्र निमित्तत्वेन वुद्धिरिति पूर्ववदेव योज्यम्। तत्रैतत्स्यादेकमिदं कर्म यथा वैदिकं सन्निमित्तं भवतीति, तथा लौकिकमपि संभवतीत्यत आह। नैतत्। कुतः। कर्मभेदात्। अस्ति किं चोदिताचोदितत्वकृतो देशादिभेदकृतकर्मव्यक्तिकृतोऽपि कर्मभेदो येन निमित्तव्यवस्था भविष्यति। प्रतिषिद्धत्वाच्च लौकिकस्याभाव एव वेदसिद्धान्तेन। अतो यस्यासंदिग्धः सद्भावः तस्यैव निमितत्त्वम्। न चावश्यमस्य निमित्तार्थं श्रवणं, संबन्धमात्रपर्यवसानात्। अतश्चाश्वदानस्यैवेयमितिकर्तव्यतेति प्रयोजनवत्त्वेन वैदिकं गमिष्यति। **तस्मान्नाचोदितेन संबन्ध इत्येवं संभवत्यपि व्याख्यामेऽर्थवशेनाधिकरणान्तकरणम्।** गृह्णातिशब्दश्च प्रयोजकक्रियायामदृष्टपूर्वो दृढां भ्रान्तिं कुर्वल्लक्षणावृत्त्या नेतव्यः। प्रयोजकव्यापारे प्रयोज्यवदुपचारात्।

अथवा हेतुकर्तर्यपि कर्तृत्वमस्ति। तत्र यदा हेतुत्वं विवक्ष्यते, तदा हेतुमद्व्यापारे विवक्षितेऽपि णिजुत्पद्यते। कर्तृत्वमात्रविवक्षायां विनैव णिचा योऽश्वप्रतिग्रहं यथाकथंचिन्निर्वर्तयति, स प्रतिगृह्णातीति शक्यते वक्तुम्। **यथा षड्भिर्हलैः कृषतीति** विलेखनवचनः सन्कृषिः षड्ढलोपादानसामर्थ्याद्विलेखितृविषयासंभवात्तत् प्रयोजकव्यापारे वर्तते। न हि हलषट्केनैकः कर्ता विलोलेखि शक्नोति। तेन षण्णामेव विलेखितॄणां यः संविधानेन प्रयोजकः, स तद्व्यापारेण कृषेरपि कर्ता भवतीत्येवमभिधीयते, तद्वदर्थवादवशेन वर्तमानो गृह्णाति, तत्

प्रयोजकव्यापारे वर्तिष्यते। विचित्रशक्तयो हि धातवः प्रयोज्यप्रयोजकोभयव्यापारवचनत्वेन भावार्थाधिकरणे दर्शिताः। तेषां सहकारिकारणसंनिधानात् कदाचित्काचित्प्रसिद्धिव्यतिरेकेणापि शक्तिरभिव्यज्यते। तस्माद्ददात्यर्थे प्रतिगृह्णातिशब्दः प्रयुक्त इति, दातुरिष्टिः।

### अत्रविषये केषांञ्चिद्विचारस्यायुक्तत्ववर्णनाम्

एवं स्थिते केचिच्चोदयन्ति। यथा किल मैत्रायणीयानां 'स एषोऽश्व प्रतिगृह्यते' इत्येकरूपोपक्रमोपसंहारविधिना विस्पष्टमेव प्रतिग्रहीतुरिष्टिरिति गम्यते। तत्र च वदन्ति न्यायेन तावद्वयं बलीयांसो यदि तु वचनान्तरेण जीयामहे किं क्रियतामिति। स तु निष्कारणस्त्रास इति पश्यामः। कथम्?

प्रतिग्रहीतरि स्पष्टं यदि वाक्यान्तरं ततः।
भवेत्तस्यापि तेनेष्टिर्दातुस्तु न निवार्यते॥

यथोदाहृतेन तावत्तैत्तिरीयशाखावाक्येन दातुरिष्टिः सिद्धा। सा न न्यायान्तरेणापनीयते, न वचनान्तरेण। यद्यपि प्रतिषेधवचनं स्यात्, तथाऽपि विहितप्रतिषिद्धत्वाद्विकल्पो भवेत्, न स्वीकृतन्यायव्युदासः। यत्तु प्रतिग्रहीतुर्विधायकं तद्यदि तावत्कर्माङ्गत्वशेन विनाऽप्युपक्रमविशेषात्पूर्ववाक्यार्थानुसार्येव भवति, ततस्तेनापि दातुरेव। अथ तु स्वातन्त्र्यात्प्रतिगृह्णातिवशात्प्रतिग्रहीतुः ततः पूर्ववाक्याच्च दन्तुरित्युभो करिष्यतस्तत्प्रतिग्रहीतृगता च कर्माङ्गत्वभावात्पुरुषार्था सती लौकिकेऽपि स्यात्।

यस्तु 'आर्त्विजे स्यात्' इत्येतत्सूत्रपरः सन्पूर्ववाक्येनापि प्रतिग्रहीतुरेव वदति, तेन तत्कर्तृकायाः कर्माङ्गत्वाभावादृत्विजामितरेषां च पुरुषार्थफलकल्पनातुल्यत्वेन लौकिकेऽपि प्राप्तौ सत्यां केन प्रमाणेन 'तस्माद्यज्ञे प्रतीयेत' इत्यतदभिधीयत इति वक्तव्यम्। तस्मादनेन तावद्दातुरिति सिद्धम्॥ ३१॥

इत्येकादशमश्वप्रतिग्रहेष्ट्यधिकरणम्॥ ११॥

न्या० सु०—यस्मादेते जयादयो होमाः तस्मादाहवनीयसंयोगमालोक्य व्यवतिष्ठेरन्नित्येवं ल्यब्लोपपञ्चम्याश्रयणेनाहवनीयसाध्यकर्माङ्गत्वसिद्धान्तोक्त्यर्थत्वेन पूर्वपक्षव्यावृत्त्यर्थं तुशब्दव्याख्यापूर्वं सूत्रव्याख्यार्थं नचेत्यादिभाष्यं व्याचष्टे—व्यवतिष्ठेरंस्त्विति। वाक्यात्सर्वकर्माङ्गतया गम्यमानानां कुतः प्रमाणाद्व्यवस्थेति प्रश्नपूर्वं प्रधानसादेश्यसामर्थ्यंलक्षणं लिङ्गव्यवस्थाप्रमाणमाह—कुतइति। कृष्यादौ भूम्यादेर्विहितत्वेनार्थप्राप्तत्वेप्यनङ्गत्वात्प्रयोगवचनग्रहणानुपपत्तेः प्रयोगवचनाधीनाङ्गप्रधानैकदेशत्वात्सिद्धिमाशङ्क्य प्रयोगाङ्गभूतदेशानपेक्षप्रयोगविध्ययोगादवश्यापेक्षितस्य देशादेर्दृष्टार्थत्वादविहितस्यापि लिङ्गेनाङ्गत्वावगतेर्द्रव्यार्जनोपायनियमार्थं कृष्यादिप्रयोगवाक्यग्रहणोपपत्तेः कृष्यादावप्यङ्गप्रधानैदेकशत्वात्सिद्धिसूचनार्था नित्योक्तिः।

उत्तरार्द्धं तावद्व्याचष्टे—**कर्षणमिति** । आहवनीयत्यागेन पराभिमतपूर्वपक्षनिरासाय आहवनीये जुहुयादिति पूर्वपक्षवार्त्तिकेऽङ्गगुणविरोधन्यायेनाहवनीयत्यागशङ्कानिरासाया- विहितेत्युक्तम् । विदेशस्याप्यवभृथादेः प्रधानोपकारसामर्थ्यसद्भावेन प्रधानसादेश्यस्योपकार- सामर्थ्यापादकत्वनिमित्तसामर्थ्यरूपत्वाभावाल्लिङ्गत्वानुपपत्तेर्व्यवस्थाप्रमाणत्वायोगशङ्काम- प्स्ववभृथेन चरन्तीत्यादिवदिह वैदेश्यविध्यभावाद्बर्हिर्लवनादिवच्च संस्कारकर्मत्वाभावेन संस्कार्यद्रव्यदेशत्वावगतिर्नैराकाङ्क्षयाहेतुकप्रधानदेशाग्रहणायोगाद्विधिं विना वैदेश्यस्य वैगुण्यजनकत्वापत्तेः सादेश्यस्योपकारसामर्थ्यापादकत्वनिमित्तसामर्थ्यरूपत्वाल्लिङ्गत्वोप- पत्तिसूचनेन निरस्यन्पूर्वार्द्धं व्यतिरेकमुखेन व्याचष्टे—**तत्रेति** ।

जयादेः कृष्याद्यङ्गत्वविध्यन्यथानुपपत्त्या वैदेश्याभ्यनुज्ञानावगतेः प्रधानसादेश्याख्य- गुणाभावेन वैगुण्ये सत्यपि प्रधानोपकाराख्यफलदातृत्वावगमात्सादेश्यस्योपकारसामर्थ्या- पादकत्वनिमित्ता सामर्थ्यरूपता न युक्तेत्याशङ्क्य, जयादीनां वैगुण्यानापादकाग्निहोत्रादि- विषयान्तरसम्भवे वैगुण्यापादककृष्यादिविषय विध्यभावावगतेर्वैदेश्याभ्यनुज्ञाकल्पकार्थापत्त्य- भावात्सादेश्यं विनोपकाराख्यफलदातृत्वकल्पनायोगेन परिहरति—**अस्ति चेति** । अतः सामर्थ्याभावेनानाहिताग्न्यादिविषयत्वनिवृत्तिवत्कृष्यादिविषयत्वनिवृत्तिरपि युक्तेत्युपसंह- रति—**अतइति** । आहवनीयस्य कृष्यादिदेशनयनेन जयादेः प्रधानसादेश्योपपत्ति पूर्वपक्षो- क्तामनुभाषते—**नन्विति** । आहवनीयदेशे विलेखने सत्यायतनाद्बहिः पातेनाहवनीयनाशा- पत्तेस्तद्देशे विलेखनाख्यकर्षणायोगाद्विलेखनं कृत्वा तद्देशाहवनीयनिक्षेपे तु विलेखनदेशानां विदारणाख्यानां भेदात्प्रतिविदारणमावृत्त्यापत्तेः सकृद्धोमस्य विहितस्याशक्यत्वापत्तिः आवृत्त्यभ्युपगमेऽपि विदारणाख्यविलेखनदेशाश्रिताहवनीयदेशत्वमात्रसिद्धेः कृष्यादिदेशाहव- नीयनयनेपि सादेश्यासिद्धिरिति परिहरति—**नेति** । होमोक्तिविशेषणार्थत्वशङ्कानिरासार्थं हेत्वर्थत्वेन व्याचष्टे—**होमास्त्विति** ॥ ३१ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष का खण्डन करते हुए सिद्धान्ती का कहना है कि "सा आर्त्विजे स्यात्" यह जो वारुणेष्टि है, वह प्रतिग्रहकारी ऋत्विज का प्रेरक जो यजमान अर्थात् यागकर्ता का ही अनुष्ठेय है, कारण, "लिङ्गात्" उपक्रम वाक्य की ज्ञापकता के अनुसार यही निश्चित होता है। यह जो वारुण इष्टि विधायक वाक्य है "यावतोऽश्वान् प्रतिगृह्णीयात्" इत्यादि के उपक्रम में अर्थात् प्रारम्भ में श्रुति में यह पढ़ा गया है—"प्रजापतिर्वरुणाश्वमानयत् स स्वां देवतामार्च्छत् । स पर्यदीर्यत । स एतं वारुणं चतुष्कपालमपश्यत् । तं निरवपत् । ततो वै वरुणपाशादमुच्यत् ।" प्रजापति ने वरुण को अश्वदान कर जलोदर रोगप्रद वरुण देवता को पाया था, अर्थात् जलोदर- रोगग्रस्त हुआ था, बाद में वारुण इष्टि कर रोगमुक्त हुए थे, एवं उन्होंने यह यज्ञ किया था, इस स्थल में श्रुति में कहा गया है, अश्वदानकर्ता ही रोगग्रस्त होता है, अतः, इस उपक्रम वाक्य की ज्ञापकता से अश्वदानकर्ता की वारुणेष्टि कर्तव्य होने से निश्चित होता है, क्योंकि, उपक्रम और उपसंहार का विरोध होनेपर उपक्रम के अविरुद्ध ही

उपसंहार करना चाहिए, कारण, उपक्रम असञ्जात विरोधी एवं उपजीव्य होने से प्रबल है, यह पूर्व में वेद के उपक्रम अधिकरण में (मी० द० ३।३।१, अधिकरण १–८ सूत्र) कहा गया है। इसीलिए "प्रतिगृह्णीयात्" इस पद को "प्रतिग्राहयेत्" इस प्रकार णिजन्त करके ही इस स्थल में दानार्थ में व्याख्या करनी होगी।

"सा" = यह वारुणेष्टि, "आर्त्विजे स्यात्" = आर्त्विज अर्थात् ऋत्विज का प्रेरक जो यजमान उसका ही कर्तव्य होगा, "लिङ्गात्" = लिङ्ग के अनुसार अर्थात् उपक्रम वाक्य की ज्ञापकता के अनुसार ॥ सिद्धान्त ॥ ३१ ॥

## [१२] पानव्यापच्च तद्वत् ॥ ३२ ॥ पू०

**शा० भा०—इदं समामनन्ति, 'सोमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिन इति। तत्र संदेहः—लौकिकस्य सोमपानस्य वमने सोमेन्द्रश्चरुः, उत वैदिकस्येति। किं लौकिकं सोमपानम्? किं च वैदिकम्? उच्यते। वैदिकं सोमपानं ज्योतिष्टोमे, तद्विकृतिषु च। लौकिकं सोमपानं यत्सप्तरात्रेषु, दशरात्रेषु च धातुसाम्यार्थमासेव्यमाने सोमे। किं तावत्प्राप्तम्? पानव्यापच्च तद्वत्। लौकिके वमने, इष्टिर्भवितुमर्हति, न वैदिके। तद्वदिति पूर्वः पक्षः प्रतिनिर्दिष्टः। यथा तत्र दोषसंयोगेन श्रवणाल्लौकिकेऽश्वप्रतिग्रहः इत्युक्तम्। एवमिहापि दोषसंयोगेन श्रवणं भवति 'इन्द्रियेण वा एष वीर्येण व्यृध्यते, यः सोमं वमिति इति, लोके धातुसाम्यार्थमासेविते वमनेन विनष्टे धातुसाम्यव्यापदा, इन्द्रियेण व्यृद्धिरुपपद्यते। शास्त्राद्धि वैदिके न दोषः स्यात्। तत्र, शेषः पातव्य इति शब्दाच्चोदिते निर्वृत्ते नास्ति दोषः। यद्यपि वम्यते, तथाऽपि पानक्रिया तत्र निर्वर्तिता, कृतो वचनार्थ इति न दोषः स्यात्। तस्माल्लौकिकस्य सोमपानस्य व्यापदि सोमेन्द्रः स्यात् ॥ ३२ ॥ पूर्व० ॥**

त० वा०—अयमप्यनारभ्यवाद एव 'सोमेन्द्रं चरुं निर्वपेद्यः सोमं वमिति' (मै० सं० ३-२-१३) इति। तत्रापि पूर्ववदेवाधिकरणद्वयमपि विचार्यते। लौकिकसोमपाने रसायनाद्यर्थं कृते वमनेन व्यापन्ने सोमेन्द्रयोगे उत वैदिके, उतोभयत्रापि। तत्र तद्वदित्यनेन सामान्यपक्षो 'दोषात्त्विष्टिर्लौकिके स्यात्' इत्ययं चातिदिश्यते।

अथवाऽधिकरणद्वयमपि सिद्धान्तरूपेणाऽधिकरणद्वयेऽप्यतिदिश्यते केनचिद्विशेषेण पूर्वपक्षरचना। तत्रेह तावद्वैदिकेन पानेन द्रव्यप्रतिपादनस्य कृतत्वान्न कदाचिद् भ्रेषे पुनःप्रतिसमाधानापेक्षाऽस्तीत्यनर्थकमिष्टिविधानम्। लौकिके तु वमनेन व्यापन्ने रसायनगुणाभावादिन्द्रियेण वीर्येण च व्यृद्धिः सम्भाव्यते। न जलोदरवदत्यन्तासम्भावना। तत्संयोगे च श्रूयमाणेष्टिस्तत्समाध्यर्थैव विज्ञायते। तस्मात्तत्र स्यादिति ॥ ३२ ॥

न्या० सु०—इतश्चेत्यादिभाष्यं समाख्यानुग्रहादपि वैदिकानामेव जयादिशेष इत्येवं सूत्रयोजनार्थत्वेनाभासमानं वैदिकानामेवेत्यध्याहारापत्तेः समाख्यानाच्चेति चकारोत्कर्षापत्तेश्चायुक्तमाशङ्क्य, तात्पर्यमात्रोक्त्यर्थत्वेन व्याचष्टे—**इतश्चेति** । व्यतिरेकमुखेन सूत्रतात्पर्योक्त्यर्थं कर्षणादिष्विति भाष्यं कृष्यादिष्वध्वर्योरभावेन तद्द्वारा जयादिष्वभावादृत्विगुपादानार्थयोश्च वरणभरणयोर्जयाद्यर्थत्वेनानुपदेशादृत्विहोमत्वेन चापूर्वत्वादतिदेशतोप्यप्रासेर्जयाद्यर्थवरणाद्यभ्युपगमे च कर्षणादिस्वभावेनाङ्गप्रधानयोः कर्तृभेदापत्तेस्तत्परिहारायाध्वर्योर्जयादिस्वप्यभावादित्येवं व्याचष्टे—**कृष्यादीनां त्विति** । मधुपर्कापेक्षया वरणादीनामिति बहुवचनम् ।

सूत्रयोजना कीदृशीत्यपेक्षायां द्वेधा योजयन्ति—**तेनेति** । समाख्यानायाध्वर्युणा जयादिकार्यमिति जयादिविधिवाक्यस्य शेषोविगतः सोऽपि व्यवस्थायामनुगृह्येतेत्याद्या योजना । समाख्यानाद्योऽध्वर्युर्जयादिशेषोवगतइतिद्वितीया ॥ ३२ ॥

इति न वमं जयादीनां वैदिककर्माङ्गत्वाधिकरणम् ।

भा० प्र०—श्रुति में कहा गया है "सोमेन्द्र चरुं निर्वपच्छ्यामाकं सोमवामिनः" सोमवानी व्यक्ति सोम एवं इन्द्र देवता के उद्देश्य से श्यामाकनिष्पन्न चरु का निर्वाप करे। यह जो 'सोमवामिचरु' जो व्यक्ति सोम का पान कर उसको वमन कर देता है। उसका यह कर्तव्य जो चरु का निर्वाप है, यह क्या लौकिक सोमवनन में कर्तव्य है या वैदिक सोमवमन में अनुष्ठेय है—यही संशय है। रसायन आदि के रूप में लोक में सोम का सेवन करते हैं, यह विधि से बोधित नहीं है, अतः, वैदिक नहीं है, वरन् लौकिक है, ज्योतिष्टोमादि में भी सोमपान करना है—यह वेदविहित होने से वैदिक है।

इस प्रकार के सन्देह में पूर्वपक्षी का कहना है कि "पानव्यापत् च तद्वत्" यह जो पानविपत्तिनिमित्तक प्रायश्चित्त रूप सोमेन्द्रचरु निर्वाप, यह भी "तद्वत्" उसका मत अर्थात् पूर्व अधिकरण = अश्व प्रतिग्रह इष्टि अधिकरण का पूर्वपक्ष के समान। यह वैदिक एवं लोकिक दोनों वमनों को ही कर्तव्य माना है। क्योंकि वैदिक वमन ही कर्तव्य है ऐसा कोई भी नियामक नहीं है। अथवा यह वैदिक वमन में कर्त्तव्य नहीं है, किन्तु लौकिक वमन में ही अनुष्ठेय है। क्योंकि, लौकिक वमन में दोष कहा गया है। "इन्द्रियेण वा एष वीर्येण व्यृध्यते, य सोमं वमति" जो व्यक्ति इन्द्रिय एवं वीर्यवियुक्त होता है जो सोमवमन करे, इस प्रकार दृष्ट दोष का किया गया है। अतएव, अश्वदान में दोषश्रुति होने से तन्निमित्तक जो वारुणेष्टि वह जैसे वहाँ पूर्वपक्षी के मत में लौकिक दान में ही कर्त्तव्य है वैसे ही इस स्थल में भी सोमवादिचरु का विधान घरने से वह भी लौकिक वमन में भी करणीय है।

"पानव्यापं च" = पानव्यात् अर्थात् सोमपान कर जो विपत्ति अर्थात् वमन वह भी, "तद्वत्" = उसी के समान अर्थात् अश्व प्रतिग्रह इष्टि का पूर्वपक्ष के समान लौकिक सोमपान वमन में ही कर्त्तव्य है। पूर्वपक्ष ॥ ३२ ॥

**दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यात् ॥ ३३ ॥ सि०**

शा० भा०—वैदिकस्य पानस्य व्यापदि भवितुमर्हति, न लौकिकस्य। कस्मात्? दोषसंबन्धोऽत्र श्रूयते। इन्द्रियेण वा एष वीर्येण व्यृध्यते इति। लौकिके पुनर्धातुसाम्याद्यर्थं क्रियमाणे न किंचिद्दुष्यति, वमनायैव हि ते पिबन्ति लोके। अथाप्ययमर्थवादः तथाऽपि फलकल्पनापरीहाराय वैदिके एवेति कल्पना न्याय्या ॥ ३३ ॥ सिद्धान्तः ॥

इति द्वादशं वैदिकपानव्यापदि सोमेन्द्रचरुविधानाधिकरणम् ॥ १२ ॥

त० वा०—तैरेव वैदिकत्वसामान्यादिभिर्वैदिके भवतीति कस्मान्नोच्यते। न हि वमने वैदिकत्वं सम्भवति, अचोदितत्वात्। अत य एव दोषो लौकिकगामित्वे हेतुः। स एवेह वैदिकविषयत्वे स्यात्। तद्या हि।

सम्यग्जरणरूपान्ता प्रतिपत्तिर्विधीयते।
तद्व्यापदि प्रधानस्य न भवेत्पूर्ववत्फलम् ॥

न च तावल्लौकिकपानव्यापदि दोषोऽस्ति। वमनार्थमेव पानात्। अथापि भवति, तथाऽपि वैद्यकेनैव तस्य प्रतिसमाधानमिति न वैदिकोपायापेक्षा। वैदिके तु पाने सम्यग्जरणपाठाज्जरणान्ता प्रतिपत्तिरवधारिता। सा च वमनेन व्यापद्यते। ततश्च प्रधानफलवैगुण्याशङ्कायां तत्समाधानार्थेष्टिर्विज्ञायते।

अथ त्वयं फलार्थवादः ततः सुतरां फलकल्पनाभयाल्लौकिककान्निवृत्तिर्गम्यते। वैदिके तु वचनेन पानं प्रत्यायितम्। तेन क्रतुस्यस्येतिरङ्गमिति सुकरः सम्बन्धः ॥ ३३ ॥

इति द्वादशं वमनाधिकरणम् ॥ १२ ॥

**अथ दशमं वारुणेष्टेर्वैदिकाश्वदाननिमित्तताधिकरणम्।**

न्या० सु०—लौकिकवैदिकनिमित्तचिन्तायाः क्रतुपुरुषार्थत्वचिन्ताफलत्वाल्लक्षणप्रकरणसंगत्योः संभवेऽपि [[1]सर्वा]सर्वकर्माङ्गत्वचिन्तात्वाभावादनन्तराधिकरणासंगतिमाशङ्क्य प्रासंगिकत्वेन संगतिमाह—**लौकिकेति**। निमित्तस्मृतसम्यभावादश्वदानस्य निमित्तत्वासिद्धेर्विशेषविचारायोगमाशङ्क्य, यावच्छब्देनान्यतः प्राप्तया संख्यया विधेयेष्टिसंख्योपलक्षणभूतया दानान्वयिनामश्वानां विशेष्यत्वावगतेस्तेषां चानियतसंख्यत्वाद्यावन्त्यश्वदानानि तावन्तीरिष्टीः कुर्यादिति वाक्यार्थापत्तेर्निमित्तत्वाभावे चाश्वदानानामिष्टीः प्रति शेषित्वेप्येकदेशकालकर्तृत्वात्तन्त्रेणोपकारसिद्धेरसंख्ययेष्टिसंख्योपलक्षणायोगप्रसंगान्निमित्तत्वसिद्धिमाह—**तत्रेति**।

अथ वोभयत्रापि दातुरिष्टिरिति वार्तिकदानस्यैव निमित्तत्वमङ्गीकृत्य पूर्वपक्षसिद्धान्तपक्षयोर्वक्ष्यमाणत्वाद्दोषवान्योऽश्वप्रतिग्रहइत्येतदन्ताः प्रतिग्रहोक्तयोदानलक्षणार्थाः। वैदि-

---

१. सर्वा इत्यधिकः मुद्रित पुस्तके

काश्वदाननिमित्तपक्षे कथंचिद् बुद्धिस्थक्रत्वसंभवेनात्यन्ताबुद्धिस्थस्वर्गकल्पनापादकपुरुषार्थत्वायोगात्, लौकिकपक्षे क्रतुस्वर्गयोरत्यन्ताबुद्धिस्थत्वसाम्येऽपि, साक्षात्समीहितत्वे स्वर्गस्यैव कल्प्यत्वात्क्रत्वर्थानुपपत्तेर्वैरूप्यभयेनाश्वदानमात्रनिमित्तपक्षभाष्यकृतोपेक्षितमपि मन्दाया अपि शङ्काया निराकार्यत्वात्सौत्रेण चतुश्शब्देन निरासोपपत्तेर्निराकर्तुं त्रेधा संदेहमाह—तदिति। कः पुनरिति प्रश्नभाष्यं विवक्षितदानविषयत्वे स्पष्टभेदत्वादयुक्तमाशङ्क्य, यथाश्रुतप्रतिग्रहविषयत्वेनोपपादयितुमाह—कः पुनरिति। लोक इत्युत्तरभाष्यं व्याचष्टे—इतरइति।

स्वमतेनाविशेषपक्षनिरासार्थत्वेन तुशब्दं व्याख्यातुं तदुपन्यासपूर्वं सौत्रपूर्वपक्षं गृह्णाति—किमिति। भाष्यमनुसंदधानो लौकिके हि फलं कल्प्यमिति सिद्धान्तभाष्येवक्ष्यमाणस्यापि हेतोरुपलक्षणार्थत्वेन व्याचष्टे—भाष्येति। आद्ये हेतुं विवृणोति—नैमित्तिकं हीति। द्वितीयं विवृणोति—फलं चेति। इतीत्यादिभाष्यं सिद्धान्तनिरासार्थत्वेन तुशब्दव्याख्यापूर्वं पूर्वपक्षसूत्रव्याख्यार्थत्वेन व्याचष्टे—इतीति।

दोषो हीति भास्येणेष्टिनिर्घात्यो दोषः श्रूयत इत्यध्याहारेणेष्टेदोषनिर्घातार्थत्वादित्येवं-दोषादितिसूत्रावयवं व्याख्याय, वमनेष्टिवद्दोषनिर्घातार्थत्वेऽपि वैदिकनिमित्तकत्वाविरोधमाशङ्कानिरासार्थत्वेनापि लौकिक एव दोषसद्भावादित्येवमावृत्त्यायमेवावयवः सचेत्यादिभाष्येण व्याख्यात इति सूचयन् सूत्रशेषं प्रतिज्ञोपपादनार्थत्वेन व्याचष्टे—कुत इति। जलोदराख्यवरुणात्मकस्य दोषस्यानुपलब्धिविरोधमाशङ्क्य, वृणोतीति व्युत्पत्त्या पापवाचित्वेन वरुणशब्दं व्याचक्षणो निषेधाभावेनानपेक्षितदोषोक्तौ तात्पर्यायोगाच्छास्त्रस्म दोषसद्भावे प्रमाण्यानुपपत्तेः प्रत्यक्षादिना च दोषानवगतेः पापस्याप्ययोगमाशङ्क्य, निमित्तव्यवस्थासिद्ध्यै दोषोक्तौ तात्पर्योपपत्तिं सूचयितुमाह—वरुणोवा इति। दोषोक्तेर्लौकिकविषयत्वाज्ज्ञानान्निमित्तव्यवस्थापकत्वायोगशङ्कानिरासार्थं सचायमिति भाष्यं प्राप्त्यभावेनानुवादायोगादयुक्तमाशङ्क्य 'न केसरिणो ददाती'तिनिषेधाद्दोषप्राप्तिसूचनेनोपपादयितुमाह—तदपि चेति। अनुवादत्वोक्तेर्व्यवस्थाद्योतनप्रयोजनमाह—यदि हीति। विधेयत्वायोगेनानुवादतामुपपादयितुमाह—नन्विति। फलत्वात्पापस्याविधेयत्वेपि तत्र कर्मविधिर्णविष्यतीत्याशङ्क्याह—न चेति।

वाक्यान्तरनिषिद्धस्याश्वदानस्य फलापेक्षायामज्ञातफलज्ञापनाख्योऽयं विधिर्भविष्यतीत्याशङ्क्य दूरस्थस्य निषेधस्येहाबुद्धिस्थत्वान्न फलापेक्षास्तीत्याशयेन परिहरति—नचेहीति। न केवलमभिधेयत्वादनपेक्षितत्वाच्च पापग्रहणं न विधीयते, किंतु निमित्तनैमित्तिकान्वयमात्रे तत्कीर्त्तनापेक्षयादपीत्याह—निमित्तेति। दोषस्याप्रत्यक्षत्वेन क्वेति ज्ञातुमशक्यत्वाद्यत्र दोषः तत्रानुवादः इत्ययुक्तमाशङ्क्य, दोषनिषेधयोरत्यन्ताविनाभावाद्यत्र निषेधः तत्र दोषइत्याध्याहारेण पूरयितुमाह—तस्मादिति। स च दोषो लौकिके भवतीति कृत्वा तत्रैवोपपद्यतेऽनुवादइत्यविधानार्थं सचालौकिक इत्यदि, भाष्यं स च निषेधो लौकिकः, अतस्तत्रैव दोषो भवतीत्यध्याहारेण पूरयितुमाह—सचेति।

दाननिषेधमात्रस्योपन्यसनीयत्वेऽपि प्रतिग्रहविषयत्वेऽपि पूर्वपक्षोपपत्तिसूचनार्थं विश्वजित्प्रकरणे समाम्नानात्तत्प्रकरणाम्नातसर्वस्वदानवाक्यशेषत्वे पर्युदासत्वोपपत्तेरस्य लौकिकाश्वदाननिषेधत्वायोगमाशङ्क्य, गुणवाक्यानामन्योन्यान्वयायोगाल्लौकिकदानविषयत्वेनापि न केसरिवाक्योपपत्तेर्वरणाय यजामहनिषेधवाक्यवद्विषयप्राप्त्यै गुणवाक्यानपेक्षणात्केसरिवाक्यस्य सर्वस्वदानवाक्यशेषत्वानुपपत्तेः धर्मत्वभ्रान्त्यादिनिमित्तप्राप्ताश्वदाननिषेधाच्च विकल्पानापत्तेः पर्युदासत्वायोगात् लौकिकस्य प्रतिषेध इत्यनेनैव सूचितमसंभवत्पर्युदासप्रतिग्रहनिषेधवाक्यसाहचर्येण द्रढयितुं वाक्यद्वयोपन्यासः। एतदन्तेन ग्रन्थेन श्लोकस्य द्वितीयं पादं व्याख्याय शङ्कोत्तरत्वेनोत्तरार्द्धं व्याख्यातुमाह—**न त्विति**।

दोषसंयोगादिति भाष्यमितिकरणस्यापकर्षं कृत्वा हेत्वर्थत्वमिति परामर्शत्वं च तन्त्रेणाङ्गीकृत्य दोषानुवादस्य लौकिकविषयत्वाद्धेतेरिष्टिदोषसंयुक्तत्वाल्लौकिक एव गम्यत इत्येवं व्याख्यातुमाह—**अतश्चेति**। आहेति शङ्काभाष्यं व्याचष्टे—**ननु चेति**। उच्यत इत्यादिपरिहारभाष्यं व्याचष्टे-**उच्यत इति**। दोष निर्घातः कार्योऽस्या इति बहुव्रीह्यर्थः।

श्लोकं व्याचष्टे—**तर्हीति**। पुरुषानोपयिकत्वेन दोषस्वरूपस्य कर्मणाऽनपेक्षिततया स्वरूपेण दोषस्य फलत्वायोगात्स्वनिर्घातं पुरुषोपयिकत्वाद्विध्यन्वयार्हमन्यतोपेक्ष्यमाणस्यापनेयत्वरूपेण विधेयेष्ट्याकर्मान्वयोक्त्येष्टेर्दोषनिघातार्थत्वेन समर्थितेऽपि, दानसामान्यस्य निमित्तत्वेन ग्रहणाद्वैदिकेपि निर्दोषे प्राप्ताया इष्टेर्दोषनिर्घातार्थत्वायोगक्रत्वर्थत्वस्याप्यापत्तेः सामर्थ्यात् लौकिकविषयनियमायोगमाशङ्क्यैकेन दोषनिर्घातेन प्रयोजनेन कर्मणोऽनैराकाङ्क्षे सति क्रतूपकाराख्यं प्रयोजनान्तरं न शक्यं कल्पयितुमित्युक्तम्। वरुणप्रमोचनोक्तेर्दोषार्थत्ववाचित्वसूचनार्थं व्याख्यातेर्थे भाष्यं योजयति—**एतदिति**। सचेतिभाष्योक्तं लौकिकस्य दातृदोषेण दुष्टतां भवेदिति भाष्योक्तां च वैदिकस्य निमित्तस्य दानात्मकत्वेनादुष्टतां लौकिकवैदिकनिमित्तसाम्येन दूषयितुमाह—**यस्त्विति**। लौकिकेश्वप्रतिग्रहे भवतीति यदुक्तं तद्वैदिकेप्यविशिष्टमिति सूचनार्थं पुनश्चेत्युक्तम्। भाष्यस्थं हेतुकर्तृशब्दं व्याख्यातुं दातुरित्युक्तम्। एतदेव विवृणोति—**तथा हीति**। वैदिकस्य दानरूपत्वेनादुष्टतायाः साम्योक्त्यर्थं पूर्वार्द्धं व्याचष्टे—**यदीति**। 'अयाज्ययाजनादेव दोषो नाश्वप्रतिग्रहाद्वैदिकं भृतित्वादश्वप्रतिग्रहस्येति दुप्टीकोक्त्या युक्तं वैदिकं प्रतिग्रहनिमित्तपापायोगमाशङ्क्य, अप्रतिग्राह्यमनङ्गीकार्यं याजनं यस्य तस्माद्याजनं प्रतिगृह्णतोऽङ्गीकुर्वतः पापमयाज्ययाजननिमित्तमस्तीति योश्वमयाज्याद्भृत्तिरूपेण गृह्णात्येनं वरुणपापमयाज्ययाजननिमित्त गृह्णातीति अर्थं मत्वा भाष्यकृतोक्तमिति सूचनायायाज्ययाजननिमित्तोक्तिः। दोषरहितं यद्दानं तन्निमित्तं यद्युच्येतेत्यर्थः। लौकिकेपि दोषरहितं यद्दानं तदेव निमित्तमित्युक्ते दानस्यानिषेधोऽपि प्रतिग्रहीतुर्दोषोत्पादकत्वान्निषिद्धे प्रतिग्रहे प्रयोजकहेतुत्वाद्वा ब्रह्महत्यादिप्रयोजकव्यापारवद् दुष्टत्वं भविष्यतीत्याशङ्क्, लौकिकस्यापि दानस्य विहितत्वेन वैषम्यसूचनार्थं दातुर्व्यापारस्य प्रतिग्रहीतृदोषद्वारेणादुष्टत्वादित्युक्तम्। लौकिकस्य प्रतिग्रहस्य दातृदोषेण दुष्टतायाः साम्योक्त्यर्थमुत्तरार्द्धं व्याचष्टे—**अथेति**। वैदिकनिमित्तपक्षे तदुस्था-

पितकर्माङ्गत्वावगतेरङ्गप्रधानैककर्तृकत्वसिद्धचैदातुरिष्टयवगमान्निर्दोषनिमित्ते लौकिकपक्षे कर्माङ्गत्वानवगतेर्वाक्यस्वरसभङ्गहेत्वभावेन प्रतिग्रहीतुरेवेष्टयवगमाद्दोषवदित्याशङ्कां सुवर्णधारणवद्वैदिकत्वसामान्यस्य स्थानाख्यसन्निधिरूपतया वाक्येन बाधात्कल्पनागौरवापत्तेश्चात्यन्तानुपस्थितक्रतूपकारार्थत्वकल्पनायामपि साम्याद्दातृकर्तृत्वावगतिं विना वैदिकनिमित्तकत्वावगमात् दातृकर्तृकत्वावगत्यभ्युपगमेऽन्योन्याश्रयापत्तेर्विशेषावगतिहेतुभूतोपपत्त्यभावेनोपन्यासपूर्वं निरस्यति—**अथ वैदिक इति**।

अस्मिंश्च वाक्ये दातृदोषहेतुकदोषाप्रतीतेर्वाक्यान्तरस्य च शूद्रादिप्रयोगाच्छूद्रादिप्रतिग्रहनिषेधेनुवाद्यस्य प्रतिग्रहस्य प्रतिग्रहाद्युपायनियमविधिविरोधापत्तेर्निर्विशेषणस्य निषेधायोगाच्छूद्रादिविशेषणभ्युपगमेपि तेनैव नैराकाङ्क्षयादश्वेन विशेषणानुपपत्तेः साम्याभावेप्येतद्भाष्यद्वयमुक्तमित्याह—**किं चेति**। उत्तरार्द्धं व्याचष्टे—**न हीति**। दूषणमुपसंहरति—**तेनेति**। दातृदोषेण दुष्टतोक्तिं यथा कथंचित्समादधानो द्वितीयभाष्याक्षेपाभ्युपगमेनाऽद्यभाष्याक्षेपं परमतेन लौकिकवैदिकप्रतिग्रहवैषम्योक्त्या परिहरति—**तत्रेति**।

प्रतिग्रहस्य विध्यभावात् प्रतिप्रसवायोगशङ्कामुपन्यासपूर्वं दानविधिनार्थात् प्रतिग्रहस्याक्षेपः साक्षादेव मा विधिरिति द्वेधा परिहरति—**तत्रैतदिति**। दानसमाप्तिरूपस्य परस्वत्वापादनस्य, परस्मैसमर्पणं विना परस्वत्वानापत्तेः समर्पणाख्यदातृव्यापारात्मकत्ववत्परेण स्वीकरणमपि विना परस्वत्वानापत्तेः स्वीकरणाख्यप्रतिग्रहीतृव्यापारात्मकत्वस्यापि भावात्परस्वत्वापादनविधिना स्वीकरणाख्यप्रतिग्रहविधिरित्याशयः। अदृष्टार्थेति कर्त्तव्यतायुक्तत्वकर्मसाद्‌गुण्यार्थत्वाभ्यामपि प्रतिग्रहस्य विधेयताऽवसीयतइत्याह—**अपि चेति**।

क इदं कस्मा अदादित्यादिमन्त्रवत्त्वादग्नीध्रेग्रे ददातीत्यादिक्रमविशेषप्राङ्मुखत्वादिनियमयुक्तत्वाद्वा दृष्टार्थेति कर्त्तव्यतापेक्षावगतेः कर्ममध्ये क्रियमाणत्वाऽऽकर्माङ्गदक्षिणादानसङ्गतत्वेन च लोभप्राप्तयूपशाकटादिप्रतिग्रहवैषम्यात्कर्मसाड्गुण्यार्थत्वावगतेः कथं विधिना न विषयीक्रियत इत्यर्थः। मन्त्रवदिति ह्रस्वपाठे मन्त्रवद्यथा भवति, तथा क्रियमाण इति क्रियाविशेषणत्वान्नपुंसकत्वम्। श्लोकं व्याचष्टे—**यदीति**। लौकिकवैदिकयोः प्रतिग्रह्योः सदोषनिर्दोषत्ववैषम्योक्त्या परोक्तं परिहारं वैदिकस्यापि प्रतिग्रहस्य सदोषत्वोपपादनेन दूषयति—**अत्रेति**। श्लोकं व्याचष्टे—**न हीति**। प्रतिग्रहीतृव्यापारस्यापि परस्वत्वापादनरूपत्वेन दानसमाप्तित्वाद्दानविधिविधेयत्वं परोक्तं प्रतिग्रहीतृव्यापारस्यात्मसत्वापादकत्वात्परस्वत्वापादकत्वायोगेन निरस्यति—**यद्यपि चेति**। विक्रयी त्वन्यः कर्मणोचोदितत्वादिति सूत्रवक्ष्यमाणविक्रयविध्ययोगदृष्टान्तेन प्रतिग्रहविध्ययोगं द्रढयितुमाह—**तेनेति**। कर्मसाड्गुण्यार्थत्वस्य विधेयत्वहेतोः कर्ममध्ये कर्माङ्गक्रयसंगतस्यापि क्रियमाणस्य विक्रयकर्मसाद्‌गुण्यार्थत्वादर्शनादसिद्धत्वोक्त्यै दृष्टान्तदार्ष्टान्तिकयोः कर्मानङ्गतोक्ता। अदृष्टार्थेति कर्त्तव्यताविधानस्यान्यथाप्युपपत्तेर्हेतुत्वं निरस्यति—**यद्यपीति**।

पुरुषार्थप्रतिग्रहानुवादेनेतिकर्त्तव्यताविधावितिकर्त्तव्यतायाः प्रकरणगम्यक्रत्वर्थत्वबाधापत्तिं शङ्कते—नन्विति । इज्यार्थयोर्दधिपयसोः प्रणीता कार्यश्रपणानङ्गत्वेऽपि श्रपणोपकारित्वात्तद्गतानां प्रणीताधर्माणां श्रपणाङ्गत्वोपपत्तिवत्प्रतिग्रहस्य क्रत्वनङ्गत्वेपि क्रतूपकारित्वात् प्रतिग्रहेविकर्त्तव्यतायाः क्रत्वङ्गत्वोपपत्त्याशयेन परिहरति—नैषइति । प्रतिग्रहस्य साक्षात् क्रतूपकारित्वायोगाद्दानद्वारा क्रतूपकारित्वोक्त्यै तदवसानत्वं दानस्योक्तम् । दधिपयसोः श्रपणापूर्वसिद्धचर्थत्वान्निरङ्गयोश्चापूर्वसाधनत्वायोगाच्छ्रपणापूर्वसाधनीभूतदधिपयोर्थतया चोदकेन प्रणीताधर्माणां विधानाच्छ्रपणाङ्गत्वं युक्तं, प्रतिग्रहस्य त्ववैधत्वेनापूर्वसिद्धचर्थत्वायोगात्तदितिकर्त्तव्यतायां क्रत्वपूर्वसाधनीभूतप्रतिग्रहार्थतया विध्यनुपपत्तेः क्रत्वङ्गत्वायोगमाशङ्क्यार्त्विजेष्वपि पदार्थेषु यमनानस्यैव विधिना नियोज्यत्वात् क्रत्वपूर्वसिद्धचै दक्षिणां ददद् वृत्त्यर्थदक्षिणां प्रतिगृह्णन्तमृत्विजमानमयेत्तदिच्छमिक्षुं चानुतिष्ठन्तमिति विध्यर्थप्रतीतेः प्रतिग्रहसमानकर्तृकत्वलक्षणेन सम्बन्धेनेतिकर्त्तव्यताया प्रतिग्रहान्वयेपि क्रत्वपूर्वसाधनीभूतदानार्थत्वेन विधानात् क्रत्वङ्गत्वोपपत्तिं सूचयितुमाह—तेनेति । प्रतिग्रहस्यावैधत्वेनापूर्वानौपयिकत्वाददृष्टार्थेतिकर्त्तव्यतानपेक्षत्वमवैधत्वोक्त्यार्थादुक्तम् । तेनेत्यनेन परामृष्टम् इत्यनेन वैधदानेतिकर्त्तव्यतात्वेन प्रकारेण प्रतिग्रहस्यापूर्वानौपयिकत्वेनादृष्टार्थेतिकर्तव्यतानपेक्षत्येपीतिकर्त्तव्यताविधानं नेतव्यं गमयितव्यमुपपादनीयमित्यर्थः । गवादिप्रतिग्रहस्यापि तर्ह्यविहितत्वेन क्रत्वर्थपदार्थपरिमाणबाधाख्यदोषापादकत्वादकार्यत्वापत्तिरित्याशङ्क्या, अविहितस्यापि विहितदानाख्यपदार्थसिद्धचै प्रयोगविधिनाऽनुमतत्वान्न पदार्थपरिमाणबाधापत्त्याख्यो दोषः । नरकापत्त्याख्यस्तु दोषो निषेधाभावादनाशङ्क्यएवेत्याह— तत्रेति । दानस्य विधिलक्षणत्वे सति दानाङ्गत्वेनाचोदितेपि प्रतिग्रहे विहिते दानेसाध्ये तत्सिद्धचै प्रयोगविधिना प्रतिग्रहस्यानुमतत्वान्न तत्करणे पदार्थपरिमाणबाधापत्त्याख्यो दोष इत्युक्तेश्च, प्रतिग्रहोपि तर्हि विहितदानसिद्धचै प्रयोगविधिनानुमतत्वेन पदार्थपरिमाणबाधानापादनापादकत्वाददुष्टः स्यादित्याशङ्क्यैतद्दोषाभावेपि नरकापादकत्वाद्दुष्टत्वं सूचयितुं गवादीनां प्रतिग्रहे निषेधाभावान्नरकाख्यो दोषो नास्तीति कश्चिच्छब्देनोक्तम् । चोदितेपीति पाठे दानमात्रेपि चोदित इत्येवं प्रतिग्रहस्याचोदितताक्ता । अश्वप्रतिग्रहस्यापि तर्हि प्रयोगविधिनानुमतत्वादकरणे क्रतुवैगुण्यापत्तेः करणे च निषिद्धत्वान्नरकापत्तेः सङ्कटं स्यादित्याशङ्क्याह—अश्वेति । दृष्टान्तेनैतदेव द्रढयितुमाह—यथेति । परकीयपरिहारदूषणमुपसंहरति—अतश्चेति ।

मतान्तरेणाक्षेपद्वयमपि परिहरति—केचित्पुनरिति । वैदिकत्वे निमित्तस्य तदुपस्थापितकर्माङ्गत्वात्प्रधानसमानकर्तृकत्वावगतेर्दक्षिणादातुश्च प्रधानकर्तृत्वाद्दातुरिष्टिलौकिकत्वे त्वनुपस्थापितकर्माङ्गप्रमाणाभावेन वाक्यस्वरसावगतप्रतिग्रहीतृकत्वबाधकप्रधानसमानकर्तृकत्वावगत्यभावात् प्रतिग्रहीतुरिति द्वितीयभाष्याक्षेपपरिहारः, प्रतिग्रहस्योभयत्रापि भवेदेवमिति परोक्तानुज्ञार्थभाष्यावयवालोचनया भाष्यकृतोपि निषेधाद्विध्यभावेन च निषेधस्य विकल्पार्थत्वायोगान्नित्यवर्जनार्थत्वावगतैर्दोषवत्तां च विना नित्यवर्जनायोगा-

द्दोषवत्तयाभिप्रेतत्वावगमात्, तद्वैदिके त्वश्वप्रतिग्रह इति भाष्यस्थस्य तु प्रतिग्रहशब्दस्य वचनेन तस्य कर्त्तव्यताऽवगम्यतइति भाष्ये वैदिकस्य विहितत्वोक्तेः प्रतिग्रहस्य च वैदिककर्मान्वयाद्वैदिकस्यापि विध्ययोगाल्लक्षणया दानार्थत्वावगमात् लौकिकेश्वप्रतिग्रह इत्यादिभाष्येण लौकिकवैदिकयोः प्रतिग्रहयोः सदोषनिर्दोषत्ववैषम्यानुक्तेः साम्यापादनेनाक्षेपो न युक्त इत्याद्यभाष्याक्षेपपरिहारः।

वैदिकेन कर्मान्वयिना निमित्तेन कर्मोपस्थापनसम्भवेपि दात्रर्थप्रधाने कर्मोपकारानाकाङ्क्षिण प्रतिग्रहीतुस्तदर्थायामिष्टौ विधिना नियोक्तुमशक्यत्वाद्दातृकर्तृकत्वं विना कर्माङ्गत्वासिद्धेस्ततएवदातृकर्तृत्वकल्पनेन्योन्याश्रयप्रसङ्गादस्यापि परिहारस्यानुपपत्तेः स्वमतेन लौकिके वैदिके वा निमित्तेदातुरिष्टिरुत्तराधिकरणन्यायेन भाष्यकृतोक्ता न तु वैदिकत्वाशयेनेत्येवं द्वितीयभाष्याक्षेपं परिहरति—**अथवेति**। दानस्य लौकिकस्याप्यदृष्टार्थत्वेन विधिस्पृष्टत्वान्निषेधानुपपत्तेर्न केसरिणो ददातीत्यस्याश्वव्यतिरिक्तरासभादिकेसरिविषयत्वेनाप्युपपत्तेर्दोषवत्त्वोपपत्तिमयुक्तामाशङ्क्याधर्मे धर्मत्वभ्रान्त्याश्वदानप्रवृत्तिवारणायाऽश्वस्यापि दाननिषेधोपपत्तेर्निषेधस्याश्वव्यतिरिक्तविषयत्वकल्पनायोगाद्दानमेव लौकिकं निषिद्धत्वाद्दोषवत्तयोक्तमित्याह—**तत्रेति**। अश्वदाननिषेधस्य भाष्यकृत्सम्मतिं दशमाधिकरणभाष्यपाठेनाह—**तथा चेति**। गौश्चाश्वश्चेत्यादिना द्रव्याणि निर्दिश्य तस्य द्वादशशतं दक्षिणेति श्रुता संख्या महोपकारहेतुत्वाद्गवामेवेति सिद्धान्तिते, अश्वानां गोभ्योपि बहुमूल्यत्वेनोपकारकतरत्वात्तेषामेव संख्या प्रसज्येतेत्याशङ्क्य, अश्वानां दाननिषेधेन प्रत्यवायापादकत्वान्नोपकारकतासतीति भाष्यार्थः। अकार्यत्वाच्च ततः पुनर्विशेषः स्यादिति षष्ठाधिकरणो विश्वजित्प्रकरणाम्नातस्याप्यश्वदाननिषेधस्यासम्भवत्क्रत्वर्थत्वप्रतिग्रहनिषेधसाहचर्याद्धर्मत्वभ्रान्त्यादिना चावैधेप्यश्वदाने निषेधोपपत्तेर्विध्यधीनात्मलाभत्वाभावात्सामान्यविधिना सह विकल्पायोगं मत्वाऽश्वानां दानमकार्यमेष हि विशेषोश्वानामन्येभ्यो द्रव्येभ्यो यदेषां दानं निषिध्यत इति भाष्येणाश्वानां निषिद्धत्वादवक्ष्यतीत्याह—**विश्वजित्यपीति**। तत्रत्यभाष्येऽश्वशब्दस्य केसरिमात्रोपलक्षणार्थत्वसूचनायादिशब्दः। पौण्डरीकादौ तर्ह्यश्वदानस्य विहितप्रतिषिद्धत्वाद्विकल्पदोषः प्रसज्येतेत्याशङ्क्याह—**पौण्डरीकइति**। दानस्य निषिद्धत्वे रागतः प्रवृत्त्ययोगादननुष्ठानापत्तेर्लोकनिमित्ताभावादिष्टिविधिरनर्थः प्रसज्येतेत्याशङ्क्याह—**तस्मादिति**। उच्चादिविदक्षिणाविन्तोअस्थुर्ये अश्वदाः सहते सूर्येणेत्यादिमन्त्रवर्णो, हिरण्यं गौर्वासोश्वो भूमिस्तिलाघृतमन्नमितिदेयानीति स्मृतिश्च भ्रान्तिहेतुः मित्रस्य दायेन दानेनादिरादानं स्वीकारस्तेन प्रयोजनेनेत्यर्थः। अथ विक्रयनिषेधस्मृतेर्वा मूलान्तरादर्शनादस्यैव मूलत्वसिद्धयै ददातेर्विक्रयवाचित्वावगमाद्योश्वं विक्रीणीते तस्येष्टिर्भविष्यतीत्याह—**यो वेति**। तदाविक्रयवाचितामुपपादयति—**विक्रयेपि हीति**। विक्रयोनेन कृतो न दानमित्यादिप्रयोगदर्शनाददृष्टार्थस्यैव स्वत्वत्यागपरस्वत्वापादनस्य ददात्यर्थत्वमाशङ्क्य बलीवर्दाः सन्ति न गाव इतिवत्सामान्यवाचिनोऽपि ददातेरदृष्टार्थदानविशेषलक्षणार्थत्वेन तत्प्रयोगोपपत्तेरनवगतार्थधात्व-

स्यायां फलकल्पनानवसरेणादृष्टार्थत्वानवगमाददृष्टार्थत्वेवगते ददातेरर्थावगतिरर्थावगतौ वा दृष्टार्थत्वावगतिरित्यन्योन्याश्रयापत्तेर्निरस्यति—**न हीति**। परद्रव्यग्रहणपूर्वस्य स्वद्रव्यत्यागस्य विक्रयशब्दवाच्यत्वाद्दानशब्दवाच्यत्वायोगमाशङ्क्याह—**यद्यपि चेति**। ददातेः स्वत्वत्यागपरस्वत्वापादनसामान्यवाचितां वृद्धप्रयोगेनोपपादयति—**तथा चेति**। गृह्णातेरपि तर्हि क्रये प्रयोगात्तद्वाचित्वापत्तेः। क्रयस्यापि नोभयदतः प्रतिगृह्णातीत्यनेन निषेधप्रसङ्गाच्छिष्टगर्हापत्तिरित्याशङ्क्य, प्रतिपूर्वस्य गृह्णातेः क्रये प्रयोगात्तद्वाचित्वापत्तेः क्रयस्यापि भावे सूचयितुमाह—**क्रीत्वा चेति**। गृहीतमित्येव वदति, न तु प्रतिगृहीतमितीति सावधारणव्याख्येयं विक्रयस्येष्टिनिनित्तामुपपादितामुपसंहरति—**तस्मादिति**। अश्वानां देयत्वं स्मृतेर्ये अश्वदा उत वा मन्ति गोदा ये वस्त्रदाः सुभगास्तेषु राय इत्यादिमन्त्रवर्णाच्चाश्वदानस्यादुष्टत्वं शङ्कते—**ननु चेति**। मन्त्रवर्णसूचनार्थश्चकारः। स्मृतेर्मन्त्रवर्णस्य चानुवादत्वाद्विध्यनुसारेण व्याख्येयतां मत्वा परिहरति—**यत्रेति**। तस्मादिति पूर्वपक्षोपसंहारभाष्यं प्रतिग्रहविषयत्वेऽपि पूर्वपक्षोपपत्तिसूचनेन वस्तुतो दानविषयत्वाभ्युपगमेन पूर्वपक्षेऽपि प्रौढिप्रदर्शनार्थं स च लौकिकेश्वप्रतिग्रह इत्यादिभाष्योपपादनार्थतया व्याचष्टे—**तस्मादिति**।

अर्थवादो वा नुपपातात्तस्माद्याज्ञे प्रतीयेत निर्वपेदितीत्यध्याहार्यतिकरणान्तं भाष्यं दोषनिर्घातार्थत्वपूर्वपक्षहेतुनिरासप्रतिज्ञार्थत्वेन वाशब्दव्याख्यार्थतया व्याचष्टे—**यदीति**। जलवृद्धयोदरवृद्धिलक्षणस्य जलोदराख्यस्य दोषस्य जलरोगाख्यवरुणग्रहणोक्तयोक्तस्याश्वप्रतिग्रहादनुपपन्नात्वादित्येवमनुपपातादिति वाशब्दोक्तप्रतिज्ञोपपादनार्थसूत्रावयव्याख्यार्थं सहीत्यादिजलोदरोपपात इत्यन्तं भाष्यं हेतुप्रश्नोत्तरत्वेन व्याचष्टे—**कुत इति**। निषिद्धाचरणजन्यस्य पापाख्यस्य दोषस्य पूर्वपक्षिणोक्तत्वाज्जलोदरानुपपातोक्तयोगशङ्कानिरासार्थत्वेनेष्टिवाक्ये यो दोषः कीर्त्यते, तन्निर्घातार्थता वाच्येत्यापाद्योक्तचर्थतयाध्याहारेणोत्तराद्धं व्याख्यातुमह—**कर्मेति**। तन्निर्घातार्थत्वस्य वाच्यत्वापादनार्था तस्य निर्घात्यत्वावधारणोक्तिः। एतदेवभाष्यमवयवशो व्याचिख्यासु प्रसिद्धमित्यन्तं तावत्तस्य वरुणगृहीत इत्युच्यते इत्यनेन निर्दिष्टस्य वरुणग्रहणवचनस्य शब्दस्य जलोदरवाचित्वेन लोके प्रसिद्धत्वाद्यस्य जलवृद्धयोदरं श्वयति वर्द्धते स वरुणाख्येन जलरोगेण गृहीतत्वाद्वरुणगृहीत इत्युच्यत इत्येवं व्याख्यातुमाह—**जलोदरं हीति**। न चेति भाष्यावयवं व्याचष्टे—**न चेति**। निदानं कारणं प्रतिजानातेः। प्रतिपादनार्थतां श्रूयतेशब्दाभ्यामुक्त्वा गम्यतेशब्देन प्रतीतिवाचितोक्ता। न चानेनेतिभाष्यावयवं व्याचष्टे—**नाप्येतस्येति**। वर्त्तमानवरुणग्रहणानुवादेनेष्टिविधिमात्रार्थत्वान्नेष्टिवाक्यस्याश्वप्रतिग्रहस्य जलोदरनिदानत्वप्रतिपत्तौ व्यापार इत्यर्थः। पापेन ग्रहणं यस्मिन्नश्वप्रतिग्रहे स निमित्तमिति पूर्वपक्षवार्त्तिकव्याख्यातभाष्यस्थदोषशब्दोक्ताया नरकफलताया अनुभाषणपूर्वं निरासार्थत्वेनाननुपपातादिति सूत्रावयवव्याख्यार्थतयाऽथेत्यादि भाष्यं व्याख्यातुं नरकस्येष्टिवाक्येऽनुपात्तत्वादित्येवं सूत्रावयवं तावद्व्याचष्टे—**यस्त्विति**। अथेत्यनुभाषणभाष्यं व्याचष्टे—**अथेति**। तदेत्यादिबाध्येतेत्यन्तं निरासभाष्यं व्याचष्टे—**तत इति**।

दानपक्षे त्यागदुःखदर्शनात्प्रतिग्रहपक्षे रक्षणादिक्लेशाद्वैदिकेपि निमित्ते किंचिद्वरुणात्मकं वरुणग्रहणशब्दप्रवृत्तिनिमित्तं विद्यत इत्येवं सावयवप्रसिद्धिः संभवतीति निमित्तद्वारेणेष्टलौकिकविषयत्वं नावधारयितुं शक्यमित्यर्थः। भाष्यमपि तत्र तस्मिन्नवयप्रसिद्धिपक्षे यज्ञसंबन्धिन्यपि प्रतिग्रहे रक्षणादिना क्लेशेन वरुणग्रहणशब्दप्रवृत्तिनिमित्तेन वरुणगृहीतः स्यादिति कृत्वा लौकिकइत्येष पक्षो न व्यतिष्ठेत समुदायप्रसिद्धिचश्च बाध्येतेत्येवं क्लेशेनेतीतिकरणाध्याहारेण योज्यम्। इष्टिकर्त्तुर्दातूरक्षणादिक्लेशाभावाद्रक्षणादिक्लेशोक्तिमयुक्तामाशङ्क्य द्वेधा समाधत्ते—**रक्षणेति**।

वैदिके दाने वरुणग्रहणशब्दप्रवृत्तौ स्वयं निमित्तान्तरमाह—**धर्मोऽपि चेति**। यन्नरो देहेनाच्छाद्यते तन्न केवलेन पापेन हेतुनेत्यर्थः। इष्टेर्दोषनिर्घातार्थत्वाभावे वरुणग्रहणोक्त्यानर्थक्यशङ्कानिरासार्थं सौत्रार्थवादोक्तिव्याख्यार्थम्। तस्मादिति भाष्यं व्याचष्टे—**तस्मादिति**। स्तुतिस्वरूपोक्त्यर्थं यावद्वरुणगृहीतस्येत्याद्युन्मोचनी चेत्यन्तं भाष्यं व्याचष्टे—**तत्रेति**।

तिरोहितभेदोपमानवाचिना रूपकशब्देन भाष्यस्थोपमानोक्तिमुपमानविशेषविषयत्वेन व्याख्याय प्रकारवाचिना धर्मशब्देनेदानीन्तनस्याश्वदानस्य प्रजापतिकर्तृकाश्वदानसादृश्येपि दानस्य प्रतिग्रहस्य वा वरुणसादृश्याभावादिदानीन्तन्याश्चेष्टेर्वरुणोन्मोचनीत्वरूपेण विवक्षितस्य प्रजापतिकर्तृकोष्टिसादृश्यस्याभावादुपमानेन स्तुत्ययोगशङ्कानिरासाय भेदोपचाराख्यो रूपकप्रकारः प्रजापतिर्वरुणायेत्याद्यर्थस्येदानीन्तनकालीनेर्थेध्याहारोपहेतुत्वेनोक्तः। दोषनिर्घातार्थत्वोक्त्यर्थत्वेन प्रयोजनवत्तरत्वसंभवे, मन्दप्रयोजनस्तुत्यर्थता न युक्तेत्याशङ्क्यावश्यकत्वद्योतनार्थत्वेन स्तुतेः प्रयोजनवत्तरत्वोक्त्यर्थं तथेतिभाष्यं व्याचष्टे—**तस्मादिति**। तस्मादित्यादिसूत्रावयवव्याख्यार्थं तस्मादित्यादिभाष्यशेषं व्याचष्टे—**ततश्चेति**।

अवाक्योपात्तफलाभावोक्त्या स्ववाक्यश्रुतभ्रातृव्यदुर्वर्णत्वाख्यफलसुवर्णधारणवैषम्यं सूचितम्। प्रतिग्रहशब्दस्य लक्षणया दानवाचित्वात्, तस्य च लौकिकस्य निषेधात् क्रत्वव्यभिचारित्वेन क्रतुसंनिधापकतोपपन्नेति सूचयितुं वैदिकोश्वदानाख्यप्रतिग्रहः कर्मान्तःपातित्वादङ्गिभूतं कर्मोपनयन्नुभयोरिष्टिज्योतिष्टोमादिकर्मणोः साकाङ्क्षत्वादङ्गाङ्ग्यन्वयं कल्पयतीत्युक्ते ज्योतिष्टोमादिकर्मणोङ्गिशब्देन फलवत्तयाङ्गान्वययोग्यत्वे सूचितेऽपि प्राकरणिकैरङ्गैर्नैराकाङ्क्ष्यादनारभ्याधीताकाङ्क्षानुपपत्तिमाशङ्क्योपनायकस्य दानस्य प्राकरणिकत्वेनाङ्गिकर्मदेशत्वादङ्गिकर्मकथंभावस्य तस्मिन् वृत्त्युपपत्तेर्ज्योतिष्टोमादिकर्मदेशाश्वदानवर्त्तिकथंभावापन्नस्य ज्योतिष्टोमादिकर्मणोश्वदानेनोपस्थापनाद्यावतोश्वाम् ज्योतिष्टोमाद्युपकारार्थं दद्यात्तावतोवारुणान्निर्वपेत्तदर्थमेवेति श्रुत्यर्थावगतिसूचनार्थं तद्देशेत्युक्तम्॥ ३३॥

इत्यष्टमं वारुणीष्टेः वैदिकाश्वदाननिमित्तनाधिकरणं।

भा० प्र०—प्रदर्शित पूर्वपक्ष के निरास के लिए सिद्धान्ती ने कहा है कि "लौकिके न दोषः स्यात्" = लौकिक वमन में दोष नहीं हो सकता है, कारण, उस स्थल में वमन कराने के लिए ही सोमपान वैद्यकशास्त्र के अनुसार कराया जाता है। अतः वहाँ धातु साम्य होगा। अन्य पक्ष में "वैदिके स्यात्" यह सोमवाचिचरु वैदिक पानविपत्ति में ही

कर्त्तव्य है। कारण "दोषात्" = जिसने पान किया है वैसा सोम भली-भाँति पचाने के लिए मन्त्र का पाठ करना पड़ता है एवं कुछ समय तक स्थिर होकर बैठना पड़ता है। अतः उस स्थल में जीर्ण करना ही विहित है, इसलिए, यदि वह अन्यथा होता है तो दोष ही होगा। अर्थात् उसके लिए प्रधान कर्म में वैषम्य होगा और ऐसा होने पर उसका पूर्ण फल नहीं होता है, इसलिए, उस दोष की शान्ति के लिए प्रायश्चित्तरूप सोमेन्द्रचरु अवश्य करना चाहिए, अतएव वैदिक सोमपान की विपत्ति में सोमवामिचरु कर्तव्य है। "दोषात्" = दोषश्रुत होने से "तु" = पूर्वपक्ष के निरास के लिए, "वैदिके स्यात्" = वैदिक वमन में ही वह कर्तव्य है। "हि" = क्योंकि, "लौकिके न स्यात्" = लौकिक वमन में दोष नहीं है "अर्थात्" = क्योंकि उसका प्रयोजन है। सिद्धान्त ॥ ३३ ॥

बारहवाँ वमनाधिकरण ॥

## [१३] तत्सर्वत्राविशेषात् ॥ ३४ ॥ पू०

**शा० भा०—तदेतत्सोमपानव्यापदि सोमेन्द्रं[1] कर्म, सर्वत्र वमने स्यादार्त्विजे, याजमाने च। कुतः ? अविशेषात्। न विशेषः कश्चिदाश्रीयतेऽस्य वमने स्यात् नास्येति। तस्मात्सर्वत्र भवेत् ॥ ३४ ॥ पूर्व० ॥**

त० वा०—अश्वपतिग्रहेष्टिवदेव कर्माङ्गत्वात्स्वामिकर्तृकत्वे सिद्धेऽपि, तस्य किमात्मीयं वमनं निमित्तम्, उताऽऽर्त्विजमपीति विचार्यते। किं प्राप्तम् विशेषानुपादानादुभयत्रापि स्यात्। यथा च स्वामिवमनेन प्रतिपत्तिविनाशः तथाऽऽर्त्विजेनापि उभयोर्द्रव्यसंस्कारात्मकत्वात्। तस्माद्यदि दोषनिर्घातार्थमेतत्कर्माथाप्यपूर्वोपकारार्थमभयथा वमनद्वयेऽपि कर्तव्यम् ॥ ३४ ॥

**अथ नवममश्वप्रतिग्रहेष्ट्यधिकरणं**

न्या० सु०—प्रसक्तानुप्रसक्त्या स गतिमाह—**तत्रैवेति**। सिद्धान्तायोगेन संदेहमाक्षिपति—**कथं पुनरिति**। समाधत्ते—**उपक्रमइति**। कीदृगुपक्रमइत्यपेक्षायामाह—**प्रजापतिरिति**। पौनरुक्त्यं शङ्कते—**यदि तर्हीति**। यदिशब्दार्थे—**येदि तर्हीत्येकं पदम्**। परिहरति—**उच्यत इति**। श्लोकं व्याचष्टे—**यत्रेति**। निःसंदिग्धस्य विध्युद्देशस्य वाक्यशेषस्य निर्णयायोगं सामान्यतो व्युत्पाद्य, प्रकृते योजयितुमाह—**अत इति**। यतो निःसंदिग्धे विध्युद्देशे वाक्यशेषो न निर्णायकोः अतइह यद्यपि प्रजापतिर्वरुणायेत्यादिवाक्यशेषाद्दातुरिष्टिर्विज्ञायते। प्रधानैककर्तृकस्य सान्तः प्रधानोपकारसामर्थ्यलक्षणात्स्वार्थाद्दातुरिष्टिर्विज्ञायते तथापि संदेहाभावेन संदिग्धेषु वाक्यशेषादित्यनेनार्थाद्वा कल्पनैकदेशत्वादित्यनेन च वाक्यशेषादितीति प्रभृतिवाचीतिकरणोक्तेनागतत्वादारम्भोपपत्तिरित्युक्ते कथं वाक्यशेषाद्दातृविषयत्वज्ञानमित्यपेक्षायां, संप्रदानसमभिव्याहारेण नयतेर्दानार्थत्वावगमात् प्रजापतिर्दाता वरुण प्रतिग्रहीतेत्युक्त्वा स इत्यनेन प्रजापत्युपपादनात्स्वशब्देन चात्मीयवाचिना वरुणोक्ते-

---

१. ब. क० सौमेंद्रं।

र्दातुर्वरुणप्राप्त्यवगमात्स पर्यदीर्यतेत्यनेनाप्युदरमस्य थुप्रत्ययान्तवृद्धिवाचिश्वयतिधातुरूपश्वयथुशब्दवाच्यया जलवृद्धया विदीर्णमित्येतदर्थेन प्रजापतिर्वरुणं प्राप्तः सन् परिदीर्ण इति दातुर्वरुणप्राप्तिविवरणात्सएतमित्यनेन च दातुः प्रजापतेरेवेष्टिककर्त्तृत्वोक्तेर्वाक्यशेषाद्दातृविषयत्वज्ञानमुपपाद्य, आत्मवाचिना स्वशब्देन प्रजापतेरेव देवतात्वोक्त्याप्रतिग्रहीतृत्वाभिधानात्प्रजापतिरन्यस्मात्प्रतिगृह्य वरुणायाऽदादित्यर्थसंभवात् प्रजापतेः प्रतिग्रहीतृत्वकीर्त्तनेन वाक्यशेषस्यापि प्रतिग्रहीतृविषयत्वोपपत्तिशङ्कानिरासायाऽयस्मात् प्रतिगृह्येत्यश्रुतकल्पनायोगादेकं सद्विप्रा बहुधा वदन्तीति मन्त्रवर्णालोचनया वरुणप्रजापत्योरेकत्वमङ्गीकृत्य प्रजापतिरात्मनेऽश्वमदादित्युपक्रमार्थाभ्युपगमेन तस्य प्रजापतेरात्मा स्वा देवता वाच्या तच्च दानकर्तृत्वसंप्रदानत्वयोर्विरोधाद् दातृत्वे मुख्ये कल्पिते संप्रदानत्वस्यान्यदीये द्रव्येऽन्यदीयत्वापादकत्वादातृगुणयोगेन संप्रदानत्वे वा मुख्ये कल्पिते दातृत्वस्य संप्रदानगुणयोगेन गौणत्वापत्तेर्न युक्तमित्युक्ते प्रजापतये वरुणोऽश्वमदादित्येवं तर्हि प्रजापतेः प्रतिग्रहीतृत्वकीर्तनमस्त्वित्याशङ्क्य, नापीत्युक्तम् । वरुणस्याप्यात्मोद्देशेन निर्वापकर्तृत्वनिर्देशोपपत्तेः प्रतिग्रहीतृविषयत्वापपत्तिमाशङ्क्य, निर्वपतेर्यजिमत्कर्मवाचित्वान्न वरुणस्येत्यादिनानुपपत्तिरुक्ता । दोषनिर्घातार्थत्वाभ्युपगमेऽपि दातृविषयत्वोपपत्तिसूचनार्थं तदुन्मोचनमित्युक्तम् । प्रधानैककर्तृकस्य सतः प्रधानोपकारसामर्थ्यविषयत्वेनापि सिद्धान्तं सूत्रयोजनशक्तिसूचनार्थं यजनशेषत्वाच्चेष्टेः प्रधानसमानकर्तृकत्वावगमात्स्वामिनश्च सतः प्रधानकर्तुर्वाजिदातृत्वाद्दातुरिष्टिरित्युक्ते यज्ञशेषतैव कथमित्याशङ्क्य वैदिके यस्मिन् कर्मणीत्यादिपूर्वाधिकरणभाष्येण यज्ञाङ्गत्वस्योक्तत्वादित्युक्तम् । सन्देहाभावेप्यारम्भायोगमाशङ्क्य, विध्युद्देशार्थवादविप्रतिपत्तिविचाराङ्गसन्देहहेतुत्वेनोक्ता । विपत्तौ विकल्पापत्तिशङ्कानिरासायातुल्यकल्पविकल्पायोगाद्यवधारणकल्पनारूपेणान्यतरस्य विध्युद्देशस्या, अर्थवादस्य वा बाधेन दातृप्रतिग्रहीत्रन्यतरविषयतया समस्तं विध्यर्थवादसमूहात्मकं वाक्यं गमयितव्यमित्युक्ते, विध्युद्देशबलीयस्त्वेनार्थवादस्यैव बाध्यत्वनिश्चयात्, सन्देहशङ्कानिरासायोपक्रमोपसंहारबलाबलचिन्तयेतिमध्यमपदलोपिसमासेनोक्तम् । व्यवधारणेनाऽन्यथाप्रतीयमानस्यार्थस्यान्यथावधारणेन वाक्यार्थकल्पनायामप्रतीयमानार्थकल्पनापत्तिदोषशङ्कानिरासार्थं लक्षणया प्रतीतिं सूचयितुं कथमपीत्युक्तम् । यथापि संदेहाभावेन संदिग्धेष्वित्यनेनागच्छद्विध्युद्देशार्थवादयोर्विरोधादुपक्रमोपसंहारबलाबलसन्देहाच्च चिन्ताविषयोपलक्षणभूतसंदेहाभावेपि चिन्ताङ्गसंदेहोपपत्तेः कथमपिक्लेशेन व्यवधारणकल्पनारूपेणान्यतरबाधेनान्यतरविषयतया समस्तवाक्यगमनिकार्थंमारम्भे युक्ते सति किं तावत् प्राप्तमित्यन्वयः । पूर्वपक्षसूत्रस्थस्य चशब्दस्य तुशब्दस्थानस्य संदेहनिवृत्त्यर्थत्वसूचनार्थं संदेहसमाधानोपसंहारग्रन्थैकग्रन्थतया पूर्वपक्षप्रश्नः ।

पूर्वपक्षसूत्रार्थोपपादनायार्थवादबाधोक्त्यर्थत्वप्रतिग्रहस्य तुर्तुरिति पूर्वपक्षभाष्यस्य सूचयनपूर्वपक्षयति—**अर्थवादस्येति** । अङ्गगुणविरोधन्यायेनार्थवादासामञ्जस्येऽभिहितेऽर्थवादस्य विध्युदेशाङ्गत्वे सति विध्युद्देशगुणयथाश्रुतत्वानुरोधेनार्थवादगुणयथाश्रुतत्वाबाधोयुक्तः ।

तदेव तु कथमित्याशङ्क्य विध्युद्देशाधीनप्रवृत्त्याङ्गतामर्थवादा सामञ्जस्य हेतुत्वे-नोक्ता तदुपपादनार्थं विध्युद्देशाङ्गतां विनानर्थक्यप्रसङ्गेऽभिहिते विध्युद्देशस्यापि तद्वदर्थवादं विना प्रवर्त्तनाशक्तत्वेनानर्थक्यप्रसंगादर्थवादाङ्गत्वापत्तिरित्याशङ्क्यार्थवादाभावे तस्यैव प्ररोचनशक्त्याविर्भावेनार्थवादं विनापि प्रवर्त्तनाख्यस्वार्थसिद्धेरित्युक्तम्। विध्युद्देशाङ्गत्वे-प्युपक्रमस्थेनार्थवादेन दातृविषयत्वेऽवधारितं विध्युद्देशस्य विषयावधारणे व्यापाराभावा-त्कांस्यभोजिन्यायेनार्थवादानुरोधवृत्तित्वाविरोधमाशङ्क्य विधिस्तुत्योः समानविषयत्वात् स्तुतिद्वारा विधिविषयोऽर्थवादेन समर्पणीय विध्यनपेक्षितायास्तु स्तुतेः स्वरस्वतोऽर्थवादाद-प्रतीतेन विषयावधारणं संभवतीति यच्चेत्यादिनोक्तं प्रमाणान्तरानुसारित्वाच्च लक्षण-वृत्त्याश्रयामसामञ्जस्यं अर्थवाद एवायुक्तं, न विधावित्याह—**नित्य चेति**।

दृष्टंचान्यत्रार्थवादेष्वसामञ्जस्यमित्याह—**यथा चेति**। अतो यथाज्या स्तुतिर्लक्षणया तत्संबन्धिचेतसावकविषया तथा दातृव्यापारस्तुतिस्तत्संबन्धिप्रतिग्रहीतृव्यापारविषयेत्युप-संहरति—**तस्मादिति**। सूत्रार्थमुपपाद्य यथाभाष्यं तावत्सूत्रं व्याचष्टे—**तेनेति**। येन कारणेनार्थवादानुरोधेन विधिर्न प्रवर्त्तते, तेन कारणेन प्रतिग्रहनिमित्तत्वेन श्रुतमिष्टयाख्यं कर्म दातुरचोदितमित्युक्ते वेदो वा प्रायदर्शनादित्यत्रोपक्रमस्यार्थवादानुरोधेनोपसंहारस्य-विधिव्याख्यानस्योक्तत्वान्निरस्तोयं पूर्वपक्ष इत्याशङ्क्योऽपसंहारस्थानामृगादिशब्दाना'मृगेभिः प्रार्वदिविदेव इर्यत इ'त्यादिषु वेदे प्रयोगदर्शनाद्वेदलक्षणार्थता युक्ता। प्रतिगृह्णातस्तु दाने क्व चित् प्रयोगादर्शनाद्दानलक्षणार्थत्वानुपपत्तेर्दानप्रतिग्रहकर्मणोः शब्दभेदादेदशब्दप्रतिपाद्य-त्वाभावादित्युक्तम्। समुच्चयस्येहाविवक्षितत्वाच्चशब्दमयुक्तमाशङ्क्य, तुशब्दार्थसंदेह-निवृत्त्यर्थत्वेन व्याख्यातुमाह—**तुशब्देति**। व्याख्याविभवायऽन्यथा स्वयं द्वेधासूत्रं व्याचष्टे—**यजमानं चेति** ॥ ३४ ॥

भा० प्र०—पूर्व में जो सोमवामिचरु के विषय में आलोचना हुई है, वह यजमान एवं ऋत्विक् इनमें जो भी वमन करेगा उसी के लिए यह कर्तव्य है या नहीं—यही सन्देह है।

पूर्वपक्षी का कहना है कि "तत् सर्वत्र" = सोमवामचरु निर्वपन कर्म ऋत्विक् एवं यजमान सभी के वमन के लिए कर्तव्य है। कारण, "अविशेषात्" = यजमान के वमन में ही कर्तव्य है। ऋत्विक् के वमन में कर्तव्य नहीं है, इस प्रकार की कोई विशेषत्व अर्थात् व्यवस्था दृष्ट नहीं होती है।

"तत्" = वह अर्थात् वह सोमेन्द्रचरु निर्वाप कर्म "सर्वत्र" = सभी स्थल में ही अर्थात् ऋत्विक् एवं यजमान सभी वमन के लिए ही कर्तव्य है, "अविशेषात्" = यजमान के वमन में ही कर्तव्य है; ऋत्विक् के वमन के लिए कर्तव्य नहीं है—ऐसा कोई विशेषत्व = व्यवस्था नहीं है। पूर्वपक्ष ॥ ३४ ॥

## स्वामिनो वा तदर्थत्वात् ॥ ३५ ॥ सि०

**शा० भा०—स्वामिनो वा वमने स्यात्। कुतः। तदर्थत्वात्। तदर्थं कर्म**

यजमानार्थं यत्र सोमो वम्यते। यत्त्वत्र सोमेन्द्रं[1] कर्म, तदपि तदर्थमेव। इदं हि सोमवामिन उपकाराय श्रूयते। तत्सोमवामिनो यजमानस्य सदुपकर्तुं शक्नोति, नर्त्विजः। नहि तदृत्विगर्थं कर्म, यत्र सोमो वम्यते।

अथोच्येते, सोमवामिनोऽध्वर्योर्होतुर्वाऽऽत्मीया ऋत्विजस्तदीयेष्वग्निषु निर्वर्तयिष्यन्तीति। तथा सति यदि वा व्यृद्धसोमस्य कर्मणो नाङ्गं न सोमवामिनोऽध्वर्योर्होतुर्वा। तत्रात्यन्तगुणभूता अध्वर्य्वादयः स्वैर्ऋत्विग्भिः कारयन्तो न फलं प्राप्नुवन्ति। तदर्थं च क्रियमाणं न यजमानस्योपकारे वर्तत इति, न ऋत्विजो वमने क्रियेत ॥ ३५ ॥ सि० ॥

त० वा०—यद्यपि तावदारादुपकारकत्वं, तथाऽपि स्वामिवमने भवितव्यम्। कुतः?

### स्वामिवमनस्यैवनिमित्तत्वमिति निरूपणम्

पूर्वं यच्छब्दसंबन्धान्निमित्तत्वं न जायते।
तत्संबन्धात्परस्तात्तु कर्तैकः संप्रतीयते ॥

'यः सोमं वमति, स निर्वपेत्' इति यच्छब्दतच्छब्दयोगाद्यागवमनयोरेकः कर्ता गम्यते। तत्र नैमित्तिकं तावत्स्वामिकर्तृकत्वेनासंदिग्धम्। तेनासंदिग्धेन संदिग्धं वमनं निर्णीयते। तदपि स्वामिकर्तृकमेव सन्निमित्तमिति। न च स्वतन्त्रमेव निमित्तं, शुद्धेनाऽऽख्यातेन निमित्तप्रत्ययानुत्पादात्। यच्छब्दोपबद्धं तन्निमित्तं प्रतिपादयति। तेन चेत् संबद्धं पूर्वतरं समानकर्तृकत्वं पश्चान्निमित्तत्वप्रतीतिः।

अथर्त्विजो देवतार्थमृत्विक्परिक्रयार्थं च द्रव्यं त्यजन्ति। ततस्तेषां स्वात्मनि परिक्रयविरोधादवश्यं तैरप्यन्येऽध्वर्य्वादयो वरीतव्याः। आधानगतेन त्वात्मनेपदेनाग्नीनामधातृव्यतिरिक्तपुरुषसंबन्धाभावात्स्वात्मार्थेष्वग्निषु यष्टव्यम्। ततश्च यदि तावद्वान्तसोमकर्मोपकारबुद्ध्या कुर्वन्ति, ततो देशकालकर्तृभेदाद्विगुणं न तेन प्रधानेन गृह्यते। न चाऽऽहत्य देशादिभेद आम्नायते। येन तत्सद्भावेऽप्यवैगुण्यमाश्रीयेत। स्वामिवमनेन च कृतार्थत्वान्नानेनैव शास्त्रेण देशान्तरादीनामनुज्ञानम्। कथं वैकमेव शास्त्रं स्वामिवमनपक्षे समानदेशादित्वमाश्रयेत् ऋत्विग्वमने न तद्भेदम्। अथ त्वात्मार्थबुद्ध्यैव ते प्रयुञ्जीरन्। एवमपि क्रत्वर्थत्वेनावधारितस्य पुनः पुरुषार्थत्वाभावादर्थ्येन क्रियमाणस्याऽऽनर्थक्यमेव स्यात्। अथ त्वेतत्सिद्ध्यर्थं पुरुषार्थतैव शास्त्रेणाऽऽश्रीयते, तथा सति उपस्थितक्रतुत्यागादसंनिहितस्वर्गादिकल्पनाच्च विप्रकर्षः। सदृशं लौकिकवमनेऽप्येतदिति न याज्ञं स्यात्। तच्च पूर्वमेव निराकृतम्। तस्मात् स्वामिवमने स्यात्।

---

१. ब. क० सौमेंद्रं।

### आराडुपकारकत्वप्रतिपादनम्

अथ त्वध्वर्य्वादिवमनेऽपि स्वाम्येव द्रव्यं त्यजेत् तथा सति तदेव भिन्नकर्तृकत्वमापद्यते। तत्समर्थने त्राऽश्रुतषष्ठ्यर्थकल्पना, सामानाधिकरण्यबाधश्च। तथा कल्पनायां च स्वामिवमनस्यानिमित्तत्वप्रसङ्गः। उभयाश्रयणे वा वैरूप्यनिमित्तो वाक्यभेदः स्यात्। यः सोमं वमति, यस्य सोममृत्विग्वमतीति चाऽऽश्रयणादन्यतरपरिग्रहे तु स्वामिवमनग्रहणं युक्तम्, शब्दसामञ्जस्यात्। एवं तावदाराडुपकारकत्वे।

### प्रतिसमाधानार्थे यमिष्टिरिति पक्षवर्णनम्

यदा तु वाक्यशेषोपनीतयागशेषद्रव्यप्रतिपत्तिनियमभ्रेषोपजनितफललाभायोग्यत्वं तेन प्रतिसमाधीयत इति कल्प्यते, तदा यजमानफलोत्पत्तेरत्यन्तादृष्टत्वात्तदाशङ्केति तेनैव प्रतिसमाधानेष्टिः कर्तव्येत्यसंदिग्धम्। यत्तु दक्षिणालाभात्मकमृत्विजां फलं, तत्सति चासति वमने लभ्यमानं दृश्यत इति, निराशङ्कत्वादनपेक्षितप्रतिसमाधानं नेष्टिं गृह्णाति। यदाऽपि प्रकृतकर्मकर्तृनियमांशेन भक्षयितृसंस्कारार्थं भक्षणम्, अतश्च तदभ्रेषे कर्तुर्वैगुण्यमुपजातं, द्रव्यसंस्कारस्य निवृत्तत्वादिति कल्प्यते, तदाऽपि तद्भ्रेषकृतयाजमानफलविघ्नप्रसङ्गात्तन्निवृत्यर्थत्वाद्यत्तच्छब्दनिर्देशाच्च यजकानवमन एव भवितव्यम्।

### भेदनहोमवत् नैमित्तिकं कर्माङ्गमिति निरूपणम्

एतेनापूर्वसंस्कारार्थत्वमपि व्याख्यातम्। यदाऽपि हि सोमवमनान्न विहिताकरणं, नापि प्रतिषिद्धसेवनमापद्यत इति कृत्वा, दोषनिर्घातार्थत्वमिष्टेरनाश्रित्य नैमित्तिकं कर्माङ्गं, तदाऽपि च यच्छब्देन पुरुषस्योपात्तत्वाज्जञ्जभ्यमानन्यायेन प्रकरणगतपुरुषसंस्कारताऽध्यवसीयते, तदाऽपि 'याजमानास्तु' इत्यनेनैव तत्कर्तृकता। वमनसमानविषयत्वाच्च यजमानवमनमेव निमित्तम्। यत्त्वध्वर्य्वादिवमने अपि द्रव्यप्रतिपत्तिभ्रेषः, कर्तृसंस्काराद्विनाशो वा समाधिमपेक्षत इति। यद्यप्यपेक्षते, तथाप्यविधानान्न ग्रहीष्यते। सर्वेषु च क्रत्वर्थपुरुषार्थपक्षेषु चर्त्विग्वमनेऽविधानमित्युक्तम्। अतश्च यदि तद्वमनमदुष्टमेव, ततस्तूष्णीमेवाऽऽसितव्यम्। अथ दुष्टं, ततः सामान्यविहितं किंचित्कर्तव्यम्। न चात्र क्रत्वर्थाद्यन्यतमपक्षावधारणप्रयोजनमस्तीति नातीवावधारणे यतितव्यम्। अथापि तत्त्वज्ञानं प्रयोजनं ततो जञ्जभ्यमानपक्षः परिग्रहीतव्यः। तथा च सूत्रकारः स्वामिनो वा तदर्थत्वादित्याह ॥ ३५ ॥

**न्या० सु०—यथाभाष्यं तावदार्त्विजशब्दं यजमानविषयत्वेन व्याचष्टे— यजमान इति। विभवार्थं स्वयं दानविषयत्वेन तावद्व्याचष्टे—अथवेति। सेष्टिलिङ्गमालोच्य**

स्यादिति ल्यब्लोपपञ्चम्या दातृविषयत्वे[¹भिहितेलिङ्गस्य संदिग्धार्थनिर्णायकत्वादसंदिग्ध-विध्युद्देशार्थविधारणहेतुत्वायोगमाशङ्क्य, विध्यर्थवादप्रतिपत्त्या संदेहोपपत्तिसूचनार्थत्वेन] पूर्वाधिकरणसिद्धान्तसूत्रस्थयोर्वाशब्दयज्ञशब्दयोर्व्यवहितयोरप्यपेक्षिततयानुषङ्गेण यज्ञाङ्गे दानेऽनङ्गे वार्तिककर्मणीति संदिग्ध इत्येवं स्वयमेवान्यथा व्याचष्टे—**अथ वा स्वामीति**। किं लिङ्गमिति प्रश्नभाष्यं लिङ्गमन्त्रेषु वचनसामर्थ्यमितिप्रकरणाधिकरणोपक्रमभाष्य एव सामर्थ्याख्यलिङ्गलक्षणोक्तेरयुक्तमाशङ्क्य यतो लिङ्गाद्दातुरिष्टिस्तत् किमित्येष विशेष-विषयत्वेन व्याचष्टे—**कथं पुनरिति**। कथं भूतेन पुनर्लिङ्गे नेत्यन्वय तावदिष्टाख्यस्य कर्मणः प्रधानसमानकर्तृकस्य सतस्तदुपकारसामर्थ्यलक्षणं लिङ्गमाह—**तदिति**। पूर्वपदाना-मिति भाष्योक्तं लिङ्गं व्याचष्टे—**अपरमिति**। पूर्वार्द्धं व्याचष्टे—**पूर्वेति**। वैदिके यस्मिन् कर्मणीत्यादिभाष्येणेष्टेरश्वप्रतिग्रहवत् ज्योतिष्टोमादिकर्माङ्गत्वेऽवधारितेऽपि प्रस्तुताधिकरण-पूर्वपक्षन्यायात् प्रतिग्रहीतृविषयत्वे सति भिन्नकर्तृकत्वेनाङ्गत्वाबाधापत्तेः प्रायशब्दः। प्रतिपादितप्रायत्वोपपादनार्थं यदा हीत्याद्युक्तम्। 'अन्यो वा स्यात्परिक्रयादि३-७-२०दि-त्यत्राङ्गानामृत्विक्कर्तृकत्वस्य वक्ष्यमाणत्वादिष्टेरप्यङ्गत्वादृत्विक्कर्तृकत्वोपपत्तिमाशङ्क्या-ङ्गानामपि यागरूपाणां यजमानत्वसूचनार्थं प्रधाने ज्योतिष्टोमादौ यथार्तिज्यमृत्विगर्हम-यागरूपमङ्गजातं दातुरितरैर्ऋत्विग्भिः कार्यं यजमानार्हं यागरूपं, यथास्यामपीत्याह—**तेनेति**। पूर्वाधिकरणेनैव दातृविषयत्वसिद्धौ प्रस्तुताधिकरणानर्थक्यमाशङ्क्य, वाक्यस्यो-पक्रमोपसंहारयोर्विरोधेन विधिरूपत्वेनोपसंहारबलीयस्त्वात् कृताया भ्रान्तेर्बलाबलविशेषा-नवधारणाद्वाकृतस्य संशयस्य व्युदासार्थं प्रस्तुतमधिकरणमित्याह—**एवमिति**। प्रस्तुतमेव पूर्वापेक्षयोत्तरमुक्तम्। उत्तरार्द्धं व्याचष्टे—**तस्यापि चेति**। प्रस्तुताधिकरणभाष्योक्तत्व-सूचनार्थं तस्येत्युक्तम्। भाष्योक्तस्य वाक्यस्यापीदृशमेव सामर्थ्यमित्यनेन पूर्वपदानामिति भाष्यव्याख्यार्थतयोत्तरार्द्धे व्याख्याते, भाष्यद्वाक्यसामर्थ्याप्रतीतेरुत्तरार्थस्य तद्व्याख्या-र्थत्वायोगमाशङ्क्य, पूर्वपदानां यथार्थमाञ्जस्येन वर्त्तमानानामुत्तरपदैः पूर्वपदाभिमुखैस्तदनु-कूलैः सहैकवाक्यत्वलक्षणसम्बन्ध इत्येवं सम्बन्धशब्दोक्तस्य वाक्यस्योपक्रमानुकूल्याधीन-त्वोक्त्या तदापादनसामर्थ्यादितिकर्त्तव्यताकाङ्क्षस्य वचनं प्रकरणमित्यत्राकाङ्क्षाया विशेषणभूतायाः प्रकरणलक्षणत्वप्रतीतिवच्च विशेषणभूतस्यापि सामर्थ्यस्य किं लिङ्ग-लक्षणत्वप्रतीत्युपपत्तौ संबन्धोक्त्या सूचितायां कथं भाष्यस्थायाः संबन्धोक्तेर्वाक्यवाचिते-त्याशङ्क्योपक्रमश्चोपसंहारश्चोपक्रमोपसंहारमितिद्वन्द्वैकवद्भावेन द्वन्द्ववाच्येतरेतरयोगोक्त्या-न्योन्यपदात्वयरूपवाक्यवाचिना सम्बन्धोक्तेः सूचिता। वाक्यं च तत्संबन्धश्चोपक्रमोप-संहारं चेत्यन्तपदद्वन्द्वगर्भस्त्रिपदः कर्मधारयः।

यावतोऽश्वानित्यादिपूर्वपदानुकूल्यस्य प्रतीग्रहीतृविषयत्वेप्युपपत्तेर्दातृविषयेष्टिविधि-सामर्थ्यायोगशङ्कानिरासार्थमिदं श्रूयते इत्यादिनिर्वपेदितीत्यन्तं भाष्यम्, अतइह यद्यपीत्या-दिना दातुरिष्टिर्विज्ञायतइत्यनेन वार्तिकेनानागतावेक्षणेन संदेहोपपादनवेलायामवयवशो

१. इति द्वितीये नास्ति।

व्याख्यातमपि तात्पर्यतो व्याचष्टे—**न हीति**। दातुरिष्टिर्विज्ञायतइत्यनेनोक्तमित्यर्थः। आहेत्याशङ्काभाष्यं प्रतिग्रहस्य कर्तुरिति पूर्वपक्षभाष्योक्तार्थवादबाधानुभाषणार्थत्वेन व्याचष्टे—**नन्विति**। एवंसतीत्यादिलक्षणया कल्प्यमित्यन्तभाष्यमुपक्रमस्याप्यर्थवादत्वेन दौर्बल्याद्विध्यर्थोपसंहारानुरोधेन व्याख्यानादुभयार्थवत्त्वोपपत्तेरयुक्तमाशङ्क्योपपादयितुमाह—**नैतदिति**। यदि लब्धात्मको विध्युद्देशः स्यात्, ततस्तेन स्तुतिर्बाध्येत। न त्वत्र प्रतिग्रहीतृविषयो विध्युद्देशः कल्पितो लब्धात्मकं इत्येवं श्लोकं व्याचष्टे—**यदीति**। कुतो लब्धात्मकत्वालब्धात्मकत्वे ज्ञायेते इति पृष्टोत्तरमाह—**कुत इति**। पुरस्तादर्थवादेषु मुख्यं चेति न्यायाद्यथाश्रुतत्वावगमेप्येतन्न्यायबाधेन दीक्षणीयादिषु पूर्वानुष्ठेयत्वानाख्येयपर्वकालत्वबाधवदङ्गगुणविरोधन्यायाद्यथाश्रुतत्वबाधावगतेस्तदनुसारेण विध्यर्थकल्पना न युक्तेत्याशङ्क्य प्रधानसाद्गुण्यार्थस्याङ्गगुणस्य पर्वकालत्वादेः प्रधानगुणविरोधे साद्गुण्यार्थत्वायोगाद्बाधो युक्तः, अर्थवादानां तु यथाकथंचित्प्राशस्त्यप्रतिपादनमात्रेण विधिसाद्गुण्यार्थत्वसिद्धेः, तद्यथाश्रुतत्वस्य प्रधानभूतविधिसाद्गुण्यार्थत्वाभावेन तादर्थ्यादिति बाधहेत्वभावान्न युक्तो बाध इति वैषम्यं सूचयितुमाह—**पुरस्तादिति**। दीक्षणीया–ज्योतिष्टोमादीनां पौर्वापर्यकृताद्बाध्यबाधकत्वविशेषादङ्गगुणविरोधन्यायबाध्याद्विध्यर्थवादादीनां पौर्वापर्यकृतो बाध्यबाधकत्वविशेषोङ्गगुणविरोधन्यायबाध्यत्वाभावेनान्यो विषयो भवतीत्यन्योक्त्या वैषम्यं सूचितम्। अर्थवादगुणस्य यथाश्रुतत्वस्य विधिसाद्गुण्यार्थत्वाभावेप्यर्थवादस्य विधिसाद्गुण्यार्थत्वसद्भावाद्'गुणलोपे च मुख्यस्य क्रिया स्यादि'१०-२-६३त्यनेन न्यायेन निर्वापेणाग्निहोत्रवहणीबाधवद्विधिनार्थवादबाधावगमात्पूर्वापरोच्चारणकृतविशेषायोगमाशङ्क्य, अर्थावधारणात् प्राग्विध्यर्थवादयोर्गुणप्रधानत्वानवगतेर्गुणलोपन्यायाविषयत्वं सूचयितुमाह—**सर्वत्रैव तावदिति**। आग्नावैष्णवसारस्वतादिष्वङ्गाङ्गित्वशून्येषु मुख्याग्नावैष्णवतन्त्रं पौर्णमासमावास्योपांशुर्याजविकारे सारस्वते प्रसङ्गेनोपकरोति, न पाश्चात्यसारस्वततन्त्रमामावास्य-माग्नावैष्णवइत्यङ्गाङ्गित्वशून्योग्ना-वैष्णवादिविषयद्वादशाधिकरणन्यायोपन्यासेनाङ्गाङ्गित्वशून्येन्द्रगार्हपत्यादिविषयश्रुतिलिङ्गाधिकरणन्यायोपन्यासेन च विध्यर्थवादबाध्यबाधकत्वस्य गुणलोपन्यायाविषयत्वं सूचितम्।

अनुपजातत्वात् प्रतिद्वन्द्विविरोधिद्वितीयं विज्ञानान्तरमनुत्पत्त्यवस्थं यस्य पूर्वविज्ञानस्य तत्तथोक्तं तस्य भावस्तत्त्वं तस्मादित्यर्थः। यद्यप्यन्यथात्वमापद्यते, तथापि प्रतिपद्यतेङ्गीकरोतीत्यपिशब्दार्थः। सामान्यंन्याय व्युत्पाद्यप्रकृतेयोजयन्नुपपादितमेवं सतीत्यादिभाष्यं व्याचष्टे—**तदिहेति**।' पश्चाद्भावितया विध्युद्देशस्यालब्धात्मकत्वेन विध्यर्थवादयोर्वा गुणप्रधानत्वस्यावधारणात् पश्चाद्भावितया विध्यर्थवादकृतबलाबलविशेषानाश्रयणाद्विध्युद्देशेनार्थवादबाधानुपपत्तेर्विध्युद्देशस्य प्रतिग्रहीतृविषयत्वे सत्युपक्रमोपसंहारयोर्विप्रतिपन्नार्थत्वेनानर्थक्यप्रसंगोक्त्यैवंसतीत्यादावुपसंहारोपीत्यन्ते भाष्यावयवे व्याख्याते 'पौर्वापर्ये पूर्वदौर्बल्यमि६-५-५४त्यनेन न्यायेन पश्चाद्भाविविध्यनुरोधेनार्थवादव्याख्यायोभयोःसंप्रतिपन्नार्थत्वादानर्थक्यपरिहारमाशङ्क्य—

पौर्वापर्यंबलीयस्त्वं तत्र नाम प्रतीयते । अन्योन्यनिरपेक्षाणां जन्म यत्र धियां भवेत् ॥ इति वार्तिकोक्त्याऽन्योन्यनैरपेक्षं विना परबलीयस्त्वायोगात्, तथा सति विध्युद्देशस्य पश्चाद्भावितया बलीयस्त्वाख्यविशेषाश्रयणे सत्यन्योन्यनैरपेक्ष्यापत्तेरेकवाक्यत्वासंभवप्रसङ्गादियुक्ते पृथग्वाक्यतैव तर्ह्यस्त्वित्याशङ्क्य पृथक्त्वे विध्यर्थवोदयोः प्ररोचनविधित्वसाकाङ्क्षत्वेनाऽपरिपूर्णार्थत्वापत्तावुक्तायां प्ररोचनान्तरकल्पनेन विध्यर्थवत्त्वं, विध्यन्तरकल्पनेन चार्थवादार्थवत्त्वमाशङ्क्य परस्परेत्युक्तम् । मीमांसापूर्वमुपसंहारस्योपक्रमानुरोधवृत्तित्वोक्त्यर्थं तस्मादित्यादिभाष्यशेषं व्याख्यातुमवश्यंभावात्माद्युक्तम् । न केवलमनुपसञ्जातविरोधावस्थायां श्रुतत्वादयमुपक्रमेऽनुग्राह्यः किंतु भूयस्त्वादपीत्यभिधानार्थमपि चेतिभाष्यं व्याचष्टे—**किंचेति** । चतुर्थीनयत्योरेवासामञ्जस्ये बह्वसामञ्जस्योक्त्यागमाशङ्क्य प्रत्यगृह्यादितीतिभाष्यस्थेनेतिकरणेन भृत्यर्थेन देवताशब्दस्याप्यसामञ्जस्योक्तेर्वहुशब्दं भाष्यस्थमुपपादयति—**प्रजापतिरिति** । उपसंहारे गृह्णातिमात्रसमञ्जसं तच्च नात्यन्तमित्यभिधानार्थं प्रतिगृह्णातीति भाष्यं व्याचष्टे—**मम त्विति** ।

उपसंहारस्थविधेरलब्धात्मकत्वेन दौर्बल्यमुपपादितमपि भाष्यस्थं शक्नोतिशब्दारूढं कर्त्तुं शङ्कानुभाषणपूर्वं विस्तरेणोपपादयति—**यत्त्विति** । न त्वित्यनेन विधेरलब्धात्मकत्वयुक्तमुपपादयितुं सामान्यन्यायं तावदाह—**सर्वत्र हीति** । अत्रैवदशमाधिकरणसिद्धं दृष्टान्तमाह—**तद्यथेति** । सामान्यन्यायं प्रकृते योजयति —**एवमिति** । कर्त्तव्यत्वाख्यविधिवद्विधिविषयस्यापि विधायकाख्यविध्येकसमधिगम्यत्वाद् विधिमात्रप्रार्थनायागशङ्कानिरासार्थवादस्यापि विधिस्तुत्येकविषयत्वान्यथानुपपत्त्या विधिविषयबोधशक्तिस्तुल्या चेत्यनेनोक्ता । विधेयेष्टिविषयभूतस्य दातुरर्थवादावगतत्वाद्विधेयविषयानपेक्षत्वेऽत्र वाच्ये विधिविषयोऽप्यत्र नापेक्ष्यते, किमुत विधेयविषयइत्यतिशयोक्तौ विधिमात्रप्रार्थनोक्ता । विधेयेष्टिविषयोक्त्यर्थः प्रतिगृह्णातिस्तर्ह्यनर्थकः स्यादित्याशङ्क्याह—**अत इति** । यथा चालब्धात्मकत्वेन विध्यविरोधो भाष्यस्थे शक्नोतिना सूचितः । तथैकवाक्यतोपगमनसामर्थ्यमुपसंहारासामञ्जस्यप्रमाणमपीति सूचयितुमाह—**अन्यथा हीति** । एककर्तृकस्याख्यानस्य परकृत्याख्यत्वेन, पुराकृत्याख्यत्वेन पुरा कल्पाख्यत्वाभावात् पूर्वकालमात्रविवक्षया पुराकल्पोक्तिः । शक्नोतिसूचितविध्यविरोधासामञ्जस्य प्रमाणोपपादनमुपसंहरति—**तस्मादिति** । अर्थवादैकवाक्यतया प्रवृत्तिरसामञ्जस्याक्षेपिकेच्छंशब्देन परामृष्टा । वाक्यानुरोधेन गृहीतिश्रुतिबाधायोगमाशङ्क्य, इतरथा वाक्यमेव नावकल्पेत तत्रानर्थका एवर्गादि शब्दा भवेयुरिति वाक्याधिकरणगतवेदो वा प्रायदर्शनादितिसिद्धान्तसूत्रस्थभाष्योक्तेन आनर्थक्यप्रतिहतानां विपरीतं बलमिति न्यायेन वाक्यात्यन्तानर्थक्यप्रसक्तौ श्रुतेरप्यसामञ्जस्यकल्पनोचितेति सूचयितुमाह—**तदिति** । वाक्यानुरोधात् श्रुत्यसामञ्जस्यौचित्यसूचनार्थं पूर्वपक्षसूत्रमप्यधिकरणोपलक्षणत्वेनोपन्यस्तम् । गतार्थत्वात्तर्ह्यनारम्भापत्तिरित्याशङ्कते—**ननु चेति** । गतार्थतामभ्युपगम्यार्त्विक्कर्तृकप्रतिग्रहवाचित्वेन सौत्रार्त्विजशब्दव्याख्यानप्रतिग्रहीतृविषयेष्टिसिद्धान्तप्रतिपादकभाष्यान्तरजनितभ्रान्तिनिवृत्त्यर्थत्वेनारम्भमुपपादयति—**सत्यमिति** ।

ऋगादिशब्दानां वेदेषु प्रयोगवद् गृह्णातेर्दाने क्वचित् प्रयोगादर्शनादृगादिवेदवच्च दानप्रतिग्रहयोरेकदेशैकदेशित्वाभावेन लक्षणायाः क्लिष्टत्वादधिकाशङ्कोपपत्तेर्गतार्थतापि नात्यन्तमस्तीति सूचनार्था प्रायोक्तिः । सूत्रकृतो भाष्यान्तरजनितभ्रान्त्यपनयार्थारम्भायोगात् भाष्यकृतश्च सूत्रव्याख्यार्थमेवारम्भोपपत्तेर्भ्रान्त्यपनयार्थत्वायोगमाशङ्क्य, भ्रान्त्यपनयार्थत्वाभावेऽस्य सूत्रद्वयस्य पूर्वाधिकरणान्तर्गतत्वेनापि व्याख्यातुं शक्यत्वान्न गतार्थता त्वयाऽप्याशङ्कितुं शक्येत्याह—**इतरथा हीति** ।

कथं शक्यमित्याशङ्क्य, सूत्रद्वयमपि पूर्वाधिकरणसिद्धान्ताक्षेपसमाधानार्थत्वेन स्वयं व्याचष्टे—**यो नामेति** । वैदिकत्वयागत्वसामान्ययोर्बुद्धिस्थत्वापादनार्थत्वेन सन्निधानाख्यस्थानरूपतया विध्युद्देशवाक्यबाधकत्वायोगादपरितोषेण यावतोऽश्वान् विनियुक्तः स दद्यादित्येवंविहिताश्वदानोपलक्षणत्वेन लिङ्गो वैदिकदानलिङ्गत्वेऽभिहिते विहितस्य दानस्य निमित्तत्वे क्रत्वैकान्तिकत्वेनेष्टेः क्रत्वर्थत्वादविहितस्य च क्रत्वनुपस्थापकत्वेन विधेयभावनोपस्थापितपुरुषार्थत्वापादकत्वाद्वैरूप्यापत्तेर्दानमात्रस्य निमित्तत्वायोगेन निमित्ततयोद्देश्यतापि दानस्य विशेषणाकाङ्क्षणान्मृष्यामहे हविषा विशेषणमितिवद् विहितत्वस्य दानविशेषणत्वसंभवेऽपि निमित्तत्वोपयुक्तस्य लिङ्गो विशेषकत्वायोगाल्लिङ्गत्वायोगमाशङ्क्य, प्राप्तनिमित्तत्वायोगात् प्रापकं च विनाप्राप्त्ययोगादात्मना च वाच्यत्वेनोपस्थापितस्य विध्याख्यस्य प्रापकस्य विरोधिनिषेधाभावात्संभवेनुपस्थापितरागादिप्रापकाक्षेपाद्विधिप्रापितस्यैव निमित्तत्वबोधनान्निमित्तत्वोपयुक्तस्यापि विशेषकत्वोपपत्तिमपि शब्दसूचितां प्रकटयितुं वैदिको दानाख्यः प्रतिग्रहो लिङ्गा विधेयविधातृत्वाख्यसंबन्धसंबद्धो न लौकिक इत्युक्तम् । अनेन च यदि केवलवैदिकत्वेनैकरूपं दानं स्यात्, ततो याज्ञे दानं इष्टिः स्याद्दानस्य तु लौकिकवैदिकत्वरूपेण भेदाद्वैदिकमेव निमित्तमिति निर्णयाशक्तेर्यथा दोषनिर्घातार्थताऽभावाल्लौकिकेनैतदिष्ट्याख्यकर्मचोदितं, तथा नाज्ञेऽपि दाने न चोदितमिति चकारेण याज्ञेपीत्यभिधानादाक्षेपसूत्रार्थवर्णने निर्णयकारणाभावमुक्तं निरसितुं निर्णयकारेणोक्तचर्यत्वेन लिङ्गोक्तिर्व्याख्याता ।

तत्सूत्रैतदाक्षेपनिरासार्थत्वेन वैकीकृत्य सूत्रद्वयं हेत्वर्थे चशब्दमङ्गीकृत्य यस्माल्लौकिकं दानमचोदितं, तस्माच्चोदितदानोपलक्षणार्थेन लिङ्गा लौकिके निमित्तत्वबुद्ध्यजननादृत्विक्प्रदानके याज्ञे दाने सेष्टिर्लिङ्गाख्यालिलिङ्गात्स्यादित्येवं पूर्वसूत्रान्यथायोजनपूर्वमुत्तरसूत्रं पूर्ववत् योज्यमित्याह—**अथ वेति** ।

केचित्त्वभेदमाचार्याः कर्मणामेवमन्वते इत्येतत्पक्षाश्रयणेन दानादिकर्मव्यक्तेर्देशकालादिभेदेऽपि गकारादिवर्णव्यक्तिवदभेदमङ्गीकृत्य लोकवेदयोर्दानाख्यस्य कर्मणो भेदाभावाद्वैदिकं निमित्तं, न लौकिकमिति व्यवस्था न युक्तेत्याशङ्कायां, स्वरूपभेदाभावेऽपि, चोदिताचोदितत्वाद्युपाधिकृतभेदसद्भाव[द्रूपभेदेऽपि हिंसादेर्भेदोङ्गानङ्गकारित] इत्यनेन न्यायेन निमित्तत्वव्यवस्था युक्तेत्येवं निरासार्थत्वेन कर्मभेदादिति सूत्रावयवं व्याचष्टे—**तत्रेति** ।

अधर्मशब्दवन्नञो विरुद्धवाचित्वान्निषिद्धवाचिनमचोदितशब्दमङ्गीकृत्य यस्मान्निषिद्धं लौकिकं दानं, तस्मात्तस्य वेददृष्टेन सिद्धान्तेनाभावान् निमित्तत्वानुपपत्तेः सेष्टिरसंदिग्धसद्भावबोधकाल्लिङ्गाख्याल्लिङ्गादार्त्विजे स्यादित्येवमङ्गीकृत्यैवं सूत्रद्वयमुत्सूत्राक्षेपनिरासार्थत्वेनान्यथा व्याचष्टे—**प्रतिषिद्धत्वाच्चेति** ।

यावच्छब्दस्य सप्तमीवन्निमित्ते स्मृत्यभावादेकस्याश्चेष्टेस्तन्त्रेणानेकदानोपकारित्वसंभवेप्यश्वसंख्याकेष्टिविधेये यावच्छब्दोपपत्तेर्दानेष्ट्यन्वयमात्रे विधिपर्यवसानादिष्टेः कैमर्थ्यापेक्षायां वाक्यगम्यदानाङ्गत्वत्यागहेत्वभावेन दानस्यैवेष्टिं प्रति शेषित्वावगतेर्लौकिकस्य वा चोदितत्वेन निष्प्रयोजनत्वाच्छेषित्वानुपपत्तेः सेष्टिश्चोदितत्वेन प्रयोजनवत्त्वबोधकाल्लिङ्गाख्याल्लिङ्गादार्त्विजे स्यादित्येवमन्यथा व्याख्यां सूचयितुमाह—**न चेति** । अस्मिन्नपि व्याख्याद्वये कर्मभेदादिति सूत्रावयवं पूर्ववच्छङ्कानिरासार्थत्वेनैव व्याख्येयः ।

अधिकरणान्तरारम्भस्य भाष्यान्तरजनितभ्रान्त्यपनयार्थत्वोपसंहारायाऽनेन प्रकारेण पूर्वाधिकरणान्तर्गततया चतुर्द्धा व्याख्याने संभवत्यपि, यदधिकरणान्तरकरणं तद्भाष्यान्तरजनितभ्रान्त्यपनयनवशेनेत्याह—**इतीति** । गतार्थत्वाभ्युपगमेनाऽधिकरणान्तरारम्भं प्रौढ्योपपाद्य, वस्तुतः प्रायशब्दसूचितशङ्काविशेषनिरासार्थत्वेनोपपादयितुमाह—**गृह्णातीति** ।

वेदत्रयविदि त्रयीविद्यशब्दप्रयोगात् त्रयीशब्दस्य च त्रैविदो विदुः ऋचो यजूंषि सामानीति समभिव्याहारादृग्यजुसामविषयत्वावगते (तै० ब्रा० १-१) ऋग्यजुः सामशब्दानां वेदेषु प्रयोगादृग्भिः प्रातर्दिवि देवईयते इत्यत्र च वेदैरशून्य इति बहुवचनादृकशब्दादेः स्पष्टं वेदे प्रयोगावगतेः, गृह्णोतेस्तु दानक्रियायां क्वचित् प्रयोगादर्शनात्, दानप्रतिग्रहयोश्च वेदर्गादिवदेकदेशैकदेशित्वाभावेनान्यन्तभेदाल्लक्षणानुपपत्तेर्गृह्णातिशब्दो दृढामिष्टेः प्रतिग्रहीतृविषयत्वभ्रान्तिं कुर्वन्कथं चिल्लक्षणाया नेतव्य इत्येतदर्थं वाधिकरणान्तरकरणमित्यर्थः ।

कीदृशी लक्षणेत्यपेक्षायामाह—**प्रयोजकेति** । 'यया कया चिदितिभाष्यावयवसूचितां लक्षणावृत्तिं दर्शयित्वा, योहीत्यादिभाष्योक्तां मुख्यवृत्तिमुपपादयितुमाह—**अथ वेति** । स्वतन्त्रस्य कर्त्तुः प्रयोजके हेतुसंज्ञकेऽपि कर्त्तरि प्रयोजकव्यापारं प्रति स्वातन्त्र्यलक्षणकर्तृत्वसद्भावात्, तत्र च हेतुत्वविवक्षायां प्रयोजकत्वलक्षणत्वाद्धेतुत्वस्य प्रयोजकव्यापाराख्यं च तत्समर्थाचरणं विना प्रयोजकत्वायोगाद्धेतुमन्तं तत्समर्थाचरणाख्यं प्रयोजकव्यापारं वक्तुं हेतुमतिचेति सूत्रविहितोणिच्प्रत्यय उपपद्यते हेतुत्वानपेक्षस्वातन्त्र्यलक्षणकर्तृत्वविवक्षायां तु ज्वालाद्यनभिधानेऽपि तदपेक्षया काष्ठादीनां पाके कर्तृत्वविवक्षोपपत्तिवत् प्रयोजकव्यापारानभिधानेऽपि, तदपेक्षया प्रयोज्यव्यापारे स्वातन्त्र्यविवक्षोपपत्तेः । प्रयोजकव्यापारवाचिणिच्प्रत्ययाभावेऽपि य प्रतिग्रहः प्रयोजकव्यापारे स्वतन्त्रः सत्करोति स गृह्णातीति शक्यो वक्तुमित्यर्थः ।

अनेन च येन संविधानाख्यातत्समर्थाचरणरूपेण प्रयोजककर्मणा प्रयोज्यक्रियाप्रणाड्यापि सिध्यति, तत्प्रयोजककर्म य आचरति—आभिमुख्येन चरति स्वातन्त्र्येण करोति, स तस्याः प्रयोज्यक्रियाकर्तेति शक्यो वक्तुमित्येवं भाष्यं व्याख्यातं प्रयोजकक्रियाविषयस्य स्वातन्त्र्यस्य

प्रयोज्यकर्मण्युपचारे दृष्टान्तोक्त्यर्थं यथेतिभाष्यमनुपात्तप्रयोजकक्रियाविषयस्य स्वातन्त्र्यस्य प्रयोजकर्मण्युपचारायोगादयुक्तमाशङ्क्य, प्रयोज्यक्रियया प्रयोजकक्रियाक्षेपोक्त्योपपादयति—**यथेति**। प्रयोजकव्यापारे हेतुकर्तृत्वाभावात्, तद्वाचिनो धातोः परतो णिच्प्रयोगायोगापत्तेः प्रतिग्राहयतीति व्यवधारणकल्पनायोगप्रसङ्गाद् णिजन्तछूयस्यापि धातोः प्रयोजकव्यापारवृत्तौ दृष्टान्तोक्त्यानर्थक्यापत्तेः प्रयोजकव्यापारविषयस्य स्वातन्त्र्यस्य प्रयोज्यव्यापारे भाष्योक्तोपचारोपपादनाय, आक्षिप्तप्रयोजकव्यापारप्रयोज्यव्यापारवाचित्वोक्त्यर्थत्वेनैवाऽस्य ग्रन्थस्य व्याख्येयत्वात्प्रयोजकस्य स्वामिनः संविधानाख्यो व्यापारोऽस्याऽस्तीति व्यधिकरणबहुव्रीहिं विगृह्य, तच्च तत्प्रयोजकव्यापारं चेति विलेखनपरामर्शिना तच्छब्देन कर्मधारयविग्रहात्तस्मिन्नाक्षिप्तप्रयोजकव्यापारे विलेखने कृषिर्वर्त्ततइत्येवं योज्यम्। षड्ढलोपादानसामर्थ्योपपादनाय नहीत्युक्तम्। भृतिदानाख्यस्य संविधानस्य विलेखनसमर्थविलेखित्राचरणत्वेन प्रयोजकव्यापारत्वोपपादनार्थं तत्समर्थमिति भाष्यावयवं व्याचष्टे—**तेनेति**। दार्ष्टान्तिके योजनार्थमेवमितिभाष्यमप्याक्षिप्तप्रयोजकव्यापारप्रयोज्यव्यापारवाचित्वोक्त्यैव पूर्ववदुपपादयति—**तद्वदिति**। प्रयोजकस्य दातुर्दानाख्यो व्यापारः प्रतिग्रहसमर्थप्रतिग्रहीत्राचरणरूपोऽस्यास्तीति व्यधिकरणबहुव्रीहिगर्भत्वात्, स च प्रतिग्रहश्चासौ प्रयोजकव्यापारश्चेति कर्मधारयाक्षिप्तदानाख्यप्रयोजकव्यापारप्रतिग्रहाख्यप्रयोज्यव्यापारवाचितैव गृह्णातेरुक्ता। ग्रह उपादान इति प्रयोज्यव्यापारमात्रे गृह्णातिस्मृतेराक्षिप्तप्रयोजकव्यापारवाचित्वायोगमाशङ्क्य, आक्षिप्तेतरप्रयोज्यादिव्यापारवाचित्वेन धातूनां विचित्रशक्तित्वस्य कदाचिदभिधीयमानकर्मशक्त्याक्षिप्तप्रयोज्यव्यापारः, स्वयमाक्षिप्तप्रयोज्यव्यापारो वेत्यादिभावार्थाधिकरणवार्त्तिकदर्शितत्वात् प्रयोज्यव्यापारमात्रवाचिनोऽपि प्रयोजकव्यापाराक्षेपकत्वाविरोधमाह—**विचित्रेति**।

पचेर्विक्लेदनफलकाधिश्रयणादिप्रयोजकव्यापारवाचित्वप्रसिद्धेर्विक्लेदनाख्यप्रयोज्यव्यापाराक्षेपकत्वं पक्तृकौशलविवक्षया च तण्डुलाः शीघ्रं विक्लिद्यन्तीति प्रयोगे प्रयोजकव्यापाराक्षेपं विना पक्तृकौशलविवक्षाऽशक्तेर्विक्लिदेः प्रयोजकव्यापाराक्षेपकत्वं भावार्थाधिकरणोक्तं युक्तं, गृह्णातेस्तु दातृव्यापारानपेक्षे स्वयंग्रहणेऽपि प्रयोगात्प्रयोजकदातृव्यापाराक्षेपकता न युक्तेत्याशङ्क्य, वैक्लिद्यादीनां प्रयोजकव्यापाराक्षेपकत्वेनाप्रसिद्धानामपि पक्तृकौशलविवक्षादिसहकारिकारणसंनिधानात् तदाक्षेपकशक्त्यभिव्यक्तिवद्दातृव्यापाराक्षेपशक्त्यभिव्यक्त्युपपत्तेस्तदाक्षेपतामुपपादयितुमाह—**तेषामिति**। दातरिप्रतिग्रहीतृत्वोक्त्युपपत्त्युपसंहारार्थं तस्मादितिभाष्यं कर्तृव्यापारस्य प्रतिग्रहसमर्थप्रतिग्रहीत्राचरणत्वेन णिजर्थप्रयोजकव्यापारत्वात्तद्विषयंस्वातन्त्र्यम्, अन्यथा प्रतिग्रहविषयत्वेनावधार्येदमवक्लृप्तं भवति, यदुत दानं कुर्वन् प्रतिगृह्णातीत्युच्यतइत्येवं व्याचष्टे—**तस्मादिति**। ददातेर्दानस्यार्थेष्वसिद्ध्यै साध्यत्वात् प्रयोजनप्रतिग्रहप्रतिगृह्णातिशब्दः प्रयुक्तो न तु दातृव्यापारनपेक्षे प्रतिग्रहमात्र इत्यर्थः। तस्य चेति सिद्धान्तोपसंहारभाष्यं ततश्च तस्य ददतो वारुणीष्टिरित्येवं व्याचष्टे—**इतीति**। इतिकरणः ततश्चेत्यस्मिन्नर्थे चकारव्याख्यार्थः।

शाखान्तरे प्रतिग्रहीतृविषयत्वेनैवोपक्रमात् भाष्यान्तरकृतैव व्याख्यायुक्तेत्याशङ्कते—**एवमिति**। वचनानालोचनयाधिकरणोपपत्तिं परमतेनाह— **तत्रेति**। न्यायव्युत्पादनस्यानुष्ठानार्थत्वाद्वचनविरोधितयाऽर्थस्याननुष्ठेयत्वादेतत्समाधानापरितोषेण वचनालोचनेऽप्यधिकरणोपपत्तिं स्वमतेनाह—**स त्विति**। श्लोकं व्याचष्टे—**यथोदाहृतेन तावदिति**। अतिशयार्थं यद्यपिहीत्युक्तम्। शाखान्तरस्थदातृविषयोपक्रमवाक्यवत् कर्माऽङ्गत्वेनावगताया इष्टेः शाखान्तरे प्रभेदात्कर्माङ्गत्वावगतेस्तद्वशेनोपक्रमानालोचनेऽपि दातृविषयत्वावगत्युक्त्या यदि वाक्यान्तरं पूतिग्रहीतृविषयं स्यात्, ततो द्वयोर्भविष्यति। न तु वाक्यान्तरमपि प्रतिग्रहीतृविषयं शाखान्तरावगतकर्माङ्गत्वे ष्टिविषयतया स्पष्टं स्वातन्त्र्येण कर्माङ्गत्वमनपेक्ष्य प्रतिग्रहीतृविषयत्वावधारणाशक्तेरित्येवं प्रतिग्रहीतृविषयत्वनिरासार्थत्वेन पादत्रयं वास्तवार्थोक्त्यर्थतया व्याख्याय, प्रतिग्रहीतृविषयत्वाभ्युपगमेऽपि दातृविषयत्वाविरोधोक्तिशक्तिप्रदर्शनाय, अथ त्वित्यनेनान्यथा, व्याख्या कृता।

वाक्यान्तरविरोधापरिहारेण दातृविषयत्वव्याख्यां समाधाय, प्रतिग्रहीतृविषयत्वव्याख्यां पूर्वाधिकरणविरोधेन दूषयति—**प्रतिग्रहीत्रिति**। दातृविषयत्वव्याख्यायामार्त्विजशब्दानार्जवमाशङ्क्य, पूर्वाधिकरणसिद्धान्तसूत्रस्थस्य याज्ञशब्दस्याऽनुपसञ्जातविरोधात्रस्थायां श्रुतत्वात्, अन्यथा वा शक्यव्याख्यानत्वात्, तदनुरोधेनानार्जवौचित्यं सूचयितुमाह—**यत्त्विति**। वचनालोचनेऽप्यधिकरणोपपत्तिमुपसंहरति—**तस्मादिति**। वाक्यान्तरस्यापि प्रतिग्रहीतृविषये ह्यवधारणाशक्तेर्मृदूक्तिमात्रार्थस्तावच्छब्दः ॥ ३५ ॥

इति दशममश्वप्रतिग्रहेष्ट्यधिकरणम्।

भा० प्र०—प्रदर्शित पूर्वपक्ष के समाधान के लिए सिद्धान्ती का कहना है कि "स्वामिनो वा" = यह सोमवाभिचरु यजमान के लिए ही कर्तव्य है, कारण, "तदर्थत्वात्" = यज्ञ में सोमपान किया जाता है, वह यजमान के पान विशेष की विपत्ति में उस यज्ञ का वैगुण्य है। सोमेन्द्रचरु के प्रभाव से उस वैगुण्य का समाधान होता है, किन्तु ऋत्विजों के मध्य में यदि कोई वमन करता है तो उसमें क्रतु की क्षति नहीं हो सकती है, क्योंकि वे उस क्रतु के फलभागी नहीं हैं। इसलिए ऋत्विजों के वमन में वह अनुष्ठेय नहीं है।

"स्वामिनः" = स्वामी का अर्थात् यजमान का कर्तव्य है "वा" = पूर्वपक्ष के निरास के लिए है, "तदर्थत्वात्" = क्योंकि यज्ञ में सोमवमन होने पर वह अनुष्ठान उस यज्ञ की पूर्णता के लिए ही अनुष्ठेय है ॥ ३५ ॥ सिद्धान्त

## लिङ्गदर्शनाच्च ॥ ३६ ॥

**शा० भा०—लिङ्गं च भवति, 'यजमानस्य सोमवामिन' इति। कथम्? सोमपीथेन वा एष व्यृध्यते, यः सोमं वमतीति। यजमानः सोमसंस्कारे विनष्टे विगुणमस्य कर्मेति व्यृध्येत, न कथंचिदृत्विजो व्यृद्धिः ऋत्विजो यस्य सोमं**

**वमन्तीति वमनेन संबन्धः स्यान्न यः सोमं वमतीति। तस्मादपि पश्यामो यजमानस्य वमने सोमेन्द्रमिति ॥ ३६ ॥ हेतुः ॥ ¹सौमेन्द्रचरोर्यजमानपानव्यापद्विषयताधिकरणम् ॥ १३ ॥**

त० व०—व्यृध्यत इति, स वक्तव्यो यस्य सोमपानादृद्धिः प्रार्थ्यते, तद्वैगुण्याच्च व्यृद्धिराशङ्क्यते, स्वामिनश्च तदुभयमपीति तस्यैवेष्टिः ॥ ३६ ॥

इति त्रयोदशं यजमानसोमवमने इष्टिविधानाधिकरणम् ॥ १३ ॥

**अथैकादशं वमनाधिकरणम्**

न्या० सु०—वमनस्याश्वप्रतिग्रहवत्साक्षाद्वैदिकत्वाभावात् लौकिकवैदिकविषयत्वसाम्येन चिन्तायाः प्रासङ्गिकत्वायोगेनाऽसङ्गतिमाशङ्क्य, नारम्यवादविषयत्वात् प्रसङ्गोपपत्ति सूचयितुमाह—**अयमपीति**। अश्वप्रतिग्रहवाक्यस्याप्यनारम्यवादत्वोक्त्यर्थोपिशब्दः। साक्षाद्वमनस्य वैदिकत्वाभावेऽपि वमनीयसोमद्वारा वैदिकत्वोपपत्तेः लौकिकवैदिकविषयत्वेनापि प्रसङ्गोपपत्तिमुत्तराधिकरणस्यापि चार्त्विजयाजमाननिमित्तचिन्तार्थत्वसाम्येन प्रसङ्गोपपत्ति सूचयितुमाह—**तत्रेति**। क्रियतइति वक्तुं प्रत्यये प्रयोक्तव्ये तदनुग्रहायाऽधिकरणरूपत्वादनुवादभूता विचारयतिर्धातुः प्रयुक्तः। निमित्तविवेकसहितसंदेहोक्त्यर्थं तत्रेत्याद्यासेव्यमानेसोमइत्यन्तं भाष्यं व्याचष्टे—**किमिति**।

भाष्यकारीयस्य लौकिकविषयत्वपूर्वपक्षमात्रातिदेशार्थत्वेन सूत्रव्याख्यानस्योपलक्षणार्थत्वं मत्वा, स्वयं द्विविधपूर्वपक्षातिदेशार्थत्वेन तावद्व्याचष्टे—**तत्रेति**। व्यवहितातिदेशदोषपरिहारायाऽधिकरणद्वयातिदेशार्थत्वेन व्याचष्टे—**अथ वेति**। 'दोषात्त्वित्यधिकरणपूर्वपक्षसिद्धान्तयोर्द्वयोरप्यस्मिन्नधिकरणेतिदेशसंभवेप्युत्तराधिकरणे वैदिकसर्ववमननिमित्तत्वपूर्वपक्षकरणादृत्विङ्मात्रविषयाचोदितं चेत्यधिकरणपूर्वपक्षातिदेशायोगात् सिद्धान्तरूपेणेत्युक्तम्। जलोदरवदिन्द्रियव्यर्धेरप्यनन्तरानुपलम्भेन। दोषादित्याद्याधिकरणपूर्वपक्षहेतुनिरासादश्वप्रतिग्रहेष्टिवच्च वमनेष्टेरपि कर्माङ्गत्वेनैवर्त्विक्कर्तृकवमननिमित्तकत्वनिरासेन सर्वकर्तृकवमननिमित्तकत्वद्वितीयाधिकरणपूर्वपक्षनिराससिद्धेरधिकरणद्वयपूर्वपक्षायोगमाशङ्क्याह—**केनचित्त्विति**। को सौ विशेष इत्यपेक्षायां प्रस्तुताधिकरणपूर्वपक्षे तावद्वैगुण्याख्यदोषनिरासार्थत्वाभ्युपगमेन सिद्धान्तिना दोषनिर्घातार्थत्वस्येष्टत्वाद्वैदिके च नाममात्रेण द्रव्यप्रतिपत्तिसिद्धेर्वैगुण्याभावेन तत्प्रतिसमाधानार्थतायामिष्टिविध्यानर्थक्यप्रसंगात्, लौकिके तु रसायनवैगुण्येनेन्द्रियहीनत्वाख्यदोषसंभवात्, तत् प्रतिसमाधानार्थेष्टिविध्यर्थवत्त्वोपपत्तेर्विशेषमाह—**तत्रेति**। द्वितीयाधिकरणपूर्वपक्षेप्यश्वप्रतिग्रहवदेवेतिवार्त्तिके वक्ष्यमाणमृत्विक्कर्तृकवमननिमित्तत्वेऽपि यजमानकवाविरोधाख्यं विशेषं सूचयितुं तावच्छब्दः। विशेषोक्त्यैव सिद्धं पूर्वपक्षमुपसंहरति—**तस्मादिति** ॥ ३६ ॥

---

१ ब. क० सौमेन्द्र।

भा० प्र०—ऋत्विजों के वमन करने पर सोमेन्द्रयाग कर्तव्य नहीं है, कारण, "लिङ्गदर्शनात् च" = श्रुति में कहा है "सोमपीथेन वा एष व्यृध्यते, यः सोमं वमति" जो पुरुष सोमवमन करता हैं वह उस सोमपान फल की समृद्धि से रहित होता है। इस स्थल में "यः वमति स व्यृध्यते" जो वमन करता है, वह सोमपान के फल की समृद्धि से विमुक्त होता है, यह कहने से यही सूचित होता है कि वमन करने वाले यजमान के लिए ही याग कर्त्तव्य है, कारण, सोमपान के फल में ऋत्विजों को किसी प्रकार की समृद्धि नहीं होती है। अतः वे समृद्धि से विमुक्त होते हैं—यह नहीं कहा जाता है, किन्तु श्रुति ऐसा कहती है "सोमवमन करने वाला सोमपान जन्य समृद्धि से विमुक्त होता है, इसलिए सोमपान जन्य समृद्धि यजमान के लिए होकर केवल यजमान के लिए ही सोमवमन करने पर सोमेन्द्रयाग कर्त्तव्य हैं ॥

"लिङ्गदर्शनात् च" = लिङ्ग अर्थात् ज्ञापक वेदवचन दृष्टि होने से ऋत्विजों के वमन में सोमेन्द्रयाग कर्तव्य नहीं है ॥ ३६ ॥

इति १३ वाँ यजमान के सोमवमन में इष्टि विधानाधिकरण ॥

## अथ चतुर्दशं सर्वप्रदानाधिकरणम्

## [१४] सर्वप्रदानं हविषस्तदर्थत्वात् ॥ ३७ ॥ पू०

**शा० भा०—स्तो दर्शपूर्णमासौ। तत्र समाम्नायते 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति। तत्र संदेहः—किं कृत्स्नं हविरग्नये प्रदातव्यम्, उत शेषयितव्यं किंचित्, किंचिद्दातव्यमिति। किं प्राप्तम् ? कृत्स्नं हविः प्रदीयेत। कुतः ? तदर्थत्वात्। पुरोडाश आग्नेयः कर्तव्य इति वचनम्। तस्मात्सर्वं प्रदातव्यमिति ॥ ३७ ॥ पूर्वपक्षः ॥**

## अथ चतुर्दशं सर्वप्रदानाधिकरणम्

त० वा०—अष्टाकपालादिशब्दैः समस्तं द्रव्यं देवतार्थमवगमितम्, आहवनीयप्रक्षेपेण च हविषो देवतार्थता भवति, 'यदाहवनीये जुह्वति' इति विधेः, 'अग्निमुखा वै देवाः' इति चार्थवादात्। एवं च सति ततश्चेत्किंचिदप्यपनीयेत, तदाऽन्यच्छ्रुतमन्यत्क्रियेत। तस्मात्सर्वप्रक्षेपः।

किं पुनरयं पूर्वपक्षवादी शेषकार्याणां स्विष्टकृदिडाप्राशित्रयंयुवाककालभक्षचतुर्धाकरणानां विधिं न पश्यति ? सत्यं न पश्यति।

सत्यं न पश्यतीति केचित्। न त्वेतद्युक्तमिव। न ह्येवं क्वचित्पूर्वपक्षो न भवेत्। अतः पश्यन्नेवाऽनेनाऽभिप्रायेण यन्त्रयत इति वक्तव्यम्।

विद्यमानेषु शेषेषु द्रव्याणामप्रयोजकाः।
भवेयुः शेषभाजो हि निःशेषे तु प्रयोजकाः॥

यदा हि द्व्यवदानमात्रे हुते, पुरोडाशादयः सशेषाः क्रियन्ते, तदा 'उत्तरार्धा-

त्स्विष्टकृते समवद्यति' इत्येवमादिचोदनावशेन 'एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात्(४-१)' इत्येवं स्विष्टकृदादीनामप्रयोजकत्वं भवति। यदा तु खलु सर्वप्रदानमवगम्यते, तदा विद्यमानसंयोगासंभवात् चोदितैकदेशानुष्ठानानुपपत्त्या शक्यमेकदेश्युत्पादनवध्यवसातुमिति स्विष्टकृदाद्यर्थं पुरोडाशान्तराण्युत्पाद्येरन्।

शेषशब्दः 'शेषात्स्विष्टकृते समवद्यति' इत्यादिषु कथमिति चेत् ?

उच्यते—

हविरन्तरमालोच्य शेषशब्दो भविष्यति।
आज्येन शेषमितिवत्तच्छेषेणेतिवच्च नः॥

यथैव 'आज्येन शेषं संस्थापयति' इति पूर्वकर्मणः पर्यवसानादधिके पूर्वसदृशे वा शेषशब्दः प्रयुज्यते। यथा च 'ततः शेषेण विशिष्टदेशजात्यादिमन्तो जन्म प्रतिपद्यन्ते इति स्वर्गफलकर्मणो निःशेषोपयोगादन्यफलस्य चान्यत्र व्यापारासंभवात्ततोऽन्येनेति वक्तव्ये, 'ततः शेषेणे'ति गौतमाचार्येणोक्तम्। एवमिहापि यत्प्रधानहविर्भ्योऽन्यद्धविः तेनैवान्यत्वेन, आधिक्येन वा भविष्यति। अथवा गुणत्वेन वा शेषादित्येवमभिधास्यते। शेषशब्दो ह्युपयुक्तेतरद्विद्यमानं ब्रवीति। न च प्रधानहविषां किंचिद्विद्यते। अन्येषां च सर्वमेतद्रूपमस्ति। तस्माद्द्रव्यान्तराणि गृह्येरन्। यथा वक्ष्यति 'निर्देशात्तस्यान्यदर्थादिति चेत्' इति।

अथाप्यत्यन्तं शेषशब्दानुरोधं कृत्वा तेषामेव किंचिच्छेष्यते। तथाऽप्यस्त्येवान्यद्विचारस्य प्रयोजनम्। नावश्यं पक्षोक्तेनैव प्रयोजनेन भवितव्यम्।

इदमपि संभवति। यदा प्रधानवाक्यादशेषप्रदानप्रसक्तौ सत्यां, शेषकार्यवशेन शेषाः स्थाप्यन्ते, तदा यथैव प्रधानं तस्य हविषः प्रयोजकम्। एवं स्विष्टकृदादीन्यपीति। तदर्थावदाननाशदोषापहारेष्वपि प्रधानवदेव हविरन्तरमुत्पाद्येत।

यदा पुनः प्रधानचोदनाक्षिप्तस्यैव शेषस्य स्विष्टकृदादीनि ग्राहकाणि भवन्ति, तदा तेषां परप्रयुक्तद्रव्योपर्जावनादप्रयोजकत्वे सति नाशदोषापहारेष्वप्यक्रिया सिद्धा—भवति। तस्मात्सत्यप्युभयोः पक्षयोरसर्वप्रदानेऽस्ति प्रयोजनमित्यर्थवान्विचारः॥ ३७॥

न्या० सु०— अतिदेशाधिकरणत्वेन पूर्वोक्तानामेव वैदिकत्वसामान्य-फलकल्पनलाघवश्रुतदोषनिर्घातार्थत्वायोगानां सिद्धान्तहेतूनां वाच्यत्वात्, वृत्तानुपेक्ष्य दोषनिर्घातार्थत्वेनैव सिद्धान्तोक्त्यनौचित्यं शङ्कते—**तैरेवेति**। वैदिकत्वसामान्यस्यायोगात्, फलकल्पनलाघवस्य चात्रापि भाष्यकृतोक्तत्वात्, इन्द्रियवीर्यशब्दोपलक्षितसोमयागफलस्वर्गादिव्यवृद्धेश्च वाक्योपात्ताया वमनजन्यत्वसम्भवेवेष्टेस्तन्निर्घातार्थत्वसम्भवाद्दोषनिर्घातार्थत्वेन सिद्धान्तोक्त्यौचित्यमाह—**न हीति**। पानमात्रात्प्रतिपत्तिसिद्धेर्वैगुण्याभावेवेन्द्रियवीर्यशब्दोपलक्षित प्रधानफलवृद्धययोगाद्वैहिके दोषायोगमाशङ्क्याह—**तथा हीति**।

सम्यग्जरणान्वायाः प्रतिपत्तेर्विधानात्, तद्गमनेन सोमपानजन्यप्रतिपत्तिव्यापत्तौ यथा सोमपानात्पूर्वं प्रधानफलं स्वर्गादि न भवति, तथा सोमपाने कृतेऽपि न स्यादित्युक्ते सम्यग्जरणस्याविधानात्तत्पर्यन्तत्वायोगमाशङ्क्य. पानस्योत्सर्गतः सम्यग्जरणपर्यन्तत्वात्, पीतस्यापि च सोमस्य सम्यग्जरणात् प्रागविनष्टत्वात् प्रतिपत्त्यपेक्षोपपत्तेः, याज्ञिकानां चाग्नौ प्रतिपाद्य पुरोडाशादिभस्मसाद्भावादरदर्शनेन नाशपर्यन्तप्रतिपत्त्यवगमात्, सुसमिद्धे जुहुयुरिति च प्रदीप्ताग्न्यधिकरणत्वनियमस्य दृष्टार्थत्वाय भस्मसाद्भावार्थत्वात् प्रतिपत्त्यर्थत्वावगतेः, तदादरस्य वेदमूलत्वाद्विशेषतश्च सोमपानस्य हिन्वमेगात्राहरिवइत्यादिमन्त्रपाठात्सम्यग्जरणपर्यन्तत्वविध्यवगमं सूचयितुं—सम्यग्जीर्यंते पीयमानमनेनेति। सम्यग्जरणसम्यग्जीर्त्तिसाधनं रूपमुत्सर्गाख्यः स्वभावो यस्य पानस्य तदनेनेति सम्यग्जरणेन प्रतिपाद्य द्रव्यरूपस्यान्तो नाशो यथा प्रतिपत्त्येति वा विग्रहविवक्षया रूपोक्तिः। प्रतिपत्तिनाशेपीन्द्रियवीर्यनाशात्प्रधानफलस्य चेन्द्रियवीर्यशब्दाभ्यामनुक्तेर्वैदिके दोषायोगमाशङ्क्य, यथाश्रुतस्य लौकिकेप्यभावात् कदाचिद्भावेऽपि वैदिकोपायानपेक्षत्वाद्दोषनिर्घातार्थत्वविध्ययोगापत्तेर्वैगुण्यं वीर्येन्द्रियवृद्ध्युक्त्या विवक्षितव्यम्। तच्च वैदिकेपि तुल्यमिति, परिहारसूचनपूर्वं श्लोकं व्याचष्टे—न च तावदिति।

अनेन चार्थाद्धीति सूत्रावयवो लौकिके पुनरिति भाष्यं च वैदिके दोषोपपादनार्थत्वेन व्याख्यातम्। वीर्येन्द्रियवृद्ध्युक्तेरर्थवादमात्रत्वेनेष्टेर्दोषनिर्घातार्थत्वानवगमात्, तत्तद्वशेन वैदिकविनयत्वोक्त्ययोगशङ्कार्थत्वेनाऽर्थापीति भाष्यं व्याचष्टे—अथ त्विति। दोषनिर्घातार्थत्वायोगशङ्कार्थत्वसूचनार्थस्तुशब्दः। दोषनिर्घातार्थत्वाभावाभ्युपगमेनापि वैदिकविषयत्वोक्तिप्रदर्शनेन परिहारार्थं तथापीति भाष्यं व्याचष्टे—ततइति। वैदिकेपि वमनस्यानङ्गत्वेन क्रत्वनुपस्थापकत्वात् कल्पनापत्तिसाम्यमाशङ्क्य, पानद्वारा क्रतूपस्थापकतामाह—वैदिके त्विति ॥ ३७ ॥

इति दशमं वमनाधिकरणम्।

भा० प्र०—दर्शपूर्णमासप्रकरण में "यदाग्नेयः अष्टाकपालः अमावास्यायां पौर्णमास्यां चाच्युतो भवति" आठ कपाल संस्कृत आग्नेय = अग्निदेवता के उद्देश्य से कृत जो पुरोडाश हैं, वह अमावस्या और पूर्णमासी में च्युत नहीं होता है। यह पुरोडाशरूप हविर्द्रव्य सभी अग्नि देवता के उद्देश्य से प्रदान करना होगा या कुछ अंश रख कर प्रदान करना है—यह सन्देह है।

पूर्वपक्षी का कहना है कि "सर्वप्रदानं" = पुरोडाश स्वरूप हविर्द्रव्य का सभी अग्निदेवता को दान करना होगा या अग्निदेवता के उद्देश्य में त्याग करना होगा। कारण, "हविषः तदर्थत्वात्" आग्नेय इस शब्द में जो तद्धित प्रत्यय है, उससे अवगत होता है कि सभी हविर्द्रव्य अग्नि का है। जो अग्नि का वह सभी अग्नि को देना उचित है, कुछ अंश अवशिष्ट रखना कर्तव्य नहीं है॥

"सर्वप्रदानं" = हविर्द्रव्य का सभी प्रदान करना चाहिए, "हविषः तदर्थत्वात्" क्योंकि सभी हविर्द्रव्य उस देवता के लिए ही है ॥ ३७ ॥ पूर्वपक्ष

## निरवदानात्तु शेषः स्यात् ॥ ३८ ॥

**शा० भा०—निष्कृष्यावदानं निरवदानम्। तद्धि श्रूयते 'द्विर्हविषोऽवद्यति' इति। अपरमपि वचनं 'द्व्यवदानं जुहोति' इति। तेन द्व्यवदानमात्रं होतव्यमन्यत्परिशेषणीयम् ॥ ३८ ॥ सिद्धान्तः ॥**

त० वा०—याद्याग्नेयोऽष्टाकपाल इत्येवमाद्येव भवेत् ततः सर्वप्रदानमेव अवधार्येत। अत्र पुनस्तस्मात्पुरोडाशादेर्निष्कृष्य किंचिदेव होतव्यं श्रूयते—'द्विर्हविषोऽवद्यति' 'मध्यात्पूर्वार्धाच्च द्विरवद्यति' 'अङ्गुष्ठपर्वमात्रमवदानं भवति' 'द्व्यवदानं जुह्वति' इत्येवमादिवाक्यालोचनेन हि किंचिदेव होतव्यमवगतम्। अतः शेषयितव्यं किंचित् ॥ ३८ ॥

**अथैकादशं सोमेन्द्रचरोर्यजमानपानव्यापद्विषयत्वम्। अधि० ॥ ११ ॥**

न्या० सु०—वैदिकविषयत्वेनैव कर्माङ्गत्वाद्यजमानकर्तृकत्वसिद्धेर्यो वमति, स निर्वपेदिति सामानाधिकरण्याच्च तत्कर्तृकस्यैव वमनस्य निमित्तत्वावगतेः पूर्वपक्षायोगेनाधिकरणानारम्भमाशङ्क्य, वमनस्य निमित्ततयोद्देश्यत्वेनाविवक्षितं समानकर्तृकत्वविशेषणत्वात् पूर्वपक्षोपपत्तेर्विचारोपपत्तिमाह—**अश्वेति**। तत्सर्वत्रेति सूत्रावयवव्याख्यार्थं तदेतदिति भाष्यं व्याचष्टे—**किमिति**। अविशेषोक्तिव्याख्यार्थं न विशेष इति भाष्यं प्रतिपत्तिविनाशविषयत्वेन व्याचष्टे—**यथा चेति**। हेत्वर्थे यथाचेति चशब्दः। इष्टेर्दोषनिर्घातार्थत्वात् स्वामिस्थस्येव प्रसानफलभोक्तृत्वयोग्यत्वाविद्यालक्षणस्य दोषस्य निर्घात्यत्वाद्विशेषशङ्कानिरासार्थत्वेन वैगुण्यमात्रस्य दोषत्वात्, ऋत्विग्गतस्यापि च वैगुण्यस्य द्रव्यादिवैगुण्यवन्निर्घात्यत्वाद्दोषनिर्घातार्थत्वाख्योऽपि न विशेषइत्येवं भाष्यस्थं कश्चिच्छब्दं व्याचक्षाणस्तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। वीर्येन्द्रियविध्युक्तेरर्थवादमात्रत्वेन दोषनिर्घातार्थत्वे प्रामाणाभावादारादुपकारितैव पूर्वपक्षिणोभिमतेति सूचनायाऽथापीत्युक्तम्। मृदुक्तचर्थोऽथापिशब्दः ॥ ३८ ॥

भा० प्र०—इस पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि "शेषः स्यात्" = आग्नेहविर्द्रव्य सम्पूर्ण प्रदान नहीं करना चाहिए, किन्तु उसका कुछ अंश अवशिष्ट रहेगा। कारण, "निरवदानात्" किस प्रकार हविः का अवदान = खण्ड करना होगा उसके निष्कर्ष के रूप में कहा गया है, श्रुति में कहा गया है "द्विर्हविषोऽवद्यति" दो बार खण्ड करे। अतः, इस प्रकार का निर्देश होने से दो बार अवदान = खण्ड नहीं करना होगा एव अवशिष्ट अंश रह जायेगा। कारण, "मध्यान् पूर्वार्द्धात् च असंम्भिन्दन् अङ्गुष्ठपर्वमात्रम् अवदानम्" (का० श्रौ० सू० १।९।६) इस वचन में कल्पसूत्रों में कहा गया है कि अङ्गुष्ठपर्वप्रमाण अवदान होगा।

"निरवदानात्" = निकृष्ट रूप में अवदान अर्थात् खण्ड करने से "तु" = पूर्वपक्ष के निरास के लिए, "शेषः स्यात्" = आग्नेयहविर्द्रव्य का कुछ अवशिष्ट रहेगा ॥ ३८ ॥ सिद्धान्त।

## उपायो वा तदर्थत्वात् ॥ ३९ ॥

**शा० भा०—न चैतदस्ति द्व्यवदानमात्रं होतव्यमिति। 'यज्जुहोति तद्द्विरवखण्डनेन संस्कर्तव्यमिति होतव्ये द्विरवखण्डनमात्रं विधीयते, नाद्विरवखण्डितस्य होमः प्रतिषिध्यते। कृत्स्नं च होतव्यमिति तदेवं न्याय्यं, नान्यथा ॥ ३९ ॥ आशङ्का ॥**

त० वा०—यद्येतानि वाक्यान्युत्पत्तिवाक्यावगतमशेषहोममबाधमानानि न निविशेरन्, यदि चैतानि प्रधानस्य प्रत्यासन्नतराणि भवेयुस्ततो बाधेरन्। एतानि तु संस्कारवाक्यानि अविरोधेनैवोपपद्यन्ते। शक्यते ह्यङ्गुष्ठपर्वमात्रैर्मध्यपूर्वार्धोद्धृतैर्दिशः प्रवृत्तैरवदानैः संस्कृत्य संस्कृत्य निःशेषं हविः प्रदातुम्। अतः सर्ववाक्यवशेनैवं शास्त्रार्थो भवति। यदशेषं हविर्जुहोति, तदेवमुपायमिति। तेन न कस्यचिद्धोमः प्रतिषिध्यते। तस्मात्सर्वप्रदानं कर्तव्यम्।

यत्तु यथाश्रुतेतिकर्तव्यताको युगपन्न शक्यते कर्तुम्, अद्व्यवदानहोमप्रसङ्गादिति। ज्योतिष्टोमवदध्यसितव्यो होमः, तदर्थत्वात्। देवतार्थत्वात् यागार्थत्वात् अपूर्वार्थत्वाद्वा कृत्स्नस्याष्टाकपालस्य। नैकदेशमात्रहोमेनोत्पत्तिवाक्यार्थसंभावना भवेत्। अथवात्वदानसंस्कारस्य द्रव्यार्थत्वात् ॥ ३९ ॥

न्या० सु०—आरादुपकारित्वाभ्युपगमेनापि सिद्धान्तोक्तिशक्तिप्रदर्शनार्थः। सौत्रहेत्वनादरेण प्रतिज्ञां तावद्व्याचष्टे—**यद्यपि तावदिति**। प्रश्नपूर्वं निमित्तनैमित्तिकयोः सामानाधिकरण्येनैककर्तृकत्वावगमादिति स्वयं हेतुमाह—**कुतइति**। तेन वाक्यशेषस्थेन यच्छब्देन सह विध्युद्देशस्य सम्बन्धेपि विध्युद्देशे तच्छब्दाभावान्निमित्तनैमितिकयोरेककर्तृकत्वप्रतीत्ययोगमाशङ्क्य, यत्तदोर्नित्यसम्बन्धाद्यच्छब्देन तच्छब्दाक्षेपं दर्शयितुमाह—**य इति**। तथापि सोमवामिन इति विध्युद्देशस्थया षष्ठ्या कर्तृभेदप्रतीतेः समुच्चयाङ्गीकरणेन चाबाधसम्भवेऽन्यतरबाधायोगाद्यो यजमानो वमति, स निर्वपेत्सोमवाविनश्चर्त्विजः सम्बन्धीयो यजमानो वमति, स निर्वपेदित्यर्थावगतिमाशङ्क्यैकस्मिन् वाक्ये स्वकर्तृकस्य, अन्यकर्तृकस्य च वमनस्य निमित्तत्वोक्त्ययोगाद्वमनादितपातृवैगुण्यप्रतिसमाधानार्थत्वोक्त्यै च सोमवामिनः आत्मनोऽर्थे निर्वपेदिति द्वादशाहीनस्येतिवत्तादर्थ्यषष्ठीसम्भ सम्बन्धिव्यतिरेकजनितषष्ठीकल्पनायोगात् कर्तृभेदाप्रतीतिं सूचयितुमाह—**तत्रेति**। वमनस्य निमित्तत्वेनोद्दृश्यत्वात्समानकर्तृकत्वविशेषणाविवक्षामाशङ्क्य. यच्छब्दसम्बन्धात् प्राङ्निमित्तत्वाप्रतीतेः, तस्मात् पश्चात्प्रतीयमानस्य निमित्तत्वस्य कर्त्रैकत्वविशिष्टस्यैव प्रतीतेः कर्त्रैकत्वस्योभयवदुद्देश्यान्तर्गतत्वेनोद्देश्यविशेषणत्वाभवाद्विवक्षोपपत्तिसूचनार्थत्वेन श्लोकं व्याख्यातुमाह—**न चेति**। भाष्यमप्यस्मिन्नर्थे यत्र ज्योतिष्टोमादौ कर्मणि सोमोऽवगम्यते, तद्यजमानार्थं फलसिद्ध्यै कार्यतयाकर्मार्थ्यतेऽपेक्ष्यतेनेनेत्यर्थोक्त्या कर्त्रभिधानाद्यजमानकर्तृकसौमेन्द्रमपि कर्म यजमामकर्तृकं ततश्च यो वमति स निर्वपेदिति सामानाधिकरण्या-

द्वमनकर्तृस्वामिकर्तृकमेव न च सोमवाचिन इति षष्ठ्याऽष्टिवमनयोर्भिन्नकर्तृकतोच्यते षष्ठ्या हि सौमेन्द्रं कर्म सोमवाम्युपकाराय श्रूयते न चैवं पुरुषार्थत्वोपपत्तेर्ज्योतिष्टोमादि-कर्मानङ्गत्वात्, तत्समानकर्तृकत्वासिद्ध्या तद्वशेन यजमानवमननिमित्तकत्वासिद्धिः। यतोवमनोपस्थापितज्योतिष्टोमादिकर्माननुष्ठ्योपकुर्यादिति कल्पनालाघवसहकृतार्थापत्ति-कल्पितज्योतिष्टोमाद्युपकारवाचिपदाध्याहारसहितवाक्यावगतकर्माङ्गत्वानुवादित्वात् षष्ठ्या-स्तत्सौमेन्द्रं कर्मज्योतिष्टोमाद्यङ्गं सत्सोमवामिनः शक्नोत्युपकर्तुं, ततश्च नर्त्विजः सोम-वामिनः शक्नोत्युपकर्त्तुमित्येवं योज्यम्। प्राप्तपदार्थोपसंहारकप्रयोगवाक्यावगतप्रधान-कर्तृकत्वबाधेनेष्टेः प्रापकवाक्यावगतवमनसमानकर्तृकत्वावगतिः ऋत्विक्कर्तृकवमन-निमित्तकत्वेऽप्यविरुद्धेत्याशङ्कार्थमथेतिभाष्यमृत्विगन्तराक्षेपेऽन्यन्तराक्षेपे च हेत्वभावाद-युक्तमाशङ्क्य, ऋत्विगर्थे कर्मणि यजमानार्थप्रधानदक्षिणयातिदेशप्राप्तदक्षिणाबाधायोगात्, स्वामिनि च तद्विरोधादृत्विगन्तरक्षेपोक्त्या योजमानानां चाग्नीनामृत्विक्सम्बन्धाभावा-दग्न्यन्तराक्षेपोक्त्योपपादयितुमाह—**अथेति**। तथासतीत्यादिभाष्यं व्यर्द्धसोमकर्माङ्गं वा सौमेन्द्रं कर्म, सोमवाम्यृत्विगङ्गं वा वाच्यं न च तद्द्वयमप्यृत्विगग्निषु तदीयैर्ऋत्विग्भिः क्रियमाणे सम्भवति। यतस्तत्र तेष्वात्मीयेष्वग्निषु करणे देशभेदापत्तेः, साङ्गं च प्रधानं प्रत्यध्वर्य्वादीनां गुणभूतत्वात्तत्समाप्त्युत्तरकाले करणेन कालभेदापत्तेर्ऋत्विग्भेदाच्च कर्तृभेदापत्तेर्नाध्वर्यादयो वृद्धसोमकर्मोपकाराख्यं फलं प्राप्नुवन्ति, अध्वर्याद्यर्थं च क्रियमाणे केवलपुरुषार्थत्वाश्रयणापत्तेर्निमित्तोपस्थापितक्रतूपकारद्वारावधारितयाजमानोपकारित्वत्याग-प्रसंग इत्येवं व्याख्यातुमाह—**ततश्चेति**। तदर्थामितिभाष्यावयवव्याख्यानायाऽथात्मार्थंबुद्ध्यै-वेत्याद्युक्त्या क्रियमाणे चेति चकारसूचितानिष्टापत्त्यन्तरव्याख्यार्थं सूचितं सदृशं चेत्युक्तम्। इतीति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**तस्माविति**।

अङ्गसाद्गुण्यार्थवमनसमानकर्तृकत्वबाधेनेष्टेः प्रधानसाद्गुण्यार्थप्रधानसमानकर्तृकत्वाव-गतिः ऋत्विक्कर्तृकवमननिमित्तकत्वेऽप्यविरुद्धेति स्वयं शङ्कते—**अथ त्विति**। पूर्वं यच्छब्द-संबन्धादिति वार्तिकनिषिद्धनिमित्तनैमित्तकभिन्नकर्तृत्वापत्त्या निरस्यति—**तथा सतीति**। सोमवामिन इति षष्ठीश्रवणाद् भिन्नकर्तृकत्वसमर्थनमाशङ्क्योपक्रमावगतसमानकर्तृ-कत्वबाधेनोपसंहारावगतभिन्नकर्तृककत्वाभ्युपगमायोगादुपसंहारानुरोधेनोपक्रमेप्यश्रुतषष्ठ्यर्थ-कल्पने तु स्वरसावगतसामानाधिकरण्यबाधापत्तेः तदभ्युपगमे च स्वामिवमनस्यानिमित्तत्वा-पत्तेरुभयनिमित्ताश्रयणे वा वैरूप्यापत्तेः, शब्दसामञ्जस्यावगतात्सामानाधिकरण्यात् स्वामि-वमनस्यैव निमित्तता युक्तेत्याह—**तत्समर्थने वेति**। वक्ष्यमाणानां सर्वेषां पक्षाणां संनि-पत्त्योपकारित्वविषयत्वसूचनायाऽऽरादुपकारित्वपदे स्वामिवमननिमित्तपक्षमुपपादितमुप-संहरति—**एवं तावदिति**।

स्वामिसंस्कारातिरिक्तानां सर्वेषां पक्षाणामनभिमतत्वेऽपि सर्वपक्षेष्वृत्विग्वमननिमित्त-त्वनिरासव्यक्तिप्रदर्शनार्थं प्रतिपत्तिगतसम्यग्जरणपर्यन्तत्वनियमभेषजनितफलवृद्धिसमानार्थ-त्वपक्षे तावदिष्टेः स्वामिकर्तृकत्वासंदेहात् सामानाधिकरण्यावगतवमनसमानकर्तृकत्वसिद्ध्यै

स्वामिवमननिमित्तत्वावसायमाह—**यदा त्विति**। वाक्यशेषोपनीतं च तद्यागशेषप्रतिपत्तिनियमशेषोपजनितं च फललाभायोग्यत्वं चेतिविग्रहः। लाभायोग्यत्वं तदाशङ्केति तच्छब्देन परामृष्टम्। ततश्च यच्छब्देनेष्टिवमनयोरेककर्तृकत्वनिर्देशाद्यजमानवमन एवेष्ट्या भवितव्यमिति, वक्ष्यमाणानुषङ्गेण पूरणीयम्। येन केन चिद्भक्षितेऽपि प्रतिपत्तिसिद्धेः सप्तकृतैरेव वषट्कर्त्रादिभिर्भक्षयितव्यमिति नियमस्य भक्षयितृगतप्रयोजनापेक्षायां भागैस्तु ब्रह्मादीनामुपकारकैः शक्यः केन चित् प्रकारेण दृष्ट उपकारः कर्तुं भक्ष्यमाणैरित्यादिभाष्योलोचनया भक्षयितृगतदृष्टसंस्कारार्थत्वावगतद्रव्यप्रतिपत्त्यात्मकस्यापि च द्रव्यसंस्कारस्य भक्षणकाल एवं निर्वृत्तत्वेन सम्यग्जरणानपेक्षत्वात् सम्यग्जरणपर्यन्तत्वनियमस्यापि भक्षयितृसंस्कारापेक्षत्वेन तादर्थ्यावगतेः संस्कारभ्रेषे कर्तृवैगुण्यं व्यद्धचाख्यमुपजातमिति वाक्यशेषवशात् कल्पनेप्यृत्विग्गतकर्मशेषसमापनसामर्थ्याख्यं संस्कारभ्रेषस्यापि यजमानफलविघ्नप्रसञ्जकत्वेनेष्टेस्तत्कृतयजमानफलविघ्नप्रसंगनिवृत्त्यर्थत्वावगत्या यजमानकर्तृकत्वावसायाद्यच्छब्देन चेष्टिवमनयोः समानकर्तृकत्वनिर्देशाद्यजमानवमन एवेष्टिरित्याह—**यदापीति**। समस्तांगोपेतप्रधानानुष्ठानविध्यन्यथानुपपत्त्योत्तराङ्गानामपि फलापूर्वोत्पादने प्रधानोत्पत्त्यपूर्वसहकारित्वावगमात्, तदकरणे प्रधानोत्पत्त्यपूर्वाणां प्रधानानुष्ठानानन्तरमेव निष्पन्नानामपि फलापूर्वोत्पादनाशक्त्यवगमवत्प्रतिपत्तेरपि प्रथमकृतसामवायिकाङ्गमात्रानुगृहीतप्रधानान्तरमुत्पन्ने प्रधानोत्पत्त्यपूर्वे क्रियमाणायाः प्रात्यात्मिकप्रधानोत्पत्त्यपूर्वसहकारित्वावगमात्, तस्याश्च पूर्वोक्तान्न्यायान्मन्त्रवर्णाच्च सम्यग्जरणपर्यन्तत्वावगतेर्यस्मिन् सोमयागाभ्यासे वमनात्प्रतिपत्तिर्भ्रष्टा, तज्जनितस्यापूर्वस्य सहकार्यभावात् फलापूर्वोत्पादनाशक्त्यवगतेस्तस्य फलापूर्वोत्पादनशक्त्याधानाख्यसंस्कारार्थेष्टिरित्ययमपि पक्षो यजमानफलविघ्नप्रसंगनिवृत्त्यर्थत्वेनेष्टेर्यजमानकर्तृकत्वावसायाद्यच्छब्देन चेष्टिवमनयोरेककर्तृकत्वानिर्देशाद्यजमानवमन एवेष्टचा भवितव्यमित्येतेन न्यायेन व्याख्यात इत्याह—**एतेनेति**। सम्यग्जरणपर्यन्तत्वानभ्युपगमेन वमने सत्यपि निषिद्धसेवनवद्विहिताकरणस्याप्यनापत्ति मत्वेष्टेर्दोषनिर्घातार्थत्वानाश्रयणाद्जृम्भानिमित्तमन्त्रोच्चारणवन्नैमित्तिकक्रतुपुरुषधर्मत्वाभ्युपगमेऽपि स्वामिकर्तृकत्वाद्वमनसमानकर्तृकत्वाच्च स्वामिवमनमेव निमित्तमित्याह—**यदापीति**। वमनोपस्थापितक्रतुविवक्षया प्रकरणोक्तिः।

सिद्धान्तमुपपाद्य यथा च स्वामिवमनेन प्रतिपत्तिविनाशः तथार्त्विजेनापीति पूर्वपक्षवार्त्तिकोक्तं साम्यमनुभाषणपूर्वं निरस्यति—**यत्त्विति**। कर्तृनियमरूपप्रतिपत्त्यंशजन्यत्वात्संस्कारोंऽशत्वेनोक्तः। कथं समाध्यर्थत्वेनेष्टचविधानमित्यपेक्षायामाह—**सर्वेष्विति**। क्रत्वर्थता, आरादुपकारिता, पुरुषार्थत्वं, क्रतुगतपुरुषसंस्कारत्वं, द्रव्यप्रतिपत्तिनियमभ्रेषभक्षयितृसंस्कारभ्रेषयोर्दोषोक्त्या विवक्षितत्वाद् द्वौ दोषनिर्घातार्थत्वपक्षौ, वान्तसोमयागाभ्यासापूर्वार्थत्वं चेति पञ्चस्वपि पक्षेषु ऋत्विग्वमननिमित्तेष्टिविधेर्निरस्तत्वात् द्रव्यप्रतिपत्तिभ्रेषः कर्तृसंस्कारनाशो वा वेष्टिं गृह्णातीत्यर्थः। समाध्यपेक्षायामपि समाध्यर्थेष्ट्यग्रहणात् क्रतुवैगुण्यमपरिहृतं स्यादित्याशङ्कयाह—**अतश्चेति**। 'भुव स्वाहेत्याग्नीध्रीये होतव्यमि'ति

सामान्यविहितेप्यनादरार्थः किंचिच्छब्दः। प्रस्तुताधिकरणानुपयोगेन चर्त्विग्वमनस्य दुष्टादुष्टत्वविवेकवत् क्रत्वर्थत्वादिविवेकस्याप्यनादरणीयत्वान्न वयं विवेकानुक्त्योपलम्भनीया इत्याह—न चेति। नन्वज्ञानार्थिनं तु प्रतिजञ्जभ्यमानशब्दस्य यः क्रतुयुक्तपुरुषवाचित्वपक्षः, स एव यः सोमं वमतीति यच्छब्दस्यापि ग्रहीतव्य इत्याह—अथापीति।

दोषनिर्घातार्थत्वानाश्रयणेन जञ्जभ्यमानपक्षस्योक्तत्वाद्दोषात्तु वैदिकेस्यादिति पूर्वाधिकरणसिद्धान्तसूत्रे च दोषनिर्घातार्थत्वाभिधानात्सूत्रविरोधमिन्द्रियेण वीर्येणेत्यनियतानेकदोषकीर्तनस्य प्रधानफलोपलक्षणार्थत्वावगतेर्वरुणग्रहणवदनुपपत्त्यभावात्, सोमपीथवृद्धिसंकीर्त्तने च योग्यानुपलब्धिविरोधस्य शङ्कितुमप्यशक्यत्वाद्भिन्त्र मे गात्रेत्यादिमन्त्रप्रकाश्यत्वान्यथानुपपत्त्या च सम्यग्जरणस्यानुष्ठेयत्वावगतेर्वमने सति विहितसम्यग्जरणाकरणनिषिद्धवमनसेवनापत्त्योरपरिहार्यत्वाद्वमनस्य दुष्टत्वावगतेर्दोषस्य च निर्हरणापेक्षत्वाद्दोषनिर्घातार्थत्वेन चेष्टेरपेक्षितपुरुषसंस्कारार्थविधिसम्भवे, नपेक्षितसंस्कारान्तरार्थविध्ययोगान्न्यायविरोधं चाशङ्क्य, वाक्यशेषावगतं दोषनिर्घातार्थत्वं परिगृह्येत्येवं दोषनिर्घाताश्रयणसूचनार्थः परिशब्दः। स्वामिसंस्कारार्थतैव तदनर्थक्यत्वोक्त्या सूत्रकृताप्युक्तेत्याह—तथा चेति। अनन्तरोक्तन्यायानुसारोऽपि चकारेण सूचितः। अस्मिंश्च पक्षे भाष्यं यथाश्रुतमेव योज्यम्। सौमेन्द्रस्य कर्मणः सोमनाम्यृत्विगुपकारार्थत्वेऽपि सोमवाम्युपकारार्थत्वश्रुत्युपपत्तेः कथं यजमानार्थत्वावगतिरित्याशङ्क्य क्रतुयुक्तपुरुषसंस्कारत्वाद्यजमानास्तु तत्प्रधानत्वादिति न्यायेन यजमानार्थत्वोपपादनार्थं सौमेन्द्रं कर्म वमनोपस्थापितकर्माङ्गतामनुभवदेव सोमवामिन उपकरोति यजमानस्यैव च तथोपकर्तुं शक्नोति, नर्त्विजं ततश्च यजमानार्थत्वेन सौमेन्द्रस्य कर्मणः शास्त्रफलं प्रयोक्तरीत्यनेन न्यायेन यजमानकर्तृकत्वात् तस्य च वमनसमानकर्तृकत्वनिर्देशाद्यजमानं वमन एव सौमेन्द्रं कर्मेति पूरणीयम्॥ ३९॥

भा० प्र०—इस सिद्धान्त के विरोध में पूर्वपक्षी का कहना है कि "उपायो वा" यह जो दो अवदान = खण्ड का कथन है, वह हविर्द्रव्य का उपाय अर्थात् संस्कार मात्र है। दो अवदान करने पर हविर्द्रव्य अपूर्व का साधक होगा। अतः, जब हविर्द्रव्य समाप्त नहीं होता है, तब तक एक तरफ से इस मध्य, इस पूर्वार्द्ध से दो खण्डपूर्वक समग्र हविर्द्रव्यों की आहुति करनी होगी। कारण, "तदर्थत्वात्" = आग्नेय इसमें तद्धित प्रत्यय होने से यह अवगत होता है कि सभी हविः अग्नि देवता को प्राप्य है।

"उपायः" = उपाय अर्थात् संस्कार, "वा" अन्य पक्ष के निरास के लिए पक्षान्तरसूचक है, "तदर्थत्वात्" = क्योंकि समग्र हविर्द्रव्य ही देवता के लिए या याग के लिए या अपूर्व के लिए है॥ ३९॥

## कृतत्वात्तु कर्मणः सकृत्स्याद्द्रव्यस्य गुणभूतत्वात्॥ ४०॥

**शा० भा०—उच्यते। यदा द्विरवखण्डनविशिष्टं होमे श्रुतं, तदा सकृद्द्व्यवदानेन यावच्छ्रुतं, तत्सर्वं कृतम्। तदा नापरं द्रव्यमस्तीति पुनर्यागो**

नाऽऽवर्तितव्यः कथम् ? तद्धि द्रव्यं यागनिर्वृत्त्यर्थं, न द्रव्यं यागेन संबन्धयितव्यमिति। यदि हि यागेन हविः संबन्धयितव्यं स्यात्, ततो यागेन द्व्यवदाने संबन्धिते, अपरमपि संबन्धनीयमस्तीति, तत्संबन्धार्थं पुनर्याग आवर्तेत। न तु यागो द्रव्यसंबन्धार्थः। किं तर्हि ? द्रव्यं यागे गुणभूतम्। यागः कथं निर्वृत्तिमुपेयादिति द्रव्यमुपादीयते। तेन निर्वृत्ते यागे सिद्धे च पुरुषार्थे, न नियोगेन गुणानुरोधेन प्रधानावृत्तिर्युक्तेति।

कथं न द्रव्यं प्रधानं, येनाऽऽवृत्तिर्न भवेत्। यतो यागात्फलम्। 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति। न च यागेन द्रव्यस्योपकारो निर्वर्त्यते प्रत्यक्षः कश्चित्। तस्माद्द्व्यवदानं हुत्वा शेषयितव्यमिति।

यत्तूक्तम्, आग्नेयं हविरिति वचनात्सर्वं होतव्यमिति गम्यत इति। तत्राऽऽनुमानिको होमसंबन्धः। इह तु प्रत्यक्षो द्विरवदाने। अपि चाकृत्स्नसंबन्धेऽपि तद्धितस्योपपत्तिः। ततो ग्रहीतव्यमिति। सामान्यं खल्वाग्नेय इति, द्व्यवदानं जुहोतीति विशेषः। तस्माच्छेषयितव्यं किंचिदिति ॥४०॥ आ० नि०॥

त० वा०—नैतदस्ति। पुनःपुनर्द्विरवखण्डनं, तद्वांश्च होमोऽभ्यसितव्य इति। कुतः ?

खण्डनं गुणभूतत्वादभ्यस्येतेह यद्यपि।
होमः प्रधानभावात्तु नाऽऽवृत्तिं प्रतिपद्यते॥

'द्विर्हविषोऽवद्यति' इत्येतस्य संस्कारत्वाद्यावत्संस्कार्यं ध्रियते, तावदावृत्तिर्भवत्विति शक्यते वक्तुम्। होमस्य फलवत्त्वात् 'यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि' द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः। इति च प्राधान्यावगमादेकेन द्व्यवदानेन निवृत्तस्य न द्रव्यमस्तीति, न पुनरावृत्तिर्युक्ता। तस्मिंश्चानावर्तमानेऽर्थाभावादवद्यतिरपि नाऽऽवर्तते। कार्ये हि प्रवर्तमानं द्रव्यं संस्कारं गृह्णाति, नोदासीनम्। न च द्व्यवदानव्यतिरिक्तस्य हविषः कार्यमस्तीति, न न संस्कारमपेक्षते। तस्मात्सोऽपि नाऽऽवर्त्तते।

यदि हि द्रव्यार्थो होमो भवेत्, ततस्तद्वशेन स्वयमावर्तेतावखण्डनं चाऽऽवर्तेत। अतदर्थस्य वाऽऽवृत्तिः। न चैषा वाक्यार्थो—यज्जुहोतीति हूयमानस्य द्विरवखण्डनमुपायो विधीयत इति। न हि जुहोतिशब्देन द्रव्यमुपादीयते। न चैष कर्मणि लकारो, यतो हूयमानानुवादत्वं प्रतिपद्यते। क्रियायामेव त्विदं द्व्यवदानं विधीयते। योऽपि यज्जुहोतीति, यच्छब्दाद्द्रव्यप्रत्ययो भवति, सोऽपि यच्छब्दस्यावैदिकत्वात्क्रियाविशेषणभूतस्यानुवादत्वप्रदर्शनार्थं व्याख्यातृभिरुच्चारितस्य परमार्थानालोचनाद्भविष्यतीत्युपेक्षणीयः।

यत्तु ज्योतिष्टोमवदुत्पत्तिवाक्यावगतस्य समस्तद्रव्यप्राप्त्यर्थमावर्तिष्यत इति। तदयुक्तम्। कुतः ?

अशेषग्रहणे सिद्धे भवेत्सोमेन तुल्यता।
अपवादात्तदेवेह न तु सिद्धं कथंचन॥

आग्नेयचोदनाया ह्यनुमानिको होमसंबन्धः, सर्वपुरोडाशावयवसामान्यप्रवृत्तश्च स यावन्नैव निवर्तते, तावदस्त्येव 'द्व्यवदानं जुहोति' इत्यनेन निष्कृष्य संबन्धः कल्पितः। तस्मिंश्च सिद्धे नाऽऽनुमानिकोऽवकल्पते। तेन यत्सामान्यप्रवृत्तमाग्नेयत्वं, तद्द्व्यवदानचोदनया साप्तदश्यमिव प्राकरणिकैर्द्व्यवदानविषयमेवोपसंह्रियते। तत्रैषोऽर्थो विज्ञायते द्व्यवदानमाग्नेयं करोति। अतोऽन्यवयवान्तराणामचोदितत्वान्न होमप्रसङ्गः।

किं च—

न चावश्यं प्रदानेन हविराग्नेयमिष्यते।
द्व्यवदाने गृहीते हि सर्वाग्नेयत्वसंभवः॥

तद्धितेन हि तादर्थ्यमात्रमुक्तं, न प्रदानम्। द्वेधाऽपि च तादर्थ्यं भवति प्रदानेन, प्रदानार्थद्रव्यसाधनत्वेन वा। तथा हि। 'व्रीहिभिर्यजेत' इति वचनान्न तावद्व्रीहयः साक्षात्प्रदीयन्ते, अथ च प्रदेयप्रकृतित्वादेवमुपदिश्यते। तस्माद्यद्यपि पुरोडाशः समस्तः साक्षान्न प्रदीयते, तथापि द्व्यवदानप्रकृतित्वादाग्नेयो भविष्यति। तेन द्व्यवदानेनैव तावद्दीयमानेन तस्याऽऽग्नेयत्वं कृतं भवति।

द्वावेव च तौ व्याख्याप्रकारौ—**एको देवतासंबन्धस्य द्व्यवदाने संक्रान्तिरिति।** अपरः पुनरिदमेव पुरोदाशस्याऽऽग्नेयत्वं द्व्यवदानं ततो गृह्यत इति। **तस्मान्न सर्वहोमः॥ ४०॥**

न्या० सु०—लिङ्गत्वमुपपादयितुमाह—**व्युद्धयतेइति।** सोमलक्षणस्य पुरोडाशादिभक्षणवदृत्विक्त्ववशिष्टकर्मानुष्ठानसामर्थ्याधानशक्तेस्तद्वैगुण्येऽपि च दक्षिणालाभाख्यफलाविघातात्स्वामिन एव पानात् प्रधानफलभोक्तृत्वशक्त्याधानाख्या समृद्धिः तद्वैगुण्याच्च भोक्तृत्वशक्तिनाशाख्याव्यद्धिरित्यर्थः। तस्मात्तस्यैव वमने इष्टिरिति सिद्धान्तमुपसंहरति—**इतीति॥ ४०॥**

इत्येकादशं यजमानसोमवमने इष्टिकरणाधिकरणम्।

भा० प्र०—प्रदर्शित शङ्का के समाधान में सिद्धान्ती का कहना है "सकृत् स्यात्"= एक बार दो खण्ड कर होम करना होगा दूसरी बार दो खण्ड करना कर्तव्य नहीं होगा, कारण, "कृतत्वात् कर्मणः" दो अवदानपूर्वक होम करने की विधि है और एक बार मात्र दो खण्डपूर्वक प्रदान करने से ही वह सम्पन्न हो जाने से पुनः दो खण्ड करने का प्रसङ्ग ही प्राप्त नहीं होता है।

यदि कहा जाय कि द्रव्य आग्नेय होने से जब तक वह समाप्त नहीं हो जाता है, तब तक दो खण्डपूर्वक होम कर्तव्य है, ऐसी स्थिति में कहा जायेगा कि "द्रव्यस्य गुण-

भूतत्वात्'' = हविर्द्रव्य गुणभूत अर्थात् याग का अङ्ग है और उस हविर्द्रव्य का त्यागात्मक जो याग वही प्रधान है। गुण के अनुरोध से प्रधान की आवृत्ति नहीं हो सकती है। क्योंकि, अङ्ग के लिए प्रधान नहीं है, अपितु प्रधान के लिए अङ्ग है। यदि द्रव्य को समाप्त करने के लिए पुनः पुनः दो अवदानपूर्वक होम किया जाय तो गुणभूत द्रव्य को अनुरोध से प्रधानभूत याग की आवृत्ति करनी होगी, किन्तु यह सङ्गत नहीं है। इसीलिए, एकबार ही अङ्गुष्ठपर्व प्रमाण दो खण्ड करके होम कर जो शेष रहेगा उस बचे हुए को रखना होगा।

यदि कहा जाय कि ''आग्नेय'' इस पद में तद्धित प्रत्यय का ऐसी स्थिति में बाध होगा, तो यहा जा सकता है कि ''आग्नेय'' इस स्थल में विहित तद्धित केवल तादर्थ्य= इदमर्थ का प्रकाश करता है और वह तादर्थ्य प्रदान के द्वारा ही सम्पादित हो सकता है एवं व्रीहि आदि के समान प्रदानार्थं द्रव्य के साधन रूप में भी हो सकता है, अतः, समग्र पुरोडाश यदि नहीं दिया जाता है, तब भी वह प्रदेय द्रव्य के साधन अर्थात् प्रकृति होने से तद्धित प्रत्यय के अर्थं का किसी भी प्रकार की अनुपपत्ति नहीं हो सकती है।

अथवा हविर्द्रव्य के अंश के साथ देवता का सम्बन्ध होने पर भी अंश के द्वारा समग्र के साथ सम्बन्ध हो सकता है, अतः, इस स्थल में तद्धित प्रत्यय के अर्थ की किसी भी प्रकार की अनुपपत्ति नहीं है।

''कर्मणः कृतत्वात्''=क्योंकि कर्म एक बार करने से ही कृत हो जाता है इसलिए, ''तु''=पूर्वपक्ष के जिसके लिए, ''सकृत् स्यात्''=एक बार ही दो खण्ड होगा, ''द्रव्यस्य गुणभूतत्वात्'' = क्योंकि द्रव्य गुणभूत अर्थात् गौण है ॥ ४० ॥ आशङ्का का खण्डन

## शेषदर्शनाच्च ॥ ४१ ॥

**शा० भा०—'शेषादिडामवद्यति, शेषात्स्विष्टकृतं यजति' इत्यनुवादादस्ति शेष इति पश्यामः ॥ ४१ ॥ हेतुः ॥**

**इति चतुर्दशं सर्वप्रवदानाधिकरणम् ॥ १४ ॥**

त० वा०—एवं च शेषशब्दो मुख्य एवोपयुक्तेरविद्यमानवचनो भविष्यति। उत्तरार्धादिशब्दश्च नावयवविविधिकल्पनार्थापत्तिक्लेशमाश्रयिष्यति।

अत्राभिधीयते। यत्तावदुक्तं साप्तदश्यवदाग्नेयत्वं द्व्यवदानमात्र उपसंहृत- मिति। तन्न घटते। कथम्?

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः।
स्पष्टस्य तु विधेर्नान्यैरुपसंहारसंभवः॥

साप्तदश्यं हि सामिधेनीनामुक्तमनारभ्यवादेन, न क्रतूनाम्। तस्य तु क्रतु- संबन्धस्तद्द्वारेणाऽऽनुमानिकः कल्प्यः। न च प्रत्यक्षसंबन्धे सत्यानुमानिकः

कल्प्यत इति युक्त उपसंहारः। न त्वष्टाकपालस्यास्फुटो देवतासंबन्धः, तद्धित-श्रुत्याऽभिहितत्वात्। स हि द्व्यवदानस्यैवाऽऽनुनासिकः स्यात्। उत्पत्तिवाक्ये च कर्मणोऽष्टाकपालेन संबन्धः श्रूयते। द्व्यवदानेन पुनरुत्पन्नवाक्ये।

तत्रैतस्यात्—कर्मसंबन्धोऽष्टाकपालस्याऽऽनुमानिको द्व्यवदानस्य प्रत्यक्ष-स्तद्भावे वाऽऽनुमानिककल्पनं न संभवतीति। नैतद्युक्तम्। एवं सति 'द्व्यवदानं जुहोति' इत्येतदेवोत्पत्तिवाक्यमभ्युपगतं भवेत्। यदि ह्यष्टाकपालवाक्यं जुहोति-वाक्येनोपसंहृतं ततोऽनेनैव कर्मोत्पत्तिः क्रियेत। ततश्चाऽऽग्नेयवाक्ये 'चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्यते' इत्येवं वाक्यभेदः प्राप्नोति। न चाननुमाय यागमाग्नेयादिवाक्यानां वाक्यान्तरापेक्षा, तत्संबन्धो वाऽकल्प्यत इत्युक्तम्। अतो यद्यप्यानुमानिकः संवन्धः तथाऽपि स्वार्थपर्यवसायित्वान्यथानुपपत्तेः प्रथमतर-मनुमित इति, सिद्धे संबन्धे न शक्यं प्रत्यक्षशतेनाप्यन्यथात्वं कर्तुम्। न चेह सामान्यविशेषभावः संभवति। अवयवावयविनोः सामान्यविशेषव्यवहाराभावात्। अष्टाकपालचोदनया हि प्रत्यक्षमेव समस्तः पुरोडाश उपदिश्यते। द्व्यवदान-चोदनयाऽपि, ततस्तुल्यवलत्वम्।

ननु द्व्यवदानव्यतिरिक्तावयवप्राप्तिः सामान्येन पुरोडाशशब्देन क्रियमाणा दुर्वला स्यात्। उच्यते—

यदि ह्यवयवार्थेन पुरोडाशो विधीयते।
ततः सामान्यवृत्तिः स्यात्स तु साक्षाद्विधीयते॥

आकृतिशास्त्राण्याकृतावसंभवन्ति व्यक्तिलक्षणार्थानि भवन्ति। तानि व्यक्तिषु परोक्षत्वाद्दुर्वलानि जायन्ते। न त्वयवविव्यक्तिः कर्म साधयितुं न शक्नोति। यतस्तच्छब्दस्यावयवलक्षणार्थता कल्प्येत। अथ विनैव कारणेन लक्षणाश्रयणम्। ततोऽवयवशास्त्रस्याप्यवयवान्तरलक्षणार्थत्वाद्दौर्बल्यं स्यात्। तस्माद्यथैव द्व्यवदानं स्वावयवनिरपेक्षमात्मनैव केवलेन विधीयते, तथैवाष्टाकपालस्य द्व्यवदानमवय-वान्तराणि चानपेक्ष्य प्रत्यक्षविधानात्प्राप्तिः तत्प्राप्तौ च यदाऽवयवान्तराण्यनुष-ज्यन्ते को वारयति। न तु तानि स्वमहिम्ना संबध्यन्ते, तत्परा वा चोदना।

न चात्यन्तमवयवावयविनोर्व्यतिरेक इति यदाऽऽलोच्यते, तदाऽवयवान्त-राण्यपि प्रत्यक्षाण्येव भवन्ति। तेनाष्टाकपालचोदना द्व्यवदानचोदनावशेनैव कर्म प्राप्नोति, द्व्यवदानं दत्त्वा, पुनः शेषप्रदानं दत्त्वा, पुनः शेषप्रदानम्।

अथवा विकल्पः कदाचित्सकलस्य प्रदानं, कदाचिद्द्व्यवदानमात्रस्य।

अथवाऽष्टाकपालस्योत्पत्तिवाक्यशिष्टत्वादामिक्षावद्बलीयस्त्वे सति, द्व्यवदानं तेन सह बाधविकल्पसमुच्चयान्न प्रतिपद्यत इति 'गुणश्चापूर्वसंयोगे' इत्येवं कर्मान्तरं कल्पयेत्। यतः कुतश्चिच्च द्रव्यान्तरादुपादीयेत, अष्टाकपालसंबन्धा-

भावात् । पूर्वंकर्मसंबन्धेऽपि च पुनर्द्रव्यान्तरादेवोत्पन्नस्याष्टाकपालेन सह विकल्पसमुच्चयावुपन्यसितव्यौ ।

अथवा कृत्स्नपुरोडाशग्रहणेऽवधारिते द्व्यवदानचोदनायाश्च गुणपरत्वात्कर्मान्तरविध्यशक्तेरष्टाकपालविषयत्वावगमात्संस्कारस्य यावत्संस्कार्यमावृत्तेः, प्रधानस्य च यथाश्रुतगुणसंपादनाय ज्योतिष्टोमवदावृत्तेरिष्टत्वात् 'उपायो वा तदर्थत्वात्' । इत्ययमेव पक्षः प्राप्नोति निरवदानप्रमाणाभावात् ।

निरवदानाश्रयणे चात्यन्तदुष्टा परिसंख्या स्यात् । न ह्यत्र नियम उपपद्यते, सर्वपुरोडाशावयवानां नित्यवत्प्राप्तेः । यदि हि कतमोऽत्रयवः प्रक्षिप्यतामित्येवं नियमापेक्षायां सत्यां मध्यपूर्वार्द्धव्यवदानं विधीयते, ततः स्यान्नियमार्थत्वम् । नित्यप्राप्ते त्ववयविनि द्व्यवदानपुनः श्रुतेरवयवान्तरनिवृत्तिपरत्वादस्वार्थग्रहणमित्यादिदोषत्रयमपरिहार्यं स्यात् ! तत्र हि तत्परिहर्तुं शक्यते, यत्र परिसंख्यायमानप्राप्तिशास्त्रमक्लृप्तमुत्प्रेक्षाभिमुखं वर्तते । न चात्राष्टाकपालशास्त्रमक्लृप्तम् । न च क्लृप्ते सति दोषपरिहारः संभवति । तस्मान्न निरवदानम् ।

यदि च निरवदानशास्त्रादाग्नेयत्वं यागार्थद्व्यवदानविषयमुपसंह्रियेत, ततः शेषावयवानामदेवतार्थत्वान्न स्वत्वमपेतं स्यात् । ततश्च 'भक्षार्थो वा द्रव्ये समत्वात्' इत्यादिषु यदृत्विग्भिः साम्यादस्वामित्वं यजमानस्य तत्र तत्रोच्यते । तत्सर्वं विरुध्यते ।

तत्रैतत्स्यात् । देवतोद्देशसंबन्धो द्व्यवदानस्यैव त्यागः पुनः समस्तस्य हविषः । त्यागकृता च स्वत्वनिवृत्तिर्न देवतासंबन्धकृता । तस्मादविरुद्धं तदभिधानमिति । तदसत् । कुतः ?

निर्वपन्नेव जानाति ह्येतावदिह दास्यते ।
तत्राधिकपरित्यागः कल्प्यते केन हेतुना ॥

देवतायै हि दातुं द्रव्यं त्यजन्ति, न विभवेन । यत्र यद्देवतार्थादन्यदधिकं तद्गृहावस्थितद्रव्यान्तरवदपरित्यक्तम् । न चात्र त्यागस्य भेदेन विधानमस्ति । देवतासंबन्धकरणविधिनैव ह्यसावर्थापत्त्याऽऽक्षिप्यते । सा चार्थापत्तिर्यावता विना देवतायै दानं न संभवति, तावत्येवावस्थिता, नान्यत्र । न हि शेषद्रव्यपरित्यागाद्विनाऽनुपपत्तिः । सर्वत्र च समाप्तिविधानमिष्यते, तेनापि यावत एव यागसमाप्त्यङ्गत्वं, तावत एवाऽऽक्षिप्तस्य यागविधिः, नावयवान्तराणाम् । अतो यथा चतुर्मुष्टयतिरिक्तानामनसि स्थितानां व्रीहियवानां न निर्वापवेलायामत्यागादस्वत्वम्, एवमिहापि नावयवान्तराणां तत्स्यादिति ।

**सर्वस्य पुरोडाशस्य त्यागः**

अथोच्येत निर्वापवेलायामनुपजातमध्यपूर्वार्धादिविभागं द्रव्यमनभिप्रेतत्यागमपि बलात्परित्यक्तव्यम् । न हि तदानीं विज्ञायते केभ्यो व्रीहिभ्यो द्व्यवदानं

निष्पत्स्यते, केभ्यो नेति, अगम्यमाने विशेषे यानेव न त्यजेत् तेभ्य एव कदाचिदवदीयेत । तत्र त्यक्तानामदानात्, अत्यक्तानां च दानादयथाश्रुतकरणप्रसङ्गः । तस्मात्सर्वत्याग इति ।

नैतदेवम् ।

न हि सामान्यशास्त्रेण व्यवहारे कृते सति ।
विशेषशास्त्रावसरस्तस्मादादित एव सः ॥

यदा हि सामान्यशास्त्रं प्रवृत्तव्यवहारं भवति, तदा न शक्यं केनापि व्यावर्तयितुम् । तद्यदि समस्ताष्टाकपालनिर्वृत्त्यर्था व्रीहयो देवतोद्देशेन निरुप्ताः । ते सर्वे दातव्यत्वेन प्रक्रान्ताः तेषां य एव न दीयेरन्, तत्रैव प्रक्रान्तापरिसमापनदोषो भवेत् । ततश्च सर्वप्रदानमेव प्राप्नोति । यदि तु द्व्यवदानशास्त्रेण विशेष्टुमिष्यते, तत आदित एवैवमवधारयितव्यम्, अष्टाकपालनिर्वृत्त्यर्थेषु चतुर्मुष्टिषु ये द्व्यवदाननिर्वृत्त्यर्थाः तानग्नये जुष्टं निर्वपामीति । यद्यपि च विशेषो न गम्यते, तथाऽप्येतेषां मध्ये येऽत्र द्व्यवदानं साधयन्ति, तावन्तो न ममेति शक्यं संकल्पयितुम् । तद्यथा लोके कश्चिद्बहुद्रव्यसमुदायेऽवस्थिते कंचिदभिधत्त इतस्त्वं यावत्तृप्ति गृहाणेति । तत्र न तदवयवविशेषो गम्यते, अथ च न सर्वत्यागोऽध्यवसीयते । तथेहापि द्रष्टव्यम् ।

यत्तु तावन्मात्रमेव न निरुप्यते, तत्र 'चतुरो मुष्टीन्निर्वपति' 'अश्वशफमात्रः पुरोडाशो भवति' इत्यादिवचनसामर्थ्यादीदृक्परिमाणाद्गृहीतं द्व्यवदानं देवतार्थतां प्रतिपद्यत इत्यवगम्यते । यत्तदन्यत्तत्तदनुग्रहार्थं, नाधिकत्यागार्थमिति द्रष्टव्यम् । अतो यथैव 'अनसोऽधिनिर्वपति' इत्युक्ते निर्वापरिच्छेदार्थमुपात्तेष्वपि शकटस्थितेषु व्रीहिषु न स्वत्वमपैति, तथैव द्व्यवदानापादानभूते पुरोडाशेऽपीति स्वत्वे सति शक्याः परिक्रयादयस्तेन कर्तुमिति समत्ववचनविरोधः ।

एतेन द्व्यवदानप्रकृतित्वादेवाष्टाकपालः आग्नेयः कृतो भवतीत्येषोऽपि पक्षः प्रत्युक्तः । तत्रापि शेषपरित्यागानुपपत्तेः । न च व्रीहिवत्पुरोडाशस्य प्रकृतित्वं युक्तम् । व्रीहयो ह्यनदनीया वाक्यान्तरशिष्टाश्च प्रकरणादुत्पत्तिवाक्यशिष्टप्रकृतिद्रव्यापेक्षपुरोडाशावरुद्धयागानुवादेन विधीयमाना न शक्नुवन्ति प्रकृतित्वप्रतिपत्तिमन्तरेण यागसाधनत्वं प्रतिपत्तुम् । अष्टाकपालस्त्वदनीय उत्पत्तिवाक्यशिष्टश्च शक्नोति साक्षाद्यागं साधयितुम् । न च पूर्वतरप्राप्ते प्रकृत्यपेक्षिणि द्व्यवदाने चोद्यते । तस्मान्न तत्प्रकृतित्वेन यागं साधयति ।

**यागहोमयोर्भेदप्रतिपादनमुखेन सर्वप्रदानस्य परिहारकथनम्**

कस्तर्हि सर्वप्रदानस्य परिहारः ? उच्यते—

यागहोमावभेदेन यैर्मोहात्परिकल्पितौ ।
तेषामपरिहार्यत्वं भेदे त्वेषोऽभिधीयते ॥

यद्याग्नेयादिचोदनयैव हविःप्रक्षेपोऽभिधीयते, ततो द्व्यवदानचोदनया परिसंख्यातुमशक्यत्वात्सर्वप्रक्षेपः प्राप्नोति। तदा च तयाऽऽग्नेयचोदनयैव प्रक्षेपश्चोद्येत, यदा यागहोमयोरभेदः। तयोस्तु भेदः शब्दान्तराधिकरणन्यायसिद्धः। 'तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात्' इति सूत्रकारेणोच्यमानं तत्रैव समर्थयिष्यामहे। यथा देवतोद्देशेन स्वत्वत्यागमात्रं यागः देवतोद्दिष्टत्यज्यमानस्वत्वद्रव्यप्रक्षेपो जुहोतिः। तत्र ये दोषा दर्शपूर्णमासज्योतिष्टोमादिष्वहोमत्वादाहवनीयो न भवेदित्यादयः। तानपि तत्रैव परिहरिष्यामः।

उभयोश्च भेदे सति 'आग्नेयोऽष्टाकपालः' इत्यनेन तावद्वाक्येन यावता विनाऽष्टाकपालस्याऽऽग्नेयत्वं न भवति, तावदेव चोद्यते। तस्य च स्वत्वपरित्यागदेवतोद्देशौ केवलावन्तरेणाऽऽग्नेयत्वं न जायते, न प्रक्षेपमपि। तत्र यदि वाक्यान्तरं न स्यात्, तत ईदृशं कर्म भवेत्। सुपक्वमविकलमष्टाकपालमाचारतः शुचौ देशे निधाय देवतामुद्दिश्य नायं ममेति संकल्पः कर्तव्यः। तत्परिपालनार्थं च पुनः कदाचिदपि न स्वत्वं द्रव्ये बध्नीयात्। यदि हि बध्नीयात्, ततः पूर्वसंकल्पं विनाशयेत्, अनृतं च वदेत्। यो हि प्रथममेव जानाति पुनरप्यहमत्र स्वत्वमाधास्यामीति, तस्य न ममैतद्देवतायै त्वेतदिति संकल्प एव न भवेत्। तेन देवतोद्देशत्यागोत्तरकालं यदस्य भवति। तद्भवत्वित्यवधार्य, न कश्चिद्व्यापारो वोढव्यो भवेत्।

तथा प्राप्ते तु वाक्यान्तराणि भवन्ति 'उपस्तृणाति', 'द्विर्हविषोऽवद्यति', 'अभिधारयति', 'चतुरवत्तं जुहोति' इत्येवमादीनि। तैस्तावदिनमवधार्यते—द्व्यवदानं हविषो होतव्यमिति। सर्वाणि चैतानि प्रकृतद्रव्यालम्बित्वात्तदुपादाय प्रवर्तन्ते, नापूर्वद्रव्यग्राहित्वेन। तथा हि—'चतुरवत्तं जुहोति' इत्यत्र होमस्याप्राप्तत्वान्न तमुद्दिश्य द्रव्यं विधीयते। चतुरवत्तं च पूर्ववाक्यकल्पितं प्रयोजनापेक्षमस्ति। तस्मात्तस्यानेन प्रक्षेपमात्रं शक्यं विधातुमिति, न चतुरवत्तविशिष्टहोमविधानकल्पते।

होमस्यापि च त्र्यंशस्य समाप्तिपर्यन्तत्वात्सर्वान्त्वेंऽशे प्रक्षेपे चोद्यमाने, त्यागतद्देवतोद्देशयोः किमपूर्वयोरर्थापत्त्या विधिः कल्प्यताम्, उत कुतश्चित्प्राप्तयोरेवाऽऽश्रयणं क्रियतामिति। तत्राऽऽग्नेय्यधिकरणन्यायेन लाघवे सति, गौरवस्याप्रमाणकत्वादवगतत्यागोद्देशांशद्वयान्यष्टाकपालादीन्येव गृह्यन्ते। न च तेषामौत्पत्तिकं यागसाधनत्वं विरुध्यते। प्रक्षिप्यमाणानामग्निसाधनत्वाविघातकत्वात्। देवतान्तरसंबन्धेन हि यागविपरीतक्रियासंबन्धेन वा विरोधः स्यात्। न त्वसावस्ति। तेनैषोऽर्थो भवति—अष्टाकपालेन यत्र क्वचित्प्रदेशे स्थितेन यजेत, तदीयं च द्व्यवदानं, यत्र क्वचित्प्रक्षिपेदिति। तत्र 'वेद्यां बर्हिष्यासादयति',

'बर्हिषि' इति वचनात्तत्र स्थितेन पुरोडाशेनेज्यते। 'यदाहवनीये जुहोति' इति वचनात्तत्र द्व्यवदानं हूयते।

### यागस्यैवांशान्तरविवृद्धया रूपान्तरसंपादनमिति वार्तिकमतम्

स तु होमः किं पूर्वस्माद्यागादर्थान्तरमितिकर्तव्यता भवति, उत तस्यैव यागस्यांशान्तरविवृद्ध्या रूपान्तरं जातमिति चिन्तनीयम्। **तत्रैव रूपान्तरोपजननमिति ब्रूमः**। कर्मान्तरत्वे हि द्रव्यान्तरं देवतान्तरं च नारिष्टहोमादि प्राप्नोति। यथोक्तेन न्यायेन स एव यागः प्रचिततरो जुहोतित्वमापद्यते। न चैतावतौत्पत्तिकयजिरूपविघात आशङ्क्यः, जुहोतेर्यजिविशेषत्वात्। सामान्ये हि कश्चिद्विशेषो भवत्यपि। न तु निःसामान्यः कश्चिद्विशेष उपपद्यते। ततश्च यथा वृक्षमानयेत्युक्ते शिंशपामित्यविरोधात्पश्चादुच्यमानं न विरुध्यते, तथा यजेतेत्युक्ते जुहोतित्वाविरोधोऽवगन्तव्यः। सोऽयं याग एव द्व्यकारः समस्तेन पुरोडाशेन क्रियते। द्व्यवदानेन जुहोत्यवस्थानीतः, शेषेण तु सामान्यरूप एकस्मिन्नपि च क्षणे द्व्यकारोऽपि निष्पद्यते। यदैव हि द्व्यवदानमाहवनीये निक्षिप्यते, तदैव याज्यानुवाक्याभ्यां समस्तविषयदेवतासंकल्पोत्थापनं क्रियते। तेन नैव भ्रमितव्यं यस्माज्जुहूस्थं द्व्यवदानमाश्रावणप्रत्याश्रावणाभ्यां त्यागायोद्धृतं च। तस्मात्तदेव केवलं देवतायै संकल्पितं, नेतरदिति। विद्वद्भ्यामध्वर्युयजमानाभ्यां वेदार्थमनुसृत्य समस्तपरित्यागदेवतोद्देशौ यथार्हं कर्तव्यौ। अध्वर्युणा द्व्यवदानप्रक्षेपोऽतिरिक्तोऽनुष्ठेय इति। न चैतवता यागस्य वैरूप्यमशोभनं मन्तव्यम्। वचनसामर्थ्यादीदृशस्यैव शोभनत्वप्रतीतेः। यथा कस्यचित्पुरुषस्यैकः पादः पुरस्ताद्गत इति, न तावता किंचिद्वैलक्षण्यं भवति। तथाऽत्र द्व्यवदानपादेऽधिकमपि प्रक्षेपांशं गते सत्युत्पत्तिवाक्यशिष्टं यागसाधनत्वं समस्तेनाष्टाकपालेन प्रतिपन्नमेवेत्यविरोधः। तस्माद्द्व्याकारमेवैतत्प्रधानं द्रष्टव्यम्।

### यागस्य प्राधान्यं प्रक्षेपस्यांगत्वमिति पक्षान्तरप्रतिपादनम्

अथवा यस्तत्र यागः तस्य प्राधान्यं, यस्तु प्रक्षेपः, सोऽङ्गमेव। तथा हि—

फलवाक्ये यजेरेव संबन्धः श्रूयते स्फुटः।
तत्संनिधौ समाम्नानाज्जुहोतेरङ्गतेष्यते॥

यद्यपि तस्मिन्नेव द्रव्ये होमोऽप्याश्रितः तथाऽपि प्रोक्षणादिवदस्याङ्गत्वमविरुद्धम्। न हि समानद्रव्याश्रयत्वेन सर्वस्य प्राधान्यं भवति। संस्काराणामपि प्रधानद्रव्यवर्तितोपपत्तेः। संस्काराश्च केचित्प्रथमेव प्रधानेभ्यः क्रियन्ते, केचिदूर्ध्वं, केचिद्युगपत्।

### अत्रविषये केषान्मतस्योपन्यासनिरासौ

तत्र केचिदाहुः। परस्तात्संस्कारोऽयं होमः। निर्वापवेलायामेष देवतोद्देश-

त्यागात्मकतया यागस्य निर्वत्तत्वात् । तदयुक्तम् । न ह्यनदनीयावस्थैर्व्रीहिभिः पुरोडाशसाधनको यजिः शक्यः साधयितुम् । यदि च निर्वापवेलायामेव यागनिर्वृत्तिर्भवेत्, तथा सति तदुत्तरकालं नाशदोषापहारेषु द्रव्यान्तरं नोपादीयेत । तत्र 'निर्देशाद्वाऽन्यदागमयेत्' इत्यादि विरुध्यते ।

भाष्यकारोऽप्युपाकृते पशवाह 'परकीयोऽसौ रक्ष्यते, कालेन देवतया संभन्त्यस्यते' इति । तेन निर्वापवेलायामेतस्यै दास्यामीत्येतावन्मात्रं संकल्पत्यागः केवलः क्रियते, न यागः । स तु पूर्वनिर्वृत्तत्यागापेक्षया यथाश्रुतेतिकर्तव्यताकदेवतोद्देशरूपः प्रक्षेपवेलायामेव निर्वर्तते । तत्र तस्मिन्नेव क्षणे समस्तेन पुरोडाशेन यागः साध्यते । तत्साधनैकदेशश्च द्व्यवदानं यागस्याङ्गेन प्रक्षेपेण संस्क्रियते । तदुपलक्षितत्वादेव यागनिर्वृत्तेः प्राक्प्रक्षेपादनिर्वृत्तयागावगमान्नाशादिष्वन्यद्रव्यागमनम् । सत्यपि होमस्य संस्कारकत्वे, नाप्रयोजकत्वम् । निर्वृत्तयागभावित्वात्तु स्विष्टकृदादीनां स्फुटमेवाप्रयोजकत्वं भविष्यति ।

यदि चैष प्रक्षेपः प्रधानं भवेत्, ततो दर्शपूर्णमासादिषु जुहोतिव्यवहार एव स्यात् । विकृतिषु च प्रधानानामनतिदेशाज्जुहोतावसति अप्रक्षिप्तानामेव सौर्यादीनां दानं स्यात् । अङ्गत्वे तु तेषामप्याहवनीये प्रक्षेपः सेत्स्यति ।।

ये तु जुहोतिचोदनोत्पत्तयः तेषु पूर्वार्धभूतोऽपि यजिः आत्मा वा भविष्यति । अथवा तेषामपि सोऽङ्गम् । तत्र हि त्यागदेवतोद्देशावपि तेनैवाऽऽक्षिप्येते । यजतिचोदनोत्पत्तिषु पुनः सिद्धयोस्त्यागदेवतोद्देशयोर्जुहोतिः प्रवर्तमानः 'आहवनीये यूपशकला होतव्याः' इतिवत्प्रक्षेपमात्रवचनो विज्ञायते । ततश्च सिद्धमङ्गत्वम् । एवं च सति पुरोडाशो यागे श्रूयते, न होमे । सोऽपि द्व्यवदानस्य विहितो, न समस्तपुरोडाशस्येति, तन्मात्रस्य । समस्तस्य पुरोडाशस्य देवतां प्रत्युत्सृष्टत्वाद्विनाऽपि प्रक्षेपादस्वत्वव्यवहार उपपद्यते । न च परिसंख्यादोषो भविष्यति । निरवदानाच्च शेषसिद्धिः ।

अथवा नैव भिद्येते यागहोमौ परस्परम् ।
पूर्वापरौ हि सदृशौ तद्भागौ नरसिंहवत् ।। ४१ ।।

इति चतुर्दशं सर्वप्रदानाधिकरणम् ।। १४ ।।

**अथ द्वादशं सर्वप्रदानाधिकरणम्**

**न्या० सु०—वैदिकस्य यजमानकर्तृकस्य सोमवमनस्य अनिमित्तत्वेऽभिहिते देवतोद्देशेन ग्रहपात्रे, चमसपात्रे, वा गृहीतस्य सोमस्य सर्वस्य हेतव्यत्वाच्छेषाभावेन पानानुपपत्तेः तद्वमनस्य निमित्तता न युक्तेति पूर्वाधिकरणसिद्धान्ताक्षेपेण प्रत्यवस्थातुं तत्तुल्यन्यायपुरोडाशविचारादनन्तसङ्गति द्व्यवदानवाक्यस्याग्नेयादितद्धितश्रुत्या, अल्पं जुहोतीत्यस्य चैन्द्रवायवादितद्धितश्रुत्या सह विरोधाविरोधविचारद्वारा कृत्स्नस्य पुरोडाशस्य सोमस्य च प्रक्षेपोऽङ्गं द्व्यवदानमात्रस्य, सोमावयवमात्रस्य वेति शेषविचाराद्विरोधाविरोधप्रकरणशेष-**

लक्षणसङ्गती चोदाहरणसन्देहभाष्ये च स्पष्टत्वादव्याख्याय पूर्वपक्षसूत्रव्याख्यार्थं किं प्राप्तमिति भाष्ये सर्वत्यागस्य सिद्धान्तत्वेन पूर्वपक्षयितुमशक्यत्वात्सर्वप्रक्षेपार्थत्वेन व्याचष्टे—**अष्टाकपालादीति**। आग्नेयादि तद्धितैर्देवतार्थत्वोक्तावप्यष्टाकपालादिशब्दैर्विषयसमर्पणादवगमितत्वोक्ता। समस्तस्य देवतार्थत्वेऽपि प्रक्षेपो द्वयवदानमात्रस्य भविष्यतीत्याशङ्कमानस्य त्यगस्य हस्तादिनोपादाय देशान्तरे प्रक्षेपं विनानभिव्यक्तेर्यथा च देवदत्तायेदं न ममेति स्वत्वनिवृत्तिपरस्वत्वापादनसङ्कल्पो मानसं, दानमेवंविधशब्दोच्चारणं वाचिकं, देवदत्तहस्ते प्रक्षेपः कायिकं विविधदानपर्यवसानं च विना न देवदत्तीयत्वसिद्धिः, तथा त्यागस्यापि लोके त्रैविध्यप्रसिद्धेस्त्रिविधत्यागानन्तरमेव च गृहदेवतापूजादौ देवतास्वामिकत्वप्रसिद्धेः प्रक्षेपस्यापि त्यागान्तर्भावात्, अनन्तर्भावेऽपि वा प्रक्षेपात् तस्यैव देवतोद्देशेन द्रव्यत्यागस्य द्रव्यदेवतान्वयापादकत्वादाग्नेयादि चोदनयैव प्रक्षेपविध्यवगतः, तस्य चाहवनीयाश्रयत्वविधानादग्निमुखार्थवादाच्च समस्तस्याहवनीयप्रक्षेपावगतिरुक्ता। न्यायावमतस्यापि प्रक्षेपस्य शेषकार्यविध्यन्यथानुपपत्त्याननुष्ठेयत्वावगमात्पूर्वपक्षानर्थक्यं शङ्कते—**किं पुनरिति**।

परेषां समाधानं दूषयितुमुपन्यस्यति—**सत्यमिति**। दूषयति—**नन्विति**। स्वमतेन समाधातुमुपक्रमते—**अतइति**। कोसावभिप्राय इत्यपेक्षायामाह—**विद्यमानेष्विति**। श्लोकं व्यचष्टे—**यदा हीति**। शेषसद्भावे शेषकार्योत्पत्तौ 'विद्यमानैकदेशिसंयोगादि'४.१.२८ति चतुर्थाधिकरणसिद्धान्तहेतुना शेषकार्याणामेकदशप्रयोजकत्वं सर्वप्रक्षेपेण शेषसभावद्प्रयोजकहेत्वभावाद् द्रव्यान्तरोत्पादनेन शेषकार्योपपत्तिरित्याशयः पुरोडाशान्तरोक्त्या सान्नाय्ये ह्यवदानमात्रेऽपि दधिपयस्त्वाविनाशात्सर्वप्रक्षेपाभावः सूचितः।

अस्मिंश्च पक्षे द्रव्यस्य शेषकार्याङ्गत्वादेकाङ्गस्य चान्याङ्गयोगात्पञ्चानां शेषकार्याणामर्थे पुरोडाशपञ्चकोत्पादनसूचनार्थं बहुवचनं पुरोडाशान्तरेष्ववशिष्टवाचिशेषशब्दायोगं शङ्कते—**शेषेति**। अन्यत्रवाचित्वेन शेषशब्दमुपपादयति—**उच्यत इति**। सिद्धान्तेऽन्यवाचित्वशङ्कानिवृत्त्यै नोऽस्माकं पूर्वपक्षिणां मते हविरन्तराशयः शेषशब्दो भविष्यतीत्युक्तम्।

दृष्टान्तद्वयव्याख्यापूर्वं श्लोकं व्याष्टे—**यथैवेति**।

त्वाष्ट्रपात्नीवतपशुयागाख्यस्य पूर्वस्य कर्मणः 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ती'त्यनेन पर्यग्निकरणान्तस्यैव पर्यवसानविधानात् प्रत्ययानुग्रहार्थसंस्थापयतिपरेण पञ्चमलकारेणा 'आज्येन करोतीत्या'ज्यविशिष्टकर्मान्तरविध्यवगतेः शेषशब्दस्यैकावयविगतोपयुक्तावयवान्यावयवत्वाख्याववशिष्टवाचित्वायोगात्तद्गतैकोपाध्यन्वितोपयुक्तैकपदार्थान्यपदार्थत्वगुणयोगेनानुबन्ध्यपशुयागान्वयान्यकार्यार्थत्वाख्यैकोपाध्यान्वितोपयुक्त-पात्नीवतपशुयागान्प्राज्ययागाख्ये कर्मान्तिरे पूर्वेणा कर्मणा अन्वयात्यकार्ये कृतेनुष्ठेयत्वात्ततोऽधिके त्वष्टृपत्नीविद्वेत्यत्वसाम्यात् त्वत् सदृशे वा शेषशब्दप्रयोग इति यथा नवमान्त्ये वक्ष्यते।

यथा च स्वधर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशकुलजातिरूपायुःश्रुतवृत्तवित्तसुखवन्तो जन्म प्रतिपद्यन्ते। इति गौतमवचने स्वर्गफलस्य ज्योतिष्टोमादे-

निःशेषस्य स्वर्गं एवोपयुक्तत्वात् अन्यफलस्य च फलान्तरे व्यापारायोगच्छेषशब्दोऽन्यस्य चित्रादेर्ज्योतिष्टोमाद्यतिरिक्तस्य तत्सदृशस्य वाचक इति'[1]—

गौतमीयेऽपि, तच्छेषस्तस्माच्चित्राद्यपेक्षक्षये ।

इति चित्रापरिहारवार्तिकेभिहितम् । तथा 'शेषात्स्विष्टकृते समवद्यति' तं०सं० २६६ 'शेषादिडामवद्यति' शंयुवाककाले हविःशेषामृत्विजो भक्षयन्तीत्यत्रापि हविरन्तरम् । तेनैवाधिक्याद्यनपेक्षेणैवान्यत्वेन प्रधानस्वरूपसाधनातिरिक्ततदङ्गसाधनत्वादाधिक्येन वाशब्दात्पुरोडाशतया सादृश्येन वा, शेषशब्दप्रवृत्तिनिमित्तेन शेषादित्येवरूपेण शब्देनाभिधास्यत इति वक्ष्यमाणानुषङ्गेण व्याख्येयम् । अङ्गभूतशेषकार्यार्थिषु पुरोडाशेषु प्रधानार्थपुरोडाशाङ्गत्वोपचारेणाङ्गवाचिशेषशब्दो भविष्यतीत्यन्यथोपपादयति—**अथ वेति** । एवंसति मुख्यार्थत्यागदोषत्वमाह—**शेषेति** ।

विद्यमानसंयोगायोगेन च शेषकार्याणां द्रव्यान्तरोत्पादनप्रयोजकत्वमेकदशद्रव्यञ्चेत्येतदधिकरणशङ्कासूत्रे तस्य विद्यमानस्यैकदेशिनः समस्तस्य प्रधानदेवतायै निर्देशाच्छेपकार्यार्थमन्यत्द्रव्यमर्थादुत्पाद्यमिति सूत्रकारोऽपि वक्ष्यतीत्याह—**यथेति** । शेषकार्यविध्यन्यथानुपपत्त्या सर्वप्रक्षेपाननुष्ठानावगमेऽपि प्रयोजनान्तरसद्भावाद्विचारोऽर्थवान् भविष्यतीत्यन्यथानर्थक्यशङ्कां परिहर्तुमारभते—**अथापीति** । न च प्रयोजनान्तरसद्भावेऽपि पक्षोक्तप्रयोजनाभावाद्विचारानर्थक्यं शङ्कनीयम् । यतो नावश्यं पक्षोक्तेनैव प्रयोजनेन विचाराक्षेपकेण भाव्यं, किंत्वन्यदपि प्रयोजनमक्षेपकं सम्भवतीत्याह—**नावश्यमिति** । इदमाऽन्यपरामर्शः । किं तदित्येपेक्षते 'अपि वा शेषभाजां(६.४.२)स्याति षाष्ठसूत्रबद्धं प्रयोजनमाह—**यदेति** । शेषकार्यार्थशेषस्थापनाभ्युपगमे शेषकार्याङ्गत्वेन शेषविनियोगस्याभ्युपगमनीयत्वादुत्तरार्द्धादिचोदनाविनियुक्तैकदेशानुवादित्वेन च शेषशब्दस्य विनियोजकत्वायोगात्, उत्तरार्द्धादिशब्दस्य च पुरोडाशकपालशब्दवदन्यार्थवाचित्वाभावेन समस्तपुरोडाशस्य प्रधानाङ्गत्वे तदेकदेशस्यान्यत्र विनियोगायोगात् प्रधानादेकदेशमाच्छिद्य स्विष्टकृदादौ विनियोगापत्तेः, पुरोडाशस्यावयवशोऽनेककर्मसाधनत्वप्रसङ्गेनानेकप्रयुक्तत्वप्रसङ्गात् प्रधानार्थावदाननाशादिष्विव स्विष्टकृदाद्यर्थावदाननाशादिष्वपि हविरन्तरोत्पादनापत्तिः । प्रधानचोदनावशेनैव तु शेषस्थापने शेषकार्याणां तत्प्रतिपत्त्यर्थत्वेनाप्रयोजकत्वापत्तेस्तदर्थावदाननाशादिषु 'यस्य सर्वाणि हवींषि नश्येयुर्वा दुष्येयुर्वापहरेयुर्वाज्येन ता देवताः परिसंख्याय यजेते'ति वचनात् स्विष्टकृद्यागस्याज्येन करणेन बृहट्टीकायामुक्तेऽपि शेषकार्यान्तराणामकरणं षष्ठे वक्ष्यमाणं सिद्धं भवतीत्याशयः । एतदेवोपसंहरति—**तस्मादिति** ॥ ४१ ॥

भा० प्र०—सभी हविर्द्रव्यों में जो प्रदेय नहीं है, इसके अन्य कारण भी हैं "शेषदर्शनात् च" श्रुति में "शेषात् स्विष्टकृते समवद्यति" हवन किये गये का शेष अंश से

1. चित्राक्षेपपरिहारग्रन्थे श्लो० १६ ।

स्विष्टकृत् नाम के देवता के उद्देश्य से अवदान (हविर्द्रव्य का खण्ड) करे। इस वाक्य में कहा गया है कि अग्नि आदि देवता के उद्देश्य से त्याग कर अवशिष्ट अंश से स्विष्कृत् नाम के देवता के उद्देश्य से होम के लिए अवदान करना चाहिए। किन्तु यदि सभी से होम कर दिया जाय तो परवर्ती काल में यह जो स्विष्टकृत् होम रूप प्रतिपत्तिकर्म को कर्त्तव्य कहकर विधान किया गया है, वह बाधित हो जायेगा। अत एव कुछ अंश को अवशिष्ट रखना कर्तव्य है।

"शेषदर्शनात् च" = शेष रखने के लिए श्रुतिवचन दृष्ट होता है, अतः सम्पूर्ण हविर्द्रव्य प्रदेय नहीं हो सकता है ॥ ४१ ॥

## [१५] अप्रयोजकत्वादेकस्मात्क्रियेरञ्छेषस्य गुणभूतत्वात् ॥ ४२ ॥ पू०

**शा० भा०—स्तो दर्शपूर्णमासौ, तत्र शेषकार्याणि—ऐड-प्राशित्र-सौविष्टकृतादीनि। तत्र संदेहः—किं हविषो हविषः कर्तव्यानि, उतैकस्माद्धविष इति। किं प्राप्तम्? अप्रयोजकत्वादेकस्मात्क्रियेरन्। अप्रयोजकानि शेषकार्याणि हविषाम्। यदि शेषकार्यैः प्रयुक्तानि भवेयुः, सर्वाणि प्रयुक्तानीति सर्वेभ्यः क्रियेरन्। अन्यार्थानि त्वेतानि, नावश्यं शेषकार्येषु विनियोक्तव्यानि। संनिधानात्तु यतः कुतश्चिदनुष्ठातव्यानि। शेषो हि साधनममीषामिति ॥ ४२ ॥ पूर्व० ॥**

त० वा०—यदाऽऽहवनीये प्रक्षेपेण अक्षपितो हविःशेषः प्रतिपादितः तदा तदा शेषकार्याणि स्विष्टकृदादीनि कथं क्रियन्तामिति विचार्यते। तत्रार्थकर्मत्वं मन्यमान एकस्मादित्याह। सत्यप्यर्थकर्मत्वे यदि तदर्थमेवैतानि द्रव्याण्युत्पन्नानि भवेयुः ततः सर्वेषां संभावनाय पश्ववदानानामिवैकस्मादपि सिध्यति यागे सर्वेषां संबन्धः क्रियेत। तत्तु नास्ति, अप्रयोजकत्वात्। अतस्तुषोपवापकपालवधेकेनैव सिद्धिः ॥ ४२ ॥

न्या० सु०—सिद्धान्तसूत्रव्याख्यार्थं निष्कृष्येत्यादिभाष्यं द्व्यवदानवाक्येन द्विरवखण्डनसंस्कृतस्य द्रव्यस्य चतुरवत्तवाक्यविहितहोमाङ्गत्वे हविर्वाक्येन च संस्कारस्य पुरोडाशादिहविर्विषयत्वेऽभिहितेऽपि, कृत्स्नस्य हविषोद्विरवखण्डितस्य होमोपपत्तेः सर्वंहोमनिरासादयुक्तमाशङ्क्य, अपरमपीन्यपिशब्देनावदेयावयवविधायि, तत्परिमाणविधापि च वाक्यमुपन्यस्तमिति सूचयन् व्याचष्टे—**यदीति**। द्विरवखण्डनसंस्कारस्य हविरन्तरविषयत्वशङ्कानिवृत्त्यै—**तस्मादित्युक्तम्**। एवमादीत्यादि शब्देनोपस्तरणाभिघारणयोर्होतव्यद्रव्यचतुरवत्तत्वसम्पादनार्थत्वद्योतकचतुरवत्तशब्दयुक्तत्वेन द्व्यवदानावृत्तावुपस्तरणाभिघारणाभावेऽपि चतुरवत्तनिष्पत्तेरुपस्तरणाभिघारणानर्थक्यापत्तिसूचनद्वारा ह्यवदानानावृत्तिलिङ्गभूतं चतुरवत्तं जुहोतीति होमविधायि वाक्यं गृहीतम् ॥ ४२ ॥

### १५ वाँ सर्वप्रदानाधिकरण

भा० प्र०—दर्शपूर्णमास यज्ञ में स्विष्टकृत् होम एवं इडा प्राशित्र आदि का अवदान (खण्डीकरण) प्रकृति कर्म है। इनको शेष कार्य कहा जाता है। इसमें यह संशय है कि दर्शपूर्णमास का आग्नेय अग्नीषोमीय आदि जो हविर्द्रव्य है, उन सभी से स्विष्कृत् होम करना होगा, अथवा किसी एक से ही करना होगा ?

इनमें पूर्वपक्षी का कहना है कि "एकस्मात् क्रियेरन्" = किसी एक हविर्द्रव्य से स्विष्टकृत् होम आदि शेषकार्य करना होगा, कारण, "अप्रयोजकत्वात्" = हविर्द्रव्य शेष कार्य का प्रयोजक नहीं है अर्थात् हविर्द्रव्य के संस्कार के लिए ये सभी शेषकार्यों को नहीं करना होगा, किन्तु वह स्वतन्त्र कर्म है, क्योंकि, "शेषस्य गुणभूतत्वात्" = हविर्द्रव्य शेषकार्य का गुणभूत ही होता है, अर्थात्, शेष कार्य के लिए हविर्द्रव्य आवश्यक होने से शेष कार्य प्रधान और हविर्द्रव्य उसका गुण या अङ्ग है। जिस किसी अङ्ग के द्वारा शेष कार्य को सम्पन्न हो सकता है, अतः, उससे शास्त्र विधि चरितार्थ होने से सभी हविर्द्रव्यों से शेष कार्यव्य नहीं है।

"एकस्मात् क्रियेरन्" = एक हविर्द्रव्य से ही शेषकार्य करना होगा, "शेषस्य गुणभूतत्वात्" = क्योंकि, हविर्द्रव्य शेष का गुणभूत अर्थात् हविर्द्रव्य शेष कार्य के प्रति गुणभूत होने से "अप्रयोजकत्वात्" = शेषकार्यों के प्रति हविर्द्रव्य प्रयोजक नहीं होने से ॥ ४२ ॥ पूर्वपक्ष।

## संस्कृतत्वाच्च ॥ ४३ ॥

**शा० भा०—सकृच्चैवंजातीयकेन शेषकार्येण संस्कृतं प्रधानमिति कृत्वा, नापरस्मादपि कर्तव्यमिति ॥ ४३ ॥ हेतुः ॥**

त० वा०—यश्च प्रधानानामेवादृष्टः संस्कारः, स एकद्रव्यनिष्पादितैः शेषकार्यैसिध्यतीति, न द्रव्यान्तरमपेक्षते। सकृच्छब्दश्च सकृदवदानाभिप्रायः। इतरथा तु सर्वावदानेऽपि तन्त्रेण प्रयोगात्सकृत्त्वोपपत्तेरवक्तव्यतैव स्यात्।

अथवा ततः शेषकार्याणि सर्वेभ्यः क्रियेरन्यदि संस्कारकाणि भवेयुः, न त्वेतानि संस्कारकाणि। कुतः ? संस्कारान्तरैरेव संस्कृतत्वात्। अयमप्यविरोधाद्भविष्यतीति चेत् ? तत्राप्येष सूत्रार्थः। संस्कारक्रमस्यातिक्रान्तत्वात् यावद्ध्यकृतप्रयोजनं द्रव्यं भवति, तावत्संस्कारमपेक्षते, प्रधाननिर्वृत्त्युत्तरकालं तु कृतं संस्कारैरिति संस्काराणामनवसरः ॥ ४३ ॥

न्या० सु०—वाशब्दोक्तह्यवदानमात्रहोमसिद्धान्तनिरासहेतुत्वेन संस्कारवाचितयोपायोक्तिव्याख्यार्थं 'यत् जुहोती'त्यादिभाष्यं 'यदष्टाकपालादिहविर्जुहोति' तद्द्विरवखण्डनसंस्कारेण कृत्स्नं व्यासव्यमिति व्याप्यत्वाख्यकर्मत्ववाचिना संस्कर्तव्यमिति तव्यप्रत्ययेन कृत्स्नहविर्व्याप्त्यभिधानाद्ध्यवदानादिवाक्यानामाग्नेयादिवाक्यानुसारितोक्ता। होतव्यमिति-

भाष्यावयवेन् च होतव्ये द्रव्ये संस्कारमात्रं विधीयते, न तु द्विरवखण्डितद्रव्यं साक्षाद्धोतव्यं विधीयते । न पुरोडाशस्य व्रीहिवत्प्रदेयप्रकृतित्वकल्पनात् कृत्स्नहोमाभावः स्यादित्युक्तमित्येवं व्याख्यातुमाह—**यदीति** । प्रत्यासन्नतरोक्त्या साक्षात्प्रदेयविधावितोक्ता । संस्कारवाक्योक्त्याप्रदेयवाक्यत्वं निरस्तम् । आद्यभाष्यावयवव्याख्यार्थमविरोधेनैव चेति वार्तिकान्वयमुपपादयितुं शक्यते हीत्युक्तम् । अतो 'यत् कृत्स्नं हविर्जुहोति, तत् द्विरवदायावदायेत्येवमुपायमिति, द्व्यवदानशास्त्रार्थः । पूर्वाग्नेयाद्युत्पत्तिर्वाक्यवशेन कृत्स्नस्य हविषो होमार्थत्वावगमाद्भवतीति सूत्रतात्पर्यं भाष्योक्तं विवृणोति—**अतइति** । सिद्धान्त्युक्तशास्त्रार्थनिरासार्थत्वेन सौत्रवाशब्दव्याख्यार्थं न द्विरवखण्डितस्य भाष्येति व्याचष्टे—**नैतेनेति** । सूत्रार्थोपसंहारार्थत्वेन कृत्स्नं चेति भाष्यं व्याचष्टे—**तस्मादिति** ।

द्व्यवदानशब्दस्याश्रुतक्रियाभ्यावृत्तिगणनार्थसुच्प्रत्ययकल्पनापत्तेर्द्विरवदायावदायेत्येवमर्थायोगाद्द्वयोरवदानयोः समाहारस्य द्व्यवदानशब्दार्थत्वावगतेरेकवचनाच्चैकस्यैव द्व्यवदानस्य होतव्यत्वप्रतीतेरेकवचनानादरे तु तदाक्षेप्यसमाहाराविवक्षापत्तेः यावद्धविरवदानाभ्यामेव दानबहुत्वापत्त्या द्वित्वनाशप्रसङ्गेनाद्यवदानस्य होमप्रसङ्गात् कृत्स्नहविर्विषयः सन् होमो यथाश्रुतैकद्व्यववदानेतिकर्त्तव्यताकः सकृन्न शक्यः कर्त्तुमिति निष्कृष्टैकद्व्यवदनेतिकर्त्तव्यताकत्वात् प्रदानस्य सर्वप्रदाने चेतिकर्त्तव्यताबाधापत्तेर्द्व्यवदानातिरिक्तं शेषणीयमिति यत्सिद्धान्तसूत्रेणोक्तम् । तस्य कः परिहार इत्याशङ्कानिरासार्थत्वेनापोधिवयेनाभ्यासेन होमस्य कृत्स्नस्य द्रव्यस्यायोगमनमाहवनीयप्राप्तिरित्येवमुपायोक्तिव्याख्यार्थतया कृत्स्ने चेत्यतदेव भाष्यं कृत्स्नं न द्व्यन्यथाभ्यासाभावे कृत्स्नं होतुं शक्यमित्यन्यथाव्याख्यातुं शङ्कते—**यत्त्विति** ।

व्याचष्टे—**ज्योतिष्टोमवदिति** । होमाभ्यासोपपादमार्थत्वेन तदर्थत्वादिति सूत्रावयवं त्रेधा व्याचष्टे—**तदर्थत्वादिति** ।

तच्छब्देनाद्यसूत्रस्थप्रदानशब्दोपस्थापितदेवतापरामर्शमत्वाऽऽद्या व्याख्या । प्रदानपरामर्शं मत्वा द्वितीया ।

कृत्स्नस्यापि हविषो यागार्थत्वे गुणभूतद्रव्यकार्त्स्न्यानुरोधेन प्रधानभूतयागावृत्त्ययोगमाशङ्क्य कृत्स्नस्य हविषो देवतान्वयान्यथानुपपत्त्या यागाभ्यासेऽवगते, ज्योतिष्टोमवदभ्यस्तस्यैव यागस्य फलापूर्वसाधनत्वात् प्राधान्यं, न तु सकृत् कृतस्य, येन प्रधानावृत्तिरापद्येतेतिपरिहारसूचनार्थं तच्छब्देन प्रदानोपस्थापितादूर्पपरामर्शं मत्वा तृतीया ।

कृत्स्नस्य यागार्थत्वेऽप्येकदेशमात्रहोमोपपत्तेर्होमाभ्यासयोगमाशङ्क्याह—**नैकदेशमात्रेति** । आग्नेयादिवाक्यस्य होमपर्यवसायित्वात्तस्य चोत्पत्तिवाक्यत्वेन बलीयस्त्वात्तदर्थसम्पत्त्यै होमाभ्यासो युक्त इत्याशयः । द्व्यवदानाभ्यासोपपादनार्थत्वेनाप्येतमेवावयवं तच्छब्देनाद्यसूत्रानिर्दिष्टहविः परामर्शं निरवदानस्य चानन्तरसूत्रोक्तस्य कस्येत्यपेक्षापूरकत्वं मत्वा व्याचष्टे—**अथ वेति** ॥ ४३ ॥

भा० प्र०—पूर्वपक्षी ने अपने मत के समर्थन के लिए कहा है "संस्कृतत्वात् च" यह शेषकर्म के द्वारा प्रधान याग का संस्कार होता है, किसी हविर्द्रव्य से एक बार शेषकार्य करने के बाद उस संस्कार का निर्वाह हो जाता है, अतः सभी हविर्द्रव्यों से एक से अधिक बार संस्कार करने की कोई आवश्यकता नहीं है।

यदि यह कहा जाय कि पुनः-पुनः शेषकार्य करने पर अच्छी तरह संस्कार होगा, ऐसी स्थिति में यह कहा जा सकता अच्छी तरह यह अनुमानगम्य है, किन्तु, शास्त्र में कहा गया है कि केवल संस्कार ही कर्तव्य है और एक बार करने से ही वह भलीभाँति निष्पन्न हो जाता है, अतः, अधिक बार करना अनर्थक एवं अशास्त्रीय है।

"संस्कृतत्वात् च" = एक बार शेषकार्य करने से ही संस्कृतत्व सिद्ध हो जाता है, अतः सभी हविर्द्रव्यों से शेषकार्य कर्तव्य नहीं है ॥ ४३ ॥

**सर्वेभ्यो वा कारणविशेषात्संस्कारस्य तदर्थत्वात् ॥४४॥ सि०**

**शा० भा०—सर्वेभ्यो वा हविर्भ्यः शेषकार्याणि कर्तव्यानि। कुतः? कारणाविशेषात्। यदेकस्य हविषः शेषकार्यक्रियायां कारणं, तत्सर्वेषाम्। स हि शेषः प्रतिपादयितव्यः। यस्यैव न प्रतिपाद्यते, तस्य तेन संस्कारेण वर्जनं स्यात्। तस्मात्सर्वेभ्यः कर्तव्यानीति ॥ ४४ ॥ सि० ॥**

त० वा०—'यैस्तु द्रव्यं चिकीर्ष्यते' इत्येवं संस्कारकर्माण्येतानि। तत्रापि 'उत्पत्तौ येन संयुक्तम्' इति प्रतिपत्तयः। ताश्च सर्वैः कृतार्थत्वाविशेषादपेक्षिताः। यद्यपि चैताभिर्द्रव्याणि न प्रयोक्ष्यन्ते, तथाऽपि द्रव्यैरेव तासां प्रयुक्तत्वात्सर्वविषयता। निवृत्तेऽपि च प्रधाने, तदीयानां सतामेषां का प्रतिपत्तेर्भवत्वित्यपेक्षिते शक्यः प्रतिपत्तिनियमो विधातुम् ॥ ४४ ॥

न्या० सु०—सकृत् द्व्यवदानेन कर्मणः कार्यस्य यावत् श्रुतस्य कृतत्वात्सकृदेव प्रदानं स्यात्। न च द्रव्यानुरोधेन प्रदानावृत्तिर्युक्ता, द्रव्यस्य गुणभूतत्वादित्येव होममात्राभ्यासनिरासार्थत्वेन सूत्रव्याख्यार्थतया भासमानमुच्यतइत्यादिभाष्यं द्व्यवदानाभ्यासस्यापि शङ्कितस्यानिरासात्तन्निरासं च विना सर्वप्रदाननिराससिद्धेरयुक्तमाशङ्क्य, होमाभ्यासनिरासद्वारा द्व्यवदानाभ्यासस्यापि सूत्रनिरस्तता सकृत्द्व्यवदानेनेतिभाष्यावयवेनोक्ता। द्विरवखण्डनविशिष्टमित्यनेन च द्व्यवदानशब्दो होमे द्रव्यविध्यर्थो, न तु द्रव्ये संस्कारविध्यर्थं इत्यविधानादुपपादितेति सूचनायोभयाभ्यासनिरासार्थत्वेन तुशब्दं व्याचष्टे—नैतदिति।

हेतुप्रश्नोत्तरत्वेन सूत्रशेषं व्याचिख्यासुर्द्व्यवदानशब्दस्य संस्कारविध्यर्थत्वाभावेऽपि हविर्वाक्यविहितस्य संस्कारस्य गुणभूतत्वादभ्यासोपपत्तेर्होमाभ्यासनिरासं विनाभ्यासनिरासायोगात्तन्निरासद्वारद्व्यवदानाभ्यासनिरासौचित्यं सूचयन् व्याचष्टे—कुत इति। श्लोकं व्याचष्टे—द्विरिति। नचेत्यन्त्यभाष्यावयवोक्तामपि होमप्राधान्योपपत्तिं 'तानि द्वैधाधिकरणसूत्रोक्तत्वाद्वैरिति' सूत्रोपन्यासेन प्राग्व्याख्याय भूतभव्यसमुच्चारणाख्योपपत्तिः षष्ठाद्यपूर्वपक्षसूत्रवक्ष्यमाणत्वात् (६-१-१) द्रव्याणामिति। सूत्रोपन्यासेन पश्चाद् व्याख्याता।

होमस्य प्राधान्येऽपि द्व्यवदानाभ्यासे सत्यवदानस्य प्रदानोपक्रमत्वात् प्रदानाभ्यासावश्यकत्वापत्तिः। तदनभ्यासेऽपि वा द्व्यवदानमात्राभ्यासेऽपि सकृत्कृत्स्नावत्तहविर्होमापत्तेर्होमाभ्यासनिरासद्वारा द्व्यवदानाभ्यासनिरासमावृत्तसौत्रसकृच्छब्दोक्तत्वेन सकृत्द्व्यवदानेनेति भाष्यावयवसूचितं द्विरवखण्डनविशिष्टमितिभाष्यावयवोपपादितमपि 'द्विर्हविषावद्यती'ति कृत्स्नहविरुद्देशेन संस्कारविधानात्सकृद् द्व्यवदानेन च कृत्स्नस्य हविषः संस्कर्तुमशक्यत्वादनुपपादितं मत्वा स्वयमुपपादयति—**तस्मिंश्चेति**। द्व्यवदानाभ्यासस्यापि भाष्योक्तत्वसूचनायोभयाभ्यासनिरासे यदि हीत्यादिभाष्यं ह्यत्रदानं वाऽऽवर्त्तयेदित्यध्याहारेण योजयितुमाह—**यदीति**। होमानावृत्तावपि हूयमानद्रव्यानुवादेन द्विरवखण्डनविधानात् कृत्स्नस्य चाग्नेयादिवाक्याद्धोतव्यत्वावगतेरङ्गुष्ठपर्वमात्रावदानद्वयेन वाऽनावृत्तेनाश्वशफमात्रस्य पुरोडाशस्य कृत्स्नस्य व्याप्त्यशक्तेरवखण्डनावृत्तिर्भविष्यतीति 'यज्जुहोति, तत् द्विरवखण्डनेन संस्कर्त्तव्यमि'त्युपायसूत्रव्याख्यार्थभाष्योक्ताशङ्कामतः पूर्ववाक्यवशेनेति वार्त्तिकविवृतां दूषयति—**न चेति**। चकाराद्रव्याप्रतीतावपि यच्छब्दाद् द्रव्यप्रतीतिर्भविष्यतीत्याशङ्क्याह—**योपीति**। सोप्युपेक्षणीय इत्यनेन परमार्थालोचनकृतत्वाभावाद्द्रव्यप्रत्ययस्योपेक्षणीयतामुक्तामुपपादयितुं यद्यस्यावैदिकतायामुक्तायामवैदिकस्य व्याख्यानुच्चारणं किमर्थमित्याशङ्क्यानुवादप्रदर्शनायेत्युक्ते, कस्येत्यपेक्षायां जुहोत्यनुवादत्वोक्त्यै क्रियाविशेषणतोक्ता। आग्नेयादिवचनात्कृत्स्नस्य होमार्थत्वावगतेरभ्यासेन सर्वप्रदानमिति, कृत्स्नं चेति भाष्योक्तद्वितीयोपायसूत्रार्थानुभाषणार्थं यत्त्विति भाष्यं व्याचष्टे—**यत्त्विति**। द्रव्यस्य द्रवणीयस्य गमनीयस्य होतव्यतयावगतस्य द्व्यवदानमात्रस्य प्रदानं प्रति गुणभूतत्वात्तेन च प्रदानस्य कर्मणः कृतत्वान्नाभ्यासोयुक्त इत्येवं परिहारार्थत्वेन सूत्रव्याख्यार्थं तत्रेत्यादिशेषइत्यन्तभाष्यं तात्पर्यतस्तावत् व्याचष्टे—**यदिति**। अशेषस्य देवतया, यागेना पूर्वेण वा ग्रहणे तादर्थ्ये सिद्धे सोमवद्यागावर्त्तकत्वं स्यात्, तदेव त्वष्टाकपालादौ द्रव्यावदानचोदनया कथं चनोपसंहारकत्वेन, प्रदेयप्रकृतित्वापादकत्वेन वा कृत्स्नं प्रदेयत्वापवादान्न सिद्धमित्यर्थः।

एतदेव भाष्यं विविच्य व्याचिख्यासुद्व्यवदानचोदनाया होमान्न यस्य प्रत्यक्षत्वेनाग्नेयादिचोदनायां होमान्वयादानुमानिकाद् बलीयस्त्वोक्तेरुपसंहारकत्व-प्रदेयप्रकृतित्वापादकत्वाख्यापवादप्रकारद्वयसाधारण्येऽपि प्रदेयप्रकृतित्वपक्षस्यापि च शब्दाद्द्वितीयत्वावगमेनोपसंहारपक्षस्याद्यत्वावगतेरुपसंहारोक्त्यर्थसामान्यं खल्वपीतिभाष्यावयवसहितं तत्रेतिभाष्यावयवं व्याचष्टे—**आग्नेयेति**। अनुभाषणभाष्यस्थेन वचनशब्देनाग्नेयचोदनाया निर्दिष्टत्वात्, तत्रेत्यनेन परामर्शोपपत्तिः। पुरोडाशावयविनोद्विरवखण्डनेन नाशात्पुरोडाशावयविवाचिनोऽष्टाकपालशब्दस्यावयवलक्षणार्थत्वावगतेराग्नेयशब्दात्पुरोडाशावयविवाचिनोष्टाकपाल – शब्दः सर्वपुरोडाशावयवसाधारणः। द्व्यवदानशब्दस्तु मध्यपूर्वार्द्धावयवविशेषवाचीति भाष्यार्थः। प्रत्यक्षानुमानिकत्ववैषम्योक्तेरानुमानिकस्य यथाश्रुतत्वानवकल्पनं प्रयोजनमाह—**तस्मिंश्चेति**। स्वानुमानिकस्याष्टाकपालहोमान्वयस्यैकदेशि समर्पणायैकदेशविषयेण ह्यत्रदानहोमान्वयेन प्रत्यक्षेणाप्यपेक्षिततयात्यन्तबाधायोगात्संकोचमात्रं वैषम्योक्तेः प्रयोजनमव-

तिष्ठतेइत्याह—तेनेति। यथानारभ्याधीतं सामिधेनीसासदश्यं पशुमित्रविन्दाध्वरकल्पादि-प्रकरणाधीतैः सासदश्यैः पश्वादिविषयमेवोपसंह्रियतइति दशमे वक्ष्यत इति दृष्टान्तार्थः। उपसंहारं विवृणोति—तत्रेति। अस्मिश्च पक्षे कृत्स्नस्य हविषो देवतार्थत्वादित्यसिद्धो हेतुरित्याह—अत इति। पुरोडाशस्य प्रदेयद्वयवदानप्रकृतित्वोक्तयर्थमपि चेति भाष्यावयवं व्याचष्टे—किं चेति। श्लोकं व्याचष्टे—तद्धिते न हीति। अस्मिन् पक्षेसिद्धोपि हेतुर्न कृत्स्नप्रदानसाधनायालमित्याह—तेनेति। कृत्स्नस्य साक्षाद्देवतोद्देशेन त्यागेऽपि वदाद्वयन-मात्रहोमः कस्मान्न भवतीत्याशङ्क्याग्नौ प्रक्षेपं विना देवतान्वयासिद्धिमधिकरणोपक्रम-वार्त्तिकोक्तां मनसि निधाय प्रकान्तरायोगं सूचयितुमाह—द्वावेवचेति। तस्मादिति सिद्धा-न्तोपसंहारभाष्यं व्याचष्टे—तस्मादिति ॥ ४४ ॥

भा० प्र०—इस पूर्वपक्ष की आशङ्का में सिद्धान्ती का कहना है कि "सर्वेभ्यो वा"= जितने हविर्द्रव्य हैं, उन सभी से स्विष्टकृत्होम करना होगा। कारण, "कारणाविशेषात्" क्योंकि एक ही स्विष्टकृत् होम करना होगा, अन्य से भी स्त्रिष्टकृत्-होम करने का वही एक ही कारण होता है। क्योंकि, "संस्कारस्य तदर्थत्वात्" यह स्विष्टकृत्-होम हविर्द्रव्य का प्रतिपत्ति संस्कार है—यह चतुर्थ अध्याय में व्यक्त किया गया है। यह प्रतिपत्ति-संस्कार हविर्द्रव्य के उद्देश्य से कर्तव्य होने से इस स्थल में हविर्द्रव्य ही प्रधान है और यह संस्कार उसका अङ्ग अर्थात् गुण हैं। प्रधान के अनुरोध से गुण की आवृत्ति होती है अर्थात् अनेक बार अनुष्ठान कर्तव्य होने से यहाँ जितना पुरोडाश है, उतनीबार स्विष्ट-कृत् होम कर्तव्य है, एक बार करने से ही कार्य सम्पन्न नहीं होगा।

"सर्वेभ्यः" = सभी हविर्द्रव्यों से ही अवदान करणीय है, "वा" = पूर्वपक्ष के निरास के लिए है, "कारणाविशेषात्" = क्योंकि, अवदान का कारण सभी हविर्द्रव्यों के पक्ष में ही अविशिष्ट है, अर्थात् एक ही प्रकार या समान है, "संस्कारस्य तदर्थत्वात्" = कारण, संस्कार अर्थात् स्विष्टकृत् अवदानरूप संस्कार के लिए अर्थात् हविर्द्रव्य के लिए ही विहित है ॥ ४४ ॥ सिद्धान्त।

## लिङ्गदर्शनाच्च ॥ ४५ ॥

**शा० भा०—लिङ्गं च दृश्यते—देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति, सोऽब्रवीद्वरं वृणै भागो मेऽस्त्विति, वृणीष्वेति तेऽब्रुवन्, सोऽब्रवीदुत्तरार्धादेव मह्यं सकृत्सकृदवद्यात्, इति वीप्सादर्शनम्। तस्मात्सर्वेभ्यः शेषकार्याणीति। ॥ ४५ ॥ हेतुः ॥ सर्वशेषैः स्विष्टकृदनुष्ठानाधिकरणम् ॥ १५ ॥**

त० वा०—'सकृत्सकृत' इति स्विष्टकृदवदानवीप्सा सर्वेभ्योऽवदाने, संस्कारपक्षे वाऽवकल्पते, नान्यथा।

प्रयोजनसूत्राणि चैतानि। यदि नाम शेषकार्यवशेन पूर्वपक्षेऽप्यसर्वप्रदानं किं भवति तदा विचारस्य प्रयोजनमिति? तत्र यः पूर्वमस्माभिरभिहितोऽर्थः तत्रैवं

सूत्रं योज्यम्। पूर्वपक्षे हवींषि शेषकार्याणामप्रयोजकानीत्येकस्मात्क्रियेरन्। बलाच्चापहारः प्रधानेभ्यः, सकृत्कृते समस्तः कृत इति संस्कृतत्वान्नान्यतोऽपि कर्तव्यः।

सिद्धान्ते तु सर्वहविषां प्रयोजकत्वाविशेषात्सर्वेभ्यः। लिङ्गदर्शनं च पौर्णमास्यधिकरणवत्वप्रयोजनेऽवस्थितसिद्धान्तं द्योतयति ॥ ४५ ॥

( इति पञ्चदशं सर्वेभ्यः शेषकार्यानुष्ठानाधिकरणम् ॥ १५ ॥ )

न्या० सु०—अनेकार्थत्वस्यान्याय्यत्वाच्छेषशब्दस्यैकप्रयोजनसमुदायैकदेशादुपयुक्तादितरदेकदेशान्तरमुख्योर्थः। इतरमात्रं तु शब्दस्यैव पश्चाद्गौण इत्येवमाशयत्वेन व्याचष्टे—**एवमिति**। चकारसूचितमर्थमाह—**उत्तरार्द्धादीति**।

**आग्नेयवाक्यस्य चतुरवत्तवाक्येभ्योपसंहारवादिनां पक्षस्योपन्यासनिरासौ।**

भाष्योक्तमाग्नेयचोदनाया व्याख्याप्रकारद्वयमपि दुदूषयिषुरुपसंहारपक्षतां च दूषयितुमुपक्रते---**अत्रेति**। प्रश्नपूर्वमुपपादयति—**कथमिति**। यः वल्लसत्वा स्पष्टोपि सामान्यविषयो विधिर्यथा पुरोडाशं चतुर्धा करोतीति, यो वा सप्तदशसामिधेनीरनुब्रूयादिति सामिधेनीवत्कर्मविशेषविपयोऽध्यनारभ्याधीतत्वेन कर्मान्वयस्यावल्लसत्वादस्पष्टः। स विशेषे विध्यन्तरावगते कस्मिंश्चिदुपसंह्रियेत। आग्नेयविधेस्त्वष्टाकपालाख्यावयविव्यक्तिविषयत्वेन सामान्यविषयत्वाशङ्कायोगादनुमितक्रियाविपयत्वेनास्पष्टत्वं वाच्यं तदपि तु क्रियानुमानं विना वाक्यान्तरान्वयायोगेने क्रियानुमानस्यावश्यकत्वादयुक्तं ततश्च न द्व्यवदानविधिनोपसंहारः संभवतीत्यर्थः। अनेनैव न्यायेनैन्द्रवायवादिविधेरप्यल्पं जुहोतीति विध्यन्तरेणोपसंहारो न संभवतीति सूचनायान्यैरिति बहुवचनम्। श्लोकं व्याचष्टे—**सामवश्यं हीति**। द्रव्यदेवतान्वयस्य देवतोद्देशपूर्वकद्रव्यत्यागाख्यक्रियागर्भत्वात्, तन्निरपेक्षस्य विध्यशक्तेः क्रियान्वयास्पष्टत्वसिद्ध्यै देवतान्वयस्यास्पष्टता वाच्येत्यापाद्य सा निरस्ता। प्रस्तुतद्व्यवदानस्यैव देवतान्वयोऽस्फुट इत्याह—**स हीति**। बाधप्रकारविशेषत्वाच्चोपसंहारस्य, दुर्बलस्य च बाध्यत्वान्नोत्पत्तिशिष्टतया बलीयसोऽष्टाकपालस्योपसंहारो युक्त इत्याह—**उत्पत्तीति**।

भाष्याशयं दूषयितुमनुभाषते—**तत्रेति**। अनिष्टापादनेन दूषयति—**नैतदिति**। यथाश्रुतत्वायोगमात्रस्योपसंहारसिद्ध्यै कल्पनासंभवोक्त्या विवक्षितत्वान्नानिष्टापत्तिरित्याशङ्क्या, अष्टाकपालस्योत्पत्तिशिष्टत्वे बलीयस्त्वेनानुपसंहारापत्तेरनिष्टापत्त्यपरिहारमाह—**यदि हीति**। स्वाच्छन्द्याज्जुहोतिवाक्यस्यैवोत्पादकत्वमङ्गीकुर्वाणं प्रत्याग्नेयवाक्यस्यानेकगुणविधायित्वापत्तेः पौर्णमास्यधिकरणसूत्रोक्तवाक्यभेदापत्तिमाह—**ततश्चेति**।

न चानन्यक्रियायोगे वाक्यमेतत्समाप्यते।
न च स्वार्थसमाप्तत्वाद्वाक्यान्तरमपेक्ष्यते ॥

इति पौर्णमास्यधिकरणवार्तिके चाग्नेयादिवाक्यानां वाक्यान्तरायोगस्योक्तत्वान्न वाक्यान्तरोत्पन्ने कर्मणि गुणविधायिता युक्तेत्याह—**न चेति**। स्पष्टत्वोपसंहारायोगमुपपादितमुपसंहरति—**अतइति**।

सामान्यं खल्वपीतिभाष्योक्तं सामान्यविषयत्वमुपसंहारकारणं पुच्छकर्णादिच्छेदे पशोरिव द्विरवखण्डनेऽपि पुरोडाशावयविनः प्रत्यभिज्ञायमानस्य नाशायोगाशयेन निराकर्त्तुमाह—**न चेति**। पुरोडाशावयव्यनाशेप्यष्टाकपालशब्दस्य पुरोडाशशब्दवज्जातिवाचित्वात्सामान्यविषयत्वं भविष्यतीत्याशङ्क्य, यौगिकत्वाद्द्रव्यवाचित्वं सूचयितुमाह—**अष्टाकपालेति**।

साक्षात्त्ववाचिना प्रत्यक्षशब्देन सूचितद्रव्यवाचितां द्व्यवदानशब्ददृष्टान्तेन यौगिकत्वात्साधयितुं द्व्यवदानेत्युक्तम्। द्विरवखण्डनेन पुरोडाशावयविनाशात्पुरोडाशवाचिनाष्टाकपालशब्देनाऽवयवान् लक्षयता द्व्यवदानव्यतिरिक्तावयवप्राप्तिः सर्वपुरोडाशावयवसाधारण्येन दुर्बलेति कृत्वोपसंहर्तुं शक्येति भाष्याशयं शङ्कते—**नन्विति**। कतिपयावयवनाशेप्यवयविनः प्रत्यभिज्ञानेनाऽनाशादवयवलक्षणायोगाशयेन निराकर्तुमाह—**उच्यतइति**। अष्टाकपालशब्देनावयविवाचिना [प्रयोजने] पुरोडाशोक्तौ सामान्यवृत्तित्वं स्यात्साक्षात्त्ववयवलक्षणामनपेक्ष्य पुरोडाशावयविविधानान्नाष्टाकपालशब्दः साधारणवृत्तिरित्यर्थः। व्यक्त्यनपेक्षाया जातेः साधनत्वायोगाज्जातिशास्त्राणां व्यक्तिलक्षणार्थत्ववदवयविनोप्यवयवानपेक्षस्य साधनत्वायोगादवयविव्यक्तिवाचिनोप्यष्टाकपालशब्दस्यावयवलक्षणार्थत्वकल्पनमाशङ्क्य, मूर्तत्वेन व्यक्त्यपेक्षया अपि जातेः साधनत्वायोगाज्जातिशास्त्राणां व्यक्तिलक्षणार्थत्वं युक्तं, अवयविनस्तु मूर्तत्वेन साधनत्वसंभवान्नावयविवाचिनोवयवलक्षणार्थता युक्तेत्याशयेन परिहर्तुमाह—**आकृतीति**। साक्षात्साधनत्वायोगाख्यं लक्षणाकारणं विनाप्यवयवशून्यस्यावयविनोसत्वेनासाधनत्वादवयविशब्दस्यावयवलक्षणार्थत्वं भविष्यतीत्याशङ्कते—**अथेति**। एवं सति द्व्यवदानावयविनापि स्वावयवशून्यस्याऽसत्त्वेन साधनत्वाद्द्व्यवदानशास्त्रस्यापि द्व्यवदानावयवलक्षणार्थत्वाद्दौर्बल्यापत्तिरिति साम्यापादनेन परिहरति—**तत इति**। वस्तुतस्तु द्व्यवदानवदष्टाकपालस्यापि साक्षाद्विधानादेव प्राप्तिरित्याह—**तस्मादिति**।

अष्टाकपालावयवानां देवतोद्देशेनात्यागे, चतुर्धाकृतपुरोडाशावयवानां देवतार्थत्वाभावाद्यजमानं प्रत्यस्वत्वं तत्र तत्र वक्ष्यमाणं विरुध्येतेत्याशङ्क्य, अष्टाकपालस्य देवतान्वयप्राप्त्या तदालीढानामवयवातामप्यवर्जनीयतया देवतान्वयप्राप्तेः साम्योक्तिर्न विरुध्यते न त्वेतावता चतुर्धाकृतपुरोडाशावयवानां स्वातन्त्र्येण देवतान्वयप्राप्त्यापत्तिर्येनाष्टाकपालचोदनाऽवयवपरा कल्पनीयेति सूचयितुमाह—**तत्प्राप्तौ चेति**। अवयवा अनुषज्यन्ते इति वाच्येऽवयवानुषङ्गोक्तेश्चतुर्धाकृतपुरोडाशावयवानां यजमानं प्रत्यस्वत्वोक्तयविरोधार्थत्वसूचनायाऽन्तरशब्दः। अभेदविवक्षयाप्यवयवशब्दस्यावयवार्थत्वाभ्युपगमे द्व्यवदानाख्यपुरोडाशावयतवदवयवान्तराण्यपि साक्षादेव प्राप्तानि भवन्तीति तुल्यबलत्वापरिहारान्नोपसंहारोपपत्तिरित्याह—**न चेति**।

**बाधविकल्पसमुच्चयपक्षाणां क्रमशो निरासः।**

द्व्यवदानविधिनाऽष्टाकपालविध्यनुपसंहारेऽप्यवयवान्तरपरिसंख्याया द्व्यवदानमात्रहोमः सेत्स्यतीत्याशङ्क्य, परिसंख्यायास्त्रिदोषत्वेनायोगाच्चोदनाद्वयार्थसमुच्चयाभ्युपगमेऽष्टाक-

पालचोदनाया द्व्यवदानावशिष्टपुरोडाशावयवविषयत्वापत्तेर्युगपच्च सर्वावयवहोमेऽवखण्डनानर्थक्यापत्तेः, प्रदानोपक्रमत्वाच्चावदानस्यान्यहोमेन व्यवधानानौचित्यावगतेर्द्व्यवदानं हुत्वावशिष्टहोम इत्येवमनुष्ठानं प्राप्नोति शेषहोमेऽष्टाकपालविध्यर्थानिष्पत्तेर्वा समुच्चयायोगात् कृत्स्नहोमद्व्यवदानहोमयोर्विकल्पोऽष्टाकपालबलीयस्त्वेन वा द्व्यवदानस्य तद्बाधकत्वायोगात्तेन च सह विकल्पायोगात्कात्स्र्न्यनाशकत्वेन च समुच्चयात्कर्मान्तरकल्पकत्वेऽष्टाकपालान्वयाभावाद्द्रव्यान्तराल्लौकिकादुपादानं, द्रव्यान्तरादुपादाने वा समुदायस्याप्यविरोधात्पूर्वकर्मान्वियस्याप्युपपत्तेर्द्रव्यान्तरादुपादानसंभवे च पुरोडाशोत्पादनाक्षेपापादकस्य पुरोडाशादुपादानस्यानौचित्यात्पुरोडाशादुत्पन्नस्य द्व्यवदानस्याष्टाकपालेन सह विकल्पानुपपत्तेर्द्रव्यान्तरादुत्पन्नस्य विकल्पसमुच्चयो 'द्विर्हविषोवद्यती'ति श्रुतेर्वा पुरोडाशाद् द्व्यवदानग्रहणावधारणाद् द्रव्यान्तरादुपादानानुपपत्ते कात्स्र्न्यनाशापत्तेश्च, द्व्यवदानाष्टाकपालसमुच्चयायोगादाग्नेयचोदनाप्राप्ते च होमे द्व्यदानचोदनाया द्विरवखण्डनसंस्कृतद्रव्यान्वयाख्यगुणपरत्वात्, कर्मान्तरविध्यशक्तेर्द्विरवखण्डनसंस्कृताष्टाकपालान्वयाख्यगुणविषयत्वावगमाद्यावत्संस्कार्यं च संस्कारावृत्त्यौचित्याद्द्विशोवदायावदाय कृत्स्नहोमपक्ष एव प्राप्नोतीत्याह—**तेनेति** ।

द्व्यवदानवाक्यस्योपसंहारकत्वायोगान्निरवदानहोमप्रमाणाभावेऽभिहिते, अस्यैव वाक्यस्य परिसंख्यार्थत्वेन प्रामाण्यमाशङ्क्य, निरवदाने युक्तं द्विर्हविषोऽवद्यतीत्यवखण्डनविध्यर्थवत्त्वान्यथानुपपत्त्या पुरोडाशावयवहोमेऽवगते किमुद्धृतो द्व्यवदानाख्योवयवो होतव्यः, तदन्यः कृत्स्नो वेति नियमापेक्षायां द्व्यवदानवाक्येन नियमविधिर्निरवदानहोमे प्रमाणं भविष्यतीत्याशङ्क्य, कृत्स्नहोमेप्युपायविधायिद्व्यवदानवाक्यापेक्षितावखण्डनोत्पत्तिविध्यर्थत्वोपपत्तेराग्नेयवाक्यविहितकृत्स्नहोमविरुद्धावयवहोमकल्पनायोगान्नियमविधिं निराकर्त्तुमाह—**न हीति** ।

परिसंख्यायाः कथमत्यन्तदुष्टतेत्यपेक्षायामवयवान्तरनिवृत्तिपरत्वाद्वावयान्तरार्थग्रहणं, स्ववाक्यार्थद्व्यवदानहोमाविधानाच्च स्वार्थहानम्, आग्नेयवाक्यप्राप्तकृत्स्नहोमबाधात्प्राप्तबाधश्चेति दोषत्रयमाह—**नित्यवदिति** । 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त' (तै०सं० ५-१-२) इत्यादिवत्फलतः परिसंख्यानेप्यप्राप्तविधानस्यैव वाक्यार्थत्वाद्दोषत्रयानापत्तिमाशङ्क्य, सर्वावयवप्रापकस्याष्टाकपालशास्त्रस्य क्लृप्तत्वेनाऽप्राप्तविध्ययोगाद्दोषत्रयापरिहारमाह—**तत्र हीति** । प्रमाणाभावमुपसंहरति—**तस्मादिति** । द्व्यवदानावशिष्टानां चावयवानां यजमाने प्रत्ययस्वत्वस्य द्रव्ये समत्वादिति सूत्रे तद्व्याख्यार्थे च प्रभवता हि शक्यं दातुं, नाप्रभवतेति भाष्ये, पुरोडाशस्याग्नये संकल्पितस्य नेष्टे यजमान इति चतुर्थाधिकरणभाष्ये च वक्ष्यमाणस्य विरोधापत्तेरप्याग्नेयत्वस्य द्व्यवदानविषयतयोपसंहारो न युक्त इत्याह—**यदि चेति** । देवतान्वयोपसंहारेऽपि त्यागानुपसंहारादविरोधशङ्कानिरासमूचनायाऽर्थ्यंते गम्यते आक्षिप्यत इति कर्मण्युत्पत्त्यार्थशब्दमाक्षेप्यवाचिनमङ्गीकृत्य योगार्थं आक्षेप्योस्येति बहुव्रीहिविग्रहेण योगार्थोक्त्याग्नेयत्वस्य देवतोद्देशपूर्वकद्रव्यत्यागाख्ययोगाक्षे-

पकतोक्ता । आग्नेयत्वस्यैव त्यागाक्षेपकत्वात्, तदुपसंहारे त्यागस्याप्युपसंहारापत्तिरित्याशयः । समत्वोक्त्या कथं शेषावयवानां यजमानं प्रत्यस्वत्वोक्ता भवतीत्याशङ्कानिरासायर्त्विग्भिः साम्याद्यजमानस्येत्येव समत्वोक्तिर्व्याख्याता । देवतान्वयोपसंहारेऽपि निर्वापकाले केभ्यो व्रीहिभ्यो द्वयवदानं निष्पत्स्यते, केभ्यो नेतिविशेषाज्ञानाद्यागादन्यत्रैतान्न विनियोक्ष्यामिति यथेष्टविनियोगार्हत्वलक्षणस्वत्वापनयनरूपस्य त्यागस्य कतिपयव्रीहिविषयत्वयोपसंहाराशक्तेः समस्तचतुर्मुष्टिपरिमितव्रीहित्यागादस्वत्वोक्त्या विरोधं शङ्कते—तत्रेति । निर्धारितविशेषाज्ञानेऽपि यावद्भ्यो व्रीह्यवयवेभ्यो द्वयवदानं निष्पत्स्यते, तावतोऽन्यत्र न विनियोक्ष्यामीत्येवं कतिपयत्यागोपसंहारशक्त्याशयेन निरस्यति—तदिति । श्लोकं व्याचष्टे—देवतायै हीति ।

देवतान्वयविधिव्यतिरेकेण त्यागविधिर्वा तस्मिन् सति यागानुपयुक्तानामप्यदृष्टार्थत्यागोपपत्तेरधिकत्यागहेतुः स्यात् प्रोक्षणादिसंस्कृतव्रीहिनिष्पादितपुरोडाशमध्यपूर्वार्द्धावदानद्वयस्य देवतान्वयान्यथानुपपत्तिर्वेति विकल्प्य, न चात्रेत्यनेनाद्यहेत्वभावोक्त्या, सा चेत्यादिना च द्वितीयहेत्वभावोक्त्या, केनेति काकुर्हेत्वभावोक्त्यर्थत्वेन व्याख्याता । द्वयवदानप्रकृतिभूतव्रीह्यवयवमात्रत्यागेऽप्यवर्जनीयतया व्रीहिप्रतिनिधिभूतनीवारावयवसंस्कारवत्समस्तव्रीहिसंस्कारोपपत्तेरित्याशयः । कर्मावयव्यभावेन चावयवानामेव विधेयत्वात्, तेषां चानेकेषां साक्षादेकविधिव्यापारविषयत्वायोगादवान्तरविशिष्टैकविधिनावयवान्तराक्षेपावगतेरुपक्रमावयवेन चोत्तरावयवाननुष्ठानेऽप्युपपद्यमानानुष्ठानत्वादुत्तरावयवाक्षेपाशक्तेः समाप्त्यवयवेनैव पूर्वावयवानुष्ठानं विनाऽनुपपद्यमानानुष्ठानत्वात्, पूर्वावयवाक्षेपावगतेस्तद्विशिष्टसमाप्तिविधानस्य सर्वत्रेष्टत्वात्समाप्तेरुपक्रमं प्रति प्राधान्यावगमेनाङ्गिगुणविरोधन्यायात्समाप्तिगुणेनोपक्रमगुणबाधावगतेर्निर्वापकालीनस्य चैतावतो व्रीहित्यागादन्यत्र न विनियोक्ष्यामीति यथेष्टविनियोगार्हत्वाख्यस्वत्वनिवृत्त्यात्मकस्य त्यागस्य यागार्थैते व्रीह्य इति संकल्परूपस्याग्नये दास्ये, अग्नीषोमाभ्यां दास्ये, इति मन्त्रप्रकाश्यदेवतान्वयार्थाक्षिप्तस्य यागोपक्रमत्वाद्धोमकालीनस्य न ममेति स्वार्थविनियोगार्हत्वाख्यस्वत्वनिवृत्त्यात्मकस्य त्यागस्य यागसमाप्तित्वाद्यावतो व्रीह्यवयवसमूहस्य होमकालीनत्याज्यत्वं, तावत एव निर्वापकाले त्यागविध्यवगतेर्द्वयवदानमात्रस्य यागाख्यदानाभ्युपगमे तावन्मात्रनिष्पत्त्यर्थस्यैव त्यागान्नातिरिक्तानां स्वत्वापगम इत्याह—सर्वत्र चेति । होमकालीनस्य त्यागावयवत्वेन यागविधिनैव विधानात्तद्व्यावृत्त्या निर्वापकालीनत्यागसूचनायाऽर्थाक्षिप्तविशेषणम् । दृष्टान्तेन त्याज्यावयवमिश्रत्वात्तत्सर्वत्यागशङ्कानिरासमूचनपूर्वं श्लोकार्थमुपसंहरति—अत इति । निर्वापकाले त्यागाद्यदस्वत्वं, तच्छकटस्थत्वेन त्याज्यमिश्रायवमिश्राणामपि चतुर्मुष्ट्यतिरिक्तानां यथा न भवत्येवं होमकाले द्वयवदानातिरिक्तानां पुरोडाशावयवानां नास्वत्वं स्यादित्यर्थः । चतुर्मुष्ट्यतिरिक्तानां निर्वापेण विभागाद्युक्तस्त्यागात्यागविवेकः । चतुर्मुष्टिपरिमितानां तु विभागाभावेन केभ्यो द्वयवदानं निष्पत्स्यते, केभ्यो नेति विशेषाज्ञानात् कतिपयत्यागे च दानवेलायां व्यत्यासापत्तेर्द्वयवदाननिष्पत्त्यर्थव्रीह्यवयवातिरिक्तानां

निष्प्रयोजनस्यापि त्यागस्यावश्यकार्यत्वात्सर्वत्याग इति, तत्रैव स्यादितिशङ्काशयं विवृणोति—**अथेति**। अष्टाकपालशास्त्रस्य समस्ताष्टाकपालावयवसाधारणस्य त्यागव्यवहारप्रवर्त्तकत्वे प्रवृत्तस्य बाधायोगेन द्व्यवदानशास्त्रस्य द्व्यवदानाख्याष्टाकपालावयवविशेषविषयस्य त्यागव्यवहारप्रवर्त्तकत्वायोगान्निर्वापकाले समस्ताष्टाकपालनिष्पत्त्यर्थानां चतुर्मुष्टिपरिमितानां सर्वेषां व्रीहीणां दातव्यत्वप्रक्रमे प्रक्रान्तासमापनदोषानापत्त्यै होमकाले सर्वप्रदानापत्तेर्द्व्यवदानशास्त्रेण समस्ताष्टाकपालशास्त्रं द्व्यवदानातिरिक्तेभ्योऽष्टाकपालावयवेभ्योऽव्यावर्त्तयितुमिच्छता निर्वापकाल एवाष्टाकपालनिष्पत्त्यर्थेषु चतुर्षु मुष्टिषु मध्ये ये द्व्यवदाननिष्पत्त्यर्था व्रीह्यवयवास्तानग्नये दास्य इत्येवं त्याग इत्येवं त्यागव्यवहारः प्रवर्त्तनीय इति परिहरति—**नैतदिति**। श्लोकं व्याचष्टे—**यदा हीति**। त्यागस्य याजमानत्वात्तद्व्यवहारनिरूपणायाग्नये दास्य इति याजमानमन्त्रार्थे प्रदर्शनीयेऽपि तस्मिन्मन्त्रे निर्देशेन देवस्यत्वेति निर्वापमन्त्रस्थत्वाशब्दनिर्दिष्टविषयपेक्षणान्निर्वापमन्त्रार्थप्रदर्शनं विनार्थप्रदर्शनाशक्तेः निर्वापेणाग्नये सेवनार्हं यथा भवति, तथा तान् करोमीत्याध्वर्यवनिर्वापमन्त्रार्थः प्रदर्शितः। शास्त्रस्य सर्वत्यागव्यवहाराप्रवर्त्तकत्वेऽपि विशेषाज्ञानात् सर्वत्यागापत्तिं शङ्कितां परिहर्तुं निर्वपन्नेव जानाति हीति शङ्कानिरासाशयं विवृणोति—**यद्यपीति**। एतदेव दृष्टान्तेनोपपादयति—**तद्यथेति**। चतुर्मुष्टिनिर्वापस्तर्ह्यनर्थकः स्यादित्याशङ्क्याह—**यस्त्विति**। द्व्यवदानमात्रविषयतयाऽऽग्नेयत्वोपसंहारे चतुर्धाकृतपुरोडाशद्रव्ये यजमानस्यास्वामित्वसूचनार्थत्विक्साम्यवचनविरोधमुपपादितं दृष्टान्तपूर्वमुपसंहरति—**अत इति**।

### आग्नेयवाक्यं प्रदेयप्रकृतिकत्वपरमितिनिरासः

प्रदेयप्रकृतित्वपक्षेऽपि द्व्यवदानावशिष्टपुरोडाशत्यागायोगात्समत्ववचनविरोधेन प्रदेयप्रकृतित्वपक्षोऽपि निरस्त इत्याह—**एतेनेति**। न केवलमागमविरोधेनैष पक्षः प्रत्युक्तः। किं तु अयुक्तत्वादपीत्याह—**न चेति**। वैषम्यमुपपादयति—**व्रीहयो हीति**। अदनीयानदनीयत्ववैषम्येण वस्तुशक्त्यशक्तिवैषम्यस्योक्तस्यानदनीयत्वेऽपि कृष्णलादौ शास्त्रवशाद्यागसाधनत्वशक्त्यवगतेरभ्युच्चयोपपत्तिमात्रत्वादुत्पत्त्युत्पन्नशिष्टत्ववैषम्येण च शास्त्रशक्तिवैषम्यस्याप्युत्पत्तिशिष्टयोरपि पशुसोमयोर्हृदयादिरसप्रकृतित्वदर्शनेनाभ्युच्चयोपपत्तिमात्रत्वादपरितोषेण व्रीहीणां पशुसोमयोर्विशसनाभिषवाभ्यामिवावघातेन नाशात् पुरोडाशस्य बुद्धिरवदानमात्रेणानाशाद्यागकाले विद्यमानत्ववैषम्येण यागसाधनत्वशक्त्यशक्तिवैषम्यं वक्तुं वाक्यान्तरशिष्टाश्चोत्पत्तिवाक्यशिष्टश्चेति चकाराभ्यां विनष्टाविनष्टत्वे सूचिते। समाप्तेस्त्र शब्दार्थत्वेन जुहोतेर्देवतोद्देशद्रव्यत्यागपूर्वप्रक्षेपात्मकहोमसमाप्तिभूतप्रक्षेपांशप्रधानतया होमपूर्वांशभूतयागाख्यदेवतोद्देशद्रव्यत्यागवाचित्वाभावात् प्रक्षेपांशं प्रति पूर्वोपक्रान्तत्वात् प्राधान्याच्चातिशयेन पूर्वस्मिन्नंशे यागाख्ये, द्व्यवदानसापेक्षस्य पुरोडाशस्य देवतान्वयोक्त्ययोगेन प्रकृत्यपेक्षिणी द्व्यवदाने चोदनायोगात् व्रीहीणां तु तृतीयोक्तस्य करणत्वस्य पुरोडाशोत्पादनावान्तरव्यापारव्यवधानेपि काष्ठानामिव ज्वालावान्तरव्यवधानेप्यविरोधात्

प्रकृत्यपेक्षिणि पुरोडाशे चोदनोपपत्तेर्वैषम्यान्तरद्वयमाह—न चेति। पूर्वतरे होमांशे द्व्यवदाने प्राप्ते प्रकृत्यपेक्षिणि च सति पुरोडाशश्चोद्यत इत्येतन्नास्ति येन व्रीहिपुरोडाशयोस्तुल्यत्वं स्यादित्याशयः। प्रदेयप्रकृतित्वपक्षनिरासमुपसंहरति—तस्मादिति।

### सर्वप्रदानस्य परिहारोपायद्वयक्रमेण निरूपणम्

भाष्योक्तोपसंहारप्रदेयप्रकृतित्वात्मकपरिहारद्वयायोगे तदन्यपरिहारायोगस्य द्वावेव वैतौ व्याख्याप्रकाराविलत्यादिवार्त्तिकेनोक्तत्वात् कोऽन्यः सर्वप्रक्षेपपूर्वपक्षस्य परिहार इति पृच्छति—कस्तर्हीति। इदं द्रव्यं नेतः प्रभृति कस्मिंश्चित् स्वकार्ये विनियोक्ष्यामीति संकल्परूपे मानसे त्यागे वाचिके च न ममेति शब्दोच्चारणरूपे कृतेऽपि, हस्तादिनोपादाय क्वचिद्देशे निक्षेपरूपं कायिकं त्यागं विना यागापर्यवसानात्, प्रक्षेपं विना यजत्यर्थानिष्पत्तेर्यागहोमयोरभेदे सत्याग्नेयचोदनया सर्वप्रक्षेपविधानात्सर्वप्रक्षेपस्यापरिहार्यत्वं प्रक्षेपं विनापि यजत्यर्थनिष्पत्तेस्तु यागहोमयोर्भेदादेव तयोश्च भेदे सतीत्यादिवार्तिकवक्ष्यमाणो द्व्यवदानाष्टाकपालविध्योरविरोध एव परिहारो वक्तुं शक्यत इत्युत्तरमाह—उच्यत इति।

### यागहोमयोर्भेदानङ्गीकारेऽनिष्टापादनम्।

व्यतिरेकमुखेनोत्तरार्थं पादत्रयं व्याचष्टे—यदीति। सर्वप्रक्षेपप्राप्त्युक्त्या तृतीयपादे व्याख्याते पूर्वार्द्धव्याख्यार्थं तदा चेत्युक्तम् अभेदस्य भ्रान्तिकल्पितत्वोपपादनार्थं यजेतेत्यनेन केवलस्य यागस्य कर्त्तव्यता चोद्यते, न जुहोतिशब्दाभिहितस्येतिशब्दान्तराधिकरणभाष्यान्यथानुपपत्तिलक्षणन्यायसिद्धत्वं यजत्युक्ते कर्मण्यनुवादार्थजुहोतिश्रवणादासेचनोपलक्षितप्रक्षेपाधिको यागो होमः न तु यागमात्रं होम इति होमलक्षणार्थसूत्रवक्ष्यमाणत्वमभियुक्तप्रयोगेण द्रवद्रव्यप्रक्षेपवाचिनोपि चासेचनशब्दस्य प्रक्षेपमात्रोपलक्षणार्थत्वेन लक्षणाव्याप्त्यभावात्समर्थयिष्यमाणत्वमुक्त्वा, कथं समर्थयिष्यत इत्यपेक्षायां यथेत्यनेनाभियुक्तप्रयोगमुपन्यस्य यागस्य होमत्वाभावे दर्शपूर्णमासादिष्वाहवनीयाप्राप्तिः ततश्च यजतिचोदितासु प्रकृतिविकृतित्वाभावादग्नयश्च स्वकालत्वाद् इत्यत्राग्नीनां प्रकृतिविकृत्यर्थत्वोक्तिः। प्रयाजादिषु च यजतिचोदितेष्वाहवनीयाप्राप्ते'स्तासामग्निः प्रकृतितः प्रयाजवदि'ति दृष्टान्तोक्तिर्न युज्येतेत्याशङ्कां निराकर्तुं चतुरवत्तादिवाक्यैः प्रक्षेपाविक्यविधानाद्धोमत्वापत्तेर्न कोऽपि दोषोस्तीति परिहारसंभवः—परिहरिष्याम इति व्टोक्तः।

अन्वयमुखेनोत्तरार्थं चतुर्थं पादं व्याचष्टे—तयोश्चेति। ततश्च प्रक्षेपाभावेप्यष्टाकपालस्याग्नेयत्वसिद्धेर्न सर्वप्रक्षेपापत्तिरिति परिहाराशयः। सर्वप्रक्षेपविधायिवाक्याभावेऽपि देशविशेषे निक्षेपं विना मानसत्यागानभिव्यक्तेः, तदभिव्यक्त्यै सर्वप्रक्षेपापत्तिमाशङ्क्याह—तत्रेति। देवतोद्देशपूर्वकद्रव्यत्यागात् प्रागाचारप्राप्तेन शुचौ देश प्रक्षेपेण त्यागाभिव्यक्तिसिद्धेर्न त्यागोत्तरकालमाहवनीये प्रक्षेपापत्तिरित्याशयः। आहवनीये प्रक्षेपाभावे नाशाभावाद्देवतायाश्च स्वत्वानापादनेन परस्वत्वानापत्तेस्त्यक्तस्याप्यनन्यपरिगृहीततृणोषकादिवत्स्वीकारसंभवाद्धुतावशिष्टे पुरोडाशे यजमानस्यास्वत्वोक्तिर्विरुद्ध्येतेत्याशङ्क्याह—

**तत्परिपालनार्थं चेति**। पूर्वसंकल्पनाशने को दोष इत्यपेक्षायां संकल्पाख्यमानसत्यागाभिव्यक्त्यर्थं न ममेतिशब्दोच्चारणरूपवाचिकत्यागावश्यंभावादानुषङ्गिकानृतवदनजन्यदोषापत्तिसूचनायानृतं चेत्युक्तम्। अनन्यपरिगृहीततृणादिवत्परिग्रहाख्येन स्वत्वोपायेन पश्चात् स्वीकारोऽपि प्राचीनस्वत्वत्यागरूपसंकल्पानाशान्नानुषङ्गिकानृतवदनजन्यदोषापत्तिरित्याशङ्का संकल्पस्यैतावन्तं कालं न ममेत्येवंकालेनानवच्छेदाद्यावज्जीविकत्वावगतेः, पुनः स्वीकारे नाशोऽपरिहार्य इत्याशयः। पदहोमादौ देवतान्वयायोगापत्याग्निमुखार्थवादस्यानादरणीयत्वं सूचयन् सर्वप्रक्षेपपरिहारोपपत्तिमुपसंहरति—**तेनेति**। आर्थवादिकाहवनीयप्राप्त्यनादरत्वं सूचनार्थं पदस्येत्युक्तम्। द्व्यवदानमपि तर्हि न होतव्यमित्याशङ्क्याह—**तथेति**। द्व्यवदानाख्यद्रव्यस्य चतुरवत्तवाक्यविहितहोमान्वयविधायिद्व्यवदानवाक्यं द्रव्यविशेषविधायि च मद्धचपूर्वार्द्धवाक्यं तत्परिमाणविधायि चाङ्गुष्ठपूर्ववाक्यमादिशब्देनोक्तानि। हविरन्तरद्व्यवदानहोमविषयत्वेनापि वाक्यान्तराणामुपपत्तेः पुरोडाशावयवभूतद्व्यवदानहोमावधारणाशक्तिमाशङ्क्य, प्रकृतपुरोडाशग्राहित्वेन शक्तिं दर्शयितुमाह—**सर्वाणि चेति**। द्रव्यस्य होमानुवादेन, विधेयहोमविशेषणत्वेन वा विधौ प्रकृतस्य प्राप्तत्वेन विधेयत्वायोगाद्धोमस्य प्रकृतद्रव्यालम्बित्वायोगापत्तेस्तदुपपादनार्थं होमानुवादेन द्रव्यविधिं तावन्निरस्यति—**तथा हीति**। द्व्यवदानवाक्ये चतुरवत्तवाक्यविहितहोमानुवादेन द्रव्यविधावपि 'द्विर्हविषोवद्यती'ति वाक्यविहितद्विरवखण्डनसंस्कारसंस्कृतस्य प्रकृतस्यैव द्रव्यस्य होमान्वयमात्रविधानाच्चतुरवत्तवाक्ये प्रकृतस्य हविषश्चतुरवदानाभावात् अप्रकृते द्रव्यविधिर्वाच्यः तस्मिंश्च होमविधानान्न द्रव्यविधिः संभवतीति सूचनार्थस्तावच्छब्दः। प्रकृतस्य हविषश्चतुरवदानाभावेप्युपस्तरणाभिघारणाभ्यां चतुरवत्तत्वसंपत्तेः, प्रकृतस्य च द्रव्यस्याप्रतीतेर्विधेयहोमविशेषणत्वेनापि न द्रव्यविधिः संभवतीति सूचयितुं द्रव्यविशिष्टहोमविधिं निरस्यति—**चतुरवत्त्वं चेति**। द्रव्यस्वरूपेण, चतुरवदानसंस्कृतरूपेण वा विशिष्टस्य होमस्याविधानेपि स्विष्टकृद्धोमे सकृदवदानस्य पुरोडाशस्य च सर्वहुतत्वविधावभिघारणावृत्त्या चतुरवत्तता संपादनीयेति सूचनार्थत्वाच्चतुरवत्तशब्दस्य नानर्थक्यापत्तिः। होममात्रविधानेपि होमस्य कर्मान्तरत्वादुत्पत्तिशिष्टयागावरुद्धद्रव्यशक्तित्वायोगमाशङ्क्य, देवतोद्देश-द्रव्यत्याग-प्रक्षेपाख्यत्र्यंशहोममध्ये प्रक्षेपांशमात्रविधानात् तस्य चैकशब्दोक्तपूर्वांशद्वयगृहीतद्रव्यग्राहित्वात् प्रकृतद्रव्यग्राहित्वसिद्धिमाह—**होमस्यापि चेति**। त्र्यंशस्य होमस्य मध्ये प्रक्षेपांशस्य समाप्तित्वाच्छुत्याभिधानेऽपि प्रक्षेपमात्रस्य जुहोत्यवाच्यत्वेन पूर्वांशद्वयानपेक्षस्य विध्ययोगात्तस्याप्यपूर्वस्यार्थाद्विध्यवगतेः प्रकृतद्रव्यग्राहित्वाभावात्तद्वशेन प्रक्षेपस्य प्रकृतग्राहित्वासिद्धिमाशङ्क्य, मीमांसापूर्व'माग्नीध्रमुपतिष्ठते' इत्यस्य गौरवभयात् सिद्धसामान्यसंबन्धकृताग्नेयग्राहित्ववदस्यापि सिद्धदेवतोद्देशत्यागप्रकृतद्रव्यग्राहितोक्ता। त्यागदेवतोद्देशाख्यमंशद्वयमवगतं येषामष्टाकपालादीनां, तान्येव प्रक्षेपविधिना गृह्यन्त इत्यर्थः। अवगतत्यागदेवतोद्देशांशद्वयानामष्टाकपालादीनां प्रक्षेपसाधनत्वेयाग साधनत्वविरोधापत्तेस्तद्ग्रहणायोगशङ्कां निरस्यति—**न चेति**। प्रक्षेपस्य यागवैपरीत्याभावात्

प्रक्षिप्यमाणानां यागस्वरूपसाधनत्वाविघातेपि यदि प्रक्षेपस्य देवतान्तरान्वयात् प्रक्षिप्य-माणानां देवतान्तरान्वयः स्यात् ततोप्याग्नेयत्वादिबाधापत्तेर्यागीयाग्नेयत्वादिरूपसाधनत्वं विहन्येत, न तु प्रक्षिप्यमाणानामपि देवतान्तरान्वयोऽस्तीति सूचयितुं विरोधप्रकारद्वयोक्तिः वाक्यान्तरवशात् प्रकृतद्रव्यावयवभूतद्व्यवदानहोमावधारणमुपादितमुपसंहरति—तेनेति। द्व्यवदानप्रक्षेपेपि कृत्स्नपुरोडाशस्य यागसाधनत्वाविरोधसूचनायाऽष्टाकपालेनेत्युक्तम्। चतुरवत्तवाक्येन आधारविशेषानवच्छिन्नहोमविधौ पूर्वपक्षे यावद्भिः सद्भावमवदानावृत्त्या कृत्स्नप्रक्षेपेप्याहवनीयप्रक्षेपनियमाभावाच्छेषकार्याणां पुरोडाशान्तरप्रयोजकत्वोक्तिरयुक्ता स्यादित्याशङ्क्याहवनीयवाक्यादाहवनीयनियममाह—तत्रेति।

पुरोडाशस्य वेदिर्बर्हिः स्थितस्य वेदिर्बर्हिर्वाक्यवशाद्यागसाधनत्वं दृष्टान्तायोक्तम्। प्रसंगाद्विकृतिषु प्रक्षेपातिदेशानतिदेशनिर्णयार्थं स प्रक्षेपरूपो होमः किमाग्नेयादिवाक्यविहि-ताद्यागादन्यत्, तदङ्गं, तस्यैव वा रूपान्तरमिति चिन्तनीयमित्याह—स त्विति। पूर्वपक्षं प्रतिजानाति—तत्रेति। हेतुमाह—कर्मान्तरत्वेहीति। द्रव्यान्तराप्रासेर्गौरवानापत्तिमा-शङ्क्य, प्रक्षेपस्य प्रकृतयागोपयुक्तद्रव्यप्रतिपत्तित्वात् प्रकृतद्रव्यावलम्बित्वेऽपि त्यागोद्देशा-ख्यांशद्वयस्य प्रतिपत्त्यनौपयिकतया प्रक्षेपेणानपेक्षणात्तद्गृहीतदेवताग्रहणनियमानुपपत्तेश्चतु-रवत्तशब्दवच्च प्रकृतापेक्षसंस्कारनिमित्तस्य शब्दस्य देवताविषयस्याभावेनाग्नेयीन्याया-भावाद् द्रव्यदेवताख्यभिन्नविषयोरपि च त्यागोद्देशयोरेकशब्दोक्तत्वोपलब्धेरेकशब्दोक्तत्व-मात्रेण यागप्रक्षेपयोरेकविषयत्वकल्पनायोगाद्गौरवभयमात्रेण च प्रकृतदेवताग्रहणे नारिष्ट-होमादिष्वपि प्रकृतद्रव्यदेवताग्रहणापत्तेर्देवतान्तरप्राप्त्या गौरवापत्तिरुक्ता। कीदृग्रूपान्तरं, कथं च प्रक्षेपेणोपजायत इत्यपेक्षायां होमत्वं रूपान्तरमंशान्तरोपजनहेतुकप्रचयातिशयापत्त्या चोपजायतइत्याह—यथोक्तेन त्विति। न्यायः—अंशान्तरवृद्धिः। होमरूपस्य च याग-विशेषरूपत्वान्न रूपान्तरापत्तिमात्रेण यागरूपविधानापत्तिरित्याह—न चेति। एतदेव सदृष्टान्तमुपपादयितुमाह—सामास्ये हीति। रूपान्तरोपजननपक्ष एव च समस्तस्य पुरोडा-शस्य यागसाधनत्वं सिद्धयेत्, कर्मान्तरत्वे तु सर्वकर्मणामन्योन्यं धर्मधर्मित्वाभावे चान्योन्य-वैपरीत्यात्, प्रक्षेपस्यापि वैपरीत्यापत्तेर्द्व्यवदानस्य त्यागविपरीतप्रक्षेपाख्यक्रियान्वयेन याग-साधनत्वव्याघातप्रसङ्गान्न समस्तस्य यागस्य साधनत्वं सिद्धयेदित्याह—सोयमिति। प्रक्षेप-मात्ररूपोयं चतुरवत्तवाक्यविहितो होमो यदि यागः ततः समस्तेन क्रियते, नान्यथेत्येव-कारार्थः। होमस्य यागत्वे भेदोक्तिविरोधशङ्कानिरासाय:मित्यनेन सिद्धयागान्वयद्रव्य-ग्राहिणो होमस्यात्र यागतोच्य ते नत्वपूर्वद्रव्यग्राहिणो यागाद्भिन्नत्वेनाभिमतस्येति सूचिते, कोऽस्य होमान्तरेभ्यो विशेष इत्यपेक्षायां प्रक्षेपमात्ररूपत्वाद्यागविशेषत्वोपपत्तेः सामान्य-विशेषरूपत्वेन यागत्वाविरोधं स इत्यनेन सूचितं प्रकटयितुं द्व्याकारोक्तिः। समस्तस्य सामान्याकारसाधनत्वेऽपि द्व्यवदानमात्रस्य विरोधाकारसाधनत्वात् समस्तस्य द्व्याकारसा-धनता न युक्तेत्याशङ्क्य, आकारयोः समस्तसाध्यत्वाभावेप्याकारिणः समस्तसाध्यत्वाविरोधं सूचयितुमाह—द्व्यवदानेनेति। सामान्यरूपस्यानभिमतापि शेषसाध्यत आकारिणः समस्त-

साध्यत्वाविरोधसूचनायोक्ता । अस्मिन्नेव च पक्षे यागप्रक्षेपयोर्युगपदनुष्ठानं युज्यते । कर्मान्तरत्वे तु प्रक्षेपस्य यागोपयुक्तद्रव्यप्रतिपत्तित्वात्, पश्चादनुष्ठानापत्तेर्यौगपद्यं न युज्येतेत्याह—**एकस्मिन्नेव चेति** । एकक्षणे निष्पद्यमानत्वादपि द्व्याकार इत्यर्थः । कथमेकक्षणे निष्पत्तिर्ज्ञायते इत्याशङ्क्याह—**यदैव हीति** । अवदानादेः प्रक्षेपान्तस्यैकपदार्थत्वेन तावत् क्रियाक्षणव्याप्यस्य कालस्यैक्यात्तन्मध्ये वषट्कारानन्तरमनुष्ठीयमानस्य देवतोद्देशद्रव्यत्यागरूपस्य यागस्य वषट्कारानन्तरजुह्ववरोपणाहवनीयोपरिनिधानन्यक्करणव्यवहितेन प्रक्षेपेण सहात्यन्तं कालैक्यायोगेपि यौगपद्योपपत्तिसूचनार्थं, यदैव द्व्यवदानस्याहवनीये निक्षेपो द्विरवखण्डनेन प्रक्रम्यते, तदैव याज्यानुवाक्याभ्यामुद्देश्यदेवतास्मारणद्वारा समस्तपुरोडाशविषयदेवतोद्देशस्मारणं क्रियत इत्युक्तम् । प्रक्षेपदेवतासंकल्पयोर्युगपदनुष्ठानमेव द्व्यवदानमात्रस्यदेवतासंकल्पभ्रान्तौ हेतुरिति प्रसङ्गात् सूचयितुमाह—**तेनेति** । 'आश्रावयेत्याश्रावणाख्येन प्रैषेण देवतायै द्रव्यं दातुमाभिमुख्येन यजमानं श्रावयेत्यभिधानात्, जुहूस्थस्यैव च द्व्यवदानमात्रस्य सन्निहितत्वादाभिमुख्येन श्रावणोपपत्तेर्द्व्यवदानमात्रविषय एवाश्रावणेध्वर्युणाग्नीत्प्रैषणादत्, अस्तु श्रौषडिति' च प्रत्याश्रावणाख्येन प्रैषार्थेन यदा श्रावयितव्यत्वेनाध्वर्युणोक्तं, तदा श्रावितमस्त्वित्याग्नीध्राद् द्व्यवदानमात्रस्य यजमानं प्रत्याभिमुख्येन श्रावणाद्या द्व्यवदानमात्रस्य देवतान्वयभ्रान्तिः, सा न कार्या । तेन याज्यानुवाक्याभ्यां होत्रा क्रियमाणस्य देवतोद्देशस्मारणस्य समस्तविषयत्वेन हेतुनेत्यर्थः । होत्रा क्रियमाणस्य देवतासंकल्पस्मारणस्य कथं समस्तपुरोडाशविषयतावसीयत इत्याशङ्क्य आग्नेयोऽष्टाकपाल इति वेदार्थानुसारेण समस्तविषययोस्त्यागदेवतोद्देशयोर्यजमानेनाग्नये समस्तः पुरोडाशो न ममेत्येवमध्वर्युणा च समस्तपुरोडाशमाभिमुख्येन यजमानं श्रावयेत्येवं देवतोद्देशस्य समस्तविषयस्यैव कर्त्तव्यत्वादित्याह—**विद्वद्भ्यामिति** । अष्टाकपालश्रुत्यवधारितयजमानव्यापारसमस्तविषयत्ववशेनाध्वर्युव्यापारस्यापि समस्तविषयत्वावधारणसूचनार्थादध्वर्युयजमानयोः साहित्यनिर्देशात् जातं त्यागस्याप्युभयकार्यत्वभ्रमं निवर्तयितुं—**यथार्होक्तिः** । ततश्च कर्तव्यस्मृत्यर्थत्वात् स्मारणस्यापि समस्तविषयताऽवसीयतइत्यर्थः । अवगतत्यागदेवतोद्देशांशद्वयस्यैव तर्हि द्रव्यस्य प्रक्षेपविधानात् सोऽपि समस्तविषयः स्यादित्याशङ्क्य, चतुरवत्तादिवेदार्थानुसारात् प्रक्षेपस्य द्व्यवदानमात्रविषयत्वोपपत्ति सूचयितुमाह—**अध्वर्युणोत्विति** । यागस्य द्व्याकारत्वे होमाहोमत्वलक्षणवैरूप्यापत्तिमाशङ्क्य, अनेकरूपत्वाख्यस्य वैरूप्यस्यास्माभिरेवेष्टत्वेनाऽनापाद्यत्वादशोभनत्वाख्यं वैरूप्यमापादनीयम् । द्व्यवदानाष्टाकपालवचनद्वयसामर्थ्यात्तु द्व्याकारस्यैव यागस्य शोभनत्वप्रतीतेर्नं तच्छक्यमापादयितुमित्याह—**न चेति** ।

रूपान्तरोपजनपक्ष एव समस्तस्य पुरोडाशस्य यागसाधनत्वं सिद्ध्येन्नान्यथेति यदुक्तम् । तद्यथा पुरुषस्यैकस्मिन्नवयवेऽधिकं देशं गतेपि पूर्वदेशान्वयापगमरूपं वैलक्षण्यं न भवति, तथा पुरोडाशस्य द्व्यवदानाख्येवयवेऽधिकं प्रक्षेपांशं गतेप्यौत्पत्तिकयागसाधनत्वोपपत्तेरुत्पत्तिवाक्याविरोध इत्येवं पुरोडाशस्य पुरुषवद्भावं क्रियायाश्च देशवद्भावं दर्शयन्नुपसंहरति—

अतइति । प्रासङ्गिकचिन्तायां पूर्वपक्षमुपसंहरति—तस्मादिति ।

सिद्धान्तमाह—अथवेति । स्वतः कर्मान्तरत्वेन प्रसिद्धस्य प्रक्षेपस्यैकद्रव्याश्रितत्वमात्रेण प्रोक्षणादिवत्कर्मान्तररूपत्वायोगात् प्रोक्षणादिवदेव च प्रक्षेपस्य देवतोद्देशानालिङ्गितत्वेन देवतानपेक्षत्वात् संस्कारत्वेन च द्रव्यान्तरानपेक्षत्वाद् द्रव्यदेवतान्तरकल्पननिमित्तगौरवानापत्तेः संस्कारत्वेनैव च तं प्रति द्रव्यस्याङ्गत्वाभावात्तदन्वयेऽपि समस्तस्य योगसाधनत्वविघातनापत्तेः कर्मान्तरतैव युक्तेति सूचनार्थं, तत्र शब्देनैकद्रव्याश्रिततोक्तेः, तत्रैकस्मिन्नपि द्रव्ये समवेतो यो यागः, स प्रधानं, यः प्रक्षेपः, सोऽङ्गमित्यर्थः । एतदेवोपपादयति—तथा हीति । होमस्यारादुपकारित्वेनाङ्गत्वप्रसिद्धेः । प्रधानद्रव्यवर्तिनश्चारादुपकारित्वायोगान्नाङ्गता युक्तेत्याशङ्क्य, प्रधानद्रव्याश्रितत्वेनारादुपकारित्वायोगेऽपि निर्मूलायाः प्रसिद्धेरप्रमाणत्वेन प्रोक्षणादिवत्संस्कारत्वेनाङ्गत्वाविरोधमाह—यद्यपीति । न च प्रधानद्रव्यवर्तित्वमात्रेणाङ्गत्वविरोधः । संस्कारत्वेनाङ्गत्वेपि प्रधानद्रव्यवर्तित्वोपपत्तेरित्याह—नहीति ।

संस्काराणां प्रतिपत्त्यपूर्वसाधनत्वयोग्यताधानाख्यप्रयोजनातिरिक्तप्रयोजनाभावात्प्रधानात्प्रागनुष्ठाने च विना प्रधानस्य संस्कृतद्रव्यजन्यत्वासम्पादनादपूर्वसाधनत्वयोग्यताधानाशक्तेः प्रधानसमकालस्य प्रक्षेपस्यापूर्वसाधनत्वयोग्यताधानप्रयोजनत्वायोगात्कृतकस्यैव च द्रव्यस्य प्रतिपत्त्यपेक्षत्वेन प्रधानादूर्द्धमनुष्ठानं विनाप्रतिपत्तिप्रयोजनात्वायोगात्संस्कारत्वायोगमाशङ्क्य, प्रतिपत्त्यनर्हत्वापादकस्य भाव्युपयोगत्वस्य प्रधानकालेप्यभावेन प्रतिपत्त्यविरोधात्प्रधानोत्तरकालायां चापूर्वसिद्धौ समकालस्यापि संस्कारस्य प्रधानसहायत्वोपपत्तेः प्रतिपत्त्यपूर्वसाधनत्वयोग्यताधानयोर्द्वयोरपि प्रयोजनयोः सिद्ध्यै संस्कार्यत्वेपि युगपदनुष्ठानोपपत्तिं सूचयितुमाह—संस्काराश्चेति ।

प्रक्षेपस्य संस्कारार्थत्वे स्विष्टकृदादिवदप्रयोजकत्वापत्तेः प्रक्षेपात् प्राक्द्व्यवदानस्य नाशदोषापहारेषु पुरोडाशान्तरोत्पादनं निर्देशाद्वान्यदागमयेदि(६.४.२)ति षष्ठाधिकरणसिद्धान्तसूत्रे शेषादवदाननाशे स्यात्तदर्थत्वादि(६.४.१)ति पूर्वपक्षसूत्रे च द्व्यवदानावशिष्टात्पुरोडाशाद् द्व्यवदानान्तरावदानं वक्ष्यमाणं विरुद्धचेतैत्याशङ्क्य, प्रक्षेपस्याप्रयोजकत्वेऽप्यसंस्क्रियमाणद्रव्यजन्यस्य प्रधानस्यापूर्वसिद्धावशक्तेरकृतावस्थत्वाच्च गुणानुरोधेनावृत्त्यनापत्तेः प्रधानेनैव पुरोडाशान्तरोत्पादनस्य शेषादवदानस्य वा आक्षेपोपपत्तेरविरोधं वक्तुं पश्चात् प्रक्षेपपक्षमुपन्यासपूर्वं दूषयति—तत्रेति । उत्पत्तिशिष्टपुरोडाशसाधनत्वविरोधात् व्रीहिभिर्यागोऽशक्यः साधयितुमित्युक्ते, अभ्युच्चयहेतुमात्रत्वेनानदनीयावस्थतोक्ता । षष्ठाधिकरणविरोधापत्तेरपि न निर्वापकाले यागनिष्पत्तिरित्याह—यदि चेति । पूर्वपक्षसूत्रग्रहणायादि शब्दः ।

नवमे च देवता तु तदा शीष्ट्वात्संप्राप्तत्वात्स्वामिन्यनर्थिका स्यादिति सूत्रेणाऽऽशासानामेधपतिभ्या मेधमिति मेधाख्यस्य पशोर्मेधपत्यर्थत्वाशिषो देवतायां पशुस्वामित्वसिद्ध्यर्थमुपपत्तेर्यजमाने तु पशुस्वामित्वस्य प्राप्तत्वात्तदाशासनानर्थक्यापत्तेर्देवतापर एव

मेघपतिशब्दो, न यजमानपर इति सिद्धान्तेऽभिहिते, पशोश्च देवतायै प्रतिश्रुतत्वेनोत्सृष्टप्रायत्वान्नजमानस्योपचारिकमेवपतित्वापत्तेर्न तत्परो मेघपतिशब्द इति हेत्वन्तरोक्तचर्थमुत्सर्गाच्च 'भक्त्या तस्मिन् पतित्वं स्यादि'ति सूत्रं व्याचक्षाणो भाष्यकारोऽपि काले देवतायै सम्भत्स्यत इति निर्वापस्थानीयोपाकरणसंस्कृते पशाववदानप्रक्षेपकाले यागनिष्पत्तिं वदन् परकीयत्वसिद्धचर्थं च यजमानस्य रक्षकत्वोक्त्याऽन्यपरिग्रहप्रतिबन्धार्हत्वलक्षणस्वाम्यानपगमं वदन्निर्वापकाले यागनिष्पत्तिं न मंस्यत इति सूचयितुमाह—**भाष्येति**।

किमर्थं तर्हि निर्वापकालेऽग्नये दास्य इति यजमानस्य मन्त्रोच्चारणमित्याशङ्क्य देवतोद्देशेन त्यक्ष्यमाणत्वसङ्कल्पनाय यथेष्टविनियोज्यत्वलक्षणस्वत्वनिवृत्तिरूपत्यागार्थं न तु देवतोद्देशेनात्मविनियोज्यत्वलक्षणस्वत्वनिवृत्तिरूपत्यागात्मकयोगार्थमिति सूचयन् दूषणमुपसंहरति—**तेनेति**। कदा तर्हि यागो निर्वर्त्तत इत्यपेक्षायां, प्रक्षेपकाले निष्पत्तिं स्वयतेनाह—**स त्विति**। 'वषट्कृते जुहोती'ति श्रुतेर्वषट्कारानन्तरकालस्य प्रक्षेपवेलात्वात्, तस्मिन्नैव च काले याज्यानुवाक्याभ्यां स्मारितेन देवतोद्देशेन यागैकदेशभूतेन यागस्य रूपणादिति प्रक्षेपवेलायां यागनिष्पत्तेर्हेतुर्देवतोद्देशोवयवत्वाद्रूपकः स्मारकोस्येति रूप्यतेनेनेति करणव्युत्पन्नरूपशब्दकेन बहुव्रीहिणोक्तः। निर्वापकालीनस्याग्नये दास्य इति त्यागस्य प्रतिश्रवणरूपत्वेन यथेष्टविनियोगार्हत्वलक्षणस्वत्वनिवृत्तिमात्ररूपतामभ्युपगम्य, यागरूपानन्तर्भावाभ्युपगमे प्राक् प्रतिश्रवणं विनापि यागानुष्ठानसम्भवादावर्थक्यापत्तेरात्मविनियोगार्हत्वमात्रलक्षणात्मीयत्वाख्यस्वत्वनिवृत्तिरूपत्वाभ्युपगमेन यागरूपान्तर्भावोऽभ्युपगन्तव्य इत्याशङ्क्य, प्राक्प्रतिश्रवणस्य दृष्टोपकारानवगमेऽप्यग्नये दास्य इति प्रतिश्रवणप्रकाशकमन्त्रविध्यन्यथानुपपत्तिकल्पितप्रतिश्रवणविधिवेशनाऽदृष्टोपकारित्वावगमान्निर्वापकालीनप्रतिश्रवणनिष्पन्नयागादन्यत्राविनियोज्यत्वसंकल्परूपत्यागापेक्षया श्रुतेतिकर्त्तव्यताकत्वसिद्धयर्थत्वेनार्थवत्ता पूर्वनिर्वृत्तेत्यनेनोक्ता। अवदानादेः प्रक्षेपान्तस्यैकपदार्थत्वाभ्युपगमेन तावद्भिः क्रियाक्षणैर्व्याप्यस्य कालस्यैक्यावगतेस्तावत्कालमध्ये प्रक्षेपात्प्रागपि कृतस्य यागस्य प्रक्षेपकालत्वोपपत्तेर्यागस्य च स्वाहाकारेण वा, वषट्कारेण वा देवेभ्योऽन्न प्रदीयत इत्यर्थवादसामर्थ्याद्वषट्कारानन्तर्यप्रतीतेः, प्रक्षेपस्य तु जुह्वरोपणादिव्यवधानात्पश्चाद्भावप्रतीतेरत्यन्तयोपपद्यायोगात्पश्चात्संस्कारत्वापत्त्यपरिहारमाशङ्क्य, वषट्कारोद्बोध्यसंस्कारजन्यस्मृति-व्यवधानाद्यागस्याप्यत्यन्तानन्तर्यानुपपत्तेराहवनीय-समीपनयनक्षणे देवतोद्देशः, तदुपरिनिधानक्षणे द्रव्यत्यागः तदनन्तरं प्रक्षेप इति यागप्रक्षेपयोरत्यन्तैकक्षणत्वाभावेऽप्यत्यन्तानन्तर्योपपत्तेस्तन्मध्ये नाशाद्यसम्भवाच्च न्यायविरोधाद्यनापत्तेः, अत्यन्तानन्तर्ये च जायमाना बुद्धिः प्रमाणमित्यादिव्यवहारदर्शनाद्यौगपद्योपपत्तिमाह—**तस्मिन्नेवेति**। प्रक्षेपस्य सर्वान्त्यांशत्वोक्तिविरोधापत्तेर्नात्यन्तैकक्षणत्वेभिनिवेष्टव्यम्। यागप्रक्षेपयोश्चैककालत्वे 'वषट्कृते जुहोती'ति विहितकालेन प्रक्षेपेणैव यागकालोपलक्षणात् प्रक्षेपनिष्पत्त्यैव यागनिष्पत्त्युपलक्षणावगतेः प्रक्षेपानिष्पत्तौ यागस्याप्यनिष्पत्त्यवगमेन प्रक्षेपस्याप्रयोजकत्वेऽपि यागेन प्रयोक्तुं शक्यत्वान्नाशादिषु द्रव्यान्तरागमनन्यायविरोध

इति यागप्रक्षेपयोरेककालत्वोपपादनप्रयोजनमाह—**तदुपलक्षितत्वादेव चेति।** स्विष्टकृदादीनां तु पश्चात्संस्कारत्वात् वैषम्यमित्याह—**निवृत्तयागभावित्वात्त्विति।**

प्रासङ्गिकयाश्चिन्तायाः प्रयोजनापेक्षायां प्रक्षेपस्य यागरूपान्तरत्वे समाप्तित्वेन शब्दार्थत्वात् प्राधान्येन विधेयत्वापत्तेर्जुहोतिचोदितत्वेन दर्विहोमत्वात् प्रकृतिविकारभावाभावं तावत्प्रयोजनं सूचयितुमाह—**यदि चेति।** चतुरवत्तवाक्यविहितस्य प्रक्षेपमात्रस्य होमत्वाभावाद्यागस्य चाग्नेयवाक्यविहितस्य वाक्यान्तरविहितप्रक्षेपाधिक्याद् होमत्वापत्तावपि जुहोतिचोदनोत्पत्तित्वाभावाद्दर्विहोमत्वानापत्तेः, तदापत्तावपि च व्यवस्थितप्रकृतिलाभाभावाख्यापूर्वत्वहेत्वभावात् प्रकृतिविकारभावाभावानापत्तेरेतत्प्रयोजनापरितोषाद्विकृतिषु द्व्यवदानप्रक्षेपातिदेशानतिदेशसिद्धिं पारमार्थिकं प्रयोजनमाह—**विकृतिषु चेति।**

जुहोत्युक्तस्यापि प्रक्षेपस्य यागात्कर्मान्तरत्वेनाऽङ्गत्वाभ्युपगमेऽग्निहोत्रादावपि प्रक्षेपांशस्य दृष्टप्रतिपत्त्यर्थत्वे संभवत्यदृष्टफलार्थत्वस्यान्याय्यत्वाद्यागस्यैव फलान्वयापत्तेर्होमः फलवानित्यादिरुद्घोषो विरुध्येतेत्याशङ्क्य, तत्र प्रकृतावगतत्यागदेवतोद्देशांशद्वयद्रव्यग्राहित्वाभावेन जुहोतेः प्रक्षेपमात्रवाचित्वाभावाद् देवतोद्देशद्रव्यत्यागप्रक्षेपांशत्रयवाचित्वावगतेः, द्व्याकारयागपक्षे त्र्यंशस्य होमस्य पूर्वांशद्वयभूतो यागः, प्रक्षेपस्य तु समाप्तित्वाच्छब्दार्थत्वेन प्राधान्याभ्युपगमे याग एव प्रक्षेपाङ्गं भविष्यति, न तु कथंचित्प्रक्षेपो यागाङ्गमित्याह—**ये त्विति।**

प्रक्षेपस्य चतुरवत्तादिवाक्येष्वपि जुहोतिचोदनोत्पत्तित्वसद्भावेन विशेषणानर्थक्यादसिद्धक्रियान्तरान्वयत्वात् जुहोतिचोदनायामेव सत्यां, तदङ्गत्वेनोत्पत्तिविधानं येषां सौर्यादीनामित्यादिशब्दोक्तानां देवतान्वितानां द्रव्यविशेषणां तेषु जुहोत्यर्थस्यांशत्रयात्मकस्य पूर्वांशद्वयभूतः सन्नात्मा तेषां द्रव्यविशेषाणां संबन्धिनः प्रक्षेपस्यैव वा यागोऽङ्गं भविष्यतीत्येवं सप्तमी बहुव्रीह्यङ्गीकरणेन तेषामिति षष्ठ्याश्च प्रक्षेपसंबन्धव्यतिरेकजनितत्वाङ्गीकरणेन व्याख्येयम्।

प्रक्षेपमात्रस्य शब्दार्थत्वे पूर्वांशद्वयात्मकस्य यागस्यानुक्तत्वादत्रगतपूर्वांशद्वयद्रव्यग्रहणाभावाच्च द्रव्यद्वाराप्यप्रतीतेरङ्गत्वायोगमाशङ्क्याह—**तत्र होति।** तेषु द्रव्यविशेषेषु तेन तेषामिति षष्ठ्याक्षिप्तेन प्रक्षेपेणैवांशद्वयपूर्वकप्रक्षेपवाचिजुहोतिवाच्यत्वान्यथानुपपत्त्याक्षेपाद्युक्ताऽङ्गतेत्याशयः। जुहोतेः त्र्यंशवाचित्वे यजतिचोदनोत्पत्तिष्वप्यष्टाकपालादिषु प्रक्षेपमात्रवाचिता न युक्तेत्याशङ्क्य, त्र्यंशवाचिनोपि तदसंभवे तात्पर्यवृत्तिसंकोचाभ्युपगमेन युक्तेति दृष्टान्तेनोपपादयितुमाह—**यजतीति।** यथानदनीयत्वाद्देवताविशेषालाभाच्च यूपशकलानां पूर्वांशद्वयविध्यशक्तेः प्रक्षेपमात्रवाची जुहोतिः तथेह सिद्धत्वात् पूर्वांशद्वयविध्यशक्तेरित्येतावता साम्येन दृष्टान्तः।

प्रासङ्गिकं परिसमाप्य प्रकृतं सर्वप्रदानपरिहारमुपसंहरति—**एवं च सतीति।** जुहोतेस्त्र्यंशवाचित्वे पूर्वांशद्वयस्यापि द्व्यवदानमात्रविषयत्वापत्तेः प्रक्षेपमात्रवाचितैवंशब्देन

परामृष्टा। उपसंहारपक्षापादितं तोषद्वयं चास्मिन् भिन्नविषयत्वपक्षे नापद्यत इत्याह—**समस्तस्य चेति**। उपसंहारप्रदेयप्रकृतित्वोक्त्यर्थंभाष्यद्वयातिरिक्तं च सर्वं सूत्रं भाष्यं च न विरुध्यत इति सूचयितुमाह—**निरवदानाच्चेति**।

द्वचकारयागपक्षाश्रयणेन तत्राग्नेयवाक्येऽष्टाकपालस्य होमाख्ययागाविशेषरूपान्वयः प्रकृतयागान्विताष्टाकपालग्राहि-चतुरवत्तवाक्य-विहितप्रक्षेपाधिवयान्यथानुपपत्तिकल्पत्वादानुमानिकः। द्वचवदानवाक्ये तु द्वचवदानमात्रस्य चतुरवत्तवाक्यविहितप्रक्षेपाविवाक्यात्मकयागीयविशेषरूपान्वयविधानात्प्रत्यक्षः। सामान्यमात्ररूपो ह्याग्नेयशब्दोक्तद्रव्यदेवतान्वयान्यथानुपपत्त्या यागः कल्पते। जुहोतिशब्दात्तु विशेषरूपो यागः प्रतीयत इत्येवमुपसंहारानपेक्षं द्वचवदानमात्रस्य प्रत्यक्षेण विशेषाकारयागान्वयेनाऽष्टाकपालस्य विशेषाकारयागान्वयकल्पनप्रतिबन्धोक्त्यर्थतया तत्रेत्यादिभाष्यं, दैक्षादिवाक्ये च पशोर्विनष्टत्वेन साक्षाद्देवतान्वयायोगादगत्या सापेक्षतद्धिताङ्गीकारेण प्रदेयप्रकृतित्वोपपत्तिसूचनार्थतयापिचेति भाष्यं व्याख्येयमिति सूचयितुमाह—**अथवेति**। चतुरवत्तवाक्यविहितोः होमा न आग्नेयवाक्यविहिताद् यागाद्भिद्यते, किंतु तस्य प्रक्षेपाख्यविशेपरूपतया चतुरवत्तवाक्यविहितस्य यागस्य पूर्वपरौ सामान्यविशेषरूपौ भागौ प्रक्षेपशून्यसामान्यमात्ररूपपात्नीवतपशुयागादिसिद्धयागान्वयद्रव्यानपेक्षाग्निहोत्रादिहोमसदृशौ सन्तौ यागहोमान्तरभेददर्शनादिहापि यागहोमभेदे भ्रान्तिं कुरुतः यथैकस्य नरसिंहाख्यस्यार्थस्य पूर्वापरौ भागौ मनुष्यपञ्चाननाभ्यां सदृशावित्यर्थः॥ ४५॥

इत्येकादशं सर्वप्रदानाधिकरणम्॥

भा० प्र०—सभी हविःशेष से स्विष्टकृत् होम कर्तव्य है, इसका अन्य कारण प्रदर्शित करते हुए कहा गया है—"लिङ्गदर्शनात् च" = "देवा वै स्विष्टकृतमब्रुवन् हव्यं नेवहेति। सोऽब्रवीद् वरं वृणै भागो मेऽस्त्विति। वृणीष्वेति तेऽब्रुवन्। सोऽब्रवीद् उत्तरार्द्धादेव मह्यं सकृत् सकृदवद्याद्" देवों ने स्विष्टकृत् देवता अर्थात् अग्नि से कहा, तुम हमलोगों के लिए हव्य हवन कराओ, अर्थात् हवियों को हमें प्राप्त कराओ, उसने कहा अच्छा, मेरे लिए भी उसमें भाग हो यह वर माँगता हूँ। देवों ने कहा, यह वर हुआ उस स्विष्टकृत् अग्नि ने कहा—हविर्द्रव्य के उत्तरार्द्ध भाग से एक-एक बार मेरे लिए अवदान किया जाय।

इस स्थल में श्रुतिवाक्य में 'सकृत्' पद की वीप्सा अर्थात् दो बार प्रयोग होने से, यह विज्ञापित होता है कि सभी हविःशेष से स्विष्टकृत् होम कर्तव्य है।

"लिङ्गदर्शनात् च" = क्योंकि लिङ्ग अर्थात् ज्ञापक वचन दृष्ट है, इसलिए समस्त हविःशेष से स्विष्टकृत्-होम कर्तव्य है॥ ४५॥

पन्द्रहवाँ सकलहविर्द्रव्य से शेषकार्यता अधिकरण।

## [१६] एकस्माच्चेद्याथाकाम्यविशेषात्॥ ४६॥ पू०

**शा० भा०—अथ कृत्वाचिन्ता। यदैकस्मात्कर्तव्यानि भवेयुः, किं तदा**

**यतः कुतश्चित्, उत प्रथमादिति । किं प्राप्तम् ? यतः कुतश्चिदिति । कुतः ? न कश्चिद्विशेष आश्रीयत इति । तस्मादनियम इति ॥ ४६ ॥ पूर्वं० ॥**

**एतानि पञ्चसूत्राणि प्रयोजनपराणीति वार्तिकमतम्**

त० वा०—याथाकाम्यमित्यस्यैव बुद्धिसामानाधिकरण्येन स्त्रीविवक्षायां 'षिद्गौरादिभ्यश्च' इति ङीषि कृते 'हलस्तद्धितस्य' इति व्यङ्‌यकारे लुप्ते याथाकामी भवति ॥ ४६ ॥

**अथ द्वादशं शेषेभ्यस्सर्वकर्मानुमानाधिकरणम्**

न्या० सु०—यथाभाष्यं तावदधिकरणान्तरं मत्वा प्रासङ्गिकत्वेनानन्तरसङ्गतिमाह—**यदेति** । शेषकार्याणां शेषाप्रयोजकत्वेपि शेषैरेव स्वप्रतिपत्त्यै शेषसाध्यस्विष्टकृदादिप्रयुक्तिसंभवात्सर्वेभ्योनुष्ठानोपपत्तिमाशङ्क्य, शेषाणां स्वकार्याणि प्रति प्रयोजकत्वायोगाख्यहेत्वन्तरोक्त्यर्थं शेषस्येति सूत्रावयवं शेषोहीतिभाष्येणान्ते व्याख्यातमपि सिद्धान्तहेतुप्रतिपत्तित्वप्रतियोगित्वेनार्थकर्मत्वस्यैव मुख्यपूर्वपक्षहेतुत्वात् स्वयमादौ व्याचक्षणे 'निरवदानात्तु शेषः स्यादि'ति पूर्वाधिकरणसिद्धान्तसूत्रवस्थशेषशब्दोपस्थापितानि शेषकार्याण्येकस्माद्धविषः क्रियेरन्नित्येवं पूर्वपक्षप्रतिज्ञार्थं सूत्रावयवं व्याख्यातुमाह—**तत्रेति** । आद्यहेतुव्याख्यार्थं यदीत्यादिभाष्यं व्याचष्टे—**सत्यपीति** ॥ ४६ ॥

भा० प्र०—पूर्व अधिकरण के पूर्वपक्ष के अनुसार एक हविर्द्रव्य से ही शेष कार्य कर्तव्य है, ऐसी स्थिति में किसी से वह करणीय है—यह संशय है । इस संशय में पूर्वपक्षी का कहना है कि "याथाकामी" जिससे इच्छा हो उसी से स्विष्टकृत्-होम रूप शेष कार्य करें । कारण, 'अविशेषात्' किसी एक विशेष हविःशेष से ही स्विष्टकृत्-होम रूप शेष कार्य करें, ऐसा कोई विशेष अर्थात् नियामक नहीं है ।

"एकस्मात् चेत्" = यदि एक ही हविर्द्रव्य से ही अवदान करणीय हो तो "यथाकामी"—यथाकाम अर्थात् इच्छा के अनुसार जिस-किसी एक से ही शेष कार्य कर्तव्य है "अविशेषात्"—क्योंकि, किसी किया जाय यह कोई विशेष नहीं है ॥ ४६ ॥ (पूर्वपक्ष)

## मुख्याद्वा पूर्वकालत्वात् ॥ ४७ ॥ सि०

**शा० भा०—मुख्याद्वा कर्तव्यानि । कुतः ? पूर्वकालत्वात् । ततः कर्तव्येषु नास्ति निमित्तविघातः । असति निमित्तविघाते नैमित्तिकं कर्तव्यमिति । ततः कृतेषु, द्वितीयादीनां निमित्तविघात इत्यक्रिया । तस्मान्मुख्यादेव क्रियेरन्निति । ॥ ४७ ॥ सिद्धान्तः ॥ इति षोडशं प्राथमिकशेषात् स्विष्टकृदाद्यनुष्ठानाधिकरणम् ॥ १६ ॥**

त० वा०—शेषनिमित्तकं हि विहितावश्यकर्तव्यतानिमित्तं च शेषकार्यं प्रथमस्य तावत्पाठक्रमानुसारात्पूर्वमापतति । न च तदा कश्चिद्विरोध इति क्रियते । तस्मिंश्च कृते निवृत्तव्यापारा चोदना न निमित्तो भवतीति विरोधादकरणम् ॥ ४७ ॥

( इति षोडशं प्रथमोपस्थितेन शेषकार्यानुष्ठानाधिकरणम् ॥ १६ ॥

न्या० सु०—एकदेशद्रव्यत्वेन शेषकार्याणां शेषाप्रयोजकत्वेपि, शेषसाधितानां प्रधानोपकारित्वाच्छेषत्वाविशेषाच्च सर्वेषां साधनत्वावगतेः सर्वेभ्यः कार्याणीत्याशङ्क्य, तुषोपवापकपालवत् शेषस्यान्यार्थत्वेन प्राप्तस्यापि शेषकार्याणि प्रत्युपादेयत्वेन विवक्षितैकसंख्यत्वादेकशेषसाधितैरेव शेषकार्यैः प्रधानस्योपकृतत्वान्न शेषान्तरेभ्यः कार्याणीत्येवं यथाभाष्यं तावत्सूत्रं व्याचष्टे—**यश्चेति**। सकृच्चेति भाष्यं विवक्षितैकसंख्यशेषसाध्येन शेषकार्येण सकृदवदानसाधितेन प्रधानं संस्कृतमित्येवं व्याचष्टे—**सकृच्छब्दश्चेति**। सकृत्कृतेन शेषकार्येणेत्येवं प्रतीयमानाय व्याख्यायास्त्यागे हेतुमाह—**इतरथा त्विति**।

**भाष्यमतं निरस्य वार्तिकमतनिरूपणम्**

प्रधानोपकारस्य संस्कारत्वाप्रसिद्धेः प्रधानपदाध्याहारापत्तेश्च भाष्यकारीयव्याख्यानापरितोषात् स्वयं पर्यग्निकरणादिभिरेव शेषस्य संस्कृतत्वात् शेषकार्याणां संस्कारत्वानुपपत्तेर्न सर्वसाद्गुण्यसिद्ध्यै सर्वेभ्यः कार्याणीत्येवं पूर्वसूत्रस्थशेषपदानुषङ्गेण सूत्रं व्याचष्टे **अथ वेति**। प्रधानापूर्वसाधनत्व-योग्यताधानार्थसंस्कारसंस्कृतस्यापि शेषस्य प्रतिपत्त्यर्थोयं संस्कारो न विरुद्ध इत्याशङ्कानिरासार्थत्वेन कृतकार्यद्रव्यसंस्कारानर्थक्यापत्तेरतीतसंस्कारावसरत्वादित्येवमावृत्त्या व्याचष्टे—**अयमपीति**। क्रमोवत्यत्रऽवसरोविवक्षितः ॥४७॥

भा० प्र०—सिद्धान्ती का कहना है कि "मुख्यात् वा पूर्वकालत्वात्" = प्रधान हविः पूर्व प्राप्त होने से उसी से शेषकार्य करणीय है। कारण, प्रथम उपस्थित के परित्याग में कोई प्रमाण नहीं है। सभी के द्वारा जहाँ एक ही कार्य सम्पन्न हो सकता है, वहाँ जो प्रधान अथवा प्रथम प्राप्त है, उसी के द्वारा कार्य का निर्वाह करना चाहिए।

"मुख्यात्" = मुख्य अर्थात् प्रधान हविर्द्रव्य से ही वह करणीय है, "वा" = पूर्वपक्ष के निरास के लिए है, "पूर्वकालत्वात्" = क्योंकि, वही पूर्वकाल अर्थात् प्रथम प्राप्त है ॥ ४७ ॥

## [१७] भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ ४८ ॥ पू०

**दर्शपूर्णमासयोः श्रूयते, 'इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीध्रे' इति। तत्र संदेहः—किमयमृत्विजां विभागः परिक्रयायते, उत भक्षणायेति। किं प्राप्तम्? परिक्रयार्थो विभागः। कुतः? भक्षाश्रवणात्। न श्रूयते भक्षयितव्यमिति। य एव श्रुतस्योत्सर्गे दोषः, स एवाश्रुतपरिकल्पनायाम्। कर्मकरेभ्यश्च दीयते। तस्मात्परिक्रये एषः ॥ ४८ ॥ पूर्व० ॥**

त० वा०—पुरोडाशस्य चतुर्धाकरणे 'इदं ब्रह्मणः' इत्यादिनिर्देशः श्रूयते। कथं च तत्तद्ब्रह्मादिव्यपदेश्यं भवति, यदि तेभ्यो न दीयते। तेन दानं विहितम्। तत्तु किमृत्विजां यथेष्टविनियोगार्थं परिक्रयायाऽऽम्नायते, अथ भक्ष्यमाणशेषप्रतिपत्त्यर्थमिति।

परिक्रयार्थमित्याह। न ह्यत्र 'यजमानपञ्चमा इडां प्राश्नन्ति' इतिवद्द्रव्यप्राधान्यं, भक्षणं वा श्रूयते। तस्माद्द्रव्याणां कर्मशेषत्वात्कर्मयुक्तेभ्यश्च दानादन्तरेणापि परिक्रयश्रुतिं दक्षिणादानवत्परिक्रयार्थमिति ॥ ४८ ॥

न्या० सु०—शेषाच्छेषकार्यानुष्ठानकारणस्य सर्वशेषेष्वविशेषात्सर्वेभ्यः कार्याणीत्युक्ते किं तत्कारणमित्यपेक्षायां प्रतिपाद्यत्वकारणसूचनार्थत्वेन सौत्रसंस्कारशब्दव्याख्यार्थं सहीति भाष्यं संस्कारत्वावेदकद्वितीयाश्रुत्यभावादयुक्तमाशंक्य 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेते'त्यपेक्षाख्येच्छावाचिसन्नन्तेनाध्याहृतसंपूर्वेण करोतिना यैः कर्मभिर्द्रव्यं संस्कर्त्तुमपेक्षते, तत्र द्रव्यं प्रति गुणः प्रतीयेतेति वदता संस्कर्त्तुमपेक्ष्यमाणत्वेन संस्कार्यत्वोक्त्या क्लृप्तप्रयोजनस्यापेक्ष्यमाणत्वोपपत्तेः संस्कार्यत्वाभिधानादुपयुक्तात्रशिष्टवाचिना च शेषशब्देन क्लृप्तप्रयोजनत्वाभिधानात् द्वितीयाश्रुत्यभावेऽपि द्रव्यस्य संस्कार्यत्वावगतिमुपपादयितुमाह—**यैस्त्विति**। शेषस्य गुणभूतत्वादितिपूर्वपक्षहेतुनिरासार्थत्वेनापि संस्कारस्य शेषाङ्गत्वादित्येवं संस्कारस्य तदर्थत्वादिति सूत्रावयवव्याख्यार्थता सहीतिभाष्यस्याऽनेनैव वार्त्तिकेनोक्ता। अर्थकर्मणोऽपि संस्कारत्वोपपत्तेः प्रतिपत्तित्वावगतिः कथमित्याशङ्क्याह—**तत्रापीति**। प्रतिपाद्यत्वस्याविशेषोपपादनसूचनार्थत्वेन तैः सर्वैः संस्कारस्यार्थ्यमानत्वाद् अपेक्ष्यमाणत्वादित्येवं तदर्थत्वशब्दव्याख्यार्थं यस्यैवेति भाष्यं व्याचष्टे—**ताश्चेति**। अप्रयोजकत्वस्य पूर्वपक्षसाधकत्वोक्त्यर्थत्वेनापि संस्कारस्य तैर्हविर्भिरेवार्थ्यमानत्वात् प्रयुज्यमानत्वादित्येवं संस्कारस्येत्यादिसूत्रावयवव्याख्यार्थं सहीतिभाष्यमिति सूचयितुसाधकतामुपपादयति—**यद्यपि चेति**। संस्कृतत्वाच्चेति सूत्रेणातिक्रान्तसंस्कारावसरत्वादिति व्याख्यायां कृतप्रयोजनद्रव्यसंस्कारानर्थक्यस्योक्तस्य परिहारार्थत्वेनापि कारणविशेषात् संस्कारस्येत्येतावता संस्कारस्य यत्कारणं तस्य प्रधाने निष्पन्नेप्यविशेषादित्युक्ते किं तत्कारणमित्यपेक्षायां, तदर्थत्वादित्यनेन हविषः प्रधानार्थतोक्तेत्येव व्याख्यातुमाह—**निर्वृत्तेपि चेति**। यथा हविषः प्रधानार्थत्वात् प्रधानापूर्वसाधनत्वयोग्यत्वासिद्धयै प्राक् संस्कारार्थवत्ता, तथानिष्पन्नेपि प्रधाने तदीयस्य हविषोऽशुचिस्पर्शादिनोपघाते क्रतुवैगुण्यान्निष्पन्नस्यापि प्रधानपूर्वस्य गुरुशुश्रूषानिष्पन्नस्य गुरुसंतोषस्य कुतश्चिदपराधान्नाशवन्नाशापत्तेस्तदीयत्वनिवृत्त्यै प्रतिपत्त्यपेक्षास्तीत्याशयः। सर्वस्य च प्रक्रान्तस्य समासे क्रियान्तरेणाभिव्यञ्जनीयत्वाद्यथा ज्योतिष्टोमसमाप्तिरुदयनीयया, सत्रसमाप्तिः पृष्ठशमनीयेन, संस्थाजपेन च सर्ववैदिककर्मसमाप्तिः, उद्यापनेन च व्रतसमाप्तिरभिव्यज्यते, तथा द्रव्यस्य क्रत्वर्थत्वेन निर्वापादिना प्रक्रान्तस्य क्रत्वर्थत्वसमाप्तिः प्रतिपत्त्यभिव्यञ्जनीयेत्यर्थवत्त्वसिद्धिः। एतत्त्वस्माभिस्तन्त्रसारे विस्तारेणो'त्पत्ती येन संयुक्तं तदर्थं तत् श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यादि'४-२ति चतुर्थाधिकरणे व्युत्पादितम् ॥ ४८ ॥

### १६वाँ प्रथमोपस्थित के द्वारा शेषकार्यानुष्ठानाधिकरण।

भा० प्र०— दर्शपूर्णमास प्रकरण में श्रुति में कहा गया है कि "इदं ब्रह्मणः, इदं होतुः, इदमध्वर्य्योः, इदमग्नीध्रः, यह भाग ब्रह्मा का, यह होता का, यह अध्वर्यु का और यह अग्नीध्र का। ब्रह्मा, होता, अध्वर्यु एवं अग्नीध्र ने दर्शपूर्णमासयाग के ऋत्विक् हैं। अग्निदेव को दिया गया पुरोडाश खण्ड अवशिष्ट रहेगा, उसके चार भाग करने की बात "आग्नेयं चतुर्धा करोति, इस श्रुतिवाक्य में कहा गया है। ये चार भाग चार ऋत्विजों

का प्राप्य है और कौन भाग किसका प्राप्य है, इसका निर्देश यजमान ही करेगा। वही श्रुति में कहा गया है "इदं ब्राह्मणः" इत्यादि। यह भाग निर्देश परिक्रय के लिए ऋत्विजों को दक्षिणा रूप में दान, अथवा यह खाने के लिए निर्देश है—यह संशय है।

इस सन्देह में पूर्वपक्षी का कहना है "दानशब्दः परिक्रये" यह जो कहा गया है कि इदं ब्राह्मणः इत्यादि वह दान शब्द अर्थात् यह दान है, क्योंकि, ऋत्विक्गण यज्ञ करते हैं यज्ञ का फल उसी को प्राप्य है। इसीलिए शास्त्र में कहा गया है कि दक्षिणा देकर परिक्रय करना है अर्थात् यजमान दक्षिणा देकर ऋत्विजों से उनको प्राप्य फल को खरीदते हैं।

यदि कहा जाय कि "यजमानपञ्चमा इडां भक्षयन्ति" इस वाक्य में हुतशेष भक्षण करने की विधि है। ऐसी स्थिति में यह कहा जा सकता है कि—"भक्षाश्रवणात्" भक्षण यहाँ पर अर्थात् आग्नेय हविर्द्रव्य में श्रुत नहीं है, अतः, यहाँ भक्षण कर्तव्य नहीं है। अतः यह परिक्रय के लिए दान है।

"भक्षाश्रवणात्" = श्रुतियों में भक्षण उल्लिखित नहीं होने से, "दानशब्दः" = यह दानशब्द अर्थात् दानार्थक, "परिक्रये" क्योंकि परिक्रय कर्तव्य है ॥ ४८ ॥ पूर्वपक्ष

## तत्संस्तवाच्च ॥ ४९ ॥

शा० भा०—'एषा वै दर्शपूर्णमासयोर्दक्षिणा', इति दक्षिणासंस्तवाच्च परिक्रयार्थं मन्यामहे ॥ ४९ ॥ हेतुः ॥

त० वा०—'एषा वै दर्शपूर्णमासयोर्दक्षिणा' इति दक्षिणा ह्यृत्विजामुत्साहकारिणो, परिक्रयस्य चैतद्रूपम् ॥ ४९ ॥

न्या० सु०—वीप्साया लिङ्गत्वं भाष्योक्तमुपपादयितुमाह—सकृत्सकृदिति। संस्कारपक्षेऽत्रत्यपूर्वपक्षायोगा'त्तस्य चोत्पत्तौ येने'ति चतुर्थाधिकरणे प्रतिपत्तित्वव्युत्पादनेन व्युत्पादयिष्यमाणस्याक्षेपायोगादेतदधिकरणानुपपत्तेर-दधिकरणसिद्धान्त-लिङ्गोपन्यासानर्थक्याच्चतुर्थव्युत्पाद्यप्रतिपत्तित्वं लिङ्गमेवेह सर्वप्रदानाधिकरणसिद्धान्तप्रयोजनस्य शेषकार्याणां सर्वहविःप्रयोज्यत्वात्सर्वेभ्योनुष्ठेयत्वस्य प्रतिपत्तित्वेनोपपादनद्वारा सर्वप्रदानाधिकरणसिद्धान्तोपोद्बलनायेति सूचयितुं संस्कारापक्षे चेत्युक्तम्।

चतुर्थसिद्धप्रतिपपत्तित्वेनात्रत्यपूर्वपक्षायोगादधिकरणान्तरार्थत्वेनाप्रयोजकत्वादित्यादिसूत्रचतुष्टयव्याख्यायां भाष्यकारीयायामपरितोषेण स्वयं प्रयोजनपरतया व्याख्यातुमारभते—प्रयोजनेति। प्रयोजनपरत्वव्याख्यावतारार्थं सर्वप्रदानाधिकरणचिन्ताप्रयोजनं तावत्पृच्छति—यदि नामेति। 'निःशेषे तु प्रयोजका' इति वार्तिकेन सर्वप्रदानाधिकरणपूर्वपक्षे शेषकार्याणां प्रयोजकत्वोक्तेरप्रयोजकत्वसूत्रं कथं तत्रत्यपूर्वपक्षप्रयोजनोक्तौ योज्यमित्याशङ्क्य, सर्वप्रदानाधिकरणोपक्रमे योस्माभिः शेषकार्याणां प्रयोजकत्वरूपोर्थः पूर्वपक्षाभिमतत्वेनोक्तः तस्मिन्नबाधित एव हविषामप्रयोजकत्वादित्येवं योज्यमित्याह—तत्रेति। शेषकार्यैश्च

प्रधानद्रव्यग्रहणस्यापहाररूपत्वेनानुचितस्यापि शेषशब्दप्रयोगबलात् कार्यस्य सकृदेकस्मात् प्रधानात् करणे निरवयवत्वात् समस्तस्य कृतत्वसंपत्तेर्नान्यतोऽपि प्रधानाद् द्रव्यापहारः कार्य इति, सामस्त्यवाचिसंशब्दाभ्युपगमेन संस्कृतत्वाच्चेति सूत्रं योजयति—**बलाच्चेति**। संस्कारस्य सर्वप्रकृतहविरर्थत्वेन सर्वैर्हविषां कार्यंते प्रयुज्यतेनेनेति व्युत्पत्त्या कारणशब्दोक्तस्य प्रयोजकत्वस्याविशेषात् सर्वेभ्यो हविर्भ्यः शेषकार्याणि क्रियेरन्नित्येवं सिद्धान्तप्रयोजनोक्तौ तृतीयं सूत्रं योजयति—**सिद्धान्त इति**। प्रयोजनपरत्वे व्युत्पाद्यन्यायाभावाल्लिङ्गोपन्यासानर्थक्यमाशङ्क्य, यथा 'प्रयाजे प्रयाजे कृष्णलं जुहोती'ति विकृतौ प्रयाजानुवादस्य प्रयाजानामङ्गत्वलिङ्गस्य दर्शनं पौर्णमास्यधिकरणसिद्धान्तप्रयोजने प्रयाजाग्नेयादीनामङ्गाङ्गित्वे स्थितं सत्प्रयोजनोपोद्बलनद्वारा समुदायानुवादसिद्धान्तमुपोद्बलयति, तथा वीप्सादर्शनमपि द्व्यवदानमात्रसिद्धान्तोपोद्बलकत्वादुपन्यस्तमित्याह—**लिङ्गेति** ॥ ४९ ॥

भा० प्र०—यह दान खरीदने के लिए है, इसका अन्य भी कारण है "तत्सम्भवात् च" श्रुति में कहा गया है "एषा वै दर्शपूर्णमासयोर्दक्षिणा:" यही दर्शपूर्णमास की दक्षिणा हैं। श्रुति में इस प्रकार दक्षिणा कह कर परिचय दिया गया है, अतः उसको दान ही कहना होगा।

"तत्सम्भवात् च" = उसका अर्थात् दक्षिणा दान का संस्तव अर्थात् परिचय हैं, अतः खरीदने के लिए दान है ॥ ४९ ॥ पूर्वपक्ष

**भक्षार्थो वा द्रव्ये समत्वात् ॥ ५० ॥ सि०**

**शा० भा०—भक्षार्थे एष विभागः। कुतः? दानस्याभावात्। कथमभावः? प्रभवता हि शक्यं दातुं, नाप्रभवता। कथं न प्रभुत्वम्? संकल्पितं हि यजमानेन देवताया एतदिति। न च देवतायै संकल्पितेन शिष्टाः स्वेनेव व्यवहरन्ति। तस्माच्छिष्टाचारमनुवर्तमानेनाऽशक्यं प्रभवितुम्। तस्मान्न परिक्रयः।**

**अथ यदुक्तं न श्रूयते भक्षयितव्यमिति। यावांश्च श्रुतस्योत्सर्गे दोषः तावानश्रुतपरिकल्पनायामिति। उच्यते। इदं ब्राह्मण इत्येवमादिर्ब्रह्मादीनां भागैरभिसंबन्धः। तत्र भागा ब्रह्मादीनामुपकुर्युः ब्रह्मादयो वा भागानाम्। ब्रह्मादिभिर्भागानामुपकुर्वद्भिर्न किंचिद्दृष्टमस्ति। भागैस्तु ब्रह्मादीनामुपकारकैः शक्यते केनचित्प्रकारेण दृष्ट उपकारः कर्तुं भक्ष्यमाणैः। तस्माद्भक्षणाय विभाग इति। कः पुनरुपकार इति चेत्? तृप्तानां कर्मशेषपरिसमापने सामर्थ्यं भवतीति ॥ ५० ॥**

त० वा०—न चैष विभागः परिक्रयार्थः कुतः?

परिक्रयो हि सर्वत्र स्वेन द्रव्येण कल्पते।
देवतार्थे परित्यक्ते स्वामित्वं न च कस्यचित् ॥

समस्तस्य पुरोडाशस्य देवतोद्देशेन त्यक्तत्वादस्वामी यजमान इति, ब्रह्मादिभिः समः। तत्र यथैव तेषां दातृत्वं न संभवति, तथा यजमानस्यापि। तेन हि परिक्रीणानः पुनस्तद् द्रव्यं स्वीकुर्यात्। तत्र पौरस्त्यः संकल्पो विनश्येत्। तस्मात्तावन्न परिक्रयः।

कथं खलु भक्षार्थमिति ? तदुच्यते।

योग्यता लिङ्गमित्युक्तं तच्चेष्टं विनियोजकम्।
भक्षयोग्यः पुरोडाशः स्वरूपेण च दृश्यते॥

**भाष्यदानदूषणम्**

ब्रह्मादिभिर्भागानामुपकुर्वद्भिर्न किंचिद् दृष्टमित्युक्तं वदति, द्रव्यक्षपणस्यापेक्षितस्य दृष्टत्वात्। भागैस्तु ब्रह्मादीनामुपकारकैरित्यनेनापि सुतरां परिक्रय आपद्यते। न चावश्यं भक्षणेनैव तेषामुपक्रियते। गृहानयनादिनाऽप्युपकारोपपत्तेः। सर्वत्र च द्रव्यसंस्कारार्थतां भक्षस्य वक्ष्यति। व्रतादिभिर्निवृत्त्यनभिधानात्। पुरुषसंस्कारा हि व्रतैर्निवर्तेरन्।

**अत्र वार्तिकमतम्**

तत एवं वक्तव्यम्। सत्यं भागानां प्रतिपत्तिः, तथाऽपि तु प्रकृतकर्तृनियमस्य प्रयोजनापेक्षावेलायां इष्टे सति अदृष्टदौर्बल्याद्दृष्ट एव कर्तॄणां सामर्थ्यरूपः संस्कारः कल्प्यते। कर्तृसंस्कारश्च सर्वान्तरङ्गो भक्षणं नाम। गृहमपि च नीत्वा यावद्भक्षणं न क्रियते तावत्तदनुपयोगादनुपकारः। तेनावश्यं सुदूरमपि गत्वा भक्षणे पर्यवसितव्यम्। तत्र प्रथमातिक्रमे कारणाभावाद्योग्यतावशेन च व्यपदेशद्वारप्रकान्तभक्षसमापनस्यावश्यं कर्तव्यत्वाद्, ब्रह्मादीनामेव भक्षणेनोपकर्तव्यमिति गम्यते। शेषस्यापि च क्षपणापेक्षस्य भक्षणकृतमेव क्षपणं योग्यतयाऽवधार्यते॥ ५०॥

न्या० सु०—'पुरोडाशकपालेन तुषानुपवतीत्या'दिषूदाहरणान्तरेषु परप्रयुक्तेनापि पुरोडाशकपालेन तुषोपवापं प्रत्यङ्गत्वेनोपादेयत्वाद्विवक्षितैकसंख्येन तुषोपवापकार्यत्वावगमादनियमपक्षे येन केन चित् पुरोडाशकपालेन तुषोपवापः कार्यः। मुख्यनियमपक्षे प्रथमोपधेयेनैवेति फललाभेन क्त्वाचिन्तार्थवत्त्वस्य स्पष्टत्वाच्छेषकार्याणां च प्रधानकर्मत्वाभ्युपगमेन विचाराच्छेषसंस्कारत्वाभावेन मुख्यस्यानुग्राह्यताया 'मुख्यं वा पूर्वचोदनाल्लोकवदि'ति द्वादशाधिकरणे मुख्यनियमहेतुत्वेन वक्ष्यमाणायाः स्थितेषु च शेषेषु शेषकार्यकर्तव्यत्वपक्षे शेषकार्यकाले सर्वशेषसन्निध्यविशेषान्मुख्यपाश्चात्यत्वाभावेन मुख्यमतिक्रम्येतरप्रतीक्षणानापत्तेः शेषकार्यान्यथानुपपत्त्या शेषस्थापनाक्षेपपक्षे तु शेषस्थापनकाले मुख्यपाश्चात्यत्वसंभवेऽपि सर्वप्रधानसमाप्त्युत्तरकालं शेषकार्यानुष्ठानात् तत्काले विशेषानुपलब्धेः स्थापनकाले तु मुख्यशेषस्थापनं विना विशेषान्तराच्छेषकार्यसिद्धेस्तदाक्षेपप्रमाणाभावादन्त्यशेषस्थापनाक्षेपकाले तु स्थापनं विना शेषकार्यासिद्धेस्तदाक्षेपस्यैव प्रमाणवत्त्वाद्वैप-

रीत्यापत्तेः प्रथमं वा नियम्येत कारणादतिक्रमः स्यादि११-१-२७त्येकादशाधिकरण-वक्ष्यमाणस्य मुख्यातिक्रमकारणाभावस्य मुख्यनियमहेतोरभावेनागतार्थत्वस्य स्पष्टत्वाद्यथा-भाष्यं च सूत्रार्थस्य स्पष्टत्वाद्यथाकाकाममितिप्राप्तेश्चातुर्वर्ण्यादिवत् स्वार्थिकस्य भ्रान्तत्वाद्वा याथाकाम्यमिति प्राप्तेयाथाकामीतिपदासाधुत्वाशङ्कापरिहारमात्रमाह—याथाकाम्यमिति। शेषकार्यानुष्ठानबुद्धेर्मुख्यमात्रविषयत्वोपसंहारकं प्रथम वा नियम्येतेतिन्यायमनिरस्य याथा-काम्य क्रियेरन्निति पूर्वपक्षोक्तचशक्तेर्याथाकाम्यशब्दस्य क्रियाविशेषणत्व निमित्तनपुंसकत्वा-विवक्षयाकामानुरूपैव शेषकार्यानुष्ठानबुद्धिर्भवति, ननु मुख्यमात्रविषयोपसंहृतेति निरास-द्वारा पूर्वपक्षसूचनार्थं याथाकाम्यशब्दस्य क्रियेरन्निति पूर्वाधिकरणपूर्वपक्षसूत्रस्थशब्दोप-स्थापितज्जन्यशेषकार्यानुष्ठानबुद्धिसामानाधिकरण्येन स्त्रीलिङ्गत्वविवक्षायां षित्वाद् ङीष्प्रत्यये कृते ङीष ईत्वाद्यस्येतीत्यत इतीति वर्त्तमाने हलस्तद्धितस्येति तद्धितत्वेन यका-रलोपाद्यस्येति चेति सूत्रेण चाकारलोपात्साधुत्वसिद्धिरित्याशयः ॥ ५० ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "भक्षार्थो वा" यह निर्देश भक्षण के लिए हैं, परिक्रय के लिए नहीं है, क्योंकि, "द्रव्ये समत्वात्" हविःशेष रूप द्रव्य से ऋत्विक् एवं यजमान दोनों के स्वत्व का अभाव समान है, उसमें जैसे ऋत्विक् का स्वत्व नहीं है, वैसे ही यजमान का भी स्वत्व नहीं है। कारण, 'अग्नये जुष्टं निर्वपामि' यह कहकर सङ्कल्प कर जब सभी हविर्द्रव्य देवता के लिए गृहीत होता है, तब इसमें यजमान का स्वत्व नहीं रह सकता है। जिसके स्वत्व नहीं है, उसका दान भी नहीं किया जा सकता है, इसलिए वह भक्षण के लिए ही है। यह भक्षण 'प्रतिपत्तिकर्म' है, अतः, अवश्य कर्तव्य है। क्योंकि, यागावशिष्ट द्रव्य का विधि-बोधित-नियोग अर्थात् कार्य में लगाना ही प्रतिपत्ति है। यह प्रतिपत्तिकर्म यागीय अपूर्व का धारक होता है—यह आगे कहा गया है। इस स्थल में भक्षण ही प्रतिपत्तिकर्म होने से यह निर्देश भक्षण के लिए है। भक्षण करने पर भक्षणकर्ता की जो तृप्ति एवं सामर्थ्यलाभ—वह इसका दृष्ट फल है और नियमादृष्ट के कारण यह यागीय अपूर्व का विधायक है।

"भक्षार्थः" = भक्षके के लिए इस प्रकार निर्देश, "वा" पूर्वपक्ष के निरास के लिए है, "द्रव्ये समत्वात्" = क्योंकि, हविःशेष रूप द्रव्य के ऋत्विक् एवं यजमान दोनों के ही अधिकार का अभाव समान है ॥ ५० ॥ सिद्धान्त

**व्यादेशाद्दानसंस्तुतिः ॥ ५१ ॥**

शा० भा०—अथ यद्दक्षिणासंस्तव इति व्यादेशसामान्यात्, तदपरिक्रमेऽपि भविष्यतीति ॥ ५१ ॥ क० सिद्धान्तः ॥ पुरोडाशविभागस्यतार्थताधिकरणम् ॥ १७ ॥

॥ इति श्रीशाबरस्वामिकृतौ मीमांसाभाष्ये तृतीयस्याध्यायस्य चतुर्थः पादः ॥

———

त० वा०—दक्षिणेति—प्रासङ्गिकोपकारापेक्षया, ब्रह्मण इत्यादिनिर्देश-सारूप्याद्वाभविष्यति। तस्माद्भक्षार्थोऽयमुपदेश इति सिद्धम् ॥ ५१ ॥

( इति चतुर्थाधिकरणस्य भक्षार्थताधिकरणम् ॥ १७ ॥ )

---

न्या० सु०—स्थितेषु शेषेषु शेषकार्याणामनुष्ठेयानामेकस्मादनुष्ठानमिति पूर्वपक्षकृत्वा-चिन्तापक्षे शेषसद्भावे निमित्तं शेषकार्यं, नैमित्तिकं शेषकार्यान्यथानुपपत्त्या 'शेषस्थापना-क्षेपइति सर्वप्रदानाधिकरणपूर्वपक्षप्रयोजनकृत्वाचिन्तापक्षे विहितशेषकार्यावश्यकत्वं निमित्तं शेषस्थापनं नैमित्तिकमिति भाष्योक्तनिमित्तनैमित्तिकव्याख्यापूर्वं सिद्धान्तहेतुं व्याख्यातुमाह—शेषेति।

स्थितशेषपक्षे शेषकार्यकलापपौर्वापर्याऽनालोचनात्कार्यकाले तु पौर्वापर्याभावा-न्मुख्यशेषस्य पूर्वकालत्वायोगमाशङ्क्य, प्रधानप्रयुक्तहविःशेषाणामेव शेषकार्येषु विनियोज्य-त्वेन प्रयोजकप्रधानपौर्वापर्यस्य शेषकार्यकालेऽवश्याऽऽलोचनीयत्वात्, स्मृतिक्रमेण पदार्थानुष्ठानमितिऽक्रमेण वा नियम्येतेति पञ्चमवक्ष्यमाणपाठक्रमन्यायानुसारात् प्रयोजक-प्रधानप्राक्स्मृतिद्वारा प्राक्स्मृतत्वेन प्रथमहविःशेषस्य तावच्छेषेण कार्यं स्विष्टकृदाद्यापत-तीत्युक्तम्।

स्थापनाक्षेपपक्षे शेषपौर्वापर्योपपत्तावपि मुख्यशेषस्थापनाभावेऽपि शेषान्तरस्थापनात् शेषकार्यासिद्धेस्तदाक्षेपप्रमाणाभावादन्त्यशेषस्थापनाक्षेपकाले तु शेषान्तरासम्भवात्तत्स्थापनं विना शेषकार्यासिद्धेरन्त्यशेषस्थापनाक्षेपस्यैव प्रमाणवत्त्वाद्वैपरीत्यापत्तिमाशङ्क्य, अस्मिन्नपि पक्षे प्रधानप्रयुक्तस्यैव हविषः शेषस्थापनाक्षेपात्पाठक्रमन्यायानुसारेणैव प्रयोजक-प्रधानप्राक्स्मृतिद्वारा प्रथमहविःशेषस्यैव प्राक्स्मृतेः शेषसम्बन्धिस्थापनाक्षेपाख्यं कार्यं तस्यैव तावदापततीत्युक्ते, शेषान्तरस्थापनादपि स्विष्टकृदादिसिद्धेर्मुख्यशेषस्थापनाक्षेपस्या-प्रमाणकत्वशङ्काविवक्षितैकसंख्यशेषाक्षेपमात्रेण शेषकार्यसिद्धेर्मुख्यशेषस्मृतिकाले शेषान्तरा-नालोचनात्तत्स्थापनाक्षेपसंभवेनार्थापत्तिभङ्गानुपपत्तेः पूर्वशेषातिक्रमेण चान्त्यशेषस्मृति-प्रतीक्षणानौचित्यात् स्थापनाक्षेपानुपपत्तेर्मुख्यशेषस्थापनाक्षेप एव प्रमाणवानिति परिहार-सूचनेन निराकर्तुं पूर्वमित्युक्तम् स्मृतिपौर्वापर्येऽपि शेषकार्यनिमित्तस्य शेषसद्भावस्य शेषस्थापननिमित्तस्य वा शेषकार्यावश्यकार्यत्वस्य सर्वत्र विशेषान्मुख्यातिक्रमायोगमाशङ्क्य, मुख्याच्छेषकार्यकरणे तत्काले शेषाकार्याणां कर्त्तव्यत्वावस्थत्वेन निमित्ताविघातान्नैमित्तिकं शेषकार्यं, शेषस्थापनं वा कर्त्तव्यम्। द्वितीयादिभ्यस्तु तत्करणे, तत्काले कृतावस्थत्वेन शेषकार्याणां कार्यत्वाभावाच्छेषान्तरस्य च निमित्तत्वाभावाद् द्वितीयादिशेषसंबन्धिनो नैमित्तिकस्य निमित्तविघातावगतेर्द्वितीयादिभ्यः शेषकार्याणामक्रियेति विशेषोक्त्यर्थं ततःकर्तव्येष्वित्यादिभाष्यं व्याचष्टे—नचेति। विरोधोक्तिव्याख्यातनिमित्तविघातोपपाद-नार्थं शेषस्य साधनत्वचोदनाया शेषान्तरस्य साधनत्वावगतौ शेषकार्यचोदनायाश्च

शेषकार्यावश्यकत्वावगतौ निमित्तत्वनिरासः। भाष्ये द्वितीयादीनामिति षष्ठी नैमित्तिकव्यतिरेकजनिता ॥ ५१ ॥

अथ चतुर्दशं पुरोडाशविभागस्य भक्षार्थत्वाधिकरणम्।

न्या० सु०—'इदं ब्रह्मणः' इत्यादेश्चतुर्धाकृतपुरोडाशभागानां निष्कृष्य ब्रह्माद्यन्वयकथनरूपस्य निर्देशस्य प्रत्येकसमर्पणाख्यविभागरूपदानाक्षेपकत्वाशयतां सौत्रदानशब्दोक्तेर्भाष्यस्थविभागोक्त्या सूचितामुपपादयितुमाह—पुरोडाशस्येति। तस्येदंशब्दनिर्दिष्टस्य पुरोडाशखण्डस्य ब्रह्मादिभ्यो विभजनाभावे ब्रह्माद्यन्वयव्यपदेशत्वायोगापत्तेरिदं ब्रह्मण इत्यादिनिर्देशेन विभागाक्षेपोऽवसीयतइत्यर्थः।

संदेहभाष्यं व्याचष्टे—तत्रेति। पूर्वपक्षप्रतिज्ञार्थत्वेन परिक्रयोक्तिव्याख्यार्थं किमिति भाष्यं व्याचष्टे—परिक्रयार्थमिति। भक्षाश्रवणेऽपि ब्रह्मादिभ्यः समर्पणस्य पुरोडाशप्रतिपत्त्यर्थत्वात्, प्रतिपत्तेश्च क्षपणार्थत्वात् ब्रह्माद्यन्वयेन च पुरोडाशक्षपणस्य योग्यतया भक्षणद्वारत्वावगतेर्भक्षणावगमात्सौत्रस्य हेतोरसाधकत्वाशङ्कानिरासार्थं भक्षयितव्यमिति द्रव्यप्राधान्यवाचितव्यप्रत्ययाश्रवणोक्त्या भाष्यस्थया द्रव्यप्राधान्याश्रवणोपलक्षणार्थता सौत्रस्य हेतोः सूचितेति दर्शयन्न श्रूयत इति भाष्यं व्याचष्टे—नहीति। अनेन च स्विष्टकृदादीनां प्रतिपत्तित्वात्सर्वेभ्य कार्यत्वेऽपि चतुर्धाकरणस्या'ग्नेयं चतुर्धाकरोती'ति सन्निहितवाचिसर्वनामार्थवृत्तितद्धितान्तपदोद्दिष्टप्रकृतद्रव्यग्राहित्वेप्यर्थकर्मत्वादाग्नेयप्रकृतिकानेकहविष्कायां विकृतावेकस्मादेव मुख्यानुकार्यतेतिकृत्वाचिन्तोपस्थापितप्रयोजनाधिकरणसिद्धान्तस्य चतुर्धाधिकरणविषयाक्षेपेण पूर्वपक्षिणा प्रत्यवस्थानादनन्तरसङ्गतिः सूचिता। कर्मकरेभ्यश्चेति भाष्यं सोपपत्तिकपूर्वपक्षोपसंहारार्थत्वेन व्याचष्टे—तस्मादिति। षष्ठ्याद्यपूर्वपक्षव्युत्पाद्यभूतभव्यसमुच्चारणन्यायमाख्ययुक्तयन्तरसूचनार्थत्वेन च शब्दव्याख्यार्थं द्रव्याणां क्रियाङ्गतोक्ता ॥ ५२ ॥

न्या० सु०—चतुर्धाकृतपुरोडाशविभागस्य परिक्रयत्वसंस्तवादपि परिक्रयार्थतेत्येवं दक्षिणात्वसंस्तवोक्त्या भाष्येण व्याख्याते कथं दक्षिणोक्तेः परिक्रयवाचितेत्यपेक्षायामुपपादयितुमाह—एषा वैइति ॥ ५३ ॥

न्या० सु०—वाशब्दोक्तायां परिक्रयार्थत्वनिवृत्तौ सौत्रो हेतुनः तु भक्षार्थतायामिति सुचयितुं वाशब्दार्थमेव तावद् व्याचष्टे—नवेति। तदुपपादनार्थे चतुर्धा कृते द्रव्ये यजमानस्यर्त्विग्भिः साम्यादिति सौत्रं हेतुं प्रश्नपूर्वं व्याचष्टे—कुतइति। भाष्ये तु भक्षार्थत्वसिद्धान्तप्रतिज्ञोपपादनार्थत्वेन दानायोगात् परिक्रयार्थत्वायोगोक्त्यर्थतया वा शब्दं कुतइति भाष्येण प्रश्नपूर्वं व्याख्याय, परिक्रयार्थत्वपूर्वपक्षनिरासनिमित्तो हेतुः कथा मित्यादिना तस्मान्नपरिक्रय इत्यन्तेन व्याख्यातः। श्लोकं व्याचष्टे—समस्तस्येति। देवतोद्देशेन त्यक्तस्यापि देवतायाः प्रतिग्रहीतृत्वाभावेनाऽस्वाम्यात् प्रहीणस्वामिकस्य पुनः स्वीकारात् परिक्रयार्थत्वोपपत्तिशङ्कानिरासार्थं नचेतिभाष्यं व्याख्यातुमाह—तत्रेति।

ऋत्विजामदातृत्वदृष्टान्तेन शिष्टाचारः प्रकटितः। तस्मादिति पूर्वपक्षनिरासोपसंहार-भाष्यं व्याचष्टे—**तस्मादिति**। भक्षार्थत्वसिद्धान्तप्रतिज्ञोपपादनार्थत्वेनाप्यावृत्त्या परि-क्रयार्थेपि द्रव्ये भक्षस्य समत्वादित्येवं सौत्रं हेतुं योजयितुं पूर्वपक्षोक्ताश्रवणहेतुकभक्षा-र्थत्वात्, तदनुभाषणार्थमथेति भाष्यं व्याचष्टे—**कथं खल्विति**। भक्षार्थत्वोपपादनार्थत्वे-नाप्यावृत्त्या सौत्रहेतुयोजनार्थमुच्यत इत्यादि सर्वं भाष्यंतात्पर्यतो व्याचष्टे—**वदिति**।

ब्रह्मादिभिरित्यादिभाष्यं द्रव्यप्रतिपत्त्यर्थत्वत्यागेन कर्तृसंस्कारमात्रार्थत्वोक्त्यर्थंत-यान्येषां व्याख्यां दूषयितुमाह—**ब्रह्मादिभिरिति**।

द्रव्यप्रतिपत्त्यनपेक्षकर्त्रुपकारमात्रार्थत्वेऽपि भक्षणं विना साक्षात्कर्त्रुपकारित्वायो-गात्परिक्रयानापत्तिमाशङ्क्य, गृहनयनादिनापि स्वकार्यकुटुम्बभरणोपयोगात्मकसाक्षा-दुपकारसंभवात् स्वयं भक्षणं वोपकारोस्तु स्वाम्यमात्रं वेतिजिज्ञासायामनेकोपयोगहेतु-त्वात्स्वामित्वमात्रोपकारनिर्णयौचित्यावगते स्वामित्वापादकपरिक्रयणप्रत्युपपादनार्थं नचेतिभाष्यं व्याख्यातुं नचेत्युक्तम्। द्वादशे च सायमारण्या शनवादिडादिशेषोपि ज्योतिष्टोमाङ्गभूतेषु दर्शपूर्णमासविकारेष्वतिदेशः प्राप्तः, 'पयोव्रतं ब्राह्मणस्येति प्रत्यक्ष-विहितेन व्रतेन निवर्त्यते इति, शेषभक्षस्तथेति सूत्रेण पूर्वपक्षयित्वा नान्यार्थत्वादित्यनेन शेषभक्षस्य द्रव्यप्रतिपत्त्यर्थत्वेन क्रतुयुक्तपुरुषसंस्कारार्थाद्व्रतादन्यार्थत्वान्न शेषभक्षो व्रतेन निवर्ततइतिवदता सर्वत्रेडादौ भक्षस्य द्रव्यसंस्कारार्थताया वक्ष्मामाणत्वात् तद्विरोधोपि प्रतिपत्तित्वानभ्युपगमे स्यादित्याह—**सर्वत्र चेति**। अमांसभक्षणनियमेनापि पाशुकेडा-दिभक्षानिवृत्तिसूचनायादिशब्दः। पुरुषस्यैवेत्यवधारणं द्रव्यसंस्कारानपेक्षत्वत्तचै कार्य्यम्।

स्वमतेनोभयसंस्कारार्थत्वात् भाष्यं व्याख्यातुमाह—**अतइति**। द्रव्यसंस्कारानपेक्ष-त्वेऽपि प्रौढ्या भक्षमुपपादयितुमाह—**कर्तृसंस्कारस्येति**। मुख्योपकारकभक्षणातिक्रमकार-णाभावाद्भक्षणे कार्येऽपि स्वकुटुम्बकृतेनापि भक्षणेन ब्रह्माद्युपकारसिद्धे स्वयं भक्षणनियमे को हेतुरित्यपेक्षाया'मिदं ब्रह्मण' इत्यादिविभागेन ब्रह्मान्वयादेशनाख्यस्य ह्यादेशस्या-न्वयविशेषं विनान्वयसामान्यापर्यवसानाद्भक्ष्यभक्षकत्वरूपान्वयविशेषपर्यवसायित्वावगतेस्त-द्द्वारेण स्मारितरूपतया प्रक्रान्तस्य यदनुष्ठानाख्यं समपनं, तस्य ब्रह्मादिभिः कर्तव्यत्वं हेतुत्वेनोक्तम्। यथा च कर्तुः संस्कारापेक्षस्य भक्षणकृत एव संस्कारो योग्यतयावधार्यते, तथा शेषस्यापि सर्वान्तरङ्गक्षपणरूपप्रतिपत्त्यपेक्षस्य भक्षणकृतैव प्रतिपत्तिवधार्यत इत्याह —**शेषस्यापिचेति** ॥ ५४ ॥

न्या० सु०—या दक्षिणाख्यदानरूपतया विभागसंस्तुतिः परिक्रमार्थत्वे हेतुत्वेनोक्ता। सा दक्षिणया विभागेन देयत्वात् विभागरूपया विभज्य ब्रह्माद्यन्वयकथनात्मकव्यादेश-रूपत्वेनेदंब्रह्मणइत्यादिनिर्देशस्य तुल्यतया दक्षिणात्वेप्युपपन्नेत्येवंपूर्वपक्षलिङ्गपरिहारार्थे सूत्रे दक्षिणाकार्यस्यर्त्विंगानमनाख्यक्रतूपकारस्य शेषं प्रतिपादयता भक्षणेन प्रसङ्गात् करणावगतेर्दक्षिणाकार्यापत्तिरपि दक्षिणात्वसंस्तवोपपत्तौ हेतुत्वेनोपलक्षितेति सूचयन् सूत्रं व्याचष्टे—**दक्षिणेति**। सिद्धान्तमुपसंहरति—**तस्मादिति**। ह्यादेशमन्त्रस्य ब्रह्माद्यन्वय-

विभागाविधासित्वेऽपि प्रकाशमानार्थानुपपत्त्या ब्रह्माद्यन्वयविभागविध्याक्षेपसूचनायोपदेशोक्तिः ॥ ५५ ॥

न्या० सु०—व्याख्याता तन्त्रटीका बहुभिरपि भृशं सत्यमन्यैर्निबन्धै-
रुत्सृष्टा यत्नभावाद् भयमनुविदधानैस्तु दुर्बोधतत्त्वाः ।
ग्रन्थासारांशभावा अपिच न नितरां व्याकृतेष्वप्यमीषु
स्पष्टं कार्त्स्न्येन बोधो नहि भवति भृशं प्रायशोन्यैर्निबन्धैः ॥ १ ॥
तस्मात्सर्वान् निबन्धानपरमपि चतुर्ष्वेव भट्टप्रणीतं
मीमांसासारविद्वद्बहुमतनिचयं चोपजीव्यादरेण ।
युक्तीश्चालोक्य सम्यग् बहुविदभिमतो माधवार्यस्य सूनुः
सोमेशः कर्तुमैच्छत्सकलावृतये तन्त्रटीकां सुटीकाम् ॥ २ ॥
कीलालतुल्या नयवत्तयैषा टीकोच्यतां न्यायसुधेति नाम्ना ।
विद्वन्मनोहारिबहूपयोगिप्रामाणिकन्यायनिधानतोपि ॥ ३ ॥
सूत्रेषु भाष्येष्वपि वार्तिकेषु नोपेक्षितं दुर्गममत्र किंचित् ।
वाक्यं पदं वाऽन्वयतोऽर्थतो वा सर्वानवद्याङ्करणीति तस्मात् ॥ ४ ॥
सर्वव्यापी सदानन्दज्ञानात्मा परमेश्वरः ।
प्रीयतां ग्रन्थकरणादस्मान्मे मङ्गलप्रदः ॥ ५ ॥

इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजि-
माधवभट्टोपाध्यायात्मजभट्टसोमेश्वरकृतौ तन्त्रवार्तिक-
टीकायां सर्वानवद्याङ्करण्यां न्यायसुधाख्यायां
तृतीयाध्यायस्य चतुर्थः पादः
समाप्तोयं शुभं भूयात् ।

॥ इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके
तृतीयस्याध्यायस्य चतुर्थश्चरणः ॥
विनीतपादः समाप्तः ।

---

भा० प्र०—पूर्वपक्षी यदि यह कहें कि "एषा वै दर्शपूर्णमासयोर्दक्षिणाः" इस श्रुति की क्या गति होगी ? ऐसी स्थिति में यह कहा गया है "व्यादेशात् दानसंस्तुतिः" दक्षिणा के समान होने से इस प्रकार दक्षिणा की प्रशंसा के लिए किया गया है। जैसे अन्यत्र भी "एष वै दर्शपूर्णमासयोरवभृथः" यह कह कर अवभृथ की प्रशसा की गई है—यह भी वैसा ही है।

"व्यादेशात्" व्यादेश अर्थात् व्यपदेश या सादृश्यमात्र कहकर, "दानसंस्तुतिः" = दान की यह स्तुतिमात्र है ॥ ५१ ॥

निवीतपाद, तृतीय अध्याय का चतुर्थपाद।

# अथ तृतीयाध्याये पञ्चमः पादः ।

## [१] आज्याच्च सर्वसंयोगात् ॥ १ ॥ पू०

शा० भा०—स्तो दर्शपूर्णमासौ तत्र श्रूयते—उत्तरार्धात्स्विष्टकृते समवद्यति इति । तथा, इडामुपह्वयति, इति । तथाऽन्यानि प्राशित्रावदानादीनि शेषकार्याणि । तत्र संदेहः । किमाज्यादुपांशुयाजद्रव्यात्स्विष्टकृदिदमवदातव्यमुत नेति ? किं प्राप्तम् । अवदातव्यमिति । कुतः । सर्वसंयोगात् । साधारणप्रकरणसमाम्नानात्सर्वेषां शेषकार्याणि । अपि च सर्वसंयोगो भवति, सर्वेभ्यो हविर्भ्यः समवद्यति इति । तस्मादाज्यादपि शेषकार्याणि क्रियन्ते ॥ १ ॥ क० पूर्वपक्षः ॥

त० वा०—'सर्वेभ्यो' वा कारणाविशेषात्' इत्यस्यातिप्रसक्तस्यापवादः[२] क्रियते । तमेव तावत्पूर्वं पक्षं स्मारयति । तथा च 'सर्वेभ्यो हविर्भ्यः' इत्यनुवाद उपपद्यते । निःशेषहविर्विषयत्वात् ॥ १ ॥

भा० प्र०—तृतीय अध्याय के चतुर्थपाद के अन्त में कहा गया है । सभी हविर्द्रव्य से ही स्विष्टकृत्-होम एवं इडा, प्रशित्र आदि शेष कार्य के लिए अवदान करना आवश्यक है ।

(यहाँ पर यह ज्ञातव्य है कि पुरोडाश का सम्पादन किया जाता है, उसके सभी अंश की आहुति नहीं की जाती है । कुछ पुरोडाश उसमें बचा लिया जाता है । यजमान एवं ऋत्विक् उसको खाते हैं । इसलिए, पुरोडाश का वह अवशिष्ट अंश का कोई भोग किया जाता है । उसके एक खण्ड का नाम 'प्राशित्र' है, इसको ब्रह्म खाता है । एक भाग का नाम षडवत्त है, यह अग्नीत् का भक्ष्य है । एक खण्ड का चार भागों में विभक्त किया जाता है, अध्वर्यु, होता, ब्रह्मा और अग्नीत् ये चार एक-एक खण्ड का भक्षण करते हैं । पुरोडाश के शेष का दो खण्ड शेष रहता है वे उनका ब्रह्म एवं यजमान भक्षण करते हैं । इसी का नाम इडा है ।)

अतः, उपांशुयाग नाम के अङ्गयाग का अवशिष्ट जो हविर्द्रव्य आज्य जो ध्रुवा नामक पात्रविशेष में रहता है, ध्रुवा नामक पात्रविशेष में आज्य लेकर उससे पुनः "ध्रुवा" नाम के पात्र से लेकर होम किया जाता है । उसका भी शेष कार्य कर्तव्य है या नहीं—यही संशय है । इवमें पूर्वपक्षी का कहना है कि "आज्याश्च" 'उपांशुयाज' नाम के अङ्गयाग का हवन से अवशिष्ट जो ध्रो ध्रुवनाम के पात्र में स्थित आज्य उससे भी शेष कार्य कर्तव्य है, कारण, "सर्वसंयोगात्"—सभी हवियों के साथ ही शेष कार्य का सम्बन्ध उक्त है, क्योंकि, 'सर्वेभ्यो हविर्भ्यः समवद्यति' इस श्रुतिवाक्य में 'सर्व' इस

---

१. (अ० ३ पा० ४ अ० १५ सू० ४४) । २. अतिप्रसक्तस्येति क्वचिन्नास्ति ।

शब्द का प्रयोग कर कहा गया है कि अविशेष में सभी प्रदेय द्रव्य से ही शेष कार्य कार्तव्य हैं।

"अज्यात् च" = आज्य से भी स्विष्टकृत् होम के लिए अवदान कर्तव्य है, "सर्वसंयागात्" = क्योंकि सबके साथ संयोग अर्थात् सम्बन्ध उल्लिखित है। पूर्वपक्ष ॥ १ ॥

**कारणच्च ॥ २ ॥**

**शा० भा०—कारणं श्रूयते—देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति, सोऽब्रवीद्वरं वृणै भागो मेऽस्त्विति, वृणीष्वेत्यब्रुवन्, सोऽब्रवीदुत्तरार्धदिव मह्यं सकृत्सकृदवद्यादिति। तुल्यं कारणमन्येषामाज्यस्य चार्थवादे संकीर्त्यते। तस्मादप्याज्यादवदातव्यमिति ॥ २ ॥**

त० वा०—पुराकल्पे च यत्कारणं स्विष्टकृदर्थेऽवदाने संकीर्तितं तदाज्येऽप्यविशिष्टम्। यद्देवेभ्यो हविरसौ वहति तस्य तेन भागः प्रार्थितः। आज्यमपि चोपांशुयाजदेवताभ्यस्तेनावश्यं वोढव्यम्। अतश्च ततोऽप्यस्य भागेन भवितव्यम् ॥ २ ॥

भा० प्र०—पूर्वपक्षी अपने पक्ष की स्थापना के लिए कहा है "कारणात् च"—सभी हविर्द्रव्यों से ही शेष कार्य के अनुष्ठेय होने के अन्य कारण भी हैं, क्योंकि, "देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति। सोऽब्रवीद्वरं वृणे भोगो मेऽस्त्विति। वृणीष्वेत्यब्रुवन्। सोऽब्रवीदुत्तरार्द्धदिव मह्यं सकृद् सकृदवद्यात्" इस श्रुतिवाक्य में स्विकृदवदान का जो कारण कहा गया है, उपांशुयाज का अवशिष्ट ध्रौवाज्य को अवदान के पक्ष में भी वह एक ही कारण विद्यमान रहते हैं। इसलिए उपांशुयाज का अवशिष्ट जो ध्रौवाज्य उससे भी शेषकार्य कर्तव्य है।

"कारणात् च" = कारण होने से ही सभी हविर्द्रव्य से शेष कार्य कर्तव्य है ॥ २ ॥

**एकस्मिन् समवत्तशब्दात् ॥ ३ ॥**

**शा० भा०—आदित्ये चरौ प्रायणीये श्रूयते, अग्नये स्विष्टकृते समवद्यति इति। आज्यादेकस्माच्च[1] हविषोऽवद्यतीति, मिश्रस्यान्येन हविषा समवद्यतीति। यदि चाऽऽज्यादपि स्विष्टकृतेऽवदीयेत, ततश्चैककेन प्रायणीये, आज्यावदाने क्रियमाणे समवद्यतीत्युपपद्यते। इतरथा चरोरेकस्मादवद्यतीत्यभविष्यत् ॥ ३ ॥**

त० वा०—एकस्मिन्निति—कस्मिंश्चित्कर्मणीत्यर्थः। अथवा युष्मदभिप्रायेण, एकस्मिन्हविषि स्विष्टकृत्यवदीयमाने सति समवत्तशब्दोऽन्यसंहितावदीयमानवचनो नावकल्पेत। प्रत्यक्षे त्वाज्यमपि तत्रावदीयत इत्यवकल्पिष्यते। क पुनरिदं श्रूयते तदभिधीयते 'आदित्यः प्रायणीयः पयसि चरुः, इत्येको यागश्चोदितः।

१. आज्यादिति क्वचिन्नास्ति।

पुनस्तत्रैवोक्तम् 'आज्यस्यैनं चरुमभिपूर्याऽऽज्यभागाः पथ्यादयश्चतस्रो देवता यष्टव्याः' इति। ते च द्रव्यसामान्यादुपांशुयाजविकाराश्चत्वारोऽपि यागाः। आदित्यश्चरुराग्नेयविकारः। तत्र 'अग्नये स्विष्टकृते समवद्यति' इति श्रूयते। तद्यदि चरोरेकस्यातिदेशेन स्विष्टकृत्प्राप्तस्ततोऽवद्यतीत्येव स्यात्। यदा तु प्रकृतावाज्यादप्युपांशुयाजद्रव्यात्स्विष्टकृत्तदाऽत्रापि यष्टव्य इत्युभयोश्चर्वाज्ययोरवदाने समवत्तशब्दः समर्थितो भवति। तस्मादपि सन्त्याज्ये शेषकार्याणीति ॥ ३ ॥

भा० प्र०—ध्रौव आज्य होने पर भी शेष कार्य कर्तव्य हैं, इसका अन्य हेतु भी कहा गया है "एकस्मिन् समवत्तशब्दात्" = जहाँ केवल एक हविः प्रदान करना होता है, वहाँ पर "अवद्यति" इस पद का प्रयोग होता है और जहाँ एक से अधिक हविर्द्रव्य का अवदान करना पड़ता है, वहाँ पर "समवद्यति" इस प्रकार का उल्लेख होता है। प्रायणीय इष्टि नामक याग में केवल अदिति देवता के लिए एकमात्र चरु विहित है। शेष कार्य के विधिस्थल में "अग्नये स्विष्टकृते समवद्यति" इस वाक्य में "समवद्यति" इस वाक्य में "समवद्यति" पद का प्रयोग कर शेष कार्य करने को कहा गया है, अतः इस स्थल में एक से अधिक अन्य हविर्द्रव्य न होने से प्रधान चरु से एवं ध्रौव आज्य से भी स्विष्टकृत्-होमरूप शेष कार्य करना होगा यही "समवद्यति" इस पद से बोधित होता है, अन्यथा उसका प्रयोग निरर्थक होता है और प्रायणीय इष्टिनामक याग में यदि ध्रौव आज्य से शेष कार्य कर्तव्य है, प्रायणीय इष्टिनामक याग में यदि ध्रौव आज्य के शेष कार्य कर्तव्य होता है, ऐसी स्थिति में अन्य स्थल में भी ध्रौव आज्य से शेष कार्य अनुष्ठेय क्यों नहीं होता है ? यही पूर्वपक्षीय का अभिप्राय है।

"एकस्मिन्" = एक हविर्द्रव्य में, "समवद्यशब्दात्" = समवत्त इस शब्द का प्रयोग होने से आशय यह है कि प्रायणीयेष्टि सोमयाग में दूसरे दिन की जाती है। अदिति देवतासम्बन्धी चार आज्यभाग हैं—"आज्येन देवताश्चतस्रो जयति (का० श्रौत० ७।५।१३) उक्त देवताओं के दिशा का निर्देश करते हुए लिखा है "पथ्यां स्वस्ति पुरस्तात्, अग्निं दक्षिणात्, सोमं पश्चात्, सवितारमुत्तरतः, मध्येऽदितिम्। एकस्माच्च हविषोऽवद्यति। एक ही हवि से अवदान के लिए 'अवद्यति' का प्रयोग होता है। "मिश्रस्य चान्येन हविषा समवद्यति' अन्य हवियों के साथ अवदान में 'समवद्यति' प्रयोग होता है ॥ ३ ॥

## आज्ये च दर्शनात् स्विष्टकृदर्थवादस्य ॥ ४ ॥

शा० भा०—ध्रौवे चाऽऽज्ये स्विष्टकृदर्थवादो भवति, अवदायावदाय ध्रुवां प्रत्यभिघारयति। स्विष्टकृतेऽवदाय न ध्रुवां प्रत्यभिघारयति। न हि ततः परामाहुतिं यक्ष्यन् भवति, इति। प्रत्यभिघारेणस्यैतत्प्रयोजनं दर्शयति, ततः परामाहुतिं होष्यति, इति। सौविष्टकृतेऽवत्ते[1] ततः पराहुतिर्नास्तीति न प्रत्यभि-

१. वृत्ते, इति पा०।

**धार्येत। स्विष्टकृदर्थे ध्रुवायां भवति प्रत्यभिधारणमिति दर्शयति ॥ ४॥ क० हेतुः ॥**

त० वा०—'अवदायावदाय ध्रुवां प्रत्यभिधारयति' 'स्विष्टकृतेऽवदाय न प्रत्यभिधारयति' इति ध्रुवात एवावदायेति प्रतिशब्दाद्दृष्टार्थत्वाच्चावगम्यते। यदपि स्विष्टकृतेऽवदीयते तदपि ध्रुवात एव येन तदर्थेऽवत्ते ध्रुवायाः प्रत्यभिधारणं प्रतिषिध्यते। 'न हि ततः परामाहुतिम्' इति हेतुवचनात्पूर्वाणि प्रत्यभिधारणानि स्विष्टकृदर्थानीति दर्शयति। ततश्च तत्सामान्यादितरेषु यथात्वमिति सर्वैः शेषकार्यैर्भवितव्यम् ॥ ४ ॥

**भा० प्र०**—ध्रौव आज्य से स्विष्टकृत् होम के कर्तव्य होने का प्रदर्शन करते हुए कहा है "आज्ये च दर्शनात् स्विष्टकृदर्थवादस्य"। श्रुति में कहा गया है "अवदाय आवदाय ध्रुवां प्रत्यभिधारयति, स्विष्टकृते अवदाय न ध्रुवां प्रत्यभिधारयति। नहि ततः परामाहुतिं यक्ष्यन् भवति", ध्रुवा से प्रत्येक अवदान करके ध्रुवा का प्रत्यभिघारण करे किन्तु स्विष्टकृत् होम का अवदान कर पुनः ध्रुव का अवधारण न करे, कारण, उसके बाद और आहुति नहीं देनी पड़ती है।

(चतुर्ध्रुवायाम् (तै० ब्रा० ३।३।५।३) इस वचन के अनुसार ध्रुवा नाम की स्रुक् से आज्यस्थली से चार स्रुव घी लेकर रखा जाता है, इसलिए ध्रुवा में स्थित आज्य की पूर्ति के लिए उतना ही घृत आज्य स्थली से लेकर डाला जाता है—यही ध्रुवा का प्रत्यभिघारण है)। इस कथन से यह अवगत होता है कि स्विष्टकृत् अवदान के पूर्व तक प्रत्यभिघारण करना होता है, किन्तु बाद में पुनः वह नहीं करना पड़ता है, कारण, यह जो प्रत्यभिघारण है, वह स्विष्टकृत् अवदान के लिए ही कर्तव्य है, इससे अवगत होता है कि ध्रौव आज्य का भी शेषकार्य अनुष्ठेय है।

"आज्ये" = आज्य के विषयों में "स्विष्टकृदर्थवादस्य दर्शनात्" = स्विष्टकृत् होम का अर्थवाद दृष्ट होवे से शेष कार्य कर्तव्य है ॥ ४ ॥ पूर्वपक्ष।

## सिद्धान्तसूत्रम्

## अशेषत्वात्तु नैवं स्यात्सर्वादानादशेषता ॥५। सि०

**शा० भा०—नैव ध्रौवाज्यात्स्विष्टकृदिडमवदातव्यमिति। कस्मात्। अशेषत्वात्। कुतो नास्य शेषः। सर्वादानात् ॥ ५ ॥**

### सिद्धान्तः

त० वा—सति प्रधानद्रव्यशेषे शेषकार्याणि क्रियन्ते। न चोपांशुयाजहविः शेषो विद्यते, सर्वादानात्। कथं सर्वादानमिति चेत्। तदुत्तरसूत्रेणाऽऽह ॥ ५ ॥

**भा० प्र०**—पूर्वकथित पूर्वपक्ष के उत्तर में कहा गया है कि "नैवं स्यात्" = ऐसा नहीं हो सकता है अर्थात् ध्रुवा स्थित आज्य से उपांशुयाग का शेष कार्य नहीं होगा,

कारण, "अशेषत्वात्" उपांशुयाग का हवि का अवशिष्ट अंश नहीं रह जाता है, यदि कहा जाय कि उपांशुयाग के हवि का जो अवशिष्ट अंश नहीं रहता है, इसका क्या कारण है, इसके समाधान में कहा जा सकता है कि "सर्वादानात् अशेषता,' उपांशुयाग के लिए जो चतुरवत्त होम का विधान है, उसमें सभी हविर्द्रव्यों को ही लेकर आहुति देने से उपांशुयाग का और शेष नहीं रह जाता है, और ध्रुवा के मध्य में जो अवशिष्ट अंश रहता है, वह अन्य याग के लिए है।

"अशेषत्वात्" = शेष अर्थात् उपांशुयाग का अंश न होने से "तु" = पूर्वपक्ष के निरास के लिए है, "न एवं स्यात्" = इस प्रकार नहीं होगा, अर्थात् ध्रौवाज्य से स्विष्टकृत अवदान नहीं होगा, "सर्वादानात्" = उपांशु याग में सभी हविर्द्रव्य ही गृहीत् होने से "अशेषता" = उसका शेष अर्थात् अवशिष्ट नहीं रहता है ॥ ५ ॥ सिद्धान्त।

## साधारण्यान्न ध्रुवायां स्यात् ॥ ६ ॥

शा० भा०—ननूपांशुयाजार्थं गृहीते यद्ध्रुवायां शिष्टं, तत्, शेषभूतम्। नैतत्। साधारणं हि तत्, उपांशुयाजायान्येभ्यश्च प्रयोजनेभ्यः। यावदाज्येन यष्टव्यं, तत्तदाज्यं प्रयोजयति। यस्य यस्याऽऽज्यं, तस्य तस्यैवं ग्रहीतव्यं संस्कर्तव्यं चेति। तस्मात्साधारणं ध्रौवमाज्यम्। दर्शयति च सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्, इति। किमतो यद्येवमिति। यत्साधारणमुपांशुयाजायावत्तं ध्रुवायायाज्यं, तेनान्यानि प्रयोजनानि कार्याणि, न तु तत्, प्रतिपादयितव्यमिति। क्वचिच्च यत्, प्रतिपादयितव्यं, तदेवं प्रतिपादयितव्यम्। तस्मान्न ध्रुवायामुपांशुयाजार्थस्य सौविष्टकृतस्य कश्चिच्छेषः प्रतिपादनीयः। यथा यत्रैकस्यामुखायां बहूनामोदनः श्रृतो भवति तत्रैकस्मिन्भुक्तवति, न तस्य शिष्टं भृत्येभ्यः प्रतिपादनीयमुखायामस्तीति गम्यते। प्रयोजनवद्धि तत्। एवमुपांशुयाजाज्येऽपि द्रष्टव्यमिति ॥ ६ ॥

त० वा—ध्रुवायां तावन्नोपांशुयाजस्य शेषो विद्यते। ध्रौवस्यासंयुक्तोत्पत्तेः सर्वाज्यकार्यार्थमादानात् 'सर्वस्मै वा एतद्यज्ञाय गृह्यते' इति वाक्यात्। तैत्तिरीयाणां तु कतिपयोपस्तरणाभिधारणादिकार्यानुक्रमणात्तन्मध्ये चोपांशुयाजस्यापि संकीर्तनात्तावतां साधारणम्। 'उपस्तृणन्नभिधारयन्नाज्यस्य यजन्' इति वाक्याद्गम्यते। साधारणेषु च परिषद्वनोपहारगोष्ठीभोजनादिष्वियं स्थितिः—यदेकस्य भागेऽपयातिते तावन्मात्रमेव तस्य। अवशिष्टं तु तत्समानभाजामवधार्यमाणं न पूर्वशेष इत्येवमकृतार्थत्वेन प्रतिपत्तिमपेक्षते। यदा तु सर्वैः समानभाग्भिर्यथायोगमुद्धृता भागा भवन्ति तदा तस्य साधारण्यानुगुणैव, प्रतिपत्त्यपेक्षा भवति। तदिहोपांशुयाजार्थे भागेऽपनीते न कश्चिदपि तदीयः शेषो विद्यते। शिष्टस्य परस्ताद्ध्राव्यपस्तरणाभिधारणादिगृहीतत्वेनाकृतार्थत्वत्। कृतार्थप्रतिपत्तयश्च

दोषकार्याणि न स्वयमेवाकृतप्रयोजनमपि द्रव्यं प्रयुङ्क्ते। तस्मान्न ध्रुवायां शेषोऽस्ति। यस्तु समस्तकार्यनिर्वृत्त्युत्तरकालं साधारणः शेषो भविष्यति तस्य तस्य समिष्टयजुराख्यं प्रतिपत्त्यन्तरमाम्नातम्। यदा त्विदमप्युस्तरणादिवदेवार्थंकर्मावधार्यते तदा सुतरां शेषाभावः। शक्यं तु तैत्तिरीयवाक्यापेक्षयोत्पत्तावन्यसंयोगात्समिष्टयजुषश्च जुहोतिचोदितत्वेनायज्ञत्वात्प्रतिपत्तित्वमवधारयितुम्। निःशेषत्वेन चासावत्रस्थितेति शेषकार्यान्तराणि बाधते। तस्मात् ध्रुवायां तावन्नास्ति शेषः ॥ ६ ॥

भा० प्र०—पूर्व में कहा है कि उपांशुयाग के लिए सभी हविद्रव्यों का ग्रहण किया जाता है इस प्रसङ्ग में यदि यह आशङ्का की जाय कि उपांशुयाग आज्य देकर ही सम्पन्न होता है। ध्रुवा नाम की एक बृहत् आकार बृहत्फलक पात्र में प्रथमतः आज्य पात्र से आज्य ले लिया जाता है। अनन्तर उससे कुछ अंश लेकर होम किया जाता है, अतः, आज्य से उपांशुयाग करने पर भी ध्रुवापात्र में जब आज्य रहता है, तब उससे शेष कार्य होगा।

इसके समाधान में सिद्धान्ती का कहना है कि "ध्रुवायां न स्यात्" = ध्रुवस्थित हविर्द्रव्य से शेष कार्य नहीं हो सकता है, कारण, "साधारण्यात्" = यह आज्य देवताओं के लिए भी साधारण द्रव्य है। जो द्रव्य साधारण रहता है अर्थात् जिसमें अन्य देवताओं का भी प्राप्य अंश विद्यमान रहता है, उससे शेष कार्य नहीं हो सकता है, कारण, शेष कार्य का अर्थ प्रतिपत्ति कर्म है, अन्य कार्य में उपयुक्त कर्म के शेष को अन्यत्र उचित स्थान में रखना प्रतिपत्ति कर्म है। जिसका कार्य शेष हो जाता है, वे सभी द्रव्य प्रकीर्ण हो जाते हैं, चतुर्दिक् रखदेने से उनको संग्रह कर प्रतिपत्ति कर्म किया जाता है। शास्त्रीय कर्म में शास्त्र के निर्देशानुसार ही प्रतिपत्तिकर्म किया जाता है, क्योंकि, वह प्रतिपत्ति कर्म यागीय अपूर्व का विधायक होने से इसका अवैध भाव में अनुष्ठान करने पर यागीय अपूर्व च्यूति होगी। एक ही पात्र में अनेक के लिए अन्न का पाक करने पर एक व्यक्ति के खाने पर भी जैसे वह अवशिष्ट अन्न नौकर आदि को नहीं दिया जाता है, क्योंकि, इससे अन्य व्यक्ति का प्राप्य अंश भी रहता है, वैसे ही उपांशुयाग के बाद भी ध्रुवा नाम के पात्र में आज्य अवश्य रहता है, किन्तु, उससे स्विष्टकृत् होमादिरूप प्रतिपत्ति कर्म नहीं हो सकता है, कारण, द्रव्यपात्र में जो आज्य ग्रहण किया जाता है, वह अन्य देवताओं का साधारण द्रव्य है, क्योंकि, श्रुति कहती है "सर्वस्मै वा ए तद् यज्ञाय गृह्यते यद् ध्रुवायामाज्याम् अर्थात् यह जो ध्रुवा के लिए आज्य ग्रहण किया जाता है, वह समग्रयाग के लिए ही गृहीत है, अतएव ध्रुवास्थित आज्य का प्रयोजन शेष नहीं है, अतः, उसमें अन्य देवता का भी अंश है, अतः, उससे आज्य लेकर उपांशुयाग करने के बाद उससे आज्य शेष रहने पर उसके द्वारा उपांशुयागीय प्रतिपत्ति कर्म नहीं हो सकता है।

"साधारण्यात्" = साधारण्य हेतु अर्थात् द्रव्यस्थित हविः सभी देवताओं के लिए

साधारण द्रव्य होने से, "ध्रुवायां नस्यात्" = ध्रुवानाम के पात्र में जो अवशिष्ट है, वह उपांशुयाग का अवशेष नहीं हो सकता है ॥ ६ ॥

**शा० भा०—आह। जुह्वां तर्हि, आज्यस्य शेषो भविष्यति, चमसवत्। यथा चमसेषु ग्रहेषु च सोमस्य चोदनयेति।**

**तत्र प्रत्याह—**

**अवत्तत्वाच्च जुह्वां तस्य च होमसंयोगात् ॥**

**ध्रुवायां तावन्नास्ति शेषः, उपांशुयाजस्य साधारणत्वादित्युक्तम्। अथ कस्मान्न जुह्वां यच्छिष्टं तेन शेषकार्यं, यथा होमार्थे चमसे शेष इति। उच्यते। यज्जुह्वामवत्तं तत्सर्वं होमेन संबद्धं, तस्मान्न जुह्वां शेषः ॥ ७ ॥**

त० वा०—तत्रैतत्स्यात्, यत्केवलोपांशुयाजार्थं जुह्वामवत्तं तस्यैव ग्रहचमनसेष्विव सोमस्य शेषो भविष्यतीति। तदनुपपन्नम्। कुतः। तस्य समस्तस्य 'चतुरवत्तं जुहोति' इति होमसंयोगात्। उक्तं ह्येतदुपधानार्थे चरौ नान्यत्र श्रुतमन्यत्र विनियोक्तव्यमिति तस्मान्न जुह्वां शेष उपपद्यते ॥ ७ ॥

भा० प्र०—यदि पूर्वपक्ष के समर्थन में यह कहा जाय कि जुहू नाम के पात्र में हविर्द्रव्य लेकर होम किया जाता है, होम के बाद उसमें कुछ अंश छोड़कर होम किया जाता है।

इसके समाधान में सिद्धान्ती का कहना है कि "अवत्त्वात् च" जुह्वां" जुहूपात्र में अवदान कर लेने से उसमें शेष नहीं रह सकता है। यदि कहा जाय कि शेष रहने में क्या बाधा है ? ऐसी स्थिति में यह कहा जा सकता है "तस्य च होमसंयोगात्" जिसका अवदान कर लिया गया है, उन सभी का के साथ सम्बन्ध है, क्योंकि, होम के लिए ही अवदान करने की विधि है और जो होम के लिए गृहीत है, उसके सभी अंश का होम करना होगा उसका कुछ भी शेष नहीं रखना होगा, कारण, शेष रखने में कोई भी युक्ति नहीं है।

"जुह्वाम्" = जुहू नाम के होम पात्र में "अवत्तत्वात्" अवत्त अर्थात् अवदान किया गया है, अतः, "च" और "तस्य" = उसका अर्थात् उस अवदान किये गये अंश का "होमसंयोगात्" = होम के साथ संयोग अर्थात् सम्बन्ध होने से उसमें कुछ अंश अवशिष्ट नहीं रह सकता है।

सुबोधिनीकार और भाष्यकार ने सम्पूर्ण सूत्र को सिद्धान्त के रूप में वर्णित किया है, किन्तु कुतूहल वृत्तिकार ने पूर्वार्धं को पूर्वपक्षपरक और उत्तरार्ध को सिद्धान्तपरक माना है।

यहाँ पर तन्त्रवार्तिक के अनुसार 'अवत्तत्वात्तु' यह सूत्रपाठ है ॥ ७ ॥

## चमसवदिति चेत् ॥ ८ ॥

शा० भा०—इति पुनर्यदुक्तं, तत्परिहर्तव्यम् ॥ ८ ॥ क० आभासः ।'

त०वा०—अथ यदुक्तं चमसवत्सत्यपि होमसंयोगे शेषो भविष्यतीति तत्परिहर्तव्यम् ॥ ८ ॥

भा० प्र०—पूर्वपक्षी ने सिद्धान्त पक्षपर आक्षेप करते हुए कहा है "चमसवत्" चमसपात्र में लेकर सोम की आहुति की जाती है, चमस में स्थिति सोम की आहुति के बाद उसका कुछ अंश चमस में अवशिष्ट रखा जाता है, अतः, उस स्थल में होम के साथ सम्बन्ध रहने पर भी जैसे सम्पूर्ण से होम नहीं होता है, वरन् शेष रह जाता है, उपांशुयागीय हविर्द्रव्य का जुहूमध्य में होम के लिए अवदानपूर्वक गृहीत होने पर भी होम के बाद उसमें कुछ अंश अवशिष्ट रहेगा, जिसके द्वारा प्रतिपत्ति कर्म किया जायेगा।

"चमसवत्" = चमस के समान अर्थात् चमस में जैसे अवशिष्ट कुछ अंश रहेगा, "इतिचेत्" = यह यदि कहा जाय ॥ ८ ॥ आशङ्का ॥

## न चोदनाविरोधाद्धविःप्रकल्पनत्वाच्च ॥ ९ ॥

शा० भा०—नैतदेवम् । कुतः । चोदनाविरोधात् । सोमस्याग्ने वीहीत्यनुवषट्करोति, इति तत्र चोदना । अपि च तत्र, ऐन्द्रवायवं गृह्णाति, इत्येवमादीनि ग्रहणानि न होमसंयुक्तानि, हविःप्रकल्पनान्येव । इह पुनर्होमसंयोगः, चतुर्गृहीतं जुहोति, इति ॥ ९ ॥

त०वा०—नैतत्सोमेन तुल्यम् । तत्र हि ग्रहचमसेषु, हविःप्रकल्पनमात्रे कृते यथा न सर्वहोमस्तथा 'सोमेऽवचनाद्भक्षो न विद्यते' इत्यत्राधिकरणे वक्ष्यामः । तेन चोदनाविरोधं तत्र वक्ष्यमाणं परिहरतां न सर्वहोमो भविष्यति । शेषकार्यान्यार्थदर्शनं च 'सोमस्याग्ने वीहित्यनुवषट्करोति' इत्यादि, 'सर्वतः परिहारमाश्विनं भक्षयति' इत्यादिचमससमाख्या च न विरोत्स्यते । अन्यथा तद्विरोधः स्यात् । अथवा न तत्रासमस्तहोमे सति काचिच्चोदना विरुध्यत इत्यविरोधादसर्वहोमः । इह तु विरोधः स्यात् । अयमेव चाविरोधो हेतुरिति सूत्रगमनिका । यथा तु भाष्यकारेण पूर्वं चमसमनुदाहृत्य 'चमसवदिति चेत्' इति सूत्रमुपन्यस्तं तथा परिचोदनासूत्रमेव होमसंयोगानैकान्तिकत्वप्रदर्शनार्थं कल्पयित्वा परिहारो वक्तव्यः । तत्र वचनान्तरकृतत्वाच्छेषः स्यादत्र वचनानन्तररहितत्वे सतीति विशिष्टस्य हेतोरव्यभिचारात् । अथवाऽवत्तत्वात्तु जुह्वामित्येतदेव तुशब्दस्थाने चशब्दं कृत्वा पूर्वपक्षवादिप्रत्यवस्थानं व्याचक्षाणैश्चमनो दृष्टान्तो दातव्यः । परं चाऽनुभाषणसूत्रं वक्तव्यम् । एतदुक्तं भवति । अवत्तत्वात्तु जुह्वां चमसवच्छेषोऽस्तु । तस्योत्तरं, तस्य च होमसंयोगादिति गतार्थम् ॥ ९ ॥

भा० प्र०—पूर्वपक्ष के समर्थन में प्रदर्शित आशङ्का के समाधान में सिद्धान्ती का कहना है कि "न" प्रदर्शित आशङ्का ठीक नहीं है, कारण, "चोदनाविरोधात्" ग्रह चमसाहुति को होम का अवशेष न रखने पर "सोमस्याग्ने व्रीहि इत्यनुवषट् करोति" = सोमस्याग्ने व्रीहि इस मन्त्र से अनुवषट् करता है। इस वेदवाक्य में चमसाहुति को अवशिष्ट अंश से अनुवषट्कार नामक कर्म के करने की विधि है—उसके साथ विरोध होगा। इसलिए, उसमें होम का शेष द्रव्य चमस नाम के पात्र में रखना होता है, उसमें होम की बात नहीं कही गई है, किन्तु "ऐन्द्रवायवं गृह्णाति = इन्द्रवायुदेवतावाले ग्रह का ग्रहण करता है अर्थात् ऐन्द्रवायवग्रह में सोमरस का ग्रहण करता है, इत्यादि वाक्य में ग्रहण का विषय ही कहा गया है, इसलिए, उसमें सम्पूर्ण द्रव्य का होना नहीं किया जाता है, किन्तु "हविः प्रकल्पनत्वात्" उसमें केवल देवता और द्रव्य का सम्बन्ध बोधित होता है, देवता के उद्देश्य से हविर्द्रव्य की कल्पना अर्थात् ग्रहण की ही बात कही गई है। अन्य पक्ष में उपांशुयाज स्थल में "चतुर्गृहीतं जुहोति" इस वाक्य में होम की बात कही गई है, अतः, चमसाहुति के दृष्टान्त के अनुसार उपांशुयाग में जुहूपात्र में अवशिष्ट नहीं रखा जा सकता है, कारण, इस स्थल में विषमता है। "न" = नहीं पूर्वपक्षी की आशङ्का ठीक नहीं है। "चोदनाविरोधात्" = कारण, चमसाहुति का शेष न रखने पर अन्य वेदविधि के साथ विरोध होगा, "हविः प्रकल्पनात् च" = वैसे स्थल में केवल हवि ही कल्पित होता, किन्तु आशङ्का का खण्डन होम कथित नहीं है ॥ ९ ॥

## उत्पन्नाधिकारात्सति सर्ववचनम् ॥ १० ॥

शा० भा०—अथ यदुक्तं, सर्वेभ्यो हविर्भ्यः समवद्यति, इति। उच्यते। उत्पन्नं, शेषमधिकृत्यैतदुच्यते, नाविशेषणम्। तस्माद्यं इह शेषास्तेभ्यः सर्वेभ्य इति। यथा सर्वः ओदनो भुक्तः सर्वे ब्राह्मणा भुक्तवन्त इति प्रकृतापेक्षः सर्वशब्द एवमत्रापीति ॥ १० ॥

त० वा०—यस्तु सर्वेभ्य इति। प्राप्त्यपेक्षोऽनुवादः। तत्र यादृशं वयमिहं सर्वत्वं पश्यामस्तादृशस्यैवानुवाद इति मन्यामहे। सर्वत्रैव च परमसर्वेण व्यवहाराभावादधिकृतापेक्षः सर्वशब्दो गृह्यत इति न विरोधः। तेन येषां शेषसद्भावेन प्रतिपत्तिकार्याधिकारोऽस्ति, ये वा विद्यमानत्वेन प्रकृतशेषाः तेभ्यः सर्वेभ्य इति गम्यते ॥ १० ॥

भा० प्र०—यह आशङ्का हो सकती है कि उपांशु याग का शेष कार्य न करने पर "सर्वेभ्यः स्विष्टकृते समवद्यति" समग्र हविर्द्रव्य से स्विष्टकृत् देवता के लिए अवदान करें" इस वाक्य में जो 'सर्व' शब्द का प्रयोग किया गया है उसकी सङ्गति नहीं होगी। कारण, उपांशु याग के हविर्द्रव्य को छोड़ने पर सभी हविर्द्रव्य से अवदान नहीं होता है।

इसके समाधान में सिद्धान्तपक्षी का कथन है कि "सति सर्ववचनम्' जो शेष द्रव्य रहता है, उसको लक्ष्य करने के लिए इस स्थल में 'सर्व' शब्द का प्रयोग किया गया है,

कारण, "उत्पन्नाधिकारात्" उत्पन्न = प्राप्त शेष अंश को अधिकार में ही स्विष्कृत् होम की बात कही गयी है, किन्तु उपांशुयाग का शेष अंश प्राप्त नहीं है, अतः, उसको छोड़ने पर भी असङ्गति नहीं है। जैसे 'सभी ब्राह्मणों भोजन कराया गया है, यह कहने पर पृथिवी के सभी ब्राह्मणों की अवगति नहीं होती है, किन्तु, निमन्त्रित समागत सभी ब्राह्मण यही अवगत होता है, प्रकृत स्थल में भी ऐसा ही है।

"उपपन्नाधिकारात्" = उपपन्न अर्थात् प्राप्त शेषविषयक अधिकार होने से, 'सति' = विद्यमान शेषांश के सम्बन्ध में ही "सर्ववचनम्" = सर्व शब्द का प्रयोग किया गया है ॥ १० ॥

**जातिविशेषात्परम् ॥ ११ ॥**

**शा० भा०—अथ यदुक्तं, प्रायणीये केवले चरौ समवत्तशब्दो नावकल्पते। यदि न तत्र चोदकेनाऽऽज्यादपि स्विष्टकृदवदानमिति। उच्यते। असत्यप्याज्याच्छेषकार्ये समवत्तशब्दो जातिविशेषापेक्ष उपपद्यते, ओदनजातिमाज्यजातिं चापेक्ष्य। अनुवादो हि० सः। यथासंभवं चानुवादः कल्प्येत ॥ ११ ॥**

त० वा०—पूर्ववदेव समवद्यतेरनुवादत्वाद्यथासंभवमाज्येऽपीति चराववदीयमाने सौक्ष्म्यात्तदवयवस्याचिकीर्षितमप्यवदानं बलाद्भवति। तदेतत्संसृष्टद्रव्यजातिद्वयमपेक्ष्य संशब्दोऽनुवादः ॥ ११ ॥

भा० प्र०—सिद्धान्ती के विरुद्ध पूर्वपक्षी ने 'समवत्त' शब्द के प्रयोग की आपत्ति कही थी, उसके उत्तर में सिद्धान्ती का कहना है कि 'जातिविशेषात् परम्' प्रायणीय याग में समवत्त शब्द का प्रयोग है, यह प्रकृतिभूत आग्नेय याग के ओदनजाति एवं आज्य जाति का अनुवाद है, अर्थात् चरु का अवदान करने पर यद्यपि एक भाग का ही अवदान किया जाता है, तथापि अवदान करने पर उनमें सूक्ष्म-सूक्ष्म कतिपय खण्ड नान्तरीयक रूप में हो जाते हैं और वे भी जुहू के मध्य में होम के लिए गृहीत अवदान के साथ मिश्रित हो जाते हैं, अतः इस स्थल में एक अवदान ही ग्रहण के लिए अभीष्ट होने पर भी वे सभी सूक्ष्म नान्तरीयक सिद्ध अवदान भी गृहीत होकर अनेक समवेत होने से वे जाति हो जाते हैं। इसी जाति को लक्ष्यकर इस स्थल में 'समवद्यति' कहा गया है, अतः, यह अनुवाद मात्र है।

'परम्' = अन्य अर्थात् समवत्त शब्द का प्रयोग रूप लिङ्ग अर्थात् कारण, 'जातिविशेषात्' = अन्न जाति या आज्य जाति को लक्ष्य कर कहा गया है ॥ ११ ॥

**अन्त्यमरेकार्थे ॥ १२ ॥**

**शा० भा०—अथ यदुक्तं, स्विष्टकृदर्थं ध्रुवायामभिघारणं दर्शयतीति। न तत्स्विष्टकृदर्थं, शेषाभावादित्युक्तम्। तस्मादयं तस्यार्थः। न हि ततः आहुति**

यक्ष्यन् भवति, इति, न रेक्ष्यते । ध्रुवातो यद्याहुतिरपरा होतव्या भवेत्, न च प्रत्यभिघार्येत । ध्रुवा ततः किल रिच्येत । न रेक्ष्यते । अपरस्या आहुतेर-भावात्कि प्रत्यभिधारणेनेति ॥ १२ ॥ आ० नि० ॥ ध्रुवाज्यादिभिः स्विष्ट-कृदादिशेषाननुष्ठानाधिकरणम् ॥ १ ॥

त० वा०—अन्त्यं यत्तु कारणं स्विष्टकृदर्थोऽर्थवाद इत्युक्तं, तदस्मत्पक्षेऽप्युप-पद्यत एव । अरेकार्थत्वात् 'स्विष्टकृतेऽवदाय' इति तावद्यतस्तस्यावदानं भवति यादृशं वा संभवति तादृशमिति गम्यते । पुरोडाशादिभ्यश्च तस्यावदानं, ध्रुवात-श्चोपस्तरणाभिधारणे । न चतुर्थ्यन्तेन ध्रौवमेवावदानं संबध्यते । सा हि देवतार्थं-द्रव्यान्तरावदानेऽप्युपस्तरणाभिधारणोपयोगित्वात्प्रत्यभिधारणमपेक्षत एव । तेन प्राक् स्विष्टकृतः परस्तादपि ध्रौवोपयोगोऽस्तीत्यवत्तेऽवत्ते प्रतिपूरयितव्या, ततः परं तु न किंचित्कार्यमिति नार्थः प्रतिपूरणेन । न ह्येतत्प्रतिपूरणं पूर्वस्यावदानस्य संस्कारकमदृष्टार्थत्वप्रसङ्गात् । अरेकतूत्तरकार्यार्थः प्रत्यक्षः । तस्मादन्तरेणापि स्विष्टकृदर्थत्वं तदवधिकारेकार्थत्वेनोपपन्नोऽर्थवादः ॥ १२ ॥

( इति उपांशुयाजाद्यर्थहविर्भ्यः शेषकार्याननुष्ठानाधिकरणम् ॥ १ ॥ )

भा० प्र० – पूर्वपक्षी ने कहा है स्विष्टकृत् होम के लिए द्रव्यस्थ आज्य का अभि-घारण किया जाता है, अतः, उसको शेषकार्य मानना पड़ेगा ।

इसके समाधान में कहा गया है 'अरेकार्थे' ध्रुवा को रिक्त होने के अभाव में ऐसा करना पड़ता है, कारण ध्रुवा में यदि प्रतिघारण नहीं किया जाय ध्रुवा आज्यहीन हो जायेगी, ऐसी स्थिति में आगे का कार्य करना सम्भव नहीं होगा, क्योंकि, पुरोडाश आदि से जैसे स्विष्टकृत् अवदान किया जाता है, ध्रुवा में वैसा उपस्तरण एवं अभिघारण करना होगा अर्थात् आज्य का ग्रहण करना होगा, इसलिए स्विष्टकृत् होम के पूर्व में भी ध्रुवा में प्रत्यभिघारण आवश्यक हैं, किन्तु, इसीलिए, उस स्विष्टकृत् होम के लिए वह नहीं है ।

स्विष्टकृत् के लिए अवत्त हवि के उपस्तरण और अभिघारण तक ध्रुवा स्थित आज्य का कार्य है । यदि ध्रुवा का प्रत्यभिधारण न किया जाय तो ध्रुवा आज्य से रहित हो जायेगा, फलतः, आगे कार्य सम्पन्न नहीं होगा, इसलिए, प्रति अवदान के बाद ध्रुवा का अभिघारण किया जाता है, स्विष्टकृत् के अवदान के बाद ध्रौव आज्य की कोई आवश्यकता नहीं है, इसलिए ध्रुवा प्रत्यभिघारण नहीं होता है ।

'अन्त्यम्' = शेष का लिङ्ग अर्थात् ध्रौवाज्य का प्रत्यभिघारण रूप लिङ्ग, 'अवेकार्थे' = ध्रुवा को न करवे के लिए है ॥ १२ ॥

प्रथम उपांशु याजादि हवि का शेषकार्यानुष्ठानाधिकरण ।

[२] साकं प्रस्थायीये स्विष्टकृदिडं च तद्वत् ॥ १३ ॥ सि०

शा० भा०—दर्शपूर्णमासयोः श्रूयते, साकंप्रस्थायीयेन यजेत, इति । तत्र संदेहः । किं स्विष्टकृदिडमस्ति, नास्तीति । अस्तीति ब्रूमः । कुतः । दर्शपूर्णमासविकारो हि साकंप्रस्थायीयमिति । एवं प्राप्ते ब्रूमः । नास्तीति । कुतः । अशेषत्वात् । सर्वदानाच्चाशेषता । कथम् । एवं तत्र श्रूयते । आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन च पुरोडाशेनाग्नीध्रे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाहेति । तस्मान्न ततः शेषकार्यमिति ॥ १३ ॥ क० ॥ साकंप्रस्थायीयेशेषकर्माननुष्ठानाधिकरणम् ॥ २ ॥

त० वा०—अमावास्यायां नित्यं स्विष्टकृदिडं सांनाय्यादवदीयते । तद्गुणविकारश्च साकंप्रस्थायीयः । अत इहाप्यवदातव्यमित्येतावता विशेषेणातुल्याशङ्कायामतिदेशः क्रियते । तद्वदेवाशेषत्वान्नैवं स्यात् । सर्वदानादशेषतेति । एवं ह्यत्र सहेति विदधदशेषहोमं विदधाति । अतो न शक्यं किंचिच्छेषयितुम् ॥ १३ ॥

( इति साकंप्रस्थायीये शेषकार्याननुष्ठानाधिकरणम् ॥ २ )

भा० प्र०—दर्शपूर्णमास प्रकरण में श्रुति में कहा गया है "साकं प्रस्थायीयेन यजेत"=साकं प्रस्थायीय याग करे । इस याग में भी स्विष्टकृत् होम आदि है या नहीं—यही सन्देह है ।

इस सन्देह में पूर्वपक्षी का कहना है कि साकं प्रस्थायीय याग में भी स्विष्टकृत् होम कर्तव्य है, कारण, यह दर्शपूर्ण मास की विकृति है, प्रकृति में जो गुण रहते हैं विकृति में भी उसके रहने के कारण प्रकृतिभूत दर्शपूर्ण मास में जब स्विष्टकृत् होम आदि किये जाते हैं तो उसके विकृतिभूत इस साकं प्रस्थादीय याग में भी वह रहेगा ।

इसके समाधान में सिद्धान्ती का कहना है "साकं प्रस्थायीये स्विष्टकृदिडञ्च तद्वत्" उपांशु याग में जैसे स्विष्टकृत् होम आदि शेषकार्य नहीं हैं, वैसे ही साकं प्रस्थायीय याग में भी होगा, अर्थात् स्विष्टकृत् होमादि नहीं रहेगा । कारण, इस स्थल में भी होम के लिए सभी हविर्द्रव्य गृहीत होने से अवशिष्ट न रहने के कारण शेषकार्य नहीं हो सकता है । क्योंकि, दधि और दूध का चार कलशी के साथ आहवनीय स्थान में जाना होता है और जुहू, उपभृत् आदि होम करने वाले पात्र आदि अन्य दिये जाने से वे चार कलसियों में करके दही और दूध का होम करना होता है और होम के शेष को रखने के लिए होम के बाद ये चार कलशियाँ ही अवशिष्ट रहती है, 'इसलिए, अवशिष्ट अंश न रहने से शेषकार्य नहीं हो सकता है ।

आशय यह है कि शेष न रहने के कारण साकं प्रस्थायीय याग में स्विष्टकृत् और इडा का अवदान नहीं होता है, क्योंकि चतुरवत्त आज्य का होम होने से शेष नहीं

रहता है। क्योंकि, "आज्यभागाभ्यां प्रचयम् आग्नेयेन च पुरोडाशेनाग्नीये स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाह = आज्य भाग और आग्नेय पुरोडाश से तौलकर अग्नीत् दोनों स्रुक् देकर दूध और दही की कलशी के साथ दक्षिण से अतिक्रमण करते हुए कहता है इन्द्र के लिए पुरोऽनुवाक्या बोलो, आश्रावण करो, इन्द्र के लिए यजन करो, ऐसा संप्रेष दे। कुम्भीस्थ सभी दूध और दही हुत हो जाता है; अतः, उसके शेष कार्य नहीं होता है।

"साकंप्रस्थायीये च" = साकं प्रस्थायीय नाम के कर्म में भी "स्विष्टकृदिडं" = स्विष्टकृत् इडा आदि का अवदान, "तद्वत्" = उसके समान अर्थात् उपांशुयाग के समान अनुष्ठान नहीं होता है ॥ १३ ॥

## [३] सौत्रामण्यां च ग्रहेषु ॥ १४ ॥ सि०

शा० भा०—अस्ति सौत्रामणि। तत्र ग्रहाः श्रूयन्ते, आश्विनसारस्वतैन्द्राः। तत्र चोदकेन स्विष्टकृदिडं प्राप्तम्। अथेदानीं संदेहः। किं निवर्तते उत नेति। किं प्राप्तम्। चोदकानुग्रहाय कर्तव्यमिति। एवं प्राप्ते ब्रूमः। सौत्रामण्यां च ग्रहेषु च कर्तव्यमिति चशब्देनान्वादिश्यते। कुतः। अशेषत्वात्। सर्वादानादशेषता। तत्रापि हि ग्रहैरेवं होतुं प्रतिष्ठन्ते, यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्त इति। ग्रहस्थं खल्वपि तद्द्रव्यम्, अभिगृहीतमभ्यनुक्रममभ्याश्रावितं देवतां प्रति। यथागृहीतान् ग्रहानृत्विज आददते, आश्विनमध्वर्युः, सारस्वतं ब्रह्मा, ऐन्द्रं प्रतिप्रस्थाता इति, होमार्थमशेषादानं भवति। होमसंयोगश्चैषां श्रयते। उत्तरेऽग्नौ पयोग्रहाज्जुह्वति, दक्षिणेऽग्नौ सुरग्रहाज्जुह्वति, इति ॥ १४ ॥

त० वा०—तद्वद्वित्यनुवर्तते। सौत्रामण्यां सुराग्रहाः पयोग्रहाश्चाऽऽश्विनादय आम्नाताः। तेषां पृथक् प्रकल्पनमात्रात्मकत्वाच्चमसवत्सर्वहोमप्राप्तिर्नास्तीति विशेषाशङ्कायामतिदेशात्त्रापि = यथागृहीतानां होमार्थेनाऽऽदानेन संबन्धो यथोपात्तानां च होमेन श्रूयते 'यथागृहीतान् ग्रहानृत्विज उपाददते। उत्तरेऽग्नौ पयोग्रहान् जुह्वति दक्षिणे सुराग्रहान्' इति ॥ १४ ॥

भा० प्र०—सौत्रमणि नाम का एक याग होता है। श्रुति में कहा गया है। "पयोग्रहाः सुराग्रहश्च गृह्यन्ते" दूध के ग्रह और सुरा के ग्रह ग्रहण किए जाते हैं। आश्विन सारस्वत एवं ऐन्द्र ग्रह में लेकर उससे दूध एवं सुरा की आहुति दी जाती है, उसका स्विष्टकृत् होम आदि शेषकार्य है या नहीं?

इस सन्देह में पूर्वपक्षी का कहना है कि जैसे चमसाहुति का अवशेष रहता है वैसे ही इन सभी ग्रह होमों का भी जब शेष रखना होगा तब स्विष्टकृत् होम आदि शेष कार्य कर्तव्य होगा। कारण, पूर्व के दो दृष्टान्तों के अनुसार शेष नहीं था, अतः शेष

कार्य का लोप हुआ था, किन्तु, इसमें जब "उच्छिनष्टि न सर्वं जुहोति" शेष रखा जाता है सभी का होम नहीं होता है, उच्छिष्ट अर्थात् कुछ अवशिष्ट रखने की विधि है, ऐसी स्थिति में शेषकार्य स्विष्टकृत् होम क्यों नहीं होगा ?

इसके समाधान में सिद्धान्ती का कहना है—"सौत्रामण्यां च ग्रहेषु" सौत्रामणि याग में सभी ग्रहनाम के होम पात्र हैं, उनसे स्विष्टकृत् होमादि रूप शेषकार्य कर्तव्य नहीं है, कारण, यहाँ भी शेष नहीं है। क्योंकि, सभी से होम करना पड़ता है, अतः, अवशिष्ट नहीं रहता है।

सौत्रामणि याग में सुरा से होम और शेष ऋत्विजों के लिए भक्षण विहित है। सौत्रामणि के सुरा के निर्माण की विधि जो श्रौत सूत्र में लिखी गई है. वह इस प्रकार है। व्रीहि और श्यामाक का अधिक जल में चावल पकाकर उससे आचाम = मांड में शष्पादि के चूर्ण के साथ पके चावलों को डालकर तीन दिन तक गड्ढे में गाड़कर रखा जाता है—यही प्रकृत में सुरा है इसमें मादकता नहीं होती है ( कात्यायन श्रौ० सू० १९।२।२०-२१ ) "सौत्रामण्यां च" = सौत्रामणि नाम में भी, "ग्रहेषु" = ग्रहों में अर्थात् पयोग्रह और सुराग्रह में शेष न रहने के कारण स्विष्टकृत् होमादि शेषकार्य नहीं होगा ॥ १४ ॥ सिद्धान्तपक्ष।

## तद्वच्च शेषवचनम् ॥ १५ ॥

शा० भा०—एतमेव न्यायं शेषवचनमुपोद्बलयति। उच्छिनष्टि, न सर्वं जुहोति इति। सर्वहोमे प्राप्ते प्रतिषेधोऽवकल्पते। वाचनिकत्वाच्च स्विष्टकृदिडं न भवति। तस्यान्यत्रोपयोगवचनात्, ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम्, इति। अपरस्यापि शेषस्य वाचनिको विनियोगः शतातृण्णायां विक्षारयन्ति, इति ॥१५॥ क० युक्ति। ॥ सौत्रामण्यांशेषकर्मानुष्ठानाधिकरणम् ॥३॥

त० वा०—अनन्यशेषभूतश्च प्रतिषेधोऽनुवाद 'उच्छिनष्टि न सर्वं जुहोति' इति। उच्छिनष्टीति विधिः। तदनुवादस्तु निषेधः, अशेषहोमप्राप्त्या शेषकार्यानिर्वृत्तिं दर्शयति वाचनिकस्य च शेषस्य प्रतिपत्त्यन्तरमर्थकर्म वाऽन्यदस्तीति 'ततोऽपि' इति स्विष्टकृदिडं न कर्तव्यमिति ॥ १५ ॥

( इति सौत्रामण्यां शेषकर्यानिनुष्ठानाधिकरणम् ) ॥ ३ ॥

भा० प्र०—यदि यह कहा जाय कि "उच्छनष्टि न सर्वं जुहोति" इस वाक्य में जब शेष रखने की बात कही गई है, तब अवशिष्ट नहीं बचना है—यह कैसे कहा गया है ? इस आशङ्का में कहा है—"शेषवचनं च तद्वत्" यह जो शेष रखने के सम्बन्ध में वचन कुम्भीपात्र के समान निःशेष होम करने के विषय में अवगत कराता है, कारण, प्रसक्त का ही प्रतिषेध होता है, सभी का होम प्राप्त था, अतः, स्वतन्त्र वचन से कुछ

शेष रखने की बात कही गई है, इस वचन की सामर्थ्य से रक्षित अवशेष रहने पर भी स्विष्टकृत् होम आदि नहीं किया जाता है, क्योंकि, उस अवशिष्ट अंश का अन्य उपयोग है, उससे अन्य कार्य को करने की बात श्रुति में कही गई है। "ब्राह्मणं परिक्रीणीयाद् उच्छेषणस्य पातारम्" उच्छेष के पीने वाले, ब्राह्मण को खरीदे इस श्रुतिवाक्य में कहा गया है इस अवशेष अंश को कोई ब्राह्मण पान करे और मूल्य देकर उस ब्राह्मण का क्रय करे = अर्थात् उसके पास से इस पान जन्य फल का क्रय करे, अतः, सौत्रामणि याग में भी ग्रह के अवशिष्ट से स्विष्टकृत् होम आदि शेषकार्य नहीं होगा।

"शेषवचनं च" = शेष रखने का जो वचन है वह भी, "तद्वत्" = उसके समान अर्थात् पूर्व अधिकरण में कथित कुम्भी पात्र के समान निःशेष होम की बात कही गई है ॥ १५ ॥

## [४] द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥ १६ ॥ पू०

शा० भा०—अस्ति सर्वपृष्ठेष्टिः—इन्द्राय राथंतराय, इन्द्राय आबर्हताय, इन्द्राय वैरूपाय, इन्द्राय वैराजाय, इन्द्राय शाक्वराय, इति। तत्र पुरोडाशो बहूनां कर्मणां साधारणः। तत्र संदेहः। किं प्रतिकर्म स्विष्टकृदिडं कर्तव्यं, सकृदेव वेति। किं प्राप्तम्। चोदनानुग्रहात्प्रतिकर्म कर्तव्यम्। एकस्मिन्नपि द्रव्ये बहुत्वात्कर्मणाम् ॥ १६ ॥ क० पूर्व० ॥

त० वा०—इदानीं सत्सु शेषकार्येषु तद्विशेषाश्चिन्त्यन्ते। तत्र सर्वपृष्ठायामन्योन्यनिरपेक्षचतुर्थ्यन्तपरिकल्पितैः षड्भिर्गुणैर्भिन्नद्रव्यदेवतासंयोगैर्देवतान्तरावरुद्धयागे देवतान्तरासंभवाद्गुणेन भेदकेन षट् कर्माणि। तेषु केषांचिद्भिन्नान्येव हवींषि। अन्येषां पुनरेक एव रथचक्रमात्रः पुरोडाश आम्नातः। स यदाऽङ्गीक्रियते तदा विचारः, किं कर्मभेदाच्छेषकार्याणां भेद उत द्रव्यैकत्वात्तन्त्रमिति। ननु चैकादशविचारोऽयं तत्र निर्णेष्यते 'एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम्' इत्यत्र। अत इह न विचारणीयम्। उच्यते।

प्रतिपाद्यमिदं द्रव्यं भेदेन सहते क्रियाम्।
खण्डशश्च प्रधानानामङ्गत्वान्नास्ति तन्त्रता ॥

यद्यप्ययमेकादशानुगुणो विचारस्तथाऽप्यत्र शेषकार्यप्रसङ्गाच्छेषशेषिविचारात्मकत्वाच्च क्रियते। तत्र चैकद्रव्यत्वात्तन्त्रत्वं सिध्यति यत्र द्रव्यं तदवस्थितमेव सर्वकर्मणामुपकरोति। भेदकरणे च प्रयोजनान्तरं न दृश्यते न च कर्तुं शक्यते। खण्डशस्त्वस्य प्रधानोपयोगित्वं तदुपकारद्वारश्च संस्कारः प्रधानभेदाद्भेदं प्रतिपद्यमानो न द्रव्यैकत्वात्तन्त्रीकर्तुं शक्यते। भवति चैकदेशे प्रतिपादितेऽप्येकदेशान्तरप्रतिपादनम्। अवदानदेशानां भिन्नत्वादुत्तरार्धदक्षिणदेशभेदोऽप्यस्तीत्यावर्तनीयं स्विष्टकृदिडं गम्यते ॥ १६ ॥

भा० प्र०—श्रुति में कहा गया है "एकया सर्वपृष्ठया याजयेत्" इस वाक्य में 'सर्वपृष्ठा' नाम की इष्टि का विधान किया जाता है। इस सर्वपृष्ठा इष्टि के उद्देश्य से "इन्द्राय राथन्तराय, इन्द्राय आवर्हताय, इन्द्राय वैरूपाय, इन्द्राय वैराजाय, इन्द्राय शाक्वराय, इन्द्राय रैवताय" राथन्तर इन्द्र के लिए, वार्हत इन्द्र के लिए, वैरूप इन्द्र के लिए, वैराज इन्द्र के लिए, शाक्वर इन्द्र के लिए, रैवत इन्द्र के लिए निर्वाप करता है। इस वाक्य में द्रव्य एवं देवता के गुण का विधान होने से इस स्थल में पृथक्-पृथक् छः गुण रहने से गुण भेद, कर्म भेद होता है, छः विभिन्न कर्म होते हैं, किन्तु, इस स्थल में इन छः कर्मों के उद्देश्य से "द्वादशकपालो पुरोडाशो भवति" इत्यादि वाक्य से द्वादश कपाल में संस्कृत एक पुरोडाश विहित होता है। एक पुरोडाश ही पृथक्-पृथक् स्थल में काटकर छः बार छः याग करना होगा अर्थात् देवता के उद्देश्य से देना होगा, इन छः कर्मों में क्या छः बार स्विष्टकृत् होम एवं छः बार इडा भक्षण करना होगा, अथवा एक पुरोडाश कहकर एक ही बार स्विष्टकृत् होम आदि कर्तव्य होगा यही संशय है।

इसमें पूर्वपक्षी का कहना "प्रतिकर्म क्रियेरन्" प्रत्येक कर्म के अनुसार पृथक्-पृथक् रूप से स्विष्टकृत् होम एवं इडा भक्षण करना होगा, "द्रव्यैकत्वे कर्मभेदात्" इस स्थल में द्रव्य एक अर्थात् अभिन्न होने पर भी कर्म विभिन्न होता है, क्योंकि, प्रत्येक कर्म में ही प्रतिपत्ति रूप में स्विष्टकृत् होम आदि कर्म करना होता है, अत एव "सर्वपृष्ठ" याग में छः बार शेषकार्य होगा।

"द्रव्यैकत्वे" = पुरोडाश द्रव्य का एकत्व अर्थात् अभिन्नता होने पर भी, "प्रतिकर्म क्रियेरन्" = प्रत्येक प्रधान कर्म के अनुसार स्विष्टकृत् अवदान आदि शेषकार्य करना होगा, "कर्म भेदात्" = क्योंकि, ऐसे स्थल में प्रत्येक कर्म भिन्न-भिन्न होता है ॥ १६ ॥ पूर्वपक्ष।

**अविभागाच्च शेषस्य सर्वान्प्रत्यविशिष्टत्वात् ॥ १७ ॥ सि०**

**शा० भा०—सकृदेव कर्तव्यमिति ब्रूमः। अविभागाच्छेषस्य। नात्र विभागः सर्वेषां कर्मणां पुरोडाशस्य। उत्तरार्धात्स्विष्टकृदवदातव्यम्। एकश्चासावुत्तरार्धः, ततोऽवदीयमाने न गम्यते विशेषः। कस्यावत्तं, कस्य नेति। एवमिडायामपि। तस्मात्सकृदवदातव्यमिति ॥ १७ ॥ क० सिद्धान्तः ॥ सर्वपृष्ठेष्टौस्विष्टकृदिडादीनां सकृदनुष्ठानाधिकरणम् ॥ ४ ॥**

त० वा०—सकृत्करणम्। कुतः।

न ह्येष कर्मसंस्कारो हूयमानस्य वेष्यते।
हुतशेषसमानत्वात्तन्त्रत्वं तु प्रतीयते ॥

कर्मसंस्कारपक्षे हूयमानसंस्कारपक्षे वा तद्भेदाद्भेदो भवेत्। शेषसंस्कारस्त्वयम्। स च शेषः साधारणतः। तस्य च दक्षिणोत्तरार्धे गृह्येते। न प्रधानव-

दानदेशः। तस्य प्रकृतावचोदितत्वात्। ततश्च शक्यमगृह्यमाणविशेषत्वं वक्तुम्। यद्यपि ह्येकप्रधानोद्देशेनोत्तरार्धं गृह्णीयुस्तथापि तथा चोदितार्थसंपत्त्या प्रधानान्तराण्यपि कृतार्थानि भवेयुः। तस्मात्तन्त्रम्। यत्तु प्रतिपाद्यं विभवतीति, प्रतिपत्त्यन्तरे चतुर्धाकरणे तदुपयुज्यते ॥ १७ ॥

( इति सर्वपृष्ठायां शेषकार्यतन्त्राधिकरणम् ) ॥ ४ ॥

भा० प्र०—पूर्व कथित पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि इस स्थल में एक बार ही शेषकार्य कर्तव्य है, वह छह बार अनुष्ठेय नहीं है, कारण, पुरोडाश रूप हवि का उत्तरार्द्ध स्विष्टकृत् होम, इडा प्राशित्र, आदि शेषकार्यों के लिए रख देना होगा और पूर्वार्द्धि से ही पृथक्-आहुति देनी होगी, अतः, यह उत्तरार्द्धका जो अवदान है अर्थात् खण्ड द्रव्य है उनमें कोई विशेषत्व नहीं होने से उससे जो कार्य होगा, उसकी भी भिन्नता नहीं हो सकती है, अतः एक बार ही तन्त्रता रूप में अर्थात् अनेक के उद्देश्य से एक बार ही शेष कार्य अनुष्ठेय होगा, उसी से सभी का शेष कार्य हो जायेगा, इसी लिए न्यायमालाकार ने कहा है—

'शेषस्य सर्वतुल्यत्वात् तत्कार्यं सकृदिष्यताम्"

अर्थात् इस स्थल में शेष सभी पक्ष में साधारण होने से वे शेषकार्य एक बार ही होगा।

"शेषस्य अविभागात् च" = शेष अंश में अविभक्त अर्थात् अभिन्न होने से "सर्वान् प्रति अविशिष्टत्वात्" = वह जब सभी याग के प्रति अविशिष्ट है तब पृथक्-पृथक् शेष कार्य नहीं होगा ॥ १७ ॥

चतुर्थ सर्वपृष्ठा दृष्टि में शेषकार्य का तन्त्रताधिकरण।

## (५) ऐन्द्रवायवे तु वचनात्प्रतिकर्म भक्षः स्यात् ॥ १८ ॥ सि०

**शा० भा०—अस्ति ज्योतिष्टोमः। ज्योतिष्टोमेन स्वर्गकामो यजेत, इति। तत्रैन्द्रवायवे ग्रहे संदेहे किं सकृद्भक्षणमुत द्विरिति। सोमसंस्कारार्थत्वात्सकृदिति प्राप्ते ब्रूमः। ऐन्द्रवायवे द्विर्भक्षयितव्यमिति। कुतः। वचनात्। वचनमिदं भवति, द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य वषट्करोति, इति। नास्ति वचनस्यातिभारः ॥ १८ ॥ का० ॥ ऐन्द्रवायवग्रहेद्विःशेषभक्षणाधिकरणम् ॥ ५ ॥**

त० वा०—'सोमेऽवचनाद्भक्षो न विद्यते' इति सामान्येन भक्षविचारं कृत्वा विशेषविचारोऽयं कर्तव्य आसीत्। यत्तु प्रथमतरं क्रियते तत्पूर्वाधिकरणपवादत्वेन शीघ्रतरोपस्थानात्। पूर्ववद्धि द्रव्यैकत्वात्सकृद्भक्षिते कृतः शास्त्रार्थं इति न्यायात्प्राप्ते, वचनादद्विर्भक्षणं 'द्विरैन्द्रवायवस्य भक्षयति' इति। भवन्ति चेदृशान्यव्यधिकरणानि येषां न्यायेन पूर्वपक्षं कृत्वा वचनेन सिद्धान्तो भवति। न

त्वेतद्युक्तम् । संदेहाभावात् । तत्र वैतत्क्रियेत यत्र न्यायेन प्रतिपादितो वचनाद्बाधितः तदभावात्समानन्यायेषूपकरिष्यति । स चेह न्यायः पूर्वाधिकरणेनैव प्रदर्शितः इति मन्दफलो विचारः । तस्मान्नैवं वर्णनीयम् । किं तर्हि । सर्वपृष्ठायामेव प्रतिकर्म स्विष्टकृदिदं कर्तव्यं प्रधानभेदात् । तथा हि । सिद्धवत्प्रधानभेदमैन्द्रवायवसंस्कारहेतुमाह 'द्विरैन्द्रवायवस्य भक्षयति । द्विर्हेतस्य वषट्करोति' इति । तस्माद्यावद्वषट्कारं शेषसंस्कार इत्युक्तोत्तरे दत्ते दृष्टान्तमनुभाष्यसूत्रेण परिहारो वक्तव्यः । ऐन्द्रवायवे तु सकृद्भक्षणे प्राप्ते वचनाद्द्विर्भक्षो न प्रधानभेदनिमित्तः । हेत्वधिकरणे हेतोर्निराकृतत्वात् । एवं च सति पूर्वाधिकरणशेषेणैव सता सोमभक्षसामान्यविचारस्मरणान्न क्रमकोपो भविष्यतीति ॥ १८ ॥

( इति एन्द्रवायवस्य भक्षणतन्त्रत्वाभावाधिकरणम् ) ॥ ५ ॥

भा० प्र०—ज्योतिष्टोम यज्ञ में ऐन्द्रवायव ग्रह के होम के बाद जो सोम शेष ( अवशिष्ट ) रहता है, वह पृथक्-पृथक् है, अतः, पूर्वाधिकरण के समान एक ही बार भक्षण कर शेष कार्य करना होगा, इस प्रकार पूर्वपक्ष करने पर सिद्धान्ती का कहना है कि "ऐन्द्रवायवे तु प्रतिकर्म भक्षः स्यात्" = ऐन्द्रवायवग्रह की बेला में, जितने कर्म जितनी बार करना होता है उतनी बार शेष भक्षण करना होगा, कारण' "वचनात्" ऐन्द्रवायव ग्रह के शेष भक्षण से सम्बन्ध में "द्विः ऐन्द्रवायवस्य भक्षयति" अर्थात् "ऐन्द्रवायव ग्रह के शेष का दो बार भक्षण करना होगा" इस प्रकार का वचन है ।

"ऐन्द्रवायवे तु" = ऐन्द्रवायव ग्रह की बेला में तु शब्द किन्तु अर्थ में अधिकरणान्तर ग्रह का सूचक है, "वचनात्" श्रुतिवचन होने से "प्रतिकर्म" = प्रत्येक कर्म में, भक्षः स्यात्" = शेष भक्षण होगा ॥ १८ ॥ सिद्धान्त ।

इति चतुर्थ ऐन्द्रवायव के भक्षण का अतन्त्राधिकरण ।

## (६) सोमेऽवचनाद्भक्षो न विद्यते ॥ १९ ॥ पू०

शा० भा०—ज्योतिष्टोमे समामनन्ति सोमान् । तेषु सन्देहः । तेषां शेषो भक्षयितव्य उत नेति । किं प्राप्तम् । सोमे भक्षो न विद्यते कस्मात् । अवचनात् । न शक्यमसति वचनेऽध्यवसातुं भक्षणम् तस्मात्सोमशेषो न भक्षयितव्य इति ॥ १९ ॥ क० पूर्व० ॥

त० वा०—ऐन्द्रवायवे तावद्द्विशिष्टविधानादपि भक्षो भवेत् । अथेतरग्रहगते चमसस्थे च सोमे संदेहः । किं भक्षोऽस्ति नेति । तत्रापि 'सर्वतः परिहारमाश्विनं भक्षयति' इत्यादिष्वैन्द्रवायवन्याय एव स्यात् । इदं तु सर्वथा तत्रापि विचार्यते किं प्राप्ते भक्षे विशेषणमात्रं वचनेन विधीयत उत विशिष्टविधानमेतदिति । कश्चात्र विशेषः । स यदि वाचनिकस्ततो यावद्वचनमेव कर्तव्योऽथ त्वभतः

कुतश्चित्तत एकदेशस्यापि लिङ्गं स्थालीपुलाकन्यायेन समस्तद्योतकं भविष्यति त्रयश्चेह पक्षाः संभवन्ति। किमन्यार्थदर्शनानां प्राप्त्यापेक्षत्वादविधानाच्च नैव भक्ष उत प्राप्त्यभावादन्यार्थदर्शनान्येव वचनीकृत्य यावद्वचनं भक्ष उत समाख्या-वषट्कारहोमाथवचननिमित्तोऽपि भक्ष इति। किं प्राप्तम्। आज्यसाकंप्रस्थायीय-सौत्रामणीग्रहणवत्समस्तहोमसंयोगाच्छेष एव नास्ति। कुतः पुनर्भक्ष इति। न चात्र प्रकृतितः प्राप्तिर्न प्रत्यक्षोपदेशः। योऽप्युपदेश इव सोऽप्यन्यपरत्वादसमर्थः तस्मान्नास्ति भक्ष इति ॥ १९ ॥

भा० प्र०—ज्योतिष्टोम यज्ञ में ग्रह नाम के पात्र में करके जो सोम आहुति दी जाती है, उसका शेष भक्षण होगा कि नहीं—यह संशय है। इसमें पूर्वपक्षी का कहना है कि "सोमे भक्षो न विद्यते" सोम में शेष भक्षण नहीं होता है, कारण, "अवचनात्" =शेष भक्षण का कोई भी वचन नहीं है। "यद्ग्रहान् जुहोति" इस श्रुतिवाक्य में ग्रह होम करने की विधि है। ग्रह पात्र में करके सोम होम करने पर उवका अवशेष रखने के विषय में प्रमाणाभाव होने से सम्पूर्ण का होन करना होगा। अतः, शेष न रहने से एवं पृथक् वचन भी न होने से शेष भक्षण नहीं होगा।

"सोमे" = ज्योतिष्टोम में सोम में, "भक्षः न विद्यते" = शेष भक्षण नहीं है, "अवचनात्" = क्योंकि भक्षण का वचन नहीं है ॥ १९ ॥ पूर्वपक्ष।

## स्याद्वाऽन्यार्थदर्शनात् ॥ २० ॥ सि० ॥

**शा० भा०—भवेद्वा भक्षः। अन्यार्थं हि वचनं भक्षं दर्शयति। सर्वतः परि-हारमाश्विनं भक्षयति। भक्षिताप्यायितांश्चमसान् दक्षिणस्यानसोऽवलम्बे साद-यन्ति, इति। नासति भक्षण एवंजातीयका भक्षविशेषाः संभवन्ति ॥ २० ॥ क० सि० ॥**

भा० प्र०—सिद्धान्ती ने कहा है कि "स्याद् वा" सोम में शेष भक्षण होगा, कारण, "अन्यार्थदर्शनात्" = अन्यार्थ दर्शन होता है। अन्य अर्थ के प्रकाशक वाक्य का सामर्थ्य में जिस स्थल में प्रतिपाद्य विषय विज्ञापित होता है, उसी का सूत्र में अन्यार्थ दर्शन कहा जाता है। श्रुति में कहा गया है कि "सर्वतः परिहारम् आश्विनं भक्षयति" इत्यादि, अर्थात् आश्विन नाम के ग्रह के चारों ओर घुमाकर भक्षण करे। इस स्थल में भक्षण का अनुवाद कर आश्विन नाम के ग्रह को घुमाने के लिए विधि है, किन्तु यदि विधि न रहे तो उसका अनुवाद किया जाय।

"स्यात्" = हो, अर्थात् सोम में शेष भक्षण होगा, "वा" = पूर्वपक्ष का निरासक अन्यार्थदर्शनात्" = क्योंकि अन्यार्थ दर्शन है ॥ २० ॥ इति सिद्धान्त।

## वचनानि त्वपूर्वत्वात्तस्माद्यथोपदेशं स्युः ॥ २१ ॥

शा० भा०—ननु दर्शनमिदं, प्राप्तिर्वक्तव्या । उच्यते । वचनानि तर्हि भविष्यन्ति । सर्वतः परिहारमाश्विनं भक्षयति । तस्मात्सर्वा दिशः शृणोति इति विशिष्टं भक्षणं विधीयते । अपूर्वत्वाद्भक्षानुवादो नावकल्पते । अपि चैवमपूर्वमर्थं विदधतोऽर्थवत्ता भविष्यति । तस्माद्यत्रैव विशिष्टं भक्षणं श्रूयते तत्रैव भवति नातिप्रसज्यते ॥ २१ ॥ कु० आ० नि० सोमशेषभक्षणाधिकरणम् ॥ ६ ॥

यद्यन्यार्थदर्शनानि भवेयुस्ततोऽन्यत्रापि प्राप्तिः स्याद्वचनानि त्वेतानि । तस्माद्यथोपदेशं भक्षोऽयं नान्यत्रेति ॥ २० ॥ २१ ॥

( इति सोमे भक्षप्रतिपादनाधिकरणम् ) ॥ ६ ॥

भा० प्र०—यदि इस प्रसङ्ग में आपत्ति का उत्थापन कर कहे कि "सर्वतः परिहारम् आश्विनं भक्षयन्ति" इत्यादि क्या सोमभक्षण का सूचक माना है, किन्तु विधि नहीं है, यदि विधिवाक्य रहता तो सोमभक्षण स्वीकार करना होगा, अन्यथा नहीं। ऐसी स्थिति में इसके उत्तर में सिद्धान्ती का कहना है कि "वचनानि तु"—"आश्विनं भक्षयन्ति" "द्विरेन्द्रवायवं भक्षयन्ति", "सदसि भक्षयन्ति" इत्यादि वाक्यों को वचन ही कहेंगे, अर्थात् ये सब सोमभक्षण के विधिवाक्य हैं।

यदि कहा जाय कि इसमें यथाक्रम में भ्रमण और भक्षण, द्वित्व और भक्षण एवं सदःस्थितित्व और भक्षण इस रूप में अनेय विषयों में विधि स्वीकार करना पड़ेगा, अतः, वाक्यभेद होगा, ऐसी स्थिति में कहा जा सकता है कि "यथोपदेशं स्युः" जैसा उपदेश है उसी रूप में ही होगा। अर्थात् यथाक्रम में भ्रमणविशिष्ट भक्षण, द्वित्वविशिष्ट भक्षण, एवं सदःस्थितित्वविशिष्ट भक्षण विहित होगा।

यदि यह कहा जाय कि ऐसा होने पर भी वाक्यभेद होगा। इस आशङ्का के प्रसङ्ग में कहा जा सकता है कि ऐसा नहीं होगा, कारण, "अपूर्वत्वात्"— यह अप्राप्त की विधि होने से वाक्यभेद नहीं होगा। कारण, अप्राप्त स्थल में विशिष्ट विधि भी स्वीकार किया जाने से एवं विशिष्ट विधिस्थल में विशेषण आर्थिक भाव में ( अर्थापत्ति के बल से विहित होने से वाक्यभेद नहीं हो सकता है ), अतः, यह विशिष्टविधि होने से इन वचनों से ही सोम में शेष भक्षण प्रतिपादित होता है।

"वचनानि" = इस प्रकार अर्थसूचक वाक्य वचन अर्थात् विधिवाक्य, "तस्मात्" = क्योंकि, ये विधायक वाचक होने से "यथोपदेशं स्युः" = जैसे उपदेश अर्थात् विधि है, वैसा ही होगा, अर्थात् विशिष्ट विधि होगा, "अपूर्वत्वात्" = क्योंकि यह अपूर्व अर्थात् अन्य वचन से यह अप्राप्त है ॥ २१ ॥

इति षष्ठ सोम में भक्षप्रतिपादनाधिकरण।

**(७) चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् ॥ २२ ॥ सि०**

शा० भा०—ज्योतिष्टोमे, एव श्रूयते, प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्र यन्तु सदस्यानाम्, इति । तत्र संदेहः । किं चमसिनामस्ति भक्षो नेति । किं प्राप्तम् । नेति ब्रूमः भक्षो नातिप्रसज्यत इत्युक्तम् । एवं प्राप्ते ब्रूमः । चमसेष्वस्ति भक्ष इति । कुतः । समाख्यानात् । होतुश्चमसो ब्रह्मणश्चमस उद्गातुश्चमस इति समाख्यया निर्दिश्यते । होता यत्र चमति चमिष्यति, अचमीद्वा स होतुश्चमसः । यद्यत्र होता न चमेन्न होतुश्चमसो भवेत् । तस्माच्चमतीति । आह । काऽस्य लिङ्गस्य प्राप्तिरिति । सामर्थ्यमिति ब्रूमः । होतुश्चमसेन प्रैतव्यम् । यदि चात्र होता न चमेन्न शक्यं भवेद्धोतुश्चमसेन प्रैतुम् । न चात्रान्यद्धोता, ओदनादि चमिष्यति । सोमचमसः इति हि तं समाचक्षते । अपि च न तद्धोतुर्द्रव्यं यजमानस्य तद्द्रव्यम् । होतुस्तत्र चमनं कर्तव्यम् । सोमे च भक्ष्यमाणे तेन होमोऽवकल्पते । पवित्रं हि सोमो, न तस्मिन् भक्षिते पात्रं व्यापद्यते । तत्र चमसेन शक्यते होतुम् । वचनप्रामाण्यादुच्छिष्टेन होष्यतीति चेत् । नैतदेवम् । असति अवकाशे वचनं बाधकं भवति । अस्ति चावकाशः सोमभक्षणम् । तस्माच्चमसिभिर्भक्षयितव्यः सोमः इति । अथ तक्षणादीन्याश्रीयेरन् । तथा संबन्धापह्नवादतच्चमसतैव स्यात्, द्रव्यान्तरं स्यात् । तस्माच्चाब्रह्मणस्य सोमं प्रतिषेधति । स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत्, न्यग्रोधस्ति भीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्, इति भक्ष निवृत्ति दर्शयति । सैषा भक्षाशङ्कैवं सत्युपपद्यते यदि चमसिनोऽस्ति भक्षः । तस्मादस्तीति मन्यामहे ॥२२॥ क० चमसिनां शेषभक्षाधिकरणम् ॥१७॥

त० वा०—गृह्णीम एतद्यथोपदेशमिति । स तु समाख्यादिभेदभिन्न उपदेशोऽनुसर्तव्यः न तु श्रुतिविशेषमात्रनिष्ठः । तत्र चमसेषु तावद् यद्यपि ब्राह्मणगतः प्रत्यक्षोपदेशो नोपलभ्यते तथाऽपि प्रैषगतया समाख्ययाऽनुमीयते । होतृचमसत्वादिविशिष्टं हि द्रव्यनयनप्रेषणं न कथंचिदुपपद्यते यदि तेषु होत्रादयः सोमं न चमन्ति । कथम् । चमस इति, आदनार्थस्य चमेरौणादिकेऽधिकरणसाधनेऽसन्प्रत्यये कृते प्रैषवेलायां भूतभविष्यद्वर्तमानानां कचित्संबन्धेऽपेक्ष्यमाणे भूतवर्तमानयोरदर्शनाद्भविष्यत्त्वमनुमीयते । न ह्यन्यथा होतुश्चमसः प्रैत्वित्येतस्यानुष्ठानं शक्यते । तस्माच्चमितव्यं होत्रादिभिः । सोमशेषवन्तश्चमसाः प्रेषिता इति तस्यैवापेक्षितप्रतिपत्तिविशेषस्य प्रत्यासत्तेर्भक्ष्यत्वं गम्यते । सशेषश्चमसो हूयते 'अल्पं जुहोति' इति वचनात् । न चान्यादोदनादिद्रव्यं प्रतीयते, यस्य चमनाच्चमसत्वमुपपद्यते । न च तच्चमनस्य कर्माङ्गभावः स्यात् । तत्र प्रकरणं बाध्येत् । प्रैषोऽपि चोत्कृष्येत । सोमचमसमाख्यां च बाध्येत । यदि चौदनादि भक्ष्येत

तत् उच्छिष्टेन पात्रेण पुनर्होमो न क्रियेत। शुद्धयर्थं तत्र तक्षणाद्याश्रयणे यस्य होतचमसत्वाद्यवधारितं तस्य विनाशाद्द्रव्यानन्तरं तत्समाख्यं न भवतीति समाख्यातद्रव्यसाधनकहोमविधानबाधः स्यात्। एतेन चमसान्तरोपादानं प्रत्युक्तम्। तदुत्पादने च श्रुतचमससंख्यातिक्रमः स्यात्। न च वचनसामर्थ्या-दुच्छिष्टेन होतुं शक्यम्। वचनस्यान्तरेणाप्याचारभङ्गं सोमभक्षे सावकाशत्वात् सोमभक्षेऽपि सर्वमेतत्तुल्यमिति चेत्। नैवदेवं 'न सोमेनोच्छिष्टा भवन्ति' इति श्रुतेः। तस्माच्चमसिभिर्भक्षयितव्यः सोम इति। भाष्यमप्यनेनैव क्रमेण नेतव्यं न यथालिखितम्। उपपत्यन्तराणामुपपत्त्यन्तरव्यवधानेन क्लिष्टत्वात्। तस्माद्ब्रा-ब्राह्मणस्य सोमभक्षणं प्रतिषेधति। यदि च 'प्र यजमानस्य' इति समाख्या न सोमभक्षः प्राप्यते ततः फलचमसविधौ 'स यदि सोमं विभक्षयिषेत्, इति न सोमम्' इति च प्रतिषेधनसंकीर्तनं नावकल्पेत। तस्मादस्ति चमसिनां सोमभक्ष इति ॥ २२ ॥

( इति चमसिनां सोमभक्षप्रातिपादनाधिकरणम् ) ॥ ७ ॥

भा० प्र०—ज्योतिष्टोमहोतृचमस इत्यादि नाम से दश चमस हैं। "प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्रजयमानस्य प्र यन्तु सदस्यानाम्" ( कात्यायनश्रौत सूत्र ६।११।३ ) इत्यादि श्रुतिवाक्य में उपदिष्ट हुआ है। इस दश चमस में करके जो सोम की आहुति देते हैं, वे चमसी हैं। इन चमसियों के लिए हुतशेष के भक्षण की व्यवस्था है या नहीं—यही संशय है। इसमें पूर्वपक्षी का कहना है कि चमसियों के शेष भक्षण में कोई प्रमाण नहीं है, अतः, भक्षण कर्तव्य नहीं है। इस प्रकार पूर्वपक्ष होने पर सिद्धान्त में कहा गया है कि "चमसेषु" = चमस्थ हुतशेष सोम का भी भक्षण कर्तव्य है। यदि यह कहा जाय कि इसमें क्या प्रमाण है, तो इसके समाधान में कहा जा सकता है—"समाख्यानात् संयोगस्य तन्निमित्तत्वात्" = चमस शब्द की समाख्या अर्थात् यौगिक अर्थ से ही चमसियों का चमस में स्थित सोम का भक्षण प्राप्त होता है, कारण, "तन्यते तन्यते सोमः अस्मिन्" अर्थात् जिसमें सोम का भक्षण किया जाता है इस प्रकार का अर्थ मानने पर तक्षणार्थक 'चम' धातु से असच् प्रत्यय कर चमस् शब्द सिद्ध होता है और इस चमस के साथ जिसका संयोग अर्थात् सम्बन्ध है, वह चमसी है। इसलिए, चमसियों के लिए भी शेष भक्षण कर्तव्य है।

"चमसेषु" = चमस का भी भक्षण होता है, "समाख्मानाम्" = समाख्या अर्थात् यौगिक संज्ञा के अनुसार यह अवधारित होता है, "संयोगस्य तन्निमित्तत्वात्" = क्योंकि, संयोग अर्थात् सम्बन्ध उसका निमित्त अर्थात् चमसियों के सोमभक्षण का हेतु है। ॥ २२ ॥

इति सप्तम चमसियों का सोमभक्षण प्रतिपादनाजिकरण।

## (८) उद्गातृचमसमेकः श्रुतिसंयोगात् ॥ २३ ॥ पू०

शा० भा०—अस्ति ज्योतिष्टोमः ज्योतिष्टोमेन स्वर्गकामो यजेत, इति। तत्रास्ति, प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणाम्, इति। तत्रास्ति समाख्यानाद्भक्ष इत्युक्तम्। तत्र संदेहः। किमेक एवैनं चमसमुद्गाता भक्षयेदुत सर्वे भक्षयेयुः। अथ सुब्रह्मण्यवर्जिताश्छन्दोगा भक्षयेयुः, अथवा सह सुब्रह्मण्येनेति। किं तावत्प्राप्तम्। एको भक्षयेदुद्गातैव। कुतः। श्रुतिसंयोगात्। उद्गातैकः श्रुत्या संयुज्यते चमसेन, प्रोद्गातॄणामिति। ननु बहुवचनं श्रूयते, तेन बहवो भक्षयेयुः। उच्यते। श्रूयते बहुवचनं, तदुद्गातृप्रातिपदिकगतं, तद्विवक्षितं सदुद्गातृबहुत्वं ब्रूयात्। एकश्चोद्गाता, तत्र बहुत्वं श्रूयमाणमपि न शक्नुयादुद्गातृभेदं कर्तुम्। तस्मादविवक्षितं बहुवचनम्। अनुमानं ह्येतत्, बहूनां चमस इति कथम्। यद्बहुषु प्रातिपदिकं वर्तते, ततो बहुवचनं भवति। बहुवचनं तु ततो दृश्यते, प्रोद्गातॄणामिति। तस्मान्नूनं बहूनां चमस इत्यनुमानम्। प्रत्यक्षं त्वेक उद्गाता, न द्वितीयो न तृतीयः। अनुमानाच्च प्रत्यक्ष कारणं बलवद्भवेत्। तस्मादेकस्य चमसः, स चोद्गातुरिति ॥ २३ ॥

त० वा०—वषट्कारहोमाभिषवभक्षाननुवर्त्त्यैव प्रसङ्गात्समाख्याभक्षविशेषानुसरणमेव तावत्करोति। तस्मिन्नेव प्रैषे 'प्रोद्गातॄणाम्' इति श्रूयते। तत्र चतुर्धा संदेहः। किमेक एवोद्गाता भक्षयेदुत सर्वर्त्विज उत स्तोत्रकारिण आहोस्विच्चत्वारोऽपि छन्दोगा इति। केचित्तु द्वितीयचतुर्थयोः पक्षयोरेकत्वमिच्छन्ति सूत्रद्वयेऽपि सर्वशब्दप्रयोगात्, लक्षणायाश्च प्रत्यासत्तेः केवलछन्दोगविषयत्वात्। कुत संदेहः।

विसंवादः स्फुटो ह्यत्र प्रकृतिप्रत्ययार्थयोः।<br>
तत्र कस्यानुरोधेन कस्य वृत्तिर्भवेदिति ॥

तत्र पाशाधिकरणन्यायेन 'गुणत्वन्याय्यकल्पनैकदेशत्वात्' इति प्रातिपदिकार्थप्राधान्यात् 'उद्गातारं वृणीते' इति चोत्पत्तावेकत्वादेकस्मा एवोद्गात्रे चमसो दातव्यः श्रूयते। तस्मादेको भक्षयेत्। प्रातिपदिकार्थासंभविनो बहुवचनस्याविवक्षितत्वादिति पूर्वः पक्षः ॥ २३ ॥

भा० प्र०—ज्योतिष्टोम में "ज्योतिष्टोमेन स्वर्गकामो यजेत्" वहीं कहा गया है "प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणाम्" इस वाक्य में चमस का उपदेश है। चमसियों के लिए जो सोम का भक्षण कर्तव्य है, यह भी प्रतिपादित है। उक्त वाक्य में "प्र उद्गातॄणाम्" इस अंश में उद्गाता का भी चमस का भक्षणविहित होता है। उद्गाताओं का उद्गाता, प्रस्तोता, प्रतिहर्ता और सुब्रह्मण्य नाम से चार ऋत्विक् हैं। उक्त वाक्य में जो उद्गाता का चमस भक्षण कहा गया है, उनमें केवल उद्गाता को ही

क्या अकेले चमसस्थ सोम का भक्षण कहा गया है, अथवा सभी को अर्थात् सोलह ऋत्विक् ही सोमभक्षण करते हैं या सुब्रह्मण्य नाम के ऋत्विक् को छोड़कर उद्गाता आदि तीन लोग ही सोम का भक्षण करेंगे—यही संशय है। संशय का कारण यह है कि केवल उद्गाता इस एक का ही नाम है और वचन में "उद्गातॄणाम्" इस स्थल में बहुवचन का प्रयोग है।

इसके उत्तर में पूर्वपक्षी ने कहा कि 'उद्गातृचमस एकः' उद्गातृचमस एक ही केवल उद्गाता ही भक्षण करेगा, कारण, "श्रुतियोगात्" इसमें श्रौत अर्थ अर्थात् शक्यार्थ सम्बन्ध अनुसरण किया है, क्योंकि, "प्रोद्गातृणाम्" इस श्रुति में केवल उद्गाता को ही कहा गया है और उद्गाता कहने से सामगाताओं में एक विशेष व्यक्ति की ही अवगति होती है। इस स्थल में जो बहुवचन विभक्ति का प्रयोग किया गया है, यह बहुवचन अविवक्षित है। कारण, प्रातिपदिक का अर्थ और उसके आगे विहित बहुवचन के अर्थ का विरोध होने पर प्रातिपदिकार्थ ही प्रवल है।

"उद्गातृचमस', = उद्गातृचमस, 'एकः' =एक व्यक्ति अर्थात् केवल उद्गाता ही भक्षण करेगा, "श्रुतिसंयोगात्" = क्योंकि, ऐसे होने श्रुतिसंयोग अर्थात् शक्यार्थ सम्बन्ध रक्षित होता है। अथवा श्रुतिवाक्य में केवल उद्गाता का ही उल्लेख है ॥ २३ ॥

इति प्रथमपूर्वपक्ष।

## सर्वे वा सर्वसंयोगात् ॥ २४ ॥

**शा० भा०—सर्वे वा भक्षयेयुः। एकस्मिन्नुद्गातरि भक्षयति बहुवचनं प्रमादादधीतमिति गम्यते। न हि तदनूद्यते, न विधीयत इति। ननु सर्वेष्वपि भक्षयत्सूद्गातृशब्दः प्रमादो गम्यते। उच्यते। लक्षणार्थोऽपि तावत्संभविष्यति, उद्गातृप्रभृतय इति ॥ २४ ॥**

**त० वा०—न युक्तोऽत्यन्तं बहुत्वत्यागः। पाशमन्त्रस्य प्रकरणे बहुत्वं न कथंचित्प्रकारेणास्तीत्यविवक्षा युक्ता। अत्र पुनर्लक्षणायामुपपद्यमानायां नाविवक्षोपपद्यते। तस्मात्सर्वर्त्विजामेष चमसः। अथवाऽवान्तरसंबन्धात्सर्वच्छन्दोगग्रहणमिति व्याख्येयम् ॥ २४ ॥**

भा० प्र०—पूर्व में जो पूर्वपक्ष की स्थापना की गई है कि केवल उद्गाता ही भक्षण करेगा, इसका परिहार अन्य पूर्वपक्षी के द्वारा किया जा रहा है—"सर्वे वा" इस स्थान में जितने ऋत्विक् हैं वे सभी अर्थात् सोलह ऋत्विक् ही उद्गातृ चमसकाभक्षण करेंगे, कारण, "सर्वसंयोगात्" उक्त वचन में बहुवचन का प्रयोग होने से चमस के साथ सभी का सम्बन्ध अवगत होता है। क्योंकि, ऐसा न मानने पर "प्रोद्गातृणाम्" इस स्थल का बहुवचन प्रमादपठित मानना होगा, कारण, यह अनुवाद भी नहीं है, अतः,

इसको अनर्थक ही मानना पड़ेगा, इसलिए, सभी ऋत्विक् का अर्थात् सोलह व्यक्ति का उद्गातृ-भक्षण स्वीकार्य है। इस पक्ष में उद्गातृ शब्द अन्य ऋत्विक् का उपलक्षण है।

"सर्वे" = सभी ऋत्विक्, "वा" = पक्षपरिवर्तन का सूचक है, "सर्वसंयोगात्" = क्योंकि, ऋत्विजों के साथ सम्बन्धबोधक बहुवचन का प्रयोग है ॥ २४ ॥

**स्तोत्रकारिणां वा तत्संयोगाद्बहुश्रुतेः ॥ २५ ॥**

शा० भा०—उच्यते। नैतदस्ति, बहूनां चमस इति। कुतः। उद्गातृशब्दस्य चमसेन संबन्धः प्रत्यक्षेण वाक्येन। बहुवचनस्य पुनरुद्गातृशब्देन श्रुत्या संबन्धः। अन्येन ऋत्विजा तु बहुवचनस्य नैव कश्चिदस्ति संबन्धः। तस्माद्बहूनां चमस इत्यनुपपन्नमिति। अत्रोच्यते। शक्नोत्ययमुद्गातृशब्दो बहुत्वं वदितुं क्रियायोगेन, उद्गायन्ति, इत्युद्गतारः। के ते, प्रस्तोता, उद्गाता, प्रतिहर्ता, इति। तदेतेन बहुवचननिर्देशेनाऽऽनुमानिकक्रियायोगनिमित्त उद्गातृशब्दो विवक्षित इत्यवगमिष्यामः। बहुवचनं ह्येवमकल्पं भविष्यति, उद्गातृशब्दश्च। तस्मात्स्तोत्रकारिणां चमस इति ॥ २५ ॥ क० पूर्वपक्षः ॥

त० वा०—यस्माद्बहुवचनस्योद्गातृव्यतिरिक्तैः सह प्रातिपदिकेनोपात्तत्वासंबन्धो नावकल्पते। न च निर्निमित्ता लक्षणाऽवकल्पते। न च लक्षणया विनाऽऽनर्थक्यम्। अवयवप्रसिद्धया स्तोत्रकारिषूपपद्यमानत्वात्। तस्माद्गीतिसंयोगात्त्रयः स्तोत्रकारिणो भक्षयेयुः ॥ २५ ॥

भा० प्र०—उपन्य पूर्वपक्षी द्वितीय पूर्वपक्षी के मत का खण्डन कर कहा है कि "स्तोत्रकारिणां वा" स्तोत्र करने वाले ऋत्विजों को ही इस चमस का भक्षण करना होगा, अर्थात् उद्गाताओं में उद्गाता, प्रस्तोता, प्रतिहर्ता इन कतिपय व्यक्तियों को ही उद्गातृचमस का भक्षण करना होगा, कारण, "तत्संयोगात् प्रतिश्रुतेः" इस स्थल में "प्रोद्गातृणां" इस प्रयोग में जो बहुवचन विभक्ति का प्रयोग है, वह स्तोत्रकारी व्यक्ति के साथ ही सम्बन्धयुक्त है। जो ॐ अर्थात् उच्च स्वर में गान करते हैं, वह उद्गाता है, इस व्युत्पत्ति के अनुसार "उद्गातृणाम्" यह कहने से उद्गाता, प्रस्तोता, एवं प्रतिहर्ता इन तीनों की ही अवगति होती है, क्योंकि, ये तीन ही सदा ओमन्तप में अवस्थानकर गान करें, उद्गाताओं में सुब्रह्मण्य नाम का जो चतुर्थ व्यक्ति है, वह सदोमन्तप में नहीं रहता है, अतः, उसको उच्च स्वर में गान नहीं करना पड़ता है, इसलिए, उसके चमस-भक्षण का प्रसङ्ग ही नहीं है।

"स्तोत्रकारिणाम्" = जो स्तोत्र पाठ करता है, वे ही कतिपय व्यक्ति उद्गातृचमस का भक्षण करेंगे, "वा" = पूर्वपक्ष का निवर्तक है, "तत्संयोगात् बहुश्रुतेः" = क्योंकि, उक्त बहुवचनश्रुति स्तोत्रकारियों के साथ ही सम्बन्धयुक्त है ॥ २५ ॥

इति तृतीय पूर्वपक्ष।

सर्वे तु वेदसंयोगात्कारणादेकदेशे स्यात् ॥ २६ ॥ सि०

शा० भा०—सर्वे छन्दोगाः सहसुब्रह्मण्या भक्षयेयुः। किमिति। गानसंयोगादिति नायं पक्ष उपपद्यते। कथम्। एकस्तत्रोद्गानेन संबद्धः, इतरो गानेन। अन्यद्धि गानमन्यदुद्गानम्। गीतिमात्रे गानं लौकिकं वैदिकं च। द्वितीयं साम्नः पर्व, उत्पूर्वस्य गायतेरभिधेयं प्रसिद्धम्। तत्रैक एवोद्गीथं करोतीत्येक एवोद्गाता, न बहवः। तस्माद्गानसंयोगाद्बहवो भविष्यन्तीत्येतदपि नोपपद्यते। कथं तर्हि। वेदसंयोगात्। औद्गात्रं नाम प्रवचनम्। तथा, औद्गात्राणि कर्माणि। औद्गात्रमिति प्रसिद्धम्। एवं चेद्वचनमौद्गात्रस्य कर्ता, उद्गातेति गम्यते यस्योद्गाता प्रसिद्धस्तद्विशिष्टं कर्मानाख्यातमप्यौद्गात्रमिति वदति। शब्दश्च यस्यौद्गात्रं प्रसिद्धं स तस्य कर्तारमुद्गातेति वदत्यनाख्यातमपि। यथा यस्योदमेघः प्रसिद्धः स तस्यानाख्यातमप्यपत्यमौदमेघिरिति ब्रूते। यस्यौदमेघिः, स तस्य पितरमनाख्यातमप्युदमेघं प्रतिपद्यते। एवमौद्गात्रसंबन्धादुपपद्यत उद्गातृशब्दः, प्रस्तोताऽपि उद्गाताऽपि प्रतिहर्ताऽपि सुब्रह्मण्योऽपि। एवं बहुवचनमुद्गातृशब्दश्चोभयमप्युपपन्नं भविष्यति। न चान्यः कश्चिद्दोषः। तस्मादौद्गात्रेण संबद्धाश्चत्वार उद्गातृचमसं भक्षयेयुरिति। यत्र कारणमस्ति तत्रापि सुब्रह्मण्या उद्गातारः। यथोद्गातृशब्दो विनिषद्योद्गातारः साम्ना स्तुवत इति स्तोत्रकारिषु। यथेदमपि वचनम्, उद्गातारो नापव्याहरेयुरुत्तमायामेषोत्तमा इत्यपसुब्रह्मण्यानामेव ॥ २६ ॥ क० सिद्धान्तः ॥ उद्गातॄणांसहसुब्रह्मण्येनभक्षाधिकरणम् ॥ ८ ॥

त० वा०—न तावत्समुदायप्रसिद्धौ संभवन्त्यामवयवप्रसिद्धिः प्रातिपादिकस्य युक्ता। न चावयवप्रसिद्धिरप्यत्र स्तोत्रकारिषु विद्यते। गातारो हि प्रस्तोतृप्रतिहर्तारौ नोद्गातारौ। तेन बहुवचनमुपपन्नमेव। द्वितीयं साम्नः पर्वोत्पूर्वस्य गायतेरभिधेयमिति—भक्तिरिति वक्तव्ये प्रमादात्पर्वशब्दः प्रयुक्तः। तस्मान्न वरणनिमित्ता उद्गाननिमित्ता वा बहवः उद्गातारः सम्भवन्तीति वेदसंयोगनिमित्ताः कल्प्यन्ते। छन्दोगप्रवचनं ह्यौद्गात्रशब्देनाभिधीयते। तत्प्रवचनस्थं कर्म। तत्संबन्धाच्च पुरुषः प्रवक्तृत्वेनानुष्ठातृत्वेन चौदमेधिन्यायेनोद्गातार इत्यनुमातुं शक्यते। ननु चैष न्यायोऽवेष्ट्यधिकरणे निराकृतः। तथा हि।

तदुद्गातृपदमौद्गात्रं प्रसूते तद्धिते कृते।
न त्वौद्गात्रपदादस्य व्युत्पत्तिरुपपद्यते ॥

स्मरन्ति हि, उद्गातुरिदमित्यण् प्रत्ययं न तु तस्य कर्तेति प्रत्ययलोपश्च। तस्मान्नौद्गात्रशब्दादेशोऽनुगन्तव्यः। तथा च वरणनिमित्तमिति वक्ष्यति। तेनायुक्तमिदं व्याख्यानमिति। उच्यते।

उद्गाता गौण एवात्र मुख्योद्गातुरसंभवात् ।
कल्पितोऽयं परावृत्त्या ब्राह्मणादिषु राजवत् ॥

यथैव तत्र 'योगाल्लोकः प्रयुङ्क्ते' इत्यारभ्यैवं व्याख्यातम् । प्रथमं जातिनिमित्तो राजा । ततस्तत्सम्बन्धात्पालनं राज्यं, ततस्तत्सम्बन्धात्पालनं राज्यं तत्संबन्धादपि ब्राह्मणादिषु स्थानापत्त्या वाऽनुमानेन वा राजशब्दस्तथैवात्रापि वरणादेक एवोद्गाता ततस्तत्संयोगात्कर्मप्रवचनयोरौद्गात्रशब्दस्तद्योगादपि स्तोत्रकारिषूद्गातृशब्दः । न च शब्दस्यानेकार्थत्वासंभवाद्गौणः । मुख्यासंभवाच्चेह गौणत्वाश्रयणं पूर्वमेवोक्तम् । केवलं तु निमित्तं नोक्तम् । भवेदिदानीं प्रवचनं संबन्धात्मकं कथितम् । तस्माद्विरोधस्तत्सर्वच्छन्दोगानामयं भक्ष इति । न त्वेतद्युक्तम् । भक्षणवेलायां हि ये व्याप्रियन्ते तत्संनिहिताश्च प्रैषकाले ते भक्षणेन संबध्यन्ते । न च सुब्रह्मण्यस्य तस्मिन्काले कश्चिद्व्यापारोऽतो नास्य सदस्यन्तर्वेद्यां वा संनिधानमस्ति येन भक्षेऽधिकृतः स्यात् । तत्र यथैव प्रवचनसंयोगे सत्यप्यन्येषामकर्मसंयुक्तानां छन्दोगानां भक्षो न भवति, एवं सुब्रह्मण्यस्यापीति मन्यामहे । कपिञ्जलवच्च त्रिष्वेव बहुत्वश्रुतिरवस्थास्यते । न च भक्षः कर्तृसंस्कारो येन यद्वर्जनभयात्सर्वत्रावधार्यते । द्रव्यसंस्कारोऽयमिति तत्र तत्र स्थापयिष्यामः । तस्मादुपपत्त्यन्तरं तुशब्देन व्यावर्त्य स्तोत्रकारिपक्षपरिग्रह एवायमिति समर्थनीयम् । एतदुक्तं भवति । सर्वे त्वनेन शब्देनाभिधीयन्ते न स्तोत्रकारिण एव केवलास्तथाऽपि तु यथोक्तात्कारणादेकदेशे सुब्रह्मण्यवर्जं प्रवर्तते यथा 'विनिषद्योद्गातारः साम्ना स्तवन्ति इत्यत्र । अथवा सर्वे त्वित्यवान्तरपूर्वपक्षं परिगृह्य 'कारणादेकदेशे स्यात्' इति सूत्रान्तरं स्तोत्रकारिपक्षे नियोक्तव्यम् ॥ २६ ॥

( इति उद्गातृचमसे ससुब्रह्मण्यानां भक्षप्रतिपादनाधिकरणम् ॥ ८ ॥ )

भा० प्र०—सिद्धान्ती ने इसके समाधान में कहा है "सर्वे तु वेदसंयोगात्" सभी उद्गाताओं के लिए यह भक्षण विधेय है, क्योंकि, सभी सामवेदोक्त गानरूपकर्म का सम्पादन करते हैं। अतः, तृतीय पूर्वपक्षी ने जो कहा था कि सुब्रह्मण्यरूप चतुर्थ ऋत्विक् को छोड़कर ही अन्य उद्गाताओं को कहा गया है—यह बात नहीं है। क्योंकि, "कारणादेकदेशे स्यात्" उच्च स्वर में उच्चारण करने से उद्गता कहे गये हैं—यह बात नहीं है, वरन्, साम के उद्गीथ नाम के भक्तिविशेष का गान करने के कारण ही वे उद्गाता शब्द से कहे जाते हैं। साम का उद्गीथ नाम का भक्तिविशेष एक व्यक्ति का ही गेय है, इसीलिए, एक ही उद्गातृशब्द से कहा जाता है। अतः, उक्त योगार्थ के कारण सुब्रह्मण्य को छोड़कर सम्भव नहीं है, क्योंकि, प्रस्तोता एवं प्रतिहर्ता को जिस कारण से चमस भक्षण करना होगा, सुब्रह्मण्य को भी उसी कारण से भक्षण करना

होगा; इसलिए, उद्गातृगण के चार ऋत्विजों भी भक्षण के अधिकारी हैं।

"सर्वे = उद्गाताओं का अर्थात् चार लोग भक्षण करेंगे, "तु" = पूर्वपक्ष के निरास के लिए है, "वेदसंयोगात्" = क्योंकि, वेद के साथ अर्थात् सामवेदप्रतिपादित कर्म के साथ इन चारों का सम्बन्ध हैं, "कारणात् एकदेशे स्यात्" = विशेष कारणवश एक देश में ही अर्थात् एक व्यक्ति में ही उद्गाता शब्द का प्रयोग है[1] ॥ २६ ॥

इति आठवाँ उद्गातृ चमस में सुब्रह्मण्य सभी ऋत्विजों यक्षणप्रतिपादनाधिकरण।

## [९] ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात् ॥ २७ ॥ पू०

**ज्योतिष्टोमे ग्रावस्तुन्नाम होतृपुरुषः। तत्र संदेहः। किं स सोमं भक्षयेन्नेति। उच्यते। ग्रावस्तुन्न भक्षयेत्। कुतः। यतोऽस्य भक्षं नाऽऽमनन्ति। [हारियोजने चमसिनामधिकार इति मन्यमान एवं ह स्माह, नाऽस्याऽऽम्नायते भक्ष इति] ॥ २ ॥ क० पूर्वपक्षः ॥**

त० वा०—गतः समाख्याभक्षः। इदानीं वाचनिकमेवानुगच्छति। तत्र 'यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति। अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते, इत्येतद्वचनं किं प्रकरणादशेषविषयं सत्, ग्रावस्तुतोऽपि भक्षं प्रापयत्युत स्ववाक्योपात्तचमसि विषयत्वान्नेति संदेहे, तेनैव तावदभिप्रायेण न विद्यत इत्याह ॥ २७ ॥

भा० प्र०—ज्योतिष्टोम में ऋत्विजों में होता मैत्रावरुण, आच्छावाक एवं ग्रावस्तुत इस नाम से चार ऋत्विज प्रसिद्ध हैं, इनमें ग्रावस्तुत नाम का जो चतुर्थ ऋत्विज है, उसके लिए सोमभक्षण का विधान है या नहीं—यही संशय है। इसमें पूर्वपक्षी का कहना है कि "ग्रावस्तुतः भक्षः न विद्यते" ग्रावस्तुतनाम से प्रसिद्ध जो चतुर्थ होता ऋत्विज है, उसके सोमभक्षण का विधान नहीं है। कारण, "अनाम्नानात्" उनके लिए सोमभक्षण श्रुति में उपदिष्ट नहीं है।

"ग्रावस्तुतः भक्षो न विद्यते" = ग्रावस्तुतनाम के ऋत्विज के लिए हारियोजन भक्षण विहित नहीं है, "अनाम्नानात्" = क्योंकि, वह श्रुति में उपदिष्ट नहीं है। ॥ २७ ॥ पूर्वपक्ष।

## हारियोजने वा सर्वसंयोगात् ॥ २८ ॥ सि०

**शा० भा०—हारियोजनस्य वा ग्रावस्तुतं भक्षयितारं मन्यामहे। एवं ह्यामनन्ति। यथाचमवमन्यांश्चमसांश्चमसिनो भक्षयन्ति। अथैतस्य हारि-**

---

१. एवं तावद्यथाभाष्यं ससुब्रह्मण्यानां चतुर्णामुद्गातृचमसे भक्षणं प्रसाध्याधुना सुब्रह्मण्यस्य तावद्भक्षणे तथा प्रमाणं नोपलभ्यत इत्येतदुपपादयितुमारभते—नन्वेतदित्यादिना।

योजनस्य सर्वं एव लिप्सन्ते, इति । यदा हारियोजनस्य सर्वे लिप्सन्ते तदा ग्रावस्तुदपीति ॥ २८ ॥ क० सिद्धान्तः ॥

त० वा०—न शक्यं सर्वशब्दो विना कारणेन प्रकृतकर्तृमात्रवचनः सन्नेकदेशे स्थापयितुम् । अतो हारियोजनं ग्रावस्तुदपि भक्षयेत् ॥ २८ ॥

भा० प्र०—पूर्वप्रदर्शितपूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "हारियोजनेवा" = हारियोजननाम का जो ग्रह अर्थात् सोमग्रह का पात्र है, उसमें ग्रावस्तुत नाम के ऋत्विक् का भी सोमपान का अधिकार है, कारण, "सर्वसंयोगात्" श्रुति में "अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्ते" इस वाक्य में "सर्वं" शब्द एवं "एव" कार रहने से आवगत होता है कि वहाँ के सभी का अर्थात् ग्रावस्तुत नाम के ऋत्विक् का भी हारियोजन ग्रह के सोमभक्षण में अधिकार है । "हरिरसि हारियोजनः" इस मन्त्र में जो ग्रह का ग्रहण है, उसका नाम हारियोजन ग्रह है ।

"हारियोजने"=हारियोजननाम के ग्रह में ग्रावस्तुत का भी सोमभक्षण है, "वा"= पूर्वपक्ष का निरासक है, "सर्वसंयोगात्" = क्योंकि, सर्वशब्द से सभी का संयोग अर्थात् सम्बन्ध अर्थात् अधिकार कहा गया है ॥ २८ ॥ सिद्धान्त ।

## चमसिनां वा संनिधानात् ॥ २९ ॥

शा० भा०—वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति । ग्रावस्तुतो हारियोजने भक्ष इति । चमसिनां तत्राधिकारो न सर्वेषाम् । कथम् । चमसिनामेष विभागः । चमसिनोऽन्यांश्चमसान्यथाचमसं भक्षयन्ति, इत्यनूद्य चमसिन एव वदति । अथैतस्य हारियोजनस्य सर्वं एव लिप्सन्ते इति । एकं हीदं वाक्यम् । अथैतस्येत्यथशब्दप्रयोगादनन्तरवृत्तमपेक्षते । सर्व एवेत्येवशब्दः सामर्थ्यात्सर्वान्पूर्वप्रकृतानपेक्षते । अतो मन्यामहे यथाचमसमन्यांश्चमसिनो भक्षयन्तीत्यनेन पूर्वेण, अथैतस्य हारियोजनस्येत्येतस्यैकवाक्यता भवतीति । तेन चमसिनां संनिहितानामेष विभागो यथाचमसमन्यत्र, हारियोजने तु सर्वे एवेति । ॥ २९ ॥ क० आ० ॥

त० वा०—पूर्वपक्षाभिप्रायविवरणम् । यथाचमसमन्यानिति पुनःश्रुतेर्न किञ्चित्प्रयोजनमस्त्यन्यदतः सर्वशब्दविशेषणत्वात् । अथशब्दैवकाराभ्यां सुतरां तेष्वेव प्रत्ययः । ये ह्यन्यत्र प्रत्येकरूपेणोपात्तास्तेष्वेवकारो भवति । तस्मान्न ग्रावस्तुस्तुत्प्रेतव्यः ॥ २९ ॥

भा० प्र०—सर्वशब्द का प्रयोग होने से ग्रावस्तुत का भी सोमभक्षण में अधिकार है, इस प्रकार कहने पर यह आशङ्का हो सकती है कि "चमसिनां वा" = चमसिगण के द्वारा भी भक्षण होगा, कारण, "सन्निधानात्" = वही सन्निहित है । अन्य पक्ष में

ग्रावस्तुत ऋत्विक् का सोमभक्षण का प्रसङ्ग नहीं है, कारण, इस स्थल में जो सर्वशब्द का प्रयोग है, वह सन्निहित का ही वाचक है, क्योंकि,

"समासः सर्वनामार्थः सन्निकृष्टमपेक्षते" अर्थात् समास एवं सर्वनाम सन्निकृष्ट अर्थात् सन्निहित का ही वाचक है और "अथैतस्य" इत्यादि वाक्य का पूर्व में "यथा चमसन् अन्यांश्चमसान् चमसिनो भक्षयन्ति" इस वाक्य में चमसिगण का ही विषय कहा गया है। इस वाक्य में "अथ" शब्द से उसी के साथ सम्बन्ध अवगत होता है। अतएव "सर्व" शब्द से सन्निहित चमसिगण ही अभिहित होने से ग्रावस्तुत का ही सोमभक्षण नहीं है।

"चमसिनां" = चमसिगण का ही सोमभक्षण कर्तव्य है अन्य का नहीं है, "वा" = पक्ष के परिवर्तन का सूचक है, "सन्निधानात्" = क्योंकि, उसी का सन्निधि के कारण प्राप्त है ॥ २९ ॥ आशङ्का।

## सर्वेषां तु विधित्वात्तदर्था चमसिश्रुतिः ॥ ३० ॥

शा० भा०—तुशब्दः पक्षं व्यावर्तयति,। नैतदस्ति, चमसिन एव हारियोजने लिप्सन्त इति। सर्वे तु विधीयन्ते हारियोजने। सर्वे भक्षयन्तीति, न पुनश्चमसिन इति संबन्धः शक्यते विधातुम्। द्वौ हि संबन्धावस्मिन्वाक्येऽपूर्वौ न शक्यते विधातुम्। तस्मादन्या वचनव्यक्तिः। का पुनरसौ। यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति, इत्यनुवादः। चमसिनश्चमसान्भक्षयन्त्येव। ते भक्षयन्तो यथाचमसमेव, अथैतस्य हारियोजनस्य न केवलं चमसिनः सर्व एवेति। किमेवं, भविष्यति। सर्वशब्दश्च सर्वान्विदन्नैकदेशे कल्पितो भविष्यति। न च द्वौ संबन्धावपूर्वावेकस्मिन्वाक्ये भविष्यतः। तस्मादेष पक्षो ज्यायानिति। तदर्था ह्येषा चमसिश्रुतिः। हारियोजनस्य प्रशंसार्था चमसिनः कीर्त्यन्ते हारियोजनं प्रशंसितुम्। कथम्। महाभागो हि हारियोजनः। यस्मात्तत्र सर्वे लिप्सन्ते अन्यांश्चमसानेकैकः, न ते महाभागाः, न्यूना हारियोजनादिति ॥ ३० ॥ क० आ० नि० ग्रावस्तुतोऽपि सोमभक्षाधिकरणम् ॥ ९ ॥

त० वा०—न युक्तः सर्वशब्दः पुरुषमात्रगामी सन्नधिकारेण विशेषितः पुनश्चमसिशब्देन प्रयोजनान्तरोपाधिकेन सता विशेष्टुम्। यावद्यावद्धि शब्दोऽल्पविषयी क्रियते तावत्तावत् श्रुतिर्बाध्यते। तस्माच्चमसिनो न प्रत्येकं चमससंबन्धनार्थमुपात्ताः। तेऽपि चाल्पविषयत्वेन प्रतिपाद्यन्ते। हारियोजनस्य महाविषयत्वेन प्रशंसां कर्तुम्। अतो हारियोजने सर्व एवेत्येतदेव सिद्धम् ॥ ३० ॥

( इति हारियोजने ग्रावस्तुतोऽपि भक्षप्रतिपादनाधिकरणम् ॥ ९ ॥ )

भा० प्र०—पूर्वोक्त आशङ्का के उत्तर में सिद्धान्ती का कहना है कि "सर्वेषां तु" = वहाँ सभी ऋत्विजों का हरियोजनग्रह में सोमभक्षण कर्तव्य है। कारण, "विधित्वात्"—इस स्थल में भक्षण के साथ सभी सम्बन्धों की विधि है। किन्तु, यदि इस स्थल में केवल चमसियों का ही भक्षण स्वीकार किया जाय तो "सर्वे भक्षयन्ति ये च चमसिनः" अर्थात् सभी भक्षण करेंगे और वे ही जो चमसी हैं, यह अर्थ मानना होगा, और इस अर्थ के स्वीकार करने पर वाक्य भेद दोष होगा। इस दोष की निवृत्ति के लिए यदि यह कहा जाय "यथाचमसम् अन्यांश्चमसान् चमसिनो भक्षयन्ति" इस वाक्य की क्या सार्थकता है ? ऐसी स्थिति में यह कहा जा सकता है "चमसि श्रुतिः तदर्था" यह चमसि शब्द-संयुक्त श्रुतिवाक्य वह तदर्थं = हरियोजनग्रह की प्रशंसा के लिए है। इसी प्रकार महाभाग यह हारियोजनग्रह जो है, उसके प्राप्त करने के लिए सभी इच्छा करते हैं, किन्तु, यह जो चमसादि रहता है उसकी सभी लोग इच्छा नहीं करते हैं, इसलिए वह प्रशस्त नहीं है। किन्तु यह हरियोजन ही प्रशस्त है, इस प्रकार की प्रशंसा यहाँ पर विवक्षित है।

"सर्वेषां तु" = सभी ऋत्विजों के लिए हारियोजनग्रह में सोमभक्षण कर्तव्य है, "तु" = आशङ्का के निवारण के लिए हैं। "विधित्वात्" = क्योंकि, इस स्थल में विधि अर्थात् सभी सम्बन्धों की विधि है, तदर्था = उसके लिए अर्थात् हरियोजनग्रह की स्तुति के लिए, "चमसिश्रुतिः" = चमसिविषयकश्रुतिवाक्य है॥ ३०॥

इति जवनहरियोजन में ग्रावस्तुति ऋत्विजों के भक्षणप्रतिपादनाधिकरण।

## [१०] वषट्काराच्च भक्षयेत्॥ ३१॥ सि०॥

**शा० भा०—अथ किं समाख्यैवैका भक्षकारणम्। नेति ब्रूमः। वषट्काराच्च भक्षयेत्। वषट्काराश्च भक्षणे निमित्तम्। कथम्। वचनात्। एवं हि श्रूयते, वषट्कर्तुः प्रथमभक्ष इति। भक्षणस्याप्राप्तत्वान्न प्राथम्यविधानार्थ एष शब्दः। प्राथम्यविशिष्टं भक्षणमेव विदधातीति॥ ३१॥ क० वषट्करणस्य-भक्षनिमित्तताधिकरणम्॥ १०॥**

त० वा०—इदमपरं वचनं 'वषट्कर्तुः प्रथमभक्षः' इति। तत्किं वषट्कारं निमित्तीकृत्य प्राथम्यविशिष्टं भक्षणं विधत्त उत भक्षणमनूद्य प्राथम्यमात्रं विधत्त इति विचारः। किं प्राप्तम्। 'नचेदन्येन[1] शिष्टाः' इति कथंचिदनुवादत्वे संभवति विशिष्टविधानानुपपत्तेः, प्राथम्यस्य चाप्राप्तत्वात्तदनुवादेन भक्षविधानासंभवादेवं वचनं व्यज्यते यो वषट्कर्तुर्भक्षः स प्रथम इति। ननु चाप्राप्तत्वाद्भक्षोऽप्यनुवदितुं न शक्यते। समाख्यया प्राप्तत्वानुवादो गम्यते। अस्ति हि तस्य समाख्यया

१. ( अ० १ पा० ४ अ० ६ सू० ९ ) एतत्सूत्रावयवः।

चमसेषु भक्षः, स शक्योऽनुवदितुम्'। तेषां च यो यदा वषट्करोति स तदा प्रथमो भक्षयेत्। तत्रैतत्स्यात्। ग्रहेषु चमसान्तरेषु च प्राप्त्यभावानुवादो नापपद्यत इति। नैष दोषः। न ह्यवश्यं यदेव सर्वत्र प्राप्तं तदेवानुवदितव्यम्। सर्वानुवादानां यथासंभवं प्राप्त्यपेक्षत्वात्। न च ग्रहचमसान्तराणां वषट्कर्तृभिरभक्ष्यमाणानां किंचिन्न सिध्यति। प्रतिपत्तिरिति चेत्। वेदविहितप्रतिपत्त्यभावे लौकिकप्रतिपत्तिसिद्धेः। वक्ष्यमाणनिमित्तद्वारेण वा भक्षणोपपत्तिः। अथोच्यते। समाख्यया विप्रकृष्टा प्राप्तिर्न शक्यते शीघ्रं प्रवर्तिन्या श्रुत्याऽनुवदितुम्। अतः प्राप्त्यभाववेलायां श्रुतिः प्रवर्तमाना यत्र यत्र वषट्कृतं तत्र तत्राविशेषेण विधास्यतीति। तदयुक्तम्। तत्र हि संनिकर्षविप्रकर्षावपेक्ष्येते यत्र विरोधः कश्चित्। इयं तु श्रुतिरनेकार्थविधिक्लेशभयाद्यथाकथंचिदपि प्राप्नुवन्तं भक्षं प्रतीक्षते। यदा केनचिदपि प्रमाणेन नास्ति प्राप्तिरित्यवगम्यते तदा विशिष्टविधानमङ्गीकरोति। तथा च प्रकरणादिप्राप्तार्थानुवादेन श्रुतयो गुणानां विधात्र्य इष्टाः। तस्मात्प्राथम्यमात्रनिमित्तत्वान्न वषट्कारो भक्षकारणमिति प्राप्ते। उच्यते।

समासार्थाद्विनिष्कृष्य नैकांशोऽनूद्यते यतः।
त्र्यङ्गवत्तेन सर्वोऽयमपूर्वोऽर्थो विधीयते॥

यथैव 'त्र्यङ्गैः स्विष्टकृतं यजति' इत्यत्र नाङ्गान्यनूद्य त्रित्वं विधीयते किं तर्हि। पूर्वनिष्पन्नः समासार्थो विधेयो भवति। तथेहापि परिपूर्णस्य पदस्य पदान्तरयोगादेकदेशनिष्कर्षे च सामर्थ्याभावादशक्यमेवानुवदितुं यो वषट्कर्तुर्भक्ष इति। न हि प्राक्समासादुद्भूक्षस्य वषट्कर्तृसंबन्धो युक्तः। सापेक्षत्वे सति समासानुपपत्तेः। ननु च 'भवति वै प्रधानस्य सापेक्षस्यापि समासः' इति सत्यपि वषट्कर्तृसंबन्धे समासोऽवकल्पिष्यते। भवेदेतदेव, यदि भक्ष एवैकः सापेक्षः स्यादिह तु प्राथम्यमपि वषट्कर्तृसंबन्धित्वात्सापेक्षम्। न हि प्राथम्यस्य भक्षो निमित्तम्। किं तर्हि। वषट्कर्तृत्वमतो वषट्कर्तुः प्रथम इत्येवं संबन्ध आपद्येत। ततश्च विस्पष्टमसामञ्जस्यं स्यात्, यो वषट्कर्तुर्भक्ष इति चानूद्यमाने विशिष्टानुवाददोषः, भक्षमात्रेण वषट्कर्तृरनाक्षेपात्। वषट्कर्तृत्वस्य च क्रियान्तरेष्वप्यनैकान्त्यात्। अन्यतरानुवादे तु सर्वभक्षाणां प्राथम्यं विधीयेत सर्ववषट्कर्तृव्यापाराणां च। तच्चाशक्यं कर्तुम्। अतो वषट्कर्तृप्राथम्यविशिष्टापूर्वभक्षविधानमेतत्। तयोश्च परस्परनियमादत्यन्तसमानविषयत्वम्। अतो यावति विषये वषट्कारस्तावत्येव प्रथमभक्षः। कथं पुनर्वषट्कारो निमित्तभूतः सन्नुपादीयते कथं चानुपादीयमानस्य नियमोऽवकल्पेत। उच्यते।

नियमः सर्वथा तावदेककर्मनिमित्तकः।
उपादानानुपादाने न विशेषः प्रतीयते॥

न च वषट्कर्तृत्वमनुपादेयम् । न ह्यत्र यदिशब्दसप्तम्यादिकृतं निमित्तत्वम् । किं तर्हि । वषट्कर्तरि क्रियाङ्गत्वेनोपादीयमानेऽर्थान्निमित्तत्वं भवति । तस्माद्दोषः । ननु च 'तस्मादेकं' साम तृचे क्रियते स्तोत्रीयम्' इति समासस्थामतृचनमनूद्य त्रित्वविधानं दृष्टं तथा प्राथम्यविधानमपि सेत्स्यति । न । तत्रापि समासार्थस्यैव विधानाभ्युपगमात् । सर्वस्तोत्रसाम्नां हि तृचा एवोपादीयन्ते । तत्र यदि सकलः समासार्थो न प्राप्तः स्यात्ततः सर्वविधिर्भवेत् । सर्वत्र चर्चः सामचोदनयैव पाठक्रमेण च प्राप्ता दृश्यन्ते । तेन 'न चेदन्येन शिष्टाः' इत्येवं न विधीयन्ते । 'वषट्कर्तुः प्रथमभक्षः' इत्यत्रापि यावद्वषट्कारं समासार्थो विधीयते । तत्र यद्यृग्वेदे सर्वत्र भक्षः प्राप्तः स्यात्ततो विधिशक्त्या उच्येत । स तु नवसु चमसेषु ग्रहेषु चाप्राप्तो निमित्तत्वेन चोपनीतो न हातुमनुवदितुं वा शक्यते । यदि तु ऋचामपि क्वचिदप्राप्तिर्भवेत्ततः समासे विशेषाभावादृग्वेदेव विधिः । सर्वस्तोत्रसामसु तु ताः प्राप्ताः । अपि च त्रित्वमृचा विधीयते । ताश्च प्रधानत्वात्सापेक्षत्वेऽपि समस्यन्ते । नत्विह प्राथम्यं भक्षमात्र-संबन्धीत्युक्तम् । तस्माद्वषट्कारनिमित्तं भक्षं पूर्वं कृत्वा भूयः समाख्याभक्षः कर्तव्यो न तस्यैव प्राथम्यमिति सिद्धम् ॥ ३१ ॥

( इति वषट्कारनिमित्तकभक्षान्तरप्रतिपादनाधिकरणम् ॥ १० ॥ )

भा० प्र०—पूर्व में कहा गया है कि समाख्या चमसियों के सोमभक्षण के लिए है । इसमें यह प्रश्न होता है कि केवल समाख्या ही सोमभक्षण का साधन है या भक्षण के लिए कारण भी है । इस प्रसङ्ग में पूर्वपक्षी का कहना है कि होता ही जब वषट्कर्ता है और होतृचमसादि समाख्या के अनुसार होताका भक्षण जब प्राप्त ही है तब उसमें विधि नहीं हो सकती है । किन्तु, होता के भक्षण का जो प्राथम्य है, वह अप्राप्त है, इसलिए इस स्थल में प्राथम्य ही विहित होता है ।

इसके उत्तर में सिद्धान्ती का कहना है कि "वषट्कारात् च भक्षयेत्" वषट्कार के कारण भी भक्षण करे, अर्थात् वषट्कार भी सोमभक्षण का कारण है, क्योंकि, श्रुति में कहा गया है कि "वषट्कर्तुः प्रथमभक्षः ।

यदि यह कहा जाय कि इस श्रुति में वषट्कार के भक्षण के लिए हेतु नहीं कहा गया है, किन्तु, समाख्या के बल से होता का सोमभक्षण प्राप्त ही है, केवल प्राथम्य ही इस वचन में विहित होता है अर्थात् "वषट्कर्तुः प्रथमभक्षः" इस वाक्य में कहा गया

---

१. तस्मादिति । 'ऋक् सामोवाच मिथुनीसंभवावेति । सोऽब्रवीन्नवै त्वं ममालं जायात्वे वेदो मम महिमेति । ते द्वे भूत्वोचतुः । सोऽब्रवीन्न वै वां ममालं स्थो जायत्व इति । तास्तिस्त्रो भूत्वोचतुः । सोऽब्रवीत्संभवामेति' इत्येवमुपक्रमो ज्ञेयः ।

है कि वषट्कर्ता का भक्षण वह प्रथम होगा। ऐसी स्थिति में कहा जा सकता है कि इस स्थल में भक्षण के उद्देश्य में प्राथम्य विधान करना होगा, "यो भक्षः स प्रथमः" अर्थात् यह जो भक्षण है. वह प्रथम होगा, इस प्रकार से वचन का विन्यास करना होगा, किन्तु प्रथमभक्षः इस समासबद्ध पद में इस प्रकार उद्देश्य-विधेय भाव से अन्वय नहीं हो सकता है, क्योंकि इसमें एक प्रसारता का भङ्ग होगा।

"प्रथमभक्ष" इस स्थल में 'प्रथम' और 'भक्ष' ये दो पद मिलकर एक अर्थ का प्रकाश कर रहे हैं, इसी को एक प्रसरता कहा जाता है। किन्तु, इसको भङ्ग कर एक को उद्देश्य और अन्य को विधेय रूप में अन्वय करने पर एकप्रसरता नहीं रह जाती है। इसमें अन्य दोष यह है कि इसमें एकको उद्देश्य एवं अन्य को विधेय कहने पर "यो भक्षः स प्रथमः" इस प्रकार भक्षण के उद्देश्य में प्रथमत्व विधान करना होगा। किन्तु, इसमें सम्पूर्ण भक्षण का ही प्रथम प्रसङ्ग आता है, किन्तु वह अभिप्रेत नहीं है, क्योंकि, सम्पूर्ण भक्षण ही प्रथम नहीं है, अपितु वषट्कर्ता का भक्षण ही प्रथम है। वषट्कार का जो भक्षण वही प्रथम है, इस प्रकार अन्वय करने पर वाक्यभेद होगा, कारण, जो भक्षण है, वह प्रथम है एवं प्रथमत्वविशिष्ट जो भक्षण वह वषट्कर्ता का इस प्रकार दो वाक्य होता है, इसलिए वषट्कर्तृविशिष्टभक्षण के उद्देश्य से प्राथम्य का विधान नहीं किया जा सकता है, इस प्रकार उद्देश्य-विधेयभाव से जहाँ अन्वय होता है, वहाँ समास नहीं हो सकता है, क्योंकि, वहाँ एकार्थीभाव नहीं रहता है, इसलिए समासस्थल में उद्देश्यविधेय भाव से अन्वय नहीं माना जाता है, वार्तिककार ने भी यही कहा है।

वार्तिककार ने कहा है कि

"समासार्थाद् विनिष्कृष्य नैकांशोऽनूद्यते यतः"

अर्थात् समासार्थ से पृथक् कर समस्त पद का कोई अंशविशेष अनूदित नहीं हो सकता है, इसलिए, इस स्थल में भी "वषट्कर्तुः प्रथमभक्षः" इस वाक्य में वषट्कर्तुकर्तृप्रथमत्व विशिष्ट भक्षण ही विहित होता है और वषट्कार ही उस प्राथम्यविशिष्ट भक्षण का निमित्त है।

"वषट्कारात् च"=वषट्कारहेतु भी, "भक्षयेत्"=सोमभक्षण कर्तव्य है। ॥ ३१ ॥

इति दशम वषट्कारनिमित्तकभक्षान्तरप्रतिपादनाधिकरण।

## [११] होमाभिषवाभ्यां च ॥ ३२ ॥ सि० ॥

**शा० भा०—अपरमपि कारणं होमाभिषवौ। कथम्। हविर्धाने ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान्भक्षयन्ति, इति। न तावदेष**

क्रमो विधीयते होमे निर्वृत्ते[1] ततो भक्षणमिति। भक्षणस्याप्राप्तत्वात्। द्वयोश्च क्रमयोर्विधानात्, अभिषुत्य हुत्वेति वाक्यं भिद्येत। अर्थेन च प्राप्तत्वादस्य क्रमस्य। न ह्यकृते प्रयोजने कश्चित्प्रतिपादनमर्हति। न च भक्षणाङ्गभावेन होमाभिषवौ चोद्येते। अभिषवस्य होमार्थत्वात्। होमस्य च फलार्थत्वात्। तस्माद्धोमाभिषवयोः कर्तॄणां भक्षणं विधीयते। येऽभिषुण्वन्ति जुह्वति च, ते भक्षयन्तीति ॥३२॥ क० होमाभिषवयोरपि भक्षनिर्मित्तताधिकरणम् ॥ ११ ॥

त० वा०—किमेतावद्भिरेव निमित्तैर्भक्षः। नेत्युच्यते। होमाभिषवाभ्यामपरो भक्षः। कथम्। एवं ह्याह 'हविर्धाने ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान्भक्षयन्ति' इति। तत्र होमाभिषवौ तावत्सगुणौ प्राप्तौ न विधीयते। दीक्षावाक्यवत्क्रमार्था[2]श्रुतिरिति चेत्। तच्च नास्ति। अर्थादेवास्य क्रमस्य सिद्धत्वात्। न हि हुतस्याभिषवः संभवति, न च भक्षितस्य होमः। आहवनीयदेशाच्च सद आगच्छन्तः प्रत्यञ्च एव प्रतिपद्यन्ते। होत्रादीनां च सदसि कर्मप्रवृतेरवश्यं वषट्कारसमाख्यानिमित्तभक्षार्थं सदः सोमा आनेतव्याः। अध्वर्युणा चोपहवो दातव्यः। तेन सदसीत्यनूद्यते। केवलं तु भक्षणमप्राप्तं विधीयते। तत्र हुत्वाऽभिषुत्येतदुपादानस्यैतत्प्रयोजनं कथं नाम तत्समानकर्तृको भक्षः सिध्येदिति। न हि निर्ज्ञातप्रयोजनयोर्होमाभिषवयोर्भक्षणाङ्गत्वं[3] संभवति। भक्षस्य च सोमसंस्कारत्वमवगतमेवेति नाङ्गत्वार्थमितरसंबन्धश्रवणम् अतश्चार्थाद्धोमाविषयोर्निमित्तत्वं ज्ञातम्। अतो होमाभिषवकार्यपि सोमं भक्षयेदिति ॥ २३ ॥

( इति होमाभिषवनिमित्तकभक्षप्रतिपादनाधिकरणम् ॥ ११ ॥ )

भा० प्र०—सोमभक्षण का अन्य कोई हेतु है कि नहीं इस प्रकार के संशय में पूर्वपक्षी यदि यह कहे कि चमस भक्षण में समाख्या, हारियोजन भक्षण में वाक्य, एवं

---

१. निर्वृत्ते, इति पाठः।

२. दीक्षावाक्यवदिति। 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं ततो होतारं, ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति—ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति—आग्नीध्रं ब्रह्मणः प्रतिहर्तारमुद्गातुरच्छावाकं होतुः ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति—पोतारं ब्रह्मणः सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः, ततस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वाऽऽचार्यप्रेषितः' इत्येदं सम्नात्मकद्वादशाहप्रकरणपठितवाक्यवदित्यर्थः।

३. निर्ज्ञातेति—होमस्य फलार्थत्वेन, अभिषवस्य सोमसंस्कारार्थत्वेन च निर्ज्ञातप्रयोजनयोरित्यर्थः।

होतृवषट्कार ये तीन सोमभक्षण के हेतु हैं, अन्य कोई भी हेतु नहीं है, ऐसा मानने पर यह कहा जा सकता है कि "होमाभिषवाभ्यां च" होम एवं अभिषवहेतु से भी सोमभक्षण कर्तव्य है प्रर्थात् होम एवं अभिषव अर्थात् पीसकर सोमरसकानिःसारण भी सोमभक्षण का कारण है। अतः, जो सोमाभिषव करते हैं, सोमलता को पीसकर रस निकालते हैं एवं जो सोम का हवन करते हैं, वे भी सोमभक्षण के अधिकारी हैं, क्योंकि, श्रुति में कहा है "हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयति" अर्थात् हविर्धान नामक मण्डप में प्रस्तारथन्तर से सोमाभिषव कर आहवनीय अग्नि में उसका होम कर पश्चात् लौटकर सदोमण्डप में आकर उसमें भक्ष सोम भक्षण करे। अतएव होमकर्ता एवं अभिषवकर्ता भी सोमभक्षण करता है।

"होमाभिषहाभ्यां च" = होम एवं अभिषवण सोमरस के निकालने के कारण भी भक्षण कर्तव्य है। ॥ ३२ ॥

इति एकादश होमाभिषवनिमित्तकभक्षणप्रतिपादनाधिकरण।

## [१२] प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे ॥ ३३ ॥ पू०

**शा० भा०—इदं श्रूयते, प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणाम्, इति। तत्र संदेहः। चमसेषु होमाभिषवयोः कर्तारो वषट्कर्तारश्च किं भक्षयेयुरुत नेति। किं प्राप्तम्। न भक्षयेयुः। प्रत्यक्षोपदेशाच्चमसानां चमसिनः प्रति, प्रैतु होतुश्चमस इत्येवमादिभिर्विशेषवचनैः होमाभिषवादिकारिणां सामान्यवाक्येन, यः सोमो भक्षणेन संस्कर्तव्यः स चमसेषु चमसिभिरिति। अथेदानीमन्यन्निमित्तं क्व भविष्यति। अव्यक्तः, सामान्यनिमित्तः। क्व, शेषे भविष्यति, यत्र न चमसिनः ॥ ३३ ॥**

त० वा०—अथ यत्र निमित्तसंपातो भवति तत्र किमन्यनिमित्तको भक्षः समुच्चीयते, अथ विकल्प्यते, अथवा बाध्यत इति। तुल्यार्थत्वाद्विकल्प्यप्राप्तावभिधीयते। प्रैतु होतुरित्यादिना विशेषसंयोगादविशेषशास्त्रं होमाभिषवसंबद्धं ग्रहेषु चरितार्थं शक्यं बाधितुम्। अतः शेषे तत्स्यादिति ॥ ३३ ॥

भा० प्र०—श्रुति में कहा गया है कि "प्रैतु होमश्चमसः प्रब्रह्मणः प्रोद्गातॄणाम्" इत्यादि। इसमें संशय होता है कि यह जो होमकर्ता, अभिषवकर्ता एवं वषट्कर्ता है, क्या ये भी चमस का भक्षण करेंगे, अथवा ये चमस का भक्षण नहीं करेंगे? इसमें पूर्वपक्षी का कहना है कि "शेषे अभिव्यक्तः" अव्यक्त अर्थात् विशेष वचन से जो ऋत्विक् के भक्षण पात्र का उल्लेख नहीं है, उनका भक्षण, ग्रह आदि शेष अर्थात् अवशिष्ट पात्र में ही होगा, कारण, "चमसानां प्रत्यक्षोपदेशात्" चमस में जो चमसिगण भक्षण करेंगे यह प्रत्यक्ष वचन से उपदिष्ट है, अतएव चमस से अतिरिक्त पात्र में ही अन्य का सोमभक्षण होता है, किन्तु, चमस में नहीं।

"चमसानां प्रत्यक्षोपदेशात्" = जैसे चमस का भक्षण प्रत्यक्ष श्रुतिवचन के द्वारा उपदिष्ट होता है, अतः, "शेषे अव्यक्तः" = अवशिष्ट स्थल में अव्यक्त अर्थात् साधारण नियम के अनुसार भक्षण होगा, अर्थात् चमसातिरिक्त भक्षण ही सर्वसाधारण हैं। ॥ ३३ ॥ पूर्वपक्ष।

सिद्धान्तः

**स्याद्वा कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात् ॥३४॥सि०॥**

शा० भा०—स्याद्वा चमसेषु वषट्कर्त्रादीनां भक्षः। प्राप्यते हि तेषां तत्र कारणम्। न च प्रतिषिध्यते। ननु चमसिनां प्रत्यक्षोपदेशान्निवर्त्तेरन्। उच्यते। अनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात्। प्रैतु होतुश्चमस इत्येवमादयः शब्दा न शक्नुवन्ति वषट्कर्त्रादीन्प्रतिषेद्धुम्। उपदेष्टारो हि ते, न प्रतिषेद्धारः। तस्माद्वषट्कर्त्रादयोऽपि चमसेषु भक्षयेयुः ॥ ३४ ॥ क० सि० ॥

**चमसे चान्यदर्शनात् ॥ ३५ ॥**

शा० भा०—चमसे चान्यांश्चमसिनो दर्शयति। चमसांश्चमसाध्वर्यवे प्रयच्छति। तान्स वषट्कर्त्रे हरति, इति। एको हि स्वश्चमसो वषट्कर्त्रे ह्रियते। तेन बहुहरणदर्शनं नावकल्पते, यदि वषट्कर्त्रादयो न चमसेषु भक्षयेयुः। तस्माद्भक्षयन्तीति ॥३५॥ क० युक्तिः ॥ वषट्कर्त्रादीनां चमसे सोमभक्षाधिकरणम् ॥१२॥

त० वा०—स्याद्वा प्राप्तिनिमित्तत्वात्। वषट्करणादिनिमित्ते सति प्रत्यक्षोपदेशेनैव वषट्कारादिसंबन्धेन प्राप्तिः। न च तस्य सामान्येन प्रवृत्तिः। वषट्कृतेषु सोमेषु विशेषरूपेणैव प्रत्यक्षशिष्टत्वात्। कामं वा समाख्या विप्रकृष्टत्वाद् दुर्बला स्यात् साऽपि त्वनवकाशत्वादवश्यमङ्गीकर्तव्या। तथा सति च प्राप्तिमात्रेऽसौ व्याप्रियते नान्यन्निवर्तते। संभवति हि सावयवस्य द्रव्यस्यानेकेनापि भक्षणं, विशेषतस्तिक्तकटुकस्य सोमस्य। श्रूयते च 'अल्पं भक्षयेत्' इति। न च निःशेषभक्षणेऽल्पत्वमवकल्पते। संशेते च प्रतिपत्त्यपेक्षिणि भवति भक्षान्नरस्यावकाशः। तस्मात्समावेशः कर्तव्य इति ॥ ३४ ॥ ३५ ॥

( इति एकपात्रे भक्षसमुच्चयाधिकरणम् ॥ १२ ॥ )

भा० प्र०—पूर्वपक्षी के उत्तर में सिद्धान्ती का कहना है "स्याद् वा कारणभावात्" चमस में वषट्कर्ता आदि ऋत्विग् गण भी भक्षण करेंगे। यदि कहा जाय कि चमस में चमसियों का ही भक्षण श्रुति में प्रत्यक्षतः कहा गया है, इसलिए, "अनिर्देशः चमसानां कर्तुः तद्वचनात्" उक्त वचन में चमसियों का भी भक्षण उपदिष्ट है, किन्तु, वह अन्य का प्रतिषेधक नहीं है, अतः, उसके द्वारा अन्य ऋत्विजों का चमस में सोमभक्षण का निषेध नहीं है, इसलिए, इस वचन में चमसियों का चमस में सोमभक्षण का

केवल अयोग्यव्यवच्छेद कहा गया है, इसीलिए वषट्कर्ता आदि भी चमस में सोम-भक्षण करेंगे।

"स्यात्" = होगा अर्थात् चमस में अन्य का भी भक्षण होगा, 'वा' = पूर्वपक्ष के निरास के लिए है, "कारणभावात्" = क्योंकि भक्षण का कारण है, "चमसानां कर्तुः" = चमसियों का, "अनिर्देशः" = प्राप्तिमात्र अर्थात् अयोग्यव्यवच्छेदबोधित होता है, "तद्वचनात्" = क्योंकि प्रतिवचन में केवल यही बोधित होता है ॥ ३४ ॥ सिद्धान्त।

भा० प्र०—चमस में अन्य का भी सोमभक्षण कर्तव्य है, इसमें अन्य युक्ति भी है "चमसे चान्यदर्शनात्" लिङ्ग अर्थात् ज्ञापकहेतु दृष्ट होता है, अतः चमस में अन्य का भी सोमभक्षण कर्तव्य है। कारण, चमस में अन्य व्यक्तियों का भी सोमभक्षण कर्तव्य है, कारण, "चमसवान् चमसाध्वर्यवे प्रयच्छति तान् सवषट्कर्त्रे "हरति" अर्थात् चमसाध्वर्युको चमस देकर, पुनः वे वषट्कर्ता के लिए ले जाय" इत्यादि वचन की ज्ञापकता के अनुसार जाना जाता है कि अन्य का भी चमस में सोमभक्षण कर्तव्य है।

"चमसे" = चमस में, 'अन्यदर्शनात् च" अन्य का दर्शन अर्थात् सोमपान में सिद्ध अर्थात् सोमपान का लिङ्ग अर्थात् ज्ञापक वचन दृष्ट होता है, अतः, यदि दृष्ट होता यह कह कर भी सभी चमस में सोमपान करेंगे ॥ ३५ ॥

इति बारहवाँ एकपात्र में भक्षणसमुच्चयाधिकरण।

**अथ यत्रैकस्मिन्पात्रे बहवो भक्षयन्ति, कस्तत्र क्रम इति। उच्यते—**

## [१३] एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ ३६ ॥

**शा० भा०—तस्य हि क्रमो भक्षयितुं यस्य हस्ते सोमः ॥३६॥ क० पूर्व० ॥**

त० वा०—एकस्मिन्पात्रेऽनेको भक्षयिता साधितः। इदानीं तद्गता कर्मादि-विशेषाः प्रतिपाद्यन्ते। तत्राध्वर्यो प्रथमं भक्षयति न समर्पणभूयस्त्वेन प्रयोगो विक्षेप्स्यते। अन्यथा पुनरध्वर्युणा समर्पिते तस्मै समर्पणाद्विक्षेपः स्यादिति मत्वा क्रमादध्वर्युः पूर्व इत्याह ॥ ३६ ॥

भा० प्र०—एक पात्र में ही जब अनेक लोग खाएंगे, तब उसका क्रम क्या होगा? अर्थात् किसके बाद कौन भक्षण करेगा? इस प्रकार संशय होने पर पूर्वपक्षी का कहना है कि "एकपात्रे अध्वर्युः पूर्वो भक्षयेत्" = एकपात्र में सोमभक्षण के स्थल में अध्वर्यु ही प्रथम भक्षण करेगा, कारण, "क्रमात्" क्रम अर्थात् सन्निध्य के अनुसार अध्वर्यु के ही निकट पात्र है।

"एकपात्रे" = एकही पात्र में, पूर्वः अध्वर्युः भक्षयेत्" = प्रथम अध्वर्यु भक्षण करेगा, 'क्रमात्' = क्रम अर्थात् सन्निधि के अनुसार ॥ ३६ ॥ इति पूर्वपक्ष।

## होता वा मन्त्रवर्णात् ॥ ३७ ॥

शा० भा०—होता वा पूर्वो भक्षयेत् । मन्त्रवर्णात् । मन्त्रवर्णो हि तथा, होतुश्चित्पूर्वे हविरद्यमाशत, इति । तथा, होतेव नः प्रथमः पाहि, इति ॥ ३७ ॥ क० सि० ॥

त० वा०—बलवति प्रमाणे विहिते दुर्बलोपन्यासः क्लिष्टो भवतीति मन्त्रवर्णौ तावदुपन्यस्यति । तत्र ग्रावस्तु पितरो मन्त्रो होत्रकारिणां प्रथमं दर्शयति । एते वदन्ति—अभिषवे क्रियमाणे शब्दं कुर्वन्ति, शतवत्सहस्रवदभिक्रन्दन्ति—वदनमेवोत्तरेणाभिक्रन्दने विशेषितं, हरितेभिरासभिः—सोमसंपर्कान्नीलाकृतैर्मुखैः । विष्ट्वी कर्मणि ग्रावाणः सुकृतः—शोभनकारिणः, सुकृत्यया—सुकृत्त्वेन, होतुश्चित्—होतुरपि, पूर्वे हविरद्यं—होतुर्यत्प्रथममदनीयं, तदाशत—भुक्तवन्त इति ब्रुवन् वषट्कर्तुः प्रथमभक्ष इति दर्शयति । एवं होतेव नः प्रथमः पाहि इति । यथा होता प्रथमं पिबतीत्युपमानात्प्रसिद्धिर्गम्यते ॥ ३७ ॥

भा० प्र०—पूर्व प्रदर्शित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "होता वा"=एक ही पात्र में सोमभक्षण के स्थल में होता नाम से प्रसिद्ध ऋत्विक् ही प्रथम भक्षण करेगा, कारण, "मन्त्रवर्णात्"=मन्त्र में इसी प्रकार का अर्थ वर्णित है, क्योंकि, "होतुश्चित् पूर्वे हविरद्यमाशत" इस मन्त्र में एवं "होता नः प्रथमः पाहि" इस मन्त्र में होता का ही प्राथम्य वर्णित है।

"होता"=होता अर्थात् इस नाम से प्रसिद्ध ऋत्विक् ही प्रथम भक्षण करेगा, "वा"=पूर्वपक्ष के निरास के लिए है। "मन्त्रवर्णात्"=क्योंकि, मन्त्र में ऐसा ही वर्णित है ॥ ३७ ॥ इति पूर्वपक्ष।

## वचनाच्च ॥ ३८ ॥

वचनमिदं भवति, वषट्कर्तुः प्रथमभक्ष इति । वचनमेवेदम् । न मन्तव्यमनेकगुणविधानादविवक्षितं प्राथम्यमिति । अप्राप्तत्वात्प्राथम्यस्य, नायमनुवादः । विधिरेव । समासेन च विदधतो नानेकगुणविधानं दुष्करम् ॥ ३८ ॥

त० वा०—'वषट्कर्तुः प्रथमभक्षः' इति विशिष्टविधानं पूर्वमेवोक्तम् । अपूर्वत्वाच्च नानेकविधिदोषः । समासश्चाधिकः समासेनैकपदीभूतैककारकविधानात् 'तस्य तस्योपदिश्येत' इत्येतन्नास्ति ॥ ३८ ॥

सिद्धान्ती अपने पक्ष में और भी हेतु दिखा रहा है "वचनाच्च=एक ही पात्र में सोमभक्षण स्थल में होता का ही प्रथम भक्षण कर्तव्य है, यह "वषट्कर्तुः प्रथमभक्षः"=अर्थात् वषट् के उच्चारणकर्ता का प्रथम विशिष्ट भक्षण कर्तव्य है, इस वचन से यह सिद्ध होता है कि वषट्कर्ता होता ही होता है।

"वचनात् च" = वचन होने से ही प्रथम होता के द्वारा ही भक्षण होना चाहिए ॥ ३८ ॥

## कारणानुपूर्व्याच्च । ३९ ॥

शा० भा०–प्रथमं हि वषट्करणं निमित्तं होतुः । ततो होमोऽध्वर्योर्निमित्तम् । निमित्तानुपूर्व्याच्च नैमित्तिकानुपूर्व्ये क्रमानुरोधः ॥ ३९ ॥

त० वा०—यथानिमित्तं नैमित्तिकोपनिपातात् 'वषट्कृते जुहोति' इति प्रथमं होतृव्यापारो निमित्तं पश्चादध्वर्योर्होमः । ननु च तस्याप्यभिषवः प्रथमतरमासीत् । सत्यमासीत्, न तु तावतो निमित्तत्वमुभाभ्यां वा । न हि तयोर्धर्मशास्त्रमित्येवं सहितयोर्निमित्तत्वात् । यस्य च नाम 'होतुश्चित्पूर्वे हविराद्यमाशत' इत्येतस्माद्धोतुरेव केवलस्य प्रथमं भक्षभ्रान्तिस्तस्याप्येतेन सूत्रद्वयेन वषट्कर्तृमात्रे होतृशब्द इति प्रतिपादितं भवति ॥ ३९ ॥

( इति वषट्कर्तुः प्रथमं भक्षप्रतिपादनाधिकरणम् ॥ १३ ॥ )

भा० प्र०—होता के द्वारा प्रथम भक्षण में अन्य युक्ति का प्रदर्शन करते हुए कहा गया है "कारणानुपूर्व्यात् च" प्रथम में वषट्कार उच्चारण किया जाता है, बाद में होम किया जाता है, वषट्कार ही होता के भक्षण का निमित्त है एवं होम अध्वर्यु के भक्षण का कारण है, अतः, इस कारणानुगत क्रम के अनुसार ही वषट्कर्ता अर्थात् होता का ही भक्षण प्रथम प्राप्त है।

"कारणानुपूर्व्यात् च" = कारण की आनुपूर्वी के अनुसार भी होता का भक्षण प्रथम है ॥ ३९ ॥

इति तेरहवां वषट्कर्ता का प्रथमभक्ष प्रतिपादनाधिकरण ।

## [१४] वचनादज्ञातभक्षणम् ॥ ४० ॥ सि० ॥

शा० भा०—अथ य एकपात्रे सोमोऽनेकेन भक्ष्यते, किं तत्रानुज्ञाप्य, अननुज्ञाप्य वा भक्षयितव्यमुतानुज्ञाप्यैवेति । लाघवादनियमे प्राप्ते । उच्यते । अनुज्ञाप्य भक्षयितव्यमिति । कस्मात् । वचनात् । इदं वचनं भवति, तस्मात्सोमो नानुपहूतेन पेय इति । उपह्वानं चानुज्ञापनम् । प्राप्तिसूत्रमेतत् ॥ ४० ॥ क० भक्षस्य अनुज्ञापूर्वकत्वाधिकरणम् ॥ १४ ॥

त० वा०—'तस्मात्सोमो नानुपहूतेन' इत्येतस्यार्थकथनार्थमुत्तरविवक्षार्थं चैतत्सूत्रम् ॥ ४० ॥

( इति अनुज्ञापूर्वकं भक्षणाधिकरणम् । १४ ॥ )

भा० प्र०—एक ही पात्र में अवस्थित सोम का भक्षण करना होगा, ऐसी स्थिति अनुज्ञा अर्थात् पूर्वपानकर्ता की अनुमति लेकर परवर्ती व्यक्ति पान करेगा अथवा उसको अनुज्ञा नहीं लेनी होग—यही संशय है।

इस संशय में पूर्वपक्षी का कहना है कि अनुज्ञा एवं भक्षथ इन दोनों कर्मों के अनुष्ठान में पूर्वपक्षी यदि कहे कि अनुज्ञा एवं भक्षण इन दोनों कर्मों के अनुष्ठान में गौरव अर्थात् आधिक्य प्रत्यक्ष होने से अनुज्ञा नहीं लेनी होगी, ऐसी स्थिति में कहा जा सकता है कि "वचनात् अनुज्ञातभक्षणम्" = ऐसे स्थल में अनुज्ञा लेकर ही भक्षण करना होगा, क्योंकि "तस्मात् सोमो नानुपहुतेन प्रेयः" अर्थात् उपहुत अर्थात् अनुज्ञात न होकर सोमपान न करे, इस श्रुतिवचन में अनुमति लेकर ही कहा गया है।

"वचनात्" = श्रुतिवचन होने से, अनुज्ञातभक्षणम् = अनुज्ञात होकर भक्षण कर्तव्य है ॥ ४० ॥

इति चौदहवाँ अनुज्ञापूर्वक भक्षणाधिकरणम्।

**अथानुज्ञातेन भक्षयितव्यमिति स्थिते, किं लौकिकेन वचनेनानुज्ञापयितव्यमुत वैदिकेनेति। अनियमाल्लौकिकेनेति प्राप्ते, उच्यते—**

**[१५] तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात् ॥४१॥ सि० ॥**

**शा० भा०—अनुज्ञापनलिङ्गोऽयं मन्त्रः। लिङ्गात्। अनुज्ञापेन समाम्नातः, सामर्थ्याद्विनियुज्यते। तत्र कृतेऽर्थे लौकिको निवर्तते ॥ ४१ ॥**

**वैदिकवचनेनानुज्ञापनाधिकरणम् ॥ १५ ॥ सि० ॥**

त० वा०—तदुपह्वानं केन कर्तव्यमत आह—'उपहूत उपह्वयस्व' इत्यनेनेति। उभयोरनुज्ञाप्यानुज्ञापकयोर्व्यापारप्रदर्शनार्थं सकलोच्चारणम्। सर्वथा लौकिकेन तावन्न कर्तव्यमित्यर्थः ॥ ४१ ॥

( इति वैदिकमन्त्रेणानुज्ञापनाधिकरणम् ॥ १५ ॥ )

भा० प्र०—अनुज्ञा लेकर सोमभक्षण करने में क्या लौकिक वाक्य कहकर अनुमति लेनी होगी, अथवा वैदिक वाक्य का उच्चारण करना होगा ? इस प्रकार के संशय में पूर्वपक्षी का कहना है कि विशेष कोई नियम न रहने पर जिस किसी वाक्य का उच्चारण कर अनुज्ञा लिया जाता है, ऐसी स्थिति में कह सकते हैं—"उपहुते उपह्वयस्व इत्यनेन अनुज्ञापयेत्" = "उपहुतोः उपह्वयस्व" यह वैदिकमन्त्र कहकर अनुज्ञा लेनी होगी, कारण, उक्त वैदिक मन्त्र का इस प्रकार अर्थ व्यक्त करने का लिङ्ग अर्थात् सामर्थ्य है।

"तत् उपहुते उपह्वयस्व इत्यनेन अनुज्ञापयेत्" = उपहुतमें उपह्वयस्व" इस मन्त्र से अनुज्ञा लेनी होगी, "लिङ्गात्" = क्योंकि इसके उक्त अर्थ के प्रकाश का सामर्थ्य है ॥ ४१ ॥

इति पन्द्रहवाँ वैदिक मन्त्र के द्वारा अनुज्ञापनाधिकरण।

## [१६] तत्रार्थात्प्रतिवचनम् ॥ ४२ ॥ सि०

शा० भा०—एतदवगतं, तदुपहूत उपह्वयस्वेत्येतेनानुज्ञापयेदिति । अथ प्रतिवचने संदेहः । किं लौकिकं प्रतिवचनमुतैतदेवेति । किं प्राप्तम् । एतद्वैदिकं प्रश्ने विनियुक्तम् । लौकिकमन्यप्रतिवचनं भवितुमर्हति । एवं प्राप्ते ब्रूमः । तत्रैतदेव प्रतिवचनमिति ।

ननु प्रश्नलिङ्गमेतदुपह्वयस्वेति । उच्यते । यदस्य पूर्वमुपहूत इति प्रतिवचनस्य समर्थं तत्प्रतिवचनकार्यं भविष्यति । आह । विपरीतमेतत्समाम्नातम् । पूर्वं हि प्रश्नेन भवितव्यं, ततः प्रतिवचनेन । उच्यते । अर्थात्, पूर्वं प्रतिवचनकार्यं भविष्यति । अर्थो हि क्रमाद्बलीयानिति ॥ ४२ ॥ वैदिकवाक्येनप्रतिवचनाधिकरणम् ॥ १६ ॥

त० वा०—वदनमिति वा पाठः । समस्तमेव प्रश्नप्रतिवचनयोरेकत्र वा लौकिकः प्रयोग इति प्राप्तावुच्यते । अर्थक्रमेण पाठक्रमं बाधित्वोपहूत इत्येवमभ्यनुज्ञायां प्रयोक्तव्यः ॥ ४२ ॥

( इति वैदिकमन्त्रेणानुज्ञादानाधिकरणम् ॥ १६ ॥ )

भा० प्र०—पूर्व अधिकरण में कहा गया है कि वैदिक मन्त्र पाठ करके ही अनुज्ञा लेनी होगी । इसमें यह संशय है कि अनुज्ञा प्रार्थना में जो अनुज्ञा दी जायेगी, क्या वह लौकिक वाक्य से ही होगी या वैदिक वाक्य होगा ?

पूर्वपक्षी का कहना है कि यह मन्त्र जब अनुज्ञापन में विनियुक्त हुआ है तो अन्य मन्त्र के न रहने से लौकिक वचन से ही अनुज्ञा होगी ।

इसमें सिद्धान्ती का कहना है कि "तत्र अर्थात् प्रतिवचनम्" । यह जो उपहुत उपह्वयस्व" यह मन्त्र कहा गया है, इसमें अनुज्ञा और अनुज्ञापन दोनों ही प्रकार के अर्थ व्यक्त हो रहे है, यह सत्य है कि अनुज्ञापन प्रथम भावी है एवं अनुज्ञा पश्चात्-कालीन होने से मन्त्र में जो प्रकार क्रम है अर्थानुरोध से उसको अन्यथा कर "उपह्वयस्व" यह कहकर अनुज्ञापन एवं 'उपहुत' में यह कहकर अनुज्ञा होगी, कारण, पाठक्रम की अपेक्षा अर्थक्रम प्रबल होता है । यह पञ्चम अध्याय में कहा गया है ।

'तत्र' = उस स्थल में उस वचन में, 'अर्थात्' = अर्थ के अनुसार "प्रतिवचनम्" = प्रतिवचन अर्थात् उत्तर या अनुज्ञा होंगी ॥ ४२ ॥

इति सोलहवों वैदिकमन्त्र के द्वारा अनुज्ञादानाधिकरण ।

## (१७) तदेकपात्राणां समवायात् ॥ ४३ ॥ सि० ॥

शा० भा०—इदं सन्दिह्यते। किं वः कश्चिदनुज्ञापयितव्य उत समानपात्र इति। अविशेषाभिधानाद्यः कश्चिदिति प्राप्ते। उच्यते। तत्खल्वनुज्ञापनमेकपात्राणां स्यात्। कुतः। अनुज्ञापनमिहाङ्गम्। अनुज्ञापनस्य चैतद्रूपम्। यत्रान्येन कर्तव्यमन्यश्चिकीर्षेत्सोऽनुमन्यस्वेति ब्रूते, सहभोजनादि वाऽऽचरितुकामश्चित्तमन्यस्यानुकूलयति। तदेतन्नानापात्रेषु नैव संभवति। न हि तत्रान्येन कर्तव्यमन्यो वा चिकीर्षति। सहभोजनादौ वा पदार्थं संमानयति। एकपात्रे तु सोमे साधारणे संस्कर्तव्ये न्यायेन समो विभागः प्राप्नोति। तत्राविभज्य पीयमाने कदाचिदन्येन पातव्यमन्यः पिबेत्। तत्रानुज्ञापनं संभवति, त्वयाऽर्धं पातव्यम्, मयाऽर्धम्। कदाचिदहमभ्याधिकं न्यूनं वा पिबेयं, तदनुज्ञातुमर्हसीति। एकपात्रे वा पानं त्वया सहाऽऽचरन्नहं तव चित्तप्रसादानं व्याहन्यामिति संभवत्यनुज्ञापना। तस्मादेकपात्रेष्वेवैतत्स्यादिति ॥ ४३ ॥

एकपात्राणामनुज्ञापनाधिकरणम् ॥ १७ ॥

त० वा०—यद्येतदत्यन्तप्राप्तं विधीयेत ततो यतः कुतश्चित्प्रार्थ्येत। लौकिकमेव त्वेतन्नियम्यते। तस्य यादृशे विषये प्राप्तिः सा न निवार्यते। समानपात्राणां तु समं 'स्यादश्रुतत्वात्' इत्यनेन न्यायेन समविभागे सति वैषम्यप्रसक्तावनुज्ञाप्य कार्यम्। सत्यपि सोमेनानुच्छिष्टत्वे तत्कृते चादृष्टदोषाभावे प्रत्यक्षेणैव सहभोजनाद् व्यलीकोत्पत्तेरुपपत्तेरनुज्ञावसरो भवति। तस्मादेकपात्राणामिति ॥ ४३ ॥

( इति एकपात्राणामनुज्ञाप्य भक्षणाधिकरणम् ॥ १७ ॥ )

भा० प्र०—पान के स्थल में अनुज्ञा होगी, अथवा एक पात्र में जिनको पान करना होगा; उनमें ही अनुज्ञा होगी—यह संशय है। इसमें पूर्वपक्षी ने कहा है कि अदृष्ट (अपूर्व) की उत्पत्ति के लिए ही जब अनुज्ञा ग्रहण या अनुज्ञादान कर्तव्य है तब एकपात्र में पान या भिन्न पात्र में पान सभी स्थानों में अनुज्ञा आवश्यक है।

इसमें समाधान में सिद्धान्ती का कहना है कि "तदेकपात्राणां समवायात्" = एक ही पात्र में पान करने मे अनुज्ञा आवश्यक है, कारण, अदृष्ट की उत्पत्ति के लिए ही अनुज्ञा नहीं है, किन्तु, एक ही पात्र मे पान करने पर साधारण द्रव्य में पीछे के भाग का इतर-विशेष होता है, इसलिए न्यूनातिरेकजन्य अपराध के परिहार के लिए दूसरे का अनुमति ग्रहण करना आवश्यक है, क्योंकि उसमे न्यूनातिरेक जनित कोई नहीं होता है।

"तत्" = वह जो अनुज्ञापन वह, "एकपात्राणाम्" = जिनका पानपात्र अभिन्न है उनके मध्य में ही, "समवायात्" = क्योंकि, एक ही पात्र में भक्षण समवेत अर्थात् प्राप्त होता है ॥ ४३ ॥

इति सत्रहवाँ एकपात्र स्थल मे अनुज्ञा लेकर भक्षणाधिकरण ।

## (१८) याज्यापनये नापनीतो भक्षः प्रवरवत् ॥ ४४ ॥ पू०

**शा० भा०—अस्ति ज्योतिष्टोमः, तत्र ऋतुयागेषु श्रूयते, यजमानस्य याज्या, सोऽभिप्रेष्यति होतरेतद्यजेति, स्वयं वा निषद्य यजति, इति । यदा स्वयं यजति, तदा सन्देहः । किमस्य भक्षोऽस्ति नास्तीति । तदुच्यते । याज्यायामपनीयमानायां नापनीयेत भक्षणम् । होतुरेव तु भक्षणं स्यान्न यजमानस्येति । कुतः ? अन्या हि याज्या, अन्यद्भक्षणम् । न चान्यस्मिन्नपनीयमानेऽन्यदपनीयते । यथा तस्यामेव याज्यायामपनीयमानायां प्रवरो नापनीयते, तद्वदेतदपीति । याज्याया अधि वषट्करोति, इति, यत्र याज्या तत्र वषट्कारः । यत्र वषट्कारस्तत्र भक्षणमपीति । नेत्युच्यते । न तावद्याज्यायामवयवभूतो वषट्कारो, ( येन याज्याग्रहणेनासौ गृह्येत ) । यत्तु तस्या अधि वषट्करोति, इति । अन्येनापि प्रयुज्यमानाया उपरि होता वषट्करिष्यति । याज्यापनयो हि वचनात् । न वषट्कारापनयः । यावद्वचनं, वाचनिकं भवत्येव । वचनं हि तद्विषयमेव ॥ ४४ ॥ क० पूर्व० ॥**

त० वा०—ज्योतिष्टोमे ऋतुग्रहेज्यासु यजमानसप्तमानां याज्याप्रयोगार्थं वरणामाम्नातम् । तेषु यजमानस्य याज्या, तस्याश्च पक्षद्वयं विहितं होत्रं प्रत्यर्पणं स्वयं वोच्चारणम् । तत्र यदा स्वयं यजति तदा किं वषट्कारस्तन्निमित्तश्च भक्षोऽपनीयते नेति संदेहे, नापनयो वचनाभावात् । अन्यापनये च नान्यस्यापनयः । असंबन्धात् । याज्यामात्रस्य ह्यपनयनं श्रूयते न वषट्कारभक्षयोः । तस्माद्यथा याज्याया अपनये सत्यपि होतुर्वरणं नापनीयत तथा भक्षोऽपीति । ननु च यदा स्वयं यजते तदा नैवापनयो भवति 'यजमानस्य याज्या' इति वचनात् यदा तु सोऽभिप्रेष्यति तदाऽपनयोऽत एवं विचारयितव्यं किं याज्यापनये यजमानाद्भक्षोऽपनीयते नेति । उच्यते ।

याज्याभक्षवषट्काराः प्राप्ता होतुः समाख्यया ।
यजमानस्य याज्येति ततोऽपनयनं श्रुतम् ॥

होत्रसमाख्यया हि प्राक् 'यजमानस्य याज्या' इति ह्यतो वचनात्सर्वं होतुः प्रापितम् । तत्र वचनेन याज्यामात्रं यजमानसंबन्धि कृतं वषट्कारादयस्तु होतुस्तदवस्था एव । यदि पुनर्यजमानादपनय इति व्याख्यायेत ततस्तस्य

याज्यामात्रं प्रापितं सदपनीयत इति वषट्कारादिप्राप्त्यभावादपनयाशङ्कैव न स्यात्। तस्मात् 'यजमानस्य याज्या' इत्यनेन याज्यामात्रापनयाद्वषट्कारस्य च याज्यातोऽत्यन्तव्यतिरेकादङ्गाङ्गित्वाभावाच्च यजमानेन प्रयुज्यमानाया उपरि होता वषट्कृत्य भक्षयेत्। वषट्कारनिमित्तो हि भक्षो न याज्यानिमित्त इत्यनपनीतः ॥ ४४ ॥

भा० प्र०—ज्योतिष्टोम प्रकरण में ऋतुयाज नाम के याग के प्रसङ्ग में श्रुति में कहा गया है "यजमानस्य याज्या। सोऽतिप्रेष्यति होतरेतद् यजेति। स्वयं वा निषद्य यजति"। अर्थात् जो याज्या = याग के समय पाठ्य मन्त्र विशेष श्रुति मे हौत्र काण्ड में पढ़े गये है, ये होता के पाठ्य है। उन श्रुतियों मे कतिपय याज्या विशेष वचन हैं वे होता के नहीं हैं वरन् याग कर्ता के ही पाठ्य है। तब यजमान की इच्छा करने पर वह स्वयं पाठकर सकते हैं, अथवा होता को उस पाठ मे लिए नियुक्त कर सकते हैं, अतः, यजमान जिस समय स्वयं पाठ करते हैं; तब होता को पाठ रहित होना पड़ेगा इसमें यह संशय है कि ऐसे स्थल में होता को याज्या पाठरहित होने पर भी उसका वषट्कार उच्चारण एवं होमभक्षण रहित होगा या नहीं ? इसमें पूर्वपक्षी का कहना है कि "याज्यापनये प्रवरवत् भक्षः न अपनीतः" = एतादृश स्थल में होता को याज्या पाठबद्ध होने पर भी उसका वरण बद्ध न हो, इसलिए, होता को याज्या पाठ रहित होने पर भी उसका वषट्कार का उच्चारण एवं सोमभक्षण बाघ नहीं होता है।

"याज्यापानये" = याज्या का अपनय होने पर अर्थात् होता के याज्या वाठ रहित होने पर "भक्षः न अपनीतः" भक्ष अर्थात् होता का सोमपान भक्षण अपनीत नहीं हो सकता है, अर्थात् रहित नहीं होगा "प्रवरवत्"=वरण के समान ॥ ४४ ॥

इति पूर्वपक्ष।

## यष्टुर्वा कारणागमात् ॥ ४५ ॥ सि० ॥

शा० भा०—यष्टुर्वा भक्षः स्यात्। कुतः ? कारणागमात्। भक्षस्य कारणं वषट्कारः। स च याज्यायामागच्छन्त्यामागच्छति। एवं हि श्रूयते, याज्याया अधि वषट्करोति, इति। नन्वेतदुक्तं, यजमानेनापि प्रयुज्यमानाया अपि होता वषट्करोतीति। नैष समाधिः। अनवानता यष्टव्यं, वषट्कारेण यागः क्रियते, न याज्यामात्रेण। तस्मादावषट्कारान्नावानितव्यं यजमानेन। अन्यश्चेद्वषट्कुर्यादवान्याद्यजमानः। न च यजेत। यष्टव्ये चासौ चोद्यते तां न याज्यामात्रवचने। स्वयं निषद्य यजति, इति साङ्गस्य निषद्ययागे विधानात् ॥ ४५ ॥ क० सि० ॥

त० वा०—यदि 'यजमानस्य याज्या' इत्येतावन्मात्रमेव श्रूयेत ततः कदाचिन्नापनीयेत भक्षः। इह त्वेवं श्रूयते 'स्वयं निषद्य यजति' इति। वषट्कारेण

च हविःप्रदानार्थत्वादिज्यते न केवलया याज्यया। तच्च 'अनवानं यजति' इति याज्यात आरभ्य यावद्यजतेरर्थः समाप्यते तावन्नावानितव्यम्। एककर्तृकत्वे च याज्यावषट्कारयोरिदमुपपद्यते नान्यथा। तस्माद्यत्र याज्या तत्र वषट्कार-भक्षावपीत्यन्तरेणाप्येकत्वभङ्गभावं चापनयो विज्ञायते ॥ ४५ ॥

भा० प्र०—पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "यष्टुर्वा" यजमान का ही भक्षण होगा, क्योंकि "कारणागमात्" भक्षण के कारण आगत होता है। होता के भक्षण का कारण वषट्कार होता है। "याज्याया अधि वषट् करोति" अर्थात् याज्या के बाद ही वषट्कार का उच्चारण को एवं निःश्वास न करते हुए याग करें, इन श्रुति वाक्यों में याज्या और वषट्कार के मध्य मे श्वास परित्याग का निषेध किया गया है, अतः जिसके पक्ष में याज्या पाठ्य है, उसी के पक्ष मे वषट्कार का उच्चारण कर्तव्य है—इस रूप में उपदिष्ट है। याज्या यजमान का ही पाठ्य है, इसीलिए, उसी के पक्ष में वषट्कार उच्चारणीय हे। अतः, वषट्कार भक्षण के लिए हेतु होकर जब वषट्कार का उच्चारण करता है, तब उसी का भक्षणकारण उपस्थित होकर भक्षण कर्तव्य है। अन्य पक्ष मे होता के वषट्कार रहित हो जाने से भक्षण का कारण न होने से भक्षण भी नहीं हो सकता है।

"यष्टुर्वा" = यागकर्ता यजमान का ही भक्षण कर्तव्य होने से "कारणागमात्" = क्योंकि, भक्ष के कारण जो वषट्कार है उसका आगम अर्थात् प्राप्ति होती है ॥ ४५ ॥

इति सिद्धान्त।

**प्रवृत्तत्वात्प्रवरस्यानपायः ॥ ४६ ॥**

**शा० भा०—अथ यदुक्तं, यथा प्रवरो नापनीयत एवं भक्षोऽपीति। उच्यते। अशक्यत्वात्। प्रवरो नापनीयते। अतिक्रान्तो हि स कथमपनीयेत होतुः। भ्रष्टे चावसरेऽनुष्ठीयमानो यजमानस्य विगुणः स्यात्। न च विगुणः कथंचिदर्थं साधयेत्। नात्र चोदकेन प्राप्नोति। अथोच्येत, यच्छक्यं तच्चोदकेन प्रापितं, यन्न शक्यं न तत्प्रापितमिति। प्रकृतिरियम्। अपूर्वस्यात्र विधानं, यादृशमुक्तं, तादृशं यदि शक्यते कर्तव्यम्। यदि न शक्यते, यत्रैव शक्यते तत्रैव कार्यम्। न यत्र विगुणमिति। तस्मात्प्रवरस्यानपायी युक्तो न भक्षस्येति ॥४६॥ क० आ० नि० ॥ स्वयंयष्टुर्भक्षास्तिताधिकरणम् ॥ १८ ॥**

त० वा०—यत्तु प्रवरवदिति। तत्रोच्यते।

प्रवरो न त्वतिक्रान्तो याज्याकालेऽपनीयते।
भक्षणस्य तु भावित्वाच्छक्याऽपनयकल्पना ॥

तन्नाम निमित्तापनयादपनीयते यदपनेतुं शक्यते, अन्यत्र च योजयितुम्। न च प्रवरस्य याज्यापनयवेलायां होतुरपनयनं शक्यम्। नापि यजमानेऽतिक्रान्तकालस्य करणात्सगुणं वरणम्। भक्षस्य तु द्वयमपि शक्यं, तस्मादिह दृष्टान्तवैषम्यम्। इदं[1] त्विह वक्तव्यम्। किमिति प्रवरापनयो शक्यते, तदा सर्ववैकल्पिकान्यादित एवान्यतरतोऽवधार्य प्रयोग आरभ्यते। शक्यं हि प्रवरवेलायामेव निश्चेतुं किं यजमानो याज्यां वक्ष्यति, उत होतेति। यथा निश्चिते चान्यतरस्य वरणं करिष्यते। यदि ह्योतद्याज्यावचनमुरुक्रमविष्णुयागवन्नैमित्तिकं भवेत्ततः प्राङ् निमित्तोपजननादनवधृतसद्भावं सन्न कारयेदपि प्रवरणम्। नित्यं चैतच्छक्नोति प्रथममेव स्वानुसारि वरणं नियन्तुम्। यदपि होतुर्न शक्यमपनेतुम्। कथमेतद्धोतुरपनीयेत, यदा तस्याऽऽत्मीययाज्यार्थंवमश्यकर्तव्यमेवेति। न किंचिदेतदर्थं पृथग्वरणं यस्यापनय आशङ्क्येत। शक्यं हि याज्यासहस्रार्थमपि तन्त्रेणैकमेव वरणं कर्तुमदृष्टार्थं च। अतः समस्तज्योतिष्टोमप्रयोगार्थं प्रथममेव वृते सति क्रियत इति, अगृह्यमाणविशेषत्वादपि तन्त्रम्। यदपि यजमानस्य भ्रष्टावसरं क्रियमाणं विगुणं भवतीति तदपि 'गुणलोपे च मुख्यस्य' इत्यनेन विरुद्धम्। न च तत्र प्रकृतिविकृत्योः कश्चित्प्रयोगविशेषो भवति। यदपि यथाश्रुतमेव प्रकृतौ कर्तव्यमिति। तत्सर्वशक्त्यधिकरणेन विरुद्धम्। शक्यमेव यथाकालं संपादयितुमित्युक्तम्। अत एवं सूत्रं नेतव्यं कारणान्तरेणैतत्प्रसिद्धिमङ्गीकृत्य नान्यस्यापनयेऽन्यस्यापनय इत्येतावता पूर्वमुदाहृतम्। इदानीं तु ब्रवीति 'प्रवृत्तत्वात्प्रवरस्यानपायः' याज्यान्तरार्थं प्रवृत्तत्वादित्यभिप्रायः। तेन यजमानोऽपि यदि वक्ष्यति यदि च प्रेष्यति तथाऽपीतरार्थं भवितव्यमेव प्रवरणेन एतावता तु वैषम्यं यदि च वषट्कारभक्षवदेतद्याज्यानुसारं प्रतिपद्यत इति ॥ ४६ ॥

( इति यजमानस्य वषट्कारभक्षप्रतिपादनाधिकरणम् ॥ १८ ॥ )

भा० प्र०—पूर्वपक्षी ने जो वरण का दृष्टान्त दिया है, इसके उत्तर में कहा गया है "प्रवृत्तत्वात् प्रवरस्य अनपायः" यागीय याज्या के पाठ के लिए ही पूर्व से होता का वरण किया गया है, अतः, विशेषवचन के बल से कतिपय याज्या रहित होने पर भी अन्य याज्या पाठ के लिए होता का पूर्व से ही वरण किया गया है। इसलिए, उसको

---

१. एवं तावद्यथाभाष्यं व्याख्यायाधुनाऽन्यथा व्याचिख्यासुरादौ भाष्यं तावदाक्षिपति—इदं त्विहेत्यादिना। उरुक्रमविष्णुयागवदिति—। वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान्। तं बर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेत्, इदमहममुं चामुं च व्यूहामीति। यं द्विष्यात्तं ध्यायेत्। यदधोऽत्रमूर्धेद्यच्च स्फ्य आश्लिष्येत्, तद्विष्णाव उरुक्रमायायवद्यति' इति वाक्येन, अधोवमर्दनस्फ्याश्लेषयोर्निमित्ते विधीयमानोरुक्रमविष्णुयामवदित्यर्थः।

अन्यथा नहीं किया जा सकता है, इसी लिए क्रतुयाज्य मे याज्या पाठ न रहने पर भी वरण किया गया है, अतः, होता के द्वारा सोमभक्षण किया जायेगा—इसी प्रकार वचन सार्थक होगा।

"प्रवृत्तत्वात्" = प्रवृत्त अर्थात् अन्य कर्म के लिए प्रथम में ही कृत होने से "प्रवरस्य अनपायः" = प्रवर का अपाय नहीं होगा अर्थात् वरण रहित नहीं हो सकता है ॥ ४६ ॥

इति अठारहवाँ यजमान का वषट्कार भक्षप्रतिपादनाधिकरण ॥

## [१९] फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ ४७ ॥ पू०

**शा० भा०—ज्योतिष्टोमे श्रूयते–स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्, इति। तत्र संदेहः। किं फलचमसो भक्षविकार उत इज्याविकार इति। किं फलचमसं भक्षयेदित्यर्थं उत फलचमसेन यजेतेति। किं प्राप्तम्। फलचमसो नैमित्तिको भक्षविकारः। भक्षणेन हि श्रुतेनैकवाक्यता भवतीति। तमस्मै भक्षं प्रयच्छेदिति, न तेन यजेतेतिशब्दोऽस्ति। तस्माद्भक्षविकारः ॥ ४७ ॥ क० पूर्व० ॥**

त० वा०—योऽयं ज्योतिष्टोमे राजन्येन वैश्येन च निमित्तेन नैमित्तिकः फलचमसः श्रूयते, न्यग्रोधस्तिभीः—न्यग्रोधाङ्कुरान् न्यग्रोधफलानि वा, ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत्, इति। स किं भक्षविकार उतेज्याविकार इति संदेहे, विभक्षयिषेदिति श्रुतिसंयोगात्तमिति प्रकृतग्राहिश्रुतिसंयोगात्पुनरपि भक्षश्रुतिसंयोगादानन्तर्यश्रुतेः समानवाक्योपादानाच्च भक्षो भूत्वा तत्समानस्थानं भक्षगतमेव सोमं विकुर्यान्न यागगतम्। न ह्यन्यत्र श्रुतमन्यविषयस्य बाधने समर्थम्। यागसंबन्धश्चास्य प्रकरणाद्विज्ञायते। तच्च दुर्बलम्। एवं चोत्पत्तिवाक्यशिष्टः सोमो यागादर्थकर्मणो न निवर्तिष्यते। प्रतिपत्तिबाधे तु विनाऽपि तावच्छ्रुत्या मन्दोऽपराधः किमुत श्रुतावेव सत्याम्। तस्माद्भक्षविकारः ॥ ४७ ॥

भा० प्र०—यदि राजन्य अर्थात् क्षत्रिय या वैश्य ज्योतिष्टोम याग करता है तो उनके लिए श्रुति में कहा गया है कि "स यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं विभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्युमृज्य तमस्मै भक्षं प्रयच्छेत् न सोमं" अर्थात् यदि राजन्यया वैश्य यज्ञ करते है तो वह राजन्य या वैश्य सोमभक्षण की इच्छा करते हैं तो कुछ न्यग्रोधस्तिमिनी अर्थात् वट के फल के मुकुल का संग्रह कर

उसके द्वारा बढ़ाकर सिक्त कर उसको खाना होगा, किन्तु, सोम भक्षण नहीं करने दें यह जो नैमित्तिक फल-चमस क्या यह भक्षविकार अर्थात् भक्षण के लिए अथवा यह याग का विकार अर्थात् याग के लिए है—यह संशय है।

इस संशय में पूर्वपक्षी का कहना है कि "नैमित्तिकं फलचमसः भक्षविकारः', अर्थात् यह जो नेमित्तिक फलचमस है, वह भक्षण के लिए ही उपदिष्ट है, याग के लिए नहीं। कारण, "श्रुतिसंयोगात्" = श्रुतिवाक्य में जो भक्षण कहा गया है उसके साथ इसका सम्बन्ध करने पर ही एकवाक्यता होगी। क्योंकि, श्रुति में कहा गया है कि भक्षण करने की जो इच्छा करेगा, उसको यह भक्षण देना चाहिए। अतः, भक्षण के साथ सम्बन्ध होने से यह याग के लिए नहीं हो सकता, अतएव यह नेमित्तिक फलचमस भक्षविकार है। इसको नैमित्तिक कहने का कारण यह है कि राजन्य या वैश्य ही इस प्रकार फलचमस के निमित्त हैं।

"नैमित्तिकः फलचमसः" = नैमित्तिल फलचमस अर्थात् राजन्य आदि के यागकर्ता होने पर तन्निमित्तक जो फलचमस वह "भक्षाधिकारः" = भक्षणप्रयुक्त अर्थात् भक्षण के लिए होगा, "श्रुतिसंयोगात्" = क्योंकि श्रुति में भक्षण के साथ ही फलचमस का संयोग अर्थात् सम्बोध कहा गया है। ॥ ४७ ॥

इति पूर्वपक्ष।

## इज्याविकारो वा संस्कारस्य तदर्थत्वात् ॥ ४८ ॥ सि० ॥

शा० भा०—इज्याविकारो वा फलचमसः। फलचमसेन यजेतेत्यर्थः। कथम्? यदेतद्भक्षणम्, एतत्सोमसंस्कारार्थं, फलचमसस्यापि यदि भक्षणं फलचमससंस्कारार्थं फलचमसस्यान्यत्रानुपयोगादनर्थकम्। अथ भक्षणं प्रधानम्। तथा न सोमम्, इत्यनुवादो नावकल्पते। यदि त्विज्याकारो भवेत्ततः फलचमससंस्कारोऽवकल्पते। तस्मादिज्याधिकारः। आह। कथं यजिसंबन्धेऽसति, इज्याविकारो भविष्यतीति। उच्यते। अस्ति यजिसंबन्धः। कथमिति यदि राजन्यं वैश्यं वा याजयेत्, न्यग्रोधस्तिभीः संपिष्य तमस्मै भक्षं प्रयच्छेत्, याजयितुमिति गम्यते। भक्षसंबन्धे हि न पूर्वमुत्तरेण संवध्यते। यदि सोमं भक्षणेन संस्कर्तुमिच्छेन्न्यग्रोधस्तिभीः संस्कुर्यादिति। तस्मान्न भक्षणसंबन्धः। यागो हि प्रकृतोऽस्ति, तेन सह संभन्त्स्यते, न दोषो भविष्यति। ननु, तमस्मै भक्षं प्रयच्छेत्, इति वचनाद्भक्षसाधनमिति गम्यते न यागसाधनमिति। भक्ष शब्दानन्तर्यात्। उच्यते। श्रूयमाणे संबन्धेऽनर्थकमिति कृत्वा प्रकृतसंबन्ध इत्युच्यते। कथं तु भक्षसंबन्ध इति। यदि यागद्रव्यं भक्षयितव्यं तच्चोदकेन भवति, तस्माद्भक्षसंबन्धं लभते, भक्षसंबन्धेन च यागसंबन्ध एव लक्ष्यते। यदि

**तेनेज्यते ततः स भक्षो भवति तस्माद्भक्षवचनात्सुतरां तेनेज्यत इति गम्यते। सैषा व्यवधारणकल्पना। तमस्मै भक्षं प्रयच्छेत्—तमस्मै भक्षं कुर्यादित्यर्थः। यथा स भक्षो भवति, तथा कुर्यादिति' यदि च तेनेज्यते, ततोऽयं भक्षो भवति। तस्मात्तेन यष्टव्यमिति॥ ४८॥ क० सि०॥**

त० वा०—लिङ्गदर्शनेन तावद्भाष्यकार उपक्रमते। सति हीज्याविकारत्वे सौमिकभक्षसंबन्धोऽस्य लभ्यते। ततश्च तत्स्थानापत्त्या निराकृतत्वात्। 'न गिरागिरेति ब्रूयात्' इतिवत् 'न सोमम्' इत्यनुवादः सेत्स्यति। लिङ्गं त्वेतन्नासत्यां यागसम्बन्धप्राप्तै साधकमिति मन्यमान आह। **कथमसति यजिसंबन्धे** तद्विकारत्वमिति। इतरस्तु दर्शयति। 'स यदि राजन्यं वैश्यं वा याजयेत्' न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दध्नन्युन्मृज्य ताभिर्याजयेदिति संबध्यते। न ह्यवश्यं परत्रैव श्रुतेनाऽऽख्यातेन सह संबन्धो भवति। न च पाठापेक्षया पूर्वकालत्वं क्त्वाशब्देनोच्यते। भवति हि गच्छति। भुक्त्वेत्येति गमनमपेक्ष्य भोजनस्य पूर्वकालत्वम्। अतो वाक्येनैव यजिसंबन्धः। सत्यपि याजयतिसंबन्धे यजिसंबन्ध एवायं द्रष्टव्यो 'ग्रामकामं याजयेत्' इतिवत्। अङ्गकर्तुः प्राप्तत्वादेव निष्फलत्वेन चानुपदेश्यत्वात्। एवं च सति 'तमस्मै भक्षम्' इति न सोमम्' इति चोभयमपि प्राप्तमनुवदिष्यते। न त्वेषा योजनाऽत्रकल्पते। कथम्।

व्यवधानामित्यस्य बाधादविधिशक्तितः।
निमित्तत्वोपयुक्तस्य पुनश्च विधिकल्पना॥

तृतीयार्थश्च कल्प्यः स्याद् द्वितीयार्थस्य बाधनम्।
समस्तसोमबाधश्च यजिनिष्कर्षकल्पना॥

'स यदि सोमं विभक्षयिषेत्" इत्येतद्व्यवधाने सति याजयतिसंबन्धः कल्पयितव्यः 'तमस्मै' इति च सर्वनाम्नः श्रुत्येव प्रकृतग्रहणसामर्थ्यमानन्तर्यं च बाध्येयाताम्। 'स यदि राजन्यं वैश्यं वा याजयेत्' इत्यस्य यदिशब्दसंबन्धादुपहतविधिशक्तिर्न फलचमससंयोगं विधत्ते। निमित्तत्वेन चोपयोगे सति निराकाङ्क्षीभूतस्य सतः पुनरत्यन्तविपरीतं विधित्वं कल्पनीयम्। ताभिर्याजयेदिति चात्यन्ताश्रुततृतीयार्थः कल्प्येत। तमस्मा इति च प्राधान्येन निर्देशोऽवगम्यमानोऽपह्नूयेत। प्रयच्छेदिति चानन्यपरे विस्पष्टे विधौ सति नानुवादत्वाङ्गीकरणं युक्तम्। न च याजयतिशब्दादुपसर्जनीभूतं यजिं निष्कृष्य फलचमससंबन्धो युक्तः। सर्वेण च ज्योतिष्टोमेन संबन्धात्समस्तं सोमं बाधित्वा तेनैव यागः क्रियेत सर्वं विरुद्धं चैतत्। भाष्यकारोऽपि याजयितुमिति गम्यत इत्याह, न याजयेदित्यनेन संबन्धम्। सूत्रकारोऽपि च 'संस्कारस्य तदर्थत्वात्'। इति हेतुमाह, न याजयतिसंबन्धादिति। तस्मादयुक्तमेतत्। अन्ये तु यागो हि प्रकृतोऽ-

स्तीत्यतो वचनाद्यागसंबन्धानवक्लृप्तिं मन्यमानास्तमस्मै प्रयच्छेदित्कमर्थं प्रकरणाद्याज्ययितुमिति गम्यत इति वर्णयन्ति। तेषामपि तु समस्तसोमविकारत्वं तच्छब्दोपनीतस्ववाक्यावगतभक्षसंबन्धबाधस्तमिति च पुल्लिङ्गनिर्देशो न घटते। भक्षव्यवहितेन च प्रयच्छेदित्याख्यातेन संबन्धः। तस्माद्भक्षसंयोगापरित्यागेनैव सिद्धान्तोऽपि व्याख्येयः। कथम्।

अपूर्वो वैष चोद्येत भक्षः प्रकृत एव वा।
संस्कारोऽर्थक्रिया न स्यात्संस्कारो यागसाधनम्॥

यदि तावदपूर्व एव भक्षश्चोद्यते ततोऽप्याराादुपकारकत्वं न भवति। अदृष्टकल्पनात्प्रकरणविनियोगविप्रकर्षादसंबद्धोपकारित्वाच्च। तथा तं प्रयच्छेदिति द्वितीयया विस्पष्टं संस्कार्यत्वं गम्यते। अन्यथा हि तेनेति प्राप्नोति। तस्मात्संस्कारः। संस्कारस्य चैष स्वभावो यदुपयुक्तमप्रयोक्ष्यमाणं वा द्रव्यमवलम्बते। तत्रापि भक्षितस्य पुनरुपयोगासंभवादुपयुक्तसंस्कारत्वमेव ज्ञायते। तेन फलचमसः संस्कारभूतं भक्षमुपसर्पन्नेव शक्यो नियोक्तुं यदि क्वचिदुपयोगं गच्छसि ततो भक्षणेन संस्क्रियसे नान्यथेति। स चोपयुज्यमानत्वं प्रार्थयमानः प्रकरणाद्यागोपयोगित्वं प्रतिपद्यते। तत्रापि यावत्यनुपयुज्यमानो यजमानभक्षसंस्कार्यत्वं न प्रतिपद्यते तावतैव यज्ञभागेनार्थापत्त्या। संबध्यत इत्यवधारणाद्यजमानचमसाभ्यासनैवैकेन संबध्यते। न हि ग्रहचमसान्तरेष्वनुपयुज्यमानस्यास्य यजमानभक्षत्वमनुपपन्नम्। अतः सोमोऽप्यनुग्रहीष्यते। यद्वा ज्योतिष्टोमप्रकरणेन संबद्धोऽयं भक्षशब्द उच्चार्यमाणः प्रकृतं सोमभक्षमेवावलम्बते। स च यागोपयुक्तद्रव्यशेषसंस्कारत्वेन प्रज्ञात इति फलचमसमपि तादृशमेव संस्कर्तुं शक्नोति। न त्वसाविदानीमन्यप्रयोजनः शक्यः कल्पयितुम्। न च तस्य कर्मान्तरत्वे किंचिच्छब्दान्तरादि कारणमस्ति। अपि च 'स यदि सोमं विभक्षयिषेत्' इति स्ववाक्योपात्तेनैव सोमभक्षणेन संबन्धो विज्ञायते। अन्यथा हि तदुपादानं व्यर्थमेव स्यात्। न च 'न सोमम्' इत्यनुवादोऽवकल्पते। यदि भक्षान्तरमेवेदमारादुपकारकं चोद्येत ततः समानकार्यत्वाभावान्नैव सोमं निवर्तयेत्। अनिवर्तिते च तस्मिन्न प्रतिषेधानुवादः स्यात्। न च विधिर्युक्तः। वाक्यभेदानेकादृष्टकल्पनाप्रसङ्गात्। असंबद्धं च वाक्यं भवेत्, यदि सोमं भक्षणेन संस्कर्तुमिच्छेत्ततः फलचमसभक्षणमारादुपकारकं कुर्यात्फलचमसं वा संस्कुर्यादिति। यदा त्वयमर्थो गृह्यते, येन भक्षणेन यथाभूतं सोमं संस्कर्तुमिच्छेत्तेन तथाभूतमेव फलचमसं संस्कुर्यादिति, तदाऽर्थापत्त्या यजमानचमसयागाभ्यामसंबन्धः कृतो भवति। तस्मादिज्यायामयं सोमविकार इति सिद्धम्। सैषा व्यवधारणकल्पनेति। यथैवाश्वप्रतिग्रहेष्ट्यां 'यावतोऽश्वान्प्रतिगृह्णीयात्, इति श्रुते प्रतिग्राह्येदिदित व्यवधार्य

कल्पितं तथैवात्र 'भक्षं प्रयच्छेत्' इति श्रुते यागसाधनं प्रयच्छेदिति कल्प्यते। एतेन 'पूतीकानभिषुणुयात्' इत्यादीनि व्याख्यातानि ॥ ४८ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "इज्याविकारः" = यह याग का ही विकार है, कारण, "संस्काराच्च तदर्थत्वात् = संस्कार यागार्थ होता है। अभिप्राय यह है कि पूर्वपक्षी ने जो भक्षविकार कहा है—वह सङ्गत नहीं है, कारण, भक्षण पुरुषार्थ होने से वह विधि का विषय नहीं हो सकता है। इसलिए, यह कहना होगा कि यह याग का शेष है—यह भक्षण प्रतिपत्तिकर्म होने से इसके द्वारा याग का ही संस्कार होता है, अन्यथा, यागप्रकरण में इसका कथन निरर्थक हो जाएगा।

"इज्याविकारः" = यह याग का ही विकार है, "वा" पूर्वपक्ष के निरास के लिए है, "संस्कारस्य तदर्थत्वात्" = क्योंकि यह प्रतिपत्ति कर्मरूप संस्कार है एवं संस्कार याग के लिए ही होता है॥ ४८ ॥

इति सिद्धान्त।

## होमात् ॥ ४९ ॥

शा० भा०—होमविशेषवचनं भवति, यदाऽन्यांश्चतमसाञ्जुह्वति। अथैतस्य दर्भतरुणकेनोपहत्य जुहोति, इति। इज्याविकारे सति दर्भतरुणकेनेति जुहोतौ गुणवचनमवकल्पते। तस्मादपीज्याविकारः ॥ ४९ ॥

त० वा०—होमानुवादेन दर्भतरुणकविधिरिज्याविकारत्वेऽवकल्पते ॥ ४९ ॥

भा० प्र०—फलचमस जो भक्षणार्थ नहीं है, किन्तु यागार्थ है, इसके अन्य भी कारण हैं "होमात्" = फलचमस का होम किया जाता है, अतः, वह भक्षण के लिए विहित नहीं हो सकता है, किन्तु याग के लिए ही वह उपदिष्ट है। क्योंकि याग के मध्य में ही होम करने का विधान है और "यहाँ अन्यांश्चमसान् जुह्वति, अथैतस्य दर्भतरुणकेनोपहत्य-जुह्वति" इस अर्थ में फलचमस के होम का अनुवाद कर उसमें दर्भतरुणक नाम के फल का विधान किया गया है। इसमें यह अवगत होता है कि फलचमस का होम है।

"होमात्" होम है, अर्थात् उसका होम करना होगा इसलिए फलचमस यागार्थ है ॥४९ ॥

## चमसैश्च तुल्यकालत्वात् ॥ ५० ॥

शा० भा०—यदाऽन्यांश्चामसानन्नुन्नयन्ति, अथैनं चमसमुन्नयन्ति, इति। इज्याविकारे सति, उन्नयनदर्शनं युज्यते, न भक्षविकारे। तस्मादपीज्याविकारः ॥ ५० ॥

त० वा०—संदिग्धयागसाधनोन्नयनैकवाक्यता चैतत्तुल्यत्वेऽवकल्पते नान्यथात्वे ॥ ५० ॥

भा० प्र०—यह याग का ही विकार है, इसमें अन्य भी कारण है—"चमसैश्च तुल्यकालत्वात्" = श्रुति में कहा गया है कि जिस समय अन्य चमस की आहुति देनी पड़ेगी, उस समय इस फलचमस को उन्नीत अर्थात् ऊपर उठा कर करना होगा। इस प्रकार अन्य चमस को उन्नयन के साथ ही फलचमस का उन्नयन तभी सम्भव है, यदि यह याग का विकार हो, अन्यथा नहीं, इसलिए भी वह भक्षणार्थक नहीं है।

"चमसैः" = अन्य चमसों के साथ, "च" = और भी, "तुल्यकालत्वात्" = तुल्य कालत्व अर्थात् उन्नयन की समकालता होने से ॥ ५० ॥

## लिङ्गदर्शनाच्च ॥ ५१ ॥

शा० भा०—इतश्च पश्याम इज्याविकार इति। कुतः। लिङ्गदर्शनात्। किं लिङ्गं भवति। सोमप्रतिषेधानुवादः। तमस्मै भक्षं प्रयच्छेन्न सोमम्, इति। इज्याविकारे सति सोमो न भक्ष्यते। तस्मात्पश्याम इज्याविकार इति ॥ ५१ ॥
क० हेतुः ॥ फलचमसस्य इज्याविकारताधिकरणम् ॥ १९ ॥

त० वा०—सोमप्रतिषेधानुवादश्च लिङ्गमिति व्याख्यातम् ॥ ५१ ॥

( इति फलचमसाधिकरणम् ॥ १९ ॥ )

भा० प्र०—फल चमस भक्षण के लिए नहीं है, किन्तु याग के लिए है, इसके लिए अन्य कारण भी हैं। "लिङ्गदर्शनात् च"—श्रुति में कहा गया है कि "तमस्मै भक्षं प्रयच्छेत् न सोमम्" उसको यह न्यग्रोधस्तिमिनी भक्षरूव दे, किन्तु सोम नहीं दे। इससे यह अवगत होता है न्यग्रोधस्तस्मिनीरूप भक्षसोम के बदले दिया जाय। अतः सोम स्थानीय होता है। सोम के हुत शेष भी भक्षण करने की विधि होने से सोम जैसे भक्षणार्थक नहीं है किन्तु यागार्थक = फलचमस भी उसी प्रकार भक्षणार्थक नहीं है किन्तु यागार्थक है। यह जो भक्षण है वही प्रतिपत्ति कर्म है।

"लिङ्गदर्शनात् च" = लिङ्ग अर्थात् ज्ञापक वेदवचन दृष्ट होने से भी फलचमस भक्षणार्थक नहीं है अपितु यागार्थक है ॥ ५१ ॥

इति उन्नीसवाँ फलचमसाधिकरण।

## ( २० ) अनुप्रसर्पिषु सामान्यात् ॥ ५२ ॥ पू०

शा० भा०—अस्ति राजसूये दशपेयः, तत्र श्रूयते। शतं ब्राह्मणाः सोमान्भक्षयन्ति, दशदशैकैकं चमसमनुप्रसर्पन्ति, इति। अत्र राजन्यचमसे संदेहः किं तं राजन्या अनुप्रसर्पेयुरुत ब्राह्मणा इति। किं प्राप्तम्। राजन्या इति। कथम्।

दश दशैकैकं चमसमनुप्रसर्पेयुरिति, अनुप्रसर्पतां संख्या विधीयते। एकस्यां राजन्यजातौ दशसंख्या विधीयते। राजन्यजातिः सैव। तेन तं दश राजन्या अनुप्रसर्पेयुः। एवं शतं ब्राह्मणा राजन्याश्च। तेषु शतशब्दोऽनुवादः। अनुवादसरूपश्च, शतं भक्षयन्तीति। तस्माद्राजन्या राजन्यचमसमनुप्रसर्पेयुरिति। केचिदाहुः। ब्राह्मणराजन्यानामेकस्मिश्चमसे भक्षणं विरुध्यत इति। न स दोषः। न हि सोमेनोच्छिष्टा भवन्तीति श्रूयते॥ ५२॥ क० पूर्व०॥

त० वा०—दशपेये 'शतं ब्राह्मणाः सोमान् भक्षयन्ति। दश दशैकैकं चमसमनुप्रसर्पेयुः' इति। तत्र राजन्यचमसोऽपि किं ब्राह्मणैरेव दशभिर्भक्षयितव्य उत राजन्यैरिति संदेहः। कः पुनः संदेहहेतुः। केचिदाहुः। वचनव्यक्तिभेद इति। यदि हि दश दशैकैकमिति विधिस्ततस्तुल्यजातीयेषु सर्वत्र विहितेषु 'शतं ब्राह्मणाः 'इति यथाप्राप्तानुवादो ब्राह्मणग्रामवद्भूम्ना भवतीति राजन्या दश। अथ पुनः 'शतं ब्राह्मणाः' इति विधिः 'दश दशैकैकम्' इत्यनुवादस्ततो विधौ गौणत्वासंभवात्सर्वत्र ब्राह्मणैरेव भक्षयितव्यमिति ब्राह्मणा दश किं तावत्प्राप्तम्, अनुप्रसर्पेयुरित्यस्य विधिसामर्थ्याद्भक्षयन्तीति चानुवादसामर्थ्याद्दृढदशैकैकमिति विधौ सति के दशेत्यपेक्षायां तुल्यजातीयेषु संख्यावृत्तिस्वाभाव्याद्ब्राह्मणचमसेषु ब्राह्मणा राजन्यचमसे राजन्या दशेति गम्यते। सामान्यादिति च दशसंख्यां चोदयित्वा निवृत्तव्यापारे शास्त्रे तत्पूरणार्थमश्रुतासु व्यक्तिषूपादीयमानासु यासां किंचित्प्रत्यायकमस्ति ता ग्रहीतव्यास्तुल्यजातीयानां च सामान्यगमकं विद्यते न चात्यन्तरानुगतानाम्। अथवा सामान्यादिति—विषयसामान्यात्, 'अर्थैकत्वे द्रव्यगुणयोः' इति हि फलचमसं प्रत्युपादीयमानयोः क्षत्रियत्वदशत्वयोः परस्परनियमे सति यावति विषये दशत्वं तावति राजन्यत्वमित्यदगम्यत इति बलाद्दश राजन्या विज्ञायन्ते। अथवा सामान्यादिति—तुल्यकार्यं तुल्यजातीयं च तुल्यस्य बाधकं भवति। यदि राजसूयचोदनातो राजन्यत्वं प्राप्तं प्रकृतितश्चैकत्वं, तत्र दशत्वं विधीयमानं सामान्यादातिदेशिकत्वाच्चैकत्वं बाधते न जातिम्, भिन्नकार्यत्वात्। ततश्चानिवृत्तजातिरेव यजमानचमसो दशत्वेन योजयितव्य इति दश राजन्या भवन्ति। ननु च दशत्वे विधीयमाने यदेकैकं चमसमनुप्रसर्पन्तीति विशिष्टानुवादाद्वाक्यं भिद्यते। नैष दोषः। चमसमिति द्वितीयान्तं केवलमनूद्यते। तावता तु संस्कार्यत्वं गम्यते। न च चमसानां भक्षणं मुक्त्वाऽन्यः संस्कारः। तेन स एवानुप्रसर्पणशब्देन लक्ष्यते। तत्र च प्रत्येकमेव भक्षणं प्राप्तमिति तदनूद्यते। तस्मान्न वाक्यभेदः॥ ५२॥

भा० प्र०—राजसूय यज्ञ में दशपेय नाम का एक यज्ञ है, वह क्षत्रियों के द्वारा कर्तव्य है। उसमें दश चमस रहता है, उनमें यजमान चमस नाम का भी एक चमस रहता है। यहाँ पर वह राजन्य चमस नाम से कहा जायेगा, क्योंकि, राजन्य ही यहाँ

पर यजमान है। इन दश चमसों के लिए श्रुति में कहा गया है। "शतं ब्राह्मणा सोमान् भक्षयन्ति दश दश एकैकं चमसमनुप्रसर्पन्ति" दश दश मनुष्य के द्वारा एक एक चमस में अनुप्रसर्पण करें। इस स्थल में यह संशय है कि दशपेय याग का जो यजमान चमस अर्थात् राजन्य चमस क्या वह दश क्षत्रिय भक्षण करेंगे अथवा वह ब्राह्मण ही भक्षण करेगा ? इसमें पूर्वपक्षी ने कहा है "अनुप्रसर्पिषु" = राजन्य चमस-सानुप्रसर्पियों के विषय में दश व्यक्ति राजन्य अर्थात् क्षत्रिय ही होगे, कारण "सामान्यात्" इसमें सामान्य अर्थात् एक जातीयता की प्राप्ति होगी।

आशय यह है कि यजमान चमस यजमान का ही भक्षणीय है और दशपेय याग में राजन्य अर्थात् क्षत्रिय ही यजमान होता है, पुनः "दशदश एकैकं चमसमनुप्रसर्पन्ति" इस वचन में कहा गया है कि एक एक चमस का भी दशजनों के द्वारा पीना उचित है।

इनमें एक यजमान है और नौ लोग आवश्यक हैं। यह जो नौ व्यक्ति हैं वे भी क्षत्रिय ही हैं। कारण, इसमें एक जातीयता रक्षित है। अन्यथा उसमें नौ व्यक्ति ब्राह्मण हो तो ऐसी स्थिति में ब्राह्मण और क्षत्रिय का सम्मिश्रण होगा, साथ ही उन ब्राह्मणों को क्षत्रिय का उच्छिष्ट भक्षण करना पड़ेगा, कारण, उच्छिष्ट भोजन करेगा —यह विरुद्ध है। इसलिए, कहा गया है कि दशपेय याग में यजमान चमस दश क्षत्रियों का ही पेय है। इसमें यदि यह कहा जाय कि श्रुति में कथित "शतं ब्राह्मणाः सोमान् भक्षयन्ति" अर्थात् एक सौ ब्राह्मण सोमपान करेंगे—इस वचन का बाध होगा। ऐसी स्थिति में यह कहा जा सकता है कि इस स्थल में शतशब्द "सृष्टिन्याये" अर्थात् प्रथमाध्याय के चतुर्थपाद के सोलह अधिकरण में उक्त "भूमा" इस सूत्रांश में विचारित नियम के अनुसार है। लक्षणा के बल से बहुत्व का बोधक है और यह अनुवाद होने से इसमें लक्षणा अन्याय्य नहीं है। यह अनुवाद है, कारण, दश चमस है और प्रत्येक चमस में दश व्यक्तियों के लिए लोक के अनुप्रसर्पण की विधि है। अतः, दश चमस में जो एक सौ व्यक्ति होंगे—यह अर्थतः सिद्ध है। इसलिए, यह विधि नहीं हो सकती है। क्योंकि, अप्राप्त की ही विधि होती है, अतः, दश क्षत्रिय व्यक्ति होने पर भी नब्बे आदमी ब्राह्मण हैं, अतः, बाहुल्य के अनुसार "शतं ब्राह्मणाः" यह कहा गया है। अत एव इस स्थल में यजमान चमस में दश क्षत्रिय ही अनुप्रसर्पण करेंगे।

"अनुसर्पिषु" = क्षत्रिय के चमस में जो अनुप्रसर्पण करता है अर्थात् भक्षण के लिए अग्रसर होता है, उनमें दश क्षत्रिय होंगे। "सामान्यात्" = क्योंकि इसमें सामान्य अर्थात् एक जातीयता लब्ध है ! पूर्वपक्ष ॥ ५२ ॥

**ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ५३ ॥ सि० ॥**

**शा० भा०—ब्राह्मणा वा राजन्यचमसमनुप्रसर्पेयुः। कथम्। शतं ब्राह्मणाः सोमान् भक्षयन्ति, इति विधिः श्रुत्या ब्राह्मणगतामेव संख्यामाह। तस्माच्छतं**

ब्राह्मणाः। तेषां भक्षणार्थमनुप्रसर्पतामेकैकस्मिंश्चमसे दश दशोपदिश्यन्ते। तस्माद् ब्राह्मणशतस्य दश ब्राह्मणा राजन्यचमसमनुप्रसर्पेयुरिति ॥ ५३॥

क० सिद्धान्तः॥ ब्राह्मणानामेव राजन्यचमसाऽनुप्रसर्पणाधिकरणम् ॥ २०॥

इति श्रीशबरस्वामिकृते मीमांसाभाष्ये तृतीयाध्यास्य पञ्चमः पादः॥

त० वा०—न वा राजन्या भक्षयेयुः। कुतः।

शतब्राह्मणसंयुक्तो विधिरत्रावगम्यते।
अन्यथा तदुपादानं गौणं व्यर्थं च ते भवेत्॥

तुल्येन ब्राह्मणशब्देन सर्वचमसेषु ब्राह्मणाः प्रतिपाद्यन्ते। ते न कुतश्चिदपि व्यावर्तयितव्याः। न च गौणत्वकारणं किंचिदस्ति। प्रमाणान्तरेण विस्पष्ट-राजन्यानुपादानात्। समस्तमेव चैतदनर्थकं पुनः श्रवणं भवेत्। अस्मत्पक्षे पुनः प्रयोगवचनादिभ्यो विधिशक्तिमनुमाय ब्राह्मणशते विहिते 'दशदशैकैकम्' इति विभागार्था पुनःश्रुतिः। अथवा 'समे स्यादश्रुतित्वात्'। इति न्यायेन दश दश प्राप्ता मुख्ययैव वृत्त्याऽनुवदिष्यन्ते। ब्राह्मणशतेन च दश दशकैरवस्थितेन दश-स्वपि चमसेष्ववरुद्धेषु न कश्चिद्राजन्यानामवकाशो विद्यते। तस्माद् ब्राह्मणा दशेति = । न त्वियं व्याख्या घटते। यदि हि 'शतं ब्राह्मणाः' इत्येष विधिः स्यात्ततोऽतिदेशप्राप्तभक्षानुवादाद्विशिष्टविधानसंभवेनान्यतरत्र विधीयमाने यदि शतं विधीयते ब्राह्मणा इत्यनर्थकं सिद्धान्तहानिश्च। ब्राह्मणाविधौ तु शतमि-त्यनर्थकम्। अथ यच्छतं भक्षयन्तीत्यनूद्य ब्राह्मणा विधीयन्ते, केन शतं प्राप्त-मिति वक्तव्यम्। अथ यद्ब्राह्मणा भक्षयन्तीत्यनूद्य शतं विधीयते ततो राजन्य-व्यावृत्त्या ब्राह्मणश्रुतेर्विशेषणत्वादिशिष्टानुवादाद्वाक्यभेदः। राजन्यचमसे न च किंचित्कृतं स्यात्। तत्रैकैकमित्यस्य राजचमसेऽनुवादासंभवात्तत्राप्ये राजन्या दश विधीयेरन्नितरत्र च ब्राह्मणशतं नवसु चमसेषु न विद्मः केन विभागेन स्या-दिति। अथ सोमसम्बन्धात्, ब्राह्मणा इति प्राप्तानुवादः कल्प्यते, तथाऽपि फल-चमसव्यावृत्त्या विशिष्टानुवादो दोषोऽस्त्येव। फलचमसे च पुनरपि न कश्चिद्व्यापार इति पूर्ववदेव प्रसङ्गः। न च सोमशब्दब्राह्मणशब्दयोरर्थान्तरेऽपि फलचमसे राजन्ये वा प्रयोग इति किंचित्प्रामाण्यम्। अविशेषितभक्षानुवादे पशुपुरोडाशा-दिभक्षेष्वपि शतप्रसङ्गः। न ह्यसौ प्रधानेन विशेष्यते। 'सर्वेषां वा शेषत्वस्या-तत्प्रयुक्तत्वात्' इत्येवमङ्गप्रधानार्थत्वप्रतीतेः। सोमशब्दश्चात्यन्तमेवानर्थकः स्यात्। अथ सोमानित्येतावन्मात्रमनूद्य शतं विधीयते ततः क्रयादारभ्य यावान्सो-मसंस्कारः स सर्वः शतेन कर्तव्यस्तत्र भक्षयतिरनर्थक एव स्यात्। अथ भक्षयतौ शत-ब्राह्मणसंबन्धो विधीयते तथा पुरोडाशादिष्वपि प्रसङ्गात्। सोमशब्दानर्थ-क्यमस्त्येव। सोमे तु ब्राह्मणशतसंबन्धविधानमक्रियाशब्दत्वादेवाशक्यम्। पुनरपि फलचमसे स्तिभीरूपत्वेनासोमे राजन्यप्राप्तिर्नैव वार्यते। तेनैतद्वाक्य-

मनुपपन्नम् । तथा 'दशदशैकैकम्' इत्यस्याप्यनुपहतविधिशक्तेः स्वतन्त्रविधित्वावधारितस्यानुवादत्वं निष्फलप्रमाणकं च । कथं हि पूर्वेण वर्तमानापदेशः सन्विधिः स्यादयं चानुवादः । न च निमित्तत्वादिभिर्विनाऽनेकाख्यातैक्यवाक्यत्वं घटते । न च यदिशब्दादिरहितस्य निमित्तत्वादिप्रतीतिरस्ति । न च 'दश दशैकैकम्' इत्यत्र काचित्स्तुतिः प्रतीयते । येन तदर्थोऽनुवाद एकवाक्यत्वं चोपपद्येत । तस्मात्पृथग्भूतस्य वाक्यस्य समस्तानुवादत्वमयुक्तमिति किंचिद्विधातव्यम् । तत्र यदि तावच्छतस्यानियमप्रसङ्गे दश दशेति विधीयते, ततश्च एकैकमित्यनुपपन्नं, विधाने वाक्यभेदप्रसक्तेः । वषट्कर्तॄणां चानेकचमसप्राप्तौ सत्यामनुवादत्वासंभवाद्ग्रहेष्वपि पूर्वेण प्राप्तत्वाच्चमसशब्दोऽनर्थकः । विशिष्टंश्च वाक्यं भिन्द्यात् । न च दश दशैकैकमित्यनुवादः संभवति । शतस्यापि चमससंस्कारार्थमुपादीयमानस्य प्रतिचमसं सामस्त्येन प्राप्तेः । कर्तृसंस्कारार्थे हि सति दक्षिणावद्विभागप्राप्त्या 'समं स्यात्' इति दश दशैकमिति प्राप्नुयात् । तत्र सत्यपि विधौ परिसंख्या स्यात् । अनेकस्मिन्नपि वा दश भक्षयितारः प्राप्नुवन्ति । एकस्मिन्नपि वा चमसे दशानां दशानां प्रसङ्गः, शतस्यैव दशदशकैर्गणैः स्थितवा चमसे भक्षणं स्यात् । तस्माद्वाक्यद्वयमस्मिन् व्याख्यानेऽनुपपन्नमिति, एवं व्याख्येयम् । द्वे अप्येते वाक्ये विधायके, तत्स्वरूपत्वात् । तत्रापि 'दश दशैकैकम् । इत्येतदेव पूर्वपक्षवत्प्रथममाश्रीयते । यथोक्तेन न्यायेन क्रमान्तरस्यानुपपत्तेः अनुप्रसर्पन्तीत्यनेन तावदतिदेशप्राप्तभक्षोपलक्षसंबन्धाद्यथा फलचमसभक्षेण यागोपलक्षमुक्तं, तेन यच्चमसमनुप्रसर्पन्तीति, अन्यस्य साकाङ्क्षत्वाद्विशेषणविशेष्यभावमङ्गीकृत्यानुवादो, दश दशेति विधिः चमसप्राधान्याच्च प्रत्येकं दशत्वभेदाद्वीप्सा भवति । ततः पूर्वं शतमितरेण वाक्येनानूद्य यच्छतं सोमान् भक्षयन्ति तद्ब्राह्मणा इति विधिः । न हि विधिसंभवे समस्तवाक्यानुवादत्वं युक्तम् । ब्राह्मणशब्दस्य च गौणत्वम् । शतमात्रसंबन्धेन च कृतार्थत्वादतन्त्रमेव सोमशब्दो भक्षयतिश्चेति न विशिष्टानुवाददोषः । नापि सोमशब्दाद्यागसाधनमात्रलक्षणया फलचमसप्रतिपादनेऽपि दोषः । तेन संख्यापूरणार्थे यावदश्रुतराजन्यकल्पना प्रक्रम्यते तावद्ब्राह्मणश्रुत्या संख्यान्तरं विधाय नैराकाङ्क्ष्यं क्रियते । न चैवं ग्रहेषु प्रसङ्गः । दश दशेत्यस्य चमसविषयत्वात् । राजन्यचमसेऽपि दशकप्राप्तौ सत्यां ब्राह्मणदशकेनैवावरोध इति द्रव्ये संस्कृते कृतार्थत्वाद्यजमानस्य नैव भक्षणेन भवितव्यम् । तस्माद्ब्राह्मणा दशेति सिद्धम् ।

यत्तु भाष्यकारेण ब्रह्मणराजन्यानां सहभक्षणाविप्रतिषेधस्य 'न सोमेनोच्छिष्टा भवन्ति' इत्युत्तरं दत्तं तत्र केचिच्चोदयन्ति । फलचमसे सोमत्वाभावात्कथमनुच्छिष्टत्वं संभवतीति । न त्वेष दोषः । स्थानापत्त्या सोमधर्मलाभात् । वक्ष्यति हि 'नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्' 'धर्मस्यार्थकृतत्वात्' इति च ।

ननु पुरुषधर्मोऽयमनुच्छिष्टत्वं न युक्तं स्थानापत्त्याऽन्यत्र कल्पयितुम् । न कल्प्येत, यदि पुरुषधर्मोऽयं स्यात्, न त्वयं पुरुषधर्मः फलकल्पनागौरवप्रसङ्गात् । सोमभक्षविषये चोच्छिष्टत्वप्रसङ्गेऽनुच्छिष्टत्वमभिहितम् । स च कर्मधर्म इति स्थितम् । अतो यथैव सोमः संस्क्रियमाणः कर्तुरुच्छिष्टतां नाऽऽपादयति, एवं तत्कार्यापन्नः फलचमसोऽपि । तस्मात्पूर्वयैवोपपत्त्या ब्राह्मणलाभसिद्धिरिति भावः ॥ ५३ ॥

( इति राजन्यचमसे ब्राह्मणानां भक्षप्रतिपादाधिकरणम् ॥ २० ॥

इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके तृतीयाध्यायस्य पञ्चमः पादः ।

भा० प्र०—पूर्वोक्त पूर्वपक्ष के उत्तर में भी "ब्राह्मण ही सोमभक्षण" करेंगे। कारण, "तुल्यशब्दत्वात्"—श्रुति में ब्राह्मण के लिए सोमभक्षण विहित है। शतं ब्राह्मणाः सोमं भक्षयन्ति" इस वाक्य में, दशपेय याग में जो सौव्यक्तियों का सोमभक्षण कहा है, वे सौ व्यक्ति ब्राह्मण ही होंगे। इस प्रकार ब्राह्मण का ही विधान किया गया है और दश दश एकैकं चमसमनुप्रसर्पन्ति" इस वाक्य में एक एक चमस में दशत्व का विधान है, अतः, इसके अनुसार दश चमस में ब्राह्मण का ही भक्षणाधिकार होने से यजमान राजन्य होने से उसको ही जब सोमभक्षण प्रतिषिद्ध है तब अन्य क्षत्रिय का सोमभक्षण प्राप्तिका प्रसङ्ग ही प्राप्त नहीं है। अत एव राजन्य चमस भी ब्राह्मणों का ही भक्षणीय है।

"ब्राह्मणाः = राजन्य चमसमें भी ब्राह्मण ही भक्षण करेंगे, "वा" = पूर्वपक्ष के निरासके लिए है, "तुल्यशब्दत्वात्" = क्योंकि तुल्यशब्द है अर्थात् दश चमस में भी ब्राह्मण ही सोमभक्षण करेंगे, इस प्रकार एक जातीयताबोधक वेदवचन है ॥ ५३ ॥

इस प्रकार मीमांसादर्शन के तृतीय अध्याय का पञ्चम पाठ समाप्त हुआ।

———

# अथ तृतीयेऽध्याये षष्ठः पादः ॥

## [१] सर्वार्थमप्रकरणात् ॥ १ ॥ पू०

शा० भा०—अनारभ्य किंचिदुच्यते । यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यति । सरसा अस्याऽऽहुतयो भवन्ति । यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति, इत्येवमादि । तत्र संदेहः । किं, खादिरता स्रुवे, पालाशता जुह्वां, प्रकृतौ निविशत उत प्रकृतौ विकृतौ चेति ? किं प्राप्तम् ? सर्वार्थमप्रकरणात् । प्रकृतिविकृत्यर्थमेवंजातीयकम् । कुतः । अप्रकरणात् । न कस्यचित्प्रकरणे श्रूयन्ते तानि वाक्येन सर्वत्र भवेयुरिति ॥ १ ॥ क० पूर्व० ॥

त० वा०—इदानीमनारभ्याधीतानां प्रकृतिलिङ्गसंयुक्तानां प्रकरणसंबन्धे सति किं प्रकृतिप्रकरणसंबन्ध उत सर्वार्थत्वमिति विचारः । तत्र श्रुत्यादिषट्काभावेऽप्यश्वप्रतिग्रहेष्टिवत्क्रतुसंबन्धो योजयितव्यः । स्रुवाद्युद्देशेन हि, अत्र खादिरत्वादीनि विधीयन्ते । ते च स्रुवादयः 'स्रुवेणावद्यन्तिः' 'स्रुवेणाऽऽघारमाधारयति' 'स्रुवेण पार्वणौ जुहोति' 'जुह्वा जुहोति' इत्यादिभिर्वाक्यैः कर्माङ्गत्वेन प्रतिपादिताः । तत्संबन्धित्वेन चोपनीतमात्राण्येव खादिरत्वादीनि स्रुवसंस्पर्शिना क्रतु कथंभावेन गृह्यन्ते । न हि तेषामन्यत्फलमस्तीति चतुर्थे वक्ष्यामः । न च निर्व्यापाराज्जातिविशेषात्फलोत्पत्तिरवकल्पते । न च व्यापारसंबन्धजननार्था काचित्क्रिया प्रस्तुता दृश्यते । नापि वाक्योपात्ता । न चात्र स्रुवादिर्विधीयते वाक्यभेदप्रसङ्गात् । अतः स्रुवाद्यनुवादेन विधीयमानानां खादिरत्वादीनां स्रुवादिस्वरूपेऽन्यथाऽप्युपपद्यमानेऽनर्थकं विधानमिति तदुप्लावितकर्मसंबन्धो विज्ञायते । तत्रानारभ्यवादत्वादेव स्रुवादिसंबन्धस्य प्रकृतिविकृतिष्वविशेषात्सर्वार्थत्वमिति पूर्वः पक्षः ॥ १ ॥

भा० प्र०—श्रुति में कहा गया है कि "यस्य खादिरः स्रुवोभवति छन्दसामेवरसेनावद्यति, सरसा अस्याहुतयो भवन्ति" इत्यादि । अर्थात् जिसका स्रुव खादिर काठ से निर्मित है, वह उसके द्वारा जो अवदान करता है; वह छन्द के रस में ही अवत्त होता है; उसकी सभी आहुतियाँ सरस होती हैं । जिसकी जुहू पर्णमय होती है = पलाश काष्ठ से निर्मित होती है उसको अपयश नहीं सुनना पड़ता है इत्यादि । यह जो स्रुव की खदिरता है, खदिर की काष्ठमयता और जुहू की पर्णमयता = पलाशकाष्ठनिर्मितत्व क्या यह प्रकृति एवं विकृति सर्वत्र होगा अथवा जिस-किसी एक स्थल में ही होगा—यह संशय है ।

इसमें पूर्वपक्षी का कहना है कि "सर्वार्थम्" = यह सर्वार्थ अर्थात् प्रकृति एवं विकृति सभी कर्मों का अङ्ग है, कारण, "अप्रकरणात्" = यह किसी भी प्रकरण में अर्थात् किसी भी कर्म के प्रकरण में पठित नहीं होता है—वह अनारभ्याधीत है और वह प्रकृति-निवृति सभी कर्मों में निविष्ट होगा ।

"सर्वार्थम्" = सर्वार्थं अर्थात् जुहु प्रभृति का जो पर्णमयत्व प्रभृति है वह प्रकृति एवं विकृति सर्वत्रगामी होता है, "अप्रकरणात्" = क्योंकि वह प्रकरण के मध्य में पठित नहीं है, वरन् वह अनारभ्याधीत है । पूर्वपक्ष ॥ १ ॥

**प्रकृतौ वाऽद्विरुक्तत्वात् ॥ २ ॥ सि० ॥**

**शा० भा०—प्रकृतौ वा निविशेरन्ननारभ्याधीतानि पात्राणि । कुतः । अद्विरुक्तत्वात् । एवमद्विरुक्तं भविष्यतीति । द्विरुक्ततायां को दोषः । असंभव इति ब्रूमः । यद्धि प्रकृतौ विकृतौ च भवति, अस्ति तत् प्रकृतौ । प्रकृतौ चेदस्ति, चोदकेनैव विकृतिं प्राप्नोति । ततो नानारभ्यविधिमाकाङ्क्षति । तस्मादनाकाङ्क्षितत्वादनारभ्यविधिर्न तत्र विदधाति । तेन ब्रूमः प्रकृत्यर्थ एवेति ॥ २ ॥ क० सि० ॥**

त० वा०—सर्वविधीनामप्राप्तविषयत्वाद्यत्र प्रमाणान्तरेण प्राप्तिर्नास्ति तत्र खादिरत्वाद्युपदेशः । प्रकृतौ च न कुतश्चित्प्राप्तिः । विकृतिष्वङ्गान्तरार्थमवश्यकल्पनीयेनातिदेशेन खादिरत्वाद्यपि प्राप्नोतीति नोपदेशमपेक्षते । तेन द्विरुक्तस्यासंभव इत्याह । तव द्विरुक्तत्वाद्द्विरुक्तत्वाद्वा ममेति सूत्रम् ॥ २ ॥

भा० प्र०—पूर्वपक्षी की आपत्ति के उत्तर में सिद्धान्ती का कहना है कि "प्रकृतौ वा" यह जो स्रुव, जुहु आदि की खादिरता या पलाशमयता यह प्रकृतिभूत जो दर्शपूर्णमास कर्म है उसी का अङ्ग है । कारण, "अद्विरुक्तत्वात्" = इसमें द्विरुक्ति नहीं होती है । यदि इसको विकृतिभूत सौर्यादि याग में भी इस वाक्यबल से अङ्ग के रूप में स्वीकार किया जाता है तो ऐसी स्थिति में विकृति में द्विरुक्ति होती है । कारण, अतिदेश विधि के द्वारा प्रकृति की इतिकर्तव्यतासमूह विकृतियामी होने से तत्सह स्रुवादि खादिर आदि भी विकृति में प्राप्त होता है । पुनः यदि अनारभ्यविधिविहित अङ्ग विकृतिगामी होता है तो द्विरुक्ति होती है और द्विरुक्ति स्थल में एक को अनर्थक अर्थात् अप्रामाणिक मानना होगा ।

"प्रकृतौ" = प्रकृति में अर्थात् प्रकृतिभूत कर्म में प्रविष्ट होगा । "वा" = पूर्वपक्ष के निरास के लिए है । "अद्विरुक्तत्वात्" = क्योंकि इसीलिए अद्विरुक्त होता है "द्विरुक्तत्वात्" = अन्यथा द्विरुक्त होने से ॥ २ ॥

## तद्वर्जं तु वचनप्राप्ते ।। ३ ।।

शा० भा०—अप्रकरणात्प्रकृतिविकृत्यर्थमेवेत्युच्यते । यत्तु, चोदकेन प्राप्नोतीति । अनारभ्यविधिना प्राप्ते न चोदकमाकाङ्क्षति । तस्मादनारभ्यविधिवर्जं चोदकः प्रापयिष्यति । अनारभ्यविधिवाक्येन प्रत्यक्षेण स्रुवे खादिरता, चोदकवाक्येनाऽऽनुमानिकेन विकृतौ । आनुमानिकाच्च प्रत्यक्षं बलवत् । तस्मात्प्रकृतिविकृत्यर्थोऽनारभ्यविधिः ।। ३ ।।

त० वा०—प्राप्तेरिति वा पाठः सत्यं द्विरुक्तत्वमन्याय्यं, तत्र कुत एतदतिदेशप्राप्तत्वादुपदेशो विहन्यते, न पुनरुपदेशासिद्धमतिदेश एव प्रापयेदिति । युक्तं च पदार्थविप्रकर्षादतिदेशो न स्यात् । संनिकर्षात्तु पूर्वतरप्रवृत्तोपदेशाश्रयणम् । अथोच्येत, सामान्यविषयत्वादुपदेशो दुर्बल इति । तदतिदेशोऽपि सर्वाङ्गविषयत्वादविशिष्टम् । तस्मात्सर्वार्थोऽनारभ्यवाद इति ।। ३ ।।

भा० प्र०—पूर्वपक्षी सिद्धान्ती के द्वारा प्रदर्शित दोष को हटाने के लिए कहता है "वचनप्राप्ते तु तद्वर्जम्" = वचन प्राप्त के स्थल में, प्रत्यक्षवचन अर्थात् उपदेश विधि के स्थल में अतिदेश विधि का सङ्कोच होगा, अतः, प्रत्यक्षोपदिष्ट विषय को छोड़कर अन्य विषयों का अतिदेश होगा ।

आशय यह है कि सिद्धान्ती ने कहा है कि द्विरुक्ति होगी, इसलिए, अनारम्यपठित जुहु प्रभृति की पर्णतादि प्रकृतिमात्रगामी होगा, इसमें पूर्वपक्षी कहता है, वे सभी विषय उपदेश की विधि से अर्थात् प्रत्यक्ष विधि से बोधित है, उसमें अतिदेश विधि का स्थान नहीं है, कारण, अतिदेश विधि अनुमान स्थानीय होने से दुर्बल होवे के कारण बाधित होगा, अतः, उनको छोड़कर अन्य विषय ही अतिदेश विधि से गृहीत होगा और ऐसा होने पर जुहु आदि को पलासमयतादि को छोड़कर अन्य अङ्ग ही अतिदेशविधि से प्रापित होगा, अतः, द्विरुक्ति दोष नहीं होगा ।

"तद्वर्ज्जं" = उस अनारभ्य श्रुत अङ्ग से अतिरिक्त अङ्ग हो अतिदेश विधि के बल से प्राप्त होगा, "तु" = प्रत्यवस्थान में "वचनप्राप्ते" = वचन प्राप्त स्थल में ( "वचनप्राप्ते" = वचन बल से प्राप्त होने से ) ।। ३ ।।

## दर्शनादिति चेत् ।। ४ ।।

शा० भा०—यद्यनारभ्यविधिश्चोदकाद्बलीयान्, अनारभ्यविधिना प्राप्ते न चोदकमाकाङ्क्षति । निराकाङ्क्षे वैकृते कर्मणि चोदको नैव प्राप्नोति । तत्र प्रयाजादीनां दर्शनं नैवोपपद्येत । दृश्यन्ते च प्रयाजादयः क्वचित्, प्रयाजे प्रयाजे कृष्णलं जुहोति, इति । अथ चोदको बलीयास्तत एतद्दर्शनमुपपद्यते । तस्मात्प्रकृत्यर्थोऽनारभ्यविधिः ।। ४ ।। क० आ० ।।

त० वा०—स्थितायां प्रतिज्ञायां चोदयति । यद्यतिदेशादुपदेशो बलवानेवं सति तेनैवोपदेशेनावरुद्धत्वादतिदशो नैव स्यात् । कुतः । शक्नोति हि प्रकृतिविकृतिसाधारणं खादिरत्वं प्राकृतोपकारमाधेन दृष्टशक्तित्वाद्विकृतिं निराकाङ्क्षीकर्तुम् । ततश्च प्रयाजादिदर्शमं विरुध्यते । तस्मादतिदेशविनिर्मुक्तायां प्रकृतावेव निवेशो युक्त इति ॥ ४ ॥

भा० प्र०—पूर्वपक्षी सिद्धान्ती के प्रति आपत्ति का उत्थापन करते हुए उसका खण्डन कर अपने मत को पुष्ट करने के लिए सिद्धान्ती की आपत्ति का उल्लेख करते हुए कहा है—"दर्शनादिति चेत्" = सिद्धान्ती यह कह सकते हैं कि अनारभ्यपठित विधियों से अतिदेश विधि का बाध होता है—यह सङ्गत नहीं है, कारण, जिस स्थान में अनारभ्यपठित विधि की प्रवृत्ति है, उसमें भी अतिदेशविधि की प्रवृत्ति देखी जाती है ।

"दर्शनात् इति चेत्" = यदि कहा जाय कि अनारभ्यविधि से प्राप्त विधेय भी अतिदेशविधि दृष्ट होती है ॥ ४ ॥

## न चोदनैकार्थ्यात् ॥ ५ ॥

शा० भा०—न प्रकृत्यर्थः सर्वार्थे इति ब्रूमः । अप्रकरणे समाम्नानात् । यदुक्तमनारभ्यविधिना निराकाङ्क्षस्य न चोदक इति । तन्नोपपद्यते । न ह्यनारभ्यविधिश्चोदनां निराकाङ्क्षी करोति । प्राप्ते हि चोदकेन स्रुवे खादिरताऽनारभ्यविधिना शक्या विधातुम् । असति चोदकेऽनारभ्यविधिरपि नास्ति । न चानारभ्यविधि स्रुवं प्रापयति, तस्य च खादिरताम् । कुतः । चोदनैकार्थ्यात् । एकार्था हि चोदना, यस्य खादिरः स्रुवो भवति, इति । चात्र स्रुवः खादिरता चोभयं विधीयते । स्रुवस्य सतः खादिरतामेष शब्द आह । स च चोदकेन प्राप्तः । तस्मादस्ति चोदकः । स ह्यनारभ्यविधिवाक्यस्य प्रत्यक्षत्वात्तं वर्जयित्वाऽन्यं प्रापयति । तस्मात्प्रकृतिविकृत्यर्थोऽनारभ्यविधिः ॥ ५ ॥ क० आ० नि० ॥

त० वा०—नैतावता शक्यं सर्वार्थत्वं व्यावर्तयितुम् । न ह्येकस्मिन्नंशेऽतिदेशो बाधितः सर्वत्रैव बाधितो भवति । तद्यथा शरैः कुशेषु निवर्तितेष्वपि न प्रयाजादयो निवर्त्यन्ते । समानविषयमात्रे हि बाधो विज्ञायते । तेन खादिरत्वादिप्राप्त्यंशमात्रादतिदेशो निवर्तते । न च खादिरत्वमक्रियात्मकत्वाच्छक्नोति विकृतिं निराकाङ्क्षीकर्तुम् । युगपच्च प्रकृतिविकृत्योः प्रवर्तमानमशक्यं क्लृप्तोपकारत्वेन निरूपयितुम् । साकाङ्क्षं तु तत्, स्रुवप्राप्त्यभावात् । न चातिदेशाभ्यनुज्ञामन्तरेण स्रुवप्राप्तिः संभवति । न चेतद्वाक्यं स्रुवस्यापि विधायकम् । प्रधानक्रियानुपादाने सति विशिष्टविधानेऽनुपपद्यमाने वाक्यभेदप्रसङ्गात् । तस्मादनारभ्यवादविधिप्रापिते स्रुवस्य खादिरत्वे तद्वर्जमतिदेशः कल्पयितव्यः ॥ ५ ॥

भा० प्र०—पूर्वपक्षी ने कहा है "न" = सिद्धान्ती की आपत्ति सङ्गत नहीं है। कारण, "चोदनैकार्थ्यात्" = क्योंकि अनारभ्यविधि एक प्रयोजन ही साधित होता है अर्थात् केवल खादिरता या पलाशमयत्व का विधान करता है।

पूर्वपक्षी ने कहा है "न" सिद्धान्ती की आपत्ति सङ्गत नहीं है। कारण, "चोदनैकार्थ्यात्" अनारभ्य विधि के द्वारा खादिरत्व या पलाशमयत्वादि रूप एक ही प्रयोजन बोधित होता है। इस स्थल में अनारभ्य विधि से यदि सभी आकाङ्क्षाएँ निवृत्त होती तो इस प्रकार की आपत्ति हो सकती थी, किन्तु इस स्थल में विकृतिभूत कर्म में अतिदेश विधि से स्रुव एव जुहु की प्राप्ति होने पर उसमें अनारभ्य विधि के बल से खादिरत्व या पलाशत्व विहित होता है, किन्तु, अनारभ्य विधि से स्रुवादि की प्राप्ति एवं खादिरत्व या पलाशत्व दो का ही विधान नहीं हो सकता, कारण, ऐसा होने पर वाक्यभेद होने लगेगा, इसलिए, अनारभ्यविधि से सभी आकाङ्क्षाओं की निवृत्ति न होने से अतिदेश विधि निरवकाश नहीं हो सकती है।

"न" = नहीं, अर्थात् अनारभ्य विधि से अतिदेश शास्त्र की आकाङ्क्षानिवृत्ति नहीं होती है, "चोदनैकार्थ्यात्" = क्योंकि, अनारभ्य विधि एक ही प्रयोजन को सिद्ध करती है, अर्थात् केवल खादिरता या पलाशत्व का विधान करती है ॥ ५ ॥

( इति आशङ्कानिरास )

## उत्पत्तिरिति चेत् ॥ ६ ॥

**शा० भा०—इति चेत्पश्यसि. उत्पत्तिरेषां प्रकृतिविधिभिस्तुल्या, प्रकृतावङ्गानि संक्षेपेण विस्तरेण चोच्यन्ते। पञ्च प्रयाजान्यजति इति संक्षेपेण। समिधो यजति इत्येवमादिना विस्तरेण। इहापि यस्य खादिरः स्रुवो भवति, इत्येवमादिर्विस्तरः, यस्यैवंरूपाः स्रुव इति संक्षेपः। एवंरूपः प्रकृतौ विधिदृष्टः, अयमप्येवंरूपः। तस्मात्प्राकृत इति सामान्यतो दृष्टानुमानम्। तस्मात्प्रकृत्यर्थोऽनारभ्यविधिरिति ॥ ६ ॥ क० आ० ॥**

त० वा०—अत्र तार्किकः कश्चिदाह प्रकृत्यर्थोऽनारभ्यविधिः संक्षेपविस्ताराभ्यां विधीयमानत्वात्प्रयाजादिवदिति ॥ ६ ॥

भा० प्र०—इस स्थल में कोई इस आपत्ति की उत्थापना कर सकता है कि अनारभ्य विधि केवल प्रकृतिगामी है, कारण, प्रकृतिभूत कर्म में जो विषय विहित होता है, इन्हीं का संक्षेप एवं विस्तार दोनों रूप से उपदेश परिलक्षित होता है। इस अनारभ्य विधि का जो विषय उसके सम्बन्ध में भी संक्षेप एवं विस्तार उभय रूप में विधि ही दृष्ट होती है, इसलिए, यह भी केवल प्रकृतिगामी है।

"उत्पत्तिः" = उत्पत्ति विधि अर्थात् अनारभ्य विधि केवल प्रकृतिगामी है, "इति चेत्" = यदि ऐसा कहा जाय तो ॥ ६ ॥ आशङ्का।

## न तुल्यत्वात् । ७ ॥

शा० भा०—नैतदेवम् । न ह्येवंजातीयकं सामान्यतोदृष्टं साधकं भवति । केवलमत्र प्राकृतविधिसारूप्यम्, न तु प्रकृतावेतद्भवतीति प्रमाणमस्ति । अपि च विकृतावपि संक्षेपविस्तराभ्यामङ्गानि विधीयन्ते । तित्र आहुतीर्जुहोति, इति संक्षेपः । आमनमस्यामनस्य देवा इति विस्तरः । अतो वैकृतेरप्यनारभ्य-विधयस्तुल्याः । तस्मादयमहेतुः प्रकृतिनिवेशस्य ॥ ७ ॥

त० वा०—न तावदीदृशेऽर्थेऽनुमानस्य गतिरित्युक्तम् । अपि चानुमत्नगप्ये तन्न भवति । अनैकान्तिकत्वात् । विकृतावपि संक्षेपविस्ताराभ्यां विधिरुपलभ्यते । तत्रैतत्स्यात् । एकेन विहितत्वात्संक्षेपविस्तारयोरन्यतरो नैव विधायक इति । तदपि प्रकृतौ तुल्यमिति हेतोरसिद्धता । तेनावश्यं विध्यनुवादनिरपेक्षं संक्षेप-विस्ताराभिधानमात्रं हेतुर्वक्तव्यः । स चानैकान्तिक इत्युक्तम् । एवं वा । स्वगो-त्रेण सूत्रद्वयं गमयितव्यम् । इति चेत्—तत्सवार्थत्वं पश्यसि, तदयुक्तम् । यत्र हि पात्राणां विनियोगोत्पत्तिस्तत्र तदङ्गं जातिविधातुं शक्यते । न च विकृता-वुत्पत्तिः । अतः पात्रशून्यायां तस्यामशक्या जातिर्विधातुम् । प्राप्तिवैषम्यात् । यदि हि प्रकृतिविकृत्योस्तुल्यवत्पात्राणि प्राप्नुयुस्ततः सर्वावस्थोद्देशेन जातिवि-धानमवकल्पेत । न त्वेवम् । तस्मात्प्रकृत्यर्थतैव युक्तेति । तत्रोत्तरं 'न तुल्यत्वात्' इति । सर्वथाऽनारभ्यवद्भिः प्राप्तिमपेक्षते । तत्र या चोपदेशेन प्राप्तिर्या चाति-देशेन प्राप्तिः सा सर्वाऽपि प्राप्तित्वेन तुल्या । यद्यप्युपदेशातिदेशयोः संनिकर्ष-विप्रकर्षौ विद्येते तथाऽपि तौ स्वविषय एव बलाबलं कुरुतो नानारभ्यवादेन सह । अनारभ्यवादो हि पात्रद्वारेण क्रतुगामित्वाद्विप्रकृष्टतरः । तस्मात्सर्वार्थः । तदर्थे चातिदेशः ॥ ७ ॥

भा० प्र०—(आ० नि०) उक्त आपत्ति के परिहारकल्प में पूर्वपक्षी का कहना है कि "न" = यह आपत्ति सङ्गत नहीं है, कारण, तुल्यत्वात्" = यह विकृति एवं विकृति दोनों स्थलों में समान है । संक्षेप और विस्तार से विधान कर केवल प्रतिभूत कर्म में ही दृष्ट होता है, ऐसी बात नहीं है, किन्तु, विकृतिभूत कर्मस्थल में भी वह परिलक्षित होता है ।

"न" = नहीं, यह आपत्ति ठीक नहीं है । "तुल्यत्वात्" = क्योंकि; वह प्रकृति एवं विकृति दोनों स्थलों में समान है ॥ ७ ॥ आशङ्कानिरास ।

## चोदनार्थकात्स्न्यर्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थः ॥ ८ ॥

शा० भा०—तुशब्दः पक्षं व्यवर्तयति । न सर्वार्थोऽनारभ्यविधिः । प्रकृ-त्यर्थः स इति ब्रूमः । कुतः । चोदनार्थकात्स्न्यर्यात् । कृत्स्नं चोदकः प्रापयति,

नानारभ्यविधिना वैकृतमपूर्वं निराकाङ्क्षम्। पात्राणां हि तद्वाक्येन, न यागानाम्। यागाश्चोदनालिङ्गसंयोगात्प्रकृतिमपेक्षन्ते, तया सहैकवाक्यतां यान्ति। प्राकृताश्च ताञ्छक्नुवन्ति निराकाङ्क्षीकर्तुं, नानारभ्यविषयः। तस्मादवश्यं चोदक उत्पादयितव्यः। स चेदुत्पाद्यते, नार्थोऽनारभ्यविधिना। न चासौ प्रकरणादीनामभावात्प्रवर्तमानोऽपि वैकृतेन यागेन सम्बध्येत। तस्माद्वैकृतेन कर्मणा नानारभ्यविधिः संबध्यते। न तस्य वैकृतस्य मुख्यस्यानारभ्यविधिर्वाक्यशेषः। प्रकृतौ वेति विप्रतिषेधे, चोदकसामर्थ्यात्प्राकृते वाक्यशेषे प्राप्तेऽनारभ्यविधिर्न भविष्यति। तस्मादनारभ्यविधि प्रकृत्यर्थः॥ ८॥

स्रुवादिषु खादिरतादिविधेः प्रकृतिगामिताधिकरणम्॥ १॥

त० वा०—'प्रकृतौ वा द्विरुक्तत्वात्' इत्येतदेव न्याय्यम्। यत्तु तद्वर्जे यापयिष्यतीति। तदयुक्तम्। कुतः।

वर्तेत यदि भेदेन प्रकृत्यङ्गेषु चोदकः।
तत एवं भवेदेषु युगपत्तु प्रवर्तते॥

पदार्थातिदेशपक्षे शास्त्रादिदेशपक्षे वा तद्भेदात्कदाचिद्भेदो भवेत्। यागगतस्तु व्यापारोऽतिदिश्यत इति दशमे वक्ष्यामः। स च निरवयवत्वाद्युगपदतिदिश्यते। अनेन चाऽऽत्मसिद्ध्यर्थे युगपदेव प्रयाजाद्यपूर्वाणि गृह्यन्ते। तैश्च प्रयाजादयः। प्रयाजादिभिरपि स्वशास्त्राणि। तेन प्रकृतिवादित्येवंरूपस्यातिदेशस्यैकत्वात्सर्वाङ्गेष्वविशिष्टस्य सर्वत्र प्रवृत्तिरप्रवृत्तिर्वा, नैकदेशेषु। शरैरपि कुशाः प्राप्ता एव बाध्यन्त इत्युक्तं बलाबलाधिकरणे यद्यपि तावदनारभ्यवादानुरोधेन खादिरत्वादिविषयेऽतिदेशः परित्यज्यते तत एवाङ्गतरेष्वपीति सर्वनिवृत्तिप्रसङ्गः। तत्र चोक्तम्। अथ केषांचित्प्राकृतानामनुरोधेन तद्विषयोऽतिदेशः प्रमाणं क्रियते, ततः खादिरत्वादिप्राप्तिरप्यविशिष्टेति स्फुटं द्विरुक्तत्वं प्राप्नोति। यागगतव्यापारापेक्षित्वाच्च स्वप्रकरणाम्नानमप्यतिक्रम्य विकृतयः प्राकृतं तावद्गृह्णन्तीति सर्वत्र स्थापयिष्यामः। तेनाप्यनारभ्यवादादतिदेशप्राप्तेः प्राथम्यम्। अवश्यं च प्रकृतिषु स्रुवादिप्राप्तिरपेक्षितव्या। यावता च यत्र न स्रुवादयः प्राप्नुवन्ति तावता खादिरत्वादयोऽपीति नोपदेशविषयत्वं घटते। न चैषां क्रतुसंबन्धो विस्पष्टः। सोऽप्यन्यथाऽनुपपत्त्या स्रुवादिद्वारेण कल्पयितव्यः। सर्वार्थत्ववादी च प्रकृतिसंबन्धं तावदभ्युपगच्छति। तेन च परिहृत आनर्थक्ये विकृतिसंबन्धो निष्प्रमाणकः। प्रमाणवत्तरो ह्यतिदेशेन क्रतुसंबन्धः। येषां तु क्रतुसंबन्ध एव प्रत्यक्षस्तेदनारभ्यवादा अपि सर्वार्था एव। यथा 'एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः' इत्येवमादयः। तस्मात्खादिरत्वादि प्रकृत्यर्थमिति सिद्धम्॥ ८॥

( इति पर्णतादेः प्रकृत्यर्थताधिकरणम्॥ १॥

भा० प्र०—पूर्वपक्ष समाप्त होने पर सिद्धान्ती अपने मत का प्रकाशन कर रहा है "प्रकृतार्थः" = यहाँ जो स्रुव एवं जुहु की यथाक्रम में खादिरत्व एवं पलाशमयत्व है, वह प्रकृतार्थ अर्थात् प्रकृतिमात्रगामी है—केवल प्रकृतिभूत कर्म में ही इस उपदेश विधि का स्थान है, विकृतिभूत कर्म, उसका विषय नहीं है। कारण "चोदनार्थकात्स्न्यात्" = विकृतिभूत कर्म में अतिदेशविधि के समग्र अङ्ग की ही युगपत् प्राप्ति होती है।

आशय यह है कि पूर्वपक्षी के मत में अतिदेश विधि के द्वारा स्रुव एवं जुहु की प्राप्ति होती है और अनारभ्य विधि के बल से उसका खादिरत्व या पलाशमयत्व विहित होता है।

इसमें सिद्धान्ती का कहना है कि अतिदेश विधि से जब प्राकृत = प्रकृतिभूत कर्मगत् पदार्थों का विकृतिभूत कर्म में प्रवेश होता है, तब वह अपने विशेषणों का परित्याग कर वहाँ प्रविष्ट नहीं होता है, किन्तु, विशेषणों के साथ ही प्रविष्ट होता है और पूर्वपक्षी यह स्वीकार करते हैं कि प्रथम अतिदेश विधि के बल से जुहु प्रकृति की प्राप्ति होती है। अनन्तर अनारम्य विधि के अनुसार उसके उद्देश्य में पर्वतादिविहित होता है, अतः, अनारम्यविधि की प्रवृत्ति से पूर्व ही जब अतिदेश विधि की प्रवृत्ति होती है और उतिदेश विधि के बल से विशेषण के साथ जुहु आदि पदार्थ वैकृत कर्म में प्रविष्ट होता हैं, क्योंकि, विशेषण को छोड़कर विशेष्य की कहीं भी प्रवृत्ति नहीं होती है तब उसमें अनारम्य विधि का स्थान नहीं है, कारण, "मुख्यविप्रतिषेधात्" = मुख्य अर्थात् अनारम्यपठित जो विधि उसका विप्रतिषेध अर्थात् आकाङ्क्षा की निवृत्ति पूर्व से ही हो गई है, अतः, उसकी अब अपेक्षा हीं नहीं है। इसलिए, अतिदेश सापेक्ष होने से विकृतिभूत कर्म में अनारम्य विधि का स्थान नहीं है। ऐसी स्थिति में अनारम्य विधिविधेय पदार्थ यदि अतिदेश विधि सापेक्ष नहीं होता है तो वह भी विकृतिभूत कर्म प्रवेश प्राप्त कर सकता है।

"चोदनार्थकात्स्न्यात्" = आकाङ्क्षितसमग्र विषय अतिदेश विधि से युगपत् प्रापित होने से, "तु" = पूर्वपक्ष के निरास के लिए है, "मुख्यविप्रतिषेधात्" = मुख्य का अर्थात् अनारम्य, पठित विधि का विप्रतिषेध अर्थात् आकाङ्क्षा निवृत्ति होने से, "प्रकृतार्थः" = प्रकृतार्थ अर्थात् स्रुव एवं जुहु का जो खादिरत्व एवं पलाशमयत्व है—वह केवल प्रकृतमात्रगामी है ॥ ८ ॥

इति प्रथम पर्णतादि का प्रकृतार्थताधिकरण ॥ चरमसिद्धान्त।

## [२] प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥ ९ ॥ सि० ॥

### "अथ सामिधेनीनां सप्तदश संख्याया विकृतिगामिताधिकरणम्"

**शा० भा०—अनारभ्य किंचित्, सामिधेनीनां परिमाणमाम्नातं सप्तदश-सामिधेनीरनुब्रूयात्, इति। तत्र संदेहः। किमेतत्प्रकृतावुत विकृताविति ? किं**

प्राप्तम् ? पूर्वेण न्यायेन प्रकृताविति प्राप्तम् । प्रकृतौ च पाञ्चदश्यमाम्नातं, तेन विकल्प इति । एवं प्राप्ते ब्रूमः । विकृतावेवंजातीयको विधिः स्यात् । तस्मात् । प्रकृतेः पाञ्चदश्येन निराकाङ्क्षत्वात् । ननु विकल्पो भविष्यतीत्युक्तम् । प्रकरण-विशेषात्पाञ्चदश्येन न विकल्पः । विषमशासनात् । विकृतौ त्वानुमानिकं पाञ्चदश्यं बाधित्वाऽनारभ्यविधिवाक्येन प्रत्यक्षेण साप्तदश्यं निवेक्ष्यते । अद्भिरुक्तं चेतत्प्रयोगवचनमुपसंहरिष्यति । तस्मादेवंजातीयकं विकृत्यर्थम् । ॥ ९ ॥ क० सामिधेनीनां सप्तदशसंख्यायाविकृतिगामिताधिकरणम् ॥ २ ॥

त० वा०—अपवादाधिकरणमेतत् । तत्र पूर्वाधिकरणेनैव सामिधेनीसाप्त-दश्यानारभ्यवादस्य प्रकृत्यर्थत्वे, प्रकरणाधीतेन पाञ्चदश्येन सह विकल्प इति विशेषाशङ्कां निवर्तयति । कथं पुनः प्राकरणिकेन विशेषविधिना सहातुल्यबलस्य विकल्पोऽभिधीयते । आह ।

तत्र नाम विशेषेण सामान्यस्य निराक्रिया ।
प्रत्यक्षो यत्र संबन्धो विशेषेण प्रतीयते ॥

तुल्यप्रमाणको हि विशेषो बाधको भवति न दुर्बलप्रमाणकः । न च क्रतु-प्रयोगादन्यत्र सामिधेन्यो विद्यन्ते । तस्मात्क्रतुप्रयोगप्राप्तिस्तुल्या ! ततश्च किं प्रकरणमधिकं करिष्यति । द्वयोस्तुल्यबलयोः प्रमाणयोर्विरोधे सति बलवत्तरेण निर्णयः कर्तव्यः । न च प्रकरणं वाक्याद्बलवत्तरम् । अतो यावत्प्रकरणव्यापारो नैव भवति तावद्वाक्यद्वयेन तुल्यबलेन विकल्पोऽवधार्यते । तेन न्यूनबलं यद्यपि प्रकरणसहस्रमपि च सहायी भवति तथाऽपि न तदनुरोधः कर्तव्यः । तस्मात्प्र-कृत्यर्थं साप्तदश्यमिति प्राप्ते ब्रूमः ।

तुल्यो यद्यपि संबन्धः सामिधेनीः प्रतीष्यते ।
तथाऽपि क्रतुसंबन्धवैषम्यान्न विकल्पते ॥

सामिधेनीस्वरूपप्रयुक्तत्वेऽनर्थिका संख्येत्यवश्यं यागात्पूर्वसाधनत्वकारितः संबन्धोऽभ्युपगन्तव्यः । न च यागापूर्वसाधनत्वं प्रकरणादृते लक्षयितुं शक्यते इति नवमे वक्ष्यामः । तेन प्रकरणानुग्रहविशेषात्पाञ्चदश्यमपूर्वसंबन्धप्रमाणप्रत्या-सत्तेर्बलीयः । विधिरपि हि पूर्वं प्रयोजनवति पुरुषं नियुङ्क्ते । साप्तदश्याच्च पाञ्चदश्यं शीघ्रतरं प्रयोजनवदवधार्यत इति विधिकालवैषम्यादतुल्यबलत्वम् । अपि च, क्रतुमविगुणं कर्तुं पुरुषः प्रवर्तते न सामिधेनीः । क्रत्वङ्गत्वे च साप्त-दश्यस्य न किंचिच्छ्रुत्यादि प्रमाणमुपलभामहे, यथा पाञ्चदश्यस्य प्रकरणम् । तस्मादेतत्पाञ्चदश्यं सामिधेनीनां दर्शपूर्णमासयोश्च वाक्यप्रकरणाभ्यामवधार्यते । साप्तदश्यं तु केवलं सामिधेन्यर्थमेव । तस्येदानीमानर्थक्यपरिहाराय खादिरत्वा-दिवत्क्रतुसम्बन्धः कल्प्यते, यदि त्वसौ प्रतीच्छेत् । न त्वसौ संख्यान्तरावरुद्धः

सत्प्रतीच्छति। तत्र सामिधेनीनामुभयथाऽप्यवैगुण्यं भवति। क्रतोः पुनः पाञ्चदश्येन। ततश्च कांस्यभोजिवदमुख्येऽप्यविरोधः स्यात्किमङ्ग पुनर्यत्राङ्गगुणविरोध एव स्पष्टः। तस्मात्क्रत्ववष्टम्भदर्पितेन पाञ्चदश्येनोत्कालितं साप्तदश्यम्। क्लिष्टेन यावदतिदेशेन पाञ्चदश्यं ( नैव ) विकृतीः प्राप्नोति तावदौपदेशिकेन साप्तदश्येन प्रथमतरावरुद्धत्वात्ताभ्यो निराकृतं केवलप्रकृतिविषयत्वेनैवावधार्यत इति व्यवस्थायामुक्तायामुच्यते—

न साप्तदश्यं बलवद्विकृतिष्वौपदेशिकम्।
अनारभ्यविधेस्तद्धि सामिधेन्यङ्गतां गतम्॥
विकृतीनां तु नास्त्येवं प्रमाणं तत्परिग्रहे।
अतिदेशेन हि प्राप्तिः पाञ्चदशस्य तास्वपि॥
यथा प्रकरणप्राप्तं प्रकृतौ बलवत्तरम्।
तथाऽतिदेशविज्ञानं क्रत्वङ्गं विकृतिष्वपि॥

न च सामिधेनीष्वनतिदिष्टासु तद्द्वारेण साप्तदश्यं विकृतीरनुप्रवेष्टुं शक्नोति। यदा तु सामिधेन्योऽतिदेशेन प्राप्स्यन्ते तदा पाञ्चदश्यमपि क्लृप्तोपकारसम्बन्धं ताभिरेव सह पूर्वतरमाक्रम्य प्रकृताविव साप्तदश्यबाधकं भविष्यति। तस्माद्यास्वेव पशुमित्रविन्दाध्वरकल्पादासाप्तदश्यं प्रकरणविहितं तास्वेव तदतिदेशप्राप्तपाञ्चदश्यबाधेन निविशते।

नानारभ्यविधिप्राप्त्या सर्वास्वेव भविष्यति।
पश्वादिव्यतिरिक्तासु पाञ्चदश्येन बाधनात्॥
स्वाङ्गेन पाञ्चदश्येन व्याप्तास्ता ह्यतिदेशतः।
विहितं सामिधेन्यङ्गं साप्तदश्यं न गृह्णते॥
एवं च दशमेऽप्येतद्विविक्तं स्थापयिष्यते।
तेन नैतद्ग्रहीतव्यं सर्वत्र बलवत्तरम्॥
सूत्रकारोऽपि विकृतौ विरोधीति यदब्रवीत्।
प्रकृतौ नैतदस्तीति तदेतावद्विवक्षया॥
सामिधेनीः प्रति प्राप्तिस्तुल्या वाक्येन यद्यपि।
विशेषः पाञ्चदश्यस्य क्रतौ प्रकरणेन तु॥
अतो यद्यपि दौर्बल्यं वाक्यात्प्रकरणस्य नः।
तथाऽपि विषयान्यत्वात्क्रतौ तद्विनियोजकम्॥
समानविषयत्वे हि वाक्यात्तद्दुर्बलं मतम्।
क्रतौ त्वप्रतिपक्षत्वान्न तद्वाक्येन बाध्यते॥
विशेषश्चायमेवास्य यदसाधारणं क्रतोः।
सामिधेनीषु तुल्यत्वे शेषत्वे वाक्यकल्पिते॥

क्रतुं प्रत्यसमानत्वात्साप्तदश्यस्य बाधकम् ।
न श्रुत्याद्युपदेशेन नातिदेशेन तस्य तु ॥
एवं च प्रकृतावेतत्पाञ्चदश्यं प्रतिष्ठितम् ।
विकृतौ च न यत्रास्ति साप्तदश्यं पुनः श्रुतिः ॥ ९ ॥

( इति अनारभ्याधीतसाप्तदश्यस्य प्रकृतावनिवेशाधिकरणम् ॥ २ ॥ )

भा० प्र०—वेद में दर्शपूर्णमास प्रकरण में "सप्तदश सामिधेनीरनुब्रूयात्" अर्थात् सतरह सामिधेनी = ( अग्नि समिद्धन के लिए ऋक् ) का पाठ करे, इस प्रकार एक अनारभ्यपठित विधि है। इसे विधि से विदित जो साप्तदश सामिधेनी है क्या वह प्रकृतिगामी होगी अथवा वह विकृति में जायेगी—यही संशय है।

इस संशय में पूर्वपक्षी का कहना है कि पूर्व अधिकरण में कथित नियम के अनुसार यह प्रकृतिगामी ही होगी। यदि यह कहा जाय कि उसमें "पञ्चदश सामधेनीरनुब्रूयात्" इस वाक्य में पञ्चदश सामधेनी पाठ की विधि होने से पुनः सप्तदश सामधेनी पाठ्य नहीं हो सकती है। ऐसी स्थिति में कहा जा सकता है कि ऐसा होने से इसमें विकल्प होगा अर्थात् पञ्चदश या सप्तदश जिस किसी सामधेनी का पाठ करने से ही चलेगा।

इसके समाधान में सिद्धान्ती का कहना है कि "विरोधि विकृतौ स्यात्" = प्रकृतिगामी पाञ्चदश्य का विरोधी जो साप्तदश्य वह विकृतिगामी ही होगा। क्योंकि, "प्रकरणविशेषात्" = पाञ्चदशसामधेनी के स्थल में प्रकरणानुग्रहरूप विशेषत्व रहता है। अतएव इस स्थल में इसका विकल्प नहीं हो सकता है, कारण, यह तुल्यबल नहीं है। साप्तदश्य अनारभ्य पठित होने से उसका प्रकरण अनुमेय है और पाञ्चदश्य का प्रकरण प्रत्यक्ष है, इसलिए, पाञ्चदश्य प्रकरणानुगृहीत होने से अधिक बलवान् होने से प्रकृतिभूत दर्शपूर्णमास कर्म में उसी का स्थान होगा, उसमें साप्तदश्य का स्थान नहीं हो सकता है। किन्तु, मित्रभिन्दा अध्वरकल्प आदि विशेष विकृति कर्म में ही साप्तदश्य का स्थान होगा। पूर्व अधिकरण का जो दृष्टान्त दिया गया है—वह सङ्गत नहीं है। कारण, उसमें अनारभ्य विधि को विकृतिगामी मानने पर वह अतिदेशसापेक्ष है, अतिदेश से पूर्व में ही इतिकर्तव्यता आदि की प्राप्ति होने से अनारभ्यविधिविधेय अङ्ग की आकाङ्क्षा न होने से वह प्रकृतिगामी ही होता है। किन्तु, इस स्थल में वैसा कोई नियम नहीं है, इसीलिए, सप्तदश सामिधेनी विकृति कर्म में ही पाठ्य होगी।

"प्रकरणविशेषात्"=प्रकरण रूप विशेष होने से, "तु"=प्रत्युदाहरण में "विरोधि" = प्रकरणपठित का विरोधी अनारभ्यविधिविहित अङ्ग, "विकृतौ स्यात्" = विकृतिकर्म में प्रविष्ट होग ॥ ९ ॥

इति द्वितीय अनारभ्यपठित साप्तदश्य का प्रकृतिगामित्वाभाव अधिकरण।

**[ ३ ] नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात् ॥१०॥ सि०॥**

"गोदोहनादीनां प्रकृतिगामिताधिकरणम्"

शा० भा०—दर्शपूर्णमासयोराम्नातं, गोदोहनेन पशुकामस्य प्रणयेत्, इति। तथाऽग्नोषोमीये पशौ श्रूयते यूपं प्रकृत्य, बैल्वो ब्रह्मवर्चसकामेन कर्तव्य इति। एवंजातीयकेषु संदेहः किं प्रकृतौ विवेशो विकृतौ वेति ? किं प्राप्तम् ? विकृताविति। प्रकृतीरन्येन पात्रेण यूपेन च निराकाङ्क्षाः। एवं प्राप्ते ब्रूमः। प्रकृतौ नैमित्तिकं निविशते। निमित्तसंयोगेन विधानात्। खादिरपालाशरौहितका अविशेषेणोक्ताः, चमसश्च। गोदोहनं बैल्वश्च विशेषविहितौ। विशेषविधिना चाविशेषविधिर्बाध्यते। प्रकरणं सामान्यं, निमित्तसंयोगो विशेषः। सामान्येन यत्प्राप्नोति तत्परोक्षं लक्षणया। यत्तु विशेषेण, तत्प्रत्यक्षं श्रुत्या। श्रुतिश्च लक्षणया बलीयसी, प्रत्यक्षं च परोक्षात्। तस्मात्प्रकृतावेव स्यात्॥ १०॥

इति गोदोहनादीनां प्रकृतिगामिताधिकरणम् ॥ ३ ॥

त० वा०—यद्वैश्यादिनिमित्तेन साप्तदश्यं विधीयते।
तत्तु स्यात्प्रकृतावेव पाञ्चदश्यस्य बाधकम्॥
तस्य प्रकरणं तुल्यं प्रकृतौ विनियोजकम्।
निमित्तेन तु सम्बन्धाश्रितयात्तद्बलवत्तरम्॥
पञ्चादश्यमबाधित्वा ह्यात्मानं न लभेत् तत्।
रुद्धेषु तेन सर्वेषु प्रयोगेषु श्रुतं हि तत्॥
साप्तदश्यविधानं तु प्रयोगे वैश्यकर्तृके।
अबाधेनापि तस्याऽऽत्मा पाञ्चदश्येन लभ्यते॥
प्रयोगाः सन्ति तस्यान्ये विप्रराजन्यकर्तृकाः।
साप्तदश्यमबाधित्वा येष्वात्मा तेन लभ्यते॥
अतश्च शक्तिवैषम्ये विकल्पो न मतस्तयोः।
समुच्चयोऽपि नैकार्थ्यात्सामिधेनीषु युज्यते॥
नैकत्रैकेन संख्याताः संख्यायन्ते परेण ताः।
नित्यस्य बाधशक्तिर्हि नार्थापत्त्याऽवकल्पते॥
पौर्वापर्ये यथा पूर्वनिविष्टस्यैव बाधनम्।
काम्यनैमित्तिकाभ्यां हि तथा नित्यस्य बाधकम्॥
असंजातविरोधं हि नित्यं सर्वं विधीयते।
नैमित्तिकं तु तद्व्याप्तविषयत्वाद्विरुध्यते॥
येनैकविषयत्वेन विरोधस्यैकबाधनम्।
विरोधायौगपद्यात्तु न विकल्पप्रसञ्जनम्॥

किं च प्रयोगसामान्ये नित्यं सर्वं विधीयते ।
नैमित्तिकं विशेषे तु तस्मात्तद्बलवत्तरम् ॥
नित्यमङ्गं च दूरस्थप्रधानापूर्वचोदितम् ।
क्रियते तत्प्रमाणं च परं प्रकरणं मतम् ॥
काम्यनैमित्तिकानां तु वाक्योपात्तं प्रयोजनम् ।
अतः शीघ्रं प्रयुक्तत्वान्नित्यात्ते बलवत्तराः ॥
आसन्नपुरुषार्थत्वाद्विप्रकृष्टफलात्तथा ।
बलवच्छीघ्रकारित्वात्काम्यं नैमित्तिकादपि ॥
श्रुत्यैव पुरुषार्थे हि शीघ्रं कर्ता प्रवर्तते ।
नैमित्तिके हि दूरस्थे चिरेणासौ प्रवर्तते ॥
नैमित्तिके श्रुते यच्च काम्यमेव विचारितम् ।
तन्नित्यं प्रति तुल्यत्वादविरोधात्परस्परम् ॥
पूर्वाधिकरणेनैव पूर्वपक्षोऽत्र सूचितः ।
नित्यस्यास्ति विशेषो हि काम्यात्प्रकरणे यतः ॥
चमसः खादिरत्वं च क्रत्वर्थं हि विधीयते ।
बैल्वगोदोहनादीनां काम्यत्वात्पुरुषार्थता ॥
बाध्येत फललोभेन नित्यं काम्येन तत्र चेत् ।
पश्यतो मधु दुर्बुद्धेर्निपातस्ततो भवेत् ॥
क्रत्वर्थाङ्गप्रहाणे हि नश्येत्तस्य क्रतो फलम् ।
गुणाच्च न फलं सिध्येद्विगुणं क्रतुमाश्रितात् ॥
आश्रयस्तादृशो हीष्टो यादृशः प्रकृतः क्रतुः ।
खादिरत्वादिभिर्नित्यैर्व्याप्तश्चासौ प्रतीयते ॥
ततश्चानवरुद्धत्वात्काम्यस्य विकृतिर्गतिः ।
अस्ति स्वार्थे विशेषो हि क्रतोः प्रकरणं प्रति ॥
तेन गृह्णाति हि स्वार्थं न तु काम्यं कथंचन ।
इतिकर्तव्यतार्थित्वात्संयुक्तं हि न गृह्यते ॥
तेन प्रकरणप्राप्तं संयुक्ताद्बलवत्तरम् ।
न हि प्रकरणं तस्य विनियोगक्षमं मतम् ॥
क्रत्वर्थश्चाऽऽश्रयोऽप्यस्य स्वार्थरुद्धो न लभ्यते ।
पूर्वाधिकरणन्यायस्तस्मान्नैमित्तिकेष्वपि ॥

इति प्राप्त उच्यते

नैमित्तिकं तु प्रकृतौ वर्तते नित्यबाधया ।
हेतवोऽत्र त्रयः पूर्वा व्याख्याता एव संमतः ॥

असंयोगादबाधेन संयोगोऽस्य विशिष्यते ।
पुनः कर्तृविशिष्टस्य प्रयोगस्य परिग्रहात् ॥
साक्षाच्च पुरुषार्थत्वादनन्याश्रयगामिनः ।
एवं सिद्धे बलीयस्त्वे निवेशः प्रकृतौ स्थितः ॥

नन्वतुल्यार्थयोर्बाधः क्रत्वर्थपुरुषार्थयोः ।
न युक्तो न विरोधोऽस्ति भिन्नगोचरयोस्तयोः ॥
अतश्च पुरुषार्थत्वात्पृथक् प्रणयनक्रिया ।
प्राप्नोति चमसेनैव क्रत्वपूर्वस्य साधनात् ॥
न साधयति पश्वादीन् क्रत्वर्थश्चमसो यथा ।
गोदोहनं तथाऽन्यार्थे न क्रत्वर्थस्य साधनम् ॥
न चोभयार्थता तस्य वाक्यभेदप्रसञ्जनात् ।
विधिर्नास्त्येकवाक्यत्वे फलप्रणयने प्रति ॥
अन्या हि वचनव्यक्तिः फलोद्देशेन तद्विधौ ।
अन्या प्रणयनोद्देशे तस्मान्न द्वयसंभवः ॥

आसन्नासंभवे चेष्टा विप्रकृष्टेन संगतिः ।
युगपत्तेन न स्यातां संभवासंभवावुभौ ॥
अतः कर्मिपदाक्षेपान्नास्य प्रणयने विधिः ।
अविधानादशेषत्वान्न शेषान्तरबाधनम् ॥
अबाधाच्चमसोऽवश्यं क्रतयश्च क्रतुं प्रति ।
न चान्यस्यावकाशोऽस्ति क्रत्वर्थेऽन्येन साधिते ॥

तेन प्रणयनाभ्यासः कार्यः काम्यगुणं प्रति ।
यथेन्द्रवायुदेवत्ये ग्रहे मित्राद्यसंभवात् ॥
भिन्नं मित्रादिदेवत्यं ग्रहाभ्यासान्तरं विधेः ।
एवं प्रणयनाभ्यासः पुरुषार्थवशाद्भवेत् ॥
द्वयोरेवमवैगुण्यं क्रतोश्च स्यात्फलस्य च ।
न हि स्वसाधनत्यागादन्यसाधनसाधितैः ॥

कर्मभिः साध्यते स्वार्थश्चोदनाभिरलक्षितः ।
उच्यते, यो गुणः काम्यः क्रत्वर्थेन न गृह्यते ॥
क्रत्वर्थे कर्म गृह्णाति स एव स्वार्थसिद्धये ।
निर्व्यापारो गुणः कामं न साधयति कश्चन ॥
करणत्वं न तस्यास्ति निष्क्रियस्य फलं प्रति ।
तेनावश्यं क्रिया काचित् ग्राह्या या सप्रमाणिका ॥

सा च प्रकरणेनास्मै दत्ता प्रणयनात्मिका ।
तस्यां च चमसः पूर्वंप्राप्तोऽन्यो विद्यते गुणः ॥
तदबाधादशक्यश्च विधिर्गोदोहनादिनः ।
गोदोहनाद्यबाधित्वा यथाऽसौ विहितस्तथा ॥
तदबाधेन नैवेह तस्य कश्चिद्विधिः श्रुतः ।
काम्येन गृह्यमाणा च क्रिया प्रणयनात्मिका ॥
विप्रकृष्टफलं शक्ता स्वगुणं नोपजीवितुम् ।
क्रियया वा गृहीतस्य गुणस्याकरणे गुणः ॥
करणे तस्य दोषः स्यान्निषिद्धस्येव संगतो ।

भिन्नप्रयोजनोऽपि हि काम्यो गुणोऽवान्तरकार्यैकत्वाद्विरोधिगुणान्तरज्ञानमिथ्यात्वावधारणसमर्थः । तथा हि—

प्रासङ्गिकीं क्रतोः सिद्धिं काम्यो हि कुरुते गुणः ।
गृह्णन्ति न च सिद्धार्थाः क्रतवः स्वगुणं तदा ॥
सर्वस्यैव हि कार्यार्थः स्वगुणग्रहणादरः ।
अन्यार्थगुणसिद्धे तु कार्येऽस्य स्वगुणेन किम् ॥
हविःसंयवनार्थानामपां प्रणयनं हि यत् ।
तद्गृहीत्वा गुणः काम्यः प्रयुङ्क्ते न क्रियान्तरम् ॥
ततश्चास्य प्रयोगस्य नैवाङ्गं चमसो मतः ।
तदग्रहे कुतोऽर्थेन वैगुण्येन क्रियेत सः ॥
तेन प्रणयनाभ्यासः क्रत्वर्थोऽपि न विद्यते ।
निष्फलत्वादतो बाधः प्रयोगात्कर्मणः सकृत् ॥

तथा प्रणयनमपि निर्वर्त्यमानमेव गोदोहनस्याऽऽश्रयत्वं प्रतिपद्यते नान्यथेति पशुकामप्रयोगेऽन्यार्थेन समा गोदोहनेन निर्वर्तितत्वान्न चमसमुपसंगृह्णति । कार्यार्थे हि सर्वत्र साधनग्रहण न स्वरूपमात्रसंभावनार्थम् । तत्र यथैव प्रसङ्गलक्षणेऽन्यार्थैरवाङ्गैरुपक्रियमाणाः पशुपुरोडाशादयो न स्वाङ्गान्युपसंगृह्णन्ति । न तद्धान्या किंचिद्वैगुण्यं भवति । तथाऽत्र चमसहान्या नेति द्रष्टव्यम् । उत्पत्तिप्राप्तमपि विघ्नन्नुपसंगृहीतं नैवाङ्गं भवति । न चानङ्गमगृह्णतो दोषः । सुतरां वा न तद्ग्रहणे वैगुण्यप्रसङ्गः । न च सिद्धस्य प्रधानस्य प्रणयनस्य गुणानुरोधेनाऽऽवृत्तिः । न चैकान्तेन चमसः प्रणयनस्याङ्गम् । न चात्र चमसेन कृते गोदोहनेन पुनः कारणमाकाङ्क्ष्यते । किं तर्हि । गोदोहनेन कृते चमससंपादनार्था पृथक्करणशङ्का । कथं पुनर्गोदोहनप्राप्तिर्बलीयसी न चमस प्राप्तिरिति । तदुच्यते—

विशेषविहितं ह्येतदप्राप्ते चानवकाशकम् ।
पुरुषार्थसमीपे च चमसं तेन बाधते ॥

प्रयोगमात्रे हि चमसो, गोदोहनं विशेषे । पूर्वंप्राप्तश्चासौ तदबाधेन लब्धात्मा । नैवं गोदोहनम् । सावकाशश्चासौ नेतरत्, दूरे चासौ पुरुषार्थस्य । गोदोहनं तु संनिकृष्टार्थि, पुरुषार्था च सर्वशास्त्रप्रवृत्तिः । यश्च तादर्थ्यात्तादर्थ्यकृतो विशेषो नासौ तन्त्रमिति वक्ष्यति 'अर्थस्याविकृतत्वात्' इति । मन्दो ह्येष विशेषः, क्रत्वर्थेन क्रत्वर्थो विशेषादिविहितेन बाधितव्यो नान्यार्थेनेति । तेनोभयोः सनिधिवशात्परस्परशक्तिविलोपान्नियमः । प्रणयनस्याप्यन्यत्र प्रयोगे सिद्धात्मकस्य स्वसाधनोपसंहारशक्तिलोपः । गोदोहनस्यापि प्रणयनान्तरकल्पनाशक्तिविघातः । पशुकामप्रयोगव्यतिरिक्तेष्वेव चमसस्य शास्त्रीयत्वम् तस्मात्तद्विकारो गोदोहनम् । यथा तु विकृतौ चमस एव भविष्यति तथाऽष्टमे वक्ष्यति 'निवृत्तिर्वा कर्मभेदात्' इति । तेन प्रकृतावेवैतद्विकारकमिति ॥ १० ॥

( इति नैमित्तिकसाप्तदश्यादेः प्रकृत्यर्थताधिकरणम् ॥ ३ ॥ )

भा० प्र०—श्रुति में दर्शपूर्णमास प्रकरण में कहा गया है कि "चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्य" अर्थात् चमस से अप् प्रणयन करे किन्तु पशुकामी व्यक्ति गोदोहन पात्र से उसका सम्पादन करे ।" इस स्थल में गोदोहन पात्र से जो अप् प्रणयन उपदिष्ट होता है—क्या यह प्रकृतिगामी है या विकृतिगामी है—यही संशय है । इसमें पूर्वपक्षी का कहना है कि पूर्वाधिकरणोक्त नियम के अनुसार यह विकृतिगामी ही होगा, क्योंकि प्रकृति में अप् प्रणयन के लिए चमस उपदिष्ट होने से उसमें अन्य किसी पदार्थ की आकाङ्क्षा नहीं है ।

इसके समाधान में सिद्धान्ती का कहना है कि "नैमित्तिकं तद्विकारः प्रकृतौ" यह यह जो गोदोहन पात्ररूप अङ्ग है, यह प्रकृतिभूत कर्म में ही होगा एवं यह नैमित्तिक होने से नित्यद्रव्य जो चमस उसका बाध करेगा । कारण, "संयोगविशेषात्" = इस स्थल में पशुकामनारूपनिमित्त के साथ उसका सम्बन्ध है और इस तरह कामनामूलक होता है, अतः, नैमित्तिक नित्य से प्रबल ही होता है ।

यह ज्ञातव्य है कि वार्तिककार ने इस सूत्र के पूर्व अधिकरण का प्रत्युदाहरण होने से अन्य दृष्टान्त देकर इसकी व्याख्या की है । "सप्तदशानुब्रूयाद् वैश्यस्य" अर्थात् वैश्य होने पर सप्तदश ( सत्रह ) सामधेनी पाठ्य होगा" इस वाक्य में सामधेनी का जो वैश्यनिमित्तक साप्तदश्य है वह भी पूर्व के समान विकृतिमात्रगामी होगा—इस प्रकार पूर्वपक्ष होने पर सिद्धान्त किया गया है कि "नैमित्तिकं तद्विकारः प्रकृतौ" यह जो वैश्यनिमित्तक साप्तदश्य है, वह नित्य पाञ्चदश्य का बाधक होने से प्रकृतिभूत दर्शपूर्णमास में ही प्रविष्ट होगा, कारण, "संयोगविशेषात्" = इस स्थल में नित्यसम्बन्धस्वरूप

विशेष है और पाञ्चदश्य सावकाशविधिविहित होने से दुर्बल है, किन्तु, वैश्यनिमित्तक साप्तदश्यविधि के निरवकाश होने से प्रबल है, इसलिए यह प्रकृतिमात्रगामी होगा ।

"नैमित्तकं" = नैमित्तिकद्रव्य, "तु" = अन्य अधिकरण का सूचक है, "तद्विकारः" = उसका अर्थात् उस नित्य का विकार होकर अर्थात् बाधक होकर, "प्रकृतौ" = प्रकृतिभव कर्म में ही होगा, "संयोगविशेषात्" = क्योंकि, संयोगविशेष अर्थात् नित्य संयोगकृत विशेष है ॥ १० ॥

इति तृतीय नैमित्तिक गोदोहनादि का प्रकृतार्थताधिकरण ।

## [४] इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ११ ॥ पू०

शा० भा०—सन्ति पवमानेष्टयः, अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये, इति । तासां प्रकरणे समाम्नातं, ब्राह्मणो वसन्तेऽग्निमादधीत, इति तत्र संदेहः । किमग्न्याधेयं पवमानेष्ट्यर्थमुत नेति ? किं प्राप्तम् ? इष्ट्यर्थमिति । कुतः । प्रकरणात् । तासां प्रकरणे श्रूयते । अतस्तदर्थम् ॥ ११ ॥ क० पूर्व० ॥

त० वा०—अनारभ्यवादप्रस्तावेनाग्न्याधेयस्य प्रथमं तावदनारभ्यवादत्वमेव प्रतिपाद्यते । प्रकरणेन तावत्पवमानेष्ट्यर्थत्वं प्राप्नोति । श्रुत्या तु शुद्धाग्न्यर्थत्वम् । अतः 'प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत्' इतीष्ट्यर्थाग्निसंस्कारत्वाच्छ्रुतिवाक्यप्रकरणैरविरुद्धैरिष्ट्यर्थाग्न्यर्थत्वमवधार्यते । शुद्धाग्न्यर्थत्वे च निष्प्रयोजनत्वात्तद्द्वारेणैवाग्न्याधानग्रहणसामर्थ्यम् । तस्मादिष्ट्यर्थं सामान्याभिधानम् । अपि च प्रकरणादेव पवमानेष्टिविषयं द्रष्टव्यम् ॥ ११ ॥

भा० प्र०—श्रुति में "अग्नये पवमानाय अष्टादशकपालं निर्वपेत्, अग्नये पावकाय अग्नये शुचये" इस वाक्य में पवमानेष्टिगण विहित होता है । इसी के प्रकरण में श्रुति में कहा गया है कि "ब्राह्मणो वसन्ते अग्नीनादधीत" अर्थात् ब्राह्मण वसन्त में अग्न्याधान करे" । यह जो अग्न्याधान है, यह पवमानेष्टि का अङ्ग है या नहीं—यही संशय है । इसमें पूर्वपक्षी का कहना है कि "इष्टयार्थमग्न्याधेयम्" यह जो अग्न्याधान है, यह इष्टि का अङ्ग अर्थात् पवमानेष्टि का निमित्त है, अर्थात् अग्न्याधान पवमानेष्टि का भी अङ्ग है, कारण, "प्रकरणात्" यह पवमानेष्टि के प्रकरण में उपदिष्ट है और जो जिसके प्रकरण में उपदिष्ट होता है, वह उसी का अङ्ग होता है ।

"अग्न्याधेयम्" = अग्न्याधान, "इष्टार्थम्" = पवमान आदि इष्टि के लिए, "प्रकरणात्" = क्योंकि उस प्रकरण में यह पठित है ॥ ११ ॥ इति पूर्वपक्ष ।

## न वा तासां तदर्थत्वात् ॥ १२ ॥ सि० ॥

शा० भा०—पवमानेष्टयो ह्यग्न्यर्थाः । यद्यग्निरिष्ट्यर्थं स्यात्तस्तदर्थमग्न्याधेयमिष्टीनामुपकुर्यात् । निष्फलास्त्विष्टयः । तदर्थमग्न्याधेयमपि

निष्फलं स्यात् । कथं पुनरन्यर्थता पवमानेष्टीनाम् । निष्प्रयोजनत्वादेव, प्रयोजनवत्त्वाच्चाग्नीनाम् । भावयितव्या अपीष्टयो भूतानामग्नीनामर्थेन क्रियेरन् । तस्मादग्न्याधेयं पवमानेष्टयर्थम् ॥ १२ ॥ क० सि० ॥

त० वा०—यद्यारादुपकारकमाधानं भवेत्ततः प्रकरणादिष्टयर्थमिति गम्येत। वाक्यसंयोगात्तु द्वितीयानिर्दिष्टाग्निसंस्कारार्थमेतत् । एवं च सति यद्यग्नयः पवमानेष्टयर्था भवेयुस्ततद्द्वारेणाऽऽधानमपि तदर्थं भवेत् । तास्तु निष्फलत्वादग्न्यर्था इत्युक्तम् । अतश्च 'गुणानां च परार्थत्वात्' इत्यनेनैव परस्परानङ्गत्वम् । न हि द्वितीयाश्रुतिः प्रकरणेन बाध्यते ॥ १२ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है "न" = यह नहीं हो सकता है अर्थात् आधान पवमानेष्टि के लिए है—ऐसा नहीं हो सकता है। कारण "इष्टीनां तदर्थत्वात्" = पवमान इष्टि अग्न्याधान के लिए है, कारण, यहाँ पवमान इष्टियों का कोई फल नहीं है, और आधान यदि उसका अङ्ग होता तो वह भी निष्फल ही होता। अन्य पक्ष में आधान का फल अग्निसंस्कार है और उस संस्कृत अग्नि में अनुष्ठित होने पर ही यज्ञादि कर्म फलदायक होता है, इसलिए, पवमानेष्टियाँ आधान का अङ्ग है।

"न" = नहीं अर्थात् पवमानेष्टि के लिए अग्न्याधान नहीं है, 'वा' = पूर्वपक्ष के निरास के लिए है, "तासां तदर्थत्वात्" = क्योंकि, वे इष्टियाँ ही तदर्थ अर्थात् अग्न्याधान के लिए है ॥ १२ ॥ यह सिद्धान्त है।

## लिङ्गदर्शनाच्च ॥ १३ ॥

शा० भा०—लिङ्गं च दर्शयति, यथाऽग्न्यर्थाः पवमानेष्टय इति । किं लिङ्गम् । जीर्यति वा एष आहितः पशुर्यदग्निः, तदेतान्येवाग्न्याधेयस्य हवींषि संवत्सरे निर्वपेत् । तेन वा एष न जीर्यति । तेनैवं पुनर्नवं करोति तन्न सूक्ष्ममिति ॥ १३ ॥ क० युक्तिः ॥ आधानस्य पवमानेष्टयनङ्गताधिकरणम् ॥ ४ ॥

त० वा०—'तेनैनं पुनर्नवं करोति' इति चाग्निसंस्कारार्थतां दर्शयति ॥१३॥

( इति आधानस्य पवमानेष्टयनङ्गताधिकरणम् ॥ ४ ॥ )

भा० प्र०—पवमान इष्टियाँ ही अग्न्याधान का अङ्ग है, इसमें अन्य हेतु का प्रदर्शन करते हुए सिद्धान्ती ने कहा है कि—"लिङ्गदर्शनात् च" श्रुति में कहा गया है कि "जीर्यति" वा एष आहुतिः पशुर्यदग्निः । तदेतान्येवाग्न्याधेयस्य हवींषि संवत्सरे निर्वपेत्" = अर्थात् यह जो अहित अग्नि है वह जीर्ण हो जाता है। इसलिए, संवत्सर में वे इष्टियाँ करें, जिससे यह जरा प्राप्त न करे—इस श्रुतिवाक्य में कहा गया है कि पवमानेष्टि ही अग्न्याधान का अङ्ग है।

"लिङ्गदर्शनात् च" = लिङ्ग अर्थात् ज्ञापक वेदवचन दृष्ट होने से इष्टियाँ ही अग्न्याधान का अङ्ग हैं ॥ १३ ॥

इति चतुर्थ आधान का पवमानेष्टयनङ्गता अधिकरण ॥

## [५] तत्प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः ॥ १४ ॥ पू०

शा० भा०—तदेतदाधानं किं प्रकृत्यर्थमुत सर्वकर्मार्थमिति संदेहः। किं प्राप्तम्। उच्यते। तत्, प्रकृत्यर्थम्। कथम्। यथाऽन्येऽनारभ्यवादाः प्रकृत्यर्थास्तेनैव हेतुना ॥ १४ ॥ क० पूर्व० ॥

त० वा०—सिद्धेऽनारभ्यवादत्वे खादिरत्वादिवदेव प्रकृत्यर्थत्वमग्निद्वारेण प्रकृत्यनुप्रवेशात् ॥ १४ ॥

भा० प्र०—यह जो आधान है वह क्या प्रकृतिभूत कर्म का अङ्ग है, अथवा वह विकृतिभूत कर्म का अङ्ग है—यही संशय है

इस प्रसङ्ग में पूर्वपक्षी का कहना है कि अन्य अन्तरम्य विधि के समान यह भी प्रकृतिभूत कर्म का अंग है। कारण, जुहु इत्यादि की जो पर्णतादि विधि है, वह जैसे जुहु आदि कर केवल प्रकृतिभूत कार्म का ही अङ्ग होता है, वैसे ही यह जो आधान है, यह भी अग्नि को द्वार कर प्रकृतिभूत कर्म का ही अङ्ग होगा।

"तत्" = यह आधान, "प्रकृत्यर्थः" = प्रकृतिभूत कर्म के लिए ही "यथा अन्ये अनारम्यवादाः = अन्य अनारम्य विधियों के समान ॥ १४ ॥ इति पूर्वपक्ष।

## सर्वार्थं वाऽऽधानस्य स्वकालत्वात् ॥ १५ ॥ सि० ॥

शा० भा०—सर्वकर्मार्थं वाऽऽधानम्। कोऽर्थः। सर्वकर्मार्थं यदग्निद्रव्यं, तदर्थमाधानं न प्रकृत्यर्थम्। न प्रकृतीः प्रकृत्य श्रूयते। न च श्रुत्यादयोऽस्य सन्ति, येऽङ्गभावमुपपादयन्ति। अन्येष्वनारभ्यवादेष्वन्यतो निर्ज्ञातेऽङ्गभावे ततो विचारः, किं प्रकृतेरङ्गभूतानि विकृतेरिति। तस्मात्तेषु युक्तम्। इह त्वङ्गभावे न कारणमस्ति। तस्मादग्निप्रयुक्तमाधानं न कर्मप्रयुक्तम्। सर्वकर्मार्थस्त्वग्नय इति सर्वार्थमित्युच्यते। अपि चास्य स्वतः कालो विधीयते। स न विधातव्यः। तदा ज्योतिष्टोमस्य प्रयोगस्तदेवं कर्तव्यम्। तदा च वसन्तः। एवं यदा दर्शपूर्णमासयोः प्रयोगस्तदा कर्तव्यम्। तदा पौर्णमास्यमावास्या वा। अप्रकृत्यर्थे तु न प्रकृतिप्रयोगे क्रियेत। तत्र कालवचनं युक्तम्। तस्मान्न प्रकृत्यर्थम् ॥१५॥

क० आधानस्य सर्वार्थताधिकरणम् ॥ ५ ॥

त० वा०—सूत्रात्तावदियं बुद्धिर्भवति, यदि प्रकृतिकाल आधानं क्रियेत ततः प्रकृत्यर्थं भवेत्। स्वकाले तु वसन्तादौ क्रियमाणमगृह्यमाणविशेषत्वात्सर्वार्थं विज्ञायते। तथा चानुष्ठानसाधारण्यमस्यैकादशे वक्ष्यति 'द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्' इति। प्रकृत्यर्थत्वे च दर्शपूर्णमासज्योतिष्टोमार्थमेतद्भवेत्। तत्र च प्रधानवशवर्तित्वाद्वसन्ते पौर्णमास्यमावास्ययो क्रियेत। तथा च। सति वसन्ते पौर्णमास्याममावास्यायामादधीतेत्येतानि वचनान्यनर्थकानि भवेयुः तस्मात्सर्वार्थत्वमिति। न त्वेतद्युक्तम्। न ह्याधानस्य प्रकृत्या विकृत्या वा संबन्धे

किंचित्प्रमाणमस्ति। प्रकरणे सति यत्पवमानेष्ट्यर्थं न जातं तद्बिनैव श्रुत्यादिषट्केनान्यकर्मार्थं भविष्यतीति कुत एतत्। नन्वेवं सति पूर्वाधिकरणेनैव गतमेतत्। सत्यं गच्छेत्। यदि पवमानेष्टिवद्दर्शपूर्णमासादीन्यपि निष्फलानि भवेयुः। तेषां तु फलवत्त्वात् 'गुणानां च परार्थत्वात्' इत्येष न्यायो नास्तीति शक्यमग्निद्वारेण कर्माङ्गत्वं कल्पयितुम्। निष्फलस्याऽऽधानस्यावश्यकल्पनीये प्रयोजनेऽग्निद्वारेण खादिरत्वादिवत्कर्मार्थत्वमापद्यते। शक्नुवन्ति हि प्रयोगमध्यस्था वह्नयः कर्माण्युपस्थापयितुम्। यथैव प्रोक्षणादीनां व्रीह्यादिस्वरूपमतिक्रम्य, खादिरत्वादीनां च स्रुवादिस्वरूपं, कर्मपूर्वप्रयुक्तत्वं कल्पितं तथाऽऽधानस्याप्यग्निस्वरूपातिक्रमेण कल्पयितव्यम्। यदि चाग्निस्वरूपमात्रप्रयुक्तमेवाऽऽधानं भवेत्ततः कर्माण्यनाहितेनाप्यग्निना सिध्येयुः। तैश्च पुरुषस्य सगुणैः कार्यं नाग्निभिः। तेनावश्यंभाविनि कर्मसम्बन्धे प्रकृत्यर्थत्वमद्बिरुक्तत्वादुपन्यस्तम्। यत्तु स्वकालत्वं तदुपदेशातिदेशप्राप्तस्य यूपच्छेदनवत्प्रयोगसाधारण्यार्थमिति न सर्वार्थत्वं गमयति। यदपि वसन्तादिग्रहणं तदप्यप्राप्तविषयमर्थवद्भविष्यति। न हि दर्शपूर्णमासार्थस्याऽऽधानस्य वसन्तकालत्वं प्राप्तं, प्रत्यर्धमासं प्रयोगप्रसक्तेः। नाप्यग्निहोत्रेतरदर्विहोमार्थस्य पौर्णमास्यमावास्याकालप्राप्तिः। न च प्रयोगसाधारण्यं स्वकालवचनादृते सिध्यतीति नानर्थकत्वम्। अत एवं व्याचष्टे। न कस्यचित्कर्मणोऽङ्गमाधानं, किं तर्हि, द्वितीयासंयोगादग्न्यर्थमेव। ते तु 'अग्नयश्च स्वकालत्वात्'। इत्यनेन सर्वार्था भविष्यन्तीति तद्द्वारेण सर्वार्थत्वमित्युच्यते। स्वकालत्वादित्यपि स्वातन्त्र्याम्नानादित्यर्थः। यत्त्वितरानारभ्यवादवदिति। तथाभिधीयते—

सिद्धेऽङ्गत्वे ततस्तेषां किमर्थत्वं विचारितम्।
न तु कर्माङ्गभावे हि प्रमाणं किंचिदस्ति ते॥

खादिरत्वादीनि स्रुवादिभिः संयुक्तान्यपि तत्स्वरूपप्रयुक्तत्वं न प्रतिपद्यन्ते। स्रुवादिशब्दानामाकृतिवचनत्वात्। विनाऽपि खादिरत्वादिभिरुपपत्तेश्च। अखादिरोऽपि हि तदाकारयुक्तः स्रुवशब्दवाच्यो भवत्येव। तत्र प्राक्कर्मार्थत्वान्न जातिनियमस्य प्रयोजनमस्तीति युक्तं स्वरूपातिलङ्घनम्। इह त्वाहवनीयादिशब्दानां संस्कारनिमित्तत्वान्नाऽऽधानाद्बिना प्रवृत्तिरुपलभ्यत इति शब्दप्रवृत्तिनिमित्तत्वेनैवार्थवत्ता विज्ञायते। यत्तु तेन विनाऽपि कर्माण्यविगुणान्येव भवेयुरिति। नैव तदभावेन तत्कृतं वैगुण्यं भवतिः। किं तर्हि। आहवनीयाद्यसंभवकृतम्। यदि ह्याधानमकुर्वंतस्तावन्मात्रमेव न स्यात्ततो नैव वैगुण्यं भवेत्। तदभावे त्वाहवनीयादयोऽपि न भवन्ति। ते चैकान्तेन कर्मणामङ्गम्। अतस्तत्कृता वैगुण्यप्रसक्तिः। यदि चाग्निमात्रेण कर्माणि संबध्येरंस्ततस्तत्स्वरूपस्यान्तरेणाप्याधानं निष्पत्तेरतत्प्रयुक्तता भवेत्। 'यदाहवनीये जुहोति' इत्येवमादिचोदनार्थः पुनर्न कदाचिदाधानमन्तरेण संभाव्यते। तेन कर्माणि कुर्वता, तदप्यवश्यं कर्तव्यम्।

तस्मादग्न्यर्थम् । यत्तु 'द्रव्यस्याकर्मकालनिष्पत्तेः' इति सा कृत्वा चिन्तेति तत्रैव वक्ष्यते । एतेन पवमानेष्टीनामप्यग्न्यर्थत्वं व्याख्यातम् । आशङ्का शेषश्चोत्तरेणाधिकरणेन व्यावर्त्यते ॥ १५ ॥

( इति आधानाय प्रकृतिविकृत्यर्थताधिकरणम् ॥ ५ ॥ )

भा० प्र०—आधान केवल प्रकृतार्थं नहीं है, इस प्रकार सिद्धान्त में कहा गया है "सर्वार्थं वा" सभी आधान अग्निकर्म का ही अङ्ग है, कारण, "स्वकालत्वात्" = वह स्वकाल में अर्थात् अपने विरोधी काल में अनुष्ठित होता है ।

आशय यह है कि जो किसी कर्मविशेष का अङ्ग होता है, वह उस कर्म के समय में अनुष्ठित होता है । किन्तु श्रुति के अनुसार यह अवगत होता है कि वसन्तादि निर्दिष्ट काल में अनुष्ठान कर्तव्य है । इसलिए, वह किसी का भी अङ्ग न होने पर वह प्रकृति और विकृति सर्वत्र अनुगत होगा । जुहु आदि का जो दृष्टान्त दिया गया है, वह सङ्गत नहीं है, कारण, जुहु का जो पलाशमयत्वादि है, वह विहित होने पर भी जुहु के स्वरूप कीं हानि नहीं होती है, क्योंकि, किसी भी काष्ठ की जुहु होने से जुहु का स्वरूप लोकसिद्ध है । इसलिए, विधि को आनर्थक्य होने से जुहु के लिए पलाशमयत्व नहीं है, किन्तु, वह अपूर्व के लिए है । इस स्थल में आवहनीयादि अग्नि का स्वरूप अदृष्ट है, शास्त्रैकसमधिगम्य होने से विधि अग्नि का स्वरूप बोधक है और पवमानेष्टि उसी का पूर्वताकारक है, इसलिए, आधान प्रकृतिविकृति सर्वत्र कर्म का ही अङ्ग है ।

"सर्वार्थं" = सभी कर्मों के लिए अर्थात् प्रकृति एवं विकृति सभी कर्मों का अङ्ग है, "वा" = पूर्वपक्ष के निरास के लिए है, "आधानस्य स्वकालत्वात्" = क्योंकि, आधान स्वकाल अर्थात् स्वविधिबोधित काल में हो अनुष्ठित होता है ॥ १५ ॥

इति पञ्चम आधान का प्रकृतिविकृति सर्वकर्मार्थता अधिकरण ॥

## [६] तासामग्निः प्रकृतितः प्रयाजवत्स्यात् ॥ १६ ॥ पू०

शा० भा०—सन्ति पवमानेष्टयः, अग्नये पवमानाय, इत्येवमाद्याः । तत्र संदेहः । किं पवमानेष्टिसंस्कृतेऽग्नौ पवमानेष्टयः कर्तव्या उत नेति । किं प्राप्तम् । तासां खलु पवनानेष्टीनां पवमानेष्टिसंस्कृतोऽग्निः प्राकृतितः स्यात् । कुतः । चोदकसामर्थ्यात्, प्रयाजवत् । यथाऽऽसुप्रयाजा भवन्ति चोदकेन, एवं पवमानेष्टिसंस्कृता अग्नयोऽपि भवेयुः ॥ १६ ॥ क० पूर्व० ॥

त० वा०—'तस्यां तु स्यादप्रयाजवत्' इत्येतदधिकरणन्यायेन पवमानहविःसंस्कृताग्निसाध्यत्वं तासामस्ति नास्तीति विचारः । तत्र 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्' इत्येवं पवमानेष्टीनां दर्शपूर्णमासप्रकृतित्वे सिद्धे यथैव प्रयाजादीन्यतिदिश्यन्ते तथैव पवमानेष्टिसंस्कृताग्निवर्तित्वमपि । ननु चाऽऽहवनीयादयः

सर्वकर्मणां प्रत्यक्ष श्रुता एवाङ्गत्वं प्रतिपद्यन्त इति न वक्तव्यं प्रकृतित, इति। नैष दोषः। यत्रैव प्रत्यक्षश्रुत्या जुहोतिस्तत्र प्रकृतिसमकालमाहवनीयसंबन्धोऽवकल्पते। यत्र पुनर्द्रव्यदेवतासंबन्धाद्यजिमात्रे कल्पिते 'चतुरवत्तं जुहोति' इति प्रकृतितो होमः प्राप्नोति तत्र द्वारस्य प्राकृतत्वादाहवनीयेनापि प्रकृतित एव भवितव्यम्। अतः साधूक्तं प्रकृतित इति। ननु याः संस्कारार्थं क्रियन्ते तासामप्यन्याः प्राप्नुवन्ति, तासामप्यन्या इत्यनवस्था प्राप्नोति। नैष दोषः। सर्वानवस्थानां सामर्थ्येन व्यवस्थानात्। यावत्यो ह्यग्निकालं पौर्णमास्यमावास्यादिकं नातिक्रामन्ति तावत्यः करिष्यन्ते॥ १६॥

भा० प्र०—पवमानेष्टि करने के लिए अग्नि आवश्यक है। वह जो अग्नि है वह क्या अन्य पवमानेष्टि से संस्कृत होगा, अथवा उसमें संस्कृत अग्नि आवश्यक नहीं है—यही संशय है।

इसमें पूर्वपक्षी का कहना है कि "तासामग्निः प्रकृतितः स्यात् प्रयाजवत्"=विकृतिभूत कर्म में प्रकृतिभूत कर्म की इतिकर्तव्यता जो प्रयाजादि उसका जैसा अतिदेश होता है, इस स्थल में भी वैसे ही होगा। कारण, सभी इष्टियों की ही प्रकृति दर्शपूर्णमास हैं। सभी इष्टि यागों में इसी की इतिकर्तव्यता का अतिदेश होता है, अतः, परमेष्टि भी जब इष्टि है, तब उसमें भी इसके अङ्ग का अतिदेश होगा, अतः, पवमानेष्टि भी जब इष्टि है, तब उसमें भी इसके अङ्ग का अतिदेश होगा और पवमान संस्कृत अग्नि ही जब दर्शपूर्णमास याग का अङ्ग है, तब पवमानेष्टि में भी अन्य पवमानेष्टि से संस्कृत अग्नि आवश्यक है।

"तासाम्" = उन पवमान इष्टियों में, "अग्निः" = अग्नि, "प्रकृतितः स्यात्" = प्रकृति से अर्थात् प्रकृति के अनुसार होगी, "प्रयाजवत्" = प्रयाज के समान। इति पूर्वपक्ष॥ १६॥

## न वा तासां तदर्थत्वात्॥ १७॥ सि०॥

शा० भा०—न वा, इष्टिसंस्कारोऽग्नीनां पवमानेष्टिषु स्यात्। कस्मात्। तासां तदर्थत्वात्। ताः पवमानेष्टयोऽग्निसंस्कारार्था इत्युक्तम्। यच्च नामाङ्गभूतं तच्चोदकेन गृह्यते। अग्निप्रयुक्तश्च पवमानेष्टिसंस्कारो न दर्शपूर्णमासप्रयुक्तः। तेन न चोदकेनाऽऽकृष्यते। अपि च पवमानेष्टय इष्टिसंस्कारवर्जितां प्रकृतिमपेक्षन्ते। अविहितत्वात्तस्यामवस्थायां पवमापनेष्टीनाम्॥ १७॥ क० सिद्धान्तः॥ पवमानेष्टीनामसंस्कृतेऽग्नौकर्तव्यताधिकरणम्॥ ६॥

त० वा०—यन्नाम प्रयाजादि प्रकृतेरङ्गं भवति तदतिदिश्यते। न तु पवमानेष्टयः कर्माङ्गमित्याधानन्यायेम साधितम्। अतो 'रूपं वाऽशेषभूतत्वात्' इत्याहवनीयादिस्वरूपमतिदिश्यते नेष्टव्यः। आरम्भणीया त्वङ्गमिति कृत्वाऽधिकर-

णान्तरभारप्स्यते। तदीयश्चैष न्यायोऽत्रापि भविष्यति। सत्यपि चाङ्गत्वे यावन्न विधीयन्ते तावन्नैवेष्टयः प्रकृतौ दृश्यन्ते। यावच्च किं केन कथंभावैस्तद्भावना न पूर्यते तावद्विधिर्न प्रवर्तते। तेन पवमानेष्टिरहितायां प्रकृतौ ताभिरितिकर्तव्यता गृह्यमाणा तद्व्यतिरिक्ताश्यविहितैव केवला ग्रहीतुं शक्यते अन्यथा ह्येकस्मिन्वाक्ये विहितवदपेक्षणमविहितवच्च विधानमिति स्वरूपविप्रतिषेधः स्यात्। तस्माद्यादृगाहवनीयः प्राक्पवमानेष्टिभ्यस्तादृगेव तासां प्राप्त इति निष्पन्नस्याऽऽहवनीयस्य प्रयोजनमपेक्षयाणस्योपदेशेनातिदेशेन वाऽङ्गत्वं शक्यं कल्पयितुम्। एतास्तु तन्निष्पत्त्यर्था एवेति न तत्कृतमुपकारमपेक्षन्ते। न चानपेक्षितमुपदेष्टुमतिदेष्टुं वा शक्यते। तस्मादाधानमात्रसंस्कृतेनाग्निना संबद्धव्या इति सिद्धम्॥ १७॥

( इति पवमानेष्टिषु पवमानेष्ट्यनतिदेशाधिकरणम्॥ ६॥ )

भा० प्र०—पवमानेष्टि में जिस अग्नि की आवश्यकता है, उसको अन्य पवमानेष्टि से संस्कृत करना होगा—यह बात नहीं है, क्योंकि, इसमें अनवस्था होगी और अतिदेश विधि से उसकी प्राप्ति होगी, इस प्रकार से जो कहा जाता है, वह भी ठीक नहीं है, कारण, पवमानेष्टि दर्शपूर्णमास की विकृति होने पर भी प्रयाजादि जैसे उसका अङ्ग है, वैसे ही यह दर्शपूर्णमास का अङ्ग नहीं है, किन्तु, यह अग्नि का अङ्गमात्र है और प्रकृतिस्थित समस्त इतिकर्तव्यता के अंश के द्वारा ही कथन्ताकाङ्क्षा निवृत्त होने से—वह किस रूप से किया जायेगा, इस प्रकार की जिज्ञासा की निवृत्ति के लिए वही विकृति में अतिदिष्ट होता है। किन्तु पवमानेष्टि दर्शपूर्णमास की विकृति होने पर भी इतिकर्तव्यता न होने से उसका अतिदेश नहीं होगा, इसलिए, किसी भी अग्नि से पवमानेष्टि कर्तव्य है।

"न" = नहीं, अर्थात् पवमानेष्टि में अन्य पवमानेष्टि से संस्कृत अग्नि की आवश्यकता नहीं है, "वा" = पूर्वपक्ष के निवारण के लिए है, "तासां तदर्थत्वात्" = क्योंकि, वे इष्टियाँ अग्नि के लिए हैं॥ १७॥

इति षष्ठ पवमानेष्टि का पवमानेष्ट्यनतिदेशाधिकरण॥

## [७] तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात्॥ १८॥ पू०

शा० भा०—ज्योतिष्टोमे पशुरग्नीषोमीयो, यो दीक्षितो यदग्नीषोमीये पशुमालभते, इति, तथा सवनीयोऽनुबन्ध्यश्च। सन्ति च पशुधर्मा उपाकरम्, उपानयनम्, अक्ष्णया बन्धो, यूपे नियोजनं, नयनं, संज्ञपनं, विशसनमित्येवमादयः। ते किं सर्वेषामग्नीषोमीयसवनीयानुबन्ध्यानामुत अग्नीषोमीयस्य सवनीयस्य च उताग्नीषोमीयस्यैवेति। किं प्राप्तम्। अविशेषात्सर्वपशूनाम्। कथमविशेषः। ज्योतिष्टोमप्रकरणे सर्वे पशवः समाम्नाताः। तत्प्रकरणापन्नत्वात्सर्वे पशुधर्मैः संबध्यन्ते। न चैषां तत्र कश्चिद्विशेषः। एवं प्राप्ते ब्रूमः।

सवनीयस्यैते धर्मा भवेयुः । तुल्यः सर्वेषां पशुविधिः स्यात्, यदि प्रकरणे विशेषो न भवेत् । भवति तु प्रकरणे विशेषः । सवनीयानां प्रकरणे पशुधर्माः समाम्नाताः । आग्नेयः पशुरग्निष्टोम आलभ्यः । आग्नेयो ह्यग्निष्टोमः । ऐन्द्राग्नः पशुरुक्थ्य आलभ्यः । ऐन्द्राग्नानि ह्युक्थ्यानि । ऐन्द्रो वृष्णिः षोडशिन्यालभ्यः । ऐन्द्रो वै वृष्णिरैन्द्रः षोडशी । सारस्वती मेष्यतिरात्र आलभ्या । वाग्वै सरस्वती, इति प्रकृत्य पशुधर्मा आम्नाताः । तस्मात्सवनीयस्य प्रकरणाद्भवितुमर्हति ॥ १८ ॥

त० वा०—इदानीं स्थानस्य प्रकरणेन सह पूर्वश्च विरोधाविरोधौ चिन्त्येते । ज्योतिष्टोमेऽग्निष्टोमसंस्थे त्रयः पशव आम्नाताः, अग्नीषोमीयः सवनीयोऽनुबन्ध्यश्चेति । ते सर्वे कथंभावैर्धर्मानपेक्षन्ते । तथौपवसथ्येऽहनि, अग्नीषोमप्रणयनोत्तरकालमुपाकरणादयः पशुधर्माः पठ्यन्ते । तेषु चतुर्धा संदेहः । किं त्रयाणामपि पशूनामर्थेनाऽऽम्नायन्तेऽथ सवनीयार्थेनैवाऽथ सवनीयाग्नीषोमीयार्थेनाथ केवलाग्नीषोमीयार्थेनैवेति । किं प्राप्तम् । तत्र 'स्थानाच्च पूर्वस्य' इत्येवमामादिसूत्रसंगत्यर्थमसूत्रं तावत्पूर्वपक्षं करोति सर्वार्था इति । यदि त्वयमेव पक्षः सूत्रेण परिगृह्येत तत उत्तरसूत्राण्यसंगतान्येव भवेयुः । यदा पूर्वसूत्रेणैव सर्वार्थत्वं प्रतिज्ञायते तदा किमनेन 'स्थानाच्च पूर्वस्य' इति । प्रकरणाविभागादेव हि पूर्वस्यापि सिद्धिः । 'श्वस्त्वेकेषाम्' इत्यापि प्रकरणभावकथनेनाप्रतिज्ञातकेवलसवनीयार्थता व्यावर्त्यमाना कथं संबध्येत । एवं तदनुसारित्वादुत्तरसूत्राणामप्यसंगतिः । अथवा सौत्र एव पूर्वपक्षे केवलसवनीयार्थत्वमसूत्रितं द्वितीयं पक्षं कृत्वा 'श्वस्त्वेकेषाम्' इत्यादि संबन्धनीयम् । यत्तु भाष्यकारेण नाऽऽश्रितं' सर्वाद्यः पक्षः सुखमसूत्रः क्रियते । सौत्रपक्षान्तराले तु तत्संगत्यर्थमसूत्रपक्षाश्रयणं सूत्रकारस्य शून्यहृदयतामादयति । तस्मादाद्य एव मुक्तकः पक्षः । तस्योपपत्तिः, पशुधर्मा हि ज्योतिष्टोमप्रकरणे, केनचिदपि पशुविशेषेणासंयुक्ताः श्रूयन्ते । कथम् ।

एतद्देशे ह्यनुष्ठानं वाक्याद्दीक्षस्य यद्यपि ।
तथाऽप्युत्पत्तिदेशेऽस्य प्रक्रिया क्रयसंनिधौ ॥

दीक्षासु हि सोमक्रयसमीपेऽग्नीषोमीयः समाम्नायते । तस्य च यद्यपि वचनसामर्थ्यात्पशुधर्मसमीपेऽनुष्ठानं भविष्यति । तथाऽपि प्रकरणेन नैव व्यापृतं, सर्वकरणानामुत्पत्तिदेशानतिरेकात् । सवनीयानामपि सुत्याकालमुत्पत्तिवाक्यम् । औपवसथ्ये तु गुणार्थैव श्रुतिः । न च तया प्रकरणं भवति । अनुबन्ध्या तु दूरस्थैव । सोमान्ते क्रियमाणत्वात् । तस्मादवान्तरप्रकरणवाक्यसंयोगाभ्यामप्रतिबद्धेन ज्योतिष्टोमप्रकरणेनाग्नीषोमीयस्य स्थानं विप्रकृष्टार्थे बाधित्वा ज्योतिष्टो-

मार्थास्तावदेत इत्येतत्कल्प्यते। तस्य च सोमद्रव्यकत्वान्न पशुधर्मैः किंचित्प्रयोजनामिति 'आनर्थक्यात्तदङ्गेषु' इत्येवमङ्गेष्वेवावतरन्तोऽङ्गत्वाविशेषात्त्रिष्वप्यवतरन्ति। सत्यपि तदङ्गत्वे योग्यत्वाभावान्न दीक्षणीयादिष्ववतरणम्। सत्यपि च योग्यत्वे सामान्यसंबन्धाभावान्न तदनङ्गपशूनाम्। तस्मात्त्रयाणां सामानं विधानमिति प्राप्तेऽभिधीयते। स्यादेतदेवं, यदि ज्योतिष्टोमद्वारेण प्रकरणाविशेषः स्यात्। अस्ति तु विशेषः सवनीयानामौपवसथ्येऽह्न्युत्पत्तेः। 'आग्नेयमजमग्निष्टोम आलभेत' 'ऐन्द्राग्नमुक्थ्ये द्वितीयम्' इत्यादिना हि पशुधर्मसमीपे सवनीया उत्पादिताः। तस्मात्केवलसवनीयार्था एवेति ॥ १८ ॥

भा० प्र०—ज्योतिष्टोम में जो अग्निष्टोम नाम की संस्था है, उसमें अग्नीषोमीय सवनीय और अनुबन्ध्य इन तीन पशुओं की आवश्यकता है। "यो दीक्षितो यदग्नीषोमीयं पशुमालभते" इत्यादि श्रुतिवाक्य में यह उपदिष्ट होता है। उपाकरण, उपानयन, बन्धन, नियोजन, नयन, संज्ञपन एवं विशनन आदि धर्म अग्नीषोम प्रणयन के बाद विहित होता है, किन्तु, पुरुषसंस्कारसाधक ये धर्म अग्नीषोम प्रणयन के पठित होता है। इसमें यह संशय है कि पशुसंस्कारसाधक ये धर्म सामान्यरूप से इन तीन प्रकार के पशुओं के साथ सम्बद्ध होगा या ये सवनीय पशु के लिए ही उपदिष्ट होता है, अथवा सवनीय एवं अग्नीषोमीय पशु के लिए ही विहित होता है या केवल अग्नीषोमीय पशु के लिए ही उपदिष्ट होता है। इस प्रसङ्ग में किसी का कहना है कि ये धर्म सामान्य रूप से तीनों पशुओं के लिए ही उपदिष्ट होता है, कारण, ज्योतिष्टोम प्रकरण में जब ये तीनों पशु उपदिष्ट होते हैं एवं तीनों पशुओं से ही जब ज्योतिष्टोम यज्ञ सम्पन्न होता है, तब ये संस्कार तीनों पशुओं के लिए ही उपदिष्ट होता है—इसमें संशय नहीं हो सकता है।

इस विषय में अन्य पूर्वपक्षी का कहना है कि "तुल्यं सर्वेषां पशुविधिः प्रकरणाविशेषात्" यदि इनमें प्रकरणगत कोई विशेष नहीं रहता तो सभी पशुओं के लिए ही ये धर्म समान रूप में उपदिष्ट होता है—यह कहा जा सकता था। किन्तु, यहाँ जब प्रकरणगत विशेषत्व है, तब ऐसी आपत्ति नहीं की जा सकती है। ये धर्म सवनीय पशु के प्रकरण में अवान्तर प्रकरण कहकर ज्योतिष्टोम रूप महाप्रकरण प्रबल है। इसलिए, यह सवनीय पशु के लिए ही उपदिष्ट होता है अर्थात् सवनीय पशु में ही उपदेशविधि में मानना चाहिए।

"सर्वेषां" = सभी पशुगण, "पशुविधिः" = पशुसम्बन्धी संस्कार की विधि या अनुष्ठान, "तुल्यः" = तुल्य होता है, प्रकरणाविशेषात्" = यदि प्रकरणगता अविशेष रहता अर्थात् विशेषत्व नहीं रहता, किन्तु विशेषत्व है, अतः, यह तुल्य नहीं है।

भाष्यकार ने सूत्र का यथाश्रुत अर्थ को अन्यथा किया है, कारण, ऐसा नहीं करने पर सूत्रों की सङ्गति नहीं होती है एवं श्रुतिवाक्य के साथ भी विरोध हो जाता है ॥ १८ ॥ ( पूर्वपक्ष )

**स्थानाच्च पूर्वस्य ॥ १९ ॥**

शा० भा०—यदुक्तं प्रकरणात्सवनीयार्था इति । एतद्‌गृह्णीमः । क्रमाच्चाग्नीषोमीयस्य । तस्य हि क्रम औपवसथ्येऽहनि समाम्नातम् । तस्माद्‌द्वयोरपीति ॥ १९ ॥ क० पूर्व० ॥

त० वा०—कथं पुनरिदं श्रुतिलिङ्गाधिकरणविपरीतमभिधीयते । न हि तत्रैवमिष्टं प्रकरणाद्विदेवतादयो राजसूयार्थाः स्थानाच्चाभिषेचनीयार्था इति । तथा श्रुत्यैन्द्री गार्हपत्यार्था लिङ्गेनेन्द्रार्थेति । युक्तं तत्र प्रकरणाम्नानेन बलीयसा प्रमाणेन निराकाङ्क्षीकृते जघन्यप्रमाणानुत्थानात्समुच्चयानाश्रयणम् । न ह्यत्र पुनः कल्पनया विना शेषस्य न किंचित्सिध्यति । नापि शेषिणामिन्द्राग्न्यादीनाम्, उपायान्तरेणापि स्मृतिसिद्धेः । इह पुनः सत्यपि सवनायसंबन्धाद्धर्माणां नैराकाङ्क्ष्येऽग्नीषोमीयस्य पशुधर्मैर्विना सिद्ध्यभावात्प्राप्त्यन्तरमवश्यं कल्पनीयमुभयोरविप्रतिपत्तः । न चैतस्य तदा दर्शपूर्णमासप्रकृतित्वं भवेत् । यो हि प्रकृतिभूतः पशूनां स दर्शपूर्णमासविकारो भवति इतरे तु प्राणिद्रव्यकत्वसामान्यात्तद्विकाराः तत्र किं सवनीयार्थास्ततः सारूप्यद्वारप्रभवेनातिदेशे नाग्नीषोमीयो गृह्णात्यथोपदेशगन्धेन केनचिदित, उपदेशान्तर्गतत्वात्क्रमेण विनियोगो युक्तः । षड्विधोपदेशप्रत्ययस्तमये ह्यतिदेशः कल्प्यते । तस्माद्यथैवा न्यत्रोपदेशातिदेशाभ्यां प्रकृतिविकृत्यर्थत्वं यागगतस्य व्यापारस्य तथैवह स्थानप्रकरणाभ्यामुभयार्थत्वम् । अनुबन्ध्यायास्तु सर्वोपदेशाभावादतिदेशेनैव प्राप्तिर्भविष्यति । तस्मादनुपालम्भः सूत्रस्य ॥ १९ ॥

भा० प्र०—अवान्तर प्रकरण के अनुसार उपाकर्म आदि धर्म सवनीय पशु को ही संस्कारसाधन के रूप में उपदिष्ट होता है—यदि यह सिद्धान्त कोई आचार्य कहे तो दूसरे वादी का कहना है कि "स्थानात् पूर्वस्य च" = सवनीय पशु के संस्कारसाधक के रूप में जो यह उपदिष्ट होता हैं, उसे अस्वीकार नहीं करता हूँ, किन्तु, यह केवल सवनीय पशु के ही संस्कार साधक के रूप में उपदिष्ट नहीं होता है, परन्तु, यह अग्नीषोमीय पशु के भी संस्कार साधक के रूप में उपदिष्ट होता है, कारण, "स्थानात्" = स्थान अर्थात् सन्निधि के अनुसार यही निश्चित है, क्योंकि, यह अग्नीषोमीय पशु के बाद उसके समीप में पठित है, इसलिए, सन्निधि अर्थात् सामीप्य के अनुसार यह उसके भी संस्कार साधक के रूप में उपदिष्ट है, यह समझना चाहिए। इसीलिए ये धर्म अग्नीषोमीय एवं सवनीय उभय पशुओं के संस्कार साधन के पक्ष में उपदेशविधिबोध्य और अन्य पशु का अर्थात् अनुबन्ध्य पशु के पक्ष में यह अतिदेश विधि है ।

"स्थानात्" = स्थान अर्थात् सन्निधि के अनुसार, 'पूर्वस्य च' = पूर्व का भी अर्थात् अग्नीषोमीय पशु का भी धर्मरूप में उपदेश विधि से विहित है ॥ १९ ॥ पूर्वपक्ष ।

**श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्था ॥ २० । सि० ॥**

शा० भा०—एकेषां शाखिनां श्वः सवनीयानामाम्नानम् । तदपेक्ष्येयमेषां गुणार्था पुनः श्रुतिः । कः पुनर्गुणो, यदर्थैषा श्रुतिः । उच्यते । पशून्संकीर्त्य, यथा वै मत्स्योऽविदितो जनमवधूनुते, एवमेतेऽप्रज्ञायमाना जनमवधुन्वत इत्येषामविज्ञाने दोषमभिधाय, एभिः कथं सवनानि पशुमन्तीति प्रश्नरूपकेण वपाप्रचारो गुणो विधीयते तदर्थैषा श्रुतिः । वपाप्रचारेणैकवाक्यत्वात् । किमतो यद्येवम् । न सवनीयानां प्रकरणेन पशुधर्माः, क्रमादग्नीषोमीयार्था एवेति । किं पुनस्तच्छ्व आम्नानम् । आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं पशुमुपाकरोति, इति ॥ २० ॥ क० सि० ॥

त० वा०—यदुक्तं स्थानादग्नीषोमीयार्था इति । एतद्गृह्णीमः । यत्तु प्रकरणात्सवनीयार्था इति, एतन्न मृष्यामहे । कुतः ।

गुणार्थौपवसथ्येऽह्नि सवनीयपुनःश्रुतिः ।
उत्पत्तिः प्रक्रिया चैषामाश्विनग्रहणोत्तरा ॥

'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति' इति हि सवनीयानामुत्पत्तिः । श्व इति चौपवसथ्येऽहनि स्थितः सुत्यां ब्रवीति । कः पुनर्गुण इति—स्ववाक्ये संयोगाभावात्पृच्छति । तद्दर्शयति । सर्वान्सवनीयाननुक्रम्य निन्दा श्रूयते 'यथा वै मत्स्य' इति । यथा वै किल मत्स्यो जले विचरन्, अनवधारितगतिः प्रेक्षकजनमधूनुते किमितो गतः किमगत इति, एवमेवैते पशवः क क्रियन्तामित्येवमप्रज्ञायमानाः कर्तृजनमधुन्वते । तेन पशुकीर्तनं तावदेवमर्थं न विधानार्थमिति गम्यते । साऽपि निन्दा परतः प्रश्नशेषत्वेन नीता । तदेभिः पशुभिः सवनीयसमाख्यातैः कथं सवनानि पशुमन्ति कर्तव्यानीति । सोऽपि प्रतिप्रश्नरूपविध्यन्तरशेषत्वं प्रतिपद्यते 'वपय प्रातःसवने चरन्ति' इति । तस्मादेतद्गुणार्थेयं पुनःश्रुतिः । न च सा प्रकरणबुद्धिं करोतीति । किं पुनस्तच्छ्व आम्नानमिति—गुणार्थत्वात्तदपि नोत्पत्तिसमर्थमिति मन्यते । भाष्यकारेण केवलस्याऽऽग्नेयस्य श्व अम्नानं दर्शितं नेतरेषाम् । तत्र केचिदाहुः । प्रदर्शनार्थत्वादस्याऽऽग्नेयग्रहणमविवक्षितत्वात्सर्वार्थमिति मन्यमानेनेति । वाक्यान्तराण्येवंरूपाणि द्रष्टव्यानीत्यपरे । सर्वथा तु केवलाग्नेयप्रदर्शनमेवोपयुज्यते । यद्यपि ह्यैन्द्राग्नादीनामौपवसथ्य एवोत्पत्तिस्तथाऽपि तेषामनित्योत्तरसंस्थार्थत्वनैव शक्तिर्नित्यवदाम्नातान्पशुधर्मान् ग्रहीतुमित्यग्नीषोमीयस्थानमेव बलीयः स्यात् । यस्तु नित्यत्वेन ग्रहणसमर्थस्तस्य प्रकरणाभाव उक्त एव । तस्मान्न सवनीयार्था इति ॥ २० ॥

भा० प्र०—सवनीय अग्नेय पशु का उत्पत्तिवाक्य औपवसद्य दिन के अवसान में अर्थात् "सुत्याह में पशु के अनुष्ठानविषयक के रूप में पठित है। इसमें कोई कह सकता है कि चतुर्थ औपसद्य दिवस में आग्नेय = सवनीय पशु का आलम्भन आदि विषयक वाक्य भी दृष्ट होता है। इसके समाधान में कहा गया है —"तत्र प्राक् श्रुतिर्गुणार्था" =यह जो प्राक्श्रुति है अर्थात् पञ्चमदिवसीय पशु के सम्बन्ध में जो चतुर्थ दिवस में उल्लेख है, वह क्या प्रचार रूप गुण के विधान के लिए है, कारण, ज्योतिष्टोम के अग्निष्टोम नाम की संस्था में सवनीय दिवस में अर्थात् पञ्चम दिन के सुत्याह में आग्नेय छात्र–इस एक ही पशु का ही आलम्भन होता है और उस दिन प्रातः सवन, माध्यन्दिन सवन एवं तृतीय सवन ये तीन याग विभिन्न समय में सोमाभिषपूर्वक अनुष्ठित होता है, उनको किस प्रकार पशुयुक्त किया जाय, इस संशय के उत्तर में कहा गया है "वपया प्रातःसवने प्रचरन्ति पुरोडाशेन, माध्यन्दिनसवने अङ्गैस्तृतीयसवने" अर्थात् प्रातःसवन में वपाप्रचार = वपा से होम आदि कार्य होगा। माध्यन्दिनसवन में पशुपुरोडाश देकर और तृतीय सवन में पशु का अङ्ग देकर कार्य होगा, अतः चतुर्थ दिवस का जो आग्नेय पशुविषयक वाक्य है—वह अनुवाद वाक्य है, दूसरे दिन में "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय सवनीयं पशुमुपाकरोति" = इस वाक्य में यूपपरिव्यान के बाद जो पश्वङ्गविषयक वाक्य है—यही विधि है। इसलिए, अग्नीषोमीय वाक्य पशुविधि होने से वही प्रबल है और उसी के समीप में पशु का संस्कार साधकधर्म उपदिष्ट होने से उसके साथ ही उसका सम्बन्ध है, किन्तु सवनीय पशु के साथ सम्बन्ध नहीं है।

"श्वः" = दूसरे दिन अर्थात् सुत्याह में अर्थात् सोमाभिषवदिवस में, "तु" = पूर्वपक्ष के निरास के लिए, "एकेषां" =एक सम्प्रदाय के मत के अनुसार अर्थात् एक शाखावालों का, "तत्र" = उस शाखा में, "प्राक्श्रुतिः" पूर्व में अर्थात् औपवसथ्य दिवस के सोमाभिषव के पूर्व दिवस में जो श्रुति अर्थात् श्रुतिमध्य में उल्लेख है वह, "गुणार्था" = गुण के लिए अर्थात् अङ्गविधान के लिए है ॥ २० ॥ सिद्धान्त।

## तेनोत्कृष्टस्य कालविधिरिति चेत् ॥ २१ ॥

शा० भा०—नैतदस्ति क्रमादग्नीषोमीयार्था एवेति। प्रकरणात्सवनीयार्थाः। पूर्वेद्युरेवाऽऽम्नानं विधानार्थम्। आश्विनवाक्यं कालगुणविधानार्थम्। कथम्। तेन वपाप्रचारेणोत्कृष्टस्य काल एष विधीयते। प्रातःसवने वपाप्रचारे चोदिते सति पश्वालम्भोऽपि तत्रैव प्राप्नोति। तत्र कालानियमे प्राप्ते, आश्विनं ग्रहं गृहीत्वा, इति कालमात्रं विधीयते। त्रिवृता यूपं परिवीयोपकरोतीत्यनुवादः। इतरथा परिव्याणस्य कालो विधीयेत, उपाकरणस्य च। तत्रानेकगुणविधानाद्वाक्यं भिद्येत। तस्मात्सवनीयार्थाः पशुधर्मा इति ॥ २१ ॥ क० आ० ॥

त० वा०—इदानीं कतरत्सवनीयानामुत्पत्तिवाक्यमित्येतत्परिज्ञानाधीनाऽधिकरणसिद्धिः। तत्र पूर्वंपक्षवाद्याह, इति चेत् सवनीयप्रकरणाभावं मन्यसे। तदयुक्तम्। कुतः।

सवनीयान्पुरोत्पाद्य वपामुत्कृष्य वाक्यतः।
तत्राप्यनियमे प्राप्ते तद्विशेषो विधीयते॥

'वपया प्रातःसवने प्रचरन्ति' इत्यनेनैव वचनेनोत्कृष्टे प्रधाने प्रधानदेशत्वादङ्गानामुपाकरणादिष्वप्युत्कृष्टेषु कालानियमे प्राप्ते सति, आश्विनग्रहणानन्तर्यं विधीयते। तेन तदेव गुणार्थं श्रवणम्। इतरथा हि वाक्यं भिद्येत, परिव्याणोपाकरणयोः कालविधानाद्द्रव्यदेवतायुक्तस्य च यागस्य विधेः। ननु चातिदेशप्राप्तमेव परिव्याणं तस्मिन्नेव काले यागे विधीयमानेऽनूद्येत। सत्यमतिदेशेन प्राप्तं न तु तदिदानीं क्रियते। यूपसाधारण्येन 'तत्कालास्तु' इत्येवमग्नीषोमीयकालकृतादेवोपकारसिद्धेः। एवं तर्हि साधारण्यादेव प्राप्तं विद्यमानमनूद्येत। न शक्यं तदनुवदितुमप्रत्यभिज्ञानात्। तन्नामान्यतः प्राप्तमनूद्यते यत्ताद्रूप्येण प्राप्तं प्रत्यभिज्ञायते। न च पूर्वेद्युः कृतस्याऽऽश्विनग्रहणोत्तरकालं वर्तमानत्वेनानुवादो भवति। न हि तदाऽसौ परिव्ययति। न च पूर्वकृतस्य पर्यग्निकृतादिशब्दवदीदृशेन शब्देनानुवादः। पूर्वोत्तरकालकर्मविधिद्वयपरिच्छिन्नत्वात्। एवं तर्ह्यस्माद्वाक्यात्प्राप्तमनूद्यतां 'स आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति' इति। तदपि नास्ति प्रत्यभिज्ञानाभावादेव। यदेतदप्राकृतं सवनीयपरिव्याणम्, एतस्य शुद्धस्य श्रवणाद्रशनायाश्च प्राकृतपरिव्याणनिबन्धनत्वाद्येन कर्नाचिद्वासःप्रभृतिना करणे सति त्रिवृत्वानुवादो न प्राप्नोति। तत्रानेकार्थविधानाद्वाक्यभेदः। तदा चैवं भाष्यग्रन्थः। **इतरथा हि परिव्याणस्य कालो विधीयेत**—यत्संबन्धित्वेनोपात्तं त्रिवृद्द्रव्यं कालो विधीयेत। **उपाकरणस्य** चेति—उपाकरणकालो द्रव्यदेवताविशिष्टं च कर्म विधीयेतेत्यर्थः। तस्मादस्य गुणार्थत्वादस्ति पूर्वेद्युः सवनीयानां प्रकरणमिति॥ २१॥

भा० प्र०—सिद्धान्ती ने जो कहा है कि चतुर्थ दिवसीय "आग्नेयं पशुमालभेत" यह वाक्य अनुवाद है और पञ्चम दिवसीय आश्विनं ग्रहं गृहीत्वा इत्यादि सवनीयं पशुमुपाकरोति, यह वाक्य ही विधि है। इसमें पूर्वपक्षी का कहना है कि "तेन उत्कृष्टस्य कालविधिः" = पञ्चम दिवसीय यह वाक्य उपाकरण आदि अङ्ग की कालविधि है और चतुर्थदिवसीय "आग्नेयं पशुमालभेत" यह वाक्यविधि है। कारण, चतुर्थ दिवसीय इस आग्नेय पशु का आलम्भविषयक वाक्य से विहित पशु दूसरे दिन के वपाप्रचार रूप कर्म के लिए दूसरे दिन हटाना होगा और ऐसा होने पर पञ्चदिवस में किसी समय में उपाकरणादि पशु संस्कार कर्म अनुष्ठेय है, इस संशय के होने पर उसकी मीमांसा के लिए

कहा गया है "आश्विनं अहं गृहीत्वा त्रिवृता यूपं परिवीय सवनीयं पशुमुपाकरोति" अर्थात् आश्विन ग्रह के ग्रहण के बाद सवनीय पशु का उपकरणादि होगा, अतः, इसको विधि कहकर जो पूर्ववाक्य का अनुवाद किया जायेगा—यह सङ्गत नहीं है। ऐसा न होने पर उपकरण आदि धर्म अग्नीषोमीय पशु के समान सवनीय पशु के लिए भी उपदिष्ट है, किन्तु उपदिष्ट नहीं है—यह कहना होगा।

"तेन" = उस वपा प्रचार के लिए, "उत्कृष्टस्य" = उत्कृष्ट अर्थात् आगे के समय में उसको बढ़ा लिया गया है, उस पशु के सम्बन्ध में वह "कालविधि" = कालविधायक वाक्य, "इति चेत्" = यदि यह कहा जाय ॥ २१ ॥ पूर्वपक्ष।

## नैकदेशत्वात् ॥ २२ ॥

शा० भा०—नैतदेवम्, अग्नीषोमीयार्था एवैते क्रमात्। आश्विनकालं ह्याम्नानं विधानार्थम्। गुणार्थं एतस्मिन् वाक्यं भिद्येत, न विधानार्थे। न हि वपाप्रचारेणोत्कृष्टस्य कालविधिः संभवति। एकदेशो हि वपाद्रव्यम्। तेन संनिपातिनो वपासंस्कारानुत्कर्षेन्नोपाकरणम् ॥ २२ ॥ क० आ० नि० ॥

## अर्थेनेति चेत् ॥ २३ ॥

शा० भा०—आह। अर्थेन ह्युत्कृष्टस्य कालो विधीयते। मुष्टिना पिधाय वपोद्धरणमासीत्, आ वपाहोमात्, इति श्रूयते। पूर्वेद्युर्वपोद्धरणं मुष्टिना पिधाय न शक्नुयादेतावन्तं कालमासीनेनावस्थातुम्। अवश्यमाहारविहारादयस्तेन कर्तव्या इति ॥ २३ ॥ क० आ० ॥

## न श्रुतिविप्रतिषेधात् ॥ २४ ॥

शा० भा०—नैतदेवं, श्रुतिविप्रतिषेधे भवेदेवम्। न च श्रुतिविप्रतिषेधः। तृणमुष्टिना पर्णमुष्टिना वा पिधायिष्यते। ननु, आस्ते, इत्युपवेशने भवति। नावश्यमुपवेशेन एव, सीदासीन्येऽपि दृश्यते। तद्यथा गृहाणि परिगृह्याऽऽस्ते, क्षेत्राणि परिगृह्याऽऽस्ते, इत्यनुपदेशनेऽपि भवति व्यापारनिवृत्ता। इहापि तृणमुष्टिना पर्णमुष्टिना वा विधाय, आ वपाहोमादुदासिष्यते। तस्मादाश्विनकालमाम्नानं विधानार्थं न सवनीयानां प्रकरणे पशुधर्मा। तस्मान्न सवनीयार्थाः ॥ २४ ॥

त० वा०—यदा हि पूर्वेद्युः साङ्गानां सवनीयानामाम्नानं तदा तत्रैव सर्वानुष्ठाने प्राप्ते वचनाद्वपाप्रचारादिमात्रमुत्कृष्येत नोपाकरणादीनि। 'तदादि वाऽभिसंबन्धात्' इति ये वपाहोमोत्तरकालाः पदार्थास्तत्संनिपातिनो वा तन्मात्रस्योत्कर्षो भवेन्न प्राग्भाविनामुपाकरणादीनाम्। यानि चाज्ञातकालान्यङ्गानि तेषां प्रधानकालत्वं वक्ष्यते। पश्वङ्गानि त्ववधारितपूर्वेद्युःकालत्वान्न प्रधानकालं गच्छति।

तस्माद्वपाप्रचारेणानुत्कृष्टस्यानेनैव वाक्येनोत्कर्षः कर्तव्यः। ततश्च गुणवाक्ये सति अनेकार्थविधानाद्वाक्यं भिद्येत। उत्पत्तिवाक्ये न दोषः। तस्मादेतदुत्पत्त्यर्थमिति। न त्विह भाष्यकारेण विधेयानेकार्थत्वं दर्शितम्। एवमेव तु गुणार्थं एतस्मिन्वाक्यं भिद्येतेत्यभित्यभिहितम्। शक्यस्त्विह पूर्वेद्युः प्राप्तोपाकरणोत्कर्षमात्रविधानाद्वाक्यभेदः परिहर्तुम्। तत्र केचिदेवं समर्थयन्ते। यथा किल 'आग्नेय्याऽऽग्नीध्रम्' इति ज्योतिष्टोमसंबन्धे तद्विशेषे च विधीयमानेऽनेकार्थत्वमुक्तमेवमिह वपाप्रचारेणानुत्कृष्टस्योपाकरणस्योत्कर्षश्च कर्तव्यः, तद्विशेषश्चेत्यनेकार्थत्वमिति। न त्विदमाग्नेयीवाक्यसदृशम्। तत्र हि संबन्धविशेषपरे विधौ सामान्यसंबन्धप्राप्तिमन्यतोऽपेक्षमाण क्वासुचिदाग्नेयीषु तत्सद्भावादितरविषयसामान्यसंबन्धं प्रत्यन्यथानुपपत्तिः क्षीयते। अतस्तु वेदेनाप्यभ्युपेतं तद्विधिं कल्पयतो वाक्यभेदो भवति न त्विह तादृक्प्रतिपक्षोऽस्ति। यतः सामान्येनोत्कर्षप्राप्तिं दृष्ट्वा विशेषपरस्यार्थापत्तिकोपः कल्प्येत। तत्रापि चेत्तदर्थापत्तिबाधिनी प्रतिपक्षभूता सामान्यप्राप्तिर्नाभविष्यन्नाऽऽग्नेयीमात्रप्रमाणे निराकरिष्यते। प्राप्तेऽपि कर्मण्येकपदोपात्तानेकार्थविधिः शोणाद्युदाहरणैस्तत्र तत्र प्रतिपादितः। तेन यद्यपि 'आश्विनं ग्रहं गृहीत्वा' इत्यनेन द्वयमपि प्रातःसवनमाश्विनग्रहोत्तरकालत्वं च विधीयेत तथाऽपि विधायकस्यैकपदानुसारात् 'तस्य तस्योपदिश्येत' इत्येतदापत्तिर्नास्ति किमुतात्रैकविधानेऽर्थादेवेतरसिद्धेः। अत एव भाष्यकारेणानेकविधिदूषणेऽभिहितं न चानेकोऽर्थः परस्परासंबन्धे सति शक्यो विधातुमिति। जानाति ह्यसौ तथा संबद्धानामर्थानामेकस्मिन्विहितेऽन्ये विनैवाऽऽयासेन प्राप्नुवन्ति। तेन यद्येकस्मिन्विहितेऽर्थादर्थसहस्रमपरमापद्यते न कश्चिद्विरोधो विधेरायासो वा दृश्यत इत्याश्रीयते। तस्य त्वन्यथाऽप्युपपद्यमान त्वमेवैको निराकरणोपायः। न चेहास्ति स पक्षो यत्रैष विधिः सुत्याप्रातःसवनसंबन्धावक्त्वाऽऽश्विनग्रहणानन्तर्यं विदध्यात्। तस्माददोषः। न चैव त्वेष दोषः, यस्यानेकद्रव्यदेवताविशिष्टकर्मविधानम्। अपि च ज्योतिष्टोम सुत्याप्रातःसवनविशेषकालसंयोगेऽपरः कल्पनीयः। सर्वेषु चोत्कर्षापकर्षेषु सामान्यविशेषरूपोऽनेकार्विधिदोषोऽस्तीति प्राप्तकर्मगुणविध्यसम्भवात्कर्मान्तरविधित्वप्रसङ्गः। तद्यथा 'माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते' इत्यत्राभिषेचनीयस्य माध्यंदिनसवनमाहेन्द्रस्तोत्रकालविधेरनेकार्थत्वमेवं 'तिष्ठन्तं पशुं प्रयजति' इत्यादिष्वपि योजनीयम्। अपि चैकस्मिन्पदार्थेऽनुष्ठीयमाने विधीयमाने चार्थान्तरं द्वेधाऽऽपद्यते। किंचित्प्रयत्नान्तरसाध्यं किंचित्तदनुनिष्पाद्यम्। यथा भक्षविधौ ग्रहणादयस्तृप्तिश्च। तत्र यत्प्रयत्नान्तरसाध्यं न च तस्मिन्नकृते विहितकरणं शक्यमित्यवधार्यते तत्रार्थापत्तिलभ्यं विधिशक्त्यन्तरं कल्प्यते। या च यावती च शास्त्रीया साऽवगतिर्भवति। यत्त्वनुनिष्पादि बह्वपि पुरुषस्य शास्त्रस्य च व्यापारान्तरमन्तरेणैव सिध्यति न तेन कश्चिदायासा

भवति। न चेहाऽऽश्विनग्रहणानन्तर्ये विधीयमानेऽनुष्ठीयमाने वा सुत्याप्रातःसवनादिसम्बन्धे भेदेन व्यापारितव्यम्। तेन नात्र कश्चिदुष्कर्षसामान्यं विधत्ते। श्रुतमात्राश्विनग्रहणार्थमात्रे विहिते यदि तदन्तर्गतत्वात्सुत्याप्रातःसवनाहर्भागविशेषमुहूर्तनाडिकाक्षणलवनिमेषकालत्वद्रव्यसत्वादयः प्रसज्यन्ते किं क्रियताम्। अपि च शिंशपामानयेत्यत्रापि वृक्षत्वद्रव्यत्वसत्ताद्याक्षेपाद्वाक्यभेदः स्यात्। अतः पूर्वेद्युः प्राप्तस्योपाकरणस्य कालान्तरमात्रमाश्विनग्रहणानन्तर्यं विधीयत इत्यदोषः। अन्ये तु द्वयोः परिव्याणोपाःकरणयोरुत्कर्षाद्वाक्यभेदं समर्थयन्ते। तदपि तु सुपरिहरं, केवलपरिव्याणोत्कर्षादेव 'तदादि वाऽभिसम्बन्धात्' इत्येवमुपाकरणोत्कर्षसिद्धेः। तत्रैतत्स्यात्। प्रकृतिप्राप्तो धर्म उत्कृष्यमाणस्तदाद्युत्कर्षं करोति नापूर्व इति। तदयुक्तम्। 'कृतदेशात्तु पूर्वेषाम्' इत्यत्राप्राकृतानामपि विदेवनादीनामपकर्षवर्णनेन 'यथाऽपूर्वम्' इत्यस्य विशिष्टविषयत्वव्याख्यानात्। अथवा 'स आश्विनं ग्रहम्' इत्येतद्वाक्यप्राप्तपरिव्याणान्तरानुवादादवाक्यभेद इति। अथोच्येत। अविशेषितसाधनकत्वात्तत्र त्रिवृत्वानुवादो न संभवतीति। तदयुक्तम्। एवं हि सिद्धान्तवाद्यपि पूर्वपक्षत्वादिना चोदितः स्वयं परिहारं वक्ष्यति सोऽस्यापि भविष्यतीति। ननु च तस्यापूर्वकर्पविधानादनेकार्थाविधिरुपपद्यते नास्येति। नैष विशेषः। यत्र ह्येकक्रियाविशेषणमनेकमुपादीयते तत्र तद्द्वारेण तद्विधिः सुलभ इति विशिष्टविधानन्यायः। यत्र पुनः स्वविशेषणा विशिष्टा क्रिया विधीयते, वाक्यान्तरप्राप्तस्य क्रियान्तरस्य विशेषणं तत्रावश्यावर्तनीयो विधिप्रत्ययः। देवतादिविशिष्टो यागो हि विधीयमान स्वविशेषणमेवाऽऽक्षेप्तुं समर्थो नाविधीयमानपरिव्याणविशेषणम्। तेनापूर्वकर्मविधिष्वप्येतद्विवेक्तव्यं, कतरत्तद्विशेषणं कतरदन्यविशेषणमिति। तस्मादयमुभयपक्षभाक्त्वान्नैकस्य चोदयितव्यः। तत्रावश्यं सिद्धान्तवादिनोभयोः परिव्याणयोः साधारणी रशनेति परिहारो वक्तव्यः। वक्ष्यति हि 'रशना च लिङ्गदर्शनात्। इति। यद्यदेतस्य यूपस्य परिव्याणं तस्य तस्यैषा वाक्येन विज्ञायते। तथाप्राप्तानुवादान्न वाक्यभेदः। अथवा यत् त्रिवृता यूपं परिवीयोपाकरोतीति पूर्वेद्युः प्राप्तमुपाकरणस्य परिव्याणानन्तर्यमनुद्याऽऽश्विनग्रहणानन्तर्यं विधीयते। वरं च वाक्यभेदाद्व्यवहितकल्पनाश्रयणम्। तस्मादेवं वर्ण्यते। अवश्यं तावत्सवनीयानामेकेनोत्पत्तिरेकेन च गुणो विधातव्यः। तत्र पूर्वेद्युस्तनस्य तावन्न कश्चिदुत्पत्तिवाक्यत्वे हेतुरस्ति। नन्वितरस्यापि नास्ति। यद्यप्येवं तथाऽपि विकल्पसमुच्चयासंभवात्केनचिद्विशेषेणान्यतरस्मिन्नाश्रयितव्ये विशेषोऽभिधीयते। पुरस्तादेतदेव स्थितं यथोपदेयो गुणस्तिरोहितकर्मानुवादेन शक्यो विधातुं, किं नानपादेयः। स हि कुण्डपायिनामयने होमस्येव बलात्कर्मान्तरत्वमापादयति। तदिह वपाप्रचार उपादेयः सुत्याकालस्थसवनीयानुवादेन शक्यो विधातुं किं पुन प्रातःसवनश्रुत्या

वद्देशसवनीयप्रत्यभिज्ञाने सति । श्वस्तने पुनराम्नाने निर्ज्ञातप्रयोजनत्वादाश्विनग्रहणेन सहाङ्गाङ्गिसंबन्धाभावात्कालार्थे संयोगे तस्यानुपादेयत्वात्कर्मोद्देशेन विध्यनुपपत्तेरवश्यं कालोद्देशेन कर्म विधेयम् । अथाप्याश्विनं प्रत्यङ्गत्वेन विधिस्तथाऽप्याङ्गिनोऽनुपादेयत्वादेवैव वचनव्यक्तिः अतश्च गुणविध्यनुपपत्तेरवश्यं प्रकरणान्तरन्यायेनोत्पत्तिविधेरन्येनान्तरेणाप्रतिबंधादुत्पत्तावववधार्यमाणायां कर्मान्तरं स्यात् । तेनास्य तावत्कालापेक्षयोत्पादकत्वं सिद्धम् । अतश्चेतरस्य परिशेषसिद्धं गुणविधित्वम् । न हि तस्य किंचिद्भेदकारणम् । अत एव वपाप्रचारेणोत्कर्षोऽस्ति नास्तीति विचारितम् । सति हि वपाप्रचारेणोत्कर्षे पूर्वस्यैव प्रातःसवने विपरिवृत्तेः कालं प्रत्युपादानं प्रत्यभिज्ञानात्कल्प्येत 'यथोक्तं संनिधौ त्वविभागात्' इति । काले च कर्मणि विधीयमाने प्रत्ययस्य तन्निकृष्टेऽर्थे व्यापारो भविष्यति । वपाप्रचारकालस्य पुनः सवनीयोत्पत्तिक्रियातः क्रियान्तरविशेषणत्वाद्दुष्प्रतिपादो विशिष्टविधिरिति वाक्यभेदः स्यात् । अस्मत्पक्षे पुनर्यथैकवाक्यत्वं भवति तथोक्तम् । एवं च परिव्याणस्यापि प्रकरणलभ्योऽङ्गभाव इहानुवदिष्यते । अन्यथा पुनर्विप्रकृष्टतरेण क्रमेण प्राप्तिमपेक्ष्यानुद्येते । तस्मादयमेवोत्पत्तिविधिः । कथं पुनरस्मिन्पक्षे भाष्यकारस्य वाक्यभेदोपन्यासः । उच्यते ।

कर्मणो भेद एवायं वाक्यभेदोऽभिधीयते ।
संबन्धे त्वेकवाक्यत्वमर्थान्यत्वेऽपि गम्यते ॥

वाक्यं भिद्येतेति । 'न तेनैकवाक्यतामियात्' यथा 'कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात्' इत्यत्रासत्यपि लक्षणतो वाक्यभेदं परस्परासंबन्धाक्षिप्रायेणोक्तं 'साकाङ्क्षं त्वेकवाक्यम्' इत्यत्र च संबन्धमात्राभिप्रायं तथेहोत्पत्त्यर्थत्वे सति तदेकवाक्यतां याति न गुणार्थ इत्युच्यते ॥ २२ ॥ २३ ॥ २४ ॥

भा० प्र०—पूर्वपक्षी ने जो यहाँ आशङ्का की है उसका समाधान सिद्धान्ती ने इस प्रकार किया है "न एकदेशत्वात्" = वपाप्रचार आदि पशुविषय अनुष्ठान का एकदेश अर्थात् अंशविशेष होने से उत्कर्ष होने पर भी उपाकरण आदि अङ्गों का उत्कर्ष नहीं होगा और चतुर्थ दिवसीय "आग्नेयं पशुमालभते" यह वाक्य यदि उत्पत्ति वाक्य होता तो पञ्चम दिवसीय "आश्विनं ग्रहं गृहीत्वा" इत्यादि वाक्य को कालविधायक वाक्य कहा जाता । किन्तु चतुर्थ दिवसीय वाक्य जब उत्पत्ति वाक्य नहीं है, अपि तु, वह गुणार्थ = गुणविषयक है, तब इसको भी कालविषयक नहीं कहा जा सकता है ।

"न' = नहीं, अर्थात् वह कालविधि नहीं है, "एकदेशत्वात्" = क्योंकि, वपाद्रव्य एकदेश अर्थात् पशु का अंशविशेष नहीं होता है ॥ २२ ॥ आशङ्कापरिहार ।

भा० प्र०—सिद्धान्ती के परिहार को सुनकर पूर्वपक्षी ने पुनः शङ्का की है कि "अर्थेन" = इस स्थान में पूर्वाङ्गों का उत्कर्ष अर्थतः प्राप्त है, कारण, ऐसा न होवे पर

"मुष्टिना पिधाय वपोद्धारणमासीतावपोहोमात्" अर्थात् वपानिष्कासनपूर्वक मुष्टि से ढाँककर वपोहोम तक बैठना होगा, इस श्रुतिवाक्य के अनुसार अवगत होता है कि वपानिष्कासन के बाद वपाहोम तक मुट्ठी से आच्छादन कर बैठना होगा, किन्तु, पूर्व दिन में यदि वपानिष्कासन किया जाय तो दूसरे दिन जब तक वपाहोम नहीं होता है तब तक एक ही रूप में बैठना सम्भव नहीं है, क्योंकि, उसका उत्सर्ग विसर्ग भी अर्थात् मलमूत्र त्याग भी करना होगा, इसलिए, दूसरे दिन वपानिष्कासन का उत्कर्ष होगा और ऐसा होने पर उपाकरण आदि अङ्गसमुदाय भी दूसरे दिन ही होगा—यह अर्थतः सिद्ध है, कारण, उपाकरण आदि न होने पर संज्ञापन नहीं हो सकता है और ऐसा न होने पर वपानिष्कासन नहीं हो सकता है, कारण, ऐसा न कहने पर इस श्रुतिवाक्य के साथ विरोध होगा। ऐसा होने पर दूसरे दिन में किसी समय उपाकरण आदि करना होगा, अतः, स्वतः संशय होता है, "आश्विनं ग्रहं गृहीत्वा" इत्यादि श्रुतिवाक्य में उपकरणादि का कालनिर्देश कर इस संशय को दूर किया जायेगा।

"अर्थेन" = अर्थवश से अर्थात् प्रयोजन के अनुसार पूर्व अङ्गों का भी उत्कर्ष करना होगा, "इति चेत्" = यदि यह कहा जाय ॥ २३ ॥ आशंका।

भा० प्र०—उक्त आशङ्का के उत्तर में सिद्धान्ती का कहना है कि 'न' = ऐसी आशङ्का ठीक नहीं है, कारण, "श्रुतिविप्रतिषेधात्" = यदि श्रुतिविप्रतिषेध होता तो यह कहा जा सकता था, किन्तु, इस पक्ष में भी जब उक्त "मुष्टिना विधाय" इत्यादि श्रुति के साथ कोई विरोध नहीं है, अतः, पूर्वपक्षी की आशङ्का व्यर्थ है। (भाष्यकार ने अन्यथा व्याख्या की है।) कारण, "मुष्टिना पिधाय" इत्यादि श्रुतिवाक्य में मुष्टि से पिधान आवरण आवश्यक है, यह तृणमुष्टि भी हो सकती है। मनुष्य के हाथ की ही जो मुष्टि होगी, उसका क्या नियम है। अतएव "आश्विनी ग्रहं गृहीत्वा" इत्यादि वाक्य ही विधि और पूर्वदिवसीय "आग्नेयं पशुम्" इत्यादि अनुवाद है। अतः, पशु-संस्कारक धर्म सवनीय प्रकरण में न रहने से सवनीय पशु के पक्ष में ये उपदेश विधि प्राप्त नहीं है।

"न" = न, अर्थात् उपकरण आदि का उत्कर्ष जो अर्थतः नहीं है, "श्रुतिविप्रति-षेधात्" = कारण, यदि श्रुतिविप्रतिषेधात् अर्थात् विरोध होता, ऐसी स्थिति में इस प्रकार का कहना सम्भव था, किन्तु श्रुतिविप्रतिषेध नहीं है ॥२४॥ इति आशङ्कानिरास।

## स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २५ ॥

नास्ति सवनीयानां प्रकरणमित्येवं सति पूर्वेणैव हेतुना स्थानेन पूर्वस्याग्नीषोमीयस्य भवितुमर्हति। संस्कारोऽयं पशुयागप्रयुक्तो न ज्योतिष्टोम-प्रयुक्तः। ज्योतिष्टोमप्रयुक्तत्वे न विशेषः पशूनां स्यात्। पशुयागा अपि हि

**धर्मान्प्रयोक्तुमपूर्वत्वात्समर्थाः प्रकरणवन्तश्च। तस्मात्क्रमादग्नीषोमीयधर्मा इति ॥ २५ ॥ क० उपसंहारः ॥**

त०वा०—सर्वं सवनीयप्रकरणं निराकृत्य पूर्वोक्तेनैव हेतुना सिद्धान्तं निगमयति। यद्वाऽवान्तरप्रकरणेनाबाध्यमानं स्थानवाधेनैव महाप्रकरणं सर्वार्थत्वप्रतिपादनायाऽवस्थितं तन्निवृत्त्यर्थस्तुशब्दः। यद्यपि प्रकरणं स्थानाद्बलवत्तथाऽप्युपांशुयाजानुमन्त्रणन्यायेन लिङ्गानुगृहीतक्रम एवात्र बलीयान्विज्ञायते। योग्यतया हि पशुधर्माः पशुयागमपेक्षन्ते न सोमयागम्। न चानपेक्षियाः प्रकरणेन ग्रहीतुं शक्यन्ते। तदङ्गावतरणेन चात्र विप्रकृष्टतरः श्रुतोऽर्थः। न च षष्ठीप्रतिपाद्यास्तत्संबन्धाद्विनाऽऽनर्थक्यतदङ्गन्यायोऽस्तीत्युक्तम्। ननु चाविहितधर्मान्तरसाकाङ्क्ष एवाग्नीषोमीयः प्रदेशान्तरादिहाऽऽनीयमानः संनिहितान्धर्मान्प्रकरणेनैव गृह्णातीति न वक्तव्यं स्थानाच्चेति। नैष दोषः। यत्र हि प्राकृतैरङ्गैः पूर्णमाणायां विकृतौ तन्मध्येऽप्यपूर्वाणि कानिचित्प्रक्षिप्यन्ते तत्र विकृतौ प्रकरणग्रहणं भवति। अत्र प्रदेशान्तर उत्पन्नोऽग्नीषोमीयः प्राकृतैस्तावन्निष्प्रतिद्वन्द्वैः क्लृप्तोपकारैश्च निराकाङ्क्षीकृतः। तत् इहाऽऽनीतः सन्ननन्यप्रयोजनान्धर्मान्साकाङ्क्षान्पश्यन्ननुमितकथंभावः संबध्यते। स्थानस्य चैतदेव लक्षणं यदुत धर्माणां साकाङ्क्षत्वेन प्रधानस्योत्पाद्य कथंभावं, संबन्धः। तस्मात्सूक्तं स्नानात्त्विति ॥ २५ ॥

भा० प्र०—पशु संस्कार धर्मों में सवनीय पशु सम्बन्धीय है, इस मत का निराकरण कर पूर्व प्रदर्शित हेतु से ही सिद्धान्त का निगमन किया जा रहा है "स्थानात् तु पूर्वस्य"—इस स्थल में स्थान अर्थात् सन्निधि के अनुसार ये अग्नीषोमीय पशु का ही धर्म है। कारण, "संस्कारस्य तदर्थत्वात्" ये संस्कार सौम्य नाम के पञ्चम दिन के पूर्व में उपसथ्य नामके चतुर्थ दिन मे धिष्ण्या निर्माण के बाद में उपदिष्ट हुआ है। अतः अग्नीषोमीय पशु के लिए ही उपदिष्ट हुआ है। यदि यह कहा कहा जाय कि ज्योतिष्टोम प्रकरण के अनुसार जब ये अग्नीषोमीय, सवनीय एवं अनुबध इन वीच पशुओं का ही धर्य कहा गया है और प्रकरण स्थान की अपेक्षा प्रबल होने से स्थान के अनुसार वे अग्नीषोमीय पशु का धर्म है तो "श्रुतिलिङ्ग वाक्य प्रकरण स्थान समाख्याना पारदौर्बल्यम्" इत्यादि सूत्रीय अधिक बल के विरुद्ध कथन है। ऐसी स्थिति मे ज्योतिष्टोम सोमयाग हैं। सोमयाग में अभिषव आदि सभी सोमविषयक धर्य आकांक्षित होता है। किन्तु, उसमें पशुसंस्कारक धर्मों की आकाङ्क्षा नहीं हो सकती है, आकाङ्क्षा एवं प्रकरण अभिन्न होने से ज्योतिष्टोम में पशु संस्कारक धर्म की आकाङ्क्षा नहीं होती है, अतः, प्रकरण के अनुसार उस यागीय सभी पशुओं का ही अङ्गरूप में ग्रहण नहीं हो सकता है। इसलिए, प्रकरण की प्रबलता नहीं है। अन्य पक्ष में पशु संस्कारक धर्म

पशुयाग में ही योग्य अर्थात् समर्थ होता है, अग्नीषोमीय पशु के सन्निधान में ही ये धर्म पठित हैं, इसलिए, योग्यता सहकृत स्थान के अनुसार यह अग्नीषोमीय पशु का ही धर्म है। अतः, बलाबल अधिकरण के विरुद्ध विषय नहीं कहा है।

"स्थानात्" = स्थान अर्थात् सन्निधि के अनुसार "'तु' = पूर्वपक्ष के निरास के लिए है, 'पूर्वस्य" = पूर्व का अर्थात् अग्नीषोमीय पशु के धर्म के रूप में उपदिष्ट है—यह जानना चाहिए। "संस्कारस्य तदर्थत्वात्" = क्योंकि ये संस्कार समूह इस अग्नीषोमीय पशु के लिए ही उपदिष्ट हैं ॥ २५ ॥ सिद्धान्त।

## लिङ्गदर्शनाच्च ॥ २६ ॥

**शा० भा०—इतश्च पश्यामोऽग्नीषोमीयार्थाः पशुधर्मा इति। कुतः। लिङ्गदर्शनात्। लिङ्गमस्मिन्नर्थे भवति। वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, इति पशुपुरोडाशं दर्शयति। इतरथा समानविधानेषु सर्वेषु पशुष्वग्नीषोमयोर्देवतयोः संस्कारार्थः सत्पुरोडाशः सामर्थ्यादग्नीषोमीयस्य भवेन्न सवनीयस्य। तयोर्देवतयोरभावात्। दर्शयति च। तस्मादग्नीषोमीयार्था इति ॥ २६ ॥ क० हेतुः ॥**

त० वा०—सर्वेषां द्वयोर्वा समानविधानत्वे सवनीये पशुपुरोडाशदर्शनं नोपपद्यते। पुरोडाशयागस्य हि देवतासंस्कारार्थत्वं वक्ष्यति। स च लिङ्गादग्नीषोमावेव संस्कर्तुं शक्नोति नाग्निम्। न च समानविधानत्वेनोहः सिद्धान्तविधानत्वेनोहः सिद्धान्तवत्संभवति। तस्मात्पुरोडाशदर्शनादातिदेशिकाः सवनीयस्य धर्मा इति ॥ २६ ॥

भा० प्र०—सवनीय पशु का पुरोडाश दृष्ट होने से ही ऐसा सिद्धान्त माना गया है। कारण, दशम अध्याय के प्रथम पाद के प्रथमाधिकरण के बीसवें सूत्र के अनुसार अवगत होता है कि पशुपुरोडाश अग्नीषोमीय देवता के ही संस्कार के लिए हैं अन्यत्र उसका पाठ करने के लिए यह करना होगा, सवनीय पशुपुरोडाश के समय भी इसका ऊह किया जाता है। यह ऊह करना सङ्गत नहीं है, यदि पशुसंस्कारक धर्म अग्नीषोमीय के समान सवनीय पशु के पक्ष में भी उपदेश विधि लभ्य होता किन्तु, वह यदि अतिदेश विधि के बल से सवनीय पशु में प्राप्त होता तभी इस स्थल में ऊह करना सङ्गत होता, क्योंकि प्रकृति में ऊह नहीं होता है यह आगे कहा जायगा सब, इस पशुसंस्कारक धर्म अग्नीषोमीय पशु के लिए ही उपदिष्ट होता है, सवनीय पशुपुरोडाश ही उसका लिङ्ग है।

"लिङ्गदर्शनात् च" = लिङ्ग अर्थात् ज्ञापक हेतु दृष्ट होने से अग्नीषोमीय पशु के लिए ही उपदिष्ट है ॥ २६ ॥

## अचोदना गुणार्थेन ॥ २७ ॥

शा० भा०—इदं पदोत्तरं सूत्रम् । आह । ननु छिद्रापिधानार्थः—पशुपुरोडाशः । नेति ब्रूमः । अचोदना गुणार्थेन । तस्य छिद्रापिधानार्थेन न चोदना । अर्थवादः स इत्युक्तम् । तस्माद्देवतासंस्कारार्थः । तस्याग्नीषोमीयार्थत्वे, सवनीये पुरोडाशस्य दर्शनमुपपद्यते, न साधारण्ये । तस्मादग्नीषोमीयार्थाः पशुधर्मा इति ॥ २७ ॥ क० उपाकरणादीनामग्नीषोमीयधर्मताधिकरणम् ॥ ७ ॥

त० वा०—सत्यं देवतासंस्कारार्थः सन्न प्राप्नोति, न त्वयं केवलस्तदर्थः । किं तर्हि । 'सुषिरो वा एतर्हि पशुः' इत्युपक्रम्य च्छिद्रापिधानार्थोऽपि । अतश्च विनाऽपि देवतां सवनीयस्य च्छिद्रं पुरोडाशः करिष्यते । तेन समानविधानत्वेऽप्यदोष इत्युक्ते सूत्रेणोत्तरमाह—न च्छिद्रापिधानार्थेनास्य चोदना विधिवन्निगदानः हेतुवन्निगदानां चैवंजातीयानामर्थवादत्वेसोक्तत्वात् । न हि च्छिद्रापिधानं क्रतुनाऽपेक्षितं नापि पुरोडाशयागे कृते दृश्यते । तस्मान्नैतत्प्रयोजनमिति यथोक्तमेव लिङ्गदर्शनं सिद्धम् ॥ २७ ॥

( इति—पशुधर्माणामुपाकरणादीनामग्नीषोमीयमात्रार्थताधिकरणम् ॥ ७ ॥ )

भा० प्र०—पूर्वपक्षी आशङ्का करते हुए कह सकते हैं कि सवनीय पशुपुरोडाश अतिदेश विधि प्राप्त नहीं है । किन्तु "सुषिरो वा एतर्हि पशुः" इत्यादि श्रुतिवाक्य में जो कहा गया है कि पशु के देह से वपा निकालकर उसे छिद्रयुक्त होता है और इस पशुपुरोडाश से उस छिद्र को आवृत किया जाता है । इस वाक्य के अनुसार ही पुरोडाश प्राप्त होता है । इसके उत्तर में सिद्धान्ती ने कहा है कि "अचोदना गुणार्थेन" यह जो छिद्रावरणार्थक श्रुतिवाक्य है उसके अर्थवाद होने से विधि नहीं है, इसलिए उसके द्वारा सवनीय पुरोडाश प्राप्त नहीं है, किन्तु, वह अतिदेशविधि के बल से ही लब्ध है ।

"अचोदना" =पूर्वपक्षीय प्रदर्शित वाक्य चोदना नहीं है अर्थात् विधिवाक्य नहीं है, "गुणार्थेन" = क्योंकि, वह गुणार्थ अर्थात् गौणवाद या अर्थवाद है ॥ २७ ॥

इति सप्तम उपाकरणादि पशुसंस्कारक धर्मों का अग्नीषोमीयमात्रार्थताधिकरण ।

## [८] दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ २८ ॥ पू०

शा० भा०—अस्ति सायंदोहः । तथाऽस्ति प्रातर्दोहः । सन्ति तु दोहधर्माः शाखाहरणं, गवां प्रस्थापनं, प्रस्नावनं, गोदोहनमित्येवमादयः । ते किं सायंदोहार्था उत, उभयार्था इति । किं तावत्प्राप्तम् । दोहयोस्तयोरसंयुक्तं धर्मैः शृतं भवेत् । कस्मात् । सायंदोहस्य हि क्रमे औपवसथ्येऽहनि शाखाहरणादीन्समामनन्ति । तस्मिन्नेवाहनि सायंदोहः । तस्मात्क्रमात्सायंदोहार्था दोहधर्मा इति ॥ २८ ॥ क० पूर्व० ॥

त० वा०—एवं क्रमस्याविरोधं दर्शयित्वेदानीं विरोधं दर्शयति। शाखाहरणादीनामौपवसथ्ये देशसामान्यादवान्तरप्रकरणाद्वा दध्यर्थत्वं प्राप्नोति ॥२८॥

भा० प्र०—दर्शपूर्णमास के दर्शयाग में पूर्व दिन सायंकाल में और दूसरे दिन प्रातःकाल मे दो बार गोदोहन करना पड़ता है, गोदोहन के समय में पलाशशाखा आहरण, गोप्रस्नावान, गोदोहन, आदि कर्म कर्तव्य है–यह उपदिष्ट है। इसमें यह सन्देह है कि शाखाहरणादि कर्म केवल सायंकालीन गोदोहन के लिए ही अनुष्ठेय है या सायं प्रातः उभयकालीन गोदोहन के समय में कर्तव्य है इसमें पूर्वपक्षी का कहना है कि "दोह्यो। शृतम् असंयुक्तं स्यात्" यह जो दो बार गोदोहन किया जाता है, उनमें शृत अर्थात् प्रातःकालीन गोदोहन शाखा आहरण आदि कर्मकलाप संयुक्त नहीं होगा। कारण "कालभेदात्" = दोनों का काल भिन्न होता है। जो सन्निधि के कारण सायंकालीन गोदोहन का अङ्ग है वह प्रातःकालीन दोह से विप्रकृष्ट होगा, इसलिए, वह पूर्वाधिकरण के के नियम के अनुसार सन्निधि बल से सायंकालीन दोह का ही अङ्ग होगा, अतः प्रातःकालीन दोह इन सभी कर्मों को छोड़कर ही कर्तव्य है।

"दोह्योः" = सायं और प्रातःकालीन गोदोहन के मध्य मे "शृतं" = शृत अर्थात् प्रातःकालीन दोह, "असंयुक्तं स्यात्" = असंयुक्त अर्थात् गोदोहन के लिए दोहनकाल में अनुष्ठेय जो कर्म धर्म श्रुति मे उपदिष्ट है, वह असंयुक्त होगा, अर्थात् प्रातःकालीन दोह मे संयुक्त नहीं होगा, "कालभेदात्" = क्योंकि प्रातःकालीन दोहन का कालगत भेद है ॥ २८ ॥

## प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् ॥ २९ ॥

शा० भा०—प्रकरणं हि साधारणम्। यथैव दध्न एवं पयसः। क्रमाच्च प्रकरणं बलवत्तरम्। तस्मादुभयार्था दोहधर्माः। अपि च, न सायंदोहस्य पूर्वेद्युराम्नानम्। क्व तर्हि। उत्तरेद्युः। कथम्। एवमामनन्ति, ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायाम्, इति। अमावास्यायां ह्युभये साङ्गे चोद्यते। स एष सायंदोहोऽर्थात्पूर्वेद्युरनुष्ठीयते स्वभाव एष दध्नो यत्पूर्वेद्युरुपक्रान्तमपरेद्युरभिनिर्वर्तते। तस्मात्सादोहस्य क्रम आम्नाता इत्येतदेव तावन्नास्ति। अत उभयार्था दोहधर्मा इति ॥ २९ ॥ क० सिद्धान्तः ॥ शाखाहरणादीनामुभयदोहधर्मताधिकरणम् ॥ ८ ॥

त० वा०—प्रधानधर्मदेशे क्रियमाणं कर्म प्रतिपद्यते। पठ्यमानं चावान्तरप्रकरणम्। दधियागस्त्वमावास्यायां पठ्यते क्रियते च। तस्मात्तुल्यं पयसा। दधित्वसिद्ध्यर्थास्तु केचित्तस्य धर्माः पूर्वेद्युः क्रियन्ते। न च ते शाखाहरणादीनां

ग्राहकाः 'गुणानां च परार्थत्वादसंबन्धः' इति स्थितत्वात्। तस्मादुभयसंयुक्तस्य शाखाहरणादेर्वचनात्पूर्वेद्युः करणं न दध्यर्थत्वादित्यदोषः ॥ २९ ॥

( इति—शाखाहरणादीनामुभयदोहार्थताधिकरणम् ॥ ८ ॥ )

भा० प्र०—पूर्वपक्षी की आपत्ति के उत्तर में सिद्धान्ती ने कहा है कि "तत्संयुक्तस्य कालशास्त्रम्" इस स्थल में जो काल उपदिष्ट होता है, कारण, दर्शयाग के प्रसङ्ग में "ऐन्द्रं दध्यमावस्यायामैन्द्रं पयोऽमावस्यायाम्" इस श्रुतिवाक्य में उपदिष्ट हुआ है कि अमावस्या में दधि एवं पयः याग का द्रव्य है। यह प्रातःकाल में आवश्यक है, किन्तु प्रातःकालीन दुग्ध से उसी क्षण से दधि न होने से पूर्वदिन सायंकाल में दोहन करना होगा, इसलिए दोहन का धर्म जो पलाशशाखा आहरण आदि का पूर्वदिन सायंकाल में अपकर्ष होता है। अतः, दधि एवं पयः दोनों के लिए ही जो दोहन होता है पलाश-शाखा आहरण आदि धर्म प्रकरण के अनुसार उसका ही भङ्ग होने से वह सन्निधि के अनुसार जो केवल सायंकालीन द्रोह का ही, अङ्ग होगा—यह कहना सङ्गत नहीं है, इसीलिए सूत्र में कहा गया है "प्रकरणाविभागात्"। पक्षान्तर में पूर्वाधिकरण में सोमयाग में पशुसंस्कारक धर्मों का अन्वय न होने से प्रकरण न होने से योग्यतासहकृत सन्निधि के अनुसार पशुसंस्कारक धर्म अग्नीषोमीय पशु का ही अङ्गरूप में उपदिष्ट होता है, इस प्रकार सिद्धान्त किया गया है। किन्तु, इस स्थान में जब पलाशशाखा-आहरण आदि धर्मों को प्रकरण के बल से उभयकालीन द्रोह का ही अङ्ग माना जायेगा तब उनका सन्निधि के बल से केवल सायंकालीन द्रोह को अङ्ग कहना उचित नहीं था।

"प्रकरणाविभागात्" = प्रकरणगत भेदन होने से अर्थात् उभय का प्रकरण अभिन्न होने से, "वा" = पूर्वपक्ष के निरास के लिए है, "कालशास्त्रम्" = कालबोधक शास्त्र, "तत्संयुक्तस्य" = अङ्गसंयुक्त प्रधान का ही अर्थात् शाखा आहरणादि समस्त अङ्गकलापों से युक्त भाव में ही प्रधान कर्म में सायं और प्रातःकाल उपदिष्ट होता है ॥ २९ ॥

इति अष्टम शाखा आहरणादि का उभयदोहार्थता अधिकरण।

## [ ९ ] तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ ३० ॥ सि० ॥

शा० भा०—अस्ति ज्योतिष्टोमः, ज्योतिष्टोमेन स्वर्गकामो यजेत, इति। तत्रैन्द्रवायवाद्या ग्रहाः प्रातःसवने दश आम्नाताः। तत्र धर्मा श्रूयन्ते, उपोप्तेऽन्ये ग्रहाः साद्यन्ते, अनुपोप्ते ध्रुवाः। दशापवित्रेण ग्रहं संमार्ष्टि, इति। सन्त्यपरे माध्यंदिने सवने, अपरे तृतीयसवने ग्रहाः। तेषु माध्यंदिनीयेषु तार्तीयसवनीयेषु च संदेहः। किं सर्वेषु ग्रहधर्माः कर्तव्या उत प्रातःसवने ये ग्रहास्तेष्विति। किं प्राप्तम्। प्रातःसवनग्रहेषु भवेयुः। तेषां हि क्रमे समाम्नाता नेतरेषाम्। एवं प्राप्ते ब्रूमः। सवनान्तरे—प्रातःसवनान्माध्यंदिने तृतीयसवने च ग्रहाम्नानं तद्वदेव भवितुमर्हति। सर्वेषां हि तुल्यं प्रकरणम्। यत्रैते धर्माः समाम्नाताः।

वाक्येन ग्रहमात्रस्य विधीयन्ते । क्रमाच्च वाक्यप्रकरणे बलीयसी । तस्मात्सर्वार्था ग्रहधर्मा इति ॥ ३० ॥ क० सादनादीनां सवनत्रयधर्मताधिकरणम् ॥ ९ ॥

त० वा०—ग्रहणधर्माणां प्रातःसवनस्य च समानदेशे समाम्नानमनुष्ठानं चेत्यनेनातुल्याशङ्कायां तुल्यत्वमापद्यते । प्रकरणं तावत्सवनत्रयोपेतस्य ज्योतिष्टोमस्य समानम् । न च प्रातःसवनस्य निष्फलस्यावान्तरप्रकरणम् । न च प्रकरणविरोधि स्थानं विनियोजकं भवति । तस्मात्सवनान्तरग्रहणामपि धर्माः स्युरिति । एतेनाऽऽग्नेयाग्नीषोग्नीयादिपुरोडाशधर्मसाधारण्यमुक्तम् ॥ ३० ॥

( इति ग्रहधर्माणां सवनत्रयसंबन्धिग्रहार्थताधिकरणम् ॥ ९ ॥ )

भा० प्र०—श्रुति में ज्योतिष्टोम प्रकरण में प्रातः सवन से ऐन्द्रवायव आदि कतिपय ग्रह (सोमग्रहण करने का पात्र विशेष) माध्यन्दिन सवन में मरुत्वतीय आदि कतिपय ग्रह एवं तृतीयसवन में आदित्यादि कतिपय ग्रह उपदिष्ट हुए हैं । प्रातः सवन के ऐन्द्रवायव आदि ग्रह उन्हीं के समीप में सादन सम्मार्जन आदि कतिपय ग्रह के संस्कारक धर्म कहे गये हैं । इसमें यह संशय यह है कि क्या ये धर्म सन्निधि के अनुसा केवल प्रातः सवन का ऐन्द्रवायवादि ग्रह के लिए ही उपदिष्ट होते हैं या अन्य दो सवनों मे जो समस्त ग्रह हैं वे सबयी संस्कार रूप मे विहित होते हैं । इसमें पूर्वपक्षी का कहना है कि पूर्वाधिकरणोक्त शाखा आहरण आदि प्रातःकाल में ही अनुष्ठेय हैं । किन्तु दधि प्रस्तुत करने के लिए पूर्व दिन के सायंकाल से एक दोह का अपकर्ष होने से ये इनका भी अपकर्ष होता है । अतः, उसमें प्रकरण के अनुसार इनको, दोनों दोहों का ही अङ्ग कहा गया है, किन्तु इस स्थल मे प्रातः सवन के ग्रहों का जब वैसा उत्कर्ष नहीं है, और यह प्रातः सवन जब एक स्वतन्त्र व्यापार है, तब सन्निधि के बल से उसको प्रातः सवन के ही ग्रह का धर्म मानना होगा ।

इस प्रसङ्ग में सिद्धान्ती का कहना है कि "सवनान्तरे ग्रहाम्नानं तद्वत्" इस स्थल में ग्रह विषयक साधन, सम्मार्जन आदि धर्म प्रकरण के अनुसार तीनों सवनों ग्रहों मे ही अनुष्ठेय है, कारण, एक-एक सवन एक-एक स्वतन्त्र व्यापार होने पर भी तीनों के द्वारा एक ही कर्म सम्पादित होता है, इसलिए, उस कर्म के प्रकरण के अनुसार ये प्रातः सवन के समान अन्य सवनों के ग्रहों के भी धर्म के रूप मे गृहीत होंगे ।

"तद्वत्" = उसके ही समान अर्थात् शाखा हरणादि जैसे उभयकालीन दोह का ही अङ्ग है वैसे ही, "ग्रहाम्नानम्" = ग्रह विषयक श्रुतिविहित धर्म, "सवनान्तो" = अन्य सवन के भी अनुष्ठेय हैं ॥ ३० ॥

## [१०] रशना च लिङ्गदर्शनात् ॥ ३१ ॥ सि० ॥

शा० भा०—अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते, इति । तत्र रशना श्रूयते रशनाधर्माश्च । त्रिवृद्भवति दर्भमयी

भवति प्रतिष्ठानां कर्तव्या चेति। तत्र संदेहः। किमेते धर्मा अग्नीषोमीयरशनायाः सवनीयरशनायाश्च साधारणा उताग्नीषोमीयरशनाया एवेति। किं प्राप्तम्। प्रकरणादग्नीषोमीयरशनाया इति। एवं प्राप्ते ब्रूमः। उभयोः साधारणा इति। कुतः। लिङ्गदर्शनात्। लिङ्गं भवति। एवमाह, आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति, इति सवनीयपरिव्याणे रशनां दर्शयति। सा यदि साधारणी, तत एतद्दर्शनमवकल्पते। यद्यग्नीषोमीयार्थास्ततोऽप्राकृतात्सवनीयपरिव्याणान्निवर्तेत। सवनीये च परिव्याणान्तरप्राकृतं यत्र त्रिवृत्त्वं दृश्यते। कथम्। स वै आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति, इति। तत्र यदि न साधारणी रशना, वाससा परिव्याणं प्राप्नोति। रशनां तु दर्शयति। तस्मात्साधारणी रशना, तत्साधारण्याच्च तद्धर्मा अपि साधारणाः। तदेतल्लिङ्गाद्दर्शनात्साधारण्यम्। कोऽत्र खलु न्याय इति। उच्यते। प्रकरणादग्नीषोमीयस्य, वाक्याद्यूपमात्रस्येति ॥ ३१ ॥ रु० रशनात्रिवृत्त्वादीनां पशुधर्मताधिकरणम् ॥ १० ॥

त० वा०—अग्नीषोमीये यूपपरिव्याणमाम्नाय पुनः सवनीये 'स आश्विनं ग्रहं गृहीत्वा' इत्याम्नातं, तच्च निर्गुणपुनःश्रवणाकर्मान्तिरम्। उभयोश्च केनचिद्द्रव्येण भवितव्यम्। यच्च परिव्याणद्रव्यं सा रसना लोके वेदे च प्रसिद्धा। तेनोभयत्र तादर्थ्यादेव रशना प्राप्ता। सा च किंमयी किंधर्मा चेत्यपेक्षितेऽग्नीषोमीयस्य स्थानानुमिते प्रकरणे त्रिवृद्दर्भमयीप्रविष्टानां कर्त्तव्येत्याम्नाद्विशेषः प्रतीयते न सवनीयपरिव्याणस्य। तस्मादितरपशुधर्मवदेव रसनेतिकर्तव्यताऽग्नीषोमीयार्थेवेति। तथा प्राप्ते लिङ्गदर्शनात्साधारणीत्याह। न हि सवनीयोत्पत्तिवाक्ये त्रिवृत्त्वानुवादो रशनाधर्मसाधारण्याद्विनोपपद्यते। का प्राप्तिरिति चेत्तमाह—वाक्यसंयोगाद्रशनामात्रस्य, स्थानादग्नीषोमीयस्य। वाक्यं च तस्माद्बलवत्तरमिति। ननु 'न तद्वाक्यं हि तदर्थत्वात्' इत्युत्तरं वक्ष्यति। तेनाग्नीषोमीयापूर्वप्रयुक्तत्वाद्व्यवस्था स्यादिति। नैतदेवम्। न ह्येषा साक्षात्पशुसंबन्धिनी। किं तर्हि। यूपाङ्गं वा तत्संस्कारात्' इति वक्ष्यति। तेनेदृशमेकवाक्यत्वमेतत्। यूपपरिव्याणसाधारणसाधनस्यैते धर्मा इति। तथा चाग्नीषोमीयस्थमेतद्यूपदरिव्याणमेव च यूपैकत्वात्सवनीयस्थं। यूपपरिव्याणम्। द्वयमपि चापूर्वसाधनमिह प्रतीयते, न तु दर्शपूर्णमासबर्हिरिव पिण्डपितृयज्ञे भविष्यति। तस्माद्बर्हिर्धर्मवैषम्यात्साधारणा रशनाधर्मा ॥ ३१ ॥

( इति रशनाधर्मसाधारण्याधिकरणम् ॥ १० ॥ )

भा० प्र०—अग्नीषोमीय पशु के सन्निधान में रशना अर्थात् रज्जुविशेष का विषय उपदिष्ट हुआ है और उस रशना को त्रिवृत्त्व दर्भमयत्व आदि कतिपय धर्म भी उल्लिखित

होते हैं। रशनासम्बन्धीय ये धर्म अर्थात् गुण क्या अग्नीषोमीय पश्वङ्गीय रशना का धर्म होगा अथवा ये सवनीय पशु सम्बन्धीय रशना के भी गुण होंगे—यही संशय है। इसमें पूर्वपक्षी का कहना है कि ये सन्निधि के अनुसार अथवा अवान्तर प्रकरण के अनुसार अग्नीषोमीय पशुसम्बन्धीय रशना के ही गुण होंगे।

इसमें सिद्धान्ती कहना है कि "रशना च" = रसना भी पूर्वाधिकरणोक्त नियम के अनुसार दोनों पशु के सम्बन्ध में ही उपदिष्ट हैं। कारण, लिङ्गदर्शनात्" उसके ज्ञापक वेदवचन से परिलक्षित होता है, क्योंकि, त्रिवृता, यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति इस श्रुतिवाक्य में रशना का जो त्रिवृत एवं परिव्यान अर्थात् इस रशना में वेष्टन है उसका अनुवाद कर सवनीय पशु का उपाकरण विहित होता है, सवनीय पशु की रशना का दर्भमयत्व, त्रिवृत्त्व प्रभृति के सिद्ध होने पर ही इस तरह अनुवाद सङ्गत होगा। अतः, श्रुतिवाक्य की ज्ञापकता के अनुसार इनको सवनीय पशु सम्बन्धीय भी कहना होगा, ऐसा न होने पर दर्भमय रशना अप्राप्त होने से वस्त्रादि से यूप का परिव्यान अर्थात् वेष्टन करना होगा, अतएव यूप अग्नीषोमीय एवं सवनीयादि पशु का साधारण अङ्ग होने से यूप का परिवेष्टन साधन के रूप में रशना अग्नीषोमीय, सवनीयादि पशु में ही प्राप्त होने से रशना में दर्भमयत्वादि धर्म भी सर्वपशुसाधारण हैं।

"रशना च" = रशना भी, दोनों पशुओं के धर्म के रूप में उपदिष्ट है, "लिङ्गदर्शनात्" = क्योंकि, तादृश लिङ्ग अर्थात् ज्ञापक वेदवचन दृष्ट होता है ॥ ३१ ॥

इति दशवाँ रशना धर्म का साधरणता अधिकरण।

## [११] आराच्छिष्टमसंयुक्तमितरैः संनिधानात् ॥ ३२ ॥ पू०

**शा० भा०—दूराद्यच्छिष्यते ज्योतिष्टोमस्य, यथौपसदानुवाक्याकाण्डेऽभ्यदाभ्यौ। तत्र संदेहः। किं ज्योतिष्टोमसमाम्नाता ग्रहधर्माः कर्तव्या उत नेति। किं प्राप्तम्। न कर्तव्याः। असंनिधानात्। यथा, पयसा मैत्रावरुणं श्रीणाति, इति वचनान्मैत्रावरुणस्यैव श्रवणं न सर्वेषाम्। एवमिदमपि धर्मजातं प्रकरणस्थानमेव, न सर्वेषामिति ॥ ३२ ॥ क० पूर्व० ॥**

**त० वा०—असङ्गाद्वाक्यप्रकरणविरोधाविरोधौ विचार्येते। तत्र स्थानं बाधित्वा प्रकरणिकग्रहार्था ग्रहधर्मा इति प्रतीतेरनारभ्याधीतार्थत्वमशक्यं प्रत्येतुं, तेनासंयुक्तमित्याह ॥ ३२ ॥**

भा० प्र०—ऐन्द्रवायव आदि ग्रह ज्योतिष्टोम के समीप में कहे गये हैं और अदाभ्य आदि ग्रह अनारभ्य पठित हैं। ज्योतिष्टोम में ऐन्द्रवायव आदि जो ग्रह हैं, उनके समीप में सादन, सम्मार्जन आदि जो धर्म = संस्कार विहित हैं, वे अनारभ्यपठित अदाभ्य आदि ग्रहों के सम्बन्ध में प्रयोज्य हैं या नहीं—यही सन्देह है। इसमें पूर्वपक्षी का कहना है कि

"आराच्छितष्टम् असंयुक्तम्" = दूर में उपदिष्ट अर्थात् अनारम्यपठित अदाभ्य आदि ग्रह सादन, सम्मार्जन आदि धर्मों के साथ संश्लिष्ट नहीं होंगे, अर्थात् ये धर्म उनके पक्ष में प्रयोज्य नहीं है, कारण, "इतरैः सन्निधानात्" = ये धर्म प्रकरण पठित अन्य ग्रहों के सन्निधान में ही पठित हैं। अथवा प्रकरण या सन्निधान इनमें कुछ भी न होने से सादन, सम्मार्जन आदि धर्म अदाम्य आदि अनारम्यपठित ग्रहों के धर्मरूप में अनुष्ठेय नहीं होंगे।

"आराच्छिष्टम्" = दूर में उपदिष्ट अर्थात् अनारम्याधीत, "असंयुक्तम्" = अन्य-पदार्थों के साथ संयुक्त नहीं है, "इतरैः सन्निधानात्" = क्योंकि, अन्य के सन्निधान में पठित हैं ॥ ३२ ॥

## संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ॥ ३३ ॥ सि० ॥

शा० भा०—संयुक्तं वा धर्मैरेवंजातीयकं स्यादप्रकरणस्थमपि। कुतः। यतः प्रकरणाद्वाक्यं बलीयः। नन्वन्यत्र क्रियमाणा ज्योतिष्टोमस्य नोपकुर्युः। उच्यते। उपकरिष्यन्ति। अंश्वदाभ्ययोस्तदर्थत्वाज्ज्योतिष्टोमार्थत्वात्तच्छेषोऽयं ग्रहधर्मः। ग्रहनिमित्तो ज्योतिष्टोमस्योपकारकः। यावान् ग्रहो ज्योतिष्टोमस्योपकरोति तस्य सर्वस्य भवितुमर्हति। तस्मादंश्वदाभ्ययोरपि ग्रहधर्माः कर्तव्या इति ॥ ३३ ॥ क० सि० ॥

त० वा०—प्रकरणस्याविशेषकत्वाज्ज्योतिष्टोमापूर्वसाधनस्यैवेत इत्येवं सुराग्रहादिभ्यो निवर्तमानाः प्रकरणे व्यवतिष्ठन्ते। येषां त्वप्रकरणाधीतीनामपि तदस्ति ते पूर्वेणैव न्यायेन वाक्यसंयोगाद्धर्मवन्तो भवितुमर्हन्ति। अंश्वदाभ्यादीनामपि धर्मवत्ता ॥ ३३ ॥

भा० प्र०—पूर्वोक्त पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "संयुक्तं वा" = अदाभ्य आदि समस्त धर्म संयुक्त होंगे, अर्थात् सादन, सम्मार्जन आदि धर्म अदाम्य आदि ग्रहों में भी प्रयोज्य होंगे, कारण, "तदर्थत्वात्" = ये ग्रह ज्योतिष्टोम के अपूर्व के जनक हैं, साथ ही "देवस्य तन्निमित्तत्वात्" = ग्रहों के धर्म जो सादन, समार्जन आदि वे भी यागीय अपूर्व के साधन हैं, अत एव, इस स्थल में "ग्रहाः साद्यन्ते" = इत्यादि वाक्य के अनुसार सादन, सम्मार्जन आदि जब सन्निधिपठित और विप्रकृष्ट पठित सभी ग्रहों के ही धर्म के रूप में अवधारित होते हैं, तब ये प्रकरण के अनुसार केवल ऐन्द्रवायवादि ग्रहों के ही धर्म होंगे—ऐसा नहीं हो सकता है, क्योंकि, प्रकरण की अपेक्षा वाक्य बलवान् है। ऐन्द्रवायवादि ग्रह प्रकरणी नहीं है, वरन्, ज्योतिष्टोम का ही अङ्ग है, अतः, प्रकरण के अनुसार भी ये ऐन्द्रवायवादिग्रहों का अङ्ग नहीं है।

"संयुक्तं वा" = ये संयुक्त अर्थात् सादनादि उन धर्मों के साथ संश्लिष्ट होगा, "वा" = पूर्वपक्ष के निरास के लिए है, "तदर्थत्वात्" = क्योंकि, ये ज्योतिष्टोम क

अपूर्व का हेतु है, "शेषस्य तन्निमित्तत्वात्" = ग्रह के धर्म सादनादि अर्थात् अङ्ग ये भी उस अपूर्व के हेतु है। इति सिद्धान्तः ॥ ३३ ॥

निर्देशाद्व्यवतिष्ठेत् ॥ ३४ ॥

शा० भा०—यदुक्तं यथा, मैत्रावरुणं पयसा श्रीणाति, इति। तद्युक्तम्। श्रयणे वचनात्प्रकरणं बाधित्वा व्यवस्थानम्। इह तु विपरीतम्। तत्र सर्वेषु ग्रहेषु प्रकरणं, विशिष्टेषु वाक्यम्। इह तु सर्वेषु ग्रहेषु वाक्यं, विशिष्टेषु प्रकरणम्। तस्मादप्रकरणस्थस्यापि धर्मा इति ॥ ३४ ॥ क० आ० नि० अंश्वदाभ्ययोरपि सादनादिधर्मवत्त्वाधिकरणम् ॥ ११ ॥

[१२] अग्न्यङ्गप्रकरणे तद्वत् ॥ ३५ ॥ सि० ॥

शा० भा० —अनारभ्याग्निमुच्यते। चित्रिणीरुपदधाति, वज्रिणीरुपदधाति, भूतेष्टका, उपदधाति, इति। सन्ति तु प्रकरणे, इष्टकाधर्माः। अखण्डामकृष्णलामिष्टकां कुर्यादिति। तथा, भस्मनेष्टकाः संयुज्यादिति। तत्र संदेहः। किमप्रकरणे समाम्नातानामिमे धर्माः कर्तव्या उत नेति। किं प्राप्तम्। न कर्तव्याः। कुतः। असंनिधानादिति प्राप्ते। उच्यते। अग्न्यङ्गमेवंजातीयकं तद्वदेव स्यात्, यद्वद्ग्रहाः। प्रकरणाद्धि वाक्यं बलवत्। अमूषां चेष्टकानामग्न्यर्थत्वात् ॥ ३५ ॥ क० चित्रिण्यादीष्टकानामग्न्यङ्गताधिकरणम् ॥ १२ ॥

त० वा०—मैत्रावरुणादिश्रयणादीनां प्राकरणिकसर्वार्थत्वबाधेन वाक्याद्व्यवस्था अत्र तु प्राकरणिकव्यवस्थाबाधेन वाक्यात्सर्वार्थत्वमित्यदृष्टान्तः ॥३४-३५॥

( इति ग्रहधर्माणामनारभ्याधीतांश्वदाभ्यग्रहार्थताधिकरणम् ॥ ११-१२ ॥ )

भा० प्र०—पूर्वपक्षी यदि यह कहें कि "पयसा मैत्रावरुणं प्रीणाति" इत्यादि स्थलों में जैसे पयोयोग सर्वसाधारण का धर्म नहीं है वैसे ही इस स्थल में भी सादन, सम्मार्जन आदि सभी ग्रहों के धर्म नहीं होंगे, किन्तु, ये कतिपय विशेष-विशेष ग्रह के ही धर्म होंगे। ऐसी स्थिति में यह कहा जा सकता है कि "निर्देशात् व्यवतिष्ठेते" = उन स्थलों में विशेष वचन पृथक् रूप में उद्देश्य का निर्देश कर विशेष रूप में उपदिष्ट होता है, अतः, मित्रावरुणादि के उद्देश्य में ही पयोयोगादि होता है, किन्तु, इस स्थल में वैसा कोई भी विशेष न रहने से सादन, सम्मार्जन आदि धर्म वाक्य के अनुसार प्रकरणस्थ एवं अप्रकरणस्थ सभी ग्रहों के ही धर्मरूप में अनुष्ठेय होगा।

"निर्देशात्" = निर्देश अर्थात् पृथक् रूप में उल्लेख होवे से, "व्यवतिष्ठेत" = व्यवस्थित होता है ॥ ३४ ॥

इति ग्यारहवाँ ग्रहधर्मों का अनारभ्य पठित अंश्वदाभ्यग्रहार्थता अधिकरण।

भा० प्र०—श्रुति में "चित्रिणीरुपदधाति", वज्रिणीरुपदधाति "भूतेष्टका उपदधाति" इत्यादि कतिपय इष्टकाविषयक अनारम्यपठित वाक्य है। अग्निचयनप्रकरण में "अखण्डामकृष्णां कुर्यात्" इत्यादि वाक्य में इष्टकाओं का अखण्डत्वादि धर्म उपदिष्ट होता है, ये अखण्डत्वादि धर्म अग्निचयन प्रकरण के बाहर में उपदिष्ट अनारम्य पठित चित्रिणी आदि इष्टका का भी धर्म होगा कि नहीं—यह संशय है।

इसमें पूर्वपक्षी का कहना है कि अखण्डत्वादि धर्म जब चित्रिणी आदि के सन्निहित नहीं है, तब चित्रिणी आदि इष्ट का इन सभी धर्मों से युक्त नहीं होंगे।

इसके उत्तर में सिद्धान्ती का कहना है कि "अप्रकरणे अग्न्यङ्गं तद्वत्" यह जो चित्रिणी आदि है, ये भी पूर्वाधिकरणोक्त अदाम्य प्रभृति के समान अखण्डत्वादि धर्म युक्त ही होंगे, कारण, इस स्थान में प्रकरण पाठन रहने पर भी "एवं विद्वान् अग्नि चिनुतु" इत्यादि वाक्य में जो अग्न्यपूर्व बोधित होता है, चित्रिणी आदि वाक्यों से उस अपूर्व के साथ ही संश्लिष्ट है। अखण्डत्वादि धर्म के प्रभाव में ही नियमापूर्व से वह अग्न्यपूर्व उत्पन्न होता है, इसलिए, प्रकरणपठित अखण्डत्वादि धर्म अप्रकरणपठित = अनारम्याधीत चित्रिणी आदि का भी अङ्ग होगा।

"अप्रकरणे अग्न्यङ्गम्"=अप्रकरण में अर्थात् अप्रकरणाधीत अनारम्यपठित अग्न्यङ्ग अर्थात् अग्नि का अङ्ग, "तद्वत्"=इसी प्रकार अर्थात् पूर्वाधिकरणोक्त नियमानुसार अपूर्वार्थ होने से उस-उस धर्म से विशिष्ट होगा। इति द्वादश चित्रिणी प्रभृति इष्ट का अग्न्यङ्गताधिकरण ॥ ३५ ॥

## [१३] नैमित्तिकतुल्यत्वादसमानविधानं स्यात् ॥ ३६ ॥ सि० ॥

**शा० भा०—ज्योतिष्टोमे श्रूयते—स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं विभक्षयियेत्, न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छन्न सोमम्, इति। ज्योतिष्टोमे सन्ति सोमधर्माः, मानम्, उपावहरणं, क्रयोऽभिषव इत्येवमादयः। तत्र संदेहः। किं समानविधाना इमे धर्माः सोमस्य फलचमस्य चोत सोमधर्माः, फलचमसस्य तु तद्विकारत्वादिति। गुणकामानां प्रवृत्तिरप्रवृत्तिर्वा प्रयोजनमधिकरणचिन्तायाः।**

**किं प्राप्तम्। समानविधानाः प्रकरणाविभागादिति प्राप्ते। उच्यते। नैमित्तिकमेवंजातीयकसमानविधानं स्यात्। कुतः। अतुल्यत्वात्। अतुल्यः सोमेन फलचमसः। सोमो नित्यवदाम्नातः। फलचमसो नैमित्तिकः। किमतो यद्येवं, धर्मा अपि नित्यवदाम्नाता न शक्या अनित्यवत्कर्तुम्। यदि साधारणाः तत्रानारभ्योऽर्थो विधीयेत। अपि च नैमित्तिकः फलचमसः। स सोमधर्मान्गृह्णाति।**

**तत्र धर्माः साधारणाः सन्तो द्विरुक्ता इत्युच्येरन्। तस्मादसमानविधानाः ॥ ३६ ॥ क० मानोपावहरणादीनां सोममात्रधर्मताधिकरणम् ॥ १३ ॥**

त० वा०—अधिकरणद्वयेन कार्यप्रयुक्तत्वाद्धर्माणां साधारण्यमुक्तम्। फलचमसोऽपि चेष्ट्यविकारत्वात्सोमकार्ये वर्तते। तस्मात्तस्यापि सोमधर्मविधिः साधारणो यथा 'व्रीहो प्रोक्षति' इत्येवमादिर्यवानामिति प्राप्तेऽभिधीयते। युक्तं यद्व्रोहिधर्माः यवेषु क्रियन्ते। द्वयोरपि वैकल्पिकत्वेनानित्ययोतुल्यस्वरूपत्वात्। सोमधर्माः पुनःर्नित्यवज्ज्योतिष्टोसापूर्वेण गृहीताः। ते नित्यमेव द्वारमाश्रयितुमर्हन्ति। सोमश्च नित्यो न फलचमसः। ब्राह्मणपक्षे विधानाभावात्। यदि सर्वसोमोपप्रर्देन फलचमसो भवेत्ततो राजन्यवैश्यपक्षयोरभावात्सोमोऽप्यनित्य इति तुल्यता स्यात्। स तु यजमानचमसमात्रान्निराकृतोऽपि ग्रहचमसान्तरेषु संभवान्नित्यः। तेन धर्मास्तं न व्यभिचरन्ति। तत्प्रयुक्ताः फलचमसस्येदानी कथ भविष्यन्तीति। कार्यापत्त्येति ब्रूमः। आह। किं कार्यापत्तिरूपदेशातिदेशाभ्यामन्या, एतयोरेवान्तर्गता वा। अतिरिक्तेति केचिन्मन्यन्ते। न तु तथा सति प्रमाणत्वाध्यवसानम्। अतोऽविदेशान्तर्गतिरेव वक्तव्या। कथं पुनः प्रकृतावेवातिदेशः कल्प्यत इति चेत्। सत्यं नावकल्पते यत्र कर्मधर्मातिदेशो भवति। न ह्येकस्य कर्मणः स्वत एव प्रकृतिविकारभाव उपपद्यते। द्रव्यधर्मातिदेशस्त्वेयम्। समानेऽपि च कर्मणि द्रव्यभेदः प्रत्यक्षः। यथा च कर्म साकाङ्क्षं कर्मान्तराद्धर्मान्गृह्णाति तथा द्रव्यमपि। तस्मात्फलचमसेनेज्यां भावयेत्कथमनन्तरंविपरिवृत्तेर्द्रव्यसारूप्यात्सोमवदित्यवगतेरतिदेशसिद्धिः। किं भवति प्रयोजनं यदोभयोरपि पक्षयोः सोमधर्माः क्रियन्ते। सत्यप्युभयत्र करणे यथैवान्यत्रौपदेशिकातिदेशिकायोः गुणकामप्रवृत्त्यप्रवृत्ती प्रयोजनं भवतस्ततेहापि द्रष्टव्यम्। निवृत्तिवद्द्रव्यभेदादित्यपि हि शक्यं वक्तुम्। ये हि सोमस्याभिषवमानादिष्वाश्रिताः फलसाधनत्वेनावगतास्ते कथं फलचमसस्थाः साधयिष्यन्ति। क्रतुसाधनत्वेन फलचमसः प्रवर्तमानो य एव तदङ्गपातिनः क्रत्वर्थेन क्रियन्ते तानेव शक्नोति ग्रहीतुं न फलार्थान्। अतः सिद्धा तन्निवृत्तिः। अनेनैवोहोऽपि कर्तव्य इत्युक्तं भवति। समानेऽपि हि कर्मप्रकरणे द्रव्यसामानाविध्यभावात्कार्यापत्तिपुरःसरं प्राप्नुवतः सोमपदस्याशक्तेर्विक्रिया विज्ञायते ॥ ३६ ॥

( इति—नित्यनैमित्तिकयोरसामानविध्याधिकरणम् ॥ १३ ॥ )

भा० प्र०—यदि क्षत्रिय या वैश्य ज्योतिष्टोम यज्ञ कराता है, तब उसको न्यग्रोध कलियों या फलों को लाकर उसे पीसकर सोम के बदले में देना चाहिए। "स यदि राजन्यं वैश्यं याजयेत्, स यदि सोमं बिभक्षयिषेत् न्यग्रोधतिभीराहृत्य ताः सम्पिष्य दधनि उन्मृज्य तमस्मै भक्ष प्रयच्छेन्न सोमम्" यह जो फल चमस है यह इज्याधिकार

एवं नैमित्तिक है, यह पूर्वप्रकरण अर्थात् पञ्चमपाद के १९वें अधिकरण आदि स्थल में वर्णित है। ज्योतिष्टोम में क्रम, अभिषव आदि कतिपय व्यापार सोम के धर्म के रूप में उपदिष्ट होता है। इसमें यह सन्देह है कि यह क्रम, अभिषक आदि सोम धर्म चमस में भी अनुष्ठेय रूप में उपदिष्ट होता है या नहीं ? इसमें पूर्वपक्षी का कहना है कि फलचमस और सोम का प्रकरण विभिन्न न होने से एवं ये फलचमस में भी अनुष्ठेय के रूप में होते हैं।

इसके उत्तर में सिद्धान्ती का कहना है कि "नैमित्तिकम् असमानविधानं स्यात्" = यह जो नैमित्तिक फल चमस—क्षत्रिय एवं वैश्य जिसको निमित्त हैं, वह समान विधान नहीं हैं, अर्थात् प्रकरणानुसार सोम के धर्म के समान जो उपदेशविधि के बल से प्राप्त है—ऐसी बात नहीं है, तब क्या फल चमस में ये संस्कार कर्तव्य नहीं है ? नहीं, ऐसी बात नहीं है फल चमस में भी ये धर्म अनुष्ठेय हैं, वह उपदेशविधि के बल से ही लब्ध है।

यदि यह कहा जाय कि दोनों में प्रकरणगत कोई भेद न रहने पर भी यह कैसे कहा जाता है ?

ऐसी स्थिति में कहा जाता है कि—

"नित्ये कृतार्थाः संस्काराः पश्चाद् भाविनिमित्तो।
न विधेयाः किन्तु तत्र प्राप्यस्तामविदेशतः॥

सोम नित्य होने से पूर्वभावी है। इसलिए अभिषव आदि धर्म प्रथम प्राप्त नित्य सोम को पाकर चरितार्थ होने से उपदेशविधि विरतव्यापार हो जाती है, इसलिए, फलचमस उसका व्यापार नहीं होता है। किन्तु, फलचमस में अतिदेश विधि के अनुसार ही अभिषव आदि धर्मों की प्राप्ति होती है। इसीलिए, सूत्र में कहा गया है कि "अतुल्यत्वात्" अधिकरण का प्रयोजन यह है कि विचार्य उपदेशविधि या अतिदेशविधि के ऊपर इस स्थल में कतिपय विषयों की प्रवृत्ति और निवृत्ति एवं ऊह और अनूहा निर्भर करता है।

"नैमित्तिकं" = नैमित्तिक फल चमसादि "असमानविधानं स्यात्" = असमान विधान होगा, अर्थात् समान विधान नहीं होगा अर्थात् उपदेश विधिबोध्य नहीं होगा, "अतुल्यत्वात्" = क्योंकि तुल्य नहीं है, अर्थात् नहीं है ॥ ३६ ॥

इति तेरहवाँ नित्य और नैमित्तिक का असमानविधित्व अधिकरण।

## (१४) प्रतिनिधिश्च तद्वत् ॥ ३७ ॥ पू०

**शा० भा०—अस्ति प्रतिनिधिः श्रुते द्रव्येऽपचरति। यथा व्रीहिष्वपचरत्सु नीवाराः। तत्र संदेहः। किं नीवाराः समानविधाना उत नेति। किं प्राप्तम्।**

**प्रतिनिधिश्च तद्वत्। यथा नैमित्तिकं नित्येनासमानविधानमेवं प्रतिनिधिः। अतुल्यत्वात्। काऽतुल्यता। व्रीहीणां विहिता न नीवाराणाम्। इयमतुल्यता। व्रीहीणां विहिता नीवाराणामर्थापत्त्या भवति ॥ ३७ ॥ क० पूर्वं० ॥**

त० वा०—प्रतिनिधावप्ययमेव न्यायः प्राप्नोति ॥ ३७ ॥

भा० प्र०—श्रुति में उपदिष्ट वस्तु का अपचार अर्थात् नाश होने पर उसका प्रतिनिधि प्रयोग करने की विधि है, जैसे व्रीहि का अर्थात् धान्यविशेष का नीवार व्रीहि का कार्य नीवार में उपदिष्ट है या अतिदिष्ट है या नहीं—यही संशय है। इसमें पूर्वपक्षी ने कहा है "प्रतिनिधिश्च तद्वत्" = वह जो व्रीहि प्रतिनिधि नीवार का पूर्वाधिकरणोक्त फलचमससम्बन्धीय धर्म के समान असमानविधान अर्थात् अतिदेशविधि बोधित ही होगा। कारण, व्रीहि प्रथम प्राप्त होने से तद्विषयक धर्मों का उसके साथ सम्बन्ध बोधन करके ही उपदेशविधि विधि चरितार्थ होने से वह नीवार आदि की अपेक्षा नहीं करता है। इसलिए, नीवार में व्रीहिसम्बन्धीय धर्म अतिदेश के बल से ही प्राप्त है।

"प्रतिनिधिः च" = नीवार आदि प्रतिनिधि भी, "तद्वत्" = ऐसा होगा अर्थात् मुख्य के समान विधि नहीं होगा, किन्तु असमान विधि होगी। पूर्वपक्ष ॥ ३७ ॥

**न तद्वत्प्रयोजनैकत्वात् ॥ ३८ ॥ सि० ॥**

**शा० भा०—नैतदस्ति, असमानविधानः प्रतिनिधिरिति। तद्वत्स्यात्, यद्वच्छ्रुतः। न प्रकृतिविकारभावः। कुतः। व्रीहित्वं हि व्रीहिधर्माणां व्रीहिव्यक्तौ निमित्तम्। न च व्रीहित्वस्य स्थाने नीवारत्वं भवतीति श्रूयते। तस्मान्न प्रकृतिविकारभावः। कथं तर्हि नीवारेषु धर्मा भवन्तीति। उच्यते। या व्रीहित्वेन परिच्छिन्ना व्रीहिव्यक्तयः, नीवारेषु तासन्ति। तासामर्थेन ते धर्माः क्रियन्ते। तासां च व्यक्तीनामन्यासां च व्रीहिगतानां तुल्य एष विधिः। तुल्यता का उभयेऽपि व्रीहित्वलक्षिता इति। तस्मात्समानविधाना इति ॥ ३८ ॥ क०सि० ॥**

त० वा०—यदि नीवराः स्वेनैव महिम्ना कर्मसाधनं भवेयुस्ततः कार्यापत्त्या धर्मैः संबध्येरन्। न तु तेषां साधनत्वे किंचित्प्रमाणमस्ति। ये हि तावद्व्रीहिधर्माः कतिपया दृश्यन्ते तदुपादित्सया पुरुषः प्रवर्तमानो नान्तरीयकत्वान्नीवारन्दमुपादत्ते न कर्माङ्गतया। व्रीहिधर्माः पुनर्व्रीहिशब्देन प्रत्यक्षेणैव चोदिता इति समानविधानाः। न हि नीवारेभ्यो व्रीहिबुद्धिर्व्यावर्तत इति वक्ष्यति 'समान्यं तच्चिकीर्षा हि' इति। तेनाऽऽह तद्वदेवासौ प्रवर्तत इति ॥ ३८ ॥

भा० प्र०—पूर्वोक्त पूर्वपक्ष के उत्तर में सिद्धान्ती ने कहा है कि "न तद्वत्" = ऐसा नहीं होगा अर्थात् नीवार आदि प्रतिनिधि स्थल में प्रकृति विकृतिभाव न होने से फल चमस के समान अतिदेश विधि से धर्म प्राप्त नहीं होगा, किन्तु एक ही विधि से,

जिस विधि से व्रीहि में धर्म प्राप्ति होती है, उस विधि से ही नीवार में धर्म की प्राप्ति होगी। कारण, प्रकृति विकृतिभाव नहीं है, क्योंकि "प्रयोजनैक्यात्" = व्रीहि एवं नीवार दोनों का ही प्रयोजन अभिन्न है, = दोनों से ही पुरोडाश निष्पादनरूप एक ही प्रयोजन सम्पादित होता है।

आशय यह है कि "व्रीहिभिर्यजेत" इस वाक्य में व्रीहि को जिस याग का करण कहा गया है उसमें लक्षणा के व्रीहिपद का अर्थ व्रीहि का अवयव यह अवश्य मानना पड़ेगा। कारण, व्रीहि शब्द का शक्य अर्थ व्रीहित्व जाति है। किन्तु, वह किसी का भी करण नहीं माना जा सकता है और जात्युपलक्षित व्रीहित व्यक्ति भी जो करण होगा यह भी सम्भव नहीं है। क्योंकि, व्रीहि में जो अवहनन किया जाता है, उससे व्रीहि का नाश ही हो जाता है, व्रीहि का चूर्ण अर्थात् अवयवांश ही केवल रह जाता है और वह पुरोडाश के द्वारा याग का करण होता है अतः, व्रीहि पद का अर्थ लक्षणा के द्वारा व्रीहि का अवयव होता है। व्रीहि का अवयव ही ग्राह्य है, मुख्य के अभाव में जिस प्रतिनिधि का ग्रहण किया जाता है और वह मुख्य के समान ही होता है, इस विषय का प्रतिपादन षष्ठ अध्याय में ही किया गया है। अतः, नीवार अतिशय सदृश होवे से व्रीहि के प्रतिनिधि के रूप में गृहीत होने से इस नीवार का परमाणु व्रीहि के परमाणु के समान होने से उसका इस प्रकार अधिक सादृश्य रहता है, इसलिए इस स्थल में मुख्य एवं प्रतिनिधि दोनों की एकता होने से इस विधि में व्रीहि विषयक धर्म उपदिष्ट होने से नीवार भी उसका विषय है यह मानना होगा। इसलिए, यहां पूर्व अधिकरण के फलचमस का दृष्टान्त सङ्गत नहीं है। इस स्थल में वैसा सादृश्य नहीं है, प्रतिनिधित्व केवल शास्त्रगम्य है ऐक्य की बात तो स्वतन्त्र है। इस स्थल में दोनों का सादृश्य प्रमाणान्तरगम्य होने से एकत्र उपदेश एवम् अन्यत्र अतिदेश के बल से धर्म की प्राप्ति मानना उचित है। इसलिए दोनों स्थानों में समानविधानता है।

"न तद्वत्" = ऐसा नहीं हो सकता है "प्रयोजनैकत्वात्" = क्योंकि, दोनों का प्रयोजन एक ही होता है। सिद्धान्त ॥ ३८ ॥

## अशास्त्रलक्षणत्वाच्च ॥ ३९ ॥

**इतश्च न प्रतिनिधेः श्रुतेन सह प्रकृतिविकारभावः। कुतः। अर्थलक्षणत्वात्। अर्थाद्धि प्रतिनिधिः क्रियते। न चार्थेनैतदवगन्तुं शक्यते व्रीहित्वस्य स्थाने नीवारत्वं भवतीति। तस्मान्न प्रतिनिधेः श्रुतेन सह प्रकृतिविकारभावो भवतीति ॥३९॥ क० युक्तिः॥ प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानाधिकरणम् ॥१४॥**

त० वा०—अशास्त्रचोदितश्च प्रतिनिधिरर्थात्क्रियते। तस्मादपि निष्प्रमाणकमस्य कार्यापन्नत्वमिति केचित्। न तु प्रतिनिधिरशास्त्रलक्षणः। प्रधानसमाप्तिः-

चोदितत्वात् । यदि वाऽशास्त्रलक्षणः स्यान्नैव क्रियेत । न च तदकरणात्कश्चिद्दोषः स्यात् । अत एवं वर्जयितव्यं सूत्रम् । अशास्त्रलक्षणत्वान्नीवारत्वस्य कार्यापत्तिर्नास्ति । ये तु व्रीहिधर्माः प्रधानचोदनया सकलधर्मासंभवाच्च व्रीहिचोदनया विकला आश्रितास्तेऽर्थान्तरत्वाभावान्न कार्यापन्नाः ॥ ३९ ॥

( इति—मुख्यप्रतिनिध्योः सामानविध्याधिकरणम् ॥ १४ ॥ )

भा० प्र०—प्रकृतिविकृतिभाव न होने से नीवार के प्रतिनिधित्वस्थल में अतिदेश विधि के बल से धर्म की प्राप्ति नहीं होती है—यह पूर्व में कहा गया है । उनमें प्रकृति विकृतिभाव न होने का अन्य कारण भी है—"अशास्त्रलक्षणत्वात् च" = इनमें जब प्रकृतिविकृतिभाव शास्त्रबोधित नहीं हैं, तब यह स्वीकार करना उचित नहीं है । साथ ही व्रीहि के अभाव में जो नीवार का ग्रहण किया जाता है, वह शास्त्र में नहीं कहा गया है । नित्य एवं प्रारब्ध कर्म अवश्य समापनीय होने से व्रीहि के अत्यन्त सदृश जो नीवार वही अर्थापत्ति के बल से कार्य के साधक रूप में गृहीत होता है । इस कारण से भी इनका प्रकृतिविकृति भाव नहीं है । अतः नीवार स्थल में अतिदेश विधि से धर्म नहीं होता है, किन्तु, वह व्रीहि के धर्मप्राप्ति का समान विधान है ।

"अशास्त्रलक्षणत्वात् च" = क्योंकि, वह शास्त्रलक्षण अर्थात् शास्त्रबोधित नहीं है । इसलिए, व्रीहि और नीवार में प्रकृतिविकृतिभाव नहीं है ॥ ३९ ॥

इति चतुर्दश मुख्य और प्रतिनिधि का समान विधानत्वाधिकरण ।

## (१५) नियमार्था गुणश्रुतिः ॥ ४० ॥ सि० ॥

**शा० भा०—अथ यः श्रुतः प्रतिनिधिः । तत्र किं सामानविध्यमुत नेति । यथा, यदि सोमं न विन्दते पूतीकानभिषुणुयात् इति । असामानविध्यमिति ब्रूमः । अश्रुताद्ध्येतद्विपरीतम् । एवं प्राप्त उच्यते नियमार्था गुणश्रुतिः । अत्राप्यर्थलक्षण एव प्रतिनिधिः । सोमेऽविद्यमाने सोमसदृशं द्रव्यं प्राप्तम् । तत्र सुसदृशे द्रव्ये प्राप्त ईषत्सदृशं नियम्यते । अन्यस्मिन्प्रतिनिधातव्येऽन्यत्प्रतिनिधीयते श्रुतस्य स्थाने न यागद्रव्यत्वेन ॥४०॥ क० श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् ॥ १५ ॥**

त० वा०—यद्य शास्त्रलक्षणत्वान्नीवाराणां कार्यापत्तिर्नास्ति । पूतीकानां तर्हि शास्त्रलक्षणत्वादनित्यत्वाच्च फलचमसवत्कार्यापत्तिप्रसङ्ग इति प्राप्तेऽभिधीयते ॥

यागसाधनतां कुर्यात्पूतीकानां यदि श्रुतिः ।<br>
ततः स्यात्कार्यवर्तीत्वं न त्वेवं सा प्रवर्तते ॥

सोमनाशे हि प्रतिनिध्यपेक्षायां सत्यां पूतीका विधीयन्ते न यागसाधनापेक्षायाम्। अतोऽयं प्रतिनिधिनियम एव भवति, यत्सकलसोमधर्मासंभवे निकालान्सोमधर्मानुत्पादयेत्तत्पूतीकगतानिति। वक्ष्यति हि नियमार्थः क्वचिद्विधिः' 'तन्नित्यं तच्चिकीर्षा हि' इति च। अतश्च नैवात्र पूतीकत्वं कर्माङ्गं, किं तर्हि, सोमधर्मोपलक्षणार्थम्। तेन श्रुतिलक्षणस्यापि पूर्वेणाविशिष्टत्वमिति। तेनेहापि तदेव चिन्तायाः प्रयोजनम्। अतश्च तदाश्रयस्य तद्दुद्धयनपायाद्गुणकामैः प्रवर्तितव्यम्। अन्ये त्वाहुः। सकलव्यक्त्याश्रयिणो हि गुणकामा वैकल्यादिह न प्रवर्तन्ते। नित्यस्य हि कर्मणोऽवश्यं प्रक्रमात्प्रक्रान्तस्य च सर्वस्यावश्यसमापनीयत्वात्किंचिद्धर्मवैकल्येऽप्यवैगुण्यायभ्नुज्ञा युज्यते। यथा तु काम्यानां प्रतिनिधिः प्रक्रमो नास्ति तथा गुणकामनं प्रवर्तितव्यम्। यदि तु प्रक्रान्ते कस्मिंश्चिद्गुणकामकल्पे द्रव्यनाशे सति प्रतिनिधीयते ततस्तस्यावश्यसमापनीयत्वाद्विकारेण प्रतिनिधिना वा तुल्यं समापनमित्यूहानूहावेव प्रयोजनम् ॥ ४० ॥

( इति—मुख्यमन्दसदृशप्रतिनिध्योः सामानविध्याधिकरणम् ॥ १५ ॥ )

भा० प्र०—श्रुति में कहा गया है कि "यदि सोमं न विन्देत् पूतिकानभिषुणुयात्" अर्थात् सोमलता के न मिलने पर पूतिकालता का अभिषव करे। यह जो पूति का उपदिष्ट होता है, इसमें क्रयादि विधि की प्रवृत्ति होगी या नहीं—यही संशय है। पूर्वपक्षी का कहना है कि जब नीवार के समान अर्थाक्षिप्त नहीं है बरन् शास्त्र बोधित है, तब फलचमस के समान यह भी नैमित्तिक अर्थात् सोमाभव निमित्त जन्य होने से यहाँ प्रकृतिविकृति भाव है। इसमें सिद्धान्ती का कहना है कि पूति का सोम का प्रतिनिधि होने से वह भी सोम के समान विधान है, उसमें अतिदेश के बल से धर्मप्राप्ति नहीं होगी, कारण, यह भी प्रकृतिविकृतिभाव शून्य है।

यदि यह कहा जाय कि नीवार शास्त्रबोधित नहीं है, अतः उसमें प्रकृतिविकृति भाव नहीं है, किन्तु, पूतिका का प्रतिनिधित्व जब शास्त्रबोधित है, तब उसमें प्रकृतिविकृति भाव क्यों नहीं रहेगा? इस प्रसङ्ग में यह कहा गया है—"नियमार्था गुणश्रुतिः" = सोम के समान और भी बहुत कुछ रह सकता है, किन्तु सोम के अभाव में उनका प्रयोग करने पर अपूर्व नहीं रहेगा, परन्तु, सोमभाव में सोम से विजातीय पूति का ही प्रयोज्य है—इसी यागीय अपूर्व उत्पन्न होगा, इस प्रकार नियमादृष्ट की सूचना के लिए ही शास्त्र में सोम का उल्लेख किया गया है। इसलिए, यह शास्त्र बोधित होने पर भी इस स्थल में प्रकृतिविकृति भाव नहीं है, इसलिए, यह समान विधान = समान विधि प्रयुक्त है।

"गुणश्रुतिः" = गुणश्रुति अर्थात् पूति का प्रकृति रूप गौण द्रव्य का जो श्रुति में उल्लेख है, वह, "नियमार्था" = नियमविधि अर्थात् नियमादृष्ट जनक है ॥ ४० ॥

**(१६) संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ ४१ ॥ पू० ॥**

**शा० भा०—अस्ति ज्योतिष्टोमः। तत्र संस्थाः समाम्नाताः। अग्निष्टोमः, उक्थ्यः षोडशी, अतिरात्र इति। तत्र दीक्षणीयादयो धर्माः। तेषु संदेहः किं सर्वसंस्थं ज्योतिष्टोमं प्रकृत्य दीक्षणीयादयो धर्मा उक्ता उताग्निष्टोमसंस्थमभिप्रेत्येति। किं प्राप्तम्। सर्वसंस्थासु समानं विधानम्। कुतः। प्रकरणाविशेषात्। नास्ति प्रकरणे विशेषो येन ज्ञायेताग्निष्टोमसंस्थं प्रकृत्येति। तस्मात्समानविधानाः संस्था इति ॥ ४१ ॥ क० पूर्व० ॥**

त० वा०—अनेकग्रहचमसयागाभ्यासात्मकश्चतुःसंस्थो ज्योतिष्टोमोऽवधारितः। सर्वसंस्थासु तु ज्योतिष्टोमरूपमनुष्यूतम्। यथैव देवदत्तस्य स्थानोपवेशनगमनशयनाद्यवस्थाभेदेऽपि देवदत्तत्वं नापैति तथा ज्योतिष्टोमात्मनः संस्थान्तरोपजनापाये तत्त्वं नापैति। संस्थानां च विरोधादन्योन्यं समावेशो नास्ति। ज्योतिष्टोमरूपं तु सर्वत्राविरुद्धमनुवर्तते। स च ज्योतिष्टोमः फलाय चोदितः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। तथोक्थ्यादिसंस्थानामपि 'पशुकाम उक्थ्यं गृह्णीयात्' इत्यादि फले विधानम्। तमेवंविधं ज्योतिष्टोमं प्रकृत्य दीक्षणीयादयो धर्माः समाम्नाताः। ते संदिह्यन्ते, किं सर्वसंस्थज्योतिष्टोमोद्देशेनाऽऽम्नाता उत केवलाग्निष्टोमसंस्थाद्देशेनेति। न त्वयमुपन्यासो युक्तः। न हि धर्मसंबन्धवेलायामुद्दिश्यमानस्य ज्योतिष्टोमस्य काचित्संस्था विशेषणत्वेन श्रूयते। यद्यपि कथंश्चिच्छ्रूयेत तथाऽप्युद्दिश्यमानविशेषणत्वान्न विवक्ष्येत। न चोक्थ्यादिग्रहणांशेन ज्योतिष्टोमस्य ग्राहकत्वं, फलसाधनभावाद्धि तत्रोक्थ्यादयएवेतिकर्मव्यतावन्तो भवन्ति। ज्योतिष्टोमस्तत्राऽऽश्रयत्वेनोपदर्जनभावान्न धर्मग्रहणयोग्यो विज्ञायते। 'ज्योतिष्टोमेन स्वर्गकाम' इति चैदद्वाक्यगतस्य ज्योतिष्टोमस्य धर्मसंबन्धः सर्वसंस्थास्वविशिष्ट इत्यग्निष्टोमसंस्थमेवेत्ययुक्तम्। अत एवं वक्तव्यम्। किं ज्योतिष्टोमस्यैवैतद्धर्माम्नानमुतोक्थ्यादीनामपि संस्थानामिति। तच्चैवं समर्थनीयमेतदेव ग्रन्थेनोक्तमिति। यद्यपि संस्थार्थिधर्मा गृह्यन्ते तथाऽपि तासां स्वयमक्रियात्मकत्वाज्ज्योतिष्टोम एवाऽऽश्रयत्वाद्द्वारं भवतीति किं सर्वसंस्थं प्रकृत्येत्याह। किं द्वारभूतं फलवन्तं च प्रकृत्योत फलवन्तमेवेत्यर्थः यदा च केवलज्योतिष्टोभार्थत्वं तदा तदसाधारणत्वात्परिशेषाद्वाऽग्निष्टोमसंस्थस्यैव जायत इति तत्संस्थस्य व्यपदेशः। उक्थ्यादिषु हि यद्यपि ज्योतिष्टोमस्यामपि ग्राहकत्वमस्ति तथाऽपि तत्र व्यज्यते किमुक्थ्यादिगृहीता धर्मा एतस्य द्वारत्वाद्भवन्त्युताऽऽत्मीयफलसाधनत्वादिति। अग्निष्टोमसंस्था चास्य निजमङ्गम्। अतस्तत्संस्थो गृह्णान्नयं गृह्णातीति शक्यते वक्तुम्। तस्मात्सम्यगुपन्यस्तम्। धर्मसाधारण्यं चोपदेशातिदेशाभ्यां पक्षद्वयेऽप्यभ्युपगम्यत एवेति विधानग्रहणम्।

किं प्राप्तम् । ज्योतिष्टोमेन सह समानं संस्थानां धर्मविधानम् । कुतः । प्रकरणतविशेषात् । ज्योतिष्टोमो हि फलवत्त्वादुपजातकथंभावस्तदनुवृत्तिसंनिधौ समाम्नातांन्धर्मान् गृह्णाति न ज्योतिष्टोमत्वेन । तच्चोक्थ्यादीनामेतेष्वेव धर्मेषु सर्वमविशिष्टम् । उपदेशासंभवे चातिदेशो भवति । तस्मादुपदेश एव साधारण इति ॥ ४१ ॥

ज्योतिष्टोम यज्ञ का साधारणतः अग्निष्टोम, उक्थ्य, षोडशी, अतिरात्र, अत्यग्निष्टोम, आप्तोर्य्याम, एवं वाजपेय सात प्रकार की संस्था कहा गया है । वस्तुतः, इनमें प्रथम चार संस्था और शेष तीन उन्हीं में अन्तर्भुक्त है, संस्था अर्थ में समाप्ति है । समाप्ति कालीन सामगान की न्यूनता या आधिक्य एवं तत्सह पशु आदि की अल्पता या बाहुल्य के अनुसार इसका यह प्रकार भेद है, सामगान कर यज्ञ समाप्त होता है, उसी के नाम के अनुसार यज्ञ का नाम होता है । इसमें प्रथम संस्था अग्निष्टोम नित्य है और स्वर्ग उसका फल है । उक्थ्य आदि अन्य पशु कामनादि निमित्तक होने से वह काम्य है, क्योंकि, श्रुति में कहा गया है "पशुकाम गृह्णीयात्" । षोडशिना वीर्यकामः स्तवीत" इत्यादि । किसी-किसी ने कहा है कि ये गुणफल हैं । जो भी हो, ज्योतिष्टोम के प्रकरण में दीक्षणीयेष्टि, प्रायणीयेष्टि आदि अङ्गकलाप उपादिष्ट होता है ।

दीक्षणीयादि अङ्गों की जो विधि है, क्या उसका अग्निष्टोम ही विधि है या सातों संस्था ही उसका विषय है—यही संशय है ।

इसमें पूर्वपक्षी का कहना है कि "संस्थास्तु समानविधानाः"—ज्योतिष्टोम की ये जो सात संस्थायें हैं, उनकी सभी समान विधान अर्थात् उपदेश विधिकर विषय है । कारण, "प्रकरणाविशेषात्"—एक ही प्रकरण में जब सातों उपदिष्ट हैं, तब अङ्गविधि के साथ प्रकरण सम्बद्ध सभी समान हैं, साथ ही अग्निष्टोम, उक्थ्य आदि सभी फल सम्बद्ध समान हैं, तब सभी प्रकरण के अनुसार समान भाव में अङ्गविधि संयुक्त होगी । इसलिए इनमें प्रकृतिविकृति भाव नहीं हो सकता है, अतः, एक ही विधि के द्वारा उनकी अङ्गप्राप्ति होगी—सभी की अङ्गविधि समान है ।

"संस्थाः" = ज्योतिष्टोम की संस्थाएँ, "तु" = प्रत्यवस्थान में, "समानविधानाः" = इस प्रकार समान विधान अर्थात् प्रकृतिविकृति भाव शून्य होंगी, "प्रकरणाविशेषात्" = क्योंकि, उनमें प्रकरण गत वैशिष्ट्य नहीं है ॥ ४१ ॥

## व्यपदेशश्च तुल्यवत् ॥ ४२ ॥

शा० भा०—तुल्य इव प्रकरणे व्यपदेशो भवति । यद्यग्निष्टोमो जुहोति, यद्युक्थ्यः, परिधिमनक्ति, यद्यतिरात्र एतदेव यजुर्जपन्हविधानं प्रतिपद्येत, इति सर्वावस्थस्य विशेषवचनादवगम्यते । यदपि सामान्यं तदपि सर्वावस्थस्यैवेति । यदि हि (न) समानं विधानमग्निष्टोमसंस्थस्येव स्यान्नेहाग्निष्टोमं संकीर्तयेत् ।

**असंकीर्त्यमानेऽपि धर्मसंबन्धो भवतीति, सर्वावस्थं कीर्तनात्सर्वावस्थस्य प्रकरणमित्यवगच्छामः। अपि च श्रूयते, आग्नेयमजमग्निष्टोम आलभेत, ऐन्द्राग्नं द्वितीयमुक्थ्ये, ऐन्द्रं वृष्णिं तृतीयं षोडशिनि इति। द्वितीयस्य तृतीयस्य च दर्शनं सामानविध्ये घटते। उक्थ्ये हि द्वे निमित्ते स्तः, अग्निष्टोमस्तोत्रमुक्थ्यस्तोत्रं चेति। तत्र द्वौ नैमित्तिकौ, आग्नेयः पशुः, ऐन्द्राग्नश्चेति। तेन द्वितीयदर्शनं तत्र युज्यते। एवं शोडशिन्यतिरात्रे च प्रकृतिविकारभावे तु प्रत्यक्षश्रुतैरैन्द्राग्नादिभिरतिदेशेन प्राप्त आग्नेयो बाध्येत। तत्र द्वितीयादिदर्शनं नोपपद्येत। भवति च। तस्मात्सर्वावस्थस्य ज्योतिष्टोमस्य दीक्षणीयादयो धर्मा इति ॥४२॥**
**क० युक्तिः ॥**

त० वा०—आज्यशेषस्य प्रतिपत्तिं विदधत्तुल्यवत्संस्थाक्रतुप्रकरणसंबन्धित्वेन कीर्तयति। यद्यग्निष्टोमो जुहोति यद्युक्थ्यस्तेनैव शेषेण परिधिमनक्ति। यद्यतिरात्रः, एतदेव होमयजुः, यमग्ने पृत्सु मर्त्यमिति जपन्हविधानं प्रतिपद्येतेति। अतो विज्ञायते सर्वोऽङ्गविधिः साधारण इति। सामान्यतो दृष्टमिवायुक्तमुक्तम्। यदि हि वाक्यवशेन किंचित्प्रकरणाम्नातं संस्थाभिः संबध्यते ततः किमसंयुक्तसंबन्धेनापि युक्तं भवितुम्। न हि 'द्वादशाहीनस्य' इत्यादिषु शेषधर्माणामप्यहीनार्थत्वमाशङ्कितम्। यावद्वचनं क्षयित्वाद्वचनानामित्येवं व्याचष्टे। यदि हि सामान्यविहितमग्निष्टोम संस्थस्यैव स्याद्विनाऽपि तदुपादानेन तदङ्गत्वसिद्धेर्नात्राग्निष्टोमं संकीर्तयेत्। यतस्तु संकीर्तयत्यता मन्यत्महे नूनमविशेषितमग्निष्टोमस्य न लभ्यते। तच्चैवं न लभ्यते यदि संस्थानामपि साधारणं प्रकरणम्। केवलज्योतिष्टोमप्रकरणपक्षे तु पुनःश्रुतिरनर्थिका स्यात्। तथोक्थ्यादीनामपि यदि प्रकरणमस्ति ततोऽन्मतरनिर्धारणार्थं यदिशब्दोपबद्धं ग्रहणं युक्तम्। अप्रकृतत्वे तु 'द्वादशाहीनस्य' इतिवद्विनैव यदिशब्देन संबन्धः स्यात्। न हि ज्योतिष्टोमप्रकरणे स्थितस्यैवं वादो युज्यते। यदि ज्योतिष्टोमस्तत एतत्। यदि द्वादशाहस्ततोऽमुकमिति। अनेकसंनिहितपेक्षं ह्येतद्वचनं भवति। अतोऽपि समानं प्रकरणम्। इदमपरं लिङ्गम्। 'आग्नेयमजमग्निष्टोम आलभेत' ऐन्द्राग्नमुक्थ्ये द्वितीयम्।' 'ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्' इति। समानविधानत्वे पूर्वपूर्वो ह्युत्तरोत्तरत्र प्रत्यक्षश्रुतत्वात्क्रियत इति द्वितीयतृतीयदर्शनमुपपद्यते। विकारपक्षे तु प्रत्यक्षश्रुतैरैन्द्राग्यादिभिराग्नये बाधिते सर्वत्रक एव स्यात्। ननु च प्रत्यक्षश्रुतत्वेऽपि संस्थान्तरे संस्थान्तरासंभवाग्निर्निमित्तः पूर्वः पूर्वो न प्राप्नोति। यो ह्यग्निष्टोमस्तोत्रे समपयते सोऽग्निष्टोमो न तद्वन्मात्रम्। यश्चोक्थ्यादिषु समाप्यते नासौ पूर्वत्र समाप्तो भवति। तेन द्वितीयदर्शनाद्यप्रसङ्गः पक्षद्वयेऽपि तुल्यः। सत्यं संस्थानिमितत्वे तुल्यः। स्तोत्रनिमित्तत्वे तु समुच्चयः। तथा च भाष्यकार आह—द्वे हि तत्र निमित्ते अग्निष्टोमस्तोत्रमुक्थ्यस्तोत्रं चेति सिद्धवदेतद्ब्रवीति। कथं पुनः संस्थास्तोत्र-

साधारणाग्निष्टोमादिसमाभिव्याहारे तुल्ये स्तोत्रनिमित्तत्वमेवाङ्गी क्रियते न संस्थानिमित्तत्वम्। तासां हि फलवत्त्वेन प्रयोजनवत्त्वादक्लेशेनैव निमित्तत्वमापद्यते। तत्र केचिदाहुः। सत्यपि शब्दसाधारण्ये शास्त्रस्य महाविषयत्वानुग्रहार्थं स्तोत्रनिमित्तत्वाश्रयणमिति। अथवा स्तोत्रविशेषिताया एव संस्थाया एवंशब्दकत्वात्पूर्वतरप्रतीतविशेषणनिमित्तत्वसंभवे जघन्यविशेष्यनिमित्तत्वकल्पना न युक्ता। यद्वाऽऽकृत्यधिकरणन्यायेनैव स्तोत्रेषु मुख्यः शब्दः संस्थायां लाक्षणिकः। श्रुत्यसंभवे च लक्षणाऽऽश्रयितव्या। शक्नोति च स्तोत्रमपि सप्तमीनिर्देशान्निमित्तत्वं प्रतिपत्तुम्। निष्फलानामपि च भेदनादीनां वचनसामर्थ्यान्निमित्तत्वमिष्टम्। अथवा 'संदिग्धेषु वाक्यशेषात्' इत्येवं स्तोत्राश्रयणम्। सत्यपि वा संस्थानां मुख्यत्वे व्यवधारणकल्पनया वाक्यशेषेण स्तोत्रपरिग्रहः। एवं हि श्रूयते 'आग्नेयमजमग्निष्टोम आलभेत' 'आग्नेयो ह्यग्निष्टोमः' इति। कतरस्मिन्नग्निष्टोमे, य आग्नेयः। स्तोत्रस्य च स्तुतिभागाग्निर्देवता विद्यते न संस्थायाः। सा हि व्यापारपरित्यागात्मकत्वादभावभूता। न चाभावस्य देवतया कार्यमस्ति। यागाभ्यासेऽपि हि या देवता सा तस्यैवाऽऽग्नेयत्वं करोति न संस्थायाः। न च स एव संस्था। तदुत्तरकालौदासीन्यवचनत्वात्संपूर्वस्य तिष्ठतेः। न चान्यगतया देवतयाऽन्यस्य व्यपदेशो भवति। तथोक्थ्यषोडशिनोरपि दर्शयितव्यम्। अपि च 'ऐन्द्राग्नान्युक्थ्यानि' इति स्फुटमेव स्तोत्रग्रहणम्। न हि संस्था, उक्थ्यानीत्यनेन शब्देनोच्यते। तस्मात्सति स्तोत्रनिमित्तत्वे युक्तः समुच्चय इति। ननु विकारपक्षेऽप्यदृष्टार्थत्वात्पशुयागानामन्योन्यकार्यापत्त्यसंभवादुपपद्यत एव समुच्चयः तथा हि।

नाऽऽनुमानिकमात्रं यत्तत्प्रत्यक्षेण बाध्यते।
विरोधे सति बाधो हि विरोधश्चैकगोचरः॥

यदि हि प्रत्यक्षश्रुतत्वमेव केवलं विरोधनिरपेक्षं बाधकारणं स्यात्ततो न किंचिन्न बाध्यते क्रत्वन्तरगतं दृष्टार्थमदृष्टार्थं वा तुल्यकल्पमतुल्यकल्पं वा। न चैतदिष्टम्। अत उभयोः पक्षयोः समुच्चयदर्शनमुपपन्नम्। तथा च वक्ष्यति 'प्रकृतिलिङ्गासंयोगात्' इति। तथा 'प्राजापत्येषु चाऽऽम्नानात्, इत्यादावेवंजातीयकानां तत्र तत्राविरोधात्समुच्चयं वक्ष्यति। तत्रैवं समाधिमाहुः। अस्त्येवात्र प्रकृतिलिङ्गसंयोगः सवनीयसमाख्यानिमित्तः। सर्वे ह्येते सवनीयशब्देनोक्ताः। तस्मात्समाख्यानात्तुल्यकार्यत्वे सति, अस्ति विरोध इति प्राप्नोति बाधः। यद्येवं, ततः समानविधानत्वेऽपि सामान्यविशेषलक्षणबाधप्रसङ्गः। पूर्वपूर्वो हि पशुर्महाविषयत्वात्सामान्यविहितो भवति। उत्तर उत्तरोऽल्पावकाशत्वाद्विशेषविहितः। बाध्यते च सामान्यं सावकाशं वा विशेषेण निरवकाशेन वा। केचित्त्वाहुः। सर्वान्त्यस्य केवलस्य निरवकाशत्वादत्यन्तविशेषस्थत्वाद्बाध-

कत्वं भवेन्न मध्यमयोः। सत्यपि बह्वल्पविषयत्वे प्रमाणगतिस्तुल्या। अथैवाऽऽग्नेयः। संस्थाचतुष्टयविषयत्वात्साधारणो भवत्येवमैन्द्राग्नोऽपि संस्थात्रयसाधारणः। यावता च यत्नेनासौ प्राप्नोति तावता च पूर्वोऽपि। मेष्यास्तु संस्थानिमित्तत्वेऽप्यदोषः। न हि तदधिका ज्योतिष्टोमे संस्थाऽस्ति। तस्मादबाध इति। उच्यते। यद्यपि न बाधस्तथाऽपि विकल्पस्तावत्प्राप्नोति। न हि तुल्यार्थानां क्वचित्समुच्चयो दृष्टः। सेयमुभयतः पाशा रज्जुः। यदि तावत्किंचिदपि कार्यान्यत्वं समुच्चयसिद्ध्यर्थमभ्युपगम्यते ततो विकारपक्षेऽपि समुच्चयः अथ तत्र बाधं समर्थयितुं कार्यैकत्वं कल्प्यते ततः सामानाविध्येऽपि व्रीहियवादिवदसमुच्चय इति। न चैतत्पूर्वपक्षवचनमात्रं सिद्धान्तेऽपि दर्शनमेवागत्या वचनीकृत्य समुच्चयं वक्ष्यति 'वचनात्तु समुच्चयः' इति। तदवश्यवक्तव्यो विशेषः। स उच्यते।

समानविधिपक्षे हि सर्वे सर्वाङ्गभाविनः।
तान्निमित्तवशप्राप्तान्न समाख्या निवर्तयेत् ॥

सर्वे हि पशवः सर्वत्र प्राप्नुवन्तो यत्पूर्वसंस्थासु पर न भवन्ति तन्निमित्ताभावात्। प्रत्यक्षेण तु निमित्तेन पूर्वः पूर्वः परत्र वाक्यात्प्राप्नोति। तत्र किं समाख्ययैककार्यत्वं कल्पयित्वा बाधविकल्पयोरन्यतर आश्रीयतामुत वाक्यप्राप्तसमुच्चयानुरोधेन कार्यान्यत्वं कल्प्यतामिति वाक्यबलीयस्त्वात्समुच्चयेन भवितव्यम्। यथा प्रयाजानुयाजादीनां सत्यपि समाख्यैकत्वे वाक्यसामर्थ्यात्कार्यान्यत्वं समुच्चयश्च। अतिदेशे पुनः, समाख्यया कार्यैकत्वम्, अतिदेशेन कार्यान्यत्वं (तेनापि समुच्चयः)। तस्माच्चोपदेशान्तर्गता समाख्यैव बलीयसीति तत्कृतं कार्यैकत्वमाश्रित्य विरोधाद्बाधः परिगृह्येत। विकारे च प्रकृतिलिङ्गसंयोगापेक्षा विद्यते इति कार्यापत्तिर्विज्ञायते। न तु समानविधिपक्षे प्रकृतिलिङ्गसंयोगः कश्चित्, येन कार्यापत्तिरवधार्येत। केचित्त्वाहुः। समानविधित्वे परस्परानपेक्षैर्द्रव्यदवतोसंयोगैः कर्मभेदोऽवसीयते। विकारे पुनरतिदेशप्राप्तयागानुवादेन गुणमात्रं विधीयते। ततश्चैक एव यागः स्यान्न द्वितीयादय इति। स स्वयं गुणविधिरैन्द्राग्ने संभवेन्नैन्द्रसरस्वत्योः। अनेकद्रव्यदेवताविधानने वाक्यभेदप्रसङ्गादेकान्तेन कर्मान्तरता। तेनैवं समर्थनीयं, कर्मान्तरमेवेदं विधीयमानं किमपूर्वान्तरसाधनत्वं प्रतिपद्यतामुत प्राकृतसवनीयापूर्वमेव साधयत्विति। पूर्वक्लृप्तापूर्वविनियोगमात्रे संभवति नापूर्वान्तरं कल्पयित्वा तत्साधनत्वाध्यवसानं युक्तम्। तथाऽतिदेशप्राप्तसवनीयापूर्वमपि साधनापेक्षावेलायां प्रत्यक्षश्रुतसवनीयपरित्यागेन न सवनीयान्तरं गृह्णाति। सर्वापेक्षासु प्रकृतासंभवेनाप्रकृतग्रहणाद्यागतोऽपि व्यापारः प्राकृतेननैवापूर्वेण क्लृप्तसंबन्धो न शक्नोत्यपूर्वान्तरसंबन्धं प्रतिपत्तुम्। कथमक्लृप्तसामर्थ्यं सवनियान्तरं प्राकृतमपूर्वं साधयतीति चेत्। यथेतरस्मिन्पक्षेऽपूर्वान्तरं यागगतं व्यापारमित्यदोषः। कस्तह्यनयोर्विशेषः। उच्यते। यदा

यागगतव्यापारेणापूर्वाण्यपेक्ष्यन्ते न तदा वैकृतसवनीयापूर्वं क्लृप्तं, यत्तस्मिन्नंशे निपतेत्। यदा पुनरपूर्वेण कर्मापेक्ष्यते तदा सवनीयत्वप्रकृतिलिङ्गसंयुक्तं कर्मान्तरं विद्यमानमवबुध्य प्राकृतं निराकरोति। प्रकृतौ चापूर्वकल्पनावसराद्विधीयमान-सवनीयचतुष्टयानुनिष्पाद्यपूर्वचतुष्टयं कल्प्यते। न हि तत्र ज्ञायते कतरत्पूर्वतरं क्लृप्तं यस्य साधनान्तरसंबन्धः स्यात्। कर्मालोचनवेलायां हि कर्मरूपाण्येव दृश्यन्ते। अपूर्वकल्पनाऽपि युगपद्भवतीति न ज्ञायते विशेषः। विकारपक्षे तु ज्ञायते प्राकृतस्य पूर्वतरं क्लृप्तिरित्यवश्यावहेयेऽन्यतरस्मिन्कर्मणि विप्रकृष्टं प्राकृतं हातव्यं भवतीति बाधप्रसङ्गः। ननु च विकारपक्षेऽग्निष्टोमसंस्थाया एव विकार-भूताः पराः संस्था भवन्ति न परस्परेणेति केवलस्याऽऽग्नेयस्य प्राप्तस्य परैर्बाधा-त्सर्वत्र द्वितीयस्य दर्शनं न स्यादित्येतावन्मात्रं वक्तव्यं किमुच्यते तृतीयस्य दर्शनं न प्राप्नोतीति। नैष दोषः। यदि त्वयमैन्द्राग्नादीनां परत्र प्राप्तानां बाधाददर्शनं ब्रूयात्ततो मिथ्प्रमाणकं ववेत्। यदि त्वदर्शनप्राप्तं वदति। तच्चाऽऽग्नेयस्य बाधा-न्मध्यमयोश्चाप्राप्तेरुपपन्नमेव तेनैव चाऽऽग्नेयो बाध्येतेत्याह—न पूर्वः पूर्वः परेणेति। तस्मात्समानविधानाः॥ ४२॥

भा० प्र०—इनमें प्रकृतिविकृति भाव न होने का और भी कारण है "व्यपदेशश्च तुल्यवत्"—श्रुतियों में ज्योतिष्टोम प्रकरण में कहा गया है कि "यद्यग्निष्टोमो जुहोति यदुक्थ्यः परिधिमनक्ति, यदि अतिरात्रः एतदेव यजुर्जपन् हविर्धानं प्रतिपद्यते" (तै० सं० ६।४।३१) अर्थात् अग्निष्टोम होने पर होम करे, उक्थ्य होने पर परिधि अञ्जन करना होगा, अतिरात्र होने पर यजुर्मन्त्र का पाठ करना होगा, हविर्धान में उपस्थित होगा इस स्थल में अग्निष्टोम, उक्थ्य, आदि सभी संस्कारों के पक्षों में ही जब अव्यशेषों की प्रतिपत्ति समान भाव में उल्लिखित होता है, तब इसका प्रकरण सम्बन्ध समान है, यह स्वीकार नही किया जा सकता है इनका प्रकरण सम्बन्ध यदि समान हो तब इनमें प्रकृतिविकृति भाव नहीं हो सकता है साथ ही "आग्नेयमजग्निष्टोम अलभेत, ऐन्द्राय द्वितीयमुक्थ्ये ऐन्द्रं वृष्णिं तृतीयं षोडशिनि" इत्यादि वचन में जो द्वितीय तृतीय आदि कह कर अग्निष्टोम का समान रूप में उक्थ्य आदि का उल्लेख देखा जाता है, यह समान दर्शन होने से भी प्रतीत होता है कि उक्थ्य आदि अग्निष्टोम का समान विधान है, कारण, उक्थ्य में अग्निष्टोम स्तोत्र एवम् उक्थ्य स्तोत्र में हो निमित्त होंने से आग्नेय एवं ऐन्द्राग्न ये दोनों पशु नैमित्तिक है, अग्निष्टोम अग्निष्टोम स्तोत्र अर्थात् यज्ञायज्ञिय स्तोत्र रूप निमित्तवश एक पशु ही नैमित्तिक है। अतः, इस प्रकार का जो साम्यदर्शन है वह भी उनके समान विधानत्व के विना सङ्गत नहीं होता है।

"तुल्यवत्" = तुल्य के समान, "व्यपदेशः च" = व्यपदेश अर्थात् श्रुति में उल्लेख भी रहता है॥ ४२॥ इति पूर्वपक्ष।

**विकारास्तु कामसंयोगे स नित्यस्य समत्वात् ॥ ४३ । सि० ॥**

शा० भा०—नैतदस्ति, समानविधाना इति । किं तर्हि । उक्थ्यादयः संस्थाविकारभूताः स्युः । अग्निष्टोमसंस्थमुरीकृत्य दक्षिणीयादयो धर्माः समाम्नाताः । कुतः । उक्थ्यादीनां कामसंयोगेन श्रवणात् । पशुकाम उक्थ्यं गृह्णीयात् । षोडशिना वीर्यकामः स्तुवीत, अतिरात्रेण प्रजाकामं याजयेत्, इति । काम्यो गुणः श्रूयमाणो नित्यमर्थं विकृत्य निविशते । कथम् । गुणादेवजातीयके काम्ये फलनिर्वृत्तिः । पशुकाम उक्थ्यंगृह्णीयान्न ज्योतिष्टोमकाम उक्थ्यग्रहणकामो वा । यथा पशवो भवन्ति, तथा गृह्णीयादित्यर्थः । कथमिति तत्रावश्यमितिकर्तव्यताऽपेक्षितव्या, संनिधानान्नित्यस्येतिकर्तव्यतयेति गम्यते । कथं पुनर्थेयमितिकर्तव्यता सा नित्यस्येत्यवधार्यते, न पुनरस्यैव काम्यस्य साधारणी वेति । उच्यते । यत्र यत्र गुणे कामो भवति तत्र क्रियायां साध्यमानायां नान्यथा । सा तत्रेतिकर्तव्यता याऽन्तिकमुपनिपतति । सा साधनस्य वा साध्यस्य वेति संदिह्यमाना साध्यस्य भवितुमर्हति । नासौ साध्यस्याभवन्ती साधनेन संबध्यते । एवं हि स इति कर्तव्यताविशेषश्चोद्यते । अनेन साधनं साधकं कुर्यादिति । न चास्ति स प्रकारो, येनासाध्यमानायां क्रियायां तेन साधकः कृतो भवेत् । तस्मात्साधकस्यापीतिकर्तव्यताविशेषमभ्युपगच्छता साध्यस्यापीत्येतदभ्युपगमनीयम् । साध्यश्च ज्योतिष्टोमः साधिकाः संस्थाः । तस्माज्ज्योतिष्टोमस्य तावत्सा, इतिकर्तव्यतेति सिद्धम् । अथ कस्मान्न साधारणी । नित्यवदाम्नानात् । यदैव ज्योतिष्टोमः, तदैव दीक्षा । यदा तु ज्योतिष्टोमे पशुकामस्तदोक्थ्यसंस्था । तत्र सर्वदा ज्योतिष्टोमे धर्माः कर्तव्याः । एकदोक्थ्यसंस्था । तत्र सर्वदा ज्योतिष्टोमस्य धर्माः कर्त्तव्याः । ते चोक्थ्यादिसंस्थस्यार्थेनेति पूर्वमुत्तरेण विरुध्यते, यदि सर्वदा, नोक्थ्यादीनामर्थेन । अथोक्थ्यादीनामर्थेन, न सर्वदा, उभयं विप्रतिषिद्धम् । तस्मान्न साधारणी । नित्यवदाम्नानं च यद्यनित्यस्य स्यात्, नित्यवदाम्नानं तदनित्यं क्रियेत । तत्र नित्यवदाम्नानं बाध्येत । तस्मान्नित्यसंस्थस्य ज्योतिष्टोमस्य, न काम्यस्योक्थ्यादिसंस्थस्येति ॥ ४३ ॥ क० सि० ॥

**अपि वा द्विरुक्तत्वात्प्रकृतेर्भविष्यन्तीति ॥ ४४ ॥**

शा० भा०—नन्वग्निष्टोमसंस्थाऽपि काम्या श्रूयते । द्वे हि तत्राऽऽम्नाने । एकं नित्यवदेकं काम्यम् । तत्र द्वयोर्वाक्ययोः सामर्थ्यान्नित्य एव स कामो भविष्यति । नित्यताविघातो नास्तीत्यग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य दीक्षणीयादयो धर्मा भविष्यन्तीति ॥ ४४ ॥ क० युक्तिः ॥

त० वा०—उक्थादयः। समाप्तिविशेषाः फलसाधनत्वेन चोद्यमानाः समाप्तिमन्तमा- श्रयमपेक्षमाणाः प्रकृतं ज्योतिष्टोमं समाश्रयन्तरस्तस्य निजामग्निष्टोमसंस्थां विकृत्य निविशन्त इति विकारशब्देनोच्यते। ननु चोक्थ्यादीनां समाप्तित्वे सिद्धे समाप्तिमदपेक्षा भवति। न चैषां प्राग् ज्योतिष्टोमसंबन्धात्समाप्तित्वसिद्धिः, आरम्भमध्यापेक्षत्वात्समाप्तिशब्दप्रवृत्तेः। अथ प्रथमं तत्संबन्धस्ततः प्रथमं क्रत्वर्थत्वेऽवधारिते फलसंबाधाभावात् 'स नित्यस्य समत्वात्' इत्येवमविकारत्वः प्रसङ्गः। किं च।

ग्रहणादौ च विस्पष्टे चोद्यमाने फलं प्रति।
संस्थानां फलसंबन्धः कथमध्यवसीयते॥

तत्र केचिदाहुः। ग्रहणादीनामपि फलसंबन्धेऽधिकरणं गच्छत्येव किं ज्योतिष्टोमार्थो धर्मविधिरुत ग्रहणाद्यर्थोऽपीति। संस्थाशब्दः कथमिति चेत्। तेषां ग्रहणादीनामन्ते विधानात्समाप्तिसंबन्धोऽस्तीति तच्छब्दलाभः। 'पशुकाम उक्थ्यं गृह्णीयात्' 'षोडशिना वीर्यकामः स्तुवीत' इति पूर्वसमाप्त्युत्तरकालं चोद्यमानानां समाप्त्यन्तरव्यपदेशभाक्त्वं भवति। अन्ये त्वाहुः। ग्रहणादयोऽप्यत्र फलवत्समाप्त्यङ्गत्वेन प्राप्ता एव साध्यसाधनसंबन्धविधिपरे वाक्ये निर्वपत्यालभतिवदनूद्यन्त इति। कुतः।

संक्रान्तविधिसामर्थ्ये प्रत्यये धातुरुच्यते।
तस्मान्नाम्नः फलं ह्येतद्भवेदिन्द्रियकामवत्॥

ननु च 'उक्थ्यं गृह्णीयात्' इति सामानाधिकरण्यप्रयोगान्नामापि ग्रहणादीनामेव स्यात्। नैतदेवम्। उक्थ्यस्तोत्रसंबन्धाद्धि समाप्तिरेवोक्थ्यशब्देनोच्यते, तत्संबन्धाद्ग्रहण उपचर्यते। न च मुख्यसंभवे गौणः परिगृह्यते। नित्यं तु यज्ञसामानाधिकरण्येनोक्थ्यादीनां प्रयोगो दृश्यते' 'उक्थ्येन यजेतोक्थ्यो यज्ञः' इति। 'षोडशिना यजते षोडशी यज्ञः'। स वै षोडशी नाम यज्ञोऽस्तीति। स चात्यन्ताव्यतिरिक्तसमाप्तिवचनत्वेऽवकल्पते न ग्रहस्तोत्रवचनत्वे। षोडशीति च पुंलिङ्गः समाप्तिवचन एवोपपद्यते। नपुंसकलिङ्गस्य स्तोत्रवचनत्वात्। यस्तु पुंलिङ्गप्रयोगः स्तोत्रे क्वचिद्दृश्यते यथा 'एकविंशः षोडशी' इति, स गौण इति प्रतिपत्तव्यम्। इह वाक्यशेषे पुंलिङ्गः षोडशी प्रतीयत इति संस्थावचनः। अतिरात्रेण प्रजाकामम्' इति विस्पष्टमेव संस्थावचनत्वम्। न हि तत्र क्रियान्तरमुपात्तम्। यजिरपि च ण्यर्थोपसर्जनत्वेन श्रुतः क्लेशेन प्रधानीकर्तव्यः। तस्माद्रात्रिमतीत्य या समाप्तिः सा फलेन संबध्यते। यदि च स्वतन्त्रयोरेव प्रयोगः प्राप्नोति। तत्र च प्रकरणाम्नानप्रयोजनमुक्थ्यादिशब्दप्रयोगश्च न ज्ञायते। तस्मादपि समाप्तयः फलवत्यः। कथं तु प्राक् क्रतुसंबन्धात्समाप्तित्वमिति।

केचित्तावदाहुः। 'सप्त सोमसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रो वाजपेयोऽप्तोर्यामः' इति स्मरणात्सोममात्रसमाप्तिवचनत्वे सिद्धे कर्मान्तराण्यनादृत्य सोमयागमात्रेऽपेक्षिते प्रकरणाज्ज्योतिष्टोमस्याऽऽश्रयत्वसिद्धिरिति। अन्ये तु मन्यन्ते। ज्योतिष्टोमस्य क्वचिदभ्यासविशेषे समाप्त्यन्तरं विज्ञायते यदुत्पद्यमाननेवोक्थ्यादिव्यपदेशं लभते फलसंबन्धं च तत्र श्रुतिबलीयस्त्वात्प्रकरणलभ्यं क्रत्वर्थत्वं बाध्यते। यस्त्वाश्रयाश्रयिसंबन्धः सोऽनुगुणत्वादाश्रीयते।

अपरं दर्शनम्। उक्थ्यादिशब्दवाच्यं किमपि प्रथममेव फलेन संबध्यते। किं पुनस्तदित्यपेक्षायां वचनान्तरेण ज्योतिष्टोमस्य समाप्त्यन्तरं विज्ञायते। वद्वाऽभ्यासविशेष एवायं वचनान्तराज्ज्योतिष्टोमस्यान्ते निविशमानः फलाय चोद्यते। तेन वा तस्मिन्वा क्रतुः संतिष्ठत इति संस्थाशब्देनाभिधीयते। केचित्पुनर्मन्यते। संस्था नामान्त्ययागाभ्यासानन्तरं या क्रियोपरतिः साऽभिधीयते। न चाक्रियात्मकत्वात्तस्याः फलसाधनत्वं युक्तमतस्तदुपलक्षितोऽभ्यासश्चोद्यत्। इति। अन्ये त्वाहुः। वचनस्यातिभाराभावादभावोऽपि चोद्यमानः फलसाधनत्वेन नैव विरुध्यत इति। यथा 'अकुर्वन्विहितं कर्म' इत्यत्राकरणस्यासतः प्रत्यवायहेतुत्वम्। अथवाऽस्त्येवात्रौदासीन्यप्रतिपत्तिरूपः संकल्प इत्यविरोधः। इह च यथा गुणात्फलं भवति यथा च काम्यो गुणो नित्यमर्थं विकरोति तदिन्द्रियकामाधिकरणगोदोहनाधिकरणाभ्यामुपसंहर्तव्यम्। तद्दर्शयति—गुणादेवंजातीयके फलनिष्पत्तिः। एवं हि श्रूयते 'पशुकामं उक्थ्यं गृह्णीयात्'। न ज्योतिष्टोमकाम उक्थ्यग्रहणकामो वा, इत्यनेन क्रत्वर्थत्वं निराकरोति। क्रत्वर्थत्वे हि सति, अन्तरेणापि कामपदोपबन्धं तदुपकारकमेवैतत्कर्तव्यमिति विज्ञायते। यदि चोक्थ्यग्रहणस्वरूपमात्रं चिकीर्ष्येत ततोऽर्थादुक्थ्यग्रहणकामस्यैषविधिर्मवेद्यस्यैवं प्रार्थनामुक्थ्यग्रहणस्वरूपमात्रं कथं निवर्ततामिति। तत्तु द्वयमपि पशुकामोपादानादनवक्लृप्तम्। अतः काम्यत्वादस्ति गोदोहनन्यायेन विकारत्वम्। तत्र कथमिति—इतिकर्तव्यताकाङ्क्षायां ज्योतिष्टोमगृहीतेतिकर्तव्यताऽतिदिश्यते। कः पुनरिह प्रकारो येनेतिकर्तव्यता गृह्यते। यदि तावत्संविधानं ततः समानविधानमेवाभ्युपगतं भवति। न ह्यतिदेशस्य संनिधिः कारणं, सारूप्यप्रभवत्वेन वक्ष्यमाणत्वात्। अथ कार्यापत्त्या, तत्रापि कारणान्तरत्वं निराकृतम्। न च दीक्षणीयादयः संस्थाधर्माः। यतः। कार्यापन्ने संस्थान्तरे भवेयुः। न ज्योतिष्टोमस्योक्थ्यादयः कार्ये वर्तन्ते। यतस्तद्धर्मान्प्रतिपद्यन्ते। एतेनातिदेशपक्षः प्रत्युक्तः। यो हि मन्यतेऽतिदेशेन धर्मा भविष्यन्तीति, तस्याप्यतिदेशकारणं सारूप्यं नास्तीति यद्यप्यग्निष्टोमस्य संस्थया सामान्यमस्ति। ज्योतिष्टोमस्य तु न किंचिदुक्थ्यादिसारूप्यमित्यप्रकृतित्वम्। अत एव च भाष्यकारोऽपि संनिधानादित्येतावन्मात्रमुक्त्वा तूष्णींभूतः। तेन वक्तव्यमेतत्। उच्यते।

अतिदेशोऽयमित्येतत्पुरस्तादेव साधितम् ।
न च सारूप्यमेवैकमतिदेशस्य कारणम् ॥

यथा 'दध्नेन्द्रियकामस्य' इत्यत्र व्याख्यातं, सारूप्येणान्यथा तत्फलप्राप्तेरतिदेशो भवति। सारूप्यं हि प्रकृत्युपस्थानद्वारेणोपयुज्यते नादृष्टोपकारनिर्वृत्त्या तदिहान्तरेणापि सारूप्यमाश्रयत्वप्रतिपत्तिः संनिधानादस्त्येव। भाष्यकारोऽप्येतदेव संनिधानमाह, न दीक्षणीयादिसामीप्यम्। आश्रयत्वेन हि गृहीतो ज्योतिष्टोमः शक्नोति दीक्षणीयाद्यपूर्वजनितं स्वगतं व्यापारं बोधयितुमिति सिद्धोऽतिदेशः। आह। कथं पुनर्येयमितिकर्तव्यता सा नित्यस्य, न पुनरस्यैव काम्यस्य, साधारणी वेति।

तत्र साधारणीत्येष न्याय्यः पक्षोऽस्य संमतः।
कामस्यैवेति सोल्लुण्ठं पूर्वोक्ताक्षमयोदितम् ॥
यदि युक्त्या विनैवेयं नित्यस्येत्यभिधीयते ।
काम्यस्यैवेति किं नैतदयुक्ततरमुच्यते ॥
अथ त्वयुक्तियुक्तत्वान्नैवमभ्युपगम्यते ।
हन्त साधारणीत्येतत्सयुक्तिकमिहोच्यताम् ॥

यदि विनैव प्रमाणेन केवलनित्यार्थत्वं त्वमिच्छसि हन्त मदिच्छयाऽपि केवलकाम्यार्थत्वमेवास्तु। अथ पुनरिदमप्रमाणकमिति नाऽऽश्रीयते ततः प्रमाणवत्साधारण्यमिष्यतामिति। तत्रातिशयोक्तिमसहमानो भाष्यकारः साधारणपक्षे चोपकरिष्यतीति निष्प्रमाणकमपि केवलकाम्यपक्षमेव तावन्न्यायेन निराकरोति— यत्र यत्र गुणे कामस्तत्र तत्र क्रियायां साध्यमानाया नान्यथेति। यदि नाम गुणः स्वातन्त्र्येणेतिकर्तव्यतां गृहीतुं शक्नुयात्तत एवं स्यात्। स च कथं शक्नुयात्, यदि करणैरेवेतिकर्तव्यता संबध्येत। यदि च गुणानां स्वत एव भावनाविशेषणत्वं भवेत्। न तावत्करणैरितिकर्तव्यता संबध्यत इत्युक्तम्। सप्तमनवमाद्ययोश्च वक्ष्यति भावयेत्कथमित्यपेक्ष्य भवति न करणेन कथमिति। यस्यां तु भावनायां धात्वार्थाः करणं भवन्ति तस्यां ते वस्त्वन्तरनिरपेक्षाः पश्चात्तनमरुणैकहायनीन्यायलभ्यमितिकर्तव्यतासंबन्धं लभन्ते। यस्यां पुनर्गुणानां करणत्वं तस्यां धात्वर्थविशेषाद्विना करणत्वानुपपत्तेः साध्यभूतो धात्वर्थेऽपरोऽपक्षितव्यः। न हि व्यापारसामान्यस्य गुणैरुत्पत्तिः शक्या। न च क्रियाविशेषमसाधयम् गुणः सामान्यसाधनत्वं भजते। तेन यस्यां भावनायामवस्थितो गुण इतिकर्तव्यतां गृह्णाति तस्यां प्रथमतरसंनिविष्टो धात्वर्थो दृश्यते। ततश्च तेन तावत्सह प्रथमतरमरुणैकहायनीवन्नियमः। यदि हीतिकर्तव्यताग्रहणयोग्यः स न भवेत्ततो न गृह्णाति। तत्र चतुष्टयमप्यत्र प्रथमतरं ग्रहणं प्रयुङ्क्ते। भावना तावन्न धात्वर्थविशेषाद्विनेतिकर्तव्यतां शक्नोति ग्रहीतुम्। गुणोऽपि च न धात्वर्थमनुपनीय

स्वतन्त्रः शक्नोति तन्निरपेक्षभावनारहितत्वान्निर्विशेषस्य च करोत्यर्थमात्रस्याननुष्ठेयत्वादव्यापारत्वाच्च ग्रहीतुमित्याश्रयति। तथा, इति कर्तव्यता गुणाभिमुखं गच्छन्ती न धात्वर्थमुल्लङ्घ्य शक्नोति गन्तुमिति तन्मुखे तावत्पतति। धात्वर्थोऽपि स्वयमितिकर्तव्यताकाङ्क्षः सन् गुणार्थमपि प्रस्थितामेतां प्रवणसमर्थः सन् क्रिमिति परित्यजेत्। अतोऽत्र फलाय चोदितानामुक्थ्यादीनां ज्योतिष्टोमाश्रयत्वेनावगतानामितिकर्तव्यतामाङ्क्षतां प्रकरणेन दीक्षणीयादय उपनीयमाना मार्गान्तराभावादवश्यं तावज्ज्योतिष्टोममुखे पतन्ति। न ह्युक्थ्यादयः समाप्तिरूपास्तत्परिहारेण ग्रहीतुं समर्थाः। स्वमुखपतितांश्च न कथंचिज्ज्योतिष्टोमस्तानुपेक्षते। तद्दर्शयति—**नासौ साध्यस्याभवन्ती साधनेन संबध्यते। स हीतिकर्तव्यताविशेष एवं चोद्यते, अनेन फलस्य साधनमुक्थ्यादि साधकं कुर्यादिति।** यथाऽसौ साधको भवति तथा कुर्यादित्यर्थः। ततश्च करोतिसंस्पर्शाद्भावनयैव संबन्धः। एवं च सति नास्ति स प्रकारो येन धात्वर्थं परिहृत्यानयेतिकर्तव्यतयोक्थ्यादयः साधकाः क्रियेरन्। **क्रियायामसाध्यमानायाम्**—अननुगृह्यमाणायामित्यर्थः। ये तु तेनासाध्यमानायामिति—उक्थ्यादिनेति संबन्धयन्ति तेषां पूर्वप्रस्तुतेतिकर्तव्यताविशेषपरित्यागादसंबद्धत्वम्। **तत्र तत्र क्रियायां साध्यमानाया**मित्यनेन च पुनरुक्तत्वं स्यात्। तेन **साधकस्यापि**—गुणस्य, इतिकर्तव्यतामिच्छता **साध्यस्यासौ**—धात्वर्थस्य, इत्येतदभ्युपगन्तव्यम्। एवं सामान्यलक्षणमुक्त्वा संप्रति प्रस्तुते विशेषे योजयति **साध्यश्च ज्योतिष्टोम** इति। तस्मान्न तावत्केवलकाम्यार्थत्वम्। **अथ कस्मान्न** साधारणत्वमिति—बलवत्त्वेन द्वितीयपक्षोपन्यासः। सिद्धान्तवाद्याह। **नित्यवदाम्नानादिति**। सर्वत्र ह्येकरूप्ये सति तन्त्रसंबन्धो घटते। न च धर्मान्प्रति ज्योतिष्टोमस्य संस्थानां चैकरूप्यमस्ति। धर्मा हि कामनिमित्तसंयोगाभावान्नित्यवदाम्नायन्ते, **यदैव ज्योतिष्टोमस्तदैव** दीक्षणीयादयः प्रयोक्तव्या इति। सत्यपि च ज्योतिष्टोमेः विना पशुकामादिनोक्थ्यादयो न संभवन्ति। न त्वेतासु ज्योतिष्टोमेः विना पशुकामादिनोक्थ्यादयो न संभवन्ति। न त्वेतासु ज्योतिष्टोमेः विना पशुकामादिनोक्थ्यादयो न संभवन्ति। न त्वेतासु ज्योतिष्टोमः कदाचिन्नास्ति। सर्वत्र समस्तात्मना प्रत्येकं जातिवत्समवेतत्वात्। अत एते यथाम्नाता ज्योतिष्टोमेन सह संबध्यन्ते, नानित्याभिः संस्थाभिः। ननु सत्यप्यासामनित्यत्वे ज्योतिष्टोमस्यैकस्य नित्यत्वान्नित्यवद्धर्माम्नानं नित्यार्थत्वे न विरोत्स्यते। नित्याम्नानं तावत्तं प्रति कृतार्थं भविष्यति। यदि तु तस्मिन्सत्येवानित्योऽप्यपरः संबन्धः कल्प्यते किं नो बाध्यते। यो ह्यनित्यार्थमेव नित्यवदाम्नायते स विरुध्यते नैवंजातीयक इति। नैतदेवम्। एवं सति तन्त्रं तावत्परित्यक्तम्, अप्रयोजकलक्षणापन्नत्वात्। यदा हि नित्यवदाम्नानं नित्यार्थत्वेन तावद्विना न भवति क्लृप्ते च तादर्थ्ये निरा-

काङ्क्षीभूते पाठे प्रसङ्गादितरसंबन्ध इति न सामानविध्यम्। इतरथा ह्येवं धर्मविधिः स्यात्, नित्यमेतान् ज्योतिष्टोमे धर्मान्कुर्यात्कदाचिच्च यदा पशुकामादयो भवन्तीति, तच्च विप्रतिषिद्धमेकस्य विधानस्य। ननु द्वावेतौ प्रकरणाम्नानामितौ विधी। तयोरेको नित्यवद्विधास्याति, अपरश्चानित्यवदिति। सत्यं प्रयोगवचनयोर्भेदादविप्रतिषेधः। प्रयोज्यवचनानि तु नित्यानित्यप्रयोगवचनानुविधानाद्विप्रतिषिध्यन्ते। तेनैषां नित्यत्वाविधातमिच्छताऽवश्यं ग्राहकमपि तद्भूयमेवाभ्युपगन्तव्यम्। अतश्चाव्यभिचाराज्ज्योतिष्टोमार्थत्वमेव युक्तमिति। **नन्वग्निष्टोमसंस्थापि काम्येति**—यदा सर्वसंस्थानामनित्यत्वं, न च तद्व्यतिरिक्तं नित्यं किंचिज्ज्योतिष्टोमरूपमस्ति तदा ज्योतिष्टोमेन नित्यवद्ग्रहणात्तद्वारभूतेन तुल्यकल्पमेव सर्वासां धर्मोपनयनमिति क्व नित्यः प्रयोग इत्यनवधारणात्केवलानित्यार्थं बलाद्वैकल्पिकन्यायेन भविष्यतीत्यत आह—स नित्यस्य समत्वादिति। समौ हि क्रत्वर्थपुरुषार्थौ विधी:। तौ हि द्वावालोच्य 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इत्येवमग्निष्टोमान्तस्य नित्यस्यैव कामसंयोग इति। इतरस्य तु केवलकामसंयोगादानित्यत्वमिति विशेषः। तेन यद्यपि प्रयोगेणेयमनित्य तथाऽपि ज्योतिष्टोमस्य नित्यत्वादेतस्याश्च तं प्रति प्राप्तिरूपेण नित्यत्वात्तद्गृहीतधर्मपरभागलाभाच्चग्निष्टोमस्यैत्वं धर्माणां व्यपदेशः। अथ वोक्थ्यादिष्वपि प्राप्तिद्वये सति ज्योतिष्टोमांशेन या प्राप्तिः सोपदेशेन, योक्थ्यांशेन साऽतिदेशात्मिकेति विवेकः ॥ ४३ ॥ ४४ ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "विकारास्तु कायसंयोगे" उक्थ्य आदि संस्कार पशु आदि स्वतन्त्र-स्वतन्त्र रूप उक्त है, अतः फल की कामना के साथ उनके संयोग अर्थात् सम्बन्ध में ही उनका विकृतित्व प्रमाणित है, काम्यो गुणः श्रूयमाणो नित्यमर्थं विकृत्याभिनिविशते" अर्थात् "शास्त्र में काम संयुक्त गुण उपदिष्ट होने पर वह नित्य पदार्थ को विकृत कर प्रविष्ट होता है अर्थात् वह उस नित्य पदार्थ के विकार के रूप में स्थान प्राप्त करता है" इस नियम के अनुसार पूर्व में उदाहृत गोदोहन रूप गुण जैसे नित्य चमस साधन युक्त अप् प्रणयन को विकृत कर स्थान प्राप्त करता है वैसे ही ये उक्थ्य आदि अग्निष्टोम रुप नित्य संस्था का विकार हो अन्य संस्था रूप में प्रकट होगा। इसलिए इनको अग्निष्टोम का समान विधान नहीं कहा जा सकता है साथ ही इसमें नित्यानित्य संयोग-विरोध होता है, कारण, ज्योतिष्टोम अग्निष्टोम नित्य है, किन्तु, उक्थ्य आदि काम संयुक्त होने पर काम्य होने से अनित्य है, क्योंकि उन फलों की कामना न करने उनके अनुष्ठान की प्राप्ति भी नहीं रहती है। ज्योतिष्टोम का दीक्षणीय आदि जो अङ्ग समूह विहित होता है, वे नित्य हैं। अतः, नित्य अग्निष्टोम के साथ ये सभी नित्य अङ्गों का सम्बन्ध स्वीकार करने पर कामना शून्य दशा में ये उक्थ्यादि संस्कार की प्राप्ति न होने से ये अप्रमाण हो जायेंगे। इस

तरह नित्य और अनित्य के सम्बन्ध नहीं हो सकता है, क्योंकि इसमें नित्यानित्य संयोग विरोधरूप दोष का प्रसङ्ग होने से उक्थ्यादि को विकृति ही मानना पड़ेगा। यह सूत्र के "स नित्यस्य समत्वात्" इस अंश से लब्ध होता है।

"विकारः" = विकार अर्थात् उक्थ्य आदि संस्कार अग्निष्टोम की विकृति है, "तु" = पूर्वपक्ष के निरास के लिए है, "काम संयोगे" = कामना का सम्बन्ध होने से, "सः" = वह अङ्गविधि, "नित्यस्य" = नित्य अग्निष्टोम की ही अङ्गविधि है, "समत्वात्" = क्योंकि, वह भी सम अर्थात् ज्योतिष्टोम के समान ही नित्य है। सिद्धान्त ॥ ४३ ॥

भा० प्र०—उक्थ्य आदि संस्थाओं का स्वतन्त्र फल होने से ये विकृति हैं यह कहने से पूर्वपक्षी यह आशङ्का कर सकते हैं कि अग्निष्टोम का भी स्वतन्त्र फल होने से उसके प्रति भी यह प्रसङ्ग प्रयोज्य हो सकता है, इस प्रकार की उत्सूत्र अर्थात् सूत्र बहिर्भूत आशङ्का के उत्तर में सिद्धान्ती का कहना है कि "अपि वा द्विरुक्तत्वात् प्रकृतेर्भविष्यन्तीति" अग्निष्टोम नित्य है एक का फल उपदिष्ट होता है, यह जो फल संयुक्त अग्निष्टोम वह खादिर आदि के समान संयोग पृथक्त्वन्याय से नित्य और काम्य उभयार्थक है, अतः, इस स्थल में नित्य का ही कामसंयोग होने पर कोई दोष नहीं है। अन्य पक्ष में उक्थ्यादि की नित्यता का कोई प्रमाण नहीं है साथ ही इनका फल सम्बन्ध होने से ये कामना संयुक्त हैं। इसलिए ये अनित्य होने से अग्निष्टोम की ही विकृति है।

"अपि वा" = आशङ्का के निरास के लिए, "द्विरुक्तत्वात्" = द्विरुक्त होने से अर्थात् दो बार उक्त होने से, "प्रकृतेः भविष्यन्ति इति" = द्वितीयादि विधियों प्रकृति अर्थात् नित्य कार्यों का गुण विशेष होंगी ॥ ४४ ॥

## वचनात्तु समुच्चयः ॥ ४५ ॥

**शा० भा०—अथ यदुक्तं, द्वितीयतृतीयदर्शनं समानविधित्वेऽवकल्पते नान्यथेति। वचनं तद्भविष्यति न दर्शनम्। ऐन्द्राग्न उक्थ्ये द्वितीयो विधीयते। तथैन्द्रः षोडशिनि तृतीयः ॥ ४५ ॥ क० आ० नि० ॥**

त० वा०—विशिष्टविधानस्य नातिभारः ॥ ४५ ॥

भा० प्र०—पूर्वपक्षी ने ४३ वें सूत्र में कहा है कि द्वितीय तृतीयादि नैमित्तिक पशुओं का समान रूप में व्यपदेश दर्शन से उक्थ्यादि संस्थाएँ भी समान विधान हैं। उसके उत्तर में कहना है कि "वचनात् तु समुच्चयः" इस स्थल में "ऐन्द्राग्न्यं द्वितीयमुक्थ्ये" इत्यादि वचन होने से वचन के बल से उक्थ्यादि में ऐन्द्राग्न आदि द्वितीय तृतीय पशु विहित होता है। इसलिए, वह समुच्चयविषयक वचन होने से वह अपूर्व विधि है, वह समान विधानत्व का ज्ञापक नहीं है।

"वचनात् तु" = वचन होने से किन्तु, "समुच्चयः" = समुच्चय अर्थात् द्वितीय तृतीयादि पशु का समावेश है ॥ ४५ ॥

## प्रतिषेधाच्च पूर्वलिङ्गानाम् ॥ ४६ ॥

शा० भा०—इतश्च पश्यामः प्रकृतिविकारभाव इति । कुतः । प्रतिषेधात्पूर्वलिङ्गानाम् । यद्यग्निष्टोमो जुहोति, यद्युक्थ्यः परिधिमनक्ति, न जुहोतीति होमाभावदर्शनं न स्यात् प्राप्ते निमित्ते वचनप्रामाण्यात्सामानविध्ये ॥ ४६ ॥

क० युक्तिः ॥

त० वा०—क्रतुकरणेषु चोत्तरविधौ यत्पूर्वाभावमनुवदति स विकारपक्षे अवकल्पते चोदकप्राप्तस्य चोत्तरेण पूर्वस्य बाधितत्वात् । सामानविध्ये हि प्रत्यक्षनिमित्तसंनिधानात्प्राप्ते निमित्ते नैमित्तिकमवश्यं कर्तव्यमिति समुच्चयः स्यात् । तत्र प्रतिषेधः पृथग्विधेरुपगम्यमानो वाक्यं भिन्द्यात् । न ह्यत्र द्वितीयतृतीयादिवद्विशिष्टविधिरत्रकल्पते । विधिप्रतिषेधयोर्विप्रतिषेधात्, पर्युदासासंभवाच्च । सर्वश्चेह सवनीयपशुविषयः पूर्वपक्षवाद्युक्तो न्यायः सिद्धान्तत्वेनानुसंधातव्यः । संस्थानिमित्तत्वेहि सामानविध्येऽपि निमित्ताभावादभावदर्शनमुपपद्यतेव । सिद्धान्तेऽपि चादृष्टार्थत्वात्समुच्चयप्रसङ्गे सति क्रतुकरणसमाख्या प्रकृतिलिङ्गमिति योज्यम् । केचित्पुनराहुः । प्रचरणीहोमशेषप्रतिपत्तिबद्धोमस्य परिध्यञ्जनेन प्रतिपादिते सामानविध्येऽप्यभावः सिध्यतीति । तत्र तु वाक्येन स्वतन्त्रे विधीयमाने कथमप्रस्तुतं प्रतिपत्तित्वमवगम्यत इति वक्तव्यम् । सत्यपि च होमेन प्रतिपादनेयावता परिध्यञ्जनशब्दार्थो निर्वर्तते किंचिच्च श्रुत्योच्यते तावत्पुनः संभवत्येव तस्माद्यथोक्तेन न्यायेन दर्शनमेवेदमभावसंकीर्तनम् ॥ ४६ ॥

भा० प्र०—अग्निष्टोम एवम् "उक्थ्यादि समान विधान नहीं" है, किन्तु, इनमें प्रकृतिविकृति भाव है इसका अन्य हेतु भी कहा गया है "प्रतिषेधाच्च पूर्वलिङ्गानाम्" पूर्वपक्षी ने "यद्यग्निष्टोमः जुहोति । "यदुक्थ्यः परिधिमनक्ति" इत्यादि श्रुति को उनके मत का साधक मानने से, वही उनके मत के बाधक है । कारण, उक्त श्रुतिवाक्य से अग्निष्टोम एवम् उक्थ्यादि का प्रकृतिविकृति भाव ही सिद्ध है, क्योंकि, अग्निष्टोम में आज्य शेष के द्वारा होम रूप प्रतिपति की जाती है और वही अग्निष्टोम रूप प्रकृति से "यदुक्थ्यः परिधिमनक्ति" इत्यादि वचन में कहा गया है कि उक्थ्य स्तोत्र होने पर परिधि अञ्जन ही कर्तव्य है, किन्तु आज्यशेष होम करणीय नहीं है । इस प्रकार जो होम का बाध होता है, वह समान विधित्व पक्ष में सङ्गत नहीं है । कारण, समान विधानत्व में उक्थ्य में भी अग्निष्टोम स्तोत्र रूप निमित्त होने से नैमित्तिक अवश्य कर्तव्य है, अतः, होम एवं परिधि अञ्जन का समुच्चय ही होता है ।

"पूर्वलिङ्गानां" = पूर्व लिङ्गों का अर्थात् अङ्गों का "प्रतिषेधात् च" = प्रतिषेध होने से ही समान विधान नहीं है ॥ ४६ ॥

## गुणविशेषादेकस्य व्यपदेशः ॥ ४७ ॥

**शा० भा०—**अथ यदुक्तं व्यपदेश इति। एकस्यैवाधिकृतस्य यथोक्तेन न्यायेनायमनधिकृतेन गुणेन व्यपदेशः। अग्निष्टोमग्रहणं चानुवाद इति ॥४७॥
क० आ० नि० ॥ दीक्षणीयादिधर्माणामग्निष्टोमाङ्गताधिकरणम् ॥ १६ ॥

इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये तृतीयस्याध्यायस्य षष्ठः पादः।

**त० वा०—**यत्त्वप्रकृतस्य यदिशब्दोपबन्धो द्वादशाहादिवन्नावकल्पत इति। नोक्थ्यादीनामन्यैरप्रकृतैस्तुल्यता। यद्यपि ह्येषां नित्यानित्यसंयोगविरोधात्प्रकरणमग्राहकमितिकर्तव्यतायास्तथाऽपि संनिहितत्वाद्यदिशब्दव्यपदेशं लभन्ते। प्रस्तुतगुणिद्वारेण वाऽप्रस्तुतानामपि गुणानां प्रस्तुतव्यवहारः संभवति। प्रकरणप्राप्तं त्वग्निष्टोमग्रहणं नित्यानुवादः। अथवा स्तोत्रनिमित्तत्वप्रतिपादनपरत्वादर्थवदेवेत्यदोषः। किं भवति प्रयोजनम्। फलचमसवदेवेति केचित्। इदं तु वक्तव्यम्। सत्यमेतत्प्रयोजनं न तु सर्वधर्मेषु। यावन्तो हि सदोमानादिषु गुणकामास्ते सत्यप्यतिदेशे स एवोपदेशिक आश्रयोऽस्तीति न विकृत्यन्तरवद्विहन्यन्ते विकृत्यन्तरेषु हि ज्योतिष्टोमस्याऽऽश्रयस्याभावाद्गुणकामा यथाश्रुता न भवन्तीति न सिध्यन्ति। संस्थासु तु यद्यप्यङ्गफलं नातिदिश्यते तथाऽपि स्वयमर्थित्वात्पुरुषस्य चिकीर्षमानस्य गुणोपादित्सायां यथाश्रुताश्रयसंभवे नानुपपत्तिर्गुणकामानाम्। अतो यन्मात्रमुक्थ्यादिसंस्थानिमित्तमुक्थ्यग्रहणस्तोत्रशस्त्राद्यप्राकृतं तत्र यदितरग्रहस्तोत्रशस्त्रधर्मातिदेशेन किंचिद्गुणकामगतं प्राप्नोति तन्न भवतीति प्रयोजनम् तथेदमपरं, यदि समानविधानं तत 'अव्यक्तासु तु सोमस्य' इत्यनेन न्यायेन ये ज्योतिष्टोमविकारा विज्ञायन्ते तेषु सर्वाः संस्थाविकल्पेन, सिद्धान्ते त्वग्निष्टोमसंस्थैवेका प्रवर्तत। तत्र चोक्थ्यादिविशेषचोदना तत्रैव केवलं तद्धर्मप्राप्तिरिति प्रयोजनं सिद्धम् ॥ ४७ ॥

( इति गुणकामानामाश्रयेण सह सामानविध्याभावाधिकरणम् ॥ १६ ॥ )

इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके
तृतीयाध्यायस्य षष्ठः पादः।

**भा० प्र०—**अग्निष्टोम प्रकृति होने से अङ्गकलाप उपदेशविधि के अनुसार उन्हीं का अनुसरण करेंगी और उक्थ्यादि उसकी विकृति होने से अङ्ग सकल अतिदेश विधि लभ्य होगा। अत एव, उनकी समान विधानता नहीं है। इस प्रकार सिद्धान्त के विरुद्ध में पूर्व पक्षी ने कहा है कि इसमें "यदि अग्निष्टोमो जुहोति इस श्रुति वाक्य में जो

"यदि" शब्द का उल्लेख किया गया है, वह सङ्गत नहीं है, कारण, ज्योतिष्टोम से नित्य अग्निष्टोम ही कहे जाने से "यदि" शब्द का क्यों प्रयोग किया गया है।

इसके उत्तर में सिद्धान्ती का कहना है कि "गुणविशेषात् एकस्य व्यपदेशः" नित्य ज्योतिष्टोम अग्निष्टोम में समापनीय होने से यह अग्निष्टोम सामरूप गुण विशेष को निर्देश करने के लिए ही इस प्रकार का उल्लेख किया गया है। प्रकृत पक्ष में यह अनुवाद है, कारण, अग्निष्टोम ज्योतिष्टोम का अव्यभिचारी है, क्योंकि, उक्थ्यादि को छोड़कर केवल अग्निष्टोम लेकर भी ज्योतिष्टोम होता है, किन्तु, अग्निष्टोम को छोड़कर उक्थ्य आदि का अनुष्ठान नहीं हो सकता है, कारण, अग्निष्टोम का कृत्य एवम् उसके ऊपर और भी कतिपय विशेष-विशेष कृत्य लेकर "उक्थ्य" आदि संस्था सम्पन्न होती है, इसलिए, ज्योतिष्टोम का उक्थ्य आदि व्यभिचारी है। किन्तु, अग्निष्टोम अव्यभिचारी है। इसलिए, ज्योतिष्टोम कहने से जब अग्निष्टोम ही अविगत होता है, किन्तु "यद्यग्निष्टोमः" इस प्रकार का जो उल्लेख है, वह अनुवाद मात्र है।

"गुणविशेषात्" = अग्निष्टोम साम में समाप्ति रूप गुण विशेष के अनुसार, "एकस्य व्यपदेशः" = एक का ही उल्लेख है ॥ ४७ ॥

इति त्रयोदश गुणकामों को आश्रय के साथ समान विधित्वाभाव अधिकरण
॥ मीमांसादर्शन के तृतीय अध्याय का षष्ठपाद समाप्त हुआ ॥

## ॥ अथ तृतीयेऽध्याये सप्तमः पादः ॥

### अथ प्रथमं बर्हिरादीनामङ्गप्रधानोभयर्थताधिकरणम्

### [१] प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ १ ॥ पू० ॥

शा० भा०—स्तो दर्शपूर्णमासौ। अत्र बर्हिर्बर्हिर्धर्माश्च, तथा वेदिः, वेदिधर्माश्च, तत्र संदेहः—किं बर्हिरादयो बर्हिरादिधर्माश्च प्रधानस्या, उताङ्गप्रधानानामिति। किं तावत्प्राप्तम्? प्रकरणविषादसंयुक्तं प्रधानस्य। प्रधानस्यैवंजातीयका धर्माः। कस्मात्? प्रकरणविशेषात्। प्रधानानां हि प्रकरणं, नाङ्गानाम्। प्रकरणेन चैषां संबन्धः। तस्मात्प्रधानस्य ॥ १ ॥ पूर्वपक्षः ॥

त० वा०—समानासमानविधानाधिकारेणैवैतदपि प्रस्तूयते वाक्यप्रकरणविरोधाविरोधद्वारेण। दर्शपूर्णमासप्रकरणस्था वेदिः, तद्धर्माश्च खननादयः तथा बर्हिः तद्धर्माश्च लवनादयः किमर्था इति। यद्यपि 'वेद्यां हवींषि, बर्हिषि हवींषि, बर्हिर्लुनाति, वेदिं खनति इति चाविशेषितेन वाक्येनाङ्गप्रधानार्थत्वबुद्धिर्भवति, तथाऽपि स्वातन्त्र्ये सति लौकिकेष्वपि गृहाच्छादनार्थेषु बर्हिःषु धर्मप्रसक्तावानर्थक्यादवश्यमपूर्वसाधनताकारितः संबन्धोऽभ्युपगन्तव्यः। सा चापूर्वसाधनता न वाक्यसामर्थ्येन प्रतीयत इति, प्रकरणाल्लब्धव्या। ततश्च प्रधानमात्रस्य तत्प्रकरणमित्यनेन विशेषेण प्रधानस्यैव धर्मा गम्यन्ते। सत्यपि च प्रकरणस्याविशेषकत्वे ग्राहकत्वेनैव विशेषरूपेण विनियोजकत्वाद्विशेषस्थापनहेतुत्वमित्युक्तम्। असंयुक्तमिति च सत्यपि वाक्येन हविर्बर्हिःसंयोगे प्रकरणविरोध्यर्थासंयोगाभिप्रायम्। शक्यौ हि हविर्बर्हिःशब्दौ प्रकरणेन समावेशयितुं, नाहीनवदसंबद्धाविति मन्यते ॥ १ ॥

### अथ प्रथमं वेदिबर्हिस्तद्धर्माणाभंगप्रधानोभयार्थताधिकरणम्

न्या० सु०—तुल्यः सर्व्वेषां पशुविधिरित्यारभ्य स्थानस्य पूर्व्वैः सह विरोधाविरोधचिन्ताप्रस्तावात्पदान्तरत्वेन चास्या राच्छिष्टमसंयुक्तमितिवत्प्रासङ्गिकसंगत्ययोगाद्वाक्यप्रकरणविरोधाविरोधचिन्तायाः प्रकरणासङ्गतिमाशक्य, आराच्छिष्टमिति प्रासङ्गिकवाक्यप्रकरणविरोधाविरोधचिन्तासङ्गतिद्वारातेन 'नैमित्तिकमतुल्यवादि'त्यादिना समानासमानविधानाधिकारेणाङ्गाङ्गित्वशून्यसोमफलचमसादिविषयेण सहाङ्गैः सह प्रधानानां सामानासमानविध्यविषयतया वैलक्षण्यात्पादान्तरगतत्वेनैतद्वाक्यप्रकरणविरोधाविरोध-

---

अतस्तयोगंगाधरमिश्रप्रणीताटीकासमुपलब्धा। तया सह मुद्रापितयादद्वयं। विशेषस्तु भूमिकायां द्रष्टव्या।

चिन्तनं प्रस्तूयत इत्याह—समानेति। किं प्रस्तूयत इत्यपेक्षायामाह—दर्शेति। सौमिक्या वेदेर्देशात्मकत्वेन योग्यत्वाख्याल्लिङ्गात्प्रयोगाङ्गत्वावगतेः सर्व्वार्थत्वे वक्ष्यमाणेऽपि दार्शपौर्णमासिक्या सप्तमीश्रुत्या हविरासादनाङ्गत्वोक्तेः, प्रयोगाङ्गत्वाभावात्तन्न्यायेनागतत्वं सूचयितुं दर्शपूर्णमासविशेषणम्। प्रकरणात्प्रधानमात्रार्थत्वपूर्वपक्षं वाक्यविरोधादयुक्तमाशङ्क्योपपादयति—यद्यपीति। प्रकरणस्य प्रधानाख्यविषयविषयत्वोक्त्यर्थत्वेन प्रकरणविशेषोक्तिव्याख्यार्थं प्रधानानां हीति भाष्यं व्याचक्षाणः पूर्व्वपक्षोपपादनमुपसंहरति—ततश्चेति। प्रकरणस्याव्यावर्त्तकत्वाद्विशेषे वाक्यस्यापकत्वायोगमाशङ्क्य, ग्राहकत्वेनैव धर्म्मेण प्रकरणस्य प्रकरणार्थत्वाख्यविशेषे रूपेण स्वान्तःपठिताङ्गविनियोजकतया विशेषे वाक्यस्थापनहेतुत्वस्य नैव व्यावर्त्तते। संस्कृतेन तु तेन प्रयोजनमस्तीत्यादिजञ्जम्यमानाधिकरणभाष्योक्तत्वादव्यावर्त्तकत्वेऽपि व्यवस्थापकत्वोपपत्तिमाह—सत्यपिचेति। वाक्यविरोधशङ्कानिरासार्थत्वेनासंयुक्तोक्ति व्याख्यातुमाह—संयुक्तमिति वेति ॥ १ ॥

भा० प्र०—दर्शपूर्णमास प्रकरण में बर्हि और बर्हि का धर्म एवं वेदि और वेदिका धर्म सभी उपदिष्ट होते हैं। जैसे, वेदि अल्पपरिमाण में खनी जानी चाहिए, बर्हि के ऊपर में हविर्द्रव्य रखना चाहिए इत्यादि। यह बर्हि धर्म एवं वेदिधर्म क्या अङ्ग एवं प्रधान दोनों प्रकार के कर्मों के लिए ही उपदिष्ट होता है अथवा ये केवल प्रधानकर्म के लिए ही विहित होता है—यह संशय होता है। आग्नेय पुरोडाश आदि मुख्य हविद्रव्य हैं और प्रयाजादि का हविर्द्रव्य अमुख्य है। इसमें पूर्वपक्षी ने कहा है कि "असंयुक्तं प्रधानस्य" यह विशेष नियम के अधीन अङ्ग एवं प्रधान के साथ संयुक्त नहीं है, तब यह प्रधान कर्म के साथ ही सम्बन्ध युक्त होगा, कारण, "प्रकरणविशेषात्" इसमें प्रकरण गत विशेषत्व रहता है, अत एव प्रधान कर्म का प्रकरण में उपदिष्ट होकर ये सब केवल प्रधान के साथ ही सम्बन्ध युक्त होगा।

"असंयुक्तम्" = असंयुक्त अर्थात् जो अङ्ग है अथवा प्रधान के साथ विशेष रूप में संयुक्त वह नहीं है, "प्रधानस्य" = प्रधान के लिए ही होगा, "प्रकरण विशेषात्" = क्योंकि इसमें प्रकरण रूप विशेषत्व रहता है ॥ १ ॥

इति पूर्वपक्ष।

## सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ॥ २ ॥ सि० ॥

शा० भा०—सर्वेषां वाऽङ्गप्रधानानामिमे धर्माः। नात्र शेषत्वं प्रकरणाद्भवति। उपकारलक्षणं हि तत्। यद्यस्योपकरोति, तत्तस्य शेषभूतम्। सर्वेषां चाङ्गप्रधानानामिमे धर्मा उपकुर्वन्ति। कथमवगम्यते ? वाक्यात्। वेद्यां हवींष्यासादयति, इति हविर्मात्रं वाक्याद्गम्यते। प्रधानहवींषि प्रकरणात्। वाक्यं च प्रकरणाद्बलीयः। तस्माद्बर्हिषि हवींष्यासादयतीति।

आह । यदि प्रकरणं वाक्येन बाध्यते, लोकेऽपि बर्हिषामिमे धर्मा उक्ता भवन्ति । तत्र को दोषः ? सर्वत्र धर्माः कर्तव्याः प्राप्नुवन्ति । उच्यते । प्रकरणाद्दर्शपूर्णमासयोरुपकारका एवेति गम्यते । तस्माल्लौकिकेषु न कर्तव्याः । एवं चेदङ्गान्यपि न दर्शपूर्णमासशब्दकानि । तस्मात्तेष्वपि न प्राप्नुवन्ति । उच्यते । यद्यप्यङ्गानि न दर्शपूर्णमासशब्दकानि, दर्शपूर्णमासयोरुपकारकाणि । एषु क्रियमाणा धर्मा दर्शपूर्णमासयोरुपकरिष्यन्ति । तस्मादङ्गप्रधानेषु कर्तव्या इति ॥ २ ॥ सिद्धान्तः ॥

त० वा०—सर्वेषां वाक्यसंयोगाविशेषादित्युक्तमेव । यत्तु प्रकरणं विशेषेण विनियोजकमिति, तत्राऽऽह—अतत्प्रयुक्तत्वात् । न प्रकरणमिह विशेषकं भवतीत्यर्थः । कथं पुनः स्थितं प्रकरणस्य विनियोजकत्वं निवर्तते ? कथं वा तादर्थ्यलक्षणव्यतिरिक्तं च बहुदोषमुपकारलक्षणं शेषत्वं प्रतिज्ञायते । उच्यते । नैव प्रकरणस्यैवंजातीयकेषु विनियोजकत्वं स्थितम् । 'असंयुक्तं प्रकरणात्' इति ह्युक्तम् । यत्तु विरोधो नास्तीति ? कथं नास्ति ? यदा बर्हिषां प्राधान्यात्प्रत्येकं धर्मसंबन्धे सति, अङ्गार्थत्वमपि ज्ञायमानं प्रकरणानुरोधेन व्यावर्त्यते ।

परस्तु येन कारणेन वाक्यस्यातिप्रसरे बाधिते निर्विरोधं प्रकरणमवगतवानिदानीं तदुपन्यस्यति लौकिकेऽपि प्राप्नोति ततश्चाऽऽनर्थक्यमिति । तस्योत्तरमेतदेव वक्तव्यम् । स्वरसप्रवृत्तं वाक्यं यावत्येव विस्पष्टमानर्थक्यं, तावन्मात्रादेव निवर्तताम् । न चाङ्गबर्हिषां लौकिकवदानर्थक्यम् । अतस्तत्र भविष्यति । न चातिप्रसज्यत इति । अनेनैव चाभिप्रायेण, उपकारलक्षणं हि तदिति तादर्थ्यमेव फलन व्यपदिष्टम् । यदर्थं हि कल्प्यमानं प्रयोजनवद्विज्ञातुमाकाङ्क्षितोपकारनिष्पत्त्या शक्यते, तदर्थं कल्पनीयम् । यत्तु भाष्यकारेणातिप्रसङ्गनिवृत्त्यर्थं प्रकरणादित्युक्तं । तदुत्तरपरिचोदनानवतारप्रसङ्गादतिरवरितोक्तमित्युपेक्षणीयं तावत् ॥ २ ॥

न्या० सु०—सौत्रस्य हेतोः साक्षात्प्रतिज्ञायामसाधकत्वात्स्वयं हेत्वन्तरमाह—**वाक्येति** । प्रतिज्ञयैवार्थादुक्तत्वोक्तयोस्सूत्रत्वाशङ्का कथमवगम्यत इत्यादिभाष्योक्तत्वोक्त्या चोद्भाव्यत्वाशङ्का निरस्ता । सोत्रं हेतुं पूर्व्वपक्षेहेतुनिरासार्थत्वेन व्याचष्टे—**यत्त्विति** । विरोधविषयत्वविशेषणायेहशब्दः । एतद्धेतुव्याख्यार्थं न शेषत्वमिति भाष्यं, तदुपपादनार्थं चोपकारलक्षणं हीति भाष्यमेकहेलयाक्षिपति—**कथं पुनरिति** । विरोधविषयत्वेनाद्यं भाष्यमुपपादयति—**उच्यत इति** । शक्यो हीति पूर्व्वपक्षवार्त्तिकेनाविरोधोक्ते विरोधविषयत्वायोगं शङ्कते—**यत्त्विति** । धर्म्माणां हविःसाद्गुण्यार्थबर्हिरर्थत्वेन वाक्यात्सर्व्वहविःसाद्गुण्यार्थबर्हिरर्थत्वावगमेनाङ्गहविर्बर्हिष्यकरणे वाक्यबाधापत्तेर्विरोधमुदपादयति—**कथमिति** । शेषत्वविषये वाक्यविरोधात्प्रकरणाव्यापारेऽप्यपूर्व्वान्वयलक्षणायां व्यापारा-

भ्युपगमात्, तस्य च तादर्थ्याख्यान्वयमात्रविषयत्वेनऽन्वयान्तरलक्षणायामशक्तेरङ्गहविषां च प्रधानापूर्व्वेण सह तादार्थ्याख्यान्वयाभावात्, अङ्गापूर्व्वस्य चाप्रकरणत्वेनाशक्यलक्षणत्वात्प्रकरणलक्षितप्रधानापूर्वार्थहविर्मात्रार्थत्वं धर्माणामाशङ्कयोपकाराकाङ्क्षावशेनैव प्रकरणात्, तादर्थ्यावगतेरुपकारित्वस्यापि लक्षयितुं शक्यत्वादङ्गहविषामपिच प्रधानापूर्वोपकारितसद्भावात्सर्वार्थत्वोक्तचर्थत्वेन वाक्यस्यातिसंकोचपरिहारायोपकारित्वमात्रस्य तत्प्रकरणं लक्षकं, न तादर्थ्यंस्येत्येवमुपकारलक्षणं हीति भाष्यावयवेनोक्ते, तदुपपादनार्थं यद्यस्योपकारित्वेनाकाङ्क्ष्यते, तत्तस्य प्रकारणाच्छेषभूतमित्युक्त्वाऽङ्गहविषां प्रधानापूर्व्वोपकारित्वेति तद्धर्माणामतदर्थहविःष्ठत्वेन प्रधानापूर्वानुपकारित्वात्प्रधानसादृगुण्यायैव चाङ्गधर्माणामनुष्ठेयत्वादननुष्ठानमाशङ्कचोपकारिस्थत्वात्, प्रधानधर्म्मवदङ्गधर्मा अपि प्रधानापूर्व्वस्योपकुर्वन्तीत्युक्तमित्येवंभाष्यव्याख्यासूचनायऽपूर्वोपकारितत्वलक्षणायामुक्तायामानर्थक्यपरिचोदनानवतारापत्तेः प्रकरणाद्दर्शपूर्णमासयोरितिभाष्यवदुत्कृष्य व्याख्येयत्वादुपकारलक्षणं हीतिभाष्याक्षेपमपरिहृत्यैव वाक्यसंयोगाविशेषादितिवार्तिकेन च कथमित्यादिप्रश्नोत्तरभाष्यस्य सौत्रप्रतिज्ञाक्षिप्तहेतूक्तयर्थत्वेन व्याख्यातत्वादुपेक्ष्या, आहेत्याशङ्काभाष्यं व्याचष्टे—**परस्त्विति**। आनर्थक्याच्च पुरुषधर्म्म इति जञ्जम्यमानाधिकरणभाष्योक्तन्यायपरिहृतां लौकिकविषयत्वशङ्कां कुर्वाणायोत्सूत्रोत्तरदानेऽशक्तेनं तद्वाक्यं हीतिसूत्रवक्ष्यमाणोत्तरार्थमुच्यत् इति भाष्यमुपेक्ष्य, स्वयं जञ्जम्यमानाधिकरणभाष्योक्तमेवोत्तरं स्मारयितुमाह—**तस्येति**। कस्मात्तर्हि भाष्यकृतैतदुत्तरं नोक्तमित्याशङ्कयोपकारलक्षणं हीत्यादिभाष्येण वाक्यगम्यस्य तादर्थ्यस्य प्रकरणलक्ष्यापूर्व्वोपकारित्वेन फलेन व्यपदेशस्याङ्गबर्हिषामपूर्व्वोपकारित्वेनऽर्थवत्त्वात्तदर्थानां धर्म्माणामप्यर्थवत्त्वोपपत्त्याशयतयास्योत्तरस्या स्मारितत्वादिति सूचयितुमाह—**अनेनैव चेति**। एतदाशयत्वमेवोपपादयितुं 'तदर्थं धर्म्मजातं कल्प्यमानमर्थवद्भवति तदर्थं कल्पनीयमपूर्वोपकार्यार्थं न कल्प्यमानमपूर्वाकाङ्क्षितोपकारनिष्पत्त्यार्थवद्विज्ञातुं शक्यमित्याह—**यदर्थं हीति**। अनेन चोपकारलक्षणं हीत्यादिभाष्यस्योत्कृष्येहव्याख्याक्षेपपरिहारौ सूचितौ। भाष्योक्तोत्तरापेक्षाहेतुमाह—**यत्त्विति**। न तद्वाक्यं हीति सूत्रे यद्दर्शपौर्णमासार्थं तत्र प्राप्नुवन्ति, नान्यत्रेति भाष्यात्पश्चाद्व्याख्येयत्वसूचनार्थस्तावच्छब्दः ॥ २ ॥

भा० प्र०—पूर्वोक्त पूर्वपक्ष के उत्तर में सिद्धान्ती कहता है कि "सर्वेषां वा" = यह जो वेदि, वर्हि एवं प्रधान सभी कर्मों के ही उपकारक हैं, कारण, प्रकरण के अनुसार अवगत होता है कि ये प्रधान के साथ सम्बन्ध युक्त है, किन्तु, "वेद्यां हवींषि असादयति" अर्थात् वेदि के ऊपर हविः आदि रखे इत्यादि वाक्य के अनुसार अवगत होता है कि ये अङ्ग के साथ भी सम्बन्ध-विशिष्ट है। वाक्य और प्रकरण के मध्य में वाक्य बलवान् होने से वाक्य के अनुसार ये अङ्ग एवं प्रधानों के साथ ही सम्बन्ध विशिष्ट होता है। ये अपूर्व प्रयुक्त होने से अर्थात् अपूर्व के लिए अनुष्ठान करने से ये अङ्गापूर्व का भी साधक होने से अङ्ग के भी उपकारक होते हैं। इसलिए, सूत्र में

कहा गया है कि "शेषत्वस्य अतत्प्रयुक्तत्वात्" इसके द्वारा उपकृत न होने से अङ्ग धर्म प्रयाजादि हवि से अपूर्व यथायथ रूप में उत्पन्न न होने से प्रधाना पूर्व की ही क्षति होगी। इस कारण से भी अङ्ग एवं प्रधान दोनों के साथ सम्बन्ध विशिष्ट हैं।

"सर्वेषां = सभी का अर्थात् अङ्ग प्रधान सभी सम्बन्ध युक्त होंगे, 'वा' = पूर्वपक्ष के निरास के लिए हैं, "शेषत्वस्य अतत्प्रयुक्तत्वात्" = क्योंकि, शेषत्व तत्प्रयुक्त अर्थात् प्रकरण प्रयुक्त नहीं है, किन्तु, अपूर्व प्रयुक्त ही होता है ॥ २ ॥ सिद्धान्त।

## आरादपीति चेत् ॥ ३ ॥

**शा० भा०—पिण्डपितृयज्ञेऽपि बर्हिर्धर्मैर्युज्येत। सोऽपि दाते बर्हिषि वर्तते। तस्य चापि बर्हिषाऽस्ति प्रयोजनम्। तदप्याराच्छिष्टधर्मवत्स्यात् ॥ ३ ॥ आशङ्का ॥**

त० वा०—यदि ह्यानर्थक्याल्लौकिकाद्बर्हिषो धर्मनिवृत्तिः ततो यत्र तदानर्थक्यं नास्ति कर्मान्तरार्थे बर्हिषि, तत्र प्रवृत्तिः प्राप्नोति। यदि तु कश्चित्तन्निवृत्त्यर्थो हेतुः सोऽङ्गेष्वप्यविशिष्टः। तत्र सौर्यादिष्वितरथाऽप्यतिदेशेन सन्त्येव धर्मा इत्युपदेशातिदेशप्राप्तिरहितत्वात्पिण्डपितृयज्ञ उदाहरणम्। अपूर्वो ह्ययमनङ्गं चेति स्थास्यति। तेनात्यन्तानिष्टप्रसङ्ग इति ॥ ३ ॥

न्या० सु०—सूत्रं व्याचष्टे—यदि हीति। वाक्यविरोधाच्छेषत्वस्य प्रकरणप्रयुक्तत्वनिरासेनाऽनर्थक्यापत्तौ वाक्यस्य बाधाकत्वासिद्धेरर्थवत्त्वसिद्धौ लौकिकविषयत्वनिवृत्तेः सूचितत्वादितिकरणेन परामर्शोपपत्तिः। दर्शपूर्णमासानुपकारित्वस्य लौकिकनिवृत्तिः हेतोः पिण्डपितृयज्ञबर्हिष्यपि सा स्यादनिष्टापत्तिपरिहारमाशङ्क्य, प्रकरणव्यापारं विना दर्शपूर्णमासानन्वयात्, तस्य च तादर्थ्यबोधातिरिक्तेऽर्थे व्यापाराभावात्तद्व्यापाराभ्युपगमेन बर्हिषोपि दर्शपूर्णमासार्थत्वाभावान्निवृत्त्यापत्तिमाह—यदि त्विति। सौर्यादीनामप्याराच्छिष्टत्वाविशेषात्तेन विशेषेण पितृयज्ञोदाहरणमित्याशङ्क्याह—तत्रेति। शङ्कातात्पर्यमुपसंहरति—तेनेति ॥ ३ ॥

भा० प्र०—पूर्वपक्षी ने आशङ्का उठाते हुए कहा है, प्रकरण छोड़कर वाक्य के अनुसार यदि वे अङ्ग के भी उपकारक हों तो कोई लौकिक बर्हि भी उनके अङ्ग हो सकते हैं? इसमें यदि यह कहा जाय कि समीपवर्ती बर्हि ही होगा, ऐसी स्थिति में कहा गया है "आरादपि"—समीप में भी पिण्ड पितृयज्ञ की बर्हि है, वह भी इस प्रयाजादि अङ्गों का उपकारक होगा।

"आरात् अपि" = निकटस्थित पिण्डपितृयज्ञ की बर्हि एवं वेदि भी उपकारक होगी, "इति चेत्" = यदि ऐसा कहा जाय ॥ ३ ॥ इति आशङ्का।

**न तद्वाक्यं हि तदर्थत्वात् ॥ ४ ॥**

शा० भा०—न तस्य बर्हिरेतैर्धर्मैर्धर्मवत्। वाक्यं ह्येकं दर्शपूर्णमासाभ्यां सह धर्माणाम्। तेन दर्शपूर्णमासयोरुपकारका धर्माः, यद्दर्शपूर्णमासार्थं, तत्र प्राप्नुवन्ति, नान्यत्र। तस्मात्पिण्डपितृयज्ञबर्हिषो न भविष्यन्ति ॥ ४ ॥ आ० नि० ॥

त० वा०—भवेदेतद्यदीदं वाक्यं स्वतन्त्रं स्यात्। बर्हिर्वेदितद्धर्माणां तु यद्वाक्यं तद्दर्शपूर्णमासाभ्यां सहैकम्। तेन वाक्येन सहैकवाक्यतां गतमित्यर्थः। तेन यत्तदेकवाक्यान्तर्गतं बर्हिः तस्यैवैतद्धर्मप्राप्तिः न भिन्नवाक्यगतस्य। न च पिण्डपितृयज्ञबर्हिर्दर्शपूर्णमासवाक्यान्तर्गतम्। अतो न संभन्त्स्यत इति।

ननु यदि दर्शपूर्णमासाभ्यां सहैकवाक्यत्वमिष्यते, ततस्तत्प्रकरणं मुक्त्वा नान्येन लभ्यते। तच्च प्रकरणं प्रधानमात्रस्यैवेत्यङ्गानामसंबन्धः प्राप्नोति। नैष दोषः। सर्वथा लवनखननादयस्तावन्न साक्षादङ्गेन, प्रधानेन वा संबन्द्धुं शक्नुवन्ति। यत्र वेदिर्बर्हिषी, तत्र गमिष्यन्ति। वेदिर्बर्हिषोरपि हविरासादनेन संबन्धः। तच्च दर्शपूर्णमासप्रयोगवचनगृहीतमासादनं संबध्यते। एवमङ्गहविरासादनमपि तत्रान्तर्गतं, साङ्गस्य प्रधानस्यैकप्रयोगत्वात्।

ननु च यथा प्रयाजादय एकप्रयोगवचनगृहीतत्वेऽपि 'गुणानां च परार्थत्वात्' इत्येवं परस्पराङ्गत्वं न प्रतिपद्यन्ते, तथाऽङ्गहविः संबन्ध बर्हिर्न प्रतिपद्यते। नैतदेवम्। यथैव हि प्रधानहविरासादनमङ्गतया संबध्यते, तथाऽङ्गहविरासादनमप्यङ्गाङ्गतया संभन्त्स्यते। यदि च यद्दर्शपूर्णमासार्थं हविः तद्बर्हिष्यासादयतीत्येवं कल्प्येत, ततस्तन्मात्रस्यैव स्यात् न त्वेवम्। अस्याऽऽनर्थक्यभयात्तु स्वरूपेऽतिक्रम्यमाणे किमेवमतिक्रमोऽस्तु यद्दर्शपूर्णमासार्थंनुत यद्दर्शपूर्णमासापेकारोति। यदि तादर्थ्यं गृह्यते, वाक्यस्यातिदूरं संकोचः क्रियेत। तदुपकारित्वग्रहणे तु बहुतरविषयत्वं भवति। तथा च तद्भवति तदनुग्रहीतव्यम्। अङ्गाङ्गमपि विनाऽपि तादर्थ्येन तदुपकारीति विज्ञायते। तावन्मात्रमेव च तद्द्वारं युक्तं, न तादर्थ्यम्। अनुपकारिणि हि स्थितं नोपकरोति, नातदर्थे। तथा च 'परार्थे त्वर्थसामान्यम्' इति वक्ष्यति, विनाऽपि तादर्थ्येनाभ्युदितेष्टयां दधिपयसोस्तदुपकारमात्रदर्शनात्प्रणीताधर्मप्राप्तिर्भवतीति। तस्मादेवं प्रकरणादेकवाक्यत्वं कल्प्यते यस्मिन्नक्रियमाणे दर्शपूर्णमासापूर्वं न सिध्यति, तत्र तत्र कर्तव्या इति। अङ्गहविर्भिरपि च विगुणैः प्रधानापूर्वं न निष्पद्यते। तस्मात्प्रधानापूर्वप्रयुक्तानामेवाङ्गेष्वपि क्रिया युक्तेति ॥ ४ ॥

न्या० सु०—शङ्कानिरासार्थत्वेन तत्व्याख्यार्थं न तस्येतिभाष्यं स्पष्टत्वादव्याख्याय, तस्यासंयुक्तं प्रधानस्येतिसूत्रनिर्दिष्टस्यासंयुक्तस्य धर्मजातस्य यद्वाक्यं, तत्प्रधानस्यैव

वाक्यं तद्वाक्यैकवाक्यभूतं हीत्येवं तद्वाक्यं हीति सूत्रावयवव्याख्यार्थवाक्यं हीतिभाष्यमङ्ग-वाक्यानां प्रधानवाक्यैकवाक्यत्वं विना शङ्कानिरासासिद्धेरवाक्यत्वस्य तन्निरासहेतुत्वो-पपादनपूर्व्वं व्याचष्टे—भवेदिति । अतः शेषिणोर्बर्हिरादेः प्रधानार्थत्वमालोच्य, धर्म्मजातं शेष इत्येवं ल्यब्लोपपञ्चम्यन्तां तदर्थत्वोक्तिमभिप्रेत्य व्याख्यार्थं तेनेतिभाष्यं व्याचष्टे—तेनेति । तस्मादितिशङ्कानिरासोपसंहारभाष्यं व्याचष्टे—न चेति । धर्म्मवाक्यानां प्रधानोत्पत्तिवाक्यैकवाक्यत्वेऽङ्गेनान्वयः स्यात्, प्रधानवाक्यस्य तु साङ्गप्रधानविषयत्वा-दङ्गेन्वयोपि धर्माणां युक्त इत्याशयेन परिहर्तुमाह—सर्वथेति ।

प्रधानोत्पत्तिवाक्ये हविरासादनाश्रुतेः प्रयोगवाक्यैकवाक्यतां विना सादनद्वारप्रधाना-न्वयायोगात्साक्षाच्चाङ्गवत्प्रधानेनाप्यन्वयायोगात्प्रयोगवाक्यैकवाक्यतोपपादनार्थं साक्षाद-न्वयायोगोक्तिपूर्वं दौवारिकान्वयोक्तिः । प्रयोगवाक्येप्यङ्गानां सर्व्वेषां प्रधानाविशेषणत्वेन प्रयाजानुयाजादिवन्दन्योन्यान्वयात्सिद्धान्तासिद्धिशङ्कते—ननु चेति । संनिपत्योपकारिणा-मङ्गानां साक्षात्प्रधानविशेषणत्वाभावाद्बर्हिषः प्रधानान्वये हविरासादनस्य द्वारत्वावगते-रङ्गहविरासादनस्यापि च परम्परया प्रधानान्वयाद् द्वारत्वोपपत्तेः प्रधानहविरासादन-स्यापि च साक्षादन्वयाभावात्सिद्धान्तसिद्धिमाह—नैतदिति ।

प्रधानान्वयस्य प्रकरणेन लक्षणीयत्वात् । तस्य च तादर्थ्यमात्रविषयत्वात्, अङ्गहविरासादनस्य च प्रधानार्थत्वाभावात् बर्हिर्विधौ तल्लक्षणाशक्तेः प्रधानमात्रान्वय-लक्षणा यदि स्वित्ति पूर्वसूत्रस्थवार्तिकसूचितां परिहर्त्तु न प्रधानशेषत्वं, तेन प्रकरणेन धर्मप्रयोजकतया लक्षितं, किन्तु प्रधानोपकारित्वमात्रमित्येवं शेषत्वस्य प्रत्ययुक्तत्वादिति सिद्धान्तसूत्रावयवव्याख्यार्थं विशेषत्वं प्रकरणे न धर्मप्रयोजकं भवति, उपकारलक्षकं हि प्रकरणमित्येत्रमर्थं न शेषत्वमित्मादि भाष्यं मत्वाऽनर्थक्यादिपरिचोदनानवतारापत्तिभयेनो-पेक्षितमिदानीं सङ्गतत्वात्तात्पर्यतो व्याचष्टे—यदि चेति ।

न केवलं वाक्यातिसंकोचभयात्तादर्थ्यत्यागः, निन्त्वनुपयोगादपीत्याह—तावन्मात्रमेव चेति । अनेन च प्रकरणाद्दर्शपूर्णमासयोरितिभाष्यमारादपीति परिचोदनानवतारापत्ति-भयेनोपेक्षितमिदानीं धर्म्माणां प्रनरणादर्शपूर्णमासोपकारित्वावगतेर्लौकिके गृहाच्छादनादि-बर्हिष्यप्रासावप्यङ्गहविरासादनबर्हिषोपि दर्शपूर्णमासोपकारित्वात्, तावन्मात्रस्य च धर्म्मान्वयोगित्वान्न कश्चिद्दोष इत्येवमर्थत्वेन व्याख्यातम् ।

तादर्थ्यानपेक्षोपकारित्वमात्रस्य धर्मान्वयोपयोगित्वान्नवमाधिकरणेन द्रढयितुमभ्युदि-तेष्टयां दधिपयसोरिज्यार्थत्वेन प्रणीताकार्यपाकार्थत्वाभावात्प्रणीताधर्म्माननुष्ठानं 'परार्थे त्वर्थसामान्यं संकारस्य तदर्थत्वादि'तिसूत्रेणपूर्व्वपक्षयित्वा, क्रियेरन् कार्यनिर्वृत्तेरित्यन्य-कार्यकारिभ्यामपि दधिपयोभ्यांप्रणीताप्रयोजनपाकनिष्पत्तेस्तद्धर्म्मानुष्ठानं वक्ष्यतीत्याह—तथा चेति । परार्थे त्वर्थसामान्यमिति पूर्वपक्षमुपक्रम्य, वक्ष्यतीत्युपक्रमार्थेविकरणा-भ्युपगमेन व्याख्येयम् ।

उपेक्षितस्य भाष्यद्वयस्य व्याख्यायमानसूत्रशेषत्वं दर्शयितुमाह—**तस्माविति** । उपकारिमात्रलक्षणायां तदर्थत्वादितिसूत्रावयवेन दर्शपूर्णमासार्थत्वाद्धर्म्मान्वयोक्त्ययोगमाशङ्क्य, प्रयोजकाख्यप्रयोजनवाच्ययमर्थेशब्दोः नोद्देश्याख्यप्रयोजनवाचीति मत्वादर्शपूर्णमासापूर्वप्रयुक्तं यद्बर्हिः तद्धर्म्माः कार्य्या इत्येवमर्थत्वेन तादर्थ्योक्त्युपपत्ति सूचयन् सिद्धान्तमुपसंहरति—**तस्माविति** ॥ ४ ॥

भा॰ प्र॰—पूर्वोक्त आशङ्का के परिहार के लिए सिद्धान्ती ने कहा है कि बर्हि एवं वेदि और तद्विषयक वाक्य यदि निरपेक्ष—अन्य किसी भी वाक्य के साथ सम्बन्ध रहित हो तो यह कहा जा सकता था, किन्तु वे जब अन्य वावय के साथ—दर्शपूर्णमास विषयक महावाक्य के साथ प्रकरण के बल से सम्बद्ध है तब अन्य वर्हि आदि के समीप में उपदिष्ट होने पर भी आकाङ्क्षा न होने से उनके समान अङ्ग नहीं होगे, किन्तु, तेही प्रकरण सहकृत वाक्य के अभाव में प्रधान एवं प्रयाजादि अङ्गों के उपकारक होंगे ।

"न" = नहीं, अर्थात् वह नहीं होगा "तद्वाक्यं हि" = क्योंकि, वह बर्हि एवं वेदि वाक्य दर्शपूर्णमास वाक्य के साथ एक वाक्यतापन्न है, "तदर्थत्वात्" = क्योंकि, बर्हि उसी के प्रयोजन की साधिका है ॥ ४ ॥ इति आशङ्का निरास ।

## लिङ्गदर्शनाच्च ॥ ५ ॥

**शा॰ भा॰—लिङ्गं भवति । एवमाह । स वै ध्रुवामेवाग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति, इत्यभिघारणस्याऽऽज्यभागार्थतां दर्शयति ॥५॥ हेतुः ॥ बर्हिरादीनां दर्शपौर्णमासतदङ्गोभयाङ्गताधिकरणम् ॥१॥**

**त॰ वा॰—यदि चैगंजातीयकमङ्गप्रधानार्थे, ततः 'प्रयाजशेषेण हवींष्यभिघारयति' इत्येतदङ्गप्रधानार्थम् । तत्र च क्रमवाक्येष्वयं क्रमो न्यायप्राप्तः सिद्धवदुच्यमानो हेतुवन्निगदोऽर्थवत्त्वादुपपद्यते 'स वै ध्रुवामेवाग्रेऽभिघारयति' । कुतः 'ततो हि प्रथमावाज्यभागौ यक्ष्यन्भवति' इति । याद्याज्यभागहविरप्यभिघारणीयं तत एवं वक्तव्यम् । अन्यथा हि ध्रुवायामुपांशुयाजार्थेन केवलमभिघारणं स्यात् । तत्र न चाग्रेऽभिघारणं स्यात् । न च 'ततो हि प्रथमावाज्यभागौ' इति हेतुः समर्थ्येत । तस्मात्सर्वार्थत्वमिति ॥ ५ ॥**

**( इति बर्हिरादीनामङ्गप्रधानसाधारण्याधिकरणम् ॥ १ ॥**

न्या॰ सु॰—अस्याभिघारणस्य शेषप्रतिपत्त्यर्थत्वेन हविरर्थत्वाभावात् तद्द्वाराप्रधानार्थत्वस्याङ्गार्थत्वस्य चानुपपत्तेर्लिङ्गत्वायोगमाशङ्क्या अभिघारणक्रियास्वरूपस्य प्रतिपत्त्यर्थत्वेऽपि तद्गतस्य हविराधारनियमस्य हविः संस्कारार्थत्वाल्लिङ्गत्वोपपत्ति सूचयितुमाह—**यदि चेति** । क्रमन्यायप्राप्तप्राथम्यानुवादसंभवे 'वैशब्दोपहतविधिशक्तेर्विधित्वायोगादुपांशुयाजार्थत्वे च प्राथम्यानुवादायोगात् आज्यभागप्राथम्यस्य च हेतुत्वोक्त्ययोगापत्तेर्लिङ्गत्वमुपपादयितुमाह—**तत्र चेति** । सर्वेषां शेष इति सिद्धान्तप्रतिज्ञानुकर्षणार्थत्वेन सौत्रं चकारं व्याख्यातुमाह—**तस्माविति** ॥ ५ ॥

भा० प्र०—बर्हि आदि जो अङ्ग एवं प्रधान दोनों के ही लिए उपकारक रूप में उपदिष्ट होता है, उसका अन्य हेतु भी है "लिङ्गदर्शनाच्च" इस प्रकरण में ही श्रुति में कहा गया है "न वै ध्रुवा में वाग्रेऽभिघारयति ततो हि प्रथमावाज्यभागौ यक्षान्" अर्थात् ध्रुवा में ही आगे अभिधारण करे, कारण, उनसे प्रथम दो आज्य भाग देकर याग करना चाहिए। इस स्थल में अभिधारण को प्रयाजादि अङ्ग एवं प्रधान दोनों का ही उपकारक है, उक्त उपदेश ही उसका ज्ञापक कारण है, उक्त अभिधारण से यह भी सूचित होता है।

"लिङ्गदर्शनात् च" लिङ्ग अर्थात् ज्ञापक वेदवचनदृष्ट होने से ये अङ्ग या प्रधान दोनों के लिए हैं॥ ५ ॥

इति प्रथम बर्हिः आदि का अङ्ग एवं प्रधान उभयसम्बन्धाधिकरण।

अथ यजमानसंस्काराणां प्रधानमात्रताऽधिकरणम्

## [२] फलसंयोगात्तु स्वामियुक्तं प्रधानस्य ॥ ६ ॥ सि० ॥

शा० भा०—ज्योतिष्टोमे-केशश्मश्रुणोर्वपनं, पयोव्रतानि, तपश्चाऽऽम्नातानि। तेषु संदेहः—किमङ्गप्रधानार्थानि, उत प्रधानार्थानि। किं तावत्प्राप्तम्? अङ्गप्रधानार्थानीति पूर्वेण न्यायेन प्राप्तम्। एवं प्राप्ते।

ब्रूमः—स्वामियुक्तमेतत्। तस्मात्प्रधानस्य। कस्मात्? फलसंयोगात्। पुरुषस्य यागेनायं संबन्धः। यागोऽपूर्वस्य दाता। पुरुषः प्रतिग्रहीता। नन्वपरोऽप्यस्ति संबन्धः। यागो निर्वर्त्यः, पुरुषोऽभिनिर्वर्तक इति। फलेन तु संबन्धो भविष्यतीत्येवमर्थः पुरुषः श्रूयते। न हि यागं स साधयति। यागः सत्तया संभन्स्यत इति। किमिति तर्हि? निर्वर्तयतः फलं भवतीति। संस्काराश्च संस्कुर्वन्तीत्युच्यन्ते। यत्तस्य संस्कर्तव्यस्य प्रयोजनं, तत्र सामर्थ्यं जनयन्तीति। फलं च ग्रहीतुं पुरुषस्य प्रयोजनं, न यागमभिनिर्वर्तयितुम्। तस्माद्ये पुरुषसंस्काराः ते पुरुषं फलप्रतिग्रहणसमर्थं कुर्वन्ति, न यागनिर्वृत्तिसमर्थम्।

आह—यदि यागनिर्वृत्तौ न सामर्थ्यं जनयन्ति, कथं तर्हि यागधर्मास्ते—उच्यते। यागस्य स्वार्थं साधयतः साहाय्ये वर्तन्ते। कश्च तस्य स्वार्थः? यदस्य कर्ता फलेन संबध्यते। तस्मात्स्वामिसंस्काराः प्रधानार्था इति॥ ६ ॥

इति द्वितीयं स्वामिसंस्काराणां प्रधानार्थताधिकरणम्॥ २ ॥

त० वा०—'याजमानास्तु तत्प्रधानत्वात्कर्मवत्' इत्यनेनाधिकरणेन येषां याजमानत्वं सिद्धं, ते किं याजमानस्य कर्तृत्वांशेनाङ्गप्रधानार्था, उत भोक्तृत्वांशेन केवलप्रधानार्था इति। किं प्राप्तं पूर्वेणाधिकरणेन सर्वार्थत्वम्। सर्वार्थे हि यजमानेऽवस्थिताः शक्नुवन्ति सर्वेषामुपकर्तुम्। न च व्यावृत्तिकारणमस्तीति प्राप्ते।

भिधीयते।

येनैव हेतुनैतेषां स्वामिगामित्वनिश्चयः।
तेनैव तु प्रधानार्थप्रतिपत्तिरपि स्फुटा॥

यदि ह्येते कर्तृत्वांशपातिनो भवेयुः ततः सर्वार्थत्वं प्रतिपद्येरन्। भोक्तृत्वांशस्थास्त्वेते। स हि तैर्विना नोपपद्यते। कर्तृत्वं तु तदभावेऽपि यथाभवति, तथा सर्वलोकप्रत्यक्षम्। ऋत्विजामपि च तत्संभवान्नैव तेभ्यो निवृत्तिः स्यात्। अभीष्टे चार्थे योग्यताधानमाकाङ्क्षति। यत्र च योग्यत्वमनुपजातम्। न तु यजमानस्य कर्तृत्वस्वरूपमभीष्टम्। न च प्रागेभ्यो न निष्पन्नम्। योग्यतां चाऽऽदधानाः क्रियाः संस्कारा इत्युच्यन्ते। तस्माद्भोक्तृत्वांशं भजन्ते। यस्य च कर्मणः फलं पुरुषैर्भुज्यते, नाङ्गानां, क्रत्वर्थत्वात्। तस्मात्प्रधानस्यैवंजातीयकाः।

आह। यदि क्रतोर्निर्वर्तकांशे न पतन्ति तत्, फलस्यैवाङ्गं प्राप्नुवन्ति। नैष दोषः। एष एव हि प्रधानस्योपकारो यदस्य फलग्रहणाय योग्यः कर्ता क्रियते। ततश्च यथैवान्यान्यदृष्टार्थान्यङ्गानि फलयोग्यतामपि कुर्वन्ति नाङ्गत्वात्प्रच्यवन्ते, तथैवैतेऽपि द्रष्टव्याः। प्रयोजनमग्नीषोमीयादिविकारेषु गमनं वपनादीनाम् अगमनं सिद्धान्ते॥ ६॥

( इति द्वितीयं यजमानसंस्काराणां प्रधानमात्रार्थताधिकरणम्॥ २॥ )

### अथ द्वितीयं स्वामिसंस्काराणां प्रधानार्थत्वमधिकरणम्

न्या० सु०—स्वामियुक्तोक्त्या परिक्रयस्यापि चिन्ताविषयत्वशङ्कां भाष्याद्वा दन्तधावनादीनामप्यविषयत्वशङ्कां निवर्त्तयितुमाह—**याजमानास्त्विति**। तपसोपि चिन्ताविषयत्वस्य भाष्योक्तत्वादुत्तरपादाद्याधिकरणे स्वामियुक्ततया वक्ष्यमाणस्यापि परिक्रयस्यैतच्चिन्ताविषयत्वनिवृत्तिसूचनमात्रार्था द्वितीयाधिकरणोक्तिः। संस्कारास्तु पुरुषसामर्थ्यं इत्युत्तरपादद्वितीयाधिकरणपूर्वपक्षसूत्रे पुरुषसामथर्योक्त्या कर्त्रंशपातित्वेन पूर्वपक्षकरणस्य कर्तृत्वमेवैतैर्विना विगुणमिति, तत्रत्यवार्त्तिकात् सिद्धान्तसूत्रे च भोक्त्रंशपातिप्रधानभूतकर्म्मदृष्टान्तेन भोक्त्रंशपातितया सिद्धान्तकरणस्य नचैते कर्तृत्वसज्जननार्था इत्यादिवार्त्तिकाद्येनैव हेतुनैतेषां स्वामित्वनिश्चय इत्यत्रत्यवार्त्तिकादपि प्रतीतेः प्रधानस्य च फलं पुरुषैर्भुज्यते, नाङ्गानामितिवार्त्तिकाच्च प्रधानमात्रस्य फलान्वयोक्त्यर्थत्वेन फलसंयोगोक्तिव्याख्याप्रतीतेर्भोक्त्रंशपातेधिकरणान्तरसिद्धे पयङ्गानामपि फलोत्पत्तौ व्यापाराद्व्रतादीनामङ्गप्रधानार्थत्वं प्रधानमात्रस्य व्यापाराद्वा प्रधानमात्रार्थतेतिसंदेहहेतोः स्वाभिमतत्वेऽपि ये पुरुषसंस्कारास्ते पुरुषं फलप्रतिग्रहणसमर्थं कुर्वन्ति न यागनिर्वृत्तिसमर्थमितिभाष्यादस्मिन्नेवाधिकरणे कर्त्रंशपातात्पूर्वपक्षो भोक्त्रंशपातात्सिद्धान्तः। तस्मिंस्तु भोक्त्रंशपातिष्वपि वपनादिषु परिक्रयद्वारा स्वामिनः कर्तृत्वसंभवासंभवसंदेहाच्चिन्तेति प्रतीतेर्भाष्यानुसाराकर्तृभोक्त्रंशपातसंदेहोधिकरणसंदेहहेतुरुक्तः।

पूर्वपक्षमाह—**किमिति**। वपनादीनां कर्त्रंशपाते सर्व्वेष्वङ्गप्रधानेषु साक्षात्प्रयोक्तृत्वेन वा कर्त्तरि स्वामिनि स्थितानां सर्व्वोपकरणशक्तेः पूर्वन्यायात्सर्वार्थत्वं युक्तम्। तेषां तु भोक्त्रंशपातस्योत्तरपादे वक्ष्यमाणत्वादङ्गानां च फलान्वये प्राधान्यापत्तेः प्रधानोपकारमात्रे व्यापारावगमेन फलसाधनत्वाभावात्फलभोक्तृत्वयोग्यताधानापेक्षानुपपत्तेः, तदर्थेन वपनादिनोपकर्त्तुमशक्यत्वान्न पूर्वोक्तन्यायोस्तीत्याशङ्कय, प्रधानमात्रात्फलसिद्धावङ्गानुष्ठानवैयर्थ्यापत्तेः फलान्वयसाम्येपि चातिशयानतिशयविवक्षया लोकवद्व्यवस्थिताङ्गप्रधानव्यवहारोपपत्तेः, सर्वैरङ्गप्रधानैः फलभोक्तृत्वयोग्यतयाऽर्थ्यमानेऽपेक्ष्यमाणे यजमाने स्थिता वपनादयः शक्नुवन्ति सर्व्वेषामुपकर्तुम् अङ्गानामपि च फलसाधनत्वान्न तद्व्यावृत्तिकारणमस्तीत्याह—**सर्वार्थे हीति**।

भोक्त्रंशपातेन हेतुना वपनादीनां स्वामिगामित्वस्य निश्चेष्यमाणत्वादङ्गानां च फलार्थत्वावेदकश्रुत्यादिप्रमाणाभावात् साक्षादसाधनत्वेऽपि फलसाधनप्रधानोपकारितयानुष्ठानार्थवत्त्वोपपत्तेर्वेदे च विवक्षितभावेनातिशयानतिशयविवक्षयाङ्गप्रधानव्यवहारायोगात्फलान्वयेऽनङ्गत्वापत्तेः फलार्थत्वाभावेन भोक्तृत्वयोग्यताधानानपेक्षत्वात्तदर्थानां वपनादीनामङ्गोपकारकरणाशक्तेः पूर्वन्यायाविषयत्वेन सिद्धान्तं वक्तुमाह—**इतीति**। कर्त्रंशपाते वपनादयः सर्वार्थाः स्युः तेषां तु भोक्त्रंशपातस्य वक्ष्यमाणत्वात्प्रधानमात्रार्थतेत्येवं श्लोकं व्याख्यातुमाह—**यदि हीति**। आत्मनेपदात्पुरुषगामिफलसाधनत्वाख्यपुरुषप्राधान्यावगतेः कर्तृत्वयोग्यताख्यस्य च पुरुषगामिनः फलस्य वपनाद्यभावेपि सर्वलोकप्रत्यक्षत्वात्भोक्तृत्वांशस्यैव वपनादिभिर्विनानुपपत्तेर्भोक्त्रंशपातितेत्युपपत्ति 'तत्प्रधानत्वादि'तिसूत्रावयववक्ष्यमाणामिहापेक्षितत्वादनुसन्धातुमाह—**स हीति**। वपनादीनां स्वामिगामित्वे भोक्त्रंशपातस्य हेतोः सूत्रभाष्यकृद्भ्यामवक्ष्यमाणत्वात्कर्त्रभिप्रायं क्रियाफलं गम्यत इति तत्रत्यभाष्यादात्मनेपदस्यैव हेतुत्व प्रतीतेः पुरुषस्य कर्म्मकरणसामर्थ्यमुपजनयन्तीत्यस्माच्च कर्त्रंशपाताभ्युपगमप्रतीतेर्येनैव हेतुनेत्यनुवादायोगमाशङ्कया आत्मनेपदस्य 'स्नातीत्यादावभावेनाव्यापकत्वात्कर्त्रंशपाते चर्त्विग्भ्यो निवृत्त्यसिद्धेस्तद्भाष्यस्थस्य' कर्म्मशब्दस्य फलभोगाख्यकर्म्मवाचित्वावगमाद्भोक्त्रंशपातस्य स्वामिगामित्वे हेतुत्वानुवादोपपत्तिमाह—**ऋत्विजामपि चेति**। वपनादीनां पुंसां फलसंयोगसिद्ध्यर्थत्वादित्येवं भोक्त्रंशपातोक्तयर्थत्वेन फलसंयोगोक्तिव्याख्यार्थं पुरुषस्य यागेनेत्यादिभाष्यं तात्पर्यतो व्याख्यातुमाह—**अभीष्टे चेति**।

भोक्त्रंशपातेपि साङ्गस्य प्रधानस्य फलसाधनत्वादङ्गप्रधानार्थतेति पूर्वपक्षनिरासार्थत्वेन प्रधानमात्रस्य फलसंयोगादित्येवं स्वयं फलसंयोगोक्ति व्याख्यातुमाह—**यस्य चेति**। फलसाधनादेव भोक्तृत्वशक्तिसिद्धेर्वपनादीनां भोक्तृत्वशक्तिसिद्ध्यर्थत्वाभ्युपगमे तेषामपि फलसाधनत्वापत्तेः प्रकरणावगतक्रत्वर्थत्वबाधापत्तिशङ्कार्थमाहेति भाष्यं व्याचष्टे—**आहेति**। भोजनार्थपरिविष्टस्याप्यन्नस्या शक्ते भोक्तरि भोजनासिद्धिदर्शनात् फलसाधनातिरिक्तशक्त्यपेक्षोपपत्तेः फलसाधनक्रत्वर्थत्वोपपत्त्युक्त्यर्थमुच्यते इतिभाष्यं व्याचष्टे—**नैष इति**।

फलसिद्धयुपयोगमात्रेण चानङ्गत्वापत्तावारादुपकारिणामङ्गानां संनिपत्योपकारिवत्प्रधानोत्पत्त्यपूर्व्वोत्पादकत्वाभावेन फलसाधनादपि प्रधानाद्रूपग्राहकादपि नेत्रान्निरालोकाद्रूपग्रहणासिद्धिवन्निरङ्गात्फलासिद्धेः फलसिद्धयुपयोगित्वादनत्वापत्ति दृष्टान्तदार्ष्टान्तिकव्याजेनाह—**ततश्चेति** । पक्षद्वयेऽपि वपनादीनां सकृदनुष्ठानसाम्याच्चिन्तानर्थक्यमाशङ्कयाह—**प्रयोजनमिति** ॥ ६ ॥

इति द्वितीयं स्वामिसंस्काराणां यजमानार्थत्वाधिकरणम् ।

भा० प्र०—पूर्वाधिकरण में जो नियम कहा गया है, उसी का व्यतिक्रम दिखाने के लिए एक अधिकरण की रचना की गई है । ज्योतिष्टोम में केश और दाढी का वपन मुण्डन, पयोव्रत अर्थात् केवल दुग्ध पानकर रहना आदि कतिपय कर्म उपदिष्ट होता है । इस ज्योतिष्टोम में ग्रह के द्वारा = पात्र विशेष के द्वारा सोमहोम—मुख्य कर्म है, अग्नीषोमीय पशु आदि अङ्ग है । यह जो केश श्मश्रुवपन कहा गया हैं, ये क्या प्रधान एवं अङ्ग सभी का धर्म है या यह प्रधानकर्म का ही धर्म है—यही संशय है । इसमें पूर्वपक्षी ने कहा है कि वपन आदि कर्म जब यजमान एवं अङ्ग सब कर्म का ही कर्ता है, तब ये वपन आदि संस्कार प्रधान एवं अङ्गों का ही उपकारक है ।

इस प्रसङ्ग में सिद्धान्ती का कहना है "स्वामिसंयुक्तं प्रधानस्य" स्वामिसंयुक्त अर्थात् यजमान का संस्कार साधक ये कर्म के ही उपकारक हैं । कारण, "फलसंयोगात्" फल के साथ ही उसका सम्बन्ध है ।

आशय यह है कि यजमान का आकार दो प्रकार का है—क्रिया कर्तृत्व एवं फलभोक्तृत्व उनमें वपन आदि से क्रियानिष्पत्ति का कोई उपकार दृष्ट न होने से उनका अदृष्ट उपकार यजमान के फलभोक्तृत्व अंश में मानना होगा—यजमान यदि वपनादि से संस्कृत होकर कर्म करता है तभी कर्म का फल होगा—जिसमें उसका फलभोक्तृत्व रहेगा । और कल प्रधानकर्म से ही होता है । इस लिए यजमान गत वपनादि संस्कारों से प्रधानकर्म के मध्य में ही अतिशय या सामर्थ्य विशेष उत्पन्न होता है, वह उसके फल जनन का उपकारी होता है । इसलिए उसकी प्रधान कर्म का ही उपकारक मानना उचित है ।

"स्वामिसंयुक्तं" = स्वामी के साथ संयुक्त वपन, पयोव्रत आदि कर्म, "प्रधानस्य" = प्रधान कर्म का ही धर्म होता है, "फलसंयोगात्" = क्योंकि, फल के साथ उसी का सम्बन्ध रहता है, "तु" = पूर्वाधिकरण का अपवाद सूचक या अधिकरणान्तर का सूचक है ॥ ६ ॥

इति द्वितीय यजमान संस्कारों का प्रधानामात्रार्थकता अधिकरण ।

अथ तृतीयं सौमिकवेदेरंगप्रधानोभयार्थताधिकरणम्

[३] चिकीर्षया च संयोगात् ॥ ७ ॥ पू० ॥

शा० भा०—ज्योतिष्टोमे श्रूयते, षट्त्रिंशत्प्रक्रमा प्राची, चतुर्विंशतिरग्रेण, त्रिंषज्जघनेन, इयति शक्ष्यामहे, इति । तत्र संदेहः—किमेषा वेदिरङ्गप्रधानार्था, उत प्रधानार्थेति । किं तावत्प्राप्तम् ? चिकीर्षया च संयोगात् प्रधानार्थेति । का चिकीर्षा ? इयति शक्ष्यामह इति । यच्चिकीर्षितं, तस्यार्थेनैषा श्रूयते, शक्ष्यामहेऽस्यां कर्तुमिति प्रधानं च तस्य चिकीर्षितं, नाङ्गानि । प्रधानं हि फलवत्, नाङ्गानि ।

आह । यद्यङ्गानि न चिकीर्षितानि, किमर्थं क्रियन्त इति । उच्यते । अचिकीर्षितान्यप्यङ्गानि क्रियन्ते, यद्यपि तानि न चिकीर्ष्यन्ते, तथाऽपि तैरचिकीर्षितैरन्यच्चिकीर्ष्यते । तस्मात्तानि क्रियन्त इति । यच्चिकीर्षितं, तस्य वेदिः । तस्मात्प्रधानार्थेति । स्थितं तावदपर्यवसितम् ॥ ७ ॥ सौमिकवेद्यादीनामङ्गप्रधानोभयाङ्गताधिकरणस्य पूर्वपक्षः ॥

त० वा०—पूर्वेणैव न्यायेन सौमिकी वेदिः केवलप्रधानार्था विज्ञायते । इयति शक्ष्यामहेऽस्यां कर्तुमिति यच्चिकीर्षि । तदुद्देशेनैवमभिधीयते । फलवच्चिकीर्षितं, नाङ्गानि । अचिकीर्षितत्वे सति चिकीर्षितसिद्ध्यर्थत्वेन करणात् । एवमपर्यवसिते चिन्तान्तरं तावत्प्रस्तोति ॥ ७ ॥

अथ तृतीयं सौमिकवेद्यादीनामुभयार्थत्वाधिकरणम्

न्या० सु०—प्रधानमात्रस्य फलसाधनत्वात्फलसिद्ध्युपयोगिनां वपनादीनां प्रधानमात्रार्थत्वेऽभिहिते सौमिक्यावेदेरिच्छार्थेषु तुमुन्नितीच्छार्थविहिततुमुन्प्रत्यययोगं चिकीर्षितार्थत्वावगतेः प्रधानमात्रस्य च फलसाधनत्वेन चिकीर्षितत्वात्प्रधानमात्रार्थत्वपूर्वपक्षोत्थानेनापवादिकसंगत्युक्तिपूर्वं पूर्वपक्षमाह—पूर्व्वेणवेति । सर्वार्थदार्शपौर्णमासिकवेदिव्यावृत्त्यै सौमिकीतिविशेषणम् । पूर्वन्यायमत्र योजयितुमियतीत्याद्युक्तम् । अनुष्ठानान्यथानुपपत्त्याङ्गानामपि चिकिर्षितत्वकल्पनस्याशङ्कापूर्वनिरासार्थमाहेत्यादिभाष्यं व्याचष्टे—अचिकीर्षितत्वे सतीति । अचिकीर्षितत्वेऽपि चिकीर्षितप्रधानोपकारसिद्धकरणोपपत्तेर्नाङ्गानि चिकिर्षितानीत्यर्थः ।

तथाभिधानेवविष्ठूत्रस्यापर्यवसितेधिकरणेधिकरणान्तरपूर्वपक्षोक्त्यर्थत्वेनावतारणार्थं स्थितं तावदिति भाष्यं व्याचष्टे—एवमिति ॥ ७ ॥

भा० प्र०—सौमिकी वेदि अर्थात् सोमयाग की जो वेदि वह क्या केवल प्रधान के लिए है या अङ्ग एवं प्रधान दोनों के लिए है—यही संशय है । इसमें पूर्वपक्षी का कहना है कि वह दोनों का अङ्ग है । कारण, "चिकीर्षया संयोगात्" = श्रुति में उसको चिकीर्षित विषय के रूप में उल्लेख किया गया है । प्रधानकर्म ही चिकीर्षित होता है, इसीलिए, चिकीर्षा के साथ सम्बन्ध होने से सौमिकी वेदि प्रधानार्थ है ।

"चिकीर्षया संयोगात्" = चिकीर्षा के साथ संयोग अर्थात् सम्बन्ध होने से सौमिकी वेदि प्रधान के लिए हैं। इस स्थल में पूर्व सूत्र का "प्रधानस्य" इस अंश की अनुवृत्ति होती है ॥ ७ ॥ इति पूर्वपक्ष।

## [४] तथाऽभिधाने ॥ ८ ॥ पू० ॥

**शा० भा०—स्तो दर्शपूर्णमासौ तत्र श्रूयते, चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोता अमावास्याम्, इति। तत्र संदेहः—किमङ्गप्रधानार्थमभिमर्शनम्, उत प्रधानार्थमिति। किं तावत्प्राप्तम्? प्रधानार्थमिति। प्रधाननामधेयं च तत् पौर्णमास्यमावास्येति च। तस्मात्प्रधानस्याभिमर्शनमिति ॥ ८ ॥ पूर्व० ॥**

त० वा०—संयोगादिति वर्तते। पौर्णमास्यमावास्याशब्दयोः प्रधानमात्र-वचनत्वात्-आनर्थक्यात्तदङ्गेषु इत्येवमवतरतोः प्रधानहविःष्वेव केवलेषु प्रवृत्तिः। तस्माच्चतुर्होत्रा मन्त्रेण, पञ्चहोत्रा च प्रधानहविर्मात्रमभिमृष्टव्यम् ॥ ८ ॥

**अथ अभिमर्शनस्याङ्गप्रधानोभयाङ्गत्वमधिकरणम्**

न्या० सु०—पूर्वचिन्तापूर्वोत्तरपक्षयोरुत्तरचिन्तापूर्वोत्तरपक्षहेतुत्वाभावादन्तराचिन्ता-वान्तरायोगमाशङ्क्य चिन्तान्तरस्याप्यङ्गैः सह प्रधानानां सामानासमानविध्यचिन्तारूप-त्वान्न्यायाधीनत्वेन च वचनाधीनदीक्षादक्षिणचिन्तावैलक्षण्यादत्रैवान्तराले कार्यत्वे सति पश्चात्करणे संयोगपदानुषङ्गायोगात्प्रधानस्येति च स्वामियुक्ताधिकरणसिद्धान्तप्रतिज्ञार्थस्य पदस्य चिकीर्षया चेति चकारेण पूर्वचिन्तापूर्वपक्षप्रतिज्ञार्थत्वेनानुकृष्टस्यात्रानुषङ्गायोगा-त्सूत्रगौरवापत्तेः पदद्वयानुषङ्गसिद्धयास्तत्र लाघवायान्तराचिन्तान्तरोपपत्ति सूचयितुमाह—**संयोगादिति**। उपलक्षणार्था संयोगप्रदानुषङ्गोक्तिः। यथाविधेन प्रधानवाचनाविधानेन प्रधानार्थत्वं भवति तथाविधेन मन्त्रयोः संयोगात्प्रधानस्याङ्गं मन्त्राविति एवं पूर्वपक्षसूत्र-व्याख्यार्थं किं तावदित्यादिभाष्यं व्याचष्टे—**पौर्णमासीति**। 'पृथिवी होता द्यौरध्वर्युः रुद्रोग्नीद्वृहस्पतिरुपवक्तेति चतुर्होता अग्निर्होता अश्विनाध्वर्यू, त्वष्टाग्नीत् मित्र उपवक्तेति पञ्चहोता ॥ ८ ॥

भा० प्र०—पूर्वाधिकरण को समाप्त न कर पूर्वाधिकरण के पूर्वपक्ष के अनुसार ही उस दृष्टान्त में ही अन्य एक अधिकरण का पूर्वपक्ष करने के लिए कहा गया है "तथा अभिधानेन"। इस स्थल में पूर्व सूत्र का "संयोगात्" इस आशंका ही अनुषङ्ग होगा। दर्शपूर्णमास प्रकरण में कहा गया है कि "चातुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रा अमा-वस्याम्" पौर्णमासी में चतुहोतृ आदि मन्त्र में एवं अमावस्या के पञ्चहोतृ आदि मन्त्र में अभिदर्शन करना चाहिए। क्या यह केवल प्रधान का ही उपकारक है अथवा प्रधान एवं अङ्ग सभी का उपकारक है—यही संशय है।

इसमें पूर्वपक्षी का कहना है कि "तथा अभिधानेन" = अभिधान अर्थात् प्रधानवाची शब्द के साथ सम्बन्ध होने से वह भी प्रधान का ही उपकारक होगा, कारण,

चतुर्होत्रा पौर्णमासीम् इत्यादि वाक्य में पौर्णमासी एवं अमावस्या शब्दों के साथ उसका सम्बन्ध है और पौर्णमासी एवं अमावस्या ही प्रधान है।

"तथा" = इस प्रकार अर्थात् पूर्वोक्त के समान, "अभिधानेन" = अभिधान अर्थात् नाम के साथ प्रधानवाचक शब्द के साथ सम्बन्ध होने से ॥ ८ ॥ इति पूर्वपक्ष।

**तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात् ॥ ९ ॥ सि० ॥**

**शा० भा०—स्थितादुत्तरम्। यदुक्तं प्रधानं चिकीर्षितं, नाङ्गानि। तस्मात्प्रधानस्य वेदिरिति। तन्न। तद्युक्ते फलश्रुतिः। साङ्गात्फलं श्रूयते। तस्मात्साङ्गं चिकीर्षितम्। यद्यप्यङ्गानि न चिकिर्षितानि, तथाऽपि वेद्यां कर्तव्यानि। अन्यथा न साङ्गं वेद्यां कृतं भवति ॥ ९ ॥ निरुक्ताधिकरणसिद्धान्तः ॥ ३ ॥**

**इति तृतीयं सौमिकवेदेः अंगप्रधानोभयार्थाधिकरणम्।**

त० वा०—वेदेर्देशविशेषात्मकत्वाद्देशकालयोश्च साङ्गप्रधानप्रयोगविषयत्वावधारणात् सर्वार्थत्वम् योऽपि चिकीर्षासंयोगः, सोऽपि फलप्राप्तेः प्रयोगाधीनत्वात् तद्विषय एव ज्ञायते। तस्मात्साङ्गप्रधानार्थेयमित्यवधारणादङ्गार्थाऽपि स्यात्। एवं च सति अग्नीषोमीयादिविकारेषु निरूढपश्वादिषु कर्तव्या ॥ ९ ॥

( इति सौमिकवेदेरङ्गप्रधानार्थताधिकरणम् ॥ ३ ॥ )

न्या० सु०—स्थितादित्यादिभाष्येणानुकृष्टया प्रधानोक्त्या स्वार्थप्रतियोगितयोपस्थापितस्याङ्गस्य तच्छब्देन परामर्शाज्ज्योतिष्टोमेनेतितृतीयाश्रुत्या करणीभूतस्य ज्योतिष्टोमस्य फलभावनान्वयोक्तेः करणत्वस्य चापेक्षिकसाधकत्वातिशयाख्यसाधकतमत्वरूपत्वेनापकृष्टसाधकाङ्गापेक्षत्वादङ्गयुक्तेप्रधाने फलश्रुतिः तस्मादङ्गस्य साक्षात्फलानन्वयेऽपि फलान्वयिप्रधानद्वारा फलान्वयात्सर्वस्य प्रधानस्याङ्गस्य च चिकीर्षा संभवतीति चिकीर्षासंयोगस्याङ्गव्यावृत्तिहेतोरङ्गेऽपि सद्भावादव्यावर्त्तकत्वोक्त्यर्थत्वेन सूत्रं व्याख्याय, अचिकीर्षितत्वेप्यङ्गानामव्यावृत्युक्त्यर्थं यद्यपीत्यादि भाष्यमुत्सूत्रत्वादयुक्तमाशङ्क्य, चिकीर्षासंयोगस्य परिमाणस्तुल्यर्थत्वेन वेदेश्चिकीर्षितार्थत्वे प्रामाण्याभावाल्लिङ्गमात्रत्वावगतेः प्रधानमात्रार्थत्वपूर्वपक्षनिरासार्थेन तुशब्देन प्रयोगाङ्गत्वाख्यो न्याय एव मुख्यसिद्धान्तयुक्तित्वेनाक्षिप्त इति सूचनायादौ यद्यपीत्याद्येव भाष्यं व्याख्यातुमाह—वेदेरिति। सूत्रव्याख्यार्थमाद्यं भाष्यं व्याचष्टे—योऽपीति। सिद्धान्तप्रयोजनमाह—एवं च सतीति ॥ ९ ॥

भा० प्र०—पूर्वाधिकरण का सिद्धान्त प्रदर्शन करते हुए कहा गया है "तदयुक्ते तु फलश्रुतिः" इत्यादि। पूर्वपक्षी का कहना है कि श्रुति में चिकीर्षा का उल्लेख होने से सौमिकी वेदि केवल प्रधान के लिए है, किन्तु, यह सङ्गत नहीं है, कारण, "सर्वचिकीर्षा स्यात्" अङ्ग एवं प्रधान सभी कर्म चिकीर्षा के ही विषय है—चिकीर्षित होते हैं। कारण, "तद्युक्तेः फलश्रुतिः" श्रुति से अवगत होता है कि अङ्गयुक्त प्रधान से ही फल उत्पन्न होता है, किन्तु, अङ्ग को छोड़कर केवल प्रधान का अनुष्ठान करने पर

श्रुति कथित फल नहीं मिलता है। इसीलिए, केवल प्रधान ही जब चिकीर्षित नहीं है, वरन् अङ्ग एवं प्रधान दोनों से ही फल उत्पन्न होता है। तब सौमिकी वेदि ही केवल प्रधानार्थ नहीं है, किन्तु, अङ्ग एवं प्रधान दोनों के लिए है।

"तद्युक्ते" = अङ्गयुक्त प्रधान में, "तु" = पूर्वपक्ष के निरास के लिए है, "फलश्रुतिः" = फल का उल्लेख है, "तस्मात्" = इसलिए, "सर्वचिकीर्षा स्यात्" = अङ्ग एवं प्रधान सभी के सम्बन्ध में चिकीर्षा होगी ॥ ९ ॥

इति तृतीय सौमिक वेदि का अङ्ग प्रधानार्थकता अधिकरण।

## गुणाभिधानात्सर्वार्थमभिधानम् ॥ १० ॥ सि० ॥

शा० भा०—यदुक्तं-प्रधाननामत्वात्पौर्णमासीशब्दस्य, अमावास्याशब्दस्य च प्रधानहविषामभिमशर्मनमिति। नैतदेवम्। अङ्गहविषामप्यभिमर्शनं स्यात्। कुतः? गुणाभिधानात्। गुणोऽभिमर्शनमित्यभिधानं भवति। कतमत्तदभिधानम्। यद्गुणोऽभिमर्शनमिति ब्रूते। पौर्णमासीम्, अमावास्यामिति च द्वितीयान्तं पौर्णमास्यर्थमभिमर्शनं कर्तव्यम्, अमावास्यार्थमभिमर्शनं कर्तव्यमिति। अतो यत्र यत्र क्रियमाणं पौर्णमास्याममास्यायां वोपकरोति, तत्र तत्र कर्तव्यम्। यद्यत्पौर्णमास्याममावास्यायां वाऽभिसंबध्यते, साक्षात्, प्रणाड्या वा, तत्र तत्र क्रियमाणं तयोरुपकरोति। तस्मात्प्रधानहविषामङ्गहविषां च कर्तव्यमिति ॥ १० ॥ सि० ॥

इति चतुर्थं अभिमशर्मनस्याङ्गप्रधानोभयाङ्गताधिकरणम् ॥ ४ ॥

त० वा०—द्वितीयया यस्माद् गुणभूतमभिमर्शनं विज्ञायते, तस्मात्सर्वार्थमित्यसंबद्धम्। स्थित एव गुणत्वे, तद्विशेषचिन्तेयं प्रस्तुता। सुतरां च प्रातिपदिकार्थानुसारिणा, द्वितीयार्थेन प्रधानहविर्मात्रगुणत्वं प्राप्नोति। तस्मादनुपपत्तिरेव। यच्च पौर्णमास्यर्थममावास्यार्थमिति चोक्तम्। तदपि पूर्वपक्षमेव साधयति।

तेनैवं वक्तव्यम्। 'पौर्णमासीमभिमृशेत्' इत्यत्र कालवार्त्तिकमतम् कर्मतत्समुदायानामनभिमृष्टव्यत्वात् पौर्णमासीमिति गौणेन भवितव्यम्। तत्र प्रकृतिप्रत्ययार्थयोर्द्यपि प्रत्यायर्थस्य प्राधान्यात्प्रातिपदिकं गौणमित्यापद्यते, तथाऽप्यत्र तावताऽप्यभिमृष्टव्यविशेषानवगमात्समस्तस्रुवादीविषयसंशयोपप्लवेसति, विशेषोऽन्यत एव लब्धव्य इति साकाङ्क्षत्वादसंदिग्धार्थपरिग्रहार्थे प्रथमं प्रतीतत्वेन च प्रातिपदिकार्थे मुख्यमाश्रित्य विभक्तिः सप्तम्यर्थेऽवकल्पते पौर्णमास्यामिति। तदेव चात्राऽऽकाङ्क्षितम्, आसन्नहविरधिकारविधिनाऽभिमृष्टव्यविशेषस्यावधारितत्वात्। अतः कालद्वारेण, प्रयोगद्वारेण वा व्यवस्थार्थमेवेदं श्रवणमिति हविर्मात्राभिमर्शनम्। अथापि पौर्णमास्यादिशब्देन हविर्लक्ष्यते, तथाऽपि तदुपकारमात्रलक्षणात्सर्वार्थत्वसिद्धिः ॥ १० ॥

( इति चतुर्थं अभिमर्शनादेरङ्गप्रधानसाधारणहविर्मात्रार्थताधिकरणम् ॥४॥ )

न्या० सु०—यत्पौर्णमासीममावास्यामिति चाभिधानं, तत्सर्वेषामङ्गप्रधानहविषां मन्त्रविशिष्टाभिमर्शनविध्यर्थं द्वितीययाऽभिमर्शनस्य पौर्णमास्यमावास्ये प्रतिगुणत्वाभिधानादित्येवं द्वितीयाधिकरणसिद्धान्तोक्त्यर्थत्वेन सूत्रव्याख्यार्थं यदुक्तमित्यादिभाष्यमाक्षिपति—द्वितीययेति। स्थित एवेत्यनेन हेतुव्याख्यायाः सिद्धान्तासाधकत्वं सुतरां चेत्यनेन च पूर्वपक्षापादकत्वमुक्त्वा, यच्चेत्यनेन हेतूपपादनभाष्यस्य स्फुटं पूर्वपक्षसाधकतोक्ता। कर्म्मत्ववाचिन्या द्वितीयया कारकत्वगुणयोगेन सप्तम्यर्थाधिकरणत्वाभिधानात् अनेनाभिमर्शनस्यैदमर्थ्यानवगतेः आसन्नानि हवींष्यभिमृशतीति विध्यन्तरात्सर्वार्थस्याभिमर्शनस्य व्यवस्थितमन्त्रविध्यर्थं पौर्णमास्यमावस्याभिधानमित्येवं स्वयं सूत्रं व्याख्यातुमाह—तेनेति।

मन्त्रयोरप्यप्राप्तत्वाद्व्यवस्थितमन्त्रविध्यर्थत्वं व्यवस्थार्थोक्त्यर्थः। द्वितीयया प्रधानस्य व्याप्यत्वोक्तावभिमर्शनानाधारत्वेन साक्षाद्व्याप्यत्वायोगात्प्रक्षेपांशेन प्रधानस्य हविर्द्धर्मत्वाद्धर्म्मधर्म्मिणोरत्यन्तभेदाभावेन हविषोभिमर्शनव्याप्यत्वात्तद्धर्म्मस्य प्रधानस्य व्याप्यत्वसिद्धयं प्रधानहविरेवाभिमृश्येत। एवं तु यथाविहितानुष्ठानापत्तेर्व्याप्यत्वेष्टतमत्वसमुदायवाचिन्या द्वितीयायास्तदेकदेशेष्टतमत्वमात्रे वृत्तिमभ्युपेत्याभिमर्शनस्य प्रधानप्रत्याधेयत्वाख्यव्यापकत्वानपेक्षाङ्गाख्यगुणत्वमात्राभिधानादुपकारिस्थितत्वमात्रेण चोपकारित्वोपपत्त्याङ्गत्वनिर्वाहादङ्गहविषामपि च प्रधानोपकारित्वादिश्येत हेतुव्याख्यार्थत्वेन भाष्यं समाधातुमाह—अथापीति ॥ १० ॥

इति दीक्षादक्षिणयोः प्रधानार्थत्वमधिकरणम्।

भा० प्र०—चतुर् होत्रादि मन्त्र में जो अभिमर्शन किया जाता है, पौर्णमासी आदि प्रधान के साथ सम्बन्ध होने से वह प्रधानार्थ है इस प्रकार का जो पूर्वपक्ष किया गया है। उसके उत्तर में सिद्धान्ती का कहना है कि "सर्वार्थमभिधानम्" = चतुर्होत्रादिमन्त्र में जो अभिमर्शन है, वह केवल प्रधान के लिए नहीं है, किन्तु सभी के लिए है, अङ्ग और प्रधान दोनों का धर्म है। कारण, "तदभिधानात्" = पौर्णमासी एवं अमावस्या ये दो शब्द इस स्थल में कर्मवाचक नहीं हैं, वरन्, काल बोधक है और इस स्थल में सप्तमी के अर्थ में द्वितीया है—यह जानना होगा।

"गुणाभिधानात्" = गुण का अर्थात् अङ्गाभूत काल का अभिधान अर्थात् उल्लेख होने से "अभिधानम्" = उक्त अभिदर्शन, "सर्वार्थम्" = अङ्ग एवं प्रधान सभी के लिए है ॥ १० ॥

इति चतुर्थ अभिमर्शन आदि का अङ्गप्रधानासाधारणहविर्मात्रार्थाधिकरण।

अथ पञ्चमं दीक्षादक्षिणयोः प्रधानमात्रताधिकरणम् ॥ ५ ॥

## [५] दीक्षादक्षिणं तु वचनात्प्रधानस्य ॥ ११ ॥ सि० ॥

शा० भा०—ज्योतिष्टोमे दीक्षाः श्रूयन्ते—तिस्रो दीक्षा इति। तथा दक्षिणाः श्रूयन्ते। तस्य द्वादशशतं दक्षिणा, इति। तत्र संदेहः—किं दीक्षा-

दक्षिणमङ्गप्रधानार्थम्, उत प्रधानार्थमिति । किं प्राप्तम् ? पुरुषाणामङ्गप्रधानार्थत्वाद्दीक्षादक्षिणस्याङ्गप्रधानार्थतेति । एवं प्राप्ते ।

ब्रूमः—दीक्षादक्षिणं प्रधानस्य । कुतः ? वचनात् । वचनं हि भवति । 'दीक्षाः सोमस्य, दक्षिणाः सोमस्य, इति । न हि वचनस्यातिभारो नाम क्वचित् । तस्माद्दीक्षादक्षिणं वचनात्सोमस्येति ॥ ११ ॥

त० वा०—'फलसंयोगात्तु स्वामियुक्तं प्रधानस्य' इत्यनेनैव गतार्थत्वाद्दीक्षाणामनुदाहरणत्वम् । अन्ये तु समर्थयन्ते । सर्वेषु सोमक्रयादिषु दीक्षितशब्देन विनियोगो दृश्यते । दीक्षाश्च दीक्षितत्वसिद्ध्यर्थाः । तच्च दीक्षितत्वमुपादीयमानत्वात्तत्र तत्र गुणत्वेन विवक्षितम् । अतोऽङ्गप्रधानार्थत्वप्रसक्तिः । दक्षिणानामृत्विगानमनार्थत्वादानमनस्य च साहाय्योपादित्सया प्रयोगार्थता । तस्माच्चिकीर्षान्यायेन साङ्गप्रधानप्रयोगविषयत्वमिति सर्वार्थत्वप्रसक्तिः । अपि च प्रत्यक्षमेवैतद् दृश्यते दक्षिणोपात्ता ऋत्विजोऽङ्गान्यपि कुर्वन्ति । इतरथा हि प्रधानमात्रमेव तत्परिक्रीताः कुर्युः । न च तावन्मात्रार्थे यजमानस्यैतैः परिक्रीतैः प्रयोजनम् । अतो यद्यत्परिक्रीताः करिष्यन्तीत्यवधार्यते, तस्मै दक्षिणा । एवं च कर्तृतन्त्रत्वाभिधानमेकादशे वक्ष्यते । तस्मात्सर्वार्थत्वमिति प्राप्ते ।

अभिधीयते 'दीक्षाः सोमस्य' 'दक्षिणाः सोमस्य' इति वचनात्प्रधानार्थता । यस्तु दीक्षितविनियोगोऽङ्गेषु स पुरोडाशकपालादिवदप्रयोजकलक्षणापत्तेः प्रधानप्रयुक्तस्यैवेति ज्ञायते । दक्षिणाश्च प्रधानार्थाः सत्यः प्रसङ्गादङ्गानामुपकुर्वन्तीति वक्ष्यामः ॥ ११ ॥

न्या० सु०—दीक्षाया अपि वपनादिवत्स्वामिसंस्कारत्वाद्दीक्षोदाहरणं गतार्थत्वेनाक्षिपति—फलेति । 'दीक्षितः सोमं क्रीणाति, यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इत्यादौ दीक्षासंस्कृतस्वामिविनियोगाद्दीक्षायाः सर्वार्थत्वशङ्कोपपत्त्योदाहरणत्वं समर्थयन् पूर्वपक्षमाह—अन्ये त्विति । दक्षिणोदाहरणे पूर्वपक्षमाह—दक्षिणानामिति । अनेन च स्वाम्याख्यस्य पुंसः सोमक्रयादावङ्गेऽपि दीक्षितविनियोगेनर्त्विगाख्यानां च पुंसां वेदिवत्प्रयोगाङ्गत्वन्यायेनाङ्गप्रधानार्थत्वादित्येवं भाष्यं व्याख्यातम् । प्रसक्त्युक्त्या वचनस्य न्यायदीक्षितविनियोगाभ्यामुभयार्थत्वे प्राप्तेऽङ्गार्थत्वनिवर्त्तकत्वात्त्रिदोषपरिसङ्ख्यार्थत्वापत्तेर्विधित्वायोगात्तस्य संस्तुतस्य नवतिशतं स्तोत्रिया इत्यादिवद्व्यवहितान्वयानुवादत्वावगतेर्वचनाविरोधः सूचितः ।

याज्ञिकाचारेण न्यायमुपोद्बलयितुमाह—अपिचेति । प्रधानमात्रस्य च स्वयमनुष्ठातुं शक्यत्वात्तावन्मात्रार्थपरिक्रयानर्थक्यापत्तेरपि तस्य सर्वार्थताऽवसीयत इत्याह—नचेति । अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्यादेकदेशत्वमि ११-२-७त्येकादशाधिकरणसिद्धान्ते च य एव प्रधाने देशकालकर्त्तारः अतएवाङ्गेष्विति यदङ्गप्रधानेषु कर्तृतन्त्रत्वा-

भिधानं, तद्दक्षिणायाः सर्वार्थत्वे सत्युपपत्स्यते, नान्यथेत्याह—एवं चेति। एवकारार्थे चकारः। पूर्वपक्षमुपसंहरति—तस्मादिति।

न्यायस्य स्वयमप्रमाणतयाऽर्थापत्तिकल्प्यवचनापेक्षत्वेन दीक्षितविनियोगस्यापि चार्थापत्तिकल्प्यवचनापेक्षत्वेन विप्रकर्षात्ततः प्राक् प्रवृत्तस्य वचनस्य फलतः परिसंख्यात्वेऽपि स्वतोऽप्राप्तविधित्वात्त्रिदोषत्वानापत्त्याशयेन सिद्धान्तोक्तयर्थतया सूत्रं व्याचष्टे—इतीति।

अङ्गेषु दीक्षितविनियोगस्य प्रधानप्रयुक्तदीक्षितविशेषणं दीक्षां प्रति प्रत्ययार्थदीक्षितत्वसिद्धयर्थाभिधानप्रकृत्यर्थदीक्षाकर्म्मत्वेन पुरोडाशार्थाभिधानं कपालं प्रति तत्कर्म्मत्वेन तुषोपवापस्येवाप्रयोजकत्वाद्दीक्षाया। सर्वार्थत्वकल्पनेऽपि निरूढपशवादावनुष्ठानानापत्तेः सर्वार्थत्वकल्पनानर्थप्रसङ्गात्तत्कल्पनाऽयुक्तेत्याशयेनाह—यस्त्विति। भृतित्वाच्च परिक्रय १२.१.३२इति द्वादशाधिकरणे च सोमाङ्गेष्विष्टिविकारेष्वन्वाहार्यनिवृत्त्यै प्रधानार्थानामेव दक्षिणानां प्रसङ्गेनाऽङ्गोपकारित्वस्य वक्ष्यमाणत्वात्प्रधानमात्रार्थत्वेऽपि तत्परिक्रीतानामृत्विजामङ्गेषु यजमानस्य च तत्परिक्रये प्रवृत्तिः कर्तृतन्त्रत्वोक्तिश्चोपपत्स्यत इत्याह—दक्षिणाश्चेति ॥ ११ ॥

भा० प्र०—श्रुति में ज्योतिष्टोम प्रकरण में "तिस्रो दीक्षाः," "तस्य द्वादशशतं दक्षिणा" इत्यादि वचन में दीक्षा एवं दक्षिणा उपदिष्ट है, वह क्या अङ्ग और प्रधान दोनों के लिए है अर्थात् दोनों का ही उपकारक है, अथवा केवल प्रधान के ही लिए है—यह संशय है। इसमें पूर्वपक्षी ने कहा है कि दीक्षा एवं दक्षिणा अङ्ग और प्रधान दोनों के साथ सम्बन्ध युक्त है। कारण, "सोमस्य दीक्षा", "सोमस्य दक्षिणा", इन वाक्यों में इनका सोम के साथ साक्षात् सम्बन्ध अवगत होता है और वह सोम अङ्ग के साथ सम्बन्धयुक्त है, अतः, वह भी अङ्ग के साथ परम्परा सम्बन्ध विशिष्ट होने से अङ्ग और प्रधान दोनों के लिए ही होगा।

इसके समाधान में सिद्धान्ती का कहना है कि "दीक्षादक्षिणं तु वचनात् प्रधानस्य", "दीक्षा सोमस्य, "दक्षिणा सोमस्य" ये दो प्रकार के वचन हैं, वे प्रधान जो सोम उसके साथ ही सम्बन्ध युक्त हैं। यदि कहा जाय कि सोम के द्वारा अङ्ग के साथ भी सम्बन्ध होगा, इस प्रसङ्ग में कहा जा सकता है कि साक्षात् सम्बन्ध सम्भव होने पर परम्परा सम्बन्ध स्वीकार करना अनुचित है। अतः अङ्ग के साथ सम्बन्ध नहीं होगा, किन्तु, प्रधान के साथ ही सम्बन्ध होगा।

"दीक्षादक्षिणम्" = दीक्षा एवं दक्षिणा, "तु" = पूर्व अधिकरण के सम्बन्ध का विच्छेदक सूचक है, अर्थात् अधिकरणान्तर सूचक है, "वचनात्" = वचन के अनुसार "प्रधानस्य" = प्रधान कर्म का ही उपकारक है ॥ ११ ॥ इति सिद्धान्त।

## निवृत्तिदर्शनाच्च ॥ १२ ॥

शा० भा०—निवृत्तिं दीक्षाणां दर्शयति। कथम्। अध्वर्यो यत्पशुनाऽ-

याक्षीरथ काऽस्य दीक्षेति, यत् षड्ढोतारं जुहोति, साऽस्य दीक्षे'ति। असत्यामपि दीक्षायां वचनं भवति। तस्मादङ्गानां दीक्षादक्षिणमिति ॥ १२॥ युक्तिः॥

इति पञ्चमं दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ॥ ५ ॥

त० वा०—निरूढपशौ च षड्ढोतृहोमेन दीक्षानुग्रहं वदन्नप्राप्तिं दर्शयति। सर्वार्थत्वे च स्यादेव दीक्षेति नान्नेनानुगृह्येत। ननु चानङ्गत्वेऽप्यनुग्रहवचनमनाकाङ्क्षितत्वाद्व्यर्थमेव। नैष दोषः। प्रकृतौ परप्रयुक्तोपजीवनात्तत्कृत उपकार आसीदिति, अप्रयोजकत्वात्तदभावे सति वैगण्यमिवाशङ्क्यते, तत्रानुग्रहवचनमुपपत्स्यते ॥ १२ ॥

( इति पञ्चमं दीक्षादक्षिणयोः प्रधानमात्रार्थताधिकरणम् ॥ ५ ॥ )

न्या० सु०—सूर्यं ते चक्षुषी, वातं प्राणं, द्यां पृष्ठम्, अन्तरिक्षमात्मा अङ्गैर्यज्ञं पृथिवीं शरीरैरिति षड्ढोतृमन्त्रकेण होमेन निरूढपशौ दीक्षानुग्रहोक्ते दीक्षाननुष्ठानाख्यनिवृत्तिदर्शनात्सर्वार्थत्वे च दैक्षाङ्गत्वात्, तद्विकारे निरूढपशौ दीक्षाप्राप्तेस्तन्निवृत्तिदर्शनायोगप्रसङ्गान्न सर्वार्था दीक्षेत्येवंलिङ्गदर्शनायोगप्रसङ्गान्न सर्वार्था दीक्षेत्येवंलिङ्गदर्शनसूत्रं व्याचष्टे—निरूढेति। अप्राप्त्युक्त्याऽननुष्ठानार्थता निवृत्त्युक्तेः सूचिता। दीक्षायाः पश्वनङ्गत्वे तज्जन्यानुग्रहणाकाङ्क्षणात्तद्वचनमिथ्यात्वापत्तेर्विपरीतसाधकत्वं लिङ्गस्याशङ्कते—ननु चेति। दैक्षे सोमप्रयुक्तदीक्षासंस्कृतस्वामिकर्तृकत्वोपजीवनेनानुषङ्गिकदीक्षाकृतोपकारनिष्पत्तेस्तद्विकारनिरूढपशौ तत्कृतोपकाराभावे, वस्तुतो वैगुण्याभावेऽपि होमस्तुत्यै वैगुण्यमुपचर्याऽनुग्रहो क्त्युपपत्तिमाह—नैष इति। इवशब्देनौपचारिकतोक्ता ॥ १२ ॥

इति अन्तर्वेदेर्यूपानङ्गत्वमधिकरणम्।

भा० प्र०—दीक्षा और दक्षिणा अङ्ग के साथ सम्बन्धयुक्त नहीं है इसका अन्य कारण भी है "निवृत्तिदर्शनात् च", अग्नीषोमीय की विकृति निरूढ़ पशुबन्ध है उसमें "षड्ढोतारं मनसा अनुस्मृत्य जुहोति सैवास्य दीक्षा" इस श्रुतिवाक्य में होम को ही दीक्षा कही गई है, अतः, उसमें जो प्रकृत दीक्षा का अभाव बोधित होता है, वह सङ्गत नहीं होता यदि दीक्षा सोम याग के अङ्ग की भी अङ्ग होती, कारण, अग्नीषोमीय पशु सोम याग का अङ्ग है और वह निरूढ़ पशु की प्रकृति है, अतः दीक्षा यदि प्रकृतिभूत अग्नीषोमीय पशुयाग का अङ्ग है तब उसकी विकृति जो निरूढ पशुयाग उसमें भी दीक्षा के अतिदेश के कारण प्राप्त होवे से अङ्ग है। अथ च "षड्ढोतारम्" इत्यादि वाक्य से अवगत होता है कि निरूढ़ पशु में दीक्षा की निवृत्ति ( अभाव ) होता है, तब सोमयाग के सादृश्य के अनुसार दीक्षा का निदर्शन किया जाता है। उसको रूपक मानने से वह अर्थवाद मात्र है।

"निवृत्तिदर्शनात् च" = निवृत्ति अर्थात् दीक्षानिवृत्ति दृष्ट होवे से भी यह अङ्ग के साथ सम्बद्ध नहीं है ॥ १२ ॥

इति पञ्चम दीक्षा दक्षिणा का प्रधानामात्रार्थता अधिकरण।

अथ षष्ठमं मन्तर्वेदिबर्हिर्वेदिपदलक्षितदेशविशेषस्य यूपमानांगताधिकरणम् ।

## [६] तथा यूपस्य वेदिः ॥ १३ ॥ पू० ॥

शा० भा०—अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्र यूपं प्रकृत्य श्रूयते, वज्रो वै यूपो यदन्तर्वेदि मिनुयात्तन्निर्दहेत्, शर्द्बहिर्वेदि, अनवरुद्धः स्यात्, अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि, अनवरुद्धो[1] भवति, न निर्दहति, इति । तत्र संदेहः—किमन्तर्वेदि, इति यूपाङ्गभावेन वेदिरुपादिश्यते, उतार्धमन्तर्वेदि, अर्धं बहिर्वेदीति देशलक्षणार्थमुच्यत इति । कथं यूपाङ्गभावेन ? कथं वा देशलक्षणेति ? यदि यूपार्धस्य, वेद्यन्तरस्य च संबन्धो विवक्षितः, एवं वेदिसंबद्धो यूपः कर्तव्यः, ततो यूपाङ्गभावेन । अथ यस्मिन्देशे मीयमानस्यार्धं वेद्यभ्यन्तरे, अर्धं च बहिः, स देश उपदिश्यति । ततो देशलक्षणा । किं प्राप्तम् ? तथा यूपस्य वेदिः । यथा दीक्षादक्षिणं प्रधानस्य, तथा यूपस्य वेदिः । तथा यूपो मातव्यः, तथा मीयमानस्यार्धं वेद्यभ्यन्तरे भवति । एवं वेदिश्रुतिरप्यनुग्रहीष्यते, इतरथा वेदिशब्दो लक्षयेद्देशम् । श्रुतिलक्षणाविषये श्रुतिर्न्याय्या, न लक्षणा । तस्माद्यूपाङ्गभावेन वेदिर्निर्दिश्यते ॥ १३ ॥ पूर्व० ॥

त० वा०—'अधमंन्तर्वेदि मिनोति, अर्धं बहिर्वेदि' इति किमन्तर्वेद्येकदेशो यूपाङ्गत्वेन विधीयते, अथ बहिर्वेदिदेशमिश्रसंधिदेशमात्रं लक्षयतीति । ननु च पुरस्तात्सर्वार्थत्वमवस्थाप्येदानीमयुक्तो विचारः । स्थित एतस्मिन्नधिकरणे तद्द्रष्टव्यम् । यदि हि वाक्यसंयोगाद्यूपार्थता भवेत्, कुतस्तदा कैमर्थ्यविचारावसरः । स्थिते पुनर्देशलक्षणार्थत्वे तदर्थत्वातदर्थत्वे युज्यते । किं प्राप्तम् ? प्रकरणं बाधित्वा यूपस्य वाक्यसंयोगाद्भवितुमर्हति । लक्षणा हीतरथा स्यात् । न चान्तर्वेदिशब्दस्य श्रौतोऽर्थो न समवैति, यतो लक्षणां प्रतिपद्यते । तस्मात् 'इयति शक्ष्यामहे मै. सं.–३-८-८ इत्यपि सामान्यशास्त्रं यूपविषयमेवोपसंहृत्य वेदेर्यूपार्थत्वं प्रतिपत्तव्यम् ।

अथवा पूर्वेणाधिकरणेन स्थिते साङ्गज्योतिष्टोमार्थत्वे, किं यूपार्थत्वमप्यस्ति, नास्तीति विचार्यते । ननु सर्वार्थत्वादेव सिद्धं यूपार्थत्वमिति न विचारणीयम् । न तेन सिद्धं, यूपस्य पश्वङ्गत्वात् । ज्योतिष्टोमस्य हि साङ्गस्य वेदिः न पशोः । ननु च पशुरपि स्वाङ्गभूतामङ्गेभ्यो दास्यति । दद्याददि तस्य स्वमहिम्ना वेदिर्भवेत् । प्रधानद्वारेण त्ववतरन्ती तत्स्वरूपमात्र एवावतिष्ठते । प्राप्ते च वेदिकार्ये, अतिदेशेन प्राप्नुवन्तीं दार्शपौर्णमासिकीं वेदिं निराकृत्य, पश्वादिषु सौमिकी निविशते । सा प्राकृतेष्वेव वेदिकार्येषु विनियोक्तव्या । न चेदं यूपमानं

---

१. क० अवरुद्धो ।

प्राकृतं, यतो वेदिं लभेत् । तस्मादप्राप्तेर्यूपस्य लौकिक्येव देशबुद्ध्याऽन्तर्बहिर्वा माने प्राप्तेऽनेन वचनेनार्धस्यान्तर्वेदिर्नियम्यत इति प्राप्ते क्षामहो नि. तै. स. पा. अभिधीयते ॥ १३ ॥

न्या० सु०—किमर्थमिति संदेहभाष्यावयवाद्वाक्यैकदेशस्योवेत्यस्माच्च कृत्स्नस्योदाहरणत्वप्रतीतेः कियदुदाहरणमित्यवधारणापेक्षायामेकदेश एवोदाहरणम् । तस्य तु शुद्धस्याङ्गविधायित्वप्रतीतेरेकदेशान्तरसहितस्य च देशलक्षणार्थत्वप्रतीतेरेकत्रैकदेशोक्तिः, अन्यत्र कृत्स्नोक्तिरिति सूचयन् संदेहभाष्यं व्याचष्टे—अर्द्धमिति । चिकीर्षाधिकरणे वेदेः सर्वार्थत्वस्य स्थितत्वात्पूर्वपक्षायोगेन सन्देहमाक्षिपति—ननु चेति । चिकीर्षाधिकरणोक्ताङ्गविष्यपवादत्वेनानन्तरसङ्गत्यै तदनन्तरमेतत्कृतं तस्यत्वेतदधिकरणापेक्षत्वेनास्यैवार्थतः पूर्व्वत्वात्, तावत्सन्देहं समर्थायितुमाह—स्थित इति । पूर्वस्यैतदपेक्षत्वोपपादनायैतदधिकरणपूर्वपक्षे पूर्व्वचिन्तानुपपत्तिं, सिद्धान्ते चोपपत्तिमाह—यदीति ।

वेदेः प्रयोगाङ्गत्वेन प्रकरणात्साङ्गप्रधानार्थत्वावगतेस्तदन्तर्गतयूपाङ्गत्वस्यापि सिद्धेर्यूपाङ्गत्वेन विध्यानर्थक्यात्पूर्व्वपक्षायोगमाशङ्क्याद्धमेवान्तर्वेदीत्येवंयूपार्द्धातिरिक्ताङ्गप्रधानपरिसङ्ख्यार्थत्वेन विध्यर्थवत्तां सूचयन् पूर्व्वपक्षयति—किमिति । परिसङ्ख्यासूचनार्थं बाधित्वेत्युक्तम् । चिकीर्षाधिकरणसिद्धान्तसूत्रानुसारादियतीत्यस्य सर्वार्थत्वविधायित्वाभ्युगमे शास्त्रप्राप्तपरिसङ्ख्यायोगादुपसंहारार्थत्वेन पूर्वपक्षमाह—तस्मादिति । यथा दीक्षादक्षिणं प्रधानस्यैव तथा वेदिर्यूपस्यैवेत्यवधारणस्यापि तथाशब्देनाऽतिदेशं मत्वा सर्वार्थत्वसिद्धान्ताभावमारोप्य सन्देहपूर्व्वपक्षावुक्तौ । अङ्गविधिमात्रातिदेशे तु सर्वार्थत्वे स्थितेपि सन्देहपूर्वपक्षौ वक्तुमिति दर्शयन् सन्देहं तावदाह—अथवेति ।

सर्वान्तर्गतत्वाद्यूपार्थत्वस्यापि सिद्धेस्तादर्थ्यविधिपूर्वपक्षायोगात्सन्देहमाक्षिपति—नन्विति । यूपस्यानन्तर्गतत्वात्समर्थयते—न तेनेति । सौमिक्या वेदेः प्रयोगाङ्गत्वात्स्वाङ्गोपेतस्यैव चाङ्गस्य प्रधानोपकारित्वेनाङ्गाङ्गस्यापि प्रयोगान्तर्गतत्वात्प्रधानद्वारा साक्षात्प्राप्त्यभावेपि तदङ्गपशुद्वारा यूपस्य वेदिप्राप्ति शङ्कते—ननु चेति । साङ्गं ज्योतिष्टोमं वेद्यां कुर्यादित्येवं प्रधानप्रयोगविधिनैव पशौ वेदिप्राप्तेस्तदन्यथानुपपत्तिकल्प्ये पशुप्रयोगविधौ वेदिविशेषणायोगात्पशुद्वारा यूपस्य वेदिप्राप्तायोगमाह—वद्यादिति । साङ्गं पशुयागं कुर्यादित्येतावन्मात्रेपि पशुप्रयोगविधौ साङ्गस्यैव पशोरनुष्ठेयत्वाद्देशापेक्षायां प्रधानद्वारा वेदिदेशत्वावगतेर्यूपस्यापि पश्वङ्गत्वाविशेषाद्वेदिप्राप्तिमाशङ्क्य, पशावतिदेशप्राप्तस्य हविरासादनस्य प्रणीताग्निनयनस्य यजमानव्रतविमोकादेशश्च दार्शपौर्णमासिकवेदिकार्यस्य सौमिक्या प्रयोगाङ्गभूतया प्रसङ्गात्सिद्धेर्दार्शपौर्णमासिकवेदिबाधेन सौमिकवेदिनिवेशाद्यूपावटस्तरणबर्हिर्वदप्राकृतकार्यत्वाद्यूप एव वेद्यप्राप्तिमाह—प्राप्ते चेति । यूपाङ्गत्वेनाप्राप्तत्वाद्वेदेर्विधेयत्वोपपत्तेः पूर्वपक्षसम्भवेन सन्देहोपपत्तावप्यन्तर्बहिर्देशयोर्द्वयोरपि विधेयत्वापत्त्या वाक्यभेदापत्तेरविहितान्तरदेशस्यार्थान्तरस्य लौकिकदेशबुद्धया प्राप्तबहिर्देशानुवादाभ्युपगमेत्वन्तर्देशस्यापि प्राप्त्यविशेषादनुवाद्यत्वापत्तेः पूर्वपक्षानिर्वाहमाशङ्क्य, पक्षप्राप्तस्या-

प्यन्तर्देशस्यान्तर्वेद्येवेति नियमार्थं विध्युपपत्तेरर्द्धमात्रे चान्तर्देशनियमादर्द्धान्तरस्यार्थाद्बहिर्देशप्राप्तेरनुवादसम्भवाद्वाक्यभेदानापत्तेः पूर्वपक्षमुपपादयितुमाह—तस्माविदि ॥ १३ ॥

भा० प्र० —ज्योतिष्टोम के अग्नीषोमीय पशु का यूप के प्रकरण में श्रुति कहती है "अर्द्धमन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदि" अर्थात् वेदि के मध्य में जिसमें पड़ता है, उसमें आधा नामकर और बाहर में आधे का माप करे। इस स्थल में जो "अर्द्धमन्तर्वेदि मिनोति" यह जो कहा गया है कि वेदि के अंश विशेष ही यूप के अङ्ग के रूप में उपदिष्ट होता है अथवा इसके द्वारा वेदि और वेदि के बाहर के समीप का स्थान विशेष लक्षित होकर यूप के अङ्ग के रूप में विहित होता है—यही संशय है।

इसमें पूर्वपक्षी का कहना है कि "तथा यूपस्य वेदिः" =दीक्षा एवं दक्षिणा जैसे शास्त्र वचन होने से प्रधान का वचन के द्वारा ही विहित होता है, कारण, इसमें शब्द का मुख्यार्थ हो रहता है, किन्तु, अन्य पक्ष स्वीकार करने पर लक्षणा का अवलम्बन करना होगा, किन्तु, मुख्यार्थ के सम्भव होने पर लक्षणा को मानना पड़ता है। किन्तु, मुख्यार्थ सम्भव होने पर लक्षणा स्वीकार करना युक्ति सङ्गत नहीं है।

"तथा" = इस प्रकार अर्थात् दीक्षा और दक्षिणा जैसे वचनानुसार प्रधान का अङ्ग है वैसे ही, "यूपस्य वेदिः" =यूप की जो वेदि अर्थात् यूपावट का अर्थात् अन्तर्वेदि वह भी यूप का अङ्ग है ।। १३ ।। इति पूर्वपक्ष ।

## देशमात्रं वाऽशिष्येणैकवाक्यत्वात् ॥ १४ ॥ सि० ॥

शा० भा०—देशमात्रं वा वेदिशब्देन लक्ष्यते, न वेदिर्यूपाङ्गम्। कुतः? अशिष्येणैकवाक्यत्वात्। अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीत्येतेनैकवाक्यता या, सा शासितव्येन, यदि देशलक्षणा। अथ यूपाङ्गभावेन वेद्या निर्देशः, ततो न शासितव्यो बहिर्वेदिदेशो भवति। वेद्यां यूपस्याङ्गभावेनोपदिश्यमानायाम्, अर्धं बहिर्वेदीत्येतदुच्चार्यमाणं न कस्मिंश्चिदुपकारे वर्तते। अथ बहिर्वेदिदेशमपि यूपाङ्गभावेनोपदिशेत्, वाक्यं भिद्येत। तस्माद्यूपाङ्गभावेन वेद्या निर्देशे बहिर्वेदिशब्दः सर्वथा न शासितव्यः। यदि तु देशलक्षणा, ततो विशिष्टे देशे लक्ष्यमाणेऽवश्यवक्तव्यो बहिर्वेदिशब्दो भवति। अनुच्यमाने, वेद्यभ्यन्तरे यस्मिन्कस्मिंश्च प्रदेशे यूप इति गम्यते। अथ पुनर्बहिर्वेदिशब्दे श्रूयमाणे, यतस्मिन्देशे मीयमानस्यार्धमन्तर्वेद्यर्धं बहिर्वेदि, स देशो लक्षयितुमिष्टो भवति। स च बहिर्वेदिशब्देन विना न शक्यते लक्षयितुमित्यवश्यं शासितव्यो भवति। तस्माद्देशलक्षणेति ॥ १४ ॥ सि० अन्तर्वेदेर्यूपानङ्गताधिकरणम् ॥ ६ ॥

त० वा०—उभाभ्यामन्तर्वेदिशब्दाभ्यां मध्यदेशो लक्ष्यते, नाङ्गाङ्गिभावो विधीयते।

कुतः कृतार्थसंयोगे देशकालोपलक्षणम् ।
सर्वेष्विष्टं कृतार्थौ च वेदियूपाविहान्यतः ॥

अङ्गाङ्गिभावे हि यूपो वा वेद्यङ्गं भवेत्, वेदिर्वा यूपाङ्गम् । न चैकमप्युपपद्यते, निराकाङ्क्षत्वाददृष्टकल्पनाद्वाक्यभेदप्रसङ्गाच्च । न तावत्पशुबन्धव्यापृतस्य यूपस्य वेदिं प्रत्यवेक्षाऽस्ति । नापि कर्तृहविस्तदुपकरणधारव्यापृताया वेदेः सहस्रभागांशसंबंधिनि यूपेऽपेक्षा । न चान्यतरस्य दृष्टोपकारित्वमवकल्पते । किं चार्धं बहिर्वेदीत्यशिष्यं विध्यनुवादत्वासंभवात्त्वत्पक्षे । मत्पक्षे तु द्वाभ्यां विना देशविशेषोपलक्षणासंभवादवश्यं शासितव्यमेतत् । कथं ? समस्तस्य यूपस्यान्तर्बहिर्वा माने प्राप्ते 'अर्धमन्तर्वेदि' इति नियम्यते, द्वितीयार्धस्य पुनरप्यनियमप्रसक्तौ 'अर्धं बहिर्वेदि' इत्यपि विधातव्यम् । ततश्चानेकार्थत्वात्, वाक्यभेदो, मिनोताख्यातानुषङ्गक्लेशश्च प्रसज्यते । पाक्षिकस्य च नित्यवदनुवादोऽनर्थकः कल्पयितव्यः ।

ननु चार्धस्यान्तर्वेदिसंबन्धे विहिते, विध्यभावादर्धान्तरं बहिर्वेदि भविष्यति । भवेदेवं, यदि नित्यमन्तर्वेदि बहिर्वेद्येव वा यूपमानं प्रसक्तं स्यात् । समस्तान्तर्वेदिप्रसङ्गे हि सति अर्धपुनर्वचनसामर्थ्यात्परिसंख्यायेतरस्य बहिर्मानं गम्येत् । समस्तस्य वा बहिरेव प्रयङ्गेऽर्धस्याविहितमिति तदवस्थमर्धान्तिरमध्यवसीयेत् । न त्वेतदुभयमप्यस्ति । अनश्चेद्दृशमधारणमर्धमन्तर्वेद्येव न त्वर्धमेवान्तर्वेदीति । तथा सति चार्धान्तरमनियतावात्कदाचिदन्तरपि प्राप्नोतीति, न बहिर्भावः सिध्यतीति । ननु न यदि समस्तमन्तर्वेदि मिनोति, ततोऽर्धमन्तर्वेदीत्वेवं विधिर्नैव कुर्यात् । कथं न करोति, यदर्थं तत्तावन्नियमोऽन्तमिनोत्थेतावच्च विहितं, नेतरत्प्रतिसिद्धम् । तस्मादुभाभ्यां विशिष्टं एको देशोऽभिधीयत इत्येवमवाक्यभेदः ॥ १४ ॥

( इति षष्ठं अन्यर्वेदिबहिर्वेदिपदलक्षितदेशविशेषस्य यूपमानाङ्गताधिकरणम् ॥ ६ ॥ )

न्या० सु०—इतिसूत्रेण सिद्धान्तमाह—इतीति । अन्तर्वेदिशब्देनान्तर्देशस्य, बहिर्वेदिशब्देन च बहिर्देशस्य लक्षणाद्देशलक्षणापक्षेपि वाक्यभेदापत्तिशङ्कां, मातव्यदेशस्य लक्षणीयत्वात्कृत्स्नस्य च यूपस्य मातव्यत्वादन्तर्देशमात्रे च बहिर्देशमात्र वा कृत्स्नस्यामेयत्वाच्छब्दद्वयेनैकस्यैव कृत्स्नमातव्यदेशस्य लक्षणोक्त्या निरस्यन् देशमात्रं वेति सूत्रावयवं व्याचष्टे—उभाभ्यामपीति । पशुबन्धनकृतार्थतयान्यार्थत्वेनाशिष्येण यूपेन सह वेद्याः कर्त्रादिधारणकृतार्थतया चान्यार्थत्वेनाशिष्यया वेद्या सह यूपस्यैकवाक्योपादानावगतासंयोगादित्येवं सिद्धान्तहेतूक्तयर्थत्वेनाशिष्येणेतिसूत्रावयवं प्रश्नपूर्वं व्याख्यातुं, प्रत्यक्षं त्वर्थकर्म्मसोमस्येत्युत्तराधिकरणसिद्धान्तसूत्रे वक्ष्यमाणं कृतार्थसंयोगाख्यं देशलक्षणाहेतुमत्रापि

साम्याद्योजयितुमाह—कृत इति । दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेत् इत्यादिषु कृतार्थसंयोगेषु कैम्मर्थ्यानाकाङ्क्षणेनाङ्गोपदेशायोगात्कालोपलक्षणवद्देशोपलक्षणमपि युक्तमित्युक्ते वेदेः कर्त्रादिधारणार्थत्वावेदकस्येयतीतिवाक्यस्य यूपार्द्धमात्रे तेनोपसंहारस्योक्तत्वात् कृतार्थत्वायोगमाशङ्क्येयत्परिमाणाया वेदेः यूपार्द्धमानानौपयिकत्वेनादृष्टार्थत्वापत्तेः, अस्य चाङ्गोपदेशार्थत्व अर्द्धं बहिर्वेदीत्येस्याप्यङ्गोपदेशार्थत्वापत्त्या वाक्यभेदापत्तेरुपसंहारार्थत्वायोगसूचनार्थं कृतार्थौ चेत्युक्तम् ।

श्लोकतात्पर्यं व्याचष्टे—अङ्गाङ्गिभावे हीति । नैराकाङ्क्ष्यमुपपादयति—न तावदिति । अदृष्टकल्पनापत्तिमुपपादयति—किञ्चेति । अनेन च विधित्वस्याऽनुवादत्वस्य चानुपपत्तेरवाच्ये नार्द्धं बहिर्वेदीत्यनेनैकवाक्यत्वस्य प्रतीयमानस्यायोगप्रसङ्गादित्येवमकारप्रश्लेषेणाशिष्येणेतिसूत्रावयवव्याख्यार्थमथेत्यादिभाष्यं पक्षद्वयदोषसाम्यनिरासार्थं देशलक्षणायां शिष्येणैकवाक्यत्वादित्यकारश्लेषशून्यसूत्रावयवव्याख्यार्थादर्धमन्तर्वेदीत्यादिभाष्यात्पश्चात्पठितमप्यकारप्रश्लेषेण सूत्रावयवस्य पठितत्वात्तद्व्याख्यार्थमादौ व्याख्यातम् अकारशून्यसूत्रावयवव्याख्यार्थमर्द्धमित्यादिभाष्यं व्याचष्टे—मत्पक्षे त्विति ।

वेदेः प्रयोगाङ्गत्वात्सर्वाङ्गप्रधानार्थत्वे प्राप्ते यूपार्द्धव्यतिरिक्तपरिसङ्ख्यार्थं यूपार्द्धमात्रे वेद्युपसंहारार्थं चार्द्धमेवान्तर्वेदीति विहिते, अर्द्धं बहिर्वेदीत्यस्य प्राप्तानुवादत्वसम्भवेन वाक्यभेदानापादकत्वात्कथमशिष्यतेतिप्रश्नोत्तरत्वेन वेद्यामित्यादिभाष्यं व्याख्यातुं पृच्छति—कथमिति । पशावतिदेशप्राप्तदार्शपौर्णमासिकवेदिबाधेन विनिविष्टायाः सौमिक्या वेदेर प्राकृतकार्ये यूपे प्राप्त्ययोगेनार्द्धमेवेत्यवधारणायोगादर्धान्तरस्यानियमेनान्तर्बहिर्वा मानप्रसङ्गादर्द्धं बहिर्वेदीत्येतन्नित्यवदनुवादानुपपत्तेर्न नित्यान्तर्वेदिविधिस्तुत्युपकारे निवीतादिवद्वर्त्तते । ततश्चास्यापि विधित्वापत्तेर्वाक्यभेदापत्तिरित्येवं भाष्यं व्याचष्टे—समस्तस्येति । आख्यातानुषङ्गक्लेशो वाक्यभेदोक्त्याक्षिप्तत्वादुक्तः कस्मिंश्चिदितिभाष्यावयवसूचितस्यानर्थक्यस्य विधित्वानुवादत्वद्वयायोगाधीनत्वात्पश्चाद्व्याख्या । अर्द्धमेवेत्यवधारणाभावेपि यदङ्गत्वेन वेदिर्विहिता तत्रैवाहवनीयादिवद्विनियोज्यत्वेनाऽन्यत्राऽविनियोज्यत्वादर्द्धान्तरस्य परिशेषाद्बहिर्मानप्राप्तेर्नित्यवदनुवादोपपत्ति शङ्कते—ननुचेति । वेदित्वरूपेणान्यत्राविनियोज्यत्वेपि लौकिकदेशरूपेणान्यत्र विनियोगाविरोधात्समस्तस्य च यूपस्यान्तर्वेदि नित्यं मानाप्रसक्तेः परिसंख्योपसंहारयोरयोगान्नित्यं च बहिर्वेदिमानाप्रसक्तेरर्द्धान्तरस्यान्तर्वेद्यविधिनिमित्तबहिर्मानतादवस्थ्यायोगादनुवादायोगमाह—भवेदिति । सामान्यशास्त्रं यूपविषयमेवोपसंहृत्येतिपूर्वपक्षवार्त्तिकेनोपसंहारपक्षस्याप्युक्तत्वात्परिसंख्योक्तिरुपसंहारस्याप्युपलक्षणार्था । नित्यं बहिर्मानाप्राप्तावन्तर्मानाप्राप्तेरपि नित्यत्वायोगेनाप्राप्तविधित्वायोगान्नियमत्वापत्तेः, अन्तस्यापिच परिसंख्योपसंहारयोरिवावधारणापेक्षत्वादर्द्धमेवेत्यवधारणेनार्धान्तरस्य पारिशेष्याद्बहिर्मानप्राप्तेर्नित्यवदनुवादोपपत्तिमाशङ्क्य, आन्तर्वेद्येवेत्यवधारणमात्रेण नियमोपपत्तेरर्द्धमेवेत्यवधारणाभावादनुवादायोगमुपपादयितुमाह—अतश्चेति । 'वज्रो वै यूप' इतिवाक्यशेषादर्द्धं यूपमन्तर्वेदि मिनोतीत्यर्द्धस्य यूपविशेषणत्वावगमतोऽसम-

स्तयूपमानेत्वार्द्धविशेषणानर्थक्यापत्तेर्बलादर्द्धान्तरयावृत्त्यवगमादनुवादोपपत्तिं शङ्कते—ननु चेति । अर्द्धान्तरस्यान्तर्वेदिनियमाभावमात्रेणार्द्धविशेषणार्थवत्त्वोपपत्त्याशयेन परिहरति—कथमिति । अर्द्धमन्तर्वेदीत्यकारप्रश्लेषशून्यसूत्रावयवव्याख्याभाष्योपपादनार्थं यदित्वित्यादि-भाष्यशेषं तात्पर्यतो व्याचष्टे—तस्मादिति ॥ १४ ॥

इति हविर्द्धानस्य सामिधेन्यनङ्गत्वमधिकरणम् ।

भा० प्र०—पूर्वोक्त पूर्व पक्ष के उत्तर में सिद्धान्ती का कहना है कि "देशमात्रं वा" = इस स्थल में "अर्द्धमन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदि" इस श्रुति में अन्तर्वेदि एवं बहिर्वेदी के समीप सन्धि स्थल रूप स्थान विशेष में ही विहित में ही विहित है, किन्तु यूप के अङ्ग रूप में वेदि का अंश विशेष विहित नहीं है, कारण, "अशिष्येण एक-वाक्यत्वात्" = पूर्व पक्ष के मत में अर्द्धं बहिर्वेदि" यह अंश अशिष्य् अर्थात् अशासित-व्यह अविधेय होकर अनर्थं कहो जायेगा, और श्रुतिवाक्य को अनर्थक नहीं कहा जा सकता है, क्योंकि, यह अशिष्य अंश के साथ "अर्द्धमन्तर्वेदि मिनोति" इस पूर्वांश की एकवाक्यता ही रहती है, इस एकवाक्यता की रक्षा के लिए सन्धिस्थल रूप देश विशेष की विधि स्वीकार करने से अतिरिक्त उपाय नहीं है । कारण, ऐसा न मानने पर अन्तर्वेदित्व एवं बहिर्वेदित्व दोनों की विधि माननी पड़ेगी और ऐसा मानने पर वाक्य भेद होगा एवं परवर्ती वाक्य में "मिनोति" इस क्रिया का अनर्थक अनुषङ्ग भी करना होगा । इसलिए, इस स्थल में यूपमान के अङ्गरूप में देश विशेष की हि विधि माननी होगी ।

"देशमात्रं" = केवल देश अर्थात् स्थान विशेष की इस स्थल में लक्षित होगा, 'वा' = पूर्वपक्ष के निरास के लिए है । "अशिष्येण एकवाक्यत्वात्" = क्योंकि अशिष्य अर्थात् पूर्वपक्षी के मत में अशासितव्य अर्थात् अविधेय अंश के साथ एकवाक्यता है ॥१४॥

इति षष्ठ अन्तर्वेदि बहिर्वेदिपदलक्षित देश विशेष की यूपमानङ्गता अधिकरण ।

## अथ सप्तमं दक्षिणहविर्धानदेशस्य सामिधेन्यङ्गत्वाधिकरणम् ।

## [७] सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचना-त्सामिधेनीनाम् ॥ १५ ॥ पू० ॥

शा० भा०—ज्योतिष्टोमे श्रूयते, 'उत यत्सुन्वन्ति, सामिधेनीस्तदन्वाहुः, इति । हविर्धानयोर्यस्मिन् हविर्धाने सुन्वन्ति, तत् सामिधेनीभिः संबन्ध-येदित्यर्थः । तत्र संदेहः—किं सामिधेनीनामङ्गभावेन हविर्धानं चोद्यते—हविर्धानविशिष्टाः सामिधेन्योऽनुवक्तव्या, उत हविर्धानेन अमूषामनूच्यमानानां देशो लक्ष्यत इति । किं तावत्प्राप्तम् ? सामिधेनीनामङ्गत्वेन हविर्धानं चोद्यते । यस्मिन् हविर्धाने सुन्वन्ति, तत् सामिधेनीभिः संबन्धयेदिति । तेन हविर्धान-

**संबद्धाः सामिधेन्योऽनुवक्तव्या इति वचनात्सामिधेन्यङ्गभावे सति हविर्धानश्रुतिरनुग्रहीष्यते। इतरथा देशं लक्षयेदिति। तस्मात्सामिधेन्यङ्गं हविर्धानम् ॥१५॥ पूर्वपक्षः ॥**

त० वा०—'उत यत्सुन्वति, सामिधेनीस्तदन्वाहुः' इति श्रूयते। पूर्ववदेव संदेहविचारनिर्णयः। कथं न गतार्थमिति चेत्? विस्पष्टार्थद्वयानुपादानात्। न त्वत्रैवं दृश्यत् इदं परस्याशिष्यमिति। मम तु शिष्यमिति। कथं तर्हि सिद्धान्तसिद्धः ॥ १५ ॥

न्या० सु०—'यत्सुन्वन्ती'ति सप्तम्यन्ताव्ययचच्छब्देनाभिषवाधारस्य हविर्द्धानस्योपलक्षितस्य, तदन्वाहुरिति सप्तम्यन्ताव्ययतच्छब्देन परामर्शाद्धविर्द्धानयोः शकटयोर्मध्ये यस्मिन् हविर्द्धाने सोममभिषुन्वन्ति, तस्मिन् सामिधेनीरन्वाहुरिति श्रुत्यर्थप्रतीतेः सामिधेनीस्तदन्वाहुरिति वचनाद्धविर्द्धानयोर्मध्येभिषवाधारभूतं हविर्द्धानं सामिधेनीनामङ्गमिति सूत्रार्थस्य सन्देहतद्धेतुपूर्वोत्तरपक्षाणां च यथाभाष्यं स्पष्टत्वादतिदेशार्थत्वेनानन्तरसङ्गतिमात्रसूचनार्थमाह—उतेति। हविर्द्धानविशेषपरामर्शिनस्तच्छब्दस्य श्रुतिवृत्तिसंभवासंभवाख्यपुर्व्वोत्तरपक्षयुक्तिसंप्रधारणावाचिन्या विचारोक्त्या सन्देहहेतुरुक्तः। निर्णयोक्त्या पूर्वोत्तरपक्षावुक्तौ। शङ्काधिक्याभावेनातिदेशायोगं शङ्कते—कथमिति। हविर्द्धानसामान्यविशेषान्वयाख्यार्थद्वयोपादानस्य सिद्धान्तेपि देशसामान्यविशेषान्वयाख्यार्थद्वयोपादानसाम्येनापर्यनुयोज्यत्वादत्यन्तभिन्नार्थद्वयानुपादानाच्च वाक्यभेदाभावाभिमानेन शङ्काधिक्यमाह—विस्पष्टेति। एतदेवोपपादयितुमिह पूर्व्वाधिकरणसिद्धान्तहेत्वभावमाह—नहीति। हेत्वभावे सिद्धान्तासिद्धिं शङ्कते—कथं तर्हीति ॥ १५ ॥

भा० प्र०—श्रुति में ज्योतिष्टोम प्रकरण में कहा गया है कि "उतयत् सुन्वन्ति सामिधेनीस्तदन्वाहुः" अर्थात् जहाँ सोम का अभिषव = रसनिष्कासन करना होता है वहाँ सामधेनी पाठ करे" अग्निसमिन्धन = सन्दीपन करने के लिए जो ऋग्वेद के मन्त्र पढ़े जाते हैं, इनको सामिधेनी कहा जाता है। सोमयाग के एक मण्डल का नाम हविर्धान मण्डप है। जिनको शकटों में सोम रखा जाता है, उनका भी नाम हविर्धान नाम के दो शकट दो दक्षिण और उत्तर भाग में रखा जाता है, इनमें जो दक्षिण शकट है। उसी के समीप में सोमाभिषव किया जाता है। उसी को पूर्वोदाहृत श्रुतिवाक्य में 'यत्' एवं 'तत्' इन दो शब्दों के द्वारा निर्दिष्ट किया जाता है। अतः, "उत यं सुन्वन्ति" इत्यादि वाक्य का जो दक्षिण शकट के हविर्धान का सामीप्य रूप स्थान उल्लिखित है, उससे इस हविर्धान शकट को सामिधेनी का अङ्ग कहा जायेगा या इस हविर्धान शकट के द्वारा उपलक्षित देश अर्थात् स्थान विशेष को ही सामिधेनी का कहा जाता है—यही संशय है। इसमें पूर्वपक्षी का कहना है कि "वचनात् हविर्धानयोः सामिधेन्याम्" = हविर्धान शकट द्वय के मध्य में यह दक्षिण शकट की सामिधेनी का अङ्ग होगा, कारण, श्रुति में उसी को कहा गया है। किन्तु, यहाँ भी पूर्व अधिकरण के समान देशविशेष

लक्षित नहीं होगा। कारण, पूर्वाधिकरण में वाक्य भेद होने से अन्तर्वेदि और बहिर्वेदिका सन्धिस्थल की लक्षणा मानी जाती है। किन्तु, यहाँ जब वाक्यभेद दोष का प्रसङ्ग नहीं है, तब लक्षणा मानना अनुचित है।

''सामिधेन्यास्तदन्वाहुरिति वचनात्'' = ''सामिधेनीस्यदन्वाहुः'' इस प्रकार का वचन होने से, ''हविर्धानयोः'' = हविर्धान नाम के शकट द्वय के मध्य में जिसमें सोमाभिषव किया जाता है वह ''सामिधेनीनाम्'' = सामिधेनी का अङ्ग है॥ १५॥

इति पूर्वपक्ष।

## देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य॥ १६॥ सि०॥

शा० भा०—देशलक्षणार्थं वैतदुच्यते। यस्मिन्सुन्वन्ति, तस्मिन्देशे सामिधेन्योऽनुवक्तव्या इति। प्रत्यक्षं ह्यर्थकर्म सोमस्य तेन क्रियते। दक्षिणे हविर्धाने सोममासादयन्तीति सोमासादनार्थं तावदेतदुपादेयम् सामिधेन्योऽप्यग्निसमिन्धनार्थमुपादेया इति। इह त्वेतावच्छ्रूयते, यस्य हविर्धानस्य समीपे सुन्वन्ति, तत्संबन्धाः ( सामिधेन्योऽग्निसमिन्धनार्थमुपादेया ) इति। तत्र न ज्ञायते, किं सामिधेन्यः संबद्धाः हविर्धानस्योपकुर्वन्ति, किं हविर्धानं सामिधेनीनामिति। तदुच्यते। सामिधेन्यस्तावद्धविर्धानस्य नोपकुर्वन्ति। न हि तावद्विधीयन्ते, सामिधेन्योऽनुवक्तव्या इति। किं तर्हि? हविर्धानविशेषसंबन्धस्तासां विधीयते। न चाविहितमङ्गं भवति। नाप्येवं विधीयते; हविर्धानमासामनुच्यमानानामुपादातव्यं संबन्धयितुमिति। कथं तर्हि? हविर्धानविशेषसंबन्धोऽत्र सामिधेनीनां श्रूयते, न हविर्धानसंबन्धो विधीयते। न च सामिधेनीसंबन्धो हविर्धानस्य प्राप्तः, यो विशेषार्थमनूद्येत। केन तर्हि हविर्धानस्य संबन्धः? प्रत्यक्षं कर्थकर्म सोमस्य, न तु सामिधेनीकर्म प्रत्यक्षं हविर्धानस्य। भवति तु देशस्य सामिधेनीसंबन्धः। 'अपरेण वेदिमि'ति होतुर्देशो लक्षितः। स उत्तरस्य दक्षिणस्य वा हविर्धानस्य समासन्नः। तत्र तत् सुन्वन्ति, तदन्वाहुरित्युपपद्यते वचनम्। तस्माद्देशलक्षणार्थं हविर्धानग्रहणम्।

अथैवमभिसंबन्धः कस्मान्न भवति? यस्मिन् हविर्धाने सुन्वन्ति, तस्य हविर्धानस्य सामिधेनीसंबन्ध इति। नैवं शक्यम्। एवं द्वावर्थौ विधातव्यौ भवतः। हविर्धानसंबन्धो, हविर्धानविशेषसंबन्धश्च। तत्र वाक्यं भिद्यते॥ तस्मान्नैवमभिसंबन्ध इति॥ १६॥ सि०॥

त० वा०—उच्यते सोमसाधारणेन तावत्प्रत्यक्षं नैरतेक्ष्यं हविर्धानस्य। सामिधेनीनां पुनः प्रकृतावेवाग्निसमिन्धनार्थत्वात्क्लृप्तं प्रयोजनमिति, नास्त्यङ्गाङ्गित्वापेक्षा। हविर्धानविशेषसंबन्धपरे वाक्ये सामान्यसंबन्धशक्तिमपि कल्पयत आग्नेय्यधिकरणोक्तो वाक्यभेदो योज्यः। विशेषेण सामान्याक्षेपाद्वाक्यभेदं

परिहरतः सिद्धसामान्यसंबन्धेन सिद्धान्तपक्षेणार्थापत्तिक्षयो दर्शयितव्यः। अस्ति हि प्राकृतदेशोपलक्षणत्वेन हविर्धानयोरन्यतरस्य प्राप्तिः। तत्र विशेषमात्रं सुखेन विधीयते। तस्मादपि देशलक्षणा ॥ १६ ॥

न्या० सु०—इति सूत्रेण कृतार्थसंयोगाख्यहेतूक्त्योत्तरमाह—**उच्यत इति**। द्वयोः कृतार्थतां विना देशलक्षणानुपपत्तेः, सामिधेनीनां कृतार्थत्वानभिधानात् सूत्रस्य न्यूनत्वमाशङ्क्य, हविर्धानस्यान्यत्राक्लृप्तकार्यत्वात्कैमर्थ्यापेक्षायामनेकस्मिन् कार्ये संभवत्येकेन कृतार्थत्वायोगमाशङ्क्याग्नेय्यधिकरणोक्तगौरवलक्षणवाक्यभेदापत्तेः सामिधेन्यर्थत्वायोगादनेककार्यासंभवसूचनार्थं कृतार्थतोक्ता सामिधेनीनां तु क्लृप्तकार्यत्वेन कैमर्थ्यानपेक्षतया कृतार्थता स्पष्टत्वान्न सूत्रकृतोक्ता। तदभिमतैव तु भाष्यकृता प्रकटितेति सूचयन् हेत्वर्थं व्याचष्टे—**सोमेति**।

सोमस्येतिषष्ठ्या धारणव्यतिरेकजनितत्वसूचनार्था धारणोक्तिः। सामिधेनीनामपि कृतार्थताऽर्थात्सूचितेतिद्योतनार्थस्तावच्छब्दः 'अगारे गावो वास्यन्ता'मितिवद्दक्षिणे हविर्धान इति सप्तम्या सोमासादनस्य हविर्धानसंस्कारार्थत्वोक्तौ कृतार्थत्वायोगाद्धविर्धानं प्रति प्रधानकर्म्मताऽर्थकर्म्मतोक्ता। कृतार्थत्वेऽप्यन्यत्र विनियोगः पुरोडाशकपालस्येवाविरुद्ध इत्याशङ्क्य, द्वयोः कृतार्थत्वाविशेषेण किं कस्याङ्गमित्यज्ञानात्सामिधेन्यनुवचनस्य च तदिश्युपपदाक्रान्तविधिशक्तित्वेनाविधेयतयाङ्गत्वायोगाद्धविर्धानस्य सामान्यतः सामिधेन्युद्देशेनाविहितत्वेन तदङ्गत्वाभावात्किं हविर्धानं सामिधेन्यङ्गमिति विशेषानपेक्षणेनानपेक्षितविध्यापत्तेस्तच्छब्दोक्तस्य हविर्धानविशेषस्याप्यविधेयत्वेनाङ्गत्वायोगान्नाङ्गाङ्ग्यन्वयो युक्त इत्येवं परिहारार्थमिहत्वित्यादिभवतीत्यन्तं भाष्यं तात्पर्यतो व्याख्यातुमाह—**इतीति**। नापीत्यादिभाष्यं हविर्धानसामान्यस्यापि सामिधेन्यन्वयेऽस्य वाक्यस्य विधिशक्तिकल्पनाशङ्कानिरासार्थत्वेन व्याचष्टे—**हविर्धानेति**। नचेत्यादिवचनमित्यन्तं भाष्यं विशेषेण सामान्याक्षेपाद्वाक्यभेदपरिहारशङ्कानिरासार्थत्वेन व्याख्यातुमाह—**विशेषेणेति**। भाष्यं च हविर्धानसामान्यस्यान्यतः सामिधेन्यन्वयप्राप्तौ यद्धविर्धाने सामिधेनीरन्वाहुरित्यनूद्य तदभिषवाधार इति विशेषमात्रविधानाद् वाक्यभेदः स्यादित्युक्ते हविर्धानसामान्यस्य सामिधेन्यङ्गत्वेनाविधानेऽपि तद्विशेषस्य दक्षिणं हविर्धानं प्रवर्त्तयन्तीति विहितस्य केन कार्येणान्वय इति कैमर्थ्यापेक्षायामनेन सामिधेन्यङ्गत्वविधानान्नानपेक्षितविध्यापत्तिरिति, केन तर्हीत्यनेनाशङ्क्य, सोमसंबन्ध्यासादनं हविर्धानस्य प्रधानकर्म्मलुप्तसप्तमीकाव्ययत्तच्छब्दगम्यत्वान्न प्रत्यक्षम्। ततश्च प्रत्यक्षेणसोमासादनेनैव कृतार्थत्वान्न कैमर्थ्याकाङ्क्षास्तीत्येव परिहारार्थत्वेनापि सूत्रावयवे योजिते सामान्यविधिं विनानपेक्षितविध्यापत्तेर्विशेषविध्ययोगाद्विशेषेणैव सामान्याक्षेपान्न वाक्यभेदापत्तिरित्याशङ्क्य, भवति त्वित्यादिना देशलक्षणापक्षेतिदेशाद्धेयपरदेशसामान्यप्राप्तेस्तद्विशेषदक्षिणहविर्धानसमीपवर्त्तिहेयपरदेशमात्रविध्युपपत्तेः सामान्याक्षेपनिमित्तगौरवलक्षणवाक्यभेदापादकाङ्गोपदेशपक्षानौचित्यमुक्तमित्येव सकलं वाक्यभेदाभावशङ्कानिरासे योज्यम्।

तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—तस्मादपीति। प्रत्यक्षं ह्यर्थकर्म्म सोमस्य तेन क्रियते इत्यादिभाष्येण हविर्द्धानसामिधेन्यनुवचनयोर्द्वयोरपि कृतार्थत्वेनान्योन्याङ्गाङ्गित्वानपेक्षोक्त्यर्थतया सौत्री हेतुर्व्याख्यातः। प्रत्यक्षं ह्यर्थकर्म्म सोमस्य, न तु सामिधेनी कर्म्मेत्यनेन तु हविर्द्धानस्य सोमधारणमात्रेण कृतार्थत्वात्, तस्य च प्रत्यक्षत्वेनापह्नोतुमशक्यतयाऽनपेक्षितविध्यापत्तेर्हविर्द्धानसामान्यविध्यनपेक्षविशेषविध्ययोगादुभयविधिप्रसङ्गेन वाक्यभेदापत्तेरितिवदतापिशब्देन सूचितः। यथेत्यादिभाष्यसूचितवाक्यभेदप्रकटत्वेन स्पष्टत्वान्न व्याख्यातः॥ १६॥

भा० प्र०—पूर्वपक्षी ने कहा है कि हविर्धान सामधेनी के अङ्गरूप में विहित है, इसके उत्तर में सिद्धान्ती ने कहा है "देशमात्रं वा" = इस स्थल में हविर्धान समीपस्थ देश अर्थात् स्थानविशेष के लक्षित करने का विषय है "उतयत् सुधुसि सामिधेनीस्तदन्वाहुः" इस श्रुतिवाक्य में उपदिष्ट होता है, कारण, "प्रत्यक्षं हि सोमस्य अर्थकर्म" हविर्धानशकट के द्वारा सोम का जो अर्थ कर्म अर्थात् हविर्धानरूप प्रयोजन साधित होता है—यह प्रत्यक्ष है। यह अभिप्राय है कि हविर्धान एवं सामधेनी के मध्य में परस्पर आकाङ्क्षा नहीं है, अतः अङ्गाङ्गिता नहीं हो सकती है और उनकी परस्पर आकाङ्क्षा न होने का यह कारण है कि सोमरूप हवि का धारण कर हविर्धान शकट का प्रयोजन चरितार्थ हो गया है। प्रकृति प्राप्त अग्निसमिन्धन = अग्नि सन्दीपन का समापन कर सामधेनी का भी प्रयोजन हो जाता है, अतः प्रयोजनशून्य हो जाता है इसलिए, उनका परस्पर कोई भी किसी की अपेक्षा नहीं करता है, अतः परस्पर अङ्गाङ्गिता नहीं है। अतः इस स्थल में सामधेनी के उद्देश्य में हविर्धान अथवा हविर्धान के उद्देश्य में सामधेनी विहित नहीं हो सकता है। यदि कहा जाय कि तब तो श्रुतिवाक्य की सार्थकता नहीं होगी? इसके उत्तर में कहा जा सकता है कि सामधेनी का स्थान निर्धारित करने के लिए उसकी सार्थकता है, कारण, सोमपान में इष्टियाग एवं पशुयाग भी रहता है। सभी इष्टियाग की प्रकृति होती है दर्शपूर्णमास—उसकी ही इतिकर्तव्यताएँ अन्य इष्टियाग में अतिदेशविधि के बल से प्राप्त होता है। इस दर्शपूर्णमास में जब अग्निसमिन्धन किया जाता है, तब आहवनीय अग्नि को पश्चाद् भाग में रखकर सामिधेनी का पाठ करना पड़ता है। अतः, उसके अनुसार ज्योतिष्टोम में भी हविर्धानमण्डप, आहवनीय स्थान जो उत्तरवेदी, उसको पश्चिमस्थ कहकर उस स्थान को जो सामधेनी पाठ का देश है, वह अतिदेशविधि के बल से प्राप्त होवे से पुनः विधि के बल से विहित नहीं हो सकता है, क्योंकि, प्राप्त स्थल में विधि निरर्थक है? किन्तु, आहवनीय अग्नि के स्थान के पश्चाद् भाग में अवस्थित उस हविर्धान स्तूप में हविर्धान शकट दो उत्तर और दक्षिण में करके पाश में अवस्थापित होने से अतिदेश बल से उत्तर हविर्धानशकट एवं दक्षिण हविर्धानशकट दोनों का सन्निहित स्थान सामधेनी पाठ का स्थान क्यों नहीं होगा? जो आहवनीय स्थान का पश्चिमस्थ होता है। इस अवस्था में दोनों स्थानों में ही,

सामिधेनी पाठ का देश होने में विकल्प हो जाता है, इसमें जब उत्तरहविर्धानशकट का समीपवर्ती स्थान की प्राप्ति होती है। उस समय दक्षिण हविर्धानशकट सन्निहित स्थान अप्राप्त ही रह जाता है, इसलिए "उत यत् सुन्वन्ति" इत्यादि श्रुतिवाक्य नियमविधि से यह अवगत करा दिया जाता है कि जहाँ सोमाभिषव किया जाता है, उस दक्षिण-हविर्धानशकट के सन्निहित स्थान में ही सामिधेनी पाठ करना होगा। इस प्रकार इस स्थल में देशविशेष ही लक्षित होता है। यदि कहा जाय कि देशविशेष में लक्षणा स्वीकार करने की क्या आवश्यकता है? शुद्ध जो हविर्धान में सोमाभिषव होगा, उसी में सामिधेनी पाठ करना होगा, इस प्रकार सामिधेनी के साथ हविर्धान का सम्बन्ध विधान करने से ही तो कार्य चलता है, ऐसी स्थिति में यह कहा जा सकता है, इसमें विधिगौरव और पाठभेद होगा। कारण, इस पक्ष में सामिधेनी के साथ हविर्धान का सम्बन्ध एवं दक्षिण का सम्बन्ध—हविर्धान का सम्बन्ध एवं दक्षिण हविर्धान का सम्बन्ध स्वीकार करना होगा, इस वाक्यभेद के बिना सम्बन्ध नहीं होगा, हविर्धान सम्बन्ध का अर्थतः प्राप्त होने से हविर्धानत्वविशिष्ट दक्षिणत्व विहित होने से विशिष्टविधिरूप विधिगौरव ही होगा। इन दोषों के परिहार के लिए यह कहना होगा कि इस स्थल में देशविशेष ही लक्षित होता है।

"देशमात्रं" = केवल देश अर्थात् हविर्धानोपलक्षित स्थानविशेष ही इस स्थल में नियमित होता है "वा" = पूर्वपक्ष के निरास के लिए है, "हि" = क्योंकि, "सोमस्य अर्थकर्म"=सोमका अर्थकर्म अर्थात् अकारक, "प्रत्यक्षं"=प्रत्यक्ष है। (सिद्धान्त) ॥ १६ ॥

## समाख्यानं च तद्वत् ॥ १७ ॥

**शा० भा०—समाख्यानं च तद्वदेव भवति। यथाऽस्माभिर्न्याय उपदिष्टः—सोमार्थं हविर्धानमिति ॥ १७ ॥ युक्तिः ॥ हविर्धानस्य सामिधेन्यनङ्गता-धिकरणम् ॥ ७ ॥**

त० वा०—हविर्धानमिति, अनन्यप्रयोजनस्य तादर्थ्यव्यपदेशोऽवकल्पते। अन्यथा हि सामिधेनीनामित्यपि स्यात् ॥ १७ ॥

( इति सप्तमं दक्षिणहविर्धानदेशस्यानुवचनार्थताधिकरणम् ॥ ७ ॥ )

न्या० सु०—सामिधेन्यङ्गत्वेपि शकटस्य महत्वेनैकदेशे सोमासादनमेकदेशान्तरे होतृस्थानमित्यविरोधात्समाख्योपपत्तेर्लिङ्गत्वायोगमाशङ्क्य, अन्यसहितहविर्द्धारणे सापेक्षत्वात्समासविघातापत्तेर्लिङ्गत्वमुपपादयितुमाह—हविर्द्धानमिति। अन्यसाहित्यात्समासविघातापत्तिसूचनार्थं सामिधेन्यनुवक्तृधनित्वं सामिधेन्युक्त्या लक्षितम् ॥ १७ ॥

भा० प्र०—सिद्धान्ती ने अपने पक्ष के समर्थन में अन्य युक्ति का प्रदर्शन करते हुए कहा है कि "समाख्यानञ्च तदवत्" हविर्धान "इस स्थल में जो समाख्या अर्थात् सोमरूप

हवि धारण करने से हविर्धान इस प्रकार प्रकृति प्रत्ययलब्ध अर्थ दृष्ट होता है। ऐसी स्थिति में अवगत होता है कि हविर्धान हविधारण के लिए है अन्य प्रयोजन के लिए नहीं इसलिए भी वह सामिधेनी को उपलक्षण ही कहा जा सकता है। "तद्वत्" इस प्रकार, "समाख्यानञ्च" समाख्या भी है "इति" सप्तम दक्षिण हविर्धान देश की अनुवचनार्थताधिकरण ॥ १७ ॥

## [८] शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात् ॥ १८ ॥ पू०

शा० भा०—इह कर्मण्युदाहरणम्—'अग्निहोत्रं जुहुयात्स्वर्गकामः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत, इति। तत्र संदेहः—किमेतानि कर्माणि स्वयमनुष्ठातव्यानि, उतात्रोत्सर्गमात्रं स्वयं कुर्यात्। शेषमन्यः, स्वयं वा, उत शेषमन्य एवेति। किं प्राप्तम्? स्वयं प्रयोगे स्यात्। कुतः? यतः स्वयं प्रयुञ्जानस्यफलं भवति। कथमवगम्यते? तल्लक्षणात्। शब्दोऽस्यार्थस्य लक्षणं स्वयं प्रयुञ्जानस्य फलं भवतीति। कतमः स शब्दः? स्वर्गकामो यजेतेति। यः स्वर्गं कामयते, स एवोच्यते, यागे कर्ता भवन्फलं साधयेदिति। साङ्गे च कर्ता भवन्फलं प्राप्नोति। तस्मात्स्वयं प्रयोगे स्यात् ॥ १८ ॥

त० वा०—अतः परं समाख्यायाः सर्वैः सह विरोधाविरोधचिन्ता वर्तिष्यते। ( होता ) हौत्रमित्यादयः कथं विनियोजिका इति। तत्र प्रथमं तावदुपोद्घातः क्रियते। यदि होत्रादयो नानाभूतो विद्यन्ते। ततः क्व ते विनियुज्यन्तामिति विचारो भवति। यदि तु सर्वमेव कर्म यजमानेन कर्तव्यं, न कर्त्रन्तराणामवकाशोऽस्ति। ततस्तत्समाख्योत्थापितो विरोधाविरोधविचारो नैव प्रस्तोतव्य इति।

### भाष्यमतात् वार्तिकमते विषयभेदप्रदर्शनम्

तत्र दर्शपूर्णमासादीनि फलदक्षिणावन्ति कर्मण्युदाहरणम्। तेषु विचारः—किं यजमानेनैव सर्वं प्रयोक्तव्यम्, उत प्रमाणमात्रे यजमाननियमः, किं वा प्रधानेष्वेव यजमानः अन्यत्रान्य एव। किं प्राप्तं? सर्वं यजयानेनैव कर्तव्यमिति। कुतः? प्रयोगवचनस्थं ह्यात्मनेपदं साङ्गायां भावनायां फलार्थित्वं कर्तृत्वेन प्रयुङ्क्ते। स यत्रैव कर्ता न स्यात्, तत्कृतमेवोपकारं न प्राप्नुयात्। तस्मात्स्वयं कुर्यादिति। फलस्य चोत्पद्यमानस्योत्पादयितृत्वेन प्रयोक्ता यजमान एवोच्यते। होत्रादिसमाख्या च तस्यैव तत्तत्कुर्वाणस्य 'एकस्य कर्मभेदात्' इत्यनेन न्यायेन भविष्यतीति मन्यते ॥ १८ ॥

न्या० सु०—तुल्यः सर्वेषां पशुविधिरित्याद्यधिकरणचतुष्टयकृतायाः स्थानस्य पूर्व्वैः सह विरोधाविरोधचिन्तायाः प्रसङ्गेन आगतानामाराच्छिष्टसंयुक्तमित्यादिचिन्तानां समाप्त्या बुद्धिस्थत्वात्, तया सह द्रव्यसंस्कारः, प्रकरणाविशेषात्सर्व्वंकर्म्मणामित्यतः प्राक्त्याश्चिन्तायाः सङ्गतिमाह—अत इति। विरोधाविरोधचिन्तया प्रकरणादित्रयेऽपि कथञ्च विनियुज्यत तत्रेति। इत्ययमंतश्चिन्तितो भवतीति, कथमित्यनेन सूचितम्। एवमादयः समाख्याः कथं विनियोक्तुमारभन्ते किं विरोधेन, ततश्च, न शक्नुयुः, अथाविरोधेन, ततश्च शक्नुयुरित्यर्थः।

ते सर्वार्थाः प्रयुक्तत्वादित्यतः प्राक् विरोधाविरोधयोरचिन्तनात्सङ्गत्ययोगमाशङ्क्य, शास्त्रफलमित्यादिचिन्ताया अप्युपोद्घातत्वेन विरोधाविरोधचिन्ताशेषत्वात्सङ्गतिमुपपादयितुमाह—तत्रेति। चमसाध्वर्यवश्चेत्यादिचिन्तानां प्रसक्तानुप्रसक्त्यासङ्गतिस्तावच्छब्देन सूचिता। उपोद्घातत्वमुपपादयति—यदीति। अग्निहोत्रोदाहरणे परिक्रयाभावेन शेषमन्य एव कुर्यादितिसिद्धान्तायोगात् तद्व्यावृत्यै स्वयं शोधयति—तत्रेति। मध्यमपक्षस्य सिद्धान्तत्वविवक्षायामग्निहोत्रस्योदाहणत्वोपपत्तिः फलवत्वोक्त्या सूचिता। तत्रेतिसन्देहभाष्यं व्याचष्टे—तेष्विति। प्रधानभूतेष्वाधानादावन्यकर्तृकत्वाभ्युपममादङ्गभूतेष्वपित्र प्रयाजादिषु यजमानकर्तृकत्वाभ्युपगमात्प्रभौ स्वामिन्येव धीयते समवैतीत्यवयवव्युत्पत्या प्रधानोक्त्यानन्यसाध्यव्यापारोक्तिः सर्वस्मिन्प्रयोगे स्वयमेव कर्त्ता स्यादित्याद्यपूर्वपक्षप्रतिज्ञार्थम्। तस्मादितिसूत्रावयवं व्याचष्टे—किमिति।

शास्त्रीयकर्म्मसाध्यं यत्फलं, तत्स्वयमनुष्ठातर्येव यस्माद्भवतीति हेत्वर्थमाद्यावयवं कृष्यादिफलस्य कर्तृगामित्वनियमादर्शनात्कथं शास्त्रीयकर्म्मफलस्य तन्नियमोऽवगम्यत इति हेतूपपत्तिप्रश्नस्य च शास्त्रप्रमाणकत्वात्फलस्य शास्त्राच्च कर्तृगामित्वनियमावगतेरित्येवमुत्तरार्थं द्वितीयावयवं शास्त्रात्कर्तृगामित्वनियमावगत्युपपादनेन व्याख्यातं भविष्यतीति मत्वा, तदुपपादने हेत्वाकाङ्क्षां पूरयितुमाह—कुत इति। अग्निहोत्रोदाहरणाव्यापितद्भाष्यानुक्तापीयं युक्तिः सामानाधिकरण्याख्ययुक्त्युक्तयर्थे भाष्ये यजेतेत्यात्मनेपदयुक्तवाक्यमात्रोक्तया सूचितत्वादुक्ता। अन्येनापि कर्तुमशक्यमङ्गोक्तया विवक्षितम्। तस्मादित्युपसंहारभाष्यं व्याचष्टे—तस्मादिति। प्रयोक्तृशब्दस्य हेतुकर्तृवाचित्वप्रसिद्धेर्विपर्ययापत्तिमाशङ्क्य, फलार्थिवाचित्वेन व्याचष्टे—फलस्य चेति। सर्वस्य स्वयंकर्तृकत्वे होत्रादिसमाख्यानुपपत्तिमाशङ्क्यैकस्येत्युत्तराधिकरणशङ्कासूत्रेवक्ष्यमाणन्यायाद्यजमानस्यैव होत्रादि कुर्वाणस्य समाख्योपपत्तिमाह—होत्रादीति। वरणभरणयोरदृष्टार्थत्वान्नित्यप्रयोगे स्वयं सर्वानुष्ठानाशक्तविषयत्वाद्वोपपत्तिश्चकारेण सूचिता॥ १८॥

भा० प्र०—पूर्व में उदाहरणों के द्वारा श्रुतिलिङ्गादि का बलाबल विचार कर प्रकरण एवं स्थान में भी कहाँ प्राबल्य एवं कहाँ दौर्बल्य इसका विचार प्रस्तुत किया गया है, किन्तु अवशिष्ट जो समाख्याएँ हैं उनका बलाबल प्रदर्शित नहीं हुआ है, उन

समाख्याओं के बलाबल विचार करने से पूर्व कर्म का कर्त्ता एक है कि अनेक इसका विचार करना आवश्यक है, क्योंकि उसी के ऊपर होत्र औध्वर्यव आदि समाख्या निर्भर करती है, अतः केवल यजमान ही याग का कर्त्ता है अथवा उससे अतिरिक्त अन्य व्यक्ति भी कर्त्ता हो सकता है। उसी का विचार इस अधिकरण में किया गया है अतः "ज्योतिष्टोमेनयजेत् स्वर्गकामः" इत्यादि फलवाक्य इस अधिकरण का विषय है। शास्त्रोक्त उन फलों के लिए ज्योतिष्टोमादि जो समस्त कर्म विहित हैं वे यजमान के द्वारा ही अनुष्ठेय हैं उसमें अन्य किसी की सहायता अपेक्षित नहीं है, अथवा केवल प्रधानांश ही यजमान का कर्त्तव्य है और अवशिष्टांश यजमान ही कर सकता है और लोग भी कर सकते हैं, अथवा केवल प्रधान कर्म ही यजमान का कर्त्तव्य है और अन्य कर्म अन्य का कर्त्तव्य है यही संशय है। इसके उत्तर में पूर्वपक्षी ने कहा है, "प्रयोगे स्वयं स्यात्" यजमान के द्वारा ही सभी कर्म करना चाहिए अन्य किसी से भी कोई अङ्गादि कर्म भी अनुष्ठित नहीं हो सकता है। कारण "शास्त्रफलप्रयोक्तरि तल्लक्षणत्वात्" जिस कर्म का शास्त्रोक्त जो फल है उसे उस कर्म को करने वाला ही प्राप्त करेगा। क्योंकि जो कर्म करता है वह यदि उस कर्म के फल का भोग कर सकता है तभी कर्तृत्व और भोक्तृत्व का सामानाधिकरण्य होता है अन्यथा कर्म कोई करेगा और फलभोग दूसरा करेगा। फलतः कर्म में किसी की भी प्रवृत्ति नहीं होगी, क्योंकि फलविषयिनी इच्छा ही कर्म में प्रवृत्ति उत्पादन करती है साथ ही "यजेत्" इत्यादि स्थल में जो आत्मनेपद का प्रयोग होता है उससे भी यही प्रमाणित होता है कि जो अंश स्वयं नहीं करेगा, उसका उपकार या फल वह नहीं पायेगा। इसलिए वह समग्र कर्म फलभोक्ता का ही कर्त्तव्य है, स्वयं असमर्थ होने पर ही अन्य लोगों को नियुक्त कर सकता है इसलिए दक्षिणा आदि के द्वारा ऋत्विक् के खरीदने की विधि है।

"शास्त्रफलम्" = शास्त्रोक्तफल, "प्रयोक्तरि" प्रयोक्ता को अर्थात् अनुष्ठाता पुरुष को ही होता है, "तल्लक्षणत्वात्" क्योंकि प्रयोक्ता में तल्लक्षणत्व अर्थात् भोक्तृत्व है, "तस्मात्" = इसलिए "प्रयोगे" अनुष्ठान के विषय में "स्वयं स्यात्" स्वयं होगा अर्थात् सभी कर्मों का स्वयं ही अनुष्ठान करना होगा। इति प्रथमपूर्वपक्ष ॥ १८ ॥

**उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य, तस्मादन्यः स्वयं वा स्यात् ॥ १९ ॥**

**शा० भा०—उत्सर्गे प्राधान्यमस्ति। कथम्? य उत्सर्गं करोति, तेन सर्वं कृतं भवति। कथम्? परिक्रय उत्सर्गः। तेनाऽऽनताः सर्वं कुर्वन्ति। तस्माद्यः परिक्रयं करोति, तेन स्वयमेव सर्वं कृतं भवति। तस्मादुत्सर्गमात्रं स्वयं कुर्यात्। शेषमन्यः, स्वयं वा ॥ १९ ॥ पूर्व० ॥**

त० वा०—प्रधानमात्रवाचिनो धातोः परेण प्रत्ययेन तन्मात्रस्यैव फलार्थिकर्तृकत्वं नियम्यते। शेषाणां तु निर्वृत्तिमात्रं प्रतीयते, न कर्तृविशेषः। तस्मात्तत्राऽनियमः। ननु च प्रधानसमानकर्तृकत्वादेवाङ्गानामपि स एव कर्ता सेत्स्यति। न। तत्र प्रयोजकत्वेनापि कर्तृत्वानुग्रहात्। द्रव्योत्सर्गे ह्यन्येन क्रियमाणे न किंचिद्यजमानेन कृतं स्यादिति तं करोति। तत्र तत्र कृते परिक्रयादिना कारयन्न कर्तृत्वात्प्रच्यवते।

### आत्मनेपदेन प्रयोजककर्तृत्वमेवाभिधीयत इति वादिनां केषाञ्चिन्मतस्योपन्यासनिरासौ

केचित्तु सुतरामात्मनेपदेन प्रयोजकत्वमेवाभिधीयत इति समर्थयन्ते। कर्त्रभिप्रायक्रियाफलविहितस्य ह्यात्मनेपदस्यणिजर्थं एव प्रेषणादिरूपेण संविधानात्मको वाच्यः। तथा च 'यजन्ति याजका' इति प्रयोज्यव्यापारे परस्मैपदम्। यजते यजमान इति प्रयोजकव्यापारे, आत्मनेपदं दृश्यते। न त्वेतद्युक्तम्। एवं हि सति प्रधानमपि यथाकथंचिदन्यैरेव कारयितव्यं भवेत्। यदेव हि स्वयंकर्तृकं जातं, तस्यैव फलं न प्राप्नुयात्। न च यदृत्विजः कुर्वन्ति, तस्य क्रत्वर्थत्वाद्यजमानगाभि फलं युज्यते। कामं तु प्रधानकारिणो यजमानस्य यथाकथंचिदनुग्रहेण प्रयोजकत्वादृत्विग्व्यापारवचनं परस्मैपदं णिजर्थे वर्तेत, नाऽऽत्मनेपदम्। तस्मात्पूर्वेणैव व्याख्यानेन प्रधानादन्यस्य स्वयमन्यो वा कर्ता स्यादिति। तत्रापि तु प्रत्ययप्रतिपादिता भावना प्रत्यासन्नतया फलार्थिकर्तृत्वेन गम्यमाना कथं करणांशमात्रं एवोपसंह्नियत् इति वक्तव्यम्।

### अत्र वार्तिकमतम्

तेनैवं व्याख्येयं—नाऽऽत्मनेपदेन फलार्थितृत्वं चोद्यते। किं तर्हि ? भावनाक्षिप्तकर्तृत्वस्य स्वतः फलसंबन्धित्वम्। अतश्च फलेन कर्तुरन्यत्र न गन्तव्यम्। न तु फलार्थिनोऽन्येन व्यापारकरणं विरुध्यते। तावता च सिद्धोऽङ्गेष्वनियमं इति॥ १९॥

न्या० सु०—द्वितीयपूर्वपक्षसूत्रं परिमतेन तावद् व्याचष्टे—प्रधानमात्रेति। आत्मनेपदेनाऽङ्गेषु फलार्थिकर्तृत्वानियमेपि न्यायान्नियमसिद्धि शङ्कते—ननु चेति। अङ्गभावनाक्षेपादेव सामान्यतः कर्तृप्राप्तौ फलार्थैव सर्वं कुर्यादिति नियमार्थो विधिः कर्त्रन्तरं निवर्त्तयेत् न्यायात्तु कर्त्रन्तरनिवृत्त्यप्रतीतेः प्रधानसमानकर्तृकत्वस्य चाङ्गेषु प्रयोक्तृत्वेनाप्यनुग्रहोपपत्तेर्नाङ्गेषु नियमसिद्धिरिति परिहरति—नेति। प्रधानेपि तर्हि प्रयोक्तृत्वेनापि फलार्थिना कर्तृत्वसिद्धेः स्वयङ्कर्तृत्वसिद्धेः स्वयङ्कर्तृत्वनियमो न स्यादित्याशङ्क्य, आत्मनेपदसामानाधिकरण्याभ्यां प्रधानार्थे फलार्थिकर्तृत्वनियमात् कर्त्रन्तरनिवृत्या फलार्थिना स्वयङ्कर्तृत्वावगमात्पुरोडाशादिद्रव्योत्सर्गात्मके प्रधाने स्वयमक्रियमाणेऽन्यादृक्कर्तृत्वायोगा-

त्परिक्रये, वरणे च स्वयङ्क्रियमाणेपि प्रधानकारिणा कार्यस्य परिक्रयादेरतत्कारिणा कृतस्याप्यकृतसमत्वापत्तेः प्रधाने स्वयं करोति, प्रधाने तु स्वयङ्कृतेऽङ्गानि परिक्रय-वरणाभ्याङ्कारयन् कर्तृत्वान्न व्याहन्यत इत्याह—द्रव्येति। सौत्रोत्सर्गोक्तिव्याख्यार्था प्रधानविवक्षायामपि द्रव्योत्सर्गोक्तिः।

आत्मनेपदेन साङ्गायां फलार्थिनः प्रयोजके कर्तृत्वस्यैवाभिधानात्प्रधानस्योत्स-र्गात्मकतयान्येन कर्तुमशक्यत्वात्तस्मिन्प्रयोजककर्तृत्वस्यानुष्ठानरूपेण निवृत्तावपि प्राप्ति-रूपेणा निवृत्तेः, अङ्गेषु प्रयोजककर्तृत्वे सुतरां प्रधानसमानकर्तृकत्वात्सेत्स्यतीत्येवं प्रधान-वशेनाङ्गेष्वपि स्वयङ्कर्तृत्वनियमाशङ्कानिरासेनाऽन्येषां द्वितीयपूर्वपक्षसमर्थनं दूषयितुमुप-न्यस्यति—केचित्त्विति। स्वयङ्कर्तृपक्षेऽपि प्रधानसमानकर्तृकत्वाविरोधसूचनार्थं सुतरामि-त्युक्तम्। क्रियाफलस्यात्मनेपदेन कर्त्रभिमुखगामित्वाभिधानात्स्वसमवेतक्रियाफलस्य च स्वस्मिन्नेवोत्पत्तेर्देशान्तरप्राप्तिफलकस्वाभिमुखगमनायोगाण्णिजभावेपि तदर्थंप्रयोजकव्या-पाराभिधानमुपपादयति—कर्त्रभिप्रायेति। एतदेवाभियुक्तप्रयोगेण द्रढयति—तथाचेति। आत्मनेपदेन प्रयोजकव्यापारोक्तौ स्वयङ्कृतात्फलानवाप्त्यापत्तेः केनचित्सामदानादिप्रका-रेणाऽन्यं स्वद्रव्योत्सर्गे प्रवर्त्तयित्वा प्रधानस्याप्यन्येन कारयितव्यत्वप्रसङ्गापादनेन दूषयितुमारभते—न त्विति। क्रतूपकाराख्यस्य चाङ्गक्रियाफलस्य यजमानगामित्वायोगात् तत्सिद्धयर्थमात्मनेपदस्य प्रयोक्तृव्यापारवाचित्वकल्पना युक्तेत्याह—न चेति। 'यजंति याजका' 'यजते यजमान' इतिप्रयोगमात्राच्च परस्मैपदात्मनेपदयोः प्रयोज्यप्रयोजक-व्यापारवाचित्वव्यवस्थाकल्पनायां वैपरीत्यापत्तिमाह—कामं त्विति।

तस्मात्प्रधानमात्रस्यात्मनेपदाख्येन प्रत्ययेन फलार्थिकर्तृकत्वनियमात् उत्सर्गमात्रे च प्रधानत्वात्तन्मात्रे स्वयङ्कर्त्ता स्यादित्यवेनैव सूत्रव्याख्यानेन प्रधानमात्रेत्यादिवार्त्तिक-कृतेन द्वितीयः पूर्व्वपक्षः समर्थनीयः न त्वात्मनेपदेन प्रयोक्तृत्वस्यैवाभिधानात्प्रयोक्तृत्वे सुतरां फलार्थिनः कर्त्तृत्वसिद्धेः स्वयङ्कर्तृत्वानाभिधानादुत्सर्गमात्रे प्रधानत्वादनन्यकार्य-त्वात् स्वयङ्कर्त्ता स्यात्, शेषकारी त्वात्मनेपदवशादन्य। प्रधानासमानकर्तृकत्ववशाद्वा स्वयमेवेत्यनेन केचित्त्वितिवार्त्तिककृतेनेत्युपसंहरति—तस्मादिति। पूर्वमपि व्याख्यानं दूषयितुमाह—तत्रापीति। भावनामात्रस्यात्मनेपदेन फलार्थिकर्तृकत्वनियमात्करणांशेष्य-नियमाभ्युपगमेऽशद्वयेपि नियमापत्तेः करणांशमात्रे फलार्थिकर्तृकत्वेन कथं भावनोपसंह-तेति दूषणं पूवव्याख्यानेपि वाच्यमित्यर्थः।

**पूर्वपक्षद्वयंनिरस्य वार्तिकमतम्।**

स्वमतेनोत्सर्गरूपे प्रधाने अङ्गे वा प्रभावेव धीयमानत्वाख्यात्प्रधानत्वात्स्वयमेव कर्त्ता स्यात्। यत्त्वन्येन कर्तुमशक्यत्वात्प्रभावेव धीयमानरूपप्रधानस्यान्येन कर्तुं शक्य-त्वात्परिशिष्टं तत्कारी प्रधानकर्तुरन्यः स्वयं वा स्यादित्येवं सूत्रं व्याचिख्यासुराद्य-पूर्वपक्षनिरासार्थंत्वेन तुशब्दं तावद्व्याख्यातुमाह—तेनेति।

स्वर्गकामादिपदस्य प्रैर्यसमर्पकत्वे स्वर्गकामादेरेव विधिप्रैर्यत्वान्यथानुपपत्त्या फलित्वावगमाद्भावनायाश्च प्रैर्यान्वयात्प्राक् फलविशेषानवगमात् तत्कामकर्तृविशेषाक्षेपाशक्तेरेकप्रत्ययस्यात्मनेपदरूपतुल्यकर्तृविशेषनियमसम्भवेन च पदान्तरोक्तप्रैर्यत्वान्यथानुपपत्त्या कर्तृविशेषाकल्पनायोगादात्मनेपदेन फलिना कर्तृत्वनियमात्कर्त्रन्तरस्य फलाभावावगतेर्निवृत्तिः स्यात् त्तस्य त्वेकादशाद्ये फलसमर्पकतया वक्ष्यमाणत्वात्प्रैर्यविशेषावगमात्प्रागेव भावनाया। फलपदान्वयात्फलविशेषावगमने तत्कामकर्तृविशेषाक्षेपशक्त्युपपत्तेः, प्रैर्यविशेषानवगमाच्च फलविशेषानवगतेरात्मनेपदेन फलिनः कर्तृत्वनियमायोगाद्भावनाक्षिप्तकर्तृत्वस्य स्वर्गकामादिपुरुषविशेषस्यात्मनेपदेन फलित्वनियमाज्जातपुत्रकपितृकर्तृकवैश्वानरेष्टिफलस्य पुत्रगामित्ववदस्यापि फलित्वं प्रसक्तं निवर्त्तेत, न त्वन्यस्य कर्तृत्वेत्यर्थः। आत्मनेपदेन कर्तुरेव फलमिति नियमादकर्तृफलार्थे च कर्तृनियमाभावेऽप्यकरणे फलाभावापत्तेरात्मनेपदस्य प्रयोक्तृव्यापारवाचित्वाभावेन स्वयङ्कर्त्तर्येव फलनियामकत्वात्त्वात्साङ्गप्रधानभावनायाश्च फलसाधनत्वात्सर्वत्र स्वयङ्कर्तृनियमापत्तिशङ्कानिरार्थत्वेनाऽङ्गप्रधानविशिष्टभावनाया। फलसाधनत्वेपि परिस्पन्दरूपेषु धात्वर्थेष्वात्मनः साक्षात्कर्तृत्वायोगेनावश्यं शरीरेन्द्रियद्वारा कर्तृत्वस्याश्रयणीयत्वाद्भावनाधात्वोः कर्त्रैक्यनियमानुपपत्तेरन्यतृकेणापिच धात्वर्थेन करणतया भावनावच्छेदोपपत्तेर्धात्वर्थानवच्छिन्नभावनानुष्ठानयोगोपालम्भानापत्तेः षट्कर्षककर्तृककृषिधात्वर्थावच्छिन्नायाश्च भावनायाः षड्भिर्हलैः कृषतीत्येककर्तृकत्वप्रयोगात्कर्त्रैक्यनियमाभावागतेः करणेतिकर्तव्यतात्वेन चाङ्गप्रधानानां फलभावनाविशेषणतया तस्यामवस्थायां साध्यत्वाभावेन कर्त्रनपेक्षत्वात्स्वरूपमात्रे फलभावनया फलार्थिनः कर्तृत्वाक्षेपावगतेरात्मनेपदेन तन्मात्रे स्वयं कर्तुः फलनियमात्तद्विशेषणेष्वङ्गप्रधानेषु तद्वशात्स्वयङ्कर्तृत्वनियमोपपत्तेरात्मोपात्तशरीरेन्द्रियव्यापाराणां यजमाने फलसाधनत्वनियमोपपत्तेरुत्सर्गरूपेष्वङ्गप्रधानेष्वन्येन कर्तुमशक्यत्वात्स्वयङ्कर्तृत्वनियमेऽप्यन्यत्रानियमोक्त्यर्थतया सूत्रव्याख्यां सूचयितुमाह—तावतेति। अङ्गेर्द्धातोर्गत्यर्थत्वादङ्गति स्वामिनं त्यक्त्वान्यत्रापि गच्छति समवैतीति व्युत्पत्त्याऽन्येनापि कर्तुं शक्यस्याऽङ्गोक्त्या विवक्षितत्वात्फलार्थिनः स्वामिनः परिक्रयोपात्तर्त्विग्द्वारा फलभावनाविशेषणभूताङ्गप्रधानव्यापारकरणस्यात्मनेपदाविरुद्धत्वादन्येन कर्तुमशक्येषु सामर्थ्यात्स्वयङ्कर्तृत्वनियमेऽप्यन्येन कर्तुं शक्येष्वनियम इत्यर्थः॥ भाष्ये तु विशिष्टायां भावनायां स्वयङ्कर्तृत्वनियमेपि परिस्पन्दरूपेष्वङ्गप्रधानेष्वमूर्त्तस्यात्मन। क्रियाश्रयत्वायोगेन तन्निरपेक्षक्रियानिष्पादकत्वारन्यस्य कर्तृत्वस्याभ्युपगन्तव्यत्वात्परिक्रीतर्त्विक्कर्तृके.ष्वपि स्वामिनः परिक्रयद्वारा निष्पादकत्वाख्यस्वयङ्कर्तृत्वोपपत्तेर्यावत्यङ्गे, प्रधाने वा स्वाश्रितक्रियानिष्पादकत्वसम्भवः स्तावत्येव साक्षात्कर्तृत्वनियमो अन्यत्रानियमइत्येवमर्थत्वेन सूत्रव्याख्यार्थे परिक्रयाख्यस्योत्सर्गस्यर्त्विजः प्रति यजमानस्य स्वामित्वाख्यप्राधान्यापादकत्वात्प्राधान्यमुत्सर्गे कृते यजमानस्यर्त्विजः प्रति प्राधान्यं तत्प्रयुक्तै ऋत्विग्भिः कृते देहेन्द्रियकृते जीवस्येव स्वयङ्कर्तृत्वोपपत्त्यै प्रधानत्वोक्त्या विवक्षितम्॥ १९॥

भा० प्र०—प्रथम पूर्वपक्षी के मत में सभी कर्म यजमान को स्वयं करना होगा, इसके उत्तर में दूसरा पूर्वपक्षी कहता है कि सभी कर्म यजमान को स्वयं करना होगा ऐसी बात नहीं है किन्तु यजमान केवल परिक्रय अर्थात् उत्सर्ग अर्थात् द्रव्य त्याग एवं ऋत्विजों को दक्षिणा दान करने से ही सम्पन्न हो सकता है कारण "उत्सर्गेप्रधानत्वात्" सभी द्रव्यमान एवं दक्षिणा त्याग ही प्रधान है क्योंकि दक्षिणारूप निष्क्रय के द्वारा ऋत्विजों के द्वारा अनुष्ठित कर्म का फल यजमान खरीद लेता है। इसीलिए उसको परिक्रय कहा जाता है, इससे अतिरिक्त जो क्रतुनिष्पादक कर्म हैं उनके सम्बन्ध में—"शेषकारि अन्य स्वयं वा स्यात्" यजमान स्वयं अथवा अन्य किसी व्यक्ति के द्वारा सम्पादन करने से ही कार्य हो सकता है उसमें किसी तरह की बाधा लेकर नियम नहीं बनाया जा सकता है। इसलिए यदि यह कहा जाय कि "स्वरितयितः कर्मभिप्राये क्रियाफले" इस पाणिनीय व्याकरण स्मृति का विरोध होता है, इसके उत्तर में कहा गया है कि इस स्थल में सूत्र में कर्मभिप्रायः यह कहने से क्रियाफल कर्त्ता का अभिप्रेत होने पर ही आत्मने पद होगा। ऋत्विजों के कर्त्ता होने पर भी याग करने पर भी यजमान फल भोग करें यही उनका अभिप्रेत होने से आत्मनेपद के प्रयोग का कोई विरोध नहीं होता है इसलिए यहाँ के तंत्रवार्तिक में कुमारिलभट्टपाद ने कहा है कि "नात्मनेपदेन फलार्थिकतृत्वम् चोद्यते"। किं तर्हि। भावनालिप्तकर्तृत्वस्य स्वतः फल-सम्बन्धित्वम्। अतश्च फलेन कर्तुरन्यत्र न गन्तव्यम्"। आत्मनेपद के द्वारा यह नहीं बोधित होता है कि जो कर्त्ता है वही फल सम्बन्ध युक्त होगा तब उसका क्या अर्थ है ? भावना के द्वारा जो कर्त्ता आक्षेप के अनुसार भव्य होता है उसी का स्वतः फल सम्बन्धित्व विज्ञापित होता है इसलिए फल कर्त्ता अर्थात् कर्त्ता के रूप में उद्दिष्ट के अतिरिक्त के पास नहीं जायेगा। "उत्सर्गे प्रधानत्वात्" = उत्सर्ग में अर्थात् परिक्रय में अर्थात् ऋत्विजों के लिए जो दक्षिणा का त्याग किया जाता है उसी में प्रधानता है "तु" पक्षान्तर का सूचक है "प्रधानस्य" = उस प्रधान की सिद्धि होने पर अर्थात् यजमान के द्वारा उस प्रधान कर्म का अनुष्ठान करने पर "तस्मात् अन्य" उस यजमान को छोड़कर अन्य लोग "स्वयं वा" "किं वा" अथवा यजमान स्वयं ही "शेषकारि स्यात्" उत्सर्ग से अतिरिक्त कर्म को यजमान या ऋत्विक कोई भी कर सकता है द्वितीय पूर्वपक्ष ॥ १९ ॥

**अन्यो वा स्यात्परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि ॥२०॥सि०॥**

शा० भा०—शेषस्यान्य एव स्यात्कर्ता। कुतः? परिक्रयस्याऽऽम्नानत्वात्। पुरुषानतिप्रकारेषु बहुषु प्राप्तेषु परिक्रयो नियतः। तस्मात्परिक्रयेणाऽऽनतैः सर्वे पदार्थाः कर्तव्या इति। विप्रतिषिद्धश्चाऽऽत्मनि परिक्रयः। यदि स्वयं कुर्यादपरिक्रीतेन कृतं स्यात्। तत्र परिक्रयाम्नानानर्थक्यम्। अदृष्टार्थो

वा प्रतिज्ञायेत । तस्मादन्यैः परिक्रीतैः शेषाः पदार्थाः कर्तव्या इति । उत्सर्गं तु स्वयं कुर्वता सर्वं स्वयं कृतं भवति ॥ २० ॥ सिद्धान्तः ॥

अङ्गानामन्यद्वाराऽनुष्ठानाधिकरणम् ॥ ८ ॥

त० वा०—अन्वाहार्य-द्वादशशतादिदानं कर्मसंयुक्तेभ्योऽभिधानात् 'परिक्रयार्थं वा कर्मसंयोगात्' इति दशमे वक्ष्यति । स्वभावतश्च परिक्रयः परत्र क्रियते नाऽऽत्मनि, विरोधात् । तत्र यदि कदाचित्स्वयमेवाङ्गानि यजमानः कुर्यात् ततः परिक्रयासंभवात्परिक्रयो न क्रियेत । तत्रास्य नित्यवदाम्नानं विरुध्येत । तस्मात्तन्नित्यतां कर्तुमवश्यं परिक्रयार्हाणि कर्त्रन्तराण्युपादातव्यानि । अतश्च क्वचित्स्वयंकरणात्क्वचित्संविधानाद्यजमानस्य कर्तृत्वम् । आत्मनेपदस्यापि परिक्रयवर्ती भावनामाश्रितस्येदृशेनैव कर्तृत्वेन फलोपयोगः समानकर्तृक इत्यर्थो न विरोत्स्यते ॥ २० ॥

( इति यजमानभिन्नकर्त्रन्तरप्रतिपादनाधिकरणम् ॥ ८ ॥ )

न्या० सु०—दक्षिणादानस्य परिक्रयार्थत्वे तदन्यथानुपपत्त्यार्त्विजां कर्मसंयोगकल्पना कर्म्मसंयोगाच्च परिक्रयार्थत्वावगतिरित्यन्योन्याश्रयापत्तेः सिद्धान्तहेत्वसिद्धिमाशङ्क्य, परिक्रयार्थत्वावगमात्प्रागपि द्वितीयपूर्वपक्षन्यायादृत्विजां पाक्षिककर्मसंयोगप्राप्तेस्तेभ्यो दानस्य दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वस्यान्याय्यत्वात्त्वार्थत्वस्य दशमसिद्धान्तामाह—अन्वाहार्य्येति ।

विप्रतिषेधादितिसूत्रावयवव्याख्याथ विप्रतिषिद्धश्चेत्यादिभाष्यमन्यकर्तृकत्वपक्षे परिक्रयविरोधमाशङ्क्य नित्यवदाम्नातात्परिक्रयादृष्टार्थत्वापत्तेर्दशमे निषेत्स्यमानत्वाद्दोषत्वसूचनायादौ व्याचष्टे—स्वभावतश्चेति । आद्यं व्याचष्टे—तत्रेति । तस्मादित्युपसंहारभाष्यं व्याचष्टे—तस्मादिति ।

अन्यैः पूर्वसूत्रस्थप्रधानशब्दोक्तेभ्योन्येन कर्त्तुमशक्येभ्यः परिशिष्टानां पदार्थानां करणे सर्वस्य स्वयङ्कर्तृकत्वं सामानाधिकरण्यात्मनेपदाभ्यामवगतं न सिद्ध्येदित्याशङ्काया उत्सर्गे तु प्रधानत्वादित्यनेनैव निरस्तत्वसूचनार्थमुत्सर्गे त्विति भाष्यं व्याचष्टे—अतश्चेति । आत्मनेपदस्य प्रयोक्तृव्यापारवाचित्वनिषेधात्साङ्गप्रधानभावनाकर्त्तुरेव फलनियामकत्वाच्च क्वचित्संविधानेन कर्तृता युक्तेत्याशङ्क्य, संविधानद्वारापि करणे निष्पादकत्वाख्यस्वयङ्कर्तृत्वाविघातादनन्यसाध्ये च स्वयङ्करणावश्यंभावादात्मनेपदमपि क्वचित्स्वयङ्करणात् क्वचित्संविधानात्कर्त्तारं नियच्छतीत्याह—आत्मनेपदस्यापीति ॥ २० ॥

इत्यष्टमं यजमानभिन्नकर्त्त्रन्तरसद्भावप्रतिपादनाधिकरणम् ।

भा० प्र०—पूर्वोक्त दोनों प्रकार के पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "अन्ये वा स्यात्" द्रव्य त्याग एवं दक्षिणात्य रूप प्रधान कर्मों से अतिरिक्त अन्य सभी

कर्मों को यजमान से अतिरिक्त अन्य व्यक्ति ही अनुष्ठित करेगा। यजमान स्वयं उसका अनुष्ठान नहीं करेगा। कारण "परिक्रयामनाथ" श्रुति में ज्योतिष्टोमादि कर्म में परिक्रय उपदिष्ट है दक्षिणा देकर यजमान ऋत्विजों से कर्म का क्रय करता है विकल्प पक्ष स्वीकार करने पर अर्थात् शेष कर्म का यजमान स्वयं की अनुष्ठान कर सकता है एवं अन्य कोई भी सम्पादन कर सकता है यह पक्ष स्वीकार करने पर जब यजमान स्वयं सभी कर्मों का अनुष्ठान करता है तब उस पक्ष में परिक्रय कर्मविवितं होगा। क्योंकि स्वयं अपने कर्म का क्रय नहीं कर सकता है उस समय इस परिक्रय कर्म को छोड़ना पड़ेगा फिर भी सम्भव नहीं है कारण वह नित्य के समान उपदिष्ट होता है इसलिए सूत्र में कहा गया है "विप्रत्तिषेधात् प्रत्यगात्मनि" इस स्थल में प्रत्यगात्म शब्द का प्रयोग किया गया है इस पक्ष में "स्वरितयितः कर्मभिप्राये क्रियाफले" इस पाणिनीय स्मृति का भी विरोध नहीं होता है विवरण इस पक्ष में भी द्वितीय पूर्वपक्षीय के मत के अनुसार ही आत्मनेपद की सार्थकता होती है इस पक्ष में कर्त्ता और भोक्ता का वैयधिकरण्य दोष होगा। यह आपत्ति भी संगत नहीं हो सकती है कारण यजमान प्रयोजक है और ऋत्विज प्रयोज्य इसलिए प्रयोज्य कर्म का वेतनभोगी के द्वारा कर्म सम्पादन करने पर भी जैसे वह स्वयं सम्पादित अर्थात् स्वसमवेत होता है यहाँ भी ऐसा ही समझना चाहिए इसीलिए "तत्प्रयोजकश्च" इस पाणिनीय सूत्र में प्रयोजक की भी कर्तृता मानी गयी है, अतः अन्य के द्वारा सम्पादित होने पर भी परिक्रय उपदिष्ट होने से फलतः उस फलभोक्ता यजमान का ही कर्म एवं तत्कर्तृक ही अनुष्ठित होने से कर्म कर्त्ता और फलभोक्ता का वैयाधिकरण्य नहीं हो सकता है। किन्तु सामानाधिकरण्य ही रहेगा। "अन्यः स्यात्" = अन्यलोग भी शेषकारी होंगे। "वा" पूर्वपक्ष के निरास के लिए "परिक्रयामनानाथ" क्योंकि श्रुति में परिक्रय करने का विषय उपदिष्ट है, "प्रत्यगात्मनि विप्रतिषेधात्" स्वयं कृत पक्ष में यह विरुद्ध होता है। इति अष्टम यजमान भिन्न कर्मान्तर प्रतिपादनाधिकरण ॥२०॥

## [९] तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात् ॥ २१ ॥ पू० ॥

**शा० भा०—तत्र तैः परिक्रीतैः कर्तव्येष्वनियमेन कर्तृपरिमाणं स्यात्। कुतः? अविशेषात्। न कर्तृपरिमाणे विशेषः कश्चिदाम्नायते। अर्थेन तत्परिमाणं यावद्भिरसावितकर्तव्यता निर्वर्तते, तावतो वृणीतेति ॥ २१ ॥ पूर्व० ॥**

**त० वा०—एकस्य द्वयोर्वोपादाने परिक्रयः शक्यः कर्तुमित्यनियमः। अथवा फलसमानकर्तृकत्वे सामानाधिकरण्यात्मनेपदाभ्यां समस्तस्य प्रयोगस्य प्राप्ते, यन्मात्रमेवाबाधित्वा परिक्रयविधिरशक्यः तदेव बाधितव्यम्। स चेकेन कर्त्रा यत्किंचित्कुर्वतोपपन्न इति, नानेकं बाधितव्यमिति ॥ २१ ॥**

**न्या० सु०—कर्त्रन्तरप्रवेशेपि यावत्समाख्यं कर्तृभेदाभावे सामाख्यानिकविनियोगायोगेनाऽस्याप्युपोद्घातत्वेन सङ्गतेर्यदि होत्रादयो नानाभूता इति पूर्वाधिकरणसङ्गति-**

वार्त्तिकस्थेन नानाशब्देनैव सूचितत्व दृत्विजों वृणीत इत्यनेन वरणविधिर्ब्रह्माणं वृणीत इत्यादिभिर्वेति सन्देहाश्च ब्रह्मादिसंज्ञा उत्पत्तिस्थत्वाद्भेदिका, अनुत्पत्तिस्थत्वाद्वा नेतिसन्देहस्य कर्तृसङ्ख्यासन्देहहेतुताया नोत्पत्तौहीति सूत्रालोचनया ज्ञातुं शक्यत्वाद्दर्शपूर्णमासयोर्यशक्रत्वोश्चत्वार ऋत्विजश्चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः, पशुबन्धस्य यज्ञक्रतोः षड् ऋत्विजः, सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विज इतिसङ्ख्यावाक्यानां प्रचयप्राप्तसंख्याविध्ययोगात्पाक्षिकानुवादत्वावगतेः सङ्ख्याविशेषाविधानेनानियमे पूर्व्वपक्षिते शास्त्रार्थाव्यवस्थाशङ्कानिरासार्थं शेषपदार्थानामन्यकार्यत्वनियमे सति, कस्यचिच्छेषपदार्थस्य स्वयङ्कर्त्तुमन्याय्यत्वात् यदा यावन्तः सर्वानन्यकार्यान् पदार्थान् कर्तुं शक्नुवन्ति, तदा तावन्त इत्यर्थात्कर्तृसङ्ख्याव्यवस्थेत्युक्तमित्येवं सूत्रव्याख्यामात्रं सूचयितुमाह—एकस्येति। त्र्यादयः अपिवाशब्देनोक्ताः। आद्यावयवस्य व्याख्ययोत्तरावयवशेषत्वं सूचितम्। एकस्य कर्म्मभेदादिति सूचितम्।

परिक्रयान्यथानुपपत्त्या स्वयङ्कर्तृत्वस्य बाध्यत्वात्कस्मिंश्चित्पदार्थे परिक्रीतेनैकेन कृतेऽनुपपत्तौ परिहृतायां पदार्थान्तरे स्वयङ्कर्तृत्वबाधस्याऽन्याय्यत्वादेक एवोपादेय इति पूर्व्वपक्षान्तरमाह—अथवेति। फलकामस्य फलभावनायां प्रवृत्तौ फलकर्तृत्वात्समानकर्तृकता प्रयोगस्योक्ता ॥ २१ ॥

भा० प्र०—ज्योतिष्टोमादियज्ञ में त्याग ही यजमान का कर्त्तव्य है। अन्य कर्म ऋत्विजों के द्वारा अनुष्ठित होते हैं क्योंकि ऋत्विजों का परिक्रय शास्त्र में उपदिष्ट है। यह सिद्धान्तीत होने पर कतिपय ऋत्विजों के द्वारा कर्म सम्पन्न होगा कितने ऋत्विजों का परिक्रय करना होगा यह संशय होता है। पूर्वपक्षी का कहना है कि—

"तत्र अनियमः अर्थात् कर्तृपरिमाणं स्यात्" ऋत्विजों के विषय में किसी प्रकार की संख्या का नियम अर्थात् इतने लोग होंगे यह नियम नहीं चल सकता है कारण ऋत्विजों के द्वारा कर्म सम्पादन कराना ही पड़ेगा। ऋत्विक् कर्म के अनुसार एक या एक से अधिक हो सकते हैं इसलिए अर्थात् "कर्तृपरिमाणं" प्रयोजन के अनुसार ऋत्विजों का परिमाण अर्थात् संख्या जिस रूप में आवश्यक होगी वहाँ उसी रूप में गृहीत होगी। एक या एक से अधिक ऋत्विजों की संख्या होने पर भी सभी जगह परिक्रयविधि चरितार्थ होगी कारण कर्म विशेष में एक का परिक्रय करने पर भी परिक्रय ही है कर्म विशेष में एक से अधिक ऋत्विक् का परिक्रय करने पर भी परिक्रय ही है कर्मविशेष में एक से अधिक ऋत्विक् का परिक्रय करने पर भी परिक्रयविधि सार्थक होती है इसीलिए "तत्र अनियम" ऋत्विजों की संख्या के विषय में कोई नियम नहीं हो सकता है कारण "अविशेषात्" इस पक्ष में कोई विशेष उक्ति नहीं है।

"तत्र" = इस विषय में अर्थात् ऋत्विजों के सम्बन्ध में "कर्तृपरिमाण" कर्त्ता का परिमाण या संख्या "अर्थात् स्यात्" = अर्थ के अनुसार अर्थात् प्रयोजन के अनुसार

होगी "अनियमः" इस विषय में कोई नियम नहीं है। "अविशेषात्" = क्योंकि उस विशेष का कोई कारण नहीं हैं अर्थात् इतने ही होगें इस प्रकार की कोई युक्ति नहीं है ॥ २१ ॥

## अपि वा श्रुतिभेदात्प्रतिनामधेयं स्युः ॥ २२ ॥ सि० ॥

शा० भा०—यावन्ति कर्तृनामधेयानि कर्माणि श्रूयन्ते, तावन्तो वरीतव्याभिद्यन्ते। तानि नामधेयश्रवणानि। तान्पुरोऽध्वर्युर्विभजति, प्रतिप्रस्थाता मन्थिनं जुहोति, नेष्टा पत्नीमभ्युदानयति, उन्नेता चमसानुन्नयति, इति। तथा 'प्रस्तोता प्रस्तौति, उद्गातोद्गायति, प्रतिहर्ता प्रतिहरति, सुब्रह्मण्यः सुब्रह्मण्यामाह्वयां, होता प्रातरनुवाकमनुब्रूते, मैत्रावरुणः प्रेष्यति। चानुचाऽऽह, अच्छावाको यजति, ग्रावस्तुत्, ग्रावस्तोत्रीयामन्वाह। एतावद्भिः कर्मणि प्रयोजनम्। तेन तेऽवश्यमेतानि यथाश्रुतानि कर्तुं वरीतव्याः। एतद्व्यतिरिक्तोऽन्यः पदार्थो न विद्यते। योऽपि वाक्येन नोपदिष्टः, स समाख्यया गम्यते। तस्मादेतावतो वृणीत इति ॥ २२ ॥ क० सि० ॥

त० वा०—भिन्नसमाख्यानियतकर्तृकपदार्थयुक्तभावनाविधिना तावतामुपादानमितिविहितं भवति। 'संज्ञा चोत्पत्तिसंयोगात्' इति चैष न्यायो यथा कर्मभेदं बोधयितुं समर्थः तथा कर्तृभेदमपीति यावत्समाख्यं कर्तरि उपादातव्याः ॥ २२ ॥

न्या० सु०—कर्तृविशिष्टविभागादिपदार्थविधिष्वध्वर्य्वादिनामधेय श्रुतिभेदात्प्रतिनामधेयं भिन्नाः कर्त्तारः स्युरित्येवं सूत्रव्याख्यां सूचयितुमाह—भिन्नेति। कर्मभेदप्रमाणत्वात्संज्ञायाः तया कर्तृभेदासिद्धिमाशङ्क्य, संज्ञिभेदं विना संज्ञाभेदानर्थक्यन्यायतुल्यत्वात्कर्तृभेदेपि प्रामाण्यमाह—संज्ञा चेति। सिद्धान्तमुपसंहरति—इतीति ॥ २२ ॥

भा० प्र०—ऋत्विजों की संख्या का कोई नियम नहीं है इस पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "अपिवा प्रतिनामधेयञ्च" जो विशेषकर्म हैं उन कर्मों के अनुसार ऋत्विजों की उतनी संज्ञा अर्थात् नाम हैं यथा—"तस्मात पुरोध्वंर्युर्विगणति, प्रतिप्रस्थाता मन्थिनञ्जुहोति" नेष्टापत्नीमभ्युदानयति, उन्नेताचमषान् उन्नयति, प्रस्तोता प्रस्तौति उद्गाता उद्गायपति, प्रतिहर्त्ता प्रतिहरति, सुब्रह्मण्यामाह, होता प्रातरनुवाक् मनुब्रूते, मैत्रावरुणः प्रेष्यति च अनुचाह, अच्छावाकोयजति, ग्रावस्तत् ग्रावस्तोत्रिया मन्वाह इत्यादि श्रुतियों में ऊध्वर्ण आदि के पक्ष में पृथक्-पृथक् रूप से अनुष्ठेय भिन्न-भिन्न कर्मों के अनुसार विभिन्न संज्ञा दी गयी है और जितने नाम हैं उतनी संख्या में ऋत्विक् होंगे। वार्तिककार ने कहा है "संज्ञा च उत्पत्तिसंयोगात्" (दी मीमांसा दर्शन अ० २ पाद २ अधिकरणं ८ सूत्र ३२) इस सूत्र से सूचित अधिकरण में जिस युक्ति से संज्ञा से कर्म का भेद साधित होता है इस स्थल में ही उसी युक्ति के अनुसार समाख्या के अनुसार संज्ञा के अधीन ऋत्विजों का पार्थक्य होगा। इसलिए ऋत्विजों की संख्या अनियत नहीं है।

"अपिवा" पूर्वपक्ष के निरास के लिए। "श्रुतिभेदात्" श्रुति भेद अर्थात् नामभेद होने से "प्रतिनामधेयाषु" अर्थात् प्रतिनामधेय होगा, अर्थात् जितना नाम है उतने ऋत्विक होंगे इति सिद्धान्त ॥ २२ ॥

## एकस्य कर्मभेदादिति चेत् ॥ २३ ॥

**शा० भ०—एवं चेत्प्रतिज्ञायते, एतावतो वृणीत इति। तन्न। यो यस्तत्कर्म करिष्यतीति संकल्पते, स स तत्तच्छब्दाभिधेयो भवति। एकोऽपि बहून्पदार्था-न्कर्तुं बहुभिर्नामधेयैरुच्येत। तस्मादनियमः ॥ २३ ॥ आ० ॥**

त० वा०—व्याप्रियमाणानामेताः समाख्या उपलभ्यन्ते। न च लोकादवगता इति यूपादिवत्कार्यंतस्तावत्परिच्छिद्यन्ते। पाचकादिवत्तत्तद्धौत्रादिकर्म कुर्वंल्हो-त्रादिशब्दैरभिधास्यत इत्यभेदः ॥ २३ ॥

न्या० सु०—एकस्याप्यध्वर्य्वादिनामधेयश्रुतिभेद उपपद्यत इत्याशङ्कार्थं सूत्रं सिद्ध-संज्ञानां कर्म्मान्वयविधानादयुक्तमाशङ्क्यार्थविशेषवाचित्वेनाऽध्वर्य्वादिसमाख्यानां लोकाद-नवगतेर्योऽध्वर्युः स विभजतीति वचनव्यक्त्ययोगाद्विभागादौ व्याप्रियमाणावस्थायामुपलम्भेन यो विभजति सोऽध्वर्युरिति यूपादिवद्विपरीतवचनव्यक्त्याश्रयणाद्विभागादिकार्यंकर्तृस्वरूपार्थ-वाचित्वेन परिच्छेदमुपपादयति—व्याप्रियमाणानामिति। कर्म्मयोगेनाध्वर्य्वादिशब्दार्थ-परिच्छेदमस्मिन् गृहे देवदत्तः पाचक इत्युक्ते ज्ञातपाचकशब्दार्थस्यास्याज्ञातदेवदत्तशब्दार्थस्य योऽस्मिन् गृहे पाककर्त्ता, स देवदत्त इति पाचककर्म्मयोगाद्देवदत्तशब्दार्थपरिच्छेददृष्टान्तेन दृढयन्नुपसंहरति—ततश्चेति ॥ २३ ॥

भा० प्र०—पूर्वोक्त सिद्धान्त के उत्तर में पूर्वपक्षीय ने आशंका की है कि जितने कर्म हैं उतना नाम हो कोई हानि नहीं है किन्तु जितने नाम हैं उतने ही ऋत्विक् होंगे यह कहना युक्तिसंगत नहीं है। कारण "कर्मभेदात् एकस्य" कर्म के भेद के अनुसार एक ही ऋत्विक् का भिन्न-भिन्न नाम हो सकता है जैसे एक ही व्यक्ति अध्ययन के समय उपाध्याय यज्ञादि कर्म में ऋत्विक आदि नाम से भिन्न-भिन्न उल्लिखित होता है यहाँ भी वैसा ही होगा।

"एकस्य" = एक मनुष्य का अर्थात् एक ही ऋत्विक का भिन्न-भिन्न नाम "कर्मभेदात्" भिन्न-भिन्न कर्म के अनुसार "इतिचेत्" यदि यह कहा जाय आशंका ॥२३॥

## नोत्पत्तौ हि ॥ २४ ॥

**शा० भा०—नैतदेवम्, उत्पत्तौ पुरुषाणाम्। उत्पाद्यमानेषु पुरुषेषु नाम-धेयानि भिद्यन्ते। 'ब्रह्माणं वृणीते, उद्गातारं वृणीते, अध्वर्युं वृणीते, इत्येवमादि। तस्मात्कर्मणि तैरेवंनामकैः प्रयोजनम्। अवश्यं ते वरीतव्याः। तस्मादेषां वरणे संकीर्तनं न विधिः। प्रयोजनस्याभावान्नानुवादः। न वेदे**

तावन्तो वरीतव्या इति ब्रूयात् । अनर्थकमेव स्यात् । शक्नोति चेदं प्रत्याययितुं संख्याविशेषम् । तस्माद्यः संख्याविशेष एषां प्रतीयते, तदर्थमेतद्वचनम् । तस्मात्, षोडश कर्तारो वरीतव्याः तावत्कर्तृकश्च सोमः स्यात् । एवं दर्शपूर्णमासयोरपि ॥ २४ ॥ आ० नि० ॥

परिक्रीतानां ऋत्विजां संख्याविशेषनियमाधिकरणम् ॥ ९ ॥

त० वा०—यदि हि कर्मविनियोगवेलायामेतदुत्तरकालं वैताः समाख्याः श्रूयेरन्, एन्नेवं सति न भिन्द्युरपि । वरणं त्वत्यन्ताप्रवृत्तानां प्रवर्तनार्थमभ्यर्थनम् । तत्रैताः श्रूयन्ते 'ब्रह्माणं वृणीते' इत्यादि । न च तदानीं निमित्तान्तरं दृश्यते, यत्कृतः समाख्याभेदो भवेत् । वरणान्यपि चैतानि 'एकस्यैवं पुनः श्रुतिः' इत्येवं गुणश्चापूर्वसंयोगे' इत्येवं वावच्छ्रुति भिद्यन्ते । तद्भेदाच्चोपादेयानामृत्विजामपि तत्परिमाण एव भेदः । समाख्यानामपि च प्रागनुपलब्धेरुत्तरकालं च सिद्धवद्व्यवहाराद्वरणनिमित्ततैव गम्यते ।

निमित्तभेदाच्च नैमित्तिकभेदसिद्धिः । दृष्टार्थत्वाच्च नैकस्यैव कर्तुः पुनः पुनर्वरणं कर्तुं शक्यते, सकृदुपात्तस्य पुनरुपादानानुपपत्तेः । उत्पत्तिवाक्यशिष्टवरीतव्यबाधविकल्पासंभवाच्च । न शक्यं तनैव वरणेन क्रियमाणान्तरं संबन्धम् । अतोऽपि वरणानि भिद्यन्ते । सर्वाणि च तान्यैन्द्रवायवादिग्रहणवदपर्यायविधायिना प्रयोगवचनेन गृह्यन्ते । तद्ग्रहणवशेन च सर्वर्त्विजां ग्रहणम् । अतो यावद्वरणमृत्विजां भेदसिद्धिः ।

वरणानुवादेन संख्याविधानमिति भाष्यमतस्य निरासः

तत्तु भाष्यकारेणोक्तं तस्मादेषां वरणे संकीर्तनं न विधिरित्यादि तदविहितवरणनियमप्राप्त्यभावादयुक्तम् । न चैतावतो वाक्यराशेः कल्पितैकवाक्यत्वस्य सुखतरोपायप्रचयलभ्यसंख्यामात्रप्रत्यायनं फलं भवितुमर्हति । तेन वरणविधिनैवानुनिष्पादिनी प्रचयविशिष्टैव संख्या सेत्स्यतीत्येतदेव समर्थयितव्यम् । न किंचित्तया विहितया ॥ २४ ॥

( इति नवमं ऋत्विजां संख्यानियमाधिकरणम् ॥ ९ ॥ )

न्या० सु०—नाध्वर्य्वादिकर्म्मभेदनिमित्तोऽध्वर्य्वादिसंज्ञाभेदो यस्मादुत्पत्तौ कर्त्तुरुपादानार्थे वरणे सा वाम्नात इत्येवंशङ्कानिरासार्थं सूत्रमुत्पत्तिस्थत्वस्य कर्तृभेदहेतुत्वोपपादनायाऽनुत्पत्तिस्थतायामभेदकत्वात्युक्तिपूर्व्वं व्याचष्टे—यदि हीति । चरणस्याध्ययनादिनिष्पादितकर्तृत्वयोग्यपुरुषोपादानार्थत्वेपि वरणं विना परार्थे कर्म्मणि प्रवृत्त्ययोगात्कर्तृत्वानुत्पत्तेरुत्पत्तित्वोक्त्युपपत्तिसूचनायाऽत्यन्ताप्रवृत्तपुरुषप्रवर्त्तनार्थं प्रार्थनरूपतोक्ता । श्रवणक्रियाविशेषणत्वापदीति नपुंसकलिङ्गैकवचनाविरोधः । उत्पत्तिस्थानां संज्ञानां वरणाख्यनिमित्तातिरिक्तकर्म्मान्वयनिमित्तायोगात्कर्तृभेदकत्वमुपपादयितुमाह—न चेति । अध्वर्य्वा-

दिवाक्यैर्वरणविधावध्वर्य्वादिविशिष्टवरणविधानात्तेभ्य एवर्त्विग्विशिष्टवरणप्राप्तेर्ऋत्विग्वाक्यानर्थक्यप्रसङ्गादृत्विग्वाक्यविहिते वरणेऽध्वर्य्वादिवाक्यानां वरीतव्यविशेषसमर्पणार्थत्वेनाऽनुत्पत्तिविधितयाऽध्वर्य्वाद्युत्पत्तिरूपवरणाभेदादेकेन च वरणेनानेकर्त्विगुत्पत्त्ययोगादृत्विग्भेदासिद्धिमाशङ्क्यर्त्विग्वाक्येन शुद्धवरणविधावृत्विक्पदानर्थक्यापत्तेरेकेनैव च वरीतव्येन नैराकाङ्क्ष्याद्विकल्पेनाध्वर्य्वादिवाक्यानां वरीतव्यसमर्प्पकत्वापत्तेर्ऋत्विग्विशिष्टविधौ तु 'नियमस्तु दक्षिणाभिरिति न्यायेनाध्वर्य्वादीनामेवर्त्विक्त्वावधारणाद्वरीतव्यविशेषज्ञानसिद्धेर्दीक्षादक्षिणवाक्यवच्च क्रमवाचिशब्दाभावेनाध्वर्य्वादिवाक्यानां क्रमार्थत्वायोगादानर्थक्यापत्तेर्बहुवाक्यार्थवत्त्वायर्त्विग्वाक्यमात्रस्य स्तुत्यर्थत्वेनानुवादत्वावगमोऽध्वर्य्वादिवाक्यैरेवच वरणविधिं मत्वाऽध्वर्य्वादिशब्दानामौदमेधिन्यायेन कर्मनिमित्तत्वाभ्युपगमे भिन्नपुरुषसमर्थकत्वाभावेन गुणाद्भेदाभावेऽप्यभ्यासाद्रूढित्वेन वा भिन्नपुरुषसमर्प्पकत्वादगुणाद्वरणभेदप्रतीतेः ऋत्विग्भेदसिद्धिमाह—**वरणान्यपिचेति**। अध्वर्य्वादिवाक्यानां वरणविधित्वसूचनायैतानीतिविशेषणम्। न केवलमृत्विगुपादानर्थवरणभेदादृत्विग्भेदः किंत्वध्वर्य्वादिसमाख्यानां भिन्नपुरुषविषयवरणनिमित्तकत्वेन भिन्नपुरुषविषयत्वादिरीतिमाह—**समाख्यानामपिचेति**। निमित्तान्तरादर्शनेनैव तावत्पारिशेष्याद्वरणनिमित्तता गम्यते।

वरणान्वयव्यतिरेकाभ्यामपि सैव गम्यते। तेषां च निमित्तानां वरीतव्यविषयभेदेन नैमित्तिकानामध्वर्य्वादिनाम्नां वाच्यविषयभेदार्थसिद्धिरिति व्यवहारशब्दात्परतोपिच शब्दान्वयेन भेदोक्तयोश्चाधिकरणव्युत्पत्त्या विषयभेदार्थत्वाभ्युपगमेन व्याख्येयम्। वृतानामपि होत्रादीनामनुयाजार्थं पुनर्वरणवदेकस्यापि तत्तत्कर्म्मार्थं पुनःपुनर्वरणोपपत्तेर्वरणानामेव भिन्नविषत्वासिद्धिमाशङ्क्य, कर्मारम्भकालीनत्वेनैषां दृष्टोपादानार्थत्वे सम्भवत्यनुयाजार्थवरणवददृष्टार्थत्वायोगात् तावत्कार्यार्थं च सकृद्वरणोपपत्तेरुपात्तोपादानायोगाच्च विषयभेदमुपपादयति—**दृष्टार्थत्वाच्चेति**। एकस्य पुनःपुनर्वरणायोगेऽप्यृत्विजो वृणीत इत्यस्य वरणोत्पत्तिविधित्वेन वरणभेदाभावादेकस्मिंश्च वरणेऽध्वर्य्वादिवाक्यविहितानां वरणीयानां समुच्चयायोगादृत्विज इति बहुत्वस्य चोद्देश्यविशेषणत्वेनाविवक्षितत्वात्परिक्रयान्यथानुपपत्त्या चर्त्विक्प्राप्तेश्चमसाध्वर्युबहुत्ववदप्राप्तोद्देश्यविशेषणत्वाभावादध्वर्य्वादिशब्दानांभिन्नपुरुषसमर्प्पकत्वेनैकस्य कस्य चिद्धर्म्मनिमित्तत्वाद्भिन्नपुरुषसमर्प्पकत्वाभावे वा यावत्कर्त्तव्यात्तमेकस्य सकृद्वरणं भविष्यतीत्याशङ्क्यर्त्विग्वाक्येन वरणमात्रविधावृत्विक्पदानर्थक्यापत्तेः ऋत्विग्विशिष्टवरणविधिप्रसङ्गेनाध्वर्य्वादिवाक्यानर्थक्यप्रसङ्गादध्वर्य्वादिवाक्यानामेव वरणोत्पत्तिविधित्वावगतेस्तत्र चाध्वर्य्वादिशब्दानां कर्म्मनिमित्तत्वेऽप्यध्वर्य्वादिकर्म्मकरणत्वेन वरीतव्यस्योत्पत्तिवाक्यशिष्टस्य बाधविकल्पासम्भवात्, अन्योन्यनैरपेक्ष्येण समुच्चयस्याप्यसम्भवान्न शक्य। सकृत्कृतेनैकेन वरणेनानेककर्म्मकरत्वेन क्रियमाणः पुरुष। यजमानेनात्मना सम्बन्धुं ततश्च समुच्चयायोगादपि वरणानि भिद्यन्त इति परिहारमाह—**उत्पत्तौति**। वरणान्यपिचेत्यत्रैकेन वरणेनानेकपुरुषोपादानायोगात्, वरणभेदो गुणाद्युक्त इह त्वेकस्यापि पुंसोऽनेककर्म्मार्थत्वेनोपादानायोगादित्यपौनरुक्त्यम्। एकस्यापि पुंसोऽने-

ककर्मार्थे वरणेनोपादेयत्वं व्रियमाणान्तरोक्त्योपसंहारादुक्तम् । एकस्मिनप्यनेककर्म्मार्थोपादानसमुच्चयायोगेऽपिशब्देन सूचितः । वरणानां भेदेपि सर्वेषां कर्त्तुरुपादानार्थतयैकार्थ्येन च वैकल्पिकत्वात् तदुपादेयत्वित्रिविकल्पो भविष्यतीत्याशङ्क्याह—सर्वाणि चेति । सूत्रार्थमुपसंहरति—अत इति ।

तान् पुरोध्वर्युर्विभजतीत्यादिवाक्यैर्विभागादिकर्म्मार्थत्वेनाऽध्वर्य्वादीनां वरीतव्यत्वप्राप्तेर्वरणकीर्त्तनस्य विधित्वायोगात्प्रयोजनाभावेन चानुवादत्वायोगात्प्रचयगम्यषोडशसङ्ख्याप्रत्यायनार्थत्वोक्त्यर्थं तस्मादित्यादिभाष्यमविहितवरणस्याध्वर्य्वादेर्नियमेन वरीतव्यत्वप्राप्त्यभावात्, अन्योन्यानपेक्षाध्वर्य्वादिविशिष्टभिन्नवरणविधायित्वेन स्पष्टावगतभिन्नवाक्यत्वानाञ्च अध्वर्य्वादिवाक्यानामप्रतीयमानैकत्वकल्पनेन प्रचयाख्यसुखतरोपायलभ्यसङ्ख्यामात्रप्रत्यायनार्थत्वस्य वा युक्तत्वाद् दूषयति—यत्त्विति ।

कथं तर्हि भाष्यकारस्तूभयथापि भेदो भवतीत्येतत्प्रतिपादनपर इति टुप्टीकाग्रन्थेऽस्यापि प्रकारस्याभ्यनुज्ञेत्याशङ्क्य, प्रौढिमात्रं तत् वस्तुतस्तूत्पद्यमाना एवैते भिन्ना एवोत्पद्यन्ते, प्रचयात्तु या संख्या सैवानुवाद इत्येतदेव टुप्टीकोक्तं युक्तमिति सूचयितुमाह—तेनेति । अध्वर्य्वादीनामेकवरणाख्यधर्मान्वयलक्षणे प्रचये सत्यपि, कथं सङ्ख्यावगतिरित्याशङ्क्य, भिन्नवरणविध्यनुनिष्पत्तिर्हेतुत्वेनोक्ता ॥ २४ ॥

इति नवमं ऋत्विजां संख्या नियमाधिकरणम् ।

भा० प्र०—पूर्वपक्षी की आशंका के परिहार के लिए कहा गया है कि यदि कर्म के विनियोग के समय अथवा कर्म के शेष में यदि नाम का निर्देश रहता तब तो यह कहा जा सकता था किन्तु अप्रवृत्त ऋत्विजों के प्रवृति विधान के लिए वरण किया जाता है और वरण के समय उस नाम का उल्लेख कर उस कर्म में संस्कारपूर्वक नियुक्त किया जाता है अतः उसमें द्वितीय अध्याय के द्वितीय पाद का एकस्य एवं पुनः श्रुतिः "इत्यादि द्वितीय सूत्र एवं गुणश्च अपूर्वसंयोगे" इत्यादि चौबीसवें सूत्र के अनुसार ऋत्विजों का परस्पर भेद ही होता है और जिस नाम का निर्देश कर वरण कर्म होता है वह श्रुति में ही उक्त है इसलिए वचन के अनुसार पृथक्-पृथक् व्यक्ति ही ऋत्विक् हो सकता है ज्योतिष्टोम दर्शपूर्णमास आदि कर्मभेद में उनको संख्या भी कही गयी है अर्थात् चार पुरुष के रूप में नियमित है।

"न" नहीं अर्थात् इस प्रकार की आशंका ठीक नहीं है। "हि" क्योंकि "उत्पत्तौ" अर्थात् उत्पत्ति समय में अर्थात् कर्म के आरम्भ में वरण के समय इस प्रकार का भेद देखा जाता है ॥ २४ ॥

इति नवम ऋत्विजों की संख्या का नियमाधिकरण ॥

## [१०] चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ २५ ॥ सि० ॥

शा० भा०—सन्ति ज्योतिष्टोमे चमसाध्वर्यून् वृणीते, इति । तेषु संदेहः—

किमेषामन्यतमा, उतैतेभ्योऽन्य इति। किं तावत्प्राप्तम् ? एतावतां संकीर्तनादेशामेवान्यतमा इति प्राप्ते।

ब्रूमः—चमसाध्वर्यवश्चापरे भवेयस्तेभ्योऽन्य इति। कुतः ? तैर्व्यपदेशात्। तैः परिगणितैरेषां व्यपदेशो भवति। मध्यतःकारिणां चमसाध्वर्यवो, होत्रकाणां चमसाध्वर्यव इति।

ननु य एव प्रकृतास्ते चमसाध्वर्यवो भवेयुः। नेति ब्रूमः। कुतः ? तैर्व्यपदेशात्। मध्यतःकारिणां चमसाध्वर्यवो होत्रकाणां चमसाध्वर्यव इति। षष्ठी सम्बन्धे सति भवति। ऋत्विग्भिस्ते व्यपदिश्यन्ते। ऋत्विजस्तेषां स्वामिनो, न यजमानः। यजमानपुरुषेभ्यश्चैतेऽन्य इति नः प्रतिज्ञातम्। न यजमानेन चमसाध्वर्युत्वं[1] कर्तुं वरीतव्याः, ऋत्विग्भिस्ते वरीतव्या इति। अपि चैषामुत्पत्तिवाक्य एव भेदः। चमसाध्वर्यून् वृणीत इति॥ २५॥

चमसाध्वर्युणां पृथक्ताधिकरणम्॥ १०॥

त० वा०—अध्वर्यव इति समाख्यानात्तेषां चमससंबन्धादध्वर्यवपुरुषा एव चमसाध्वर्यव इति प्राप्ते।

अभिधीयते पृथक्त्वनियतत्वाद्व्यपदेशानां सर्वैश्चेतरैस्तुल्यवत्पृथक्त्वेन व्यपदेशादुत्पत्तौ च वरणान्तराम्नानात्पूर्ववदेव भेदः। यद्यपि च यजमानेन व्रियन्ते, तथाऽपि तदाज्ञाकरत्वेन व्रियमाणत्वाद्भूवरयेव तदीयत्व व्यपदेशः॥ २५॥

( इति दशमं चमसाध्वर्यूणां पृथक्त्वाधिकरणम्॥ १०॥ )

न्या० सु०—चमसाध्वर्युसंज्ञाया अप्युत्पत्तिस्थत्वात्पूर्वन्यायेनैव भेदकत्वसिद्धेरधिकाशङ्काभावेनाऽतिदेशायोगमाशङ्क्याऽध्वर्य्यादिसंज्ञानामवल्लसार्थत्वेन वरणनिमित्तकत्वावगतेर्यद्विवरणं वरीतव्यभेदकत्वं युक्तम्। अस्यास्तत्त्वध्वर्युपुरुषेष्वेव चमसान्वयेनोपपत्तेर्न भेदकतेत्यधिकाशङ्कां सूचयन्पूर्वपक्षमाह—अध्वर्यव इति। सिद्धान्तमाह—इतीति। षष्ठीव्यपदेशस्य भेदकत्वोपपादनार्थं सम्बन्धिपृथक्त्वे सत्येव सम्बन्धवाचिषष्ठीव्यपदेशनियतत्वेभिहितेऽध्वर्यूणामेवर्त्विगन्तरसम्बन्धोपपत्ति नन्वितिभाष्येणाशङ्क्य, तैः सर्वैर्होतृब्रह्मोद्गातृयजमानैर्मध्यतः कारिभिः, प्रशास्तृब्रह्माणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्रैश्च होत्रकैर्व्यपदेशान्नेष्टुश्चाध्वर्युपुरुषस्यात्मना सम्बन्धव्यपदेशायोगादित्येवं सर्वशब्दाध्याहारेण आवृत्त्या तैरितिसूत्रावयवव्याख्यया परिहारार्थं नेतीत्यादिभाष्यं व्याख्यातुं सर्वश्चेत्युक्तम्। वृतानां पुनर्वरणानर्थक्याद्वरणार्थत्वेन चकारव्याख्यार्थमपिचेति भाष्यमुत्पत्तौ चेत्यनेन व्याख्यातम्। चमसाध्वर्य्यवश्च भिन्नाः स्युरित्येवं साध्यानुकर्षणार्थत्वेनापि चकारव्याख्या भेदोक्त्या सूचिता। तैर्ऋत्विग्भिः स्वामिभूतैर्व्यपदेशादृत्विजां चर्त्विक्स्वा-

1. क० चमसाध्वर्य्यवं।

मिकत्वायोगादित्येवं स्वामिशब्दाध्याहारेण तैरितिसूत्रावयवव्याख्यार्थमृत्विग्भिरित्यादि-भाष्यं कस्मादुपेक्षितमित्याशङ्क्य, यजमानवरणीयत्वेऽपि पृथक्स्वामिकत्वे व्यपदेशाविरोधे-नर्त्विग्वरणीयत्वोक्तेरयुक्तत्वादिति सूचयितुमाह—यद्यपिचेति ॥ २५ ॥

इति दशमं चमसाध्वर्यूणां पृथक्त्वाधिकरणम् ।

भा० प्र०—ज्योतिष्टोम में "चमसाध्वर्यून् वृणीते" इस वाक्य में चमसाध्वर्यु के विषय वर्णित है। चमसाध्वर्युगण ये ऋत्विजों के अन्तर्भुक्त हैं या नहीं—यह संशय है। इसमें पूर्वपक्षी का कहना है कि यौगिक संज्ञा के अनुसार ऋत्विजों को ही अध्वर्यु कहा जाता है, चमसाध्वर्यु पृथक् संज्ञा नहीं है।

इसके उत्तर में सिद्धान्ती का कहना है कि "चमसाध्वर्यंव च" चमसाध्वर्युगण ऋत्विजों से पृथक् हैं। कारण, "तैः व्यपदेशात्" ऋत्विजों के जैसे पृथक्-पृथक् वरण का उल्लेख है चमसाध्वर्युगणों का भी वैसे ही ऋत्विजों के साथ पृथक् वचन का उल्लेख है और अध्वर्यु होत्रादि से अभिन्न है—यह नहीं कहा जा सकता है, कारण, "मध्यत-कारिणां चमसाध्वर्यंवः" "होत्रकाणां चमसाध्वर्यंवः" अर्थात् अध्वर्यु होता आदि मध्यत। कारियों के चमसाध्वर्युगण प्रतिप्रस्थाता मैत्रावरुणादि होत्रकों का चमसाध्वर्युगणों से भेद ही अवगत होता है, क्योंकि, भेद में ही षष्ठी विभक्ति होती है।

"चमसाध्वर्यंवः च" चमसाध्वर्युगण भी स्वतन्त्ररूप में हैं, "तैः व्यपदेशात्" = क्योंकि ऋत्विजों के साथ उनका भी उल्लेख है। इति दशम चमसाध्वर्युगणों का पृथक्त्व अधिकरण ॥ २५ ॥

## [११] उत्पत्तौ तु बहुश्रुतेः ॥ २६ ॥ सि० ॥

शा० भा०—तेष्वेव संदेहः—किमनियमः, एको, द्वौ, बहवो वा, उत बहव एवेति। अनियम इति प्राप्ते।

उच्यते—बहव इति। कुतः ? उत्पत्तौ बहुश्रुतेः। चमसाध्वर्यंव इत्येषामु-त्पत्तौ बहुश्रुतिर्भवति। तस्माद्बहव इति ॥ २६ ॥

चमसाध्वर्यूणां बहुत्वनियमाधिकरणम् ॥ ११ ॥

न्या० सु०—चमसाध्वर्यूणामुद्देश्यत्वेऽप्यप्राप्तत्वेनोपनयने ब्राह्मणादेरिव विधेयत्वा-द्विवक्षितविशेषणतया बहुत्वनियमस्य—

नोपादेयत्वमेवैकं कारणत्वेन सम्मतम्।
विशेषणविवक्षायां कारणं हि महद्विधिः॥

इत्येतन्न्यायसिद्धत्वादुत्पत्तावप्राप्तविधौ स्थितां बहुश्रुतिमनुसृत्य चमसाध्वर्यवो भिन्नाः स्युरिति सूत्रार्थस्य स्पष्टत्वात्सूत्रपाठमात्रं कृतम् ॥ २६ ॥

भा० प्र०—श्रुति में "चमसाध्वर्यून् वृणीते" इस वाक्य में जो चमसाध्वर्यु का बहुत्व कहा गया है, वह बहुत्व विवक्षित है या अविवक्षित है अर्थात् क्या चमसाध्वर्यु बहुत होंगे अथवा एक हो या बहु जैसी इच्छा होगी—यही संशय है।

इसमें पूर्वपक्षी का कहना है कि "ग्रहं समार्ष्टि" इस स्थल में ग्रह का एकत्व जैसे अविवक्षित है, वैसे "चमसाध्वर्यून्" इस पद का भी बहुत्व भी विवक्षित नहीं है, अर्थात् एक, दो, अथवा बहु—किसी भी संख्या के होने से कार्य चल सकता है।

इसके समाधान में सिद्धान्ती का कहना है "उत्पत्तौ तु बहुत्वश्रुतेः" इस स्थल में उत्पत्ति वाक्य के बहुवचन रहने पर भी, वह पूर्व से प्राप्त नहीं है, अतः उसका बहुत्व भी विवक्षित है। पक्षान्तर में "ग्रहं सम्मार्ष्टि" यह ग्रह का उत्पत्ति वाक्य नहीं है। इसलिए, उसमें ग्रह पूर्व से प्राप्त होने से उसके एकत्व को विवक्षित नहीं कहा जा सकता है। क्योंकि, ऐसी स्थिति में वाक्य भेद होगा। किन्तु "चमसाध्वर्यून् वृणीते" यह उत्पत्ति वाक्य होने से अन्य वचन से चमसाध्वर्यु की प्राप्ति न होने से इसका बहुत्व विवक्षित है। अत एव, चमसाध्वर्यु अनेक होंगे।

"उत्पत्तौ" = उत्पत्तिवाक्य में, "तु" = अन्य अधिकरण का सूचक है, "बहुश्रुतेः" = बहुत्व श्रुत है। श्रुति में उल्लिखित होने से चमसाध्वर्यु बहुसंख्यका है॥ २६॥

इति एकादश चमसाध्वर्युगणों का बहुत्वाधिकरण।

## [१२] दशत्वं लिङ्गदर्शनात्॥ २७॥ सि०॥

शा० भा०—ज्योतिष्टोमे सन्ति चमसाध्वर्यवः, ते च बहव इत्युक्तम्। कियन्तो बहव इति सन्देहे। त्रयो बहुवचनसामर्थ्यादिति प्राप्ते।

ब्रूमः। दशत्वं लिङ्गदर्शनात्। ते दश भवेयुः। तथा हि। लिङ्गं ज्योतिष्टोमविकारे दशपेये श्रूयते, 'दश चमसाध्वर्यवो, दश दशैकैकं चमसमनुसर्पन्ति', इति। एतस्मात्कारणाद्दशपेयो भवतीति ब्रुवन् दश चमसाध्वर्यून्दर्शयति। यदि त्रयो भवेयुः, एतद्दर्शनं नोपपद्येत।

तस्मात्त्रीनतीत्यैषा संख्या। यदि च दश न भवेयुः, नोपपद्येतैतद्दर्शनम्। तस्माद्भवन्ति दश। दश चैषां स्वामिनः। तस्मात्प्रयोजनभावाद्दशसंख्योपादीयते। तस्यां चोपादीयमानायामपराऽपि संख्याऽनुगृह्यते। तेनापि दश भवेयुः॥ २७॥

चमसाध्वर्यूणां दशसंख्यानियमाधिकरणम्॥ १२॥

तं० वा०—बहुत्वानियमे 'प्रथमं वा नियम्येत' इति त्रित्वे प्राप्ते, दशपेये ज्योतिष्टोमविकारे दशत्वानुवादात्प्रकृतौ च दश व्रियन्त इति विज्ञायते। स्वामिदशत्वाच्चमसदशत्वाच्च दशत्वप्राप्तिः॥ २७॥

( इति चमसाध्वर्यूणां दशत्वनियमाधिकरणम्॥ १२॥ )

भा० प्र०—"चमसाध्वर्यून् वृणीते" इस श्रुतिवाक्य में चमसाध्वर्युओं का बहुत्व विवक्षित इस प्रकार का जो सिद्धान्त कहा गया है, उसमें संशय होता है कि अनेक कहने से क्या इस स्थल में त्रित्व अवगत होता है अथवा उससे अधिक अनियत संख्या ही बोधित होती है। इसमें पूर्वपक्षी का कहना है कि कपिञ्जलाधिकरणोक्त नियम के अनुसार अनेक पद का त्रित्व में ही जब शक्ति है तो (यह विषय आगे "प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् (११।१।४२ इस सूत्र में प्रतिपादित है) तीन चमसाध्वर्यु व्यक्ति को ही वरण करना होगा। इसके उत्तर में सिद्धान्ती का कहना है कि "दशत्वं च" दशत्व ही चमसाध्वर्यु की संख्या होगी, कारण, "लिङ्गदर्शनात्" दशपेयनामक याग में "दशदशैकैकं चमसमनुप्रसर्पन्ति" अर्थात् एक एक चमस की ओर दश-दश व्यक्ति को करके अग्रसर हों इस प्रकार कहा गया है। दशवार दश आदमी करने से ही उस श्रुति से बोधित शतसंख्यापूर्ण होने से प्रत्येक सङ्घ में दश व्यक्ति करके ही जाना होगा। उनके मध्य में चमसाध्वर्यु को जाना पड़ता है, किन्तु, वे संख्या में दश व्यक्ति न होने से पूर्वोक्त नियम नहीं चलता है और अन्य लोगों को लेकर दश संख्या को पूर्ण करना यह भी नहीं हो सकता है, इसका पूर्व में (६।५।२० अधिकरण में) विचार किया गया है। अतः ऐसी स्थिति में जब चमसाध्वर्यु की संख्या निर्दिष्ट है तो इस अनिर्दिष्ट स्थल में उसके अनुसार ही चमसाध्वर्यु की संख्या निश्चित होगी और इससे कपिञ्जलन्यायाधिकरण का विरोध भी नहीं है क्योंकि, उसमें अनिर्दिष्ट अविशेषित बहुत्व की ही त्रित्व में शक्ति होने से सिद्धान्तित होगा। इसीलिए, इस स्थल में दशपेययागप्रकरणीय श्रुतिवाक्य की आवश्यकता के अनुसार जब चमसाध्वर्यु दशत्व संख्या निरूपित होता है तब उसको त्रित्वबोधक नहीं महा जा सकता है, अतः, दश व्यक्ति चमसाध्वर्यु को करना होगा।

"दशत्वं च" = चमसाध्वर्युगण की दशत्व संख्या भी व्यवस्थित है "लिङ्गदर्शनात्" = क्योंकि इस प्रकार लिङ्ग अर्थात् श्रुतिवाक्य दृष्ट होता है ॥ २७ ॥

इति द्वादश चमसाध्वर्यु का दशत्वनियमाधिकरण।

## [१३] शमिता च शब्दभेदात् ॥ २८ ॥ पू० ॥

शा० भा०—अस्ति शमिता, 'शमितारमुपनयीत', इति। स किं संकीर्तितानामन्यतम्, उतान्यस्तेभ्य इति। किं प्राप्तम्? तेषां वरणे संकीर्तनात्तेषामन्यतम इति प्राप्ते।

उच्यते—शमिता च शब्दभेदात्। शब्दो भिद्यते। एवं संज्ञकेनेदं कर्म कर्तव्यमिति। तस्मादेवसंज्ञक उत्पादयितव्यः। अस्य संकीर्तनात्संख्याविवृद्धिर्गम्यते। तस्मादन्यः शमिता स्यात्। अपि च, 'क्लोमा चार्धं वैकर्तनं च शमितुः। तदब्राह्मणाय दद्याद्यब्राह्मणः स्यादिति, अब्राह्मणाशङ्का भवति। सा ऋत्विजि नोपपद्यते ॥ २८ ॥ पूर्व० ॥

न्या० सु०—कपिञ्जलाधिकरणसिद्धान्ताभ्युपगमेऽपि मध्यतः करिणां त्रयः, च स्चमसाध्वर्यवो, होत्रकाणां त्रयोन्ये, व्यपदेशभेदादिति षट्कापत्तेस्त्रित्वनियमाभावपक्षस्यापि सम्भवोक्तिपूर्वं सूत्रेण सिद्धान्तमाह—बहुत्वेति। दश चेत्यादिभाष्यं प्राप्त्युक्तयर्थत्वेन व्याचष्टे—स्वामीति। भाष्यं चैकस्यापि ग्रामभृत्यवदनेकस्वाम्यन्वयाविरोधात्स्वामिदशत्वेपि त्रित्वनियमविरोधिनी चमसाध्वर्युदशता न युक्तेत्माशङ्क्य, ग्रामभृत्यस्याप्यन्योन्यानपेक्षानेकस्वामिकत्वायोगातितुइह च मध्यतः कारिणां होत्रकाणामिति बहुवचनावगतस्य साहित्यस्योद्देश्यविशेषणत्वेनाऽविवक्षितत्वात्, अन्योन्यानपेक्षस्वामिदशत्वावगतेस्तदन्यथानुपपत्त्याऽवगतेन दशत्वेन त्रित्वनियस्य लिङ्गदर्शनद्योतितदशत्वापनयप्रयोजकस्य बाधितत्वान्न दशताऽपनीयत इत्युक्तमित्येवं व्याख्येयम्। बहुवचनसामर्थ्यात्रित्वस्यपूर्वपक्षितस्य दशत्वे त्रित्वादीनां बहुत्वविशेषाणामन्तर्गते दशत्वोपादाने ततोऽपराणामर्वाचीनानां त्र्यादिसङ्ख्यानामनुग्रहात्सुतरां बहुवचनं समर्थितं भवतीत्येवं निरासार्थं तस्याञ्चेति भाष्यं कपिञ्जलाधिकरणातिदेशाद्भिन्नः स्यादिति सूत्रार्थस्य चशब्देन व्यपदेशाख्यस्य हेत्वन्तरस्य भिन्नत्वस्य च साध्यस्यानुकर्षणात् स्पष्टप्रतीतेः पूर्वपक्षसूत्रपाठमात्रं कृतम् ॥ २८ ॥

भा० प्र०—श्रुति में "शमितारमुपनीयतयज्ञम्" (न्यायकार के मत में इस स्थल में "शमितार उपेतनयज्ञम्" इस प्रकार का पाठ है) अर्थात् शमिता के यज्ञ में उपस्थित करना चाहिए, इस वाक्य में जो शमिता का विषय कहा गया है, वे ऋत्विजों से भिन्न हैं कि नहीं—यही संशय है, इसमें पूर्वपक्षी का कहना है कि "शमिता च" = शमिता भी एक भिन्न व्यक्ति है, कारण "शब्दभेदात्"=इस स्थल में शब्दभेद अर्थात् संज्ञाभेद है और संज्ञाभेद ही ऋत्विजों के भेद का साधन है—यह पूर्व में ही कहा गया है।

"शमिता च" = शमिता भी पृथक् व्यक्ति होगा, "शब्दभेदात्" = शब्दभेद अर्थात् संज्ञा का भेद होने से ॥ २८ ॥ इति पूर्वपक्ष।

## प्रकरणाद्वोत्पत्त्यसंयोगात् ॥ २९ ॥ सि० ॥

शा० भा०—सत्यं संख्याविवृद्धिर्गम्यते, न तूत्पद्यमानेषु। या त्वनुत्पत्तिस्तेषु गम्यते, तत्र, एकस्य कर्मभेदात्, इत्येवमप्यवकल्पते। यत्तूक्तम्, अब्राह्मणाशङ्का भवतीति। यजमानाप्रियाया सा, यद्यब्राह्मणो यजमानः स्यादिति। ननु यद्यब्राह्मणः स्यादिति प्रकृतः शमिता संबध्यते। उच्यते। शमयतीति शमिता। यौगिक एष शब्दः प्रकृतेष्वप्यवकल्पते। शामित्रमप्याध्वर्यवे समाम्नानादध्वर्युणा कर्तव्यम्। तस्माच्छमनादध्वर्युः शमिता। एवं सति अप्रकृतो यजमानः संबध्यते ॥ २९ ॥

### सि० शमितुरपृथक्त्वाधिकरणम् ॥ १३ ॥

त० वा०—उत्पत्तिगता समाख्या भेदिका भवति। न चेयं तद्गता। तेन 'एकस्य कर्मभेदात्' इत्येवमेव भवति।

नन्वध्वर्य्वादिषु व्याप्रियमाणेषु 'शमिता पशुं कण्ठे गृह्णाति' इति श्रवणाद्भेदः स्यात्। नैव दोषः। य एव कश्चिदव्यापृतः स एव ग्रहीष्यति। न च तदा सर्वाध्वर्युपुरुषाणां सर्वर्त्विजां वा व्यापारो विद्यते। तदेतद्वक्ष्यति 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इति। प्राप्त्यभावाच्च 'यद्यब्राह्मणः स्यात्' इति लिङ्गमसाधकमतो बलाद्यजमानविषयं कल्प्यते। यजमानप्रकरणाम्नाच्च, शामित्रस्य न कथंचिदब्राह्मणविषयत्वं विज्ञायते। हिंसात्वाद्ब्राह्मणो नेच्छेदिति चेत्तुल्यमेतदब्राह्मणस्यापि। स हि मन्दप्रतीकारः सुतरां प्रत्यवैति। तेन यथैव शूद्रादिः कथंचिदनिच्छन्कार्यते तथैव यो दानादिवशीकृतः करिष्यति सोऽनुष्ठास्यतीत्यविरोधः। एतेनैव हेतुनाऽऽर्त्विज्यं निन्द्यते ॥ २९ ॥

( इति शमितुरपृथक्त्वाधिकरणम् ॥ १३ ॥ )

न्या० सु०—वाशब्दं पूर्वपक्षनिरासार्थत्वेन स्पष्टत्वादव्याख्यायोपपत्त्यसंयोगादिति सूत्रावयवव्याख्यार्थं सत्यमित्यादिभाष्यं व्याचष्टे—उत्पत्तीति। अनुत्पत्तिस्थत्वेपि संज्ञाया—

वाच्यवाचकसामर्थ्यनियमो योभिधागतः।
संबन्धस्तदनेकत्वे स्वरूपात्सोवहीयते ॥ (त० वा० पृ० २८८)

इति न्यायेनैकस्य संज्ञिनोनेकसंज्ञानुपपत्तेर्भेदकत्वमाशङ्क्य, यौगिकतयास्याः शक्त्यकल्पनेन पूर्वसंज्ञाशक्तिनियमानपनायकत्वात्तन्न्यायाभावोक्त्यर्थसूत्रयोजनार्थं तत्रेतिभाष्यावयवं व्याचष्टे—तेनेति। अध्वर्य्वादावन्यत्र व्याप्रियमाणावस्थत्वे श्रुतायाः संज्ञायाः शमनाख्यकर्म्मान्तरयोगनिमित्तमन्वायोगमाशङ्कते—नन्विति। अन्यत्राव्याप्रियमाणस्यर्त्विजोत्र शमितृसंज्ञया ग्रहणोपपत्तेः कर्म्मान्तरयोगनिमित्तत्वोपपत्तिमाह—नैष इति।

सङ्क्षेपे दैव्याः शमितार आरभध्वमुत मनुष्या इति मनुष्यसमभिव्याहारादनियमेन प्रकृतपुरुषमात्रस्य शमितृत्वे मनुष्याः शमितारो वाक्यसन्निधानात् सूत्रेण पूर्वपक्षिते परिक्रयेणर्त्विजां सर्वकर्म्मार्थत्वावधारणाच्छमनकाले च तेषामेव सन्निधानाच्छमितरि चैकस्मिन्बहुवचनायोगेन शमितार इति बहुवचनस्य शमनार्थपशुनयनादिकार्य पेक्षत्वात्पशुनयनादेश्चार्त्विजत्वनिश्चयाच्छमनमप्यार्त्विजमिति पूर्वपक्षान्तरमृत्विजो वा सन्निधानादित्यनेन कृत्वा, शमिता सर्वकर्म्मणामविशेषादि इत्यनेनर्त्विजामन्यत्र व्यापृतत्वाच्छमनान्तर्भूतानां सर्वकर्म्मधर्मायोगमाशङ्क्याध्वर्यौ व्यापृते तत्पुरुष एव कश्चित्रिष्वपि वा पूर्वेषु व्यापृतेष्वन्यः कश्चिदृत्विजः शमितेति विवक्षितं, तच्चेतरमन्य १·१·१५ इति न्यायादुक्तमेवेति सूचयितुमाह—तदेतदिति। व्यपदेशोक्त्यनुकर्षणेन शमितर्यब्राह्मणाशङ्कायाः पूर्वपक्षलिङ्गतयोक्ताया निरासायोत्पत्तिशब्दं कर्म्मव्युत्पन्नमभिप्रेत्याब्राह्मणशब्दस्योत्पन्नेन प्रकृतेन शमित्रा संयोगाभावादित्युक्ते तदुपपादनार्थं प्रकरणोक्त्या शमितृशब्दस्य कर्म्मयोगनिमित्तत्वेनैकस्य कर्म्मभेदादिति न्यायात्प्रकृतेष्वृत्विक्षु ब्राह्मणेषूपपत्तेरब्राह्मणस्य शमितृत्वप्राप्त्यभावेनाब्राह्मणशब्दस्य शमितृविषयत्वायोगोभिहित इत्येवं शङ्कानुभाषणपूर्वं सूत्रव्याख्यार्थं यत्त्वित्यादि-

भाष्यशेषं व्याख्यातुमाह—प्राप्नोति । अब्राह्मणोक्तेः शमितृविषयत्वायोगेऽपि कथं यजमानविषयताऽवसीयत इत्याशङ्क्य, दीक्षणादिपित्र्याणां देवानाञ्च धर्म्माणां प्राकृतानां निवृत्तिरित्यादीनां सत्रिधर्म्माणां याजमानानां प्रकरणे यद्यब्राह्मण इत्याम्नानाद् यजमानविषयत्वावगत्युपपत्तिमाह—याजमानेति । यजमानविषयं कल्प्यत इत्युनुषङ्गेण पूरणीयम् । शामित्रमपीत्यादिभाष्यावयवः शामित्रस्याध्वर्यवसमाख्ययाध्वर्युकर्तृकत्वात्सङ्कर्षे वक्ष्यमाणादप्यब्राह्मणोक्तेर्न शमित्रा संयोगः संभवतीत्येवमुत्पत्त्यसंयोगोपपत्त्यन्तरोक्त्यर्थ इति सूचयितुं सङ्कर्षे शामित्रस्याद्यपूर्व्वपक्षे प्रकृतानामृत्विक्चमसाध्वर्यूणां मध्ये, द्वितीये चर्त्विजां मध्ये, तृतीये च चमसाध्वर्यूणामेव मध्ये केनचित् सिद्धान्ते चाध्वर्यूणां कार्यताया वक्ष्यमाणत्वान्न कथञ्चिदब्राह्मणकर्तृकता युक्तेत्याह—शामित्रस्येति ।

शमोदमस्तपः शौचं सत्यमार्ज्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म्म स्वभावजम् ॥

इति ब्राह्मणस्य शौचशीलत्वप्रसिद्धेर्दीक्षादिहिंसायाः क्रत्वधिकारिणो यजमानस्य विहितत्वेऽप्यृत्विजामविहिततया निषिद्धत्वेनाशुचित्वापादकत्वाच्छमनस्य च हिंसात्वादृत्विजो ब्राह्मणस्य तस्मिन् प्रवृत्त्यनुपपत्तेः शामित्रस्याब्राह्मणविषयत्वं ज्ञास्यत इति शङ्कते—हिंसात्वादिति । शौचशीलत्वस्य प्रायिकमात्रत्वेनाव्यापित्वान्नरकपातापादकत्वस्यानिच्छाहेतुत्वाभ्युपगमापत्तेस्तस्य चाब्राह्मणे सुतरां प्रसङ्गात्तुल्यत्वमाह—तुल्यमिति । पर्यनुयोगसाम्यमुक्त्वा परिहारसाम्यमाह—तेनेति ।

षट्ककर्म्मैको भवत्येषां त्रिभिरन्यः प्रवर्त्तते ।
द्वाभ्यामकेश्चतुर्थस्तु ब्रह्मसूत्रेण जीवति ॥ (मनु० अ० ४ श्लो० ९)

इत्युत्तरोत्तरोत्कृष्टशालीनगृहस्थचतुष्टयानुक्रमेणेध्यापनजीविनश्चतुर्थत्वोक्त्यार्त्विज्याध्यापनकर्म्मद्वयजीविनोपकृष्टत्वसूचनवतार्त्विज्यनिन्दहेतुत्वेनर्त्विजः शमितृत्वे द्रढयितुमाह—एतेनैवेति ॥ २९ ॥

इति त्रयोदशं शमितुरपृथक्त्वाधिकरणम्

भा० प्र०—संख्याभेद का हेतु शमिता स्वतन्त्र व्यक्ति होगा—इस पूर्वपक्ष में सिद्धान्ती कहता है—"प्रकरणात् वा" जिस प्रकरण में शमिता का उल्लेख है वही शमिता होगा और आध्वर्यवकाण्ड में उसके उक्त होने से अध्वर्युगण के लोग ही शमिता होंगे । यदि कहा जाय कि इस स्थल में पूर्व के समान संज्ञाभेदवश ऋत्विक् का भेद क्यों नहीं हुआ ? इसके समाधान में कहा है—"उत्पत्त्यसंयोगात्" = केवल संज्ञा ही इस स्थल में भेदिका नहीं है, किन्तु, उत्पत्तिवाक्य में श्रुतत्व भी उसका कारण है, किन्तु, उत्पत्तिवाक्य में = वचन वाक्य में शमिता का उल्लेख नहीं है, इसलिए, वह ऋत्विजों से स्वतन्त्र नहीं है और इस स्थल में जो शमित करता है अर्थात् पशु का संज्ञपन करता है अर्थात् प्रकार विशेष वध करता है, वही शमिता है, इस प्रकार यागार्थ अर्थात् व्युत्पत्ति के

अनुसार पूर्वोक्त "एकस्य कर्मभेदात् (३।७।२३) इस सूत्र के मत में शयन = हिंसन कर्म के अधीन शमिता अध्वर्युगणों के लोग को अवगत कराता है। तब "परावर्तने अध्वर्युः पशोः संज्ञाप्यमानात्" अर्थात् पशु को संज्ञपन करने से अध्वर्यु उससे लौट आयेगा। इस श्रुतिवाक्य में संज्ञपन होम के लिए अर्थात् संज्ञपनकालीन आहुति देने के लिए अध्वर्यु शामित्रदेशवध्य स्थान से आहवनीय अग्नि को समीप में लौट कर आना होता है, अतः, अध्वर्युगणों के चार व्यक्तियों में अध्वर्यु को छोड़कर प्रतिप्रस्थाता, नेष्टा एवं उद्‌गाता ये तीन ही शमिता होंगे। इसीलिए शमिता ऋत्विजों से स्वतन्त्र व्यक्ति नहीं है।

"प्रकरणात्" = प्रकरण के अनुसार अर्थात् जिसके प्रकरण में वह कहा गया है—वही शमिता है, "वा" = पूर्वपक्ष के निरास के लिए है, "उत्पत्त्यसंयोगात्" = क्योंकि, उत्पत्तिविधि के साथ अर्थात् वरण वाक्य के साथ इसका सम्बन्ध नहीं है ॥ २९ ॥

इति त्रयोदशशमिता का अपृथक्त्वाधिकरण।

## [१४] उपगाश्च लिङ्गदर्शनात् ॥ ३० ॥ सि० ॥

**शा० भा०—ज्योतिष्टोमे सन्त्युपगा नाम, ते शब्दभेदात्संख्याविवृद्धि प्रत्याययन्तीत्यध्वर्य्यादिभ्योऽन्य इति प्राप्ते।**

**ब्रूमः—तषामेव केचित्स्युरिति कस्मात्? उत्पत्तौ परिगणनात्। यौगिकत्वाच्च शब्दस्य। लिङ्गमिदं भवति। नाध्वर्युरुपगायेत्, इति। यद्येभ्योऽन्ये भवेयुः, नाध्वर्युं प्रतिषेधेत्। अप्राप्तत्वात्। यतस्तु प्रतिषेधेति, अतोऽवगच्छाम उत्पत्तौ संकीर्तितानामेवान्यतम इति ॥ ३० ॥**

उपगाऽपृथक्त्वाऽधिकरणम् ॥ १४ ॥

न्या० सु०—गातॄणां समीपे गायन्तीति प्रकृतैर्व्यपदेशादाधिक्याशङ्कायाः शमितृवदुपगा अपि वरणायोत्पत्त्यसंयोगाद्यौगिकत्वेन चोपगशब्दस्यापि प्रकृतेषूपपत्तेर्न भिन्ना इति सूत्रार्थस्य च स्पष्टत्वात्सूत्रपाठमात्रं कृतम् ॥ ३० ॥

भा० प्र०—श्रुति में ज्योतिष्टोम प्रकरण में उपग और उपगाता ये नाम दृष्ट होते हैं। यह उपगाता पृथक् व्यक्ति है कि नहीं यही संशय है। पूर्वपक्षी का कहना है कि इस स्थल में संज्ञा के अनुसार भेद होगा, अथवा लौकिक गान स्थल में जैसे प्रधान गायक को छोड़कर स्वतन्त्र उपगाता रहता है, कैसे ही इस स्थल में भी स्वतन्त्र उपगाता होगा।

इसके उत्तर में सिद्धान्ती का कहना है कि "उपगाश्च" = ये उपगातृगण स्वतन्त्र नहीं है, वरन् ऋत्विजों में कोई उपगान कर्म के अनुसार उपगया उपगाता होगा। कारण, "लिङ्गदर्शनात्" = वैसा लिङ्ग अर्थात् ज्ञापक वेदवचन दृष्ट होता है, क्योंकि,

श्रुति में कहा गया है "नाध्वर्युरुपगायेत्" = अर्थात् अध्वर्यु उपगान नहीं करे। यह वेदवचन ही ऋत्विजों के उद्गातृत्व का ज्ञापक है, कारण, ऋत्विजों में यदि उपगान प्राप्त नहीं होता तो इस श्रुतिवाक्य में उसका निषेध करना सङ्गत नहीं होता, क्योंकि, अप्राप्त का प्रतिषेध नहीं होता है, वरन्, प्रसक्त का ही निषेध होता है, इसीलिए, उपग ऋत्विजों से स्वतन्त्र नहीं है।

"उपगाः च" = उपग अर्थात् उपगाता भी स्वतन्त्र नहीं हैं, "लिङ्गदर्शनात्" = क्योंकि, उस प्रकार का लिङ्ग अर्थात् ज्ञापक वेदवचन दृष्ट होता है ॥ ३० ॥

इति चतुर्दश उपगाताओं का ऋत्विजों से अनन्यत्वाधिकरण।

## [१५] विक्रयी त्वन्यः कर्मणोऽचोदित्वात् ॥ ३१ ॥ सि० ॥

**शा भा०—अस्ति सोमविक्रयी। तत्र संदेहः—स किमध्वर्य्वादीनामन्यतः, उतैभ्योऽन्य इति। किं प्राप्तम्? तेषां संकीर्तनात्तेषामन्यतम इति प्राप्ते।**

**ब्रूमः—विक्रयी त्वन्यः स्यादिति। विक्रयो न चोद्यते, क्रयश्चोद्यते। तत्रार्थाद्विक्रयः। ज्योतिष्टोमस्य च पदार्थान्कर्तुमध्वर्य्वादय उत्पाद्यन्ते, न तु विक्रयो ज्योतिष्टोमस्य श्रूयते। तस्मान्नाध्वर्य्वादीनामन्यतम इति ॥ ३१ ॥**

**सोमविक्रेतुः पृथक्त्वाधिकरणम् ॥ १५ ॥**

न्या० सु०—विक्रयिणोप्यत्यन्तसंयोगाद्यौगिकत्वाच्च प्रकृतेषु शब्दोपपत्तेः विक्रयस्यापिच क्रत्वङ्गक्रयाक्षिप्तत्वाद्भक्षणाक्षिप्तग्रहणे ईक्षणादिवत्क्रत्वङ्गत्वेन क्रत्वङ्गकर्त्रपेक्षत्वाच्छमितृपदन्यायेन पूर्वपक्षस्य द्रव्यलोभाच्च विक्रये प्रवृत्त्युपपत्तेर्विधिकल्पनानपेक्षत्वेनानङ्गत्वात्सिद्धान्तस्य स्पष्टत्वमव्याख्याहेतुः ॥ ३१ ॥

भा० प्र०—ज्योतिष्टोम में सोमविक्रयी आवश्यक है अर्थात् सोमलता का विक्रय करने वाला व्यक्ति आवश्यक है। सोमविक्रयी ऋत्विजों से भिन्न था, अभिन्न है—यही संशय है। इस संशय में पूर्वपक्षी का कहना है कि "शमिता एवं उद्गता के समान ऋत्विक् से सोम विक्रयी भी स्वतन्त्र नहीं है। इसके उत्तर में सिद्धान्ती का कहना है कि "विक्रयीत्वन्यः" = सोमविक्रयी अन्य लोग ही होगा, ऋत्विजों के मध्य में किसी को भी सोमविक्रयी का कार्य नहीं करना होगा। कारण, "कर्मणः अचोदिनत्वात्" = यह सोमविक्रय कर्म श्रुतिबोधित नहीं है क्योंकि, "सोमं क्रीणति" इस श्रुति वाक्य में सोम के क्रय का ही विधान है विक्रय का विधान नहीं है, और विक्रय के विना उत्पन्न नहीं होता है अतः, वह भी कराना होगा। श्रुतिबोधित न होने से ऋत्विजों के कर्मों में वह नहीं है अतः वह ऋत्विजों का कर्तव्य भी नहीं है, वरन्, अन्य व्यक्ति के द्वारा ही वह कराना होगा।

"विक्रयी" = सोमविक्रयी, "तु" = अधिकरणान्तर का सूचक है, "अन्यः" = अन्यव्यक्ति होगा, "कर्मणः अचोदितत्वात्" = क्योंकि, यह कर्म श्रुति से बोधित नहीं है ॥ ३१ ॥

इति पञ्चदश ऋत्विजों से अतिरिक्त सोमविक्रेता का पृथक्त्वाधिकरण ॥

## [१६] कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ ३२ ॥ पू० ॥

शा० भा०—य एते पुरुषा ज्योतिष्टोमस्य श्रूयन्ते, ते किं सर्वं एत ऋत्विज, उत केचिदेषामिति । किं प्राप्तम् ? सर्वे । कुतः ? कर्मकार्यात् । सर्वे यागस्य साधनं कुर्वन्ति । तस्मात्सर्वे ऋतौ यजन्ति । ये च, ऋतौ यजन्ति, त ऋत्विजः । न कश्चिद्विशेष आश्रीयते, इम एव ऋतौ यजन्तीति, ऋत्विज इमे नेति । तस्मात्सर्वेषामृत्विक्त्वम् । ननु परिसंख्या श्रूयते, सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विज इति । उच्यते । परिसंख्यायां बहवो दोषः सन्तीत्यवयुत्यवादोऽयं भविष्यति ॥ ३२ ॥ क० पूर्व० ॥

त० वा०—ऋत्विक्शब्दो हि निपात्यमान एव उपपदधातुप्रत्ययसमन्वितेऽर्थे वर्तते, ऋतौ यजन्तीति ऋत्विजः । एतस्माच्चेत्कारणादृत्विजो भवन्ति हन्त सर्वेषां तदविशिष्टमिति तदनुसारमृत्विक्त्वमपि सर्वेषामेव प्राप्तम् । अतश्चत्वारः, चत्वारः, पञ्च, षट्, सप्तदशेत्याद्या अवयवा अप्येतस्य महान्त इत्येवं स्तोतुमवयुत्यवादः ॥ ३२ ॥

न्या० सु०—यजमानातिरिक्तानामस्वामित्वेन देवतोद्देशस्वद्रव्यत्यागात्मकयागाख्यकर्मकर्तृत्वायोगशङ्कानिरासार्थं यागाङ्गकरणत्वेनौपचारिकयागकरणत्वार्थतया कर्मकार्योक्ति सर्वं इत्यादिभाष्येण व्याख्याय तस्य पञ्चम्युक्तस्यर्त्विक्छब्दं प्रति निमित्तत्वोपपादनार्थं ये वेति भाष्यमृत्विक्छब्दे वयवव्युत्पत्तिस्मृतेरयुक्तमाशङ्क्य 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति क्विन्प्रत्ययान्तर्तुशब्दोपपदयजिधातूत्पन्नर्त्विक्छब्दनिपातनादुपपादयितुमाह—ऋत्विक्छब्दो हीति ।

कोसावुपपदधातुप्रत्ययसमनुगतोऽर्थं इत्यपेक्षायामाह—ऋताविति । पद्मगतस्यैव पङ्कजननस्य पङ्कजशब्दप्रवृत्तिनिमित्तत्ववद् ब्रह्मादिगतस्यैवर्तुयजनकर्तृत्वस्यर्त्विक्छब्दप्रवृत्तिनिमित्तत्वाद्व्यवस्थामाशङ्क्य, पद्मत्वजातिवदिह निमित्तव्यवस्थापकैकोपलक्षाभावादव्यवस्थाशङ्कानिरासार्थंमविशेषोक्तिव्याख्यार्थं न कश्चिदित्यादिभाष्यं व्याचष्टे—एतस्माच्चेदिति । 'शास्त्राणि चेत्प्रमाणमितिवदसन्दिग्धेपि मृदूक्त्यै सन्दिग्धवचनम् ऋतुयजनकर्तृत्वस्य सर्वेषामविशिष्टत्वोक्त्या न कश्चिदित्यवयवे व्याख्याते तस्मादित्यवयवव्याख्यार्थंमितीत्युक्तम् । सप्तदशेति चमसाध्वर्युपरिसङ्ख्यानात्सर्वेषामृत्विक्त्वायोगशङ्कानिरासार्थत्वेनापि तस्यावयुत्यानुवादत्वेनाविशेषकत्वादित्येवमविशेषोक्तिव्याख्यार्थं नन्वित्यादिभाष्यं वादमात्रानर्थक्यादयुक्तमाशङ्क्य, दर्शपूर्णमास-चातुर्मास्य-पशुबन्ध-त्विक्सङ्ख्याताः

सोमयागस्यर्त्विक्सङ्ख्यावयवा अपि महान्तः किमुतर्त्विक्सङ्ख्येत्येवं सोमयागस्तुस्त्यर्थंत्वेनार्थवादोक्त्योपपादयितुमाह—अत इति। प्राप्तोक्तिसूचितपरिसङ्ख्याादुष्टत्वपरामशार्थोतः शब्दः। सप्तदशेत्येतावन्मात्रस्यावयुत्यानु वादत्वेपि महत्वेनापेक्ष्यमाणाद्दर्शपूर्णमासादृत्विक्सङ्ख्या उक्ता। अधिकर्त्विक्सद्भावे 'सदस्यः सप्तदश' इतिसङ्ख्यापूरणवाचिडप्रत्ययायोगमाशङ्क्य, अवयवभूतावान्तरसङ्ख्यापूरणानुवादार्थत्वात्पूरणप्रत्ययोपपत्तिसूचनायाऽदिशब्दः॥ ३२॥

भा० प्र०—ज्योतिष्टोमादि यज्ञ में जितने ब्राह्मण यज्ञ का सम्पादन करते हैं, वे सभी ऋत्विक् पद से वाच्य है या नहीं—यही संशय है। इसमें पूर्वपक्षी का कहना है कि "सर्वेषाम् ऋत्विक्त्वम्" = उन सभी को ऋत्विक् नाम से कहा जायेगा, कारण, "कर्मकायेति" = क्योंकि, सभी यज्ञ का अनुष्ठान करते है और जो ऋतु में अर्थात् वसन्त आदि काल में यजन करते हैं अर्थात् यज्ञानुष्ठान का सम्पादन करते हैं वे ऋत्विक् इस व्युत्पत्ति के बल से ऋतुयजन अर्थात् सम्पादन ही ऋत्विक् शब्द का प्रवृत्तिनिमित्त है और ज्योतिष्टोमादि में जितने ब्राह्मण कर्म का अनुष्ठान करते हैं उनके मध्य में जब यह प्रवृत्तिनिमित्त वर्तमान है तब सभी ऋत्विक् कहना ही उचित् है, इसीलिए सूत्र में कहा गया है "अविशेषात्"।

"कर्मकार्यात्" = यज्ञ रूप कर्म का अनुष्ठान करने से, "ऋत्विक्त्वम् सर्वेषाम्" = ऋत्विक्त्व सभी का अर्थात् यज्ञ में जो भी कर्म करता है, सभी ऋत्विक् है, "अविशेषात्" = क्योंकि, कोई विशेष नहीं है। पूर्वपक्ष॥ ३२॥

## न वा परिसंख्यानात्॥ ३३॥ सि०॥

शा० भा०—न वा सर्वे। कस्मात्? परिसंख्यानात्। एवं हि श्रूयते 'सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विज' इति। स एष न विधिः, बहुतराणां प्राप्तत्वात्। नानुवादः, प्रयोजनाभावात्। न चेत्परिसंख्याऽपि, आनर्थक्यमेव स्यात्। ननु परिसंख्यायां स्वार्थहानं, परार्थकल्पना, प्राप्तबाधश्च। उच्यते। स्वार्थहानमदोषः, प्राप्तत्वात्। परार्थकल्पना च, प्रत्ययात्। बहूनामृत्विक्त्वे ज्ञाते पुनः सप्तदशर्त्विज इत्युच्यते। सप्तदशभिर्ऋत्विक्शब्दस्य संबन्धः पुनः प्रकाश्यते, अधिकैश्च न प्रकाश्यते। तत्र विज्ञायत एतत्—ऋत्विक्शब्दस्य पुरुषैः संबन्धे पुनः प्रकाश्यमाने सप्तदशभ्योऽभ्यधिका वर्जिता इति गम्यते। तत्र किं सप्तदशभिः संबन्धो विवक्षितः, किं वाऽधिकानां वर्जनमिति। सप्तदशसंबन्धस्याप्रयोजकत्वादधिकानां वर्जनं विवक्षितमिति गम्यते। आह—ननु प्रतिषिध्यमानेष्वप्यधिकेषु प्रतिषेधो न प्राप्नोति। न हि ते ऋतौ न यजन्ति। न वा ऋतौ यजन्तो न ऋत्विजः स्युः। उच्यते। सत्यम्। न प्रतिषेधादृत्विक्शब्देन न संबध्यन्ते, किंतु प्रतिषेधसामर्थ्याद्धि ऋत्विक्कार्ये न

भवन्ति। किं पुनर्ऋत्विक्कार्यम्? ऋत्विज उपवसन्ति, ऋत्विजो वृणीते, ऋत्विग्भ्यो दक्षिणां ददाति, इति।

आह—यदृत्विजां कार्यं, कथं तत्केषांचिदृत्विक्शब्दकानां न स्यात्। उच्यते। एवं तर्हि द्विविधोऽयमृत्विक्शब्दः, ऋतुयजननिमित्तो, वरणभरणनिमित्तश्च। तत्र यागनिमित्तस्य ग्रहणमनर्थकम्। तस्माद्वरणभरणनिमित्तो गृह्यत इति। आह। नन्वितरेतराश्रयमेवं भवति। य ऋत्विजस्ते परीतव्याः, ये व्रियन्ते, त ऋत्विज इति, तदितरेतराश्रयम्। उच्यते। न हि ऋत्विजो वणीते, इत्ययमर्थः, ऋत्विजः सन्तो वरीतव्या इति। कथं तर्हि। वरणेन ऋत्विजः क्रियन्त इति। एवं द्वितीयानिर्देशो युक्तो भविष्यति—अध्वर्युं वृणीते, इत्येवंलक्षणः। दृष्टार्थता च वरणस्य भविष्यति। कथमात्मेच्छयाऽध्वर्युर्भवतीति चेत्कश्चिद्ब्रूयात्? भवतीति ब्रूयाम्। कथम्? एवंशब्दकेनायं पदार्थः कर्तव्य इति, नास्त्येवंशब्दकः। यश्च नास्ति, स यदि शक्यते कर्तुं, कर्तव्यो भवति। यथा जुह्वा जुहोति, इत्यविद्यमाना जुहूः क्रियते। एवमेतदपि द्रष्टव्यम्। तत्रार्थादनियमेन ऋत्विक्शब्दसंबन्धे कर्तव्ये, एवं वरणविशेषेण कर्तव्य इति नियम्यते। तस्मान्नेतरेतराश्रयम्। तस्मात्सप्तदशैव ऋत्विजः कर्तव्या इति परिसंख्या। सप्तदश ऋत्विजः संस्कारैः कर्तव्या इति॥ ३३॥ सि०॥

त० वा—परिसंख्यानादिति भाष्यकारेण परिसंख्यैव व्याख्याता। सप्तदशस्त्वन्येषु च प्राप्तवत्सु सप्तदशपुनःश्रवणं त तावन्मात्रपरिग्रहार्थं, योऽर्थादितराभावप्रत्ययः तमाश्रयितुं, न सप्तदशस्वरूपं प्रत्यापयितुम्। सर्वत्र हि द्वयोः संबन्धे कृते तत्स्वरूपं, संसर्गश्च प्रतीयते, अन्यनिवृत्तिश्च। क्वचिच्च किंचित्प्रयोजनवशेन विवक्ष्यते। स्वरूपसंसर्गासंभवे च बलादेव विधिरितरनिवृत्तिप्रयोजनो भवति। अतश्च त्रिदोषत्वमदोषः। स्वार्थस्य प्राप्तत्वेनैव हेयत्वात्प्रतीतस्य च परार्थस्यापरिग्रहे विध्यानर्थक्यात्।

परस्तु कर्मकरणमेव हेतुं परिगृह्य सति निमित्तेऽन्येष्वपि शब्दप्रवृत्त्यवश्यंभावित्वं मत्वाऽऽह—ननु प्रतिसिध्यमानेष्वणीति कार्यप्रतिषेधेनैव तावत्प्रक्रमे। सर्वत्र हि स्वरूपप्रतिषेधासंभवात्कार्यं प्रतिषिध्यते। तद्यथा न ममैष पुत्रः—पुत्रकार्ये न प्रवर्तत इत्यर्थः। एवं योऽयमर्थात्सप्तदशभ्योऽधिकानां प्रतिषेधः प्रतीयते, स कार्यविषयो, न स्वरूपविषय इति द्रष्टव्यम्।

वरणं तु शब्दप्रवृत्तिनिमित्तत्वादनुदाहरणमिति चेत्। न। अस्मिन्पक्षे कर्मयोगादेव शब्दप्रयोगसिद्धेः। इतरस्तु स्वरूपप्रतिषेधात्तन्निमित्तं कार्यमपि दुष्प्रतिषेधमिति, कथमृतौ जयतां तेषामृत्विक्त्वं न स्यादित्याह।

सिद्धान्तवादी तु तत्त्वेनोत्तरं विवक्षमाण एवं तर्हि द्विविधोऽयमित्यादि प्रक्रमते। यद्येष यौगिकं स्यात्, ततो न कुतश्चिन्निवर्तते। संस्कारशब्दस्त्वयं, वरणभरणे हि संस्कारौ ते येषां न स्तो, न ते सत्यपि क्रियायोने तच्छब्दवाच्या भविष्यन्ति। ते च वरणभरणे सप्तदशानामेव जयमानेन क्रियते। तन्निमित्तत्वाश्रयणे च 'सप्तदशर्त्विजः' इत्यनुवादोऽवकल्पिष्यते। अन्यथा त्ववयवानुवादो मृषात्वरूपः कल्प्येत। तस्मान्नातिप्रसङ्गः।

ननु च य ऋत्विजस्तेषां वरणभरणे, येषां च ते, त ऋत्विज इतीतरेतराश्रयं प्राप्नोति। नैष दोषः। प्रथमं तावदाञ्जस्येनैषा वचनव्यक्तिरन्विष्यतेय ऋत्विजस्तेषां वरणभरणे इति। यदा तु वृक्षादिवत्ते लोकव्यवहारेष्वप्रसिद्धाः तदाऽर्थादयमर्थो भवति वरणेन ऋत्विजः करोतीति। यथैवास्य सूत्रस्य शाटकं वयेत्युक्ते वानेन शाटकः क्रियत इति हि भाविनि संज्ञाविज्ञानादविरोधो विज्ञायते। तथैवात्र प्रत्येतव्यम्। एतेन 'अध्वर्युं वृणीते' इति तद्विशेषवचनानि व्याख्यातानि। एवं च व्रियमाणानामृत्विजां द्वितीया निर्देशोऽवकल्पिष्यते। वरणं चाऽऽधानवत्कर्मौपयिकांस्तानुत्पादयद्दृष्टार्थं भविष्यतीति। वेदपौर्वापर्यपर्यालोचनात्तु ते वरणेन क्रियन्त इत्यवसानान्नाप्रसिद्धः।

### तत्र दूषणाभिधानम्

न त्विदं निपातनाख्यानद्वारेण ऋतुयजननिमित्तत्वं गम्यमानं सत्परित्यक्तुं युज्यते। न च वरणभरणयोः सिद्धोत्वक्संबधित्वेन तनुद्दिश्य श्रूयमाणयोर्विपरीता वचनव्यक्तिर्युक्ता। यच्चाप्रसिद्धाः संस्कर्तुं न शक्यत इति। वरणेऽप्येवं तुल्यम् न हि कश्चिदप्रसिद्धं वस्तु कुरुष्वेत्युक्तोऽप्यध्यवस्यति। नापि तेन व्यापृतेनापि तन्निमित्ता निष्पत्तिरध्ववसीयते। यदि तु वेदवाक्यपौर्वापर्येण ज्ञायत इत्युच्यते, ततः सिद्धानामेव संस्काराः सुखतरमध्यवसीयते। जानाति ह्येवं वरणं कुर्वन्यथा वेदस्य प्रसिद्धा एव केचिदृत्विजः। मम तु ते वरणद्वारेण प्रसिध्यन्ति, प्राक्स्मादन्येनानवधारित्वात्। अथवा तस्यापि सामान्यतोऽस्त्येव प्रसिद्धिः। सर्वो हि भावः केनचिदात्मना सिध्यन्व्यवहारं साधयति। सर्वात्मिकायाः सिद्धेः क्वचिदप्यभावात्। अतो य ऋतौ यजन्ति, ये वाऽऽध्वर्यवादिकं कुर्वन्ति। त ऋत्विजः। के च ते, ये तत्समर्थाः, सामर्थ्यरहितानामनधिकारात्। के च समर्थाः, ये विद्वांसः। तत्रापि स्मृतिप्रमाण्याद्ये ब्राह्मणाः तदविशेषप्रसङ्गे पुनर्विशेषो भवति वरणोपात्ता य इति, ततोऽपि पुनर्दक्षिणाभिर्भ्रियमाणा इति। सेयमेतैर्विशेषैः शब्दार्थसंबन्धव्युत्पत्तिर्भवति। विज्ञानं च तद्विषयमन्यथा, अन्यथा च प्रसज्यमानं विशेषविषयमुपसंह्रियमाणम्। अक्रियमाणमेव दिद्धमृत्विक्त्वम्।

अपि च वरणभरणाभ्यामृत्विजो वोत्पाद्येरन्, ऋत्विक्त्वं वा। तत्र ऋत्विजस्तावन्मातृभ्यामेवोत्पादिता इति, न पुनरुत्पत्तिमतेक्षन्ते। तथा योग्यतालक्षण-

मृत्विक्त्वमध्ययनश्रवणाभ्यां सिद्धमिति, न पुनः साधनीयम् । वक्ष्यति च "यजमानास्तु' इत्यत्र न योग्यतैषां यजमानेन कर्तव्येति । सर्वत्र च यदनुत्पन्नं तदुत्पाद्यते । किं चैषां प्राग्वरणादनुत्पन्नं कर्म प्रत्यानमनम् । ननु ऋत्विक्त्वमप्यनुत्पन्नम् । सत्यं, तत्तु पश्चादप्युत्पद्यमानं न पश्यामः । अथ यदुत्पद्यते, तदेव ऋत्विक्त्वं, तथा सत्यानमनमेव तत् नान्यत्किंचित् । न चेदमदृष्टमृत्विक्त्वम् । यस्य हि कार्यमदृष्टं भवति, तत्स्वरूपमप्यदृष्टं भवेत् । ऋत्विक्कार्यं तु कर्मनिर्वृत्तिर्दृष्टैव सा कथमदृष्टसाध्या भविष्यति । यावता च सा भवति, तत्सर्वं विद्वत्त्वब्राह्मणत्वादि दृश्यत एव । यत्त्वदृष्टं किंचित्तत्त्वकरणावशात्कर्मप्रयोगवचनेन गृह्यमाणं, तदर्थमेव, नाध्वर्य्वादित्वे व्याप्रियते । न च तद्वरणभरणाभ्यां जायत इति तयोरनिमित्तत्वं भवति । आहवनीयादीनां त्वप्रकरणोत्पत्तीनामदृष्टोपकाराणा मनुत्पन्नावस्थानां संस्कारविधानादुपपन्नमुत्पाद्यत्वम् । न हि तत्र होमादिभिस्त्यज्यमानद्रव्याधारोऽपेक्षितः । तेनावश्यं तत्संबन्धाददृष्टमेवाभ्युपगन्तव्यम् । न च तदग्निमात्रात्सिध्यतीति तन्निवृत्त्यर्थमदृष्टमेवाऽऽहवनीयादित्वमपेक्षितम् । अतो नैष दृष्टान्तः ।

यदि चादृष्टमृत्विक्त्वं वरणभरणाभ्यां जन्येत, ततः सत्रेऽपि यजमानेषु तदाधातव्यं, तद्विशेषाश्चाध्वर्य्वादयो दीक्षावाक्येऽनूद्यन्त इति वरणभरणे कर्तव्ये स्याताम् । तत्र 'वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात्' 'परिक्रयश्च तादर्थ्यात्' इति च विरुध्यते । तस्मात्कर्मयोग्यतयाऽवधारितानामेव वरणभरणाभ्यामुपादाननियमः कर्मार्थः क्रियते । ऋत्विक्शब्दश्चावैगुण्यात्तद्विषय एवोपसंह्रियमाणः सतोऽप्यन्यान्योग्यान्नाऽऽलम्बते । सत्रे तु स्वयंकर्तृत्वाद्वरणभरणयोरग्रहणाद्विनैव ताभ्यामवैगुण्यमिति योग्यतामात्रेणैवाध्वर्युत्वादिसिद्धिः । तद्यथा पौर्णमास्यां विनाऽपि शाखापरिवासनेन यदेवाङ्गारापोहनक्षमं द्रव्यं, स एवोपवेष इत्यदोषः । तस्माद्यथा 'यूपस्य स्वरुं करोति' इत्यत्राऽऽदाने कर्मशब्द इति वक्ष्यति तथाऽत्र भाष्यकारस्य द्रष्टव्यम् ॥ ३२ ॥

न्या० सु०—ब्रह्मादिमात्रविषयत्वेनोपसंहारस्य चमसाध्वर्युनिवृत्तिफलस्वसाम्यनिमित्तेनोपचारेण परिसङ्ख्यानोक्त्या विवक्षितत्वात्, परिसङ्ख्यादोषत्रयस्याशङ्कापूर्वं निरासार्थं 'ननु परिसङ्ख्यायामित्यादिभाष्यमयुक्तमाशङ्क्य, भाष्यकृता परिसङ्ख्यानादिति सौत्रेण शब्देन परिसङ्ख्यावाच्यतया व्याख्यायत इत्याह—परिसङ्ख्यानादिति ।

बहूनामित्यादि विवक्षितं गम्यत इत्यन्तं भाष्यमुच्यत इत्यादिभाष्योक्तदोषाभावोपपादनार्थत्वेन व्याख्यातुमाह सप्तदशस्विति । व्याख्यातार्थोपपादनार्थं सर्वत्र हीत्यादिना सामान्यन्यायमुक्त्वा, व्याख्यातार्थस्य प्रागुक्तदोषत्रयनिरासोपयोगित्वोक्त्यै यद्दोषत्रयं स्वार्थहान्यादि शङ्कितं, तस्येह न दोषताऽस्तीत्युक्ते तदेव विवरीतुं स्वार्थस्येत्याद्युक्तम् ।

स्वार्थहानपरार्थकल्पनयोरिहोचितत्वेनाऽदोषत्वेऽप्यृतुयजनकर्तृत्वाख्यशब्दप्रवृत्तिनिमित्तवशेनाधिकेष्वप्यृत्विक्छब्दस्य प्राप्तस्य बाधाशक्तेः प्राप्तबाधस्यापरिहार्या दोषतेत्याशङ्कार्थमाहेत्यादिभाष्यं व्याचष्टे—**परस्त्विति** ।

उच्यत इत्यादि परिहारभाष्यं परमतत्वेन व्याख्यातुमाह—**कार्येति** । परमतत्वसूचनार्थं तावत्प्रक्रमत इत्युक्तं । निषेधस्यर्त्विक्स्वरूपविषयत्वप्रतीतेः कार्यविषयत्वायोगमाशङ्कयाह—**सर्वत्र हीति** । 'ऋत्विज उपवसन्तीत्याद्यर्त्विक्कार्योदाहरणभाष्यं दक्षिणादानस्यर्त्विक्त्वनिमित्तकार्यत्वादृत्विक्कार्यत्वसम्भवेऽपि वरणस्यर्त्विक्त्वं प्रति निमित्तत्वेनर्त्विक्कार्यत्वायोगादयुक्तं शङ्कते—**वरणं त्विति** ।

परमतेन शङ्कापरिहारपक्षे कर्म्मयोगमात्रादृत्विक्छब्दप्रयोगासिद्धेर्न वरणमृत्विक्छब्दप्रवृत्तिनिमित्तमित्येवं परिहरति—**नेति** । ऋत्विक्त्वनिषेधे विना तत्कार्यस्यापि निषेधायोगेनैतत्परिहारदूषणार्थमाहेति भाष्यं व्याचष्टे—**इतरस्त्विति** ।

ऋतुयजनस्य निमित्तत्वाभावेन प्राप्तबाधस्य दोषत्वापरिहार्यत्वशङ्कानिरासोपक्रमार्थमुच्यत इति भाष्यमनिष्टद्वैविध्योक्त्याऽनर्थक्यादयुक्तमाशङ्कय, अस्योत्तरस्य सिद्धान्तिमतत्वात्, तात्त्विकस्य चार्थस्य सिद्धान्तात्प्रतिपक्षनिरासं च विना तत्त्वज्ञानासिद्धेरनुपन्यस्तस्य च हेत्वभावानिश्चयेनाशक्यनिरासत्वात् यद्यप्ययमृत्विक्छब्दोवयवव्युत्पत्त्यालोचनादृतुयजननिमित्तो वरणकाले चतुर्यजनाभावेन तन्निमित्तर्त्विक्त्वायोगात्, दृत्विगुद्देशेन वरणविध्यनुपपत्तेर्वरणेनर्त्विजः कार्या इति वचनव्यक्त्यवधारणाद्वरणनिमित्तः प्रतिभाति, तथाप्यृतुयजननिमित्तत्वे चमसाध्वर्युष्वपि तद्भावेनर्त्विक्त्वस्य स्वरूपतः, कार्यतो वा निषेधायोगात्परिसङ्ख्यानुपपत्तेर्वरणनिमित्तो ग्राह्य इति तात्त्विकोत्तरोक्त्यर्थत्वेनार्थवत्त्वोक्त्योपपादयितुमाह—**सिद्धान्तेति** ।

तात्त्विकोत्तरोक्त्यर्थं यागेत्यादिभाष्यं सप्तदशैवर्तुयजनयोगादृत्विक्छब्दवाच्या इत्येवं यौगिकत्वाशयेन परिसङ्ख्यार्थमृत्विक्छब्दग्रहणे तत्परिसङ्ख्येयाभावादनर्थकं स्यात्, तस्मात्सप्तदशैव वरणभरणजन्यसंस्कारयोगादृत्विज इत्येवं संस्कारनिमित्तः परिसङ्ख्यार्थवत्त्वत्वसिद्ध्यै ग्राह्य इत्येवं व्याख्यातुमाह—**यदीति** । वरणनिमित्तत्वेपि चमसाध्वर्युभ्यो व्यावृत्त्यशक्तेः परिसङ्ख्यानर्थक्यपरिहारायोगसाम्यमाशङ्कय, भृतिनिर्देशविशिष्टस्यैव वरणस्यैवर्त्विक्छब्द प्रवृत्तिनिमित्तभूतसंस्कारजनकत्वाच्चमसाध्वाच्चमसाध्वर्यूणां च भृतिनिर्देशविशिष्टवरणाभावाद्व्यावृत्त्युपपत्तिं सूचयितुमाह—**वरणेति** । दक्षिणादाने द्वितीयानिर्देशाभावाद्दक्षिणादानेनर्त्विजः कार्या इति वचनव्यक्त्यनुपपत्तेर्दक्षिादानोत्तराद्यत्वे च माध्यन्दिनसवनात्प्राग्दक्षिणादानाभावेनर्त्विक्त्वानुत्पत्तेरनृत्विक्कर्तृकत्वप्रसङ्गेन दक्षिणादानस्यर्त्विक्छब्दप्रवृत्तिनिमित्तत्वायोगाद्दक्षिणानिर्द्देशस्य च वरणकालेप्यृत्विगङ्गतया श्रुतेर्वरणप्रकरणाच्च तदङ्गत्वावगतेस्तन्निरपेक्षस्य वरणस्यर्त्विक्छब्दप्रवृत्तिनिमित्तत्वाभावसूचनमात्रार्थो वरणभरणे इति तुल्यवन्निर्द्देशः । चमसाध्वर्यूणामपि परार्थे कर्म्मणि

भरणं विना प्रवृत्त्ययोगाद्वरणभरणे द्वे अपि स्त इत्याशङ्क्य, अलौकिकस्यर्त्विक्त्वस्य विहितां क्रियां विनानुत्पत्तेश्चमसाध्वर्यूणां च भृतिविध्यभावादुपायान्तरेणापि च प्रवृत्त्युपपत्तेरर्थाक्षिप्तस्यापि भृतिविधेरभावाद्वरणमात्रस्य चर्त्विक्त्वानुत्पादकत्वादृत्विक्छब्द-वाच्यत्वायोगमुपपदयितुमाह—वरणे चेति ।

चमसाध्वर्युवरणस्यापि यजमानकार्यहोत्रादिवरणसाहचर्याद्यजमानकार्यत्वप्रतीतेर्य-जमानचमसाध्वर्य्वोश्च वरणस्यर्त्विक्स्वामिकत्वाभावेन भाष्यमतेऽपि यजमानेनैव कार्यत्वा-द्यजमानकृतवरणभरणाभावेवर्त्विक्त्वनिरासायोगाद्धरणस्य वैधत्वे 'स्वामिकर्म्मपरिक्रय' इति न्यायाद्याजमानत्वापत्तेर्वैधत्वनिराससूचनार्थं यजमानेनेत्युक्तम् । भृतिनिर्देशविशिष्टेन वरणेन होत्रादीनां यागाङ्गेषु स्वतन्त्रकर्तृत्वार्हत्ववत्स्वामिनि प्रयोजककर्तृत्वार्हत्वस्या-प्युत्पादनादुभयसाधारणस्य च यागाङ्गकर्तृत्वार्हत्वस्यर्त्विक्छब्दवाच्यत्वात्स्वामिनोप्यृत्वि-क्त्वोपपत्तेः साप्तदश्योक्त्युपपत्तिसूचनार्थंवरणोत्पाद्यकर्तृत्वकरणं वरणकरणत्वेनोपचर्य सप्तदशानामित्युक्तम् । चमसाध्वर्यूणां भृतिनिर्देशविशिष्टवरणाभावादृत्विक्त्वाप्राप्तौ परिसङ्ख्योक्त्ययोगमाशङ्क्यान्यनिवृत्तिफलविधिरूपमुख्यपरिसङ्ख्यात्वायोगेऽपि साप्तद-श्यानुवादान्यथानुपपत्त्यर्त्विक्छब्दस्य यौगिकत्वनिरासेन वरणनिमित्तत्वावधारणादन्य-निवृत्त्याख्यपरिसङ्ख्याफलसिद्धेर्गौणपरिसङ्ख्यात्वोपपत्तिं सूचयितुमाह—तन्निमित्तत्वेति ।

अननुवादत्वाभ्युपगमे यौगिकत्वाश्रयणेनाऽव्युत्पत्यानुवाद एव कस्मान्नेष्ट इत्याशङ्क्य, महासङ्ख्यायामवान्तरसङ्ख्यायाः सद्भावेऽपि सङ्ख्येयपरिच्छेदकत्वायोगाद्रूपान्तरेण वाऽनुपयोगात्परिच्छेदकत्वरूपमिथ्यात्वेनासदनुवादापत्तेरिति सूचयितुमाह—अन्यथेति । यौगिकतान्ययोक्त्या परामृष्टतात्त्विकोत्तरार्थमुपसंहरति—तस्मादिति ।

आहेति शङ्काभाष्यं भृतिनिर्देशाख्यवरणविशेषणेन पूरयितुं व्याचष्टे—ननु चेति । उच्यत इति परिहारभाष्यं वचनव्यक्तिविपर्ययहेतूत्तयोपपादीयतुमाह नैष इति । वरणा-त्प्रागृत्विक्त्वसिद्धावनुत्पाद्यत्वापत्तेर्यजमानास्तित्वत्यत्र चर्त्विजां संस्कार्यत्वस्य निराक-रिष्यमाणत्वाद् द्वितीयानुपपत्त्यापत्तेर्वचनव्यक्तिविपर्ययेण वरणोत्पाद्यत्वोपपादनार्थमेवमि-तिभाष्यमनुदाहृताध्वर्युवाक्योपन्यासानर्थक्यादयुक्तमाशङ्क्य, तुल्यन्यायतयाऽध्वर्य्वादि-वाक्येष्वपि वचनव्यक्तिविपर्ययोक्त्योपपादयितुमाह—एतेनेति । ऋत्विजां संस्कार्यत्वायो-गात्करण एव सति द्वितीया युक्तेत्येवं भाष्यं व्याचष्टे—एवञ्चेति । एवशब्दार्थे चशब्दः । दृष्टार्थंवा चेति हेत्वन्तरभाष्यं व्याचष्टे—वरणञ्चेति । वरणेनाध्वर्युं कुर्यादित्युक्तेऽप्यध्वर्यु-शब्दार्थस्याप्रसिद्धेः कर्त्तुमशक्यत्वात्कथमात्मना यजमानेन कृतया वरणाख्ययेच्छयाध्वर्यु-र्भवतीति कथमितिभाष्येण पृष्टेऽसावध्वर्युशब्दार्थं इति विशेषरूपेणाप्रसिद्धावपि विधिसाम-र्थ्याद्भवतीति मन्यत इत्युत्तरं भवतीत्यनेन दत्त्वा तद्विवरणार्थं कथं ब्रूयादेवेति प्रश्नपूर्व्व-मध्वर्युशब्दकेन विभागादिपदार्थः कार्य इति विधानात् तस्य चाध्वर्युशब्दकस्य पदार्थस्य वरणात्प्रागसत्त्वादवगतवरणाख्यसाधनत्वेन च कर्तुं शक्यत्वाज्जुह्वादिवत्कार्यत्वावगमे सत्यर्थाद्येन केनचिदुपायेनाध्वर्य्वाद्यर्त्विक्छब्दार्थान्वये विभागादिकर्त्तुः कार्ये त्वयाऽस्मिन्

क्रवावाध्वर्यवं कार्यमित्येवंविधेन वरणविशेषेण कार्यं इतिवद्वरणेनाध्वर्युर्भवतीति ब्रूयामेत्युत्तरोक्तयर्थमेवशब्दकेनेत्यादि भाष्यं तात्पर्यतो व्याचष्टे—**वेदेति**। अवयवार्थप्रत्यभिज्ञावगतयौगिकत्वत्यागायोगाद्विपरीतवचनव्यक्त्ययोगाच्च केवलरूढितां भाष्योक्तां निराकर्तुमारभते—**न त्विति**। यदा त्विति वार्त्तिकोक्तवचनव्यक्तिविपर्ययहेतुं दूषयितुमनुभाषते—**यच्चेति**। अप्रसिद्धशब्देनाज्ञानं विवक्षितम्, असत्त्वं वेति विकल्प्याऽद्यपक्षं तावत्साम्यापादनेन दूषयति—**वरणे आपीति**।

बुद्धिपूर्व्वकारी तावत्कर्तुमेव नाध्यवस्यति, न प्रयतते। अबुद्धिपूर्व्वकारिणा तु तेनाज्ञातवस्तुना पुंसा यदृच्छया प्रयत्नाख्ये व्यापारे कृतेऽपि, वस्तुनिष्पत्तिर्नैकान्ताद्भवतीत्यर्थः। करणपक्षे वेदस्योत्पत्त्युपायोक्तौ व्यापाराद्वेदवाक्यावगतेन वरणर्त्विक्त्वयोर्हेतुफलभावनिमित्तेन पौर्व्वापर्येण करणाद्योऽतिशय उत्पद्यते, स ऋत्विक्छब्दवाच्य इति ज्ञानोपपत्तेः। संस्कारपक्षे त्वन्यतः स्वरूपसिद्ध्यपेक्षत्वेन वेदादृत्विक्त्वज्ञानानुपपत्तेर्ऋतुयजनयोगस्य चातिप्रसङ्गापादकत्वेनाज्ञापकत्वाद्वैषम्यं शङ्कते—**यदि त्विति**। संस्कारपक्षेपि दीक्षादक्षिणक्रमवाक्यसहकृतात्सप्तदशर्त्विज इति वेदात्सर्व्वेषामप्यृतौ यजतां मध्ये केचिदेवर्त्विज इति ज्ञानोपपत्तेर्वचनव्यक्तिविपर्ययक्लेशाभावेन च प्रतीतिसौकर्याद्विपरीतवैषम्यकृतातिशयोक्तिपूर्वं परिहारसाम्यं वक्तुमारभते—**तत इति**। वेदप्रतिपादितत्वाद्वस्तुसिद्धिज्ञानेऽपि वरणात्प्रागन्येनोपायेनैते मदीया ऋत्विज इत्यनवधारणादन्यदीयानां च वरणानौचित्याद्वरणसंस्कार्या इति ज्ञानायोगमाशङ्क्य, क्रयवद्वरणस्योपादानार्थत्वाद्वरणात्प्रागात्मीयत्वज्ञानानपेक्षां सूचयितुमाह—**ममत्विति**।

वरणात्प्रागात्मीयत्वसिद्ध्यनपेक्षत्वेऽप्यात्मान्वयानर्हाणामवरणीयत्वादात्मान्वयार्हत्वज्ञानापेक्षामाशङ्क्य, पुरुषनिष्ठतयात्मान्वयार्हत्वाज्ञानेऽपि सामान्यतस्तज्ज्ञानोपपत्तिमाह—**अथवेति**। विशेषाज्ञानादृत्विगुपादानासिद्धिः सर्व्वव्यवहारासिध्यापत्तेर्नाशङ्कनीयेत्याह—**सर्वो हीति**। कीदृशी सामान्यतः प्रसिद्धिरित्यपेक्षायामाध्वर्यवादिसमाख्यातयाङ्गज्ञानं कर्म्मसिध्युपयोगि 'याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्युपाया इति स्मृत्यालोचनयान्यजातीयानामार्त्विज्यनिषेधावगतेरनिषिद्धसम्भवे च निषिद्धोपादानानाक्षेपात्, तस्माद्वाप्येतर्हि यज्ञा सयुग्भूत्वा देवेभ्यो हव्यं वहति, ब्राह्मणेन च छन्दोभिश्चेति च ब्राह्मणानामेवार्त्विज्यश्रुतेरेता वै प्रजा हुतादो यद् ब्राह्मणा इत्यादिलिङ्गाच्च ब्राह्मणकृतस्यैवार्त्विज्यस्यापूर्वसाधनत्वावगतेर्ब्राह्मण्यमपूर्वसिद्ध्युपयोगि, कर्मप्रवृत्त्युयोगि च वरणं, तद्विशेषणं च दक्षिणानिर्देशनमृत्विगुपलक्षणमाह—**अत इति**। ऋतुयजनादिविशेषाणामृत्विक्त्वोत्पत्त्युपयोगशङ्कानिरासायाह—**सेयमिति**। सर्व्वेषां सम्बन्धव्युत्पत्त्युपयोगित्वे वाच्यत्वापत्तेरनेकशक्तिकल्पनापत्तिमाशङ्क्यर्त्विक्छब्दार्थविषयज्ञानं चमसाध्वर्य्वादिसाधारणविषयत्वेनैकैकविशेषमात्रालोचनया प्रसज्यमानमेभिः सर्वैर्विशेषैरुपसंह्रियमाणं सद्विशेषविषयं भवति। न त्वेते विशेषाः शब्दार्थेऽन्तर्भवन्ति येनानेकशक्तिकल्पनापत्तिः स्यादित्याह—**विज्ञानं चेति**। एभिर्विशेषैर्भवतीत्यनुषङ्गेण पूरणीयम्। अतश्चैषां विशेषाणां शब्दार्थयोः सम्बन्धव्युत्पत्तावृत्विक्त्व-

ज्ञानोपसंहारे चोपयोगेनर्त्विक्त्वोत्पत्त्यनुपयोगित्वादक्रियमाणमेव सदृत्विक्त्वमेभिर्विशेषैर्ज्ञातं भवतीत्युपसंहरति—**अक्रियमाणमेवेति**।

अप्रसिद्धाः संस्कर्तुं न शक्यन्त इत्यप्रसिद्धशब्देन वरणात्प्रागृत्विगभावो विवक्षित इति द्वितीयं पक्षं दूषयितुं विकल्पयति—**अपिचेति**। आद्यस्तावत्कल्पो नाशङ्कनीय एवेत्याह—**तत्रेति**। द्वितीयमपि कल्पं कर्तृवाचिकृत्संज्ञक्विप्रत्ययान्तर्विक्छब्दवाच्याया ऋतुयजनकर्तृशक्तेर्योग्यत्वाख्याया वेदाध्ययन-तदर्थश्रवणाभ्यामेव सिद्धत्वान्निरस्यति—**तथेति**। न च कश्चिद्येन करणे सामर्थ्यमुपजन्यते, तदर्थं पुरुषान् क्रीणातीत्युत्तरपादद्वितीयाधिकरणभाष्येणैतदेव द्रढयति—**वक्ष्यति चेति**। उत्पाद्यत्वमभ्युपेत्यापि परार्थकर्म्मकरणस्योत्साहस्यैवोत्पत्तिदर्शनान्नालौकिकस्यर्त्विक्त्वस्योत्पाद्यता युक्तेत्याह—**सर्वत्र चेति**। वरणात्प्रागृत्विक्छब्दाप्रयोगेणर्तुयजनकर्तृशक्तेर्वाच्यत्वायोगादृत्विक्त्वस्यापि प्रागनुत्पत्तेर्वरणोत्पाद्यत्वोपपत्तिं शङ्कते—**नन्विति**। अलौकिकस्यर्त्विक्त्वस्य पश्चादप्यदर्शनान्नोत्पाद्यता युक्तेति परिहरति—**सत्यमिति**। एवमपि प्रागृत्विक्छब्दाप्रयोगेणर्तुयजनयोग्यताया वाच्यत्वायोगापरिहाराद्वरणोत्पाद्यर्त्विक्त्वाभ्युपगमे कर्म्मणोत्साहस्यैवर्त्विक्त्वापत्तेर्नालौकिकर्त्विक्त्वकल्पना युक्तेत्याह—**अथेति**। एतदेवोपपादयितुमाह—**न चेति**। अदृष्टाभावे वरणनियमानर्थक्यमाशङ्क्य, नियमादृष्टस्य सद्भावेपि कर्म्मार्थत्वेनर्त्विक्छब्दप्रवृत्तौ, तद्विशेषाध्वर्य्वादिशब्दप्रवृत्तौ वा व्यापाराभावादृत्विक्त्वाक्रियास्वरूपाजन्यत्वाद्वरणोत्पाद्यता नास्तीत्याह—**यत्त्विति**। ऋत्विग्वाक्यस्याविधायकत्वेनाऽदृष्टकल्पकत्वाभावादृत्विक्त्वे व्यापारायोगं मत्वाऽध्वर्य्वादिवरणनियमादृष्टानामध्वर्य्वादिषु व्यापारोक्तिः। भाष्ये त्वृत्विक्त्वाख्याऽदृष्टान्तरसिद्धयै षोडशानां साधारणं प्रत्येकवरणेभ्यो वरणान्तरं विधातुमृत्विग्वाक्यं मत्वा, तदुपन्यासः। आहवनीयादेर्दृष्टप्रक्षिप्यमाणद्रव्यधारणकार्यस्याप्यदृष्टत्वाभ्युपगमाद्यस्यादृष्टं कार्यं तदेव स्वयमदृष्टमिति नियमायोगमाशङ्क्यादृष्टकार्यत्वाद्वैषम्यं वक्तुमाह—**आहवनीयादीनां त्विति**।

नहीत्याद्युपपत्तिवार्त्तिकान्वयायाऽदृष्टानामुत्पाद्यतेत्यध्याहाराददृष्टोपकारत्वेनादृष्टतोपपन्नेत्यर्थः। अदृष्टत्वेनैवानुत्पन्नावस्थत्वादुत्पाद्यत्वोपपत्तिरुक्ता संस्कारोक्त्याधानस्यादृष्टार्थता सूचिता वरणवदाधानस्य कर्म्मार्थत्वायोगसूचनायाऽप्रकरणस्थताधानाख्योत्पत्तिरेषामप्रकरण इति बहुव्रीहिणोक्ता। अदृष्टोपकारत्वोपपादनपूर्व्वमाहवनीयत्वमुपपादयति—**न हीति**। वैषम्यमुपसंहरति—**अत इति**।

दशमाधिकरणद्वयविरोधापत्तेरप्यृत्विक्त्वस्यालौकिकता न युक्तेत्याह—**यदि चेति**। सत्रर्त्विजां स्वकर्मत्वेन वरणस्यात्मार्थत्वापत्तेरात्मनि च प्रार्थनाख्यवरणायोगात्सत्रे वरणं नास्तीत्याद्यसूत्रार्थः। परिक्रयस्यात्मार्थत्वापत्तेः सोपि नास्तीति द्वितीयसूत्रार्थः। वरणेनर्त्विगकरणे किमर्थो वरणविधिरित्यपेक्षायामाह—**तस्मादिति**। योग्यत्वमात्रेणर्त्विक्त्वावधारणे वरणात्प्रागप्यृत्विक्छब्दप्रयोगापत्तिमाशङ्क्य, कर्म्मसाफल्यापादनार्हकालविशेषोपलक्षणार्थर्तुशब्दोपपदेनान्वयादृत्विक्छब्दस्य फलापूर्वसाधनीभूतयजनकर्तृवाचित्वावगतेर्वरणनियमजन्यादृष्टाभावे च कर्मणो वैगुण्यात्फलसाधनाशक्त्यापत्तेर्वरणोपात्त एव पुंस्युपसंह्रिय-

माणः सोऽन्यान् योग्यान् विद्यमानानपि नालम्बत इत्याह—ऋत्विक्छन्दश्चेति । यतश्च भृतिनिर्देशविशिष्टेन वरणेनैवर्त्विज उपादेया इति नियमः क्रियते ततश्चर्त्विक्छब्दोपसंहार-प्रयोजनतापि वरणविधेः सूचिता । विषयोक्त्या ब्राह्मण्यमपि सूचितम् । सत्रेपि तर्हि वरणात्प्रागृत्विक्त्वासिद्धिस्तत्पक्षेऽपि स्यादित्याशङ्क्यर्त्विक्छब्दवाच्यतुंयजनाभिमुख्यसिद्धचै विधीयमाने वरणे साम-दान-भेद-दण्डानां प्रवृत्युत्साहात्मकानामनन्याख्याभिमुख्यहेतुत्वस्य लोकसिद्धत्वात्, वरणस्य च प्रार्थनात्मकत्वेन सामत्वाद्विधिं विनापि वरणसिद्धेर्विध्यानर्थक्य-परिहारार्थस्य नियमस्यादृष्टफलाकाङ्क्षायामवैगुण्यार्थत्वकल्पनात्सत्रे च स्वत एवाभिमुख्य-सिद्धेर्वरणस्यानपेक्षिततया सत्रप्रयोगवचनेन'ग्रहणादभावेपि वैगुण्यानापत्तेः फलापूर्वसाधनी-भूतयजनयोग्यतामात्रेणानन्याख्याभिमुख्यसिद्धेर्ऋत्विक्त्वसिद्धिमाह—सत्रे त्विति । ऋत्वि-क्त्वसिद्धेरेकाहाहीनेष्वप्यध्वर्युत्वादिसिद्धयर्थवरणातिरिक्तवरणानपेक्षत्वादध्वर्युत्वादिसिद्धयु-क्तिः । 'मूलतः शाखां परिवास्योपवेषं करोती'ति वाक्याच्छाखाच्छेदनकार्यत्वेनाप्यव-गतस्योपवेषस्य पौर्णमास्याममावास्यायामपि वा सान्नाय्यरहितायां शाखाच्छेदनाभावेप्यु-पवेषसिद्धिदृष्टान्तेन चतुर्थे साधयिष्यमाणेन सत्रे वरणाभावेप्यध्वर्युत्वादिसिद्धिं द्रढयितु-माह—तद्यथेति ।

का तर्हि भाष्यस्य गतिरित्यपेक्षायामृत्विक्छब्दस्य यागनिमित्तत्वमात्रग्रहणे परिसङ्ख्या-योगेनानर्थक्यापत्तः वरणनिमित्तस्यापि ग्राह्यत्वादुभयनिमित्तकत्वं युक्तम् । ऋतुयजन-योग्यत्वाच्चर्त्विक्त्वाधिष्ठानभूतानामध्वर्य्वादिवरणेनोपादानादृत्विक्त्वासिद्धेर्नान्योन्याश्रया-पत्तिः । ऋत्विजां वा संस्कार्यत्वेप्युपादेयत्वाद् द्वितीयोपपत्तिर्वरणस्य चोपादानाख्यादृष्टार्थ-त्वसिद्धिरित्येवं भाष्यव्याख्यां सूचयितुं कर्मवाचिनः करोतिशब्दस्योपादानार्थत्वं यथा चतुर्थाधिकरणसूत्रे वक्ष्यते । तथा भाष्यकृतः क्रियन्त इत्यभिधानमुपादानार्थमित्याह—तस्मादिति ॥ ३३ ॥

भा० प्र०—सिद्धान्ती का कहना है कि "न" पूर्वपक्षी का यह मत सङ्गत नहीं है, सभी ऋत्विक् पद वाच्य नहीं हैं । कारण, "परिसंख्यानात्" = श्रुति में "सौम्यस्य अध्वरस्य यज्ञक्रतोः सप्तदशर्त्विजः" इसे वाक्य में सोमयाग में सत्तर ( ७० ) व्यक्ति ऋत्विक् के विषय के रूप में उपदिष्ट होने से जितने ब्राह्मण यज्ञ का सम्पादन करते हैं उनमें ७० व्यक्ति ऋत्विक् के नाम से कहे जायेंगे, अतिरिक्त चमसाध्वर्युगण ऋत्विक् गणवाच्य नहीं है, ऋत्विक् के पक्ष में जो सभी उपवासादि उपदिष्ट होते हैं, उनको वह नहीं करना होगा ।

"न" = नहीं अर्थात् सभी ऋत्विक् पदवाच्य नहीं है, "वा" = पूर्वपक्ष के निरास के लिए है, "परिसंख्यानात्" = परिसंख्या अर्थात् अन्य का निषेध होने से सिद्धान्त ॥३३॥

पक्षेणेति चेत् ॥ ३४ ॥

शा० भा०—चेन्मन्यसे, यथोक्तपक्षेणैतदेवमुच्येत । अवयुत्यवादपक्षेण सप्तदशर्त्विज इति । तत्परिहर्तव्यम् ॥ ३४ ॥ आ० ॥

न्या० सु०—पक्षेण सप्तविंशतिसङ्ख्यैकदेशेनाऽवयुत्यानुवादाख्येन सप्तदशवादो, न तु परिसङ्ख्येति यदविशेषोक्तिमित्यनुभाषणार्थत्वेन स्पष्टत्वात्सूत्रस्य पाठमात्रं कृतम् ॥ ३४ ॥

भा० प्र०—पूर्वपक्षी आशङ्का करते हुए कहते हैं, यह जो सप्तदशत्व श्रुति वह पृथक् निर्दिष्ट है अवयवशः उल्लेख होने से वैश्वानरेष्टिका द्वादश कपाल के अष्टकादि के उल्लेख के समान अनुवाद होगा, क्योंकि, उसके पृथक्त्व का उल्लेख है।

"पक्षेण" = पक्ष में अर्थात् पृथक् भाव में उल्लेख के पक्ष में, "इति चेत्" = यदि यह कहा जाय। पूर्वपक्षी की आशङ्का ॥ ३४ ॥

## न सर्वेषामनधिकारः ॥ ३५ ॥

**शा० भा०—नैतदेवम्। नात्र सर्वेषां पुरुषाणां वचनं, यानधिकृत्यावयुत्यवादो भविष्यति। यत्र परा संख्या कीर्त्यते, तत्रावयुत्यवादो भवति। यथा द्वादशकपाले यदष्टाकपालो भवतीति। न चेह परा संख्या कीर्त्यते। तस्मान्नावयुत्यवाद इति ॥ ३० ॥ आ० नि० ॥**

### ऋत्विगितिनाम्नोऽसर्वगामिताधिकरणम् ॥ १६ ॥

त० वा०—वैश्वानरद्वादशकपालाधिकारे ह्यष्टत्वादय उच्चार्यमाणाः स्वरूपेणानुपयुज्यमानाः शक्नुवन्त्यवयवत्वं गमयितुम्। स्तुत्या चोपयुज्यन्ते। न त्विह परमसंख्योपात्ता, यदधिकारात्सप्तदशत्वमवयवः प्रतीयेत। स्तुत्यर्थं च स्यात्। तस्मादृत्विक्त्वोपसंहारार्थमेवैतदिति सप्तदशर्त्विजः ॥ ३५ ॥

( इति—सर्वेषामृत्विक्शब्दावाच्यताधिकरणम् ॥ १६ ॥ )

न्या० सु०—नात्र वाक्ये सर्वेषां सप्तविंशतेः कर्तॄणां प्रस्तावो, येन तदवयवत्वप्रतीतेस्तात्पर्यत्वेन चोपयोगसम्भवादवयुत्यानुवादः स्यादित्येवं परिहारार्थत्वेन सूत्रं व्याख्यातुमाह—**वैश्वानरेति**। अवयुत्यानुवादत्वायोगेऽपि परिसङ्ख्यानसूत्रायोगमाशङ्क्योपसंहारार्थत्वेन परिसङ्ख्यानोक्तिं व्याख्यातुमाह—**तस्मादिति**। सर्वेषामृत्विक्त्वाभावसिद्धान्तमुपसंहरति—**इतीति** ॥ ३५ ॥

इति पञ्चदशं ऋत्विक्शब्दवाच्यताधिकरणम्।

भा० प्र०—पूर्वपक्षी ने जो आशङ्का का उत्थापन किया है, उसके उत्तर में सिद्धान्ती का कहना है कि "न सर्वेषाम्" = इस स्थल में यदि सभी पुरुषों की समष्टि का उल्लेख रहता, ऐसी स्थिति में सप्तदश पक्ष को अनुवाद कहा जाता। जैसे वैश्वानोष्टि स्थल में द्वादशत्वरूप महासंख्या का उल्लेख है, अतः, उस स्थल में अष्टत्व नवत्व एवं एकादशत्व का जो स्वतन्त्र रूप में अवयवशः निर्देश है, अतः यह अनुवाद हो सकता है। किन्तु, इस स्थल में जब उस तरह महासंख्या का उल्लेख नहीं है तब सप्तदशत्व को अनुवाद नहीं कहा जा सकता है इसीलिए "अनधिकारः" = आर्त्विज्य

में सभी का अधिकार नहीं है, अर्थात् सभी ऋत्विक् नहीं है, वरन् सत्तर व्यक्ति की ऋत्विक् पदवाच्य है।

"न सर्वेषाम्" = सभी का उल्लेख नहीं है, "अनधिकारः" = इसलिए, सभी का अधिकार नहीं है ॥ ३५ ॥ आशङ्का निरास।

## (१७) नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३६ ॥ सि० ॥

**शा० भा०—सप्तदश ऋत्विज इति समधिगतम्। कतमे ते सप्तदश इतीदं चिन्त्यते। किं प्राप्तम्? अज्ञानम्। एवं प्राप्ते।**

**ब्रूमः—नियमस्तु दक्षिणाभिः। श्रुतिसंयोगात्। दक्षिणासंबन्धेन नियम्येरन्। एवं ह्याम्नायते। ऋत्विग्भ्यो दक्षिणां ददाति, इत्येवमभिधाय, दक्षिणादानक्रमपरे वाक्ये ब्रह्मादयः श्रूयन्ते। अग्नीधेऽग्रे ददातीति, ततो ब्रह्मणे, ततोऽमुष्मै चामुष्मै चेति केचिदेव विशिष्टाः श्रूयन्ते। एवं ये श्रूयन्ते, ते तावदृत्विजः। ततोऽभ्यधिका नान्ये भवितुमर्हन्ति। दक्षिणाभिर्नियम इति ॥ ३६ ॥**

त० वा०—प्रकृतानां ये केचित्सप्तदशेति प्राप्ते।

अभिधीयते। सामानाधिकरण्यप्रयोगान्नियमः। तच्च दक्षिणादानक्रमवाक्यगतं ब्रह्मादीनां दृश्यते। न चमसाध्वर्यूणाम्। यद्यपि च सिद्धमृत्विक्त्वमनूद्यमानं न शक्यमुपसंवर्तुमिति बुद्धिर्भवति, तथाऽपि सप्तदशश्रुत्यपेक्षितविशेषावस्थानं तदेष्वेव वेदेन सिद्धवदाश्रितम् अतोऽस्माकमेवं परिच्छेदो भवति नूनमेत एवर्त्विज इति ॥ ३६ ॥

न्या० सु०—किमिति पूर्वपक्षभाष्यं प्रकृतानां सप्तविंशतेर्मध्ये कस्मिंश्चित्प्रयोगे केचिदिति ज्ञानाद्ययुक्तमाशङ्क्य, नियमाज्ञानाशयत्वेन व्याख्यातुमाह—प्रकृतनामिति। सामानाधिकरण्यश्रुतिसंयोगान्नियम इत्येवं सिद्धान्तोक्तयर्थत्वेन सूत्रं व्याख्यातुमाह—इतीति। प्रयोगस्य हेतुत्वे दक्षिणानां हेतुत्वोक्तययोगमाशङ्क्य, दक्षिणादानक्रमवाक्यस्य प्रयोगस्थानत्वोक्त्यै दक्षिणानां हेतुतोक्तेति, सूचयितुमाह—तच्चेति।

ऋत्विग्भ्यो ददातीत्युक्त्वाग्नीधे ददातीत्यग्नीधे ऋत्विज इति सामानाधिकरण्यं प्रतीयत इत्याशयः। ये ऋत्विजस्तेभ्यो ददातीत्युक्ते क्रमवाक्ये कतिपयश्रवणेप्यन्येषामक्रमकदानसम्भवात्सर्वेभ्यो दानप्रतीतेरुपसंहारायोगमाशङ्क्य, क्रमवाक्यादुपसंहाराप्रतीतावपि सप्तदशश्रुतिवशादुपसंहारप्रतीतेः, केषु कर्तृविशेषेष्वृत्विक्त्वं व्यवस्थितमित्यपेक्षणात्क्रमविधायिना च वेदेन ब्रह्मादिष्वेव सिद्धवदृत्विक्त्वाश्रयणाद्व्यवस्थितविषयतोपसंहारस्याऽवसीयत इत्याह—यद्यपिचेति। सप्तदशं श्रुत्यपेक्षितं कर्तृविशेषेऽवस्थानं यस्य तच्छब्दपरामृष्टस्यर्त्विक्त्वस्य, तत्तथोक्तम् ॥ ३६ ॥

भा० प्र०—पूर्व अधिकरण में कहा गया है कि सत्तर व्यक्ति ही ऋत्विक् पदवाच्य होंगे। इसमें यह संशय है कि अनियम में जो कोई भी सत्तर व्यक्ति ही ऋत्विक् होंगे?

इस सम्बन्ध में कोई नियम है। इसमें पूर्वपक्षी का कहना है, किसी प्रकार के विशेषत्व का उल्लेख न रहने से ब्रह्मा आदि एवं चमसाध्वर्यु आदि में भी कोई भी सत्तर व्यक्ति ऋत्विक् होगा। इसके उत्तर में सिद्धान्ती का कहना है कि "नियमस्तु" = कोई सत्तर व्यक्ति ऋत्विक् होगा। इस विषय में नियम के अनुसार व्यवस्था होगी, क्योंकि, "दक्षिणाभिः श्रुतिसंयोगात्" = श्रुति में दक्षिणावाक्य में ऋत्विक् और उनके नाम का सामानाधिकरण्य रूप संयोग अर्थात् सम्बन्ध बोधित होता है, कारण श्रुति में "ऋत्विगभ्यो दक्षिणां ददादि" अर्थात् ऋत्विजों को दक्षिणा दे इस वचन के बाद "अग्नीधे ददाति, ब्रह्मणे ददाति" अर्थात् अग्नि को दक्षिणा दे, ब्राह्मण को दक्षिणा दे इत्यादि प्रकार से प्रत्येक का स्वतन्त्र रूप में उल्लेख है। यह जो सामान्य एवं विशेषत्वबोध श्रुतिवाक्य से "ऋत्विजे अग्नीधे दक्षिणां ददाति" अर्थात् अग्नीत् नाम के ऋत्विक् को दक्षिणा दे अर्थलब्ध होने से उनके सामानधिकरण्य के बल से अग्नीद भिन्न अर्थात् अग्नीत् से अभिन्न अर्थात् भिन्न नहीं है। जो ऋत्विक् इस प्रकार का अर्थ जानता है और उनमें अग्नीत् ब्रह्मा आदि जो नाम श्रुति में उल्लिखित है वे ही सब ऋत्विक् पदवाच्य है किन्तु चमसाध्वर्यु आदि को इस प्रकार दक्षिणा का निर्देश न होने से ऋत्विक् शब्द के सहित सामान्यधिकरण्य न होने से वे ऋत्विक् नहीं है।

"नियमः" = नियम है, "तु" अधिकरणान्तर सूचक है, "दक्षिणाभिः श्रुतिसंयोगात्" = क्योंकि दक्षिणा के साथ श्रुति में ऋत्विजों के नाम का सम्बन्ध है॥ ३६॥ सिद्धान्त

## उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात्॥ ३७॥

शा० भा०—'य ऋत्विजस्ते यजमाना' इत्येवमभिधाय ब्रह्मादीनां दीक्षाक्रमपरे च वाक्ये दीक्षां दर्शयति। कथम्। "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गान्तारं, ततो होतारम्'। ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः'। ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः। ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः। ततस्तमन्यो ब्राह्मणो दीक्षयति, ब्रह्मचारी वाऽऽचार्यप्रेषित' इति। दीक्षा च—यजमानसंस्कारः। तस्माद्ब्रह्मादय ऋत्विजः सप्तदश इति॥ ३७॥ क० युक्तिः॥ दीक्षादक्षिणावाक्योक्तानामेवब्रह्मादीनां सप्तदशर्त्विक्त्वाधिकरणम्॥ ३७॥

त० वा०—'य ऋत्विजस्ते यजमानाः' इति यजमानर्त्विक्शब्दो समानविषयो नियम्य यजमानसंस्कारं दीक्षां ब्रह्मादिषु क्रमार्थमनुवदन्नेतेषु तौ

१. मा. श. ब्रा. १२-१-१-१०

द्वावपीति दर्शयति । तस्माद्ब्रह्मत्वादिकरणयोग्येष्वेवर्तौ यजत्सु ऋत्विक्त्वं, न सर्वेषु । तद्विषयमेव चर्तुयजनं शब्दस्य प्रवृत्तिनिमित्तम् । यथा सास्नादिमद्गमनं गोशब्दस्य । यथा धाय्याशब्दाः सामिधेनीषु निपात्यमानस्तास्वेवेत्यवधारणान्नान्यासु धीयमानास्वपि धाय्याशब्दवाच्यत्वं भवतीत्यवधार्यते । तथैवर्ताविव यजत्सु भवति, न तु भवत्येवेत्यवधारयितव्यम् ॥ ३७ ॥

( इति–ब्रह्मादीनामेव ऋत्विक्त्वनियमाधिकरणम् ॥ १७ ॥ )

न्या० सु०—न केवलं साक्षात्कल्पितर्त्विग्ब्रह्मादिशब्दसामानाधिकरण्यश्रुतिसंयोगान्नियमः, किन्तु ये ऋत्विजः सत्रेतिदेशप्राप्ताः ते यजमाना एव न तेभ्योन्य इत्यृत्विजां यजमानेभ्योनन्यत्वमुक्त्वा, ब्रह्मादीनां यजमानसंस्कारदीक्षाक्रमविध्यालोचनया ब्रह्माणं यजमानं दीक्षयतीत्यादिसामानाधिकरण्यकल्पनद्वारा ब्रह्माणं यजमानमृत्विजं दीक्षयतीत्यादिकल्पितादपि सामानाधिकरण्यश्रुतिसंयोगादित्येव नियमे हेत्वन्तरोक्त्यर्थं सूत्रं व्याख्यातुमाह—य इति । ऋत्विक्छब्दप्रवृत्तिनिमित्तस्यर्त्तुयजनस्य चमसाध्वर्युष्वपि भावात्कदाचिच्चैतेष्वपीतरसमवायात्सासदश्योपपत्तेर्नित्यं तन्निवृत्त्ययोगमाशङ्क्यर्त्तुयजनमात्रस्य शब्दप्रवृत्तिनिमित्तत्वे सासदश्योक्त्ययोगापत्तेः कर्तृविशेषस्यस्यैवर्त्तुयजनस्य निमित्तत्वावगमादनियतकर्तृविशेषस्यस्य च निमित्तत्वेनानवस्थितशब्दार्थापत्तेः स्वतश्च वाच्यवाचकशक्तिलक्षणशब्दार्थसम्बन्धहानापत्तेर्नियतविशेषापेक्षायां दीक्षादक्षिणाक्रमवाक्यवशाद्ब्रह्मादिस्थस्यैव निमित्तत्वावगतेर्नित्यं चमसाध्वर्युनिवृत्त्युपपत्तिमाह—**तद्विषयमेव चेति ।**

धाय्याशब्दिकानामृचां समिद्ध्यमानवतीसमिद्धवत्यन्तरालनिधानस्यापेक्षितविधित्वसिध्यैधाय्याशब्दस्य धीयमानवाचित्वनिपातनादग्निनेतेधानुपास्त्वचा यत्र यत्र वै देवा यज्ञस्य क्षिद्रं निरजानंस्तद्धाय्याभिरपिदधुः तद्धाय्यानां धाय्यात्वमित्यर्थवादाच्छिद्रापिधानानिमित्तधाय्याशब्दकत्वावगतेः पृथुपाजवत्याद्यानां सामिधेनीनामेवावपनाख्यनिमित्तधाय्यात्वावधारणाविरोधः ॥ ३७ ॥

भा० प्र०—विशेष सत्तर व्यक्तियों के ऋत्विक् होने में और भी हेतु है "उक्त्वा च यजमानत्वम्" इत्यादि । श्रुति में सत्र प्रकरण में "ये ऋत्विजस्ते यजमानाः" अर्थात् जो ऋत्विक् हैं, वे ही यजमान हैं । यह कहकर "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारम्" अर्थात् अध्वर्युगृहपति को दीक्षितकर उसके बाद ब्रह्मा को दीक्षित करे, इसके बाद होता को, इसके बाद उद्गाता को इत्यादि वचन के सत्र में जो ऋत्विक् हैं वे ही यजमान हैं एवं उन्हीं की दीक्षा अर्थात् याग के पूर्व में अनुष्ठेय यजमान की शुद्धता के सम्पादन के लिए संस्कार विशेष कर्तव्य के रूप में उपदिष्ट है । इस श्रुतिवचन में जो सोलह लोगों की दीक्षा का विषय उपदिष्ट होता है वे ही ऋत्विक् है । वे सोलह व्यक्ति अर्थात् अध्वर्यु, प्रतिप्रस्थाता, नेष्टा और उन्नेता थे

चार अध्वर्युगण हैं। ये यजुर्वेदोक्त कर्म का सम्पादन करते हैं, ब्रह्मा, ब्राह्मणच्छंसी, अग्नीत्, और पोता ये चार ब्रह्मगण हैं, ये वेद त्रयोक्त कर्म का पर्यवेक्षण करते हैं। उद्गाता, प्रस्तोता, प्रतिहर्ता और सुब्रह्मण्य ये चार उद्गाता हैं, ये सामवेदोक्त क्रिया सामगानादि करते हैं। होता, मैत्रावरुण, अच्छावाक और ग्रावस्तुत ये चार होता है। ये ऋग्वेदोक्त कर्म हैं—ऋग् के मन्त्रों का पाठपूर्वक देवताओं आह्वनादि करते हैं। इनमें अध्वर्यु, ब्रह्मा, होता एवं उद्गाता ये चार प्रधान पुरुष हैं, अन्य तीन इनके सहकारी हैं। दीक्षाविधायक श्रुतिवाक्य में इसकी दक्षिणा का विषय भी वर्णित है, उसके अनुसार ये चार गणों के प्रथम चार सम्पूर्ण दक्षिणा पाते हैं। इसलिए उनको अर्द्धी कहा जाता है, तृतीय पुरुषगण प्रथम ऋत्विक् पुरुषगण हैं वे जो दक्षिणा पाते हैं, उसका तृतीय भाग दक्षिणा पाते हैं। इसलिए वे तृतीया और चतुर्थ ऋत्विक् पुरुषगण को चतुर्थांश दक्षिणा प्राप्य है, इसलिए, उनको पादी = पाद दक्षिणायुक्त कहा जाता है। इस प्रकार दीक्षा और दक्षिणावाक्य में सोलह ऋत्विक् व्यक्ति का उल्लेख है। किन्तु, चमसाध्वर्युगण का उल्लेख नहीं है, इसलिए, वे ऋत्विक्पदवाच्य नहीं होंगे।

"यजमानत्वम्" उक्त्वा = यजमानत्व का विषय कहकर, "तेषां" = उनका अर्थात् ऋत्विजों की, "दीक्षाविधानात् च" = दीक्षाविहित होती है, अतः इति सप्तदश ब्रह्मा आदि का ऋत्विक्त्वनियमाधिकरण ॥ ३७ ॥

## ( १८ ) स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३८ ॥ सि० ॥

शा० भा०—एतदुक्तं, सप्तदश ऋत्विज इति। ते च ब्रह्मादयः। तत्र संदेहः—किमेषां सदस्यः सप्तदशः, उत गृहपतिः। किं तावत्प्राप्तम्? सदस्य इति। स हि कर्मकरः। इतरः स्वामी। यश्च कर्मकरः। स परिक्रेतव्यः। ऋत्विजश्च परिक्रीयन्ते। तस्मात्सदस्यः सप्तदश ऋत्विगिति। अपि च, तस्य चमसमामनन्ति, वरणं च। ऋत्विग्वरीतव्यो न स्वामी। तस्मात्सदस्यः सप्तदश इति प्राप्ते।

उच्यते—स्वामिसप्तदशाः कर्मसामान्यात्। स्वाम्येषां सप्तदशः स्यात्। कुतः? कर्मसामान्यात्, यज्ञे कर्तार ऋत्विजो भवन्ति। यज्ञे च कर्ता गृहपतिः, तस्मादृत्विक्। यज्ञकर्मसामान्यात्।

यदुक्तं, तं समामनन्ति, तस्य चमसमामनन्ति, वरणं च। तस्मात्सदस्यः सप्तदश इति। उच्यते। ब्रह्माणमेव ते समामनन्ति, वरणमपि, चमसश्च ब्रह्मण एव। स हि सदसि भवः। तस्मात्स्वामिसप्तदशाः ॥ ३८ ॥ ऋत्विजां स्वामिसप्तदशत्वाधिकरणम् ॥ १८ ॥

त० वा०—दीक्षादक्षिणावाक्ययोः षोडशानां संकीर्तनात्तावन्तोऽवधारिताः। सप्तदशः कस्तेषामिति न ज्ञायते। सदस्य-यजमान-चमसाध्वर्यवश्चावशिष्यन्ते।

तत्र चमसाध्वर्यूणां तुल्यकल्पत्वादन्यतरावधारणप्रमाणं नास्तीति सदस्ययजमानयोरन्यतरः संदिह्यते। तत्र कर्मकरत्वसामान्यात्सदस्यग्रहप्रसक्तावभिधीयते। स्वामिसप्तदशाः स्युरिति। कथं पुनः पूर्वत्र तु यजमानकर्मनिमित्तत्वमनभ्युपगम्याधुना तत्सामान्यात्स्वामिनः ऋत्विक्कर्माभिधीयते। 'सदस्यं वृणीते' इति चोत्पत्तिसंयोगादध्वर्य्वादिवद्भेदः। न च ब्रह्मण्यवयवप्रसिद्धिः संभवति। समुदायप्रसिद्धया बाधि त्वात् न च ब्रह्मणः पुनर्वरणं विधातुम्, अनुवदितुं वा शक्यम्। अध्वर्य्वादिष्वप्येवमेव प्रसङ्गात्। सर्वेषु चोपहादिषु ब्रह्ममन्त्रव्यतिरेकेणास्य मन्त्रः पठ्यते। तत्र चान्याय्यो विकल्प आश्रीयेत। न च चमससंबन्धेऽपि ब्रह्मणः संकीर्तनं सदस्यशब्देनोपपयुज्यते। सामर्थ्याक्षिप्तेन चोपद्रष्ट्रा सदस्येनावश्यं भवितव्यम्। सोऽपि च प्रत्यवेक्षणादृतौ यजतीति शक्यो वक्तुम्। सर्वे याज्ञिकाश्च भेदेन तं वृण्वते। तस्मादयुक्ता सदस्यनिराक्रियेति।

उच्यते।

ऋत्वङ्गत्वेन नैवेह सदस्यस्य निराक्रिया।
चमसाध्वर्युवत्त्वेष नर्त्विभित्यभिधीयते॥

सदस्यो हि भेदेन वरीतव्य एव। न च ब्रह्मा सदस्यशब्देनोच्यते। ऋतुयजने सति वरणेनर्त्विक्त्वानियमाद्दक्षिणाभागसंबन्धद्वादशाहदीक्षावाक्ययोश्चासंकीर्तनादृत्विगिति नोच्यते। यथा सत्यपि वरणे ऋतुयजनसंबन्धे च कारणद्वयासंभवाच्चमसाध्वर्यव ऋत्विजोनोक्ताः। स्वामिनस्तु यद्यपि च वरणं नास्ति, तथाऽप्यन्यत्सर्वमस्तीति युक्तमृत्विक्त्वम्।

यत्तु सदस्योऽपि प्रत्यवेक्षणाद्यजतीतिवचनसामर्थ्यादिवासौ व्रियते, न तु कश्चित्पदार्थो, येनास्य कर्तृविशेषः केनचित्प्रमाणेन नियम्येत। तस्मात्सत्येव सदस्ये सूक्तं स्वामिसप्तदशा इति। यत्तु भाष्यकारेण किंचित्सदस्यनिराकरणपरमुक्तं तदृत्विक्त्वनिराकरणपरस्यातिरभसवचनमित्युपेक्षणीयम्॥ ३८॥

( इति–स्वामिनः सप्तदशत्वाधिकरणम्॥ १८॥ )

न्या० सु०—षोडशोपेक्ष्य सप्तदशमात्रविचारे हेतुमाह—दीक्षेति। चमसाध्वर्युमध्ये कश्चिदृत्विक्सप्तदशपूरणार्थं कस्मान्न शङ्केत इत्याशङ्क्यां निराकर्तुमाह—सदस्येति। सदस्यस्य चावशिष्टत्वोक्तया ब्रह्मातिरिक्तस्य सदस्यस्य भाष्यकृतनिष्टत्वेऽपि सद्भावाभ्युपगमेन पूर्वपक्षोपपत्तिः सूचिता। किन्तावदिति पूर्वपक्षभाष्यं यजमानस्यापि कर्म्मकरत्वाविशेषादयुक्तमाशङ्क्य, ब्रह्मादितुल्यपरार्थकर्म्मकरत्वाशयत्वेन व्याख्यासूचनपूर्व्वं सिद्धान्तमाह—तत्रेति। सदस्यस्य कर्म्मकरतया ब्रह्मादितुल्यत्वादित्यर्थः।

यश्चेत्यादिभाष्यमृत्विक्त्वोपसंहारस्य दक्षिणादानादिवाक्यस्थर्त्विक्छब्दार्थोक्तयथर्त्वात्स्वामिनश्च दक्षिणापरिक्रेतव्यत्वायोगात्सप्तदशपूरकता न युक्तेत्येवमर्थत्वेनापिचेति

भाष्यं च व्यतिरिक्तसदस्यसद्भावोपपादनार्थत्वेन स्पष्टत्वान्न व्याख्यातम्। सदस्यकर्तृक-यज्ञाङ्गानुष्ठानाविधानेन स्वामिन एव शुक्रान्वारम्भणादियज्ञाङ्गानुष्ठानेन ब्रह्मादितुल्यत्वादित्येवं हेतुव्याख्यार्थं यजेरिति भाष्यालोचनया वरणानपेक्षयागमात्रनिमित्तस्यर्त्विक्छब्दस्य ग्रहणमनर्थकम्। तस्माद्वरणनिमित्तोऽप्यृत्विक्छब्दो गृह्यत इत्येवमृत्विक्त्वाधिकरणस्थभाष्यार्थावगतिं सूचयितुमाह—**कथं पुनरिति**। तस्मादृतुयजनस्यापि निमित्तता भाष्यकृताऽभ्युपेताऽवसीयत इत्याशयः। यदुक्तमिति भाष्येण 'सदस्यः सप्तदश' इति शाखान्तरे साप्तदश्यपूरणार्थत्वेन सदस्याम्नानं पूर्वपक्षप्रतिज्ञासूचितमनुभाष्य निरासार्थमुच्यत इति भाष्यं वरणचमसाम्नानाच्चातिरिक्तसदस्योपपादनस्य पूर्व्वपक्षोक्तस्य निरासार्थं वरणमपीति भाष्यमाक्षेप्तुमारभते—**सदस्यमिति**। अवयवप्रसिद्ध्यसम्भवोक्त्या साप्तदश्यपूरणवरणचमसाम्नानानां त्रयाणामपि ब्रह्मविषयत्वनिरासः। न च ब्रह्मण इति चकारेण ब्रह्मणः साप्तदश्यपूरणार्थतापि वरणादावृत्विग्विषये कार्ये ब्रह्मणोऽन्यत्वाविधानेनाऽदृष्टार्थपूरणविध्यापत्तेर्विधातुमप्राप्तेश्चानुवदितुमशक्येति सूचितम्। तस्यैव प्रत्यवेक्षणाख्यकार्यान्तरार्थं पुनर्वरणाभ्युपगमेऽध्वर्य्वादिरपि तत्तत्कार्यार्थं पुनः पुनर्वरणापत्तिर्द्वयोरप्यशक्यत्वे हेतुः। ब्रह्मन्नुपह्वयस्व, सदस्योपह्वयस्वेत्या'दिब्रह्मसदस्यमन्त्रविकल्पापत्तेरपि ब्रह्मणः सदस्यता न युक्तेत्याह—**सर्वेषु चेति**।

ब्राह्मणश्चमसद्वयादेकचमसभक्षे ब्राह्मशब्दवान्, अपरभक्षे सदस्यशब्दवानुपहवमन्त्रो भविष्यतीत्याशङ्क्यैकस्य चमसद्वयानर्थक्यादपि भेदमाह—**न चोति**। व्यतिरिक्तकार्याभावातिरिक्तसदस्यानर्थक्यमाशङ्क्याह—**सामर्थ्येति**। ब्राह्मणं ब्रह्मिष्ठं कुर्वति, यो यज्ञस्योल्वणं पश्येदिति श्रुतेः कृताकृतान्वेषणस्यापि ब्रह्मकार्यत्वावगमात्तद्व्यतिरिक्तद्रष्टृक्षेपायोगमाशङ्क्याहवनीयदक्षिणोपविष्टस्य ब्रह्मणः सदसि क्रियमाणकर्म्मान्वेषणाशक्तेस्तत्समीपे स्थित्वान्वेषणायाक्षेपोपपत्तिरुपशब्देन सूचिता। अन्वेषणस्यायज्ञाङ्गत्वात्तन्मात्रकारिण्यृत्विक्त्वायोगमाशङ्क्य, यजिना लक्षणयाङ्गवदुपकारिणोऽप्युक्तिसम्भवाशयेनोपपादयितुमाह—**सोपिचेति**। याज्ञिकाचारविरोधापत्तेरपि व्यतिरिक्तसदस्यनिरासो न युक्त इत्याह—**सर्वे इति**। आक्षेपमुपसंहरति—**तस्मादिति**।

भाष्याक्षेपेणाक्षिप्तं सिद्धान्तं तावत्समाधत्ते—**उच्यत इति**। श्लोकं व्याचष्टे **सदस्यो हीति**। स्वामिनोऽप्यृत्विक्त्वनियामकवरणाभावादृत्विक्त्वावगतिकारणस्य चदक्षिणाभावान्वयक्रमवाक्ये चतुर्थीनिर्द्देशाभावेन सत्रे च यजमानानामेवर्त्विक्त्वेपि 'सप्तदशावराश्चतुर्विंशतिपरमा। सत्रमासीरन्निति सप्तदशातिरिक्तानामपि यजमानत्वश्रुतेस्तावतां चर्त्विक्त्वप्रमाणाभावेनर्त्विजामेव यजमानत्वनियमाभावादृत्विक्त्वं विनापि च दीक्षोपपत्तेर्दीक्षावाक्ये 'गृहपतिमृत्विजं दीक्षयित्वति' सामानाधिकरण्यकल्पनहेत्वभावेन द्विविधस्याप्यृत्विक्छब्दसामाधिकरण्यस्याभावादृत्विक्त्वायोगमाशङ्क्याह—**स्वामिनस्त्विति**। वरणाभावे चकाराद्दक्षिणावाक्यकल्प्यदीक्षावाक्यकल्प्यसामानाधिकरण्याख्यकारणद्वयाभावेऽप्यृतुयजनस्यर्त्विक्छब्दप्रवृत्तिनिमित्तस्य तद्व्यवस्थापकस्य च

ब्रह्माद्यृत्विक्साहचर्यकीर्त्तनस्य दीक्षावाक्ये गृहपतिशब्देन दक्षिणावाक्येपिददतिशब्देन भावात्स्वामिन ऋत्विक्ता युक्तेत्यर्थः। सदस्यस्यापि प्रत्यवेक्षणाख्यर्त्तुयजनसद्भावस्योक्तत्वात्, तदभावेनर्त्विक्त्वनिराक्रिया न युक्तेत्याशङ्कते—यत्त्विति। अनियमेन पाकादिकारिण्यपि पाचकादिव्यपदेशा दर्शनेन कर्तृव्यपदेशस्य नियमकर्तृत्वानिमित्तत्वावगमात्सदस्याधीनयज्ञाङ्गाभावेन चास्याः कर्त्तेति केनचिदङ्गेन सदस्यस्य क्रियया कर्तृत्वाय व्यपदेशयोगादृत्विक्त्वायोगं तदधीनाङ्गाभावे तद्वरणानर्थक्यशङ्कानिरासपूर्वमाह—वचनेति। हिशब्दान्वयार्थं तन्नेतिनिरासप्रतिज्ञाध्याहार्ययज्ञोपकारिणः प्रत्यवेक्षणात्सदस्यस्य कर्तृत्वनियमादृत्विक्त्वोपपत्तिमाशङ्क्य, अङ्गेष्वेव श्रुत्यादीनां कर्तृविशेषनियामकत्वात्प्रत्यवेक्षणस्य चाविहितत्वेनाऽनङ्गत्वात्कर्तृविशेषनियमायोगमाह—न चेति। ब्रह्मातिरिक्तसदस्यसद्भावे 'सदस्यः सप्तदश' इति श्रुतेस्तस्यैव साप्तदश्यपूरकत्वापत्तिमाशङ्क्यर्त्विग्वरणानन्तरसदस्यवरणार्थत्वेनाप्यस्य वरीतव्यपदाध्याहारेणोपपत्तेर्ऋत्विक्छब्दप्रवृत्तिनिमित्तर्तुयजनरहितस्य वरणकालत्वात्। समाख्यायाः पूर्वैः सह विरोधाविरोधचिन्ताया प्रासङ्गिकचमसाध्वर्य्वादिचिन्तासमाप्त्या बुद्धिस्थीकृतेनोपोद्घातार्थेन कर्तृणां यजमानादन्योन्यं च भेदेन 'शास्त्रफलं प्रयोक्तरि' तत्रार्थात्कर्तृपरिमाणं स्यादित्यधिकरणद्वयोक्तेन सङ्गतिमाह—एवमिति। विरोधिसमाख्याया विनियोजकत्वाभावेन समाख्याकृतविनियोगोक्तेरविरोधस्य पूर्वपक्षं लिङ्गप्रकरणाभ्यां विरोधं रचयतीत्यर्थः। सूत्रपूर्वार्द्धमात्रेण पूर्वपक्षोक्तिसूचनार्थं लटो भूतार्थत्वद्योतकं स्मेत्युपपदमुत्तरविवक्षया स्मारणार्थत्वपक्षे 'व्याख्या चैवं तदर्थत्वादि'त्यत्रोक्तस्य समाख्याकृतस्य विनियोगस्य स्थूणानिखननन्यायेन दृढीकरणार्थं पूर्वपक्षं रचयतीत्यर्थः। स्मारणार्थं चोपपदम्।

आद्यसूत्रावयवमाक्षेप्तुं विकल्पयति—तत्रेति। आद्यं तावत्कल्पं दूषयति—यदि तावदि। जञ्जभ्यमानाधिकरणन्यायेनैतदेव द्रढयति—उक्तं हीति।

द्वादशे वक्ष्यमाणेनाऽग्नीनां लौकिकवैदिकसर्वार्थत्वनिरासन्यायेनाऽपि द्रढयति—तथेति। एकादश इति पाठो भ्रान्तिकृतः। एतदेवोपसंहरति—तस्मादिति। द्वितीयकल्पेऽप्याद्यं कल्पं दूषयति—नापीति। अन्त्यकल्पाङ्गीकारेण समाधत्ते—यानित्विति। लिङ्गविरोधोत्तरार्थत्वेन प्रयुक्तत्वोक्ति व्याख्यातुं शक्ति विनाप्रयुक्तप्रयोगाच्छक्तिलक्षणार्थामङ्गीकृत्य सर्वैः क्रत्वर्थैर्वाक्यसंयुक्तैः कार्यैर्ऋत्विजामाक्षेप्तुम्, ऋत्विग्भिर्वा सर्वकार्याणामनुष्ठातुं शक्यत्वादित्येवं द्वेधा व्याचष्टे—प्रयुक्तत्वादिति। भाष्यमप्येवमेव योज्यमित्याह—सर्वमिति। सर्वस्मै पुरुषकार्यायेति पूर्वपक्षभाष्यस्थस्यापि सर्वशब्दस्यायमेवार्थः। आकाङ्क्षितत्वोक्त्या च प्रकरणविरोधोक्त्यर्थत्वेन प्रयुक्तत्वोक्तिव्याख्यानस्याऽनुज्ञासूचनार्थं कर्म्मणीति विशेषणात्पुरुषार्थाशयनिरासः सिद्धोपि विवृतः। द्वितीयं सूत्रावयवं समाख्याचितानुपयोगेनाक्षिपति—ये पुनरिति। प्रासङ्गिकत्वेन सङ्गतिसम्भवेऽपि सर्वलौकिकवैदिककार्यार्थत्वे सर्ववैदिककार्यार्थत्वे च सौत्रादौ हेत्वशक्त्याऽऽक्षेप्तुमाह—न चेति।

स्वे कर्म्मान्तरकालानपेक्षे वसन्तादिकालेऽग्नीनामाधानेनोत्पत्तेरुपदेशातिदेशाप्राप्तानां यूपवत्प्रयोगसाधारण्यार्थत्वसम्भवान्न सर्वार्थत्वसाधने शक्तिरित्याशयः। सिद्धान्ते चाग्निविषयस्य पक्षस्य हेतोर्वानुक्तेरपि पूर्वपक्षोक्तयोगमाह—**न च तस्येति**।

सर्वोक्तिश्च लौकिकवैदिककार्याशया, वाक्यसंयुक्तकार्याशया चेति विकल्प्य, आहवनीयादिलौकिकपाकादिसम्बन्धिप्रयोजनं काष्ठज्वालऽनाद्यपि साधयेच्छक्तत्वादिति पूर्वपक्षयित्वा वैदिककर्म्मार्थहोमादिकार्यनिर्देशाद्वैदिकानामेव कर्म्मणां सम्बन्धिनोऽप्रयोजनस्य विहारः साधकः स्यादिति द्वादशे वक्ष्यमाणसिद्धान्तविरोधेनाद्यं कल्पं दूषयति—**यदि चेति**। द्वितीयं विशेषानुक्तेः किमग्निजातमुपनिधेयमिति सन्देहे लौकिकमुपनिधेयं, न तु वैदिकमाहवनीयादि, तस्य होमादिप्रयोजन निर्देशादित्येवमाहवनीयादीनां सप्तमाधिकरणाद्यसूत्रेणाहवनीयादिभ्योऽन्येषामपि धिष्ण्यादीनामग्नीनां धिष्ण्यान्वाऽऽधारयतीत्यादिश्रुत्या व्याघारणादिप्रयोजनसंयोगेनैवोत्पत्तिरिति हेतुना सूत्रान्तरेण वाक्यसंयुक्तसर्ववैदिककार्यार्थत्वनिरासात्तद्विरोधेन दूषयति—**यदपीति**।

पूर्वपक्षत्वादधिकरणान्तरसिद्धान्तविरोधस्यादोषत्वमाशङ्क्याह—**सिद्धान्तेति**। आक्षिप्तमवयवं समाधातुमारभमाणोऽनन्तरोक्तं सिद्धान्तत्वापादनं तावत्सिद्धसाध्यत्वेन दूषयति—**तस्मादिति**। प्रकृतौ वेत्यनारभ्यवादाधिकरणसिद्धान्तसूत्रेण खादिरत्वादेः प्रकृतिविकृत्यर्थत्वे द्विरुक्तत्वापत्तिलक्षणो न्यायो य उक्तः, तत्प्रकृत्यर्थमित्याधानाधिकरणपूर्व्वपक्षसूत्रेण चाधानेतिदेशाद् दृढीकरणेन प्रतिपादित। सन्ननुमितः पूर्वपक्षो यस्य सिद्धान्तस्य स एवाग्नीनां सर्वार्थत्वसिद्धान्तस्ते सर्वार्था इति सूत्रवाक्यस्य भेदेन पृथग्भूतेनाग्नयश्चेत्यवयवेनोच्यत इत्यर्थः। कथं तर्हि द्वादशाधिकरणेन सप्तमाधिकरणेन चाविरोधपरिहार इत्याशङ्क्याह—**न चैतदिति**। ततश्चाग्निभिश्चेति सन्देहभाष्येण किं सर्वं प्राकृतं वैकृतं चाग्निकार्यं गार्हपत्यादिभिः कार्यम् उतप्राकृतमेवेति व्यवस्थेत्येवं पूर्वोत्तरपक्षौ कार्याविति सन्देहभाष्यव्याख्यां सूचयितुमाह—**तत्रेति**। पूर्वपक्षोक्त्यै तदनुमानहेतुभूतन्यायोक्त्यर्थमाधिकरणान्तरसूत्रद्वयं पठति—**तदिति**। कर्म्मानङ्गत्वेनाधाने निरस्तस्याप्यस्य न्यायस्याग्निष्वङ्गत्वादुत्थानोपपत्तिः। सिद्धान्तोक्त्यर्थत्वेन सूत्रावयवं पृथक्कृत्य व्याचष्टे—**एवमिति**। असामर्थ्यपरिहारार्थं स्वकालत्वोक्तिः कर्म्मान्तरप्रक्रमानपेक्षाख्यस्वातन्त्र्यलक्षणार्थत्वेन व्याख्याता। अग्न्युत्पादकस्याधानस्य कर्म्मान्तरानपेक्षाभावेन साक्षात्कर्माङ्गत्वावेदकप्रमाणाभावादाहवनीयादिस्वरूपमात्रप्रयुक्तत्वेन च कर्म्मापूर्वसाधनांशानपेक्षत्वादग्निद्वारापि कर्माङ्गत्वाभावेन प्रकृत्यर्थत्वाभावेप्यग्नीनामाहवनीयादिवाक्यैः कर्म्माङ्गत्वस्यैकान्तेनावगमात् खादिरत्वादिवत्प्रकृत्यर्थत्वं भविष्यतीत्याशङ्क्य, खादिरत्वादिद्वारस्य स्रुवादेरतिदेशं विना विकृतावप्राप्तेर्द्विरुक्तत्वापत्तिभयाद्विकृत्यर्थत्वं खादिरत्वादेर्न जातम्। आहवनीयद्वारस्य तु होमस्य विकृतावपि नक्षत्रेष्ट्यादावुपदेशात्प्राप्तत्वात्तादर्थ्येप्याहवनीयस्य द्विरुक्तत्वानापत्तेः खादिरत्वादिन्यायाभावाद्यूपोत्पादकस्य छेदनस्य

प्रकृत्यर्थत्वाद्यूपस्य प्रकृत्यर्थत्ववदाधानस्य प्रकृत्यर्थत्वे कश्चिद्धेतुरस्तीति सूचयितु-माह—तदिति ।

एतश्च सर्वार्थत्वमाहवनीयद्वारस्यैव होमस्य प्रकृतिविकृतिविशेषे प्रत्यक्षोपदेशात्त-न्मात्रविषयं, न त्वग्निमात्रविषयं विकृतिमात्रविषयं वेत्याह—न त्विति । कथं नावकल्पत इत्यपेक्षायामाह—द्वारमिति । येषु विकृतिविशेषेष्वतिदेशापेक्षं द्वारं, तेष्वनारभ्याधीताः पदार्था यत्प्राप्नुवन्ति, तद्द्वारेतिदेशापेक्षया युगपच्च सर्वाङ्गेष्वतिदेशप्रवृत्तेः पदार्थेष्वति-देशापेक्षया न त्वतिदेशानपेक्षास्ततश्च द्विरुक्तत्वापत्तेः प्रत्यक्षेण शास्त्रेण ये होमाश्चो-दितास्तेष्वेव स्वप्रधानेष्वग्निहोत्रादिषु द्वारानपेक्षत्वादङ्गभूतेषु चोपहोमादिषु नैष्फल्या-त्स्वयमङ्गग्रहणाशक्तेषु सत्सु तद्द्वारा तद्युक्तेषु यागेषूपदेशेनाहवनीये स्यात्, तु होम-चोदनामनपेक्ष्यापि यागेषु यस्मात्, तस्मान्नैतत्सर्वविषयमिति श्लोकद्वयार्थः । अपूर्वेष्वपि होमेष्वाहवनीयोपदेशोपपत्तेः प्रकृतिविकृतिमात्रार्थत्वनियमोऽपि नास्तीति सूचनार्थं—दर्वीविशेषणाम् । आद्यं श्लोकं व्याचष्टे—यदिति । सर्वविषयत्वाभावं सूत्रकृत्सम्मतया द्रढयति—तथाचेति । सर्वविकृतिविषयत्ववत्सर्वाग्निविषयतापि सर्वार्थत्वोक्तेर्नास्तीत्याह—तथेति । समधिगतमिति भाष्यं सम्यगर्थसंशब्दाङ्गीकारेणाग्निविषयाविकरणपर्य-वसानादृत्विङ्मात्रविषयसिद्धान्तायोत्तरं सूत्रमित्येवमर्थत्वेन व्याचष्टे—अग्निष्विति ॥३८॥

भा० प्र०—पूर्व में सोलह ऋत्विजों का उल्लेख किया गया है, ज्योतिष्टोम यज्ञ में सत्तर ऋत्विक् आवश्यक है अतः, सप्तदश संख्या का पूरक कौन होगा—यही संशय है । इसमें पूर्वपक्षी का कहना है कि यज्ञसंभार में सदस्य नाम एक व्यक्ति है, वही ऋत्विक्-गण का सप्तदश संख्या स्थानीय होगा और किसी शाखा में सदस्य का वचन भी उपदिष्ट है ।

इसके उत्तर में सिद्धान्ती का कहना है कि "स्वामिसप्तदशः" = स्वामी अर्थात् यज्ञ के फल का भोक्ता यजमान ही यह सप्तदश व्यक्ति होगा, अतः, ऋत्विक् में स्वामि सप्तदश है । क्योंकि, "कर्मसामान्यात्" = क्योंकि, ऋत्विजों के साथ यजमान का कर्मसामान्य अर्थात् कर्म का सादृश्य है । कारण, ऋत्विग्‌गण में भी यज्ञ की आनुष्ठानिकी क्रिया करनी होगी । किन्तु कृत और अकृत कर्म का प्रत्यवेक्षण करना छोड़कर कोई भी आनुष्ठानिक कर्म श्रुति में उपदिष्ट नहीं है, अतः, उसको कुछ भी कर्म नहीं करना होगा । इसीलिए, सदस्य ऋत्विक् नहीं है । अतः सदस्य सप्तदश स्थानीय नहीं हो सकता है, इसीलिए, सदस्य की आवश्यकता नहीं है—ऐसी बात नहीं है ।

"स्वामिसप्तदशाः" = ऋत्विक्‌गण स्वामिसप्तदश होगा अर्थात् स्वामी अर्थात् यज्ञ का स्वामी = फलभोक्ता यजमान सप्तदश जिसका—इस प्रकार की व्युत्पत्ति के अनुसार, यजमान उनका सप्तदश स्थानीय, "कर्मसामान्यात्" = क्योंकि, कर्म का सामान्य अर्थात् एकरूपता है । भाष्य के आपात लाभ अर्थ के अनुसार अवगत होता है, ऋत्विक्‌गण के मध्य में ब्रह्मा ही सदस्य कर्म करेगा । इसलिए, वार्तिककार ने कहा है कि यह भाष्य का

तात्पर्य नहीं है, किन्तु चमसाध्वर्यु के समान सदस्य भी ऋत्विक्गण में अन्तर्भुक्त नहीं हैं—यही भाष्य का आशय है। इसलिए, क्रत्वङ्गरूप में सदस्य का भी पृथक् वरण भरणादि विहित होता है—यह भी सङ्ग नहीं है ॥ ३८ ॥

इति अष्टादशस्वामी का सप्तदशत्वाधिकरण ।

## (१९) ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ ३९ ॥ पू० ॥

शा० भा०—स्वामिसप्तदशा ज्योतिष्टोमस्य ऋत्विजः समधिगताः। अत्रेदानीमयं संदेहः—किं सर्वं पुरुषकार्यं तैः कार्यं, अग्निभिश्च गार्हपत्यादिभिरग्निकार्यम्। उत काचिद्व्यवस्थेति। किं तावत्प्राप्तम्? ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात्। ते वृताः सर्वस्मै पुरुषकार्याय स्युः। अग्नयश्चाग्निकार्याय। कुतः? तैः कार्यैराकाङ्क्षितत्वात्। प्रति स्वं ग्रहणमेषामनुवादः। स्वकालत्वादग्नयश्च सर्वार्था इति समधिगतमेतत् ॥ ३९ ॥ अग्नेः प्रकृतिविकृतिसर्वार्थताधिकरणम् ॥ १९ ॥

आध्वर्यवादिष्वध्वर्य्वादीनां कर्तृतानियमाधिकरणस्य पूर्वपक्षः ।

त० वा०—एवं कर्तृभेदं प्रतिपाद्येदानीं समाख्याविनियोगस्य पूर्वपक्षं रचयति स्म। तत्र 'ते सर्वार्थाः' इति न ज्ञायते किं क्रत्वर्थपुरुषार्थाभिप्रायम्। उत क्रत्वर्थसर्वार्थाभिप्रायम्। तत्रापि किं वाक्यसंयुक्तसर्वार्था, उतासंयुक्तसर्वार्थाः। यदि तावत्पुरुषार्था अपीत्यभिप्रायः, स वरणभरणयोः प्रकरणाम्नानेन क्रत्वर्थत्वादयुक्तः। उक्तं हि 'प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत्' इत्यादिषु। तथैकादशे वक्ष्यति 'निर्देशाद्वा वैदिकानां स्यात्' इति। तस्मादेवं तावन्न सर्वार्थत्वम्।

नापि संयुक्तेषु 'तान्पुरोऽध्वर्युर्विभजति' इत्यादिकश्रुतानामन्येषामवतरणमस्तीति। यानि त्वसंयुक्तानि कार्याणि, तानि यत्र तत्र वेदे पठितानि, येन केनचित्कर्त्रा यथासामर्थ्यं कर्तव्यानीति सर्वार्थाः। प्रयुक्तत्वादिति—सर्वाणि हि कार्याणि शक्नुवन्ति तान्प्रयोक्तुम्। तथा तेऽपि कार्याणि सर्वं पुरुषकार्यमिति यद्यत्कर्मणि पूरुषैः प्रागवचनविशेषात्स्वसामर्थ्येन शक्यते तत्तदित्येवं युज्यते, न पुरुषार्थाभिप्रायेण।

ये पुनराहवनीयादयस्तेषां सर्वार्थत्वमप्रस्तुतमेव। न च प्रसङ्गादुच्यते। स्वकालत्वस्य हेतोरप्यसमर्थत्वात्। न च तस्योत्तरपक्षे कश्चित्पक्षस्य हेतोर्वा परामर्शोऽस्ति। यदि च लौकिककार्यापेक्षया सर्वार्थत्वमभिधीयते, ततो विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात्' इत्युक्त्वा 'निर्देशाद्वा वैदिकानां स्यात्' इत्यत्र निर्णीतत्वादविचार्यम्।

यदपि वेदविहिताग्निकार्यंसर्वार्थत्वं प्रकृतिविकृत्योः, तदपि, अग्निमुपनिधाय स्तुवते' इत्युदाहृत्य 'विशये लौकिकं स्यात्सर्वार्थत्वात्' 'न वैदिकमर्थनिर्देशात्' 'तथोत्पत्तिरितरेषां समत्वात्' ( धिष्ण्याग्नीनां स्यात् ) इति निर्णीतवाद। विचार्यम्। सिद्धान्तवचनमेवैतन्निराकरणोक्त्यभावात्।

वाक्यभेदेन वार्तिके व्याख्यानम्

तस्मादेवं वर्ण्यते नैवेदमग्नीनां सर्वार्थत्वं पूर्ववक्षीकृतम्। किं तर्हि। अधिकरणान्तरसूत्रोक्तन्यायप्रतिपादितानुमितपूर्वपक्षः सिद्धान्त एवायं सूत्रवाक्यभेदेनोच्यते। न चैतदग्निकार्यापेक्षया सर्वार्थत्वम्। किं तर्हि ? प्रकृतिविकृत्यपेक्षया। तत्रानारभ्यवादन्यायेनाऽऽधानवदेव पूर्वोत्तरपक्षौ रचयितव्यौकिमाहवनीयादयः प्रकृत्यर्था आहोस्वित्सर्वार्था इति। तत्र, तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः' 'प्रकृतौ वा द्विरुक्तत्वात्' इत्येवं प्राप्तेऽभिधीयते। अग्नयः सर्वार्थाः प्रकृतिविकृत्यर्था भवेयुः। कुतः। स्वकालत्वात् स्वतन्त्रोत्पत्तित्वादित्यर्थः। तदेतद्वर्णितं सर्वार्थं वाऽऽधानस्य स्वकालत्वात्' इत्यत्र। न त्वेतत्सर्वविषयं सर्वार्थत्वमवक्लपते।

द्वारं येषु पराधीनं तेषु तत्प्राप्त्यपेक्षया।
प्राप्नुवन्तीदृशा भावा न स्वतन्त्राः कथंचन॥
शास्त्रेण चोदिता ये हि दर्विहोमाः स्वरूपतः।
तेष्वेवाऽऽहवनीयः स्यान्न यागेष्वप्यचोदनात्॥

यज्जुहुति, तदाहवनीये इति श्रूयते। न यद्यजेरन्निति। तेनावश्यमाहवनीयचोदनया तावत्प्रतीक्षितव्यं यावत् 'चतुरवत्तं जुहोति' यद्ग्रहान् जुहोति' 'यच्चमसान् जुहोति' इति चातिदेशेन संबन्धाद्द्वारं प्राप्तम्।

ततश्चाऽऽहवनीयेन सहैवास्यातिदेशतः।
प्रकृतौ वा द्विरुक्तत्वादित्ययं निश्चयो भवेत्॥

तथा च 'तासामग्निः प्रकृतितः प्रयाजवत्' इति सिद्धवत्प्रकृत्यर्थत्वं दर्शितम्। तथा वैकृत चरुपुरोडाशानां प्रत्यक्षहविः श्रपणविधानाद्गार्हपत्यप्राप्तिद्वारं नास्तीत्यवश्यं सगार्हपत्यमेव श्रपणं प्रकृतितः प्राप्नुवदपेक्षितव्यम्। अग्निषु पर्यवसितम्॥ ३९॥

भा० प्र०—यह जो ऋत्विजों के विषय में जो कहा गया है उनमें प्रत्येक कर्म नियत अर्थात् समाख्या के अनुसार निर्दिष्ट है अथवा वह अनिर्दिष्ट है—यही संशय है। इसमें पूर्वपक्षी का कहना है कि "ते सर्वार्थाः"—ये सभी ऋत्विग्गण सभी यज्ञ के कर्मों को कर सकते हैं—अपनी-अपनी इच्छा के अनुसार कोई भी कुछ भी कर्म कर सकते हैं, कारण, "प्रयुक्तत्वात्"—वे सभी यजमान से प्रयुक्त अर्थात् दक्षिणा से नियुक्त

किये गये हैं। क्योंकि, सभी में सभी कर्मों के करने का सामर्थ्य है, उस यज्ञ के प्रकरण में सभी का नामोल्लेख है। अतः, लिङ्ग एवं प्रकरण से समाख्या का बाध ही होगा। इसका उदाहरण देने के लिए "अग्नयश्च स्वकालत्वात्"—उक्त "अग्नश्च" इत्यादि अंश से एक अन्य अधिकरण की सूचना दी गई है। वह अधिकरण इस प्रकार है। आधान से जो आहवनीयादि अग्नि के लाभ करने का विषय उपदिष्ट होता है, वह अग्नि क्या केवल प्रकृतिभूत कर्म के लिए ही उपदिष्ट होता है। अथवा वह प्रकृति और विकृति सभी कर्मों के लिए ही साधारणरूप में विहित होता है—यही संशय है, इसमें पूर्वपक्षी का कहना है कि आधानविधिवाक्य जब अनारभ्याधीत है तब वह "यस्य पर्णमयी जुहुर्भवति" इत्यादि वाक्य के समान केवल प्रकृतिगामी ही होगा।

इसके उत्तर में सिद्धान्ती का कहना है कि "अग्नयश्च सर्वार्थाः" = आहवनीयादि अग्नि उपदेशविधि के बल से सर्वगामी अर्थात् प्रकृति और विकृति दोनों प्रकार के कर्मों का गामी होगा। किन्तु, केवल प्रकृतिगामी ही नहीं होगा, कारण, "स्वकालत्वात्" = यह स्वकाल समय में है अर्थात् स्वतन्त्र रूप में पठित है अर्थात् अनारम्याधीत है।

आशय यह है कि पर्णतान्याय से पर्णमयत्व विधान के उद्देश्य से अर्थात् आश्रय जो जुहु वह विकृतिभूत कर्म में अतिदेश सापेक्ष होने से, क्यों नहीं प्रकृतिभूत इष्टियाग में ही विध्यन्तर के द्वारा जुहु आदि विहित होता है, इसलिए विकृति में पर्णता की प्रवृत्ति कहने से द्विरुक्ति दोष होता है, अतः, पर्णताविधि अनारम्याधीत होने पर भी प्रकृतिमात्र गामी है, किन्तु, जहाँ अनारम्यपठितवाक्य विहित विधेय के उद्देश्य में विकृति में अतिदेश सापेक्ष नहीं है, वहाँ अनारम्यविधि विकृतिगामी भी होता है, इसलिए, यह जो आहवनीयादि अग्नि है वह वर्णता न्याय से प्रकृतिगामी तो है ही और आसन होमादि सभी कर्मों में आहवनीयादि अग्नि अतिदेशविधि के बल से प्राप्त नहीं है एवं विकृति में भी वह उस उपदेशविधि से प्राप्त होगा, क्योंकि, आधानवाक्य अनारम्यपठित होने से किसी प्रकरण में न होने से प्रकरण का सम्बन्ध न होने से प्रकृति एवं विकृति सभी कर्मों के साथ ही उसका सम्बन्ध समान है। जिस स्थान में विकृतिभूत कर्म में होम अतिदेशबल से प्राप्त होता है, वहाँ अग्नि भी अतिदेशबल से प्राप्त है, कारण, होम के लिए ही अग्नि आवश्यक होने से होम को द्वार कर आहवनीयादि अग्नि क्रतुमध्य में प्रविष्ट होती है और प्रयाज होम, नारिष्टोम, आदि सभी होम विकृति में अतिदेश के बल से प्राप्त है। इसलिए वहाँ आहवनीयादि अग्नि भी उपदेश के बल से ही प्राप्त है, अतः, आहवनीयादि अग्नि आदि प्रकृति एवं विकृति उभयकर्म साधारण है।

भगवान् भाष्य कारने इस स्थल में सूत्र की वाक्य भेदपूर्वक व्याख्या की है। "ते सर्वार्थाः प्रयुक्तत्वात्" यह एक अधिकरण का पूर्वपक्ष है और "अग्नयश्च स्वकालत्वात्" यह गर्भितकाल में स्वतन्त्र एक अधिकरण है।

"ते" = ये ऋत्विग्गण, "प्रयुक्तत्वात्" = प्रयुक्त होने से "सर्वार्था" = सभी प्रयोजनों के लिए अर्थात् सभी कर्म कर सकता है, "अग्नयः च" = सभी अग्नियों भी अर्थात् प्रकृति विकृति सभी कर्मों के लिए, "स्वकालत्वात्" = क्योंकि वे स्वकाल अर्थात् स्वतन्त्र या स्वाधीन है ॥ ३९ ॥

इति अग्नि का प्रकृति विकृति सर्वार्थताधिकरण।

**तत्संयोगात्कर्मणो व्यवस्था स्यात्संयोगस्यार्थवत्त्वात् ॥४०॥ सि० ॥**

**शा० भा०—तत्संयोगात्—विशिष्टपुरुषसंयोगाद्व्यवतिष्ठेत। ये येन पुरुषेण समाख्यायन्ते, ते तेन कर्तव्याः। एवं तेषां पुरुषसंयोगोऽर्थवान् भविष्यति। आध्वर्यवमध्वर्युणा, हौत्रं होत्रा, औद्गात्रमुद्गात्रेति ॥ ४० ॥ क० सि० ॥ आध्वर्यवादिष्वेवाध्वर्य्वादीनां कर्तृतानियमाधिकरणम् ॥ २० ॥**

त० वा०—ऋत्विक्सूत्तरं सूत्रमारभ्यते समाख्यासंयोगाद्व्यवस्था भवेत्। न हि हौत्रमकुर्वतो होतृसमाख्याऽर्थवती भवति। नापि तेन क्रियमाणस्य हौत्रव्यपदेशोऽवकल्पते। तस्मादन्यथानुपपत्त्या कल्पितया श्रुत्या विनियोगः।

तत्र केचिदाहुः। अत्र केषाञ्चिन्मतस्योपन्यासानिरासौ अन्योन्यनिरपेक्षयोरेव रूढिरूपेण कर्तृकर्मसमाख्ययोः प्रसिद्धयोरक्षरसारूप्येणोपतिष्ठमानयोर्विनियोजकत्वमिति। कुतः ?

संयोगः पूर्वसिद्धो हि निमित्तत्वं प्रपद्यते।
न चेह प्राक्समाख्यानात्किंचित्संयोगकारणम् ॥

होतृशब्दस्तावन्न हौत्रनिमित्त इति, राजशब्दवदेव प्रत्ययलोपप्रातिपादिकप्रत्यापत्त्योरस्मरणादवगतमेतत् न च राजशब्दादिव राज्यशब्दो होतृशब्दाद्धौत्रशब्दः शक्यः कल्पयितुम्। न हि यथा तत्र मन्वादिभिः क्षत्त्रियस्य रक्षणं विहितं, तद्राजकर्मत्वेन ज्ञायमानं प्रत्ययार्थत्वं प्रतिपद्यते। तथेह केनचित्सामिधेन्यनुवचनादेर्होतृकर्मत्वं प्रसिद्धम्, यन्निमित्ता सामाख्या स्यात्। न चैवं सति समाख्या विनियोक्त्रीत्यवसीयते। कथं तर्ह्यसत्यामवयवव्युत्पत्तौ विनियोगः। उक्तमेतच्छब्दसारूप्यमात्रादिति।

**तन्निरासः**

न त्वेतद्युक्तम्। यदि होतुः कर्म हौत्रमित्येवं न व्युत्पाद्यते, ततोऽन्तरेणैव कर्तृकर्मसंबन्धं रूढ्या सारूप्यसमाख्ययोरुपपन्नत्वान्नार्थापत्तिः श्रुतिं कल्पयेत्। न हि वर्णसामान्यमात्रेण शालामालयोः कश्चित्संबन्धः। तथा च वक्ष्यति, न हि कण्वरथंतरे रथंतरसंबन्धः कश्चिदस्तीति। यदपि च कृते राज्ञः कर्मसंबन्धे राज्यशब्दः प्रवर्तत इति। तदयुक्तम्। संबन्धस्याऽऽदिमत्त्वप्रसङ्गात्। तस्माद्यथैव

तत्र नित्ययोरेव शब्दार्थयोर्नित्य एवं सम्बन्धे शाश्वतः प्रतीयमाने साधुत्वप्रतिपत्तिवेलायां राजशब्दमन्वाख्याय राज्यशब्दोऽन्वाख्यायमानो यौगिकस्तन्निमित्तश्चोच्यमानोऽपि नित्यनिमित्तत्वान्नाऽऽदिमत्त्वं प्रतिपद्यते, तथैवात्र हौत्रमिति वृद्धिदर्शनाद्धोतृशब्दात् तस्येदं कर्म' इत्येवमन्वाख्यानमिति गम्यते। केन तु तत्तस्य कर्मावगतमिति। समाख्यादर्शनात्तदेव तादृशं वचनमनुमास्यामहे।

नन्वितरेतराश्रयं प्राप्नोति समाख्यातस्तद्वचनम्, तेन क्लृप्ते संयोगे समाख्यासिद्धिरिति। नैष दोषः। समाख्या तावत्प्रतीतिरूपेण प्रत्यक्षा। सा तु केन निमित्तेन प्रवृत्तेति पूर्वप्रवृत्ततयैव निमित्तमपेक्षते। न चदस्ति। तस्मान्नूनमीदृशी श्रुतिरस्ति, यथा होत्रा कर्तव्यमेतदिति। सर्वेष्वेव लिङ्गादिष्वेवमेतद्भवतीति व्याख्यातम्। अतो नेतरेतराश्रयत्वमिति।

ननु केदम् 'आख्या चैवं तदर्थत्वात्' इत्यनेनैवाधिकरणेन सिद्धम्। सत्यं सिद्धं। न तु तत्र विरोधाविरोधौ विचारितौ। इह तु योग्यत्वप्रकरणविशेषात्सर्वार्थत्वप्रसक्त्या विरोधमाशङ्क्य, परिहरति, उत्तरविवक्षया वाऽनुवदतीत्यपुनरुक्तम् ॥ ४० ॥

( इति–समाख्याऽध्वर्य्वादीनां नियतपदार्थकर्तृताधिकरणम् ॥ १९ ॥ )

न्या० सु०—तैर्त्त्विग्भिः कर्म्मणः संयोगाद्यथासमाख्यं व्यवस्था स्यात्। व्यवस्थितसम्भवे विकल्पापादकाव्यवस्थितशास्त्रार्थायोगेन लिङ्गप्रकरणापेक्षितव्यवस्थासमर्पकतया होत्रादिसमाख्याख्यस्य हौत्रर्त्विक्संयोगस्य तद्विरोधाभावेन श्रुतिकल्पकत्वोपपत्तेर्विनियोगाख्यार्थवत्त्वादित्येवं भाष्यकृता व्याख्यातेऽपि होत्रादिसमाख्यानामप्यौदमेधिन्यां यद्धौत्रादिकारिवाचिनीत्वावगतेर्विनियोक्त्रीत्वोक्त्यै स्वयमुपोद्घातप्रसक्तानप्रसक्तसमाप्त्या बुद्धिस्थीकृता अपि वा श्रुतिभेदात्प्रतिनामधेयं स्युरि ३-७-२२त्युपोद्घाताधिकरणसूत्रस्थनामधेयशब्दनिर्दिष्टहोत्रादिसमाख्यापरामर्शिनं तच्छब्दमङ्गीकृत्य तेषामृत्विजां होत्रादिसमाख्या संयोगादित्येवं व्याचष्टे—समाख्येति। संयोगस्येति सूत्रावयवं व्याचष्टे—तर्हीति। भाष्यकृद्व्याख्यायां तत्संयोगोक्ति हौत्रादिसमाख्यार्थत्वेन व्याचक्षाणः संयोगस्येत्यादिसूत्रावयवं व्याचष्टे—नापीति। आध्वर्यवमिति भाष्यमृत्विक्संयोगस्य लिङ्गप्रकरणापेक्षितव्यवस्थासमर्पकत्वेन तदविरोधाद्विनियोजकश्रुतिकल्पकत्वोपपत्तेर्विनियोगाख्येन श्रुत्यर्थेनार्थवत्त्वादित्येवं संयोगस्येति सूत्रावयवव्याख्यासूचनार्थत्वेन व्याख्यातुमाह—तस्मादिति। केषाञ्चित्प्रतिनामधेयं स्युरित्येतत्सूत्रस्थनामधेशब्दनिर्दिष्टनामधेयपरामर्शिनं च तच्छब्दं संशब्दं चैकीभावार्थत्वादनेकत्रैकरूपसामान्यवाचिनमङ्गीकृत्य तयोर्नामधेययोः कर्तृकर्म्मसमाख्ययोरवयवसामान्ययोगात्सादृश्याद्धौत्रादेः कर्म्मणः कर्त्रपेक्षायां होत्रादेश्च कर्त्तुः कर्मापेक्षायां हौत्रादेः कर्म्मणो बुद्धिस्थत्वात्कर्म्मणो व्यवस्था स्यादवयवव्युत्पत्त्यभावेऽप्यवयवसामान्ययोगस्य विनियोगार्थं हेतुत्वादित्येवं सूत्रव्याख्यां दूषयितुमुपन्यस्यति—तत्रेति। रूढ्युपपादनार्थं

प्रत्यभिज्ञायमानावयवार्थ त्यागहेतु समाख्यानात्प्राक्कर्तृकर्मान्वयासिद्धि प्रश्नपूर्वमाह—**कुत इति**। श्लोकं व्याचष्टे—**होत्रिति**। सामिधेन्यनुवचनादेः प्रमाणान्तराद्धोतृकर्म्मत्व-प्रसिद्धौ तु समाख्यायास्तत्राप्रामाण्यं स्यादित्याह—**न चेति**। संयोगस्येत्यवयवं शङ्कोत्त-रत्वेन व्याख्यातुमाह—**कथं तर्हीति**। दूषयति—**न त्विति**।

कण्वरथन्तरे रथन्तरशब्दस्य निमित्तत्वशङ्कानिरासार्थमिह पुनरेवंविशेषणविशिष्टः कण्वरथन्तरशब्दो लोक एवास्ति, नासौ कण्वानां रथन्तरं कण्वरथन्तरमित्येवं कृत्वोच्यत इति दशमाधिकरणभाष्यमर्थतः पठितुं—**तथाचेत्युक्तम्**। राजशब्दस्य वैधर्म्यदृष्टान्तत्वमनु-भाषणापूर्व्वं दूषयती—**यदपीति**। प्राग्योगासिद्धौ यौगिकव्यव्यपदेशायोगमाशङ्क्याह—**तस्मादिति**। कथं तर्ह्यन्वयावगतिरिति पृच्छति—**केन त्विति**। उत्तरमाह—**समाख्येति**। समाख्यातोऽन्वयावगतावन्योन्याश्रयं शङ्कते—**नन्विति**। परिहरति—**नैष इति**। शेषशेष्यन्वयश्रुतिकल्पनात्प्रागन्वयप्रमितिरित्यन्योन्याश्रयापत्तेः प्रतीतिमात्रा-पेक्षत्वाङ्गीकारेणैव परिहार्यत्वान्निरासं सूचयितुं लिङ्गादावपि प्रतीतमात्रान्वयान्य-थानुपपत्त्या श्रुतिकल्पनेऽन्वयप्रमितिर्भवतीति बलाबलाधिकरणे व्याख्यातमित्याह—**सर्व्वेष्वेवेति**। अन्योन्याश्रयपरिहारमुपसंहरति—**अत इति**। आख्याधिकरणेन पौन-रुक्त्यं शङ्कते—**ननु चेति**। समाख्याया लिङ्गप्रकरणाभ्यां विरोधाविरोधचिन्तामात्रे तात्पर्याङ्गीकारेणापौनरुक्त्यमाह—**सत्यमिति**। स्वामिकर्म्मपरिक्रय इत्यारभ्य विरोधा-विरोधचिन्तां मन्यमाननां मतेन प्राप्त्यर्थत्वात्पौनरुक्त्यं परिहरति—**उत्तरेति**॥ ४० ॥

भा० प्र०—अग्नि प्रकृति और विकृति उभय कर्म साधारण है—यह सिद्धान्ति सम्मत है, अतः, उसके उत्तर में कुछ कहना नहीं है, किन्तु, अध्वर्यु आदि ऋत्विक् गण सर्वार्थ अर्थात् उसका कर्म अव्यवस्थित है, इसके उत्तर में यह कहना है कि "तत्संयोगात् कर्मणो व्यवस्था स्यात्" = इस स्थल में होत्र, आध्वर्यव, उद्गात्र आदि समाख्या के अनुसार ऋत्विजों के कर्मकारिता की व्यवस्था होगी, अतः, होत्र कर्म होता का कर्तव्य है आध्वर्यव कर्म अध्वर्यु का अनुष्ठेय है उद्गाता कर्म उद्गाता का सम्पादनीय है—इत्यादि रूप में व्यवस्था होगी। क्योंकि, ऐसा कहने पर ही होत्र कर्म होता का आध्वर्यव आदि समाख्या की सार्थकता होगी, अन्यथा ये सब निरर्थक हो जायेंगे और किसी की भी सार्थकता करना सङ्गत नहीं होता है। इसलिए, सूत्र में कहा गया है—"संयोगस्य अर्थवत्वात्" = इसलिए लिङ्ग और प्रकरण के प्रति इस स्थल में अनुग्रह नहीं हो सकता है। क्योंकि, प्राबल्य-दौर्बल्य-चिन्ता वहीं होती है, जहाँ एक का प्राबल्य और अन्य की सर्वथा अनर्थकता नहीं होती है, किन्तु, इस स्थान में लिङ्ग और प्रकरण के द्वारा समाख्या का बाध होने पर समाख्या निरवकाश हो और उसकी सर्वथा निरर्थकता होगी "आनर्थक्यं प्रतिहतानां विपरीतं बलाबलम्" इस नियम के अनुसार समाख्या ही प्रबल है। वस्तुतः, इस स्थल में लिङ्ग और प्रकरण के साथ समाख्या का विरोध ही नहीं है कारण, प्रकरण, प्रकरण एवं लिङ्ग के अनुसार सोलह व्यक्ति भी ज्योतिष्टोम

अविकृत एवं सोलह लोगों को ही सभी कर्मों के सम्पादन करने का सामर्थ्य है—यह अवगत होता है। समाख्या के अनुसार ही उनका सामान्यतः प्राप्त कर्तृत्व विशेष विशेष-कर्म में व्यवस्थित होता है। इसलिए, इस स्थल में समाख्या, लिङ्ग, एवं प्रकरण के आनुगुण्य ही करता है, अतः, इनमें विरोध न होने से समाख्या का बाध नहीं हो सकता है, इसलिए समाख्या के अनुसार ही पृथक्-पृथक् कर्म में ऋत्विजों की व्यवस्था होगी।

''तत्संयोगात्'' = समाख्या सम्बद्ध के अनुसार, "कर्मणः व्यवस्था स्यात्" = कर्म की व्यवस्था होगी, ''संयोगस्य अर्थवत्त्वात्'' = क्योंकि, संयोग अर्थात् समाख्या की भी सार्थकता है॥ ४०॥

इति उन्नीस समाख्या के अनुसार अध्वर्यु आदि का नियतपदार्थ कर्तृव्य अधिकरण।

## ( २० ) तस्योपदेशसमाख्यानेन निर्देशः ॥ ४१ ॥ सि० ॥

शा० भा०—किमेष एवोत्सर्गः, सर्वं समाख्यातं समाख्यातपुरुषैः कर्तव्यमिति। नेति ब्रूमः। तस्योपदेशाद्विशेषसमाख्यानाच्च निर्देशः। यथोपदेशः, तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽहेति। समाख्या, पोत्रीया, नेष्ट्रीयेति। एष समाख्यायाश्चापवाद इति॥ ४१॥

त० वा०—विशेषसमाख्याऽपि विशेषश्रुतिवदेव शीघ्रतरप्रवृत्तेर्बाधिका भवति॥ ४१॥

न्या० सु०—कर्मसमूहस्याध्वर्य्वादिसमाख्यानात्क्वचिदपि बाधे समाख्यैक्यात् सर्व्वत्राप्रामाण्यापत्तेर्विशेषसमाख्यया बाधायोगमाशङ्क्य, मैत्रावरुणादिवाक्येन बाधस्यावश्याङ्गीकार्यत्वात्सृष्टीरुपदधाति तै० सं० ५-३-४ इतिवद्भूम्नाऽध्वर्य्वादिसमाख्याप्रवृत्त्यङ्गीकारेण परिहारं सूचयितुं तस्याध्वर्य्वादिसमाख्यातस्यापि कर्म्मणो यथा मैत्रावरुणोपदेशेन कर्त्रन्तरोपदेशशून्येभ्यः कर्म्मभ्यो निष्कृष्य कर्त्रन्तरदेशना, तथा विशेषविषयत्वात्सङ्कोचवृत्तिनाख्यानेन विशेषाख्याशून्येभ्यः कर्म्मभ्यो निष्कृष्य कर्त्रन्तरदेशनेत्येवमुपदेशोक्तेर्दृष्टान्तमात्रार्थत्वात्सामान्यविशेषसमाख्ये तुल्यबले विशेषः, समाख्या वा बलीयसीति सन्देहे, यौगिकत्वेन द्वयोर्विशेषविषयत्वसाम्यात्तुल्यबलत्वप्राप्तौ सामान्यसमाख्याया विशेषविषयत्वेष्ववेकविशेषविषयत्वेन सावकाशतया विशेषसमाख्यानवरुद्धेष्वपि विशेषेषु भूम्नाप्रवृत्त्युपपत्तेस्तदवरुद्धेष्वन्यथानुपपत्त्यभावेन श्रुत्यकल्पकतयाऽनवरुद्धविशेषालोचनापेक्षत्वेन मान्द्याद्विशेषसमाख्या निरपेक्षत्वेन शीघ्रप्रवृत्तित्वात्ततो बलीयसीति सिद्धान्तमाह—विशेषेति॥ ४१॥

भा० प्र०—पूर्व में कहा गया है कि हौत्र, आध्वर्यव आदि समाख्या के अनुसार ऋत्विग् गणों के निर्दिष्ट होंगे।। इसमें यह संशय हो सकता है कि 'हौत्र' एवं आध्वर्यव इस समाख्या को अनुसार हौत्र कर्म एवं समुदय आध्वर्यव कर्म केवल होता

का एवं अध्वर्यु का ही कर्तव्य है कि भी ऐसा सन्देह हो सकता है। इसमें पूर्वपक्षी यदि यह कहे कि हौत्र एवं आध्वर्यव कर्म समाख्या के अनुसार केवल होता एवं अध्वर्यु ही अनुष्ठेय है, ऐसी स्थिति में कहा है "तस्य उपदेशसमाख्यानेन निर्देशः", ऐसे स्थल में विशेष श्रुतिवचन एवं विशेष समाख्या के अनुसार व्यवस्था होगी। हौत्र, आध्वर्यव ये ये सामान्य समाख्या = सर्वसाधारण समाख्या और पोत्रीय, नेष्टीय आदि विशेष समाख्या के अनुसार कर्म की व्यवस्था होगी और जहाँ प्रत्यक्ष श्रुतिवचन के द्वारा ऋत्विग् विशेष का निर्देश है, वहाँ कोई सन्देह नहीं है। जैसे "तस्मान्मैत्रा वरुणः प्रेष्यति चानु चाह" इस श्रुतिवचन में प्रैष तथा अनुवचन होतृगणीय द्वितीय ऋत्विक् जो मैत्रावरुण उसके पक्ष में विहित है।

"तस्य" = उसका अर्थात् समाख्या में पुरुष का, "उपदेशसमाख्यानेन" उपदेश एवं समाख्या के अनुसार, "निर्देशः" = निर्देश अर्थात् व्यवस्था होगी। इति सिद्धान्त ॥ ४१ ॥

## तद्वच्च लिङ्गदर्शनम् ॥ ४२ ॥

**शा० भा०—यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयादिति हौत्रे प्रातरनुवाके समाख्यया प्राप्तं होतारं दर्शयति। तथेदमपरं लिङ्गं भवति, 'उद्गीथ उद्गातॄणाम्, ऋचः प्रणव उक्थ्यशंसिनां, [1]प्रतिरोऽध्वर्यूणामिति समाख्याकृतं भेदं दर्शयति।**

**तथेदमपि लिङ्गं भवति। यो वाऽध्वर्योः स्वं वेद स्ववानेव भवति। एतद्वाऽध्वर्योः स्वं यदाश्रावयतीति समाख्याकृतं नियमं दर्शयति ॥ ४२ ॥**

**समाख्याऽऽयातकर्तृत्वस्यापि क्वचिद्बाधाधिकरणम् ॥ २१ ॥**

त० वा०—सामान्यसमाख्याविनियोगस्यैवैतल्लिङ्गम्। विशेषसमाख्यायां तु किंचिदन्यद्द्रष्टव्यम् ॥ ४२ ॥

( इति–सामान्यसमाख्यातकर्तुर्विशेषसमाख्यादिना बाधाधिकरणम् ॥ २० ॥ )

न्या० सु०—उदाहृतानां विशेषसमाख्याकृतविनियोगासाधकत्वादलिङ्गत्वमाशङ्क्य, यथाध्वर्यवादिसमाख्यानात्कर्म्मणोऽध्वर्य्वादिकर्तृव्यवस्था यथा च विशेषसमाख्यानेन कर्त्रन्तरदेशना, तथा लिङ्गदर्शनामित्येवमस्य सूत्रस्य सिद्धान्तद्वयलिङ्गोच्चयर्थत्वसूचनार्थं सामान्यसमाख्याकृतविनियोगलिङ्गमुक्तमित्याह—सामान्येति। विशेषसमाख्यायास्तर्हि किं लिङ्गमित्यपेक्षामाह—विशेषेति ॥ ४२ ॥

---

१. क० प्रतिहारो।

भा० प्र०—लिङ्ग प्रकरण आदि जब अङ्गत्ववाद का साधन समाख्या भी उसी प्रकार अव्यवस्थित कर्मों की व्यवस्था का साधन है, इस विषय का ज्ञापक वेदवचन भी है। इस कारण का व्यवस्था स्थल में समाख्या के अनुसार व्यवस्था करनी होगी।

"तद्वत्" = उसके समान अर्थात् प्रकरण आदि के समान "लिङ्गदर्शनम्" = लिङ्ग-दर्शन अर्थात् समाख्या की निरासकता का ज्ञापक वेदवचन दृष्ट होता है। इति बीस समाख्यातकर्ता का विशेष समाख्या के द्वारा बाध अधिकरण ॥ ४२ ॥

## (२१) प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ ४३ ॥ पू० ॥

शा० भा०—अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः। 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते, इति। तत्रेदं समामनन्ति। 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह', इति। तत्र संशयः। किं सर्वानुवचनेषु सर्वप्रैषेषु च मैत्रावरुणः स्यादुत यत्रानुवचने प्रैष इति। किं तावत्प्राप्तम्। सर्वानुवचनेषु, अविशेषात्। न हि कश्चिद्विशेष आश्रीयते। अस्मिन्ननुवचने मैत्रावरुणोऽस्मिन्नेति। तस्मात्सर्वानुवचनेषु सर्वप्रैषेषु च मैत्रावरुणः स्यात् ॥ ४३ ॥ क० पूर्व० ॥

त० वा०—उपदेशात्सिद्धे समाख्याबाधे समस्तैकदेशविषयत्वेन विचारः। ज्योतिष्टोमप्रकरण एवैतच्छ्रूयते 'तस्मान्मैत्रावरुणः प्रैष्यति चानु चाऽऽह' इति। प्रदर्शनार्थं त्वग्नीषोमीय इत्युक्तम्। तत्र सर्वप्रषाणामाध्वर्यवत्वं, सर्वानुवचनानां च हौत्रसमाख्यानम्। तत्किमनेनोपदेशेन समस्तविषयः समाख्ययोर्बाध उत क्वचिदेवेति। किं प्राप्तं, प्रैषानुवचनोद्देन नैत्रावरुणोपादानादुद्दिश्यमानयोश्च शब्दप्रतिपादितसाहित्यविवक्षानुपपत्तेः श्रूयमाणश्च चशब्दः समुच्चयान्वाचयमात्रं प्रतिपादयति, नेतरेतरयोगसमाहारो, नित्यं समासगम्यत्वात् न चेहान्वाचयलक्षणम्, उभयोस्तुल्यत्वादुपपद्यत इति समुच्चयः स्यात्। स च पृथगपि सर्वेष्वनुष्ठीयमानेषु संभवत्येवेति सामान्यवचनात्सर्वप्रत्ययः ॥ ४३ ॥

न्या० सु०—प्रैषेष्वनुवचनेषु च मैत्रावरुणोपदेशात्समाख्याबाधे दृष्टान्तिते, प्रसङ्गात्किं सर्व्वेषु प्रैषेषु चानुवचनेषु च बाधः, केषुचिद्वेति चिन्तेत्यनन्तरसङ्गतिमाह—उपदेशादिति। तत्रेत्युदाहरणभाष्यं ज्योतिष्टोमप्रकरणाम्नातत्वादयुक्तमाशङ्क्य, ज्योतिष्टोमप्रकरणस्य प्रदेशविशेषप्रदर्शनार्थत्वेनोपपादयति—ज्योतिष्टोमेति। सुत्या बाह्यत्वाद्दैक्षाङ्गानां प्रैषानुवचनानां दीक्षणीयाद्यङ्गप्रैषानुवचनवदनुदाहरणत्वशङ्कानिरासः। प्रदेशोक्तिप्रयोजने बाध्यसमाख्याविषयविवेकपूर्वं सन्देहमाह—तत्रेति। पूर्वपक्षमाह—किमिति। सामान्यवचनात्सर्वप्रैषानुवचनप्रत्यय इत्युक्ते चशब्दादन्योन्ययुक्तयोः प्रैषानुवचनयोर्म्मैत्रावरुणकर्तृकत्वप्रतीतेः सामान्यवचनासिद्धिमाशङ्क्य, तत्सिध्यै प्रौढ्यान्योन्ययोगोक्तिमभिप्रेत्योद्देश्यविशेषणत्वेनाविवक्षामुक्त्वा, श्रूयमाणश्चेत्यादिना सम्भवत्येवेतीति हेत्वर्थेतिकरणान्तेनान्योन्ययोगानुक्तिरुक्ता। भिन्नमन्त्रस्थयोः प्रैषानुवचनयो।

पृथक्प्रयत्नापाद्यत्वेनान्वाचययोगात्तदभिधानेऽप्यन्योन्यसहितप्रैषानुवचनविषयत्वापत्तेस्तन्निरासः ॥ ४३ ॥

भा० प्र०—उपदेश के अनुसार समाख्या का बाध होता है। यह सिद्ध होने पर कहाँ उसका पूर्ण रूप से और कहीं आंशिक रूप से बाध होता है, वही इसके अनन्तर दिखाया जायेगा। पूर्व अधिकरण में "तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह" इस श्रुतिवाक्य को उद्धृत कर कहा गया है कि इस विशेष श्रुतिवाक्य के अनुसार प्रैष्यानुवचन मैत्रावरुणनामक ऋत्विक् का कर्म है। इसमें यह संशय है कि जहाँ जो हैं सभी प्रैष एवं सभी अनुवचन ही मैत्रावरुणनामक ऋत्विक् का पाठ्य है या नहीं? यदि ऐसा माना जाय तो याज्ञिकगणों की समाख्या के अनुसार ये सभी प्रैष एवं जो अनुवचन आध्वर्यव, हौत्र आदि समाख्या में प्रसिद्ध हैं वे सभी इस श्रुतिवाक्य से बाधित होगा।

इस संशय के उत्तर में पूर्वपक्षी ने कहा है "प्रैषानुवचनं मैत्रावरुणस्य"—सभी प्रैष एवं समुदाय अनुवचन ही मैत्रावरुण का कर्तव्य है। कारण, "उपदेशात्" = श्रुति "तस्मात् मैत्रावरुणः प्रेष्यति चानु चाह" इस वाक्य में मैत्रावरुण प्रेषण करेगा एवं अनुवचन करेगा—इस प्रकार का उपदेश देता है। यहाँ वचन में किसी विशेष प्रैष एवं विशेष अनुवचन उल्लिखित नहीं है ऐसी स्थिति में वाक्य से समाख्या का बाध ही होगा अर्थात् उक्त श्रुतिवाक्य के अनुसार समुदय प्रैष एवं सभी अनुवचन मैत्रावरुण का कर्तव्य है।

"प्रैषानुवचनं" = प्रैष एवं अनुवचन, "मैत्रावरुणस्य" = मैत्रावरुणनामक ऋत्विक् का अनुष्ठेय कर्म है, "उपदेशात्" = क्योंकि श्रुति में वही उपदिष्ट है। इति पूर्वपक्ष ॥ ४३ ॥

## पुरोनुवाक्याधिकारो वा प्रैषसंनिधानात् ॥ ४४ ॥ सि० ॥

**शा० भा०—पुरोऽनुवाच्यां वामै त्रावरुणोऽनुब्रूयात्। कुतः। यत्र प्रैषश्चानुवाक्या च सहोच्येते तत्र मैत्रावरुणः। यत्र केवलानुवाक्या, न तत्र मैत्रावरुणः। यत्र वा केवलः प्रैषः तत्रापि न। यत्रोभे समुच्चीयेते, तत्र स भवेत्। तथा हि समुच्चितयोस्तं समामनन्ति, 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽहेति। चशब्दात्समुच्चितयोरिति गम्यते ॥ ४४ ॥ सि० ॥**

त० वा०—न सर्वप्रैषानुवचनेष्वसौ भवेत्। क्व तर्हि। पुरोनुवाक्यासु। प्रैषान्तान्यनुवचनानि पुरोनुवाक्याः। ताश्च प्रकृत्येतग्यद्वचनं प्रवृत्तं 'तस्मान्मैत्रावरुणः' इति। ताश्च तादृश्यो हौत्र एव पठिता इति तस्यैव केवलस्य प्राप्नुवन्ति। यस्तु तासामन्ते यजेतिशब्दः स इष्टिप्रकृतिकेषु तावदङ्गेष्वतिदेशेनाध्वर्योः प्राप्नोति। सोमयागेष्वपि 'प्रैषेषु च पराधिकारात्' इत्येवं निवर्तमानः तेषां यतो विशेषः स्यात्' इत्येवं मैत्रावरुणस्यैव।

अथवा प्रेषकस्योभयत्र कर्तृत्वाद्वक्ष्यमाणेन न्यायेन प्रेष्यत्वं मैत्रावरुणस्य कल्पयित्वा होतुरेव प्राप्नोति। तथाऽध्वर्योः 'प्रेष्य' इति प्रेषान्तराम्नानात् 'यज' इत्येष निवर्तमानः प्रतिप्रस्थातुः प्राप्नोति। शेषाणि तु प्रेषानुवचनानि निर्ज्ञातकर्तृविशेषत्वान्निराकाङ्क्षाण्येवेति, न तेषु मैत्रावरुणविधिः संभवति। पुरोनुवाक्यानां पुनरुभयांशपातित्वादेकपदार्थत्वेन च नानाकर्तृत्वानुपपत्तेर्होतुरध्वर्योश्च प्रच्यवमानानां साकाङ्क्षत्वात्संनिधानाच्च युक्तो मैत्रावरुणविधिः। एवं चशब्दोऽपि सहप्रयोगादपि प्रकृष्टार्थः समर्थितो भवति, प्रैषसंनिधानात्। न च 'प्रेष्य' इत्यादयोऽपि प्रैषास्तस्यैवाऽऽत्मविषयाः संभवन्ति ॥ ४४ ॥

न्या० सु०—सिद्धान्तप्रतिज्ञार्थं सूत्रावयवं पूर्वपक्षव्यावृत्त्यर्थवाशब्दव्याख्यापूर्वं व्याचष्टे—न सर्वेति। अन्योन्ययुक्तप्रैषानुवचनवाचित्वेन पुरोनुवाक्योक्तिव्याख्यापूर्वं ता अधिकरोति—प्रधानीकरोत्युद्दिशति मैत्रावरुणविषयेऽयमुपदेश इत्येवं कर्तृव्युत्पन्नोद्देशवाच्यधिकारोक्त्यङ्गीकारेण, भावव्युत्पत्तौ वा बहुव्रीह्यङ्गीकारेणोक्तेऽर्थे सूत्रावयवं योजयितुमाह प्रैषान्तानीति। प्रकृत्य-प्रधानीकृत्योद्दिश्येत्यर्थः। प्रैषेत्यवयवोक्तस्य प्रैषमिश्रत्वस्य पुरोनुवाक्यानां मैत्रावरुणविधिविषयत्वे हेतुत्वोपपादनार्थं पुरोनुवाक्यानां हौत्रप्रवचनाधीनत्वात्समाख्याया होतृप्रयोज्यत्वावगतेः प्रैषान्तानुवचनरूपाणां च तासामेकपदार्थत्वेनानेककर्तृकत्वायोगात्केवलस्य होतुः प्राप्तेः तदन्तर्भूतस्य च प्रैषस्य यजऽशब्दत्वात्तस्य च दर्शपूर्णमासयोः समाख्ययाध्वर्युकर्तृकत्वात्तत्प्रकृतिकेषु दैक्षादिषु ज्योतिष्टोमाङ्गेष्वध्वर्युप्राप्तेः सोमयागाभ्यासेषु तु समाख्यया होतृप्राप्तावपि प्रैषार्थस्यापि सवषट्कारयाज्याप्रयोगस्य होतृकर्तृकत्वात्प्रैषेषु चेति न्यायाच्च प्रैषप्रैषार्थयोरेककर्तृकत्वायोगेनाध्वर्युष्वित्यधिकरणपूर्वपक्षन्यायाद्धोतृतो निवर्तमानस्य तत्सन्निकृष्टमैत्रावरुणकर्तृकत्वप्राप्तेस्तत्सिद्धान्तवक्ष्यमाणन्यायाद्वा होतृकर्तृकत्वप्राप्तावपि प्रैषार्थस्य मैत्रावरुणकर्तृकत्वकल्पनक्लेशापत्तेर्निर्धारणायोगाद्दैक्षादिषु चातिदेशेनाध्वर्युप्राप्तावपि प्रैषेषु चेति न्यायोपबृंहितादध्वर्युष्वित्यधिकरणसिद्धान्तन्यायात्ततो निवर्तमानस्य तत्सन्निकृष्टप्रतिप्रस्थातृकर्तृकत्वप्राप्तेः कृत्स्नपुरोनुवाक्याप्रयोक्तुरेकस्य विधिं विना ज्ञातुमशक्यत्वात्कर्तृविध्याकाङ्क्षामाह—ताश्चेति। केवलानां तु प्रैषाणां निर्ज्ञाताध्वर्युकर्तृकत्वात्, अनुवाक्यानां च निर्ज्ञातहोतृकर्तृकत्वान्न कर्तृविध्याकाङ्क्षास्तीत्याह—शेषाणि त्विति।

प्रैषमिश्रास्वप्यनुवाक्यास्वनुवाक्यांशस्य होतृकर्तृकत्वनियमात्प्रैषांशस्य च सोमयागाभ्यासेषु मैत्रावरुणकर्तृकप्रैषार्थकल्पनक्लेशेनापि तावद्धोतृकर्तृकतयैव निर्ज्ञानात् दैक्षादिषु च प्रतिप्रस्थातृकर्तृकत्वनिर्ज्ञानान्न कर्तृविध्याकाङ्क्षास्तीत्याशङ्क्यैकस्य पदार्थस्यानेककर्तृकत्वायोगात्प्रैषानुवचनेषु च प्रत्यक्षविध्युपलब्धेः प्रैषार्थस्य मैत्रावरुणकर्तृकत्वकल्पनक्लेशाङ्गीकारायोगेन प्रैषांशस्य होतृकर्तृकत्वावधारणायोगात्कर्तृनिर्ज्ञानायोगोपपादनपूर्वं पुरोनुवाक्यानां प्रैषमिश्रत्वस्य मैत्रावरुणविधिविषयत्वहेतुत्वमुपसंहरति—पुरोनुवाक्यानां पुनरिति। एकस्य पुरोनुवाक्याख्यपदार्थस्यानेककर्तृकत्वायोगेनाऽध्वर्युकर्तृकप्रैषमिश्रत्वादनुवच-

नांशेनापि होतृतो होतृकार्यानुवचनमिश्रत्वाच्च प्रैषांशेनाऽप्यध्वर्युतः पुरोनुवाक्यानां प्रच्युतेः प्रैषानुवचनयोरन्योन्यमिश्रत्वाख्यसन्निधानहेतुकात्कर्तृसाकाङ्क्षत्वाद्युक्तो मैत्रावरुणविधिरित्यर्थः चकारः ततश्च पुरोनुवाक्यानामेव मैत्रावरुणविधिरित्यपकृष्य योज्यः। एवकारार्थे पुनःशब्दः। समुच्चितयोरिति भाष्येण प्रैषानुवचनयोश्चशब्दादेकत्र निधानलक्षणसमुच्चयाख्यसन्निधानावगतेरिति हेत्वर्थमुक्तमन्वाचयत्वेन व्याख्यातुमाह—एवं चेति। प्रैषेति सूत्रावयवव्याख्येयमिति सूचनार्थः सूत्रावयवपाठः।

सर्वप्रैषानुवचनेषु मैत्रावरुणविधौ प्रेष्यैत्यादिष्वपि लिङ्गविरोधिमैत्रावरुणविध्यापत्तेः, अविरोधपक्षसम्भवे च विरोधपक्षायोगान्न सर्वत्र विधिरित्येतदर्थत्वेनाऽसम्भवन् मैत्रावरुणकर्तृकत्वानामपि प्रैषाणां प्रकरणे सन्निधानान्मैत्रावरुकर्तृकत्वापत्तेरित्येवं प्रैषेत्यवयवव्याख्यां सूचयितुमाह—न चेति॥ ४४॥

भा० प्र०—पूर्वोक्त पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "पुरोवाक्याधिकारो वा" = पुरोऽनुवाक्य से ही मैत्रावरुण का अधिकार है, क्योंकि "प्रैषसन्निधानात्" = प्रैष का सन्निधान है।

आशय यह है कि उक्त श्रुतिवाक्य प्रैष सन्निधानयुक्त होने से उससे पुरोऽनुवाक्य से ही मैत्रावरुण का अधिकार उपदिष्ट है, कारण, ऐसा न मानने पर "मैत्रावरुणः प्रेष्यति च अनु च आह" इस श्रुतिवाक्य के अनुसार यदि प्रैष एवं अनुवचन में स्वतन्त्र-स्वतन्त्र रूप से मैत्रावरुण का अधिकार विहित होता है, ऐसा होने से वाक्यभेद होगा, इसलिए, "प्रेष्यति च अनु च आह" इस स्थल का चकारसहित आख्यात होने के द्वारा प्रैषसहित अनुवचन लक्षित होता है और इस प्रैष के साथ अनुवचन में मैत्रावरुण का अधिकार विहित किया गया है। यह जो प्रैष के साथ अनुवचन—इस अनुवचन के अन्त में प्रैष है—इसी का नाम पुरोऽनुवाक्य है। प्रैष अर्थनियोगवाक्य है, जैसे "यज", अनुब्रूहि इत्यादि। अनुवचन का अर्थ अनुष्ठेयार्थ प्रतिपादक मन्त्र का उच्चारण। सभी प्रैष आध्वर्यव, क्योंकि, अध्वर्यु ही प्रेषणकर्ता और अनुवचन की समाख्या हौत्र, कारण, होता ही अनुवचनकर्ता है, अध्वर्युयाग करता है और होता, मन्त्रपाठ करता है। यह जो प्रैष एवं अनुवचन, वह व्यस्त एवं समस्त भेद से दो प्रकार के हैं। कतिपय श्रुतिवाक्य केवल प्रैष ही अवगत कराता है कतिपय वेदवचन केवल अनुवचन का ही उपदेश देता है, वे व्यस्त प्रैष एवं व्यस्त अनुवचन, कतिपय श्रुतिवचन में प्रैष एवं अनुवचन दो ही रहते हैं, अतः, "मैत्रावरुणः प्रेष्यति चानु चाह" इस श्रुतिवाक्य में प्रैष के साथ अनुवचन में अर्थात् समस्तात्मक प्रैषानुवचन में मैत्रावरुण का अधिकार उपदिष्ट उपदिष्ट होने से वही मैत्रावरुण का कर्तव्य है, किन्तु जो प्रैष एवं अनुवचन व्यस्त है, वे मैत्रावरुण का पाठ्य नहीं है, वे यथाक्रम में अध्वर्यु एवं होता के लिए ही उच्चारणीय है।

अतएव इस स्थल में वाक्य एवं समाख्या का विरोध न होने से व्यस्तवाक्य से समाख्या का बाध नहीं होगा, किन्तु, समुच्चित वाक्य के द्वारा ही सामान्य समाख्या का

वाध होता है अर्थात् पुरोऽनुवाक्य के स्थल में ही विशेष वचन के अनुसार मैत्रावरुण के कर्तृत्व होता के कर्तृत्वबाधपूर्वक व्यवस्थित होता है। किन्तु, ऐसे स्थल में नहीं होता है।

"पुरोऽनुवाक्यविकारः" = पुरोवाक्य-अधिकार में यह वचन है, अथवा पुरोऽनुवाक्य में ही मैत्रावरुण का अधिकार है, "वा" = पूर्वपक्ष के निरास के लिए है, "प्रैषसन्निधानात्" = क्योंकि, प्रैष का सन्निधान रहता है ॥ ४४ ॥ सिद्धान्त।

## प्रातरनुवाके च होतृदर्शनात् ॥ ४५ ॥

**शा० भा०—इतश्च पश्यामो न सर्वानुवचनेषु मैत्रावरुण इति। कुतः। यतः प्रातरनुवाके होतारं दर्शयति। कथम्। यत्र होतुः प्रातरनुवाकमनुब्रुवत उपश्रृणुयात्तदाऽध्वर्युर्गृह्णीयादिति। तस्मान्न सर्वानुवचनेषु मैत्रावरुण इति ॥ ४५ ॥ क० युक्तिः ॥ समुच्चितयोरनुवचनप्रैषयो मैत्रावरुणकर्तृकत्वाधिकरणम् ॥ २२ ॥**

न्या० सु०—प्रातरनुवाके च होतृदर्शनात् ॥ ४५ ॥

भा० प्र०—सभी अनुवचन ही मैत्रावरुण का कर्तव्य नहीं है, इस विषय में अन्य कारण का निर्देश किया जा रहा है "प्रातरनुवाके होतृदर्शनात्" अनुवाक्, अनुवाक्या एवं अनुवचन समानार्थक हैं। प्रातः काल का अनुवाक्या होता के द्वारा पढने योग्य है, अतः, जब श्रुति में "होतुः प्रातरनुवाकमनुब्रवत उपश्रृणुयात्" इत्यादिवचन में उपदिष्ट होता है, ऐसी स्थिति में सभी अनुवाक ही मैत्रावरुण का पाठ्य है—यह नहीं माना जा सकता है, इसीलिए, सभी प्रैष एवं सभी अनुवचन में मैत्रावरुणनामक ऋत्विक् का अधिकार नहीं है।

"प्रातरनुवाके च होतृदर्शनात्" = प्रातरनुवाक में होता का कर्तृत्व दृष्ट होने से सभी अनुवचन मैत्रावरुण का कर्तव्य नहीं है ॥ ४५ ॥

इति इक्कीस प्रैषान्त अनुवचन में मैत्रावरुण का कर्तृत्व
नियम समख्या प्रसाधनाधिकरण।

## [२२] चमसांश्चमसाध्वर्यवः समाख्यानात् ॥ ४६ ॥ पू० ॥

**शा० भा०—सन्ति चमसाध्वर्यवः तेषु संदेहः—किं चमसाध्वर्यवश्चमसाञ्जुहुयुरुताध्वर्युरिति। चमसाध्वर्यव इति ब्रूमः कस्मात् चमसेष्वाध्वर्यवं ते कुर्वन्तीति चमसाध्वर्यवः। तस्मात्ते जुहुयुरिति ॥ ४६ ॥ पूर्व० ॥**

त० वा०—उन्नयनासादनहोमादि यावत्किंचिदध्वर्योश्चमसेषु प्राप्नोति। तत्सर्वं विशेषसमाख्यानाच्चमसाध्वर्युभिः कर्तव्यम् ॥ ४६ ॥

न्या० सु०—विशेषसमाख्यायाः सामान्यसमाख्याबाधकत्वापवादकत्वेन सङ्गतेरल्पं जुहोतीत्यनेन होमोत्पत्तेर्ग्रहचमसहोमाभेदेन ग्रहहोमस्याध्वर्युकार्यतया तदभेदाच्चमसहोमस्य तेनाऽक्रियमाणस्याप्यध्वर्युकार्यत्वव्यपदेशोपपत्तेस्तत्कारित्वेनाऽध्वर्यवमिति सामान्यसमाख्याकृतमध्वर्युविनियोगमनपेक्ष्यापि चमसाध्वर्यव इति विशेषसमाख्यायाः सामान्यसमाख्यासापेक्षानपेक्षत्वसन्देहस्य च बाधकत्वाबाधकत्वसन्देहहेतोः स्पष्टत्वाद् ब्रह्मचमसवाक्याभ्यां होमोत्पत्तावल्पवाक्यस्य तत्प्रासकात्स्न्र्यपरिसङ्ख्यार्थत्वापत्तेरल्पवाक्येन होमोत्पत्तिरित्याशयेन पूर्वपक्षमात्रमाह—उन्नयनेति। चमसाध्वर्युसमाख्यानात्सर्वेषु चमसकार्येषु चमसाध्वर्युविनियोगप्रतीतेश्चमसानिति द्वितीयोक्तस्य च कर्मत्वस्य व्यापारमात्रव्यापकत्वेनोपपत्तेश्चमसांश्चमसाध्वर्यवो व्यापारयेयुरिति क्रियाध्याहारोपलक्षणार्थं चमसाध्वर्यवश्चमसाञ्जुहुयुरिति भाष्यं मत्वोन्नयनादिग्रहणम् ॥ ४६ ॥

भा० प्र०—चमस से जो होम किया जाता है, वह क्या चमसाध्वर्यु के कर्तव्य अथवा अध्वर्यु का अनुष्ठेय है—यही संशय है। इसमें पूर्वपक्षी का कहना है कि "चमसान् चमसाध्वर्यवः" चमसाध्वर्युगण ही चमस में होम करेंगे, कारण, "समाख्यानात्" = उनकी चमसाध्वर्यु इस प्रकार की विशेष समाख्या है। यद्यपि होम अध्वर्यु का ही कर्म है, तथापि "चमसाध्वर्यु" इस विशेष समाख्या से सामान्य समाख्या का बाध होने से उसके अध्वर्यु होने पर भी चमसाध्वर्युगण का ही अनुष्ठेय है।

"चमसाध्वर्यवः" = चमसाध्वर्युगण, "चमसान्" = चमस होम करेगा, "समाख्यानात्" = क्योंकि समाख्या है। इति पूर्वपक्ष ॥ ४६ ॥

## अध्वर्युर्वा तन्न्यायत्वात् ॥ ४७ ॥ सि० ॥

शा० भा०—अध्वर्युर्वा जुहुयात्। एष हि न्यायः। यदाध्वर्यपदार्थमध्वर्युः कुर्यात्, अध्वर्यवश्च होमः। तस्मादध्वर्युर्जुहुयात्। ननु चमसाध्वर्यव इति विशेषसमाख्यानाच्चमसाध्वर्यवो होष्यन्तीति। नेत्युच्यते। चमसेष्वेतेऽध्वर्युवद्भवन्तीति चमसाध्वर्यवः। यदि तैरध्वर्युर्जुहोति, ततस्तैश्चमसाध्वर्युभिरपि होतव्यम्। यदि चमसाध्वर्यवो जुह्वति, नाध्वर्युस्तदा ते न तद्वत्स्युश्चमसाध्वर्यवः। तस्मान्न जुहुयुरिति ॥ ४७ ॥ सि० ॥

त० वा०—सा नाम विशेषसमाख्या सामान्यसमाख्यां बाधते, या तन्निरपेक्षा प्रवर्तते। चमसाध्वर्युसमाख्या तु चमसेष्वध्वर्युवद्वृत्ति प्रतिपादयति। तद्यदि तावदध्वर्युर्नैव जुहुयात्, न तर्हि तान् जुह्वतस्ते चमसाध्वर्यवो भवन्ति। काममजुह्वत एव तद्वद्भावं लभेरन्नान्यथा। यदि तु स जुहोति, ततः कदाचित्तस्य व्यापृतत्वेनाशक्तौ सत्यां ते जुह्वतस्तद्वद्भवेयुस्तस्माज्जुहोत्यध्वर्युः ॥ ४७ ॥

न्या० सु०—सामान्यसमाख्याया न्यायशब्दोक्तमबाध्यत्वं किमल्पमित्याज्ञानात्तदुद्देशेन होमविध्यनुपपत्तेर्होमैक्ये च ग्रहचमसानां विकल्पापत्तेः फलतः परिसङ्ख्यापत्तावपिच

दोषाभावाद् ग्रहचमसवाक्याभ्यां होमद्वयोत्पत्त्यवगमाशयेन चमसाध्वर्युसमाख्यायाश्चमसहोमेध्वर्युविनियोगं विनानुपपत्तेस्तत्सापेक्षत्वोक्त्योपपादयितुमाह—सा नामेति । जुहृत्यप्यध्वर्यौ चमसाध्वर्यूणामव्यापारात्समाख्यानायोगमाशङ्क्याह—यदि त्विति । सिद्धान्तमुपसंहरति—तस्मादिति ॥ ४७ ॥

भा० प्र०—इसके उत्तर में सिद्धान्ती कहता है "अध्वर्युर्वा तन्न्यायत्वात्" = अध्वर्यु ही चमस होम करेगा, क्योंकि, न्यायानुसार होम अध्वर्यु का ही कर्तव्य है। यदि यह कहा जाय कि आध्वर्यव इस सामान्य समाख्यारूप न्याय के अनुसार होममात्र ही अध्वर्यु का कर्म होने पर भी चमसाध्वर्यव इस विशेष समाख्या के अनुसार उसका बाध होगा, क्योंकि, विशेष से सामान्य का बाध ही होता है। "सामान्यनिरपेक्षो हि विशेषस्तस्य बाधकः"।

अर्थात् सामान्यनिरपेक्ष जो विशेष वह सामान्य का बाध करेगा। किन्तु इस स्थल में चमसाध्वर्यव यह विशेष समाख्या विशेष समाख्या सामान्य निरपेक्ष नहीं है, वरन् सामान्य उसका उपजीव्य है, इसलिए, वह सामान्यसापेक्ष ही होता है, क्योंकि, अध्वर्यु के न रहने पर चमसाध्वर्यु नहीं हो सकता है, अतः, अध्वर्यु का बाध करने चमसाध्वर्यु स्वयं ही बाधित हो जायेगा, अतः, "ऊध्वर्यवः होमः" इस वाक्य में आध्वर्यव इस समाख्या निरपेक्ष होने से प्रबल है, अतः, उसके द्वारा चमसाध्वर्यव समाख्या का बाध होगा, अत एव समर्थ पक्ष में चमसहोम अध्वर्यु का ही कर्तव्य है।

"अध्वर्युः" = अध्वर्यु चमस में होम करे, "वा" = पूर्वपक्ष के निरास के लिए, "तन्न्यायत्वात्" = क्योंकि, उसी के समान नियम है। इति सिद्धान्त ॥ ४७ ॥

## चमसे चान्यदर्शनात् ॥ ४८ ॥

**शा० भा०—चमसे चान्यं चमसाध्वर्योर्दर्शयति। कथम्। चमसांश्चमसाध्वर्यवे प्रयच्छति, तान् स वषट्कर्त्रे हरति, स हुत्वा चमसाध्वर्यवे प्रयच्छतीति गम्यते। एवं स वषट्कर्त्रे हरति भक्षयितुमिति गम्यते। तस्माद्धुतस्य चमसाध्वर्यवे प्रदानम् यो जुहोति, स प्रयच्छति। तस्मादन्यो जुहोतीति। अपि च। 'यो वाऽध्वर्योः स्वं वेद स्ववानेव भवति। स्रुग्वाऽध्वर्योः स्वं वायव्यमस्य स्वं, चमसोऽस्य स्वमिति,। न तावदस्य चमसः स्वमु। यजमानस्य हि सः। चमसोऽस्य स्वमिति ब्रुवन्नध्वर्योश्चमसेन होमं दर्शयति ॥ ४८ ॥ युक्तिः ॥**

त० वा०—वषट्कारिणं प्रति प्रयोजनान्तराभावाद्भक्षार्थे नयने चमसाध्वर्युः नेतारं ब्रुवन्नहुतस्य भक्षणासंभवाद्य एव जुहोति, स एव प्रयच्छति भक्षणार्थं, तं च ग्रहीतृत्वेन चमसाध्वर्यूणां व्यापृतत्वात्, तेभ्योऽन्यमध्वर्युं दर्शयति ॥ ४८ ॥

न्या० सु०—चमसाध्वर्युभ्योन्यस्य चमसे होमकारित्वदर्शनोपपादनार्थं हुत्वेत्यध्याहारेऽन्य इति भाष्येणोक्ते प्रश्नपूर्व्वं तदुपपादनार्थं चमसाध्वर्युकर्तृकस्य नयनस्य भक्षयितृवषट्कर्त्रर्थत्वाद्भक्षार्थत्वावगतिमुक्तां प्रयोजनान्तराभावेनोपपादयन् सूत्रं व्याचष्टे—**वषट्कारिणं प्रतीति ।** चमसाध्वर्युः नेतारं ब्रुवन्नहुतभक्षायोगाच्चमसाध्वर्युभ्योऽन्यं होमकारिणं दर्शयन्समाख्यासहकृतोध्वर्युं दर्शयतीत्युक्तेऽध्वर्युणा हुतांश्चमसानन्यो वषट्कर्त्रे भक्षणार्थं हर्त्तुं चमसाध्वर्य्यवे प्रयच्छतीत्यपि सम्भवादलिङ्गत्वमाशङ्क्य, होमकर्तृहस्तस्थस्य चमसाध्वर्य्यवे दानायाऽन्यस्मै समर्प्पणे विक्षेपापत्तेर्होमदानयोरेककर्तृकत्वावगमोक्त्यै यो जुहोति सएव प्रयच्छति, ततश्च होमकर्त्तारं चमसाध्वर्यूणां ग्रहीतृरूपेण व्यापृतत्वेन दातृत्वायोगात्तेभ्योऽन्यं दर्शयतीत्युक्तं । ततश्चेत्यर्थे तं चेति चकारो यश्चेत्ययंहिशब्दार्थे ॥ ४८ ॥

भा० प्र०—चमस में होम चमसाध्वर्यु का कर्तव्य नहीं है, इसका अन्य साधन भी है, "चमसे च अन्यदर्शनात्" श्रुति में कहा गया है कि चमस चमसाध्वर्यु दे, वह वषट्कर्ता को दे, वह पुनः होम कर चमसाध्वर्यु को दे इत्यादि । इस स्थल में वषट्कर्ता अर्थात् अध्वर्यु को ही होमकर्ता कहा गया है । साथ ही "यो वा अध्वर्य्योः स्वं वेद" इस वाक्य में श्रुतिचमस की अध्वर्यु को ही स्व कहता है । चमस में यदि अध्वर्यु का होम कर्तव्य न होने पर वह अध्वर्यु का स्व नहीं हो सकता है ।

"चमसे अन्यदर्शनात् च" = चमस में अन्य का अर्थात् चमसाध्वर्यु को छोड़कर अन्य व्यक्ति का दर्शन है, अतः वह चमसाध्वर्यु का कर्तव्य नहीं है ॥ ४८ ॥

## अशक्तौ ते प्रतीयेरन् ॥ ४९ ॥

**शा० भा०—अथ कथं चमसाध्वर्यव इति समाख्यानम् । उच्यते । आशक्तौ ते प्रतीयेरन् । यदा व्यापृतत्वान्न शक्नोत्यध्वर्युर्होतुं, तदा समाख्यासामर्थ्यात्ते होष्यन्ति ॥ ४९ ॥ आ० नि० ॥ चमसहोमेऽध्वर्य्वोः कर्तृताधिकरणम् ॥ २३ ॥**

न्या० सु०—कदाचित्तस्येति वार्त्तिकावयवेनाऽस्य सूत्रस्य व्याख्यातत्वात्पाठमात्रं कृतम् ॥ ४९ ॥

इति द्वाविंशं चमसहोमेषु अध्वर्युकर्तृकत्वाधिकरणम् ।

भा० प्र०—यदि पूर्वपक्षी यह आशङ्का करें कि चमसाध्वर्यु का होम नहीं रहे तो चमसाध्वर्यू की इस समाख्या क्या गति होगी ? इसके समाधान में कहा जा सकता है कि "अशक्तौ ते प्रतीयेरन्" = अध्वर्यु का असामर्थ्य रहने पर अर्थात् अध्वर्यु ग्रह होमादि कर्मान्तर में यदि व्यापृत लग रहे तो वह चमसहोम में असमर्थ है, अतः, उस समय में चमस होम चमससाध्वर्यु का ही कर्तव्य होगा क्योंकि, अध्वर्यु की अप्राप्ति में विशेष समाख्या के अनुसार चमस होम चमसाध्वर्यु के द्वारा ही अनुष्ठेय होगा ।

"आशक्तौ" = अध्वर्यु के असामर्थ्य रहने पर "ते" = चमस में अन्य का अर्थात् चमसाध्वर्यु "प्रतीयेरन्" = प्रतीत होंगे अर्थात् व्यवस्थित होंगे ॥ ४९ ॥

इति बाइस चमसहोम में अध्वर्यु कर्तृकताधिकरण ।

**[२३] वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥ ५० ॥ पू० ॥**

शा० भा०—अस्त्यौद्गात्रे समाख्यातः श्येनः, । आध्वर्यवे वाजपेयः । तत्र संदेहः किं श्येने उद्गातृभिरेव पदार्थाः कर्तव्याः । वाजपेयेऽध्वर्युभिः, उतोभयत्र नानर्त्विग्भिरिति । किं प्राप्तम् वेदोपदेशात् । समाख्यानादित्यर्थः । पूर्ववत् । यथा, आध्वर्यवमिति समाख्यानात्पदार्थानध्वर्युः करोति, एवमेव वेदान्यत्वे यथोपदेशं स्युः । यो येन समाख्याते वेदे उपदिष्टः तस्य पदार्थास्ते नैव कर्तव्याः । साङ्गः स तत्रोपदिश्यते । तस्माच्छ्येने, उद्गातृभिः वाजपेये चाध्वर्युभिः पदार्थाः कर्तव्या इति ॥ ५० ॥ युक्तिः ॥

त० वा०—गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग इत्यत्र व्याख्यातम् । यथाऽङ्गानि प्रधानवेदव्यपदेशं लभन्त इति । तस्माच्छ्येने सर्वे पदार्थाश्चोदकप्राप्ता उद्गातृभिः कर्तव्या इति ॥ ५० ॥

न्या० सु०—विशेषसमाख्याया अपि सामान्यसमाख्यासापेक्षत्वाद्दौर्बल्येऽभिहिते, प्रसङ्गादौपदेशिक्या अपि प्रयोगवचनाश्रयायाः समाख्याया आतिदेशिकसमाख्यापेक्षत्वाद्दौर्बल्याभिधानेन सङ्गतिः स्पष्टत्वादनुक्ता । वेदान्तरीयेष्वङ्गेषु प्रधानवेदव्यपदेशाभावात्पूर्वपक्षायोमाशङ्क्य, प्रधानप्रयोगवचनविषयत्वेनाऽङ्गेष्वपि प्रधानवेदं व्यपदेशोपपत्त्युक्तिपूर्व्वं पूर्व्वपक्षमाह—गुणेति ॥ ५० ॥

भा० प्र०—श्येनयाग उद्गातृवेद में अर्थात् सामवेद में उपदिष्ट है, इसी प्रकार वाजपेय अध्वर्यु वेद में विहित है, अतः, उद्गात्र इस समाख्या के अनुसार श्येनयाग सभी कर्म उद्गता का कर्तव्य है अथवा उसमें अन्य ऋत्विक् का कर्म करणीय है—यही संशय है । पाजपेय के सम्बन्ध में भी आध्वर्यव इस समाख्या के अनुसार वहाँ भी इसी प्रकार का सन्देह है । इसमें पूर्वपक्षी कहना है कि "वेदोपदेशात् पूर्ववत्" = पूर्व अधिकरण में जैसा सिद्धान्त किया गया है कि समाख्या के अनुसार चमस होम अध्वर्यु का अनुष्ठेय है, इस स्थल में भी उसी प्रकार वेदोपदेश अर्थात् वेद का नामयुक्त उद्गात्र आदि समाख्या के अनुसार श्येनयाग उद्गाता का ही कर्तव्य होगा । अतः, "वेदान्यत्वे" "यथोपदेशं स्युः" वेद का भेद होने पर भी अर्थात् अन्य वेद में उपदिष्ट अङ्ग कलाप का इस कर्म में अतिदेश विधि के अनुसार लाने पर भी जैसे समाख्या है, वैसे ही कर्म होगा, अर्थात् वेदमात्र इस समाख्या के बल से श्येन याग का सभी कर्म उद्गाता का अनुष्ठेय होगा, इसी प्रकार आध्वर्यव इस समाख्या के अनुसार वाजपेय याग को सभी कर्म अध्वर्यव से सम्पादित होगा ।

"वेदोपदेशात्" = वेद विशेष में उपदिष्ट होने से वह उपदेश अर्थात् समाख्या के अनुसार, "पूर्ववत्" = पूर्व के समान होगा, "वेदान्यत्वे" = भिन्न वेद होवे पर भी

अर्थात् सभी अङ्ग अन्य वेद में उपदिष्ट होने पर भी, "यथोपदेशं स्युः" = उपदेश अर्थात् समाख्या के अनुसार ही होगा । पूर्वपक्ष ॥ ५० ॥

## तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात्सहाङ्गै-रव्यक्तः शेषे ॥ ५१ ॥ सि० ॥

शा० भा०—तद्ग्रहणात्—प्राकृतधर्मग्रहणाद्वा, स्वधर्मः स्वैर्धर्मैश्चोदकप्राप्तैः संयुक्तः स्यात् । चोदकसामर्थ्यात्सहाङ्गैः कुर्यादिति श्रूयते । तानि चाङ्गानि ज्योतिष्टोमे सन्त्यपेक्ष्यन्ते । तत्र ज्योतिष्टोमे नानर्त्विजस्तैरस्य सहैकवाक्यता । ननु प्रत्यक्षा समाख्या, चोदक आनुमानिकः । उच्यते । सत्यं-प्रत्यक्षा समाख्या । लौकिकी तु सा । तत्रानुमाय वैदिकं शब्दं तेनैकवाक्यता तस्माच्चोदको बलवत्तरः ।

यत्तूक्तं समाख्यानादिति । तत्रोच्यते । अव्यक्तः शेषे, समाख्यातो भविष्यति । यः पदार्थो न चोदकेन प्राप्नोति, तत्र समाख्यया नियमो भविष्यति । यथा श्येने कण्टकैर्वितुदन्तीति, उद्गातारो वितोत्स्यन्ति, वाजपेये चोषं पुटैरर्पयन्तीत्यध्वर्यवोऽर्पयिष्यन्ति ॥ ५१ ॥ सि० ॥ श्येनवाजपेययोरनेककर्तृकताधिकरणम् ॥ २४ ॥

इति श्रीशबरस्वामिनः कृतौ धर्ममीमांसाभाष्ये तृतीयाध्यायस्य सप्तमः पादः ॥

त० वा०—उक्तं, वक्ष्यते चैतद्यथा जघन्यकालत्वात्प्रयोगवचनश्चोदकाद् दुर्बल इति । प्रयोगवचनाश्रया च प्रधान समाख्या, सा सत्यपि प्रत्यक्षत्वे दुर्बला । यावच्चातिदेशेन नाङ्गानि प्राप्यन्ते, तावत्कस्य कर्तारं नियच्छति ।

यद्वा तु प्राप्तानि भवन्ति, तदैषां क्लृप्तकर्तृसंबन्धान्न कदाचिदपेक्षेति किं समाख्या करिष्यति । न चात्र प्राप्तबाधो भवति, श्रुतिकल्पनेन समाख्याया विप्रकृष्टत्वात् । उक्तं ह्येतद्यथा क्लृप्तमूलानां प्रमाणानां प्राप्तबाधो भवति, न कल्प्यमूलानामिति । तस्मात्प्राकृतग्रहणेन तदधिकारसामर्थ्याज्ज्योतिष्टोमवदेव नानाकर्तृकः स्यात् । यद्यपि च प्रकृतावपि समाख्ययैव नानाकर्तारः तथाऽपि क्लृप्तसंबन्धत्वादिह श्रुतितुल्यता ।

### अव्यक्तश्शेषे इत्यस्य वार्तिकमतेन व्याख्यानम्

यत्त्वप्राकृतं किंचिदाम्नायते, तस्य प्रधानसमाख्यातकर्ता भविष्यतीति दर्शयन्नाह—'अव्यक्तः शेषे' इति । अक्लृप्तावस्थत्वादव्यक्तोऽयं कर्तृसंबन्धः क्लृप्तादन्यत्र भवितुमर्हति । न त्वस्य विषयः सम्यग्दृश्यते । कण्टकवितोदनादीनि ।

यद्वा प्रधानसमाख्याते वेदे पठ्यन्ते, वेदान्तरे वा। यदि तावत्तत्रैव ततः समाख्ययैव तेषां कर्तृसंबन्धो, न प्रधानद्वारेण। अथ तु वेदान्तरे पठ्यन्ते, ततः प्रत्यक्षत्वे सत्यपि तथैव विशेषसमाख्यया बलीयस्या भवितव्यम्।

अथात्रापि गुणमुख्यव्यतिक्रमन्याय आश्रीयते, ततः स्तोत्रशस्त्रादीनां ज्योतिष्टोमस्याऽऽध्वर्यवसमाख्यानादध्वर्युकर्तृकत्वप्रसङ्गः। न चात्र 'मन्द्रं प्रातःसवने' इत्यादिवत्समाधानमस्ति। तस्मान्न प्रधानेनाङ्गेषु स्वसमाख्या बाध्यते। सा त्वौत्पत्तिकेन कर्तृसंबन्धेन विनियुक्तार्था सती प्रधानेन गृह्यते। न चाङ्गानां प्रधानद्वारेणाऽऽध्वर्यवादिसमाख्या युज्यते। न हि प्रधानान्याध्वर्यवादिसमाख्याभिर्युज्यन्ते, गुणभूतेषु कर्तृव्यापारात्। या च प्रधानेषु न व्यापृता, सा तद्द्वारेणाङ्गेष्ववतरिष्यतीति कुत एतत्। ऋग्वेदादिसमाख्या प्रधानेष्वङ्गेषु चाविरुद्धा। तेन क्रियत इति च तत्र व्यपदेशः। स च प्रधानप्रयोगवचनेन विधेयत्वादङ्गेषु युज्यते। पाठकृता चाऽऽध्वर्यवादिसमाख्या। सा यथापाठमेव भवितुमर्हति। न चात्र गुणमुख्यव्यतिक्रमन्यायेनानभ्युपगतेन किंचिदद्दुष्यति। कण्टकवितोदनादयश्च प्रधानवेदसमानोत्पत्तय एव द्रष्टव्याः। तदात्मना च शक्यम् 'अव्यक्ताः शेषः' इति वक्तुं, नावश्यं प्रधानादेवावतरन्ती समाख्याऽनुगृह्यते। साक्षादनुग्रहेप्यननुग्रहेऽपि वाऽन्याङ्गेषु कृतार्थत्वेनाविरोधात्, तेन प्राकृताङ्गव्यतिरिक्तेषु समाख्या विनियोक्त्रीति सिद्धम्॥ ५१॥

इति श्येनादौ प्राकृताङ्गेषु नानाकर्तृकत्वाधिकरणम्॥ २३॥

इति श्रीभट्टकुमारिलविरचिते धर्ममीमांसाभाष्यव्याख्याने तन्त्रवार्तिके तृतीयाध्यायस्य सप्तमः पादः।

न्या॰ सु॰—प्राकृतानां धर्म्माणां परोक्षत्वात् तच्छब्दपरामृष्टानां विकृत्याग्रहणात्स्वैः प्रात्यात्मिकैः स्वरूपतश्चोदकप्राप्तैर्नार्त्विग्रूपैर्धर्म्मैर्युक्तो विकृतिप्रयोगः स्यादित्युक्ते प्राग्धर्म्मग्रहणेऽपि तेषामौपदेशिकप्रधानद्वारेण समाख्याप्राप्तेः प्रधानवेदसमाख्यातैरुद्गातृभिरध्वर्युभिर्वावात्कथं प्राकृतधर्मग्रहणस्य नार्त्विक्त्वहेतुतेत्याशङ्क्य, हेतुत्वोपपादनार्थं प्राकृतान् धर्म्मान् विकृतावप्यन्वयेनाऽधिकरोतीति व्युत्पत्त्याऽधिकारशब्दोक्तस्य चोदकस्य बलीयस्त्वाख्यं समर्थत्वमुपादयितुं तद्ग्रहणाद्वा स्वधर्म्मः स्यादित्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षत्वेन दुर्ब्बलत्वादिति स्वरटीकायां विकृतिप्रयोगवचनेन प्राकृतग्रहणहेतुकादिति सूत्रार्थाभ्युपगमेनेत्येतत्सूत्रसिद्धतयैव पश्चात्कालत्वात्प्रयोगवचनस्य दौर्बल्यमुक्तम्।

भाष्यानुसारात्तु पूर्व्वोक्तसूत्रार्थाभ्युपगमे 'विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृती'ति ५-१-१८ पञ्चमाधिकरणसिद्धान्तसूत्रे विकृतिप्रयोगवचनस्य प्राकृतधर्म्मानुसाराख्यप्रकृत्यनुगमवाचिना प्रकृत्यन्वयशब्देन वक्ष्यत इत्याह—उक्तमिति। सहाङ्गैरिति भाष्येण चोदकबलीयस्त्वोपपादनार्थं प्रयोगवचनदौर्बल्यस्योक्तत्वात्तद्व्याख्यानायैवमुक्तम्। नन्वितिभाष्ये-

णोपदेशिक्याः समाख्यायाः प्रत्यक्षत्वेनातिदेशिकीतो बलीयस्त्वमाशङ्क्योच्यत इत्यादिनाऽलौकिकत्वाद्दौर्बल्यमुक्तं श्येनाद्यङ्गेष्वौद्गात्रादिसमाख्याया अपि सामवैदिकादिप्रधानप्रयोगविधिनिमित्तत्वेन **वैदिकत्वादयुक्तमाशङ्क्य, लक्षणया प्रयोगपरिगृहीतेति** टुप्टीकानुसारात्प्रयोगवचनाश्रयत्वलक्षणार्थत्वं लौकिकोक्तेः सूचयन् व्याचष्टे—**प्रयोगेति** ।

प्रयोगवचनाश्रयत्वेऽपि कथं दौर्बल्यमित्याशङ्क्य, पूर्वोक्तमेव जघन्यकालत्वं दौर्बल्यहेतुमुपपादयति—**यावद्धीति** । क्लृप्तात्कर्तृसम्बन्धाद्धेतोरित्यर्थः । क्लृप्तकर्तृसम्बन्धत्वादिति त्वप्रत्ययाध्याहाराद्वा बहुव्रीहिः । तत्रेति भाष्यं पौर्वापर्यबलीयस्त्वाशयशङ्कोत्तरत्वेन व्याख्यातुमाह—**न वेति** । प्राप्तस्य तर्हि सन्निकृष्टत्वान्न क्वचिद् बाधः स्यादित्याशङ्क्या, बाधग्रन्थे क्लृप्तमूलानां सामान्यशास्त्रादीनां प्राप्तबाधस्य अक्लृप्तमूलानां च लिङ्गादीनामप्राप्तबाधस्योक्तत्वात्सन्निकृष्टस्यापि क्वचिद् बाधो न विरुद्ध इत्याह—**उक्तं हीति** । विकृतिप्रयोगवचनेन प्राकृताङ्गग्रहणहेतुकात्प्राकृताधिकारस्य चोदकस्य सामर्थ्याद्बलीयस्त्वात्प्रात्यामिकवेदविहितत्वनिमित्तत्वस्वरूपप्राप्तनानर्त्विग्रूपधर्म्मः श्येनादिः स्यादित्येवं सूत्रं योजयन् सिद्धान्त उपसंहरति—**तस्मादिति** । समाख्यानतिक्रमसूचनार्था दृष्टान्तोक्तिः । समाख्यात्वसाम्यात्तुल्यबलत्वशङ्कां निराकर्त्तुमाह—**यद्यपिचेति** ।

अव्यक्त इति सूत्रावयवं परमतेनाऽवतारणपूर्वं व्याचष्टे—**यत्त्विति** । कथमव्यक्तोक्त्या प्रधानसमाख्यातः कर्त्तोक्तो भवतीत्याशङ्क्य, अव्यक्तशब्दस्याक्लृप्तत्वावस्थवाचित्वात्प्रधानद्वारत्वनिमित्तत्वाच्चाक्लृप्तावस्थत्वस्यायं प्रधानसमाख्यातस्य कर्त्तुरङ्गान्वय एवाव्यक्त इत्युक्तम् । प्रधानसमाख्यातकर्तृविषयाभावेनैतां दूषयति—**न त्विति** । प्रधानसमाख्याया वेदान्तरसमाख्यावत्प्रत्यक्षत्वाभ्युपगमेऽप्यनेकाङ्गविषयत्वेन सामान्यविषयतया दौर्बल्यात् वेदान्तरसमाख्ययैव कण्टकवितोदनादिमात्रवेदान्तरीयप्रधानाङ्गविषयत्वेन विशेषविषयत्वाद् बलीयस्या भाव्यमित्यर्थः ।

वेदधर्म्मान्वयवत्सामाख्यानिककर्त्रन्वयेप्यङ्गे स्वरूपतः प्राप्तस्य धर्म्मस्य प्रधानद्वारप्राप्तेन धर्म्मेण बाधाद्वेदान्तरीयमप्यङ्गं प्रधानसमाख्यातस्य कर्त्तुर्विषयो भविष्यतीत्याशङ्कामनिष्टापत्त्या निरस्यति—**अथेति** । वचनेनानिष्टापत्तिपरिहारशङ्कां तदभावेन निरस्यति—**न चेति** । विषयाभावमुपसंहरति—**तस्मादिति** । प्रधानेनाऽङ्गेषु स्वसमाख्यानवतारेऽङ्गसमाख्यायाः प्रधानेनाग्रहणात्प्रधानसाद्गुण्यं च विनाङ्गगुण्यानुष्ठानानर्थक्यात् स्ववेदसमाख्यातोपि नाङ्गे कर्त्तव्यता स्यादित्याशङ्क्याह—**सा त्विति** । स्तोत्रादीनामुत्पत्तिवेदनिमित्तेनोद्गात्राद्यन्वयेन निमित्तेन प्रवर्त्तमाना सामाख्योद्गात्रादिकृतेन स्तोत्रादिना ज्योतिष्टोमस्योपकुर्यादित्येवं प्रधाननियुक्तक्रियाकर्त्रन्वयरूपार्था सती प्रधानेन क्रियाकर्त्रन्वयाख्यार्थग्रहणार्थं गृह्यत इत्यर्थः । **गुणत्वाच्च वेदेन व्यवस्था स्यादि**त्यनेन च न्यायेनाध्वर्य्वादिसमाख्यानां गुणभूतेष्वेव कर्तृषु व्यापारेण प्रधानभूतकर्तृरूपवस्त्वविनियोजकत्वात्प्रधाने च स्वयङ्कर्तृत्वनियमेन कर्तृप्राधान्यात्प्रधाने कर्तृविनियोजकत्वाभावात्प्रधानद्वाराङ्गेषु कर्तृविनियोजकता दूरोत्सारितेत्याह—**न चेति** ।

ऋग्वेदादिसमाख्यानामपि तर्हि प्रधानद्वाराङ्गेष्वप्रवृत्तेर्गुणमुख्यव्यतिक्रमन्यायो निर्विषयः स्यादित्याशङ्क्य, तासां प्रधानेष्वपि विनियोजकत्वाविरोधात्प्रयोगवाचिक्रियते-शब्दव्यपदेशाच्चोच्चैस्त्वादीनां प्रयोगवेदधर्म्मत्वावगतेर्वैषम्याह—ऋग्वेदादीति । न केवलं पूर्वोक्तेभ्यो हेतुभ्यः कर्तुः प्रधानद्वाराङ्गेष्वप्राप्तिः, किं त्वाध्वर्यवादिसमाख्यायाः क्रियतेशब्दव्यपदेशात्मकत्वेन पाठमात्रनिमित्तत्वात्पाठस्य चान्यद्वारत्वायोगादपीत्याह—पाठेति । अप्राकृतत्वामात्रनिमित्तावक्लृप्तावस्थत्ववाच्ययमव्यक्तशब्दो न तु प्रधानाद्वारत्व-निमित्तावक्लृप्तावस्थत्ववाचीति मत्वा स्वमतेनोपदेशिकाऽप्राकृतत्वेनावक्लृप्तावस्थत्वेनाव्यक्तः कर्त्ता शेषे भविष्यतीत्येवं व्याचिख्यासुः, प्रधानद्वाराऽङ्गेषु कर्त्रन्वयानभ्युपगमो गुणमुख्य-व्यतिक्रमन्यायानभ्युपगमेप्यदोष इत्याह—न चेति । प्रधानद्वारत्वेनाप्यनभ्युपेतेन न किञ्चित् दुष्यतीति सूचनार्थश्चकारः । प्रधानद्वाराङ्गेषु कर्त्रन्वयानभ्युपगमे कथं कण्ट-कवितोदनस्योद्गातृकर्तृकत्वं सेत्स्यतीत्याशङ्क्य, स्वसमाख्ययैव सिद्धिसूचनायाह—कण्टकेति । स्वसमाख्याप्राप्तस्य कर्त्तुरव्यक्तत्वायोगमाशङ्क्य, सामवेदोत्पन्ने कण्ट-कवितोदने, यजुर्वेदोत्पन्ने चोपपुटार्प्पणे प्रकृतावक्लृप्तकर्तृकत्वाच्छत्रयं कर्त्तुरव्यक्तत्वं वक्तुमित्याह—तदात्मना चेति । प्रधानादङ्गेष्ववतरन्त्याः समाख्याया गुणमुख्यव्यति-क्रमाधिकरणे स्वसमाख्यायाः कर्तृसिद्धिर्युक्तेत्याशङ्क्य, ऋग्वेदादिसमाख्यावदाध्वर्य-वादिसमाख्यायाः क्रियतेशब्दव्यपदेशात्मकतया प्रयोगवेदनिमित्तत्वाभावेनोत्पत्तिवेद-निमित्तत्वाविरोधादकेवेदोत्पन्नयोश्चाङ्गप्रधानायोर्द्वयोरपि साक्षात्समाख्योपपत्तेः कण्ट-कवितोदनस्य साक्षात्प्राप्तोद्गातृकर्तृकत्वेनाप्योद्गात्रसमाख्यानुग्रहे प्रधानद्वारत्वाननुग्रहात्त-द्रूपेणानुग्रहेपि चाङ्गान्तरेषु कृतार्थत्वेनऽङ्गेस्वरूपतः प्राप्तप्रधानद्वारप्राप्तयोरविरोधात्प्रधा-नद्वारता नावश्यमनुग्राह्येत्याह—नावश्यमिति । व्याख्यातावयवार्थमुपसंहरति—तेनेति ॥ ५१ ॥

इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिमाधवभट्टोपाध्यायात्मजभट्ट-
सोमेश्वरकृतौ तन्त्रवार्तिकटीकायां सर्वानवद्यङ्करण्यां न्यायसुधाख्यायां
तृतीयस्याध्यायस्य सप्तमः पादः ॥

भा० प्र०—वेद की नामयुक्त समाख्या के अनुसार समस्त श्येन याग उद्गाता का ही कर्तव्य है एवं वाजपेय याग समग्र भाव में अध्वर्यु का ही अनुष्ठेय है, इस प्रकार पूर्वपक्ष के उत्तर में सिद्धान्ती कहता है "तद्ग्रहणाद् वा स्वधर्मः स्यात्" = श्येनयाग एवं वाजपेय याग ज्योतिष्टोम की विकृति होने से उसका सभी क्रियाकलाप के अतिदेश विधि के प्रभाव से ज्योतिष्टोम से गृहीत होगा । प्रकृतिभूत कर्म में जो कार्य जिस पुरुष से अनुष्ठित होता विकृतिभूत इस श्येनयाग में जब उसका अतिदेश होता है तब अतिदेश विधि के सामर्थ्य से अङ्गकर्म सभी पुरुष से अनुष्ठेय के रूप में ही अतिदिष्ट होता है । इसलिए, प्रकृतिभूत ज्योतिष्टोम में जो ऋत्विक् रहते हैं, विकृतिभूत श्येनयाग में भी वे सभी ऋत्विक् आवश्यक हैं । इसलिए, सूत्र में कहा गया है—"अधिकार-

सामर्थ्यात् स्वधर्मः स्यात्" = इस स्थल में यह कहना सङ्गतन हीं है कि समाख्या प्रत्यक्ष होने से प्रबल एवं अतिदेश अनुमान होने पर दुर्बल होने से अतिदेश से समाख्या का बाध नहीं हो सकता है, कारण, समाख्या लौकिक होने से वैदिक नहीं है और अतिदेश अनुमानात्मक होने पर भी वैदिक है। इसलिए समाख्या से वैदिक शब्द का अनुमान कर तभी विधि के साथ एक वाक्यता करनी पड़ेगी। अन्य पक्ष में अतिदेश विधि के स्थल में वैदिक शब्द का अनुमान नहीं करना पड़ता है, किन्तु दूरस्थित वेद वाक्य का आकर्षण करने से ही काम चलता है। उसके अनुसार प्रधान विधि की एक वाक्यता करने पर विशेष-विशेष अङ्ग कर्मो विशेष विशेष ऋत्विक् ही व्यवस्थित होते है। दूसरी बात यह है कि समाख्या प्रयोगाधीन है और प्रयोग अङ्गाधीन है। सभी अङ्ग इस स्थल में अतिदेश सापेक्ष है, अतः, अतिदेश को बहुत वाद में समाख्या की प्रवृत्ति होती है, इसलिए, उससे ऐसी स्थल में कर्ता की व्यवस्था नहीं हो सकती है। श्येनादि याग में जो जो नवीन कर्म हैं उन कर्मों के कर्ता प्रकृति में न रहने से विकृति भूत इस श्येनादि याग में वह अतिदेश विधि सामर्थ्य में प्राप्त होने से उन स्थलों में समाख्या के अनुसार ही व्यवस्था होगी इसीलिए, श्येनयाग अथवा वाजपेय याग में समाख्या के अनुसार केवल उद्गाता अथवा अध्वर्यु का ही कर्तृत्व नहीं है, किन्तु इसमें भी भिन्न-भिन्न ऋत्विक् आवश्यक है।

"उद्ग्रहणात्" = उसका अर्थात् प्रकृति भूत कर्म का धर्म ग्रहण करता है, अतः, "वा" = पूर्वपक्ष के निरास के लिए है, "स्वधर्मः स्यात्" = स्वधर्म होगा अर्थात् अतिदेश विधि प्राप्त सभी धर्मों से संयुक्त होंगे, "अधिकारसामर्थ्यात्" = अधिकार सामर्थ्य अर्थात् अतिदेश विधि के प्रभाव से जिससे कर्म अधिकृत अर्थात् आरब्ध होता है, अधिकार है इस प्रकार अधिकार का अर्थ अतिदेश विधि है, "अङ्गैः सह" = सभी अङ्गों के साथ ही इति कर्तव्यता की प्रवृत्ति होगी, "अव्यक्तः शेषे" = अवशिष्ट स्थल में अव्यक्त अर्थात् समाख्यानुयायी होगा। सिद्धान्त ॥ ५१ ॥

इति तेइस श्येनादियाग का अनेक कर्तृत्वाधिकरण।

इति मीमांसादर्शन को तृतीय अध्याय का सप्तम पाद समाप्त हुआ।

## अथ तृतीयेऽध्यायेऽष्टमः पादः ॥

### अथ प्रथमं दक्षिणादानस्य यजमानकर्तृकत्वाधिकरणम्

**[१] स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥ सि० ।**

शा० भा०—अस्ति परिक्रयो ज्योतिष्टोमे, द्वादशशतम् । दर्शपूर्णमासयोरन्वाहार्यम् । तत्र संदेहः—किमध्वर्युणा परिक्रेतव्या ऋत्विज उत स्वामिनेति । किं प्राप्तम् ? समाख्यानादध्वर्युणेति प्राप्ते ।

ब्रूमः—स्वामिकर्म परिक्रयः । स्वयं करोतीति गम्यते । कस्मात् ? कर्मणस्तदर्थत्वात् । फलकामो हि यजमानः । यश्च फलकामः तेन स्वयं कर्तव्यम् । स यदि परिक्रीणीते, ततः स्वयं सर्वं करोतीति गम्यते । अथ न परिक्रीणीते, न सर्वं कुर्यात् । तस्मात्स्वामी परिक्रीणीत इति ॥ १ ॥

### अथ प्रथमं दक्षिणादानस्य यजमानकर्तृकत्वाधिकरणम्

त० वा०—समाख्यापवादत्वेनैतदपि विचार्यते—किं परिक्रय आध्वर्यवादिष्वाम्नानात्, तत्समाख्यातैः पुरुषैः कर्तव्य, उत स्वामिनेति । सिद्धेत्वेतस्मिन् 'अन्योवास्यात्परिक्रयाम्नानात्' इत्येतद्द्रष्टव्यम् । तथा स्वामिना लौकिक उपाय आस्थेयो यथाऽध्वर्य्वादयः स्वद्रव्येणेतरान्परिक्रीणते समाख्यानुग्रहार्थमिति प्राप्ते ।

अभिधीयते—

लौकिकाश्रयणं तत्र यत्र नान्योऽस्ति वैदिकः ।
वैदिके दक्षिणादाने सति किं लौकिकाश्रयः ॥

परिक्रयेण हि सर्वत्र स्वयं कर्तृत्वं यजमानस्योपपादितम् । यदि परिक्रयमपि न कुर्यात् न क्वचित्कर्तृत्वं प्रतिपद्यते । लौकिकेनोपायेन प्रतिपत्स्यत इति चेत् ? न वचनादृते स्वयं कर्तृत्वबाधासंभवात् । तस्मात्स्वामिकर्म ॥ १ ॥

न्या० सु०—तत्संयोगात्कर्म्मणो व्यवस्था स्याद्विषयत्रोक्तस्य समाख्याया लिङ्गाविरोधस्यापवादत्वेन प्रकरणसङ्गतिमाह—समाख्येति । पूर्वविरोधे समाख्यायाः स्वकार्यविनियोगाशक्तत्वेनासत्तुल्यत्वादविरोधलक्षणार्था समाख्योक्तिः । परेषामथातोमन्त्राधिकरणान्तानामधिकरणानामपवादत्वोक्त्यर्थोऽपि शब्दः । अन्यो वेत्यत्रोक्तस्य स्वामिनि परिक्रयविरोधस्य स्वामिकर्तृत्वं विनाऽनुपपत्तेस्तत्रैव परिक्रयस्य स्वामिकर्तृकतायाः सिद्धत्वात्, तद्विरोधेन पूर्वपक्षायोगमाशङ्क्याह—सिद्धेत्विति । अन्यकृते कर्म्मणि स्वयङ्कर्तृकत्वा-

पादनार्थत्वात्परिक्रयस्य च स्वयङ्कर्तृकत्वापादनाशक्तेः स्वामिनि कर्तृत्वापादनसामर्थ्यात्मकत्वेन लिङ्गेन समाख्याया विरोधाशङ्कामन्यकृतेऽपि परिक्रये स्वामिनः प्रयोक्तृत्वेन कर्तृत्वोपपत्तेः कर्म्मणि स्वयङ्कर्तृत्वापादनसामर्थ्योपपत्तिसूचनेन परिहरन् पूर्व्वपक्षमाह तथेति । इतरपरिक्रयस्याध्र्युकर्तृकत्वेऽप्यध्वर्युपरिक्रयस्याध्वर्युकर्तृकत्वायोगात्स्वामिकर्तृकत्वापत्तिमाशङ्क्य, अध्वर्युपुरुषप्रतिप्रस्थातृकर्तृकत्वेनाप्याध्वर्यवसमाख्यानुग्रहसम्भवेन स्वामिकर्तृकत्वायोगसूचना आदिशब्दः । प्रतिप्रस्थातुः परिक्रयाशक्तौ तदनन्तरस्याध्वर्युपुरुषस्य नेष्टुरुन्नेतुर्वा परिक्रेतृत्वसूचनायादिशब्दः । प्रतिप्रस्थातुः परिक्रयाशक्तौ तदनन्तरस्याध्वर्युपुरुषार्थं बहुवचनम् । लिङ्गविरोधपरिहारं निरस्यन् सिद्धान्तमाह—इतीति । स्वामिनः परिक्रये विनियोजकं किं लिङ्गमित्यज्ञाते तद्विरोधोपपादनाशक्तेर्लिङ्गोक्त्यर्थं कर्म्मण इति सूत्रावयवव्याख्यार्थं फलकामो हीत्यादिभाष्यं तावद्व्याचष्टे—परिक्रयेण हीति । एतद्भाष्योक्तविरोधपरिहारशङ्कां तथा स्वामिनेति पूर्वपक्षवार्तिकोक्तां श्लोकस्यैतद्भाष्योक्तलिङ्गविरोधोपपादनार्थत्वसूचनायाऽनुभाषते—लौकिकेनेति । एतच्छङ्कानिरासार्थत्वेन श्लोकं व्याचष्टे—नेति । सिद्धान्तमुपसंहरति—तस्मादिति ॥ १ ॥

भा० प्र०—पूर्वपाद में समाख्या का प्रामाण्य प्रदर्शित किया गया है। इस पाद में प्रधानतया उसका वाच्य प्रदर्शित होगा। ज्योतिष्टोम यज्ञ में ऋत्विक् परिक्रय नाम में एक कर्म करते हैं, उसी के फल की प्राप्ति होना उचित है। किन्तु, दक्षिणा देकर क्रय की कथा होने पर उस परिक्रय के लिए कर्म का फल यजमान अर्थात् याग के स्वामी को ही होगा। यह परिक्रय कर्म अध्वर्यु वेद में पठित है, अतः आध्वर्यव इस समाख्या के बल से वह अध्वर्यु का कर्तव्य है या नहीं—यही संशय है। इसमें पूर्वपक्षी का कहना है कि समाख्या के अनुसार यह परिक्रय कर्म अध्वर्यु का अनुष्ठेय है।

इसके उत्तर में सिद्धान्ती कहता है "स्वामिकर्म परिक्रयः" = यह परिक्रय कर्म कर्म स्वामी का ही कर्तव्य है। कारण, कर्मणः तदर्थत्वात्" = कर्म फलप्राप्ति के लिए ही अनुष्ठेय होता है और यजमान ही फलप्रार्थी होने से उसी के द्वारा उसका सम्पादन करना उचित है।

"परिक्रयः" = परिक्रय, "स्वामिकर्म" = कर्मस्वामी यजमान का ही अनुष्ठेय है, "कर्मणः तदर्थत्वात्" = क्योंकि, कर्म फल के लाभ के लिए ही अनुष्ठित होता है। इति सिद्धान्त ॥ १ ॥

## वचनादितरेषां स्यात् ॥ २ ॥

**शा० भा०—किमेष एवोत्सर्गः ? नेत्युच्यते । वचनादितरेषां स्यात् । यत्र वचनं भवति । तत्र वचनप्रामाण्याद्भवति परिक्रयः । य एतामिष्टकामुपदध्यात्, स त्रीन्वरान्दद्यात् इति ॥ २ ॥ क० ॥**

**इति प्रथमं क्रयस्यस्वामिकर्मताधिकरणम् ॥ १ ॥**

त० वा०—उपदध्यादिति परस्मैपदादयाजमानत्वेऽवधारिते, वरदानमृत्विक्कर्म। तत्सिद्धिश्च यदि तावच्छास्त्रीयेण परिक्रयेण लभ्यते, ततोऽस्त्येव यजमानस्य कर्तृत्वम्। अथ न लभ्यते, ततो लौकिक उपाय इति ॥ २ ॥

( इति प्रथमं दक्षिणादानस्य यजमानकर्तृकत्वाधिकरणम् ॥ १ ॥ )

न्या० सु०—परिक्रयात्मकवरदानस्यार्त्विजत्वदर्शनालिङ्गेन परिक्रये स्वामिविनियोगायोगमाङ्क्य, श्रुतिविरोधात्क्वचिल्लिङ्गबाधेऽपि न सर्वत्र बाधो युक्त इति परिहारार्थं सूत्रमुपधानस्याध्वर्यवसमाख्याबाधेन यजमानत्वकल्पनया सामानाधिकरण्यश्रुत्युपपत्तेरत्रापि लिङ्गबाधायोगादयुक्तमाशङ्क्य, याजमानत्वे दधातेर्नित्कर्त्रभिप्रायक्रियाफलवाच्यात्मनेपदापत्तेः परस्मैपदश्रुतिविरोधाद्याजमानत्वकल्पनायोगमाह—उपदध्यादिति। वरदानेऽप्यन्यकृते स्वामिनो लौकिकोपायाश्रयणायोगात्प्रयोक्तृत्वायोगमाशङ्क्याह—तत्सिद्धिश्चेति ॥ २ ॥

इति प्रथमं दक्षिणादानस्य यजमानकर्तृकत्वाधिकरणम्।

भा० प्र०—क्या सर्वत्र परिक्रय यजमान का कर्तव्य है? ऐसा मानने पर "सत्रीन् वरान् दद्यात्" इस वाक्य में जो वरदान अर्थात् गोदान विहित है, वह होता का कर्तव्य है, यह उपदिष्ट है, इसका व्याघा हो जायेगा। इसके उत्तर में सिद्धान्ती का कहना है कि "वचनादि तरेषां स्यात्" इन स्थलों में विशेष वचन है, अतः, वह दूसरे का ही अर्थात् ऋत्विक् का ही अनुष्ठेय है, क्योंकि, "वाचनि के अर्थे न्यायानवतारात्" अर्थात् वचनबोधित विषय में युक्ति का स्थान नहीं है। इसलिए वचन विहित स्थल में परिक्रय यजमान का ही कर्तव्य न होकर ऋत्विक् का ही कर्तव्य है।

"वचनात्" = विशेष वचन के अनुसार में, "इतरे वांस्यात्" = अन्य का भी होता है ॥ २ ॥

इति प्रथम दक्षिणा दान का यजमान कर्तृत्वाधिकरण।

## अथ वपनादिसंस्काराणां याजमानताधिकरणम्

## [२] संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन् ॥ ३ ॥ पू०।

शा० भा०—ज्योतिष्टोमे श्रूयते—केशश्मश्रू वपते, दतो धावते, नखानि निकृन्तते, स्नाति इति। तत्र संदेहः—किमेवंजातीयका अध्वर्युणाकर्तव्या, उत यजमानेनेति। किं प्राप्तम्? अध्वर्युणा कर्तव्याः संस्कारा यथावेदं व्यवतिष्ठेरन्, समाख्यानात्पुरुषेण कर्मवत्। यथा, अन्ये पदार्था यस्मिन्वेद आम्नाताः तत्समाख्यातेन पुरुषेण क्रियन्ते, एवमेतेऽपीति ॥ ३ ॥ पूर्व० ॥

त० वा०—कर्तृत्वमेवैतैर्विना विगुणमिति, यथासमाख्यं संस्काराः ॥ ३ ॥

न्या० सु०—परिक्रयवत्स्नानदन्तधावनयोर्लोकतः स्वयङ्कर्तृकत्वप्रसिद्धेर्वपनन्नखनिकृन्तनयोश्च निर्ज्ञातनापितकर्तृकत्वेन कर्त्रन्तरानाकाङ्क्षतया स्नानदन्तधावनकर्तृमात्रस्य विचार्यत्वात्, तस्य च संस्कार्यकर्तृकत्वप्रसिद्धेः संस्काराणां च कार्यसामर्थ्याधानार्थत्वादध्वर्योश्चानुष्ठानाख्यकार्यसामर्थ्यस्य विद्वत्तयैव दक्षिणालाभात्मकफलप्रतिग्रहणाख्यकार्यसामर्थ्यस्य च कर्मकरत्वादेव सिद्धेः, संस्कारानर्थक्याद्दन्तधावनादिकर्तुरात्मनि संस्कारजननसामर्थ्यात्मकलिङ्गविरुद्धया समाख्यया यथावेदं संस्कारव्यवस्थानुपपत्तिशङ्कानिरासार्थत्वेन पुरुषसामर्थ्य इति सूत्रावयवं कर्तृणां पुरुषाणां स्रुगादिवदपूर्वसाधनत्वसामर्थ्ये जनयितव्ये तज्जननार्थं संस्कारापेक्षास्तीत्येवं व्याख्यातुमाह-- कर्तृत्वमेवेति ॥३॥

भा० प्र०—श्रुति में ज्योतिष्टोम प्रकरण में "केशश्मश्रुवपते" इत्यादि वचन में केशश्मश्रुवपन, नखनिकृन्तन, दन्तधावन, स्नान आदि कतिपय संस्कार शास्त्रीय रूप में अनुष्ठेय उपदिष्ट है। ये संस्कार ऋत्विक् के कर्तव्य हैं या यजमान का अनुष्ठेय है—यही संशय है।

इसमें पूर्वपक्षी का कहना है कि "संस्कारास्तु यथावेदं व्यवतिष्ठेरन् कर्मवत्" कर्म का कर्तृत्व जैसे समाख्या के अनुसार व्यवस्थित होता है, यह पूर्वपाद के एकविंश अधिकरण आदि स्थल में प्रतिपादित है, वैसे ही ये सभी संस्कार समूह भी समाख्या के अनुसार व्यवस्थित होगा, ये सभी अध्वर्यु वेद में उपदिष्ट होने से आध्वर्यव इस समाख्या का विषय होने से समाख्या के अनुसार अध्वर्यु का अनुष्ठेय होगा अर्थात् संस्कार अध्वर्युगामी होकर अध्वर्यु का केशश्मश्रुपन आदि होगा। क्योंकि, इस प्रकार के संस्कार से कर्म में ऋत्विक् का शास्त्रीय सामर्थ्य उत्पन्न होता है।

आशय यह है कि कर्मकर्ता पुरुष का सामर्थ्य दो प्रकार का है एक लौकिक सामर्थ्य और दूसरा शास्त्रीय सामर्थ्य। ये सभी शास्त्रोक्त कर्मकर्ता के संस्कार रूप में उपदिष्ट हैं, उनके आचरण में कर्ता के मध्य में फलग्रहण योग्यता उत्पन्न होती है—वही शास्त्रीय सामर्थ्य है। वे संस्कार यदि अनुष्ठित न हों तो कर्ता फल नहीं प्राप्त करेगा अथवा ऋत्विक् यदि वे संस्कार जो उनके लिए उपदिष्ट है उनको नहीं करता है तो उनका किया गया कर्म भी फलप्रद नहीं होगा और कर्ता की योग्यता है या नहीं एवं असंस्कृत ऋत्विक् से सम्पादित कर्म फलप्रद होता है कि नहीं यह शास्त्र के तात्पर्य के अनुसार ही निर्णीत होगा, इसीलिए, इसको शास्त्रीय संस्कार कहा जाता है।

इसीलिए, सूत्र में कहा गया है "सामर्थ्ये"। "संस्काराः" = सभी संस्कार, "तु" = प्रत्यवस्थान में, अथवा अन्य अधिकरण का सूचक है, "यथावेदं व्यवतिष्ठेरन्" = यथावेद अर्थात् समाख्या के अनुसार व्यवस्थित होगा, "कर्मवत्" = कर्म के समान अर्थात् सभी कर्म जैसे समाख्या के अनुसार विशेष-विशेष ऋत्विक् का कर्तव्य होने से

व्यवस्थित हैं वैसे ही, "पुरुषसामर्थ्ये" = क्योंकि उसमें पुरुष की क्रिया करने का सामर्थ्य अर्थात् शास्त्रीय योग्यता है। पूर्वपक्ष ॥ ३ ॥

**याजमानास्तु तत्प्रधानत्वात् कर्मवत् ॥ ४ ॥ सि० ।**

**शा० भा०—यजमानेन वा कर्तव्याः। कुतः ? पुरुषप्रधानत्वात्। कथं पुरुषप्राधान्यम् ? कर्त्रभिप्रायं क्रियाफलं गम्यते। तस्मात्पुरुषस्य कर्मकरण-सामर्थ्यमुपजनयन्ति। न च कश्चिद्येन कर्मकरणेन सामर्थ्यमुपजन्यते, तदर्थं पुरुषान्क्रीणातीति। ईप्सितेभ्यः पदार्थेभ्यः क्रीणाति। येन यस्य सामर्थ्यं भवति, तत्तेनैव कर्तव्यम्। कर्मवत्। यथा प्रधानकर्माणि पुरुषार्थानि यजमानस्य भवन्त्येवमेतदपीति ॥ ४ ॥ सि० ॥**

त० वा०—पुरुषप्रधानत्वादेषां याजमानता। गुणभूते हि कर्तर्यपेक्षिते समाख्या नियामिका भवति। प्रधानत्वं च यजमानस्या संदिग्धमवधारितम्। न चैते कर्तृत्वसंजननार्थाः, तैर्विनाऽपि सिद्धे कर्तृत्वे फलमात्रानुत्पादात्। ऋत्विक्फलं च दक्षिणालाभात्मकं विनाऽपि तैरुपलभ्यते, न तु याजमानम्। तस्मा-द्यथैव प्रधानानि पुरुषार्थत्वाद्यजमानकर्तृकाणि भवन्ति, एवमेतेऽपीति, यथा-प्राप्तरूपाणामेव चैषां यजमानगामित्वमिति, न दन्तधावनमध्वर्युणा गृहीत्वा यजमानस्य दन्ताः क्षालयितव्याः, केशश्मश्रुवपनेऽपि नित्यं नापिकर्तृत्वमिति नाध्वर्योः क्षुरग्रहणापत्तिः ॥ ४ ॥

न्या० सु०—दन्तधावनादीनां लोकप्रसिद्धेरात्मनेपदाच्च कर्तृपुरुषगामिसंस्कारा-ख्यफलसाधनत्वादित्येवं पुरुषप्रधानत्वोक्त्यर्थंस्य क्रियत इति व्युत्पत्त्या कर्म्मशब्दोक्तस्य फलस्य भोगकरणत्वेन कर्म्मकरणमस्येति बहुव्रीह्यङ्गीकारेणा कर्त्तुः फलप्रतिग्रहणे शक्ति दन्तधावनादयो जनयन्तीत्येवमर्थं। तस्मादिति भाष्यात् स्पष्टप्रतीतेस्तदुपपादनार्थं न चेत्याद्युत्तरभाष्यव्याख्यात्रसरार्थं प्रतिज्ञान्वयमात्रमाह—पुरुषेति।

दन्तधावनादीनां फलप्रतिग्रहणशक्तिजननार्थंत्वेप्यन्त्यजनवदाध्वर्यवत्वोपपत्तिमाशङ्क्य, फलप्रतिग्रहणाख्यकर्मकरणशक्तिजनकदन्तधावनाद्यर्थं लोकेन्यपरिक्रयादर्शनात्प्रधानभूतपदार्थे च परिक्रयार्थंवत्वोपपत्तेः, शक्तिजनकस्य दन्तधावनादेः स्वयमेव कार्यत्वेन कर्त्रन्तराना-काङ्क्षत्वात्कर्तृकर्म्मरूपावयवार्थाभावनिश्चयेन रूढित्वात्समाख्याया विनियोजकत्वा-योगोक्त्यर्थं न चेत्यादिभाष्यं व्याचष्टे—गुणभूते हीति। परिक्रयस्य दन्तधावनाद्यर्थत्वा-भावेप्यानर्थक्यानापत्त्युक्त्यर्थंस्येप्सितेभ्य इति भाष्यावयवस्य गुणत्वे तस्य निर्देश इत्येत-त्सूत्रमूलत्वसूचनार्था गुणभूतोक्तिः। दन्तधावनादीनां स्वयङ्कर्तृकत्वप्रसिद्धेः कर्त्रन्तराना-काङ्क्षणेप्यध्वर्युसंस्कारार्थतैव समाख्ययास्त्वित्याशङ्क्य, संस्काराणां फलप्रतिग्रहणशक्ति-जननार्थत्वाद्यजमानस्यैव च तज्जननापेक्षत्वाद्धोक्त्रंशपातित्वलक्षणेन लिङ्गेन तदर्थत्व-निश्चयान्न समाख्ययाऽध्वर्युसंस्कारार्थता शङ्कितुं युक्तेत्याह—प्रधानत्वं चेति।

प्रधानमात्रस्य फलसाधनत्वेन भोक्तृत्वशक्तिजननार्थतया तत्सिद्धयेऽन्यानपेक्षणाद्वपनादीनां कर्त्रंशपातावगतेर्लिङ्गविरोधाभावमाशङ्क्याह—न चेति । प्रासस्यापि भोग्यस्य भोक्तृत्वाशक्तौ लोके भोगादर्शनात्फलसाधनातिरिक्तभोक्तृत्वशक्तिजनकता चकारेण सूचिता । पूर्व्वपक्षसूत्रे दृष्टान्तितेभ्यः पुरुषसंस्कारव्यतिरिक्तेभ्योऽङ्गकर्म्मभ्यः पुरुषसंस्काराणां भोक्त्रंशपाताद्वैषम्यसूचनायैतत्सूत्रस्थं प्रधानकर्म्मदृष्टान्तं व्याचक्षाणः सूत्रार्थमुपसंहरति—तस्मादिति ।

भोक्त्रंशपाताभावेऽप्यङ्गयागानामुत्सर्गरूपतयाऽन्येन कर्त्तुमशक्यत्वात्स्वामिकर्तृकत्वोपलब्धेरुत्सर्गरूपत्वस्यैव स्वामिकर्तृकत्वे प्रयोजकत्वात् संस्काराणां चानुत्सर्गरूपतयाऽन्येनापि कर्त्तुं शक्यत्वाल्लिङ्गाविरुद्धया समाख्ययाध्वर्यवत्वमाशङ्क्य, दन्तधावनादीनां निर्ज्ञातकर्तृकत्वेन कर्त्रनाकाङ्क्षत्वात्कर्त्तर्यपेक्षित इति वार्त्तिकसूचितं सामाख्यानिकविनियोगायोगमाह—यथाप्राप्तेति । वपननिष्पत्त्यर्थं स्वाङ्गविधानोपलक्षितप्रयत्नाख्यभावनाकर्तृत्वं प्रयोजकत्वोक्त्योक्तम् ।। ४ ।।

भा० प्र०—पूर्वोक्त पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "याजमानास्तु" ये जो वपनादि संस्कार हैं ये यजमानगामी होगा । कारण, "कर्मवत् तत्प्रधानत्वात्" = प्रधानकर्म के समान यहाँ भी पुरुष का प्राधान्य रहता है, प्रधान कर्म जो त्याग, उसमें जैसे यजमान का ही अधिकार है, क्योंकि, जो फलभोक्ता है उसको भी कुछ करना आवश्यक है और इस प्रकार कुछ कर्म करने की आवश्यकता होने से फल जनक कर्म का सभी कर्म करेगा, इसलिए, दक्षिणा त्याग ही यजमान कर्तव्य है, यजमान जिस कर्म को करेगा, उसकर्म में उसकी योग्यता भी आवश्यक है । यह जो वपनादि संस्कार है इनमें यजमान की शास्त्रीय योग्यता उत्पन्न होती है । इस योग्यता के प्रभाव से कर्म का अधिकारी होकर अनन्तर सभी कर्मों में स्वयं असमर्थ होने से उसके सम्पादन के लिए ऋत्विक् का परिक्रय करते हैं, इसलिए, वपनादि संस्कार यजमान का ही कर्तव्य है ।

"यजमानाः" = यजमाना सम्बन्धीय अर्थात् यजमानगामी ही होगा, "तु" = पूर्वपक्ष की व्यावृत्ति के लिए है, "तत्प्रधानत्वात्" = क्योंकि पुरुष प्रधान का अर्थात् पुरुष का प्राधान्य करता है, "कर्मवत्" = प्रधानकर्म के समान । इति सिद्धान्त ।। ४ ।।

## व्यपदेशाच्च ।। ५ ।।

**शा० भा०—परस्मैपदव्यपदेशश्च भवति । तमभ्यनक्ति, शरेषीकयाऽनक्ति, इति च । अन्यो यजमानस्याञ्जनमभ्यञ्जनं करोतीति गम्यते ।। ५ ।। हेतुः ।।**

त० वा०—अध्वर्युव्यापारे च 'अभ्यनक्ति' इति परस्मैपदेन निर्देशात् 'अभ्यङ्क्ते' इत्यात्मनेपदयुक्तो विधिर्यजमानस्येति गम्यते ।। ५ ।।

न्या० सु०—पुरुषसंस्कारार्थं पुरुषान्तरापरिक्रयात्कर्तृविशेषानाकाङ्क्षणेन समाख्यायाध्वर्युनियमानुपपत्तेर्वपनादीनामाध्वर्यवत्वाभावेभिहितेऽभ्यञ्जनाञ्जनयोरपि भोक्त्रंशपातितया स्वामिसंस्कारत्वेन कर्त्रन्तरानाकाङ्क्षणात्, समाख्ययाऽध्वर्युनियमायोगमाशङ्क्य, धावति-वपति-कृन्ततीनां स्वरितेत्त्वाद्दन्तधावनादीनां कर्त्रभिप्रायक्रियाफलत्वाच्चात्मनेपदाद्दन्तधावनस्य च लोकतोपि तत एव स्नानस्यापि स्वयङ्कर्तृत्वप्रसिद्धेर्वपन-नखनिकृन्तनयोश्च नापितकर्तृत्वनियमप्रसिद्धेः कर्त्रनाकाङ्क्षा युक्ता। अनक्तेरनुदात्तेत्त्वात्परस्मैपदात्मनेपदाभ्यां कर्तृविशेषानवगमेपि, तमभ्यनक्तीति परस्मैपदयुक्ते वाक्ये तमिति स्वामिपरामर्शितच्छब्दव्यपदेशात्तदानन्तर्याच्छरेषीकयानक्तीत्यत्राप्यनुषक्तच्छब्दव्यपदेशावगतेः कर्त्रन्तरावगमे सति तद्विशेषाकाङ्क्षायां समाख्ययाऽध्वर्युनियमोपपत्त्युक्तचर्थत्वेन व्यपदेशव्याख्यार्थं परस्मैपदेत्यादिभाष्यमञ्जनादीनां भोक्त्रंशपातित्वस्यैतदविकरणव्युत्पाद्यत्वेनाऽसिद्धेः स्वामिसंस्कारत्वे हेतुत्वायोगात्तद्वशेन तच्छब्दस्य स्वामिपरामर्शित्वावधारणानुपपत्तेः, तदवधारणकारणान्तरानुपलब्धेश्चा'ध्वर्युमन्योभ्यनक्ती'त्यपि सम्भवादयुक्तमाशङ्क्य, व्यापारद्वयविधिं विना विधिद्वयानर्थक्यापत्तेर्व्यापारद्वयावगमे सति भिन्नविषयत्वेनाऽविरोधात्समाख्ययाऽध्वर्युनियमोपपत्तावभ्यञ्जनस्याऽध्वर्युसंस्कारत्वं कल्पयित्वा कर्त्रन्तरकल्पनायोगात्परस्मैपदयुक्ते वाक्ये तमित्यभ्यङ्क्त्रभ्यञ्जनीययोर्भेदव्यपदेशात्तद्विहितेऽभ्यञ्जने लिङ्गाविरुद्धया समाख्ययाऽध्वर्युव्यापारत्वेनाऽवगते वाक्यान्तरस्थोभ्यञ्जनविधिर्यजमानस्येति गम्यते इत्येवमाशयत्वेनोपपादयितुमाह—अध्वर्युव्यापारे चेति।

सूत्रमपि तमिति भेदव्यपदेशादभ्यङ्क्ते, आङ्क्ते इति च विद्धचन्तराद्व्यापारभेदावगमेनाऽविरोधादभ्यञ्जनाञ्जनयोः समाख्ययाऽध्वर्यवता युक्तेति वपनादिसाम्यशङ्कानिरासार्थत्वेन व्याख्येयम् ॥ ५ ॥

भा० प्र०—ये सभी संस्कार ऋत्विक् का नहीं है, इसमें अन्य कारण भी है "व्यपदेशात् च" = श्रुति में कहा गया है कि "तमभ्यनक्ति, शरेषी कपानक्ति" = अर्थात् उसका अभ्यञ्जन कर एवं शरवृक्ष की इषिका से अर्थात् पत्र से अभ्यञ्जन और अभ्यञ्जन करता है। इस स्थल में "अभ्यनक्ति" एवं "अनक्ति" इन दोनों पदों में ही परस्मैपद का प्रयोग है अतः अभ्यञ्जन जन्म फल यजमान गामी है। इस स्थल में योग्यता ही यह फल होता है। ऋत्विक् अभ्यञ्जन एवं वपन आदि करने से यजमान के मध्य में योग्यता उत्पन्न होती है—वह नहीं हो सकता है। इसलिए यह व्यपदेश होने पर भी यह यजमानगामी ही है।

"व्यपदेशात्त्च" = व्यपदेश अर्थात् निदेश होने से यह यजमानगामी है ॥ ५ ॥

## गुणत्वे तस्य निर्देशः ॥ ६ ॥

शा० भा०—यदुक्तं समाख्यानाद्यथावेदमिति। नैतदेवम्। गुणत्वे तस्य निर्देशः। तत्र वयं समाख्यां नियामिकामिच्छामो, यत्र कर्मणः प्राधान्यम्।

यदर्थं क्रेतव्याः पुरुषाः प्राप्ताः तत्र समाख्यया नियमः। कल्प्यो हि संबन्धो वपनादिभिः पुरुषाणाम्, अदृष्टार्थत्वात्। वल्प्त—आरादुपकारकैः। न च वल्प्त उपपद्यमाने कल्प्यः शक्यः कल्पयितुम्। तस्मान्न पुरुषप्राधान्ये समाख्या नियामिका स्यात् ॥ ६ ॥ आ० ॥

त० वा०—यत्त्वितरकर्मवत्समाख्यया नियम्यत इति। तत्र समाख्या नियमिका भवति, यत्र कर्तुरपेक्षा। क्व चासौ ? यदर्थः परिक्रयः। स च कर्तुः क्वचिद्गुणत्वमापादयितुं क्रियते, न संस्काराय। तद्दर्शयति कल्पनीयो हि वपनादिभिः सह विनैवापेक्षया संबन्धः। इतरैः पुनः वल्प्तोपेक्षणादिति ॥ ६ ॥

न्या० सु०—आध्वर्यवमिति निर्देशो समाख्यायाः पूर्वपक्षे वपनादिष्वध्वर्यु नियमायोक्त। सङ्घेषु पुरुषसंस्कारव्यतिरिक्तेषु कर्तृ गुणत्वं तेष्वेव तस्य नियामक इत्येवं सूत्रव्याख्यार्थं यदित्यादिभाष्यं पूर्वपक्षोक्तदृष्टान्तानुभाषणं विना तद्वैषम्योक्त्यशक्तेर्न्यूनं मत्वा दृष्टान्त-पूरणपूर्वं व्याचष्टे—यत्त्विति। कल्प्यो हीति भाष्यमुक्तव्यवस्थोपपादनार्थत्वेनाऽवतारणपूर्वं व्याचष्टे—तदिति ॥ ६ ॥

भा० प्र०—इस स्थल में समाख्या अनुसरणीय नहीं है, इसमें कारण का निर्देश करते हैं—"गुणत्वे तस्य निर्देशः" जिस स्थल में कर्म प्रधान एवं पुरुष गौण होता है कर्म सम्पादित होने के लिए कर्तृ पुरुष की आकाङ्क्षा होती है—कौन इस कर्म को करेगा इस प्रकार जिज्ञासा होती है इसमें समाख्या के अनुसार व्यवस्था होती है, किन्तु, इस स्थल में वपन आदि कर्म पुरुष के संस्कार के रूप में विधीयमान होने से पुरुष ही प्रधान एवं कर्म गौण है। इसलिए, इस स्थल में कर्म की कर्तृ आकाङ्क्षा न रहने से समाख्या के बल से विनियोग नहीं होगा।

"गुणत्वे" ( गुणत्वेन ) गुण रूप में, "तस्य निर्देशः" = उसका अर्थात् उन वपन आदि कर्मों का निर्देश अर्थात् उल्लेख किया गया है ॥ ६ ॥

## चोदनां प्रति भावाच्च ॥ ७ ॥

शा० भा०—चोदनेत्यपूर्वं ब्रूमः। अपूर्वं प्रति संस्कारा विधीयन्ते। ते ह्यसंभवाद्द्रव्येषु कल्प्यन्ते। संनिकृष्टद्रव्याभावे च विप्रकृष्टेषु भवेयुः। यदा तु संनिकृष्टे द्रव्ये संभवन्ति, तदा न विप्रकृष्टेषु प्रयोक्तव्याः, कृतार्थत्वात्। तस्मा-त्स्माद्याजमाना इति ॥ ७ ॥ हेतुः ॥

त० वा०—प्रधानापूर्वाश्रयत्वाच्च यजमानस्य संस्काराः संनिकृष्टाः सुखम-पूर्वेण ग्रहीष्यन्ते। तत्सिद्ध्यर्थत्वाद्वा तत्रैव कर्तारा इति ॥ ७ ॥

न्या० सु०—स्वामिना कर्तृत्वसिद्ध्यै संस्कार्यत्वस्य तत्प्रधानत्वादित्यनेनोक्तस्यो-पपादनार्थत्वेन पूर्वमुद्दिश्य संस्काराणां विधानात्साक्षाच्चापूर्वे करणाशक्तेः तत्साधने

द्रव्ये कार्याणां सन्निकर्षविशेषात्स्वामिनि कार्यत्वावगमात्, तत्प्रधानतेत्येवं णिजन्ताद्भवेतरच्प्रत्ययोत्पादाद्विधानवाचिभावशब्दाङ्गीकारेण पूर्व्वसूत्रकृतेन पूर्व्वपक्षहेतुनिरासेन बुद्धिस्थीकृतस्य सिद्धान्तहेतोश्चशब्देनानुकर्षणाङ्गीकारेण च सूत्रव्याख्यार्थं चोदनेत्यादि-भाष्यं स्वामिनोऽपूर्वाश्रयत्वासन्निकर्षमुपपादयन् व्याचष्टे—प्रधानेति। फलप्रतिग्रहण-योग्यताख्यां फलापूर्व्वाश्रयत्वयोग्यतां चोदनोक्त्या विवक्षित्वा स्वयंफलापूर्व्वाश्रयत्व-योग्यतोद्देशेन संस्कारविधानादित्येवं सूत्रं व्याचष्टे—तत्सिद्धयर्थत्वाद्वेति। प्रधानापूर्व्वा-श्रयत्वसिद्धचर्थत्वात्तत्संस्काराणामित्यर्थः ॥ ७ ॥

भा० प्र०—संस्कार यजमान गामी है, इसमें अन्य कारण भी है "चोदनां प्रति भावनात् च" = ये संस्कार अपूर्व के लिए विहित होता है और सन्निकृष्ट रूप यजमान ही प्रधाना पूर्व का आश्रय होने से अपूर्व के अनुरोध से सन्निकृष्ट यजमान वपन आदि के संस्कार्य रूप में गृहीत होता है।

"चोदनात् प्रति" = अपूर्व के लिए, "भावात् च" = विद्यमानता है, अतः, अर्थात् तज्जन्य विहित होने से ॥ ७ ॥

## अतुल्यत्वादसमानविधानाः स्युः ॥ ८ ॥

शा० भा०—इदं पदोत्तरं सूत्रम्। अथ कस्मान्न समानविधाना भवन्ति? अविशेषविधानाद्धि पुरुषमात्रस्य प्राप्नुवन्ति। तदुच्यते। नैतत्समानं सर्व-पुरुषाणां विधानम्। कुतः? अतुल्यत्वात्। अतुल्या एत एतद्विधानं प्रति। काऽतुल्यता? यद्यजमानस्य विहिता, न ऋत्विजाम्। कथं यजमानस्य विहिता इत्यवगम्यते? अर्थात्स्वयं प्रयोगे स्यादिति।

नन्वविशेषादृत्विजामपि विहिताः। प्रयोजनाभावादविहिता इति पश्यामः। कथं प्रयोजनाभावः? ऋत्विग्भिः क्रियमाणा न यजमानेन कृता, न कारिताः। अतदर्थत्वात्परिक्रयस्य। स्वयंकृताश्च नार्थिन उपकुर्वन्ति। तस्मादप्रयोजनाः। अत ऋत्विजामविहिताः। एतदतुल्यत्वम्। तस्मान्न समानविधाना इति ॥ ८ ॥ भा० नि० ॥

इति द्वितीयं वपनादिसंस्काराणां याजमानत्वाधिकरणम् ॥ २ ॥

त० वा०—अनेन च न्यायेन यजमानस्य, समाख्यया चर्त्विजां भवन्तु, विरोधाभावात्। न च संस्कारत्वात्प्रतिप्रधानमावर्तमाना दीक्ष्यन्तीति चोदिते वदति। नैतद्युक्तम्। सर्वं हि यजमानेन स्वयं कर्तव्यं, परिक्रयेण वा कारयि-तव्यम्। तद्यदि संस्कारानध्वर्य्वादयः कुर्युः, ते परिक्रयस्यायोग्यत्वेनाऽसाध्यत्वान्न कारिता, नापि कृता इत्यकर्माङ्गमेव स्युः। तस्मान्नर्त्विग्यजमानानामेते समानविधाना इति ॥ ८ ॥

( इति द्वितीयं वपनादिसंस्काराणां याजमानत्वाधिकरणम् ॥ २ ॥ )

न्या० सु०—अविशेषेति भाष्यं पुरुषमात्रवाचिशब्दाभावादयुक्तमाशङ्क्य, सन्निकर्षविशेषन्यायात्स्वामिनः समाख्यया चर्त्विजां संस्कारविध्यवगत्याशयत्वेन व्याचष्टे—**अनेन चेति**। संस्कारत्वेऽवगते प्रकृतपुरुषपूरितं माधवेन ( १ ) कर्तृकत्वावगतेर्वपनादीनां चात्मनेपदात्कर्तृगामिक्रियाफलावगमात्संस्कार्यत्वावगतिः, संस्कार्यत्वेऽवगते प्रतिप्रधानावृत्त्यादिदोषपरिहारात्संस्कारत्वावगतिरित्यन्योन्याश्रयापत्तेर्विरोधपरिहारायोगामाशङ्क्य, वपनादेः संस्कार्यविशेषानवगमेऽपि क्रियास्वाभाव्यात्संस्कारत्वावगतेः संस्कार्यानेकत्वे सत्यावर्त्तनीयत्वावगमाद्विरोधपरिहारमुपपादयितुमाह—**न चेति**। एतच्छङ्कोत्तरत्वेन सूत्रव्याख्यार्थं तदित्यादिभाष्यं व्याचष्टे—**इतीति**। सप्तम्या भाष्यस्थस्तच्छब्दः सप्तम्यन्ताव्ययत्वेन व्याख्यातः ॥ ८ ॥

भा० प्र०—यदि कोई यह आशङ्का करे कि इस नियम के अनुसार वह यजमानगामी एवं समाख्या बल से वह ऋत्विग्गामी, इस प्रकार उभय संस्कार ही होगा। कारण, इसमें किसी प्रकार का विरोध नहीं है, क्योंकि, ये संस्कार गुणभूत होने से प्रत्येक प्रधान का (पुरुष का) उद्देश्य में आवृत्त हो सकता है। ऐसी स्थिति में इसके उत्तर में कहा गया है कि "अतुल्यत्वादसमानविधानाः स्युः" = इस स्थल में ऋत्विक् एवं यजमान की तुल्यता न होने से दोनों के उद्देश्य से एक ही विधि से संस्कार विहित नहीं हो सकता है। कारण, यजमान फलभोक्ता होने से उसके मध्य में अलौकिक योग्यता अर्थात् अपूर्व प्रयुक्त अर्थात् अपूर्व की उत्पत्ति के लिए उसके द्वारा अपेक्षित शास्त्रीय योग्यता आवश्यक है, किन्तु, ऋत्विजों की इस योग्यता का कोई भी प्रयोजन नहीं है। ऋत्विक् के कर्म साध्य करने के लिए जितना आवश्यक है उतनी योग्यता रहने पर ही होगा। इसलिए, उसकी शास्त्रीय योग्यता अर्थात् अपूर्व प्रयुक्त योग्यता के रहने पर ही होगा, इसलिए, उनकी शास्त्रीय योग्यता अर्थात् अपूर्व प्रयुक्त योग्यता की आवश्यकता नहीं है। ऋत्विग्गण यदि अपूर्वप्रयुक्त होकर करते हैं, ऐसी स्थिति में यजमान को नहीं करना होगा, एवं यदि परिक्रय नहीं किया जाय तो फलभोक्ता यजमान से नहीं कराना होगा। इसलिए, जो प्रधान कर्म वह फलभोक्ता यजमान का ही कर्तव्य होने से उसका ही संस्कार अपेक्षित है, किन्तु ऋत्विजों के संस्कार की अपेक्षा नहीं है, इसलिए हेतु की तुल्यता न होने से समान विधानता भी नहीं हो सकती है।

"अतुल्यत्वात्" = तुल्यता न होने से, "असमानविधानाः स्युः" = ये संस्कार यजमान एवं ऋत्विक् के पक्ष में समान विधिबोधित नहीं होगा, अर्थात् दोनों ही के लिए विहित नहीं हो सकता है ॥ ८ ॥

इति द्वितीयवपन आदि संस्कार का याजमानत्वाधिकरण।

## अथ तृतीयं तपसो याजमानत्वाधिकरणम्

## [ ३ ] तपश्च फलसिद्धित्वाल्लोकवत् ॥ ९ ॥ सि०।

शा० भा०—तपः श्रूयते—द्व्यहं नाश्नाति, त्र्यहं नाश्नाति, इति। तत्र

संदेहः किमार्त्विजं तपः, याजमानमिति। किं प्राप्तम्? समाख्यानादार्त्विजं तप इति प्राप्तम्। एवं प्राप्ते।

ब्रूमः—याजमानं तप इति। कुतः? फलसिद्धित्वात्। फलसिद्धयर्थं तपः। तपःसिद्धस्य यागफलं सिध्यति। कथमेतदवगम्यते? दुःखं हि तपः। दुःखं चाधर्मफलम्। अधर्मो यागफलस्य प्रतिबन्धको भवति। अश्रेयस्करो हि सः। तस्मिन्सति न श्रेयो भवितुमर्हति। तस्मात्सोऽपनेतव्यः। फलभोगेन च विरुध्येते धर्माधर्मौ। तस्माद्दुःखफलभोगायाऽधर्मः श्रूयते। यत्तेन दुःखमुत्पादयितव्यमिदं तदिति। एवं दृष्टार्थं भवति, नादृष्टं कल्पयितव्यम्। तेन फलोपभोगेन क्षीणेऽधर्मे अप्रतिबद्धो यागः फलं दास्यतीति। फलसिद्धिश्च यजमानस्य कर्तव्या, नर्त्विजाम्। तस्माद्याजमानं तप इति॥ ९॥

त० वा०—तपसोः दुःखकरत्वात्कर्ता गुणभूतः समाख्यया नियम्यत इत्याशङ्कां निवर्तयति। यस्मादिदमपि संस्कारवत्फलप्रतिग्रहणयोग्यत्वं करोति। यजमानस्य च योग्यत्वमप्रतिबद्धं कर्तव्यं नर्त्विजस्तस्माद्याजमानम्। योग्यता च सर्वत्रैव द्विप्रकारा दोषापनयेन गुणान्तरोपजननेन वा भवति। तत्र संस्कारा गुणान्तरमुपजनयन्ति। तपश्च दोषनिर्घातं करोति। यो हि ज्योतिष्टोमादि करोति तस्यैकान्तेनास्मिन्नन्यस्मिन्वा जन्मनि विहिताकरणप्रतिषिद्धसेवानिमित्ता दोषाः सन्ति। ते चानपनीताः क्रतुविपरीतस्वफलोपभोगदानादत्यन्ताविगुणस्यापि क्रतोः फलं प्रतिबध्नन्ति। सोऽयं क्रतुरप्रतिबन्धहेतुं कंचिदपेक्षते। तत्र प्रकरणश्रुतस्यैव तपसोऽवश्यं क्रतुं प्रति कथंचिदुपकारकत्वं कल्पयितव्यम्। तत्रापेक्षासंनिधियोग्यत्वैर्दोषक्षपणकल्पनमेव ज्यायः। शक्यं हि दुःखदानादधर्मस्य कार्यविरोधिनस्तपसाऽपनयनम्। यथैव प्रायश्चित्तचरणाद्दुःखेनाल्पेनापि सता महते दुःखान्तराय प्रवृत्तः सन्नधर्मो विनश्यत इति वचनाद्गम्यते तथैवात्र द्रष्टव्यम्। यानित्वकर्माङ्गभूतान्येव तपांसि श्रूयन्ते फलसंबद्धानि वा तेषां फलसाधनस्यापरस्याभावात्प्रतिबन्धनिराकरणापेक्षा नास्तीति स्वर्गाद्येव कल्प्यते यानि तु प्रायश्चित्ततपांसि तेषां दोषापहारमात्रमेव फलमिति, न सर्वत्रैकरूपत्वमध्यवसातव्यम्॥ ९॥

न्या० सु० तपसोपि क्रतुफलप्रतिबन्धकदुःखफलपापनाशकत्वेन फलप्रतिग्रहणयोग्यताधानार्थत्वाच्छङ्काधिक्याभावेनाऽतिदेशायोगमाशङ्क्य, पापनाशार्थत्वे प्रमाणाभावात्, दुःखकरत्वेन च कर्तृप्रतिकूलत्वात्कर्त्रनुग्राहकत्वायोगेनाधिकाशङ्कां दर्शयन् सूत्रतात्पर्यमाह—**तपस इति**। कथं निवर्त्तयतीत्यपेक्षायामाह—**यस्मादिति**। सौत्र्याः फलोक्तेः फलप्रतिग्रहणयोग्यत्वलक्षणार्थत्वसूचनार्थत्वेन भाष्यस्थां सिद्धोक्तिं व्याख्यातुं—**फलेष्युक्तम्**। करोतीत्यनेन फलस्य सिद्धिरस्मादिति बहुव्रीह्यर्थोक्त्यर्थत्वेन फलसिद्धयर्थो-

क्रियाख्याता। दुःखकरत्वेन प्रतिकूलत्वाद्योग्यताधानार्थत्वायोगं पूर्वपक्षोक्तं परिहरन्दुःखं हीत्यादिभाष्योक्तं योग्यताधानप्रकारं विवृणोति—योग्यता चेति। सोममित्यनेनाकाङ्क्षायाः सूत्रेत्यनेन च सन्निधानस्योक्तया साकाङ्क्षफलवत्सन्निधानाख्यात्प्रकरणात्सामान्यसम्बन्धेऽभिहिते योग्यत्वाख्यालिङ्गात्तपसः पापनाशाख्यद्वारविशेषान्वयः सेत्स्यतीति तत्रापेक्षेत्यनेनोक्तयोग्यत्वविवरणार्थं शक्यं हीःयुक्तम्।

लोकवदिति दृष्टान्तं स्पष्टत्वाद्भाष्यकृतोपेक्षितं क्रतुफलप्रतिबन्धकस्य महतः पापस्य द्व्यहत्र्यहोपवासजन्येनाऽल्पेन दुःखेन नाशायोगशङ्कानिरासार्थत्वेन व्याख्यातुमाह—यथैव चेति। स्मार्तस्यापि पौरुषेयत्वाल्लौकिकत्वोक्तयविरोधः वानप्रस्थादितपसोपि तर्हि पापनाशार्थत्वात्स्वर्गाद्यर्थत्वापपत्तेः स्तपसा ये अनाधृष्याः तपसाये स्वर्यं ययुरिसुवर्गं तै. आ. ६-३-७त्यादि दर्शनं विरुद्धचेतेत्याशङ्क्याह—यानित्विति। द्व्यहोपवासादीनां प्रायश्चित्तवत्पापनाशकत्वेपि तद्वदेव फलप्रतिग्रहणयोग्यताधायकत्वेन स्यादित्याशङ्क्य, फलप्रतिग्रहणयोग्यताधानायैव पापनाशस्य द्वारमात्रत्वेनाऽभ्युपगमाद्वैषम्यं सूचयितुमाह—यानितुप्रायश्चित्तेति॥ ९॥

भा० प्र०—ज्योतिष्टोम प्रकरण में श्रुति में "द्वाहं नाश्नाति त्र्यहं नाश्नाति" अर्थात् दो दिन नहीं खाए, तीन दिन नहीं खाए इत्यादि वचन में अनशनरूप तपस्या उपदिष्ट है। क्या यह यजमान का अनुष्ठेय है अथवा समाख्या के अनुसार अध्वर्यु का कर्तव्य है—यही संशय है। इसमें पूर्वपक्ष का कहना है कि यह उपवास आदि तपस्या यदि कष्टसाध्य है और कष्ट की लघुता के लिए ही जब ऋत्विजों को नियुक्त किया जाता है तब यह अध्वर्यु के लिए ही आचरणीय है। इसके उत्तर में सिद्धान्ती का कहना है कि "तपश्च फलसिद्धित्वात् लोकवत्" अनशन आदि तपस्या भी यजमान के लिए ही कर्तव्य है, कारण, वह भी फलसिद्धि का उपाय है, क्योंकि, लौकिक कर्म में जब देखा जाता है कि कष्ट के बिना फल की प्राप्ति नहीं हो सकती है, इस स्थल में भी वैसा ही होगा। शास्त्रोक्त नियम में कष्ट करने में यज्ञीय फल का प्रतिबन्धक रूप पाप दूर हो जाता है और जब यजमानफलभोग्य के योग्य होता है, इसीलिए, उसी की तपस्या आचरणीय है।

"तपः च"=अनशन आदि तपस्या भी यजमान का कर्तव्य है, "फलसिद्धित्वात्" = क्योंकि, उसके फल की सिद्धि के लिए अपेक्षित है, "लोकवत्" = लौकिक कर्म के समान। सिद्धान्त॥ ९॥

## वाक्यशेषश्च तद्वत्॥ १०॥

**शा० भा०**—एतमेवार्थं वाक्यशेषोऽपि द्योतयति। यदा वै पुरुषे न किंचनान्तर्भवति, यदाऽस्य कृष्णं चक्षुषो नश्यति, अथ मेध्यतम इति। यदाऽनशनः तदा मेधार्ह इति। मेधश्च यज्ञो, यज्ञश्च त्यागः। त्यागं कर्तुमर्हस्तपसा क्रियत

इति वाक्यशेषो भवति। त्यागी च यजमानः। तस्माद्याजमानं तप इति ॥ १० ॥ युक्तिः ॥

त० वा०—मेधार्हत्ववाक्यशेषश्चामुमेवार्थं द्योतयति ॥ १० ॥

भा० प्र०—अनशन आदि तपस्या यजमान का ही कर्तव्य है, इस प्रसङ्ग में और भी साधन हैं "वाक्यशेषश्च तद्वत्"। श्रुति में जो वाक्य में अनशनरूप तपस्या का विधान किया गया है, इसके बाद ही अर्थवाद वाक्य में श्रुति कहती है कि "यदा वै पुरुषे न किञ्चनान्तर्भवति यदास्य कृष्णं चक्षुषोर्नश्यति, यत्र मेध्यतमः", फलितार्थ यह है कि अनशन के फल में पुरुष जब कृश होता है, उनमें जब गुरुत्व नहीं है, देह का असार अंश नष्ट होने पर जब लघु होता है, इसी प्रकार जब चक्षु की शक्ति क्षीण हो जाती है तब वह अतिशय पवित्र = मेधार्ह होता है, इस स्थल में अनशन आदि से ही जो पुरुष मेधार्ह होता है, कारण, (मेध अर्थ में यज्ञ) वह कहा गया है, इसलिए, वह यजमान का ही कर्तव्य है।

"तद्वत्" = उसी तरह, "वाक्यशेषः च" = वाक्यशेष अर्थात् अर्थवाद भी है ॥१०॥

## वचनादितरेषां स्यात् ॥ ११ ॥

शा० भा०—किमेष एवोत्सर्गः, सर्वं तपो याजमानमिति? वचनादितरेषाम्। यत्र वचनं, तत्र ऋत्विजाम्। यथा, सर्वे ऋत्विज उपवसन्तीति ॥ ११ ॥ विशेषः।

इति तृतीयं तपसोयाजमानताधिकरणम् ॥ ३ ॥

त० वा०—वरदानवदेतद्द्रष्टव्यम् 'ऋत्विज उपवसन्ति' इति ॥ ११ ॥

( इति तपसो याजमात्वाधिकरणम् ॥ ३ ॥ )

न्या० सु०—तपसोऽप्यार्त्विजत्वदर्शनात्प्रतिग्रहणयोग्यताधानसामर्थ्यात्मकलिङ्गाभावेन स्वामिनस्तपसि लैङ्गिकविनियोगायोगात्, तदविरुद्धया समाख्यया अध्वर्युविनियोक्ष्यत इत्याशङ्क्य, बहुवचनश्रुतिविरोधात्तत्र लिङ्गबाधेऽपि, न सर्वत्र बाधो युक्त इत्येवमर्थत्वं सूत्रस्य सूचयितुमाह—वरेति ॥ ११ ॥

इति तृतीयं तपसो याजमानत्वाधिकरणम्।

भा० प्र०—यदि कोई आशङ्का का उत्थापन कर कहते हैं कि सभी जगह क्या यह नियम है कि यजमान ही उपवास करेगा, इसलिए, उसके उत्तर में कहा है, "वचनादितरेषां स्यात्" = जिस स्थल में विशेष वचन रहता है, उसमें उसी वचन के बल से ही दूसरे को भी अर्थात् ऋत्विजों के भी अनशन आदि कर्तव्य होगा।

"वचनात्" = वचन के अनुसार, "इतरेषां स्यात्" = दूसरे का भी = ऋत्विजों के भी होता है अर्थात् अनशन आदि तपस्या कर्तव्य है ॥ ११ ॥

इति तृतीयतपस्या का याजमानत्वाधिकरण।

## (४) गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ १२ ॥ सि० ।

### अथ चतुर्थं लोहितोष्णीषतादीनां सर्वर्त्विग्धर्मताधिकरणम्

शा० भा०—अथ यदुक्तं, समाख्यानादार्त्विजं तप इति। गुणत्वान्न समाख्यया गृह्यते। यत्र पुरुषस्य गुणभावः तत्र समाख्या नियामिका। एवं वा। श्येने श्रूयते—'लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति', इति। तथा वाजपेये श्रूयते, 'हिरण्यमालिन ऋत्विजः प्रचरन्ति, इति। तत्र संदेहः—किं श्येने, उद्गातृभिर्लोहितोष्णीषता कर्तव्या, वाजपेये चाध्वर्युभिर्हिरण्यमालित्वम्, उतोभयमपि सर्वर्त्विजामिति। किं तावत्प्राप्तम्? समाख्यानात्, श्येने, उद्गातृभिः, वाजपेयेऽध्वर्युभिरिति। एवं प्राप्ते।

ब्रूमः—गुणत्वाच्च वेदेन न व्यवस्था स्यात्। गुणो—लोहितोष्णीषता, हिरण्यमालित्वं च। पुरुषः प्रधानम्। अतो लोहितमुष्णीषं, हिरण्यमाला च पुरुषविशेषणत्वेन श्रूयते, न कर्तव्यतया। तस्मात्पुरुषप्राधान्यम्।

किमतो यद्येवं? पुरुषाणां प्रधानभावे समाख्या न नियामिकेत्येतदुक्तम्। अपि च, गुणत्वश्रवणात्सर्वपुरुषाणामेतद्विधानमिति गम्यते। प्रधानसंनिधौ हि गुणः शिष्यमाणः प्रतिप्रधानमुपदिष्टो भवति। तत्र वचनेन प्राप्तं कथं समाख्यया विद्यमानयाऽपि नियन्तुं शक्येत। तस्मादुभयत्र सर्वर्त्विग्भिरेवंजातीयको धर्मः क्रियेतेति ॥ १२ ॥ आकाङ्क्षानिरासः।

लोहितोष्णीषतादीनां सर्वर्त्विग्धर्मताधिकरणम् ॥ ४ ॥

त० वा०—'गुणत्वे तस्य निर्देशः' इत्यनेन गतार्थमित्यन्यथा व्याचष्टे। ये संस्काराः सन्तो वचनादृत्विजां जाताः ते किं समाख्यया नियम्यन्ते, नेति। लोहितोष्णीषादयो ह्यौद्गात्रादिषु पठ्यमानाः सत्यपि संस्कारत्वे वचनादृत्विजां क्रियमाणाः समाख्याविषयतां प्रतिपद्यन्त इति प्राप्ते

ब्रूमः—

संस्कारत्वादतिक्रान्ते समाख्यागोचरे सति।
वचनेनर्त्विजां येन तेनैवान्येष्वपि स्थिताः ॥

ऋत्विगुद्देशेन ह्येते विधीयमानाः प्रतिप्रधानावृत्तिन्यायात्सर्वेषां भवन्तो न शक्याः समाख्यया बाधितुम्। तस्मादिह न व्यवस्था स्यादिति ॥ १२ ॥

( इति चतुर्थं ऋत्विक्संस्काराणां सर्वर्त्विग्धर्मताधिकरणम् ॥ ४ ॥ )

न्या० सु०—एवं वेत्यादिभाष्येणाऽधिकरणान्तरत्वेन सूत्रव्याख्यायाः कृतायाः पूर्वाधिकरणशेषत्वेन सूत्रव्याख्यानापरितोषं निमित्तमाह—गुणत्व इति। लोहितोष्णीषादीनामपि वपनादिवज्जञ्जभ्यमानाधिकरणन्यायेन संस्कारत्वावगमाद्याजमानत्वेनार्त्विजत्वा-

योगात्पूर्वसिद्धान्तपक्षयोर्द्वयोरप्यनुपपत्तेः सन्देहायोगं, लिङ्गसमाख्याविरोधचिन्ताप्रस्तावे च वाक्यसमाख्याविरोधाविरोधविचारासङ्गतिमाशङ्क्यर्त्विज उपवसन्तीत्यस्मिन्नेवोदाहरणे बहुवचनश्रुत्यैकयजमानके ज्योतिष्टोमादौ याजमानत्वपक्षे उपपद्यमानया लिङ्गगम्ययाजमानत्वबाधेनार्त्विजत्वेऽभिहिते प्रासङ्गिकीमध्वर्युमात्रकर्तृत्वेऽप्यृत्विक्कर्तृत्वानपायाद्वाक्येनाध्वर्युपुरुषमात्रविनियोजकत्वाद्वा समाख्याया बहुवचनश्रुत्याप्यविरोधः, स्वरसावगतसर्वार्त्विक्कर्तृकत्वभङ्गापत्तेर्वा विरोध इति चिन्तायाः सङ्गतिं, संस्कारत्वेऽपि च फलप्रतिग्रहणयोग्यताख्यलिङ्गावगतयाजमानत्वबाधेनैकयजमानकर्तृकत्वे अनुपपद्यमानया बहुवचनश्रुत्यार्त्विजत्वावगमात्सन्देहोपपत्तिं सूचयितुमाह—य इति। लोहितोष्णीषादिष्वप्युपवासन्यायत्समाख्यानियामकत्वायोगसिद्धिसूचनार्थं तदुदाहरणं, न तु तदेवादृत्यमिति सूचनार्थो यच्छब्दः। पूर्वपक्षमाह—लोहितोष्णीषादीयो होति। यस्मात्संस्कारत्वेपि यावतीमावृत्तिं विना वाक्यानुपपत्तिः, ततोऽधिकाश्रुतावृत्तिकल्पनायोगाद्व्यवस्थापेक्षायां समाख्यया व्यवस्था सम्भवति। तस्माच्चिन्ता युक्तेति हिशब्दार्थः। गुणत्वे तस्य निर्देश इत्यत्र कर्तॄन् प्रति प्रधानभूतानां क्रियाणां समाख्याविषयत्वोक्तेः, संस्काराणां गुणत्वेनाऽतद्विषयत्वावगमात्तन्निरपेक्षाद्वाक्यात्सर्वर्त्विजां संस्कार्यत्वावगतेनौद्गात्रादिवेदसमाख्यया व्यवस्था स्यादित्येवं सूत्रेण सिद्धान्तमाह—इतीति। श्लोकं व्याचष्टे—ऋत्विगिति। सेर्वेषामित्यनेन समाख्यानपेक्षा सौत्रचशब्दसूचितोक्ता। तस्माच्छब्देन च शब्दयाख्यार्थं परामृष्टा ॥ १२ ॥

इति चतुर्थं ऋत्विक्संस्काराणां सर्वर्त्विग्धर्मत्वाधिकरणम्।

भा० प्र०—श्रुति में श्येनयाग प्रकरण में कहा गया है "लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति" अर्थात् ऋत्विग्गण लोहित उष्णीष और लोहितवसनयुक्त ही कर्म करे। वाजपेय प्रकरण में इस प्रकार कहा गया है, "हिरण्यमालिन ऋत्विजः प्रचरन्ति" अर्थात् ऋत्विग्गणहिरण्यमयमालायुक्त होकर कार्य करे। श्येनयाग उद्गातृवेद में एवं वाजपेय अध्वर्युवेद में पठित होने से वह क्रम के अनुसार औद्गात्र एवं आध्वर्यव इन समाख्याओं का विषय है। पूर्व अधिकरण में अनशनादि तपस्या जिस ऋत्विक् के पक्ष में अनुष्ठेय है—इसके लिए कोई वचन नहीं था, इसलिए, युक्ति के अनुसार वह यजमान का ही कर्तव्य प्रतिपादित होता है, किन्तु, यहाँ ऋत्विजों के लिए लोहितोष्णीषत्व और लोहितवसनत्व एवं हिरण्यमालित्व विहित होने से वह ऋत्विजों का ही धर्म है—यह निश्चित होता है, किन्तु यहाँ यह संशय है कि समाख्या के अनुसार वह ऋत्विग् विशेष का ही धर्म होगा। अथवा समाख्या को अनादृत कर वह अविशेष में सभी ऋत्विक् का ही धर्म होगा। इसमें पूर्वपक्षी का कहना है कि औद्गात्र एवं आध्वर्यव इस समाख्या के अनुसार वह ऋत्विजों का ही धर्म होगा, इसके उत्तर में सिद्धान्ती का कहना है कि "गुणत्वात् च वेदेन न व्यवस्था स्यात्"। इस स्थल में कर्म प्रधान एवं पुरुष गुणभूत है, ऐसी स्थिति में समाख्या के अनुसार व्यवस्था होती है, किन्तु इस स्थल में जब पुरुष प्रधान एवं लोहितोष्णीत्व; हिरण्यमालित्व आदि उसका विशेषण या गुणभूत है, तब

प्रधान के अनुरोध से गुण की आवृत्ति हो सकती है, ये अविशेष में सभी ऋत्विजों का ही धर्म होगा ।

"गुणत्वात् च" = गुणत्व होने से, "वेदेन" = वेद के अनुसार, "व्यवस्थ न स्यात्" व्यवस्था नहीं होगी ॥ १२ ॥

इति चतुर्थ ऋत्विक् संस्कारों की सभी ऋत्विक्धर्मता अधिकरण ।

### अथ पञ्चमं गुणजन्यकामानां याजमानत्वाधिकरणम्

## (५) तथा कामोऽर्थसंयोगात् ॥ १३ ॥ सि० ।

शा० भा०—ज्योतिष्टोमे समामनन्ति, 'यदि कामयेत वर्षेत्पर्जन्य इति, नीचैः सदो मिनुयात्', इति । तत्र संदेहः—किमार्त्विजः कामः, अथ याजमान इति । किमेवं ? यदि कामयेताध्वर्युरिति, उत यजमान इत्येवं—संशयः । किं प्राप्तम् ? आर्त्विजः कामः । समाख्यानात् । अर्थी प्रकृतोऽध्वर्युः । स वाक्येन संबध्यते—मिनुयादिति । तस्मादार्त्विजः काम इति । एवं प्राप्ते ।

ब्रूमः—तथा कामः स्यात् । यथा तपः । याजमानः काम इत्यर्थः । कुतः ? अर्थसंयोगात् । अर्थेन यागस्य साङ्गस्य, यजमानः फलेन संबध्यत इति गम्यते, उपग्रहविशेषात्—ज्योतिष्टोमेन स्वर्गकामो यजेत, इति । उपग्रहविशेषाच्च मिनुयादित्यध्वर्युः परार्थमिति गम्यते । अथ यदुक्तं, प्रकृतेनार्थिना सहैकवाक्यत्वादिति । उच्यते । एवमपि प्रकृतेनार्थिना सहैकवाक्यता । यजमाने कामयमाने मिनुयादिति ॥ १३ ॥

त० वा०—प्रधानकामस्य यजेतेत्यात्मनेपदात्सामानाधिकरण्यादाधानगताच्चाऽऽत्मनेपदात्प्रधानकर्तृविषयत्वेऽन्यतः सिद्धे ये गुणकामाः सदोमानविशेषादिषु श्रुतास्तेषु मिनुयादित्यनेन समानकर्तृकत्वादविरुद्धया समाख्ययाऽध्वर्युविषयत्वे समानकर्तृकत्वादविरुद्धया समाख्ययाऽध्वर्युविषयत्वे प्राप्ते, प्रधानगतेनाऽऽत्मनेपदेन समस्तप्रयोगविषयः फलसंबन्धो यजमानविषयोऽवगम्यते इति यदि कामयेत यजमान इति प्रकरणादवधार्य तद्भागित्वं गम्यते । तथा चाध्वर्युव्यापारे परस्मैपदमुपपत्स्यते । अन्यथा 'डुभिञ् प्रक्षेपणे' इत्यस्य कर्त्रभिप्रायक्रियाफलविवक्षायां ञित्वादात्मनेपदं स्यात् । अनया च श्रुत्या समानाधिकरण्यं वाक्यगम्यं बाधितमित्यदोषः तद्वशेन वा यजमानप्रार्थनानुसारो योऽध्वर्योः काम एष मे यजमानो वृष्टिं प्राप्नुयादिति तदपेक्षया समानाधिकरण्यमाविरुद्धम् । तथाशब्देन च पूर्वाधिकरणादेतावदतिदिश्यते समाख्यया न नियम्यत इति ॥ १३ ॥

न्या० सु०— सूत्रानुक्तगुणकामविशेषोदाहरणाशयोक्तिपूर्वं सङ्क्षेपतोऽधिकरणार्थमाह— प्रधानेति। शास्त्रफलं प्रयोक्तरीति न्यायान्तरात्प्रधानकामस्य त्वप्रधानत्वशङ्कानिवृत्त्यर्थ-मभ्युच्चयार्थत्वेन व्याचष्टे— तथा चेति। 'यः कामयेत स मिनुयादि'ति समाख्यानान्मातृत्वेन निश्चितस्याध्वर्योः कामिना सह सामानाधिकरण्येनैकवाक्यत्वात्कामोऽप्याध्वर्यव इति पूर्वपक्षहेतोरथेति भाष्यानुभाषितस्य 'यदि कामयेत स्वामी, ततोऽध्वर्युर्नीचैर्मिनुयादिति वैयधिकरण्येनाप्येकवाक्यत्वसम्भवोक्त्या निरासार्थमुच्यत इति भाष्यं स्वरसावगतसामाना-धिकरण्यापह्नवायोगादयुक्तमाशङ्क्य, परस्मैपदश्रुत्या वाक्यीयसामानाधिकरण्यबाधेनोपपा-दयितुमाह— अनया चेति। स्वामिनि कामयमाने यद्यध्वर्यु। कामयेतेत्यध्याहारेणापि सामानाधिकरण्येनैकवाक्यत्वसम्भवोक्त्यर्थत्वेनैतदेव भाष्यमन्यथा व्याख्यातुमाह— तद्वशेन वेत्ति। परस्मैपदश्रुतिवशेन स्वामिकामानुसार्यध्वर्युकामापेक्षया सामानाधिकरण्याविरोध इत्यर्थः।

कामे तपोन्यायसाम्याभावात्, तथाशब्दायोगमाशङ्क्य, अत्यन्तसाम्याभावेऽपि सदोमा-नाश्रितस्य नीचैस्त्वस्य फलसाधनत्वात्सदोमानस्य च समाख्ययाऽध्वर्यवत्वेन तत्सामाना-धिकरण्यनिर्द्देशात्कामस्याप्याध्वर्यवत्वप्रतीतेः, कामिनश्च स्वयम्फलसाधनावच्छिन्नभावना-कारित्वस्य शास्त्रफलं प्रयोक्तरीत्यत्रोक्तत्वात्सदोमानाश्रितगुणावच्छिन्नाया भावनायाः फलसिद्ध्यर्थत्वेऽप्याध्वर्यवत्वोपपत्तेस्तपोवैषम्यं प्राप्तं निराकर्त्तुं सदोमानस्याध्वर्यवत्वेऽपि तदाश्रितगुणावच्छिन्नाया भावनायः स्वाम्युपकारार्थसदोमानाश्रितत्वसामर्थ्याख्याल्लिङ्गा-त्स्वाम्युपकारार्थत्वावगतेस्तस्यैव कामित्वावगमात्समाख्यायाश्च प्रधानभूतकर्तृनियामकत्वा-योगान्न भावनाकारी नियम्यत इत्येतावदतिदिश्यत इत्याह— तथाशब्देन चेति। अधिका-रिचिन्तायाश्चैतल्लक्षणासङ्गतेः समाख्यायाश्च प्रधानभूताधिकारिनियामकत्वायोगात्काम-द्वारा तत्साधनीभूतगुणावच्छिन्ना भावनैवात्राध्वर्यवी, याजमानी वेति चिन्ता द्रष्टव्या ॥१३॥

भा० प्र०— श्रुति में ज्योतिष्टोम प्रकरण में कहा गया है कि— "यदि कामयेत वर्षुकः पर्जन्यः स्यात् नीचैः सदोमिनुयात्" अर्थात् वर्षणशील पर्जन्य हो, यदि यह कामना करे तो नीचे सदोमण्डप परिमाण करना चाहिए। यहाँ संशय होता है सदो-मण्डप के परिमाण का हेतुभूत कामना, यह यजमान की है या अध्वर्यु की है? इसमें पूर्वपक्षी कहता है कि सदोमण्डप परिमाण कार्य जब अध्वर्यु का ही कर्तव्य है, तब कामना विशेष भी अध्वर्यु का ही होता है। इसके उत्तर में सिद्धान्ती कहता है कि "कामस्तथा"— यह जो कामना, यह भी उसी प्रकार अर्थात् अनशन आदि तपस्या के समान होगा अर्थात् यह यजमान संक्रान्त ही होगा, कारण, "अर्थसम्बद्धा" यागफल के साथ यजमान का ही सम्बन्ध है और यह जो कामना, इसका भी उद्देश्यीभूत फलयाग के ही प्रभाव से निष्पन्न होने से यह भी यजमान का ही होना उचित है, "मिनुयात्" इस पद में जो परस्मै पद का प्रयोग है, उससे यह अवगत होता है। कारण, 'मि' धातु नित् उभयपदी होने से फल को अध्वर्युगामी मानने पर उसका परस्मै पद में प्रयोग

नहीं होता, किन्तु "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इस पाणिनीय नियम के अनुसार आत्मनेपदी होता। किन्तु, ऐसा न होने से यह कामना अध्वर्यु की नहीं है, किन्तु यजमान की ही है—यह निश्चित है।

"कामः तथा" = कामना भी वैसी ही होगी, "अर्थसम्बन्धात्" = क्योंकि, वह अर्थ के साथ अर्थात् यागफल के साथ सम्बद्ध होता है। इति सिद्धान्त ॥ १३ ॥

## व्यपदेशादितरेषां स्यात् ॥ १४ ॥

**शा० भा०—यत्र भवति व्यपदेशः तत्राऽऽर्त्विजः कामो भवति। यथा, 'उद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते, तमागायति, बृ. उ. १. १४ इति। यद्यात्मन इति यजमानायेति परिकल्प्येत, यजमानग्रहणं, वाशब्दश्च न समर्थितौ स्याताम्। तस्माद्यजमानव्यपदेशादात्मानमेवोद्गाता प्रतिनिर्दिशतीति गम्यते ॥ १४ ॥ विशेषः।**

**इति पञ्चमं गुणजन्यकामनायायाजमानताधिकरणम् ॥ ५ ॥**

त० वा०—अन्यत्र वचनादितरेषां स्यादिह। तादृशस्य वचनस्याभावाद्व्यपदेशादित्युच्यते। वाशब्दोपादानाद्यजमानव्यतिरेकेण, चाऽऽत्मग्रहणाच्चतुर्थ्यां च विस्पष्टतादर्थ्यं प्रतीतेः 'आत्मने वा यजमानाय वा' इति कर्तृद्वयस्य फलसंबन्ध इति शक्यं विज्ञातुम् ॥ १४ ॥

( इति पञ्चमं गुणजन्यकामानां याजमानत्वाधिकरणम् ॥ ५ ॥ )

न्या० सु०—इहाप्यात्मन इति चतुर्थीश्रुत्यैव लिङ्गबाधाद्वचनादित्येव कस्मान्नोक्तमित्याशङ्क्या, आत्मशब्दस्य 'ममाग्ने वर्चं' इतिवद्व्यतिरिक्तयजमानापदेशाख्यव्यपदेशाभावात्स्वामिनाप्युपचारेणोपपत्तेर्वाशब्दोपादानाख्यव्यपदेशाभावे आत्मोपकारिणे यजमानायेत्यर्थापत्तेर्विस्पष्टश्रुत्यभावाद् व्युत्पत्त्यर्थनिर्णयार्थत्वेन व्यपदेशोक्तिमुपपादयति—अन्यत्रेति। सूत्रं व्याचष्टे—वाशब्देति ॥ १४ ॥

भा० प्र०—नियम सार्वत्रिक है कि कामना यजमान की ही होगी, अन्य किसी की भी अर्थात् ऋत्विजों की वह नहीं हो सकती है? इसके उत्तर में कहा गया है "व्यपदेशात् इतरेषां स्यात्" जहाँ विशेष वचन से निर्देश किया गया है वहाँ ऋत्विजों की भी कामना हो सकती है, जैसे—एवं विदुद्गता आत्मने वा यजमानाय वा यं कामं कामयते तम् "आगायति" अर्थात् इस तत्त्व को जो जानते हैं वैसे उद्गाता अपने लिए ही हो अथवा यजमान के लिए ही हो, जो कामना का पोषण करता है, जो फल की इच्छा करता है, उसके लिए गान करें इत्यादि वचन में ऋत्विक् की भी कामना निर्दिष्ट की गई है, अतः इन स्थलों में यज्ञ अन्यको होने पर भी ऋत्विजों की भी कामना रहने पर उस अङ्ग क्रिया के प्रभाव से फल विशेष प्राप्ति ऋत्विक् को भी होगी।

"व्यपदेशात्" = व्यपदेश अर्थात् विशेष निर्देश के अनुसार, "इतरेषां स्यात्" = अन्य के अर्थात् ऋत्विजों की भी कामना हो सकती है ॥ १४ ॥

इति पञ्चम गुणजन्यकामनाओं का यजमानत्वाधिकरण।

### अथ षष्ठमायुर्दादिमन्त्राणां याजमानताधिकरणम्

## (६) मन्त्राश्चाकर्मकरणास्तद्वत् ॥ १५ ॥ सि०।

शा० भा०—इहैवंजातीयका मन्त्रा उदाहरणम्—'आयुर्दा अग्नेऽस्यायुर्मे देहीति, वर्चोदा अग्नेऽसि वर्चो मे देहि, इति। एषु संदेहः—किमार्त्विजा, उत याजमाना इति। समाख्यानादार्त्विजा इति प्राप्तम्। एवं प्राप्ते।

ब्रूमः—मन्त्राश्चैते तद्वद्भवेयुर्यथा कामः। एवमात्माभिधायिपदं युक्तं भवति, आयुर्मे, वर्चो मे, इति। आयुर्वर्च इत्येवमादिभिः कर्मफलमभिधीयते—अग्ने त्वं कर्मफलं मे साधयेति। तदिह कर्मफलमुत्साहार्थं संकीर्त्यते। यजमानश्च तेनोत्सहते, नान्यः। यदृत्विजः कर्मफलं, न तदर्थोऽग्निः। सिद्धं हि तत्। यद्यजमानस्य, तदर्थोऽग्निः। तच्चासिद्धं सदाशासितव्यं, यदुत्साहं जनयत्यवैगुण्याय। ऋत्विगपि सिद्धे यदुत्सहते, तद्यजमानस्यैव कर्मफलायोत्सहते। तत्राऽऽत्माभिधायिपदं नावकल्पते। यजमाने चाऽऽत्माभिधायिपदं कल्प्यमानमगौणं भवति। तस्माद्याजमानाः ॥ १५ ॥

### अथ षष्ठमायुर्दादिमन्त्राणां याजमानताधिकरणम्

त० वा०—अकर्मसंयुक्ता आशीर्मन्त्रा समाख्यया नियम्यन्ते। न हि तेभ्यः फलनिष्पत्तिः। मन्त्राणामविधायकत्वात् अन्यस्य च फलकल्पनाहेतोरसंभवात्। यत्त्वाशासनं तद्यजमानवदध्वर्योरप्युत्साहकरत्वेनाविशिष्टमिति प्राप्ते।

याजमाना इत्युच्यते। ते हि फलान्तराभावात्प्रधानफलप्राप्तिमाशासते। यजमानेन च तदाशासनीयं, नर्त्विजा। तदीयस्य दक्षिणालाभस्यान्यथाऽपि सिद्धत्वात् यजमानाच्च लभ्यमानत्वेनाग्नेरप्रार्थनीयत्वात्।

अथ यजमानार्थमेवासौ प्रार्थयेत, तत्र 'आयुर्मे देहि' इत्यात्मविषयं सद्विरुध्येत। तस्माद्यजमानेनैव प्रधानफलप्राप्तिरूपेणाऽऽत्मोत्साहेनार्थे प्रयोक्तव्या इति ॥ १५ ॥

न्य० सु०—आशीर्मन्त्राणामपि फलप्रार्थनसामर्थ्यात्मकालिङ्गात्कामवद्याजमानत्वसिद्धेः शङ्काधिक्याभावेनाऽतिदेशानर्थक्यशङ्कां निरस्यन्नधिकरणार्थमाह—अकर्मसंयुक्ता इति ॥ १५ ॥

भा० प्र०—श्रुति में "आयुर्दा आग्नेऽस्यायुर्मे देहि" अर्थात् हे अग्ने ! तुम आयु देवे वाले हो मुझे आयु का दान करो इत्यादि जो मन्त्र है, वह अध्वर्यु काण्ड में पठित होवे से अध्वर्युंव की इस समाख्या के क्या अध्वर्यु का ही पाठ होगा, अथवा यजमान का ही पठनीय होगा—यही संशय है। इसमें पूर्वपक्षी का कहना है कि समाख्या के अनुसार यह अध्वर्यु का ही पाठ्य होना उचित है।

इसके उत्तर में सिद्धान्ती का कहना है कि "अकर्मकरणाः मन्त्राः च तद्वत्" ये सभी मन्त्र कर्मकरण अर्थात् अनुष्ठेय परार्थ का स्मारक न होकर ये लिङ्ग के अनुसार यजमान का ही पणनीय होता है, कारण, यहाँ लिङ्ग के अनुसार इस मन्त्र से आयुः प्रार्थनारूप अर्थ ही प्रकाशित होता है। यह आयुः फल विशेष होने से एवं कर्मसाध्य फल यजमान का ही प्राप्य होने से यजमान की हो प्रार्थना होना उचित है।

"अकर्मकरणाः" = जो कर्म का करण अर्थात् स्मारक नहीं वैसा, "मन्त्राः च" = मन्त्रफल भी, "तद्वत्" = वैसा ही अर्थात् पूर्व अधिकरणोक्त कामना के समान यजमान संक्रान्त ही ही होगा। इति सिद्धान्त ॥ १५ ॥

## विप्रयोगे च दर्शनात् ॥ १६ ॥

शा० भा०—विप्रयोगे चाग्नीनां प्रवासे उपस्थानमस्ति। 'इह एव सन् तत्र सन्तं त्वाग्ने, इति। न च प्रोषितोऽग्निभ्य ऋत्विग्भवति। कर्म कुर्वत एष वाचकः शब्दः। भवति तु यजमानोऽग्निभ्यः प्रोषितोऽपि। यजमानः संविधाय सोऽग्निहोत्राय प्रवसति। शक्यते च विदेशस्थेनापि त्यागः कर्तुम्। स एव प्रोषितस्योपस्थानविशेषं ब्रुवन्यजमानस्योपस्थानं दर्शयति। तेनैवंजातीका यजमानस्य भवेयुरिति ॥ १६ ॥ युक्तिः।

### आयुर्दादिमन्त्राणां याजमानताधिकरणम् ॥ ६।

त० वा०—आशीर्मन्त्रं च प्रवसद्यजमानाग्निहोत्रेष्वग्न्युपस्थानार्थं प्रोषितस्य दर्शयति। न चर्त्विजः प्रोषितस्य ऋत्विक्त्वं संभवति, कर्मसंयोगाभावात्। यजमानस्य तु द्रव्यत्यागेनोपपद्यते। तस्मात्तत्सामान्यादितरेषु तथात्वम् ॥ १६ ॥

( इति षष्ठं प्रोत्साहनमन्त्राणां याजमानत्वाधिकरणम् ॥ ६ ॥ )

न्या० सु०—अग्नीनां विप्रयोगे दृष्टस्य मन्त्रस्योपस्थानार्थत्वेन फलाशासनार्थत्वाभावात्, आशीर्मन्त्राणां याजमानत्वे लिङ्गत्वायोगमाशङ्क्य, 'तिरोमासं तं मा प्रहासीरि'-त्यप्रहाणाख्यफलाशासनप्रकाशकत्वेनाऽस्याप्याशीर्मन्त्रत्वाल्लिङ्गत्वमुपपादयन् सूत्रं व्याचष्टे —आशीर्मन्त्रं चेति ॥ १६ ॥

भा० प्र०—इस प्रकार मन्त्र यजमान ही पाठ्य है, उसका और भी कारण कह रहे हैं "विप्रयोगे दर्शनात् च" प्रवास में अर्थात् विदेश में रहवे के लिए अग्नि दूरस्थ

होने पर भी "इहैव सन् तत्र सन्तं त्वाग्ने" इत्यादि कहकर अग्नि का उपस्थान करना पड़ता है, किन्तु यह यजमान को छोड़कर अध्वर्यु नहीं हो सकता है, कारण, कर्म के समीपस्थ न होने पर अध्वर्यु नहीं हो सकता है, इस कारण से इससे भी अवगत होता है कि "आयुर्दा अग्ने" इत्यादि मन्त्र यजमान का ही पाठ्य है।

"विप्रयोगे" = अग्निवियुक्त स्थल में अर्थात् प्रयास में, "दर्शनात् च" = दृष्ट होने से भी ॥ १६ ॥

इति षष्ठ आयुर्दा इत्यादि मन्त्र का याजमानत्वाधिकरण।

अथ सप्तमं द्व्याम्नातानामुभयप्रयोज्यत्वाधिकरणम्

## (७) द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात् ॥ १७ ॥ सि०।

शा० भा०—स्तो दर्शपूर्णमासौ। तत्र द्व्याम्नाता मन्त्रा आध्वर्यवे काण्डे, याजमाने च। आज्यं यैर्गृह्यते 'पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि, इत्येवमादयः। तथा स्रुग्व्यूहनमन्त्राः—स्रुचौ व्यूहति 'वाजस्य मा प्रसवेन' इति। तत्र संदेहः—किं त उभाभ्यामपि कर्तव्या, उताध्वर्युणैवेति। किं प्राप्तम्? समाख्यानादाध्वर्यवा इति प्राप्ते।

उच्यते। उभावपि तान् प्रयुञ्जीयातामिति। कुतः? द्व्याम्नानस्यार्थवत्त्वात्। द्वाभ्यां समाख्यानाद् द्वावपि कर्तारौ गम्येते। तस्माद्द्वौ ब्रूयाताम्। अध्वर्युः—एतेन प्रकाशितमनुष्ठास्यामीति। यजमानो—न प्रमदिष्यामीति ॥ १७ ॥ द्व्याम्नातस्योभयप्रयोज्यताधिकरणम् ॥ ७ ॥

अथ सप्तमं द्व्याम्नातानामुभयप्रयोज्यत्वाधिकरणम्

त० वा०—आज्यग्रहणादिमन्त्रेषु सामान्येनाऽध्वर्यवे पुनर्विशेषेण यजमाने काण्डे पाठ्यमानेषु किमुभौ प्रयोक्तारौ विकल्पेन, समुच्चयेन वा अथान्यतर इति। तत्राऽऽध्वर्यवत्वे विकल्पे वा प्राप्ते।

द्वावित्याह। ननु च विशेषसमाख्यानात्केवलयजमानत्वमेव स्यात्। तत्र वयं विशेषसमाख्यां बलीयसीमिच्छामो, यत्र सकृदाम्नाम्। ये तु सामान्ये विशेषे च भेदेनाऽऽम्नायन्ते, तेषु यदि विशेषसमाख्याऽङ्गीक्रियते, ततः सामान्यपाठस्याऽऽनर्थक्यमेव स्यात्। एकविषयत्वे च सामान्यं विशेषो बाधते। सत्यपि त्वत्र मन्त्राभेदे पाठभेदाद्विषयान्यत्वम्। पाठस्य हि भेदेन प्रयोजनं कल्पयितव्यम्। न च तदुभयप्रयोज्यत्वादन्यत्संभवति। तस्मादुभावपीति।

ननु द्वयोः पाठयोरेकः स्वरूपप्रज्ञापनार्थं इतरो विनियोगार्थः स्यात्। तत्रापि मन्त्राणां कर्मप्रकाशनार्थत्वात्, अङ्गप्रधानानां च समानकर्तृकत्वाद्यत्रैवाऽऽज्यग्रहणादि कार्यमाम्नातं, तत्रैव समाख्यातेनैव कर्त्रा विनियोगो युक्तः। तत्रैव

च मन्त्रस्य प्रयोज्यत्वेनाऽवगतस्य कर्तृविशेषाकाङ्क्षा भवति, नेतरत्र । रूपमात्रप्रज्ञानस्यान्तरेणापि कर्मकालप्रयोगमध्ययनमात्रेणैव सिद्धत्वात् । आज्यग्रहणादि चासंदिग्धमाध्वर्यवम् तस्मान्न यजमानेन प्रयोक्तव्या इति ।

उच्यते । याजमानेऽपि रूपमात्रदेवाऽन्तरेणापि कार्यं प्रयोज्यत्वेनाऽवधारणादस्त्येव कर्त्रपेक्षेति यजमानकर्तृत्वसिद्धिः । किं पुनस्तेषां प्रयुज्यमानानां प्रयोजनम् ? उच्यते । यथैवाध्वर्युणा पदार्थाः कर्तव्याः तथैव यजमानेनाप्रमादार्थं प्रत्यवेक्षितव्याः । तद्यत्र मन्त्रा नाऽऽम्नायन्ते, तत्रोपायान्तरेण प्रत्यवेक्ष्यते, इह तु मन्त्रैरित्यर्थवत्ता ॥ १७ ॥

( इति सप्तमं द्व्याम्नातानामुभयप्रयोज्यत्वाधिकरणम् ॥ ७ ॥ )

न्या० सु०—आज्यग्रहण-स्रुग्व्यूहनमन्त्राणां सामान्यरूपेणाध्वर्यवसमाख्याते, विशेषरूपेण च याजमानसमाख्याते काण्डे पाठाद्विशेषसमाख्यया सामान्यसमाख्याबाधाद्याजमानतैव । यौगिकत्वाविशेषाद्वा सामान्यसमाख्याया अपि विशेषविषयतया कक्षान्तरितत्वाभावेन तुल्यबलत्वाद्विकल्प इत्यपि पक्षद्वयसम्भवात्, भाष्यकारीयस्य द्वेधा सन्देहस्योपलक्षणमात्रार्थत्वं मत्वा, स्वयं चतुर्धा सन्देहमाह—आज्येति ।

स्वाम्येव, अध्वर्युरेव वेति पक्षद्वयोक्त्यर्थान्यतरोक्तिः ॥ आयुर्मे देहीत्यात्माभिवादिपदसामर्थ्याख्येनलिङ्गेनाध्वर्यवसमाख्याबाधवदिहाप्यध्वर्युकर्तृकग्रहण-व्यूहनमन्त्रस्थेन 'गृह्णामीत्यनेन 'म इत्यनेन वा' आत्माभिवादिपदसामर्थ्याख्येन लिङ्गेन, आध्वर्युप्रयोज्यत्वावगतेर्यजमानसमाख्याबाधादाध्वर्यवसमाख्यायाश्चानुग्रहादध्वर्युनियमपूर्वपक्षस्यैव ज्यायस्त्वसूचनार्थं द्विविधपूर्वपक्षोक्तिमात्रपूर्वं सिद्धान्तमाह—तत्रेति । स्वामिनोपि प्रयोजककर्तृत्वात्तत्प्रयोज्यत्वेप्यात्माभिधायिपदसामर्थ्याविरोधं मत्वा विकल्पपक्षोप्युक्तः ।

स्वामिनियमपूर्वपक्षं शङ्कते—ननु चेति । द्विः पाठार्थवत्त्वान्यथानुपपत्त्या द्विःप्रयोगावगमाद्भिन्नविषयत्वेनाऽविरोधोपपत्तेः सामान्यसमाख्याया अपि बाधायोगोक्त्या निरस्यति—तत्रेति । सिद्धान्तमुपसंहरति—तस्मादिति ।

अध्वर्युनियमवादी स्वाशयं शङ्कते—न खिति । सिद्धान्ती निरस्यति—उच्यत इति । मन्त्रकार्यग्रहणव्यूहनानुष्ठानाभावे मन्त्रप्रयोगानर्थक्यं शङ्कते—किं पुनरिति । पदार्थाननुष्ठानेपि पदार्थस्मृतिं विना प्रत्यवेक्षणाख्यकार्यस्यानुष्ठानाशक्तेस्तत्स्मृत्यर्थत्वेनार्थवत्तामाह—उच्यत इति । पदार्थान्तरेषु प्रत्यवेक्षणस्याऽमन्त्रकत्वदर्शनादिहापि मन्त्रानाकाङ्क्षामाशङ्क्याह—तद्यत्रेति ॥ १७ ॥

भा० प्र०—श्रुति में "वाजस्य वा प्रसवेन" इत्यादि मन्त्र आध्वर्यवकाण्ड में एवं याजमान काण्ड में पृथक् पृथक् उल्लिखित है । इसलिए, इससे इस प्रकार का सन्देह होता है क्या दोनों के मध्य में जिस-किसी के पाठ करने से ही चलेगा, अथवा ये अथवा ये अध्वर्यु का ही पाठ्य होगा, या वे यजमान से ही पठनीय हैं अथवा दोनों

का पाठ्य है। इनमें पूर्वपक्षी ने कहा है कि नियमादृष्ट के लिए ही जब मन्त्रपाठ है और जिस किसी एक व्यक्ति के पाठ करने से ही जब चरितार्थ होता है, तब उभय का पाठ करने का कोई भी कारण नहीं है, प्रत्युत इससे गौरव ही होगा। इसमें सिद्धान्ती कहता है "द्व्यम्नातस्य अर्थवत्त्वात्" ऐसा होने से यह जो दो बार उल्लेख है, उसकी सार्थकता है—अन्यथा उभय काण्ड में उसका जो पाठ है, वह व्यर्थ हो जायेगा और एक व्यक्ति के पाठ करने से भी नियमादृष्ट होता है, किन्तु, नियमादृष्ट स्थल में दृष्ट होने से ही अपूर्व होकर रहता है और अनुष्ठेय स्मारकता ही मन्त्र का दृष्ट प्रयोजन है, किन्तु, इस स्थान में अध्वर्यु के पाठ में एवं यजमान के पाठ में मन्त्र का अर्थ भिन्न ही होता है, कारण, इस मन्त्र के पाठ में अध्वर्यु को यहा ज्ञान होता है कि इस मन्त्र से प्रकाशित कर्म का मैं अनुष्ठान करुँगा और इसके पाठ में यजमान का इस प्रकार बोध होता है कि मैं इससे प्रसक्त = प्रमादयुक्त असावधान नहीं होता है। इस प्रकार दृष्टार्थ से भिन्न ही होने से यह एक व्यक्ति के द्वारा पठित होने से सम्पूर्ण नियमादृष्ट नहीं होगा, अत एव ये सम्पूर्ण मन्त्र ही दोनों के लिए ही पाठ्य है।

"द्व्याम्नातेषु" = आम्नात अर्थात् श्रुति में दो बार उल्लिखित मन्त्रों में "उभौ" = दो व्यक्तियों को अर्थात् अध्वर्यु एवं यजमान दोनों ही वाचक होगा, "द्व्याम्नातस्य अर्थवत्त्वात्" = क्योंकि, इसमें ही श्रुति में जो दो बार उल्लेख है, उसकी सार्थकता है ॥ १७ ॥

## अथाष्टमभिज्ञस्यैव वाचनाधिकरणम्

## (८) ज्ञाते च वाचनं न ह्यविद्वान्विहितोऽस्ति ॥ १८ ॥ सि० ।

शा० भा०—वाजपेये श्रूयते—'क्लृप्तीर्यजमानं वाचयति उज्जितीर्यजमानं वाचयति' इति। अत्र संदेहः—किं ज्ञश्चाज्ञश्च सर्वो वाचयितव्यः, उत ज्ञ एवेति। किं प्राप्तम् ? अविशेषाज्ज्ञश्चाज्ञश्चेति प्राप्ते।

ब्रूमः—ज्ञ एवेति। कुतः ? न ह्यविद्वान्विहितोऽस्ति। यो ह्यविद्वान्नासावधिकृतः। सामर्थ्याभावात्। ननु प्रयोगकाले शिक्षित्वा प्रयोक्ष्यते, सामर्थ्यादधिक्रियेतेति। नेति ब्रूमः। वेदाध्ययनादुत्तरकाले प्रयोगः श्रूयते। न प्रयोगश्रुतिगृहीतं वेदाध्ययनम्। कुतः ? अनारभ्य कर्मणि वेदाध्ययनं श्रूयते—तस्मात्स्वाध्यायोऽध्येतव्य इति। सत्येतस्मिन्वचने, अग्निहोत्रं जुहुयात्, इत्येवमादिभिर्वेदोऽध्येतव्य इत्येतदुक्तं भवतीति न शक्यते कल्पयितुम। तत्र होममात्रे चोदिते वेदाध्यायी शक्त इत्यधिक्रियते, नाविद्वान्।

कियता पुनर्विदितेन विद्वानधिक्रियत इति। यावता विदितेन शक्तो भवति, यथोक्तं क्रतुमभिनिर्वर्तयितुम्। तावद्यो वेद, स तेन क्रतुनाऽधिक्रियते।

**ननु वेदमधीयीतेति वचनात्कृत्स्नो वेदोऽध्येतव्य इति भवति, न वेदावयवेनाऽधिक्रियत इति। उच्यते। क्रतूनां ज्ञानार्थं वेदाध्ययनं कार्यम्। तत्रान्यस्मिन्क्रतौ कर्तव्येऽन्यक्रतुज्ञानं न दृष्टाय भवति। तस्मात्क्रत्वन्तरज्ञानमधिकारे नाऽऽदर्तव्यम्। क्रत्वन्तरज्ञानाय क्रत्वन्तरग्रन्थः। सर्वे क्रतवः कथं ज्ञायेरन्पृथक् पृथगिति कृत्स्नस्य वेदस्याध्ययनं श्रूयते। तस्मात्स्वपदार्थज्ञोऽधिक्रियेतेति। तेनास्वपदार्थज्ञस्य कर्मैव नास्ति। कथमसौ वाच्येत। तस्मात्साध्वभिधीयते ज्ञ एव वाचयितव्य इति॥ १८॥**

**इत्यष्टमं अभिज्ञस्यैववाचयितव्यताधिकरणम्॥ ८॥**

त० वा०—यत्र 'यजमानं वाचयति' इति श्रूयते, तत्राऽविद्वानपि खण्डशः शक्यो वाचयितुमित्यनियमः। अथवा विद्वान्स्वयमेव ब्रूयात्। तत्र प्रयोजकव्यापारवैयर्थ्यं भवेत्। तस्मादविद्वानेव वाचयितव्य इति प्राप्ते।

**अभिधीयते न ह्यविद्वान्विहितोऽस्तीति।** यदि कामश्रुतिपरिगृहीतं वेदाध्ययनं भवेत् तः प्रयोगकालेऽप्याप्येत। तत्त्वाधानवदनारभ्य विधीयते—'तस्मात्स्वाध्यायोऽध्येतव्यः' इति। तथा सति चार्थापत्त्यभावात्सिद्धमेवेदं सर्वकर्माण्यग्निवद्गृह्णन्ति, न शिक्षणं प्रयुञ्जते। न च शिक्षितो वेदो भवति। तस्मात्प्राक्कर्मणो ये मन्त्राः पठिता स्तेऽङ्गत्वं प्रतिपद्यन्त इति, नाविदुषोऽधिकारोऽत्र। शक्यते च तत्रापि प्रैषवत्प्रयोजकव्यापारस्यार्थवत्ता सत्यामपि शक्तावप्रयुक्तो न ब्रूयादिति। तच्च प्रयोजकत्वं द्वेधा भवति—यदि वा खण्डशः समर्प्यते अथवा ब्रूहीत्यभिधीयत इति यथेष्टं कर्म।

**कियता पुनर्विदितेनेति**—वैशेषिकादयः स्वाशस्त्रेणाप्यनधिगतेनानधिकारं वदन्तीति स्पष्टनिरूपणार्थं पृच्छति? तत्र विद्वत्तायाः शक्त्युत्पादनद्वारेण प्रत्यक्षेणैवोपकारित्वाद्यावता **विदितेनेति।** यद्यपि स्वाध्यायग्रहणेन सकलो वेदः परिगृहीतः तथाऽपि दर्शपूर्णमासौ कुर्वाणस्य ज्योतिष्टोमिकमन्त्रब्राह्मणं न कचिदुपयुज्यत इति, असदपि नाधिकारं व्यावर्तयति, इष्टिवेदेनैवयोग्यतायाः सिद्धत्वात्। तेन तद्याजिनस्तावानेव स्वाध्यायः। यत्वसौ सकलः पठ्यते। तन्नित्यकाम्यनैमित्तिकानां कर्मणां यथोपपन्नकालत्वान्न ज्ञायते कतरत्कदा करिष्यत इति। तत्र कदाचिद्यन्न पठितं, तत्फलप्रार्थनानिमित्तं वा स्योपजायते। तत्र तदविद्वत्त्वादशक्नुवन्विहन्यते, तदानीं वाऽधीयानस्य व्रतनियमवदध्ययनासंभवात् कर्मभिश्च विशिष्टीक्रियोपात्तवेदनिराकाङ्क्षैस्तादृशस्याग्रहणाद्वैगुण्यप्रसङ्गः। कामश्रुत्यपरिग्रहाच्च सर्वैरनारभ्यवादविध्यधीतो वेदोऽपेक्षित इत्यवश्यं ब्रह्मचर्यकाल एव समस्तो वेदोऽध्येतव्यः। यदि तु कश्चिदशक्तो नाधीते सकलम्, अग्निहोत्रदर्शपूर्णमासमात्रं कथंचिदधिगच्छति। न तस्य तत्रानधिकारः। एवं

च सति बाह्यज्ञानं दूरविप्रकृष्टमेव। यत्त्वात्मज्ञानं, तेन विना प्रवृत्तिरेवास्ति अतः सर्वकर्मार्थमङ्गीकर्तव्यम् ॥ १८ ॥

( इति अष्टमं वाजपेयादावभिज्ञस्यैव वाचनाधिकरणम् ॥ ८ ॥ )

न्या० सु०—द्विराम्नातानामुभयप्रयोज्यत्वोक्त्या, सकृदाम्नातेष्वपि वल्प्त्यादि मन्त्रेषु वाचनश्रुतिसामर्थ्यादुभयप्रयोज्यत्वावगतेबु द्धिस्थेषु प्रसङ्गादनन्तरं तद्विशेषचिन्तासङ्गतेर्यजमानस्य चोद्देश्यत्वेन ज्ञातृत्वविशेषणायोगेपि वाजपेयेनाऽज्ञोऽधिक्रियते, ज्ञो वेति चिन्तायाश्च लक्षणासङ्गतत्वेपि वाचनसमाख्याया लोकेऽध्यापनाख्यशिक्षणवाचित्वप्रसिद्धेः तदनुसारादयं वाचयतिः शिक्षणार्थो। यज्ञस्यैवाधिकारात्, तस्य च शिक्षणनर्हत्वेन तद्विषयत्वसामर्थ्याख्याल्लिङ्गादुच्चारणसमर्थस्मरणावतारणाख्यप्रयुक्त्यर्थं इति यजमानाङ्गभूतवाचनस्वरूपचिन्ताफलत्वाल्लक्षणप्रकरणसङ्गत्योः स्पष्टत्वात्, वाचयतियुक्तवाक्यमात्रस्योदाहरणत्वोक्तिपूर्व्वं 'वल्प्ता ब्रूही'त्युच्चारणलक्षणायाः, कृत्स्नमन्त्रप्रागुच्चारणात्मिकाया वा प्रयुक्तेरज्ञं प्रत्यशक्यत्वात्पूर्वपक्षीयोगमाशङ्क्य, शिक्षणार्थवाचयत्याशयेनोपपादयन् पूर्वपक्षमाह—यत्रेति।

भाष्यकारीयोदाहरणस्योपलक्षणार्थत्वसूचनार्थो यत्रशब्दः। खण्डश इत्यनेन वाचयतेः शिक्षणार्थता सूचिता। स्वयमज्ञनियमेन पूर्व्वपक्षान्तरमाह—अथ वेति।

सिद्धान्तमाह—इतीति। ज्ञाते च वाचनमिति प्राक्कथितसूत्रावयवान्वयेन प्रतिज्ञा पूरणीया। कुत इत्यादिभाष्येण हेतुप्रश्नपूर्वशक्त्यभावेनाऽविदुषः कर्म्मकर्तृत्वेनाऽविधानाख्यापशूद्राधिकरणवक्ष्यमाणहेतूक्त्यर्थतया 'न ही'ति सूत्रावयवं व्याख्याय, द्विजातीनां शूद्रवच्छिक्षणानर्हत्वाभावात्प्रयोगकालशिक्षणेन शक्तिसम्भवं नन्विति भाष्येणाशङ्क्य, निराकर्त्तुं सिद्धाध्ययनपुरुषाधिकारत्वात्प्रयोगश्रुतिनामध्ययनानाक्षेपकत्वस्य द्वितीयाधानाधिकरणोक्तस्य नेतीति भाष्यस्मारितस्याप्यावृत्तनहीतिसूत्रावयवारूढत्वसूचनार्थं तत्पाठः।

पूर्वं व्यतिरेकमुखेनोपपत्तिमाह—न हीति। प्रश्नपूर्वं कामश्रुत्यनाक्षेपोपपादनार्थे कुत इत्यादिभाष्यं व्याख्यातुमाह—तत्त्विति। स्वाध्यायविधिविहितस्य शिक्षणस्य कर्मभिरनाक्षेपेपि वाचनविधिविहितस्य वल्प्त्यादिमन्त्रशिक्षणस्य प्राकरणिकत्वेनाक्षेपो भविष्यतीत्याशङ्क्य, विशिष्टानुपूर्वीकस्याक्षरराशेर्वेदत्वेन वल्प्त्यादिमन्त्रमात्रस्य शिक्षितस्य वेदत्वाभावाद्वेदात्मकानामेव च मन्त्राणां स्वाध्यायविधिसामर्थ्यात्कर्म्माङ्गत्वावगतेर्निराकर्त्तुमाह—न चेति।

विदुषः स्वयमेव वचने प्रवृत्तेः, अविदुषस्तु प्रयुक्तस्यापि प्रवृत्त्यशक्तेः प्रयोजकव्यापारवैयर्थ्यप्रसङ्गाद्वाचयतेस्तदर्थत्वायोगेन शिक्षणार्थत्वावसायादविद्वद्विषयत्वं द्वितीयपूर्वपक्षवार्तिकोक्तं निराकर्त्तुमाह—शक्यते च तत्रापीति। स्मृत्यर्थत्वं दृष्टान्तसूचितमुपपादयितुमप्रयुक्तोऽस्मरणान्न ब्रूयादित्युक्तम्। प्रैषवत्स्मारकत्वरूपस्य प्रयोजकत्वस्य वाचयत्यर्थत्वे ब्रूहीत्युच्चारणमात्रात्, प्रतीकसमर्प्पणमात्राद्वा स्मृतिसिद्धेर्याज्ञिकेष्टकृत्स्नोच्चारणा-

नर्थक्यप्रसङ्गात्तत्सार्थकतायै शिक्षणार्थत्वापत्तिमाशङ्क्य, तत्प्रैषसदृशं स्मारकत्वरूपं प्रयोजकत्वं प्रतीकांशसमर्प्पणं, ब्रूहीत्युच्चारणं चेति द्वेधा यद्यपि भवति, तथापि 'क्लृप्तीरिति व्याप्यत्ववाचिन्या द्वितीयया कृत्स्नशः स्मृतिव्याप्यत्वावगतेः कृत्स्नोच्चारणं च विना कार्त्स्न्येन व्याप्त्यशक्तेर्याज्ञिकेष्टं कृत्स्नमन्त्रोच्चारणानुष्ठानं युक्तमित्याह—**तच्चेति**। वाशब्दोऽपिशब्दार्थे। अशिक्षणार्थत्वेन स्तोकशः समर्प्पणानर्थक्यात्प्रतीकार्था खण्डोक्तिः। कियता पुनरित्यादिप्रश्नोत्तरभाष्यं प्रकृतानुपयोगादयुक्तमाशङ्क्य, अविदुषोऽनधिकारे—

'पुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्द्दश ॥' या. स्मृ. आ. श्लो. ३

इति स्मृतेः वैशेषिकैश्चाथातो धर्म्मं व्याख्यास्याम' इति स्वशास्त्रस्य धर्म्मव्याख्यार्थत्वोक्त्या स्वशास्त्राधीनधर्म्माधिकारोक्त्यापत्तेः चतुर्द्दशविद्यास्थानाभ्यासेनैवायुः पर्यवसानप्रसङ्गाद्धर्म्माननुष्ठानापत्तिशङ्कां निराकर्त्तुं तदनपेक्षाधिकारनिरूपणार्थं पृच्छतीत्याह—**कियता पुनरिति**।

वैशेषिकादिशास्त्रस्य धर्म्मानुष्ठानानुपयोगेनानपेक्षाया ज्ञातुं शक्यत्वान्निरूपणानर्थक्यशङ्कानिरासार्था स्पष्टोक्तिः। वेदोपि कृत्स्नो नापेक्ष्यते, किमुत वैशेषिकादिशास्त्रमित्येवमुत्तरोक्त्यर्थं यावतेति भाष्यं व्याचष्टे—**तत्रेति**। स्वाध्यायविधिवशात्कृत्स्नवेदाध्ययनस्याधिकारोपयोगावगतेः 'नन्विति भाष्येणाशङ्क्य, अदृष्टार्थत्वापत्त्या निरासार्थमुच्यत इत्यादिभाष्यं व्याचष्टे—**यद्यपीति**। कृत्स्नानुपयोगे कृत्स्नाध्ययनानर्थक्यशङ्कानिरासार्थस्य सर्व इति भाष्यस्याशयमाह—**यत्त्विति**। त्रिविधानां मध्ये काम्यनैमित्तिकानां यथासम्भवकालत्वादित्यावृत्त्या योज्यम्। एवञ्च सति यथा कृत्स्नाध्ययनोपपत्तिः, तथा दर्शयति—**तत्रेति**।

न केवलं वैगुण्यापत्तेः कर्म्मकालेऽध्यापनायोगः, किन्तु कर्मविध्यप्रयुक्तत्वादपीत्याह—**कामेति**। उपयोगिमात्रात्तर्ह्यधिकारोक्तिरनर्थिकेत्याशङ्क्याह—**यदि त्विति**। व्याख्यातप्रश्नाशयानतिक्रमादिदमुत्तरमयुक्तमाशङ्क्य, अतिशयोक्त्यर्थत्वेनोपपादयितुमाह—**एवञ्च सतीति**। शरीरादिव्यतिरिक्तात्मप्रतिपादकवाक्यानां तर्हि कर्म्मज्ञानानुपयोगात्सगुणोपासनवाक्यवच्चाभ्युदयफलत्वाभावात्, निर्गुणोपासनवाक्यवद्वाऽपवर्गफलत्वाभावादनर्थकमध्ययनं स्यादित्याशङ्क्याह—**यत्त्विति** ॥ १८ ॥

भा० प्र०—श्रुति में वाजपेय प्रकरण में "क्लृप्तीर्यजमानं वाचयति" यजमान को मन्त्र का पाठ कराना चाहिए इत्यादि उपदिष्ट किया गया है। "आयुर्यज्ञेन कल्पताम्" 'क्लृप्' धातुयुक्त मन्त्रों का नाम क्लृप्ति मन्त्र है। ये क्या अनभिज्ञ यजमान को पाठ कराना होगा अथवा अभिज्ञ ही उनका पाठ करेगा यही संशय है।

इसमें पूर्वपक्षी का कहना है कि अभिज्ञ व्यक्ति को ही पाठ करना होगा—यह वचन जब नहीं है और अनभिज्ञ को भी शिक्षा देने पर वह भी पाठकर सकता है, तब वह अभिज्ञ एवं अनभिज्ञ सभी से पाठ्य है।

इसके उत्तर में सिद्धान्ती कहता है "ज्ञाते च वाचनम्" ज्ञानवान् अभिज्ञ व्यक्ति ही पाठ करेगा, कारण, "न हि अविद्वान् विहितः अस्ति"—अनभिज्ञ व्यक्ति कर्म का अधिकारी नहीं, यह अध्ययन विधि से निरूपित है।

"ज्ञाते च वाचनम्"—ज्ञात मन्त्र का ही वाचन अर्थात् पाठ करेगा, "हि" = क्योंकि, "अविद्वान् न विहितः अस्ति" = अविद्वान् व्यक्ति विहित अर्थात् अधिकारी नहीं है ॥ १८ ॥

इति अष्टम वाजपेय आदि में अभिज्ञ का ही वाचन अधिकरण।

## अथाष्टमं द्वादशद्वन्द्वानामाध्वर्यत्वाधिकरणम्

## (९) याजमाने समाख्यानात्कर्माणि याजमानं स्युः ॥ १९ ॥ पू० ।

शा० भा०—स्तो दर्शपूर्णमासौ। तत्र यजमानकाण्डे कर्माण्याम्नातानि द्वादशद्वन्द्वानि वत्सं चोपावसृजति, उखां चाधिश्रयति, अव च हन्ति, दृषदुपले च समाहन्ति, अधि च वपते, कपालानि चोपदधाति, पुरोडाशं चाधिश्रयति, आज्यं च, स्तम्बयजुश्च हरति, अभि च गृह्णाति, वेदिं च परिगृह्णाति, पत्नीं संनह्यति, प्रोक्षणीश्चाऽऽसादयति, आज्यं च' एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोः। इति। अत्र संदेहः—किमेतान्यध्वर्योः कर्माणि, उत यजमानस्येति, किं प्राप्तम्? याजमाने समाख्यानात्कर्माणि याजमानं स्युः। विशेषसमाख्यानाद्याजमानानीति गम्यते। यथा पोत्रीयं नेष्ट्रीयमिति ॥ १९ ॥ पूर्व०।

त० वा०—उखाधिश्रयणावहन्त्यादीनां द्वादशानां कर्मद्वन्द्वानां याजमाने, आध्वर्यवे च पठितानां ह्याम्नातमन्त्रवदुभाभ्यां प्रयोक्तुमशक्यत्वात् याजमानकर्तृकत्वमिति ॥ १९ ॥

न्या० सु०—उखावसर्ज्जनाधिश्रयणावघातसमाघाताधिवापोपधानाधिश्रयणहरणाभिग्रहणपरिग्रहणसन्नहनासादनाख्यानां द्वादशानां कर्म्मणामाध्वर्यवसमाख्याते काण्डे, प्रत्येकं याजमानसमाख्याते च द्वन्द्वत्वेन पाठाद् द्वयाम्नातमन्त्रवदुभयप्रयोज्यत्वापत्तेः पूर्वसिद्धान्तपक्षयोर्द्वयोरप्यसम्भवशङ्कानिरासपूर्वं पूर्व्वपक्षमाह—उखेति।

गार्हपत्यसमीपस्थस्य वत्सोपावसर्ज्जनार्थं गोसमीपं गत्वा, पुनरुखाधिश्रयणार्थं गार्हपत्यसमीपगमने विक्षेपापत्तेः पश्चात्पठितस्याप्यधिश्रयणस्य प्रागनुष्ठानसूचनायादितोक्ता। पठितोक्त्या सूत्रे पाठहेतुकाख्यसमाख्यानादित्यध्याहारः सूचितः। श्रुतिस्थाया द्वन्द्वोक्तेर्द्वन्द्वभूतानि द्वादश कर्माणीत्येवं कर्म्मविशेषणत्वेन व्याप्यत्वलक्षणप्राधान्यसूचनार्थं कर्म्मद्वन्द्वानामिति कर्म्मधारयपश्चान्निपातितस्यापि द्वन्द्वशब्दस्य विशेषणत्वेनैव विवक्षिततया कर्म्मप्राधान्यनपगमात्कर्मणां द्वादशत्वविशेष्यतया तत्सापेक्षाणामपि द्वन्द्वशब्देन सह कर्म्मधारयसमासाविघातः। उभयप्रयोज्यमन्त्रचिन्तानन्तरमुभयप्रयोज्यत्वहेतुद्वयाम्नानसद्भावेपि

कर्म्मणां द्विरनुष्ठानानाम्नानादनुभयप्रयोज्यानां बुद्धिस्थत्वात्प्रासङ्गिकसङ्गतिसूचनार्थो दृष्टान्तः । सूत्रे स्युरिति क्रियाविशेषणत्वाद्याजमानोक्तेरेकवचनान्तत्वाविरोधः ॥ १९ ॥

भा० प्र०—श्रुति में दर्शपूर्णमास प्रकरण में याजमान काण्ड में "वत्सं चोपावसृजति उखां चारिश्रयति" इत्यादि वाक्य में द्वादश कर्मद्वन्द्व सम्पादन उपदिष्ट है। यह क्या समाख्या के अनुसार यजमान का कर्तव्य है अथवा यह अध्वर्यु का अनुष्ठेय है—यही संशय है। इसमें पूर्वपक्षी का कहना है कि "कर्माणि यजमानं स्युः" ये जो बारह द्वन्द्वकर्म सम्पादन है वह याजमान अर्थात् यजमान सम्बद्धीय = यजमा का अनुष्ठेय होता है—यही स्थिर है, कारण, "याजमाने समाख्यानात्"—ये याजमान काण्ड में पठित है और जो याजमान काण्ड में पठित है, वह यजमान का ही स्वयं अनुष्ठेय है।

"याजमाने समाख्यानात्" = याजमान काण्ड में समाख्या होने से, "कर्माणि" = वे सभी कर्म, "याजमानं स्युः" = यजमान सम्बन्धीय होगा। इति पूर्वपक्ष ॥ १९ ॥

**अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ॥ २० ॥ सि० ।**

शा० भा०—अध्वर्युर्वा कुर्यादेतानि । तदर्थो ह्यध्वर्युः परिक्रीत इति, समाख्यानादवगम्यते । आध्वर्यव एव सर्व इमे पदार्थाः समाम्नाताः । याजमाने, एषां द्वन्द्वतोच्यते । द्वन्द्वता च—समभ्यासक्रिया । तत्राध्वर्युः पदार्थान्करिष्यति, यजमानेनापि समभ्यासीकरणमित्येतदशक्यम् । तत्र 'अङ्गगुणविरोधे च तादर्थ्यादिति द्वन्द्वतागुणो बाधितव्यः । तस्मादाध्वर्युवा एते पदार्था इति ।

यदुक्तं समाख्यानादिति । तत्परिहर्तव्यम् । उच्यते । न्यायपूर्वं समाख्यानं, समाख्यानाद्यजमानेन द्वन्द्वता संपादयितव्या । इदं चेदं च संपादयेति यजमानो ब्रूयात् । केषुचिच्चात्र पदार्थेषु यजमानस्यानुमन्त्रणम् । तन्निमित्ता समाख्या भविष्यति । अपूर्वं त्वपकृष्येत । यदुक्तं यथा पोत्रीयं, नेष्ट्रीयम् । एवमत्रापीति । तदुच्यते । युक्तं तत्र विशेषसमाख्यानात् । इह तु द्वन्द्वता याजमानीया । पदार्थास्त्वाध्वर्युवा एव । तस्माददोषः ॥ २० ॥ सि० ।

इति नवमं द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् ॥ ९ ॥

त० वा०—अनुत्पन्नानां द्वन्द्वत्वापादनाशक्तेर्विधायकशब्दाभावाच्च नैषां याजमान एवोत्पत्तिः । किं तर्हि ? आध्वर्यवे । तत्र च कर्त्राकाङ्क्षा, तदर्थश्च परिक्रय इत्यवगते कर्तरि, न द्वन्द्वाम्नानवेलायामपेक्षाऽस्तीति यजमानकर्तृत्वानुपपत्तिः । तत्र स्वरूपस्यासति यजमानसंबन्धे द्वन्द्वता कथं याजमानी क्रियेत । न च सा कर्त्रन्तरेण क्रियमाणानां संभवति । समासन्नकरणं हि द्वन्द्वता । न चान्यकर्तृकां क्रियामन्यः समासन्नां कर्तुं समर्थः । न च समासन्नकरणानुरोधेन

क्रियास्वरूपमपि यजमानं संभवति । अतोऽङ्गगुणविरोधन्यायात् अप्याध्वर्यवमेव । यजमानस्तु स्मारयिष्यति द्वन्द्वतामिति, समाख्यार्थवत्ता ॥ २० ॥

( इति नवमं द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् ॥ ९ ॥ )

न्या० सु०—अध्वर्युर्वेति भाष्येणाध्वर्युः कर्म्माण्येतानि कुर्यादाध्वर्यवसमाख्यानादेतत्कर्म्मार्थत्वावगतेरित्येवं द्वितीयान्तविपरिणतकर्मशब्दानुषङ्गकुर्याच्छब्दाध्याहाराभ्यां सूत्रपूर्वार्द्धे व्याख्याते, काण्डद्वये पठितानां कथमाध्वर्यवसमाख्या साधारणीत्याशङ्कानिरासार्थमाध्वर्यव एवेति भाष्यं व्याचष्टे—अनुत्पन्नानामिति । गुणार्थमपि श्रुतानां याजमानसमाख्योपपत्तिमाशङ्क्य, कर्त्राकाङ्क्षायां सत्यां समाख्यायास्तन्नियामकत्वात्, कार्यत्वावगत्याख्योत्पत्तिकाल एव च कर्त्राकाङ्क्षणात्समाख्ययाऽध्वर्युकर्तृकत्वेऽवगते द्वन्द्वाम्नानकालेनाऽऽकाङ्क्षितं कर्त्तारं सत्यपि समाख्या न नियच्छतीत्याह—तत्र चेति । तदर्थो ह्यध्वर्युः परिक्रीत इति भाष्ये परिक्रयतादर्थ्योक्तेः कर्त्राकाङ्क्षासूचनार्थत्वोक्त्यै तदर्थश्चेत्युक्तम् ।

पदार्थस्वरूपाणामध्वर्युकर्तृकत्वेऽपि समभ्यासक्रियाख्याया द्वन्द्वताया यजमानकर्तृकत्वशङ्कानिरासार्थं तत्रेति भाष्यं व्याचष्टे—तत्रेति । समभ्यासीकरणोक्तिव्याख्यार्था समासप्रकरणोक्तिः । तत्राङ्गगुणेति भाष्यं द्वन्द्वतानुरोधेने स्वरूपस्यापि यजमानकर्तृकत्वशङ्कोत्तरत्वेन व्याख्यातुमाह—न च समासन्नेति । यत्समाख्यानं यजमानकर्तृकत्वायोक्तं, तदध्वर्युस्मारणे समाख्याया यजमाननियामकत्वान्न्यायावगताध्वर्युकर्तृकत्वानुसारीत्येवंसूत्रोत्तरार्द्धव्याख्यार्थे यदित्यादिभाष्ये सम्पादयितव्योक्तिः । सम्पादयेति ब्रूयादित्यनेन तदाचष्टे इत्यस्मिन्नर्थे णिचमङ्गीकृत्य सम्पाद्यत्वेन स्मारयितव्येत्येवं व्याख्यातेति सूचयितुमाह—यजमानस्त्विति ॥ २० ॥

भा० प्र०—पूर्वोक्त पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "अध्वर्युर्वा तदर्थो हि" अध्वर्यु आदि ऋत्विजों का यजमान के कर्तव्य कर्मों के सम्पादन करवाने के लिए दक्षिणा देकर परिक्रय किया जाता है और साधारण होमादि कर्म जब अध्वर्यु का ही कर्तव्य है तब ये बारह द्वन्द्व कर्म भी अध्वर्यु का ही अनुष्ठेय होगा। यजमान काण्ड अवान्तर काण्ड है, किन्तु, आध्वर्यव काण्ड ही महाकाण्ड है, इस अध्वर्यव काण्डरूप महाकाण्ड में हो ये बारह कर्म उपदिष्ट है, अतः, उसके अनुसार वह अध्वर्यु का ही कर्तव्य है। यदि यह कहा जाय कि आध्वर्यव समाख्या व्यापिका एवं याजमान समाख्या व्याप्या है, इसलिए, व्याप्य का बाध होने से वह निरवकाश होने से निरवकाश से सावकाश का ही बाध होना उचित है, कारण, सावकाश का बाध होने से अन्य स्थल में उसका विषय है, अतः, उसका सर्वथा अप्रामाण्य नहीं होता है, किन्तु, वह विशेष स्थल को छोड़कर निरवकाश से सावकाश ही बाध होता है। ऐसी स्थिति में निरवकाश याजमान समाख्या से सावकाश अध्वर्यु की समाख्या का बाध होना उचित है। इसमें उत्तर में कहा गया है कि "न्यायपूर्वं समाख्यानम्" = यह सत्य है

कि निरवकाश से ही सावकाश का बाध होना उचित है, किन्तु, समाख्या भी यदि न्याय विरुद्ध होगी तो यह सङ्गत नहीं है, कारण, ऐसी स्थिति में समाख्या की विनियोजकता ही नहीं रहेगी, यहाँ याजमान समाख्या से आध्वर्य समाख्या का बाध होने पर न्याय का विरोध ही होगा। क्योंकि, आध्वर्यव काण्ड के अनुसार द्वन्द्वता सम्पादन यजमान का अनुष्ठेय है और द्वन्द्वता सम्पादन कहने से दो दो क्रियाओं का अव्यवधान साधन अर्थात् अव्यवहित रूप में अनुष्ठान है, यह अव्यवधान सम्पादन दो ज्ञानों से नहीं हो सकता है, कारण, एक व्यक्ति दो क्रियाओं का एक के बाद एक का सम्पादन करेगा एवं दूसरा व्यक्ति उसका अव्यवधान करेगा—यह दृष्ट विरुद्ध है, इसलिए, अध्वर्यु एवं यजमान इनका एक व्यक्ति कर्तृत्व बाधित ही होगा, ऐसी स्थिति में अध्वर्यु का कर्तृत्व पदार्थाश्रित एवं यजमान का कर्तृत्व पदार्थ का गुण अर्थ अङ्ग जो अव्यवधान, उसको आश्रित होने से अङ्गाश्रित धर्म से प्रधानश्रित धर्म का बाध होना न्याय विरुद्ध है अतः यजमान के कर्तृत्व के द्वारा अध्वर्यु के कर्तृत्व का बाध नहीं हो सकता है। अङ्गगुण और प्रधानगुण के विरोध में प्रधानाश्रित गुण प्रबल होता है यह "अङ्गगुणविरोधे च तादर्थ्यात्" ( ३।२।२६ सू० ) सूत्र में प्रतिपादित होगा, अतएव श्रुति में याजमान काण्ड में पठित होने पर भी द्वन्द्वता सम्पादन अध्वर्यु कर्म है।

"अध्वर्युः" = अध्वर्यु ही उसका अनुष्ठाना होगा, "वा" = पूर्व पक्ष के निरास के लिए है, "हि" = क्योंकि "तदर्थः" = उसके लिए अर्थात् इन सभी कर्मों के लिए ही अध्वर्यु आदि ऋत्विक् क्रीत होता है, "न्यायपूर्वं समाख्यानम्" = समाख्या न्यायपूर्वक अर्थात् युक्तिविरुद्ध न होने से ही वस्तु की प्राप्ति करता है ॥ २० ॥

इति नवम द्वादश द्वन्द्वता आध्वर्यवत्वाधिकरण।

### अथ दशमं होतुः करणमन्त्रानुष्ठातृत्वाधिकरणम्

## (१०) विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥ २१ ॥ सि०।

शा० भा०—अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः। तस्य यूपस्य परिव्याणे मन्त्रौ एक अध्वर्योः, 'परिवीरसि इति करणः। अपरो होतुः, युवा सुवासाः, इति क्रियमाणानुवादी। तयोश्चोदकपरम्परया कुण्डपायिनामयनं प्राप्तयोर्भवति संदेहः—कः पुनरसौ ? तत्र ऋत्विक्समास आम्मातः 'यो होता सोऽध्वर्युरि' ति। किं करणमाध्वर्यवं होता कुर्यात्, किं हौत्रं क्रियमाणानुवादिनमिति। किं प्राप्तम् ? अनियम इति प्राप्ते।

उच्यते—विप्रतिषेधे करणः स्यादाध्वर्यवः 'परिवीरसि' इति। न क्रियमाणानुवादी होतुर्युवा सुवासा' इति। कुतः ? समवायविशेषात्। द्वौ तत्र सम-

वायौ, होतुश्चोदकेन हौत्रेषु, प्रत्यक्षश्रवणेनाऽऽध्वर्यवेषु 'यो होता, सोऽध्वर्यु-रि'ति । एवं प्रत्यक्षमध्वर्योः कार्ये चोद्यते । प्रत्यक्षं चानुमानाद्बलीयः । तस्मा-दाध्वर्यवं करणं परिवीरसीति होता कुर्यात् । अथ हौत्रं विरुद्धं कः कुर्यात् ? इतरमन्यस्तेषां यतो विशेषः स्यात् । अन्यो होतृपुरुष एव स्यात् । यस्या-व्यापृतता, प्राधान्यविशेषो वा ॥ २१ ॥

इति दशमं होतुराध्वर्यवकरणमन्त्रानुष्ठातृत्वाधिकरणम् ॥ १० ॥

### अथ दशमं होतुः करणमन्त्रानुष्ठानत्वाधिकरणम्

त० वा०—'परिवीरसि' युवा सुवासाः इत्येतयोः करणक्रियमाणानुवादिनो-रध्वर्युणा, होत्रा च युगपत्प्रकृतौ प्रयुक्तयोः कुण्डपायिनामयने हौत्राध्वर्यवयोरेक-कर्तृकत्वादशक्तेरवश्यावहेयेऽन्यतरस्मि कतरः प्रतिगृह्यतामिति संदेहः । तत्रा-नियमः प्राप्नोति ।

यद्वा होतुः सिद्धस्वरूपस्याऽऽध्वर्यवविधानादजहत्स्वधर्मतया हौत्र एव युक्त इति प्राप्ते ।

अभिधीयते एतस्मिन्विप्रतिषेधे करणः प्रयोक्तव्यः । कुतः ? समवायविशेषात् ।

### अत्र केषाञ्चिन्मतेनोक्तस्य समाधानस्य निरासः

केचिदाहुः । प्रधानप्रत्यासत्तिः समवायविशेष इति । बहिरङ्गो ह्यारादुप-कारकरूपत्वात्क्रियमाणानुवादी, करणस्त्वन्तरङ्ग इति । तदकारणं यदि हि प्रधानद्वारेणाङ्गेषु कर्ताऽवतरेत् तत संनिकर्षविप्रकर्षावुपयुज्येयाताम् । स तु समाख्यया चोदकेन च प्रधानेष्वङ्गेषु चाविशेषेण लक्ष्यते । न च कश्चिदङ्गगुणा-विरोधन्यायः उभयोरङ्गत्वाविशेषात् । नच संनिपातित्वेन क्रियान्तरगतमारादु-पकारित्वं दुर्बलीक्रियते । न चायमतीवाऽऽरादुपकारकः । क्रियमाणपरिव्याण-स्मृत्यविच्छेदेन दृष्टसंस्कारजननात् । तस्मादानुमानिकाद्धौत्रसंबन्धात्प्रत्यक्ष-त्वेनैवाऽऽध्वर्यवस्य समवायस्य समवायस्य विशेषो भवति । कथम् ? एषा ह्यत्र वचनव्यक्तिः यदुत होत्रादयः श्रुतिवृत्ता अध्वर्य्वादिशब्दलक्षितेषु कर्मसु विधीयन्ते । तत्र हौत्रसंबन्धो होतुरानुमानिक आध्वर्यवसंबंधस्तु प्रत्यक्षः । यस्त्वजहत्स्वधर्म एव होताऽऽध्वर्यवेण संबध्य इति । संबध्येत, यदि तत्प्रयोगमात्रकृतमेवास्य होतृत्वं भवेत् यदि वा हौत्रं प्रत्यध्वर्युविधीयेत, होतारं वोद्दिश्याध्वर्युकर्मविधि-र्भवेत्, न तु तत्सर्वमस्ति । होता तावद्योग्यतामात्रेणाऽवधारितः सत्यपि च कर्मनिमित्तत्वेऽन्यानि सहस्राणि यदुपलक्षणं करिष्यन्ति ।

न च हौत्रं प्रत्यध्वर्युविधिरिह, होत्रध्वर्युशब्दयोरत्यन्तविभिन्नपुरुषवचनयोर्मु-ख्यसमानाधिकरण्याभावादन्यतरस्यावश्यकल्पनीये लक्षणावृत्तत्वे, विरोधनिमि-

त्त्वाल्लक्षणाकल्पनायाः प्रथमोच्चरिते होतृशब्दे किंचिदपि कल्पनाबीजं न पश्यामः। तेन 'मुख्यं वा पूर्वचोदनात्' इति तं स्वार्थवृत्तमेव गृहीत्वा अध्वर्युशब्दः कर्मलक्षणार्थोऽध्यवसीयते। तत्रापि तदुद्दिश्य होता विधीयते तद्धि क्रत्वर्थेन प्रयोजनवत्, तथा कर्ता। प्रधानं चैवंजातीयकेषूद्दिश्यते। ततश्च गुणभूतो होतोपादीयमानो यः प्रधानाविरोधी धर्मः तन्मात्रयुक्त एव संबध्यते। यदि तु होतुराध्वर्यवं विधीयेत, ततस्तस्य कर्मात्रिरुद्धं तत्प्रवर्तत इति न किंचिदपि हौत्रं हापयेत्। अप्राकृतकर्तृसंस्कारत्वप्रसङ्गाच्च आध्वर्यवस्य नैवं संबन्ध इति। पक्षान्तरमवलम्बितम्। तस्मादाध्वर्यवसंबन्ध एव प्रत्यक्षः, प्रधानं चेति सिद्धम्।

अत्र चोदयन्ति नैवात्रान्यतरस्यापि मन्त्रस्य होतृसंबन्धो बाधितव्यः। कुतः ?

**केषाञ्चिन्मतेनोक्तस्य समाधानस्य निरासः**

एककालप्रयोगे हि विरोधो मन्त्रयोर्भवेत्।
करणः प्राक् क्रियातस्तु परतश्चेतरः स्थितः॥

करणस्य हि 'मन्त्रान्तेन कर्मादिसंनिपातः' इत्यनेन न्यायेन प्राक्परिव्याणात्प्रयोगः। क्रियमाणानुवादिनस्तु तस्मिन्क्रियमाणे। तेन द्वावपि प्रयोक्तुं समर्थो होतेति।

नैतदस्ति। क्रियमाणता नाम संकल्पादेः कारकप्रचलनात्मप्रभृत्यासमाप्तेः। अतश्च पूर्वपदार्थसमाप्त्यैव पर्युपस्थापितं चेत्परिव्याणं वर्तते, स एव दीर्घः समस्तः क्रियमाणानुवादिनः कालः। एवमपि करणस्य तादृशादेव प्राक्प्रयोगादविरोध इति यद्युच्येत। तन्न। न हि 'परिवीरसि' इत्ययं संकल्पं, रशनादानं, संनिहितं, वा यूपम्, अवयवक्रियामात्रप्रवृत्तं वा परिव्याणं शक्नोति प्रकाशयितुम्। तस्मात्प्रधानक्रियारम्भ एव यूपसमीपस्थेन प्रयोक्तव्यः।

नन्वेवमपि दीर्घकाले कर्मण्येकदेशे करणम् एकदेशे च क्रियमाणानुवादिनं प्रयुञ्जानो न विरोत्स्यते। कथं न विरुध्यते ? यदा 'यूपाय परिवीयमाणायानुब्रूहि' इत्यनेन पाठक्रमात्क्रमेणः प्रैषसामर्थ्याच्चेतरो युगपदेव प्राप्यते, न च क्रियैकदेशे क्रियमाणानुवादिनः प्रयोग इत्यस्ति प्रमाणम्। स हि रशनान्तरं प्रयुक्तेन प्रैषेण प्रयोजितः दीर्घत्वादापरिव्याणसमाप्तेः कालमवरुणद्धि। तदन्तराले चाऽऽध्वर्यव आपन्नो न कथंचिदविरोधेनावतिष्ठते।

ननु च युगपत्कालता बाध्यताम् एककर्तृत्वं वेति वरं पदार्थप्राप्तेर्जघन्यत्वात्काल एव बाधितुं, नान्तरङ्गः कर्तृसंबन्ध इति। भवेदेतदेवं, यदि प्रकृतकालबाधमानौ मन्त्रौ स्वकार्याभ्न प्रच्यवेयाताम्। तयोस्तु य एव कालान्तरे प्रयुक्तः स एव स्वसामर्थ्यप्रतिपाद्यादर्थात्प्रच्यवते। सोऽयं लिङ्गविरोध आपद्यते।

ननु च 'यो होता सोध्वर्यूः' इत्यनया श्रुत्या लिङ्गं बाध्येत, यदि श्रुतिः स्यात्। वाक्यं त्विदं, तदपि लक्षणया। न ह्यत्र कस्यचिच्छब्दस्य श्रवणादिदं गम्यते हौत्राध्वर्यवे समानकर्तृके इति। किं तर्हि? होत्रध्वर्युशब्दसामानाधिकरण्यात्। सर्वत्र चैष संबन्धो वाक्यलक्षण इत्युक्तम्। तत्रापि चाध्वर्युशब्दस्य कर्मलक्षणार्थत्वाद्विप्रकृष्टता।

ननु लिङ्गमप्येतच्चोदकापेक्षित्वाद्विप्रकृष्टतरं भवेत्। वाक्यं ह्यर्थविप्रकर्षाल्लिङ्गेन बाध्येत। स चेह विपरीतोऽर्थविप्रकर्षः। न हि चोदकेनाऽप्राप्तयोर्मन्त्रयोरेककालप्रयोज्यत्वं गम्यते। तस्मादेककर्तृत्वमेव बलीय इति। उच्यते। सत्यमिह चोदकाङ्गीकरणम्। तत्तु मन्त्रस्वरूपे, न लिङ्गे द्वयोरपि च तदविशिष्टं प्राप्ते तु मन्त्रद्वये लिङ्गमौपदेशिकेनाविशिष्टम्।

स्यादेतदेवं यदि चोदकः प्रापयेत्। स तु प्रत्यक्षवाक्यशिष्टसमानकर्तृत्वाविरोधिमन्त्रद्वयं प्रापयितुमेव न शक्ष्यति। यद्यपि हि वाक्यं लिङ्गस्य नेष्टे, चोदकस्य तु स्वरूपप्रापणे पाश्चाद्भाविनमपि विरोधमालोच्य शक्तं निरोधं कर्तुम्। ततश्छिन्नमूलत्वाल्लिङ्गस्य दुर्बलतेति। उच्यते। सर्वं हि विरोधवेलायां बाध्यते। न चानवगतो विरोधो बाधकारणं भवितुमर्हति। तदिह चोदकप्राप्तिवेलायां न कश्चिदपि विरोधो लक्ष्यते। यस्तु प्राप्ते विरोधः तत्र लिङ्गं बलवत्तरमित्युक्तमेव। यदि चात्र द्वयोरपि समानकर्तृत्वं वाक्येन विधियेत, ततोऽप्येतस्य बलीयस्त्वमुद्भाव्येत। इहत्वाध्वर्यवस्य होत्रा सह संबन्धो विधीयते न हौत्रस्यापि। स हि चोदकेन प्राप्नोति। तेन यदि प्रत्यक्षत्वादेतस्य बाधकत्वं, ततः समाख्याकृतमेव क्रियमाणानुवादिनो होतृसंबन्धबाधनम्।

एवं च सति लिङ्गवाक्ययोरविरोधान्न किंचिदपि बाधिष्यते। आध्वर्यवप्रयोगश्च सेत्स्यति। यथा तु लिङ्गबलीयस्त्वमाश्रितमासीत् तथाऽन्यदेवानिष्टमापद्येत। यो ह्यस्य वाक्यस्य विषयः, स बाध्येत। न चास्य होतृहौत्रसंबन्धो विषयः। कस्तर्हि? हौत्राध्वर्यवसंबन्धः। ततश्च यथाप्रकृत्येव प्रयोगः स्यात्। तस्मात्समाख्याक्लृप्तमेवाऽऽतिदेशिकं संबन्धं बाधित्वा, समवायविशेषात्करणः प्रयोक्तव्य इति सिद्धम्॥ २१॥

( इति—होतुः करणमन्त्रानुष्ठातृत्वाधिकरणम्॥ १०॥ )

न्या० सु०—यत्र न्यायावगताध्वर्युकर्तृकत्वपूर्वं पोत्रीयादिसमाख्यानं भवति, तत्राध्वर्युरपकृष्येतेत्येवमर्थत्वेन स्पष्टत्वान्नेदं सूत्रं व्याख्यातम्॥ २१॥

भा० प्र०—अग्नीषोमीय पशुसंक्रान्त जो अनुष्ठान है, रशना = रस्सी विशेष से यूप का परिमाण = वेष्टन उनमें एक है। अध्वर्यु "परिवीरसि" इस कारण मन्त्र में उस कर्म

का सम्पादन किया जाता है और होता तब "युवा सुवासाः" यह मन्त्र क्रियमाण यूप-परिधान कर्म के अर्थ का प्रकाश करता है—यह पाठ करें। "कुण्डपाणिनामयन" नाम का एक कर्म है, उसके अन्तर्भूत पशुयाग में भी उपदेश विधि-परम्परा में उक्त कर्म प्राप्त होने से उसमें भी उसका अनुष्ठान करना होगा, किन्तु, वहाँ "यो होता अध्वर्यु" अर्थात् जो होता है वही अध्वर्यु है, इस विशेष वचन से होता को ही अध्वर्यु का कर्म करना होगा अर्थात् "परिवीरसि" इत्यादि मन्त्र का पाठ करते-करते रशना से यूप परिव्यान करना होगा। अब इस स्थल में सन्देह होता है कि होता के उक्तकर्म में पाठ्य "युवा सुवासाः" इत्यादि मन्त्र है, उसका पाठ होगा कि नहीं ? इसमें पूर्वपक्षी का कहना है कि होता पाठ्य मन्त्र का परित्याग करने का जब कोई साधन नहीं है तब होता उसका परित्याग नहीं कर सकता है, किन्तु उसे दोनों का ही पाठ करना होगा।

इसके उत्तर में सिद्धान्ती कहता है—"विप्रतिषेधे करणः" इन स्थलों में विप्रतिषेध अर्थात् विरोध होने से होता अध्वर्यु का कर्म करेगा, कि वरन् होता का कर्म नहीं करने में समर्थ न होने से एक कर्म का अवश्य ही परित्याग करेगा, ऐसी स्थिति में उसके पक्ष में उस समय अध्वर्यु का ही कर्म प्रत्यक्ष श्रुति विहित होने से आध्वर्यव कर्म ही अनुष्ठेय है। इसीलिए सूत्र में कहा गया है—"समवायविशेषात्" जो होत्र कर्म है वह अतिदेश प्राप्तकर्म आनुमानिक श्रुति विहित होने से प्रत्यक्ष श्रुति से बाधित होगा। यदि कहा जाय कि, होता का जो कर्म "युवा सुवासाः" इत्यदि मन्त्रपाठ है उसका क्या लोप हो जायेगा ? इसके उत्तर में कहा गया है "इतरम् अन्यः" अन्य विषय अन्य ऋत्विक् करेंगे। इसमें यदि यह कहा जाय कि सो यह व्यक्ति ऋत्विक् में होता को छोड़कर कौन क्या करेगा ? इनमें होता के बाद ही जिनकी प्राप्ति होती है वे ही विषय का सम्पादन करेंगे और 'मैत्रावरुण' नाम ऋत्विक् ही प्रत्यासन्न है, अतः, उसके अभाव में उसका प्रत्यासन्न अच्छावाका आदि ऋत्विक् व्यक्ति का कर्तव्य होगा।

विप्रतिषेधे—विरोध होने पर "करणः" = करणमन्त्र होता का ही पाठ्य होगा "समवायविशेषात्" = क्योंकि, समावाय में अर्थात् प्राप्ति सम्बन्ध में विशेष रहता है, "इतरम् अन्यः" = अन्य विषय अन्य लोग करेंगे, "तेषां" = उनमें "यतः" (यस्य) = जिसका, "विशेषः स्यात्" = विशेष रहेगा ॥ २१ ॥

इति दशमं होता का करणमन्त्रानुष्ठानाधिकरण।

### अथैकादशं प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम्

## (११) प्रैषेषु च पराधिकारात् ॥ २२ ॥ सि० ।

**शा० भा०—स्तो दर्शपूर्णमासौ। तत्र प्रैषाः समाम्नाताः 'प्रोक्षणीरासादय, इध्माबर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि, पत्नीं संनह्याऽऽज्येनोदेहि**

श० ब्रा० १-२. ३.२० ति। तत्र संदेहः—किं य एव प्रैषे, स एव प्रैषार्थे, उतान्यश्च प्रैषे, अन्यश्च प्रैषार्थे इति। किं प्राप्तम्? एक एव प्रैषप्रैषार्थयोरिति। कुतः? समाख्यानात्। अन्य इति चाश्रुतत्वात्। नन्वात्मनः प्रैषो विप्रतिषिध्यते। उच्यते। न प्रैषो भविष्यति। प्राप्तकाले लोटं वक्ष्यामः।

आह। प्राप्तकालेऽपि सति युष्मदादिष्वेवोपपदेषु मध्यमादयो व्यवस्थिताः। न पुरुषसंकरो भवति। उच्यते। सत्यां विवक्षायां युष्मदादिषु मध्यमादयः। यदा तव प्राप्तः काल इति विवक्ष्यते, तदा युष्मद्येव मध्यमो। नास्मदि, शेषे वा। यदा खलु क्रियायाः प्राप्तः काल इत्येतावद्विवक्ष्यते, न तव मम वेति, न तदा युष्मदादीनामनुरोधेन मध्यमादयो भवितुमर्हन्ति। न चेदं युगपद्विवक्षितुं शक्यते। पदार्थस्य प्राप्तः कालः, तव चेति। भिद्येत हि तथा वाक्यम्। तेन यदि वा निर्ज्ञाते पदार्थकाले तव काल इति शक्यते वदितुम्। यदि वा तवेति निर्ज्ञाते पदार्थस्य काल इति। तत्र पदार्थस्य कालो वदितव्यो, न तु युष्मदर्थस्य। तेन हि स्मृतेन प्रयोजनम्। स हि कर्तव्य इत्यवगतो, न तु युष्मदर्थस्तथा। तस्मात्समाख्यानादध्वर्योरेव प्रैषप्रैषार्थाविति प्राप्ते।

ब्रूमः—प्रैषेष्वन्योः, अन्यस्तदर्थेष्विति। कुतः? पराधिकारात्। परस्मिन् हि प्रैषे, उपपद्यते, नाऽऽत्मनीति। आह ननूक्तं प्राप्तकाले भविष्यतीति। उच्यते। न संभवति प्रैषे, प्राप्तकालता न्याय्या। तस्माद्युष्मदर्थो गम्यमानो न विवक्षित इत्युच्यते। संभवति चात्र प्रैषार्थः। तस्मात्प्रैषः। प्रैषश्चेत्, अन्यः प्रैषार्थ इति सिद्धम्॥ २२॥

इत्येकादशं प्रैषप्रैषार्थयोः पृथक्कर्तृकत्वाधिकरणम्॥ ११॥

त० वा०—प्रैषस्य प्रैषार्थस्य चाऽऽध्वर्यवसमाख्यातुल्यत्वादध्वर्युप्रयोजत्वेऽवधारिते कथमात्मनः प्रेष इति चेदाह नैवायं प्रैषः। किं तर्हि प्राप्तकालतायां लोटं वक्ष्याम इति प्रैषवादी त्वाह—प्रत्यगात्मविषया चेत्प्राप्तकालता विवक्षिता हन्तोत्तमपुरुषेण भवितव्यम्। न हि परविषययुष्मदर्थमन्तरेण मध्यमपुरुषो लभ्यते। प्रैषे तु स्वभावतः परविषयत्वात्सुलभ इति। परस्त्वाह-यदा समाख्यावगतात्स मानकर्तृत्वात्प्रैषबुद्धिरपनीता तदा प्राप्तकालत्वमभिधीयमानं किं क्रियाणामभिधीयतामुत कर्तॄणामिति क्रियाणामित्येव गम्यते। ता हि चोदितत्वात्प्रयोजनवत्यः प्रथमतरं प्रतीताः। तासां चानुष्ठानार्थं प्राप्तकालत्वस्मरणं दृष्टार्थम्। कर्तृप्राप्तकालप्रकाशने तु सर्वं विपरीतम् आख्यातेषु च प्रथमादेः पुरुषस्य कस्यचिदवश्यंभावित्वान्नान्तरीयककृत एव मध्यमपुरुषो भविष्यति। क्रियैव चोच्यते तव प्राप्तकाल इति। यदि यदि च कर्तुः प्राप्तकालत्वमुच्येत ततः किं कर्तुमिति साकाङ्क्षमेव स्यात्, अथ प्रोक्षण्यासादनादि कर्तुमिति, तथा

विशिष्टार्थंप्रेषणाद्वाक्यभेदः स्यात् । तस्मादपि क्रियायाः प्राप्तकालत्वं प्रकाश्यते । अथापि प्रैषोयमाश्रीयते तथाऽप्यात्मानमेव कथंचिच्छरीरशरीरिणोरवस्थान्तराणां वा भेदेन प्रेषकं प्रेष्य च व्यपदेक्ष्यतीति समानकर्तृत्वे प्राप्ते, ब्रूमः । प्रैषेषं चेतरमन्यः कुर्यादिति संबन्धः । कुतः । स्वभावेनैव तेषां परविषयत्वात्परिक्रयवत् । यत्तु नैवायंप्रैष इति । तदयुक्तम् । मन्त्ररूपादेव प्रैषप्रत्ययोत्पत्तेः । यो हि समानकर्तृकतया तं बाधते तेन समाख्यया लिङ्गं बाधितं स्यात् । न च प्राप्तकालतया लिङ्गविरोधः परिह्रियते । मध्यमपुरुषार्थस्यासंपादनात् । न च शब्दान्तरेणानुपाता क्रियैवं शक्यते वक्तुं तव प्राप्तः काल इति । यद्यपि च शक्यते तथापिऽपि न दृष्टः कश्चिदर्थः स्यात्, चेतनविषयत्वादीदृशस्य प्रयोगस्य । तथाऽऽत्मभेदपरिकल्पनायामपि नैवं दृष्टं प्रयोजनं, गौणताऽत्र स्थितैव । मुख्यं च कार्यं मन्त्राणामित्यवधारितम् । ततश्च यद्यपि प्राप्तकालतायामेव लोट्, तथापि परस्यैव सा कथ्यत इति न पराधिकारो निवर्तते । न च वाक्यभेदो विशिष्टार्थंप्रेषणात् अवश्यं चात्र विशिष्टताऽभ्युपगन्तव्या, प्रोक्षणीपदोपादानात् । न चैकपदोपात्तोऽनेकोऽर्थो वाक्यं भिनत्ति । सर्वाख्यातेषु क्रियाकर्तृसंख्योपग्रहपुरुषविशेषभावनानां युगपदुपादानस्यापरिहार्यत्वात् । न चेदृशं विशिष्टविधानं क्वचिन्नाभ्युपगन्तव्यम् । प्राप्तकालत्वे च क्रियायुष्मदर्थयोः पृथक्त्वाद्भेदेन शक्तिः कल्प्येत । प्रैषे तु तस्य नित्यमेव युष्मदर्थविषयत्वान्मध्यमपुरुषोऽनुवादः । एवं चैषा समाख्याबाधादन्यः प्रैषोऽन्यश्च प्रैषार्थ इति ॥ २२ ॥

( इत्येकादशं—प्रैषार्थयोर्भिन्नकर्तृत्वाधिकरणम् ॥ ११ ॥ )

न्या० सु०—एकस्मिन् पदार्थे द्वयोः कर्त्रोः प्राप्तयोर्विरोधे को ग्राह्य इति चिन्तिते, तद्वैपरीत्येनैकस्य कर्त्तुर्द्वयोर्मन्त्रयोः प्राप्तयोर्विरोधे बुद्धिस्थे, को ग्राह्य इति चिन्तायाः प्रासङ्गिकीं सङ्गतिं स्पष्टत्वादनुक्त्वा—

'परिवीरसि परित्वादैवीर्विशो व्ययन्तां परीमं रायस्पोषो यजमानं मनुष्या'

इति करणमन्त्रस्य,

'युवा युवासाः परिवीत आगात्स उ श्रेयान् भवति जायमानः ।
तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त' ॥

इति क्रियमाणानुवादिनश्च कुण्डपायिनामयने 'यो होता, सोऽध्वर्युः, स पोता य उद्गाता, स नेष्टा सोच्छावाको 'यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्त्ता यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुद्यः प्रतिप्रस्थाता, सोग्नीत्स उन्नेता, गृहपतिः, सुब्रह्मण्यः सुब्रह्मण्य इत्यृत्विक्समासाम्नानात्, एकप्रयोऽग्यपक्षेपि करणस्य परिव्याणप्राचीनत्वात्, इतरस्य तु परिव्याणासमकालत्वादविरोधोपपत्तेः सन्देहविषयत्वोपपादनार्थविप्रतिषेधशब्दोक्तविरोधोपपादनार्थं कः पुनरिति भाष्यमयुक्तमाशङ्क्योपपादयन् सन्देहमाह—परिवीरिति ।

सत्रेवरणाभावेन होत्रादिशब्दानां कर्म्ममात्रनिमित्तत्वादिह चानेककर्मकारित्वाद्धोतुरसिद्धत्वेनाध्वर्यवकर्तृतया विध्ययोगेन हौत्राध्वर्यवयोरेककर्तृकत्वविध्यवगतेरविशेषादनियमेन भाष्योक्तं तावत्पूर्वपक्षमाह—**तत्रेति**। यच्छब्द-तच्छब्दाभ्यां होतारमुद्दिश्याध्वर्यवविध्यवगतेः स्वयं पूर्वपक्षान्तरमाह—**यद्वेति**। होत्रस्य होत्रनङ्गस्यापि होतृशब्दार्थविशेषणत्वाद्धर्म्मतोक्तिः। सूत्रेण सिद्धान्तमाह—**इतीति**।

वृत्त्यन्तरकृतसमवायविशेषव्याख्यात्यागेन भाष्यकृतोऽन्यथाव्याख्या हेतूक्तचेतां दूषयितुमुपन्यस्यति—**तत्रेति**। कर्म्मादौ प्रयुक्तात्करणादेव स्मृतिसिद्धेः क्रियमाणपरिव्याणानुवादिनः सन्निपत्योपकारित्वायोगेनाभ्युपगम्यमानमप्यारादुपकारित्वाद्विप्रकर्षाख्यं बहिरङ्गत्वं न दौर्बल्ये कारणमित्येवं दूषयति—**तदिति**। प्रधानद्वाराङ्गेषु कर्त्तृप्राप्तौ क्रियमाणानुवादिनः प्रधान परिव्याणविप्रकर्षाद्दौर्बल्यं स्यात्। एकत्र प्राप्त्यपेक्षा, अन्यत्र प्राप्त्यपेक्षाख्यं विशेषं विनैव प्रधाने परिव्याणे, तदङ्गे च करणेऽध्वर्योः क्रियमाणानुवादिनि च होतुः प्रकृतौ समाख्यया, विकृतिषु च चोदकेन प्राप्तेर्न बलाबले विशेषः स्यादित्यर्थः।

या चाङ्गगुणविरोधन्यायाद्बहिरङ्गस्य बाध्यता वृत्त्यन्तरकारैरुक्ता। साप्ययुक्तेत्याह—**न चेति**। तस्मादङ्गगुणविरोधे च तादर्थ्यादिति बाध्यत इति टुप्टीकादर्शनात्परोक्तताऽस्य न्यायस्य गम्यते। सन्निपत्यारादुपकारित्वकृत एव तर्हि विशेषोऽस्त्वित्याशङ्क्याह—**न च सन्निपातित्वेनेति**। एकस्याः पशुपुरोडाशयागादिक्रियायाः सन्निपत्योपकारित्वसम्भवेऽनपेक्षितानेकादृष्टकल्पनापादकस्यारादुपकारित्वस्याऽयुक्ततैव दौर्बल्यमिष्टम्। क्रियमाणानुवाद्युच्चारणक्रियायाश्च करणोच्चारणक्रियातोऽन्यत्वान्न तत्सम्भवतीत्याशयः। करणेन च स्मृतौ कृतायामपि यावत्समाप्ति स्मृत्यविच्छेदस्यापेक्षितस्य क्रियमाणानुवादिना करणादारादुपकारिताप्यस्यास्तीत्याह—**न चायमिति**। मृदूक्तचर्थोतीवशब्दः। कीदृक्संस्कार इत्यपेक्षायां स्मृत्यविच्छेदरूपतेत्थम्भूतलक्षणार्थया तृतीययोक्ता दृष्टादृष्टसंस्कारकृतविशेषशङ्कानिरासार्था दृष्टोक्तिः। अतो द्वावत्रेति भाष्योक्तैव समवायविशेषव्याख्या युक्तेत्याह—**तस्मादिति**।

द्वयोरप्येककर्तृत्वे यस्यैतद्वाक्यार्थत्वात्प्रत्यक्षत्वं मत्वा पृच्छति—**कथमिति**। होत्राध्वर्युशब्दयोर्द्वयोरपि कार्यापत्त्या हौत्राध्वर्यवकारिपरत्वाद्गौणतापत्तेर्हौत्राध्वर्यवयोरेककर्तृकत्वविध्ययोगाद्धोताध्वर्यवकारीत्यादिवाक्यार्थावगतेनाध्वर्यवान्वयस्यैव प्रत्यक्षत्वं, नेतरस्येत्युत्तरमाह—**एषा हीति**।

स्वोक्तं पूर्वपक्षं दूषणायानुभाषते—**यस्त्विति**। होतुः प्रसिद्धस्वरूपस्य आध्वर्यवविधाने पूर्वपक्षिणोक्तेऽपि तस्मिन्निरस्ते, यदि कश्चित्सिद्धान्त्यभिमतमाध्वर्यवोद्देशेन होतृविधिमभ्युपेत्यापि, क्रियमाणानुवादिप्रयोगं विना होतृत्वासिद्धेर्होतृशब्द वा कार्यापत्त्या हौत्रकारिपरमाश्रित्य हौत्रमुद्दिश्याध्वर्युविध्यभ्युपगमेन हौत्रान्वयस्यैव प्रत्यक्षत्वात् क्रियमाणानुवाद्यत्यागं शङ्कते, तमपि निराकर्तुं त्रेधा विकल्प्य दूषयति—**सम्बध्येतेति**। सर्वहौत्रप्रयोग-

कृतेपि होतृत्वे क्रियमाणानुवाद्यत्यागापत्तावपि पदार्थानां प्रत्येकमनुष्ठेयत्वेन प्रत्येकमेव होतृकार्यत्वाद्धौतृशब्दार्थविशेषणत्वोपपत्तेः सर्वहौत्रप्रयोगानपेक्षत्वात्क्रियमाणानुवादिप्रयोगमात्रकृतमेवेत्युक्तम् । आद्यकल्पायोगमुपपादयति—**होता तावदिति** । द्वितीयायोगमुपपादयति—**न चेति** । तृतीयायोगं स्वाभिमतोद्देश्योपादेयोपपादनद्वारा तावदुपपादयति—**तत्रापीति** ।

होतुरपि हौत्रद्वारा प्रयोजनवत्त्वेपि साक्षात्प्रयोजनवत्त्वाभावादध्वर्युकर्मैवोद्दिश्यहोता विधीयत इत्यर्थः । प्रयोजनाकाररूपेषु चोद्देशेपूद्देश्यस्य देशकालवद् गुणत्वायोगात्प्राधान्यावगतेराध्वर्यवं प्रति होतुर्गुणतयोपादेयत्वेन तदविरोधिविशेषणमात्रयुक्तस्याध्वर्यवान्वयौचित्यात्क्रियमाणानुवादित्यागोपपत्तेः सिद्धान्तसिद्धिमाह—**प्रधानं चेति** । आध्वर्यवविधिपक्षेपि तर्हि तथैव क्रियमाणानुवादित्यागोपपत्तेस्तन्निरासानर्थक्यमाशङ्क्य तस्मिन् पक्षे होतुः प्राधान्यात्तद्धर्माविरोधेनैवाऽध्वर्यवप्रवृत्तेः करणविरोधिनः क्रियमाणानुवादिनस्त्यागायोगमाह—**यदि त्विति** । होत्रुद्देशेन चाध्वर्यवविधानादाध्वर्यवस्य होतृसंस्कारत्वापत्तेः तस्य च प्रकृतावदृष्टत्वेनायुक्तत्वान्नायं पक्षो युक्त इति साक्षात्तृतीयकल्पायोगमाह—**अप्राकृतेति** । स्वोक्तपूर्वपक्षदूषणार्थस्य कल्पत्रयनिरासस्य भाष्योक्तपूर्वपक्षदूषणेप्युपयोगसाम्यसूचनार्थं यदस्माभिराध्वर्यवोद्देशेन होतृविधिरूपं पक्षान्तरं, यदाध्वर्यवं तस्य, यो होता स कर्त्तव्येवमुपादेयस्यापि होतुः स्वकर्म्मानुपलक्षितस्याध्वर्यवं प्रत्युपादेयत्वायोगापत्तेरुपलक्षणार्थत्वेन यच्छब्दान्वयोपपत्तिं मत्वाऽङ्गीकृतम् । तदस्मादेव हेतोरित्याह—**इतीति** । इतिकरणो हेत्वर्थः । भाष्योक्तं समवायविशेषव्याख्यामुपसंहरति—**तस्मादिति** ।

प्रधानं चैवञ्जातीयकेष्विति वार्त्तिककृतयाध्वर्यवप्राधान्योक्त्या प्राधान्याश्रयत्वेनापि समवायविशेषोक्तिर्व्याख्याता भवतीति सूचनार्थं **प्रधानं चे**त्युक्तम् । समवायविशेषेप्यविरोधाद्बाधायोगं शङ्कते—**अत्रेति** । प्रश्नपूर्वमविरोधमुपपादयति—**कुत इति** । श्लोकं व्याचष्टे—**करणस्य हीति** । मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्म्मादिसन्निपातः स्यात्सर्वस्य वचनार्थत्वादि १२-३-२५ति द्वादशाधिकरणसूत्रस्य मध्यमावयवः पठितः । परिव्याणकारकस्य रशनाख्यस्य दानलक्षणाद्व्यापारणात्प्रभृति परिव्याणसमाप्तिपर्यन्तं क्रियमाणानुवादिकालत्वात् करणस्य चोत्तरवेदेः प्रत्यक्स्थितां रशनामादाय प्राक्स्थितयूपसमीपगमनोत्तरकालपरिव्याणप्राक्कालत्वेन क्रियमाणानुवादिकालान्तः प्रयोज्यत्वाद्विरोधपरिहाराशक्तेर्निरस्यति—**नैतदिति** ।

रशनादानस्य यूपसमीपगमनस्य वा परिव्याणत्वाभावात्ततः प्रभृति परिव्याणस्य क्रियमाणत्वायोगमाशङ्क्य, सङ्कल्पेन क्रियारम्भोपलक्षणात्तण्डुलविक्लेदनाख्यपाकसङ्कल्पपूर्वकस्य काष्ठक्षालनादेः पाकत्ववत्परिवेष्टनाख्यपरिव्याणसङ्कल्पपूर्वकत्वाद्रशनादानादेः परिव्याणत्वोक्त्यै सङ्कल्पादेरित्यतद्गुणसंविज्ञानबहुव्रीहिणा सङ्कल्पपूर्वकत्वं कारकप्रवचनस्योक्तं रशनादानमात्रविषयसङ्कल्पपूर्वकं रशनादानं न परिव्याणविषयसङ्कल्पपूर्वकमित्याशङ्क्य, पदार्थविषयत्वात्सङ्कल्पस्य रशनादानादेः परिव्याणसङ्कल्पपूर्वकत्वाद्वर्त्तत इत्युक्तम् ।

रशनादानात्प्रभृति परिव्याणस्य क्रियमाणत्वे तत्प्राक्करणप्रयोगादविरोधं शङ्कते—एवमपीति। परिवीशब्दस्यादानोक्तावपिशब्दस्य वा सन्निहितयूपोक्तावशक्ते रशनादानात्प्राक्प्रयोगायोगेन निरस्यति—तन्नेति।

सङ्कल्पप्रकाशनाशक्तिर्दृष्टान्तायोक्ता। रशनादानादेः स्वातन्त्र्येणाऽप्रकाशनेऽपि परिव्याणोपक्रमात्मकत्वेन तदवयवत्वात्तद्रूप्येण प्रकाशनोपपत्तिमाशङ्क्य, प्रदानोपक्रमत्वेनावदानादेस्तदवयवत्वेपि प्रदानार्थेन याज्यादिनेव परिव्याणार्थेन करणेन तदुपक्रमार्थत्वात्तदवयत्वेनोपचरितस्यापि रशनादानादेर्वस्तुतः क्रियान्तरत्वात्प्रकाशनं योगोक्त्येऽवयवभूतरशनादानादिक्रियामात्ररूपेण प्रवृत्तमपि परिव्याणं प्रकाशयितुं परिवीशब्दो न शक्नोतीत्युक्तम्। कदा तर्हि प्रयोज्य इत्यपेक्षायामाह—तस्मादिति।

यूपसमीपस्थानानन्तकरणप्रयोगेऽपि रशनादानपरिव्याणप्रैषमन्त्रोच्चारणनाभिपरिमितयूपप्रदेशपरिव्याणार्थंतत्समीपरशनाधारणनिष्पर्यावर्त्तनीनष्टकाग्रन्थिकरणसमूहात्मकत्वेन दीर्घकालस्य परिव्याणकर्म्मणः क्रियमाणानुवादिना व्याप्त्यशक्तेस्तदेकदेशप्रयोज्यत्वावगमात्कस्मिन्नेकदेशे प्रयोज्यइत्यपेक्षायां परिवेष्टनातम्भप्राचीनस्य रशनादानादेः परिव्याणैकदेशस्य करणेनावरोधात्परिवेष्टनारम्भप्रभृतौ परिव्याणैकदेशे क्रियमाणानुवादिप्रयोगेणाविरोधं शङ्कते—नन्विति। परिवेष्टनारम्भप्रभृतौ परिव्याणैकदेशे क्रियमाणानुवादिप्रयोगाभ्युपगमेऽपि क्रियमाणानुवादिप्रैषानन्तरं करणपाठात्करणस्य च परिवेष्टनारम्भकालताया निर्ज्ञातत्वात्तत्प्राग्भावियूपसमीपरशनाधारणकाले पाठक्रमात्प्रयोज्यतयाऽवगतेन प्रैषमन्त्रेण प्रेषणसामर्थ्यात्क्रियमाणानुवादिनः करणेन सह यौगपद्यप्राप्तेर्निरस्यति—कथमिति। करणस्य 'मन्त्रान्तेन कर्म्मादिसन्निपात' इति न्यायेन ज्ञातकालस्याज्ञातकालेन प्रैषेण कालज्ञानानुपपत्तौ कारणकालेनैव प्रैषकालस्य ज्ञेयत्वात्करणेन सहेतरस्य यौगपद्योक्त्यै करणः क्रियमाणानुवादी च प्रैषसामर्थ्याद्युगपत्प्राप्येते इतीतरश्चेत्येवं चशब्दान्वयाभ्युपगमेनोक्ते प्रैषस्याज्ञातकालत्वात्क्रियमाणानुवादिकालज्ञापनाशक्तिमाशङ्क्य, प्रैषकालज्ञापनार्था पाठक्रमोक्तिरित्येवं व्याख्येयम्। रशनादानस्य परिव्याणादित्वेप्यसिशब्दयुक्तस्य करणस्यासन्निहितयूपोक्त्यशक्तेर्यूपसमीपगमनोत्तरकालप्रयोज्यत्वात्ततः प्राक्पठितस्यापि प्रैषस्य रशनादानान्तरयूपसमीपगमनकाले प्रयोज्यत्वावगतेस्तत्कालप्रयुक्तेन प्रैषेण क्रियमाणानुवादिनोनुष्ठापितस्य त्रैष्टुभत्वेनानुवचनोत्तमत्वेन च त्रिःप्रथमामन्वाह—त्रिरुत्तमामिति। विधानात्त्रिरावृत्तेर्दीर्घत्वात्समाप्तिपर्यन्तपरिव्याणकालावरोधशक्तेस्तदेकदेशे प्रयोज्यतायां प्रमाणाभावेन तस्यापि यूपसमीपगमनानन्तरमेव प्रयोज्यत्वावगमान्नैकदेशभेदेनाविरोधोपपत्तिरित्याह—न चेति।

यूपसमीपगमनानन्तरं क्रियमाणानुवादिप्रयोगाभ्युपगमे तस्मिन् काले परिव्याणस्य वर्त्तमानत्वायावश्याभ्युपगमनीयत्वात्ततः प्राक्करणप्रयोगापत्तेरविरोधोपपत्तिमाशङ्क्य, रशनादानात्प्रभृति वर्त्तमानत्वे सत्यप्यसन्निहितयूपोक्त्यशक्तेर्यूपगमनानन्तरं करणप्रयोज्य-

त्वोक्त्यं परिव्याणकालान्तराले करणापत्त्युक्तिः । करणक्रियमाणानुवादिनोः प्राप्तस्याप्यैककाल्यस्यैककर्तृकत्वेन कर्तृमन्त्रोच्चारणक्रिययोर्द्धर्माधर्म्यान्वयात्मकतयाऽन्तरङ्गत्वाद्बलीयसा बाधादविरोधोपपत्तिं शङ्कते—ननु चेति ।

परमतेन तावद्वाक्यस्यैककर्तृकत्वविषयत्वमभ्युपेत्यैककरणस्य प्राक्प्रयोगेऽसिशब्दशक्त्या वाच्यात्सन्निहितरूपात्पश्चात्प्रयोगे वा करणशक्त्या वाच्यादनुष्ठेयरूपात्क्रियमाणनुवादिनस्तु कालान्तरप्रयोगे क्रियमाणानुवादिशक्त्या वाच्याद् दृश्यमानरूपादर्थात्प्रच्युत्त्यापत्त्या लिङ्गविरोधेन यौगपद्यबाधायोगान्निरस्यति—भवेदिति । सामानाधिकरण्यश्रुत्या लिङ्गस्यैवबाधां शङ्कते—ननु चेति । सामानाधिकरण्यश्रुतित्वाभावाल्लिङ्गबाधायोगेन निरस्यति—बाध्येतेति । सामानाधिकरण्यगम्यस्यान्वयस्यारुणाधिकरणे वाक्यीयत्वाभिधानाद्वाक्यत्वं तावदुपपादयति—न हीति । लक्षणाहेतुकं विप्रकर्षमुपपादयति—तत्रापिचेति ।

लिङ्गवतोर्म्मन्त्रयोर्विकृतावपाठाच्चोदकं विना प्राप्त्यभावलिङ्गैनैककाल्यप्राप्त्यनुपपत्तेः, वाक्यीयस्याप्येककर्तृकत्वस्य बलीयस्त्वोपपत्तिं शङ्कते—नन्विति । मन्त्रस्वरूपप्राप्त्यै चोदकापेक्षत्वेऽप्यभिधानशक्त्यात्मकस्य लिङ्गस्यातिदेशिकस्याप्यौपदेशिकलिङ्गेन सह प्रत्यक्षत्वेनाविशिष्टतया चोदकानपेक्षत्वात्स्वरूपप्राप्त्यैव चोदकापेक्षणस्य लिङ्गवाक्ययोर्द्वयोरप्यविशिष्टत्वाल्लिङ्गस्य वाक्यबाधकत्वोपपत्त्याशयेन निरस्यति—उच्यत इति । मन्त्रद्वयस्य लैङ्गिकैककाल्यप्राप्त्यैकान्तिकतया प्रत्यक्षवाक्यशिष्टैनैककर्तृकत्वेन सह विरोधित्वाच्चोदकेनानुमानिकेन प्राप्त्यनुमानिकेन प्राप्त्यनुपपत्तेर्लिङ्गैनैककाल्यप्राप्त्ययोगं शङ्कते—स्याविति । एतत्कालैक्यमेवं-लिङ्गेन वाक्यं बाधित्वेत्येवं शब्दार्थः । लैङ्गिकैककाल्यप्राप्तेः प्राग्विरोधानापत्तेश्चोदकनिरोधायोगशङ्कां निराकर्त्तुमाह—यद्यपि हीति ।

गृहाच्छादनप्रवृत्तौ वर्षस्येवानागतस्यापि विरोधस्य निरोधहेतुता युक्तेत्याशयः । चेतनप्रवृत्तेरिष्टानिष्टप्राप्तिपरिहारार्थत्वाच्छङ्क्यमानस्यापि चानिष्टस्य व्याकुलीभावापादकत्वेन परिहार्यत्वाद्भविष्यद्वृष्टिभयशङ्काहेतोः प्रवृत्तेः प्राग्भावनानिष्टवृष्टिभयपरिहारसाधनगृहाच्छादनप्रवृत्तिहेतोर्वृष्टिभयशङ्काया वृष्टेरनागतत्वेपि सद्भावात्प्रवृत्तिर्युक्ता विरोधस्य तु वस्तुसद्भावेन बाधहेतुत्वान्नाऽनागतस्य हेतुता युक्तेत्याशयेन निरस्यति—उच्यत इति । क्रियमाणानुवादिनश्च चोदकेनैव होतुः प्राप्तेः करणमात्रस्येहवाक्ये होत्रन्वयविधाने द्वयोः समानकर्तृकत्वस्यैतद्वाक्याविधेयत्वाद्बलीयस्त्वोद्भावनाऽनर्थिकेति तावत्स्वमतेन विरोधाभावोक्त्या परिहारापातनिकार्थमाह—यदि चेति । अतश्चास्य बाधकत्वाभ्युपगमे करणविरोधिनः क्रियमाणानुवादिनो होतृत्वबाधन स्यात्, तच्च समाख्यागम्यहोत्रन्वयकृतत्वाद्वाक्येन समाख्याबाधात्मकतया सुकरमेवेत्याह—तेनेति ।

बाध्यस्य होत्रन्वयस्य वाक्यबाध्यसमाख्याकृतत्वाद् बाधस्य समाख्याकृतत्वोपचारः । क्रियमाणानुवादिनश्च होत्रन्वयबाधे सति वाक्यस्य क्रियमाणानुवादिविषयत्वाभावेन तस्य करणैककाल्यविषयेण लिङ्गेन सह भिन्नविषयतया विरोधाभावाल्लिङ्गवाक्ययोर्बाध्य-

बाधकत्वं विनैव सिद्धान्तसिद्धिरिति । स्वमतेन । ननु च युगपत्कालत्वं वा बाध्यताम्, एकतृं कत्वं वेत्यादिवार्त्तिकोक्तां शङ्कां निराकर्त्तुमाह—एवञ्चेति । लिङ्गेन वाक्यबाधात्तु तच्छङ्कानिरासे होत्राध्वर्यवान्वयबाधापत्तेरनिष्टं यथा प्रकृतिप्रयोगप्रसङ्गात्तत्पूर्वं परिहारो युक्त इत्याह—यथा त्विति । सिद्धान्तमुपसंहरति—तस्मादिति ।

क्रियमाणानुवादिनं कः प्रयुञ्जीतेत्याशङ्कोत्तरत्वेनर्त्विजां मध्ये यस्य मुख्यप्रत्यासत्त्याख्यः, प्रत्यासन्नस्य स्वकर्म्मणि व्यापृतत्वे वा यस्याव्यापृतत्वाख्योविशेषः, स प्रयुञ्जीयादित्येवमितरमिति सूत्रोत्तरार्द्धव्याख्यार्थमथेत्यादिभाष्यं कुण्डपायिनामयनेऽच्छावाकीयाख्याया होत्राया उद्गातृकार्यत्वाद्, ग्रावस्तोत्रीयाख्यायाश्च प्रस्तोतृकार्यत्वात्, अच्छावाकग्रावस्तदभावेन मैत्रावरुणव्यतिरिक्तहोतृपुरुषाभावात्प्रकृतोपयोगानुपपत्तेरित्याशयप्रदर्शनमात्रार्थत्वादुपेक्षितम् ॥ २२ ॥

भा० प्र०—श्रुति में दर्शपूर्णमास प्रकरण में "प्रोक्षणीरासादय । इध्माबर्हिरुपसादय । स्रुवं स्रुक् च सम्मृड्ढि" अर्थात् प्रोक्षण का ग्रहण करो इध्माबर्हि को समीप में लाओ, स्रुव और स्रुक् का मार्जन करो इत्यादि कतिपय मन्त्र हैं । ये नियोगबोध के होने से इनको प्रैषमन्त्र कहा जाता है । इन प्रैषमन्त्रों के अनुसार जो कार्य किया जाता है, वह क्या अध्वर्यु का कर्तव्य है अथवा अन्य का अनुष्ठेय है—यही संशय है ।

इसमें पूर्वपक्षी का कहना है कि प्रैषमन्त्र एवं प्रैषानुसारी कार्य जब आध्वर्यव इस एक ही समाख्या का विषय है, तब वह अध्वर्यु का ही कर्तव्य मानता हूँ ।

इसके उत्तर में सिद्धान्ती कहता है कि "प्रैषेषु च पराधिकारात्" ये प्रैषकार्य अन्य ऋत्विक् का ही अनुष्ठेय है, कारण, प्रैष अर्थ अन्य मध्यम पुरुष को युष्मदर्थ का नियोग करता है और कोई भी स्वयं स्वकानियोज्य नहीं हो सकता है, इसलिए, इस स्थल में लिङ्ग के द्वारा समाख्या का बाध होगा, अतएव, प्रैषस्थल में केवल अध्वर्यु ही कर्ता नहीं है ।

"प्रैषेषु च"=प्रैष स्थलों में भी अन्य ऋत्विक् कर्ता होगा, "पराधिकारात्"=क्योंकि, उसमें अन्य का अर्थात् अध्वर्यु को छोड़कर अन्य ऋत्विक् पुरुष का ही अधिकार सूचित होता है ॥ २२ ॥

इति एकादश प्रैष और प्रैषार्थ का भिन्नकर्तृकत्वाधिकरण ।

## (१२) अध्वर्युस्तु दर्शनात् ॥ २३ ॥ पू० ।

शा० भा०—अथैवं गते, इदं संदिह्यते । किमध्वर्युरग्नीधं प्रेष्येदुताग्नीदध्वर्युमिति । अनियमोऽविशेषादिति प्राप्ते, ब्रूमः । अध्वर्युरुक्तप्रैषार्थकारी स्यात् । कुतः ? दर्शनात् । दर्शनं भवति, तिर्यञ्चं स्फ्यं धारयेत, यदन्वञ्चं धारयेद्वज्रो वै स्फ्यो वज्रेणाध्वर्युं क्षिण्वीतेति । यः प्रेष्यति तस्य हस्ते

**स्फ्यः । स्फ्येनाध्वयु क्षिण्वीतेत्यन्यमध्वर्युं प्रेषकाद्दर्शयति । तस्मादग्नीदध्वर्युं प्रेष्येदिति ॥ २३ ॥ क० पूर्व० ।**

त० वा०—'यदन्वञ्चं धारयेद्वज्रेणाध्वर्युं क्षिण्वीत' वज्रोऽध्वर्युं क्षिण्वीतेति वा पाठः । स्फ्यस्य धारणं तावदग्नीध एकान्तेन । स चाध्वर्युं क्षिण्वीतेति वदन्नग्नीधं स्फ्यवन्तं प्रेषकं दर्शयति । का त्वस्य प्राप्तिः ? उच्यते । अङ्गगुणे-विरोधे च तादर्थ्यात्' इत्यनेनाङ्गत्वात्प्रेषस्य कर्तृलोपो युक्तो, न प्रधानस्य । वहवश्च प्रेषार्था, एकोनिगदः । तेन 'भूयसां स्यात्सधर्मत्वम्' इत्यपि प्रैषार्थेऽ-ध्वर्युरिति परिशेषात्प्रैषेऽग्नीत् ॥ २३ ॥

न्या० सु०—'यूपाय परिवीयमाणायानुब्रूही'ति चाध्वर्यवस्य प्रैषस्य कुण्डपायि-नामयने होतृप्रयोज्यत्वादितरं प्रैषार्थं क्रियमाणानुवादिनमन्यः प्रयुञ्जीयादित्येवं पूर्वाधि-करणशेषभूतेनैवानेन सूत्रेणोदाहरणान्तरेषु विषयव्यासयेऽधिकरणान्तरकरणेनानन्तरसङ्गति लिङ्गसमाख्याविरोधाविरोधचिन्तात्मकतया च प्रकरणसङ्गति, लोटः प्राप्तकालार्थत्वसन्देहं च सन्देहहेतुं स्पष्टत्वादनुक्त्वैक एव प्रैषप्रैषार्थयोः कर्त्तेति पूर्वपक्षं, प्रैषस्य परविषयत्व-सामर्थ्यरूपलिङ्गविरोधेन समाख्ययोभयत्राध्वर्युविनियोगायोगादयुक्तमाशङ्क्य, प्राप्तकाल-त्वोक्तिर्लक्षणया प्रैषोक्त्या विवक्षिता । तत्कालानुष्ठानं च प्रैषार्थोक्त्येति सूचयितुं वक्ष्याम इत्यन्तं पूर्वपक्षभाष्यं व्याचष्टे—**प्रैषस्येति** । आत्मनः प्रैषायोगे शङ्किते स्वाशयं प्रकटयितुं पूर्वपक्ष्याहेत्यर्थः । आहेति शङ्काभाष्यं व्याचष्टे—**प्रैषेति** । उच्यत इत्यादिपरिहारभाष्य-मुपपादयितुमाह—**परस्त्विति** । ओषधे त्रायस्वैनमित्यादिवदचेतनायामपि क्रियायां चेतन-वदुपचारेण स्तुत्यै मध्यमोपपत्तिं स्वयमाह—**क्रियेव चेति** ।

न केवलमदृष्टार्थत्वापत्तेः कर्त्तुः प्राप्तकालत्वं न वाच्यं, किन्तु साकाङ्क्षत्वापत्तेः प्रोक्षण्यासादनं कर्त्तुमित्याद्यध्याहारे वा तव प्राप्तः कालः । स च प्रोक्षण्यासादनं कर्त्तुमिति कर्तृक्रियाविशिष्टकालाख्यार्थप्राप्तत्वोक्तेः क्रियामात्रविशिष्टकालप्राप्तत्वोक्त्या चाल्पविधि-सम्भवे बहुविधानस्यान्याय्यत्वाद् गौरवाख्यवाक्यभेदापत्तेरपीत्याह—**यदि चेति** । प्रशब्देन प्राप्तत्वोक्तेरिच्छासामान्यवाचिना चेषणशब्देनोक्तिविषयेच्छाविशेषलक्षणाद्वारा तद्विषयोक्ति-लक्षणात्प्राप्तत्वोक्त्यर्था प्रेषणोक्ति प्राप्तकालार्थत्वोपपादनमुपसंहरति—**तस्मादपीति** । प्रैषार्थत्वाभ्युपगमेन स्वयं प्रौढ्या पूर्वपक्षमाह—**अथापीति** । पूर्वपक्षोपसंहारपूर्वं सूत्रं योजयन् सिद्धान्तमाह—**इतीति** । आहेति पूर्वपक्षाशयानुभाषणभाष्यं व्याचष्टे—**यस्त्विति** । उच्यत इति परिहारभाष्येण प्राप्तकालार्थत्वायोगस्योक्तस्य प्रैषातिसर्गप्राप्तकालेष्विति ३-३-१६३स्मृतेः प्राप्तकालत्वस्यापि वाच्यत्वाविशेषादयुक्तत्वमाशङ्क्योपपादनार्थं तस्या-मिति भाष्यं मध्यमपुरुषसामर्थ्यात्मकेन लिङ्गेन समाख्याबाधोक्त्यर्थत्वेन व्याख्यातुमाह—**तस्यामिति** । क्रियाया एव चेतनवदुपचारेण स्तुत्यै मध्यमपुरुषेण युष्मदर्थत्वोक्तः क्रियैव वोच्यत इति पूर्वपक्षवार्त्तिकोक्तत्वात्प्राप्तकालतया लिङ्गविरोधपरिहारमाशङ्क्य, युष्मदर्थस्य

प्रकृत्यर्थानुरक्तं प्रत्ययार्थं प्रति विषयतया मध्यमपुरुषार्थत्वात्प्रकृत्युक्तां क्रियामपि प्रति विषयत्वावगतेर्विषयविषयित्वस्य च भेदाधिष्ठानत्वान्न शब्दान्तरानुक्तायाः क्रियायाः युष्मदर्थता वक्तुं शक्येत्याह—नचेति। प्रकृत्युक्ताया अपि क्रियायाः प्रत्ययार्थप्राप्तकालता-नुरञ्जकत्वाविवक्षया युष्मदर्थत्वमात्रविवक्षाशक्तावप्यचेतनस्य शब्देनाभिमुखीकरणाशक्तेः सन्निहिताभिमुखीकरणार्थयुष्मदर्थत्वोक्तयदृष्टार्थत्वापत्तेः क्रियाप्राप्तकालत्वप्रकाशनेऽप्यदृ-दृष्टार्थत्वापत्तिस्तुल्येत्याह—यद्यपिचेति। क्रियाभिमुखीकरणकल्पनायामिव चात्मनः शरीररूपेण, अवस्थान्तररूपेण वा भेदकल्पनायामप्यदृष्टार्थत्वापत्तेस्तदाश्रयणेन प्रैष्यप्रैष-कत्वव्यपदेशाभ्युपगमो न युक्त इत्याह—तथेति। लिङ्गविनियोज्यानां च मन्त्राणां मुख्या-र्थाभिधानकार्यत्वस्य गौणमुख्याधिकरणे स्थितत्वात्, अचेतनायाः क्रियायाश्चेतनावदुपचारे चात्मनो भेदकल्पने च गौणत्वावश्यंभावापत्तेः, पक्षद्वयमप्येतदयुक्तमित्याह—गौणतात्रेति। ततश्च क्रियाप्राप्तकालत्वोक्तौ मध्यमपुरुषानाञ्जस्यप्रसङ्गाल्लोटः प्राप्तकालार्थत्वाभ्युप-गमेऽपि कर्तुं प्राप्तकालत्वोक्तेरभ्युदगमनीयत्वात्सिद्धान्तसिद्धिरित्याह—ततश्चेति। वाक्य-भेदापत्तेर्युष्मदर्थस्याविवक्षितत्वात्तद्वशेन लोटः प्रैषार्थत्वावधारणायोगमाशङ्क्याह—नचेति।

युष्मदर्थविशिष्टक्रियार्थप्रेषणाद्यः प्रैषार्थत्वपक्षे वाक्यभेद आशङ्क्यते, स न युक्तः। यस्माद्युष्मदर्थाविवक्षायामपि प्रोक्षणीशब्दोपादानात्प्रोक्षणीविशिष्टता प्रैषविषयस्य क्रिया-रूपस्यार्थस्याभ्युपगन्तव्यत्वात्, ततश्चोभयपक्षसाम्यान्नैकस्मिन्पक्षे वाक्यभेद आशङ्कनीय इत्यर्थः। पक्षद्वयसाम्योक्त्यर्थं वावश्योक्तिः। हिशब्दार्थे चशब्दः। प्रोक्षणीविशिष्टत्वस्यो-भयपक्षसाम्येपि युष्मदर्थविशिष्टत्वनिमित्तस्य गौरवलक्षणस्य वाक्यभेदस्य युष्मदर्थविवक्षा-यामसाधारण्यमाशङ्क्य, क्रियायुष्मदर्थादीनामर्थानामनेकत्वेप्येकपदोपात्तत्वेन युगपदुपादा-नात्सहैव प्रैषविषयत्वावगतेः प्रत्ययालोचनभेदानपेक्षतया वाक्यभेदानापादकत्वमाह—नचेति। कर्तुराख्यातवाच्यत्वाभावेपि लक्षणयोपादानं विवक्षितम्। प्रत्ययावृत्तिलक्षण-वाक्यभेदानापत्तावपि गौरवलक्षणवाक्यभेदापत्तिमाशङ्क्य, अनेकार्थोपादाने तस्य सर्वत्रा-भ्युपगमेनादोषत्वमाह—नचेदृशमिति। कथं तर्हि युष्मदर्थविवक्षायां वाक्यभेदो भाष्य-कृतोक्त इत्याशङ्क्य, पूर्वपक्षे लोटः प्राप्तकालार्थत्वात्प्राप्तकालतायाश्च मध्यमपुरुषाद्युष्मदर्थ-विषयत्वावगतेः क्रियाया अपि प्रकृत्यर्थत्वेन, प्रत्ययार्थत्वेन प्रत्ययार्थप्राप्तकालत्वविशेषणतया युष्मदर्थविषयत्वावगमात्क्रियायुष्मदर्थयोः पृथक्त्वं विना विषयविषयित्वानुपपत्तेः पृथक्त्वा-त्प्राप्तकालत्वस्य युष्मदर्थेन सह तव प्राप्तः काल इति विषयविषयित्वान्वयविधावेका क्रियया च सहासादनं कर्तुमिति विशेषणविशेष्यत्वान्वयविधावन्यासादयेति श्रुतेः शक्तिः कल्प्येति वाक्यभेदापत्तिर्भाष्योक्ता। सिद्धान्ते तु प्रैषार्थत्वात्प्रैषस्य च नित्यं युष्मदर्थ-विषयत्वात्प्रैषान्यथानुपपत्त्याऽवगतस्य युष्मदर्थस्यानुवादान्न वाक्यभेदापत्तिरित्याह—प्राप्तेति। समाख्यानादपि प्रैषार्थता अवसीयत इत्याह—एवं चेति। सिद्धान्तमुपसंहरति—तस्मादिति ।। २३ ।।

प्रैषप्रैषार्थयोर्यथाक्रममाध्वर्यवाग्नीध्रत्वमधिकरणम्।

भा० प्र०—पूर्व अधिकरण में कहा गया है कि प्रैषस्थल में केवल अध्वर्यु ही कर्ता नहीं है, वरन् अन्य ऋत्विक् भी अर्थात् अग्नीत् नाम का ऋत्विक् भी उसमें प्रैषकर्ता है। इसमें यह संशय है कि अग्नीत् नाम का ऋत्विक् ही प्रैषकर्ता एवं या अध्वर्यु ? उस प्रैषानुसार कर्मकर्ता या इसके विपरीत है ? इसमें पूर्वपक्षी का कहना है कि "अध्र्यस्तु दर्शनात्" = अध्वर्यु ही प्रैषानुसार में कर्म करेगा, कारण, होमादि कर्म अध्वर्यु का ही कर्तव्य है, और भी तिर्यञ्चं स्फ्यं धारयेत्, यदन्वञ्चं धारयेत् वज्रो वै स्फ्यो वज्रेणाध्वर्युं क्षिण्वीत' अर्थात् स्फ्यनामक खड्गाकार काण्ठ फल कंटिको तिरछा धारण करे सामने धारण करे तो स्फ्य वज्र है वज्र से अध्वर्यु को हिंसित करे। इत्यादि वाक्य में जो प्रेषण = प्रैष करेगा उसी के हाथ में स्फ्य धारण करने के लिए इस प्रकार कहा गया है। स्फ्य धारण अध्वर्यु का कर्म नहीं वरन् अग्नीत् नामक ऋत्विक् का ही कर्तव्य कर्म है। इसलिए, वही प्रेषण करेगा और अध्वर्यु तदनुसार कर्म करेगा क्योंकि इस श्रुति वाक्य में अध्वर्यु का स्फ्य धारी से पृथक् उल्लेख किया गया है।

"अध्वर्यु।"—अध्वर्यु ही प्रैषोक्त कर्म का कर्ता होगा, 'तु' = पूर्वपक्ष के निरास के लिए है, "दर्शनात्" = क्योंकि, इस प्रकार का लिङ्ग अर्थात् ज्ञापक दृष्टि होता है। इति पूर्वपक्ष ॥ २३ ॥

## गौणो वा कर्मसामान्यात् ॥ २४ ॥ सि० ।

शा० भा०—नैतदस्ति, अग्नीधः प्रैषः, अध्वर्योः प्रैषार्थ इति। किं खलु, अध्वर्युरेवाग्नीधं प्रेष्येत्। एवमध्वर्युणा प्रैषः प्रैषार्थश्चोभावपि कृतौ भावष्यतः। तत्राऽऽध्वर्यवमिति समाख्याऽनुग्रहीष्यते। तस्मादध्वर्युरेव मुख्यः स्यात्। किमस्य मुख्यत्वम् ? यदनेन सर्वं कर्तव्यं समाख्यानादिति।

अथ यदुक्तमध्वर्युः प्रचरिता दृश्यत इति। तदुच्यते। सत्यं दृश्यते। न त्वस्यं प्रैषार्थकरणे प्रमाणमस्ति चिन्त्यमानम्। तस्मादेतन्मिथ्यादर्शनम्। यस्य हि दर्शनस्य प्रमाणं नास्ति, व्यामोहः स। यथा शुक्तिकायां रजतविज्ञानम्। अस्ति त्वग्नीधः प्रैषार्थकरणे प्रमाणम्। तस्मादाग्नीध्रः प्रचरिता, प्रचरितरि चाध्वर्युशब्दो दृश्यते। तस्माद्गौणः, आध्वर्यवे वेदे समाम्नातात्पदार्थान्करोतीति कृत्वाऽध्वर्युरित्युच्यते आग्नीध्र इति। तस्मादाध्वर्यवः प्रैषः आग्नीध्रः प्रैषार्थं इति ॥ २४ ॥ सि० ।

इति द्वादशं प्रैषप्रैषार्थयोर्यथाक्रमाध्वर्यवाग्नीध्रताधिकरणम् ॥ १२ ॥

त० वा०—'मुख्यं वा पूर्वचोदनात्' इति प्राथम्यात्प्रैषे समाख्यातः कर्ता युक्तः। न हि तदानीं विरोधः कश्चिदस्ति। तस्मिंस्तु प्रयुक्ते विरोधात्प्रैषार्थेऽन्यो

भवति। प्रयोजकस्य च प्रयोज्यव्यापारेऽपि कर्तृत्वं न विहन्यत इत्युभयानुग्रहः। इतरथा हि प्रैषेऽत्यन्तबाध एव स्यात्। न हि स तेन कृतो, नापि कारितो भवेत्। तस्मादध्वर्युप्रेषितोऽग्नीत्कुर्यादिति। 'वज्रेणाध्वर्युम्' इति चाऽऽग्नीध्रमेव तत्कार्यापत्तेरभिधास्यति ॥ २४ ॥

( इति द्वादशं प्रैषस्याऽऽध्वर्यवत्वाधिकरणम् ॥ १२ ॥ )

न्या० सु०—व्याख्याद्वैविध्यार्थं पाठद्वयोक्तिपूर्वं लिङ्गदर्शनं व्याचष्टे—यदिति। क्षिणोत्यर्थहिंसाकर्म्मतयोक्तस्याध्वयोः स्फ्यधारयितृत्वायोगेन तद्व्यतिरिक्तस्य स्फ्यधारयितृत्वावगमाद्दर्शपूर्णमासयोश्चाग्नीद्व्यतिरिक्तासम्भवदध्वर्युकर्तृकाध्वर्युवेदाम्नातपदार्थकार्यभावात्सोग्नीदग्नीद्धारितो वा वज्रोऽध्वर्युं क्षिण्वीतेत्यर्थद्वयोक्तचर्थः शाखाभेदेन द्विविधोपि पाठः। अग्नीधः स्फ्यधारणमेकान्तेन वदन् वेदेर्वितृतीयदेशे तिर्यञ्चं स्फ्यं स्तब्ध्वा प्रेष्यतीति समानकर्तृकत्ववचनात्स्फ्यवतः प्रेषकत्वावगतेरग्नीध्रमेव स्फ्यवत्त्वात्प्रेषकं तावद्दर्शयति। तद्दर्शनाच्चान्यप्रैषार्थकारिणं दर्शयतीति, तावच्चशब्दावनुकृष्य योज्यम्। प्राप्तिं विना लिङ्गस्याप्रामाण्यात्प्रश्नपूर्वं द्वादशवक्ष्यमाणन्यायद्वयेन प्राप्तिमाह—कान्विति ॥ २४ ॥

भा० प्र०—सिद्धान्ती कहा "स्फ्येन अध्वर्युः क्षिण्वीत" इस श्रुतिवाक्य में जो अध्वर्यु का किया गया है, वह वास्तविक अध्वर्यु नहीं है, किन्तु अग्नीत् को ही अध्वर्यु कहा गया है। यह "गौणः वा" = गौण प्रयोग है। यदि यह कहा जाय कि क्यों गौण प्रयोग किया गया है? ऐसी स्थिति में कहा जा सकता है कि "कर्मसामान्यात्" = इस स्थल में अध्वर्यु एवं अग्नीत को कर्म का सादृश्य कहने से यह कहा जाता है। कारण, अध्वर्यु यजुर्वेदोक्त कर्म करते हैं। इस स्थल में अग्नीत् को भी यजुर्वेदोक्त प्रैषानुसारी सभी कर्म करना होगा इसलिए उसको अध्वर्यु कहा गया है। यदि कहा जाय कि प्रकृत अध्वर्यु ही प्रैषानुसारी कर्म करे और अग्नीत् प्रेषण कर्म क्यों नहीं करे? ऐसी स्थिति में इसमें समाख्या विरोध होता है, कारण, समाख्या के अनुसार प्रैष एवं प्रैषार्थ दोनों ही अध्वर्यु का कर्म है, किन्तु प्रैषगत लिङ्ग के अर्थ के साथ विरोध होने से अध्वर्यु प्रयोजक कर्ता है। दूसरे से वह कराते हैं, अतः, अध्वर्यु प्रयोजक कर्ता है। दूसरे से कराने पर भी प्रयोजक का कर्तृत्व अव्याहत होने से इस स्थल में प्रैष करना एवं प्रैषार्थ कराने से भी प्रयोजक का कर्तृत्व अव्याहत होने से इस स्थल में फलतः प्रैषार्थ दोनों ही अध्वर्यु से ही अनुष्ठित होगा। अन्य पक्ष में अग्नीत् नाम के ऋत्विक् पुरुष का यदि प्रैषकर्ता कहा जाय तो समाख्या का बाध होगा। इसलिए प्रैष अध्वर्यु का कर्तव्य है और प्रैषार्थ अर्थात् प्रैषानुरूप कर्म अग्नीत् नाम के ऋत्विक् का अनुष्ठेय है।

"गौणः" = अग्नीत् नाम के ऋत्विक् का अध्वर्यु यह नाम गौण है, "वा" = पूर्वपक्ष के निरास के लिए है, "कर्म सामान्यात्" = कर्म का सामान्य अर्थात् सादृश्य है ॥ २४ ॥

इति द्वादश प्रैष का आध्वर्यत्वाधिकरण ।

## (१३) ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ २५ ॥ पू० ।

**शा० भा०—दर्शपूर्णमासयोरामनन्ति, 'ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णाति, इति । तत्र संदेहः—किमृत्विक्फलमाशासितव्यम्, अग्ने वर्चो विहवेष्वस्त्विति, उत यजमानस्येति । किं प्राप्तम् अध्वर्योरेवेति । कुतः ? एवं श्रुतिरादृता भविष्यति । इतरथा लक्षणा स्यात् । आत्मना यजमानं लक्षयेत् । तस्मादृत्विक्फलमाशसितव्यमिति । कोऽर्थः । अनया समिधा धार्यमाणेऽग्नौ यागः संभविष्यति । तत्र विहवेषु—स्पर्धास्थानेषु, अहं वर्चस्वी भविष्यामीत्यध्वर्योर्वचनम् । एवमुत्साही भविष्यतीति ॥ २५ ॥ पूर्व० ॥**

त० वा०—यथैवाकरणेषु यत्फलं, तत्प्रकरणस्थं कीर्त्यते, नान्यत्कल्प्यते । तथा 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यादिष्वपि । ते तु यजमानेनैव प्रयुज्यन्ते तस्यैव च फलमित्यविरुद्धाः । करणाः पुनरेकान्तेन कर्मसमानकर्तृकत्वादाध्वर्यवाः । तैर्यद्यध्वर्युणा प्रयुज्यमानैर्यजमानस्य फलमभिधीयेत, ततो ममेत्यभिधानं विरुध्येत । कीदृशं त्वध्वर्योः फलमनूद्यत इति, तद्भावभावित्वमात्रेण सुप्रचरितृत्वयशः । तच्च तस्योत्साहं करिष्यतीति निरूपयति ॥ २५ ॥

न्या० सु०—वाशब्दोक्तं सिद्धान्तमुपपादयितुं स्वयं तावदङ्गगुणविरोधन्यायेनापवदिष्यमाणमपि समसङ्ख्यविरोधविषयत्वाच्च भूयो विरोधेऽनभिमतमप्यस्युच्चयार्थं द्वादशवक्ष्यमाणमेव न्यायमाह—**मुख्यं वेति** । भाष्योक्तं पारमार्थिकं न्यायं व्याचष्टे—**प्रयोजकस्य चेति** । लिङ्गदर्शननिरासार्थत्वेन सूत्रं व्याख्यातुमाह—**वज्रेणेति** ॥ २५ ॥

करणमन्त्रेषु स्वामिफलस्याशासितव्यत्वमधिकरणम् ।

**भा० प्र०—श्रुति में दर्शपूर्णमास प्रकरण में "ममाग्ने वर्चो विहवेष्वस्तु इति पूर्वमग्निं गृह्णाति" यह मन्त्र आहवनीय अग्नि के अन्वाख्याकरण रूप में पठित है । इसका अर्थ यह है कि अग्नि के समीप ऋत्विक् = अध्वर्यु प्रार्थना करता है—"हे अग्ने ? विहवे अर्थात् यज्ञ में जो वर्चः है वह हमारा हो । अर्थात् मैं अध्वर्यु वर्चस्वी होऊँ" । इस स्थल में वर्चः इस शब्द के द्वारा जो फल बोधित होता है, वह क्या यजमान का प्राप्य है, अथवा ऋत्विक् का ही लाभ है—यही संशय है । इसमें पूर्वपक्षी का कहना है कि "ऋत्विक् फलं कर्मेषु" इन करण मन्त्रों का जो फल है वह ऋत्विग्गामी होगा, अर्थात् ऋत्विक् ही इसका फल प्राप्त करेगा, कारण, "अर्थवत्त्वात्" इसमें इस**

वचन का "मम" इस पद की सार्थकता होती है—शक्यार्थ परिगृहीत होता है, अन्यथा इस पद का लिङ्ग का लभ्य सामर्थ्य प्राप्त अर्थ का परित्याग करना होगा।

"करणेषु" = करण मन्त्र में, "ऋत्विक् फलं" = ऋत्विक् का ही फल प्रकाशित होता है, "अर्थवत्वात्" = क्योंकि उसमें अर्थवत्ता अर्थात् शक्यार्थ स्वीकृत है। इति पूर्वपक्ष ॥ २५ ॥

## स्वामिनो वा तदर्थत्वात् ॥ २६ ॥ सि० ।

शा० भा०—यजमानस्य वा वचनं, तदर्थत्वात्कर्मणः। यजमानार्थं हीदं कर्म साङ्गम्। उपग्रहविशेषात्। साङ्गस्यास्य प्रयोजनं यजमानस्य फलनिष्पत्तिर्नाध्वर्योः सुप्रचरितुरपि यशः। किमतो यद्येवम्?, फलसंकीर्तनात्फलकर्तव्यता गम्यते। तदेतदग्न्यन्वाधानं यजमानस्य फलसंकीर्तने क्रियमाणेऽनेन मन्त्रेण फलसंबन्धात्प्रकाशितं कृतं भवति, नाध्वर्युयशः कीर्तनेन। तस्माद्यजमानफलमाशासितव्यमिति।

अथ कस्मान्न यजमान एष मन्त्रो भवतीति। उच्यते। अग्न्यन्वाधानं समाख्ययाऽऽध्वर्यवम्। तच्चैवंगुणो मन्त्रः करोत्याध्वर्यवः। स उच्यतेऽनेन मन्त्रेणेति। तस्मादाध्वर्यवो मन्त्रः। मम वर्चोऽस्त्वित्यपि यजमानस्य वर्चो ममेति व्यपदिशति लक्षणया। यथा राजनि जयं वर्तमानं सैनिका अस्माकमिति व्यदिशन्त्येवम् ॥ २६ ॥ सि० ॥

त० वा०—नैवेदमकरणवदुत्साहार्थं फलं संकीर्त्यते। किं तर्हि? मन्त्रवर्णान्नित्याङ्गाश्रयं फलमवकल्पते। कथम्? व्यतिरिक्तक्रियासाधनत्वेन हि मन्त्रश्चोदितस्तां वा, तत्संबधि वा किंचित्प्रकाशयन्नङ्गभावं गच्छति। तस्मादिह यद्यध्वर्युयशः संकीर्त्यते, नैतेन सकलेन मन्त्रेणाग्न्यन्वाधानं साधितं स्यात्। न हि तत्प्रकाशनमग्न्यन्वाधानेनापेक्षितम्॥ यद्यपि तावत्प्रधानफलं प्रकाशयेत् तथाऽपि न संबध्येत। किमुत कर्मकालानौपतिकानुनिष्पादिबाह्यऋत्विग्यशः प्रकाशनेन। तस्मात्सूक्तवाकन्यायेनैव चोदितमन्त्रकरणत्वान्यथानुपपत्त्याऽग्न्यन्वाधानस्य फलमेतकल्प्यते। यास्त्वाशिषः ताः साक्षात्प्रधानाङ्गमिति तत्फलप्रकाशनेनैवाङ्गं भवन्ति। यदि पृथक्फलं साधयेयुः ततः संयुक्तत्वान्नैव प्रकरणेन क्रत्वभावं गच्छेयुरिति वैषम्यम्।

आह। सत्यपि पृथक्फलत्वे ममशब्देननाध्वर्युर्गृह्यत इति व्यपदेशन्यायेनाऽऽध्वर्यवमेव प्राप्नोति। उच्यते। लिङ्गेनाऽऽध्वर्यवत्वं प्राप्नोति आत्मनेपदश्रुत्या याजमानत्वम्। अथोभयानुग्रहार्थं कस्मात्कर्मापि याजमानमेव न भवति? तथा सति हि ममशब्दः, आत्मनेपदं चोभयमपि न विरोत्स्यत इति। नैतदस्ति।

यदि ह्येतमन्त्रपूर्वकं कर्म भवेत्, तत एवं नियम्येत। प्रथमं त्वेतदुत्पद्यमानं केवलकत्वर्थत्वप्रतीतेरविरुद्धाध्वर्यु संबन्धं समाख्यानात्प्रतिपद्यते। मन्त्रमात्रं याजमानमिति चेन्न। कर्मणाऽऽकृष्यमाणस्य तत्समानकर्तृकत्वनियमात्। फलमपि तर्ह्याकृष्येत। आकृष्येत, यद्यात्मनेपदेन न प्रतिबध्येत। तत्राऽऽत्मनेपदस्य बाधासंभवाद्गौणत्वप्रकारानुपपत्तेश्च मन्त्रगत एव ममशब्दोऽध्याहारेण वा पूर्यते, गौणो वा भवति, मदीयस्य यजमनस्य, मद्रूपस्यैव वा यजमानस्य वर्चो विहवेष्वस्त्विति। तस्माद्यजमानफलमेतादिति। ये च यजमानकर्तृकमेवाग्न्यन्वाधानं पक्षे वदन्ति, तेषामित एव मन्त्रवर्णाद्भ्रान्तिः अथ तु किंचिद्वचनमुपन्यस्यन्ति, तथाऽपि किं कर्मविकल्पवत्फलमध्वर्यु यजमानयोर्विकल्पते, किं वा फलं नित्यमेव यजमानमिति विचारः॥ २६॥

न्या० सु०—मन्त्रार्थस्यानुष्ठेयस्य मन्त्रोच्चारयितृव्यतिरिक्तपुरुषगामित्वोऽभिहिते प्रसङ्गात्फलभूतस्य मन्त्रार्थस्यान्यानन्यगामित्वविचारादधिकरणत्रयसङ्गति स्पष्टत्वादनुक्त्वा, अङ्गाश्रितकाम्यगुणफलस्य 'तथाकामोऽर्थसंयोगादि। यत्र स्वामिगामित्वोक्त्याऽङ्गफलस्यापि न्यायसाम्यात्स्वामिगामित्वसिद्धेरेतदधिकरणपूर्वपक्षमयुक्तमाशङ्क्य, अङ्गफलत्वाभावाशयेनोपपादयितुमाह—यथेवेति॥ २६॥

भा० प्र०—पूर्वोक्त पूर्वपक्ष के उत्तर में सिद्धान्ती कहता है "स्वामिनो वा" = सम्पूर्ण याग यजमान का ही प्राप्य है, कारण, "तदर्थत्वात्" = अङ्ग के साथ प्रधान कर्म यजमान के ही फल के लिए अनुष्ठित होता है, यह "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इस श्रुति वाक्य के आत्मने पद में बोधित होता है, अत एव आत्मने पद श्रुति से "मम" इस पद के लिङ्ग का ही बाध होना न्याय्य होने से उसका गौण अर्थ ही ग्रहण योग्य है। अतः, इस स्थल में "मम" अथ में मदीय यजमान का यह अर्थ होता है। जैसे जय और पराजय राजगामी होने पर भी अर्थात् राजा की जय या पराजय होने पर भी उसके आश्रित लोगों का हम लोगों की पराजय होगी इस प्रकार कहा जाता है, इस स्थल में भी ऐसा ही समझना चाहिए।

"स्वामिनः" = यह फल स्वामी का अर्थात् कर्मकर्ता यजमान को ही लभ्य है, "वा" = पूर्वपक्ष का निरासक है, "तदर्थत्वात्" क्योंकि, सभी अर्थात् कर्मजन्य फल यजमान को ही प्राप्य है। इति सिद्धान्त॥ २६॥

## लिङ्गदर्शनाच्च॥ २७॥

शा० भा०—लिङ्गमप्यमुमर्थं दर्शयति। एवं ह्याह। यां वै कांचन ऋत्विज आशिषमाशासते, यजमानस्यैव सा श० ब्रा० १-२-४-२६ इत्याशिषो यजमानार्थकतां दर्शयति। तस्मादपि ब्रूमो यजमानफलमाशासितव्यमिति। पक्षोक्त-

**मेव प्रयोजनमिति ॥ २७ ॥ हेतुः ॥ करणमन्त्रेषुस्वामिफलस्याशासितव्यताधिकरणम् ॥ १३ ॥**

त० वा०—सर्वाशिषामृत्विक्प्रयोज्यानां यजमानसंबन्धानुवाद एवमवकल्पिष्यते ॥ २७ ॥

इति त्रयोदशकरणमन्त्रप्रकाश्यफलस्य याजमानत्वाधिकरणम् ॥ १३ ॥

न्या० सु०—अङ्गफलत्वेन सिद्धान्तमुपपादयितुमाह—नैवेति। नित्यत्वेनाऽन्वाधानस्य फलान्वयायोगमाशङ्क्य, जातेष्टिवदानुषङ्गिकफलसाधनत्वेऽपि नित्यत्वाविरोधसूचनार्था नित्योक्तिः। क्रियासमवेताग्न्युक्तिमात्राच्छ्रुत्युक्तकरणत्वसिद्धमान्त्रवर्णिकस्य वर्चः पुष्ट्यादेः समवायकल्पनायोगाशयेन पृच्छति—कथमिति।

अग्न्युक्तिमात्रात्कृत्स्नस्य मन्त्रस्य श्रुत्युक्तकरणत्वासिद्धेर्मन्त्रोक्तस्य फलस्य क्रियानन्वयवादिना मन्त्रस्य क्रियायां स्वार्थसमवायाकल्पकताऽभ्युपेतव्येत्यापाद्य सूक्तवाकाधिकरणोक्त स्वार्थसमवायकल्पकत्वं तावत्स्मारयति—व्यतिरिक्तेति।

स्वशक्त्या प्रकाश्यार्थव्यतिरिक्तक्रियासाधनत्वेनाऽपि विहितो मन्त्रः क्रियां, तत्सम्बन्धार्हं वा किञ्चित्कारकं क्रियान्वयि कल्पयित्वा प्रकाशयन्नङ्गत्वं यस्मात् सूक्तवाकाधिकरणन्यायेन याति। तस्माग्नित्याङ्गाश्रयं फलमेवेदं कल्प्यमित्यर्थः। एवमपि वयं त्विन्धाना इति दीपनार्थेनेन्धतिना गृह्णात्युक्तधारणात्वाधानक्रियायास्तत्सम्बन्धिनश्चाग्नेरग्निशब्देन स्वशक्त्या प्रकाशनाद्वर्चः पुष्ट्यादेः क्रियान्वयकल्पना न युक्तेति, प्रश्नाशयं निराकर्त्तुं, कृत्स्नमन्त्रस्य करणत्वासिद्धचै फलस्यापि क्रियान्वयकल्पनोपपादनायाह—तस्माविहेति।

करणत्वेन श्रुतिविनियुक्तस्य मन्त्रस्याऽन्यतोसिद्धस्वार्थसमवायकल्पकत्वे सूक्तवाकाधिकरणोक्तेपि, सूक्तवाकेन स्वसाध्याया साक्षात्प्रकाशनाशक्तेस्तत्प्रकाश्यस्य च कस्यचिदन्यतः क्रियान्वयासिद्धेः, तत्र स्वार्थस्य क्रियान्वयकल्पना युक्ता। इह त्वाधानक्रियायाः, तत्सम्बन्धिनश्चाग्नेः प्रकाशनात्करणत्वसिद्धेर्नान्यस्य समवायकल्पना युक्तेति वैषम्यशङ्कानिरासथं, स्वार्थसमवायकल्पनात्रोक्तेत्यपौनरुक्त्यसूचनपूर्वमुपसंहरति—तस्माविति।

अङ्गस्यापि फलान्वयोपपत्तावाशीर्मन्त्राणामप्यायुराद्याशासनक्रियायामायुरादिफलान्वयकल्पकत्वसम्भवात्प्रधानफलप्रकाशनार्थत्वाभ्युपगमायोगमाशङ्क्याह—यास्त्विति। तदर्थत्वादि'ति सूत्रावयवं पुष्ट्यादेरन्वाधानफलत्वेप्यात्माभिवादिशब्दसामर्थ्यात्तनो सहेतिव्यपदेशसामर्थ्यादिवाऽध्वर्युगामित्वशङ्कानिरासार्थत्वेन शङ्कोपन्यासपूर्वं व्यपदेशफलस्याऽऽध्वर्युगामित्वेपि, स्वामिगामित्वानपायाद्यजेतेत्यस्यादधीतेत्यस्य वा आत्मनेपदस्य बाधानापत्तेर्वैषम्याशयेन व्याचष्टे—आहेति।

अथ कस्मादिति शङ्काभाष्यं करणस्य कर्तृव्यापारव्याप्यत्वात्, करणमन्त्रव्यापारस्योच्चारणाख्यस्यान्वाधानक्रियया सह समानकर्तृकत्वावगतेर्मन्त्रमात्रस्य याजमानत्वशङ्कायोगादयुक्तमाशङ्क्य, मन्त्रद्वारा अन्वाधानस्यैव याजमानत्वशङ्कार्थत्वेन तावद्व्याचष्टे—

अथेति । 'उच्यत इति परिहारभाष्यं ममशब्दशक्त्यात्मकलिङ्गात्मनेपदश्रुतिभ्यां विरोधे समाख्याया विनियोजकत्वायोगादयुक्तमाशङ्क्य, श्रुतिलिङ्गाभ्यां विरोधस्य मन्त्रान्वयावगम्यतया याजमानत्वोत्तरकालत्वात्प्रस्तरयागादिवच्चान्वाधानस्य मन्त्रकल्प्यत्वाभावेन मन्त्रान्वयानपेक्षोत्पत्तिकाले फलान्वयानवगतेरविरुद्धया समाख्यया विनियोगोपपत्त्याशयेनोपपादयितुमाह—नैतदिति ।

यथाश्रुतभाष्योक्तायाः शङ्कायास्तुच्छत्वदर्शनायैते एव शङ्कोत्तरभाष्ये यथाश्रुते व्याचष्टे—मन्त्रमात्रमिति । 'मम वर्चोऽस्त्वित्यादिभाष्यं फलाकर्षणशङ्कोत्तरत्वेन व्याख्यातुं शङ्कां तावदाह—फलमपि तर्हीति । श्रुत्या लिङ्गबाधात्फलस्याध्वर्युगामितयाकर्षणायोगं पूर्वोक्तं तावद्भाष्यव्याख्यापातनिकार्थं स्मारयति—आकृष्येतेति । आत्मनेपदस्य श्रुतित्वेपि सर्वाङ्गप्रधानसाधारण्येन सावकाशत्वात्प्रधानद्वारा चाङ्गे प्रवृत्तेः परोक्षत्वादन्वाधाने विशेषरूपेण साक्षाच्च प्रवृत्तेन लिङ्गेन बाधं, गौणत्वं वा, शङ्क्य प्रत्यक्षायाः श्रुतेर्मन्थराया अप्यनुमेयश्रुतिप्रतिबन्धकतयाऽननुमितश्रुतिकेन लिङ्गेन बाधायोगं सर्वाङ्गप्रधानफलानां चैकस्यात्मनेपदस्य कर्तृगामितावाचिनोऽन्यत्र मुख्यस्येह वैरूप्यापत्तेर्गौणत्वाख्याविरोधप्रकारागांवदन्मन्त्रस्था तर्ह्यात्माभिवादिनी श्रुतिः कथं व्याख्येयेत्यपेक्षायाध्याहारेण व्याख्यापूर्वं 'वयं त्विन्धानास्तन्वं पुषेमे'त्यादावध्याहारायोगेनाऽपरितोषाद्भाष्योक्तां गौणत्वेन व्याख्यामाह—तत्रेति । अव्यापकोप्यध्याहारपक्षोभ्युच्चयमात्रत्वेनोक्तः । सिद्धान्तमुपसंहरति—तस्मादिति ।

कैश्चित्कल्पसूत्रकारैः पक्षेऽन्वाधानस्य स्वामिकर्तृकस्यैवोक्तत्वाद्विषयायोगमाशङ्क्य, द्वेधा परिहरति—ये चेति ॥ २७ ॥

भा० प्र०—यह फल यजमानगामी ही होता है, इसका समर्थक अन्य कारण भी है—"लिङ्गदर्शनात् च" = श्रुति में कहा गया है "यां वैकाञ्चन ऋत्विज अशिषमाशासते यजमानस्यैव सा" अर्थात् ऋत्विग्गण यज्ञ में जिसे फल की प्रार्थना करते हैं, वह यजमान का ही होता है । इस श्रुति वाक्य की ज्ञापकता के अनुसार अवगत होता है कि यह फल यजमान का प्राप्तव्य है ।

"लिङ्गदर्शनात् च" = लिङ्ग अर्थात् ज्ञापक वेद वचन दृष्ट होने से ॥ २७ ॥

इति त्रयोदश करण मन्त्र प्रकाश्य फल का याजमानत्वाधिकरण ।

## (१४) कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात् ॥ २८ ॥ सि० ।

शा० भा०—इदं समधिगतं—करणेषु मन्त्रेषु स्वामिनः फलमाशासितव्यमिति । किमेष एवोत्सर्गः ? नेत्याह । क्वचिदृत्विजामपि फलमाशासितव्यमिति, यत्र कर्मार्थं फलम् । यथा, अग्नाविष्णू मावामवक्रमिषं, विजिहाथां, मा मा संताप्तम्, तै० सं० १-१-१२ इति । असंतप्तोऽध्वर्युः कर्म शक्नोति

कर्तुम्। कर्मसिद्धिर्यजमानस्योपकारिकेति, ऋत्विक्फलमाशासितव्य-मत्रेति ॥ २८ ॥

त० वा०—यत्त्वसंतापादि फलं कर्मप्रयोग एवोपयुज्यते, तद्यजमानेनापि तथेष्यते एवेति नाऽऽत्मनेपदेन विरुध्यते ॥ २८ ॥

न्या० सु०—सूत्रं व्याचष्टे—सर्वेति। फलस्याननुष्ठेयत्वाच्चिन्तानर्थक्यमाशङ्क्य फलशासनस्य मन्त्रार्थत्वेनाऽनुसन्धेयतयाऽनुष्ठेयत्वाच्चिन्तार्थवत्त्वोक्त्यर्थं पक्षोक्तमिति भाष्यं मन्त्राधिकरणे मन्त्रार्थानुसन्धानस्यानुष्ठेयतयोक्तत्वेन स्पष्टत्वान्न व्याख्यातम् ॥ २८ ॥

करणमन्त्रेषु कर्मार्थफलस्य ऋत्विग्धर्मत्वधिकरणम्

भा० प्र०—दर्शपूर्णमास प्रकरण में "मामा सन्ताप्तं लोकं में लोककृतो कृणुतम्" अर्थात् तुम दोनों हमको सन्तापित मत करो, तुम दोनों स्थानकारी हो—मुझे स्थान कर दो यह मन्त्र अध्वर्यु का पाठ्य है। इसमें जो फल कहा गया है, वह फल किसको प्राप्य होगा अर्थात् यजमान को या अध्वर्यु को यही संशय है।

पूर्वपक्षी का कहना है, पूर्व अधिकरण की मुक्ति के अनुसार यह यजमान का ही प्राप्य है।

इसके उत्तर में सिद्धान्ती का कहना है "कर्मार्थं तु फलं तेषां" यह जो फल है वह कर्म सम्मान करवाने का हेतु होने से, क्योंकि, अध्वर्यु के सन्तप्त होने पर कार्य सम्पन्न ही होगा, इसलिए, यह अध्वर्यु का ही प्राप्य है। फलतः, इसके द्वारा यजमान का ही प्रयोजन साधित होता है। कारण, अध्वर्यु यदि सन्तप्त न हो कर्म सुसम्पन्न नहीं होगा, ऐसा होने पर यजमान भी फल प्राप्त करेगा, इसलिए, सूत्र में कहा गया है "स्वामिनः प्रत्यर्थवत्वात्"।

"कर्मार्थं फलं" = कर्म का उपकार साधक फल है, "तु" = अन्य अधिकरण का का सूचक है, "तेषां" = उनका अर्थात् ऋत्विजों का होगा, "स्वामिनः प्रत्यर्थतत्त्वात्" = क्योंकि, उससे स्वामी के प्रति अर्थवत्ता होती है अर्थात् यजमान का ही प्रयोजन सिद्ध होता है। सिद्धान्त ॥ २८ ॥

## व्यपदेशाच्च ॥ २९ ॥

शा० भा०—यत्र च व्यपदेशो भवति, तत्राऽऽर्त्विजम्। दक्षिणस्य हविर्धानस्याधस्ताच्चत्वार उपरवाः प्रादेशमुखाः प्रादेशान्तरालाः। तत्र हस्तौ प्रवेश्याध्वर्युर्यजमानमाह, किमत्रेति। स आह, भद्रमिति। तन्नौ सहेत्य-ध्वर्युः प्रत्याहेति व्यपदेशो भवत्यध्वर्योर्यजमानस्य च। तन्नौ सहेत्युभयोर्व-चनमध्वर्युयजमानयोः। तस्मादध्वर्युफलमाशासितव्यमत्रेति ॥ २९ ॥ इति चतुर्दशं करणमन्त्रेषु कर्मार्थफलस्य ऋत्विग्धर्मताधिकरणम् ॥ १४ ॥

त० वा०—'व्यपदेशादितरेषाम्' इत्यत्र ब्राह्मणगतमुदाहृताम्। इह तु प्रस्तावववशेन मन्त्रगतम्। तद्धि क्लेशेन कल्प्यमानं कदाचिदुभयोर्न शक्यते कल्पयितुमित्याशङ्का स्यात्। कल्पनाहेतुस्तु युगपत्प्रवृत्तेरविशिष्ट इति न किंचिद्गौरवम्। अथ कस्मान्नोभावेव प्रयुञ्जाते। यदैकेनापि प्रयुज्यमानः शक्नोत्येवोभयगामि फलं प्रकाशयितुं तदा सिद्धेऽर्थे न किञ्चिदुभयकर्तृकत्वेन प्रयोजनमस्तीत्यध्वर्युनियमः॥ २९॥

इति चतुर्दशकरणमन्त्रेषु कर्मोपयोगिप्रकाश्यमानफलस्य ऋत्विग्गामित्वाधिकरणम्॥ १४॥

न्या० सु०—गार्हपत्याहवनीययोर्वृद्धतरत्वेनाऽन्तरासंचरणेपि सन्तापनापत्तेस्तादात्विकस्यासन्तापस्य फलत्वायोगात्कालान्तरीयासन्तापफलताया मन्त्रवर्णात्कल्पनीयत्वावगतेस्तस्य च कर्म्मानौपयिकत्वात्पूर्वाधिकरणन्यायेन स्वामिगामित्वपूर्वपक्षं स्पष्टत्वदनुक्त्वा, आहवनीयप्रत्यगुदग्देशस्थस्य प्रत्यग्दक्षिणदेशे स्थित्वा स्रुवाधाराधारणायाऽऽहवनीयसमीपदेशेन दक्षिणाभिक्रमणे समन्ताद्गच्छन्तीनां ज्वालानां स्पर्शात्सन्तापापत्तौ कर्म्मविघ्नापत्तेस्तत्प्रतिबन्धस्याध्वर्युगतस्य स्वाम्यपेक्षितत्वेनात्मनेपदाविरोधान्ममेत्यात्मागिवादिशब्दसामर्थ्यात्मिकेन लिङ्गेनाभिक्रमणकर्त्रध्वर्युगामित्वसिद्धान्तोक्त्या पूर्वापवादमाह—यत्त्विति॥ २९॥

भा० प्र०—कोई यह प्रश्न कर सकता है कि क्या यह सार्वत्रिक नियम है कि फल ऋत्विग्‌गामी होता है, अन्यथा यजमान गामी होगा? इसके उत्तर में कहा गया है "व्यपदेशात् च" = जिस स्थल में व्यपदेश अर्थात् उल्लेख है, वहाँ क्रतु का उपकारक न होने पर भी फल ऋत्विग् गामी भी होता है जैसे "स आह भद्रमिति तन्नो सह इत्यध्वर्युः प्रत्याह", अर्थात् यजमान ने कहा इससे मङ्गल हो उससे अध्वर्यु ने कहा—वह हम दोनों के लिए हो। इस स्थल में फल यजमान एवं अध्वर्यु दोनों का ही प्राप्य के रूप में उल्लिखित होने पर ऐसे स्थल में ऋत्विक् को भी फल प्राप्ति होगी।

"व्यपदेशात् च" = व्यपदेश अर्थात् निर्देश रहने पर भी फल ऋत्विक् को होता है॥ २९॥

इति चतुर्दश करण मन्त्र में कर्मार्थ फल का ऋत्विग् गामिताधिकरण।

## (१५) द्रव्यसंस्कारः प्रकरणाविशेषात्सर्वकर्मणाम्॥ ३०॥ सि०।

शा० भा०—दर्शपूर्णमासयोर्बर्हिधर्मा वेदिधर्माश्च। तेषु संदेह किमङ्गप्रधानार्था, उत प्रधानार्था इति। प्रकरणात्प्रधानार्था इति प्राप्तः।

उच्यते। नैवं, द्रव्यसंस्कारोऽङ्गप्रधानार्थो। यथा व्याख्यातमेवोत्तरविवक्षया प्राप्तिरेषा क्रियत इति॥ ३०॥ इति पञ्चदशं द्रव्यसंस्कारस्याङ्गप्रधानार्थकताधिकरणम्॥ १५॥

त० वा०—गतः समाख्याविरोधविषयः। सर्वश्च श्रुत्यादिविरोधाविरोधविचारः प्रकृताविव विकृतिष्वपि द्रष्टव्यः। यत्तु धर्माणां सामानविध्यमङ्गप्रधानेषु पूर्वोक्तं तद्विकृतिषु कथमिति विचारे प्राप्ते सूत्रमेतत्। शक्यं तु पूर्वपक्षेऽप्येतत्समर्थयितुं यस्मात्प्रकृतौ बर्हिरादिसंस्कारः सर्वकर्मणां, तस्माद्विकृतावपि तथैव स्यादिति ॥ ३० ॥

इति पंचदशं द्रव्यसंस्काराणामङ्गप्रधानार्थताधिकरणम् ॥ १५ ॥

न्या० सु०—व्यपदेशात्फलस्योभयगामितायाः प्रागेवोक्तत्वात्पौनरुक्त्यमाशङ्क्य, ब्राह्मणस्य विधायकत्वेन तद्गताद्व्यपदेशात्फलस्यो भयगामित्वेपि मन्त्रस्याविधायित्वेन तद्गतस्य फलस्य क्लेशेन कल्पनीयत्वात्, भद्राख्यस्य च फलस्याकर्म्मार्थत्वेनाऽध्वर्युगामितया स्वामिनाऽनपेक्षणेनोभयगामित्वकल्पनाऽशक्त्या शङ्कासम्भवेनापौनरुक्त्यमाह—व्यपदेशादिति। व्यपदेशस्याऽध्वर्यौ, स्वामिनि च युगपत्प्रवृत्तेरुभयगामित्वकल्पनाहेतुताया मन्त्रब्राह्मणयोस्तुल्यत्वात्स्वाभिगामित्वानपायेन चाकर्म्मार्थत्वेपि, स्वामिनापेक्षणोपपत्तेरात्मनेपदाविरोधान्मन्त्रेपि कल्पनागौरवक्लेशाभावेन सिद्धान्तमाह—कल्पनेति। उभयगामिफलोक्तिशक्त्याख्याल्लिङ्गान्मन्त्रस्योभयप्रयोज्यत्वं 'तन्नौ सहेत्यध्वर्युराहेति' वाक्यगताध्वर्युमात्रप्रयोज्यत्वबाधेन शङ्कते—अथ कस्मादिति। लिङ्गाविरोधेन वाक्यस्य बाधायोगादध्वर्युणैव प्रयोज्य इति नियमोपपत्त्या निरस्यति—यदेति ॥ ३० ॥

द्रव्यसंस्कारस्याङ्गप्रधानार्थत्वाधिकरणम्।

भा० प्र०—दर्शपूर्णमास में जो सकल बर्हि धर्म एवं वेदिधर्म है, वे अङ्ग एवं प्रधान दोनों कर्मों के लिए है या केवल प्रधान कर्म के लिए है—यही संशय है। इसमें पूर्वपक्षी का कहना है कि प्रकरण के अनुसार वह केवल प्रधान का ही धर्म है। इसके उत्तर में सिद्धान्ती का कहना है कि ये सभी द्रव्य संस्कार अङ्ग एवं प्रधान सभी कर्मों के लिए है, यह पूर्व में सप्तम पाद के प्रथम अधिकरण में प्रतिपादित अब केवल प्राप्ति के लिए उल्लेख है।

"द्रव्य संस्कारः = द्रव्यका संस्कार, "सर्वकर्मणाम्" = अङ्ग एवं प्रधान सभी कर्मों में होगा, "प्रकरणाविशेषात्" = क्योंकि, प्रकरणगत को हमी विशेष नहीं है।

इस प्रकरण में वार्तिक कार ने कहा है कि सूत्र की परवर्ती अधिकरण के पूर्वपक्ष के रूप में भी व्याख्या की जा सकती है, अतः, प्राप्ति पक्ष न मानने पर भी चल सकता है। पूर्वाधिकरण पर्यन्त अंश में समाख्या का विरोध और अविरोध विचार है वह प्रकृति के समान विकृति में भी प्रयोज्य है, अतः, प्रकृति भूत कर्म में सभी धर्म अङ्ग एवं प्रधान दोनों कर्मों में ही समान विधि बल से प्राप्त होता है, इस प्रकार का जो सिद्धान्त किया गया है, वह विकृति भूत कर्म में किस प्रकार होता है यह संशय हो सकता है, इसमें पूर्वपक्षी का कहना है कि "द्रव्यसंस्कारः सर्वकर्मणाम्" द्रव्य-

संस्कारक सभी धर्म प्रकृति प्रकृति से विकृति के सभी कर्मों में ही अतिदेश विधि के बल से प्राप्त हैं। कारण, "प्रकरणा विशेषात्" जब प्रकृति भूत याग का अङ्ग एवं प्रधान सभी कर्मों के लिए ही बर्हिधर्म हैं, आज्य धर्म आदि प्रकरण गत विशेष न रहने पर एक ही प्रकरण के बल से समान भाव में ही विहित होता है, तब विकृति याग के सभी कर्मों में ही वे अतिदेश विधि के बल से प्राप्त होंगे, कारण इस प्राकृत = प्रकृति याग सम्बन्धीय धर्म अतिदेश विधि का विषय न होने का कोई नियामक नहीं है, अतः, विकृति याग में जो कुशगुच्छ के द्वारा यूपावट = यूप प्रोथित करने वाला गर्त आस्तरण किया जाता है, उन कुशों में भी प्रकृति याग का सभी बर्हिधर्म अनुष्ठेय है। इति पूर्वपक्ष ॥ ३० ॥

## (१६) निर्देशात्तु विकृतापूर्वस्यानधिकारः ॥ ३१ ॥ सि० ।

शा० भा०—ज्योतिष्टोमे पशुरग्नीषोमीयो यो दीक्षितो यदग्नीषोमीयं पशुमालभते, तै० सं० ६ १-११-६ इति । तत्र श्रूयते बर्हिषा यूपावटमवस्तृणाति, श० ब्रा० ३-५-४-७ आज्येन यूपमनक्ति, ३-४-५-१० इति । तत्र संशयः । किं तयोराज्यबर्हिषोराज्यबर्हिर्धर्माः प्राकृताः कर्तव्या, उत नेति । किं प्राप्तम् ? कर्तव्या इति । कुतः ? वाक्यं हि बर्हिर्मात्रस्य, आज्यमात्रस्य च धर्माणां विधायकम् । तदिहापि वाक्यं चोदकेन प्राप्तम् । न चैतद्बर्हिराज्यं निष्प्रयोजनम् । तस्मादत्र धर्माः क्रियेरन्निति । एवं प्राप्ते

ब्रूमः निर्देशाद्विकृतावपूर्वस्यानधिकारः निर्दिष्टा एते धर्माः प्रकृतौ । यत्र प्रधानस्योपकुर्वन्ति प्राकृतकार्ययोराज्यबर्हिषोः । ये च प्रधानस्योपकारिणो धर्माः त इहातिदिश्यन्ते । प्रधानं हि चोदकोऽपेक्षते, न धर्मान् । प्रधानस्य हि चोदकेन सामान्यं, न धर्माणाम् । अपि च । नान्यार्थं इति ज्ञातेन संनिहितेनाप्येकवाक्यता भवति, अन्यसंबन्धोपपत्तौ सत्याम् । यथा भार्या राज्ञः, पुरुषो देवदत्तस्येति । किमङ्ग पुनर्विप्रकृष्टेन, निर्ज्ञातं खल्वङ्गत्वं प्रधानापेक्षायां भवति । केवलमिहातिदेशः क्रियते । पदार्थापेक्षायामङ्गत्वमपि साधयितव्यं स्यात् । धर्माश्चापेक्ष्यमाणाः साधारणा भवेयुः । तथोहो नावकल्पेत । लिङ्गविशेषदर्शनाच्च व्यवतिष्ठेरन् धर्माः । तत्र दर्शनं नोपपद्येत । वपया प्रातः सवने चरन्ति, पुरोडाशेन माध्यंदिने' इति । तथा, न पिता वर्धते, न माता, नाभिः, प्राणो हि स इति । तस्माद्यद्द्वारा प्रकृतौ कृताः, तद्द्वारैव विकृतौ, नान्यद्वारा । न च यूपावटस्तरणं प्रकृतावस्ति यूपाञ्जनं वा । तस्मान्न तत्र प्राकृता धर्मा भवेयुरपूर्वत्वात् ॥ ३१ ॥ क० अपूर्वप्राकृतधर्माणां विकृतावसंबन्धाधिकरणम् ॥ १६ ॥

त० वा०—यद्ययमङ्गोपदेश एवानुषङ्गरूपेण साधारणः स्यात्, यदि च शास्त्राण्यतिदिश्येरन्, ततः शास्त्रार्थः प्रकृतिवद्विकृतिष्वपि कल्प्यमानः सर्वार्थत्वेनाऽवधार्यते कार्यप्राप्तिपुरःसरस्तु धर्मातिदेश इष्टः। तत्र यागगतेन व्यापारेण गृहीतेनाऽऽत्मसिद्धयर्थं नियमादृष्टद्वारभूतानि दृष्टान्यदृष्टानि च प्रयोजनानि गृह्यते। तानि च निर्ज्ञातपरिमाणान्येव प्राप्नुवन्ति। तैश्चाऽऽत्मसिद्धयर्थं पदार्थाः प्राप्यमाणाः स्वात्मनियता एव प्राप्यन्ते।

न च यूपावटास्तरणं नाम बर्हिषः कार्यं प्रकृतौ विज्ञातं, येन बर्हिः तद्धर्मा वा गृह्येरन्। यैस्तु वेदिस्तरणादिभिर्गृह्यन्ते, न तेषां यूपावटस्तरणमन्तरेण किञ्चिन्नोपपद्यत इति न तदर्थं प्राप्यन्ते। तस्मादिहापूर्वस्यानधिकार इति। प्रधानं हि चोदकोऽपेक्षत इत्यादिना, अपिना साधारण्यं शास्त्रातिदेशो नेत्येतन्निराकरोति। शास्त्रापेक्षायां हि सर्वमभिनवं प्रकृतिवत्पुनः कल्पयितव्यं स्यात्। दूरस्थसंबन्धादिक्लेशश्च स्थित एव। शास्त्रातिदेशात्सामानविध्याच्च, पशुधर्माणां मध्येऽग्नीषोमसंस्कारार्थः पशुपुरोडाशो देवतान्तरे न प्राप्नोति। तस्योहस्य च दर्शनं विरुध्येत। तस्मादुपकारातिदेश इति॥ ३१॥

इति षोडशे प्राकृतधर्माणां विकृतावपूर्वपदार्थानङ्गत्वाधिकरणम्॥ १६॥

न्या० सु०—'कः शेषः ? केन हेतुना शेषः ? कथं च विनियुज्यते ? श्रुत्यादीनि च विनियोगकारणानि वक्ष्यन्ते। तेषां च बलवदबलवत्त्वेति पञ्चविधस्य शेषलक्षणप्रतिज्ञार्थस्य बलाबलचिन्तासमाप्त्या समाप्तत्वाच्छेषलक्षणानन्तर्गतोत्तरचिन्ताया लक्षणासङ्गतिमाशङ्क्यऽसर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वादि ३-८ त्यत्र बर्हिर्लवनादीनामङ्गप्रधानार्थत्वेऽभिहिते, वपनादौ भोक्रंशपातेनापोदिते, महावेद्यां चिकीर्षासंयोगस्यानपवादकत्वादनपोदितसिद्धेर्दीक्षादक्षिणे' वचनादपोदिते, महावेदेरपि वाचनिवयूपार्थत्वादपवादमाशङ्क्य, वचनस्य देशलक्षणार्थत्वेनानपवादकत्वमुक्त्वा हविर्द्धानेपिदेशलक्षणार्थत्वेतिदिष्टे प्रसङ्गात्स्वयङ्कर्तृकताऽङ्गप्रधानार्था, प्रधानमात्रार्था वेति विचार्य, तत्प्रसङ्गेन कर्तृचिन्ताप्रपञ्चपूर्वंकर्तृविषयसमाख्याविरोधाविरोधचिन्तासमाप्त्या बुद्धिस्थीकृतस्य बर्हिर्लवनादेः प्राकृतकार्यमात्रसर्वार्थत्वं, वैकृतकार्यसर्वार्थतापि वेति चिन्तायाः सङ्गतिं सूचयितुमाह—गत इति। क्व समाख्यायाः पूर्वैः सह विरोधः, क्व वा नेति चिन्तासमाप्त्या बुद्धिस्थीकृतस्यापि बर्हिर्लवनादेर्विकृतावातिदेशिकत्वादुपदेशचिन्तार्थे षट्के विचारासङ्गतिमाशङ्क्य अतिदेशात्प्राकृतानामङ्गानां विकृत्यन्वयावगमेपि संस्कारकर्म्मणां निराधाराणां विकृत्यन्वयायोगाद्बर्हिरादीनां चापूर्व्वसाधनांशेनैव द्वारत्वाभ्युपगमाद्वैकृतापूर्व्वसाधनीभूतद्वारान्वयस्य प्रधानसारूप्यहेतुकातिदेशाविषयत्वेनातिदेशादनवगतेः पदार्थातिदेशद्वारातिदिष्टश्रुत्याद्युपदेशाधीनत्वात्, बर्हिर्लुनातीति विकृतावतिदिष्ट्या श्रुत्या प्राकृतस्तरणद्वारैव वैकृतापूर्व्वसाधने बर्हिषि द्वारभूते लवनं विनियुज्यते, बर्हिर्मात्रे वेत्युपदेशं विनैवेति

सूचयितुं श्रुत्यादीनां विरोधाविरोधचिन्तायाः प्रकृतौ विकृतौ चोपयोगसाम्यमाह—**सर्वश्चेति।**

एवमपि प्रकृतावङ्गप्रधानेषु धर्मसामानविध्यस्य सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वादित्यत्रैवोक्तत्वादेतत्सूत्रं गतार्थमित्याशङ्क्योत्तरविवक्षार्थत्वं तावद्भाष्योक्तं विवृणोति—**यत्त्विति।** स्वयमुत्तराधिकरणपूर्वपक्षोक्त्यर्थत्वेनैतत्सूत्रं व्याचष्टे—**शक्यं त्विति।। ३१ ।।**

अपूर्वप्राकृतधर्माणां विकृतावसंबन्धाधिकरणम्।

भा० प्र०— सिद्धान्ती ने कहा है कि "निर्देशास्तु विकृतौ अपूर्वस्य अनधिकारः" पूर्वपक्षी ने जो कहा है कि उससे युक्त सभी कर्मों में ही बर्हिधर्म आदि अतिदिष्ट होगा—यह सङ्गत नहीं है। कारण, प्रकृति याग में जो बर्हिः संस्कार किया गया है, वह बर्हिः संस्कार के लिए नहीं है, अपितु संस्कृत बर्हि से जो अन्य कर्म सम्पादित होता है, वह तज्जन्य अपूर्व के लिए ही होता है, क्योंकि, असंस्कृत बर्हिः से उस कर्म के साधित होने पर ही उससे अपूर्व नहीं होगा, इसलिए, सूत्र में कहा गया है "निर्देशात्" अर्थात् प्रकृति याग में कार्य विशेष के साधन करने के लिए निर्देश अर्थात् विधान होता है, इसलिए "विकृतौ अपूर्वस्य अपूर्वस्य अनधिकारः" = विकृतियाग को जो अपूर्व = अप्राकृत कर्म अर्थात् जो कर्म प्रकृति याग में नहीं होने से अतिदेश विधि के बल से प्राप्त नहीं है, उसका अनधिकार होगा अर्थात् प्रकृति भूत कर्म को धर्म के साथ उसका सम्बन्ध नहीं होगा, कारण,

"प्रकृतौ कार्यकृद्धर्मा विकृतौ स्युर्न चेतरे"

जो धर्म = गुण प्रकृति में विशेष-विशेष कार्य का सम्पादन करता है, उन्हीं का अतिदेश होता है, किन्तु केवल धर्म का अर्थात् गुण विशेष का अतिदेश नहीं होता है प्रकृति याग में बर्हिः से यूपावट का = यूपगर्त का अवस्तरण नहीं है, कारण, प्रकृति भूत याग दर्शपूर्ण मास याग है उसको इष्टि याग कहकर पशु के न रहने पर यूप नहीं रह सकता है। प्रकृति याग में बर्हिः के उद्देश्य से जो धर्म विहित होता है, यूपावट के आस्तरण के लिए जो बर्हिः अर्थात् जिस बर्हिः से यूपावट का अवस्तरण करता है, उससे, प्रकृति याग में विहित बर्हिः संस्कारक धर्म अनुष्ठेय नहीं होगा। जो कर्म प्रकृति याग में संस्कृत बर्हिः से अनुष्ठित होता है, वे ही कर्म जब विकृति याग में अतिदिष्ट होता है, तब उनके अनुष्ठान के लिए बर्हिधर्म अवश्य ही अनुष्ठेय होता है। कारण ये सभी धर्म सभी प्राकृत = प्रकृति यागीय याग को द्वार कर विकृति याग में स्थान लाभ करता है, अन्यथा नहीं, इसीलिए यूपावट आस्तरण के लिए जो बर्हिः, उससे प्राकृत बर्हिधर्म कर्तव्य नहीं होगा, क्योंकि, प्रकृति याग का कार्यकारी धर्म विकृतियाग में अतिदिष्ट होता है।

"निर्देशात्" = निर्देश अर्थात् कार्य का निर्देश या स्वतन्त्र भाव उल्लेख होने से, "तु" = पूर्वपक्ष के निरास के लिए है, "विकृतौ" = विकृति भूत कर्म में, "अपूर्वस्य"

= जो अपूर्व अर्थात् प्रकृति से अप्राप्त है उन कर्मों का "अनधिकारः" = इन प्राकृत धर्मों में अधिकार = सम्बन्ध नहीं है ॥ ३१ ॥

इति षोडश प्राकृत धर्मों का विकृत अपूर्व पदार्थ में अनङ्गताधिकरण ।

## (१७) विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ ३२ ॥ सि० ।

शा० भा०—दर्शपूर्णमासयोरामनन्ति, 'समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति आप० श्रौ० १-११-६' तथा, 'अरत्निमात्रे विधृती करोति' इति। तत्र संशयः किं वेदिस्तरणार्थाद्बर्हिषो विधृती पवित्रे, उतान्यत इति। किं तावत्प्राप्तम्? वेदिस्तरणार्थाद्बर्हिषः कार्ये। किं कारणम्? तद्धि प्रकृतं, धर्माश्चाविशेषात्सर्वबर्हिषामर्थेन। तस्मात्तत इति प्राप्ते—

ब्रूमः अन्यतः क्रियेत। कुतः? विरोधात्। कथं विरोधः? श्रूयते हि, हि, 'त्रिधातु पञ्चधातु वा वेदिं स्तृणाति,' इति। तच्चेनाऽऽस्तीर्यते, कथं तद्विधृतिपवित्रं क्रियेत्। न हि संभवत्येकं स्तरणाय, विधृतिपवित्राय च। तदेतदुपदिष्टवचनमनेकगुणत्वं चोभे अप्यसंभविनी प्रतिज्ञाते स्याताम्। तस्मान्न ततः क्रियेतेति। यदि न ततः, कुतस्तर्हि? अव्यक्त एवंजातीयकः शेषे। अस्ति तत्र परिभोजनीयं नाम बर्हिः। ततः कर्तव्यम् ॥ ३२ ॥

इति सप्तदशं विधृतिपवित्रयोः परिभोजनीयबर्हिषा कर्तव्यताधिकरणम् ॥ १७ ॥

तं० वा०—इदानीं प्रकृतावपि नातीव सर्वार्थतेत्येतत्साधयति। यथालूनस्य बर्हिषस्त्रिधातु पञ्चधातु वेति सकलस्य स्तरणविधानादशक्योऽन्यविनियोग इति, सामान्यभूतो विधृतिपवित्रार्थो दर्भविधिरन्यो द्रष्टव्यः। धातुरिति स्तरणचयोऽभिधीयते ॥ ३२ ॥

इति—प्रकृतावपि लवणादेरसर्वार्थताधिकरणम् ॥ १७ ॥

न्या० सु०—धर्मसाधारण्य-शास्त्रातिदेशयोः सप्तम-दशमाद्यनिराकरिष्यमाणत्वेनेह तदाशयपूर्वपक्षायोगादानुमानिकेभ्यः प्राकृतेभ्योऽङ्गेभ्यः प्राक् प्रत्यक्षत्वाद्वैकृताङ्गप्राप्ते बर्हिर्लुनातीत्यतिदिष्टया श्रुत्या प्राकृतवैकृतबर्हिरुद्देशेन लवनविधानात्सर्वार्थत्वं पूर्व्वपक्षयित्वा—

क्लृप्तोपकारसाकाङ्क्षाः प्रथमं प्राकृतैः सह
सम्बध्यन्ते समीपस्थं विकाराः प्रोज्झ्याचोदितम् ॥

इति न्यायेनानुमानिकत्वेपि क्लृप्तोपकारत्वात्प्राकृतसंस्कारविधावपूर्वस्यानुद्देश इत्येवमर्थेन सूत्रेण निराकृते, प्रकृतौ ये विहिता धर्मास्ते विकृतौ स्ववाक्यगतचोदनादिसादृश्यनिमित्तेनातिदेशेन वाक्यान्तरविहितेभ्योऽङ्गेभ्यः प्रागेव निर्दिष्टा। अतो यत्र प्राकृतकार्ययो राज्यबर्हिषोः स्थिताः प्रधानोपकारित्वेन क्लृप्तास्तत्रैव निर्दिष्टा इत्येवमर्थेन निर्दिष्टा इति

भाष्येण भूतार्थनिष्टान्तनिर्दिष्टपदावृत्त्य, अतः शब्दाध्याहारणे च विकृतौ प्राकृतानामानुमानिकत्वाद्वैकृतेभ्यः प्रत्यक्षेभ्यः प्रागन्वयायोगभाशङ्क्योपकारातिदेशानपेक्षप्राकृताङ्गातिदेशे तेषां प्रकृत्युपकारित्वे क्लृप्तेऽपि, विकृत्युपकारित्वस्याक्लृप्तत्वेनोपदेशसाधारण्ये वा क्वचिदप्युपकारित्वस्याक्लृप्तत्वेनाक्लृप्तोपकारत्वाविशेषात्प्रागन्वयो न युज्यते। द्वयस्यापि तु दशमसप्तमाद्यनिराकरिष्यमाणत्वेनोपकारपृष्ठभावेनैवाङ्गातिदेशात्प्राकृतं चोपकारं विकृतावतिदिष्टं प्रति साधनत्वस्य प्रकृतौ क्लृप्तस्योपकारैक्येन विकृतावप्युनपायात्प्रकृतौ क्लृप्तापकारत्वेन प्राकृतानामङ्गानां प्रागन्वयोपपादनार्थे **ये चेत्यादिभाष्यं** समुदायार्थतात्पर्यतस्तावद्व्याचष्टे—**यदीति**। सप्तमाद्ये साधारण्यनिरासेनातिदेश इष्टः। स च दशमाद्ये कार्यपुरःसरं दृष्ट इत्यर्थः। धर्म्मातिदेशस्य करणोपकाराख्यधर्मकार्यातिदेशपूर्व्वकत्वं विवृण्वन् सर्व्वार्थत्वनिरासमुपपादयति—**तत्रेति**।

यागं गतो यागसहकारी सन् फलापूर्व्वोत्पत्तौ व्याप्रियत इति व्युत्पत्त्या यागगतव्यापारोक्त्या करणोपकाराख्यं कार्यमेवोक्तं। प्रयोजनोक्त्या प्रात्यात्मिकपदार्थविधिप्रयोजनत्वादवान्तरकार्याण्युक्तानि दृष्टानां तण्डुलानामुपायान्तरेणापि सिद्धेः, तद्द्वारा कार्यस्यावघाताख्यधर्मग्राहकत्वायोगात्कार्येण ग्रहणानर्थक्यशङ्कानिरासार्थं नियमजन्यादृष्टद्वारतोक्ता। यूपावटस्तरणादीनामपि प्रयोजनानां करणोपकारसाधनत्वात्, तेनात्मसिद्ध्यै ग्रहणापत्तेः, अतादर्थ्येनापि बर्हिर्लवनादिपदार्थप्रसक्त्यापत्तिमाशङ्क्य, तेषां करणोपकारजनकत्वेऽप्यतिदेशकालेनबगमाद् ग्रहणाशक्तेर्यावन्ति वेदिस्तरणादीनि प्रयोजनानि प्रकृतौ जातानि, तावन्त्येव प्राप्नुवन्तीत्युक्तं। तैश्च ज्ञातपरिमाणैरेव पदार्थप्रयोजनैरात्मसिद्ध्यै पदार्थानां प्राप्यमाणत्वेनात्मजनकानामेव प्राप्यमाणत्वान्न सर्वार्थत्वापत्तिरिति ग्रन्थशेषेणोक्तम्। भाष्यार्थस्य सूत्रारूढत्वसूचनायोक्तेऽर्थे सूत्रं योजयति—**तस्मादिति**।

एतदेव भाष्यमवयवशो व्याचिख्यासुः प्रप्रधानं हीत्यनेन शास्त्रातिदेशम् अपिचेत्यनेन चोपदेशसाधारण्ये निरस्यतीत्याह—**प्रधानं हीति**। भाष्यं च चोदनासामान्यस्य प्रधानगतत्वेन तद्गतस्य फलसाधनयोग्यताख्याङ्गजन्योपकारस्यैव तेनोपस्थापयितुं शक्यत्वात्, धर्म्माणां तु साक्षाच्चोदनासामान्याभावात्प्रधानचोदनासामान्येन चात्यन्तभिन्नानां धर्म्माणामुपस्थापयितुमशक्यत्वाच्चोदनासामान्यहेतुकश्चोदको यस्मात्प्रधानोपकारमेवातिदेश्यतयापेक्षते, न धर्म्मान्। तस्मात्प्रधानोपकारद्वारैव धर्म्मातिदेशो, न स्वातन्त्र्येणेत्युक्तं यद्युपदेशसाधारण्याशयेनोपकारान्वयात्प्राग्धर्म्माणां दर्शपूर्णमासवद्दीक्षादिनाप्यन्वयः शङ्क्येत्। सोऽपि विप्रकृष्टैकवाक्यत्वायोगान्न सम्भवतीत्यपिचेत्यादिनोक्तमित्येवं योज्यं।

प्रधानाश्रितत्वेनोपकारस्याश्रयाश्रयिणोरत्यन्तभेदाभावात्प्रधानादत्यन्तभेदाभावं मत्वा प्रधानापेक्षोक्त्योपकारापेक्षा विवक्षिता। विधेः प्रकरणान्तरेऽतिदेशादि१०-१-१ति दशमाद्यपूर्वपक्षसूत्रे विधिशब्देन शास्त्रातिदेशस्य वक्ष्यमाणत्वाच्छास्त्रलक्षणार्थाऽत्रत्या धर्म्मोक्तिवार्तिककृतोभिमता। उपदेशसाधारण्ये विप्रकृष्टान्वयक्लेशोक्त्या धर्म्मातिदेशे भृत्यादिरेकोऽप्येकं स्वामिनं प्रति यमुपकारं करोति, तमेवान्यमपि प्रतीति नियमादर्शनेन

धर्म्मैः प्राकृत एवोपकारो विकृतौ कार्यं इति नियमप्रमाणाभावादुपकारविशेषसाधनत्वस्यापि कल्पनीयत्वेन कल्पनागौरवक्लेशस्य बुद्धिस्थस्योपकारातिदेशे तत्साधनत्वस्य प्रकृतावेव क्लृप्तत्वेनाकल्पनीयतया लाघवसम्भवे गौरवस्यानाश्रयणीयत्वाद्धर्म्मातिदेशनिरासहेतुत्वोक्त्यर्थं निर्ज्ञातं खल्वपत्यिभाष्यं व्याचष्टे—शास्त्रेति। यश्चोपदेशसाधारण्ये दूरस्थान्वयसिद्धये दूरस्थोपस्थापनक्लेशोभिहितः स शास्त्रातिदेशेपि तेषां चोदनासामान्येनोपस्थापनाशक्तेः स्थित एवेत्याह—दूरस्थेति। धर्म्माश्चेत्यादिभाष्ये शास्त्रातिदेशोपदेशसाधारण्ययोर्द्वयोरपि नरासार्थत्वेव व्याचष्टे—शास्त्रेति। ये चेत्यादिभाष्योक्तं शास्त्रातिदेशोपदेशसाधारण्यनिरासमुपसंहरति—तस्माविति। अतिदेशः स चोपकारस्येत्यर्थः। शास्त्रातिदेशोपदेशसाधारण्यानिरासस्य प्रकृतोपयोक्त्यर्थंस्तस्मादित्यादित्यादिभाष्यशेषः स्पष्टत्वान्न व्याख्यातः॥ ३२॥

विधृतिपवित्रयोः परिभोजनीयबर्हिषा कर्त्तव्यत्वधिकरणम्॥ १७॥

भा० प्र०—पूर्व अधिकरण में जो नियम कहा गया है, उससे मन में यह हो सकता है कि प्रकृति याग में बर्हिधर्म मात्र में ही समान विधान है, इसलिए, उसका अन्यथा भाव दिखाने के लिए ही कहा गया है—"विरोधे च" इत्यादि। श्रुति में दर्शपूर्ण मास याग प्रकरण में "समावप्रच्छिन्नाग्नौ दर्भौ प्रादेशमात्रौ पवित्रे करोति" अर्थात् समप्रमाण अच्छिन्न अग्रभागयुक्त प्रादेश प्रमाण दो गाछ कुश को पवित्र कुश निमित द्रव्य विशेष करे एवं "अरत्निमात्रे विधृती करोति" अर्थात् अरत्नि प्रमाण दो विधृतियों अर्थात् कुशनिमित यागीय द्रव्य विशेष करे। यह जो 'पवित्र' एवं 'विधृति' करने का विषय उपदिष्ट है, यह वेदि स्तरण के लिए जो संस्कृत वर्हि है, उससे कर्तव्य होगा कि नहीं—यही संशय है। इसमें पूर्वपक्षी का कहना है कि प्रकृति याग में जब संस्कृत वर्हि से कार्य करना होगा और वेदिस्तरण वर्हिः का ही जब लवणादि संस्कार किया जाता है तब उससे ही पवित्र एवं विधृति करना उचित है।

इसके उत्तर में सिद्धान्ती कहता है "अन्यक्तः शेषे" यह जो पवित्र एवं विधृति है, यह शेष अर्थात् वेदिस्तरण से स्वतन्त्र कार्य होने से, इसका धर्म अव्यंता होगा। अर्थात्यह वेदिस्तरणार्थक लवणादि संस्कृत वर्हिः से कर्तव्य नहीं होगा, कारण, "श्रुति विशेषात् विरोधे" श्रुति विशेष से अवगत होता है कि समग्र वर्हिः ही आस्तरण में विनियुक्त है, अतः वेदिस्तरण छोड़कर अन्य कर्म में यदि उसका ग्रहण किया जाय तो विरोध होगा। अतएव, पूर्वाधिकरणोक्त यूपावटा स्तरण जैसे असंस्कृत वर्हिः से कर्तव्य है पवित्र एवं विधृति यागीय होने पर भी वह भी असंस्कृत 'परिभोजनीय' नाम के कुश से सम्पादनीय है।

"श्रुति विशेषात्" = श्रुति विशेष हेतु अर्थात् विशेष श्रुति वाक्य होने से, "विरोधे" = विरोध होने पर, "च" = अन्य अधिकरण का सूचक है, "शेषे" = अन्य अवशिष्ट कार्य में, "अव्यक्तः" = अव्यक्त अर्थात् धर्म विहित = गुण विहित होगा॥ ३२॥

इति सप्तदश प्रकृतियाग में भी लवण = छेदन आदि धर्मों का असर्वार्थताधिकरण।

## (१८) अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ।। ३३ ।। सि० ।

शा० भा०—ज्योतिष्टोमे श्रूयते, पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाति आप. श्रौ. १२-२५-६ धाना आश्विनपात्रे, पयस्यां मैत्रावरुणपात्रे, इति । तत्र संशयः किमन्यत एषां क्रियेत, उत प्रकृतेभ्य इति । किं प्राप्तम् ? पूर्वेण न्यायेनाऽन्यत इति । तत्रोच्यते । तत एकदेशस्यापनयः । कुतः ? विद्यमानसंयोगात् । विद्यते हि तत्र पुरोडाशो, धानाः, पयस्या च । तत्संयोग एव न्याय्यो, नान्यसंयोग इति । पुरोडाशादीनामेव संस्कारो, नैन्द्रवायवादीनाम् । कुतः ? पुरोडाशादिषु द्वितीयादर्शनात् । प्रत्यक्षश्चैकदेशापनयेनोपकारो, नैन्द्रवायवादिसंबन्धेन । एवं प्रकृतानुग्रहो भविष्यति । तस्मात्प्रकृतस्योपदेशेन तत्क्रियेत । न चात्रोपदिष्टोपदेश आशङ्क्योऽनेकगुणभावश्च । अन्येन शकलेन होमः, अन्यश्च प्रतिपाद्यते ।। ३३ ।।

इत्यष्टादशं प्राकृतपुरोडाशादीनां निधानाधिकरणम् ।। १८ ।।

त० वा०—पुरोडाशधानादीनां सवनीययागार्थत्वात्पूर्वेणैव न्यायेन ग्रहणश्रयणार्थमन्ये पुरोडाशशकलादय इति प्राप्ते ।

अभिधीयते । 'एकदेशद्रव्यं च' इत्येनेनाप्रयोजकलक्षणापत्तेः, अन्यस्य च शकलस्याभावाद्द्व्यवदानमात्रे च हुते शेषस्य प्रतिपाद्यमानस्य दृष्टार्थत्वाद्द्वितीयानिर्देशानुग्रहान्न कश्चिद्विरोधो दृश्यते । तस्मादत्र प्रकृतोपादानम् ।। ३३ ।।

इत्यष्टादशं प्रकृतपुरोडाशादीनां निधानार्थताधिकरणम् ।। १८ ।।

न्या० सु०—लवनादेः प्राकृताप्राकृतसर्वबर्हिः कार्यार्थत्वे निरस्ते प्रसङ्गात्प्राकृतसर्वबर्हिःकार्यार्थत्वस्यापि निरासात्सङ्गतिमिदानींशब्देन सूचयन् परिस्तरणीयपरिभोजनीयबर्हिषां पृथग्लवनविधानाद्बर्हिर्लुनातीति वाक्यविहितस्य लवनस्य तादर्थ्याभावेपि विधृतिपवित्रबर्हिरर्थत्वनिरासहेत्वभावात्तदर्थतापि युक्तेति पूर्वपक्षं स्पष्टत्वादनुक्त्वा प्रकृतावपि विधृतिपवित्राख्यस्य बर्हिःकार्यस्य धर्म्मविधावनधिकार इत्यनधिकारोक्त्यनुषङ्गसहितचकारसूचितां सिद्धान्तप्रतिज्ञां व्याचष्टे—इदानीमिति । त्रिधातु पञ्चधातु वा लुनातीति यथा लूनस्य कृत्स्नस्य बर्हिषस्त्रिधातु पञ्चधातु वा वेदिं स्तृणातीति श्रुत्यास्तरणाख्यकार्यविशेषार्थत्वावगमाद्विधृतिपवित्रार्थस्य बर्हिषस्ततोवगमे त्रिधातुश्रुत्या पञ्चधातुश्रुत्या वा विरोधापत्तेरिति हेत्वर्थं विरोधे श्रुतिविशेषादिति सूत्रावयवं व्याचष्टे—यथा लूनस्येति । विधृतिपवित्रार्थबर्हिर्विधेः समावच्छिन्नाग्रौ दर्भावित्यस्य तर्हि कतरद्बर्हिर्विषय इत्याशङ्क्य धर्म्मविशेषशून्यो बर्हिर्विधिः परिभोजनीयाख्यान्यबर्हिर्विषय इत्युक्तयर्थमव्यक्त इति सूत्रावयवं व्याचष्टे - सामान्यभूत इति । धातुशब्दस्य च स्तरणार्थबर्हिर्मुष्टयवयववाचित्यप्रसिद्धेर्धातुमात्रश्रुत्यापि विरोधापत्तिं सूचयितुमाह—धातुरिति ।। ३३ ।।

प्राकृपुरोडाशादीनां निधानमधिकरणम् ।। १८ ।।

भा० प्र०—श्रुति में ज्योतिष्टोम प्रकरण में उपदिष्ट है कि "पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाति" अर्थात् ऐन्द्रवायव सोम के पात्र में पुरोडाश का खण्ड रखना चाहिए इत्यादि। यह जो पुरोडाश खण्ड है, यह क्या सवनीय पुरोडाश का ही एक है अथवा यह अन्य पुरोडाश है—यही संशय है। इसमें पूर्वपक्षी का कहना है कि यह अन्य पुरोडाश ही होगा। कारण, सवनीय पुरोडाश से जब याग निष्पन्न होगा तब वह किस प्रकार अवशिष्ट रह जायेगा ? इसके उत्तर में सिद्धान्ती का कहना है कि "अपनयस्त्वेकदेशस्य" यह जो अपनय अर्थात् ऐन्द्रवायव पात्र में पुरोडाश खण्ड है वह सवनीय पुरोडाश के ही एक देश है, कारण, "विद्यमानसंयोगात्" इसमें विद्यमान वस्तु के साथ ही सम्बन्ध है, अन्यत्र तज्जन्य नवीन वस्तु की कल्पना करनी पड़ेगी, अतः, इस कल्प्य वस्तु की अपेक्षा क्लृप्त वस्तु के साथ ही सम्बन्ध होना न्याय्य है, वही आदरणीय है। पुरोडाश याग में विनियुक्त होने पर उसका खण्ड नहीं रह सकता है, इस प्रकार की जो आपत्ति है—वह सङ्गत नहीं है, कारण, यह जो पुरोडाश खण्ड का अपनय है, यह प्रतिपत्ति स्वरूप होने से इसके द्वारा पुरोडाश का संस्कार होता है, यह "पुरोडाशशकलम्" इस स्थल की द्वितीया विभक्ति की जो संस्कार्यता बोधित है, उससे प्राप्त है, प्रतिपत्ति के लिए कुछ अंश अवशिष्ट रखना पड़ता है, अतः यागार्थ पुरोडाश का कुछ पात्र भी नहीं रहता है—ऐसी बात नहीं है। इसीलिए, सवनीय पुरोडाश का ही कुछ अंश ऐन्द्रवायव पात्र में अपनेय है।

"तु" = अन्य अधिकारण का सूचक है, "एकदेशस्य अपनय है एक देश का अर्थात् खण्ड विशेष का अपनय होगा। अर्थात् कुछ अंश छोड़कर रखना होगा, "विद्यमान संयोगात्" = क्योंकि, विद्यमान को साथ ही विधि का संयोग अर्थात् सम्बन्ध रहता है ॥ ३३ ॥

इति अष्टादश प्रकृत पुरोडाशादि का निधानार्थताधिकरण।

## (१९) विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ ३४ ॥ पू० ।

शा० भा०—इदमामनन्ति। यज्ञाथर्वणं वै काम्या इष्टयः, ता उपांशु कर्तव्या इति। अत्र संशयः किमङ्गप्रधानार्थमुपांशुत्वम्, उत प्रधानार्थमिति। किं प्राप्तम् ? विकृतौ सर्वार्थः शेषः स्यात्। अविशेषादङ्गानां, प्रधानानां च प्रकृतिवत्। यथा प्रकृतौ वेदिधर्मा आज्यधर्माश्चाङ्गप्रधानार्थाः, एवमत्रापि ॥ ३४ ॥ पूर्व०।

त० वा०—यत्र यत्र स्थितमुपांशुत्वं काम्यानामुपकर्तुं शक्नोति तत्र तत्र कर्तव्यम् ॥ ३४ ॥

न्या० सु०—स्तरणार्थस्य बर्हिषोऽन्यत्र विनियोगायोगाद्विधृतिपवित्रे बर्हिरन्तरविनियोगवत्सवनीयाख्ययागाद्यर्थानां पुरोडाशादीनां ग्रहपात्रनिधाने विनियोगायोगात्पुरोडाश-

न्तराद्युत्पादनसंयोगाख्ययोरेकदेशवाचिशब्दाभावेपि द्वितीयादृष्टार्थत्वाभ्यां प्रतिपाद्यत्वाव-गमात्प्रतिपत्तेश्चोपयुक्तैकदेशविषयत्वविरोधः ॥ ३४ ॥

काम्येष्टिषूपांशुत्वस्य प्रधानार्थत्वाधिकरणम् ॥ १९ ॥

भा० प्र०—श्रुति में उपदिष्ट है "यज्ञाथर्वणं वै काम्य इष्टयस्ता उपांशु कर्तव्याः, अर्थात् काम्य इष्टि यज्ञ में अथर्वस्वरूप वह उपांशु अनुष्ठेय है ।

आशय यह है कि अथर्ववेदीय आभिचारिक कर्म समूह जैसे गोपनीय होने से उपांशु करना पड़ता है, यज्ञ के मध्य में काम्य कर्म समूह भी उसी प्रकार उपांशु करना उचित है, यह जो उपांशुत्व है यह क्या अङ्ग और प्रधान दोनों का ही धर्म है अथवा ये केवल प्रधान का ही धर्म है—यही संशय है ।

इसमें पूर्वपक्षी का कहना है कि "विकृतौ शेषः सर्वार्थः प्रकृतिवत्" विकृतिभूत इष्टि याग में यह जो उपांशुत्वरूप शेष, यह प्रकृति याग के समान सर्वार्थक है । अर्थात् अङ्ग एवं प्रधान दोनों का ही धर्म है, अतः, विकृतिभूत इष्टि याग में अङ्ग एवं प्रधान सभी में उपांशु अनुष्ठेय है, क्योंकि, प्रकृतिभूत याग का वेदि धर्म, अज्य धर्म, वर्हिधर्म आदि के समान इसका भी समान विधान होता है अर्थात् एक ही विधि का विषय होता है, इस स्थान में विशेषत्व बोधक कुछ भी नहीं है ।

"विकृतौ" = विकृति में, "शेषः सर्वार्थः" = शेष अर्थात् धर्म विशेष सर्वार्थ अर्थात् अङ्ग एवं प्रधान सभी कर्मों के लिए, "प्रकृतिवत्" = प्रकृति याग के समान । इति पूर्वपक्ष ॥ ३४ ॥

## मुख्यार्थो वाऽङ्गस्याचोदितत्वात् ॥ ३५ ॥ सि० ।

**शा० भा०—प्रधानार्थो वा एष विकृतिषु स्यात् । एवमिदं सर्वार्थमुच्येत, प्रकरणं बाधित्वा वाक्येनाङ्गप्रधानार्थमिति । तदेवेदानीं वाक्यं विशेषितं 'काम्या इष्टय' इति । काम्याश्च प्रधानयागाः, अङ्गयागाः प्रधानार्थाः । तस्मादङ्गमचोदितम् । यत्कामेन फलवच्चोद्यते, तदेवानयोपांशुत्वेतिकर्तव्यतयाऽनुबध्यते । तस्मात्प्रधानार्थमुपांशुत्वम् ॥ ३५ ॥ सि० काम्येष्टिषूपांशुत्वधर्मस्य प्रधानार्थताधिकरणम् ॥ १९ ॥**

अस्य विषये केषाञ्चिन्मते उपन्यासनिरासौ

त० वा०—केचिदाहुरस्य प्रत्यक्षत्वेन प्रथमतरं प्राप्तेश्चोदकग्राह्याण्यङ्गानि न तावत्प्राप्नुवन्तीत्यचोदितत्वम् । न त्वेतत्संभवति । सर्वत्र चोदकस्य प्रथमतरं प्रवृत्तेः । तस्मादयमर्थः प्रकृतौ हि प्रकरणात्प्रधानार्थत्वं प्राप्तं, वाक्यात्सर्वार्थत्वम् । इह तु वाक्यमेव विशेषनिष्ठं, काम्या इति वचनात् । न ह्यङ्गानि कामसंबद्धानि । तस्मान्न तेषामेव धर्मश्चोदित इति ॥ ३५ ॥

इत्येकोनविंशमुपांशुत्वस्य काम्येष्टिप्रधानमात्रार्थत्वाधिकरणम् ॥ १९ ॥

न्या० सु०—द्रव्यसंस्कार। प्रकरणाविशेषात्सर्वकर्म्मणामिति बहिर्न्यायप्रसङ्गापवाद-समाप्त्या बुद्धिस्थीकृतस्य धर्म्माणामङ्गप्रधानसाधारण्याख्यस्य वहिर्न्यायस्यापवादत्वेन सङ्गतिं स्पष्टत्वादनुक्त्वा तच्छब्दस्य वाक्यशेषस्थकाम्यशब्दोक्तफलान्वयिवाचित्वावगते-रङ्गानामपि वप्रधानानुग्राहकत्वेन फलान्वयित्वादनारभ्याधीताप्युपांशुता प्रकरणाधीतैर्म्म-न्द्रमध्यमोत्तमस्वरैर्बाधाद्विकृतीर्गताङ्गप्रधानार्थेति पूर्व्वपक्षमाह—यत्र यत्रेति ॥ ३५ ॥

भा० प्र०—पूर्वोक्त पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "मुख्यार्थो वा" = काम्य याग का यह जो उपांशुत्व है, वह प्रधान का ही धर्म होगा, कारण, "अङ्गस्य प्रचोदितत्वात्" इस स्थल में काम्यत्व ही विशेष होता है। अङ्ग कर्म काम्य नहीं है, क्योंकि, उसका काम्यत्व विधि बोधित नहीं है। किन्तु, प्रधान का ही काम्यत्व विधि बोधित है, कारण, फल के साथ प्रधान कर्म का साक्षात् सम्बन्ध नहीं है, इसीलिए, साक्षात् फल साधन जो प्रधान कर्म उसमें ही उपांशुत्व रहेगा अर्थात् वही उपांशकरणीय है और सभी कर्म उस उसवेद के अनुसार उच्चैस्त्व अथवा उपांशुत्व प्राप्त होगा।

"मुख्यार्थः" = प्रधान के लिए ही होगा, "वा" = पूर्वपक्ष का व्यावर्तक है, "अङ्गस्य अचोदितत्वात्" = क्योंकि अङ्गचोदित नहीं है अर्थात् उपदेश विधि बोधित नहीं है ॥ ३५ ॥

इति एकोनविंश काम्येष्टियों का जो उपांशुत्व उसका प्रधानार्थताधिकरण।

## (२०) संनिधानविशेषादसंभवे तदङ्गानाम् ॥ ३६ ॥ सि० ।

**शा० भा०—श्येने श्रूयते, दृतिनवनीतमाज्यमिति। तत्र संदेहः किं नवनीतं प्रधानस्योताऽङ्गानामिति। किं प्राप्तम्? प्रधानस्य। तस्य हि प्रकरणमिति वचनप्रामाण्यान्नवनीतेन प्रधानं निर्वर्तयितव्यमिति। एवं प्राप्ते।**

**ब्रूमः—असंभव एतस्मिस्तदङ्गानां—श्येनाङ्गानां स्यात्। कथमसंभवः सोमद्रव्यकत्वात्प्रधानस्य। ननु वचनान्नवनीतं भविष्यति। न श्येने नवनीतं भवतीत्येष वाक्यार्थः। कस्तर्हि? श्येने नवनीतमाज्यं भवतीति, नवनीताज्य-संबन्धो विधीयते, श्येनाज्यसंबन्धोऽनूद्यते। न च साक्षाच्छ्येनस्याऽऽज्यसंब-न्धोऽस्ति, श्येनाङ्गानां तु विद्यते। यस्यास्ति, तस्यानूद्य नवनीतं विधीयते संनिधानविशेषात् ॥ ३६ ॥**

त० वा०—'दृतिनवनीतमाज्यम्' इति प्रकरणे विशिष्टविधानात्सोमो बधिष्यत इति मन्यते। यतस्त्वनेकार्थविध्यसंभवादाज्यमनूद्य विशेषमात्रं विधीयते। न च प्रधानस्याऽऽज्यप्राप्तिः। तस्मात् 'आनर्थक्यात्तदङ्गेषु' इत्येव सिद्धम् ॥ ३६ ॥

न्या० सु०—विकृतावुपांशुत्वोपदेशकाले प्राकृतस्याङ्गस्याचोदितत्वादिति वृत्यन्तर-कृद्व्याख्यामुपन्यासपूर्वं दूषयति—केचिदिति। तस्मात्फलसाधनेपि जातेष्ट्यादौ नित्यत्व-

प्रसिद्धया काम्यशब्दस्य फलान्वयिमात्रवाचित्वासम्भवेन कामतन्त्रविधेयवाचित्वावगतेः ता इत्येकशब्देन च काम्यत्वविशिष्टेष्टिपरामर्शाद्विशिष्टाद्देशेपि वाक्यभेदानापत्तेरङ्गानां च कामतन्त्रविधेयत्वाभावेनाङ्गसम्बन्धितयोपांशुत्वस्याचोदितत्वादिति भाष्यकारीयैव व्याख्या युक्तेत्याह—तस्मादिति ॥ ३६ ॥

श्येनाङ्गानां नवनीताज्यत्वाधिकरणम् ॥ २० ॥

भा० प्र०—श्रुति में श्येन याग के प्रकरण में उपदिष्ट है कि "दृतिनवनीतमाज्यम्" अर्थात् दृतिश्येनोपकारी नवनीत आज्य होता है, यह जो नवनीत विहित होता है, क्या यह प्रधान में प्रविष्ट होगा अथवा अङ्ग में जायेगा—यही संशय है। इसमें पूर्वपक्षी कहता है कि यह प्रधान कर्म में ही विहित होगा। कारण, प्रकरण के अनुसार प्रधान के साथ ही इसका सम्बन्ध है। इस वचन के बल से उसमें नवनीत विहित होता है।

इसके उत्तर में सिद्धान्ती कहता है कि "असम्भवे तदङ्गानाम्" प्रधान श्येनयाग में आज्य की प्राप्ति न होने से दृतिनवनीत की प्राप्ति सम्भव न होने से उसके अङ्ग में ही उसका स्थान होगा, कारण, "सन्निधानविशेषात्" अङ्ग में ही आज्य के साथ सन्निधान रूप विशेष रहता है।

आशय यह है कि इस स्थल में श्येनयाग प्रधान है और वह सोम याग की विकृति होने से उसमें आज्य की आवश्यकता नहीं है, किन्तु सोम ही आवश्यक है। किन्तु श्येन का जो अङ्गयाग उसमें आज्य है, इसीलिए "दृतिनवनीतमाज्यं भवति" इस तरह आज्य के उद्देश्य से दृतिनवनीत विहित होता है, अन्यथा प्रधानयाग श्येन में नवनीत स्वरूप गुण विशिष्ट आज्य का विधान करना होगा, अतः इस पक्ष में गौरवदोष होगा, अतएव दृतिनवनीत प्रधान के लिए नहीं है।

"सन्निधानविशेषात्" = सन्निधान रूप विशेषत्व के अनुसार, "असम्भवे" = प्रधान में असम्भव होने से "तदङ्गानाम्" = उसके अङ्ग में अर्थात् मुख्य के अङ्ग में जायेगा। इति सिद्धान्त ॥ ३६ ॥

## आधानेऽपि तथेति चेत् ॥ ३७ ॥

**शा० भा०—एवं चेद्दृश्यते, श्येनाङ्गानां नवनीतमिति, आधानेऽपि पवमानेष्टिषु स्यात्। ता अपि हि श्येनस्योपकुर्वन्ति, तत्संस्कृतेऽग्नौ श्येनोनिर्वर्तत इति ॥ ३७ ॥ क० आ० ॥**

त० वा०—अवश्यं श्येनोपकारि यदाज्यमिति वक्तव्यम्। ततश्च पवमानहविराज्यमपि श्येनोपकारीति दृतिनवनीतं स्यात् ॥ ३७ ॥

न्या० सु०—प्रधानमात्रार्थत्वेनोपांशुत्वस्याङ्गप्रधानसाधारण्येपोदिते दृतिनवनीतस्याङ्गमात्रार्थत्वेनासाधारण्यात्सङ्गतिं स्पष्टत्वादनुक्त्वा प्रकरणात्प्रधानार्थत्वावगतेस्तस्य

चातिदेशिकतत्सोमद्रव्यकत्वेनाज्याप्राप्तेस्तदनुवादायोगाद् दृतौ निहितं नवनीतं प्रकृतिभूतमस्येति बहुव्रीह्युक्तं दृतिनवनीतविशिष्टमाज्यं सोमबाधेन प्रधानमात्रार्थं विधीयत इति पूर्व्वपक्षमाह—दृतीति। उत्तरपदार्थप्रधानतत्पुरुषसम्भवेन्यपदार्थप्रधानबहुव्रीह्ययोगाद्व्यधिकरणबहुव्रीहेश्चात्यन्तायुक्तत्वाद्विशिष्टविध्ययोगेनानेकार्थविध्यापत्तेर्नवनीताज्यशब्दयोश्च भिन्नार्थत्वेन द्वयोर्मुख्यार्थयोः सामानाधिकरण्यायोगाज्जघन्यस्याज्यशब्दस्य कार्यलक्षणार्थत्वावगतोर्विधौ च लक्षणायोगादाज्यकार्यानुवादेन इति नवनीतविध्यवगतेः प्रधाने कार्याभावादाज्यवत्यङ्गमात्रे इति नवनीतविधिरिति सूत्रेण सिद्धान्तमाह—यस्त्विति। न चेत्यवेनोज्यप्राप्त्याख्यस्य सन्निधानस्याङ्गविषयत्वाद्धयविशेषोक्तधर्थत्वेन सौत्रो हेतुर्व्याख्यातः। भाष्ये च न श्येने नवनीतमित्यनेन इति नवनीतमिति बहुव्रीहिणा समस्यमानपदार्थविशिष्टान्यपदार्थभूताज्यविधि बहुव्रीह्ययोगेन निरस्य, कस्तर्हीत्येनेनाज्यानुवादेन नवनीतविधिरुक्तः ॥ ३७ ॥

भा० प्र०—पूर्वपक्षी आशङ्का का उत्थापन करते हुए कहता है "आधाने अपि तथा" श्येन याग के अङ्ग में यदि दृति नवनीत प्रयोज्य होता है तो आधान में भी वह आवश्यक होगा "आज्यं दृति नवनीतम्" इसका अर्थ है श्येनोपकारी जो आज्य वह दृति नवनीत है और आधान का पवमान हवि का आज्य भी श्येन का उपकारी होने से आधान भी पवमानेष्टि श्येन का अङ्ग है, अतः, पवमानेष्टि में भी दृति नवनीत का प्रसङ्ग होता है।

"आधाने अपि तथा" = आधान में भी इस प्रकार होगा अर्थात् दृति नवनीत होगा "इति चेत्" = यदि यह कहा जाय। आशङ्का ॥ ३७ ॥

## नाप्रकरणत्वादङ्गस्य तन्निमित्तत्वात् ॥ ३८ ॥

**शा० भा०—न श्येनस्य प्रकरणे पवमानेष्टयः, अग्न्याधानं वा श्रूयते। किमतो यद्येवम् ? आधानस्य च श्येनस्य च न कश्चिदस्ति संबन्धः, अग्नीनामाधानमग्नयश्च श्येनस्य। तस्मान्न पवमानहविःषु नवनीतम्। नैतच्छ्येनाङ्गत्वे निमित्तं, यदाधानमग्नीनामुपकरोति। यदि प्रकरणादीनामन्यतममस्ति, तन्निमित्तं भवेत्। तस्मान्न श्येनाग्न्याधानयोः संबन्धोऽस्तीति ॥ ३८ ॥ आ० नि०।**

**इति विंशं श्येनाङ्गानां नवनीताऽऽज्यताधिकरणम् ॥ २० ॥**

त० वा०—न ह्युपकारित्वमात्रेण संबन्धः। किं तर्हि ? अधिकारात्प्रकृतस्योपकारिणः, प्राकरणिकं चोदकेन संनिहितं, न पवमानेष्टिगतमिति व्यवस्था ॥३८॥

इति विंशं दृतिनवनीताज्यस्य श्येनप्रयोगान्तर्वर्त्याज्यकार्यार्थताधिकरणम् ॥ २० ॥

न्या० सु०—अनिष्टापादनेन सिद्धान्ताक्षेपार्थं सूत्रं पवमानेष्टीनामनङ्गत्वेनानर्थक्यं तदङ्गन्यायाविषयत्वादयुक्तमाशङ्क्यानङ्गेऽपि यूपेऽरत्निसाम्यदर्शनवताराभ्युपगमादुपकारिमात्रस्य तन्न्यायविषयत्वाशयेन समाधत्ते—अवश्यमिति ॥ ३८ ॥

भा० प्र०—पूर्वपक्षी की इस आशङ्का के समाधान में कहा है आधान श्येन प्रकरण में पठित न होने से श्येन का अङ्ग नहीं है, क्योंकि, श्रुति लिङ्ग आदि के अभाव में प्रकरण से ही अङ्गत्व निरूपित होता है और उपकारक होने पर भी अङ्ग होगा—ऐसी बात नहीं है। क्योंकि, उपकारित्व शेषत्व का लक्षण नहीं है।

"न" = नहीं अर्थात् यह आशङ्का सङ्गत नहीं है, "अप्रकरणत्वात्" = क्योंकि, वह प्रकरण में नहीं, "अङ्गस्य तन्निमित्तत्वात्" कारण, प्रकरण अङ्ग का अर्थात् अङ्गत्व बोध के लिए। आशङ्का का निरास ॥ ३८ ॥

इति बीसश्येनाङ्गों का नवनीतताज्यताधिकरण।

## (२१) तत्काले वा लिङ्गदर्शनात् ॥ ३९ ॥ पू० ।

शा० भा०—इदमिदानीं संदिह्यते—किं सुत्याकालानामङ्गानां नवनीतम्, उत सर्वेषामिति। सुत्याकालानां स्यात्। लिङ्गदर्शनात्? इदं श्रूयते। 'सह पशूनालभते' इति। तत्र पुनर्वचनम्, अग्नीषोमीयस्य स्थानेऽग्नीषोमीयः पुरोडाशः, अनुबन्ध्यायाः स्थाने मैत्रावरुणी पयस्या, इति द्वे स्थाने शून्ये दर्शयति। तेनावगम्यते श्येनस्य वचनं सुत्याकालानामङ्गाना विशेषं विदधातीति ॥ ३९ ॥ पूर्व० ।

त० वा०—संनिधिविशेषात्सामान्यतोदृष्टाच्च तत्कालानां लिङ्गदर्शनेन दृष्टान्तं साधयति। पशुसाहित्यं ह्येतदीयो धर्मः सुत्याकालो दृष्टोः, अग्नीषोमीयानुबन्ध्यास्थानयोरश्येनानुग्रहवचनात्। तस्मादयमप्येतद्धर्मत्वात्सुत्याकाल इति ॥ ३९ ॥

न्या० सु०—न श्येनस्येत्यादिभाष्यात्पवमानेष्टीनां श्येनप्रकरणानधीतत्वादङ्गत्वस्य चोपकारनिमित्तत्वाभावादनङ्गत्वेनानर्थक्यं तदङ्गन्यायाविषयत्वान्न तत्र नवनीतापत्तिरित्येवमर्थतया भासमानं सूत्रमनङ्गस्यापि यूपस्य आनर्थक्यं तदङ्गन्यायविषयत्वादुपकारिस्थितत्वमात्रस्य चोपकारित्वसिद्धये पेक्षणादयुक्तं मत्वा पवमानेष्टिस्थस्याज्यकार्यस्यासन्निहितत्वेन नवनीतविधावनुवादायोगान्नवनीतस्य च श्येनोपकारिकर्माङ्गतायाः सन्निध्यनपेक्षोपकारित्वमात्रनिमित्तत्वाभावादित्येवं स्वयं व्याख्यातुमाह—न हीति। पवमानेष्टीनां श्येनोपकारिमात्रेण तद्गतस्याज्यकार्य्यस्यासन्निहितस्यानुवादायोगान्नवनीतेन सहाङ्गाङ्ग्यन्वयः किं तु सन्निधानादित्येवमर्थेन नहीत्यनेन सूत्रोत्तरार्द्धं व्याख्यातम्। अतश्च यच्छ्येनप्रकरणात् श्रुतमाज्यकार्यं नवनीतविधयेनुवाद्यं तच्चोदकेन सन्निहितत्वात्सन्निहितस्यैव श्येनोपकारिणः सम्बन्धध्यनुवाद्यमित्यर्थः ॥ ३९ ॥

भा० प्र०—पूर्व अधिकरण में प्रतिपादित है कि दृतिनवनीत श्येन याग के अङ्ग का गुण है, इसमें पुनः आशङ्का हो सकती है कि यह क्या सुत्याकालीन अङ्ग का गुण अथवा समस्त अङ्ग का ही गुण है। इसमें पूर्वपक्षी का कहना है कि "तत्काले वा" वह उस काल में सुत्या काल में ही विहित होगा अर्थात् सुत्याकालीन अङ्ग का ही गुण होगा, कारण, "लिङ्गदर्शनात्" वैसा ही अनुमापक लिङ्ग अर्थात् हेतु दृष्ट होता है, इस प्रसङ्ग में यह अनुमान है—विवादास्पदीभूत यह दृति नवनीत रूप गुण के सुत्याकालीन अङ्ग का धर्म है ( इति प्रतिज्ञा ) क्योंकि, वह श्येन का विशेष धर्म है। ( इति हेतु ) जैसे पशु साहित्य ( इति दृष्टान्त ) श्येन याग में सभी पशुओं का एक साथ ही ही आलम्भन करना होगा, उस वचन के न रहने पर भी युक्ति के अनुसार सुत्याकाल में ही होता है। इस दृष्टान्त के अनुसार श्येन वैशेषिकत्वरूप हेतु से दृति नवनीत गुण का भी सुत्याकालीन अङ्ग का धर्मत्व अनुमित होता है। इसका बाधक कोई वेदवचन भी दृष्ट नहीं होता है कि इस दृति नवनीत रूप गुण को सर्वकालिक कहा जाय।

"तत्काले" = सुत्या अर्थात् सवन काल में, "वा" = अन्य अधिकरण का सूचक है, "लिङ्गदर्शनात्" = क्योंकि लिङ्ग दृष्ट होता है अर्थात् इस सम्बन्ध में अनुमान प्रधान है। इति पूर्वपक्ष ॥ ३९ ॥

## सर्वेषां वाऽविशेषात् ॥ ४० ॥ सि० ।

**शा० भा०—सर्वेषामेव चाङ्गानां नवनीतं स्यात्। कुतः? अविशेषात्। असति विशेषे सर्वेषामप्यङ्गानामिति ॥ ४० ॥ सिद्धान्तः।**

त० वा०—तदुक्तं 'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्' इति ॥ ४० ॥

न्या० सु०—सन्निधानविशेषादिति हेत्वनुषङ्गेण यद्यर्थेनाऽङ्गानां विशेषवचनम्, तत्तत्सुत्याकालानां यथा पशुसाहित्यमिति सामान्यतोदृष्टाश्येन च वाशब्दसूचितेन हेतुना पूर्वपक्षप्रतिज्ञां साधयन् सूत्रं व्याचष्टे—सन्निधीति। इहानुषक्तायाश्च सन्निधानविशेषोक्तेः सुत्याकालानां प्रधानसन्निधिविशेषेष तत्रस्थनवनीतस्य प्रधानोपकारित्वातिशयादित्यर्थः पशुसाहित्यस्येहाविचार्यत्वात्, तद्गतलिङ्गदर्शनानर्थक्यमाशङ्क्याह—लिङ्गेति। कथं साधयतीत्यपेक्षायामाह—पशुसाहित्यं हीति। कस्मिन्नर्थे दृष्टान्त इत्यपेक्षायामाह—तस्मादिति ॥ ४० ॥

सर्वेषामेव श्येनाङ्गानां नवनीताज्यत्वाधिकरणम् ॥

भा० प्र०—पूर्वोक्त पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "सर्वेषां वा" यह जो दृति नवनीत रूप गुण सभी अङ्गों का ही धर्म है अर्थात् गुण है, कारण, "अविशेषात्" = क्योंकि इस प्रसङ्ग में कोई विशेष श्रुति वचन नहीं है, जिससे कहा

जा सकता है कि वह सुत्याकालीन अङ्ग का ही गुण होगा। यदि विशेष श्रुति वचन रहता तो यह कहा जाता।

"सर्वेषां" = वह सभी अङ्गों का ही गुण होगा, कारण, "अविशेषात् = यहाँ कोई विशेष श्रुतिवचन नहीं है, जिससे यह कहा जा सकता है कि सुत्याकालीन अङ्ग का ही गुण होगा, यदि विशेष श्रुतिवचन रहता तो इस प्रकार कहा जाता।

"सर्वेषां" = सभी अङ्गों का ही गुण होगा, "वा" = पूर्वपक्ष का व्यावर्तक, "अविशेषात्" क्योंकि कोई विशेष वचन नहीं है। इति सिद्धान्त ॥ ४० ॥

## न्यायोक्ते लिङ्गदर्शनम् ॥ ४१ ॥

**शा० भा०—यदुक्तं लिङ्गम्। तत्परिहरणीयम्। नास्ति तावत्प्रमाणं यच्छ्येनस्य वचनं, तत्सुत्याकालानामङ्गानामिति। किंतु दर्शनम्। तदप्रमाणमूलत्वान्मिथ्यादर्शनं मृगतृष्णावत्। कथं तु मध्ये पशूनामालम्भ इति? न्यायात्। को न्यायः? क्रमानुग्रहः। एवं वचनवर्जितः क्रमोऽनुगृहीतो भवति। तस्मात्सर्वेषामङ्गानां नवनीतमिति ॥ ४१ ॥ आ० नि०।**

**इत्येकविंशं सर्वेषामेवश्येनाङ्गानां नवनीताऽज्यताधिकरणम् ॥ २१ ॥**

त० वा०—न्यायगम्ये लिङ्गमीदृशं साधकं भवति। आगमगम्यस्त्वयम्। न च सहाऽऽलम्भस्यैतद्धर्मत्वात्सुत्याकालता। किं तर्हि? अन्यत एव न्यायात्। न चासौ दृतिनवनीते संभवति। तं न्यायं दर्शयति। एवं वचनवर्जितो यः क्रमः—संनिकर्षलक्षणोऽनुमेयश्रुत्यर्थः सोनुग्रहीष्यत इति। सवनीयकाले ह्यालभ्यमानेषु न कस्यचित्पशोः कालमतिक्रम्येत। न च द्विगुणोऽध्वा भवति। इतरथा द्वयमपि स्यात्। तस्मादुपपन्नं दर्शनम् ॥ ४१ ॥

इति सर्वेषामेव श्येनीयाज्यकार्याणां दृतिनवनीताधिकरणम् ॥ २१ ॥

भा० प्र०—पूर्वपक्षी ने कहा है कि अनुमान से दृति नवनीत जो सुत्याकालीन अङ्ग का धर्म अवधारित होता है, इसके उत्तर में कहा है "न्यायोक्तलिङ्गदर्शनम्" जो पदार्थ आगमनिरपेक्ष है, केवल युक्ति गम्य है, उसके अनुसार निर्णय होता है, किन्तु धर्मा धर्मतत्त्व आगमैक समधिगम्य होने से शास्त्रानुसार जो अर्थ है, उसके विरुद्ध में अनुमान इङ्गित नहीं हो सकता है, और जो पशु साहित्य का दृष्टान्त है, उसमें युक्ति से "सह प्रशूनालभते" इस अङ्ग विधि एवं अन्य अङ्ग विधि के अविरोध में सामञ्जस्य स्थापित होने से वह अनाद नहीं है।

ज्योतिष्टोम अथवा उसके विकृति भूत सोमयाग में अग्नीषोमीय, सवनीय एवं आनुबन्ध्य ये तीन पशु की तीन दिन वध करने की विधि है, किन्तु, जिस स्थान में वचन के बल से तीनों का ही एक साथ आलम्भन करना होता है, प्रधान के साथ सब का

नैकट्य समान रखने पर उपवसथ्य दिवस को अग्नीषोमीय पशु को एक दिन पीछे एवं अवभृथ दिन को अनुबन्ध्य पशु से एक दिन आगे कर मध्यम सुत्याह लेकर तद्दिवसीय सवनीय पशु के साथ उनका आलम्भन करने पर युक्ति के अनुसार प्रधान प्रत्यासत्ति सभी की समान है, अतः, वही करणीय है इस स्थल में विशेष वचन न रहने पर भी युक्ति शास्त्रार्थ के अनुकूल होने से वही आदरणीय है, अतएव सर्वकालीन अङ्ग में ही हृति नवनीत रूप गुण होगा।

"न्यायोक्त" = न्याय गम्य स्थल में, "लिङ्गदर्शनम्" = लिङ्गदर्शन अर्थात् अनुमान का उपन्यास सङ्गत है ॥ ४१ ॥

इति इक्कीश सकल श्येनाङ्ग का नवनीताज्यताधिकरण।

## (२२) मांसं तु सवनीयानां चोदनाविशेषात् ॥ ४२ ॥ सि०।

शा० भा०—शाक्त्यानामयनं षट्त्रिंशत्संवत्सरम्। तत्रेदं समामनन्ति 'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान्मृगान्हन्ति, तेषां तरसाः पुरोडाशाः सवनीया भवन्ति, इति। तत्र संदेहः—किं सवनीयानामन्येषां च संभवतां पुरोडाशानां स्थाने तरसा, उत सवनीयानामेवेति। किं प्राप्तम्? सर्वपुरोडाशानां मांसमयता स्यात्। न शक्यते पुरोडाशानां च मांसमयता विधातुम्। सवनीयशब्देन च पुरोडाशान्विशेषयितुम्। भिद्येत हि तथा वाक्यम्। तस्मात्सर्वपुरोडाशानां मांसमयतेति प्राप्ते।

उच्यते। मांसं तु सवनीयानां स्यात्। तरसाः सवनीया भवन्तीति तरससवनीयसंबन्धो विधीयते, तरसाः पुरोडाशा भवन्ति इत्ययं त्वनूद्यते। कुत एतत्। सर्वपुरोडाशेषु सवनीयशब्दोऽनुवादो न घटते, पुरोडाशशब्दस्तु सवनीयेष्ववकल्पते। तस्मात्पुरोडाशशब्दोऽनुवाद इति। तस्मात्सवनीयानां धानादीनां स्थाने मांसं चोदनाविशेषादिति ॥ ४२ ॥

त० वा०—पुरोडाशशब्दस्य धानादिष्वसमर्थत्वात्सर्वपुरोडाशविषयत्वं सत्यपि सवनीयत्वे विशेष्टुमशक्यत्वादिति प्राप्तेऽभिधीयते। सवनीयशब्दस्याप्रमादपाठात्पुरोडाशशब्दं लिङ्गसमवायाद्गौणं कृत्वा धानादीनामपि ग्रहणमिति ॥ ४२ ॥

भा० प्र०—श्रुति में 'शाक्यायन' नाम का एक यज्ञ है, वह छत्तीस वर्ष परिव्याप्त अनुष्ठान में समाप्त होता है, उस प्रकरण में श्रुति में कहा गया है "गृहपतिर्मृगयां याति स तत्र यान् मृगान् हन्ति तेषां तरसा सरणीयाः पुरोडाशाः भवन्ति" अर्थात् गृहपति (यजमान) मृगया के लिए जाता है, उस स्थान में जहाँ समस्त मृगावध करेगा, उनके मांस से सवनीय पुरोडाश होगा। इस स्थल में यह जो पुरोडाश का निर्माण करना है,

वह मांसमयता क्या सभी अङ्ग के पुरोडाश के लिए है अथवा केवल सवनीय पुरोडाश के लिए ही है यह संशय है ।

इस संशय में पूर्वपक्षी का कहना है कि—पूर्वाधिकरण के नियमानुसार दृति नवनीत जैसे सभी अङ्गों का गुण है, वैसे ही इस स्थल में मांसमयता सवनीय एवं असवनीय सभी पुरोडाशों का ही गुण होगा । अन्यथा, पुरोडाश की मांसमयता एवं उसकी सवनीयता का विधान करने से वाक्य भेद होगा ।

इसके उत्तर में सिद्धान्ती कहता है, वह धान्य करम्भ, परिवाप, पुरोडाश और पयस्या इन पाँच प्रकार के सवनीय द्रव्यों के स्थान में ही होगा, असवनीय द्रव्य के स्थान में नहीं होगा, कारण, "चोदनाविशेषात्" उक्त विधि वाक्य के मध्य में तरस एवं सवनीय इन दो शब्दो के मध्य में सन्निधि रूप विशेष रहता है, इस स्थान में यदि पुरोडाश के उद्देश्य से तरस विहिता होता है, ऐसो स्थिति में यहाँ यह कहा जाता है, किन्तु इस स्थल में "तरसाः पुरोडाशाः भवन्ति" इस प्रकार तरस और सवनीय का सम्बन्ध विहित होने सवनीय के उद्‌देश्य से तरस विहित होने से तरस सर्वगामी नहीं होगा एवं इस प्रकार कहने से वाक्यभेद नहीं हो सकता है, अत एव सवनीय द्रव्यों के स्थान में ही मांसमय पुरोडाश होगा ।

"मांसं" = श्रुति में उपदिष्ट मांस, "तु" = अन्य अधिकरण का सूचक "सवनीयाम्" = सवनीय द्रव्यों के बदले में होगा "चोदनाविशेषात्" = क्योंकि, चोदना में अर्थात् वेद विहित विशेष अर्थात् सन्निधि रूप विशेष है । इति सिद्धान्त ॥ ४२ ॥

## भक्तिरसंनिधावन्याय्येति चेत् ॥ ४३ ॥

**शा० भा०—इति चेत्पश्यसि, सवनीयेषु पुरोडाशशब्दोऽनुवादो भविष्यतीति । धानादिषु पुरोडाशशब्दो न वर्तते । भक्तिश्चान्याय्या मुख्ये संभवति ॥ ४३ ॥ भा० ।**

त० वा०—अत्यन्तभिन्नत्वाद्द्रव्यान्तरेषूपचारो न युक्तो, यदि वा सवनीयशब्दस्याप्यवयुत्यावानुवादेन भवत्विति ॥ ४३ ॥

भा० प्र०—पूर्वपक्षी ने आशङ्का का उत्थापन कर कहा है कि केवल सवनीय द्रव्य की मांसमयता होने पर उक्त श्रुति वाक्य का "पुरोडाशः इस प्रद में लक्षण किया है, कारण, पुरोडाश अर्थ में पुरोडाश, धान्य, करम्भ इत्यादि कहना होगा, किन्तु, यह अनुचित है ।

"भक्तिः" = भक्ति अर्थात् लक्षणा, "असन्निधौ अन्याय्या" असन्निहित अर्थ में अनुचित है, "इति चेत्" = यदि यह कहा जाय । इति आशङ्का ॥ ४३ ॥

## स्यात्प्रकृतिलिङ्गत्वाद्वैराजवत् ॥ ४४ ॥

शा० भा०—प्रकृतौ ज्योतिष्टोमे धानादिष्वयं पुरोडाशशब्दो भाक्तः, संनिहितेषु प्रयुक्तः। इहापि भाक्त एव प्रयोक्ष्यते। अत्रापि हि सवनीयशब्देन ते संनिहिताः। प्रकृतौ लिङ्गसमवायाच्छब्दप्रवृत्तिः, विकृतावपि तथैव। यथा—छत्रिणो गच्छन्ति, ध्वजिनो गच्छन्तीति। यथा, उक्थ्यो वैरूपसामा, एकविंशः षोडशी वैराजसामा, इति प्रकृतिलिङ्गेन सामशब्देन वैरूपपृष्ठो वैराजपृष्ठ इति गम्यते। एवमिहापि सवनीयानां मांसमयतेति ॥ ४४ ॥ आ० नि०।

इतिद्वाविंशं सवनीयानां मांसमयताधिकरणम् ॥ २२ ॥

इति श्रीशबरस्वामिविरचिते धर्ममीमांसाभाष्ये तृतीयस्याध्यायस्याष्टमश्चरणः ॥

संपूर्णश्च तृतीयोऽध्यायः ॥

त० वा०—'पुरोडाशानलं कुरु' इति प्रकृतौ धानादिषु लक्षणा दृष्टा। न तु सवनीयशब्दस्यासवनीयेषु प्रवृत्तिः। साहित्याच्च शक्यते तेन लक्षयितुं, नेतरेण। न ह्यसवनीयस्य पुरोडाशस्य धानादिभिः सह संबन्धोऽस्ति। तस्माद्धानादीनां स्थाने तरसा इति सिद्धम्।

इति कथितबलाबलप्रवेकैरवगतसर्वविरोधबाधमार्गैः।

श्रुतिकृतदृढनिश्चयैः प्रमाणैः स्थित इह कर्मसु शेषशेषिभावः ॥ ४४ ॥

इति द्वाविंशं सवनीयहविषां मांसमयत्वाधिकरणम् ॥ २२ ॥

इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके तृतीयाध्यायस्याष्टमः पादः।

## संपूर्णश्च तृतीयोऽध्यायः।

समाप्तं च तन्त्रवार्तिकम्।

न्या० सु०—समूहवाचित्वात्सेमूहन वा सवनीयपुरोडाशानामनन्वयाल्लक्षणाशक्के-र्मुख्यस्यापिपुरोडाशशब्दस्यैव लक्षणावृत्तिर्युक्तेत्याशङ्क्य समूहवाचिनोप्येकदेशानुवादत्वेन पुरोडाशमात्रे प्रयोगोपपत्तिमाह—यदि वेति। द्वयोरौपचारिकत्वसम्भवेपि जघन्यत्वात्सव-नीयशब्दस्यैवोपचारिकत्वौचित्यसूचनार्थो यदिवाशब्दः।

पुरोडाशशब्दस्य प्रकृतौ ज्योतिष्टोमे धानादिसवनीयहविः पञ्चकलिङ्गत्वात्त-ल्लक्षणार्थत्वाद्भक्तिः स्यादित्येवं परिहारार्थत्वेन सूत्रं व्याख्यातुमाह—पुरोडाशा-निति। गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम्। वेदोयमाश्रयत्यर्थं को नु तं प्रतिकूलयेदित्यनेन न्यायेन पुरोडाशब्दस्यैव मुख्यस्यापि वेदबलसत्वाद्गौणत्वौचित्य-

सूचनार्था दृष्टोक्तिः । पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगादि ति दशमाधिकरणसिद्धान्तसूत्र-वक्ष्यमाणदृष्टान्तोक्तयर्थो वैराजवदिति सूत्रावयवो यथाभाष्यं स्पष्टत्वान्न व्याख्यातः ॥ पुरोडाशशब्देनात्यन्तभिन्नधानादिलक्षणशक्तिमुक्त्वा अथैतेषां हविषामिन्द्रमेव यजतीति पठितानामपि यागानामिन्द्रदैवत्यत्वविधानेन संप्रतिपन्नदेवताहेतुकाद्युगपदनुष्ठानलक्षणा-त्साहित्याच्छक्त्युपपादनेन परिहरति—साहित्याच्चेति । स्वशब्दोक्तस्य पुरोडाशस्य सवनीयशब्देनावयुत्यानुवादानुपपत्तेर्धानादिसमूहोक्तिद्वारैवासवनीयपुरोडाशलक्षणाङ्गीकार्या धानादिसमूहेन च सवनबाह्यस्य पुरोडाशस्यानन्वयान्न शक्या तल्लक्षणेति कृत्वा मुख्य-स्यापि पुरोडाशशब्दस्यैव लक्षणावृत्तिर्युक्तेत्याशयेन वैषम्यमाह—नेतरेणेति । सिद्धान्त-मुपसंहरति—तस्मादिति । अध्यायार्थं संगृह्णाति—इतीति । बलाबलविविक्तामित्यहीना-धिकरणोपक्रमवार्तिकदर्शनाद्विवेकशब्दस्य विवेकार्थत्वावगतेः कथितो बलाबलविवेको येषां प्रमाणानामिति बहुव्रीह्यर्थेन बलाबलाधिकरणार्थसंग्रहः । अवगता सर्वे हीना-धिकरणादारभ्य साक्षात्कृतास्तेषामर्थाधिकरणादारभ्याप्रकरणात्प्रावकथं च विनियुज्यत इति प्रतिज्ञार्थविचारद्वारा कृताविरोधमार्गाभावाश्च स्वरूपसत्तात्मका विनियोग-सामर्थ्यात्मकाः श्रुत्यादीनि च विनियोगकारणानि वक्ष्यन्त इति प्रतिज्ञार्थभूता येषां तैः श्रुत्या प्रत्यक्षया लिङ्गादिषु चानुमितया कृत्वा दृढीकृता मूलान्तरानपेक्षो निश्चयो यैः । एतेन च प्रमाणोक्तेरौपचारिकत्वं सूचितम् ॥ ४४ ॥

इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्ट-
सोमेश्वरविरचितायां तन्त्रवार्तिकटीकायां तृतीयस्याध्याय-
स्याष्टमःप्रकरणः ॥ समाप्तः सम्पूर्णश्चाध्यायः ॥

भा० प्र०—पूर्वपक्षी ने जो कहा है कि सिद्धान्ती के मत में पुरोडाश शब्द में लक्षणा करना पड़ता है, उसको इष्टापत्ति मानकर परिहार करने के लिए कहा है—"तां प्रकृतिलिङ्गत्वात्"—प्रकृतिभूत ज्योतिष्टोम में पुरोडाश शब्द धान्य आदि के अथ में लाक्षणिक भाव में प्रयुक्त होता है, अतः, उसका विकृतिभूत इस "शाक्यायन में" भी उसकी लाक्षणिकता दोष वह नहीं है । पक्षान्तर में पूर्वपक्ष वादी के मत में सवनीय शब्द को लक्षणा बल से सवनीय एवं असवनीय सभी प्रकार के पुरोडाश के बोधक तो मानना ही, होगा, और यह अप्रामाणिक भी है, कारण, इसके अनुकूल में कोई प्रमाण नहीं है, यदि कहा जाय कि प्रकृति में लक्षणा होने से विकृति में भी लक्षणा करनी होगी, इसका क्या निदर्शन ? इसके उत्तर में कहा है कि "वैराजवत्" वैराजसाम ही इसका निदर्शन है ।

"उक्थ्यो वैरूपसामा एकविंशः, षोडशी वैराजसाम ।" इस वाक्य के "वैरूप" एवं 'वैराज' ये दो शब्द प्रकृतिभूत याग के लिङ्ग के अनुसार जैसे 'वैरूप पृष्ठ' एवं 'वैराज पृष्ठ' साम का वाचक, इस स्थल में भी वैसा ही समझना होगा । अत एव सवनीय

द्रव्यों के ही स्थान में मांस प्रदेय रूप में विहित होता है, किन्तु, असवनीय द्रव्य की मांसमयता विधि बोधित नहीं है।

"स्यात्" = होगा अर्थात् पुरोडाश शब्द में लक्षणा होगी, "प्रकृतिलिङ्गत्वात्" प्रकृति याग का लिङ्ग = ज्ञापकता के अनुसार में, "वैराजवत्" = वैराज नाम के साम के समान ॥ ४४ ॥

इति बाइस सवनीय हविर्द्रव्यों का मांसमयताधिकरण।
तृतीय अध्याय का अष्टमपाद।

श्रीमान् स्वर्गीय दामोदर गोस्वामी के आत्मज के द्वारा मीमांसा भाष्य के भावानुवाद में तृतीय अध्याय समाप्त हुआ।

# परिशिष्टम्

## श्रीन्यायसुधा (राणक) श्लोकव्याख्या

अथ राणकस्य पूर्वपक्षश्लोकानामार्थं उच्यते। तत्र प्रवृत्तिहेतून् सप्तधा विकल्प्य दूषयति। प्रवर्त्तको लिङादिर्वा तत्क्रिया वा विलक्षणा। अभिधा वाथवाज्ञादिः कार्यं वाथेष्टहेतुता। तत्क्रियाऽभिधाभिन्नः प्रवर्त्यसामर्थ्यजनको व्यापारः, विलक्षणा अलौकिकी प्रेरणा चेति भिन्नम्। तेन सप्तपक्षाः। आज्ञादिरित्यध्येषणमादिशब्दार्थः। आद्यं दूषयति, तत्र शब्दः स्वरूपेण वायुवच्चेत्प्रवर्त्तकः, प्रमाणत्वं विहन्येत नियमाच्च प्रवर्त्तयेत्। तत्र तेषु पक्षेषु शब्दो लिङादिः। स्वरूपेण प्रवृत्तिविषयज्ञानं विना प्रवर्त्तकश्चेत्। वायुवन्नोदनाख्यव्यापारपत्तया वा प्रवर्त्तकश्चेदिति पक्षद्वयं ज्ञेयम्। आद्ये आह, दशप्रमाणत्वमिति। प्रत्यक्षादौ तथाव्यहितादित्यर्थः। शब्दो न प्रवृत्तिविषयज्ञानं विना प्रवर्त्तकः प्रमाणत्वात्प्रत्यक्षवदित्यर्थः। न तु लिङः प्रत्ययत्वान्नैव प्रामाण्यम्। वाक्यस्यैव वाक्यार्थे प्रामाण्यात्। अतः कथं प्रामाण्यं विहन्येतेत्युक्तम्। मैवम्। धर्मप्रमोपयोगित्वस्य तच्छब्देन विवक्षितत्वात्। भावनायां हि वाक्यार्थे श्रेयो हेतुत्वं लिङादिभिः प्रतीयते।

द्वितीये आह—नियमाच्चेति। वायुवन्नोदनया प्रवर्त्तकत्वे यजेतेति श्रुतेः देवदत्तवत्तत्सहभूतं तृणाद्यपि प्रवर्तयेत्। च शब्दाद्वायुवदेव लघुत्वात्तृणादिकं प्रवर्त्तयेत्तद्गौरवात्तु देवदत्तं न प्रवर्त्तयेदित्यनियमोऽपि स्यादित्यर्थः। पक्षद्वयेऽपि समानदोषत्रयमाह। न वस्त्वल्पसम्बधज्ञानापेक्षो भवेन्न च। प्रकृत्या त्वयमाकांक्षेन्न च स्यात्फलकल्पकः। स्वल्पं शब्दरूपं सम्बन्धो वाच्यवाचकभावः तज्ज्ञानापेक्षो न स्यात् यद्वा रूप्यते ज्ञायते इति रूपं विषयत्वेन सम्बन्धो रूपसम्बन्धः स्वं च रूपसम्बन्धश्च तौ तयोर्ज्ञानम्। शब्दो हि धूमवत् च ज्ञानविषयसम्बन्ध-ग्रहसापेक्ष एव स्वविषये प्रवर्त्तको दृष्टस्तन्न स्यादित्यर्थः। न च प्रकृत्या यज्यादिकया सम्बन्धः स्यात् प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति नियमो न स्यात्। यजेतेति वदित्युक्तेपि प्रवर्त्तेतेत्यर्थः। वायुवत्प्रवृत्तिं प्रति कारकहेतुत्वाद्विश्वजिदादौ फलकल्पको न स्यात्। शब्द इत्यनुषंगः न हि वायुः फलं कल्पयतीत्यर्थः। तेन शब्दः न विषयज्ञानं विना चोदनया वा प्रवर्त्तकः। स्वज्ञानसम्बन्धज्ञानसापेक्षत्वात्प्रकृत्या स्वस्य स्वार्थबोधकत्वाफलकल्पकत्वाद्वा; यन्नैवं तन्नैवं यथा वायुरित्यनुमानत्रयं ज्ञेयम्। शब्दस्य प्रवृत्तौ ज्ञापकहेतुत्वं वत्क्रियां वेति द्वितीयं पक्षं शंकते। अथ प्रकृतिहेत्वर्थः स्वव्यापाराभिधानतः। प्रवर्त्तकत्वाच्छब्दस्य सर्वदोषनिवारणम्। प्रवृत्तेर्हेतुः प्रवर्त्यसामर्थ्यं समर्थो हि प्रवर्तते प्रवर्त्तते तदर्थः

प्रयोजनं यस्य प्रवर्त्यसामर्थ्यजनक इत्यर्थः। स चासौ स्वव्यापारः शक्तिभिन्नः तस्या अभिधा वेत्यत्र वक्ष्माणत्वात् तस्याभिधानतः कारकपक्षोक्तसर्वदोषनिवारण-मथाभिमतं चेदित्यर्थः। दूषयति। तत्र प्रवृत्तिसामर्थ्यापादनात् सास्य या क्रिया। कारीषादिषु दृष्टा साऽनुक्तैव प्रवर्त्तिका। तेनाभिधानवैय्यर्थ्यात्पूर्वदोषानिवारणम्। तेन येनेत्यध्याहारः येन कारणेन प्रवृत्तिहेतुः सामर्थ्यमिति मध्यपदलोपस्य तज्जनिकायात्क्रियासौकारीषवदध्यादावनुक्तैव प्रवर्त्तिका दृष्टा। कारीषोग्निर्हि शीतेनाध्ययनासमर्थे व्यापके समीपस्थितिक्रियया तत्सामर्थ्यं जनयति सा यथानभिहितैव सामर्थ्यहेतुस्तथा लिङादावप्युक्तैव प्रवृतिक्षामर्थ्यं जनयेदिति तदभिधानवैयर्थ्यात्कारकपक्ष एव विश्रान्तेः पूर्वदोषस्तदवस्थ इत्यर्थः। तृतीयं दूषयति। अलौकिका प्रेरणा तु सम्बन्धानुभवादृते। अभिधा तु अशक्यत्वान्न प्रवर्त्तयितुं क्षमा। अपूर्वोपि शब्दक्रिया न तावदनुक्तो प्रवर्त्तिका। तथा सति कारकहेतुत्वापत्तौ पूर्वदोषतादवस्थ्यात्। अभिहिता चेदलौकिकत्वाद्वाच्यवाचक-सम्बन्धग्रहं विना कथं तस्यावाचकत्वग्रहः।

अथ यूपाहवनायादिशब्दात्प्रेरणाच्छब्दः कंचिदलौकिकं शब्दव्यापारं वदेत्। तन्न। यूपादेश्छेदनादिसाध्यत्वावगमात्तत्सिद्धेरत्र च तदभावात्। लोकवेदाधिकरणन्यायेन तु प्रेषणाध्येषणादि-वाचित्वं स्यात्। अपौरुषेये वेदे तदसंभवश्चेत्तदानर्थवचनमेव स्यान्न तु प्रेरणा काचित्। अतः कुत्र तस्याऽभिधानं कुत्र वा प्रवर्त्तकत्वमित्याशयः। तन्मयस्कंतमणौ यथाशक्ति अचेतने हि प्रवृत्ति करोति तथा विकल्प्यत इति चेत्। न। लोकेपि तत्कल्पनापत्त्या विषं तु देयमिति वैरी वा वचनादपि प्रवृत्यापत्तिरितिवत्कं क्षमेदित्युक्ते सत्यपि तद् व्यापारस्याभि-धेयत्वे शब्दो न प्रवर्त्तकः। फलाकल्पकत्वादित्याह—राजादिवच्च शब्दफला-दातृत्वतः स्वतः। तद्व्यापाराभिधानेपि न प्रवर्त्तेत कश्चनाकर्मणि हि द्वेषात्। किंचिदन्यद्वारा फलजनकं यथा युध्वस्वेति राजाज्ञया युद्धादि। न हि तत्र कर्मणः फलं किन्तु राजादेः किंचित्स्वशक्त्या। यथा मात्राज्ञप्तं भोजनादि। तत्र नायं राजवल्लिङ् स्वतः कर्मशक्ति विना फलदाता। येन सव्यापारः प्रवर्तकः स्यात् अत उक्तेपि तद्व्यापारे फलाभावाद्दरिद्राज्ञयेव कोपि न प्रवर्त्तेयेदित्यर्थः। अन्ये आह पुरुषार्थोपयोगित्वं न लिङादेश्च गम्यते। येनास्य तु विधेयत्वात्फल-कल्पकता भवेत्। लिङादेर्मात्रादिवत्पुरुषार्थानुबंधित्वं न गम्यते। येनास्य लिङो तु विधेयत्वादद्वितकारित्वात्तद्व्यापारबोधे कर्मशक्त्या फलं कल्प्येत अतः कोपि न प्रवर्त्तेतेति भावः।

अस्तु वा शब्दस्य मात्रादिवद्द्विषः तत्कारित्वं तथापि व्यापारः किं सन्निधानात्तदीयो भवत्यथ मदीयोयं व्यापार इत्यभिधानाद्वा नाद्य इत्याह। सत्यप्यनुविधेयत्वे शब्दस्य न तदीयता। आज्ञत्वाव्यापृते कश्चित्प्रवर्त्तताभि-

धापि। शब्दस्यानुविधेयत्वे ऽनतिक्रमणीयत्वे सत्यपि व्यापारस्य तदीयतामज्ञात्वा अभिधया व्यापाराभिधानेपि कश्चिन्न प्रवर्त्तेत। अयं भावः। न लिङ्व्यापारः प्रवर्त्तकः। मात्रादेस्तत्वापत्तेः शत्रुवाक्यप्रदापत्तेश्च। परव्यापारे च गृहीतशक्तिलिङादिर्न व्यापारस्य स्वीयतापक्षेपि न सफलकल्यकः स्यादिति। नान्त्य इत्याह। न च शब्दमनुक्त्वैतद्व्यापारत्वं निरूप्यते। स्वरूपवाचितास्मिन्पक्षे निष्ठा लिङो भवेत्। लिङी योयं व्यापार इति।

लिङाबोधने स्ववाचित्वादात्माश्रय इत्यर्थः। चतुर्थं पक्षमनुवदति। अस्तु तर्ह्यभिधानाख्यो व्यापारोस्य प्रवर्त्तकः। तस्य ह्यर्थप्रतीत्याख्यकार्यंक्लृप्तस्य केवलम्। कल्प्यं प्रवृत्तिहेतुत्वं लिङ्वाच्यस्येति लाघवम्। अयं भावः—लिङः प्रवर्त्तकत्वमनुपपत्त्या गुरोरिच्छाद्वारमिव स्वव्यापारबोधनेन वाच्यम्। न चान्यो व्यापारोस्ति तेनार्थभावना तु कुत्राभिधाशक्तेरेव तत्त्वम्। तत्र घटादिशब्दनिष्ठायास्तस्याः प्रवर्तकत्वादर्शनाल्लिङ्निष्ठायाश्च तद्दर्शनाल्लिङा प्रवर्त्तनात्वेनाभिहितायाः प्रवृत्तिहेतुत्वं धर्ममात्रं कल्प्यते। प्रवर्त्तकत्वाच्च फलकल्पकतापि स्यादिति। यद्यपि सिद्धरूपायास्तस्या न भावनात्वम्। व्यापारत्वाभावात्। न च तेन विना तत्रान्वयः। तथापि ज्ञाताया व्यापाररूपत्वाद्भावनात्वम्। तस्यां च प्रवर्त्तनात्वेन शक्तिग्रहः करणम्। न चाभिधायां कथं शक्तिः? शक्तिः शक्त्यन्तराभावादिति वाच्यम्। अध्ययनविधिवत्स्वपरनिर्वाहकत्वात्। सा चाभिधा प्रवर्त्तकत्वेनाभिहिता प्रवर्त्तिका। अभिधा च शब्दस्यार्थधीहेतुर्व्यापारः। स च पदज्ञानं पदगोचरः संस्कारो वेति स्फोटवार्त्तिके। न च लिङादेः प्रमाणस्य कथं प्रवर्त्तकत्वमन्यथासिद्धत्वादिति वाच्यम्। इष्टहेतुताज्ञानद्वारा पुरुषवत्वाविरोधादिति भावः। न सिद्धिरित्याह कार्यंक्लृप्तस्येति लिङ् तिणेचरशक्तिमानूततात्पायकत्वाट्टूटशब्दवदिति तत्सिद्धेरित्यर्थः। यथा लिङादिर्गुरुस्थाने तच्छब्दस्थाने च। तथा लिङोभिधाशक्तिरपि प्रवर्तनादशायां प्रवर्तकव्यापारत्वमर्थप्रतीतिदशायां शब्दव्यापारत्वं च लभते। एतद्दूषयति। शब्दान्तरगताप्यस्मिन्नभिधा स्यात् प्रवर्त्तिका। पक्षेऽर्थतो विशेषश्चेत्स शब्द स्यात्प्रवर्त्तकः। अभिधामात्रस्य प्रवर्त्तकत्वे घटादिशब्दगतापि सा प्रवर्त्तिका स्यात्। तत्तु लिङाद्यभिधानेव प्रवृत्तिदर्शनार्थतः सामर्थ्याद्विशेषो न आहार्थत इति।

यद्वार्थतो लिङादिशब्दरूपात्पदार्थाद्वा प्रवर्त्तनात्वादभिधेयाद्विशेषः। अभिधा विशिनष्टीति विशेषः लिङादिश्चेत्। जपाकुसुमं स्वरक्तानां स्फटिके इव लिङादिः स्वनिष्ठां प्रवर्त्तकतामभिधां बोधयतीत्यर्थः। निराचष्टे सत्वेति। जाद्यप्राप्तविवेकेन लिङादिरेव प्रवर्त्तकः स्यात्तच्च दूषितं पूर्वमित्यर्थः।

ननु यथा धूमोग्न्यर्थिनः स्वविषयज्ञापनेन प्रवर्त्तकस्तथा लिङादिरभिधाज्ञानद्वारा तद्विषयेर्थे प्रवर्त्तकः स्यादत आह। न चास्याभिधेयत्वाद्विशेषः कार्यतो

गतेः। न युक्तं ह्यभिधेयत्वं सर्वासां वा प्रसज्यते। अर्थज्ञानरूपात्कार्यंतो गतेरवगमाल्लिङ्गस्याभिधेयत्वं न युक्तम्। अनन्यलभ्यो हि शब्दार्थः। न चात्र तथा अनवस्थापत्तेश्चेत्यर्थः। तत्र हेतुः। न चेति। न ह्यभिधेयत्वात्प्रवृत्तौ कश्चिद्विशेषः। धूमाभावादित्यर्थः। च हि शब्दयोर्व्यत्यासः। न हि ज्ञाने प्रत्यक्षं प्रवर्त्तकं दृष्टमित्यनुमितिरूपेपि तथा कथं लभते। न चाभिधाज्ञाने तथा दृष्टं येन लिङ् कस्येप्येतेति वाच्यार्थः। फलं विनाभिधेयतेति प्रसंग इत्याह—सर्वासामिति। घटादिशब्दगतानामभिधेयत्वं स्यात्। कथं चाध्यापने विधौ सर्वविधी-इच्छाभिधानो कर्त्तव्यत्वं वार्त्तिके उक्तम्। शक्तेर्नित्यत्वेन कर्त्तव्यत्वाभावादित्यर्थः। यत्तु षष्ठाद्ये पार्थसारथिनोक्तं अंशत्रयविशिष्टं भावनाप्रतिपादनं चास्य व्यापार इति। तन्निरस्तम्। यत्तु कश्चिदाह। राणकमते यथा प्रेरणा प्रवर्त्तना द्वित्वेनाभिहिता प्रवृत्तिहेतुस्तथाभिधापि प्रवर्त्तनात्वेनाभिहिता प्रवृत्तिहेतुस्तथापि प्रवर्त्तनात्वेनाभिहिता प्रवृत्तिहेतुरिति तदप्यपाठ्यम्। अभिधाशक्तेः सिद्धत्वेन कर्त्तव्यत्वाभावात्। प्रवर्त्तनात्वेनाभिधा तत्प्रवृत्तिहेतुत्वं स्यात् प्रवर्त्तनत्वमित्यन्योन्याभावप्रेरणार्थे। हि प्रवृत्तिजनकव्यापारता क्व च प्रवर्त्तनात्वम्। न चाभिधाशक्तौ तदस्तीत्यनेन प्रवर्त्तनात्वं स्यात्। नन्वर्थधीवशादभिधामात्रं बुध्यते लिङस्तु प्रवर्त्तकत्वात्तदभिधायाः प्रवर्त्तनात्वेन धीर्वाच्या। न च साभिधां विनेति शंकते। अथ प्रवर्त्तनात्वेन कार्यादनवबोधनाद्रूपेणाभिधेयत्वं स्वान्यासु न विधितो अर्थधीरूपात्कार्यात्प्रवर्त्तनात्वेन तदबोधादज्ञानाल्लिङ्त्तद्रूपेण प्रवर्त्तनाभिधेयत्वम्। अन्यासु घटशब्दाद्यभिधासु तत्प्रवर्त्तनात्वं न विद्यते। घटादिष्वभिधामात्रं ज्ञायते इह तु प्रवर्त्तनात्वेनेत्यर्थः। तन्न स्यादभिधानात्प्राक् चेत्प्रवर्त्तकरूपता। स्याद्विध्यर्थमभिधेयत्वं नास्ति तस्यापि सत्यता तूक्तापि प्रवर्त्तना किं तत्स्वप्रवर्त्तनस्वभावा अस्वभावा उभयस्वभावा वेति विकल्प्य आद्ये आह। अस्या इति। अस्याभिधायाः अभिधानात्प्राक् तेन विना स्वभावेनेत्यर्थः। प्रवर्त्तकरूपता चेदस्ति तदा व्यर्थसिद्धिः। तत्त्वाचार्ये मनुष्यत्वज्ञानात् प्रवर्तते किन्त्वाचार्यत्वप्रवर्तकत्व-ज्ञानात् तद्यर्थंव्यर्थमभिधेयत्वं स्यात्कार्यादेव ज्ञानत्वेन तत्प्रवृत्तेरसिद्धेरित्यर्थः। तत्तथेत्याकारेण ज्ञाते कथं तदर्थकल्पितः शब्दव्यापार इष्टहेतुः कल्पयति। अतः कथं प्रवृत्तिरिति वाच्यम्। गामानयेति शब्दादर्थधीः प्रवृत्तिश्च जायते। तत्रार्थज्ञानजनको व्यापारो यथा नामाभिधया एवं प्रवृत्तिजनकोपीति भावः। द्वितीये आह—चेत्प्रवर्त्तकता नास्ति तदा अतथाभूतमितितदा ज्ञानं जनयतः शब्दस्यासत्यताऽप्रमाणता स्यादित्यर्थः। तृतीये इदमेवोत्तरं नास्ति चेदिति। अस्तीति विधिः नेति निषेधः। द्वयोरेकपरत्वे विरोधाश्च्छशश्रृंगवदसत्यतैव स्यादित्यर्थः। पंचमपक्षं निराचष्टे आज्ञादिस्तु न वेदार्थः पुंधर्मत्वेन युज्यते। तु शब्द एवार्थे। आज्ञादिः पुंधर्मत्वाद्वेदे च तदभावान्नैव वेदार्थो युज्यते।

आज्ञादिप्रवर्त्तकश्च न युज्यते। सत्यपि वेदस्य पौरुषेयत्वे ईश्वरकर्तृकत्वे वेति ज्ञेयता कुतः। पुंधर्मत्वात्प्रवर्त्तकाऽन्यस्यधर्मत्वात्। सर्वत्र हि प्रवर्त्तकपुरुषेच्छा न परप्रवृत्तिहेतुः। यदि प्रवर्तितव्यमितीच्छया प्रवृतिः स्यात्ततः स्वर्गो मे स्यादितीच्छया यागं विना स्वर्गोत्पत्तिः स्यात्। न च प्रवर्त्यस्य वक्त्रिच्छाज्ञानप्रवर्त्तकमिति वाच्यम्। ज्ञानस्य ज्ञेयावभासफलत्वेन प्रवृत्यहेतुत्वात्। कथं तर्हि प्रमाणरूपज्ञानं प्रवर्तकम्। नैव तत्प्रवर्तकम्, किन्तु तज्जन्यविषयसौन्दर्यलभ्येच्छैव अत्राप्येवमिति चेत् न हि वक्तुरिच्छाज्ञानेन श्रोतुस्तदिच्छायां प्रवृतिः सम्भवति।

अथ तदिच्छाज्ञानेन श्रोतादीच्छात विषये प्रवर्तकता। तन्न। न ह्यन्यविषयज्ञानेनान्यत्र प्रवृतिः। अथ वक्तुरिच्छाविषये ज्ञानेच्छाभ्यां प्रवर्त्तते तर्हि वक्तुरिच्छान्तर्गडुतुल्या वृथैव। अतो नादिः प्रवर्त्तकः। एतेनेश्वरेच्छैव प्रवृत्तिहेतुत्वाल्लिङर्थ इत्युदयनाचार्यमतं परास्तम्। इच्छास्वरूपसती प्रवर्त्तिका नाभिहितेत्यर्थः। कार्यं लिङर्थं इति षष्टं पक्षं गुरुमतमाह। अथ मानान्तरागम्यं नियोगापरनामककार्यं लिङादिवाच्यं सत्सु तन्त्रं स्यात्प्रवर्त्तकानामिति वेदे हि मानान्तराभावान्न कृतिरेव कार्यं नियोग इति वेदे परिशेषान्नियोगत्वमुक्तम्। कार्यमिति प्रसिद्धशक्तिग्रहः। लिङादिति कार्यशब्दाद्विशेषः स्वतन्त्रम् न तु व्यापाररूपं न वा यागादन्यशेषो न वा साध्यसाधनकृत्यन्तर्गतम्। यदि फलशेषः कृत्यन्तर्गतं स्यात्। यदि प्रवर्त्तकव्यापारः प्रवर्त्तनारूपं स्यात्। तत्तु नेत्यर्थः। निराचष्टे। तदप्ययुक्तमज्ञानं सम्बन्धत्वाल्लिङर्थता। मानान्तराप्रमेयत्वे कार्योऽस्य हि कथं भवेत्। मानान्तरागम्यत्वेन शक्तिग्रहसंभवान्न लिङर्थतेत्यर्थः। ननु लोके कार्यता ज्ञानस्य प्रवर्त्तकत्वाद्वेदेपि तत्त्वेन वाच्यत्वं स्यादिति शंकते। अथ स्वच्छस्वतन्त्रस्य पुंसो लिङः श्रवणे सति प्रवृत्तेरात्मदृष्टान्तात्कार्यधीहेतुतां स्पष्टः। अनुमाय लिङस्तत्र वाचकत्वं कः प्रकल्पयेत्। शिशुरव्युत्पन्नो व्युत्पित्सुर्गुरोर्लिङः श्रवणे सति स्वच्छस्याकुर्वद्रूपस्यास्वतन्त्रस्य कराद्यातो दिनस्पन्दहीनस्य येन प्रवृत्तेरन्यथा सिद्धिः स्यादिति भावः। ईदृशस्य पुंसः शिष्यस्य प्रवृतेः। कार्यधीर्हेतुर्यस्या इति बहुब्रीहिः तामनुमायायं शिष्यः गुरुशब्दो त्वकार्यताज्ञानवान्। जलवद् कुर्वद्रूपत्वे करादिस्पन्दहीनत्वे च सति प्रवृतिमत्त्वात्। बाल्ये मद्रोदनश्रवणोत्तरन्तदादानप्रवत्तिमत्मातृवत् सा हि रोदनाख्य-शब्दात्स्तनदानं मम कार्यमिति ज्ञात्वा प्रवृत्ता। एवात्मसम्बन्धिमातृदृष्टान्तादनुमाय तत्र कार्यं लिङो वाचकत्वमपीत्यर्थः। ननु रोदनवदेव लिङोपि कार्यज्ञापकतैव स्यान्न वाचकता तदुक्तं लिङ् इति।

रोदनस्यावर्णात्मकत्वात्प्रहाराद्यभावात् परिशेषादुक्तज्ञापकत्वं लिङस्तु वर्णरूपत्वाद्वाचकतैवेत्यर्थः। नन्वेवं यागादेरेव कार्यत्वान्मानान्तरगम्यत्वाच्च।

कुतो वेदे नियोगसिद्धिरत आह। कार्यं च वेदे षष्ठाद्यसिद्धान्तात्कामितान्वितम्। नियोज्येन स्वसम्बन्धिकार्यंबोधोऽभिधीयते। वस्त्वर्थे। वेदे तु कार्यंकामिना नियोज्ये नान्विदमभिधीयते। ननु स्वर्गकामशब्दो निमित्तपरः साधनकामना वाऽस्त्वत आह षष्ठाद्येति। निःकले विधेरप्रवर्त्तकत्वापत्तेरित्याशयः नियोज्यः सहस्वेति। स्वर्गकामस्य मम यागविषयं कार्यमिति बोधकतेत्यर्थः। क्वचिदस्य पूर्ववर्ति पाठः। नियोज्येनात्मनः कार्यतया ज्ञानमिति निश्चितम्। नियोज्यश्च स्वसम्बन्धिकार्यबोद्धाभिधीयते इति। स स्पष्ट एव। ननु धात्वर्थः क्रिया कार्यं स्यादत आह। काम्यमानोऽभ्युपायं च बुध्यते कार्यमात्मना काम्यः। न च क्रिया तत्र क्षणिकोपायताम् व्रजेत्। क्रियातोन्यदतः कार्यं वेदे वाच्यमलौकिकम्। काम्य आत्मनः कार्यंकाम्यमाने फले उपायत्वेन उच्यते। न चैवं फलशेषत्वम्। प्रणयतोपायेपि गोदोहने तथेष्टत्वाभावात्। न च क्षणिकायागादिक्रिया तत्र फले कालान्तरभाविन्युपायः। तेन सिद्धं तद्भिन्नकार्यमित्यर्थः। एवमुपपाद्य दूषयति। तन्न। पूर्वस्य कार्यत्वं कृत्युद्देश्यत्वलक्षणं न युक्तम्। स पुमर्थत्वादव्यापारतया न च। अनुषेयत्वरूपम्। न व्यापारत्वे स्वतन्त्रता। कार्यत्वं किं कृत्युद्देश्यत्वमनुपेयत्वं नाद्य इत्याह। पूर्वस्येति। फलस्यैव पुरुषार्थत्वादपूर्वे च तदभावात्कृत्युद्देश्यत्वं न युक्तमित्यर्थः। नास्ति इत्याह। व्यारेणानिरूपकं तेन। व्यापारोऽद्यानुष्ठेयः। अस्य चातत्वान्नानुष्ठेयत्वरूपकार्यत्वमित्यर्थः। नियोगशब्दार्थोऽपि न युक्त इत्याह। अव्यापारतया चास्मिन्नियोगो नावकल्प्यते। तेनात्मनि नियोगत्वान्नियोगा इति वाङ्मृषा। अस्मिन्कार्ये लिङो नियोगः प्रवृत्तिफलको व्यापारो न सम्भवति। अव्यापाररूपत्वात्। तेन स्वात्मनि प्रवर्त्तकत्वान्नियोग इत्यभ्युपगमो मृषेत्यर्थः। यच्च फलोपायत्वं क्रिया निष्ठकार्यमुक्तं तदप्ययुक्तं निष्फले तदभावादित्याह। किं च नित्यनिषेधाधिकारेषु फलवर्जनात् क्रियातिरिक्तकार्यस्य कथं सिद्धिर्भवेदेव। अहरहः सन्ध्यामुपासीत न कलञ्जं भक्षयेदित्यादौ फलाभावात्क्रियाभिन्नं कार्यं न स्यात्ततः तत्र लिङ्वाच्यता न स्यादित्यर्थः। सिंहावलोकितेन पुनः कृत्युद्देश्यत्वं निराचष्टे। कृत्युद्देश्यत्वरूपं च कार्यत्वं चेत्प्रवर्त्तकम्। तद्रूपत्वात्फलस्यैव प्रसज्येत प्रयोक्तृता। प्रयोक्तृत्वं नियोगत्वम्, न चेष्टापत्तिरित्याह। तच्च कार्यपदोक्तत्वान्न लिङादिभिरुच्यते। लिङर्थस्य प्रयोक्तृत्वं ततश्चेष्टं न सिध्यति। फलमेवेच्छाविषय वा न लिङर्थ इति शङ्कते। नन्विच्छाजनने नान्यत्सर्वैरिष्टप्रवर्त्तकम्। साक्षात्प्रवृत्तिहेतुत्वादतः सैव लिङोच्यताम्। तद्द्वारेण लिङर्थत्वात्फलं तेन प्रवर्त्तकद्वारेणेच्छाविषयत्वेन निर्विषयेच्छायोगादित्यर्थः निराचष्टे। नैतद्युक्तं फलेच्छायाः पुंव्यापारतया पुमान्। अस्मिन्पक्षे कर्तव्यत्वाच्चेष्यते। प्रवर्त्यत्वात्स पुमान्प्रयोक्ता नेष्यते भवतेत्यर्थः फलस्य

सुखरूपत्वमेव प्रवर्त्तनाकार्यं लिङर्थोऽस्तीति शंका निराचष्टे, फलस्य प्रीतिरूपत्वं लिङुक्तं चेत्प्रवर्तना। फल एव प्रवर्त्तेत नान्यत्रातिप्रसंगतः इच्छाप्रवृत्योरेकविषयत्वात्फले प्रवृत्तिः स्यान्न यागादौ। अन्यथा स्वर्गेच्छया कृषौ प्रवृत्यापत्तेरित्यर्थः। ननु फलस्य पुंव्यापारत्वाभावात्तद्विषयाप्रवृत्तिस्तत्साधने। भवति वा जपयसम्बन्धित्वेन श्रुतं सप्तदशारत्वमिव तदंगपशुयागे इति शंकते अथाव्यापाररूपत्वात्प्रवृत्त्यविषयत्वतः। फलस्य साधनेंगावतारन्यायात्प्रवर्त्तते। फलस्येति पूर्वोत्तरार्द्धयोरावृतिः। निराचष्टे। ततः साधनबोधात्प्रागप्रवृत्तेः प्रवर्त्तना। वरं साधनतैवास्तु न स्यात्तत्प्रीतिरूपता। फले प्रीतिरूपत्वे युद्धेपि साधनबाधं विना प्रवृत्त्यसिद्धेः सैव लिङर्थोऽस्तु न प्रीतिः। अज्ञवाक्येषु प्रीतिरूपफलवाचित्वासाम्भवादित्यर्थः। इष्टापत्तिमाशंक्याह। तस्याश्च कर्मधर्मकृत्कर्मैव स्यात्प्रवर्त्तकम्। इष्टसाधनतारूपायाः शक्तेः यागनिर्वृत्वाद्यागेष्वप्रवर्त्तकः स्यादित्यर्थः। ननु च हिंसत्वेपि शक्तेः प्रतिबंधकत्वाद्यागसत्त्वे शक्तेः प्रतिबन्धे प्रवृत्त्यभावात्कथंशक्तेः प्रवर्त्तकत्वे कर्मणस्तत्वां धातुः कर्मादते लिङादिस्तु प्रज्ञतशक्तिम्। अतः कोऽनयोः विरोधोत आह। प्रवृत्तिविषयत्वाच्च न तत्कर्त्तुः प्रवर्त्तकम्। तत्कर्त्तुं शक्तियुक्तं कर्म न प्रवर्त्तकम्। विशिष्टस्यैव प्रवृत्तिविषयः। अयं भावः यथा घटेन ज्ञानविषयत्वमात्रेण ज्ञापकत्वम्। अतीतानगतयोरभावात्। किन्तु वर्त्तमानस्य ज्ञानविषयत्वे तथा प्रवृत्तिविषयस्य वर्त्तमानस्यैव प्रवर्त्तकत्वम्। न च प्रवृत्तेः प्राग्ज्ञानदशायां यागो वर्त्तमानः येन प्रवर्त्तकः स्यात्। प्रवृत्त्युत्तरभाविचेष्टहेतुत्वं न प्रवृत्तिहेतुः। एतेनेष्टसाध्यजनकत्वं यागत्वं प्रवर्त्तकमिति निरस्तम्। न च यागगतेष्टहेतुताज्ञानं वर्त्तमानमेव प्रवर्त्तकमिति वाच्यम्। तस्य लिङवाच्यत्वाभावात् लिङमभिधेयं किमति विचारो यत्क्रमात् इति। ननु फलस्य साध्यत्वं लिङुक्तं यागे स्वहेतुतामक्षिपत् प्रवर्तकमस्त्विति शंकते। साध्यता फलधर्मोयं लिङुक्तः सम्प्रवर्त्तनासाध्यत्वं किं कृत्युद्देश्यत्वं कृतिव्याप्यत्वमनुष्ठेयत्वं वा। नाद्य इत्याह। नासौ पूर्वमसिद्धत्वात्प्रवर्त्तयितुमर्हति। असौ फलसाध्यता प्रवर्त्तयितुं नार्हति। पूर्वं दूषितत्वादिति भावः। द्वितीये आह पूर्वमिति। सैवावृत्या प्रतिज्ञा योज्या। प्रवृत्तिप्राक्कालवर्त्तित्वं हि प्रवर्त्तकत्वम्। न च फले वर्त्तमानकृतिव्याप्यत्वं प्राक् सिद्धमित्यर्थः। यद्वा फलस्य साध्यत्वं कृत्युत्तरभाविपूर्वमसिद्धेनं प्रवर्त्तकमिति यथाश्रुत एवार्थः। तृतीयमाशंक्य निराचष्टे।

अथ तुष्टतारूपं कार्यत्वं स्यात्प्रवर्त्तकम् ततोर्थंभावनैव वा तद्रूपत्वात्प्रवर्तिका। कार्यत्वं कृतिसाध्यत्वं फलेत्यन्तास्त्यक्त्वाद्भावनायां च नेयत्वान्नैव प्रवर्त्तिका स्यादित्यर्थः। इष्टापत्तावाह। सा भावानान्तरभावात्प्रवृत्तिव्यभिचारिणी। लुङादिष्वपि भावनासत्त्वात्प्रवृत्तिः स्यादित्यर्थः। ननु भावना यद्यपि

नानुष्ठेयत्वनियता। तथाप्यनुष्ठेयत्वं भावनागतमेवेति लुङादौ वर्त्तमानकाल-संसर्गेणाऽनुष्ठेयत्वधीप्रतिबन्धान्न प्रवृत्तिरित्याशंक्य विकल्पायोगान्नेत्याह। काल-संसर्गतोऽथानुष्ठेयत्वप्रतिबन्धनात्। तत्राप्रवृत्तिरित्थं तत्क्रियारूपादिति निरूप्य-ताम्। तत्र लङादौ। उत्तरं इत्थमिति। तदनुष्ठेयत्वं किं रूपवर्त्तकम्। जन्यत्वम-सिद्धत्वं वेति उच्यते। वक्तुं न शक्यमित्यर्थः। आद्याभावे हेतुमाह। कृत्यात्म-भावनाया हि न कृतिव्याप्यतां विना। जन्यत्वं प्रागसिद्धत्वात्फलस्येव प्रवर्त्तकं। हि यस्मात्कृत्योक्ता। कृतिरूपा तस्याः भावनायाः कृतिव्याप्यतां कृति-विषयत्वं विना न जन्यत्वमस्ति। अतः प्रागसिद्धत्वात्फलस्य साध्यत्वं कथं प्रवर्त्तकम्। तर्हि कृतेः कृतिव्याप्यत्वं न वा तेन विना जन्यत्वम्। अतः प्रवृत्तेः पूर्वमसत्त्वात्कथं प्रवर्त्तकमिति भावः। द्वितीयमाशंक्य निराचष्टे। अथ तेष्वन्यरूपत्वं तदभावेपि विद्यते। अतएव प्रागभावदशायां तदसिद्धत्वं विद्यत इति तदपि प्रवर्त्तकं स्यादित्यर्थः। कार्यवाचित्वदूषणमुपसंहरति।

तस्मात्क्रियात्मकं कार्यमथ वा तत्फलात्मकम्। ततोऽन्यमतिरिक्तं वा पूर्वमस्ति प्रवर्त्तकं क्रिया वा फलं वाऽपूर्वमेवमपि न प्रवर्त्तकमित्यर्थः। इष्टहेतुत्वं लिङर्थः प्रवर्त्तक इति शिरोमणिपार्थसारथिपक्षधरमिश्ररुचिदत्ताद्यभिमन्तव्य-पक्षं निराचष्टे। अत एवेष्टहेतुत्वं तदेकार्थसंगतम्। प्रवर्त्तकं नापि शुद्धं चन्द्रादौ व्यभिचारतः। कृतिसाध्यत्वैकार्थसमवेतमिष्टहेतुत्वं प्रवर्त्तकं केवलं वा। नाद्यः। अत एव प्रत्येकदूषणादेव विशिष्टस्यापि निरासात्। नान्त्यः। चन्द्रमेघछायादौ व्यभिचारात्। ननु तत्र कृत्यसाध्यताज्ञानं प्रतिबंधकमिति चेत्। तर्हि तदभावोऽपि प्रवृत्तिहेतुत्वाद् व्याप्यः स्यात्। एकविशिष्टस्येतरस्य वाच्यत्वे विनिगमनाविरहः। अर्थात्तस्य प्रवर्त्तकत्वं नाभिधानमपेक्षते तर्हीष्टसाधनत्वेपि तथास्तु इति भावः। नन्विष्टहेतुताज्ञानं प्रवर्त्तकमिति सा वाच्या। न च प्रतिबन्धकाभावे तदर्थो तथेति चेत्। न। इष्टहेतुता हि यागे विधिनोच्यते भावनायां वा नाद्यः। लक्षणया प्रतीतिसंभवादाख्यातार्थकृतेरनन्वयाच्च। अथ यागानुकूलकृति-मानित्यन्वयः। तर्हि कृतिसाध्यत्वमपि वाक्यमिति द्वितीयपक्षापत्तिः। तत्र वक्ष्यामः। नान्त्यः। भावनान्तरापत्तेः। अपिशब्दात्कृतिं प्रति यागस्य साध्यत्व-मिष्टं प्रति च साधनत्वं कथमेकवाक्ये प्रतीयेत। वाजपेयाधिकरणाद्वैरूप्यापत्तेः। कथं च साध्यद्वयं साधनद्वयं चैककृतावन्वेतु। ननु नानार्थवच्छक्तिद्वयेनोभयथा किं न स्यादिति चेत्। न कृतेर्यागं प्रति साधनतया कृत्यन्तरापत्तेः। न हिकारणं कृतिं विना मिथः सम्बन्धोस्ति। तथात्वे दण्डेन घटमिति सम्बन्धापत्तौ क्रियाध्याहारोच्छेदापत्तेः। न च यजेतेत्यत्र कृतिद्वयमस्ति। करणयुता च तृतीया कृतिः स्यात्। तत यागजनिकैव कृतिः स्वर्गसाधिकेति वाच्यम्। यागेनान्यथासिद्धिः। एककृतौ यागस्वर्गयोर्द्वयोः साध्यत्वायोगाच्च।

कृतिबाध्यत्वेष्टहेतुत्वयोर्विशेषणविशेष्यत्वे निपातकाभावाद्द्वयोः शक्यत्वे शक्तिद्वयापत्तेरेकशक्त्यैव निषेधे कृतिसाध्यत्वाभावे प्रत्यक्षविरोधाद्भावना क्षिप्रकर्मद्वयसंभवाच्च। यत्तु न्यायरत्नमालायां कृताविष्टसाधनत्वं विधिनोच्यत इत्युक्तम्। तदपि न। कृतेः कृत्यन्तराभावे नेष्टसाधनत्वाभावात्। यत्र तत्र पार्थसारथिनोक्तम्। इष्टसाधनत्वमेव प्रवर्त्तनात्वेन विध्यर्थः। कर्त्तव्यताबोधस्त्वर्थाद्। कर्त्तुरिष्टाभ्युपाये हि कर्त्तव्यमिति लोकधीः। विपरीते त्वकर्त्तव्यमिति तत इति विधिविवेकोक्तेः। श्रेयः साधनता ह्येषा नित्यं वेदात्प्रतीयते। तथा विशेषा एव शब्दार्थं इष्टरूपतयेति हि। न च प्रवर्त्तनाबेधइष्टशक्तेर्विनार्थंवानिति। वार्त्तिके पूर्वार्द्धे परमतमन्त्यार्द्धे प्रवर्त्तना सामान्यस्य विशेषं विनार्थंत्वात्प्रेषादेश्च वेदे बोधादिष्टसाधनतैव विशेषो बोध्यत इत्युक्त्वा विधिविवेके च सा नं पुंसाभ्युपायत्वात्क्रियास्वन्यः प्रवर्त्तकः। प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्त्तनामित्युक्ते मण्डनमिश्रस्यापीदमेव सम्मतमित्युक्तम्। अयं हि प्रष्टव्यः किमिष्टसाधनत्वप्रकारकज्ञानं विधितोस्ति न वा नाद्यः। केवलं कृतिसाध्यत्वविशिष्टं वेदादिपूर्वोक्तवक्ष्यमाणादोषगणनया स्यात्, प्रवर्त्तनात्वेन वाच्यताया व्यर्थत्वात्; इच्छाहेतुता ज्ञानस्य त्वयानंगीकाराच्च। प्रवर्त्तनात्वेन वाच्यमिति हि ते मतम्। अन्ये प्रवर्त्तनैवार्थः। न हि प्रमेयत्वेन तज्ज्ञानं प्रकर्त्तकम्। किं च लोके गुर्वादिर्वेदे च लिङादेः प्रवर्त्तकत्वं निर्विवादम्। तदुक्तं वार्त्तिके। अनुष्ठेये हि विषये विधिः पुंसां प्रवर्त्तक इति।

तच्च प्रवृत्तिकर्तृत्वं कतृवाचि ण्वुल्-प्रयोगात्। तच्च स्वव्यापारबोधनेनैवाऽन्यथा गुरुस्त्वां प्रवर्त्तयतीत्युक्ते शिष्यस्यापि तत्त्वापत्तेः। न चेष्टसाधनत्वं प्रवर्त्तकशब्दव्यापारः। पदार्थनिष्ठत्वात्। नापि तज्ज्ञानम्। वेदे तदभावात् ज्ञानेच्छयोः स्वरूपसत्योः प्रवर्त्तकत्वेन वाच्यत्ववैर्थ्याच्च। न तु शब्दस्यार्थज्ञानमेव व्यापारः। गुर्वादेश्चार्थज्ञानजनकशब्दोच्चारणकर्तृत्वात्प्रवृत्तेः प्रयोजकत्वादीनां प्रवर्त्तकत्वम्। वेदे लिङोर्थज्ञानमेव व्यापारः। तस्य प्रवर्त्यनिष्ठत्वेपि लिङ् व्यापारत्वमनुमितौ व्याहिस्मृतेरिति वेत्। लोके वेदयोरननुगमात्। तण्डुले कर्तुरपि पाचकत्वापत्तेश्चागुरुस्त्वां प्रवर्तयतीत्युक्तौ शिष्यस्यापि तत्त्वापत्तेश्च। कथं वाच्यतो विधौ सार्वविधिवाच्यश्च प्रवर्तनायाः कर्त्तव्यताबोधः। इष्टसाधनत्वस्य कर्त्तव्यत्वाभावादन्यस्याभावाच्च प्रैषादिभिन्नस्य प्रवर्त्तनात्वस्याभावात् यागेन स्वर्गमिति लक्षणया तद्धि संभवतीतितद्वाच्यत्वायोगाच्च। न च विश्वजिदादौ तदसम्भवः। अध्याहारेण तत्सिद्धेः। तस्मादार्थिकस्येष्टसाधनत्वस्य प्रवर्तकत्वं वार्त्तिकादावुक्तं न तु वाच्यस्य। अत एव वार्त्तिके भावाधिकरणेऽलौकिकी प्रेरणा प्रवर्तनाविशेषः शब्दधर्मं उक्तः। अतो नेदं पार्थसारथीनामुचितं सिद्धान्ताभिधानमिति वक्ष्यमाणातद्भक्तस्यैव ममोक्तिरादर्तव्येति संक्षेपः।

इष्टसाधनत्वं शुद्धवाच्यं कृतिसाध्यत्वविशिष्टं वेति पक्षद्वयेपि दोषमाह। शुद्धस्य च लिङर्थत्वे कर्त्तव्यत्वाप्रतीतितः। भवेन्नाकरणे दोषो त्यक्त्वा कर्मसुः एष्वपि चकाराद्विशिष्टस्य अवश्यकर्त्तव्यत्वाद्धि नित्ये प्रत्यवायाभावः फलम्। न च तत्सिद्धं इष्टहेतुत्वे च कार्यत्वविशेषात्तद्वदेव नित्याकरणेपि दोष न स्यात्। न चावश्यकर्त्तव्यतातः प्रागिष्टहेतुत्वं सिद्धम्। येन तत्कल्प्येत अन्योन्याश्रयश्च स्यात् सिद्धे हि प्रत्यवायाभावस्य साध्यत्वे तद्धेतुत्वादवश्यकर्त्तव्यता तया च तत्कल्पनमिति एवमकरणात्प्रत्यवाये कल्पिते करणात्तदभावः फलं करणात्प्रवत्यवायाभावस्य फलत्वे वाकरणात्प्रत्यवायकल्पनेति भावः।

सन्ध्यावन्दनं नेष्टसाधनं अतः कुरुष्वेति सह प्रयोगाच्च न हि पर्यायाणां सह प्रयोगः। यद्यपि न वेदे नेष्टहेतुस्तथापि मदर्थं कुरुष्वेति तदभावेपि प्रवृत्तेश्च, न च प्रवर्त्तेतेत्यत्र तवापि तुल्यमिति वाच्यं, द्वावितिवत्प्रकृत्यर्थानुवादात्। दोषान्तरमाह न च द्रव्यगुणादीनां क्वचित्स्यादिष्टहेतुता प्रत्ययेन प्रकृत्यर्थात्त्वयि स्वार्थाभिधानतः। अयं भावः द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यत इति वार्त्तिकाद् द्रव्यगुणजातीनामिष्टहेतुत्वं लिङभिधातव्यम्। न चैतद्युक्तम्। प्रत्ययानां प्रकृत्यर्थयागादिगतत्तद्वाचित्वात् अनुष्ठेयत्वाभावे तत्कल्पनायोगाच्च। अथ कर्त्तव्यत्वविशिष्टहेतुत्वं वाच्यम्। द्रव्यादीनां सिद्धत्वेपि साधनत्वेन कर्त्तव्यता। तत्राह कर्त्तव्यत्वविशिष्टस्य वाच्यत्वं तु न युज्यते कर्त्तव्यत्वाभावात्तत्प्रतीत्युपपत्तितः। तु स्वार्थे। नैव युज्यत इत्यर्थः आदौ इष्टसाधनत्वस्य वाच्यत्वमेवाक्तम्। विशिष्टस्य सुतराम् यागेन स्वर्गमिति लक्षणया तद्धीसंभवात्, अन्यथा गंगापदे तीरवाचितापत्तेः। न च यागः स्वर्गसाधनमित्येवार्थो न तु यागेनेति मानाभावादिति वाच्यम्। यागस्य करणत्वाभावे तत्समानाधिकरण्याभावे उद्भिदादौ नामत्वासंभवाद् गुणविध्यापत्तेः। न वाभेदस्तृतीयार्थः। नामत्वसिद्धावभेदस्यैवासिद्धेः ततश्च परस्पराश्रयः। यत्तु विधिवादे पक्षधरमिश्रैरुक्तम् प्रकृतितः सोमद्रव्यप्राप्तेस्तद्विधिर्व्यर्थं इत्यभेदे तृतीया तेन नामत्वमिति। तन्न। इत्यविधावव्यक्तभावेन द्रव्याप्राप्तेरिति दिक्। कर्त्तव्यत्वबोधादेवेष्टहेतुत्वसिद्धेर्विशिष्टस्य सुतरामवाच्यता। अनन्यलभ्यो हि शब्दार्थः। कस्येतिविशेषाभावाद्वेदैरिष्टसाधनेपि प्रवृत्त्यापत्तेश्चेति भावः। एतेन पार्थसारथिपक्षधरमिश्रादयः परास्ताः। नन्विष्टहेतुत्वं वाच्यम्। तस्मादेव कर्त्तव्यत्वबोधोस्तु इति वैपरीत्यं शंकते सार्द्धद्वयेन। नन्विष्टहेतुतामार्थं लिङा तावन्निरूप्यते। कस्येष्टमित्यपेक्षायामेकप्रत्ययवाच्यया कर्त्तुर्भावनयाक्षिप्तस्येति तद् मयेष्यते क्रियायां चाप्रवृत्तस्य कर्तृत्वानुपपत्तितः प्रवृत्तिविषयत्वाख्यं कर्तव्यत्वं प्रतीयते। इष्टहेतुत्वं लिङोच्यते। कस्येष्टमित्यपेक्षते भावनयाक्षिप्तस्य कर्त्तुस्तदिष्टमिति ज्ञास्यते। कर्तृत्वं च किं यागमत्रेति कर्तृप्रवृत्ति-

विषयत्वाख्यकर्त्तव्यत्वस्य भावान्न वाच्यता। न वा पूर्वदोषइत्याशयः। निराचष्टे। एवं तु वर्त्तमाना पदे शेषे तत्प्रतीतितः। कर्त्रिष्टसाधनत्वस्य तद्बलेनैव कल्पनात्। लिङाद्यवाच्यतापत्तेरप्रमाण्यं विधेर्भवेत्। अयं भावः इष्टहेतुत्वकर्त्तव्यत्वयोः समव्याप्तेः प्रत्युताव्यभिचारेण कर्त्तव्यतयैवेतराक्षेपात्तस्य चाख्यातत्वेन लङादावपि भावनाप्रतीतेस्तया कर्त्तुराक्षेपे कर्त्तव्यतयैवेतराक्षेपात्तस्य चाख्यातत्वेन लङादावपि भावनाप्रतीतेस्तया कर्त्तुराक्षेपे कर्त्तव्यत्वबोधात्तेनेष्टहेतुत्वप्रतीतौ प्रवृत्यापत्तेरुभयवाचित्वे चोक्तदोषात्कर्त्रिष्टसाधनत्वस्य लिङाद्यवाच्यत्वाद्विधेर्लिङः उभयत्र प्रामाण्यं भवेत् एकमपि वाच्यं नेत्यर्थः। यद्वा इदं वाच्यं तद्वेति देहादप्रामाण्यं स्यादित्यर्थः। वयं प्रतीमः महामुद्गलमहोदनां स्वाशयं न विद्मः। यत्तु चतुर्थाद्ये तन्त्रत्वेविरोधाधिकरणे च पार्थसारथिनोक्तम्। विधिः स्वविषयस्य कर्त्तुरिष्टसाधनत्वं वदतीति। तन्न। तद्विषयस्य भावनाया इष्टहेतुत्वे भावनान्तरापत्तेरुक्तदूषणाच्च। तत्प्रतीतिः भावनयो कर्तव्यत्वप्रतीतेः। तद्बलेन कर्त्तव्यत्वबलेनेष्टसाधनत्वस्य प्रवृत्तौ व्यभिचारादपि न लिङर्थत्वमित्याह सार्द्धत्रयेण। प्रवृत्तिविषयत्वं च नेच्छाविषयतां विना युक्तं इच्छाप्रवृत्योर्हि परशुच्छिद्रयोरिव भिन्नगोचरतान्यायान् हेतुफलभावनतः। अत एवेष्टहेतूनां बहुत्वे योयमिच्छति। प्रवर्त्तते स तत्रैव नाभीष्टेपीष्टसाधनतेति नेष्टसाधनत्वसद्भावेष्वप्रवृत्तितः। प्रवृत्तिव्यभिचारित्वान्न प्रवर्त्तकतोचिता। हि यतः इच्छाप्रवृत्योर्हेतुफलभावात्कार्यकारणत्वात्परशुच्छिद्रयोरिव न भिन्नविषयत्वम् अतः प्रवृत्तिविषयत्वमिच्छाविषयतां विना न युक्तमित्यन्वयः। हेत्वन्तरमाह। त एवेति। इष्टसाधनेप्यनिष्टे अनिच्छाविषये न प्रवर्त्तते इत्यन्वयः। नेष्टसाधनत्वज्ञानेपि प्रवृत्त्यभावेन व्यभिचारान्न प्रवर्त्तकत्वं किन्त्विच्छाया इत्यर्थः। इदं चिन्त्यम्। न हि कारणसत्त्वे कार्यानुत्पादे व्यभिचारः क्वाप्यस्ति कारणस्य व्यापकत्वेन न तद्व्यभिचारस्यादोषात्। तर्हीच्छेव वाच्या स्यादत आह। इच्छात्वस्य व्यभिचारित्वाद्भवेत्पुंसः प्रवर्त्तिका। स्वरूपसत्तामात्रेण न तु ज्ञानमपेक्षते। इच्छा तु स्वरूपसत्तामात्रेण पुंसः प्रवर्त्तिका न तु प्रवृत्तौ ज्ञानमपेक्षत इत्यर्थः। यद्वेष्टहेतुता वदन्ति इच्छाद्वारा प्रवर्त्तकोऽत उक्तं स्वरूपेति। स्वमिच्छां रूपयति विशिनष्टीति स्वरूपं विषयः। तस्य सत्ता समीचीनत्वं सोऽर्थः। तन्मात्रेणोत्पन्नप्रवर्त्तिका नेष्टहेतुत्वज्ञानमपेक्षते। बहुषु सत्यपि तस्मिन्विषयत्वादर्थात्क्वचिदेवेच्छया प्रवृत्तेरित्यर्थः अंगीकृत्याह अथापि ज्ञायमानासौ कारणं स्यात्तथापि तु स्वप्रत्यक्षैकगम्यत्वान्नाभिधानमपेक्षते स्पष्टमिति।

राणकश्लोकव्याख्या समाप्ता॥

---